## काठकगृह्यसूत्रम्

## वाराहगृह्यसूत्रम्

पुण्याहवाचनम्—

स्वस्तिवाचनविधिः १६७९.

कन्यावरणम्—

वरितृप्रेषणं वरणप्रयोगश्च १८८८.

विवाहपूर्वे कर्तव्यानि देवपत्नीयागवादननृत्यादीनि—

वादनहोमात्मकं प्रवदनकर्म १९०६.

मधुपर्कः—

अर्हणीयगणना, पुनरर्हणावधिः, जीवत्पितृकस्य निषेधः; मधुपर्कस्वरूपम्, उपचारप्रतीक्षणम्; विष्टराद्युपचरणम्, मधुपर्कशेषप्रतिपत्तिः; गवोपचरणम्, करणोत्सर्जनपक्षौ, गोमांसप्रतिनिधिः, ब्राह्मणभोजनम्; अलंकरणविधिः १९५८.

कन्यादानम्—

ब्रह्मदेयाया दाने दिङ्नियमः, हिरण्यदानप्रतिग्रहयोर्व्यतिहारः, मन्त्रजपः, कन्याभिषेकः २०२१.

पाणिग्रहणम्—

स्थण्डिलकरणादिपरिस्तरणान्तविधिः, वध्वानयनम्, युगच्छिद्रतो वध्वभिषेकः, वासःपरिधापनम्, आघारावाज्यभागौ प्रधानहोमाश्च, वधूसमीक्षणम् २१०४. पाणिग्रहणम्, गाथागानम्, अश्मारोपणम्, अश्मनोऽवरोपणम्, ब्रह्मजपः २१०५. वासःप्रदानम्, योक्त्रसंनहनम्, अञ्जनम्, लाजहोमः, जयादिहोमाः; सप्तपदी, योक्त्रस्य विमोचनं वाससोऽन्ते बन्धनं च, अनुमत्यादिहोमाः, समिदाधानम्, परिधिविमोकादिहोमाः, पुनः समिदाधानम्, उपस्थानम्, मार्जनम्, दक्षिणा २१०६. प्रेक्षकानुमन्त्रणम्, सीमन्तकरणम्, अभ्यञ्जनम्, केशबन्धनम्, सह दधिमधुहविष्यप्राशनम् २१०७.

प्रयाणम्—

रथादेर्योजनं संस्कारश्च; रथादावारोपणं प्राक्प्रयाय प्रदक्षिणमावर्तनं च; श्मशानाद्यतिक्रमणेषु जपाः २१७९. नद्यादितरणप्रसङ्गे जलाञ्जलिनिनयनं परिमार्जनमाचमनं जपश्च; अक्षभङ्गादौ होमो जपश्च २१८०. समन्त्रकमवतरणम्; ग्रामप्रवेशविधिः २१८१.

गृहप्रवेशः—

गृहप्रवेशकालः, गृहप्रवेशः, वध्वाश्चर्मण्युपवेशनम्, कुमाराय फलदानम्, ध्रुवादिदर्शनम्, स्थालीपाकः, दधिप्राशनम्, विवाहव्रतम्, गृहाधिकारदानम् २२१२.

चतुर्थीकर्म—

योक्त्रपाशविमोचनम्, दम्पत्योः शयने निपातनम्, उपगमनम् २२३४.

## आग्निवेश्यगृह्यसूत्रम्

ग्रहयज्ञः—

ग्रहकोपनिमित्तानि, ग्रहयज्ञस्य शान्त्यर्थता; ग्रहयज्ञनिमित्तानि; ग्रहवर्णाः, उपचाराणां ग्रहसमानवर्णत्वम्; ग्रहाणां समिधः पीठानि च १५७३. होमः, होममन्त्राः, हविर्द्रव्याणि, आहुतिसंख्या; उपहाराः तत्प्रतिनिधिश्च, स्विष्टकृद्धोमः, जयाद्युत्तरतन्त्रम्; ग्रहार्चनम्, मार्जनम्, दक्षिणादानम्, दक्षिणाप्रतिनिधिः; ग्रहयज्ञप्रशंसा १५७४.

पुण्याहवाचनम्—

पुण्याहवाचनस्य कर्माङ्गत्वं प्रयोगश्च १६७९.

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य पूर्वेद्युः प्रधानदिवसे चानुष्ठानव्यवस्था प्रयोगश्च १७३१.

कन्यावरणम्—

वरितृप्रेषणं वधूयाचनं च १८८८.

वरप्रस्थानम्—

वरस्य कौतुकबन्धनं स्वस्त्ययनं पदातित्वं च १९१६.

मधुपर्कः—

आचार्यकर्तृकस्नातकार्हणप्रयोगः १९५८. संभाराणामासादनं संस्कारः अर्हणीयगणना च; कूर्चाद्युपचरणम्, गवोत्सर्जनपक्षे मांसान्तरस्य प्रतिनिधानम्, मांसप्रतिनिधिः १९५९.

## पारस्करगृह्यसूत्रम्



## पारस्करगृह्यपरिशिष्टश्राद्धसूत्रम्



## कात्यायनपरिशिष्टम्

## गोभिलगृह्यसूत्रम्

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य निमित्तानि परिभाषा च १७४६.

विवाहपूर्वे कर्तव्यानि देवपत्नीयागवादननृत्यादीनि—

कन्याभिषेकरूपं शातिकर्म १९०८.

मधुपर्कः—

गवोपस्थानम्; अर्हणीयकर्तृकजपः १९७०. विष्टरादीनां त्रिस्त्रिर्निवेदनम् १९७१. विष्टरोपचरणम् १९७२. पाद्योपचरणम्; अर्घ्योपचरणम्; आचमनीयोपचरणम् १९७३. मधुपर्कोचरणम्, शेषप्रतिपत्तिः १९७४. गवोपचरणम्, यज्ञादन्यत्रोत्सर्जनम् १९७५. यज्ञे गोकरणनियमः; अर्हणीयगणना १९७६. पुनरर्हणावधिः १९७७.

पाणिग्रहणाव्यवहितपूर्वकृत्यम्—

अग्न्युपसमाधानम्, उदकुम्भधारिणः गृहीतप्रतोदस्य चेति द्वयोर्जन्ययोरवस्थानम्, लाजदृषत्पुत्रयोरुपसादनम्, कन्याप्लवनम्, कन्यापरिधापनम्, गृहीतहस्ताया गृहमध्यादग्निसमीपे नयनम् २०४४.

पाणिग्रहणम्—

वरवध्वोः कटोपवेशनम्; विवाहहोमः २१२३. लाजहोमः, अश्मारोपणम्, परिणयनम् २१२५. सप्तपदी २१२८; ईक्षकानुमन्त्रणम्; वधूवराभिषेकः २१२९. पाणिग्रहणम् २१३०; ब्राह्मणकुले वधूद्वहनम्, वाग्यमः, होमः, ध्रुवादिदर्शनम्, अनुमन्त्रणम्, गुर्वभिवादनम्, वाग्विसर्गः, त्रिरात्रव्रतम् २१३१. विवाहे अर्हणावसरः २१३६. श्वशुरगृहे प्रथमभोजने नियमः समशनीयस्थालीपाकश्च २१३७. उच्छिष्टान्नस्य वध्वै प्रदानम् २१३८.

प्रयाणम्—

वध्वा यानारोहणे जपः २१८६. चतुष्पथाद्यनुमन्त्रणम्; अक्षभङ्गादिनिमित्तेषु होमः वामदेव्यगानपूर्वकमारोहणं च २१८७.

गृहप्रवेशः—

वामदेव्यगानम्, आनडुहे चर्मण्युपवेशनम्, उपस्थोपवेशितकुमाराय फलादिदानम् होमः, गुर्वभिवादनम् २२१३.

चतुर्थीकर्म—

प्रायश्चित्ताज्यहोमः, वधूस्नपनम् २२३६.

## गोभिलीयश्राद्धकल्पः

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य परिभाषा प्रयोगश्च १७४६.

## खादिरगृह्यसूत्रम्

विवाहपूर्वे कर्तव्यानि देवपत्नीयागवादननृत्यादीनि—

कन्याप्लवनम् १९०९.

मधुपर्कः—

अर्घ्यकर्तृकजपः; उपचारगणना, त्रिर्निवेदनम्; विष्टरोपचरणम्; पाद्योपचरणम् १९७७. अर्घ्याचमनीयोपचरणम्; मधुपर्कोपचरणम्, शेषप्रतिपत्तिः; गवोपचरणम्, करणोत्सर्जनव्यवस्था; अर्हणीयगणना; पुनरर्हणावधिः १९७८.

पाणिग्रहणाव्यवहितपूर्वकृत्यम्—

उदकुम्भधारिणोऽवस्थानम्; वध्वाः स्नानम्, वासःपरिधापनम्, अग्निसमीपमानीयमानायां जपश्च २०४७.

पाणिग्रहणम्—

वधूवरयोर्जपः, वधूपवेशनम्; प्रधानाङ्गप्रायश्चित्तहोमाः, सर्वहोमसाधारणविधयः २१३९. लाजहोमः, अश्मारोपणम्, परिणयनम्; सप्तपदी २१४०. ईक्षकावेक्षणे जपः; वधूवरयोरभिषेकः; पाणिग्रहणम्; लेखाहोमः, ध्रुवदर्शनम्, गुर्वभिवादनम्, वाग्विसर्गः, दक्षिणा २१४१. मधुपर्कावसरः, त्रिरात्रव्रतम् २१४२.

प्रयाणम्—

ईक्षकावेक्षणरथारोहणभयस्थाननिमित्तका जपाः २१८८.

चतुर्थीकर्म—

आज्यहोमः, वधूस्नपनम् २२३९.

## जैमिनिगृह्यसूत्रम्



## कौशिकगृह्यसूत्रम्

## वैखानसगृह्यसूत्रम्

ग्रहयज्ञः—

ग्रहयज्ञप्रशंसा ग्रहगणना च ; ग्रहाणां वर्णाः अधिदेवताः दिशः पीठानि च, अग्निस्थापनम्, पुष्पाणि अर्चनम् उपहाराश्च ; होमः, ग्रहसमिधः, होममन्त्राः, आहुतिसंख्या, हविर्द्रव्याणि, अग्निनियमः, ब्राह्मणभोजनम्, दक्षिणाः, दक्षिणाप्रतिनिधिः, ग्रहयज्ञस्य निमित्तानि फलं कर्माङ्गत्वं च १५७६.

पुण्याहवाचनम्—

पुण्याहवाचनस्य प्रयोगः, कर्मसिद्धिहेतुत्वम्, आदावन्ते च कर्तव्यता १६८०.

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य निमित्तानि पूर्वेद्युः कर्तव्यता प्रयोगश्च १७५४.

कन्यावरणम्—

वरणोत्तरभोजनम् १८८९.

वरप्रस्थानम्—

प्रस्थानमन्त्राः १९१६.

मधुपर्कः—

वरमधुपर्कप्रयोगः १९८२.

निरीक्षणम्—

वधूवरकर्तृकं परस्परेक्षणं समन्त्रकम् २०१२.

कन्यादानम्—

ब्राह्मविवाहे कन्यादानविधिः तत्र पक्षान्तरं च २०२२.

पाणिग्रहणम्—

अग्निसमीपमानीतायै कूर्चदानम्, प्रधानहोमः, अश्मस्पर्शनम्, पाणिग्रहणम्, लाजहोमः, परिक्रमणम्, उत्तरतन्त्रम्, सप्तपदी, हृदयाभिमर्शः, प्रोक्षणम्, स्तोमारोपणम् २१४५.

प्रयाणम्—

वैवाहिकाग्निना सह प्रयाणम् २१८९.

गृहप्रवेशः—

गृहप्रवेशः, वध्वाश्चर्मोपवेशनम्, वाग्यमः, नक्षत्रदर्शनम्, वरवध्वोः संभाषणम्, आग्नेयस्थालीपाकः, विवाहव्रतम् २२१६.

चतुर्थीकर्म—

प्रायश्चित्तहोमः, मूर्धनि होमः, उपगमनविधिः २२४१.

विवाहमध्ये कन्यारजोदर्शने प्रायश्चित्तम्—

होमकालरजोदर्शने स्नापन—पुण्याहवाचन— प्रोक्षण—होमात्मकं प्रायश्चित्तं कर्मोत्तरमाशौचं च २२७०.

## बैजवापगृह्यम्

गणपतिपूजनं विनायककल्पश्च—

विनायकचतुष्टयम्, आवेशफलानि, आविष्टलक्षणानि ; उदकुम्भचतुष्टयोपकल्पनम् १६५४.

## गृह्यसूत्रम्

पाणिग्रहणम्—

पाणिग्रहणजपपर्यन्तमञ्जल्यविमोकः, पाणिग्रहणप्रकारः, उत्तरविवाहदेशः २१४६.

## गृह्यपरिशिष्टम्

मधुपर्कः—

मधुपर्कलक्षणम् ; मधुपर्कस्य वरशाखया कर्तव्यता १९८२. समांसभोजनस्य कलौ वर्ज्यत्वं प्रतिकल्पश्च १९८३.

## गौतमः

मधुपर्कः—

अर्हणीयगणना ; पुनरर्हणावधिः ; अर्हणीयविशेषप्रयुक्तोऽर्हणे विशेषः १९८३.

## हारीतः

पुण्याहवाचनम्—

कलशस्थापनम् १६८१.

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य प्रातःकर्तव्यता ; अनग्निकस्यापि नान्दीश्राद्धेऽधिकारः, पितरि जीवति पितुः पित्रादे-

देवतात्वम्, श्राद्धाभावो वेति मतद्वयम् १७५५. पितामहे जीवति केवलपितुर्देवतात्वम्; पितरि जीवति मात्रादीनाम्, मातरि जीवति पितामह्यादीनां च देवतात्वम्; सर्वव्यवहारेषु ज्येष्ठपुत्रस्य जीवत्पितुः प्रतिनिधित्वम् १७५६.

पाणिग्रहणम्—

कन्यात्वनिवृत्तिपूर्वकजायापतित्वोत्पत्तिकारणे मतभेदाः २१४६.

## लघुहारीतः

नान्दीश्राद्धम्—

नान्दीश्राद्धदेवतात्वार्थे पितुः सपिण्डनापकर्षः १७५७. नान्दीश्राद्धे मातृश्राद्धस्य पृथक्त्वम् १७५८.

## बौधायनः

नान्दीश्राद्धम्—

पुत्रजन्मनिमित्तकं श्राद्धं हेम्नैव १७५८.

कन्यावरणम्—

वधूवरयोर्दिङ्नियमः १८८९.

मधुपर्कः—

अर्हणीयगणना १९८४. पुनरर्हणावधिः १९८५.

कन्यादानम्—

कन्यादाने दिङ्नियमः २०२२.

## आपस्तम्बः

पुण्याहवाचनम्—

पुण्याहवाचनवाक्यानामोंकारपूर्वकत्वम् १६८२.

मधुपर्कः—

त्रयाणां स्नातकानामर्हणं समानम्, अर्हयितॄणां फलेषु तारतम्यम्; अर्हणीयानां गणना योग्यता च १९८५. पुनरर्हणावधिः; मधुपर्कलक्षणम् १९८६.

## हिरण्यकेशिधर्मसूत्रम्

पुण्याहवाचनम्—

पुण्याहवाचनवाक्यानामोंकारपूर्वकत्वम् १६८२.

मधुपर्कः—

त्रयाणां स्नातकानामर्हणं समानम्, अर्हयितॄणां फलेषु तारतम्यम्; अर्हणीयानां गणना योग्यता च १९८५. पुनरर्हणावधिः; मधुपर्कलक्षणम् १९८६.

## वसिष्ठः

ग्रहयज्ञः—

ग्रहयज्ञफलम्; ग्रहयज्ञनिमित्तानि; मण्डपस्य देशो लक्षणं च; कुण्डस्य देशो लक्षणं यथालक्षणकर्तव्यता च; ग्रहवेद्या देशो लक्षणं च; द्विजानुज्ञाग्रहणम्, आशीर्वाचनम्, मधुपर्कः, ऋत्विगाचार्यवरणम् १५७७. पद्मलेखनम्, प्रतिमानां प्रकृतयो मानं च; ग्रहाणां ध्येयगुणा अधिदेवताप्रत्यधिदेवताश्च, ऋतुसाद्गुण्यदेवता लोकपालाश्च, ग्रहदेवतानां स्थापनदिशो मन्त्राश्च १५७८. ग्रहसमिधः तद्गुणाश्च; अग्निस्थापनम्; ग्रह-देवतापूजनम्; पूर्णकुम्भपूजनम्; पूर्णकुम्भोपयोगिपल्लव–धान्य–मृत्तिका–शतौषधित्वक्–पत्राणां परिगणनम्; ग्रहवर्णोपचारसमर्पणम् १५८१. ग्रहधूपाः; समिद्गन्धपुष्पधूपान्नप्रतिनिधयः, पञ्चामृते गव्यनियमः; चरवः, तेषां स्थापनं संस्कारश्च; होमः, आहुतीनां संख्या मानं च, नैवेद्यसमर्पणम्; अयुत–लक्ष–कोटिहोमा ग्रहयज्ञप्रकाराः, तेषां मन्त्रो हविर्द्रव्यं दिनसंख्या च; शान्तिजपः, ब्राह्मणभोजनम्; जयादिहोमाः, पूर्णाहुतिः, यजमानाभिषेकः १५८२. बलिदानम्, ग्रहादिध्यानम्, पुष्पाञ्जलिदानम्, स्विष्टकृद्धोमः, पूर्णाहुतिः, कर्मफलग्रहणम्, दक्षिणादानम् १५८३. धेन्वादिदक्षिणापरिगणनं दक्षिणादानमन्त्राश्च १५८४. आज्यपात्रपूजनाज्यावेक्षणयोर्मन्त्रौ; वह्निग्रहाद्युद्वासनम्, ब्राह्मणभोजनम्, ग्रहयज्ञफलम्; ग्रहमण्डलानामाकारा मानानि च १५८५. प्रत्यधिदेवताः तासां स्थानानि मन्त्राश्च; अधिदेवताः तासां स्थानानि च; ग्रहाणां जातिवर्णाः रङ्गवर्णाश्च १५८६.

मण्डपनिर्माणविधिः—

मण्डपस्य मानं स्वरूपं च १६४०.

वेदीनिर्माणविधिः—

वेदीलक्षणम् १६४२.

नान्दीश्राद्धम्—

दिनत्रये एकस्मिन्वा दिने श्राद्धत्रयमिति पक्षद्वयम्, नान्दीश्राद्धपरिभाषा १७५९.

मधुपर्कः—

मधुपर्के पशुहिंसानुमतिः; अर्हणीयगणना; मधुपर्के उच्छिष्टतादोषाभावः; सर्पिष्मदन्नदानम् १९८६.

कन्यादानम्—

कन्यादाने दिङ्नियमः २०२२.

## वृद्धवसिष्ठः

नान्दीश्राद्धम्—

नान्दीश्राद्धविशेषस्य वृद्धिश्राद्धसंज्ञा, नान्दीश्राद्धपरिभाषा १७५९. मातृश्राद्धे विप्रालाभे सुवासिनीभोजनम् १७६१.

कन्यादानम्—

वधूवरयोः प्रपितामहपूर्वकं नामगोत्रसहितत्रिपुरुषीकीर्तनम् २०२२.

प्रतिकूलशान्तिः—

शान्तिविधिः, श्र्यादिदेवतापूजनम्, होमः २२५९.

## विष्णुः

नान्दीश्राद्धम्—

पितरि जीवति पितुः पित्रादीनां देवतात्वम् १७६१. पितृपितामहयोर्जीवने पितामहपित्रादीनां देवतात्वम्, त्रयाणां जीवने श्राद्धलोपः १७६२. पितृपितामहप्रपितामहानां मध्ये प्रथमस्य, प्रथमद्वितीययोः, द्वितीयस्य, प्रथमतृतीययोश्च मरणे श्राद्धदेवतानिर्णयः १७६३. पित्रादिमरणे पूर्वोक्तस्य देवतानिर्णयस्य मातामहादिमरणेऽतिदेशः, प्राकृतमन्त्रेषु विकृतावूहविधानम् १७६४. नान्दीश्राद्धस्य काम्यत्वम्; नान्दीश्राद्धस्य प्रातः कर्तव्यता, आधानाङ्गस्य त्वपराह्णकर्तव्यता; नान्दीश्राद्धस्य कर्मादौ कर्तव्यता १७६६.

कन्यादानम्—

रात्रौ कन्यादानानुमतिः २०२२.

पाणिग्रहणम्—

पाणि—शर—प्रतोद—दशान्तानां ग्रहणे वर्णतो व्यवस्था २१४७.

## शङ्खः

कन्यादानम्—

कन्यादाने दिङ्नियमः २०२२.

## शङ्खः लिखितः च

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य मात्रादिपार्वणकश्राद्धत्रयात्मकत्वम्; मातृश्राद्धस्य विश्वदेवपूर्वकत्वम्; मातृश्राद्धेऽपि द्विजानां भोज्यत्वम्; मातृश्राद्धस्य पृथक्कर्तव्यतानिमित्तानि; श्राद्धभेदेन विश्वदेवसंज्ञाभेदः १७६७.

पाणिग्रहणम्—

पाणि—शर—प्रतोद—दशान्तानां ग्रहणे वर्णतो व्यवस्था २१४७.

## महाभारतम्

वसोर्धारा आयुष्यजपश्च—

वसोर्धाराया वसूद्देश्यकत्वम् १७०८.

कन्यादानम्—

रात्रौ कन्यादानानुमतिः २०२३.

## मनुः

नान्दीश्राद्धम्—

पितुर्जीवत्त्वे श्राद्धदेवतानिर्णयः १७६८. पितुर्मृतत्वे पितामहस्य जीवत्त्वे च श्राद्धदेवतानिर्णयः १७६९. पित्रादित्रितयस्य जीवत्त्वे तत्परेषां देवतात्वम्; प्राकृतजपस्थाने वैकृतजपविधिः १७७१. कर्मादौ मातृपूजनपूर्वकनान्दीश्राद्धस्य कर्तव्यता १७७२.

मधुपर्कः—

स्नातकस्य मधुपर्कार्हणीयता १९८६. अर्हणीयगणना पुनरर्हणावधिश्च १९८८. राजश्रोत्रिययोर्यज्ञे एवार्हणम्

## वृद्धमनुः



## याज्ञवल्क्यः



## योगियाज्ञवल्क्यः



## वृद्धयाज्ञवल्क्यः



## नारदः

पाणिग्रहणम्—

विवाहमन्त्रैः सप्तपद्या च दाम्पत्यनिष्पत्तिः २१५१.

## बृहस्पतिः

ग्रहयज्ञः—

असंस्कृतमन्त्रस्य आचार्यत्वेऽनधिकारः १५९४.

नान्दीश्राद्धम्—

नान्दीश्राद्धे विश्वदेवसंज्ञाविधिः १७७४. रजस्वलापतेर्नान्दीश्राद्धानधिकारः १७७५.

कन्यादानम्—

कन्यादातुरुत्थितत्वनियमः २०२३.

## कात्यायनः

ग्रहयज्ञः—

ग्रहगोत्रजातिज्ञानस्याऽऽवश्यकत्वम्; ग्रहाणां जातयः १५९४.

गणपतिपूजनादिक्रमः संकल्पविचारश्च—

मातृकापूजनायुष्यजपोत्तरं नान्दीश्राद्धस्य कर्तव्यता १६४६.

मातृकापूजनम्—

मातृगणना १६९५. कर्मादौ मातृकापूजनस्य कर्तव्यता १६९७. मातृकाप्रतीकानि पृथङ्नैवेद्यता च; नान्दीश्राद्धस्याऽऽवश्यकता, मातृपूजनस्य नान्दीश्राद्धात्पूर्वमनुष्ठानम्; प्रधानावृत्तावपि मातृपूजनस्य नान्दीश्राद्धस्य च नाऽऽवृत्तिः, आवर्तमानप्रधाननियमश्च १६९८. सकृत्कृतस्य मातृपूजनस्य नान्दीश्राद्धस्य च कर्मगणोपकारकत्वम् १६९९. मातृपूजनस्य नान्दीश्राद्धव्यापकत्वं तद्व्याप्यत्वं च १७००.

वसोर्धारा आयुष्यजपश्च—

घृतधाराणां संख्या आयामश्च १७०८. आयुष्यसूक्तजपः १७०९.

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य मातृकापूजनाद्युत्तरमारम्भः षड्देवत्यत्वं च १७७५. नान्दीश्राद्धे प्राकृताङ्गातिदेशः वैकृताङ्गविशेषविधिः प्रयोगश्च १७७९. कातीयादिश्राद्धकल्पस्तुतिः; असकृदनुष्ठेयकर्मणां प्रथमप्रयोगात्पूर्वं सकृदेव नान्दीश्राद्धस्य कर्तव्यता, प्रधानकर्मनियमश्च १७९२. कर्मविशेषेषु नान्दीश्राद्धनिषेधः १७९४. विवाहत्प्रागनुष्ठितस्य नान्दीश्राद्धस्य विवाहादिगर्भाधानान्तकर्मगणोपकारकत्वम् १७९५. सकृदनुष्ठितनान्दीश्राद्धस्य गोनिष्कालप्रवेशयोरुपकारकत्वम्; नान्दीश्राद्धस्य प्रतिप्रयोगमनुष्ठानाननुष्ठानयोर्व्यवस्था १७९६. कर्मविशेषेषु नान्दीश्राद्धस्य निषेधः १७९७. सकृत्कृतस्य मातृकापूजनस्य नान्दीश्राद्धस्य च कर्मगणोपकारकत्वम्; नान्दीश्राद्धस्य मातृकापूजनव्याप्यत्वं तद्व्यापकत्वं च; जीवत्पितृकस्य श्राद्धानधिकारः; जीवन्तमतिक्रम्य श्राद्धदाननिषेधः; पितामहमात्रजीवने प्रपितामहमात्रजीवने च श्राद्धदेवतानिर्णयः १७९८. पित्रादीनां त्रयाणां मृतत्वे तेषां देवतात्वम्; जीवन्तमतिक्रम्यापि श्राद्धदानविधिः; पितुः पित्रादीनां देवतात्वे निमित्तानि १७९९. सुतसंस्कारकर्मसु श्राद्धदेवतानिर्णयः १८०१. पितुः पित्रादीनां देवतात्वे निमित्तानि १८१०. पितुः स्वस्य च नान्दीश्राद्धाधिकारे व्यवस्था १८१२. मातृपूजापूर्वकत्वं नान्दीश्राद्धस्य, महामङ्गलोत्तरमृतुत्रये लघुमङ्गलनिषेधः; नान्दीश्राद्धस्य नवदेवताकत्वम् १८१३.

कौतुकबन्धनम्—

विनायकपूजनम्, संकल्पः, कांस्यपात्रे ताम्बूलभससौवर्णादिसूत्राभिषेकः, संस्कार्याभिषेकः, संस्कार्याय आशीर्दानं ललाटे भूतिदानं च, पुंसो दक्षिणकरे स्त्रिया वामकरे सूत्रबन्धनम् १८७७.

मधुपर्कः—

मधुपर्कलक्षणम्; कांस्येन मधुपर्कसंपुटीकरणम् १९९३.

पाणिग्रहणाऽव्यवहितपूर्वकृत्यम्—

शच्याः पूजनं प्रार्थना च २०४७.

पाणिग्रहणम्—

पाणिग्रहणादिसप्तपद्यन्तविधिना जायापतित्वनिष्पत्तिः २१५१.

गृहप्रवेशः—

धृतिहोमे चतुर्थ्यां अप्रयोगः २२१६.

## भरद्वाजः

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य पूर्वाह्नकर्तव्यता १८१५.

## भारद्वाजः

मधुपर्कः—

वरशाखया मधुपर्कस्य कर्तव्यता १९९४.

कन्यादानम्—

मधुपर्कोत्तरं कन्यादानम् २०२४.

## संवर्तः

नान्दीश्राद्धम्—

पुत्रजननिमित्तकं नान्दीश्राद्धं हेम्नैव कर्तव्यम् १८१५.

मधुपर्कः—

वरशाखया मधुपर्कार्हणम् १९९४.

## गोभिलः

ग्रहयज्ञः—

ग्रहपीठस्य दिग्भेदेन फलभेदः ; ग्रहाणां जातयो वर्णाश्च १५९४.

## शातातपः

ग्रहयज्ञः—

ग्रहयज्ञस्य कर्मादौ कर्तव्यता १५९४.

गणपतिपूजनादिक्रमः संकल्पविचारश्च—

नान्दीश्राद्धात्पूर्वं मातृकापूजनम् १६४६.

मातृकापूजनम्—

नान्दीश्राद्धस्याऽऽवश्यकता, मातृपूजनस्य नान्दीश्राद्धात्पूर्वमनुष्ठानम् १७०१. मातृगणना १७०२.

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य प्रातःकर्तव्यता विशेषधर्माश्च १८१५. नान्दीश्राद्धस्य श्राद्धत्रयात्मकत्वम्, तत्क्रमः तद्धर्माश्च १८१६. मातृश्राद्धे द्विजानां भोज्यत्वं मातृश्राद्धशब्दप्रवृत्तिनिमित्तं च ; मातृश्राद्धधर्माः १८१७. मातृश्राद्धस्य पृथक्कर्तव्यतानिमित्तानि ; कर्मादौ मातृपूजापूर्वकनान्दीश्राद्धविधिः १८१८. मातृश्राद्धस्य पृथक्कर्तव्यतानिमित्तानि १८२०.

## वृद्धशातातपः

नान्दीश्राद्धम्—

नान्दीश्राद्धे पूर्वाह्णादिकालिकानि त्रीणि श्राद्धानि, तेषां पृथग्दिनेषु एकस्मिन्पूर्वदिने वा कर्तव्यता, एकदिनकरणपक्षे वैश्वदेविकस्य तन्त्रता ; वृद्धौ नान्दीश्राद्धस्यावश्यकर्तव्यता १८२०. गृहाद्बहिः पिण्डदानं तत्र प्राङ्मुखता च १८२१.

## पराशरः

मधुपर्कः—

मधुपर्कभक्षणे उच्छिष्टदोषाभावः १९९४.

कन्यादानम्—

रात्रौ कन्यादानानुमतिः— २०२५.

विवाहमध्ये कन्यारजोदर्शने प्रायश्चित्तम्—

होमकालोपस्थितौ रजोदर्शने स्नापनाग्न्यर्चनहोमाः, होमोत्तरं रजोदर्शने रजःकालोत्तरं शेषकर्मानुष्ठानम् २२७१.

## बृहत्पराशरः

ग्रहयज्ञः—

प्रतिपाद्यविषयोद्देशः १५९४. ग्रहाणां वर्णाः पितरश्च ; ग्रहाणां जन्मदेशाः ; ग्रहाधिदेवताः तासामवश्यज्ञेयत्वं च ; ग्रहाणां समिधः, तासां फलानि अञ्जनद्रव्याणि मानं संख्या संख्याभूयस्त्वे फलभूयस्त्वं विहितातिक्रमे राक्षसत्वं च ; ग्रहस्थापना, पटे मण्डले वा वर्णकैः पिष्टेन लिखितेषु प्रतिमासु वा पूजनम्, प्रतिमाप्रकृतयः, स्थापनदिग्भागाः १५९५. ग्रहाणामधिदेवतानां च मन्त्राः ; होमद्रव्यम्, अञ्जनद्रव्यम्, आहुतिमानम् ; कुण्डस्य मानं स्वरूपं च ; मण्डपस्वरूपम्, मण्डपाभावे सद्मसंस्कारः ; ऋत्विग्गुणाः ; ग्रहाणामन्नानि तैर्ब्राह्मणभोजनं च ; ग्रहाणां वस्त्रकुसुमगन्धधूपाः ; ग्रहदक्षिणाः १५९६. ग्रहयज्ञकालः, व्यस्तग्रहयज्ञः, ग्रहयज्ञस्य फलं कर्माङ्गत्वं च १५९७.

## अत्रिः



## सुमन्तुः



## जाबालः



## जाबालिः



## पैठीनसिः



## अङ्गिराः



## कार्ष्णाजिनिः



## प्रचेताः

## बृहत्प्रचेताः

नान्दीश्राद्धम्—

नान्दीश्राद्धस्योपाकर्मणि कर्तव्यता १८२५.

## व्याघ्रः

नान्दीश्राद्धम्—

श्राद्धप्रकाराः ; नान्दीश्राद्धे मातृश्राद्धस्य प्राथम्योपपादनम् १८२५.

## व्याघ्रपात्

नान्दीश्राद्धम्—

पुत्रिकापुत्रकर्तृकनान्दीश्राद्धान्तर्गतमातामहश्राद्धे मातृपूर्वकत्वापवादः १८२६.

## गर्गः

ग्रहयज्ञः—

कुण्डे योनिदेशः ; ग्रहशान्त्युपायाः १५९७.

प्रतिकूलशान्तिः—

पुण्याहवाचनम्, श्र्यादिदेवतापूजनम्, होमः, शान्तिफलम् २२६०.

अर्कविवाहः—

अर्कविवाहस्य फलं देशः प्रयोगश्च, आत्मन्यग्निसमारोपः, ब्रह्मचर्यचरणम् २२७८.

## गार्ग्यः

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य निमित्तानि कर्माणि ; नान्दीश्राद्धान्तर्गतश्राद्धत्रयं तत्कालश्च १८२६.

## वृद्धगार्ग्यः

वृद्धिश्राद्धम्—

नान्दीश्राद्धनिमित्तानि कर्माणि १८२६.

## सत्यव्रतः

नान्दीश्राद्धम्—

नान्दीश्राद्धे वारतिथिदोषाभावः १८२६.

गृहप्रवेशः—

विवाहव्रतम् २२१६.

## आश्वलायनः

ग्रहयज्ञः—

ग्रहयज्ञफलम् ; ग्रहाणां पञ्चमहाभूतादिरूपत्वम् ; ग्रहाणां शरीराश्रयेण पीडाकरत्वम्, ग्रहयज्ञस्य शान्तिकत्वं पौष्टिकत्वं च १५९७. ग्रहसंबन्धिरूपादिसकलपदार्थज्ञानस्याऽऽवश्यकत्वम् ; व्यस्तसमस्तग्रहयज्ञविकल्पः ; कलशपूजनम्, ग्रहचक्रम्, भूर्भुवःस्वश्चक्रेषु ग्रह—देवतापूजनम्, होमः १५९८. कोटिहोमादौ मण्डपस्य कर्तव्यता १५९९. आहुतिसंख्या कुण्डस्थण्डिलविकल्पश्च ; बहुषु एकस्मिन्वा कुण्डे एककर्तृकहोमविधिः, एकस्मिन्कुण्डे बहुकर्तृकहोमनिषेधः ; तान्त्रिकादौ भुवःस्वश्चक्रयोर्ग्रहार्चनम् ; विघ्नादिदेवतापूजनं मातृपूजनं च १६००. राज्याभिषेकात्प्राक् ग्रहयज्ञकर्तव्यता ; अधिकारिभेदेन भोज्यब्राह्मणसंख्यानियमः ; अन्न—मन्त्र—दक्षिणाहीनस्य दुष्फलानि ; अन्नदक्षिणयोर्जपादिभिः सह विकल्पः ; शिवग्रहयज्ञः १६०१. शिवग्रहयज्ञफलानि ; ग्रहयज्ञफलानि १६०२.

पुण्याहवाचनम्—

पुण्याहवाचनस्य कर्मादौ कर्तव्यता, ब्राह्मणधर्माः ; प्रयोगः १६८३. वरणोत्तरं वधूवरगृहयोः पुण्याहवाचनस्य पृथक्कर्तव्यता १६८४.

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य पूर्वेद्युःकर्तव्यता प्रदक्षिणक्रियत्वं देवताश्च १८२६. नान्दीश्राद्धविशेषधर्माः ; नान्दीश्राद्धस्य कर्मादौ पुण्याहवाचनात्पूर्वं च कर्तव्यता ; नान्दीश्राद्धस्य वधूवरगृहयोः पृथक्कर्तव्यता १८३०.

कन्यावरणम्—

वरणप्रयोगः १८९१.

विवाहपूर्वं कर्तव्यानि देवपत्नीयागवादननृत्यादीनि—

वधूवरयोर्वस्त्रपरिधानम् १९१०.

मधुपर्कः—

ब्राह्मादिषु वरशाखया गान्धर्वादिषु दातृशाखया च च स्नातकस्यार्हणीयत्वम् १९९४.

## लघ्वाश्वलायनः

## ऋष्यशृङ्गः

कन्यादानम्—

वधूवरयोर्गोत्रस्य प्रपितामहादीनां च कीर्तनम् २०२६. दिङ्नियमः, मधुपर्कपूर्वकं सदक्षिणं कन्यादानम्; उदकदानं तन्मन्त्रश्च २०२७. अनुदानानि २०२८.

## जमदग्निः

कन्यादानम्—

दात्रा कन्याया वामकरधारणं प्रपितामहाद्युच्चारणं च २०२६.

## जातूकर्ण्यः

नान्दीश्राद्धम्—

ब्राह्मणनिमन्त्रणाद्युपवेशनान्तपदार्थक्रमः १८३१.

## कश्यपः

कन्यावरणम्—

वरण-वाग्दान-शचीपूजनानि १८९२.

## विश्वामित्रः

नान्दीश्राद्धम्—

श्राद्धप्रकाराः १८३१.

मधुपर्कः—

ऋत्विगर्चनाभावे प्रत्यवायः १९९५.

## छागलेयः

नान्दीश्राद्धम्—

नान्दीश्राद्धे ब्राह्मणसंख्या १८३१. ब्राह्मणानां प्राङ्मुखत्वम्; नान्दीश्राद्धे मातृश्राद्धस्य प्राथम्यम् १८३२.

## लौगाक्षिः

नान्दीश्राद्धम्—

नान्दीश्राद्धनिमित्तानि कर्माणि नान्दीश्राद्धकालश्च; मातॄणामनेकत्वे अर्घ्यदानस्य पृथक्त्वं पिण्डस्यैकत्वं च १८३२.

## पारस्करः

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य पारिभाषिककर्माङ्गरूपता तन्निमित्तानि च १८३२.

## गालवः

नान्दीश्राद्धम्—

आधाननिमित्तकनान्दीश्राद्धस्यापराह्णे कर्तव्यता; नान्दीश्राद्धस्य नैमित्तिकत्वम् १८३३.

पाणिग्रहणम्—

विवाहे एकयानारोहणं सह भोजनं च २१५५.

## कृष्णात्रेयः

नान्दीश्राद्धम्—

नान्दीश्राद्धे मांसदाननिषेधः १८३३.

## ईश्वरः

नान्दीश्राद्धम्—

नान्दीश्राद्धे विशेषधर्माः १८३३.

## धर्मः

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य नवदेवताकत्वम् १८३४.

## धौम्यः

नान्दीश्राद्धम्—

जातश्राद्धभोजने प्रायश्चित्तम् १८३४.

## स्मृत्यन्तरम्

ग्रहयज्ञः—

लोकपालानां दिग्भागाः १६०३.

पुण्याहवाचनम्—

पुण्याहवाचने दक्षिणोत्तरकलशयोः क्रमेण स्थिरत्वं चरत्वं च; अभिषेकमन्त्राः १६८४.

मातृकापूजनम्—

मातृगणना १७०२.

नान्दीश्राद्धम्—

मातृश्राद्धस्य पृथक्करणनिमित्तानि; नान्दीश्राद्धे उपनेयपित्रादीनां कन्यापित्रादीनां च देवतात्वम्; नान्दी-

## वायुपुराणम्



## ब्रह्माण्डपुराणम्



## मार्कण्डेयपुराणम्



## मत्स्यपुराणम्

१६१३. आदित्याभिमुखत्वेन ग्रहस्थापनम्; दक्षिणादानम्; अन्नमन्त्रदक्षिणाहीनस्यानिष्टफलत्वम्; व्यस्तग्रहयज्ञः; अशक्तावेकब्राह्मणपूजनम् १६१४. अयुतहोमस्य काम्यकर्माङ्गत्वम्; आवाहने वर्णरूपगुणध्यानस्य व्याहृतिमन्त्रस्य च विधिः; ग्रहप्रतिमानां स्वरूपं मानं च १६१५.

गणपतिपूजनं विनायककल्पश्च—

ध्येयं गणपतिस्वरूपम्; गणपतिपूजनस्य कर्मसिद्ध्यर्थता, उपचाराः, अर्घ्यदानं च १६६६.

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य वृद्धिनिमित्तकत्वं श्राद्धत्रयक्रमश्च १८३७. नान्दीश्राद्धे विशेषधर्माः; नान्दीश्राद्धे शूद्रस्याप्यधिकारः शूद्रश्राद्धे विशेषधर्माश्च; नान्दीश्राद्धनिमित्तानि १८३८. कर्मादौ नान्दीश्राद्धकर्तव्यता १८३९.

पाणिग्रहणाव्यवहितपूर्वकृत्यम्—

तिलकप्रकृतिद्रव्याणि, तिलककरणफलम् २०४८.

## विष्णुपुराणम्

मातृकापूजनम्—

मातृपूजनस्याऽऽवश्यकता १७०२.

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य कर्तव्यता; नान्दीश्राद्धे विशेषधर्माः; नान्दीश्राद्धस्य निमित्तानि कर्तव्यता च १८३९. नान्दीश्राद्धनिमित्तानि १८४२. नान्दीश्राद्धे विशेषधर्माः १८४३.

## श्रीमद्भागवतपुराणम्

विवाहपूर्वं कर्तव्यानि देवपत्नीयागवादननृत्यादीनि—

वधूरक्षार्थहोमदानानि १९१०.

## लिङ्गपुराणम्

गणपतिपूजनं विनायककल्पश्च—

गणपतिपूजनस्य चातुर्वर्ण्याधिकारिकत्वं कर्मसिद्ध्यर्थमादौ कर्तव्यता च १६६६.

कन्यादानम्—

अनुदानानि २०२८.

## स्कन्दपुराणम्

ग्रहयज्ञः—

ग्रहाणां पीडाकरत्वं सोदाहरणम्; कुण्डलक्षणं वेदिलक्षणं च १६१६. ऋत्विक्संख्या; ग्रहाणां जन्मभूगोत्रादिज्ञानस्याऽऽवश्यकता; ग्रहाणां जन्मदेशाः; ग्रहगोत्राणि १६१७. ग्रहाणामन्वयः; ग्रहवर्णाः; ग्रहाणां दिग्भागाः, तण्डुलराशि–लेख्य–प्रतिमानां विकल्पः; ग्रहपीठानां गणेशस्य चाऽऽकृतयः; ग्रहलेख्यमानानि; ग्रहमुखदिशः १६१८. ग्रहाणां स्थापनमन्त्राः; देवाः (अधिदेवताः) अधिदेवाः (प्रत्यधिदेवताः) तेषां स्थापनमन्त्राश्च १६१९. गणपतिस्थापनदेशः; ग्रहाणां चन्दनानि पुष्पाणि धूपाः दीपाश्च १६२०. ग्रहणामोदनाः तन्निवेदनं होमश्च; ग्रहाणां समिधः तन्मानम् अञ्जनद्रव्याणि च; होममन्त्राः नैवेद्यशेषहोमश्च; आहुतिसंख्या १६२१. लक्षादिहोमे विशेषः; स्विष्टकृद्धोमः, बलिदानम्, पूर्णाहुतिः, दक्षिणादानम्; व्यस्तग्रहयज्ञः; ग्रहयज्ञप्रशंसा १६२२. ग्रहयज्ञस्य प्रतिसंवत्सरं कर्तव्यता; देवताविसर्जनम् १६२३.

कन्यादानम्—

दिङ्नियमः, नामगोत्रोच्चारणम्, जलदानम् २०२९.

बृहस्पतिशान्तिः—

अधिकारिणः, पत्रपुष्पौषधयः, संभारस्थापनम्, कुम्भस्थापनम्; कुम्भे बृहस्पतिप्रतिमास्थापनम्, प्रतिमास्वरूपम्, बृहस्पतिपूजा, होमः २२६२. पुनः पूजनम्, अर्घ्यदानम्, पूजाहोमसमर्पणम्, प्रार्थना, आचार्यपूजनम्, अभिषेकः, ब्राह्मणभोजनम्, शान्तेर्निमित्तं फलं च २२६३.

## विष्णुधर्मोत्तरपुराणम्

ग्रहयज्ञः—

ग्रहाणामग्न्यादिदेवतारूपत्वम्; अधिदेवताप्रत्यधिदेवतास्वरूपम् १६२३. विनायकादिदेवतास्वरूपम्

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य तीर्थयात्राङ्गत्वेनाऽऽदावन्ते च कर्तव्यता ; नान्दीश्राद्धे श्राद्धत्रयक्रमः ; नान्दीश्राद्धे विशेषधर्माः १८५६.

## भविष्यपुराणम्

ग्रहयज्ञः—

अहिंसादिगुणयुक्ते ग्रहानुग्रहः ; ग्रहयज्ञान्ते महोत्सवकर्तव्यता १६२५.

गणपतिपूजनादिक्रमः संकल्पविचारश्च—

नान्दीश्राद्धात्पूर्वे मातृकापूजनम् १६४६.

गणपतिपूजनं विनायककल्पश्च—

विनायकोपसृष्टस्य लक्षणानि ; विनायकशान्तिकालः ; विनायकशान्तौ पूजनीया देवताः ; गणेशशान्तिः , तस्याः कर्माङ्गत्वं काम्यत्वं च १६६७.

मातृकापूजनम्—

मातृपूजनस्य नान्दीश्राद्धात्पूर्वमनुष्ठानम् ; मातृगणना १७०३. मातृपीठम् १७०४.

नान्दीश्राद्धम्—

वृद्धिनिमित्तकस्य वृद्धिश्राद्धसंज्ञा ; नान्दीश्राद्धस्य पारिभाषिकं कर्माङ्गत्वम् १८५६. नान्दीश्राद्धफलम् ; नान्दीश्राद्धधर्माः ; नान्दीश्राद्धे पदार्थक्रमः १८५७. जीवत्पितृककर्तृकनान्दीश्राद्धे द्वयोर्देवतात्वम् १८६०.

कन्यादानम्—

कन्यादाने प्रवरादिकीर्तनम् २०२९.

## भविष्योत्तरपुराणम्

नान्दीश्राद्धम्—

नान्दीश्राद्धे विशेषधर्माः ; नान्दीश्राद्धस्योपाकर्मणि कर्तव्यता ; अन्नाद्यसंभवे हेम्ना नान्दीश्राद्धम् १८६०.

## बृहन्नारदीयपुराणम्

नान्दीश्राद्धम्—

पुत्रजन्मनिमित्तकनान्दीश्राद्धस्यान्नातिरिक्तहविषा कर्तव्यता ; नान्दीश्राद्धे तिलतर्पणनिषेधः १८६०.

## अग्निपुराणम्

कन्यादानम्—

दिङ्नियमः , दानोत्तरमीक्षणम् २०२९.

## देवीपुराणम्

ग्रहयज्ञः—

ग्रहस्थापने ताम्रपात्रादिविकल्पः ; सूर्यप्रतिमास्वरूपम् १६२५. गणपतये प्रथमाहुतिदानम् ; हवनीयद्रव्याणि १६२६.

नान्दीश्राद्धम्—

नान्दीश्राद्धस्य नित्यत्वम् १८६०.

कन्यादानम्—

वधूवरयोर्गोत्रनाम्नोः प्रपितामहादीनां च कीर्तनम् २०२९.

पाणिग्रहणम्—

पाणिग्रहणप्रकारः २१५६.

## आदित्यपुराणम्

नान्दीश्राद्धम्—

जातश्राद्धे पक्वान्नदाननिषेधः १८६१.

पाणिग्रहणम्—

भार्यया सह भोजनम् २१५६.

## दानधर्मोत्तरे

कन्यादानम्—

दिङ्नियमः २०२९.

## पुराणसमुच्चये

नान्दीश्राद्धम्—

नान्दीश्राद्धे विशेषधर्माः १८६१.

## सूर्यारुणसंवादे

बालवैधव्यपरिहारोपायाः—

कुम्भविवाहस्य कालः प्रयोगश्च २२४८. द्विजबान्धवसंनिधौ अश्वत्थविवाहः , तत्र द्विजानुमतिग्रहणम् , अश्वत्थप्रार्थना २२४९. वैधव्यहरविष्णुप्रतिमादानम् , तस्य कालः प्रयोगश्च , प्रतिमास्वरूपम् २२५०.

## अनिर्दिष्टकर्तृकवचनानि

कङ्कणमोचनम्—

कङ्कणमोचनमन्त्रः २२४४.

प्रतिकूलशान्तिः—

श्र्यादिदेवताप्रार्थनम्, जपः, होमः, अभिषेकः २२६०.

बृहस्पतिशान्तिः—

सपरिवारयजमानाभिषेकः २२६४.

अर्कविवाहः—

संक्षिप्तप्रयोगः, प्रथमपञ्चमदिनयोरर्कपूजनम्, अर्कविवाहफलम् २२७९.

## मानवसंहितायाम्

ग्रहयज्ञः—

कलशस्थापनम् १६२८.

## मेधातिथिः

गणपतिपूजनं विनायककल्पश्च—

विनायकशान्तिपूर्वकत्वं संकटग्रस्तशुभकर्मणः १६६७.

## षट्त्रिंशन्मतम्

नान्दीश्राद्धम्—

कर्तुरनाहिताग्नित्वे उत्सन्नाग्नित्वे च पिण्डदाननिषेधः १८६२. जातश्राद्धं हेम्ना कार्यम् १८६३.

## चतुर्विंशतिमतम्

गणपतिपूजनादिक्रमः संकल्पविचारश्च—

नान्दीश्राद्धात्पूर्वं देवकस्थापनं मातृकापूजनं च १६४६.

मातृकापूजनम्—

मातृपूजनस्य नान्दीश्राद्धात्पूर्वमनुष्ठानम्, मातृगणना च १७०४.

नान्दीश्राद्धम्—

नान्दीश्राद्धे पदार्थक्रमः; नान्दीश्राद्धस्य कर्तव्यता, मात्रादिश्राद्धक्रमः, मातामह्यादीनामपि देवतात्वम्; नान्दीश्राद्धे विशेषधर्माः १८६३.

## संग्रहकारः ( स्मृतिसंग्रहः )

ग्रहयज्ञः—

देवतास्थापने दिशः मन्त्रश्च १६२९.

पुण्याहवाचनम्—

शुभाशुभकर्मणोः कलशसंख्याव्यवस्था १६८६.

नान्दीश्राद्धम्—

नान्दीश्राद्धे विशेषधर्माः; नान्दीश्राद्धे वैश्वदेवस्याऽऽदौ कर्तव्यता १८६४.

कन्यावरणम्—

तण्डुलेषु स्थितिः दिङ्नियमश्च १८९४.

विवाहपूर्वं कर्तव्यानि देवपत्नीयागवादननृत्यादीनि—

गौरीहरपूजनम् १९१०.

पाणिग्रहणाव्यवहितपूर्वकृत्यम्—

दम्पत्योरभिषेकः, कङ्कणबन्धनम्, अक्षतारोपणम्, तिलककरणम्, पुष्पमालार्पणम्, वस्त्रपरिधापनम्, मङ्गलसूत्रबन्धनम्, गणेशादिपूजनम्, वायनदानम्, व्रतारम्भः २०४९.

पाणिग्रहणम्—

लाजहोमे विशेषः; विवाहे भार्यया सह एकासनमेकशय्यैकपात्रे भोजनमेकत्र मङ्गलं स्नानमेकवाहनारोहणं च न दोषावहम् २१५६.

## वराहमिहिरः ( वराहः )

वेदीनिर्माणविधिः—

वेद्याः स्थानं लक्षणं च १६४४.

कन्यावरणम्—

वरणप्रयोगः शचीपूजनं च १८९५.

नागबलिः—

नागबलेश्चतुर्थेऽहनि कर्तव्यता आशीर्वाचनं च २२२३.

## मिताक्षरायाम्

नान्दीश्राद्धम्—

नान्दीश्राद्धे पिण्डदानस्य विकल्पः १८६५.

## ब्रह्मयामले

ग्रहयज्ञः—

ग्रहयज्ञफलम् ; प्रतिमाप्रकृतयः ; प्रतिमामानम् , वर्णकैर्लेखनम् ; वितानम् , ग्रहाणां पीठं स्थापनं च ; लोकपालानां स्वरूपाणि दिग्भागाः मन्त्राश्च १६३०.

## राजमार्तण्डे

नान्दीश्राद्धम्—

नान्दीश्राद्धनिमित्तानि १८६७.

## वामनग्रन्थे

ग्रहयज्ञः—

आवाहनपूजनविसर्जनेषु नाममन्त्रविधिः ; कर्मफलग्रहणम् , दक्षिणादानम् , ब्राह्मणभोजनम् १६३१.

## व्यवहारचण्डेश्वरः

कन्यावरणम्—

वरवरणे देयद्रव्याणि १८९५.

## श्रीधरीये

पाणिग्रहणाव्यवहितपूर्वकृत्यम्—

मङ्गलसूत्रबन्धनम् २०५०.

## सिद्धान्तशेखरे

पाणिग्रहणम्—

लाजाहुतिमानम् २१५७.

## शारदातिलके

ग्रहयज्ञः—

होमे स्थण्डिलविकल्पः १६३१.

अङ्कुरार्पणम्—

अङ्कुरार्पणनिमित्तानि ; शाला—मण्डललक्षणम् १६९२. पात्रलक्षणं प्रयोगश्च. १६९३.

## प्रयोगपारिजाते

विवाहमध्ये कन्यारजोदर्शने प्रायश्चित्तम्—

विवाहकर्ममध्ये रजोदर्शने चतुर्थेऽहनि शुद्ध्युत्तरं होमश्रीपूजनात्मकं प्रायश्चित्तं पुनर्विवाहहोमश्च २२७२.

## संबन्धविवेके

कन्यादानम्—

प्रपितामहादीनां कीर्तनम् २०३२.

## ज्योतिःसारसमुच्चये

कन्यादानम्—

दिवा कन्यादाननिषेधः २०३२.

## वाचस्पतिमिश्रः

गणपतिपूजनादिक्रमः संकल्पविचारश्च—

प्रधानसंकल्पः , पुण्याहवाचनम् , मातृकापूजनम् , नान्दीश्राद्धमित्यनुष्ठानक्रमः १६४७.

पुण्याहवाचनम्—

पुण्याहवाचनस्य पौर्वापर्यम् १६८६.

## विधानखण्डे

बालवैधव्यपरिहारोपायाः—

कुम्भादिना विवाहेऽपि कन्यायाः पुनर्भूत्वदोषाभावः , कुम्भादिविवाहे ऐतिहासिकमुदाहरणम् २२५१.

## महार्णवे

गणपतिपूजनं विनायककल्पश्च—

विनायकशान्तेः संभाराः १६६७.

ग्रहसूचितमृतभार्यत्वपरिहारोपायः—

ऐहिकभार्यामरणफलकप्राग्भवीयपरिवेदनदोषपरिहारार्थं प्रायश्चित्तम् २२५८.

## रुद्रकल्पद्रुमे

गणपतिपूजनं विनायककल्पश्च—

गणपतिपूजनस्य कर्मादौ कर्तव्यता १६६८.

## चूडामणौ

वरप्रस्थानम्—

वरभोजनम् १९१७.

## चूडारत्ने

मातृकापूजनम्—

देशान्तरे प्रधानानुष्ठानेऽपि मातृकादिपूजनस्य स्वगृहेऽनुष्ठानम् १७०७.

## ज्योतिःसागरे



## शान्तिदीपिकायाम्



## जातकाभरणे सारावल्याम्



## विवाहपटले ( सप्तर्षिमते )



## ज्योतिष्प्रकाशे



## कालादर्शः



## धर्मप्रदीपे



## श्राद्धचन्द्रिकायाम्



## मदनरत्ने



## ज्ञानभास्करे



## मुहूर्तचिन्तामणिः



## आपदेवकृतग्रहपीठमालायाम्



## ग्रहदीपिकायाम्



## संहिताप्रदीपे

## मेरुतन्त्रम्

मोटनकम्—

मोटनकस्य प्रयोगः, देवाविर्भावकारणत्वम्, देवावेशचिह्नम्, कुमारीणां प्राधान्यम्, संख्याभेदेन फलभेदः २२७३.

## शान्तिपटले

विवाहे मातृरजोदोषशान्तिः—

विवाहादौ मातृरजोदर्शने दुष्फलम्, मृत्युंजयजपः, शिवार्चनम्, होमः, अग्निजिह्वावर्णनम्, जिह्वास्तुतिः, अभिषेकः, दक्षिणादानम्, मञ्चकदानम्, वस्त्रपरिवर्तनम्, ब्राह्मणभोजनम्, शान्तिफलम् २२६८.

## धर्मप्रवृत्तौ

कन्यादानम्—

दिङ्नियमः २०३२.

## ज्योतिर्निबन्धे

कन्यादानम्—

विवाहे रात्रौ स्नानदानानुमतिः २०३२.

## फलप्रदीपकारः

गृहप्रवेशः—

गृहप्रवेशः, स्वस्तिवाचनम्, भोजनम्, संवेशनम् २२१८.

## सुप्रभेदे

कन्यादानम्—

गोत्रनामोच्चारणम् उदकदानं च २०३३.

## विधानपारिजाते

मधुपर्कः—

मधुपर्के गोकरणोत्सर्जनपक्षौ १९९६.

## कर्मकौमुद्याम्

पाणिग्रहणम्—

चतुर्थलाजाहुतौ परिक्रमणे कन्यायाः पुरःसरत्वम्; परिक्रमणे बहिःकरणीयद्रव्याणि २१५७.

## संप्रदायभाष्ये

नान्दीश्राद्धम्—

उपाकर्माङ्गत्वेन नान्दीश्राद्धविधिः १८६८.

## तन्त्रप्रकाशे

ग्रहयज्ञः—

पीठस्थापितदेवताकहोमो नाममन्त्रेणैव, नाममन्त्रस्वरूपम् १६३४.

## अनन्तभट्टीये

नान्दीश्राद्धम्—

उपाकर्माङ्गनान्दीश्राद्धस्याऽऽचार्यकर्तृकत्वं प्रथमप्रयोगमात्रकर्तव्यता च १८६८.

## ग्रहतत्त्वदीपिकायाम्

पुण्याहवाचनम्—

आदिमध्यावसानेषु पुण्याहवाचनस्य कर्तव्यता १६८६.

## विश्वप्रकाशे

पुण्याहवाचनम्—

पुण्याहवाचनस्य प्रथमानुष्ठानात्मकनिमित्तानि १६८६.

## प्रपञ्चसारे

ग्रहयज्ञः—

होमे स्थण्डिलविकल्पः १६३४.

## ज्ञानार्णवे

ग्रहयज्ञः—

कलशे कुशब्रह्मपूजनम् १६३४.

## रूपनारायणः

ग्रहयज्ञः—

लेख्यग्रहाकृतयः तासां मानानि च १६३५.

## शाकलकारिकाः

ग्रहयज्ञः—

मण्डप—कुण्ड—वेदिकाः; ग्रहाणां मुखदिशः; ग्रहदेवतास्थापनम्, अधिदेवताः प्रत्यधिदेवताश्च; ग्रहदेवतानां मन्त्राः १६३५. लोकपाल—साद्गुण्यदेवतानां

## शौनककारिकाः

**कौतुकबन्धनम्—**

दिवा वा रात्रौ वा कर्तव्यम्, स्थण्डिले कांस्यपात्रोदकुम्भयोर्निधानम्, समन्त्रकसूत्रप्रोक्षणम्, स्त्रीपुंसयोर्वामदक्षिणकरयोः सूत्रबन्धनम्, भस्मना रक्षाकरणम्, आचार्यादिभ्यो दक्षिणादानम्, पुण्याहवाचनात्पूर्वमूर्ध्वं वा कर्तव्यम्, कर्मान्ते सूत्रविसर्जनम् १८७७. लौकिकदेशकुलधर्माणां कर्तव्यता १८८५.

**वरप्रस्थानम्—**

वरधर्माः स्नानं वस्त्रयुगधारणं भूषणानि इष्टदेवतावन्दनं ब्राह्मणभोजनं पुण्याहवाचनं कौतुकसूत्रबन्धनं मित्रबान्धवसाहित्यं च १९१७. यानेन गमनम्, वनिताभ्युद्गतस्य वरस्य गृहप्रवेशः १९१८.

**मधुपर्कः—**

मधुपर्कस्वरूपम्; विवाहे मधुपर्कविधिः, आसनोपचरणम्; पाद्योपचरणम्; आचमनीयोपचरणम्; मधुपर्कोपचरणम् १९९६. शेषप्रतिपत्तिः, आचमनम्, शेषजलपानम्; गवोपचरणम्, करणोत्सर्जनपक्षौ, वरतद्बन्धुपूजनम् १९९७.

**निरीक्षणम्—**

अन्तःपटधारणम्, दिङ्नियमः, अक्षतारोपणं मुहूर्तसंबन्धश्च, गाथा-मन्त्रपाठः, आशीर्वाचनम्, लौकिकाचाराः २०१२.

**कन्यादानम्—**

कन्यादानप्रयोगः, अनुदानानि २०३३. दिङ्नियमः २०३४.

**पाणिग्रहणाव्यवहितपूर्वकृत्यम्—**

कङ्कणबन्धनम्, मङ्गलसूत्रबन्धनम् २०५१.

**पाणिग्रहणम्—**

प्रधानहोमः, पाणिग्रहणम्, लाजहोमः, परिणयनम्, अश्मारोपणम्, शिखाविमोचनम्, सप्तपदी, शिरःसेचनम्, औपासनहोमोपक्रमः, वाङ्नियमः, ध्रुवादिदर्शनम्, आशीर्वादाक्षतारोपणम् २१५७.

**प्रयाणम्—**

हस्तग्रहणेन वध्वा गृहाद्बहिरानयनम्, अन्तरावसथौ विशेषः, यानारोपणादयः समन्त्रकाः, नैमित्तिकजपाः २१९०.

**गृहप्रवेशः—**

गृहप्रवेशः, आनडुहचर्मोपवेशनम्, गृहप्रवेशनीयहोमः, दधिप्राशनहृदयाञ्जनविकल्पः, विवाहव्रतम्, वधूवस्त्रदानम्, ब्राह्मणभोजनम्, पुण्याहवाचनम्, दाक्षायण्यादिपूजनम् २२१८.

**ऐरिणीदानम्—**

कालः, मङ्गलस्नानम्, ऐरिणीपूजनम्, बलिदानम्, ऐरिणीदानम्, वरमातृप्रार्थना २२२२.

**नागबलिः—**

नागबलेः कालः फलं च; प्रतिदिनं देवताविशेषपूजनम्, तदनुकल्पः, ब्राह्मणभोजनम्, आशीर्वाचनम्; चतुर्भद्रमण्डलनिर्माणं हस्तिनिर्माणं च; कुम्भदृषदुपलादिस्थापनम्, दाक्षायण्यादिपूजनम्, हस्तिपूजनम्, बलिदानम् २२२४. दम्पतिपूजनम्, सूर्यासावित्रीसूक्तश्रवणम्, कन्यामातुरन्नपात्रमूर्धधारणादि; वरमात्रा कन्यामातुः पूजनम्, हस्तियाचनविनिमयादि; नागबलिफलम् २२२५.

**चतुर्थीकर्म—**

चतुर्थीकर्मकालः, पुण्याहवाचनपूर्वकमुपगमनम् २२४२.

**स्तम्भबलिः—**

पुण्याहवाचनम्, वसन्तपूजा, बलिदानम्, अभिषेकः, ब्राह्मणेभ्यो बलि-दक्षिणादानम्, स्तम्भबलिफलम् २२४५.

**प्रतिकूलशान्तिः—**

पुण्याहवाचनादि, श्र्यादिदेवतापूजनम्, अभिषेकः, ब्राह्मणभोजनम्, शान्तिफलम् २२६०. प्रातिकूल्यदोषपरिहारार्था विनायकशान्तिः, तदकरणे प्रत्यवायश्च २२६१.

## कुमारिलकारिकाः



## कपर्दिकारिकाः

कन्यादानम्—

जलपूर्वकं दानम् २०३५.

पाणिग्रहणाव्यवहितपूर्वकृत्यम्—

परस्परसमीक्षणम्, वधूवरयोरागुरणम्, रोदननिमित्तकजपः, वस्त्रपरिधापनम्, मङ्गलसूत्रबन्धनम् २०५२.

पाणिग्रहणम्—

होमे विशेषविधिः २१६१.

प्रयाणम्—

मनुष्ययाने विशेषविधिः २१९१.

विवाहे मातृरजोदोषशान्तिः—

श्रीप्रतिमामानम्, श्रीपूजनम्, होमः, अभिषेकः २२६९.

## त्रिकाण्डमण्डनः

गणपतिपूजनादिक्रमः संकल्पविचारश्च—

पुण्याहवाचननान्दीश्राद्धयोः पौर्वापर्यम् १६४७.

पुण्याहवाचनम्—

पुण्याहवाचनस्य निमित्तानि पौर्वापर्यं च १६९०.

नान्दीश्राद्धम्—

मलमासे नान्दीश्राद्धनिषेधः १८७३. जीवत्पितृकाद्यविवाहनिमित्तकनान्दीश्राद्धे पितुः कर्तृत्वमिति, द्वितीयादिविवाहेषु जीवत्पितृककर्तृकनान्दीश्राद्धे पितुः पित्रादीनां देवतात्वमिति वा १८७४.

## यज्ञपार्श्वकारिकाः

नान्दीश्राद्धम्—

पित्रादीनामन्यतमस्य द्वयोर्वा जीवने श्राद्धदेवतानिर्णयः १८७४.

नागबलिः—

मण्डले हिरण्यगर्भादिपूजनम्, संवेशनस्य नागबलिपूर्वकत्वम् २२२६.

विवाहमध्ये कन्यारजोदर्शने प्रायश्चित्तम्—

होमकालोपस्थितौ रजोदर्शने स्नापनार्चनहोमाः प्रायश्चित्तम् २२७२.

## रेणुकारिकाः

मण्डपनिर्माणविधिः—

मण्डपस्य मानं स्वरूपं च १६४१.

वेदीनिर्माणविधिः—

वेद्याः स्थानं लक्षणं वर्णभेदेन मानव्यवस्था च १६४५.

गणपतिपूजनादिक्रमः संकल्पविचारश्च—

मातृकापूजनस्य नान्दीश्राद्धात्प्राक्कर्तव्यता १६४७.

गणपतिपूजनं विनाकककल्पश्च—

गणपतिपूजनस्य कर्तव्यता १६६९.

मातृकापूजनम्—

मातृकापूजनस्य कर्मादौ कर्तव्यता, मातृपीठानि, मातृगणना १७०७.

वसोर्धारा आयुष्यजपश्च—

घृतधाराणां संख्या आयामश्च, आयुष्यसूक्तजपः १७१०.

नान्दीश्राद्धम्—

नालच्छेदनात्प्राक् जातश्राद्धम्, तदामेन तदभावे हिरण्येन कार्यम्, आमं पक्वान्नात् द्विगुणं हिरण्यं चतुर्गुणं देयम्; सकृदनुष्ठितस्य नान्दीश्राद्धस्य कर्मगणोपकारकत्वम्; व्यक्तिभेदेन श्राद्धभेदः; नान्दीश्राद्धस्य उत्सर्जनोपाकर्माङ्गता, तत्र विशेषश्च; विवाहनिमित्तकनान्दीश्राद्धस्य विवाहदेशे कर्तव्यता १८७५. विवाहादौ नान्दीश्राद्धस्य कर्तव्यता; प्रथमविवाहे वोढुः पितुर्नान्दीश्राद्धकर्तृत्वम्, द्वितीयादौ स्वस्यैव १८७६.

मण्डपदेवतादिपूजनं देवकस्थापनं च—

मण्डपदेवतास्थापनपूजने १८८०.

## जगन्नाथकारिकाः



## गृह्यासंग्रहः

पाणिग्रहणाव्यवहितपूर्वकृत्यम्—

ध्रुवाणामपां लक्षणम्; उदकुम्भधारिणोऽवस्थानम् २०५३.

पाणिग्रहणम्—

पाणिग्रहणमन्त्रैर्भार्यात्वसिद्धिः; दाम्पत्यवाचकमन्त्रजपे वरस्य कर्तृत्वम् २१६६. वधूकटान्तप्रापणेतिकर्तव्यता; अग्निपरिक्रमणे अन्तर्बहिश्च भावनीयाः पदार्थाः ब्रह्मणो बहिर्भावे हेतुश्च; लाजाभिघारणम् २१६७. लाजहोमः; प्राजनिनोऽनुगमनम्; ब्राह्मादिविवाहेषु पूर्वं होमः पश्चात् परिणयः, गान्धर्वादिषु विपर्ययः २१६८. लाजा-होमादिषु निर्वापनिषेधः २१६९.

चतुर्थीकर्म—

गोभिलगृह्यसूत्रस्थहासनपदार्थविवरणम् २२४४.

## गङ्गाधरः (कारिकाः)

पाणिग्रहणम्—

लाजपदार्थः, लाजाहुतिमानम् २१६९.

## परशुरामकारिकाः

गणपतिपूजनं विनायककल्पश्च—

गणपतिपूजनस्य कर्तव्यता पीठं च १६६९.

## कारिकाः

पाणिग्रहणम्—

रात्रेश्चतुर्थो भागो वधूवरयोर्ब्रह्मचर्यवासकालस्या-न्तिमोऽनुकल्पः २१६९.

# शुद्धिपत्रम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १५६० | १ | १० | शक्ल | शुक्ल |
| ,, | २ | ८ | भागवं | भार्गवं |
| १५६४ | १ | २२ | वौगृशे | बौगृशे |
| १५६७ | २ | २५ | त्वेऽपि | त्वेऽपि |
| १५६८ | १ | २१ | सारा | सौरा |
| १५६९ | ,, | २१ | चतर्भज | चतुर्भुज |
| ,, | २ | २० | षिष्णु | विष्णु |
| १५७४ | १ | १ | चतुरश्र | चतुरश्रं |
| १५८२ | ,, | १४ | संस्करा | संस्कारा |
| १५८३ | २ | २७ | स्याऽभि | स्याभि |
| १५८७ | १ | ,, | होमोऽर्चे | होमेऽर्चे |
| ,, | २ | २२ | डौदमा | डौदनमा |
| १५८९ | ,, | १ | द्युदेशेन | द्युदेशेन |
| १५९३ | १ | २२ | नरेन्द्र | नरेन्द्रा |
| १६०९ | २ | १९ | ककद्मि | ककुद्मि |
| १६१७ | ,, | १७ | सं. ११३ | संग. ११३ |
| १६१८ | १ | २६ | पीतका | पीतकौ |
| १६३९ | २ | ८ | शक्लम | शुक्लमा |
| १६४८ | १ | ३२ | कतगा | कर्तृगा |
| १६५० | ,, | १ | सूत्रम् | सूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च |
| १६५१ | १ | ७ | च, पू | च पू |
| १६५३ | २ | ३४ | मी र्विना | मीरुर्विना |
| १६६१ | १ | २० | षड्ि र्मे | षड्भिर्मे |
| १६६६ | ,, | २३ | मादो | मादौ |
| १६७५ | ,, | ३२ | वाचयीता | वाचयिता |
| १६७६ | ,, | १५ | गृह्यसूम् | गृह्यसूत्रम् |
| १६७९ | २ | २१ | शुद्धयथ | शुद्धयर्थे |
| १६८८ | १ | ५ | ब्रुवन्विति | ब्रुवन्त्विति |
| १७०२ | २ | १ | रुढा | रूढा |
| १७०८ | ,, | ३१ | चोच्छ्रिताः | चोच्छ्रिताः |
| १७१२ | १ | २७ | स्याऽऽवश्य | स्यावश्य |
| १७१५ | ,, | २० | यनीय | यन |
| १७२४ | २ | २२ | कुर्वीति | कुर्वीत |
| १७३८ | ,, | २७ | अवाह | आवाह |
| १७५१ | १ | ८ | वचने | वाचने |
| १७६१ | २ | ४ | प्रालभे | प्रालाभे |
| १७६२ | १ | १५ | त्रयणां | त्रयाणां |
| १७६४ | २ | १० | मीमम | मीमद |
| १७८८ | ,, | १४ | खेदषू | खेषूद |
| १८०१ | ,, | २५ | चैलोप | चौलोप |
| १८१३ | ,, | ४ | त्यायसू | त्यायनसू |
| १८२२ | ,, | ,, | त्कालिता | त्कालिकता |
| १८३७ | १ | ६ | करेणा | कारेणा |
| १८४७ | २ | २ | इत्यदि | इत्यादि |
| १८५२ | १ | ३२ | शता | शाता |
| १८६० | २ | १ | पुरणम् | पुराणम् |
| १८६२ | ,, | ८ | थमावि | थमा वि |
| १८७४ | १ | २० | थैक | थैक— |
| ,, | २ | ११ | द्वयार्वा | द्वयोर्वा |
| १८९६ | १ | २१ | धूपूर्वं | धुपूर्वं |
| १९०४ | २ | ११ | कृच्छ्रषु | कृच्छ्रेषु |
| १९०९ | ,, | १२ | स्थमाल्पा | स्थमाप्ला |
| १९१९ | १ | २३ | हाम्न्या | हानाम्न्या |
| १९४७ | २ | १५ | पृथवी | पृथिवी |
| १९६७ | ,, | ३ | आचस्य | आचम्य |
| १९७० | १ | ११ | गृहोक्त | गृह्योक्त |
| १९७३ | ,, | २७ | राष्टे | राष्ट्रे |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १९९० | २ | २६ | नांमासो | नामांसो |
| २००५ | १ | ११ | रादिनां | रादीनां |
| २०१० | ,, | १९ | दातु | ददातु |
| २०२९ | ,, | २ | गात्रो | गोत्रो |
| २०३० | ,, | १६ | भूयास्व | भूयास्त्व |
| ,, | २ | १८ | इद्रस्य | इन्द्रस्य |
| २०५१ | ,, | ८ | क्षपेत् | क्षिपेत् |
| २०५५ | ,, | १७ | प्रसतिं | प्रसितिं |
| २०५८ | १ | ५ | आहुयो | आहुतयो |
| २०६१ | ,, | ,, | विछिन्न | विच्छिन्न |
| २०६७ | ,, | १२ | जरदष्ट | जरदष्ट |
| २०७४ | ,, | ७ | वेंष्वस्थि | वेंष्ववस्थि |
| २१०५ | ,, | १९ | कुरुते इति | कुरुतेति |
| २१०६ | ,, | २० | इन्द्रण्याः | इन्द्राण्याः |
| २१०७ | २ | ,, | प्रसुवे | प्रसुव |
| २१०८ | १ | २९ | वारुण्य | वारुण्या |
| २११० | २ | १५ | वृच्योप | वृत्योप |
| २१११ | ,, | २४ | णेत्सेत् | णेत्सेंत् |
| २११४ | १ | ४ | तृणपूल | तृणपुल |
| २१२४ | ,, | २२ | वरुणां | वरुणाभ्यां |
| २१३२ | ,, | ४ | भाष्येऽऽप्ये | भाष्येऽप्ये |
| २१३५ | २ | १४ | स्योक्तस्वा | स्योक्तत्वा |
| २१३९ | १ | १७ | २ * प्र मे | * प्र मे |
| ,, | ,, | २१ | पाणिग्राह | २ पाणिग्राह |
| २१५८ | ,, | २५ | कृत्वाऽहु | कृत्वाऽऽहु |
| २१७० | ,, | ५ | उपक्ल | उपक्लृ |
| २१७३ | २ | १७ | बध्वाः | वध्वाः |
| २१७७ | ,, | २२ | इत्येचा | इत्येतच्चा |
| ,, | ,, | २४ | ग्रेरुस | ग्रेरुपस |
| ,, | ,, | ३१ | नैभित्तिक | नैमित्तिक |
| २१७८ | ,, | २७ | शक्टेन | शकटेन |
| २१८३ | ,, | ९ | आसन्न | असन्न |
| २१९३ | ,, | १८ | ग्रहण | ग्रहणं |
| २१९९ | १ | २९ | यजु ा | यजुषा |
| ,, | २ | ५ | चर्मण | चर्मणि |
| ,, | ,, | १९ | केचत् | केचित् |
| २२०२ | ,, | ३ | श ँदः | शब्दः |
| २२०४ | १ | २२ | पुन | पुनः |
| २२२३ | ,, | २७ | गयति | गमयति |
| २२३५ | ,, | १० | रत्रे | रात्रे |
| ,, | २ | २६ | प्रायाश्चित्ते | प्रायश्चित्ते |
| ,, | ,, | ३३ | उपकर्ते | उपकर्तु |
| २२३९ | ,, | ११ | शकर्मणो | शर्मणो |
| २२४० | ,, | ३० | स्वर्न्तर्भा | स्वन्तर्भा |
| २२४१ | ,, | ३ | मणि | मणिं |
| २२४९ | १ | १ | दुखतः | दुःखतः |
| २२५८ | २ | १९ | कस्य चित् | कस्यचिद् |
| २२७० | १ | १९ | यज्ञिकाः | याज्ञिकाः |
| २२७१ | ,, | २५ | व्याख्यान | व्याख्यानं |
| २२७२ | ,, | २९ | दृष्ट्वा | दृष्ट्वा |
| २२७५ | ,, | १ | उत्पटय | उत्पाटय |
| २२७९ | २ | ८ | संरक्षण | संरक्षणं |

# धर्मकोषः

## संस्कारकाण्डम्

### उदकशान्तिः

**बौधायनगृह्यशेषसूत्रं**
**हिरण्यकेशिगृह्यशेषसूत्रं च**

उदकस्तुतिः

[1]अथ वै भवति– 'श्रद्धा वा आपः श्रद्धामेवाऽऽरभ्य' इति । 'यज्ञो वा आपो यज्ञमेवाऽऽरभ्य' इति । 'वज्रो वा आपो वज्रमेव भ्रातृव्येभ्यः प्रहृत्य' इति । 'आपो वै रक्षोघ्नी रक्षसामपहत्यै' इति । 'आपो वै देवानां प्रियं धाम' इति । 'अमृतं वा आपस्तस्मादद्भिरवतान्तमभिषिञ्चन्ति' इति । 'आपो वै सर्वा देवता देवता एवाऽऽरभ्य' इति । 'आपो वै शान्ताः शान्ताभिरेवास्य शुचं शमयति' इति ब्राह्मणम् ॥

उदकशान्तिनिमित्तानि

[2]तस्मात् पवित्रेण शान्त्युदकं करोति जन्मनक्षत्रे पुण्ये नक्षत्रे विवाहचौलोपनयनसमावर्तनसीमन्ताग्न्याधेयान्यन्यानि मङ्गलकार्याणि ग्रहोपरागे ग्रहोत्पाते वा द्विपात्सु चतुष्पात्सु भयं विन्देताथ शान्तिमारभेत ॥

(१) बौगृशे. १।१४।१ ; हिगृशे. ३।८ (अथात उदकशान्तिं व्याख्यास्यामः) एतावदेव ; संप्र. २८३–२८४ तान्तमभि (तान्तमद्भिरभि).

(२) बौगृशे. १।१४।२ ; हिगृशे. ३।८ (तस्मात्पवित्रेण शान्त्युदकं करोति०) चतुष्पात्सु + (च) ; संप्र. २८४ (पुण्ये नक्षत्रे०) वर्तनसीमन्ताग्न्या (वर्तनाग्न्या).

उदकशान्तिप्रयोगः

[1]युग्मान् ब्राह्मणान् सुप्रक्षालितपाणिपादानप आचमय्य प्रतिदिशमासनेषूपवेश्य गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य दर्भेषु प्राङ्मुख उपविश्य दर्भान् दूर्वाश्च धारयमाणः पवित्रपाणिः स्थण्डिलं कृत्वा प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्य दूर्वाभिर्दर्भैरवकीर्य गन्धोदकेनाभ्युक्ष्य पुष्पैरवकीर्य ब्रह्मपात्रं सूत्रेण परिवेष्ट्य तेषु ब्रह्मपात्रं निदधाति– 'ब्रह्म जज्ञानम्' इति ॥

[2]अथ तिरःपवित्रमप आनयञ्ज् जपति– 'तत्सवितुर्वरेण्यम्' इति ॥

[3]यवाक्षततण्डुलानावपति– 'भूर्भुवः सुवरोम्' इति ॥

(१) बौगृशे. १।१४।३ ; हिगृशे. ३।८ आचमय्य (आचाम्य) दर्भैरवकीर्य + (धूपयित्वा) ; संप्र. २८४ चतुरश्रं (चतुरस्रं) दर्भान् दूर्वाश्च (दूर्वान् दर्भांश्च) दूर्वाभिर्दर्भैः (दूर्वादर्भैः) (ब्रह्मपात्रं सूत्रेण परिवेष्ट्य तेषु०) निदधाति (निधाय) इति + (अनया).

(२) बौगृशे. १।१४।४ ; हिगृशे. ३।८ ; संप्र. २८४ (अथ०).

(३) बौगृशे. १।१४।५ ; हिगृशे. ३।८ वपति + (ॐ) ; संप्र. २८४ यवा (अथ यवा) सुव (स्व).

[1]अथ पुष्पैर्दूर्वाभिः फलैरवकीर्य दूर्वाभिर्दर्भैः प्रतिच्छायामभिमृशति– 'शं नो देवीरभिष्टये' इति ॥

[2]अन्वारब्धेषु जपति– 'तत्सवितुर्वरेण्यम्' इत्येतां पच्छोऽर्धर्चशोऽनवानमुक्त्वा वेदादीञ् जपति ॥

[3]राक्षोघ्नम् 'कृणुष्व पाजः प्रसितिम्' इत्येतमनुवाकम् 'मदे चिदस्य' इत्यर्धर्चमवोद्धृत्य, 'इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः' इत्येतमनुवाकम्, 'यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः' इति द्वाभ्याम्, 'महाँ इन्द्रः, सजोषा इन्द्र' इति द्वाभ्याम्, 'ये देवाः पुरःसदः' इति पञ्चभिः पर्यायैः, 'अग्नये रक्षोघ्ने' इति पञ्च, 'अग्निरायुष्मान्' इति पञ्च, 'या वामिन्द्रावरुणा' इति चतस्रः, 'यो वामिन्द्रावरुणौ' इत्यष्टौ, 'अग्ने यशस्विन्' इति चतस्रः, राष्ट्रभृतम् 'ऋताषाडृतधामा' इत्येतमनुवाकम्, 'नमो अस्तु सर्पेभ्यः' इति तिसृभिरनुच्छन्दसम्, पञ्च चोडाः 'अयं पुरो हरिकेशः' इति पञ्चभिः पर्यायैः, अप्रतिरथम् 'आशुः शिशानः' इत्येतमनुवाकम्, 'शं च मे मयश्च मे' इत्येतमनुवाकम्, विहव्यं 'ममाग्ने वर्चो विहवेष्वस्तु' इत्येतमनुवाकम्, मृगारं 'अग्नेर्मन्वे' इत्येतमनुवाकम्, सर्पाहुतीः 'समीची नामासि प्राची दिक्' इति षड्भिः पर्यायैः, गन्धर्वाहुतीः 'हेतयो नाम स्थ तेषां वः पुरोगृहाः' इति षड्भिः, अज्यानीः 'शतायुधाय' इति पञ्च, 'भूतं भव्यं भविष्यत्' इत्येतमनुवाकम्, अथर्वशिरसम् 'इन्द्रो दधीचो अस्थभिः' इत्येतमनुवाकम्, प्रत्याङ्गिरसं 'चक्षुषो हेते मनसो हेते' इति प्रतिपद्य 'भ्रातृव्यं पादयामसि' इत्यन्तम्, 'प्राणो रक्षति विश्वमेजत्' इत्येतमनुवाकम्, 'सिंहे व्याघ्र उत या पृदाकौ' इत्येतमनुवाकम्, 'अहमस्मि' इत्येतमनुवाकम्, 'ता सूर्याचन्द्रमसा' इत्येतमनुवाकम्, 'अग्निर्नः पातु, ऋध्यास्म, नवो नवः' इत्येतैस्त्रिभिरनुवाकैः, उत्तमैरुपहोमैश्च, सुरभिमत्या, अब्लिङ्गाभिः, वारुणीभिः, हिरण्यवर्णाभिः, पावमानीभिः, व्याहृतीभिः, 'तच्छंयोरावृणीमहे' इत्येतमनुवाकम्। 'नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह' इति ब्राह्मणम्॥

प्रोक्षणम्

[1]प्रणवेनोत्थाप्य व्याहृतीभिः प्रोक्षति ॥

[2]अथ दक्षिणां ददाति– पुरस्तादुपविष्टाय हिरण्यं ददाति, दक्षिणतो रजतम्, पश्चात् कांस्यम्, उत्तरतो वासो ददाति ॥

---

(१) बौगृशे. १।१४।६ ; हिगृशे. ३।८ ; संप्र. २८४ र्वाभिः फलै (र्वाफलै) दूर्वाभिर्दर्भैः प्रतिच्छा (दूर्वादर्भैः प्रच्छा).

(२) बौगृशे. १।१४।७ ; हिगृशे. ३।८ ; संप्र. २८४ अर्धर्चशो + (ऋक्शो).

(३) बौगृशे. १।१४।८ रनुच्छन्दसं (रनुचच्छन्दसं); हिगृशे. ३।८ व्याहृतीभिः (व्याहृतिभिः) इति ब्राह्मणम् (इति विज्ञायते) ; संप्र. २८४–२८५ प्रसितिम् + (न पृथ्वीम्) मवोद्धृत्य (मपोद्धृत्य) (हवामहे जनेभ्यः०) पुरःसदः + (अग्निनेत्रा रक्षोहणः) या वामिन्द्रा (अंहोमुचो या वामिन्द्रा) वरुणा इति (वरुणेति) वरुणौ' इत्यष्टौ (वरुणेत्यष्टौ) (राष्ट्रभृतम्०) पञ्च चोडाः (पञ्चर्चः) (मयश्च मे०) विहव्यं + (च) (विहवेष्वस्तु०) (गन्धर्वाहुतीः०) (अज्यानीः०) अथर्वशिरसं (अथर्वाङ्गिरसं) (अस्थभिः०) प्रत्याङ्गिरसं + (च) (मनसो हेते०) (त्रिभिः०) रुत्तमै (रुत्तरै) व्याहृतीभिः (व्याहृतिभिः) ब्राह्मणम् + (इति परिधानीयां त्रिरन्वाहेति ब्राह्मणम्).

(१) बौगृशे. १।१४।९ ; हिगृशे. ३।८ व्याहृतीभिः (व्याहृतिभिः) ; संप्र. २८५ हिगृशेवत्.

(२) बौगृशे. १।१४।१० ; हिगृशे. ३।८ ; संप्र. २८५ दक्षिणतो (दक्षिणे).

[1]अथ ग्रहगृहीतानां ज्वरगृहीतानां भूतोपसृष्टानां मित्रबन्धुसुहृज्ज्ञातिसखिसंबन्धिबान्धवानां राज्ञां च राजपुरोहितानां च बालवृद्धान्तर्वत्नीपापरोगिदीर्घरोगिकृशातुरान् प्रोक्षति ॥

[2]हस्त्यश्वोष्ट्रगोमहिष्यजाविकभृत्यांश्च धनधान्यानि च प्रोक्षति ॥

(१) बौगृशे. १।१४।११ वर्त्नी (र्वत्नि); हिगृशे. ३।८ ज्ञाति (जाति) पाप (पापि); संप्र. २८५ (ग्रह०) राज्ञां च (राज्ञां) रोगि (रोगी).

(२) बौगृशे. १।१४।१२; हिगृशे. ३।८; संप्र. २८५ गोमहिष्य (महिष्या).

उदकशान्त्यावृत्तिः फलं च

[1]एवमेकरात्रं त्रिरात्रं पञ्चरात्रं सप्तरात्रं नवरात्रमित्यप पुनर्मृत्युं जयतीत्याह भगवान् बोधायनः ॥

(१) बौगृशे. १।१४।१३; हिगृशे. ३।८ त्याह भगवान् बोधायनः (ति शालीकिः) बोधायनः + (तस्मात् पवित्रेण शान्त्युदकं करोति आपो वै शान्ताः शान्ति [? शान्ताभि]-रेवास्य शुचं शमयतीति ब्राह्मणम्); संप्र. २८५ त्यप पुनर्मृत्युं (त्यपमृत्युं) बोधायनः (बौधायनः).

# ग्रहयज्ञः

## बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

ग्रहकोपनिमित्तानि, ग्रहयज्ञस्य शान्त्यर्थता

[1]अथातो ग्रहातिथ्यबलिकर्मोपहारान् व्याख्यास्यामः—

अश्रद्दधानमशुचिमजपं त्यक्तमङ्गलम् ।
ग्रहा नयन्ति सुव्यक्तं पुरुषं यमसादनम् ॥

ग्रहाणामुग्रचेष्टानां नक्षत्रपथचारिणाम् ।
उपचारान् प्रवक्ष्यामि शान्त्यर्थं तु यथाविधि ॥

ग्रहयज्ञस्य कालः फलं च

[2]मासि मास्यृतावृतावयने चन्द्रग्रहे सूर्यग्रहे विषुवे शुभाशुभे जन्मनक्षत्रे वा तद्ग्रहाणामातिथ्यं संवत्सरादपि प्रयुञ्जानः सर्वान्कामानवाप्नोतीति ॥

सामान्यहोमतन्त्रस्य ग्रहयज्ञेऽतिदेशः

[3]उक्तमेकाग्निविधानम् ॥

एकग्रहस्य प्रातिकूल्येऽपि सर्वेषामर्चनीयत्वम्

[4]एको वा विषमस्थः स्यात्सर्वे एवार्चनीया भवन्ति ॥

(१) बौगृशे. १।१६।१–२ ; हिगृशे. ३।१० ; बाल. १।३९८ पृ. ६०९ अशुद्धः पाठः.

(२) बौगृशे. १।१६।३ ; हिगृशे. ३।१० ऋतावृतौ (ऋतौ) ; बाल. १।३०८ पृ. ६०९ (मासि मास्यृतावृतौ चन्द्रग्रहे सूर्यग्रहेऽयने विषुवे जन्मनक्षत्रे शुभेऽशुभे वा प्रयुञ्जानः सर्वान् कामानवाप्नोतीति ).

(३) बौगृशे. १।१६।४ ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६०९ अशुद्धः पाठः .

(४) बौगृशे. १।१६।५ ; हिगृशे. ३।१०.

ग्रहवर्णाः, ग्रहतुल्यवर्णपुष्पादीनां देयता च

[1]भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ ।
सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ॥
[2]कृष्णं शनैश्चरं विद्याद्राहुं केतुं तथैव च ।
ग्रहवर्णानि पुष्पाणि प्राज्ञस्तत्रोपकल्पयेत् ॥
बलींश्चैवोपहारांश्च गन्धमाल्यं तथैव च ।
यथाक्रमेणोपहरेत्सर्वेषामानुपूर्वशः ॥ इति ॥

ग्रहसमिधः, तत्प्रतिनिधिः, ब्राह्मणभोजनम्, पुण्याहवाचनम्, निर्वापान्तं होमतन्त्रं च

[3]अर्कसमिधमादित्याय खादिरमङ्गारकायौदुम्बरं शुक्राय पालाशं सोमायापामार्गं बुधायाश्वत्थं बृहस्पतये शमीमयं शनैश्चराय राहवे दूर्वाः केतवे कुशा इति ॥

[4]सर्वेषामलाभे पालाशीर्वा । ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा हवींषि निर्वपति ॥

(१) बौगृशे. १।१६।६ ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६०९.

(२) बौगृशे. १।१६।७–८ ; हिगृशे. ३।१० माल्यं (माल्ये) मानु (मनु).

(३) बौगृशे. १।१६।९ ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६१० (अर्कसमिधमादित्याय पालाशीं सोमाय खदिरमङ्गारकायापामार्गं बुधायाश्वत्थं बृहस्पतय औदुम्बरं शुक्राय शमीं शनये राहवे दूर्वाः केतवे कुशमिति ).

(४) बौगृशे. १।१६।१० ; हिगृशे. ३।१० ब्राह्मणान्... निर्वपति (ब्राह्मणान् भोजयित्वा पुण्याहं स्वस्त्ययनमृद्धिं वाचयित्वा यथाविध्यग्निं प्रतिष्ठाप्य हवींषि कल्पयति ) ; बाल. १।३०८ पृ. ६१० (सर्वेषामलाभे पालाशं वा ) एतावदेव.

ग्रहदेवताधिवासनम्– तत्र ग्रहदेवतास्थानानि

[1]अथोपोत्थायाग्रेणाग्निं तण्डुलैः स्थण्डिलं कृत्वा ग्रहदेवता आवाहयति ॥

[2]मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु ।
पूर्वे तु भार्गवं विद्यात्पूर्वदक्षिणतः शशी ॥

[3]पूर्वोत्तरे बुधं विद्यादुत्तरे तु गुरुं तथा ।
पश्चिमे तु शनिं विद्याद्राहुं दक्षिणपश्चिमे ॥

[4]पश्चिमोत्तरतः केतुर्ग्रहस्थानं विधीयते ।
दक्षिणोत्तरभागे तु साधिप्रत्यधिदेवताः ॥

ग्रहपीठानि

[5]वृत्तमादित्याय त्रिकोणमङ्गारकाय पञ्चकोणं शुक्राय चतुरश्रं सोमाय बाणं बुधाय दीर्घचतुरश्रं बृहस्पतये धनुः शनैश्चराय राहवे शूर्पं केतवे ध्वजमिति ॥

ग्रहाणामन्यान्यदिगभिमुखता

[1]अर्कः शुक्रो बुधः पूर्वो गुरुरुत्तरतोमुखः ।
पश्चिमे तु शनिश्चन्द्रः शेषा दक्षिणतोमुखाः ॥

ग्रहधान्यानि

[2]यवा आढक्यस्तण्डुलाः श्यामाका मुद्गमेव च ।
चणकास्तिलमाषाश्च कुलुत्थाश्च क्रमात्क्षिपेत् ॥

ग्रहाणामधिदेवताप्रत्यधिदेवताः, लोकपालाः, क्रतुसाद्गुण्यदेवताः, ग्रहदेवतानामावाहनं पूजनं च

*[3]अग्नीश्वरौ भास्करस्य भूक्षेत्रेशौ कुजस्य हि ।
इन्द्राणीन्द्रौ सितस्याथ ह्यापो गौरी निशापतेः ॥

विष्णुर्विष्णुर्बुधस्येन्द्रमरुत्वान् ब्रह्म वै गुरोः ।
शनेः प्रजापतियमौ राहोः सर्पस्तु निर्ऋतिः ॥

---

(१) बौगृशे. १।१६।११ ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६०९ तात्पर्यरूपेण.

(२) बौगृशे. १।१६।१२ ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६१० (मध्ये तु भास्करं विद्यात्पूर्वदक्षिणतः शशी । दक्षिणे लोहितं विद्याद्बुधं पूर्वोत्तरेण तु ॥ ).

(३) बौगृशे. १।१६।१३ ; हिगृशे. ३।१० दक्षिणपश्चिमे (पश्चिमदक्षिणे) ; बाल. १।३०८ पृ. ६१० पूर्वार्धे ( उत्तरे तु गुरुं विद्यात्पूर्वे भार्गवमेव च । ).

(४) बौगृशे. १।१६।१४ ; हिगृशे. ३।१० केतुः (केतुं) ; बाल. १।३०८ पृ. ६१० केतुः (केतुं) पू. एतदनन्तरं 'आदित्यः कश्यपगोत्र आत्रेयश्चन्द्रमा भवेत् । भारद्वाजो भवेद्भौम आत्रेयः सोमजो भवेत् ॥ जीवश्चाङ्गिरसो गोत्रः स्याच्छुक्रस्तु भार्गवः स्मृतः । शनिः सूर्येण कथितो राहुः पैठीनसिस्तथा ॥ केतुर्जैमिनिगोत्रः स्याद्ग्रहस्थानमथोच्यते । अर्को जातः कलिङ्गेषु यमुनायां तु चन्द्रमाः ॥ अङ्गारकस्त्ववन्त्यां वै मथुरायां बुधस्तथा । सैन्धवे च गुरुर्जातः शुक्रो भोजकटे तथा ॥ सौराष्ट्रे तु शनिर्जातो राहुर्बर्बरके तथा । अन्तर्वेद्यां तथा केतुरित्येतद्ग्रहस्थानकम् ॥' एते श्लोका अधिकाः.

(५) बौगृशे. १।१६।१५ ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६१० (वर्तुलमण्डलमादित्याय चतुरस्रं सोमाय त्रिकोणमङ्गारकाय बाणं बुधाय दीर्घचतुरस्रं बृहस्पतये पञ्चकोणं शुक्राय धनुषाकारं शनैश्चराय राहवे शूर्पाकारं केतवे ध्वजाकारमिति ).

* अत्र प्रतिग्रहं यद्देवताद्वन्द्वमुपदिष्टं तत्र पूर्वा अधिदेवता उत्तरा च प्रत्यधिदेवतेति सूत्रकाराभिप्रायोऽग्रिमनवग्रहपूजाविधिग्रन्थान्निर्णीयते । वसिष्ठस्मृत्यादौ तु अत्रोक्ताधिदेवतात्वप्रत्यधिदेवतात्वयोर्विपर्यासो दृश्यते ।

(१) बौगृशे. १।१६।१६ ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६१० (शुक्रार्कौ पूर्वमुखौ शनिशशाङ्कौ पश्चिममुखौ कुजबुधावुत्तरामुखौ गुरुराहुकेतवो दक्षिणामुखाः).

(२) बौगृशे. १।१६।१७ ; हिगृशे. ३।१० मुद्गमेव (मुद्ग एव) कुलुत्थाश्च (कुलित्थाश्च).

(३) बौगृशे. १।१६।१८–२० ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६१० (अग्निरापो भूमिर्विष्णुरिन्द्रेन्द्राणी प्रजापतिः सर्पो ब्रह्मेत्यधिदेवताः । भास्करस्येश्वरो देवता उमा चन्द्रस्य देवता स्कन्दोऽङ्गारकस्य देवता विष्णुर्देवता बुधस्य ब्रह्मा देवो बृहस्पतेः शक्रः शुक्रस्य देवता यमदैवतं शनिं विद्याद्राहोः कालस्तु देवता केतोश्चित्रगुप्त इत्येताः ).

केतोर्ब्रह्मा च चित्रश्च स्वस्वमन्त्रैः स्वनामभिः।
लोकपालान् दुर्गविघ्नक्षेत्रवास्तुत्रियम्बकान् ॥
[१]अभयंकरमृत्यू च ह्यग्निं वैश्वानरं क्रमात्।
आवाहयेद्व्याहृतिभिर्यजेद्व्यष्टोपचारकैः ॥

ग्रहाणां मन्त्राः

परिधानप्रभृत्याऽग्निमुखात्कृत्वा 'आ सत्येन' इत्यादित्याय 'अग्निर्मूर्धा' इत्यङ्गारकाय 'प्र वः शुक्राय' इति शुक्राय 'आ प्यायस्व' इति सोमाय 'उद्बुध्यस्व' बुधाय 'बृहस्पते अति यदर्यो अर्हात्' इति बृहस्पतये 'शं नो देवीरभिष्टये' इति शनैश्चराय 'कया नश्चित्र आ भुवत्' इति राहवे 'केतुं कृण्वन्' इति केतवे ॥

पुरोनुवाक्यानुवचनविधानम्

'पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय' इति ब्राह्मणम् ॥

यत्रैकाऽऽम्नाता स्यात्तां द्विरभ्यावर्तयेत् 'तत्सवितुर्वरेण्यम्' इत्यनुद्रुत्याऽऽम्नातया जुहोति वा ॥

ग्रहाणां होमः, हवनीयद्रव्याणि, आहुतिसंख्या

[२]नवानां ग्रहाणां पक्वं हुत्वा घृतान्वक्तानां समिधामष्टसहस्रमष्टशतमष्टाविंशतिं वा जुहुयात्प्रत्यृचम्। हविषो जुहुयात् प्रत्यृचम्। आज्यस्य जुहुयात्प्रत्यृचम् ॥

ग्रहाणामोदनाः तत्प्रतिनिधिश्च

[३]गुडोदनमादित्याय हविष्यमन्नमङ्गारकाय घृतोदनं शुक्राय घृतपायसं सोमाय क्षीरोदनं बुधाय दध्योदनं बृहस्पतये तिलपिष्टमिश्रमाषोदनं शनैश्चराय राहोर्मांसोदनं केतोश्चित्रोदनमिति ॥

सर्वेषामलाभे हविष्यं वा ॥

ग्रहेतरदेवतानामाहुतिसंख्या

[१]यदाऽष्टसहस्रं तदाऽधिप्रत्यधिदेवतानामष्टाविंशतिं यदाऽष्टशतं तदाऽष्टावष्टौ यदा विंशतिं* तदा तिस्रस्तिस्र आहुतीर्जुहुयात्। एवमेव लोकपालादीनाम् ॥

ग्रहेतरदेवतानां होममन्त्राः

[२]'अग्निं दूतम्' 'येषामीशे' इत्यादित्याय। 'स्योना पृथिवि' 'क्षेत्रस्य पते' इत्यङ्गारकाय।

---

* अत्र उभयोरपि सूत्रयोः 'विंशतिम्' इत्येव मुद्रितम्। तत्तु चिन्त्यम्, पूर्वत्र ग्रहहोमेऽष्टसहस्राष्टशतपक्षापेक्षयाऽष्टाविंशतिपक्षस्य तृतीयत्वेनोक्ततया 'अष्टाविंशतिम्' इति वक्तुमुचितत्वात्। तथा चोक्तं बौधायनीयगृह्यकर्मसमुच्चये— 'अष्टाविंशत्युपहोमे तु तिस्रस्तिस्रः' इति।

---

(१) बौगृशे. १।१६।२१–२४; हिगृशे. ३।१०.

(२) बौगृशे. १।१६।२५; हिगृशे. ३।१०; बाल. १।३०८ पृ. ६१० (एकैकेनाष्टसहस्रमष्टशतमष्टाविंशतिर्वा समिधमाज्यं चरुं तिलं च हुत्वा).

(३) बौगृशे. १।१६।२६–२७; हिगृशे. ३।१० गुडोदनं (गुडौदनं) क्षीरोदनं (क्षीरौदनं) एवमग्रेऽपि; अप. १।२९४–२९५ (गुडौदनमादित्याय घृतपायसं सोमाय हविष्यमन्नमङ्गारकाय क्षीरौदनं बुधाय षष्टिकं बृहस्पतये दध्योदनं शुक्राय माषौदनं तिलपिष्टमिश्रं सघृतं शनैश्चराय राहवे मांसौदनं केतवे चित्रौदनम्) बह्वृचगृह्यपरिशिष्टम्; बाल. १।३०८ पृ. ६११ (हविष्यमन्नमादित्याय पायसं सोमाय गुडोदनमङ्गारकाय दध्योदनं बुधाय क्षीरोदनं बृहस्पतये घृतोदनं शुक्राय तिलपिष्टमिश्रमाषोदनं सघृतं शनैश्चराय राहवे माषोदनं केतवे चित्रोदनमिति। सर्वेषामलाभे पायसं वा).

(१) बौगृशे. १।१६।२८; हिगृशे. ३।१०.

(२) बौगृशे. १।१६।२९; हिगृशे. ३।१० गौरी मि (गौरीर्मि); बाल. १।३०८ पृ. ६१० ('आसत्येन' 'अग्निं दूतं' 'कद्रुद्राय' इत्यादित्याय। 'आ प्यायस्व' 'अप्सु मे सोमो अब्रवीत्' 'गौरी मिमाय सलिलानि तक्षती' इति सोमाय। 'अग्निर्मूर्धा' 'स्योना पृथिवी' 'क्षेत्रस्य पतिना वयम्' इत्यङ्गारकाय। 'उद्बुध्यस्वाग्ने' 'इदं

'इन्द्राणीम्' 'इन्द्रं वो विश्वतः' इति शुक्राय। 'अप्सु मे सोमो अब्रवीत्' 'गौरी मिमाय' इति सोमाय। 'विष्णोर्नु कम्' 'विष्णो रराटम्' इति बुधाय। 'इन्द्र मरुत्वः' 'ब्रह्म जज्ञानम्' इति बृहस्पतये। 'प्रजापते' 'इमं यम प्रस्तरम्' इति शनैश्चराय। 'आयङ्गौः' 'यत्ते देवी' इति राहवे। 'ब्रह्मा देवानाम्' 'स चित्र चित्रम्' इति केतवे॥

[१] 'त्रातारमिन्द्रम्' 'अग्निर्दा द्रविणम्' 'यमो दाधार पृथिवीम्' 'असुन्वन्तम्' 'सधमादो द्युम्निनीः' 'आ नो नियुद्भिः' 'सोमो धेनुम्' 'सहस्राणि सहस्रधा' इति लोकपालानाम्॥

[२] 'जातवेदसे' 'गणानां त्वा' 'क्षेत्रस्य पतिना वयम्' 'वास्तोष्पते' 'त्र्यम्बकं यजामहे' 'यत इन्द्र भयामहे' 'स्वस्तिदा विशस्पतिः' 'ये ते सहस्रमयुतं पाशाः' 'मूर्धानं दिवो अरतिं पृथिव्याः' इति दुर्गादीनाम्॥

विष्णुः' 'विष्णो रराटमसि' इति बुधाय। 'बृहस्पते अति यदर्यो अर्हात्' 'इन्द्र मरुत्वः' 'ब्रह्म जज्ञानम्' इति बृहस्पतये। 'शुक्रं ते अन्यत्' 'इन्द्राणीमासु नारिषु' 'इन्द्रं वो विश्वतस्परि' इति शुक्राय। 'शं नो देवीः' 'प्रजापते न त्वत्' 'इमं यम प्रस्तरमाहि सीद' इति शनैश्चराय। 'कया नश्चित्र' 'आयं गौः पृश्निरक्रमीत्' 'यत्ते देवी निर्ऋतिः' इति राहवे। 'केतुं कृण्वन्न केतवे' 'ब्रह्मा देवानां' 'चित्रं देवानाम्' इति केतवे). बालंभट्टीग्रन्थस्था एते पाठभेदा २२,२९ इति द्वयोः सूत्रयोर्मिलित्वा कृता ज्ञेयाः।

(१) बौगृशे. १।१६।३० ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६१० ('त्रातारमिन्द्रं' 'त्वं नो अग्ने वरुणस्य' 'सुगं नः पन्थाम्' 'असुन्वन्तं' 'तत्त्वा यामि' 'आ नो नियुद्भिः शतिनी' 'वयं सोम व्रते' 'तमीशानम्' इत्यष्टौ लोकपालान्)।

(२) बौगृशे. १।१६।३१ ; हिगृशे. ३।१०।

व्याहृतिभिर्होमः स्विष्टकृद्धोमश्च

[१]एवमेव हुत्वाऽऽज्यमिश्रतिलव्रीहिभिर्व्याहृतिभिर्हुत्वा सर्वेभ्यात्सकृत्सकृदवदाय द्विरभिघार्य स्विष्टकृतम् 'अर्यमणम्' इति पुरोनुवाक्यामनूच्य 'सोमं राजानम्' इति याज्यया जुहोति॥

मेक्षणाधानं जयादिहोमाश्च

[२]मेक्षणमभ्याधाय जयप्रभृति सिद्धम्॥

पूर्णाहुतिः, ग्रहार्चनम्, मार्जनम्, तर्पणम्, बलिहरणम्, उपहारदानम्, पुनर्मार्जनं च

[३] 'मूर्धानं दिवो अरतिम्' इति पूर्णां हुत्वाऽग्रेणाग्निं ग्रहानभ्यर्चयति। 'आपो हि ष्ठा मयो-

(१) बौगृशे. १।१६।३२ ; हिगृशे. ३।१० जुहोति + (अत्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथापुरस्तात्। सर्वेभ्यो ग्रहेभ्यो बलिं दत्त्वा) ; बाल. १।३०८ पृ. ६१० (जयाभ्यातानान् राष्ट्रभृतः प्राजापत्यां व्याहृतीर्विहृताः सौविष्टकृतमित्युपजुहोति सोमं राजानमिति).

(२) बौगृशे. १।१६।३३.

(३) बौगृशे. १।१६।३४ ; हिगृशे. ३।१० पूर्णां (पूर्णाहुतिं) ; बाल. १।३०८ पृ. ६१०–६११ (वरप्रदानानुपहारांश्चान्, रक्तचन्दनमादित्याय चन्दनं सोमाय कुङ्कुममङ्गारकायागरुं बुधाय बृहस्पतये श्रीखण्डं शुक्राय कस्तूरिका शनैश्चराय सुगन्धं राहवे सारकं केतवे च, सर्वेषामलाभे यथामिलितं वा। रक्तकरवीरमादित्याय श्वेतकरवीरं सोमाय रक्तोत्पलमङ्गारकाय कुमुलीपुष्पं बुधाय शङ्खपुष्पं बृहस्पतयेऽतसीपुष्पं शुक्राय कालाञ्जनपुष्पं शनये सर्षपपुष्पं राहवे शङ्खिनीपुष्पं केतवे, सर्वेषामलाभे यथामिलितं वा। कदरधूपमादित्याय मयूरशिखं सोमाय गुग्गुलमङ्गारकाय सर्जरसं बुधाय बिल्वगिरं बृहस्पतये श्रीबालं शुक्राय कृष्णागुरुं शनये दशाङ्गं राहवे देवदारुं केतवे, सर्वेषामलाभे गुग्गुलं वा। गोघृतदीपमादित्याय तैलदीपं सोमाय टौल्येनमङ्गारकायाजाघृतं बुधायाऽऽविकदीपं गुरवे गोघृतं शिरसिकादीपं शुक्रायातसीदीपं शनये करञ्जदीपं राहवे महिषीघृतं केतवे च, सर्वेषामलाभे गोघृतं वा).

भुवः' इति तिसृभिः 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन मार्जयित्वा स्वस्वनामभिस्तर्पयित्वा स्वेन स्वेन मन्त्रेण गन्धपुष्पधूपदीपैरभ्यर्च्य बलिमुपहृत्य लाजापूपपृथुकाद्युपहारांश्च दत्वा नमस्कृत्य प्रवाह्य जघनेनाग्निमुपविश्याद्भिर्मार्जयति– 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः 'देवस्य त्वा' इति तिसृभिः शंयुवाकेन च ॥

दक्षिणादानम्, मुख्यदक्षिणाः तत्प्रतिनिधिश्च

[1]अथ दक्षिणां ददाति– कपिलां धेनुमादित्याय रक्तमनड्वाहमङ्गारकाय रजतं शुक्राय शङ्खं सोमाय काञ्चनं बुधाय वासो बृहस्पतये कृष्णां गां शनैश्चराय राहवे छागं केतवे कुञ्जरमिति ॥
सर्वेषामलाभे हिरण्यं वा ॥
येन वा तुष्येदाचार्यः ॥

ग्रहयज्ञस्तुतिः

[2]अथाप्युदाहरन्ति–
यथा समुत्थितं घोरं यन्त्रेण प्रतिहन्यते ।
एवं समुत्थितं घोरं शीघ्रं शान्तिं नयेत्सदा ॥
[3]यथा शस्त्रप्रहरणात्कवचं भवति निवारणम् ॥
एवं दैवोपघातानां शान्तिर्भवति वारणम् ॥

[1]अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च ।
नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥
[2]ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः ।
पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः ॥

ग्रहाणां देवतारूपत्वम्

*ईश्वरं भास्करं विद्यात्स्कन्दमङ्गारकं तथा ।
शुक्रं शचीपतिं विद्यादुमां चैव निशाकरम् ॥
बुधं नारायणं विद्याद्ब्रह्माणं च बृहस्पतिम् ।
यमं शनैश्चरं विद्याद्राहुं कालं तथैव च ॥
केतुमग्निमयं विद्याद्देवं (? देवं) देवा यथा ग्रहाः ।
देवता ग्रहरूपेण दर्शयन्ति शुभाशुभम् ॥
दर्शयन्ति शुभाशुभमित्याह भगवान् बोधायनः ॥

आदित्यस्य ध्येयगुणवर्णनात्मकस्थापनमन्त्रः प्रार्थनं च

[4]अथ नवग्रहपूजाविधिः ।
त्रैलोक्यदीपकं देवं गुणरूपं त्रयीमयम् ।
स्थापयामि महाभक्त्या भास्करं ग्रहनायकम् ॥

---

(१) बौगृशे. १।१६।३५–३७ ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६१२ (आचार्याय दक्षिणां दद्यात् – धेनुमादित्याय शङ्खं सोमाय रक्तमनड्वाहमङ्गारकाय काञ्चनं बुधाय पीतवासो बृहस्पतये श्वेतहयं शुक्राय कृष्णा गौः शनये राहवे पायसं केतोश्छागमिति, सर्वेषामलाभे हिरण्यं वा ).

(२) बौगृशे. १।१६।३८ ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६११ (यथा समुच्छ्रितं यन्त्रेण प्रतिहन्यते । एवं समुत्थितम् ).

(३) बौगृशे. १।१६।३९ ; हिगृशे. ३।१० भवति (स्यात्) ; बाल. १।३०८ पृ. ६११ (यथा शस्त्रनिवारणाय कवचं भवति तथा नारायणम् । एवं दैवोपघातशान्तिर्भवति वारणम् ).

* अत्र ग्रहाणां पूर्वोक्तप्रत्यधिदेवतारूपत्वमुक्तमिति दरीदृश्यते । अङ्गारकराहुकेतूनां यथाक्रमं स्कन्दकालाग्निरूपत्वमत्रोक्तम् । तेषां प्रत्यधिदेवतास्तु क्षेत्रपालनिर्ऋतिचित्रगुप्ताः पूर्वमुपदिष्टाः । तत्र स्कन्दस्याङ्गारकप्रत्यधिदेवतात्वं हिरण्यकेशियाज्ञिकसमाचारे, स्कन्दकालयोरङ्गारकराहुप्रत्यधिदेवतात्वं चाऽऽश्वलायनयाज्ञिकसमाचारेऽप्यत्वे रूढं मात्स्यादावप्युक्तं च । क्वचित्स्मृत्यन्तरे ग्रहाणामधिदेवतारूपत्वं वर्ण्यमानं दृश्यते । तदिदं सर्वं विभावनीयं संशोधकैः ।

(१) बौगृशे. १।१६।४० ; हिगृशे. ३।१० दान्तस्य (दानस्य).

(२) बौगृशे. १।१६।४१ ; हिगृशे. ३।१० ; बाल. १।३०८ पृ. ६११ गावो (वाऽथ) यन्त्येते (यन्त्येनं).

(३) बौगृशे. १।१६।४२–४४ ; हिगृशे. ३।१० (दर्शयन्ति शुभाशुभमित्याह भगवान् बोधायनः ०) ; बाल. १।३०८ पृ. ६११ (इत्याह भगवान् बौधायनः) एतावदेव.

(४) बौगृशे. १।१७।१ ; हिगृशे. ६।१.

[1]मध्ये वर्तुलाकारमण्डले प्रत्यङ्मुखं कलिङ्ग-देशजं काश्यपगोत्रजं विश्वामित्रार्षं विशाखा-नक्षत्रजं त्रिष्टुप्छन्दसं कपिलाग्निकं पद्मासनं पद्मवर्णं द्विभुजं रक्तवस्त्रं रक्तगन्धं माणिक्य-रत्नाभरणभूषितं किरीटिनं रक्तच्छत्रध्वजपता-किनं छन्दोमयहरितसप्ताश्वं सप्तरज्जुकमेकचक्रं रक्तं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताग्निं प्रत्यधिदेवता-रुद्रम् ॥

[2]वन्दे रविं द्युमणिमम्बुरुहे निषण्णं
दोर्भ्यां दधानमरुणाम्बुरुहे
ग्रहेन्द्रम् ।
माणिक्यभूषमरुणांशुकगन्धमाल्यै-
र्भ्राजन्तमर्कममितद्युतिमब्ज-
मित्रम् ॥

कपिले सर्वदेवानां पूजनीया सुरोहिणी ।
सर्वदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् ।
तमोहरं कल्मषघ्नं भास्करं प्रणमाम्यहम् ॥

दिवाकरं दीप्तसहस्ररश्मिं
तेजोमयं जगतः कर्मसाक्षिम् ।
मित्रं भानुं सूर्यमादिं ग्रहाणां
रविं सदा शरणमहं प्रपद्ये ॥

अङ्गारकस्य ध्येयगुणवर्णनात्मकस्थापनमन्त्रः प्रार्थनं च

[1]रक्तस्रगम्बरालेपं गदाशक्त्यसिशूलिनम् ।
चतुर्भुजं मेषगमं भारद्वाजं धरासुतम् ॥

रक्तकाञ्चनसंकाशं रक्तकिञ्जल्कसंनिभम् ।
स्थापयामि महारौद्रं रुद्रमूर्तिं महाबलम् ॥

[2]सूर्यस्य दक्षिणदिग्भागे त्रिकोणाकारमण्डले दक्षिणाभिमुखमवन्तीदेशजं भारद्वाजगोत्रजं जामदग्न्यार्षं गायत्रीच्छन्दसं धूमकेत्वग्निकं खड्गशक्तिशूलगदाधरं चतुर्भुजं रक्ताम्बरधरं रक्तविद्रुमरत्नाभरणभूषितं किरीटिनं रक्तच्छत्र-ध्वजपताकिनं रक्तमेषवाहनमग्निजरत्काष्टाश्वं काञ्चनं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताभूमिं प्रत्यधिदेवता-क्षेत्रपालम् ॥

[3]रक्तस्रग्गन्धवासाः करविधृतगदा-
शक्तिखड्गत्रिशूलो
भारद्वाजस्त्रिनेत्रो वसुमतितनयो
लोहिताङ्गः शुभाङ्गः ।
मेषव्याघ्रध्वजोऽर्कद्युतिसदृशमहा-
कुण्डलाश्लिष्टकर्णः
पायाद्भास्वत्किरीटाङ्गदवलयलस-
द्विद्रुमालंकृतो नः ॥

(१) बौगृशे. १।१७।२ ; हिगृशे. ६।१ ; शाम. १४ (किरीटिनं पद्मासनं पद्मकरं पद्मगर्भसमद्युतिं सप्ताश्वं सप्तखड्गं कलिङ्गदेशजं काश्यपगोत्रं विश्वामित्रार्षं त्रिष्टुप्छन्दसं रक्ता-म्बरधरं रक्ताभरणभूषितं रक्तगन्धानुलेपनं रक्तच्छत्रध्वजपता-किनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणी-कुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताग्निसहितं प्रत्यधिदेवतेश्वर-सहितं रक्तवृत्तमण्डले पूर्वमुखमादित्यमावाहयामि ).

(२) बौगृशे. १।१७।३–६ ; हिगृशे. ६।१.

(१) बौगृशे. १।१७।७–८ ; हिगृशे. ६।१.

(२) बौगृशे. १।१७।९ ; हिगृशे. ६।१ अवन्ती (अवन्ति) गोत्रजं (गोत्रं) ध्वजपता (ज्वलत्पता) ; शाम. १५ (किरीटिनं रक्तमाल्याम्बरं रक्तशूलगदाधरं चतुर्भुजं मेषगमनमवन्तिदेशजं वासिष्ठगोत्रजं जमदग्न्यार्षं जगतीछन्दसं रक्ताम्बरधरं रक्ताभरणभूषितं रक्तमाल्यानुलेपनं रक्तच्छत्रध्वज-पताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रद-क्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताभूमिसहितं प्रत्यधि-देवतास्कन्दसहितं त्रिकोणरक्तमण्डले दक्षिणामुखमङ्गारक-मावाहयामि ).

(३) बौगृशे. १।१७।१०–१३ ; हिगृशे. ६।१.

धर्मस्त्वं वृषरूपेण जगदानन्दकारक ।
अष्टमूर्तेरधिष्ठान अतः शान्तिं प्रयच्छ मे ॥

धरणीगर्भसंभूतं विद्युत्काञ्चनसंनिभम् ।
कुमारं शक्तिहस्तं च लोहिताङ्गं नमाम्यहम् ॥

महेश्वरस्याऽऽननस्वेदबिन्दो-
भूमौ जातं रक्तमाल्याम्बराढ्यम् ।
सुदीधितिं लोहिताङ्गं कुमार-
मङ्गारकं सदा शरणमहं प्रपद्ये ॥

शुक्रस्य ध्येयगुणवर्णनात्मकस्थापनमन्त्रः प्रार्थनं च

[1]शुक्रं शुक्लतनुं श्वेतवस्त्राढ्यं दैत्यमन्त्रिणम् ।
भार्गवं दण्डवरदकमण्डल्वक्षसूत्रिणम् ॥

कुन्दपुष्पसमानाभं मुक्ताफलसमप्रभम् ।
स्थापयामि महाशान्तं भृगुं दैत्यगुरुं प्रभुम् ॥

[2]सूर्यस्य पूर्वदिग्भागे पञ्चकोणाकारमण्डले प्राङ्मुखं भोजकटकदेशजं भार्गवगोत्रजं शौनकार्षं तिष्यनक्षत्रजं त्रिष्टुप्छन्दसं हाटकाग्निकं श्वेतमक्षसूत्रदण्डकमण्डलुवरदचतुर्भुजं श्वेताम्बरगन्धमाल्यवज्ररत्नाभरणभूषितं किरीटिनं श्वेतच्छत्रध्वजपताकिनं श्वेताश्ववाहनं भूसंभवश्वेतदशाश्वं श्वेतं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतेन्द्राणीं प्रत्यधिदेवतेन्द्रम् ॥

(१) बौगृशे. १।१७।१४–१५ ; हिगृशे. ६।१.

(२) बौगृशे. १।१७।१६ ; हिगृशे. ६।१ तेन्द्राणीं (तेन्द्राणिं) ; शाम. १५ (किरीटिनं श्वेतवर्णं चतुर्भुजं दण्डिनं वरदं काव्यं साक्षसूत्रकमण्डलुं कीकटदेशजं भार्गवगोत्रजं शौनकार्षं पङ्क्तिच्छन्दसं श्वेताम्बरधरं श्वेताभरणभूषितं श्वेतं श्वेतगन्धानुलेपनं श्वेतच्छत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतेन्द्राणीसहितं प्रत्यधिदेवेन्द्रसहितं शुक्रपञ्चकोणमण्डले प्राङ्मुखं भगवन्तं शुक्रमावाहयामि ).

[1]वन्दे विराजितसितांशुकगन्धमाल्य-
मच्छाश्वगं तनुविराजितवज्ररत्नम् ।
दोर्भिः सदण्डवरकुण्डिकमक्षसूत्रं
बिभ्राणमासुरगुरुं भृगुपुत्रमीड्यम् ॥

[2]विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः ।
विष्णोरर्कस्य वाहः स्यादतः शान्तिं प्रयच्छ मे ॥

हिमकुन्दतुषाराभं दैत्यानां परमं गुरुम् ।
सर्वशास्त्रप्रदातारं भार्गवं प्रणमाम्यहम् ॥

वर्षप्लवं चिन्तितार्थानुकूलं
नयप्रधानं विनयोपपन्नम् ।
तं भार्गवं योगविशुद्धसत्त्वं
शुक्रं सदा शरणमहं प्रपद्ये ॥

सोमस्य ध्येयगुणवर्णनात्मकस्थापनमन्त्रः प्रार्थनं च

[3]श्वेतवस्त्रधरं श्वेतदशाश्वरथवाहनम् ।
द्विभुजं साभयगदमात्रेयं सामृतं विधुम् ॥

[4]शान्तं नक्षत्रनाथं च रोहिणीवल्लभं प्रभुम् ।
कुन्दपुष्पोज्ज्वलाकारं स्थापयामि निशाकरम् ॥

[5]सूर्यस्याऽऽग्नेयदिग्भागे चतुरस्राकारमण्डले प्रत्यङ्मुखं यमुनादेशजमात्रेयगोत्रजमात्रेयार्ष

(१) बौगृशे. १।१७।१७ ; हिगृशे. ६।१ वरकुण्डिक (गुणमण्डित).

(२) बौगृशे. १।१७।१८–२० ; हिगृशे. ६।१.

(३) बौगृशे. १।१७।२१ ; हिगृशे. ६।१ दशाश्व (दशाश्वं).

(४) बौगृशे. १।१७।२२ ; हिगृशे. ६।१.

(५) बौगृशे. १।१७।२३ ; हिगृशे. ६।१ चतुरस्रा (चतुरश्रा) ; शाम. १५ (किरीटिनं श्वेताम्बरधरं दशाश्वं श्वेतभूषणं पाशपाणिं द्विबाहुं वनायुदेशजमत्रिगोत्रमात्रेयार्षं मनुष्टुप्छन्दसं श्वेताम्बरधरं श्वेतगन्धानुलेपनं श्वेतच्छत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताप्सहितं प्रत्यधिदेवतोमासहितं चतुरस्रमण्डले प्रत्यङ्मुखं सोममावाहयामि ).

कृत्तिकानक्षत्रजं गायत्रीछन्दसं पिङ्गलाग्निकमभयगदाधरं द्विभुजं श्वेताम्बरगन्धमाल्यमुक्ताभरणभूषितं किरीटिनं श्वेतच्छत्रध्वजपताकिनं वारिसंभूतदशाश्वं त्रिचक्रं श्वेतरथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतापं प्रत्यधिदेवतागौरीम् ॥

[१]श्वेताम्बरस्रगनुलेपनमत्रिनेत्र-
जातं दशाश्वरथवाहनमोषधीशम् ।
दोर्भ्यां धृताभयगदं भपतिं सुधांशुं
श्रीमत्सुमौक्तिकधरं प्रणमामि चन्द्रम् ॥

[२]पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम् ।
विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ मे ॥

दधिशङ्खतुषाराभं क्षीरोदार्णवसंभवम् ।
नमामि शशिनं भक्त्या शम्भोर्मुकुटभूषणम् ॥

[३]यः कालहेतोः क्षयवृद्धिमेति
यं देवताः पितरो वा पिबन्ति ।
तं वै वरेण्यं ब्रह्मेन्द्रवन्द्यं
सोमं सदा शरणमहं प्रपद्ये ॥

बुधस्य ध्येयगुणवर्णनात्मकस्थापनमन्त्रः प्रार्थनं च

[४]पीतस्रग्गन्धवस्त्राढ्यं स्वर्णाभं च चतुर्भुजम् ।
शक्तिचर्मासिगदिनमात्रेयं सिंहगं बुधम् ॥
चाम्पेयपुष्पसंकाशं विशुद्धकनकप्रभम् ।
स्थापयामि महासौम्यं बुधं सोमात्मजं प्रभुम् ॥

[५]सूर्यस्येशानदिग्भागे बाणाकारमण्डले प्राङ्मुखं मगधदेशजमात्रेयगोत्रजं भारद्वाजार्षं श्रविष्ठानक्षत्रजं त्रिष्टुप्छन्दसं जाठराग्निकं शक्तिखड्गचर्मगदाधरं चतुर्भुजं पीताम्बरगन्धमाल्यमरकतरत्नाभरणभूषितं किरीटिनं पीतच्छत्रध्वजपताकिनं पीतसिंहवाहनं वाय्वग्निजपीताष्टाश्वं पीतं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताविष्णुं प्रत्यधिदेवताविष्णुम् ॥

[१]वन्दे बुधं मरकतोज्ज्वलदेहकान्तिं
पीताम्बरस्रगनुलेपनभूषिताङ्गम् ।
शक्तिं च दोर्भिरसिचर्मगदा दधानं
सिंहध्वजं शशिसुतं बुधमत्रिवंशम् ॥

हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

[२]प्रियङ्गुगुलिकाभासं रूपेणाप्रतिमं बुधम् ।
सौम्यं सौम्यगुणोपेतं नमामि शशिनः सुतम् ॥

[३]विशुद्धबुद्धिं श्रुतिकालबोधं
सद्व्याहरं सोमवंशप्रदीपम् ।
सुदीधितिं छान्दसं विश्वरूपं
बुधं सदा शरणमहं प्रपद्ये ॥

बृहस्पतेर्ध्येयगुणवर्णनात्मकस्थापनमन्त्रः प्रार्थनं च

[४]आङ्गीरसं देवगुरुं पीतस्रग्गन्धवाससम् ।
दण्डिनं वरदं पीतं साक्षसूत्रकमण्डलुम् ॥

---

(१) बौगृशे. १।१७।२४ ; हिगृशे. ६।१ भपतिं (वरदं).

(२) बौगृशे. १।१७।२५–२६ ; हिगृशे. ६।१.

(३) बौगृशे. १।१७।२७ ; हिगृशे. ६।१ ब्रह्मेन्द्रवन्द्यं (ब्रह्मेन्द्रादिवन्द्यं).

(४) बौगृशे. १।१७।२८–२९ ; हिगृशे. ६।१.

(५) बौगृशे. १।१७।३० ; हिगृशे. ६।१ ; शाम. १५ (किरीटिनं पीतमाल्याम्बरधरं पीतवर्णं कर्णिकारसमद्युतिं खड्गचर्मगदापाणिं सिंहस्थं वरदं मगधदेशजमत्रिगोत्रजं भारद्वाजार्षं बृहतीछन्दसं पीताम्बरधरं पीताभरणभूषितं पीतगन्धानुलेपनं पीतच्छत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताविष्णुसहितं प्रत्यधिदेवताविष्णुसहितं पीतवर्णमण्डले दक्षिणामुखं बुधमावाहयामि).

(१) बौगृशे. १।१७।३१–३२ ; हिगृशे. ६।१.

(२) बौगृशे. १।१७।३३ ; हिगृशे. ६।१ गुलिका (कलिका).

(३) बौगृशे. १।१७।३४ ; हिगृशे. ६।१ सद्व्याहरं (सद्व्याहारं).

(४) बौगृशे. १।१७।३५–३६ ; हिगृशे. ६।१ आङ्गी (आङ्गि).

कुन्दपुष्पसमानाभं तप्तकाञ्चनसंनिभम् ।
स्थापयामि महाभक्त्या प्रसन्नवदनं गुरुम् ॥

[1]सूर्यस्योत्तरदिग्भागे दीर्घचतुरश्रमण्डले उदङ्मुखं सिन्धुदेशजमाङ्गिरसगोत्रजं वसिष्ठार्षमुत्तराफल्गुनीनक्षत्रजं त्रिष्टुप्छन्दसं शिख्यग्निकं पीतमक्षसूत्रदण्डकमण्डलुवरदचतुर्भुजं पीताम्बरगन्धमाल्यपुष्परागरत्नाभरणभूषितं किरीटिनं पीतच्छत्रध्वजपताकिनं विश्वरूपाख्यपाण्डुराष्टाश्वं काञ्चनं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतेन्द्रं प्रत्यधिदेवताब्रह्माणम् ॥

[2]पीताम्बरं तनुलसद्धृतपुष्परागं
केयूरहारमणिकुण्डलमण्डिताङ्गम् ।
दण्डं वराक्षगुणकुण्डियुतं दधानं
आङ्गीरसं सुरगुरुं हयगं नमामि ॥

[3]पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् ।
प्रदानादस्य मे विष्णुः प्रीतो भवतु सर्वदा ॥

देवतानामृषीणां च गुरुं काञ्चनसंनिभम् ।
सुवन्द्यं त्रिषु लोकेषु प्रणमामि बृहस्पतिम् ॥

(१) बौगृशे. १।१७।३७ ; हिगृशे. ६।१ ; शाम. १५ (किरीटिनं पीतवर्णं चतुर्भुजं दण्डिवरदं साक्षसूत्रकमण्डलुं सिन्धुदेशजमाङ्गिरसगोत्रं वासिष्ठार्षमनुष्टुप्छन्दसं पीताम्बरधरं पीताभरणभूषितं पीतगन्धानुलेपनं पीतच्छत्रध्वजपताकिनं मुकुटकेयूरमणिभूषितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतेन्द्रसहितं प्रत्यधिदेवताब्रह्मसहितं पीतदीर्घचतुरस्रमण्डले उदङ्मुखं गुरुमावाहयामि ).

(२) बौगृशे. १।१७।३८ ; हिगृशे. ६।१ वराक्षगुणकुण्डियुतं ( कमण्डलुवराक्षगुणान् ).

(३) बौगृशे. १।१७।३९–४० ; हिगृशे. ६।१.

[1]बुद्ध्या समो यस्य न कश्चिदन्यो
मतिं देवा उपजीवन्ति यस्य ।
प्रजापतेरात्मजं धर्मनित्यं
बृहस्पतिं सदा शरणमहं प्रपद्ये ॥

शनैश्चरस्य ध्येयगुणवर्णनात्मकस्थापनमन्त्रः प्रार्थनं च

[2]इन्द्रनीलनिभं मन्दं काश्यपिं चित्रभूषणम् ।
चापबाणधरं चर्मशूलिनं गृध्रवाहनम् ॥
इन्द्रनीलसमानाभं नीलोत्पलसमप्रभम् ।
स्थापयामि महारौद्रं सूर्यपुत्रं शनैश्चरम् ॥

[3]सूर्यस्य पश्चिमदिग्भागे धनुराकारमण्डले उदङ्मुखं काश्यपगोत्रजं भृग्वार्षेयं रेवतीनक्षत्रजं सौराष्ट्रदेशजं गायत्रीछन्दसं महातेजोग्निकं नीलं चर्मबाणधनुःशूलचतुर्भुजं नीलाम्बरगन्धमाल्यनीलरत्नाभरणभूषितं किरीटिनं नीलच्छत्रध्वजपताकिनं नीलगृध्रवाहनमाकाशजजम्बालाष्टाश्वं नीलं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताप्रजापतिं प्रत्यधिदेवतायमम् ॥

[4]दोर्भिर्धनुर्विशिखचर्मधरं त्रिशूलं
भास्वत्किरीटमुकुटोज्ज्वलितेन्द्रनीलम् ।
नीलातपत्रकुसुमांशुकगन्धभूषं
गृध्रस्थितं रविसुतं प्रणतोऽस्मि मन्दम् ॥

(१) बौगृशे. १।१७।४१ ; हिगृशे. ६।१ बुद्ध्या समो ( बुद्ध्यात्मनो ).

(२) बौगृशे. १।१७।४२–४३ ; हिगृशे. ६।१.

(३) बौगृशे. १।१७।४४ ; हिगृशे. ६।१ सौराष्ट्रदेशजं ( सौराष्ट्रजं ) ; शाम. १५ (किरीटिनमिन्द्रनीलसमद्युतिं शूलधरं वरदं गृध्रवाहनं सबाणासनधरं सौराष्ट्रदेशजं काश्यपगोत्रजं भृग्वार्षं गायत्रीछन्दसं कृष्णाम्बरधरं कृष्णाभरणभूषितं कृष्णगन्धानुलेपनं कृष्णच्छत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताप्रजापतिसहितं प्रत्यधिदेवतायमसहितं कृष्णधनुर्मण्डले प्रत्यङ्मुखं शनैश्चरमावाहयामि ).

(४) बौगृशे. १।१७।४५–४७ ; हिगृशे. ६।१.

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादतः शान्ति
प्रयच्छ मे ॥

नीलाञ्जनचयाकारं रविसूनुं नपुंसकम् ।
छायागर्भसमुद्भूतं वन्दे भक्त्या शनैश्चरम् ॥

[1]शनैश्चरः प्रजापतिं योऽधि यस्य
शनैर्भोगो गमनं चेष्टितं च ।
सूर्यात्मजं क्रोधनसुप्रसन्नं
शनैश्चरं सदा शरणमहं प्रपद्ये ॥

राहोर्ध्येयगुणवर्णनात्मकस्थापनमन्त्रः प्रार्थनं च

[2]सैंहिकेयं करालास्यं कौण्डिनेयं तमोमयम् ।
खड्गचर्मधरं भीमं नीलसिंहासने स्थितम् ॥
नीलाञ्जनसमानाभं नीलमेघसमद्युतिम् ।
स्थापयामि महावक्त्रं राहुं चन्द्रार्कवैरिणम् ॥

[3]सूर्यस्य नैर्ऋत्यदिग्भागे शूर्पाकारमण्डले दक्षिणाभिमुखं बर्बरदेशजं पैठीनसिगोत्रजमाङ्गिरसार्षमश्विनीनक्षत्रजं गायत्रीछन्दसं हुताशनाग्निकं कृष्णं खड्गचर्मधरं द्विभुजं कृष्णाम्बरगन्धमाल्यगोमेदरत्नाभरणभूषितं किरीटिनं कृष्णच्छत्रध्वजपताकिनं करालवदनमुरगालंकारं कृष्णसिंहासने स्थितमष्टाश्वं रथमारुह्य दिव्यं मेरुं * प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतासर्पं प्रत्यधिदेवतानिर्ऋतिम् ॥

[1]राहुं कराग्रपरिमण्डितचर्मखड्गं
भीमं तमोमयतनुं तममिन्द्विनारिम् ।
कौण्डिन्यसूनुमसितांशुकगन्धभूषं
गोमेदभूषिततनुं हरिगं नमामि ॥

[2]यस्मात्त्वं छाग यज्ञानामङ्गत्वेन व्यवस्थितः ।
यानं विभावसोर्नित्यमतः शान्ति प्रयच्छ मे ॥

अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् ।
सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहम् ॥

यो विष्णुनैवामृतं पीयमानं
छित्त्वा शिरो ग्रहभावे नियुक्तः ।
योऽभ्यर्कचन्द्रौ ग्रसति पर्वकाले
राहुं सदा शरणमहं प्रपद्ये ॥

---

(१) बौगृशे. १।१७।४८ ; हिगृशे. ६।१ शनैश्चरः (शनैश्चरं) योऽधि (यो हि).

(२) बौगृशे. १।१७।४९–५० ; हिगृशे. ६।१.

(३) बौगृशे. १।१७।५१ ; हिगृशे. ६।१ कृष्णाम्बरगन्ध (कृष्णाम्बरधरं गन्ध) ; शाम. १५ (किरीटिनं करालवदनं खड्गचर्मशूलधरं सिंहासनस्थं पूर्वदेशजं पाटलिगोत्रमाङ्गिरसार्षमनुष्टुप्छन्दसं कृष्णाम्बरधरं कृष्णाभरणभूषितं कृष्णगन्धानुलेपनं कृष्णच्छत्रध्वजपताकिनं मुकुटकेयूरमणिशोभितमारुह्य रथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतासर्पसहितं प्रत्यधिदेवताकालसहितं कृष्णशूर्पमण्डले दक्षिणामुखं राहुमावाहयामि).

* बौधायनहिरण्यकेशिशेषसूत्रादर्शपुस्तकयोः राहुकेतुध्यानमन्त्रयोः 'मेरुमप्रदक्षिणी०' इति पाठो मुद्रितः । पुस्तकान्तरेषु शान्तिमयूखे च 'मेरुं प्रदक्षिणी०' इति पाठोऽस्ति । आश्वलायनपरिशिष्टेऽपि 'प्रदक्षिणी०' इत्येव पाठोऽस्ति । तत्र 'अप्रदक्षिणी०' इति पाठो राहुकेत्वोः सूर्यादिविरुद्धगतित्वात्वेनचित्प्रमादेन कल्पित इति भाति । तथाहि– ग्रहाणां द्वे गती प्रसिद्धे, एका वास्तविकी यया मेषवृषभादिसंक्रान्तयः संपद्यन्ते, अपरा च प्रातिभासिकी पृथिव्याः स्वाक्षं परितो भ्रमणाद्धेतोराभासमाना यया प्रतिदिनं ग्रहाणां पूर्वपश्चिमदिक्संबन्धः संपद्यते । तत्र कस्या अप्येकस्या एव गतेः सर्वेषु ग्रहेषु समाश्रयणं न्याय्यम् । तत्र यदि वास्तविकी समाश्रीयते तदा सूर्यादयो मेरुमप्रदक्षिणीकुर्वन्ति, राहुकेतू च प्रदक्षिणीकुरुतः । प्रातिभासिकी चेत्समालम्ब्यते तदा राहुकेत्वोः सूर्यादिविरुद्धगतित्वाभावात् सर्वेऽपि प्रदक्षिणमेव कुर्वन्ति । एवं स्थिते वास्तविकीं गतिमालम्ब्य सप्तसु प्रमादकल्पनापेक्षया प्रातिभासिकीमालम्ब्य द्वयोरेव प्रमादकल्पनं न्याय्यमिति ।

(१) बौगृशे. १।१७।५२ ; हिगृशे. ६।१ चर्मखड्गं भीमं (खड्गचर्मभीमं) तमम (स्तनुस्तमम).

(२) बौगृशे. १।१७।५३–५५ ; हिगृशे. ६।१.

केतोर्ध्येयगुणवर्णनात्मकस्थापनमन्त्रः प्रार्थनं च

[1]धूम्रान् द्विबाहुगदिनो विकृतास्यान्
शतात्मकान् ।
गृध्रासनगतान्केतून्वरदान्ब्रह्मणः सुतान् ॥

नीलमेघसमानाभं चित्रवर्णं महाबलम् ।
स्थापयामि महारौद्रं केतुं सर्वफलप्रदम् ॥

[2]सूर्यस्य वायव्यदिग्भागे ध्वजाकारमण्डले दक्षिणाभिमुखमन्तर्वेदिदेशजं जैमिनिसूत्रजं रौद्राग्निकं धूम्रं वरदगदाधरं द्विभुजं चित्राम्बर-गन्धमाल्यवैडूर्यरत्नाभरणभूषितं किरीटिनं धूम्र-च्छत्रध्वजपताकिनं चित्रगृध्रवाहनं धूमारुणाष्टाश्वं धूम्रं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रह-मण्डले प्रविष्टमधिदेवताब्रह्माणं प्रत्यधिदेवता-चित्रगुप्तम् ॥

[3]गृध्रस्थितान् जलजयोनिसमानवक्त्रान्
धूम्रान् वराभयकरान् सुभुजान् कुमारान्।
वैडूर्यभूषिततनून् वरजैमिनीयान्
केतून् भयानकमुखान् द्विभुजान्नमामि ॥

[4]महासत्त्व महाकाय क्षीरोदार्णवसंभव ।
सर्वसंग्रामविजय जयं गज कुरुष्व मे ॥

(१) बौगृशे. १।१७।५६–५७ ; हिगृशे. ६।१.

(२) बौगृशे. १।१७।५८ ; हिगृशे. ६।१ धूमा-रुणा (धूम्रारुणा) ; शाम्न. १५–१६ (धूम्रान् द्विबाहून् पाशधरान् विकृताननान् गृध्रवाहनान् किरीटिनो मध्यदेश-जान् जैमिनिगोत्रजान् गौतमार्षान् नानाछन्दसश्चित्राम्बरधरां-श्चित्राभरणभूषितांश्चित्रगन्धानुलेपनान् कृष्णपिङ्गलध्वजपता-किनो मुकुटकेयूरमणिशोभितानारुह्य रथं दिव्यं मेरुं प्रदक्षिणी-कुर्वाणान् ग्रहमण्डले प्रविष्टानधिदेवताब्रह्मसहितान् प्रत्यधि-देवताचित्रगुप्तसहितान् कृष्णपिङ्गलध्वजमण्डले दक्षिणामुखान् केतूनावाहयामि).

(३) बौगृशे. १।१७।५९ ; हिगृशे. ६।१ वैडूर्य (वैडूर्य) जैमिनीयान् (जैमिनेयान्).

(४) बौगृशे. १।१७।६० ; हिगृशे. ६।१.

[1]करालधूम्रसंकाशांस्तारकाग्रहमस्तकान् ।
रुद्रान् रौद्रात्मकान् घोरांस्तान् केतून्
प्रणमाम्यहम् ॥

[2]ये ब्रह्मपुत्रा ब्रह्मसमानवक्त्रा
ब्रह्मोद्भवा ब्रह्मसमाः कुमाराः ।
ब्रह्मोत्तमा वरदा जैमिनीयाः
केतून् सदा शरणमहं प्रपद्ये ॥

## आश्वलायनगृह्यपरिशिष्टम्

ग्रहाणां चैत्यत्वम्, नवग्रहीपरिगणनम्, ग्रहयज्ञनिमित्तानि, आभ्युदयिकनिमित्तके कालविशेषः, आहुतिसंख्याप्रयुक्ता होतृसंख्या, स्वस्याऽऽचार्यत्वे आचार्यभागस्य कल्पविदे दानम्, ऋत्विग्वरणार्हणे, आदित्यहोमे आचार्यस्य कर्तृत्वम्, ऋत्विगन्वारब्धाचार्यस्य पूर्वोत्तरतन्त्र-कर्तृत्वम्

[3]अथ ग्रहयज्ञश्चैत्ययज्ञः । चितमुपयाचित-मुच्यते । तत्र भवाः शान्तिपुष्टिदा देवताश्चैत्याः ।

(१) बौगृशे. १।१७।६१ ; हिगृशे. ६।१ कराल (पलाश).

(२) बौगृशे. १।१७।६२ ; हिगृशे. ६।१ जैमि-नीयाः (जामदग्न्याः).

(३) आगृप. २।१ चितमुप (चैत्यमुप) ग्रहान् (ग्रहाः) तानयना (तानुदगयना) सद्योऽद्भुतेषु च (सद्य उद्भूतेषु) दशावराहुतिं (दशपराहुतीः) मा पञ्चाशतः (मापञ्चशतं) शतावराहुतावष्टौ (आशतं वरमष्टौ) (सः०) दितरे तमन्वा (दितरेऽन्वा) ; प्रपा. ७४ ग्रहयज्ञश्चैत्ययज्ञः । (ग्रहयज्ञाश्चैत्ययज्ञाः ।) तत्र भवाः (तद्भवाः) समुप (उप) ततश्चै (अतश्चै) ते हि स्वस्व (तेऽपि हि स्व) (माङ्गल्यादिषु०) अनाभ्यु (अथाभ्यु) सप्ताहान्तरितात् (सप्ताहान्यन्तरित्य) त्तरतन्त्र (त्तरं तन्त्र) तदितरे तमन्वा-रभेन् (तदेतरे तमन्वालभेरन्) ; संकौ. १३१ (अथ ग्रहयज्ञ ... ... ततश्चैत्याः०) स्वस्वगत्या (स्वगत्या) यजेत (यजेत्) (माङ्गल्यादिषु०) सप्ताहान्तरितात् (सप्ताहा-न्यन्तरीत्य) (स्युः०) अर्हयेत् (अर्चयेत्) पूर्वोत्तरतन्त्र (पूर्वोत्तरं तन्त्र) तदितरे तमन्वारभेरन् (इतरे तमन्वा-लभेरन्).

**शान्तिं च खलु पुष्टिं च सर्वे ग्रहान् समुपयाचन्ते ततश्चैत्याः। आदित्य इन्दुरङ्गारकः सौम्यो गुरुर्भार्गवः शनैश्चरो राहुः केतुरिति नव ग्रहाः। ते हि स्वस्वगत्या जगदभिगृह्णन्ति। तानयनादिषु पुण्यकालेषु यजेत। शान्तये सद्योऽद्भुतेषु च। माङ्गल्यादिष्वाभ्युदयिकं करिष्यमाणो ग्रहयज्ञं कुर्यात्। अनाभ्युदयिकं हि शान्तिकर्म यदि तदाऽऽनुकूल्यकामः स्यात्। कामं प्रागभ्युदयात् सप्ताहान्तरितात् कुर्यात्। तं दशावराहुतिं स्वयमेकः कुर्यात्। ऊर्ध्वमा पञ्चाशतश्चत्वार ऋत्विजः स्युः। शतावराहुतावष्टौ, नवम आचार्यः, स स्वयमेव वा। यदि स्वयमाचार्यः स्यात्तद्भागं कल्पविदे दद्यात्। तान् विधिवद्वरयित्वाऽर्हयेत्। आचार्य आदित्याय जुहुयादितरेभ्य इतरे। पूर्वोत्तरतन्त्रमाचार्यः कुर्यात्। तदितरे तमन्वारभेरन्॥**

(१) अस्यार्थः— चैत्यानां देवतानां होमाद्यात्मकायशात् चिरप्रार्थितमिष्टप्राप्त्यनिष्टपरिहाररूपं फलमुपयाचितम्। एतदेव विवृणोति— तद्भवा इत्यादिना। तद्भवाः तस्मिन् यज्ञे भवाः प्रार्थनया प्राप्ता देवताश्चैत्याः। ताः कीदृशीरित्य(? श्य इत्य)पेक्षायामुक्तम्— शान्तिपुष्टिदा इति। यत एवंरूपास्ततस्तदुपयाचनमुचितमित्याह— शान्तिं च खल्विति। अतस्ते ग्रहाश्चैत्या इत्युच्यन्ते। एतेषां नामानि दर्शयति— आदित्य इत्यादिना। यतः ते ग्रहाः स्वगतिविशेषेण जगदभिगृह्णन्ति ततस्तान् अयनादिषु पुण्यकालेषु यजेत्। अद्भुतेषूत्पातादिषु तच्छान्तये सद्य एव यजेत्। विवाहोपनयादिष्वाभ्युदयिकेषु कर्मस्वादौ ग्रहयज्ञं कुर्यात्। अनाभ्युदयिकेषु शान्तिकर्मसु ग्रहानुकूल्यकामो ग्रहयज्ञं कुर्यादित्याह— अथा(? अना)भ्युदयिकं हीति। आभ्युदयिककर्मसु कालविशेषं दर्शयति— कामं प्रागभ्युदयादिति। अभ्युदयात्प्राक्सप्तदिनान्यन्तरित्य व्यवधीकृत्य ग्रहमखं कुर्यात्। आहुतिसंख्यापेक्षया होतृसंख्यां दर्शयति— दशावराहुतिमित्यादिना। दशाहुतिपक्षे यजमान एक एव होमं कुर्यात्। पञ्चाशदाहुतिपक्षे चत्वार ऋत्विजः कुर्युः। शताहुतिपक्षे अष्टावृत्विजः कुर्युर्नवम आचार्य इत्यर्थः। यजमानस्यैवाऽऽचार्यत्वपक्षे यजमानः स्वांशमन्यस्मै ग्रहयज्ञकल्पविदे दद्यादित्याह— यदि स्वयमिति। ऋत्विग्वरणं तदर्चनं च कर्तव्यमित्याह— तान्विधिवदिति। अनेकर्त्विक्पक्षे कः कस्मै जुहुयादित्यपेक्षायामाह— आचार्य आदित्यायेति। आचार्यस्य विशेषान्तरमाह— पूर्वोत्तरमिति। पूर्वोत्तरतन्त्रकरणकाले इतरे आचार्यमन्वालभेरन्नित्याह— तदेतरे इति।

प्रपा. ७४—७५

(२) अभ्युदयकामं प्रति अयनादिपुण्यकालनियममुक्त्वाऽद्भुताख्योत्पातेषु तच्छान्त्यर्थं प्रयोगे नायनादिपुण्यकालापेक्षेति सद्य इत्यनेनोक्तम्। आभ्युदयिकमित्यादेर्व्याख्यानमुक्तं पारिजाते— विवाहोपनयनादिष्वाभ्युदयिकेषु कर्मस्वादौ ग्रहयज्ञं कुर्यात्, अनाभ्युदयिकेषु श्राद्धातिरिक्तकर्मसु ग्रहानुकूल्यकामो ग्रहयज्ञं कुर्यादिति। आभ्युदयिककर्माव्यवहितपूर्वकालेऽसंभवतो ग्रहयज्ञस्य नियतव्यवहितकालेनानुष्ठानमभ्यनुजानाति। व्यवहितानुष्ठानेऽपि सप्तदिनाधिक्यव्यवधानं न कार्यमित्यर्थः। होमगतसंख्यानिमित्तां कर्तृसंख्याव्यवस्थामाह— दशेत्यादिना। ऊर्ध्वमिति दशभ्य ऊर्ध्वं पञ्चाशतमभिव्याप्य चत्वार ऋत्विजः, तत ऊर्ध्वं शतपर्यन्तमष्टौ ऋत्विजः नवम आचार्यः। स इति, आचार्यकर्म स्वयमेव वा कुर्यादित्यर्थः। अस्मिन् पक्षे आचार्याय देयां दक्षिणां ग्रहकल्पविदे दद्यात्। इतरेभ्यः सोमादिभ्यः। तन्त्रानुष्ठानकाले ऋत्विग्भिराचार्यान्वारम्भः कार्य इति विधीयते।

संकौ. १३१—१३२

कुण्ड-स्थण्डिलकरणम्, ग्रहवेदिनिर्माणम्, तण्डुलपञ्चोल्लेखनम्, ग्रहपीठस्थापनम्, अभिषेककुम्भस्थापनं तत्पूजनं च

**[1]अथास्य संभाराः। हस्तमात्रावरं चतुरस्रं कुण्डं स्थण्डिलं वा संस्कृत्य तत ऐशान्यां कुण्ड-**

---

(१) आगृप. २.२ ऐशान्यां (ईशान्यां) चतुरस्रं (चतुरस्र); प्रपा. ७५ (विस्तृतां०) शुक्लव्रीहि (शुक्लैर्व्रीहि)

वदायतां चतुरस्रां चतुस्त्रिंशदङ्गुलोच्छ्रितां विस्तृतां त्रिभूमिकां ग्रहवेदिं कुर्यात् । तस्यां च शुक्लव्रीहितण्डुलैः सकर्णिकमष्टदलमम्बुजमुल्लिख्य कर्णिकायां दलेषु च यथास्थानं ग्रहपीठानि स्थापयेत् । उदीच्यां धान्यपीठे तैजसं मृण्मयं वा नवमनुलिप्तालंकृतं शुभमभिषेककुम्भं निधाय 'प्र सु व आपो महिमानम्' इत्यृचाऽद्भिः पूरयित्वा पञ्च गव्यानि पञ्चामृतानि नव पर्वतधातून् नव पवित्रमृदो नव रत्नानि प्रक्षिप्य दूर्वापल्लवैर्मुखमाच्छाद्य वस्त्रयुग्मेन वेष्टयित्वा समुद्रादीनि पुण्यतीर्थान्यावाह्य कुम्भमभिमृश्याब्लिङ्गा वारुणीः पावमानीश्च जपेत् ॥

आहुतिसंख्यावृद्ध्यनुसारेण कुण्डादौ हस्ताधिकपरिमाणव्यवस्था संवत्सरकौस्तुभान्तर्गतमाघकृत्ये द्रष्टव्या । कुण्डतुल्यैव ग्रहवेदिवृद्धिः कल्प्या । कर्णिकायां ( दलेषु च ) ग्रहपीठानि कुर्यात् । कर्णिकायां मध्ये रक्ताक्षतैर्वर्तुलमाग्नेयदले शुक्लाक्षतैश्चतुरस्रं दक्षिणे रक्ताक्षतैस्त्रिकोणं ऐशाने हरिताक्षतैर्बाणाकारं उत्तरे पीताक्षतैर्दीर्घचतुरस्रं पूर्वस्मिन् शुक्लाक्षतैः पञ्चकोणं पश्चिमे कृष्णाक्षतैश्चापाकारं नैर्ऋते तादृशैः शूर्पाकारं वायव्ये चित्राक्षतैर्ध्वजाकारमिति । तत उदीच्यां रङ्गवल्लीपद्मे धान्येन कुम्भयोग्यं पीठं प्रकल्प्य तत्र नवमव्रणं तैजसं मृन्मयं वाऽनुलिप्तमक्षतपुष्पमालाद्यलंकृतं कुम्भं स्थापयेत् । संकौ. १३२

कर्णिकायां (कर्णिकायाः) 'प्र सु व आपो महिमानम्' इत्यृचा ('शं न आपो धन्वना गा' इति तृचेन) प्रक्षिप्य (निक्षिप्य) मुखमाच्छाद्य (मुखमवच्छाद्य) कुम्भमभिमृश्य + (तत्र गङ्गादिनदीः स्मृत्वा); संकौ. १३२ (अथास्य संभाराः०) च्छ्रितां विस्तृतां त्रिभूमिकां (च्छ्रितत्रिभूमिकां) कुर्यात्। तस्यां च (कृत्वा तस्यां) शुक्लव्रीहि (शुक्लैर्व्रीहि) उल्लिख्य (उल्लिखेत्) 'कर्णिकायां ....इत्यृचा' इत्यर्थतोऽनुवादः, नवपवित्र (पवित्र) मुखमाच्छाद्य (मुखमवच्छाद्य) पुण्यतीर्थानि (तीर्थानि).

ग्रहप्रतिमाद्रव्याणि तत्प्रतिनिधिश्च

[1]अथार्चनाङ्गानि । ताम्रं स्फाटिकं रक्तचन्दनं सुवर्णं तदेव रजतं लोहं सीसकं कांस्यमिति नव प्रतिमाद्रव्याणि । सुवर्णमेकमेव वा सर्वेषाम् ॥

तदेवेति बृहस्पतेरपि बुधवत्सौवर्णी प्रतिमेत्याशयः । संकौ. १३२

प्रतिग्रहं भिन्नानि अनुलेपनानि पुष्पाणि अक्षताः वस्त्राणि धूपाः दीपाः उपहाराः रत्नानि समिधश्च, तत्प्रतिनिधयः

[2]रक्तचन्दनं मलयजो देवदारुः कुङ्कुमो मनःशिला शङ्खपिष्टं तिलपिष्टं केतकीरजः कस्तूरीति नवानुलेपनानि । मलयज एक एव वा सर्वेषाम् । रक्तपद्मं कुमुदं रक्तकरवीरं पाटलं चम्पकं कुन्दमिन्दीवरं कृष्णधत्तूरं तच्चित्रवर्णमिति नव पुष्पाणि । रक्तकरवीरमेकमेव वा । पुष्पवर्णा अक्षता अहतवस्त्रयुग्मानि च । कुन्दुरुर्मयूरशिखा दशाङ्गः सर्जरसो बिल्वफलं श्रीवासः कृष्णागुरु जटामांसी मधूकमिति नव धूपाः । गुग्गुलुरेक एव वा । सर्पिषा दीपस्तिलतैलेन वा । हविष्यान्नं पायसं पलान्नं गुडान्नं क्षीरोदनो दध्योदनः कृसरो मांसान्नं चित्रान्नमिति नवोपहाराः । त्रिवृदन्नमेकमेव वा । माणिक्यं मौक्तिकं प्रवालो मरकतं पुष्परागो वज्रो नीलो गोमेदकं वैदूर्यमिति नव रत्नानि । एकमेव वा माणिक्यम् । अर्कः पलाशः खदिरोऽपामार्गोऽश्वत्थ उदुम्बरः शमी दूर्वाः कुशा इति समिधः । सर्वेषां पलाश एक एव वा ॥

(१) आगृप. २।३ रक्तचन्दनं + (कुङ्कुमं); प्रपा. ७'१ स्फाटिकं (स्फटिको) सीसकं (सीसं); संकौ. १३२ (अथार्चनाङ्गानि०) सीसकं (सीसं) प्रतिमा (ग्रहप्रतिमा).

(२) आगृप. २।३ कुन्दुरुर्मयूरशिखा दशाङ्गः सर्जरसो (कन्दरमयूरशिखादशाङ्गसर्जरसाः) कृसरो मांसान्नं (कृसरान्नमामान्नं) गोमेदकं (गोमेदिकं) पलाशः (पालाशः) ऽश्वत्थ

पुण्याहवाचनसंकल्पपूर्वकं ग्रहदेवतानां स्थापनावाहन-
पूजनानि देवतानुक्रमश्च

**[1]अथार्चनम् । आचार्यः प्राङ्मुख उपविश्य समाहितः पुण्याहादि वाचयित्वा कर्म संकल्प्य ग्रहवेदिपद्मपीठेषु यथास्थानमुखीर्ग्रहप्रतिमाः स्थापयित्वा दक्षिणवामयोरधिदेवताप्रत्यधिदेवते तदभिमुख्यौ स्थापयेत् । तदभावे पुष्पाक्षतादिष्वावाहयेत् । अग्निरापः पृथिवी विष्णुरिन्द्र इन्द्राणी प्रजापतिः सर्पा ब्रह्मा च क्रमेण ग्रहाणामधिदेवताः । ईश्वर उमा स्कन्दः पुरुषो ब्रह्मेन्द्रो यमः कालश्चित्रगुप्त इति प्रत्यधिदेवताः । गणपतिं दुर्गां क्षेत्राधिपतिं वायुमाकाशमश्विनौ कर्मसाद्गुण्यदेवताः। इमा पश्चात् प्रत्यङ् निवेश्य प्राच्यादिष्विन्द्रादिलोकपालान् क्रतुरक्षकानावाहयेत् । पुष्पाञ्जलिप्रयोगेणाऽऽवाहनमन्त्रैरावाह्य नमोन्तैर्नामभिः क्रमेण धूपदीपान्तानुपचारानर्पयेत् ॥**

नामभिः 'ओमादित्याय नमः' इत्येवंरूपैः । क्रमेणेति आसनपाद्यार्घादीनां प्रसिद्धक्रमेणैवार्पणं कार्यमित्युच्यते । तेन पुष्पानन्तरं पठितानामप्यक्षतवस्त्राणां स्वकाले एवार्पणं बोध्यम् । दीपान्तान्* इत्यतद्गुणसंविज्ञानो बहुव्रीहिः, पुष्पान्तानिति यावत्, 'प्राक्स्विष्टकृतो ग्रहाणां घण्टादिशब्दैर्धूपदीपैरुपहारानुपहृत्य' इति होमोत्तरं परिशिष्टोक्तेः पारिजातादिप्रयोगेषु होमात्पूर्वं ग्रहाणां पूर्वोक्तद्रव्यैः पुष्पसमर्पणपर्यन्तं पूजां कृत्वाऽन्यदेवता मलयजगन्धशतपत्रपुष्पैस्तथैव पूजयेदित्युक्तेः होमोत्तरं च सर्वदेवतानां धूपदीपप्रभृतिपूजाया एवोपदेशात् । अतो होमात्पूर्वोत्तरकालयोर्व्यवस्थया वितता पूजा कार्या । तत्र पूर्वकाले गन्धपुष्पेषु यथोपदेशे शक्तं प्रति द्रव्यव्यवस्था । अशक्तं प्रति एकोपदेशः । उत्तरपूजायां नैवेद्येषु सपुष्परत्ननिवेदनेषु च तथैवोपदेश इति बोध्यम् । उत्तरपूजावसर एव रत्नासंभवे सुवर्णपुष्पाणि दद्यादित्यप्युक्तं परिशिष्टे । संकौ. १३९

---

उदुम्बरः (ऽश्वत्थोदुम्बरः) पलाश (पालाश); प्रपा. ७५ चन्दनं (चन्दनो) कुङ्कुमो (कुङ्कुमं) एक एव वा सर्वेषाम्। (एक एव वा ।) तच्चित्र (तदेव चित्र) रक्तकरवीरमेकमेव (मल्लिकैकैव) वर्णा अक्षता अहतवस्त्र (वर्णाक्षतवस्त्र) कृष्णागुरु (कृष्णागरुः) दीपः (दीपाः) पायसं......... कृसरः (पायसान्नं गुडान्नं क्षीरौदनं दध्योदनं घृतौदनं कृसरं) वैदूर्यं (वैडूर्यं) एकमेव वा माणिक्यम्। (माणिक्यमेकमेव वा।) ऽश्वत्थ उदुम्बरः (ऽश्वत्थोदुम्बरः) समिधः (नव समिधः); संकौ. १३८–१३९ चन्दनं (चन्दनो) कस्तूरीति (कस्तूरिकेति) मलयज एक एव वा सर्वेषाम्। (मलयजमेव वा।) रक्तकरवीरमेकमेव (मल्लिकैव) कुन्दुरुर्मयूर (कन्दरसो मयूर) कृष्णागुरु (कृष्णागरुः) पलान्नं (पललान्नं) प्रवालो (प्रवालं) वैदूर्य (वैडूर्य) (अर्कः.........एव वा। ०).

(१) आगृप. २।४ मुखीः (मुखीं) प्रतिमाः (प्रतिमां) इमा पश्चात् (इमा यथा) मन्त्रैरावाह्य नमोन्तैर्नामभिः (मन्त्रैर्नमोन्तैरावाह्य नामभिः) (धूप०); प्रपा. ७५–७६ पुण्याहादि (पुण्याहादीनि) वेदि (वेदी) तदभावे (अभावे) ईश्वर उमा (रुद्रो गौरी) ब्रह्मेन्द्रो (ब्रह्मा पुरन्दरो) गुप्त इति (गुप्तश्च ग्रह) गणपतिं......कर्मसाद्गुण्य (गणपतिर्दुर्गा क्षेत्रपतिर्वायुराकाशमश्विनौ च क्रतुसाद्गुण्य) इन्द्रादिलोक (इन्द्रादीन् लोक) रक्षका (संरक्षका); संकौ. १३९ (पुष्पाञ्जलिप्रयोगेणाऽऽवाहनमन्त्रैरावाह्य नमोन्तैर्नामभिः क्रमेण धूपदीपान्तानुपचारानर्पयेत्।) एतावदेव.

* अत्र 'धूपदीपान्तान्' इति पाठो युक्तः, धूपपदं प्रच्युतमिति कल्प्यते। अन्यथा बहुव्रीहेरतद्गुणसंविज्ञानत्वेऽपि धूपस्य दीपाव्यवहितपूर्वत्वात् धूपान्तानित्यर्थं आपद्येत। कौस्तुभे प्रयोगपारिजाते च परिशिष्टवचनानुवादेऽस्त्येव तत्। परिशिष्टादर्शपुस्तके तु धूपपदविरहः, स चैतद्व्याख्यानविरुद्धः। इदं त्ववधेयम्—पुष्पान्तपूजोत्तरं होमस्ततो धूपादिपूजाशेष इत्यस्मिन्नर्थे प्रमाणत्वेनोद्धृतम् 'घण्टादिशब्दैर्धूपदीपैरुपहारानुपहृत्य' इति परिशिष्टवाक्यं कुत्रापि नोपलभ्यते, उपलभ्यते तु 'घण्टादिशब्दैरुपहारानुपहृत्य' इतीदृशम्। तच्च 'दीपान्तान्' इति बहुव्रीहेस्तद्गुणसंविज्ञानत्वे एवानुकूलमिति।

ग्रहावाहनमन्त्राः

***[1]अथाऽऽवाहनमन्त्राः । प्रणवमुच्चार्य भगवन्नादित्य ग्रहाधिपते काश्यपगोत्र कलिङ्गदेशेश्वर जपापुष्पोपमाङ्गद्युते द्विभुज पद्माभयहस्त सिन्दूरवर्णाम्बरमाल्यानुलेपन ज्वलन्माणिक्यखचितसर्वाङ्गाभरण भास्कर तेजोनिधे त्रिलोकप्रकाशक त्रिदेवतामयमूर्ते नमस्ते, संनद्धारुणध्वजपताकोपशोभितेन सप्ताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ, अग्निरुद्राभ्यां सह पद्मकर्णिकायां ताम्रप्रतिमां प्राङ्मुखीं वर्तुलपीठेऽधितिष्ठ, पूजार्थं त्वामावाहयामि । भगवन् सोम द्विजाधिपते सुधामयशरीराऽऽत्रेयगोत्र यामुनदेशेश्वर गोक्षीरधवलाङ्गकान्ते द्विभुज गदावरदानाङ्कित शुक्लाम्बरमाल्यानुलेपन सर्वाङ्गामुक्तमौक्तिकाभरणरमणीय सर्वलोकाप्यायक देवतास्वाद्यमूर्ते नमस्ते, संनद्धधवलध्वजपताकोपशोभितेन दशश्वेताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ, अद्भिरुमया च सह पद्माग्नेयदलमध्ये स्फटिकप्रतिमां प्रत्यङ्मुखीं चतुरस्रपीठेऽधितिष्ठ, पूजार्थं त्वामावाहयामि । भगवन्नङ्गारकाग्न्याकृते भारद्वाजगोत्रावन्तिदेशेश्वर ज्वालापुञ्जोपमाङ्गद्युते चतुर्भुज शक्तिशूलगदाखड्गधारिन् रक्ताम्बरमाल्यानुलेपन प्रवालाभरणभूषितसर्वाङ्ग दुरालोकदीप्ते नमस्ते, संनद्धरक्तध्वजपताकोपशोभितेन रक्तमेषरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ, भूमिस्कन्दाभ्यां सह पद्मदक्षिणदलमध्ये रक्तचन्दनप्रतिमां दक्षिणामुखीं त्रिकोणपीठेऽधितिष्ठ, पूजार्थं त्वामावाहयामि । भगवन् सौम्य सौम्याकृते सर्वज्ञानमयात्रिगोत्र मगधदेशेश्वर कुङ्कुमवर्णाङ्गद्युते चतुर्भुज खड्गखेटकगदावरदानाङ्कित पीताम्बरमाल्यानुलेपन मरकताभरणालंकृतसर्वाङ्ग विवृद्धमते नमस्ते, संनद्धपीतध्वजपताकोपशोभितेन, चतुःसिंहरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ, विष्णुपुरुषाभ्यां**

---

* प्रयोगपारिजाते प्रयोगरत्ने संस्कारकौस्तुभे च संगृहीतस्य ग्रहयज्ञप्रयोगस्याऽऽश्वलायनगृह्यपरिशिष्टानुसारित्वस्य तत्र स्वशब्देनोक्तत्वात्तदीयप्रयोगान्तर्गतानामपि ग्रहाद्यावाहनमन्त्राणां स्थलानि पाठान्तराणि चात्र संगृहीतानि ।

(१) आगृप. २१५ सर्वाङ्गामुक्त ( सर्वाङ्गयुक्त ) संनद्धधवल ( संनद्धपीत ) दुरालोक ( दुर्धरालोक ) दण्डकमण्डल्वक्षसूत्रवरदानाङ्कित पीता ( कमण्डल्वक्षसूत्रवरदानाङ्कित पीता ) शुक्लाश्वरथवाहनेन ( शुक्लाश्वरथवाहनसहितेन ) सौराष्ट्र ( सुराष्ट्र ) चापतूणीरकृपाणाभयाङ्कित ( चापतूणीकृतबाणाभयाङ्कित ) पद्मपश्चिमदल ( पश्चिमदल ) खड्गचर्मशूलवरदानाङ्कित ( खड्गचर्मधर शूलवराङ्कित ) कालाभ्यां सह ( कालाभ्यां ) गदावरदानाङ्कित चित्रा ( गदावरदाङ्कित चित्रा ) कपोतरथवाहनेन ( कपोतवाहनेन ); प्रपा. ७६–७७ अथाऽऽवा ( अथ ग्रहावा ) ( प्रणवमुच्चार्य० ) वरदानाङ्कित शुक्ला ( वरदानाङ्कितकर शुक्ला ) सर्वाङ्गामुक्तमौक्तिकाभरणरमणीय सर्वलोका ( मुक्तमौक्तिकाभरणरमणीयसर्वाङ्ग समस्तलोका ) स्फटिक ( स्फाटिक ) शुक्लमाल्याम्बरानुलेपन ( शुक्लाम्बरमाल्यानुलेपन ) संनद्धशुक्लध्वज ( संनद्धधवलध्वज ) पूर्वदलमध्ये ( प्राग्दलमध्ये ) साराष्ट्र ( सुराष्ट्र ) कज्जलनिभा ( कज्जलनीला ) नीलरत्नभूषणालंकृत ( नीलरत्नभूषित ) मर्षमूर्ते ( मर्षणमूर्ते ) पैठीनसि ( पैठीनस ) मेघसमद्युते ( मेघद्युते ) शूलवरदाना ( शूलगदावरदाना ) कृष्णसिंह ( कृष्णमेष ) सीसक ( सीस ) वैदूर्य ( वैडूर्य ); प्रर. २४–२७ आत्रेयगोत्र यामुन ( अत्रिगोत्र यमुना ) सर्वलोका ( समस्तलोका ) गदाखड्ग ( गदाखड्वा ) विवृद्धमते ( विबुधपते ) तप्तसुवर्ण ( दीप्तसुवर्ण ) शुक्लमाल्याम्बरा ( शुक्लाम्बरमाल्या ) शुक्लाश्वरथवाहनेन ( शुक्लाश्वसहितेन रथेन ) कज्जलनिभाङ्ग ( कज्जलनीलाङ्ग ) पैठीनसि ( पैठीनस ) मेघसमद्युते ( मेघद्युते ) नैर्ऋत ( नैर्ऋत्य ) वैदूर्य ( वैडूर्य ) पद्मवायव्य ( वायव्य ); संकौ. १३३–१३७ भास्कर ( भास्वर ) आत्रेयगोत्र यामुन ( अत्रिगोत्र यमुनातीर ) गदावरदानाङ्कित शुक्ला ( गदावरदानाङ्कितकर शुक्ला ) सर्वाङ्गा ( सर्वाङ्ग ) सर्वलोका ( समस्तलोका ) उमया च ( उमया ) स्फटिक ( स्फाटिक ) पुञ्जोपमाङ्गद्युते ( पुञ्जाङ्गद्युते ) प्रवालाभरणभूषित ( प्रवालभूषिताभरण ) खेटक ( खेट ) विवृद्धमते ( विबुधपते ) पद्मेशान ( ऐशान ) तप्तसुवर्णसदृशाङ्गदीप्ते ( दीप्तसुवर्णसदृशदीप्त ) शुक्लमाल्याम्बरानुलेपन ( शुक्लाम्बरमाल्यानुलेपन ) शुक्लाश्वरथवाहनेन ( शुक्लाश्वसहितेन रथेन ) पद्मपूर्व ( पूर्व ) पैठीनसि ( पैठीनस ) मेघसम ( मेघ ) वैदूर्य ( वैडूर्य ),

सह पद्मेशानदलमध्ये सुवर्णप्रतिमामुदङ्मुखीं बाणाकारपीठेऽधितिष्ठ, पूजार्थं त्वामावाहयामि। भगवन् बृहस्पते समस्तदेवताचार्याङ्गिरसगोत्र सिन्धुदेशेश्वर तप्तसुवर्णसदृशाङ्गदीप्ते चतुर्भुज दण्डकमण्डलवक्षसूत्रवरदानाङ्कित पीताम्बर-माल्यानुलेपन पुष्परागमयाभरणरमणीय समस्त-विद्याधिपते नमस्ते, संनद्धपीतध्वजपताकोप-शोभितेन पीताश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्व-न्नागच्छ, इन्द्रब्रह्मभ्यां सह पद्मोत्तरदलमध्ये सुव-र्णप्रतिमामुदङ्मुखीं दीर्घचतुरस्रपीठेऽधितिष्ठ, पूजार्थं त्वामावाहयामि। भगवन् भार्गव समस्त-दैत्यगुरो भार्गवगोत्र भोजकटदेशेश्वर रजतो-ज्ज्वलाङ्गकान्ते चतुर्भुज दण्डकमण्डलवक्षसूत्रवर-दानाङ्कित शुक्लमाल्याम्बरानुलेपन वज्राभरणभू-षितसर्वाङ्ग समस्तनीतिशास्त्रनिपुणमते नमस्ते, संनद्धशुक्लध्वजपताकोपशोभितेन शुक्लाश्वरथ-वाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ, इन्द्राणी-न्द्राभ्यां सह पद्मपूर्वदलमध्ये रजतप्रतिमां प्राङ्-मुखीं पञ्चकोणपीठेऽधितिष्ठ, पूजार्थं त्वामावाह-यामि। भगवन् शनैश्चर भास्करतनय काश्यपगोत्र सौराष्ट्रदेशेश्वर कज्जलनिभाङ्गकान्ते चतुर्भुज चापतूणीरकृपाणाभयाङ्कित नीलाम्बरमाल्य नु-लेपन नीलरत्नभूषणालंकृतसर्वाङ्ग समस्तभुवन-भीषणामर्षमूर्ते नमस्ते, संनद्धनीलध्वजपता-कोपशोभितेन नीलगृध्ररथवाहनेन मेरुं प्रदक्षि-णीकुर्वन्नागच्छ, प्रजापतियमाभ्यां सह पद्म-पश्चिमदलमध्ये कालायसप्रतिमां प्रत्यङ्मुखीं चापाकारपीठेऽधितिष्ठ, पूजार्थं त्वामावाहयामि। भगवन् राहो रविसोममर्दन सिंहिकानन्दन पैठी-नसिगोत्र बर्बरदेशेश्वर कालमेघसमद्युते व्याघ्र-वदन चतुर्भुज खड्गचर्मशूलवरदानाङ्कित कृष्णा-म्बरमाल्यानुलेपन गोमेदकाभरणभूषितसर्वाङ्ग शौर्यनिधे नमस्ते, संनद्धकृष्णध्वजपताकोप-शोभितेन कृष्णसिंहरथवाहनेन मेरुं प्रदक्षिणी-कुर्वन्नागच्छ, सर्पकालाभ्यां सह पद्मनैर्ऋतदल-मध्ये सीसकप्रतिमां दक्षिणामुखीं शूर्पाकारपीठे-ऽधितिष्ठ, पूजार्थं त्वामावाहयामि। भगवन् केतो कामरूप जैमिनिगोत्र मध्यदेशेश्वर धूम्रवर्ण-ध्वजाकृते द्विभुज गदावरदानाङ्कित चित्राम्बर-माल्यानुलेपन वैदूर्यमयाभरणभूषितसर्वाङ्ग चित्र-शक्ते नमस्ते, संनद्धचित्रध्वजपताकोपशोभितेन चित्रकपोतरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्ना-गच्छ, ब्रह्मचित्रगुप्ताभ्यां सह पद्मवायव्यदल-मध्ये कांस्यप्रतिमां दक्षिणामुखीं ध्वजाकारपीठे-ऽधितिष्ठ, पूजार्थं त्वामावाहयामि ॥

अधिदेवताप्रत्यधिदेवतावाहनमन्त्राः

[1]अथ ग्रहाणामधिदेवताप्रत्यधिदेवतावाहनम्। पिङ्गभ्रूश्मश्रुकेशं पिङ्गाक्षं त्रिनयनमरुणवर्णाङ्गं

---

(१) आगृप. २।६ पिङ्गभ्रू (पिङ्गभ्रु) पिङ्गाक्षं (पिङ्गाक्ष) शक्तिधर (शक्तिधरं) भरणभूषितः (भरणा-भूषिताः) दिङ्नागपृष्ठ (दिङ्नागभूषितां पृष्ठ) रक्ताम्बरधरं मयूर (रक्ताम्बरमयूर) कौमोदकीपद्मशङ्खचक्रोपेतं चतुर्भुजं सौम्यप्रत्यधिदेवतां पुरुषमावाहयामि। (सौम्यप्रत्यधिदेवतां विष्णुवत् पुरुषमावाहयामि।) रक्तदृशं (रक्तसदृशं) देवतां यम (दैवतं यम) युक्तान् त्रिभो (युक्तानेकभोगान् स्त्रीभो) राह्वधिदेवताः (राह्वधिदेवतान्); प्रपा. ८४-८७ (अथ ......देवतावाहनम्०) पिङ्गभ्रूश्मश्रु (पिङ्गाश्मश्रु) पिङ्गाक्षं त्रिनयनमरुणवर्णाङ्गं (पिङ्गाक्षित्रितयमरुणवर्णं) देवमग्निं (देवतामग्निं) (अथ प्रत्यधिदेवता०) खड्गखट्वाङ्ग (खट्वाङ्ग) देवं रुद्र (देवतां रुद्र) (षण्मुखं०) शक्त्युपेतं चतु (शक्त्युपेतचतु) देवतां विष्णु (देवं विष्णु) शचीपतिं (प्राचीपतिं) देवं ब्रह्माणं (देवतां ब्रह्माणं) धरद्विभुजां (धरां द्विभुजां) शचीपतिं नाना (प्राचीपतिं नाना) देवतां शक्र (देवतामिन्द्र) मेकवक्त्रमक्षमालास्रुव (मेकवक्त्रमक्षमाला-स्रुक्स्रुव) देवं प्रजा (देवतां प्रजा) पीनं दण्ड (पीनदण्ड) कुण्डलाकार (कुण्डिकाकार) भीषणाकारान् (भीषणान्) देवताः सर्पा (देवान् सर्पा) देवं काल (देवतां काल)

छागस्थं साक्षसूत्रं सप्तार्चिषं शक्तिधरवरदहस्तद्वयमादित्याधिदेवमग्निमावाहयामि । अथ प्रत्यधिदेवता । त्रिलोचनोपेतं पञ्चवक्त्रं वृषारूढं कपालशूलखड्गखट्वाङ्गधारिणं चन्द्रमौलिं सदाशिवमादित्यप्रत्यधिदेवं रुद्रमावाहयामि । स्त्रीरूपधारिणीः श्वेतवर्णा मकरवाहनाः पाशकलशधारिणीर्मुक्ताभरणभूषिताः सोमाधिदेवता अप आवाहयामि । अक्षसूत्रकमलदर्पणकमण्डलुधारिणीं त्रिदशपूजितां सोमप्रत्यधिदेवतामुमामावाहयामि । शुक्लवर्णां दिव्याभरणभूषितां चतुर्भुजां सौम्यवपुषं चण्डांशुसदृशाम्बरां रत्नपात्रसस्यपात्रौषधिपात्रपद्मोपेतकरां चतुर्दिङ्नागपृष्ठगतामङ्गारकाधिदेवतां भूमिमावाहयामि । षण्मुखं शिखण्डकविभूषणं रक्ताम्बरधरं मयूरवाहनं कुक्कुटघण्टापताकाशक्त्युपेतं चतुर्भुजमङ्गारकप्रत्यधिदेवतां स्कन्दमावाहयामि । कौमोदकीपद्मशङ्खचक्रोपेतं चतुर्भुजं सौम्याधिदेवतां विष्णुमावाहयामि । कौमोदकीपद्मशङ्खचक्रोपेतं चतुर्भुजं सौम्यप्रत्यधिदेवतां पुरुषमावाहयामि । चतुर्दन्तगजारूढं वज्राङ्कुशधरं शचीपतिं नानाभरणभूषितं बृहस्पत्यधिदेवतामिन्द्रमावाहयामि । पद्मासनस्थं जटिलं चतुर्मुखमक्षमालास्रुवपुस्तककमण्डलुधारिणं कृष्णाजिनवाससं पार्श्वस्थितहंसं बृहस्पतिप्रत्यधिदेवं ब्रह्माणमावाहयामि । संतानमञ्जरीवरदानधरद्विभुजां शुक्राधिदेवतामिन्द्राणीमावाहयामि । चतुर्दन्तगजारूढं वज्राङ्कुशधरं शचीपतिं नानाभरणभूषितं भार्गवप्रत्यधिदेवतां शक्रमावाहयामि । यज्ञोपवीतिनं हंसस्थमेकवक्त्रमक्षमालास्रुवपुस्तककमण्डलुसहितं चतुर्भुजं शनैश्चराधिदेवं प्रजापतिमावाहयामि । ईषत्पीनं दण्डहस्तं रक्तदृशं पाशधरं कृष्णवर्णं महिषारूढं सर्वाभरणभूषितं शनैश्चरप्रत्यधिदेवतां यममावाहयामि । अक्षसूत्रधरान्कुण्डलाकारपुच्छयुक्तान् त्रिभोगान् भीषणाकारान् राह्वधिदेवताः सर्पानावाहयामि । करालवदनं नित्यभीषणं पाशदण्डधरं सर्पवृश्चिकरोमाणं राहुप्रत्यधिदेवं कालमावाहयामि । पद्मासनस्थं जटिलं चतुर्मुखमक्षमालास्रुवपुस्तककमण्डलुधरं कृष्णाजिनवाससं पार्श्वस्थितहंसं केत्वधिदेवं ब्रह्माणमावाहयामि । उदीच्यवेषधरं

---

देवं ब्रह्माण ( देवतां ब्रह्माण ) पेतं द्विभुजं ( पेतद्विभुजं ) देवं चित्र ( देवतां चित्र ) ; प्रर २४–२७ मरुणवर्णाङ्गं ( मरुणवर्णं ) शक्तिधर ( शक्तिधरं ) देवमग्नि ( देवतामग्नि ) ( अथ प्रत्यधिदेवता० ) त्रिलोचनोपेतं ( त्रिलोचनं ) खड्गखट्वाङ्ग ( खट्वाङ्ग ) चन्द्रमौलिं ( चन्द्रमौलिनं ) देवं रुद्र ( देवतां रुद्र ) चण्डांशु ( चन्द्रांशु ) शिखण्डकविभूषणं ( शिखण्डकविभूषितं ) चक्रोपेतं ...... विष्णु ( चक्रोपेतां चतुर्भुजां सौम्याधिदेवतां विष्णु ) कौमोदकीपद्मशङ्खचक्रोपेतं चतुर्भुजं सौम्यप्रत्यधिदेवतां पुरुषमावाहयामि ( प्रत्यधिदेबतां पुरुषमावाहयामि ) शचीपतिं ( प्राचीपतिं ) बृहस्पत्यधिदेवतामिन्द्र ( बृहस्पत्यधिदैवतमिन्द्र ) मञ्जरीवरदानधर ( मञ्जरीवरदान ) शचीपतिं ( प्राचीपतिं ) देवतां शक्र ( देवतामिन्द्र ) देवं प्रजा ( देवतां प्रजा ) देवतां यम ( दैवतं यम ) कुण्डलाकार ( कुण्डिकाकार) युक्तान् ...... कारान् (युक्तानेकभोगान् त्रिभोगभूषणान् भीषणान् ) देवं काल ( देवतां काल ) केत्वधिदेवं ( केत्वधिदेवतां ) वेषधरं ( वेषं ) पेतं द्विभुजं ( पेतद्विभुजं ) देवं चित्र ( देवतां चित्र ) ; संकौ. १३३–१३७ पिङ्गभ्रूश्म (पिङ्गलश्म ) पिङ्गाक्षं त्रिनयनमरुणवर्णाङ्गं ( पिङ्गाक्षित्रितयमरुणवर्णं ) ( अथ प्रत्यधिदेवता० ) खड्गखट्वाङ्ग ( खट्वाङ्ग ) मयूरवाहनं ( मयूरयानं ) शक्त्युपेतं ( शक्त्युपेत ) देवतां स्कन्द ( देवं स्कन्द ) देवतां विष्णु ( देवं विष्णु ) देवतां पुरुष ( देवं पुरुष ) देवतामिन्द्र ( देवमिन्द्र ) देवतां शक्र ( देवमिन्द्र ) सहितं चतु ( सहितचतु ) रक्तदृशं ( रक्तसदृशं ) वर्ण महिषा ( वर्णमहिषा ) देवतां यम ( देवं यम ) कुण्डलाकार ( कुण्डिकाकार ) युक्तान् ........ कारान् ( युक्तानेकभोगान् ) देवताः सर्पा ( देवान् सर्पा ) नित्यभीषणं ( नित्यगं भीषणं ) पेतं द्विभुज ( पेतद्विभुजं ).

सौम्यदर्शनं लेखनीपत्रोपेतं द्विभुजं केतुप्रत्यधिदेवं चित्रगुप्तमावाहयामि ॥

साद्गुण्यदेवतावाहनमन्त्राः

[1]अथ साद्गुण्यदेवतावाहनम् । शनेर्वायुप्रदेशे सर्वत्र सप्रणवव्याहृतिपूर्वकम् । त्रिनेत्रं गजाननं नागयज्ञोपवीतिनं चन्द्रधरं दन्ताक्षमालापरशुमोदकोपेतं चतुर्भुजं विनायकमावाहयामि । तत उत्तरतः शक्तिबाणशूलखड्गचक्रचन्द्रबिम्बखेटकपालपरशुटङ्कोपेतदशभुजां सिंहारूढां दुर्गाख्यदैत्यासुहारिणीं दुर्गामावाहयामि । श्यामवर्णं त्रिलोचनमूर्ध्वकेशं सुदंष्ट्रं भ्रुकुटीकुटिलाननं नूपुरालंकृताङ्घ्रिं सर्पमेखलया युतं सर्पाङ्गदमतिक्रुद्धं क्षुद्रघण्टाबद्धं गुल्फावलम्बिकरोटिकामालाधारिणमुरगकौपीनं चन्द्रमौलिं दक्षिणहस्तैः शूलवेतालखड्गदुन्दुभीन् दधानं वामहस्तैः कपालघण्टाचर्मचापान् दधानं भीमं दिग्वाससममितद्युतिं क्षेत्रपालमावाहयामि । धावद्धरिणपृष्ठगतं ध्वजवरदानधारिणं धूमवर्णं वायुमावाहयामि । नीलोत्पलाभं नीलाम्बरधारिणं चन्द्रार्कोपेतद्विभुजं षण्ढमाकाशमावाहयामि । प्रत्येकमौषधपुस्तकोपेतदक्षिणवामहस्तावन्योन्यसंयुक्तदेहावेकस्य दक्षिणपार्श्वेऽपरस्य वामपार्श्वे रत्नभाण्डकरशुक्लाम्बरधारिनारीयुग्मोपेतौ देवभिषजावश्विनावावाहयामि ॥

लोकपालावाहनमन्त्राः

अथ क्रतुसंरक्षकेन्द्रादिलोकपालावाहनम् । स्वर्णवर्णं सहस्राक्षमैरावतवाहनं वज्रपाणिं शचीप्रियमिन्द्रमावाहयामि । रक्तवर्णं सप्तार्चिषं सप्तहस्तं शक्त्यन्नस्रुक्स्रुवतोमरव्यजनघृतपात्राणि दधानं स्वाहाप्रियं मेषवाहनमग्निमावाहयामि । रक्तवर्णं दण्डधरं पाशहस्तं महिषवाहनमिलाप्रियं यममावाहयामि । नीलवर्णं खड्गचर्मधरमूर्ध्वकेशं नरवाहनं कालिकाप्रियं निर्ऋतिमावाहयामि । रक्तभूषणं नागपाशधरं मकरवाहनं पद्मिनीप्रियं सुवर्णवर्णं वरुणमावाहयामि । श्यामवर्णं हेमदण्डधरं कृष्णमृगवाहनं जगत्प्राणरूपं मोहिनीप्रियं वायुमावाहयामि । स्वर्णवर्णं निधीश्वरं कुन्तपाणिमश्ववाहनं चित्रिणीप्रियं कुबेरमावाहयामि । शुद्धस्फटिकवर्णं वरदाभयशूलाक्षसूत्रधरं वृषवाहनं गौरीप्रियमीशानमावाहयामीति । पूर्ववत्पूजयेत् ॥

---

(१) आगृप. २१७ शनेर्वायुप्रदेशे (वायुप्रदेशे) टङ्को (कण्टको) दैत्यासु (दैत्यासुर) सर्पाङ्गद (सर्पाङ्ग) बद्धगुल्फा (बद्धगुल्फा) दुन्दुभीन् दधानं (दुन्दुभिदधानं) चापान् (चापं) चन्द्रार्कोपेत (चन्द्राङ्कोपेत) षण्ढ (खेट) मौषध (मौषधि) पार्श्वेऽपरस्य (पार्श्वे परस्य) भाण्डकर (भाण्डवर) धारिनारी (धारीनारी) देवभिष (देवौ भिष) रक्तवर्णं ...... मेषवाहन (अरुणवर्णं त्रिनेत्रं साक्षसूत्रं सप्तार्चिषं शक्तिधरं वरदहस्तद्वययुग्म) वाहनमिला (वाहनं स्वाहा) (श्यामवर्णं ...... वायुमावाहयामि०) ; प्रपा. ८७–८८ मोदकोपेतं चतु (मोदकोपेतचतु) तत उत्तरतः (तद्दक्षिणतः) परशुटङ्को (शुकटङ्को) दुर्गाख्य (दुर्दान्त) सुदंष्ट्रं (सुदंष्ट्र) करोटिका (नृकरोटी) (भीमं०) धूमवर्णं (धूम्रवर्णं) धारिणं चन्द्रा (धारि चन्द्रा) (पाशहस्तं०) (सुवर्णवर्णं०) ; प्रर. २७–२९ त्रिनेत्रं (चतुर्भुजं त्रिनेत्रं) पेतं चतुर्भुजं (पेतं) तत उत्तरतः (तद्दक्षिणतः) मेखलया युतं सर्पाङ्गदम (मेखलायुतसर्वाङ्गम) घण्टाबद्धं (घण्टावबद्धं) मौलिं (मौलिनं) वेताल (व्याल) ममितद्युतिं (मसितद्युतिं) धूमवर्णं (धूम्रवर्णं) पेतद्विभुजं (पेतं द्विभुजं) मौषध (मोषधी) (ऐरावतवाहनं०) रक्तवर्णं सप्ता (स्वर्णवर्णं सप्ता) (पाशहस्तं०) (सुवर्णवर्णं०) वृष (वृषभ) ; संकौ. १३७–१३८ शनेर्वायुप्र (शनेर्वामप्र) त्रिनेत्रं (चतुर्भुजं त्रिनेत्रं) मोदकोपेतं (मोदकोपेत) तत उत्तरतः (तद्दक्षिणतः) युतं सर्पाङ्गदमतिक्रुद्धं (युतसर्वाङ्गमतिवृद्धं) घण्टाबद्धं (घण्टावबद्धं) करोटिका (नृकरोटि) धूमवर्णं (धूम्रवर्णं) मौषध (मोषधि) देवभिष (देवौ भिष) (ऐरावतवाहनं०) (पाशहस्तं०).

होमः, आहुतिसंख्या, होममन्त्राः, उपहाराद्युपचाराः

[1]अथाग्निमुपसमाधायान्वाधानाद्याज्यभागान्तं कृत्वा सहर्त्विग्भिः समिच्चर्वाज्यानि प्रत्येकं शतैकावराभिः सहस्रपराभिराहुतिभिर्निमित्तशक्त्यपेक्षया जुहुयात्। प्रधानदशांशेन पार्श्वदेवतयोः। तदर्धेनेतरेषाम्। स्वाहान्तैर्नामभिर्होमः। तत्तल्लिङ्गमन्त्रैर्वा। सकृदवदानेन चरुहोमः। पाणिनाऽन्ते प्रसृतिमितान् व्रीहीन् तिलांश्च व्याहृतिभिर्हुत्वा प्राक्स्विष्टकृतो ग्रहाणां घण्टादिशब्दैरुपहारानुपहृत्य सपुष्पाणि रत्नानि निवेदयेत्। अभावे सुवर्णपुष्पाणि वा। तान्नमस्कृत्य 'प्रसीदन्तु भवन्तः' इति प्रसाद्य होमं समापयेत्। स यदि मन्त्रैरिष्टस्तदैते मन्त्रा भवन्ति— 'आ कृष्णेन रजसा वर्तमानः, आ प्यायस्व समेतु ते, अग्निर्मूर्धा दिवः ककुत्, उद्बुध्यध्वं समनसः सखायः, बृहस्पते अति यदर्यो अर्हात्, शुक्रं ते अन्यद्यजत ते अन्यत्, शमग्निरग्निभिः करत्, कया नश्चित्र आ भुवत्, केतुं कृण्वन्नकेतवे' इति ग्रहाणाम्। 'अग्निं दूतं वृणीमहे, अप्सु मे सोमो अब्रवीत्, स्योना पृथिवि भव, इदं विष्णुर्विचक्रमे, इन्द्र श्रेष्ठानि द्रविणानि धेहि, इन्द्राणीमासु नारिषु, प्रजापते न त्वदेतानि, आयं गौः पृश्निरक्रमीत्, ब्रह्म जज्ञानं प्रथमं पुरस्तात्' इत्यधिदेवतानाम्। 'त्र्यम्बकं यजामहे, गौरीर्मिमाय सलिलानि तक्षती, कुमारश्चित्पितरं वन्दमानम्, सहस्रशीर्षा पुरुषः, ब्रह्मणा ते ब्रह्मयुजा युनज्मि, इन्द्रमिद्देवतातये, यमाय सोमं सुनुत, परं मृत्यो अनु परेहि पन्थाम्, स चित्र चित्रं चितयन्तमस्मे' इति प्रत्यधिदेवतानाम्। 'आ तून इन्द्र क्षुमन्तम्, जातवेदसे सुनवाम सोमम्, क्षेत्रस्य पतिना वयम्, क्राणा शिशुर्महीनाम्, आदित्प्रत्नस्य रेतसः, अश्विना वर्तिरस्मदा' इति साद्गुण्यदेवतानाम्। 'इन्द्रं वो विश्वतस्परि, अग्निमीळे पुरोहितम्, यमाय सोमं सुनुत, मो षु णः परापरा, उदुत्तमं मुमुग्धि नः, तव वायवृतस्पते, त्वं नः सोम विश्वतः, कद्रुद्राय प्रचेतसे' इति लोकपालानाम्॥

यजमानाभिषेकः, दक्षिणादानम्, दक्षिणाप्रतिनिधिः, ब्राह्मणभोजनम्, शान्त्यादिवाचनम्, बान्धवतोषणम्, ग्रहयज्ञफलम्, यथाविभवमनुष्ठानम्

[1]अथ यजमानाभिषेकः। ग्रहवेदेः प्रागुदीच्यां शुचौ देशे संमृष्टालंकृते प्राक्प्रवणे चतुष्पादं

---

(१) आगृप. २१८ पाणिनाऽन्ते प्रसृतिमितान् व्रीहीन् (पाणिना प्रभूतान्) नुपहृत्य (नुपगृह्य) नारिषु (नारीषु) इति साद्गुण्य (इतीत्येतत्साद्गुण्य); प्रपा. ७७ (अन्वाधानाद्याज्यभागान्तं कृत्वा०) प्रत्येकं शतैकावराभिः सहस्रपराभि (प्रत्येकस्यैकावराभिः सहस्रवाराभि) तत्तल्लिङ्ग (तल्लिङ्ग) प्रसृतिमितान् व्रीहीन् (प्रभूतान्) घण्टादि (घण्टादिक) सपुष्पाणि (सुपुष्पाणि) आ भुवत् (आभुवदूती) (तक्षती०) कुमारश्चित्पितरं वन्दमानं (कुमारं माता युवतिः समुब्धं) इन्द्रमिद्देवतातये (इन्द्रं वो विश्वतस्परि) सोमम् (सोममराती) साद्गुण्य (कर्मसाद्गुण्य) सोम विश्वतः (सोम विश्वतो वयोधाः) शाम. १९ (प्रधानदशांशेन पार्श्वदेवतयोः) एतावदेव; संकौ. १३९ (अन्वाधानाद्याज्यभागान्तं कृत्वा०) तत्तल्लिङ्ग (तल्लिङ्ग) पाणिनाऽन्ते (पाणिना) शब्दैरुप (शब्दैर्धूपदीपैरुप) (सपुष्पाणि...... समापयेत्०) 'स यदि मन्त्रैरिष्टस्तदैते मन्त्रा भवन्ति— आ कृष्णेन' इत्यस्योत्तरं 'इत्यादि' पदप्रक्षेपं कृत्वा सर्वेषां मन्त्राणां विनियोगस्य संक्षेपः कृतः.

(१) आगृप. २१९ दीर्घचतुरस्रं (दीर्घं चतुरस्रं) भद्रपीठं (पीठं) सहिरण्यपवित्रया (हिरण्मय्या) दूर्वापल्लवया (दूर्वया) इति तृचेन (इत्यृचेन) एवमभिषिक्तः (अभिषिक्तः) ज्ञातिसंबन्धि (संबन्धिज्ञाति) यथोपपत्ति (यथोपपत्तिं); प्रपा. ७७ यजमाना (यजमानस्या) ग्रानमूलान् (ग्रान् समूलान्) कर्तारं सामात्यमु (सामात्यं कर्तारमु)

दीर्घचतुरस्रं सोत्तरच्छदं भद्रपीठं निधाय तत्रोदगग्रानमूलान्हरितदर्भानास्तीर्य प्राङ्मुखं कर्तारं सामात्यमुपवेश्याऽऽचार्यः सहर्त्विग्भिरभिषेककुम्भमादाय प्रत्यङ्मुखस्तिष्ठन्नौदुम्बर्याऽऽर्द्रया शाखया सपलाशया सहिरण्यपवित्रया सकुशदूर्वापल्लवयाऽन्तर्धाय कुम्भोदकपृषद्भिरभिषिञ्चेदब्लिङ्गाभिर्वारुणीभिः पावमानीभिरन्याभिश्च शान्तिपवित्रलिङ्गाभिर्ग्रहाभिषेकमन्त्रैः 'समुद्रज्येष्ठाः' इति सूक्तेन 'सुरास्त्वाम्' इति सूक्तेन च श्रीसूक्तेन 'इमा आपः शिवतमाः' इति तृचेन 'देवस्य त्वा' इति च यजुषा 'भूर्भुवः स्वः' इति च व्याहृतिभिः। एवमभिषिक्तस्तेभ्यो ग्रहोक्तां दक्षिणां दद्यात् । सा गौः शङ्खो रक्तोऽनड्वान् हिरण्यं पीतं वासः श्वेताश्वः कृष्णा गौः कार्ष्णायसं हस्ती छागो वेति। हीनां पुनर्हिरण्येन संमितां कुर्यात्। अभावे सर्वेषां हिरण्यमेव वा तुष्टिकरं दद्यात्। द्विगुणमाचार्याय । अत्र घृतान्नेन ब्राह्मणान्भोजयित्वा 'शान्तिः पुष्टिस्तुष्टिश्चास्तु' इति वाचयेत्। ज्ञातिसंबन्धिबान्धवांश्च तोषयेत् । एष ग्रहयज्ञः

समुद्र... सूक्तेन च श्री (सुरास्त्वामित्यादिभिः श्री) इति तृचेन (इत्येतेन तृचेन) सा गौः (गौः) पीतं वासः (पीतवासः) कार्ष्णायसं (कालायसं) हीनां (ह्रेनान्) संमितां (संमितान्) अत्र घृतान्नेन (त्रिवृताऽन्नेन) ज्ञातिसंबन्धि (संबन्धिज्ञाति) निष्टशमनः (रिष्टनाशनः) भीष्टकरः (भीष्टप्रदः) तस्मादेनं (तस्मादेवं); संकौ. १३९-१४० भद्रपीठं (पीठं) षिञ्चेत् (षेचयेत् (पावमानीभिः ०) अन्याभिश्च (अन्याभिः) समुद्र ...... सूक्तेन च श्री) (सुरास्त्वामित्यादिमन्त्रैः श्री) सा गौः (गौः) श्वेताश्वः (श्वेतोऽश्वः) कार्ष्णायसं (कालायसं) (हीनां०) अत्र घृतान्नेन (त्रिवृताऽन्नेन) अत्र 'त्रिवृताऽन्नेनेति स्थाने घृतान्नेनेति कश्चित्पाठः' इत्युक्तम्, सर्वानिष्ट (सर्वारिष्ट) भीष्टकरः (भीष्टप्रदः) (तस्मादेनं... ...... पत्ति कुर्यात्०),

सर्वानिष्टशमनः सर्वपुष्टिकरः सर्वाभीष्टकरः। तस्मादेनं विभववान्विशेषतः कुर्यात्। अविभवः शान्तिपुष्टिकामो यथोपपत्ति कुर्यात्॥

आवाहनमन्त्रविधिः

[1]व्याहृतिभिरावाहनमृग्भिश्चाऽऽनुपूर्व्येण ॥

व्याहृतिभिः विहृतिभिः समस्ताभिः 'आ कृष्णेन' इत्यनया ऋचा (च) आदित्यस्य आवाहनम् । एवं सोमादीनामपि । प्रपा. ७२

## आग्निवेश्यगृह्यसूत्रम्

ग्रहकोपनिमित्तानि, ग्रहयज्ञस्य शान्त्यर्थता

[2]अथातो ग्रहातिथ्यबलिकर्मोपहारान् व्याख्यास्यामः।

अश्रद्दधानमहुतमजपं त्यक्तमङ्गलम्।
ग्रहा नयन्ति सुव्यक्तं पुरुषं यमसादनम्॥
ग्रहाणामुग्रचेष्टानां नक्षत्रपथचारिणाम्।
उपहारान् प्रवक्ष्यामि शान्त्यर्थं तु यथाविधि॥

ग्रहयज्ञनिमित्तानि

मासि मास्यृतावृतावयने चन्द्रग्रहे सूर्यग्रहे जन्मनक्षत्रे विषुवे शुभाशुभे वा तद्ग्रहाणामातिथ्यं संवत्सरादपि प्रयुञ्जानः सर्वान् कामानवाप्नोतीति । उक्तमेकाग्निविधानं कृत्वा—

ग्रहवर्णाः, उपचाराणां ग्रहसमानवर्णत्वम्

भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ ।
सोमपुत्रगुरू चैव तावुभौ पीतकौ स्मृतौ ॥
कृष्णं शनैश्चरं विद्याद्राहुकेतू तथैव च ॥
ग्रहवर्णानि पुष्पाणि प्राज्ञस्तत्रोपकल्पयेत् ॥
बलिं चैवोपहारं च गन्धमाल्यं तथैव च ।
यथाक्रमेणोपहरेत्सर्वेषामनुपूर्वशः ॥ इति ॥

ग्रहाणां समिधः पीठानि च

अर्कसमिधमादित्याय, पालाशं सोमाय, खादिरमङ्गारकाय, अपामार्गं बुधाय, अश्वत्थं बृहस्पतये, औदुम्बरं शुक्राय, शमीं शनैश्चराय, राहोः दूर्वाम्, केतोः कुशमिति। मध्ये वृत्तमादित्याय,

(१) प्रपा. ७२. (२) आग्निगृ. २।५।१.

आग्नेय्यां चतुरश्रं सोमाय, दक्षिणे त्रिकोणमङ्गारकाय, ईशान्यां बाणाकारं बुधाय, उत्तरे दीर्घचतुरश्रं बृहस्पतये, प्राक् पञ्चकोणं शुक्राय, पश्चिमे धनुराकारं शनैश्चराय, निर्ऋत्यां (? नैर्ऋत्यां) शूर्पाकारं राहवे, वायव्यां ध्वजाकारं केतुभ्यः ॥

होमः, होममन्त्राः, हविर्द्रव्याणि, आहुतिसंख्या

परिधानप्रभृत्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति। 'आ सत्येन', 'अग्निं दूतं वृणीमहे', (इति ?) 'एषामीशे (? येषामीशे)' इत्यादित्याय 'आ प्यायस्व' (इति ?), 'अप्सु मे सोमो अब्रवीत्', 'गौरी मिमाय' इति सोमाय। 'अग्निर्मूर्धा', 'स्योना पृथिवि', 'क्षेत्रस्य पतिना' इत्यङ्गारकाय। 'उद्बुध्यस्व', इदं विष्णुः', 'विष्णोरराटमसि' इति बुधाय। 'बृहस्पते अति', 'इन्द्र मरुत्वः', 'ब्रह्म जज्ञानम्' इति बृहस्पतये। 'प्र वः शुक्राय', 'इन्द्राणीम्', 'इन्द्रं वो विश्वतस्परि' इति शुक्राय। 'शं नो देवीः', 'प्रजापते न त्वत्' (इति ?), 'इमं यम प्रस्तरमा हि सीद' इति शनैश्चराय। 'कया नश्चित्र आभुवत्', 'आ यं गौः', 'यत्ते देवी निर्ऋतिराबबन्ध' इति राहवे। 'केतुं कृण्वन्', 'ब्रह्मा देवानाम्', 'सचित्र चित्रं चितयन्तमस्मै (? मस्मे)' इति केतवे। घृतान्वक्तानां समिधामष्टसहस्रमष्टशतमष्टाविंशतिं वा। प्रत्यृचं हविषा जुहुयात्। प्रत्यृचमाज्येन जुहुयात् ॥

उपहाराः तत्प्रतिनिधिश्च, स्विष्टकृद्धोमः, जयाद्युत्तरतन्त्रम्

हविष्यान्नमादित्याय, घृतपायसं सोमाय, गुडौदनमङ्गारकाय, क्षीरौदनं बुधाय, दध्योदनं बृहस्पतये, घृतौदनं शुक्राय, तिलमिश्रपिष्टमाषौदनं शनैश्चराय, राहोर्मांसौदनम्, केतोश्चित्रौदनमित्युपहारः। सर्वेषामलाभे हविष्यम्। 'अर्यमणम्, सोमं राजानम्' इति स्विष्टकृतं जुहोति। जयाप्रभृति सिद्धमा धेनुवरप्रदानात् ॥

ग्रहार्चनम्, मार्जनम्, दक्षिणादानम्, दक्षिणाप्रतिनिधिः

अग्रेणाग्निं ग्रहानभ्यर्चयति। 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन मार्जयित्वा स्वेन स्वेन मन्त्रेण गन्धपुष्पधूपदीपैरभ्यर्च्य बलिमुपहृत्य नमस्कृत्य प्रवाह्य जघनेनाग्निं प्राङ्मुख उपविश्याद्भिर्मार्जयते 'आपो हि ष्ठा मयोभुवः' इत्यादिभिः। अथ दक्षिणां ददाति– कपिलां धेनुमादित्याय, शङ्खं सोमाय, रक्तमनड्वाहमङ्गारकाय० काञ्चनं बुधाय, वासो बृहस्पतये, रजतं शुक्राय, कृष्णां गां शनैश्चराय, राहोश्छागम्, केतोः कुञ्जरमिति। सर्वेषामलाभे हिरण्यं वा येन वा तुष्यत्याचार्यः ॥

ग्रहयज्ञप्रशंसा

यथा समुत्थितं यन्त्रं यन्त्रेण प्रतिहन्यते।
एवं समुत्थितं घोरं शीघ्रं शान्तिं नयेत्सदा ॥

यथा शस्त्रप्रहाराणां कवचं भवति वारणम्।
एवं दैवोपघातानां शान्तिर्भवति वारणम् ॥

अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च।
नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥

ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः।
पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः ॥

देवता ग्रहरूपेण दर्शयन्ति शुभाशुभम् ॥

## जैमिनिगृह्यसूत्रम्

ग्रहकोपनिमित्तानि, ग्रहयज्ञस्य शान्त्यर्थता, ग्रहवर्णाः, पुष्पाणां ग्रहसमानवर्णत्वम्

[1]अथ ग्रहाणामातिथ्यं बलिकर्मोपरुतं व्याख्यास्यामः ॥

(१) जैगृ. २।९.

अश्रद्दधानमशुचिकरण*मजाप्यं
त्यक्तमङ्गलम्।
सुव्यक्तं ग्रहा नयन्ति(? ग्रहा नयन्ति सुव्यक्तं)
पुरुषं यमसादनम् ॥

ग्रहाणां दीप्रचेष्टानां नक्षत्रपथचारिणाम्।
ग्रहातिथ्यं प्रवक्ष्यामि शान्तिकर्मणि कारयेत् ॥

भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ।
सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ॥

कृष्णं शनैश्चरं विद्याद्राहुं केतुं तथैव च।
ग्रहवर्णानि पुष्पाणि प्राज्ञस्तत्रोपकल्पयेत् ॥

पूर्वतन्त्रम्, ग्रहावाहनम्, ग्रहदिशः, ग्रहपीठानि

गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्याग्निमुपसमाधायाऽऽघारावाज्यभागौ हुत्वा ग्रहानावाहयन्ति। आदित्यं मध्ये, लोहितं (दक्षिणतः), पूर्वदक्षिणतः सोमम्, पूर्वोत्तरतो बुधम्, उत्तरेण गुरुम्, पूर्वेण भार्गवम्, पश्चिमे शनैश्चरं विद्यात्, राहुं दक्षिणपश्चिमे, पश्चिमोत्तरतः केतुम्। वृत्तमादित्याय, त्रिकोणमङ्गारकस्य, चतुरश्रं सोमाय, बाणं बुधाय, दीर्घचतुरश्रं बृहस्पतये, पञ्चकोणं शुक्राय, धनुः शनैश्चराय, राहोः शूर्पम्, केतोर्ध्वजमिति ॥

ग्रहाणां देवतारूपत्वम्

ईश्वरं भास्करं विद्यादुमां सोमं तथैव च।
स्कन्दमङ्गारकं चैव बुधो नारायणः स्थितः ॥

बृहस्पतिः स्वयं ब्रह्म शुक्रः शक्रस्तथैव च।
यमं शनैश्चरं विद्याद्राहोः कालदूतिनः (?)।
केतोश्चित्रगुप्तश्चेत्येते ग्रहदेवताः (?) ॥

प्रत्यधिदेवताः

अग्निरापो भूमिर्विष्णुरि(न्द्र इ)न्द्राणी प्रजापतिः सर्पो ब्रह्मेत्येते प्रत्यधिदेवताः ॥

ग्रहदेशाः

जातमर्क (?) कलिङ्गेषु यामुनेषु च चन्द्रमाः।
विन्ध्य अङ्गारकदेशो मध्यदेशो बुधः स्मृतः ॥
बृहस्पतिः सिन्धुदेशः शक्रदेशो घटेषु च (?)।
शनैश्चरस्तु सौराष्ट्रो राहुस्तु पूर्वदेशिकः।
केतुः पर्वत इत्येते देशानां ग्रहजात (?) ॥
इति ॥

ग्रहाणां समिधः, हवींषि, होममन्त्राः, दक्षिणाः, दक्षिणाप्रतिनिधिः, आहुतिसंख्या च

अर्कसमिधमादित्याय। प्रादेशमात्राभिघारितानाज्यादिभिर्जुहुयात् (?)। खादिरमङ्गारकाय, पालाशं सोमाय, अपामार्गं बुधाय, अश्वत्थं बृहस्पतये, औदुम्बरं शुक्राय, शमीं शनैश्चराय, राहोर्दूर्वाः, केतोः कुशाग्रमिति। अष्टाविंशतिमाज्याहुतीर्जुहोति। एताभिः पक्वान्नैर्जुहोति (?)। आदित्याय इलोदनम्(? गुडौदनम्), हविष्यमन्नमङ्गारकाय, सोमाय घृतपायसम्, पयोदनं(?) बृहस्पतये, क्षीरोदनं शुक्राय, दध्योदनं बुधाय, तिलपिष्टमाषोदनं शनैश्चराय, राहोर्मांसोदनम्, केतोश्चित्रोदनमिति। 'आ सत्येन' इत्यादित्याय, 'अग्निर्मूर्धा दिवः' इत्यङ्गारकाय, 'आ प्यायस्व समेतु' इति सोमाय, 'ब्रह्म जज्ञानम्' इति बुधाय, 'बृहस्पते अति यदर्यः' इति बृहस्पतये, 'अस्य प्रत्नामनु द्युतम्' इति शुक्राय, 'शं नो देवीरभिष्टये' इति शनैश्चराय, 'कया नश्चित्र आ भुवत्' इति राहोः, 'केतुं कृण्वन्नकेतवे' इति केतोः। रक्तां धेनुमादित्याय, रक्तमनड्वाहमङ्गारकाय, सोमाय शङ्खम्, बुधाय काञ्चनम्, बृहस्पतये वासः, शुक्राय हयम्, नीलां गां शनैश्चराय, राहोः कृष्णायसम्, केतोः कुञ्जरमिति। सर्वेषामपि हिरण्यं वा। येन वा तुष्यत्याचार्यस्तद्ददाति ॥

---

* अत्र 'करण' इति प्रमादतो निविष्टमिति भाति।

ग्रहयज्ञप्रशंसा

यथा समुत्थितं यन्त्रं यन्त्रेण प्रतिहन्यते ।
तथा ग्रहोपसृष्टानां शान्तिर्भवति दारुणम् (?)॥
नाऽऽदिशेत्तपसा युक्तं नाऽऽदिशेद्दिवमाश्रितम् ।
न च वेदान्तकं विप्रं वृत्तान्तां नारीं परिवृताम् (?) ॥
अहिंसकस्य दान्तस्य धर्मजित(? धर्मार्जित)-धनस्य च ।
नित्यं च नियमस्थस्य सदानुग्रहा (? सदा सानुग्रहा) ग्रहाः ॥
ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः ।
पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः ॥

## वैखानसगृह्यसूत्रम्

ग्रहयज्ञप्रशंसा ग्रहगणना च

'अथ ग्रहशान्तिं व्याख्यास्यामः । ग्रहायत्ता लोकयात्रा । तस्मादात्मविरुद्धे प्राप्ते ग्रहान्सम्यक्पूजयति । आदित्यश्चन्द्रोऽङ्गारको बुधो बृहस्पतिः शुक्रः शनैश्चरो राहुः केतुश्चेत्येते नव ग्रहाः ॥

ग्रहाणां वर्णाः अधिदेवताः दिशः पीठानि च , अग्निस्थापनम् , पुष्पाणि अर्चनम् उपहाराश्च

रक्तसितातिरक्तश्यामपीतसितासितकृष्णधूम्रवर्णाः । अनलाप्पतिगुहहरीन्द्रशचीप्रजापतिशेषयमाधिदैवत्याः । मध्याग्नेयदक्षिणैशान्योत्तरपूर्वपश्चिमनैर्ऋतवायव्याश्रिताः । तस्माच्छुद्धे देशे मनोरमे गोमयेनोपलिप्ते स्वे स्वे स्थाने शालिव्रीहिभिः सिकताभिर्वा चतुरश्रं वृत्तं तुल्याकारं (?) त्रिकोणमष्टाश्रमर्धचन्द्राकारं वज्राकारं दण्डाकृति ध्वजाकृतीति क्रमेण पीठान्युपकल्प्य तेषु कूर्चं निधाय तद्दक्षिणपार्श्वे तदधिदेवतामुद्दिश्य पीठान्युपकल्प्याऽऽहवनीयान्वाहार्यगार्हपत्यावसथ्यसभ्यान् क्रमेणोपकल्प्याग्नीन्साधयित्वाऽर्चयेत् । करवीरशङ्खपुष्पोत्पलनन्द्यावर्तचम्पकमल्लिकासितगिरिकर्णिकाकल्हारतापिच्छपुष्पैस्तद्वर्णवर्णैः पुष्पैर्गन्धैः पूर्ववदभ्यर्च्य शुद्धोदनपायसगुडोदनदध्योदनगौडिकचित्रोदनकृसरमाषोदनकणोदनानि क्रमेण निवेदयेत् ॥

होमः , ग्रहसमिधः , होममन्त्राः , आहुतिसंख्या, हविर्द्रव्याणि, अग्निनियमः , ब्राह्मणभोजनम् , दक्षिणाः , दक्षिणाप्रतिनिधिः , ग्रहयज्ञस्य निमित्तानि फलं कर्माङ्गत्वं च

तदधिपांस्तदर्हेणाभ्यर्च्याऽऽघारं हुत्वाऽर्कपलाशखदिरापामार्गाश्वत्थोदुम्बरशमीदूर्वाकुशान् यथाक्रमेण 'आ सत्येन, सोमो धेनुम्, अग्निर्मूर्धा, उद्बुध्यस्व, बृहस्पते अति यत्, शुक्रं ते अन्यत्, शं नो देवीः, कया नश्चित्रा (? त्र आ), केतुं कृण्वन्' इति क्रमेणाष्टशतं सप्तविंशतिकं वा त्रिमधुराक्ताभिः समिद्भिश्चरुणाऽऽज्येन च जुहुयादाहवनीये शशिशुक्रयोरन्वाहार्येऽङ्गारकराह्वोर्गार्हपत्येऽसितकेत्वोरावसथ्ये गुरुबुधयोः सभ्ये सवितुरिति । 'अग्निं दूतम्, ये ते शतम्, सुब्रह्मण्यः, इदं विष्णुः, इन्द्रं प्रणवन्तम्, गन्धद्वाराम्, ब्रह्म जज्ञानम्, शं नो निधत्ताम्, यमो दाधार' इत्यधिदेवेभ्य आज्येन तत्तत्स्थाने जुहुयात् । विष्णोर्नुकादीन् मिन्द्राहुत्याश्राविताद्रीन् हुत्वा पायसकृसरगौड्याद्यैः पूर्वोक्तचरुभिर्ब्राह्मणान् भोजयित्वा, रक्तधेनुमादित्याय, शङ्खं सोमाय, ताम्रमङ्गारकाय, हिरण्यं बुधाय, शुक्लं वासो बृहस्पतये, हयं शुक्राय, कृष्णां गां शनैश्चराय, राहोश्छागम्, केतोरायसदण्डमित्यात्मविरुद्धानां तदर्हं दद्यात् । सर्वेषामलाभे सुवर्णम् । जन्मकर्मसांघातिकसामुदायिकवैनाशिकर्क्षसंस्थेषु क्रियाकालविरुद्धेषु ग्रहेष्वेतच्छुभर्क्षेष्वारमेत । एतेन नवग्रहजा दुःखा व्याधयः

(१) वैगृ. ४।१३-१४.

शान्तिं यान्ति । अन्यथा महत्तरो दोषो भवति । 'ग्रहपूजां पुरस्कृत्य सर्वकर्म समारभेत्' इति विज्ञायते ॥

## वसिष्ठः

ग्रहयज्ञफलम्

[1]खचरेषु यदा विषमेष्वखिलनृणां व्याधिरर्थहानिः स्यात् ।
सम्यग्विचार्य मनसा ग्रहशान्तिं कारयेन्नृपतिः ॥
उच्छ्रयपतनानि नृणां खचराधीनानि विशेषतो यस्मात् ।
अखिलानामपि लोकानां वृद्धिस्तस्माद्ग्रहाश्च पूज्यतमाः ॥

ग्रहयज्ञनिमित्तानि

मासि मास्ययने चन्द्रसूर्ययोर्ग्रहणेऽपि वा ।
विषुवत्यर्कसंक्रान्तौ व्यतीपाते दिनक्षये ॥
पुण्येऽह्नि चन्द्रताराणां बलयुक्तो(? क्ते) च जन्मभे ॥

मण्डपस्य देशो लक्षणं च

गृहस्येशानभागे तु मण्डपं कारयेद्बुधः ॥
षड्द्वादशाष्टभिर्हस्तैः षोडशैर्वा समन्ततः ।
चतुर्द्वारसमायुक्तो(? युक्तं) तोरणाद्यैः समन्वितः (? न्वितम्) ॥

कुण्डस्य देशो लक्षणं यथालक्षणकर्तव्यता च

कुण्डं तन्मध्यभागे तु कारयेच्चतुरस्रकम् ।
वितस्तिद्वयखातं यत्कुण्डं सचतुरङ्गुलम् ॥
विप्राणां क्षत्रियाणां तदङ्गुलत्रयसंयुतम् ।
वैश्यानां द्व्यङ्गुलाधिक्यं शूद्राणां हस्तमात्रकम् ॥
प्रथमा मेखला तत्र द्वादशाङ्गुलविस्तृता ।
चतुर्भिरङ्गुलैस्तस्याश्चोन्नतं च(? तिश्च) समन्ततः ॥
तस्याश्चोपरि वप्रः स्याच्चतुरङ्गुलमुन्नतः ।
अष्टाभिरङ्गुलैः सम्यग्विस्तीर्णश्च समन्ततः ॥
तस्योपरि पुनः कार्यो वप्रः सोऽपि तृतीयकः ।
चतुरङ्गुलविस्तीर्णं चोन्नतं च यथाविधि ॥
(? चतुरङ्गुलविस्तीर्णश्चोन्नतश्च तथाविधः ॥)
योनिश्च पश्चिमे भागे प्राङ्मुखी मध्यसंस्थिता ।
षडङ्गुलैश्च विस्तीर्णा चाऽऽयता द्वादशाङ्गुलैः ॥
पृष्ठोन्नता गजस्यैव (?) सच्छिद्रा मध्यमोन्नता ।
एवं लक्षणसंयुक्तं कुण्डमिष्टार्थसिद्धये ॥
अनेकदोषदं कुण्डं यत्र(? यतो) न्यूनाधिकं यदि ।
तस्मात्सम्यक्परीक्ष्यैव कर्तव्यं शुभमिच्छता ॥

ग्रहवेद्या देशो लक्षणं च

कुण्डस्येशानभागे तु पूजावेदीं प्रकल्पयेत् ।
हस्तोन्नतां च विस्तीर्णां चतुरस्रां समन्ततः ॥

द्विजानुज्ञाग्रहणम्, आशीर्वाचनम्,
मधुपर्कः, ऋत्विगाचार्यवरणम्

स्नात्वाऽऽदौ कायशुद्ध्यर्थं द्विजानुज्ञां लभेत्ततः ।
आशिषो वाचनं कार्यं मधुपर्कपुरःसरम् ॥
[1]ऋत्विजो वरयेत्पश्चात्कृतविद्याविशारदान् ।
षोडश ब्राह्मणाञ्छुद्धानदम्भानृतवर्जितान् ॥
[2]तेषां मध्ये श्रेष्ठतममाचार्यं तं प्रकल्पयेत् ॥

अत्र पारिजाते– "नवाऽऽचार्याः, एको ब्रह्मा, षडृत्विजः, 'आचार्येभ्यो नवभ्यश्च ग्रहार्चनफलं ततः ।' इत्युक्तेः आचार्यः कर्म एव(? एव कर्म) कुर्यात्, परे त्वा(? ऽन्वा)रम्भमात्रम् । धेन्वाद्या ग्रहदक्षिणा अपि तेभ्य एव देयाः" इत्याद्युक्तम् । तदयुक्तम्, उपक्रमे

---

(१) वसं. १८।१९-३३.

(१) वसं. १८।३४; शाम. १२ नदम्भानृत (न् दम्भानृतवि) उत्त.

(२) वसं. १८।३५; शाम. १२.

एकाचार्यश्रुतेः, आचार्यानाचार्यसमुदाये 'प्राणभृत उपदधाति' इतिवल्लिङ्गसमवायमात्रेण नवम्य इत्युपसंहारस्थपदोपपत्तेः। उपक्रमेऽपि यद्यप्याचार्यस्य संस्कार्यत्वेनैकत्वमविवक्षितम्, तथाऽप्याचार्यस्य भूतभाव्युपयोगाभावात्संस्कार्यत्वानुपपत्तेः 'वृत आचार्यः स्वकर्म कुर्यात्' इति कल्पिते वाक्ये उपादेयत्वादाचार्यस्य भवत्येकत्वं विवक्षितम्। उपपादितं चेदम् 'अध्वर्युं वृणीते, होतारं वृणीते, पुरोहितं वृणीते' इत्यत्र मिश्रैः। शाम. १२-१३

पद्मलेखनम्, प्रतिमानां प्रकृतयो मानं च

लिखेदष्टदलं पद्मं वेदिकोपरि तण्डुलैः ॥

[1]आदित्याद्यग्रहाणां च प्रतिमां कल्पयेत्ततः।
ताम्रेण कारयेत्सूर्यं स्फटिकेन निशाकरम् ॥
कुजं तु चन्दनेन ज्ञं सुवर्णेन गुरुं तथा।
रजतेन सितं सौरिं लोहेन तु विधुंतुदम् ॥

[2]सीसेन शुद्धकांस्येन केतुं कुर्यात्प्रयत्नतः।
यथारुचिप्रमाणेन प्रतिमां कल्पयेत्सुधीः ॥

ग्रहाणां ध्येयगुणा अधिदेवताप्रत्यधिदेवताश्च, क्रतुसाद्गुण्यदेवता लोकपालाश्च, ग्रह-देवतानां स्थापनदिशो मन्त्राश्च

[3]वेदीमध्ये ललितकमले कर्णिकायामधःस्थः
सप्ताश्वोऽर्कोऽरुणरुचिवपुः सप्तरज्जुर्द्विबाहुः।
गोत्रे रम्ये बहुविधगुणे काश्यपाख्ये प्रसूतः
कालिङ्गाख्ये विषयजनितः प्राङ्मुखः पद्महस्तः ॥

आ कृष्णेनेतिमन्त्रेण रविं ध्यात्वा समर्चयेत्।
अस्य मन्त्रस्य च ऋषिर्हिरण्यस्तूपसंज्ञितः ॥

त्रिष्टुप्छन्दो देवताऽर्को मन्त्रोऽसौ सर्वकामदः।
अस्याधिदेवतां रुद्रं स्थापयेद्दक्षिणे ततः ॥

मन्त्रं(? मन्त्रः) तु त्र्यम्बकं चास्य छन्दोऽनुष्टुप्ततो ऋषी।
वामदेववसिष्ठाख्यौ देवता परमेश्वरः ॥
सूर्यस्य स्थापयेद्वह्निं वामे प्रत्यधिदेवताम्।
ग्रहाधिदेवतास्त्वेवं स्थापनीयाः प्रयत्नतः ॥
मन्त्रोऽग्निं दूतमित्यस्य ऋषिर्मेधातिथिस्तथा।
अग्निस्तु देवता छन्दो गायत्री पापमोचनी ॥

आग्नेयभागे सरथो दशाश्वश्चाऽऽत्रेयजो पावन(? यामुन)देशजश्च।
प्रत्यङ्मुखस्थश्चतुरस्रपीठे गदावराङ्को हिमगुः सिताभः ॥

आ प्यायस्वेतिमन्त्रेण यजेच्चन्द्रमसं सदा।
अस्य ऋषिर्गौतमाख्यो गायत्री देवता शशी ॥
गौरीर्मिमायमन्त्रेण गौरीं प्रत्यधिदेवताम्।
ऋषिर्दीर्घतमाश्चास्य जगती देवता उमा ॥
अस्याधिदेवतास्त्वापस्त्वापो हि ष्ठा मयो ऋचः (? ऋचा)।
सिन्धुद्वीपोऽस्य मन्त्रस्य गायत्री देवता ऋषिः (?) ॥

याम्ये गतः शक्तिगदात्रिशूलो वरप्रदो याम्यमुखोऽतिरक्तः।
कुजस्त्ववन्तीविषयस्त्रिकोणस्तस्मिन्भरद्वाजकुले प्रसूतः ॥

अग्निर्मूर्धेतिमन्त्रेण सम्यग्ध्यात्वा कुजं यजेत्।
ऋषिर्विरूपो गायत्री देवताऽङ्गारकोऽस्य च ॥
स्कन्दोऽधिदेवता त्वस्य सावित्री देवता गुहः।
मन्त्रस्य (? मन्त्रोऽस्य) स्कन्दगायत्री स्कन्दस्य प्रीतिदायिका ॥
स्योना पृथिव्यसौ मन्त्रस्त्वितरा देवता मही।
गायत्री देवता भूमिस्तस्य मेधातिथिर्ऋषिः ॥

उदङ्मुखो मागधजो हरिस्थस्त्वात्रेयगोत्रः शरमण्डलस्थः।
सखड्गचर्मोरुगदाधरो ज्ञस्त्वीशानभागे वरदः स पीतः ॥

---

(१) वसं. १८।३६-३७.

(२) वसं. १८।३८; शाम. १३ प्रतिमां (प्रतिमाः) उत्त.

(३) वसं. १८।३९-११९.

अग्ने विवस्वदुषसस्त्विवतिमन्त्रेण चन्द्रजम् ।
प्रस्कण्वो बृहती छन्दस्त्वस्यास्ति देवता बुधः ॥

मन्त्रेणेदं विष्णुरिति विष्णुः पूज्योऽधिदेवता ।
ऋषिर्मेधातिथिश्छन्दो गायत्री देवता हरिः ॥

विष्णुं च देवतामन्यत्(? मन्यां) पुरुषसूक्तेन चार्चयेत् ।
ऋषिर्नारायणोऽनुष्टुबन्यस्मिन्देवता ऋषिः ॥

सौम्ये सुदीर्घे चतुरस्रपीठे
रथोऽङ्गिराः(?) सौम्यमुखः सुपीतः ।
द्वन्द्वाक्षमालाजलपात्रधारी
सिन्ध्वाख्यदेशो वरदश्च जीवः ॥

बृहस्पते अति यदर्यो अनेन गुरुमर्चयेत् ।
ऋषिरस्य प्रतिरथस्त्रिष्टुब्जीवोऽत्र देवता ॥

अस्याधिदेवता ब्रह्मा ब्रह्म जज्ञानमित्यृचः (? चा) ।
तमर्चयेदृषिर्भर्गस्त्रिष्टुब्ब्रह्मैव देवता ॥

*इन्द्रायेन्द्रो मरुत्वष्टूस्त्वनेनेतरदैवतम् ।
छन्दो(? न्द) ऋषिः कश्यपोऽस्य गायत्री देवता हरिः ॥

प्राच्यां भृगुर्भोजकटे प्रजातः
स भार्गवः पूर्वमुखः सिताभः ।
सपञ्चकोणे सरथाधिरूढो(?)
दण्डाक्षमालावरदाम्बुपात्रः ॥

ध्यात्वा समर्चयेच्छुक्रं तत्रान्नादिति (? ते अन्यदिति) तदृचा ।
त्रिष्टुबृषिर्भरद्वाजो देवता दनुर(? जा)र्चितः ॥

अस्याधिदेवता शक्रस्त्वनेनैवार्चयेत्तु ताम् ।
इन्द्राणी देवता चास्य धृतिर्मेधातिथिर्ऋषिः ॥

मन्त्रेणोत्तानपर्येण(?) चास्य मेधातिथिर्ऋषिः ।
इन्द्राणी देवता तत्र त्वनुष्टुप्छन्दसंज्ञितम् ॥

चापासने गृध्ररथः सुनीलः
प्रत्यङ्मुखः काश्यपजः प्रतीच्याम् ।
सशूलचापेषुवरप्रदश्च
सौराष्ट्रदेशे प्रसवश्च सौरिः ॥

शं नो देवीत्यनेनैव मन्त्रेण शनिमर्चयेत् ।
अस्य सिन्धुद्वीप ऋषिर्गायत्री देवता शनिः ॥

यमोऽधिदेवता पूज्या त्वायं गौरित्यनेन च ।
सार्पराज्ञी ऋषिश्चास्य गायत्री देवता यमः ॥

प्रजापतिस्त्वस्य शनेः प्रतिपूर्वाधिदेवता ।
प्रजापते न त्वदेतेत्यनेनैव यजेत्तु ताम् ॥

त्रिष्टुप्छन्दोऽस्य मन्त्रस्य स्वर्णगर्भ ऋषिस्ततः ।
प्रजापतिर्दैवतायां(? ताऽस्य) मन्त्रः स पापमोचकः ॥

पैठीनसो बर्बरदेशजातः
शूर्पासनः सिंहगमः सधूम्रः ।
याम्यायने(? याम्याननो) नैर्ऋतगः करालो
वरप्रदः शूलसचर्मखड्गः ॥

कया नश्चित्र आ भुव इति(? भूवदिति) मन्त्रेण चार्चयेत् ।
गायत्री वामदेवोऽस्य ऋषी राहुश्च देवता ॥

कालोऽधिदेवता ब्रह्म जज्ञानमिति चार्चयेत् ।
त्रिष्टुप्छन्दो वामदेव ऋषिः कालोऽधिदेवता ॥

अपरा देवता सर्पा नमोऽस्त्विवति समर्चयेत् ।
अग्निर्ऋषिर्विराट्छन्दः सर्पाश्चास्याधिदेवताः ॥

वृकासनो जैमिनिगोत्रजोऽन्त-
र्वेदीसुदेशः सुविचित्रवर्णः ।
याम्यायनो(? याम्याननो) वायुदिशि प्रखड्ग-
चर्मा शिखी चाष्टशतोऽथ चैकः ॥

केतुं कृण्वन्ननेनैव चार्चयेत्तं प्रयत्नतः ।
मधुच्छन्दो ऋषिरस्य गायत्री देवता शिखी ॥

---

* 'इन्द्रायेन्द्रो मरुत्वष्टूः' इत्यस्य स्थाने 'इन्द्रायेन्दो मरुत्वते' इति युक्तम् ।

अस्याधिदेवता चित्रगुप्तो ज्ञात्वा तमर्चयेत् ।
छन्दोऽनुष्टुप्सोम ऋषिश्चित्रगुप्तोऽस्य देवता ॥
अस्याधिदेवता ब्रह्मा त्वेष ब्रह्म(? ब्रह्मा ) य इत्यृचा ।
विश्वेदेवा ऋषिर्विराड्गायत्री ब्रह्म देवता ॥
शनैः पश्चिमतः स्थाप्य विनायकमथार्चयेत् ।
गणानां त्वेति जगती भर्गर्षिर्दैवता(? भृगुर्ऋषि-र्दैवता ) स्वयम् ॥
तस्य दक्षिणतो दुर्गां जातवेदस इत्यृचा ।
त्रिष्टुप्छन्दः कश्यपोऽस्य ऋषिर्दुर्गाऽत्र देवता ॥
वायुतो दक्षिणे कोणे शिशुमन्त्रेण चार्चयेत् ।
(? वायुं तद्दक्षिणे काणा शिशुमन्त्रेण चार्चयेत् ।)
गौरी इति ऋषिश्चास्य गायत्री देवता मरुत् ॥
दक्षिणे तस्य चाऽऽकाशमादित्यं च समर्चयेत्-
(? मादिन्मन्त्रेण चार्चयेत् ) ।
ऋषिर्भर्गोऽस्य गायत्री चाऽऽकाशो देवता ततः ॥
अश्विनौ दक्षिणे तस्य कार्या वै षोडशा* ऋचा ।
ऋषिः कण्वोऽस्य गायत्री छन्दोऽश्विनौ च देवते ॥
इन्द्रश्चैरावतारूढो वज्रपाणिः शचीप्रियः ।
स्वर्णवर्णः सहस्राक्षो नायकस्त्वमरेश्वरः ॥
पद्मपूर्वदलाग्रे च इन्द्रमिन्द्रं च(? व ) इत्यृचा ।
वायुश्छन्द(? मधुच्छन्द ) ऋषिरस्य गायत्री देवता स्वयम् ॥

अग्निः सुवर्णः सप्तार्चिः सप्तहस्तोऽर्धवक्त्रकः
(? द्विवक्त्रकः ) ।
स्वाहाप्रियो मेषगमः षडक्षः स्रुक्स्रुवायुधः ॥
आग्नेय्यामर्चयेदग्निमग्निं दूतमनेन च ।
ऋषिर्मेधातिथिश्छन्दो गायत्री देवताऽनलः ॥
इलप्रियो(?) दण्डधरो यमो महिषवाहनः ।
रक्तवर्णो हि लोकानां स्वस्वकर्मफलप्रदः ॥
यमं यजेद्याम्यदले यमाय सोममित्यृचा ।
ऋषिः शातातपो(? ऋषिर्वैवस्वतो)ऽनुष्टुप्छ-न्दोऽसौ देवता यमः ॥
खड्गचर्मधरो नीलो निर्ऋतिर्नरवाहनः ।
ऊर्ध्वकेशो विरूपाक्षः करालः कालिकाप्रियः ॥
मो षु णस्त्विवतिमन्त्रेण नैर्ऋत्यां निर्ऋतिं यजेत् ।
गायत्री घोरकण्ठो(? कण्वो)ऽस्य निर्ऋति-र्दैवता स्वयम् ॥
नागपाशधरो रत्नभूषणः पद्मिनीप्रियः ।
वरुणोऽम्बुपतिः स्वर्णवर्णो मकरवाहनः ॥
वरुणं पश्चिमे भागे त्वं नो अग्न इत्यृचा ।
वामदेव ऋषिस्त्रिष्टुब्वरुणो देवताऽस्य च ॥
प्राणरूपो हि जगतो वायुः कृष्णमृगासनः ।
हेमदण्डधरः श्यामवर्णोऽसौ मोहिनीप्रियः ॥
तव वायुवृत(? वायवृत ) इति यजेद्वायुं मरुद्दिशि ।
वायुश्च देवता त्वस्य गायत्री ऋषिरङ्गिराः ॥
अश्वारूढः कुन्तपाणिः कुबेरश्चित्रिणीप्रियः ।
निधीश्वरः स्वर्णवर्णः स्वर्णदो रूपवान्प्रभुः ॥
सोमो धेनुमनेनैव उदीच्यां च धनेश्वरः ।
त्रिष्टुप्छन्दो गौतमोऽस्य देवता सोमसंज्ञकः ॥
शुद्धस्फटिकसंकाशो गौरीशो वृषवाहनः ।
वरदाभयशूलाक्षः शूलभृत्परमेश्वरः ॥
कद्रुद्रायेतिमन्त्रेण ईशान्यां रुद्रमर्चयेत् ।
गायत्री घोरकण्ठोऽस्य(? कण्वोऽस्य ) देवता चन्द्रशेखरः ॥

---

* 'अश्विना वर्तिरस्मदा०' इति ऋगश्विनोरर्चने विनियुक्ताऽन्यत्र । सा च 'एता उ त्या उषसः' इति ऋग्वेदसूक्ते ( १।९२ ) षोडशी । एतावतीह षोडशशब्दस्य संगतिः । अन्या पदार्थसंगतिश्चिन्त्या । अस्याश्च ऋचः गोतमो राहूगण ऋषिरुष्णिक्च छन्दः सर्वानुक्रमण्याम् । एवं बहुत्र ऋषिदैवतच्छन्दांसि सर्वानुक्रमण्यनुशिष्टेभ्यो विभिन्नान्यत्र ।

ग्रहसमिधः तद्गुणाश्च

अर्कः पलाशखदिरापामार्गाश्वत्थसंभवाः ।
उदुम्बरशमीदूर्वाकुशजाः समिधः क्रमात् ॥
आर्द्राश्च सत्त्वनिबिडाः स्निग्धाः प्रादेश-
संमिताः ।
कनिष्ठिकातुल्यवृत्ता होमकर्मणि कामदाः ॥

अग्निस्थापनम्

लिखिताष्टदले पद्मे तस्मिन्कुण्डे हुताशनम् ।
आचार्यः स्थापयेत्सम्यक्स्वगृह्योक्तविधानतः ॥

ग्रह-देवतापूजनम्

मुखान्ते चार्चयेत्साधिदेवतांश्चाखिलग्रहान् ।
पूर्वोक्तमन्त्रैः स्वैः स्वैश्च लोकपालान्समर्चयेत् ॥

पूर्णकुम्भपूजनम्

तस्याश्चेशानभागे तु पूर्णकुम्भं नवं न्यस्येत्
(? न्यसेत्) ।
पञ्चत्वक्पल्लवोपेतं शतौषधिसमन्वितम् ॥
स्वर्णरत्नफलोपेतं मृत्तिकावस्त्रसंयुतम् ।
अब्लिङ्गैर्वारुणैर्मन्त्रैरर्चयेद्द्विज(? येद्बीज-)-
संयुतम् ॥

पूर्णकुम्भोपयोगिपल्लव-धान्य-मृत्तिका-शतौषधि-
त्वक्-पत्राणां परिगणनम्

*उदुम्बरवटाश्वत्थप्लक्षाम्राब्जजसंभवम् ।
तिलमाषव्रीहियवा गोधूमाण्डप्रियङ्गवः ॥
गजाश्वगोकुलस्थानाद्रथ्यावल्मीकसंभवात्
(? संगमात्) ।
ह्रदाच्च नगरद्वारात्संभूताष्ट च मृत्तिकाः ॥

श्रीवृक्षबिल्वखदिरविष्णुक्रान्तापुनर्नवाः ।
देवदारुजटामांसीसहदेवीमुराशिवाः ॥
फलिनीबकुलाजातिर्लतामञ्जिष्ठसंज्ञिकाः ।
वटप्लक्षाम्रनीवारखदिरामल्लिकार्जुनाः ॥
दमयन्तीमहाजातीनिम्बोशीरहरिद्रकाः ।
सर्पाक्षीतुलसीरौद्रकुटादाडिमचम्पकाः ॥
मातुलुङ्गजपात्वष्टौ कर्णिकारोर्णकाञ्चनाः ।
सेवन्तीपनसद्राक्षाविशाक्षीश्वेतसर्षपाः ॥
राजीवकुन्दमुकुलनीलोत्पलकरञ्जकाः ।
पुन्नागचन्दनद्रोणमन्दरो(? मन्दरा) हेम-
दुग्धकः ॥
रक्तचन्दनजम्बीरयूथिकागृहमल्लिकाः ।
संपर्कसिन्दुवारेन्द्ररक्तधत्तूरखाण्डिमाः ॥
अपामार्गोरुपालाशबृहतीकरवीरकाः ।
नन्द्यावर्तकुबेराक्षापाटलीहेमपुष्पिकाः ॥
शिरीषामलकाशोकरक्तागस्तिकपित्थकाः ।
बन्धूकभृङ्गराजाख्यकृष्णवीमाधवीलताः ॥
चतुर्जातो बर्हिशिखा कुटजो मधुबिम्बकः ।
तमालतरुपुष्पारुपुष्पाख्यश्चक्रमर्दिनी ॥
व्याकुली शाल्मली मौडीरास्नाखर्वेपटोलिकाः ।
महाखर्जूरिकानारिकेलाख्यास्ते शतद्रुमाः ॥
एषां मूलानि सर्वाणि नृणामेनो नुदन्ति यत् ।
शान्तिकर्मणि सर्वत्र निक्षिपेत्कलशोदके ॥
एषामभावे तु दश सर्वौषध्यः प्रकीर्तिताः ।
उद्धृताऽसीतिमन्त्रेण सदा तत्राष्ट मृत्तिकाः ॥
चातुर्जातमुशीरं च पञ्चकं फलिनीमुखम् ।
देवदारुनिशा चैषां त्वक्पत्राणि च निक्षिपेत् ॥

ग्रहवर्णोपचारसमर्पणम्

[1]उपचाराणि(? उपचाराश्च) सर्वेषामपि
शुक्लाक्षतैः सदा ।
ग्रहवर्णाश्च दातव्या गन्धपुष्पाक्षतध्वजाः ॥

---

* अशुद्धिबहुलोऽविस्पष्टसंगतिश्च ग्रन्थः । तत्रायं विचार-मार्ग उपन्यस्यते—पूर्वं पञ्च त्वक्पल्लवाः, शतमोषधयः, मृत्तिकाः, बीजानि चोपक्रान्तानि । तत्र 'उदुम्बर' इत्यर्धेन त्वक्पल्लवप्रकृतयः पञ्च वृक्षाः समनुक्रान्ताः । अथवा त्वच उपरिष्टाद्वक्ष्यन्ते । 'ब्जजसंभवम्' इति चिन्त्यम् । 'तिलमाष' इत्यर्धेन बीजानि, 'गजाश्व' इति श्लोकेन मृत्तिकाश्च परिगणिताः । 'श्रीवृक्षबिल्व' इत्यादिभिः शतमोषधयः संख्याताः । अत्र ओषधिशब्द उद्भिज्जमात्रपरः । तत्र अशुद्धिशोधनेन शतसंख्या संपादनीया इति ।

(१) वसं. १८।१२०; शाम. १८ पू.

ग्रहधूपाः

[१]कर्परागरुकस्तूर्यः कुङ्कुमं गन्धगुग्गुलुः
(? गन्धगुग्गुलू)।
कृष्णागुर्वेक्षकर्पूरा धूपाः स्युर्भास्करादितः ॥

समिद्गन्धपुष्पधूपान्नप्रतिनिधयः, पञ्चामृते गव्यनियमः

[२]उक्तसमिदभावे तु पालाशं तत्र कल्पयेत्।
गन्धाभावे शुक्लगन्धं पुष्पाभावे सुगन्धकम् ॥
[३]धूपाभावे गुग्गुलुः स्याद्गव्या(? स्यादन्ना)-
भावे गुडोदनम्।
पञ्चामृते गव्यमेव मिश्रकं न कदाचन ॥

चरवः, तेषां स्थापनं संस्कारश्च

[४]घृतान्नपायसापूपक्षीरमिश्रं गुडोदनम्।
दधिमिश्रं तिलैर्मिश्रं सामिषं चित्रितोदनम् ॥
संस्कारार्थं चतुर्णां(? चरूणां) च होमार्थं
स्थापयेच्च तान्।
अग्नये जुष्टमन्त्रेण उद्धृतेष्वभिपूरयेत् ॥

होमः, आहुतीनां संख्या मानं च, नैवेद्यसमर्पणम्

[५]आदौ तु समिदन्नाज्यैः पृथगष्टोत्तरं शतम्।
स्वस्वमन्त्रैश्च जुहुयाद्ग्रहोद्देशेन भक्तितः ॥
[६]द्वित्राश्चैवाधिदैवत्याः पञ्चानां चैव पञ्चधा।
इन्द्रादिलोकपालानां न कुर्यात्समिदादि यत् ॥

द्वित्राः पञ्च। पञ्चानां गणेशादीनां पञ्चधा प्रत्येकमित्यर्थः। केचित्तु द्वौ त्रयो वा द्वित्राः। विनायकादीनां पञ्चधा एकैकामिति केचित्। शाम. १९

(१) वसं. १८।१२१.

(२) वसं. १८।१२२; शाम. १८ उत्त.

(३) वसं. १८।१२३; शाम. १८ द्वितीयतृतीयपादयोः (द्रव्याभावे तु मिश्रकम्। पञ्चामृतं गवामेव).

(४) वसं. १८।१२४-१२५.

(५) वसं. १८।१२६ दन्नाज्यैः (धाज्यान्नैः); शाम. १८ पू.

(६) वसं. १८।१२७; शाम. १९ दैवत्याः (देवताः) पू.

[१]हुनेदाज्याक्तसमिधश्चोपस्तरणपूर्वकम्।
अवदानं सकृत्कुर्यात्पश्चाच्चैवाभिघारणम् ॥
प्रमाणमाहुतेश्चात्र पक्वामलकसंमितम्।
चरुशेषं च नैवेद्यं विविधान्नं समर्पयेत् ॥

अयुत-लक्ष-कोटिहोमा ग्रहयज्ञप्रकाराः, तेषां मन्त्रो हविर्द्रव्यं दिनसंख्या च, शान्तिजपः, ब्राह्मणभोजनम्

[२]ततो व्याहृतिभिः कुर्यात्तिलहोमान्प्रयत्नतः।
प्रथमोऽयुतहोमश्च लक्षहोमो द्वितीयकः ॥
[३]तृतीयः कोटिहोमः स्यात्त्रिविधो ग्रहयज्ञकः।
एकरात्रं त्रिरात्रं वा पञ्चरात्रमथापि वा ॥
[४]शिवगाथां विष्णुगाथां शान्तिं ब्राह्मणभोजनम्
समाचरेत्प्रतिदिनमेवं भक्त्या समन्वितः ॥

वासिष्ठेऽप्येकरात्रादिग्रहणं नियमानादरार्थम्। अ सूक्तादिजपोऽपि तुलादानवदिति केचित्। शाम. २

जयादिहोमाः, पूर्णाहुतिः, यजमानाभिषेकः

[५]ततो जयादीञ्जुहुयात्पूर्णाहुतिमथाऽऽचरेत्।
स्वस्तिकं कल्पयेत्पश्चात्कुण्डस्येशानभागतः ॥
[६]यजमानाभिषेकार्थं तत्र भद्रासनं न्यसेत्।
प्राङ्मुखस्योपविष्टस्य यजमानस्य तत्र च ॥
[७]अभिषेकं ततः कुर्युः साचार्याः षोडशर्त्विजः
विविधैर्मङ्गलैर्घोषैः सूतमागधकैः सह ॥

(१) वसं. १८।१२८-१२९.

(२) वसं. १८।१३०; शाम. २० तिलहोमा (तिलहोमं) होमश्च (होमः स्यात्).

(३) वसं. १८।१३१; शाम. २०.

(४) वसं. १८।१३२ शान्तिं (शान्तिः); शाम. २ चरेत् (पयेत्) भक्त्या (भक्ति).

(५) वसं. १८।१३३ हुतिमथा (हुति समा); शाम २० जयादीन् (जपादीन्); संकौ. १४० स्येशान भागतः (स्यैशानदेशतः) उत्त.

(६) वसं. १८।१३४; शाम. २०; संकौ. १४०.

(७) वसं. १८।१३५; शाम. २० मागधकै (मागधजैः); संकौ. १४० (अभिषेकं ततः कुर्यादाचा ब्राह्मणैः सह।) पू.

[1]वक्ष्यमाणैः स्वमन्त्रैश्च अब्लिङ्गैर्वेदमन्त्रकैः ।
कुम्भोदकैः पूर्णजलैरुक्तद्रव्यसमन्वितैः ॥

स्वमन्त्रैर्ग्रहमन्त्रैः । संकौ. १४०

[2]ग्रहाणामादिरादित्यो लोकरक्षणकारकः ।
विषमस्थानसंभूतां पीडां हरतु ते रविः ॥

[3]रोहिणीशः सुधामूर्तिः सुधागात्रः सुधाशनः ।
विषमस्थानसंभूतां पीडां हरतु ते विधुः ॥

[4]भूमिपुत्रो महातेजा जगतां भयकृत्सदा ।
वृष्टिकृद्वृष्टिहर्ता च पीडां हरतु ते कुजः ॥

उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः ।
सूर्यप्रियकरो विद्वान्पीडां हरतु ते बुधः ॥

[5]देवमन्त्री विशालाक्षः सदा लोकहिते रतः ।
अनेकशिष्यसंपूर्णः पीडां हरतु ते गुरुः ॥

[6]दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महाद्युतिः ।
प्रभुस्ताराग्रहाणां च पीडां हरतु ते भृगुः ॥

(१) वसं. १८।१३६ माणैः स्व (माणैश्च); संकौ. १४० पूर्णजलै (पूर्णतमै).

(२) वसं. १८।१३७ हरतु ते (दहतु मे); प्रपा. ९३ (=); प्र. ३४ (=); संकौ. १४२ (=); संर. १६१ (=) हरतु (दहतु).

(३) वसं. १८।१३८ मूर्तिः (दीप्तः) हरतु ते (दहतु मे); प्रपा. ९३ (=); प्र. ३४ (=); संकौ. १४२ (=); संर. १६१ (=) हरतु (दहतु).

(४) वसं. १८।१३९-१४० हरतु ते (दहतु मे); प्रपा. ९३ (=); प्र. ३४-३५ (=); संकौ. १४२ (=); संर. १६१ (=) हरतु (दहतु).

(५) वसं. १८।१४१ हरतु ते (दहतु मे); प्रपा. ९३ (=); प्र. ३५ (=); संकौ. १४२ (=) संपूर्णः (संयुक्तः); संर. १६१ (=) हरतु (दहतु).

(६) वसं. १८।१४२ दश्च (दः स) हरतु ते (दहतु मे); प्रपा. ९३ (=) द्युतिः (मतिः); प्र. ३५ (=) प्रपावत्; संकौ. १४२ (=) प्रपावत्; संर. १६१ (=) हरतु (दहतु) शेषं प्रपावत्.



[1]सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः ।
मन्दचारः प्रसन्नात्मा पीडां हरतु ते शनिः ॥

[2]महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः ।
अतनुश्चोर्ध्वकेशश्च पीडां हरतु ते तमः ॥

[3]अनेकरूपवर्णैश्च शतशोऽथ सहस्रशः ।
उत्पातरूपो जगतः पीडां हरतु ते शिखी ॥

बलिदानम्, ग्रहादिध्यानम्, पुष्पाञ्जलिदानम्, स्विष्टकृद्धोमः, पूर्णाहुतिः, कर्मफलग्रहणम्, दक्षिणादानम्

[4]ततस्तस्याभिषिक्तस्य रक्षार्थं बलिमुत्क्षिपेत् ।
दिग्विदिक्षु विचित्रान्नैर्दीपैर्नीराजयेत्ततः ॥

[5]शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ।
ततो मण्डपमागत्य ध्यायेदग्निं ग्रहान् सुरान् ॥

[6]प्रत्येकं प्रतिमन्त्रैश्च दद्यात्पुष्पाञ्जलिं ततः ।
मन्त्रतन्त्रक्रियालोपप्रायश्चित्तार्थमेव च ॥

[7]यदस्य कर्मण इति स्विष्टकृज्जुहुयात्ततः ।
अस्य मन्त्रस्यातिधृतिः स्वर्णगर्भ ऋषिस्ततः ॥

(१) वसं. १८।१४३ हरतु ते शनिः (दहतु मेऽर्कजः); प्रपा. ९३ (=); प्र. ३५ (=); संकौ. १४२ (=); संर. १६१ (=) हरतु (दहतु).

(२) वसं. १८।१४४ हरतु ते (दहतु मे); प्रपा. ९३ (=); प्र. ३५ (=); संकौ. १४२ (=); संर. १६१ (=) हरतु (दहतु).

(३) वसं. १८।१४५ वर्णैश्च (वर्णश्च) हरतु ते (दहतु मे); प्रपा. ९३ (=); प्र. ३५ (=); संकौ. १४२ (=) वर्णैश्च (वर्णैर्यः) जगतः (जगतां); संर. १६१ (=); हरतु (दहतु).

(४) वसं. १८।१४६ ततस्तस्याऽभि (ततो राज्ञोऽभि) रक्षार्थं (रक्षार्थे); शाम. २०; संकौ. १४० विचित्रा (च चित्रा).

(५) वसं. १८।१४७ मण्डप (मण्डल); शाम. २० ग्रहान् सुरान् (सुरान् ग्रहान्); संकौ. १४०.

(६) वसं. १८।१४८; शाम. २० पू.; संकौ. १४० पू.

(७) वसं. १८।१४९-१५०.

देवताऽग्निः स्विष्टकृच्च व्याहृतेर्व्याहृतं ततः ।
समिदादिद्रव्यमयमवदाय सकृत्सकृत् ॥

[१]मिलित्वा स्रुक्स्रुवं तत्र निक्षिपेदभिघार्य तत् ।
मन्त्रेण सप्त ते अग्ने इति पूर्णाहुतिं यजेत् ॥

[२]आचार्येभ्यो नवभ्यश्च ग्रहार्चनफलं ततः ।
समिदाज्यचरूणां च तिलहोमफलं च यत् ।

[३]ब्रह्मत्व( ? ब्रह्मर्त्विक् )कुम्भपूजायां चार्चनस्य फलं च यत् ।
गणपक्षेत्रपालाश्च दुर्गाहव्याङ्गदेवताः ॥

तासां जपफलं सम्यग्गृह्णीयाज्जलपूर्वकम् ।
एवं षोडशऋत्विग्भ्यो दातव्या दक्षिणा ततः ॥

धेन्वादिदक्षिणापरिगणनं दक्षिणादानमन्त्राश्च

*धेनुं शङ्खं रक्तवृषं हेमं पीताम्बरं हयम् ।
श्वेताश्वं कृष्णवर्णां गां कृष्णलोहमजं क्रमात् ॥

स्वर्णेन वा समीकृत्य दातव्या दक्षिणा ततः ।
आचार्यार्थे जापकेभ्यो ब्राह्मणेभ्योऽथ शक्तितः ॥

तत्र दानमन्त्राः—

[१]गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥
कपिले सर्वदेवानां पूजनीयाऽसि रोहिणि ।
तीर्थरूपमयी यस्मादतः शान्तिं प्रयच्छ मे ॥
इति गोदानकपिलादानमन्त्रौ ।

पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गल( ? लम् ) ।
विष्णुनाऽपि धृतो यस्मादतः शान्तिं प्रयच्छ मे ॥
इति शङ्खदानमन्त्रः ।

धर्मस्त्वं वृषरूपेण जगदानन्दकारकः ।
अष्टमूर्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥
इति वृषभदानमन्त्रः ।

हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥
इति स्वर्णदानमन्त्रः ।

पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् ।
प्रदानात्तस्य मे विष्णुर्ह्यतः शान्तिं प्रयच्छ मे ( ? शान्तिं प्रयच्छतु ) ॥
इति पीतवस्त्रदानमन्त्रः ।

विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः ।
चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे ॥
इति अश्वदानमन्त्रः ।

[२]यस्मात्त्वं पृथिवी सर्वा धेनो कृष्णेन संनिभा ।
सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥
इति कृष्णधेनुदानमन्त्रः ।

---

* अत्र दक्षिणापरिगणने षण्णां दक्षिणानां परिगणकमेकमर्धं त्रुटितमिति संभाव्यते, प्रत्यृत्विक् दक्षिणापृथक्त्वबोधकात् 'क्रमात्' इति पदात् दक्षिणानां षोडशत्वप्रतीतेः, अग्रिमदक्षिणादानमन्त्रेषु अत्रोक्तदक्षिणातिरिक्तदक्षिणादानमन्त्रसत्त्वाच्च । त्रुटितासु च षट्सु दक्षिणासु कपिला, रत्नम्, भूमिः, शय्या, वस्त्रं चेति पञ्च दक्षिणा निःशङ्कं मन्त्रेभ्यो ज्ञायन्ते । षष्ठी तु विचार्यते— शब्दकोशेषु अजच्छागशब्दयोर्बस्तपर्यायत्वोक्तावपि क्वचित् 'यज्ञध्वंससमये अजशब्दाभिधेयस्य दक्षप्रजापतेर्मेषरूपमादाय पलायनादजशब्द उपचारान्मेषपरोऽपि' इति अजशब्दस्य मेषपरत्वस्याप्युक्तेः, ज्योतिःशास्त्रे तथा व्यवहारदर्शनाच्च यदि अजशब्देनात्र मेषो विवक्ष्यते तदा छाग एव षष्ठी दक्षिणा । यदि तु अजच्छागशब्दयोः पर्यायत्वमभिप्रेतं तदा धेनुहयवस्त्राणामिव वृषभरक्तवृषभयोरपि निर्विशेषणसविशेषणयोः पृथग्दक्षिणात्वं मत्वा निर्विशेषणवृषभस्य षष्ठदक्षिणात्वमास्थेयम् । अस्मिन्पक्षे रक्तवृषभदानमन्त्रस्योच्छेदोऽप्यङ्गीकार्य इति । श्वेताश्वदानमन्त्रोऽप्युच्छिन्न इति ज्ञेयम् । दक्षिणोद्देशक्रममन्त्रक्रमयोर्विरोधोऽपि चिन्त्यः ।

( १ ) वसं. १८।१५१ अग्ने इति ( अग्नेरिति ) ; शाम. २० यजेत् ( चरेत् ) उत्त.

( २ ) वसं. १८।१५२ ; शाम. १२ पू.

( ३ ) वसं. १८।१५३–१५६.

( १ ) वसं. १८।१५७–१६३. बौधायनगृह्यशेषसूत्रे मत्स्यपुराणेऽपि. ( २ ) वसं. १८।१६४. मत्स्यपुराणेऽपि.

[1]यस्मादायस कर्माणि तवाधीनानि सर्वदा ।
लाङ्गलाद्यायुधादीनि तस्माच्छान्तिं प्रयच्छ मे ॥
इति आयसदानमन्त्रः ।

[2]यस्माद्रत्नप्रदानेन स्वर्गभोगं लभेन्नरः ।
तस्मादनेन दानेन स्वर्गभोगश्च मे भवेत् ॥
इति रत्नदानमन्त्रः ।

सर्वभूताश्रया भूमिर्वे( ? मे व )राहेण समुद्धृता ।
अनन्तफलदा यस्मादतः शान्तिं प्रयच्छ मे ॥
इति भूमिदानमन्त्रः ।

[3]यस्मात्त्वं छाग यज्ञानामङ्गत्वेन व्यवस्थितः ।
योनिर्विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥
इति छागदानमन्त्रः ।

[4]यस्मादशून्यं शयनं केशवस्य शिवस्य च ।
तथा मे शयनं शश्वद्भवेज्जन्मनि जन्मनि ॥
इति शय्यादानमन्त्रः ।

[5]शीतवातोष्णसंत्राणं लज्जाया रक्षणं परम् ।
देहालंकरणं वस्त्रमतः शान्तिं प्रयच्छ मे ॥
इति वस्त्रदानमन्त्रः ।

अवशिष्टद्विजेभ्यश्च यावच्छक्त्या च दक्षिणाम् ।
दीनान्धकृपणादिभ्यः किंचित्किंचित्प्रदापयेत् ॥

आज्यपात्रपूजनाज्यावेक्षणयोर्मन्त्रौ

वन्दे सर्वरसश्रेष्ठ त्वामहं भगवन्नजः ( ? न्नज )।
अत आज्य सुधारूप सर्वश्रेष्ठं कुरुष्व माम् ॥
इति आज्यपात्रपूजनमन्त्रः ।

याऽलक्ष्मीर्यच्च मे दौःस्थ्यं सर्वगात्रेष्ववस्थितम् ।
तत्सर्वं शमयाऽऽज्य त्वं लक्ष्मीं पुष्टिं च वर्धय ॥
इत्याज्यावेक्षणमन्त्रः ।

वह्निग्रहाद्युद्वासनम्, ब्राह्मणभोजनम्, ग्रहयज्ञफलम्

उद्वासयेत्ततो वह्निं ग्रहान् देवान् द्विजान् पितॄन् ।
ब्राह्मणान् भोजयेत्पश्चात्स्वयं भुञ्जीत बन्धुभिः ॥
एवं यः कुरुते सम्यग्ग्रहयज्ञं सहैव(? सदैव) सः ।
सर्वान् कामानवाप्नोति स्वस्थानस्थफलं लभेत् ॥
इदं बलद्वयं चिन्त्यं मासि मासि स्वजन्मतः ।
अष्टवर्गबलं मुख्यमुभयोः सर्वकामिकम् ॥
यथा ग्रहाणां तीक्ष्णांशुः सदा तु सदृशो बली ।
अष्टवर्गबलं तद्वद्ग्रहाणामुत्कटं बलम् ॥
अष्टवर्गबलं यत्र तत्रास्ति त्रिविधं बलम् ।
तस्माद्बलत्रयाणां तत्साधयेदष्टवर्गजम् ॥
ग्रहेषु विषमस्थेषु यः शान्तिं न करोति सः ।
अर्थहानिं मनस्तापं चाश्नुते सर्वसंकटान् ॥

ग्रहमण्डलानामाकारा मानानि च

[1]वृत्तमण्डलमादित्ये चतुरस्रं निशाकरे ।
भूमिपुत्रे त्रिकोणं स्याद्बुधे वै बाणसंनिभम् ॥
गुरौ तु पट्टिशाकारं पञ्चकोणं च भार्गवे ।
शनौ स्याद्धनुषाकारं शूर्पाकारं तु राहवे ।
केतोश्चैव ध्वजाकारं मण्डलानि यथाक्रमम् ॥

[2]द्वादशाङ्गुलमादित्ये सोमे तु द्विगुणं भवेत् ।
वेदाङ्गुलं भूमिपुत्रे तदेव बुध आलिखेत् ॥
षडङ्गुलं गुरौ चैव भृगौ चैव नवाङ्गुलम् ।
सौरौ रसाङ्गुलं चैव राहौ स्याच्छ्रुतिनेत्रकम् ॥
केतौ गजाङ्गुलं प्रोक्तं मण्डलानि यथाक्रमम् ॥

अङ्गुलसंख्यामाह वसिष्ठः— द्वादशेति । द्वादशाङ्गुलमादित्ये इत्यत्र सूर्यपीठस्य द्वादशाङ्गुलं क्षेत्रफलं ग्राह्य-

( १ ) वसं. १८।१६५. बौधायनगृह्यशेषसूत्रे मत्स्यपुराणेऽपि.

( २ ) वसं. १८।१६६–१६७.

( ३ ) वसं. १८।१६८. बौधायगृह्यशेषसूत्रे मत्स्यपुराणेऽपि.

( ४ ) वसं. १८।१६९. मत्स्यपुराणेऽपि.

( ५ ) वसं. १८।१७०–१७१.

( १ ) संग. ११४. ( २ ) संग. ११५.

मित्यर्थः । अत्र केचित् भुजप्रमाणमिच्छन्ति । तदतीव मन्दम्, हस्तमितवेद्याः नवभागे कृतेऽष्टाङ्गुलदीर्घमष्टाङ्गुलविस्तारात्मकमेकं कोष्ठं भवति, तत्र चतुर्विंशत्यङ्गुलभुजस्य चन्द्रमसो निवेशाभावात् । अतः क्षेत्रफलं ग्राह्यम् । मण्डलं पीठमिति पर्यायशब्दः । संग. ११५

प्रत्यधिदेवताः तासां स्थानानि मन्त्राश्च

[१]रुद्रं त्र्यम्बकमन्त्रेण रवेरुत्तरतो न्यसेत् ।
सोमस्याऽऽग्नेयदिग्भागे श्रीश्च ते मेनकात्मजा ॥
यदक्रन्देति भौमस्य स्कन्दं याम्ये प्रदापयेत् ।
विष्णुं विष्णो रराटेति यजेत्पूर्वे बुधस्य च ॥
गुरोरुत्तरतोऽभ्यर्च्यो ब्रह्मा ब्रह्मेति मन्त्रतः ।
सजोषेन्द्रेति शुक्रस्य प्राच्यां शक्रं निधापयेत् ॥
शनेः पश्चिमतः स्थाप्यो यमाय त्वेत्यृचा यमः ।
कार्षिरसीति मन्त्रेण राहोः कालं तथोत्तरे ॥
चित्रगुप्तं तु केतूनां चित्राय स्वेति(?) नैर्ऋते ।
ग्रहाश्च देवताः ख्याताः शृणुष्वातोऽधिदेवताः ॥

अधिदेवताः तासां स्थानानि च

अग्निरापो धरा विष्णुरिन्द्रेन्द्राणी(? द्राण्यौ ) प्रजापतिः ।
सर्पो ब्रह्मा च निर्दिष्टा अधिदेवा यथाक्रमम् ॥
[२]ग्रहदेवतयोर्मध्ये अधिदेवान्निवेशयेत् ॥

एतानि च वासिष्ठीयवचांसि कैश्चिन्नाऽऽद्रियन्ते ।
शाम. १७

ग्रहाणां जातिवर्णाः रङ्गवर्णाश्च

[३]ब्राह्मणौ भार्गवाचार्यौ क्षत्रियावर्कलोहितौ ।
वैश्यौ सोमबुधौ चैव शेषाञ्छूद्रान्विनिर्दिशेत् ॥
[४]सोमपुत्रो गुरुश्चैव तदुभौ पीतकौ स्मृतौ ।
चित्राश्च केतवः ॥

(१) शाम. १६-१७.

(२) शाम. १६ निवेशयेत् (निधापयेत्) गोभिलवसिष्ठौ, १७.

(३) संत. ९४७ वसिष्ठगोभिलकात्यायनाः.

(४) संत. ९४६ वसिष्ठसंहितास्कन्दपुराणगोभिलाः.

## याज्ञवल्क्यः

ग्रहयज्ञफलानि

*[१]एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ।
कर्मणां फलमाप्नोति श्रियं चाऽऽप्नोत्यनुत्तमाम् ॥
[२]श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।
वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन्नपि ॥

(१) ग्रहाणां कर्माविघ्नसिद्ध्यर्थं पूज्यत्वं विधानत उक्तम् । तद्विधानमधुना विवक्षुः स्वातन्त्र्येणापि प्रयोगसिद्ध्यर्थं कामसंयोगेनाधिकारान्तरमाह– श्रीकाम इति । पुनःशब्दादविघ्नार्थं कृत्वा पुनः कामार्थं करणम् ।
विश्व.

(२) 'ग्रहांश्चैव विधानतः । कर्मणां फलमाप्नोति श्रियं चाऽऽप्नोत्यनुत्तमाम्' (यास्मृ. १।२९३) इत्यनेन ग्रहपूजया कर्मणामविघ्नेन फलसिद्धिः श्रीश्च फलमित्युक्तम् । इदानीं फलान्तराण्याह– श्रीकाम इति । श्रीकाम इति पूर्वोक्तस्यानुवादः । शान्तिकामः आपदुपशान्तिकामः । सस्यादिवृद्ध्यर्थं प्रवर्षणं वृष्टिः । आयुः अपमृत्युजयेन दीर्घकालजीवनम् । पुष्टिः अनवद्यशरीरत्वम् । एताः कामयते इति वृष्ट्यायुःपुष्टिकामः । एते श्रीकामादयो ग्रहयज्ञं ग्रहपूजां समाचरेयुः । तथाऽभिचरन्नपि । अदृष्टोपायेन परपीडा अभिचारः, तत्कामश्च ग्रहयज्ञं समाचरेत् ।
मिता.

(३) अथ ग्रहयज्ञविधिमाह– श्रीकाम इति । श्रीशान्त्यादिकामोऽभिचरन् वा ग्रहयज्ञं वक्ष्यमाणस्वरूपं

* व्याख्यानानि गणपतिपूजनप्रकरणे द्रष्टव्यानि ।

(१) यास्मृ. १।२९३; अन्ये स्थलादिनिर्देशा गणपतिपूजनप्रकरणे द्रष्टव्याः ।

(२) यास्मृ. १।२९५; विश्व. १।२९० माचरेत् (मारमेत्) चरन्नपि (चरन्पुनः); मिता.; अप. १।२९३-२९४ चरन्नपि (चरन्रिपून्); स्मृकौ. ३५; प्रपा. ६९ यज्ञं (पूजां); संत. ९४३-९४४; वीमि.; शाम. ११ : २२ पू.; विपा. ३०; संग. १०७ माचरेत् (मारमेत्); सस्मृ. ५५.

समाचरेत् अनुतिष्ठेत् । शान्तिः फलदानोन्मुखदुरित-निवारणम् । पुष्टिः शरीराद्युपचयः । अभिचारः आयुष्प्रदधर्मप्रतिबन्धः । प्रसिद्धमन्यत् । वृष्ट्यायुःपुष्टीनां प्रत्येकं कामसंबन्धः, नेतरेतरयुक्तानाम्, प्रमाणान्तर-सिद्धत्वे सत्युद्दिश्यमानत्वात् । एवंविधस्योद्देश्यस्य विशेषणमविवक्षितम् । पूर्वं विनायकस्नानसहितो ग्रहयज्ञः श्रिये विहितः । इदानीं केवलः फलान्तरेभ्यश्चेति विधिभेदः । अभिचरन्निति शतृप्रत्ययोऽभिचारस्य ग्रहयज्ञं प्रति हेतुतामाचष्टे । अभिचारस्य चासिद्धत्वान्न स्वरूपेण हेतुता, किंतु तदिच्छायाः, तेनेष्यमाणतया कर्मसंबन्धा-दभिचारस्य फलत्वम् । अप.

(४) शान्तिर्धर्मद्वारा ऐहिकानिष्टनिवृत्तिः । शान्त्यर्थ-यागो मलिम्लुचादिष्वपि कार्यः, 'नैमित्तिकानि काम्यानि निपतन्ति यथायथा । तथातथैव कार्याणि न कालस्तु विधीयते ॥' इति दक्षवचनात् । नैमित्तिकानि काम्या-नीति समानाधिकरणमिदम् । ग्रहदौःस्थ्यव्याधिदुः-स्वप्नादिनिमित्तकत्वान्नैमित्तिकानि, तच्छान्तिफलकत्वात् काम्यानि । श्रीप्रवृद्ध्यर्थयागस्तु न कार्यः, पुष्ट्यर्थत्वेन केवलकाम्यत्वात् । अत एव मत्स्यपुराणम्( ? णे )— 'वैशम्पायनमासीनमपृच्छच्छौनकः पुनः । सर्वकामाप्तये नित्यं कथं शान्तिकपौष्टिकम् ॥ वैशम्पायन उवाच— श्रीकामः शान्तिकामो वा तथा चाभिचरन् पुनः । येन ब्रह्मन् विधानेन तन्मे निगदतः शृणु ॥' इत्युपक्रम्य ग्रहयागाभिधानात्( ? नम् ) । वृष्टिकाम-होमस्त्ववग्रहनाशार्थत्वे शान्तिकः, केवलवृष्ट्यर्थत्वे पौष्टिकः । अयमपि संकल्पात् परमाशौचेऽपि कार्यः, 'व्रतयज्ञविवाहेषु श्राद्धे होमोऽर्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥' इति विष्णुवचने व्रतशब्दस्य संकल्पाङ्गककर्मपरत्वात्, 'विवाहादौ च संस्कारे वृद्धिश्राद्धे कृते सति । संकल्पे ग्रहशान्तौ च नाऽऽशौचं मन्वते बुधाः ॥' इति निर्णयामृतधृत-वचनाच्च । संत. ९४४–९४५

(५) 'ग्रहांश्चैव विधानतः' ( यास्मृ. १।२९३ ) इत्युक्तम्, तत्र विधानं दर्शयिष्यन् कर्मसिद्धेः प्रागुक्ताया अतिरिक्तं फलमाह— श्रीकाम इति । श्रीर्व्याख्याता । शान्तिः धर्मद्वारा ऐहिकानिष्टनिवृत्तिः । वृष्टिः वर्षम् । आयुः अपमृत्युजयेन दीर्घकालजीवनम् । पुष्टिः अपूर्वा-भीष्टलाभोप( ? लाभ उप )लब्धपरिरक्षणं च । एतदन्य-तरकामः अभिचरन् अदृष्टोपायेन परपीडां कामयमानो वा ग्रहयज्ञं ग्रहोद्देश्यकं सम्यक् शास्त्रोक्तेन विधिना आचरेत् कुर्यात् । वाकाराभ्यामेकस्मिन् प्रयोग एकमेव फलमिति यागसिद्धिन्यायसिद्धमभिहितम् । अपि-शब्देनाऽऽरोग्यसमुच्चयः । तथैवेत्यनेनाभिचारकामस्यापि श्रीकामादिवदेवेतिकर्तव्यता, न तु अभिचारेष्टिवद्विशेष इति दर्शितम् । वीमि.

### ग्रहगणना

**[१]सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।**
**शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥**

(१) के पुनरमी ग्रहा नाम ? — सूर्य इति । विश्व.

(२) ग्रहानाह— सूर्य इति । एते सूर्यादयो नव-ग्रहाः । मिता.

(३) ग्रहानाह— सूर्य इति । एता ग्रहयज्ञदेवताः । वृत्तवशाच्चात्र सूर्यादिशब्दनिर्देशः, यागप्रयोगे पुन-रादित्यादिशब्दैरुद्देशः कार्यः । तथा च बह्वृचगृह्यपरि-शिष्टम्— 'गुडौदनमादित्याय घृतपायसं सोमाय हविष्य-मन्नमङ्गारकाय क्षीरौदनं बुधाय षष्टिकं बृहस्पतये दध्यो-दनं शुक्राय माषौदनं तिलपिष्टमिश्रं सघृतं शनैश्चराय राहवे मांसौदनं केतवे चित्रौदनम्' इति । नैवं गद्य-ग्रन्थेऽस्मिन् श्रूयमाणशब्दस्याविवक्षायां हेतुरस्ति । अप.

(४) ग्रहानाह—सूर्य इत्यादि । यद्यपि सर्वजन-सिद्धत्वात् ग्रहाणां बहवः शब्दा वाचकाः सन्ति, शब्दो-

---

(१) यास्मृ. १।२९६ ; विश्व. १।२९१ ; मिता. ; अप. १।२९४–२९५ ; प्रपा. ७० ; संत. ९४४ ; वीमि. श्चेति ( श्चैव ) ; शाम. १२ ; विपा. ३१ ; संग. १०७ ; सस्मृ. ५५ ; संदी. ७३ क्रमेण कर्मतत्त्वदीपिकायाम् .

पहितश्चार्थोऽर्थोपहितः शब्दो वा देवता, उभयथाऽपि शब्दानियमादविनिगमना स्यात्, तथाऽपि सूर्यसोममङ्गलबुधबृहस्पतिशुक्रशनैश्चरराहुकेतुपदैः पूजनम्, सर्वजनसिद्धत्वात्। संत. ९४५

(५) ग्रहानाह– सूर्य इति। स्मृताः स्मृतावुक्ताः। चकारात् श्रुतावुक्ताश्च। एवकारेणान्येषां ग्रहत्वं व्यवच्छिनत्ति। एषां महीपुत्रादिशब्देनोपात्तानामपि देवतात्वं महादानाद्युक्तरूपेण बोध्यम्। केतुरित्येकवचनं गणाभिप्रायेण, केतूनां बहुत्वात्। वीमि.

ग्रहप्रतिमाप्रकृतिद्रव्याणि

**[१]ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकादुभौ।**
**राजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात्॥**

(१) किमेते गगनस्थाः पूज्यन्ते? नेत्युच्यते– ताम्रिकादिति। उभौ बुधबृहस्पती सौवर्णकौ कार्यौ। केतुस्तु संनिधानात् सीसकादेव। इमे इति वचनात् पुरुषविग्रहेणेति गम्यते। अर्थवादोत्थाद्वेतिहासात् त्रिग्रहावगतिः। विश्व.

(२) ग्रहाः पूज्या इत्युक्तम्, किं कृत्वेत्याह– ताम्रकादिति। सूर्यादीनां मूर्तयस्ताम्रादिभिर्यथाक्रमं कार्याः। मिता.

(३) आदित्यादिग्रहप्रतिमाप्रकृतिद्रव्याण्याह– ताम्रकादिति। ताम्रमेव ताम्रकं तस्मादादित्यस्य प्रतिमा कार्या। स्फटिकात् सोमस्य। रक्तचन्दनादङ्गारकस्य। स्वर्णकाद्बुधबृहस्पत्योः। रजतात् शुक्रस्य। कृष्णमयः कार्ष्णायसम्, तस्मात् शनैश्चरस्य। सीसाद्राहोः। कांस्यात् केतोः। अप.

(४) ग्रहपूजायाः प्रतिमासाध्यत्वात् तत्र द्रव्याण्याह– ताम्रकादिति। अत्र पञ्चम्यस्तृतीयार्थाः। ग्रहप्रतिमाकारास्तु स्मृत्यन्तरे द्रष्टव्याः, विस्तरभयान्नेह लिखिताः। वीमि.

पटे मण्डलेषु वा लेखनम्, पूजाविधिः, चरवः

**[१]स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा।**
**यथावर्णं प्रदेयानि वासांसि कुसुमानि च॥**

(१) शक्त्यपेक्षया तु ताम्राद्यभावे– स्ववर्णैरिति। सर्वकल्पेष्वेव– यथावर्णमिति। यथावर्णं ताम्रादिप्रतिकृतिवर्णं एवैषां वर्णं इत्यवसेयम्। विश्व.

(२) तदलाभे स्ववर्णैः वर्णकैः पटे लेख्याः। गन्धैर्मण्डलकेषु वा। गन्धैः रक्तचन्दनादिभिः यथावर्णं लेख्या इत्यन्वयः। द्विभुजत्वादिविशेषस्तु मत्स्यपुराणोक्तो द्रष्टव्यः। ग्रहपूजाविधिमाह– यथावर्णमिति। यथावर्णं यस्य ग्रहस्य यो वर्णस्तद्वर्णानि वस्त्रगन्धपुष्पाणि देयानि बलयश्च। *मिता.

(३) एते ग्रहाः अग्निं प्रणीयाग्न्यायतनस्योत्तरपूर्वदेशे पूज्याः। तथा च मत्स्यपुराणम्– 'गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृताम्। वप्रत्रयान्वितां वेदिं वितस्त्युच्छ्रायसंयुताम्। संस्थापनाय देवानां चतुरश्रामुदक्प्लवाम्॥'। कुर्यादिति शेषः। गर्तः खातमग्न्यायतनम्। वप्रः मेखला। 'अग्निप्रणयनं कृत्वा तस्यामावा-

* संत. मितागतम्।

(१) यास्मृ. १।२९७; विश्व. १।२९२ ताम्र (ताम्रि) राजता (रजता) कांस्यात् (ग्रहाः) ग्रहाः क्रमात् (क्रमादिमे); मिता.; अप. १।२९५–२९६ राजता (रजता); प्रपा. ७० स्फटि (स्फाटि) राजतादयसः (रजतादायसात्); संत. ९४४ स्फटि (स्फाटि) राजता (रजता); वीमि. संतवत्; शाम. १३ स्वर्णका (स्वर्णजा) राजता (रजता) क्रमात् (तथा); विपा. ३१ अपवत्: ५३९ (=) अपवत्; सस्मृ. ५५ दयसः (दायसात्); संदी. ९० संतवत्.

(१) यास्मृ. १।२९८; विश्व. १।२९३ गन्धैर्मण्ड (गन्धमण्ड); मिता.; अप. २९६–२९७ गन्धैर्मण्डलकेषु (गन्धमण्डलकेऽपि); प्रपा. ७० पू.; दीक. स्ववर्णै (स्वैर्वर्णै); संत. ९४४ दीकवत्; वीमि. केषु वा (केऽथवा); शाम. १७ उत्त.; विपा. ३१; संग. १२२ उत्त., ग्रहदीपिकायाम्; सस्मृ. ५५ स्ववर्णैर्वा (सुवर्णे वा); संदी. ९० पू.

हयेत्सुरान् ।' । तस्यां तिस्रः कोष्ठकपङ्क्तयः कार्याः । एकैकस्यां त्रयस्त्रयः कोष्ठका भवन्ति । एते चाऽऽदित्याभिमुखाः स्थाप्याः । ‡अप.

(४) पटे, तदभावे गोमयलिप्तभूभागे । §दीक.

(५) इदं च चिरकालव्यापिनोऽयुतहोमादेः करणपक्षे, इतरथा तु पटादिलिखितेष्वेव ग्रहेषु पूजा कार्येत्याह— स्ववर्णैरिति । स्ववर्णैस्तत्तद्ग्रहसमानवर्णैर्वर्णकैः पटे वस्त्रे ग्रहा लेख्याः । अथवा गन्धैश्चन्दनादिभिः मण्डलके सम्यक्संस्कृतभूभागे लेख्याः । प्रथमवाकारेणानुक्तैस्ताम्रपात्रादिभिर्विकल्पमाह । तथा च देवीपुराणम्— 'ताम्रपात्रे च कर्तव्या ग्रहा भागविकल्पिताः । श्यामे वा मण्डले वाऽपि सर्वकामफलप्रदाः ॥' इति । पूजाविधिमाह— यथावर्णमिति । वीमि.

**[1]गन्धश्च बलयश्चैव धूपो देयश्च गुग्गुलुः ।**
**कर्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम् ॥**

(१) सर्वेषां चाऽऽदित्यादीनां ग्रहाणाम्— कर्तव्या इति । तन्त्रवन्तः एकतन्त्रा इत्यर्थः । चशब्दात् प्रत्येकं पूजाविधिरवसेयः । विश्व.

(२) धूपश्च सर्वेभ्यो गुग्गुलुर्देयः । चरवश्च प्रतिदैवतमग्निप्रतिष्ठापनान्वाधानादिपूर्वकं 'चतुरश्चतुरो मुष्टीन्निर्वपत्यमुष्मै त्वा जुष्टं निर्वपामि' इत्यादिविधिना कार्याः । अनन्तरं सुसमिद्धेऽग्नाविध्माधानाद्याघारान्तं कर्म कृत्वा आदित्याद्युद्देशेन यथाक्रमं वक्ष्यमाणमन्त्रैर्वक्ष्यमाणाः समिधो वक्ष्यमाणप्रकारेण हुत्वा चरवो होतव्याः । मिता.

(३) धूपार्थं च गुग्गुलुर्देयः । अत्र वृत्तवशात्क्रमो न विवक्षितः, सोऽन्यतोऽवगन्तव्य इति गन्धपुष्पधूपवस्त्रबलयः क्रमेण देयाः । अत्र सर्वेभ्यो ग्रहेभ्यो गन्धपुष्पाणि देयानि, तथा धूपादि, न पुनरेकस्मै गन्धादिबलिपर्यन्तं दत्वाऽन्यस्मै देयम् । होमविधिमाह — कर्तव्या इति । न केवलमादित्यादीनां पूजैव कार्या । किंतु प्रत्येकं चरवश्च । ते च मन्त्रवन्तः कार्याः । अनवस्रावितो विशदोऽन्तरूष्मपक्व ओदनः चरुः । 'तन्त्रवन्तः' इति पाठे पाकयज्ञेतिकर्तव्यता तन्त्रम् । अत्र च नवानामपि ग्रहयागानां(? णां) तुल्यकालत्वादिध्माद्यभेदः । तदाह शौनकः — 'एकबर्हिरिध्माज्यस्विष्टकृतः स्युस्तुल्यकालाः । तदेषाऽभि यज्ञभागा गाथाऽभिगीयते(? यज्ञगाथा गीयते)— पाकयज्ञान्समासाद्य एकाज्यानेकबर्हिषः । एकस्विष्टकृतः कुर्यान्नानाऽपि सति दैवते ॥' इति । अप.

(४) मन्त्रवन्तः 'ओं सूर्याय त्वा जुष्टं निर्वपामि' इतिमन्त्रयुक्ताः । यजुषां ग्रहणनिर्वापप्रोक्षणमन्त्रयुक्ताः, ऋग्वेदिनां तु निर्वापप्रोक्षणमन्त्रयुक्ताः । चरुद्रव्यमाह गोभिलः — 'अथ हविर्निर्वपति व्रीहीन्यवान्वा' इति । तदभावे शालिगोधूमावपि ग्राह्यौ, 'यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत् । यवा मुद्गाश्च गोधूमा व्रीहीणामिव शालयः ॥' इति छन्दोगपरिशिष्टात् । संत. ९४७

(५) गन्धाश्च यथावर्णं तत्तद्ग्रहवर्णानुसारेण देयाः । बलयो वक्ष्यमाणा देयाः । धूपश्चासंभवे सर्वेषां गुग्गुलुर्देयः । संभवे तु चिन्तामणौ विशेषः — 'रवेः कुन्दुरकं धूपः शशिनस्तु घृतं तथा । भौमे सर्जरसं चैव अगुरुश्च बुधे स्मृतः ॥ सिह्लं गुरवे दद्याच्छुक्रे बिल्वागुरु स्मृतम् । गुग्गुलं मन्दचारे तु लाक्षा राहोश्च केतवे ॥' । प्रतिदैवतं तं तं ग्रहमुद्दिश्य 'सूर्याय त्वा जुष्टं निर्वपामि' इत्यादिनिर्वापमन्त्रवन्तश्चरवोऽम्बरबाष्पसिद्धौदनाः कर्तव्याः । कुसुमानि चेति चकारेणाक्षताश्च यथावर्णं देया इत्युक्तम् । गन्धाश्च इति चकारो दीपसमुच्चयार्थः । बलय-

‡ शेषं मितावत् ।

§ शेषं मितागतम् ।

(१) यास्मृ. १।२९९ ; विश्व. १।२९४ गन्ध (गन्धा) देयश्च गुग्गुलुः (देयः सगुग्गुलुः) कर्तव्या मन्त्र (कर्तव्यास्तन्त्र) ; मिता. व्याख्यानात् 'तन्त्रवन्तः' इत्येव पाठो मितासंमतः इति भाति ; अप. १।२९७–२९८ गन्ध (गन्धा) ; संत. ९४४ गन्ध (गन्धा) देयश्च गु (देयः सगु) ; वीमि. अपवत् ; शाम. १७ पू. ; विपा. ३१ गन्ध (गन्धा) गुग्गुलुः (गुग्गुलः); संग. १२२ अपवत्, पू., ग्रहदीपिकायाम् : १२५ मन्त्रवन्तश्च (अम्बुवन्तश्च) उत्त. ; सस्मृ. ५५ संतवत्, पू.

श्चेति नैवेद्यसमुच्चयार्थः । एवकार आवश्यकत्वार्थः । देयश्चेति चकारेण फलाधिक्यार्थकताम्बूलादेः परिग्रहः । मन्त्रवन्तश्चेति चकारेण चतुर्मुष्टिपरिमितत्वादिचतुर्धर्मसमुच्चयोऽर्थः । वीमि.

ग्रहाणां मन्त्राः

**[1]आ कृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत् ।**
**उद् बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्तिताः ॥**

**[2]बृहस्पते अति यदर्यस्तथैवान्नात्परिस्रुतः ।**
**शं नो देवीस्तथा काण्डात्केतुं कृण्वन्निमास्तथा ॥**

(१) अमी तु सर्वार्थाः प्रधानमन्त्राः— आ कृष्णेनेति । विश्व.

(२) ग्रहमन्त्रानाह — आ कृष्णेति । 'आ कृष्णेन रजसा वर्तमानः' इत्यादयो नव मन्त्राः यथाक्रमं आदित्यादीनां वेदितव्याः । मिता.

(३) होममन्त्रानाह— आ कृष्णेनेति । भगवतो योगीश्वरस्य वाजसनेयत्वात् वाजसनेयके समाम्नाता एवात्र मन्त्रा ग्राह्याः । तत्रत्यान्येवाऽऽर्षादीनि वेदितव्यानि । आ कृष्णेनेत्याद्या नवसंख्याका मन्त्रा नवसंख्याकेष्वेवाऽऽदित्यादिदेवत्येषु होमेषु यथासंख्यं प्रकीर्तिताः विहिताः । तत्रैकैकस्य चरोरेकैवाऽऽहुतिः पाकयज्ञातिदेशेन प्राप्ता सत्येकैकेन मन्त्रेण कार्या, आहुतीनां संख्यान्तराविधानात् । आ कृष्णेनेति हिरण्यस्तूप आङ्गिरस ऋषिरादित्यो देवता त्रिष्टुप्छन्दः । इमं देवा इति देवाः सोमो यजुः । अग्निर्मूर्धेति विश्वरूप आङ्गिरसोऽङ्गारको गायत्री । उद्बुध्यस्वेति परमेष्ठी बुधस्त्रिष्टुप् । बृहस्पत इति गृत्समद आङ्गिरसो भार्गवशौनको वा बृहस्पतिस्त्रिष्टुप् । अन्नात्परिस्रुत इति अश्विसरस्वतीन्द्राः शुक्रोऽतिजगती । शं नो देवीरिति सिन्धुद्वीपः शनैश्चरो गायत्री । काण्डात्काण्डादित्यग्नी राहुरनुष्टुप् । केतुं कृण्वन्निति मधुच्छन्दाः केतुर्गायत्री । अप.

(४) पूजाबलिदानयोर्वक्ष्यमाणहोमे च सूर्यादीनां क्रमेण मन्त्रानाह— आ कृष्णेनेति । तथाशब्दैश्चकारेण तत्तच्छाखोक्तान् मन्त्रान् शाखाविशेषव्यवस्थितानभिप्रैति । एवकारेणापरशाखीयमन्त्रव्यवच्छेदः । वीमि.

(१) यास्मृ. १।३०० ; विश्व. १।२९५ ; मिता. ; अप. १।२९८–२९९ ; संत. ९४४ ; वीमि. ; विपा. ३१.

(२) यास्मृ. १।३०१ न्निमास्तथा ( न्निमांस्तथा ) ; विश्व. १।२९६ न्निमास्तथा ( न्निमा अपि ) ; मिता. ; अप. १–२९९–३०० विश्ववत् ; संत. ९४४ न्निमास्तथा ( न्निति क्रमात् ) ; वीमि. ; विपा. ३२.

ग्रहाणां समिधः

***[1]अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ।**
**उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥**

(१) पाकयज्ञसामान्येन च यज्ञवृक्षमात्रात् समित्प्रसक्तावपवादमाह—अर्क इति । विश्व.

(२) इदानीं समिध आह— अर्क इति । अर्कपलाशादयो यथाक्रमं सूर्यादीनां समिधो भवन्ति । ताश्चाऽऽर्द्रा अभग्नाः सत्वचः प्रादेशमात्राः कर्तव्याः । मिता.

(३) चरुहोमानन्तरं समिधां स्वरूपप्रतिपादनपूर्वकं तद्धोममाह— अर्क इति । अप.

(४) ईश्वरादिदेवानां स्वस्वग्रहसमिद्भिरेव होमः । शाम. १८

आहुतिसंख्या, समिदज्ञनद्रव्याणि

**[2]एकैकस्य त्वष्टशतमष्टाविंशतिरेव वा ।**
**होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः ॥**

* वीमिव्याख्यानमग्रिमश्लोके द्रष्टव्यम् ।

(१) यास्मृ. १।३०२ रस्त्वपा ( र अपा ) ; विश्व. १।२९७ शः खदिरस्त्वपा ( शखदिरावपा ) ; मिता. यास्मृवत् ; अप. १।३००–३०१ ; संत. ९४४ ; वीमि. ; शाम. १८ यास्मृवत् ; विपा. ३२ ; संग. १२५ दूर्वा ( दूर्वाः ) ; सस्मृ. ५५ यास्मृवत् ; संदी. ९२ रस्त्वपा ( रः अपा ) उदुम्बरः ( औदुम्बरः ) दूर्वा ( दूर्वाः ).

(२) यास्मृ. १।३०३ स्य त्वष्ट ( स्यात्राष्ट ) विश्व. १।२९८ स्य त्वष्ट ( स्यात्राष्ट ) क्षीरेण वा युताः ( चैव सम-

( १ ) इदानीं संख्याविशेषार्थमाह– एकैकस्येति । यद्वा, अयमपूर्वः समिद्धोमः अङ्गत्वेन विधीयते । ततश्च प्राशनान्ते पूर्वमन्त्रैरेव कर्तव्यः । वैकल्पिकश्चायं चरुभिः सह समिद्धोमविधिरिति संप्रदायः । विश्व.

( २ ) किंच, आदित्यादीनामेकैकस्याष्टशतसंख्या अष्टाविंशतिसंख्या वा यथासंभवं मधुना सर्पिषा दध्ना क्षीरेण वा युता अक्ता अर्कादिसमिधो होतव्याः ।

मिता.

( ३ ) अर्काद्याः समिधो यथा ग्रहस्या( ? यथा-ग्रहम )ष्टोत्तरशतमष्टाविंशतिर्वा मधुघृताभ्यां दधिपयोभ्यां वाऽभ्यक्ताः पूर्वोक्तैर्मन्त्रैर्होतव्याः । एकैकस्येति षष्ठी चतुर्थ्यर्थे । एषा च संख्या समिधामेव, तदेकवाक्यत्वात् । न च सकृन्मन्त्रमुच्चार्यैकदेवतात्वेन सह समिधः प्रक्षेप्तव्याः, किंत्वेकैकाः, प्रत्येकं च मन्त्रावृत्तिः । तदुक्तं मत्स्यपुराणे – ' स्वेन स्वेनैव मन्त्रेण होतव्याः समिधः पृथक् । ' । तथा– ' प्रादेशमात्राः सशिखाः शाखापर्णविपाटिताः । समिधः कल्पयेत्प्राज्ञः सर्वकर्मसु सर्वदा ॥ ' । अप.

( ४ ) सूर्यादेः क्रमादेकैकस्याष्टशतमष्टाधिकं शतमष्टाविंशतिर्वा अर्काद्याः समिधो मधुघृताभ्यां युक्तेन दध्ना क्षीरेण वा संयुताः सत्यो होतव्याः । समित्संख्या चाऽऽहुतिसंख्यामेवोपलक्षयति । क्षीरेणेत्यादौ ' चैव समन्विताः ' इति सांप्रदायिकः पाठः । अपामार्गः चटचडी इति प्रसिद्धः । एवकारेण सर्वत्र ग्रहहोमे संख्येयमावश्यकीत्युक्तम् । अयुतहोमादौ तु आज्यतिलव्रीहियवक्षीरसमिद्भिः समसंख्यका एव होमाः कार्याः, ' समं स्यात् ' इति न्यायात् । यद्वा, तत्रापि समिधामुक्तैव संख्या । आज्यादिभिश्च यथालाभमयुतादिसंख्या पूरणीयेति । अथशब्देन एकस्य ग्रहस्याशेषसमिद्धोमानन्तरमपरस्य ग्रहस्य समिद्धोम इति क्रमं दर्शयति । चकारेण अयुतहोमादावाज्यादिद्रव्यसमुच्चयः । तुशब्दौ पादपूरणार्थौ । चिन्तामणौ तु ग्रहहोमप्रकरणे– ' अष्टोत्तरसहस्रं वा शतमष्टाधिकं तथा । अष्टाविंशतिरष्टौ वा एकैकस्य तु होमयेत् ॥ ' । ' प्रादेशमात्रा अशिखा अशुष्काश्चापलाशिनीः । समिधः कल्पयेत्प्राज्ञः सर्वकर्मसु सर्वदा । देवानामपि सर्वेषां पालाशीं परमार्थवित् ॥ ' इत्यादिस्मृत्यन्तरीयाः समिधां विशेषास्तत्र तत्रावगन्तव्याः । वीमि.

ग्रहाणामोदनाः, तत्प्रतिनिधिः, तैर्ब्राह्मणभोजनम्

**[1]गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ।**
**दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ॥**
**[2]दद्याद्ग्रहक्रमादेवं द्विजेभ्यो भोजनं बुधः ।**
**शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ॥**

( १ ) पक्षद्वयेऽपि तु – गुडौदनमिति । स्पष्टार्थौ श्लोकौ । विश्व.

( २ ) इदानीं भोजनान्याह – गुडौदनमिति । गुडमिश्र ओदनः गुडौदनः, पायसम्, हविष्यं मुन्यन्नादि,

---

न्विताः ) ; मिता. यास्मृवत् ; अप. १।३०१–३०२ स्य त्वष्टशत ( स्याष्टशतक ) वा युताः ( संयुताः ) ' वा युताः ' इति पाठ एव व्याख्यानानुसारी ; संत. ९४४ स्य त्वष्ट ( स्याष्ट ) : ९४८ स्य त्वष्ट ( स्याष्ट ) युताः ( युतम् ) ; वीमि. " क्षीरेणेत्यादौ ' चैव समन्विताः ' इति सांप्रदायिकः पाठः " इत्युक्तम् ; शाम. १८ उत्त ; विपा. ३२ : ५५१ त्वष्ट ( ह्यष्ट ) क्षीरेण वा युताः ( चापि समन्विताः ) ; संग. १२५ स्य त्वष्ट ( स्याष्ट ) क्षीरेण वा युताः ( चैव समन्विताः ) ; सस्मृ. ५५ रेव वा ( रेव च ) शेषं यास्मृवत् .

( १ ) यास्मृ. १।३०४ ; विश्व. १।२९९ हविश्चूर्णं ( हविः पूपान् ) ; मिता. व्याख्याने ' चित्रान्नम् ' इत्यत्र व्याख्येयत्वेन ' चित्रौदनः ' इति पदं गृहीतम् ; अप. १। ३०२–३०३ उत्तरार्धे ( दध्योदनं घृतान्नं च कृसरामिषचित्रकम् ॥ ) ; संत. ९४४ षाष्टिकम् ( षष्टिकम् ) ; वीमि. ; शाम. १७ गुडौ ( गुडो ) ; विपा. ३२ ; सस्मृ. ५५ गुडौ ( गुडो ) ; चित्रान्नमेव च ( चित्रौदनं तथा ).

( २ ) यास्मृ. १।३०५ ; विश्व. १।३०० देवं ( देतत् ); मिता. ; अप. १।३०३–३०४ विश्ववत् ; संत. ९४४ देवं ( चेदं ) ; वीमि विश्ववत् ; शाम. १७ विश्ववत् ; विपा. ३२ विश्ववत् ; संग. १२३ उत्त ; सस्मृ. ५५ देवं ( देव ) बुधः ( तथा ).

क्षीरषाष्टिकं क्षीरमिश्रः षाष्टिकौदनः, दध्ना मिश्र ओदनः दध्योदनः, हविः घृतौदनः, चूर्णं तिलचूर्णमिश्र ओदनः, मांसं भक्ष्यमांसमिश्र ओदनः, चित्रौदनः नानावर्णौदनः, एतानि गुडौदनादीनि यथाक्रममादित्याद्युद्देशेन भोजनार्थं द्विजेभ्यो ब्राह्मणेभ्यो दद्यात्। ब्राह्मणसंख्या यथाविभवं द्रष्टव्या। गुडौदनाद्यभावे तु यथालाभमोदनादि पादप्रक्षालनादिविधिपूर्वकं सत्कृत्य संमानपुरःसरं दद्यात्। मिता.

(३) भुज्यते इति व्युत्पत्त्या भोज्यमेव भोजनम्। षष्टिकः व्रीहिविशेषः। गुडौदनं(? नादि) सर्वमेवात्र चित्रकम्। * अप.

(४) बलिद्रव्याणि कथयन्नेव तेषां विनियोगमाह– गुडौदनमिति। शक्तितः शक्तौ सत्यामेतत् गुडौदनादि सूर्यादिग्रहक्रमेण। गुडौदनाद्यसंभवे वा यथालाभं घृतपायसाद्येकजातीयमेव सर्वग्रहेभ्यो विधिपूर्वकं बलिरूपतयोत्सृज्य तदेव ब्राह्मणेभ्यो भोजनं सत्कृत्य दद्यात्। क्षीरषाष्टिकं क्षीरमिश्रं षाष्टिकौदनम्, हविः सघृतौदनम्, चूर्णं तिलचूर्णमिश्रौदनम्, चित्रान्नम्– 'तिलतण्डुलमुद्गं च अजाक्षीरं च शोणितम्। कर्णनासागृहीतं स्याच्चित्रौदनमुदाहृतम्॥' इति परिभाषितम्, शेषं प्रसिद्धम्। एवकारेण शक्तावुक्तद्रव्यविशेषाणामावश्यकत्वं दर्शयति। चकारेण स्मृत्यन्तरोक्तद्रव्याण्यभ्यनुजानीते। यथा– 'गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम्। अङ्गारके मसूरान्नं क्षीरान्नं सोमसूनवे॥ दध्योदनं च जीवाय शुक्राय च घृतौदनम्। शनैश्चराय कृसरमाजमांसं च राहवे। चित्रौदनं च केतुभ्यः सर्वभक्षैरथार्चयेत्॥'। वीमि.

ग्रहाणां दक्षिणाः

**'धेनुः शङ्खस्तथाऽनड्वान् हेम वासो हयः क्रमात्।**
**कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः॥**

(१) एवं ब्राह्मणान् भोजयित्वा तेभ्य एव– धेनुरिति। शक्त्यपेक्षं चैषां परिमाणम्। विश्व.

(२) दक्षिणामाह– धेनुरिति। धेनुः दोग्ध्री, शङ्खः प्रसिद्धः, अनड्वान् भारसहो बलीवर्दः, हेम सुवर्णम्, वासः पीतम्, हयः पाण्डुरः, कृष्णा गौः, आयसं शस्त्रादि, छागः प्रसिद्धः। एता धेन्वादयः यथाक्रममादित्याद्युद्देशेन ब्राह्मणानां दक्षिणाः स्मृताः उक्ता मन्वादिभिः। एतच्च संभवे सति। असंभवे तु यथालाभं शक्तितोऽन्यदेव यत्किंचिद्देयम्। मिता.

(३) दक्षिणा आह– धेनुरिति। ग्रहक्रमेण दक्षिणा दातव्याः। धेनुः नवप्रसूता गौः। अनसः वोढा गौः अनड्वान्। आयसं लोहमयम्। प्रसिद्धमन्यत्। एताश्च दक्षिणा ऋत्विग्भ्य एव देयाः। अप.

(४) अविशेषोक्तेऽपि रक्ता धेनुः, रक्तोऽनड्वान्, पीतं वासः, बह्वृचगृह्यपाठात्। बुधे रजतस्वर्णयोर्विकल्पः। 'इमां रक्तां धेनुं भवद्भ्यां ददानि, सूर्यः प्रीयताम्' इत्यादिवाक्येनाऽऽचार्यब्रह्मणोरेकैकस्य दानम्। आचार्याय वा देयम्। दक्षिणा ब्रह्मणे किंचिद्देयमित्येके। एतद्दक्षिणासंभवे भूहिरण्यादिद्रव्यान्तरं वा। 'इदं हिरण्यं भवद्भ्यां ददानि, सूर्यादयः प्रीयन्ताम्' इत्यादि। वस्त्रमाल्यादिभिराचार्यब्रह्मणोस्तोषणम्। यज्ञोपकरणमाचार्यस्य। निप्र. २२८

(५) ग्रहयज्ञदक्षिणामाह– धेनुरिति। धेन्वादिकं क्रमात् सूर्यादिग्रहयज्ञदक्षिणात्वेन तत्तद्ग्रहप्रीतिकामो द्विजेभ्यो दद्यादिति पूर्वश्लोकस्थमनुषज्यते। तथाशब्देनासंभवे हिरण्यस्य सर्वत्र दक्षिणात्वमुक्तम्। वैशब्दः पादपूरणाय। वीमि.

---

* शेषं मितागतम्।

(१) यास्मृ. १।३०६; विश्व. १।३०१ (धेनुं शङ्खमनड्वाहं काञ्चनं वसनं हयम्। कृष्णां गामायसं छागं प्रदद्याद्दक्षिणाः क्रमात्॥); मिता.; अप. १।३०४–३०५; प्रपा. ७९; निप्र. २२८ (=) क्रमात् (तथा) रायसं (रायसः) स्मृताः (क्रमात्); संत. ९४४ क्रमात् (तथा) स्मृताः (क्रमात्); वीमि.; विपा. ३२ रायसं (रायसः) स्मृताः (क्रमात्); सस्मृ. ५५ क्रमात् (सितः) (रायसं) (रायुधं).

केवलदुःस्थितव्यस्तग्रहपूजनम्

[१]यश्च यस्य यदा दुःस्थः स तं यत्नेन पूजयेत् ।
ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ॥

( १ ) एवं तावत् समस्तग्रहपूजा विघ्नोपशमनाय कामसंयोगेन चोक्ता । ज्योतिःशास्त्रानुसारेण त्वेकैकमपि— यश्चेति । कस्मात्— ब्रह्मणेति । पूजा च प्रत्येकमप्युक्त-विधिलक्षणैव । विश्व.

( २ ) शान्तिकामेनाविशेषेण सर्वे ग्रहाः पूजयितव्या इत्युक्तम् , तत्र विशेषमाह— यस्येति । यस्य पुरुषस्य यो ग्रहो यदा दुःस्थः अष्टमादिदुष्टस्थानस्थितः स तं ग्रहं तदा यत्नेन विशेषेण पूजयेत् । यस्मादेषां ग्रहाणां ब्रह्मणा पूर्वं वरो दत्तः— पूजिताः सन्तो यूयमिष्टप्रापणेनानिष्ट-निरसनेन च पूजयितारं पूजयिष्यथेति । मिता.

( ३ ) इतरग्रहपूजायामसमर्थ एकमेव यत्नेनाऽऽदरे-णोक्तविधिना पूजयेत् । * अप.

( ४ ) दुःस्थो यत्नेन, सुस्थः स्वल्पेन पूजनीयः । * दीक.

( ५ ) ' शान्तिकामो ग्रहयज्ञं समाचरेत् ' ( यास्मृ. १।२९५ ) इत्यनेन सर्वग्रहाणां सति संभवे पूज्यत्वमुक्तम् । असंभवे त्वाह— यस्येति । चकारस्त्वर्थः, तेन दुःस्थ-भिन्नस्य विशिष्टपूजावश्यकत्वं व्यवच्छिद्यते । ‡ वीमि.

ग्रहयज्ञे नरेन्द्राणां विशेषेणाधिकारः

[२]ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ।
भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥

( १ ) भूयश्च ग्रहाणां प्रत्येकं संहतानां च पूज्यत्वे हेतुमाह— ग्रहाधीना इति । स्पष्टार्थः श्लोकः । विश्व.

( २ ) अविशेषेण द्विजानधिकृत्य शान्तिकपौष्टिका-दीनि कर्माण्यनुक्रान्तानि, तत्राभिषेकगुणयुक्तस्य राज्ञो विशेषेणाधिकार इत्याह— ग्रहाधीना इति । नरेन्द्राणाम् अभिषिक्तक्षत्रियाणां ग्रहाः पूज्यतमाः । अनेनान्येषामपि पूज्या इति गम्यते । उभयत्र कारणमाह— प्राणिनामभ्यु-दयविनिपाता ग्रहाधीनाः यस्मात्तस्मादधिकारिभिः पूज्याः । किंच, जगतः स्थावरजङ्गमात्मकस्य भावाभावौ उत्पत्ति-निरोधौ ग्रहाधीनौ । तत्र यद्येते पूजितास्तदा स्वकाल एवो-त्पत्तिनिरोधौ भवतः । अन्यथा उत्पत्तिसमये नोत्पादः अकाले निरोधश्च । जगदीश्वरत्वाच्च नरेन्द्राणां तद्योगक्षेम-कारिणां पूज्यतमा ग्रहा इति तेषां विशेषेण शान्तिकादि-ष्वधिकारः । तथा च गौतमेन ' राजा सर्वस्येष्टे ब्राह्मण-वर्जम् ' ( ११।१ ) इति राजानमधिकृत्य ' वर्णानाश्रमां-श्च न्यायतोऽभिरक्षेच्च । ततश्चैतान् स्वधर्मे स्थापयेत् ' ( ११।९, १० ) इत्यादीन् कांश्चिद्धर्मानुक्त्वा— ' यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत, तदधीनमपि ह्येके योगक्षेमं प्रतिजानते ' ( ११।१८ ) इति शान्तिक-पौष्टिकाद्यनुष्ठानहेतुमभिधाय ' शान्तिकपुण्याहस्वस्त्ययना-युष्यमङ्गलसंयुक्तानि आभ्युयिकानि विद्वेषिणः( ? षण )-स्तम्भनाभिचारद्विषद्व्यृद्धियुक्तानि च शालाग्नौ कुर्यात् ' ( ११।१९ ) इति शान्तिकादीनि दर्शितानि । * मिता.

( ३ ) अत्रैव हेत्वन्तरमाह— ग्रहाधीना इति । अनेक-जन्मार्जितपुण्योपचयवतामपि नरेन्द्राणां यतो ग्रहाधीना उच्छ्रायाः संपदतिशयाः पतनानि च विपदतिशयरूपाणि, तथा जगतो भावाभावौ उदयप्रलयौ ग्रहाधीनावेव, तस्माद-न्येभ्यः पूज्यतरेभ्योऽतिशयेन ग्रहा उक्तप्रकारेण पूज्याः । यद्यपि धर्माधर्मौ सुखदुःखानुभवहेतू तथाऽपि कालविशेष-

---

* शेषं मितागतम् ।

‡ शेषं मितागतं दीकवच्च ।

( १ ) यास्मृ. १।३०७ ; यश्च (यस्य); विश्व. १।३०२; मिता. यश्च ( यस्य ) व्याख्याने तु ' यश्च ' इति पाठः स्वीकृत इति भाति ; अप. १।३०५–३०६ ; संत. ९४४ यदा ( सदा ) ; वीमि. यश्च यस्य ( यस्य यश्च ) ; विपा. ३२ स तं ( तदा ) शेषं वीमिवत् ; संग. १०७ दुःस्थः ( दुष्टः ) ; सस्मृ. ५५ पू.

( २ ) यास्मृ. १।३०८ ; विश्व. १।३०३ मुच्छ्रायाः ( मुच्छ्रयाः ) ; मिता. ; अप. १।३०६–३०७ ; प्रपा. ६८ विश्ववत् , स्मृतिचन्द्रिकायामित्युक्तम् ; संत. ९४४ मुच्छ्रायाः ( मुच्छ्रायः ) ; वीमि. ; शाम. ११ ; विपा. ३३ ; संग. १०६–१०७ धीना ( धीनो ) शेषं संतवत् ।

* वीमि. मितागतम् ।

मनपेक्ष्य न तद्धेतू भवतः । न च ग्रहाणां गतिविशेषमन्तरेण कालविशेषः शक्यो निरूपयितुमिति भवति ग्रहाधीनत्वं नरेन्द्रोच्छ्रायादेः । अतो विरुद्धं ग्रहस्थानं दृष्ट्वा तत्सूचितागामिदुःखसंघातविघाताय ग्रहयज्ञः कार्यः । स हि शान्तिकामस्य विहित इति तात्पर्यार्थः । अप.

(४) अत्र नरेन्द्रग्रहणमुपलक्षणम् । संग. १०७

ग्रहयज्ञस्य प्रतिसंवत्सरकर्तव्यता तत्फलं च

[1]ग्रहाणामिदमातिथ्यं कुर्यात्संवत्सरादपि ।
आरोग्यबलसंपन्नो जीवेत्स शरदः शतम् ॥

## बृहस्पतिः

असंस्कृतमन्त्रस्य आचार्यत्वेऽनधिकारः

[2]आथर्वणं प्रतिष्ठां च ग्रहयज्ञं ऋतुं व्रतम् ।
असंस्कृतमनुः कुर्वन् शीघ्रमेति विपर्ययम् ॥

## कात्यायनः

ग्रहगोत्रजातिज्ञानस्याऽऽवश्यकत्वम्

[3]तद्गोत्रजातीरज्ञात्वा होमं यः कुरुते नरः ।
न तस्य फलमाप्नोति न च तुष्यन्ति देवताः ॥
न हुतं न च संस्कारो न च यज्ञफलं लभेत् ॥

ग्रहाणां जातयः

[4]ब्राह्मणौ भार्गवाचार्यौ क्षत्रियावर्कलोहितौ ।
वैश्यौ सोमबुधौ चैव शेषाञ्शूद्रान् विनिर्दिशेत् ॥

## गोभिलः

ग्रहपीठस्य दिग्भेदेन फलभेदः

[5]कुण्डस्य प्रागुदीच्यां वा प्राच्यामुत्तरतोऽपि वा ।
चतुरस्रं चतुर्द्वारं कर्तव्यं ग्रहपीठकम् ॥

(१) यास्मृ. १।३०८ इत्यस्योत्तरं प्रक्षिप्तः श्लोकोऽयं निर्णयसागरमुद्रितपुस्तके.

(२) प्रपा. ७२. (३) संत. ९४७.

(४) संत. ९४७ वसिष्ठगोभिलकात्यायनाः.

(५) शाम. ११-१२.

श्रीकामः पूर्वतः कुर्यात्पुष्ट्यर्थं दक्षिणेन तु ।
पश्चाद्द्विजन्मसिद्ध्यर्थं शान्त्यर्थं चोत्तरेण तु ॥
ऐशान्यां सर्वकामाय त्वाग्नेय्यां त्वभिचारके ।
नैर्ऋत्यां पुत्रलाभाय पुष्ट्यर्थं वायवेन तु ॥

ग्रहाणां जातयो वर्णाश्च

[1]ब्राह्मणौ भार्गवाचार्यौ क्षत्रियावर्कलोहितौ ।
वैश्यौ सोमबुधौ चैव शेषाञ् शूद्रान् विनिर्दिशेत् ॥
[2]सोमपुत्रो गुरुश्चैव तदुभौ पीतकौ स्मृतौ ।
चित्राश्च केतवः ॥

## शातातपः

ग्रहयज्ञस्य कर्मादौ कर्तव्यता

[3]आदौ नवग्रहानर्च्य ततः कर्म समाचरेत् ।
नवग्रहानर्चने तु न सिद्धिर्विधिचोदिता ॥

लघुशुभकार्येषु विस्तृतग्रहयागकरणासंभवे 'आदौ नव ...' इति शुभकर्मनिर्णयोक्तशातातपवचनेन ग्रहाणां होमरहितपूजनमात्रस्यापि आवश्यकत्वप्रतिपादनेन तावन्मात्रमवश्यमनुष्ठेयम्, गणेशपूजनवत् । तावन्मात्रस्याप्यननुष्ठाने 'ब्रह्मा मुरारिः' इति पुष्पाञ्जलिसमर्पणपूर्वकं प्रणामोऽनुष्ठेयः । उपनयनविवाहादिशुभकार्येषु तु वक्ष्यमाणरीत्या होमप्रधानो ग्रहयाग एवानुष्ठातुमुचितः ।

संदी. १४५

## बृहत्पराशरः

प्रतिपाद्यविषयोद्देशः

[4]मुनीनां व्यासमुख्यानां शक्तिसूनुः पुरोऽब्रवीत् ।
शुभाय ग्रहपूजाया वदतस्तन्निबोधत ॥

(१) संत. ९४७ वसिष्ठगोभिलकात्यायनाः.

(२) संत. ९४६ वसिष्ठसंहितास्कन्दपुराणगोभिलाः.

(३) संदी. ५५,१४५.

(४) बृपसं. ११।३४-३७.

यद्वर्णा यत्सुता विद्वन् जाता देशेषु येषु च ।
तेषां त(? य)दधिदैवत्यं समिधो दक्षिणा च या ॥
यस्य यत्र च दिग्भागे मण्डलं स्याद्विवस्वतः ।
होमकर्मणि ये विप्रा या संख्या समिधामपि ॥
अग्निकुण्डप्रमाणं तु प्रमाणं समिधामपि ।
सर्वमेव यथोद्देशं वक्ष्यामि द्विजसत्तम ॥

ग्रहाणां वर्णाः पितरश्च

[1]रक्तः कश्यपजो भानुः शुक्लो ब्रह्मसुतः शशी ।
रक्तो रुद्रसुतो भौमः पीतः सोमसुतो बुधः ॥
[2]पीतो ब्राह्मः सुराचार्यः शुक्लः शुक्रो भृगूद्वहः ।
कृष्णः शनी रवेः पुत्रः कृष्णो राहुः प्रजापतेः ॥
[3]कृष्णः केतुः कृशानूत्थः कृष्णाः पापास्त्रयोऽप्यमी ॥

ग्रहाणां जन्मदेशाः

[4]कालिङ्गोऽर्को यामुनः सोम आवन्त्यो भौम उच्यते ।
मागधो बुध इत्युक्तः सैन्धवस्तु बृहस्पतिः ।
सैन्धवो¶ दानवाचार्यः सौरिः सौराष्ट्रदेशजः ॥
राहुः सिंहलदेशोत्थो मध्यदेशभवोऽग्निजः ।
जन्मदेशा इमे प्रोक्ता ग्रहजातकवेत्तृभिः ॥

ग्रहाधिदेवताः तासामवश्यज्ञेयत्वं च

शंभुं रविमुमां चन्द्रं स्कन्दं भौमं हरिं बुधम् ।
ब्रह्माणं च गुरुं विद्याच्छक्रं शुक्रं यमं शनिम् ॥
कालं राहुं चित्रगुप्तं केतुमित्यधिदैवतम् ।
एतद्विज्ञाय यः कुर्यात्तत्सर्वं सफलं भवेत् ॥

ग्रहाणां समिधः, तासां फलानि अञ्जनद्रव्याणि मानं संख्या संख्याभूयस्त्वे फलभूयस्त्वं विहितातिक्रमे राक्षसत्वं च

अर्कस्त्वर्काय होतव्यः सर्वव्याधिविनाशनः ।
सुधांशवे च सोमाय पलाशः सार्वकामिकः ॥
खदिरश्चार्थलाभाय मङ्गलाय विवेकिभिः ।
स्वरूपकृदपामार्गो होतव्यश्च बुधाय वै ॥
प्रभाप्रदस्तथाऽश्वत्थो होतव्योऽमरमन्त्रिणे ।
ऊर्जासौभाग्यकृद्दूर्वा दैत्यामात्याय सद्द्विजैः ॥
शमी पापोपशान्त्यर्थं होतव्या मन्दगामिने ।
दीर्घायुर्धर्मकृद्दूर्वा होतव्या राहवे द्विज (? द्विजैः) ॥
धर्मविद्यार्थकृद्दर्भः सद्भिर्प्रैर्वह्निसूनवे ।
दधिक्षीराज्यसंमिश्राः समिधः शुभवृद्धये ॥
प्रादेशमात्रकाः सर्वा अष्टावष्टोत्तरं शतम् ।
अष्टाविंशतिरेकैकं संख्यैषा प्रतिदैवतम् ॥
वृद्धौ तु फलभूयस्त्वमुक्तादन्यत्तु राक्षसम् ॥

ग्रहस्थापना, पटे मण्डले वा वर्णकैः पिष्टेन लिखितेषु प्रतिमासु वा पूजनम्, प्रतिमाप्रकृतयः, स्थापनदिग्भागाः

नवभवनकं लेख्यं चतुरस्रं तु मण्डलम् ।
ग्रहास्तत्र प्रतिष्ठाप्या वक्ष्यमाणक्रमेण तु ॥
मध्ये तु भास्करः स्थाप्यः पूर्वदक्षिणतः शशी ।
दक्षिणेन धरासूनुर्बुधः पूर्वोत्तरेण तु ॥
उत्तरस्यां सुराचार्यः पूर्वस्यां भृगुनन्दनः ।
पश्चिमायां शनिः कु(? सू)र्याद्राहुर्दक्षिणपश्चिमे ॥
पश्चिमोत्तरतः केतुरिति स्थाप्या ग्रहाः क्रमात् ।
पटे वा मण्डले लेख्या ईशान्यां दिशि पावकात् ॥
ताम्रोऽर्कः स्फाटिकश्चन्द्रो रक्तचन्दनकोऽपरः ।
सोमसूनुसुराचार्यौ स्वर्णशोभौ प्रकीर्तितौ ॥

---

¶ ग्रन्थान्तरेषु शुक्रस्य भोजकटदेश उक्तः । कोशे भोजकटशब्दस्य विदर्भनामत्वात् 'वैदर्भो' इति पाठोऽत्र संभवति ।

(१) बृपसं. ११।३८ ; शाम. १३.
(२) बृपसं. ११।३९ पतेः (पतिः) ; शाम. १३.
(३) बृपसं. ११।४० ; शाम. १३.
(४) बृपसं. ११।४१-८५.

राजतो भृगुपुत्रश्च कार्ष्णश्च स शनैश्चरः ।
राहुश्च सैसकः कार्यः कार्यः केतुश्च कांस्यजः ॥
सर्वानेतन्मयान्कृत्वा समभ्यर्च्य सदा गृहे ।
लेखयेद्वर्णकैः स्वैः स्वैर्विधिवत्पिष्टकेन वा ॥

ग्रहाणामधिदेवतानां च मन्त्राः

ग्रहाणां साधिदैवानां प्रतिष्ठापनमन्त्रकान् ।
वदन्ति मन्त्रतत्त्वार्थवेदिनो द्विजसत्तमाः ॥
आदित्यं गर्भमित्युक्तमग्निं दूतमनेन च ।
एताभ्यां स्थापयेदर्कं त्र्यम्बकमिति च शंकरम् ॥
अप्स्वन्तरी(? रि)ति शीतांशुं श्रीश्च ते इति पार्वतीम् ।
स्योना पृथिवीति भौमं च यदक्रन्देति वा(? वै) गुहम् ॥
इदं विष्णुर्बुधं स्थाप्य तद्विष्णोरिति वै हरिम् ।
इन्द्र आसां सुराचार्यमाब्रह्मन्निति वेधसम् ॥
इन्द्रं दैवीर्भृगोः सूनुं सजोषेत्यमराधिपम् ।
शं नो देवी रवेः सूनुं यमाय त्वा तथा यमम् ॥
आऽयं गौरिति राहुं च कालं कार्षिरसीति च ।
ब्रह्म जज्ञेति केतुं च चित्रं चित्रावसोरिति ॥
ब्रूयुरेतानि मन्त्राणि मूलमन्त्रास्तथा परे ।
आ कृष्णेन च तीव्रांशोरिमं देवा निशाकरम् (? कृतः) ॥
अग्निर्मूर्धेति भूसूनोरुद्बुध्यध्वं बुधस्य च ।
बृहस्पतेरिति गुरोरन्नात्परिस्रुतो भृगोः ॥
शं नो देवीः शनैर्गन्तुः काण्डात्काण्डात्परस्य च ।
केतुं कृण्वन्नग्निसूनोरिति मन्त्राः प्रकीर्तिताः ॥
वेदमन्त्रैर्विना कश्चिद्विधिर्नास्ति द्विजन्मनाम् ॥

होमद्रव्यम्, अञ्जनद्रव्यम्, आहुतिमानम्

कर्तव्याश्चरवो मन्त्रैः स्वैः स्वैश्च प्रतिदैवतम् ॥
सघृताः सयवाश्चापि होतव्याश्च द्विजैस्तिलाः ।
मध्यमानामिकामूललग्नाङ्गुष्ठचतसृभिः(?) ।
यावन्तोऽङ्गुलिभिर्ग्राह्यास्तिलास्तावद्भिराहुतिम् ॥

कुण्डस्य मानं स्वरूपं च

हस्तमात्रं पृथक्त्वेन वेधोऽपि तावतैव तु ।
बाहुमात्रं वदन्त्येके एके चारत्निमात्रकम् ॥
चतुरस्रं खनेत्कुण्डमेकयोनिसमन्वितम् ।
शुभमेखलया युक्तं सुशान्तिकरमुत्तमम् ॥

मण्डपस्वरूपम्, मण्डपाभावे सद्मसंस्कारः

होमार्थं मण्डपं कुर्याच्चतुर्द्वारं सतोरणम् ।
चतुर्दिक्षु ध्वजाः कार्या नानावर्णाः शुभावहाः ॥
तथा तत्रोदकुम्भाश्च दूर्वापल्लवसंयुताः ।
पुनर्नवीकृतं सद्म मण्डपाभाव आश्रयेत् ॥

ऋत्विग्गुणाः

षट्कर्मनिरताः शान्ता ये न दग्धाः प्रतिग्रहैः ।
नियोज्यास्तेऽग्निकार्यादौ स्फुरन्मन्त्रा द्विजोत्तमाः ॥
प्रतिग्रहाग्निदग्धस्य जपहोमादि कुर्वतः ।
यस्य मन्त्राण्यवीर्याणि तत्कृतं कर्म निष्फलम् ॥

ग्रहाणामन्नानि तैर्ब्राह्मणभोजनं च

ओदनं सगुडं भानोः पायसं शशिनस्तथा ।
हविष्यं भूमिपुत्रस्य क्षीरान्नं च बुधस्य च ॥
षष्टिक्यं ब्रह्मपुत्रस्य दध्ना तु (? दध्यन्नं) भार्गवस्य च ।
पूर्णं हविः शनैर्गन्तुर्मांसं राहोः शृताशृतम् ॥
चित्रान्नमग्निसूनोश्च भोज्या नामभिशस्यजाः (? रास्यजाः) ।
कृतहोमास्तथाऽन्येऽपि ये सद्वृत्ता द्विजोत्तमाः ॥

ग्रहाणां वस्त्रकुसुमगन्धधूपाः

यथावर्णानि वासांसि देयानि कुसुमानि च ।
देया गन्धाश्च सर्वेषां देयो धूपश्च गुग्गुलः ॥

ग्रहदक्षिणाः

धेनुः शङ्खो वृषः स्वर्णं वासांस्यश्वः सिता च गौः ।
अविश्छागलकश्चैव क्रमशो दक्षिणाः स्मृताः ॥

ग्रहयज्ञकालः, व्यस्तग्रहयज्ञः, ग्रहयज्ञस्य फलं कर्माङ्गत्वं च

प्रत्यहं प्रतिमासं च प्रत्यब्दं वा विधानतः ।
वर्णिभिश्च ग्रहाः पूज्या राजभिश्च सदैव हि ॥
दुःखितो यस्तु यस्य स्यात्पूज्यस्तस्य स यत्नतः ।
वेधसैते नियुक्ताः प्राक्स्वभक्तं पूजयिष्यथ ॥
वरं यच्छन्ति संहृष्टा विप्रा वह्निर्नृपा ग्रहाः ।
असंतुष्टा दहन्त्येते तस्मात्तानर्चयेत्सदा ॥
ग्रहाधीनमिदं सर्वमुत्पत्तिप्रलयात्मकम् ।
जगत्यभावभावौ च तस्मात्पूज्यतमा ग्रहाः ॥
सानुकूलैर्ग्रहैर्यानि कुर्यात्कर्माणि मानवः ।
सफलानि भवन्त्यस्य निष्फलानि स्युरन्यथा ॥
कुर्वन्ति चैतद्विधिना ग्रहाणा-
मातिथ्यमब्दं प्रतिवासरं ये ।
आरोग्यदेहा धनधान्ययुक्ता
दीर्घायुषः स्त्रीसहिता भवन्ति ॥

## गर्गः

कुण्डे योनिदेशः

[१]पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः ॥

ग्रहशान्त्युपायाः

[२]सुरार्चनेन दानेन साधूनां संगमेन च ।
शुश्रूषया च विप्राणां ग्रहारिष्टं विनश्यति ॥

## आश्वलायनः

ग्रहयज्ञफलम्

[३]ग्रहाञ्शान्त्याऽखिलान् राजा यजेदेव प्रयत्नतः ।
दिव्यान्भोगान् वरिष्ठांश्च दुर्लभानपि चाऽऽप्नुयात् ॥

(१) प्रपा. ७० ; प्र. २१ ; संर. १२४.

(२) संग. १०७.

(३) आश्वस्मृ. ८।१६४–१६५ ( ग्रहशान्त्याऽखिला-न्राजा जयेदेव प्रयत्नतः । दिव्यान्भौमानरिष्टांश्च दुर्लभानपि चाऽऽलभेत् ॥ ) ; प्रपा. ८०.

[१]शरीरेष्वासते देवा ग्रहाः सूर्यादयो नव ।
तस्मात्तेषु प्रशान्तेषु देहशान्तिर्भवेन्नृणाम् ॥

ग्रहाणां पञ्चमहाभूतादिरूपत्वम्

[२]भौमोऽग्नेः सोमजो भूम्या वियन्मूर्तिर्बृहस्पतिः ।
भार्गवोऽपां समीरस्य सौरिः सोमश्च चेतसः ॥
[३]रविरात्माऽस्यः षट् तु सर्पाख्या राहुकेतवः ।
एते वसन्ति भूतेषु चरेषु स्थावरेषु च ॥
[४]मह्यादिमूर्तयस्त्वेते ग्रहाः सूर्यादयोऽखिलाः ।
इति यस्मात्तु ते तस्माद्विकुर्वन्ति शरीरिषु ॥

ग्रहाणां शरीराश्रयेण पीडाकरत्वम्, ग्रहयज्ञस्य शान्तिकत्वं पौष्टिकत्वं च

[५]एतेऽष्टमादिस्थानस्थाः पीडयन्ति शरीरिणः ।
स्वान् स्वान् धातून्समाश्रित्य त्रिदोषांश्च तदा तदा ॥
[६]पूजिता जपहोमैश्च नमस्कारैश्च पूजया ।
शान्तास्तृप्ताः प्रदास्यन्ति यैस्तेषामिह वाञ्छितान् ॥

(१) आश्वस्मृ. ८।१६५–१६६ शरीरेष्वासते देवा ( शरीरे देवता विद्या ) ; प्रपा. ६८.

(२) आश्वस्मृ. ८।१६६–१६७ ; प्रपा. ६८ भूम्या वियन्मू ( भूमेर्व्योमभू ) सोमश्च ( सोमस्य ).

(३) आश्वस्मृ. ८।१६७–१६८ तु ( स्युः ) ख्या राहु ( त्मानश्च ) ; प्रपा. ६८.

(४) आश्वस्मृ. ८।१६८–१६९ ; प्रपा. ६८ मह्या ( ग्रहा ) त्तु ते तस्मा ( त्त एवास्मा ).

(५) आश्वस्मृ. ८।१६९–१७० ; प्रपा ६८.

(६) आश्वस्मृ. ८।१७०–१७१ ; प्रपा. ६८ पूर्वार्धे ( पूजया जपहोमैश्च पूजिताः शान्तिमिच्छुभिः । ) यैस्तेषामिह ( ह्येतेषामभि ).

[1]ग्रहा गावो नृपा विप्रा नार्यश्च स्वपतिप्रियाः।
पूजिताः पूजयिष्यन्ति निर्दहन्त्यवमानिताः ॥
[2]सर्वापद्भ्यो विमुक्त्यर्थं तस्मात्पूज्या ग्रहा मताः।
कामानां चाऽऽयुराद्यानां लब्धये च विधानतः ॥

ग्रहसंबन्धिरूपादिसकलपदार्थज्ञानस्याऽऽवश्यकत्वम्

[3]रूपवर्णायुधस्थानमण्डलासनवाहनान्।
समित्कुण्डोपहारांश्च पुष्परत्नाकृतीरपि ॥
[4]गायत्रीं मूलमन्त्रांश्च नाममन्त्रांश्च केवलान्।
अधिप्रत्यधिदेवानां मन्त्रांश्चर्ष्यादिसंयुतान् ॥
[5]तत्तन्मूर्तीश्च जानीयाद्धोष्यन्नर्चन् ग्रहान्बुधः।
अज्ञात्वैतान्पुमानिष्ट्वा तत्फलं नैव विन्दति ॥
[6]दुःखं चाऽऽप्नोति सुमहद्यत्नादिष्ट्वाऽप्यवित्पुमान्।
एतान् पृथक्पृथक् सम्यग्जानीयाद्ग्रहयज्ञकृत् ॥

(१) आश्वस्मृ. ८।१७१–१७२ ; प्रपा. ६८ नार्यश्च स्व (नार्यः स्वस्व).

(२) आश्वस्मृ. ८।१७२–१७३ ; प्रपा. ६८ तस्मात् (नित्यं) ग्रहा मताः (नवग्रहाः).

(३) आश्वस्मृ. ८।१७३–१७४ ण्डोपहारांश्च (ण्डान्नदानांश्च) रपि (नपि) ; प्रपा. ६९ वाहनान् (वाहनम्) : ८१ ; प्रर. २१.

(४) आश्वस्मृ. ८।१७४–१७५ गायत्रीं (गायत्र्योः) अधि (साधि) ; प्रपा. ६९ नामम (तथा म) : ८१ त्रीं मूलमन्त्रांश्च (त्रीमूर्तिमन्त्रान्वा) अधि (साधि) ; प्रर. २१ त्रीं मूल (त्रीमूल).

(५) आश्वस्मृ. ८।१७५–१७६ ; प्रपा. ६९ त्वैतान् (त्वैव) : ८१ विन्दति (विन्दते) ; प्रर. २१ ग्रहान् बुधः (नवग्रहान्) त्वैतान् (त्वैवं).

(६) आश्वस्मृ. ८।१७६–१७७ ; प्रपा. ७९ चाऽऽप्नोति (प्राप्नोति) : ८१ पू. ; प्रर. २१ पू.

(१) अत्र गायत्री ग्रहगायत्री। प्रणवव्याहृतिपूर्वकं चतुर्थ्यन्तं नमोन्तं ग्रहनाम ग्रहगायत्री। तथा चोक्तं वामनग्रन्थे– 'प्रणवं त्वादितः कृत्वा भूर्भुवः स्वस्ततः परम्। चतुर्थ्या नामसंयुक्तं नमस्कारान्तयोजितम् ॥ एष मन्त्रः समाख्यातो ग्रहपूजाविधायकः। अनेनाऽऽवाहनं कुर्यादनेनैव विसर्जयेत् ॥' इति। पृ. ६९

अत्रेदं विचार्यते– किमस्मिन् शिवग्रहयज्ञे प्रतिपदोक्तदेवतानामेव पूजादिकं कर्तव्यमाहोस्विदधिदेवतानामपीति ? प्रतिपदोक्तानामेव कार्यम्, नाधिदेवतादीनाम्, तत्प्रापकाभावात् इति प्राप्ते ब्रूमः– अधिदेवतादीनामपि पूजादिकं कर्तव्यमिति, तदकरणे प्रत्यवायस्मरणात्। तथा च स एवाऽऽचार्यः परिभाषायामाह– रूपवर्णेति। अत्र कुण्डग्रहणं स्थण्डिलस्याप्युपलक्षणार्थम्, 'कुण्डे वा स्थण्डिले वाऽपि होमं कुर्यात्पृथक्पृथक्।' इत्याचार्येणोक्तत्वात्। प्रपा. ८१

(२) गायत्री ग्रहगायत्री, सा प्रयोगे वक्ष्यते। वर्णादयश्च मण्डपकुण्डादि च काम्ये यथोक्तं कार्यम्, नित्यनैमित्तिकयोस्त्वनित्यम्, 'नित्यं नैमित्तिकं हित्वा सर्वमन्यत्समण्डपम्।' इति मात्स्योक्तेः, 'कुण्डे वा स्थण्डिलेऽपि वा' इति आचार्योक्तेश्च। प्रर. २१

व्यस्तसमस्तग्रहयज्ञविकल्पः

[1]प्रीणयेदखिलानेव पूजाद्यैश्च नवग्रहान्।
आत्मनो विषमस्थं वा ग्रहं प्रीणाति दुर्गतः।
तदुक्तविधिना सम्यक् शक्त्या गुर्वनुमोदितः ॥

कलशपूजनम्, ग्रहचक्रम्, भूर्भुवःस्वश्चक्रेषु ग्रह–देवतापूजनम्, होमः

[2]स्थाने स्वे स्वे पृथक्कुण्डान् स्वान् स्वान् कुर्याद्गुरुर्नव।
ग्रहाणां प्रागुदग्वेदिं सर्वलक्षणलक्षिताम् ॥

(१) आश्वस्मृ. ८।१७७–१७८ पूजाद्यैश्च (हुताद्यैस्तु) ; प्रपा. ६९ वा ग्रहं (च ग्रहं).

(२) आश्वस्मृ. ८।१७९ ; प्रपा. ७९.

[1]दक्षिणे नव कुम्भांश्च पूरयेन्नवके स्थितान् ।
गन्धाद्यैरर्चयित्वा च हुत्वा तैश्चाभिषेचयेत् ॥

[2]वेद्यां लक्षणयुक्तायां ग्रहचक्रं सुशोभनम् ।
रजोभिः पञ्चवर्णैस्तु कृत्वाऽऽवाह्यार्चयेद् ग्रहान् ॥

[3]रक्तं द्वादशपत्राब्जं वृत्तत्रयसमन्वितम् ।
राशिद्वादशकोपेतं वीथ्या चापि समावृतम् ॥

[4]बाह्यशोभोपशोभाढयं ग्रहचक्रमिति स्मृतम् ।
तन्मध्येऽर्कात्मकं शान्तं शिवमावाह्य पूजयेत् ॥
स्वे स्वे राशौ ग्रहांश्चैव सूर्यादीन् क्रमशोऽर्चयेत् ।
केत्वन्तान्मूलमन्त्रैश्च नाममन्त्रैश्च भक्तितः ॥

[5]घृतैश्चतुर्गृहीतैस्तु तत्तत्सावित्रिया हुनेत् ।
पूर्णाहुतिं च वस्वन्ते होमे(? हुनेत्) ग्रहमखे गुरुः ॥

(१) वस्वन्ते होमान्ते । प्रपा. ७४

(२) वस्वन्ते होमान्ते इति व्याख्यातं पारिजाते । अतः प्रायश्चित्तहोमान्ते पूर्णपात्रनिनयनात्प्राक् पूर्णाहुतिः कार्येत्यर्थः । संकौ. १३९

[1]मन्त्रैः प्रत्यधिदेवानां स्वचक्रे(? स्वश्चक्रे) तान् समर्चयेत् ।
तानेव च भुवश्चक्रे तथा तदधिदेवताः ॥

[2]स्वश्चक्रे च भुवश्चक्रे सपर्या मानसी भवेत् ।
स्मृत्वा भूचक्रवच्चक्रं तत्र तत्र विचक्षणः ॥
आवाहनादिकान् सर्वान् स्मृत्वा तास्ताश्च देवताः ।
सपर्या निखिलाः कृत्वा तयोः संप्रीणयेद्गुरुः ॥

[3]ध्यात्वा पूर्वं सुवश्चक्रे ग्रहप्रत्यधिदेवताः ।
तत्तन्मन्त्रैः समर्चेत मनसा स्थिरधीर्नरः ॥

[4]स्वश्चक्रात्ताः समावाह्य भुवश्चक्रे यथाविधि ।
पूजयेन्मनसा तस्मिन् ग्रहाणां चाधिदेवताः ॥

[5]ततस्तस्माद्भुवश्चक्रे विधिना कर्मशास्त्रवित् ।
प्रत्यक्षं गन्धपुष्पाद्यैरर्चयेच्च हुनेद्गुरुः ॥

[6]नवके वाऽम्बुजे वेद्यां कृते वित्पूजयेद्ग्रहान् ।
चतुरस्रेषु कुण्डेषु हुनेद्विद्वान् पृथक्पृथक् ॥

कोटिहोमादौ मण्डपस्य कर्तव्यता

[7]कोटिहोमे लक्षहोमे सहस्रे चोत्तरोत्तरे ।
मण्डपं कारयित्वाऽस्मिन्नेवं कुर्याद्ग्रहार्चनम् ॥

---

(१) आश्वस्मृ. ८।१८० के स्थि (कस्थि) ; प्रपा. ७९ च हुत्वा तैश्चाभि (तु हुत्वा चैवाभि).

(२) आश्वस्मृ. ८।१८१ ; प्रपा. ७९ ऽऽवाह्या (ऽथाभ्य).

(३) आश्वस्मृ. ८।१८२ समन्वितम् (समावृतम्) उत्तरार्धे (राशिभिर्द्वादशोपेतं वीथ्या चारुत्रयावृतम् ॥) ; प्रपा. ७९.

(४) आश्वस्मृ. ८।१८३–१८४ ; प्रपा. ७९ नाम (नाना).

(५) आश्वस्मृ. ८।१८५ ; प्रपा. ७४ उत्त. : ७९ : ८० वस्वन्ते होमे (होमान्ते हुनेत्) उत्त. ; संकौ. १३९ वस्वन्ते (वस्त्वन्ते) उत्त.

(१) आश्वस्मृ. ८।१८६ देवताः (देवताम्) ; प्रपा. ७९ नेव च (नेव तु).

(२) आश्वस्मृ. ८।१८७–१८८ ; प्रपा. ७९ स्वश्चक्रे (स्वचक्रे).

(३) आश्वस्मृ. ८।१८९ देवताः (देवताम्) ; प्रपा. ७९ सुवश्चक्रे (भुवश्चक्रे).

(४) आश्वस्मृ. ८।१९० ; प्रपा. ७९ स्वश्चक्रात्ताः (स्वचक्रान्ताः).

(५) आश्वस्मृ. ८।१९१ ; प्रपा. ७९ कर्मशास्त्रवित् (शास्त्रमार्गतः).

(६) आश्वस्मृ. ८।१९२ वेद्यां (वेद्याः) स्रेषु (रश्रेषु) द्विद्वान् (द्वा वित्) ; प्रपा. ७९.

(७) आश्वस्मृ. ८।१९३ द्वितीयपादे (सहस्रा चोत्तरे पदे) मण्डपं (मण्डलं) ; प्रपा. ७३.

आहुतिसंख्या कुण्डस्थण्डिलविकल्पश्च

[१]अष्टोत्तरशतं होममष्टाविंशतिमेव वा ।
कुण्डे वा स्थण्डिले वैकः कुर्यात्कुर्वन् पृथक्पृथक् ॥

बहुषु एकस्मिन्वा कुण्डे एककर्तृकहोमविधिः , एकस्मिन्कुण्डे बहुकर्तृकहोमनिषेधः

[२]एकस्तु बहुकुण्डेषु हुनेद्ग्रहमखे गुरुः ।
बहुष्वहःसु वैकस्मिन्नह्नि वा तद्विधानवित् ॥
[३]कुण्डे चैके तु बहुभिर्नैव होमः प्रशस्यते ।
श्रौतादन्यत्र सर्वत्र प्रायस्तन्त्रेषु वा क्वचित् ॥
[४]क्वचित्तन्त्रेषु तद् दृष्ट्वा केचिद्ग्रहमखेष्वपि ।
तथा कुर्वन्ति तत्रैव तन्न कुर्याद्बुधो गुरुः ॥
[५]यत्र यद्यद्यथा प्रोक्तं तत्तत्कुर्याद्यथोदितम् ।
नान्यथा स्वानुमानेन कुर्यात्प्राज्ञोऽपि मानवः ॥
[६]यत्रानुक्तं तु तत्रैव कुर्याद्वा स्वानुमानतः ।
विमृश्य न्यायमालोच्य दृष्ट्वाऽन्यत्र बलाबलम् ॥

[१]श्रौतं वाऽप्यथ पौराणं स्मार्तं वाऽस्ति विनिर्णये ।
गीर्दृढा तत्र न चलेन्न्यायाद्वा स्वानुमानतः ॥
[२]यत्र गीरदृढा तत्र कुर्यान्न्यायानुमानतः ।
न च यत्र च तत्रैव सा गीरिति मतिर्मम ॥
[३]तस्मान्न चैककुण्डे स्युर्होतारो बहवो द्विजाः ।
अनुक्तत्वाद्ग्रहमखे तथाऽन्यत्राप्यनूदिते ॥
[४]एकस्त्वेके बहुदिनं हुनेत्कुण्डे गुरुर्द्विजः ॥

तान्त्रिकादौ भुवःस्वश्चक्रयोर्ग्रहार्चनम्

[५]तान्त्रिके च विमिश्रे च भुवश्चक्रेऽधिवासयेत् ॥
किंचिदिष्ट्वा भुवश्चक्रात्स्वश्चक्रे स्थापयेद् गुरुः ।
तेषां हि वसतिस्तस्मिन्नित्याहुः शास्त्रकोविदाः ॥

विघ्नादिदेवतापूजनं मातृपूजनं च

विघ्नं वैघ्नेन मन्त्रेण दुर्गां दौर्गेण साधकः ।
पूजयेद्ग्रहयज्ञेऽस्मिन्मातरश्चाऽऽदितो बुधः ॥
केचिद्विघ्नं च दुर्गां च गुहं शास्तारमेव च ।
कुम्भेष्वग्न्यादिकोणस्थेष्वर्चयन्ति ग्रहार्चने ॥
[६]ब्राह्मयादीनां च मातॄणां प्रागादिदशदिक्ष्वपि ।
विहिताश्चाष्टकुम्भाः स्युर्ग्रहयज्ञे पुरा बहिः ॥

---

(१) आश्वस्मृ. ८।१९४ वैकः कुर्यात्कुर्वन् (वैके कुर्वन् कुर्यात्); प्रपा. ६९ (=) उत्त. : ७० (कुण्डे वा स्थण्डिले वा) एतावदेव : ७३ : ७९–८० वैकः (वाऽपि) : ८१ वैकः कुर्यात्कुर्वन् (वाऽपि होमं कुर्यात्) उत्त. ; प्रर. २१ (कुण्डे वा स्थण्डिलेऽपि वा) एतावदेव : १२२ (=) (कुण्डे वा स्थण्डिले वाऽपि) एतावदेव ; संकौ १३९.

(२) आश्वस्मृ. ८।१९५ ; प्रपा. ६९ (=) हुनेत् (कुर्यात्).

(३) आश्वस्मृ. ८।१९६ ; प्रपा. ६९ (=) प्रथमपादे (एककुण्डे तु नवभिः).

(४) आश्वस्मृ. ८।१९७ तत्रैव (तानेव); प्रपा. ६९ (=).

(५) आश्वस्मृ. ८।१९८ तत्तत् (तत्र) दितम् (चितम्); प्रपा. ६९ (=).

(६) आश्वस्मृ. ८।१९९ ; प्रपा. ६९ (=) विमृश्य (विविच्य).

(१) आश्वस्मृ. ८।२०० वाऽप्यथ (वा मन्त्र) न्यायाद्वा (तद्यथा); प्रपा. ६९ (=).

(२) आश्वस्मृ. ८।२०१ ; प्रपा. ६९ (=) रदृढा (नं दृढा).

(३) आश्वस्मृ. ८।२०२ ; प्रपा. ६९ (=) होतारो (पोतारो).

(४) आश्वस्मृ. ८।२०३ ; प्रपा. ६९ (=).

(५) आश्वस्मृ ८।२०३–२०६ ; प्रपा. ८० केचित् (किंचित्).

(६) आश्वस्मृ. ८।२०७ दशदिक्ष्वपि (दिशि दिश्यपि); प्रपा. ८०.

राज्याभिषेकात्प्राक् ग्रहयज्ञकर्तव्यता

[1]एतद्विधानं कृत्वाऽऽदौ राजा पूज्य गुरुं द्विजम्।
यथावद्भक्तितो विप्रानृत्विजश्चेतरानपि ॥
[2]अभिषिञ्चेत्ततः पश्चादैतरेयोक्तवर्त्मना ।
एतेन विधिना राजा राज्ये विप्रानुमोदितः ॥
[3]आपदो निस्तरेत्क्षिप्रं देवविप्रप्रसादतः ।
तापत्रयं च यत्नेन स्वयं च प्रयतः सदा ॥
जपैर्हुतैस्तर्पणैश्च ध्यानैर्दानैः समाहितः ।
सर्वापदो विजयते पापानि त्रिविधान्यपि ॥

अधिकारिभेदेन भोज्यब्राह्मणसंख्यानियमः

[4]एकमेकाहुतेर्विप्रं होमे त्वन्नेन भोजयेत् ।
अत्याढ्यो मध्यमश्चापि विप्रमेकं शताहुतेः ॥
[5]सहस्रस्याऽऽहुतेश्चैकं जघन्योऽपि प्रभोजयेत् ।
अन्यथा दहति क्षिप्रं तद्राष्ट्रं नात्र संशयः ॥

अन्न–मन्त्र–दक्षिणाहीनस्य दुष्फलानि

[6]अनन्नः प्रदहेद्राष्ट्रममन्त्रश्चर्त्विजो गुरुम् ।
होमः कारयितारं च सुकृतोऽपि त्वदक्षिणः ॥

(१) आश्वस्मृ. ८।२०८ द्विजम् (द्विजान्) ; प्रपा. ७८ (एतद्विधानं कृत्वा तु ऋत्वाचार्यं प्रपूजयेत् । यथावच्छक्तितो विप्रानृत्विजश्चेतरानपि ।।) : ८० पूज्य (पूज्यं) ; शाम. २१ वद्भक्तितो (शक्ति ततो) उत्त.

(२) आश्वस्मृ. ८।२०९ एतेन (ऐन्द्रेण) ; प्रपा. ८० दैतरेयोक्त (देतैरेवोक्त).

(३) प्रपा. ८०.

(४) आश्वस्मृ. ८।२१० शताहुतेः (शताहुतम्) ; प्रपा. ७८ मेका (मेवाऽऽ) ; शाम. २१ हुतेर्वि (हुतौ वि) अत्याढ्यो (अत्यर्थो) शताहुतेः (शताहुतौ) ; संकौ. १४० मात्स्ये.

(५) आश्वस्मृ. ८।२११ ; प्रपा. ७८ ; शाम. २१ सहस्रस्याऽऽहुतेश्चैकं (सहस्रस्य हुतेवैकं) पू. ; संकौ. १४० श्चैकं (वैकं) मात्स्ये.

(६) आश्वस्मृ. ८।२१२ पि त्वद (विश्वद) ; प्रपा. ७८ श्चर्त्विजो (श्च द्विजं) ; संकौ. १४० प्रदहे (प्राहरे), मात्स्ये.

अन्नदक्षिणयोर्जपादिभिः सह विकल्पः

[1]तस्माद्दातुमशक्तो यो दक्षिणां चान्नमेव च ।
जपैः प्रणामैः स्तोत्रैश्च तर्पणैस्तोषयेद्ग्रहान् ॥

यदा तु स्वल्पवित्तः सर्वग्रहदक्षिणादानासमर्थः सर्वग्रहहोमसंभारासमर्थश्च (तदा) दुःस्थग्रहं द्वौ वा त्रीन्वा दुःस्थग्रहान् विशेषेण होमबलिदक्षिणादिभिः संतोष्य शेषेभ्यः स्वल्पपूजाहोमादि कुर्यात् । अथवा दुःस्थद्वित्रिचतुर्ग्रहमात्रं स्वस्वाधिदैवतप्रत्यधिदैवतविनायकादिपञ्चकसहितं होमादिभिः पूजयेत् न ग्रहान्तरम् , मात्स्ये वचनात् । दानप्रकाशे– 'तस्माद्दातु ... ग्रहान् ॥' (इति) । जपप्रणामस्तोत्रतर्पणानि ग्रहपूजापूर्वकाणि ब्राह्मणद्वारा कार्याणि होमतुल्यसंख्यानि । तदन्ते ग्रहदक्षिणा यथाशक्ति हिरण्यादि वा । निप्र. २२९

[2]जपाद्यैरर्चिताः क्षिप्रं तुष्यन्त्यपि च देवताः ।
ग्रहाश्च विषमस्था ये तांस्तस्मात्तोषयेद्बुधः ॥

शिवग्रहयज्ञः

[3]अथवाऽष्टदले पद्मे साम्बं त्र्यम्बकमेव च ।
समावाह्य ग्रहान् सर्वान् तद्देहस्थान् समर्चयेत् ॥

[4]शिवस्य हृदये सूर्यं ललाटे सोममेव च ।
बाहुमूले बुधं वामे कुजमेव च दक्षिणे ॥

(१) आश्वस्मृ. ८।२१३ ; प्रपा. ७८ ; निप्र. २२९ शक्तो यो (शक्तोऽसौ) णां चा (णाश्चा) तर्पणैस्तोषयेत् (तोषयेत्तर्पयेत्) दानप्रकाशे; शाम. २१ शक्तो यो (शक्तोऽपि) मेव च (मेव वा) चतुर्थपादे (तोषयेत्तर्पयेद्गुरुम्) ; संकौ. १४० णां चा (णाश्चा) तर्पणैस्तोषयेत् (तोषयेत्तर्पयेत्) मात्स्ये.

(२) आश्वस्मृ. ८।२१४ ; प्रपा. ७८ बुधः (गुरुः).

(३) आश्वस्मृ. ८।२१५ ; प्रपा. ८० मेव च (मेव वा).

(४) आश्वस्मृ. ८।२१३ उत्तरार्धे (बाहुमूलेन्दुजं वामे वामेऽङ्के कुजमेव च ॥) ; प्रपा. ८०.

[1]दक्षिणेऽङ्केऽर्चयेन्मन्दं वामाङ्के पूजयेद् गुरुम् ।
मूर्ध्नि शुक्रं पदे सव्ये राहुं केतुं च दक्षिणे ॥
[2]पाण्योर्विघ्नं च दुर्गां च पार्श्वयोः शास्तृ-षण्मुखौ ।
पृष्ठे च मातरः सर्वाः शिवस्य परमात्मनः ॥
[3]सप्तविंशतिनक्षत्रान् हाररूपान्समर्चयेत् ।
तिथींस्तन्मुकुटस्थाने राशीनुदरबन्धने ॥
[4]कटिस्थाने त्वृतूंस्तस्य मणिबन्धेऽयनद्वयम् ।
चातुर्मास्यानि केयूरे चाहोरात्रं च नूपुरे ॥
[5]संवत्सराण्यावतंसे करणान्यासने विभोः ।
योगान्प्रस्रवणस्थाने शिवावेवं(? शिव एवं) समर्चयेत् ॥
[6]एवं वेद्यां समभ्यर्च्य कलशे च विचक्षणः ।
तत्तन्मन्त्रैर्हुनेद्द्रव्यैः पृथगावाह्य चानले ॥
[7]आद्यन्तयोर्घृतेनैव शिवमन्त्रैर्हुनेच्छतम् ।
ग्रहाणां मूलमन्त्रैश्च हुनेत्पूर्वोक्तवत्पृथक् ॥

[1]हुत्वा दत्त्वा बलींश्चार्च्य सिक्त्वाऽऽशीर्भिर्घटा-म्बुभिः ।
शिवान्(? शिवं) ग्रहान्कुचक्रस्थान्सुवश्चक्रे समुद्वहेत् ॥
[2]शिवमावाह्य चाऽऽदौ तु भुवश्चक्रे पुरोक्तवत् ।
आवाहयेच्च भूचक्रे मण्डलस्थशिवे ग्रहान् ॥
[3]आ कृष्णेनेति चाऽऽरभ्य सूर्यादीनामृचा बुधः ।
समिदाज्यं च चर्वाद्यं मूलमन्त्रेण वै हुनेत् ॥
[4]जपेदन्ते समिच्चर्वोर्मन्त्रांस्तदधिदैविकान् ।
ग्रहाणां घृतहोमान्ते तथा प्रत्यधिदैविकान् ॥

शिवग्रहयज्ञफलानि

[5]महारोगादिशान्त्यर्थमपमृत्योर्जयाय वा ।
आवाह्य त्र्यम्बके सर्वान् ग्रहान् विप्रः समर्चयेत् ॥
[6]चेतोभिलषितार्थाप्त्यै परचक्राद्विमुक्तये ।
लोकानुरञ्जनार्थाय शिवे साम्बेऽर्चयेद्ग्रहान् ॥

ग्रहयज्ञफलानि

[7]एवं प्रकुर्वतः पुंसो ग्रहशान्तिं यथातथम् ।
क्षीयन्ते विपदः क्षिप्रं वर्धन्ते संपदोऽखिलाः ॥

---

(१) आश्वस्मृ. ८।२१७ दक्षिणेऽङ्के (दक्षिणाङ्के) वामाङ्के पूजयेत् (बाहुमूले परे); प्रपा. ८०.

(२) आश्वस्मृ. ८।२१८; प्रपा. ८० पृष्ठे च मातरः (जठरे मातृकाः).

(३) आश्वस्मृ. ८।२१९; प्रपा. ८०.

(४) आश्वस्मृ. ८।२२०; प्रपा. ८० त्वृतूं (ऋतूं).

(५) आश्वस्मृ. ८।२२१ स्रवण (सरण); प्रपा ८० ण्यावतंसे (नवातंसे) वेवं समर्च (नेव प्रपूज).

(६) आश्वस्मृ. ८।२२२ मन्त्रैर्हु (मन्त्रं हु); प्रपा. ८०.

(७) आश्वस्मृ. ८।२२३ तेनैव (तैरेव) मन्त्रैश्च (मन्त्रस्तु); प्रपा. ८०.

(१) आश्वस्मृ. ८।२२४ बलींश्चा (बलिं चा) शीर्भिर्घ (शिष्यं घ); प्रपा. ८० उत्तरार्धे (ग्रहान् शिवाकुचाग्रस्थान् सुवश्चक्रे समुद्वहेत् ॥).

(२) आश्वस्मृ. ८।२२५ चक्रे पुरोक्तवत् (चक्रान् पुरोक्तवान्) स्थशिवे (स्थे शिवे); प्रपा. ८० च्च भूचक्रे (द्सुवश्चक्रे).

(३) आश्वस्मृ. ८।२२६ तृतीयपादे (समिचाऽऽज्यं च चर्वाज्यैः); प्रपा. ८० ण वै (ण वा).

(४) आश्वस्मृ. ८।२२७; प्रपा. ८० उत्तरार्धे (ग्रहाणां कृतहोमान्ते यथा प्रत्यधिदेवकान् ॥).

(५) आश्वस्मृ. ८।२२८ याय वा (येऽपि च); प्रपा. ८०.

(६) आश्वस्मृ. ८।२२९ चक्राद्वि (चक्रादि) शिवे सा (शिवसा); प्रपा. ८० लषितार्थाप्त्यै (लाषितावाप्त्यै).

(७) आश्वस्मृ. ८।२३०; प्रपा. ६८ उत्त. : ८० शान्तिं य (शान्तिर्य); विपा. १३५ (=) उत्त.

[१]त्रयस्तापाश्च नश्यन्ति सर्वेकार्याः प्रदक्षिणाः ।
भवन्त्यघानि नश्यन्ति ग्रहयज्ञकृतां नृणाम् ॥
[२]राजा चिरं विजित्यारीन् तृप्तात्मा श्रियमश्नुते ।
राष्ट्रं च वृद्धिमाप्नोति प्रजाश्च निरुपद्रवाः ॥

एवमुक्तनानाविधग्रहयज्ञेषु आश्वलायनाचार्यस्मृत्युक्त-शिवग्रहयज्ञमेव कुर्यात्, इतरेषु तु प्रयाससाध्यत्वात् फलाधिक्याभावात् वैगुण्यसंभवाच्च, शिवग्रहयज्ञे तु तादृशप्रयासाभावात् फलभूयस्त्वात् वैगुण्यशङ्काभावाच्च । तथाहि— गृह्यपरिशिष्टपरिमलाद्युक्तग्रहयज्ञप्रकारेषु तत्तत्प्रतिमातत्तत्प्रकृतिद्रव्यपरिमाणतत्तद्वस्त्रगन्धपुष्पधूपदीप-नैवेद्यदक्षिणादिसंपादने प्रयासभूयस्त्वात् न्यूनाधिकभावेन वैगुण्यसंभवात् सर्वेषामनुष्ठातुमशक्यत्वात्, यस्य कस्य-चिच्छक्यत्वेऽपि फलाधिक्याभावात् शिवग्रहयज्ञे तु प्रतिमादिसंपादनप्रयासाभावात् साम्बशिवावयव एव ग्रहाधिदेवतानामन्येषां नक्षत्रादीनां चाऽऽवाहनादिपूजा-विधानान्नक्षत्रादिप्रीणनाच्च । अत एव फलाधिक्यात् वैगुण्यशङ्काया अभावात् सर्वेषामनुष्ठातुं शक्यत्वाच्च 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पम-प्यस्य धर्मस्य त्रायते महतो भयात् ॥' इति भगव-द्वचनाच्च (भगी. २।४०) विवेकिभिः शिवग्रहयज्ञ एव कर्तव्य इति । प्रपा. ८०–८१

## स्मृत्यन्तरम्

### लोकपालानां दिग्भागाः

[३]इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ।
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ॥

(१) आश्वस्मृ. ८।२३१ त्रयस्तापाश्च (तापत्रयाश्च) घानि (घाश्च) कृतां (फलं); प्रपा. ६८ त्रयस्तापाश्च (तदाऽरयश्च) : ८०; विपा. ५३५ (=) (तापादयो विनश्यन्ति सर्वाः कार्याः प्रदक्षिणाः ।) पू.

(२) आश्वस्मृ. ८।२३२; प्रपा. ८० तृप्तात्मा (प्रीतात्मा).

(३) संग. १२२ स्मृत्यन्तरे ग्रहदीपिकायां च इत्युक्तम्; संदी. ९०–९१ (=).

## *मत्स्यपुराणम्

### अयुतहोम–लक्षहोम–कोटिहोमरूपेण ग्रहयज्ञस्य त्रैविध्यं फलानि च

सूत उवाच—

[१]वैशम्पायनमासीनमपृच्छच्छौनकः पुरा ।
सर्वकामाप्तये नित्यं कथं शान्तिकपौष्टिकम् ॥

वैशम्पायन उवाच—

[२]श्रीकामः शान्तिकामो वा ग्रहयज्ञं समारभेत् ।
वृद्ध्यायुःपुष्टिकामो वा तथैवाभिचरन् पुनः ।
येन ब्रह्मन् विधानेन तन्मे निगदतः शृणु ॥

[३]सर्वशास्त्राण्यनुक्रम्य संक्षिप्य ग्रन्थविस्तरम् ।
ग्रहशान्तिं प्रवक्ष्यामि पुराणश्रुतिचोदिताम् ॥

[४]पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् ।
ग्रहान् ग्रहाधिदेवांश्च स्थाप्य होमं समारभेत् ॥

* यद्यपि मत्स्यपुराणे 'श्रीकामः शान्तिकामो वा' इत्युपक्रम्य काम्यत्वेनायुतलक्षकोटिहोमभेदेन त्रिविधो ग्रहमखः प्रोक्तः, तत्र च 'विवाहोत्सवयज्ञेषु' इत्यादिनाऽयुतहोमस्य कर्माङ्गत्वमप्युक्तम्, तथापि कोटिलक्षहोमयोः केवलकाम्य-त्वात् अयुतहोमस्य गृह्यसूत्रादिषु केवलग्रहमखविधानेन वैक-ल्पिकत्वात् इदानीमाचाराभावाच्च अयुतादिहोमानां संग्रहो-ऽत्र न क्रियते, किं तु तत्र यावान् साधारणो विधिस्तावा-नेवात्र संगृह्यते । शान्तिकाण्डे सर्वेषां संग्रहो भविष्यत्येव ।

(१) मत्स्य. ९३।१; संत. ९४५ पुरा (पुनः); संदी. ७३.

(२) मत्स्य. ९३।२; संत. ९४५ प्रथमार्धे (श्रीकामः शान्तिकामो वा तथा चाभिचरन् पुनः ।) द्वितीयार्धं नास्ति; विपा. ५३६ शान्ति (कान्ति) रभेत् (चरेत्) वृद्ध्या (वृष्ट्या) पुनः (प्रभुः) तृतीयार्धं नास्ति; संदी. ७३.

(३) मत्स्य. ९३।३; संग. ११५ उत्त., वसिष्ठः; संदी. ७३.

(४) मत्स्य. ९३।४; प्रपा. ७८ पू. हेमाद्रौ; शाम. १४ पू.; विपा. ५३९ उत्तरार्धे (नान्दीश्राद्धं विधायाथ

[1]ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिकोविदैः ।
प्रथमोऽयुतहोमः स्याल्लक्षहोमस्ततः परम् ॥

[2]तृतीयः कोटिहोमस्तु सर्वकामफलप्रदः ।
अयुतेनाऽऽहुतीनां च नवग्रहमखः स्मृतः ॥

ग्रहवेदिः

[3]तस्य तावद्विधिं वक्ष्ये पुराणश्रुतिभाषितम् ।
गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृताम् ॥

[4]वप्रद्वयावृतां वेदिं वितस्त्युच्छ्रायसंमिताम् ।
संस्थापनाय देवानां चतुरस्रामुदङ्मुखाम् ॥

( १ ) गर्तः खातमग्न्यायतनम् । वप्रः मेखला ।
अप. १।२९६ पृ. ५७२

( २ ) गर्भस्य मण्डपगर्भस्य । संत. ९४६

वेद्यां देवतास्थापनम्

[1]अग्निप्रणयनं कृत्वा तस्यामावाहयेत्सुरान् ।
देवतानां ततः स्थाप्या विंशतिर्द्वादशाधिका ॥

नव ग्रहाः

[2]सूर्यः सोमस्तथा भौमो बुधजीवसितार्कजाः ।
राहुः केतुरिति प्रोक्ता ग्रहा लोकहितावहाः ॥

ग्रहाणां दिग्भागाः

[3]मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु ।
उत्तरेण गुरुं विद्याद्बुधं पूर्वोत्तरेण तु ॥

[4]पूर्वेण भार्गवं विद्यात्सोमं दक्षिणपूर्वके ।
पश्चिमेन शनिं विद्याद्राहुं पश्चिमदक्षिणे ।
पश्चिमोत्तरतः केतुं स्थापयेच्छुक्लतण्डुलैः ॥

---

वृणुयादृत्विजस्तथा ॥ ) ; संग. ११५ रमेत् ( चरेत् ), वसिष्ठः ; संदी. ७३–७४.

( १ ) मत्स्य. ९३।५ ; शाम. ११ यज्ञ ( यज्ञा ) प्रोक्तः ( प्रोक्ताः ) मः स्यात् ( मश्च ) परम् ( परः ) ; विपा. ५३६ यज्ञ ( यज्ञा ) प्रोक्तः ( प्रोक्ताः ) मः स्यात् ( मोऽयं ) परम् ( परः ) ; संग. ११५ वसिष्ठः ; संदी. ७४.

( २ ) मत्स्य. ९३।६ ; शाम. ११ पू. ; विपा. ५३७ पू. ; संग. ११५ तेनाऽऽ ( ते आ ) वसिष्ठः ; संदी. ७४.

( ३ ) मत्स्य. ९३।७ ; अप. १।२९६ पृ. ५७२ उत्त. ; संत. ९४६ गर्ते ( गर्भ ) पूर्वेण ( पूर्वस्यां ) उत्त. ; संग. ११५–११६ तस्य तावत् ( तावत्तस्य ) वसिष्ठः ; संदी. ७४ गर्त ( गृह ).

( ४ ) मत्स्य. ९३।८ ; अप. १।२९६ पृ. ५७२ द्वयावृ ( त्रयान्वि ) मिताम् ( युताम् ) स्रामुदङ्मुखाम् ( श्रामुदक्प्लवाम् ) ; संत. ९४६ ( विप्रद्वययुतां वेदीं वितस्त्युच्छ्रायसंयुताम् । संस्थापनाय देवानां चतुरस्रामुदक्प्लवाम् ॥ ) ; संग. ११६ यावृतां वेदिं ( यवृतां वेदीं ) दङ्मुखाम् ( दक्प्लवाम् ) वसिष्ठः ; संदी. ७४ च्छ्राय ( च्छ्रय ).

( १ ) मत्स्य. ९३।९ ; अप. १।२९६ पृ. ५७२ पू. ; प्रपा. ७२ वतानां ततः ( वानां तत्र सं ) उत्त. : ७८ तस्या ( वेद्या ) पू., हेमाद्रौ ; संत. ९४६ पू. ; शाम. १४ ; तस्या ( मेद्या ) वतानां ततः ( वानां तत्र सं ) ; विपा. ५४० शामवत् ; संग. ११३ उत्तरार्धे ( देवतास्तत्र संस्थाप्य विंशतिर्द्वादशाधिकाः ॥ ) ; संदी. ७४.

( २ ) मत्स्य. ९३।१० ; संदी. ७४.

( ३ ) मत्स्य. ९३।११ ; मिता. १।२९८ ; अप. १।२९६ पृ. ५७२ ; दीक. १।२९७ पू. ; संत. ९४६ णेन तु ( णेन च ) उत्तरेण ( उत्तरस्यां ) ; संग. ११४ लोहितं दक्षिणेन तु ( शशिनं पूर्वदक्षिणे ) उत्तरेण गुरुं विद्यात् ( दक्षिणे लोहितं विद्यात् ) क्रमेण मात्स्ये ; सस्मृ. ५५ ; संदी. ७४.

( ४ ) मत्स्य. ९३।१२ ; मिता. १।२९८ स्थापयेत् ( स्थाप्या वै ) ; अप. १।२९६ पृ. ५७२ पश्चिमदक्षिणे ( दक्षिणपश्चिमे ) ; दीक. १।२९७ सोमं ( सोमो ) पश्चिमेन (पश्चिमे तु) शेषं अपवत् ; संत. ९४६ अपवत् ; संग. ११४ ( उत्तरे तु गुरुं विद्यात्पूर्वतो भार्गवं न्यसेत् । पश्चिमेन शनिं विद्याद्राहुं दक्षिणपश्चिमे । पश्चिमोत्तरतः केतुः स्थाप्यो

अत्रैव 'आवाहयेद्व्याहृतिभिः' इति दर्शनादावाहनं व्याहृतिभिः शुक्लतण्डुलैः कार्यम्। संत. ९४६

अधिदेवताः प्रत्यधिदेवताः विनायकादिदेवताश्च, तासां दिग्भागाः

[1]भास्करस्येश्वरं विद्यादुमां च शशिनस्तथा।
स्कन्दमङ्गारकस्यापि बुधस्य च तथा हरिम् ॥
ब्रह्माणं च गुरोर्विद्याच्छुक्रस्यापि शचीपतिम्।
शनैश्चरस्य तु यमं राहोः कालं तथैव च ॥
केतोर्वै चित्रगुप्तं च सर्वेषामधिदेवताः।
[2]अग्निरापः क्षितिर्विष्णुरिन्द्र ऐन्द्री च देवताः।
प्रजापतिश्च सर्पाश्च ब्रह्मा प्रत्यधिदेवताः ॥
[3]ग्रहाणामुत्तरे स्थाप्या एताः प्रत्यधिदेवताः ॥
[4]विनायकं तथा दुर्गां वायुमाकाशमेव च।
आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ ॥
[5]राहुमन्ददिनेशानामुत्तरस्यां यथाक्रमम्।
राहोः केतोर्दक्षिणे च विन्यसेत्क्रमशः सुधीः ॥

एतेऽत्र विनायकाद्याः पञ्च ग्रहेभ्य उत्तरतः स्थाप्या इति सांप्रदायिकाः। दक्षिणपश्चिमवायव्योत्तरपूर्वेषु यथाक्रममित्यन्ये। 'राहुमन्ददिनेशानामुत्तरस्यां यथाक्रमम्। गणेशो दुर्गा वायुश्च राहुकेत्वोश्च दक्षिणे। आकाशमश्विनौ चेति पञ्चैतान् स्थापयेद्बुधः ॥' इति संग्रहवचनानुसारेणेति पितामहचरणा रूपनारायणश्च। शाम. १७

ग्रहाणां वर्णाः

[1]संस्मरेद्रक्तमादित्यमङ्गारकसमन्वितम्।
सोमशुक्रौ तथा श्वेतौ बुधजीवौ च पिङ्गलौ ॥
मन्दराहू तथा कृष्णौ धूम्रं केतुगणं विदुः ॥

पिङ्गलौ पीतौ, धूम्रं चित्रं नानावर्णम्, 'सोमपुत्रो गुरुश्चैव तदुभौ पीतकौ स्मृतौ। चित्राश्च केतवः' इति वसिष्ठसंहितास्कन्दपुराणगोभिलिकवाक्यत्वात्। संत. ९४६

ग्रहवर्णानि वस्त्रपुष्पाणि, धूपः, ओदनाः

[2]ग्रहवर्णानि देयानि वासांसी कुसुमानि च।
धूपामोदोऽत्र सुरभिरुपरिष्टाद्वितानिकम्।
शोभनं स्थापयेत्प्राज्ञः फलपुष्पसमन्वितम् ॥
[3]गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम्।
अङ्गारकाय संयावं बुधाय क्षीरषष्टिके ॥
[4]दध्योदनं च जीवाय शुक्राय च घृतौदनम्।

---

वै शुक्लतण्डुलैः ॥) क्रमेण मात्स्ये; सस्मृ. ५५ पश्चिमेन (पश्चिमे तु) शेषं अपवत्; संदी. ७४.

(१) मत्स्य. ९३।१३-१५; संदी. ७४ केतोर्वै (केतोश्च).

(२) मत्स्य. ९३।१५-१६; निप्र. २१७ (=) च देवताः (च देवता) धिदेवताः (धिदैवतम्); संग. १२१ (=) (अग्निरापस्तथा भूमिर्विष्णुरिन्द्रस्तथा शची। प्रजापतिस्तथा सर्पा ब्रह्मा प्रत्यधिदेवताः ॥); संदी. ७५ च देवताः (च देवता).

(३) संग. १२१ (=) इदं मत्स्यपुराणे नोपलभ्यते। नाप्येतद्विषये 'मात्स्ये' इति कुत्रचिन्निर्देशः। परंतु मत्स्यपुराणीयश्लोकमध्ये संस्कारगणपतौ पठितत्वात् अत्र संगृहीतम्।

(४) मत्स्य. ९३।१६ वायुमा (वायुरा); शाम. १७ पारिजाते; विपा. ५४३ तृतीयपादे (न्यसेन्मन्त्रैर्गणेशादीन्); संग. १२१; संदी. ७५.

(५) विपा. ५४३; संग. १२१ पू.

(१) मत्स्य. ९३।१७; संत. ९४५; संदी. ७५.

(२) मत्स्य. ९३।१८; संग. १२३ प्रथमार्धं नास्ति, धूपामोदो (धूपो देयो) तानिकम् (नायकम्); संदी. ७५ निकम् (नकम्).

(३) मत्स्य. ९३।१९; संत. ९४७ उत्तरार्धे (संयावकं कुजे दद्यात्क्षीरान्नं सोमसूनवे ॥); वीमि. १।३०५ उत्तरार्धे (अङ्गारके मसूरान्नं क्षीरान्नं सोमसूनवे ॥) स्मृत्यन्तरम्; संदी. ७५ षष्टिके (षष्टिकम्), पाठभेदेन स्कन्दपुराणेऽपि.

(४) मत्स्य. ९३।२०; संत. ९४७ च घृ (तु घृ) रामजामांसं (रमाजं मांसं) सर्वैर्भक्ष्यैरथा (सर्वभक्ष्यैः सम); वीमि. १।३०५ रामजा (रमाज) सर्वैर्भक्ष्यै (सर्वभक्ष्यै) स्मृत्यन्तरम्; संदी. ७५ घृतौ (गुडौ) कृसरा (कृसर) सर्वैर्भ (सर्वभ), पाठभेदेन स्कन्दपुराणेऽपि.

**शनैश्चराय कृसरामजामांसं च राहवे ।**
**चित्रौदनं च केतुभ्यः सर्वैर्भक्ष्यैरथार्चयेत् ॥**

सर्वभक्ष्यैस्तु तत्तद्द्रव्यालाभे यथालाभोपपन्नैः ।
संत. ९४७

कलशस्थापनं तत्पूजनं च, होमः

[1]**प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितम् ।**
**चूतपल्लवसंछन्नं फलवस्त्रयुगान्वितम् ॥**

[2]**पञ्चरत्नसमायुक्तं पञ्चभङ्गसमन्वितम् ।**
**स्थापयेदव्रणं कुम्भं वरुणं तत्र विन्यसेत् ॥**

पञ्चभङ्गाः पञ्चपल्लवसप्तमृत्तिकासप्तधान्यपञ्चगव्यपञ्चामृतादयः । संग. १२३

[3]**गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ।**
**गजाश्वरथ्यावल्मीकसंगमाद् ह्रदगोकुलात् ॥**

[4]**मृदमानीय विप्रेन्द्र सर्वौषधिजलान्विताम् ।**
**स्नानार्थं विन्यसेत्तत्र यजमानस्य धर्मवित् ॥**

[5]**सर्वे समुद्राः सरितः सरांसि च नदास्तथा ।**
**आयान्तु यजमानस्य दुरितक्षयकारकाः ॥**

[6]**एवमावाहयेदेतानमरान् मुनिसत्तम ।**
**होमं समारभेत्सर्पिर्यवव्रीहितिलादिना ॥**

ग्रहाणां समिधः आहुतिसंख्या अञ्जनद्रव्याणि च

[1]**अर्कः पलाशखदिरावपामार्गोऽथ पिप्पलः ।**
**औदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥**

[2]**एकैकस्याष्टकशतमष्टाविंशतिरेव वा ।**
**होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः ॥**

[3]**प्रादेशमात्रा अशिफा अशाखा अपलाशिनीः ।**
**समिधः कल्पयेत्प्राज्ञः सर्वकर्मसु सर्वदा ॥**

समिद्धोमः चर्वादिहोमश्च

[4]**देवानामपि सर्वेषामुपांशु परमार्थवित् ।**
**स्वेन स्वेनैव मन्त्रेण होतव्याः समिधः पृथक् ॥**

[5]**होतव्यं च घृताभ्यक्तं चरुभक्षादिकं पुनः ।**
**मन्त्रैर्दशाऽऽहुतीर्हुत्वा होमं व्याहृतिभिस्ततः ॥**

होमार्थं संपादितेन तिलाज्यादिद्रव्येण ग्रहेभ्यः प्रत्येकं दश दशाऽऽहुतीर्दद्यात् । अधिदेवतादीनां प्रत्येकं तिस्रस्तिस्रं एकैकां वा दद्यात् । ततो व्याहृतिभिर्भूर्भुवः स्व-

---

(१) मत्स्य. ९३।२१ ; शाम. १८ संछन्नं ( संयुक्तं ) ; विपा. ५४६ ; संग. १२३ युगा ( शुभा ) ; संदी. ७५.

(२) मत्स्य. ९३।२२ ; शाम. १८ समन्वितम् ( युतं तथा ) ; विपा. ५४६ द्वितीयपादे ( पञ्चमृत्स्नायुतं तथा ) ; संग. १२३ शामवत् ; संदी. ७५.

(३) मत्स्य. ९३।२३ ; निप्र. २२१ (=) पू. ; शाम. १८ ; विपा. ५४६ द्राश्च ( द्रांश्च ) : ५५८ पू. ; संग. १२३ पू. ; संदी. ७६ माद्ह्रद ( मह्रद ).

(४) मत्स्य. ९३।२४ ; शाम. १८ जला ( सम ) ; विपा. ५४६ शामवत् ; संदी. ७६ न्विताम् ( न्वितम् ).

(५) मत्स्य. ९३।२५ ; निप्र. २२१ ( = ) उत्त. ; विपा. ५५८ ( = ) द्वितीयपादे ( तीर्थानि जलदा नदाः ) ; संदी. ७६.

(६) मत्स्य. ९३।२६ ; संदी. ७६.

(१) मत्स्य. ९३।२७ ; संदी. ७६.

(२) मत्स्य. ९३।२८ ; संदी. ७६. रेव वा ( रष्ट वा ).

(३) मत्स्य. २३।२९ ; अप. १।३०१-३०२ पृ. ५७४ पूर्वार्धे (प्रादेशमात्राः सशिखाः शाखापर्णविपाटिताः ।); संत. ९४७ अशिफा अशाखा अ ( सशिखाः सवल्काः स ) ; वीमि. १।३०३ पूर्वार्धे ( प्रादेशमात्रा अशिखा अशुष्काश्च फलाशिनीः [ ? श्चापलाशिनीः ] । ) स्मृत्यन्तरम् ; संदी. ७६.

(४) मत्स्य. ९३।३० ; अप. १।३०१-३०२ पृ. ५७४ उत्त. ; वीमि. १।३०३ षामुपांशु ( षां पालाशीं ) पू., स्मृत्यन्तरम् ; विपा. ५५१ ; संग. १२५ ; संदी. ७६.

(५) मत्स्य. ९६।३१ ; शाम. १९ भ्यक्त ( घक्तं ) भक्षा ( भक्ष्या ) पू. ; विपा. ५५२ भ्यक्तं ( घत्र ) भक्षा ( भक्ता ) हुत्वा होमं ( दद्याद्धोमो ) ततः ( पुनः ) ; संग. १२५ भ्यक्तं ( घत्र ) भक्षा ( भक्ता ) हुत्वा हो ( दद्याद्धो ) ततः ( पुनः ) ; संदी. ७६.

रित्याद्याभिश्चतसृभिरयुतसंख्यादिक्रमेण जुहुयात् ।

विपा. ५५२

चरूणां मन्त्रवत्करणम्

[1]उदङ्मुखाः प्राङ्मुखा वा कुर्युर्ब्राह्मणपुंगवाः ।
मन्त्रवन्तश्च कर्तव्याश्चरवः प्रतिदैवतम् ॥
[2]हुत्वा च तांश्चरून्सम्यक्ततो होमं समाचरेत् ॥

(१) चर्वादिकं च घृताद्यक्तं होतव्यम्, 'होतव्यं च घृताद्यक्तं चरुभक्ष्यादिकं पुनः ।' इति मात्स्यात् । भक्ष्यं द्राक्षादि । चरुः नैवेद्यशिष्टो गुडौदनादिः, तानि द्रव्याण्युक्त्वा 'इत्येतानि हवींषि स्युः समित्संख्यासमाहुतीः ।' इत्याश्वलायनोक्तेः । शाम. १९

(२) 'सूर्याय त्वा जुष्टं निर्वपामि, सोमाय त्वा जुष्टं निर्वपामि' इत्यादिप्रयोगेण चरवो मन्त्रवन्तः कार्या इत्यर्थः । विपा. ५५२

ग्रह–देवतानां मन्त्राः पूर्णाहुतिश्च

[3]आ कृष्णेनेति सूर्याय होमः कार्यो द्विजन्मना ॥
[4]आप्यायस्वेति सोमाय मन्त्रेण जुहुयात्पुनः ।
अग्निर्मूर्धा दिवः ककुदिति भौमाय कीर्तयेत् ॥
[5]अग्ने विवस्वदुषस इति सोमसुताय वै ।
बृहस्पते परिदीया रथेनेति गुरोर्मतः ॥

(१) मत्स्य. ९३।३२ ; दीक. १।३०३ उत्त. ; शाम. १९ ; विपा. ५५२ ; संदी. ७६.

(२) मत्स्य. ९३।३३ ; दीक. १।३०३ हुत्वा च (हुत्वा तु) चरेत् (पयेत्) ; शाम. १९ चरेत् (रमेत्) ; विपा. ५५२ च तांश्च (तांश्च च) शेषं शामवत् ; संदी. ७६.

(३) मत्स्य. ९३।३३ ष्णेनेति (ष्णेति च) ; उत. १२६ ; संदी. ७६.

(४) मत्स्य. ९३।३४ दिवः ककुदिति (दिवो मन्त्र इति) ; उत. १२६ दिवः ककुदिति (दिवो मन्त्रमिति) ; संदी. ७६.

(५) मत्स्य. ९३।३५ ; उत. १२६ वै (च) ; संदी. ७७.



[1]शुक्रं ते अन्यदिति च शुक्रस्यापि निगद्यते ।
शनैश्चराय तु पुनः शं नो देवीति होमयेत् ॥
[2]कया नश्चित्र आ भुवदिति राहोरुदाहृतः ।
केतुं कृण्वन्निति ब्रूयात्केतूनामपि शान्तये ॥

आ कृष्णेनेत्यादिमन्त्राः सर्ववेदसाधारणाः, पुराणोक्तत्वात् । तथा च मत्स्यपुराणम्– 'आ कृष्णेति ... ... शान्तये ॥' । उत. १२६

[3]आ वो राजेति रुद्रस्य बलिहोमं समाचरेत् ।
आपो हि ष्ठेत्युमायास्तु स्योनेति स्वामिनस्तथा ॥
[4]विष्णोरिदं विष्णुरिति त्वमित्सेति स्वयंभुवः ।
इन्द्रमिद्देवतातय इतीन्द्रस्य प्रकीर्तितः ॥
[5]तथा यमस्य चाऽऽयं गौरिति होमः प्रकीर्तितः ।
कालस्य ब्रह्म जज्ञानमिति मन्त्रः प्रशस्यते ॥

(१) मत्स्य. ९३।३६ राय तु (रायेति) ; उत. १२६ ते अन्यदिति च (तेऽन्यदिति चैव) शेषं मत्स्यवत् ; संदी. ७७.

(२) मत्स्य. ९३।३७ ह्निति (त्रपि) ; उत. १२६ दिति (दूती) हृतः (हृतम्) ब्रूयात् (कुर्यात्) मपि शा (मुपशा) ; संदी. ७७.

(३) मत्स्य. ९३।३८ ; शाम. १८ बलि (बलिं) ; विपा. ५४९ शामवत् ; संदी. ७७.

(४) मत्स्य. ९३।३९ त्वमित्सेति (तमीशेति) उत्तरार्धे (इन्द्रमिद्देवतातेति इन्द्राय जुहुयात्ततः ॥) ; शाम. १८ ; विपा. ५४९ चतुर्थपादे (इन्द्रस्य जुहुयात्पुनः) ; संदी. ७७ उत्तरार्धे (इन्द्रमिद्देवतायेति इन्द्राय जुहुयात्ततः ॥) शेषं मत्स्यवत्.

(५) मत्स्य. ९३।४० ; शाम. १८ ; विपा. ५४९ ; संदी. ७७.

[१]चित्रगुप्तस्य चाऽऽज्ञातमिति मन्त्रविदो विदुः ।
अग्निं दूतं वृणीमह इति वह्नेरुदाहृतः ॥
[२]उदुत्तमं वरुणेति अपां मन्त्रः प्रकीर्तितः ।
भूमेः पृथिव्यन्तरिक्षमिति वेदेषु पठ्यते ॥
[३]सहस्रशीर्षा पुरुष इति विष्णोरुदाहृतः ।
इन्द्रायेन्दो मरुत्वत इति शक्रस्य शस्यते ॥
[४]उत्तानपर्णे सुभगे इति शच्याः समाचरेत् ।
प्रजापतेः पुनर्होमः प्रजापतिरिरिति स्मृतः ॥
[५]नमोऽस्तु सर्पेभ्य इति सर्पाणां मन्त्र उच्यते ।
एष ब्रह्मा य ऋत्विग्भ्य( ? ऋत्विय ) इति ब्रह्मण्युदाहृतः ॥
[६]विनायकस्य चाऽऽतू न इति मन्त्रो बुधैः स्मृतः ।
जातवेदसे सुनवाम दुर्गामन्त्रोऽयमुच्यते ॥

( १ ) मत्स्य. ९३।४१ ; शाम. १८ मन्त्रविदो ( पौराणिका) ; विपा. ५४९ शामवत् ; संदी. ७७ स्य च ( स्याना ).

( २ ) मत्स्य. ९३।४२ णेति अपां ( णमित्यपां ) ; शाम. १८ मत्स्यवत् ; विपा. ५४९ पू. : ५५० 'भूमेः पृथिव्यन्तरिक्षम्' इत्यादिसार्धपञ्चश्लोक्याः स्थाने भिन्नानुपूर्वीकाः त्रयः श्लोकाः पठ्यन्ते । ते च यथा– 'भूमेः पृथिव्यन्तरिक्षं विष्णोः सहस्रशीर्षेति च ॥ इन्द्रायेन्दो इतीन्द्रस्योत्तानपर्णे शचीस्थितौ । प्रजापते प्रजेशस्य आयङ्गौरिति सर्पके ॥ ब्रह्मणो ब्रह्मजज्ञानमिति मन्त्रा उदीरिताः । आ तू न इन्द्रं विघ्नेशे दुर्गाया जातवेदसे ॥ आ नो नियुद्भिर्वायोश्च आदित्प्रत्नस्य वै दिवः ।' इति ; संदी. ७७ मत्स्यवत् .

( ३ ) मत्स्य. ९३।४३ ; शाम. १८ ; संदी. ७७.

( ४ ) मत्स्य. ९३।४४ शच्याः ( देव्याः ) ; शाम. १८ तिरिति ( त इति ) ; संदी. ७७ शच्याः ( देव्याः ) तिरिति ( त इति ).

( ५ ) मत्स्य. ९३।४५ ; शाम. १९ ऋत्विग्भ्य ( ऋत्विज ) ; संदी. ७७.

( ६ ) मत्स्य. ९३।४६ ; शाम. १९ मन्त्रोऽयमु ( मन्त्रोऽत्र उ ) ; संदी. ७७ उत्तरार्धे ( जातवेदसे सुनवामेति दुर्गामन्त्र उच्यते ॥ ).

[१]आदित्प्रत्नस्य रेतस आकाशस्य उदाहृतः ।
क्राणा शिशुर्महीनां च वायोर्मन्त्रः प्रकीर्तितः ॥
[२]एषो उषा अपूर्व्या इत्यश्विनोर्मन्त्र उच्यते ।
पूर्णाहुतिस्तु मूर्धानं दिव इत्यभिपातयेत् ॥

अत्र भिन्नशाखागतैकादशद्वादशकपालभेदेऽप्यैन्द्राग्न्यैक्यवदनेकमन्त्रयुक्ताया अनेकस्मृत्युक्ताया अपि पूर्णाहुतेरेकत्वान्मन्त्राणां विकल्पः, उपांशुयाज इव शाखाभेदभिन्नानां याज्यानुवाक्यानाम् । समुच्चयेन तु पठन्ति ।

शाम. २०

यजमानाभिषेकः अभिषेकमन्त्राश्च

[३]अथाभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ।
पूर्णकुम्भेन तेनैव होमान्ते प्रागुदङ्मुखैः ॥

( १ ) अभिषेकमन्त्राः 'समुद्रज्येष्ठाः' इत्यादयः 'सुरास्त्वामभिषिञ्चन्तु' इत्यादयः पौराणाश्च ग्राह्याः ।

विपा. ५५३

( २ ) अभिषेकमन्त्राः स्वस्वशाखोक्ताः 'सुरास्त्वामभिषिञ्चन्तु' इत्यादिपौराणिकाश्च ग्राह्याः ।

संग. १२६

[४]अव्यङ्गावयवैर्ब्रह्मन् हेमस्रग्दामभूषितैः ।
यजमानस्य कर्तव्यं चतुर्भिः स्नपनं द्विजैः ॥
[५]सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ।
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥

( १ ) मत्स्य. ९३।४७ ; संदी. ७७.

( २ ) मत्स्य. ९३।४८ ; शाम. १९ हुतिस्तु ( हुतिं च ) उत्त. ; विपा. ५५० उच्यते ( ईरितः ) पू. ; संदी. ७८.

( ३ ) मत्स्य. ९३।४९ मुखैः ( मुखम् ) ; शाम. २० वासिष्ठे ; विपा. ५५३ क्रमेण मात्स्ये ; संग. १२६ क्रमेण मात्स्ये ; संदी. ७८ मत्स्यवत् .

( ४ ) मत्स्य. ९३।५० ; शाम. २० हेम ( हैम ) वासिष्ठे ; विपा. ५५३ क्रमेण मात्स्ये ; संग. १२६ क्रमेण मात्स्ये; संदी. ७८.

( ५ ) मत्स्य. ९३।५१–५७ ; संदी. ७८–७९.

आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ।
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहितः शेषो दिक्पालास्त्वामवन्तु ते ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुःशान्तिस्तुष्टिः कान्तिश्च मातरः ।
एतास्त्वामभिषिञ्चन्तु धर्मपत्न्यः समागताः ॥
आदित्यश्चन्द्रमा भौमो बुधो जीवः सितोऽर्कजः ।
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
ऋषयो मुनयो गावो देवमातर एव च ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ।
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥
औषधानि च रत्नानि कालस्यावयवाश्च ये ।
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥

दक्षिणादानं दक्षिणाप्रतिनिधिश्च

[1]ततः शुक्लाम्बरधरः शुक्लगन्धानुलेपनः ।
सर्वौषधैः सर्वगन्धैः स्नापितो द्विजपुंगवैः ॥
[2]यजमानः सपत्नीक ऋत्विजः सुसमाहितान् ।
दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः ॥
[3]सूर्याय कपिलां धेनुं शङ्खं दद्यात्तथेन्दवे ।
रक्तं धुरंधरं दद्याद्भौमाय च ककुद्मिनम् ॥

'सूर्याय ... न्दवे ।' इत्यादिषु तादर्थ्ये चतुर्थी । तेन सूर्ययागप्रतिष्ठार्थे कपिलां धेनुमृत्विजे दद्यात् । गुडौदनादिभोजनमपि तस्यैव, उपस्थितत्वात् 'एता दक्षिणा भोजितब्राह्मणानाम्' इति शूलपाणिव्याख्यानाच्च । संत. ९४८

[1]बुधाय जातरूपं तु गुरवे पीतवाससी ।
श्वेताश्वं दैत्यगुरवे कृष्णां गामर्कसूनवे ॥
[2]आयसं राहवे दद्यात्केतुभ्यश्छागमुत्तमम् ।
सुवर्णेन समा कार्या यजमानेन दक्षिणा ॥

बुधप्रीत्यर्थं देयहेम्ना सह सर्वा मूल्यतः समा इति केचित् । अस्मिन्पक्षे षोडशमाषविशिष्टहेमवाचिसुवर्णपदासामञ्जस्यापत्तेः तादृशसुवर्णमूल्यं प्रत्येकमिति परे । बह्वल्पमूल्येषु तथा हेमापि देयं यथा सर्वाः प्रत्येकं दशमाषसुवर्णेन समा भवन्तीति तु सम्यक् । शाम. २०-२१

[3]सर्वेषामथवा गावो दातव्या हेमभूषिताः ।
सुवर्णमथवा दद्याद्गुरुर्वा येन तुष्यति ।
स्वमन्त्रेण प्रदातव्याः सर्वाः सर्वत्र दक्षिणाः ॥

(१) मत्स्य. ९३।५८ ; शाम. २० द्विज (वेद) ; विपा. ५५३ द्विज (विप्र) क्रमेण मात्स्ये ; संग. १२६ पितो द्विज (तव्यो विप्र) क्रमेण मात्स्ये ; संदी. ७९.

(२) मत्स्य. ९३।५९ ; अप. १।३०५ पृ. ५७५ सुसमाहितान् (तु समाहितः) ; संत. ९४८ सुसमाहितान् (तान् समाहितः) ; शाम. २० संतवत् ; विपा. ५५३ संतवत्, क्रमेण मात्स्ये ; संग. १२६ संतवत्, क्रमेण मात्स्ये ; संदी ७९.

(३) मत्स्य. ९३।६० ; अप. १।३०५ पृ. ५७५ शङ्खं दद्यात् (दद्याच्छङ्खं) च ककुद्मिनम् (ककुदाऽन्वितम्) ; संत. ९४८ अपवत्, पू. क्रमेण मात्स्ये ; शाम. २० शङ्खं दद्यात् (दद्याच्छङ्खं) च ककद्मिनम् (ककुदाऽधिकम्) ; संदी. ७९.

(१) मत्स्य. ९३।६१ ; अप. १।३०५ पृ. ५७५ ; शाम. २० ; संदी. ७९.

(२) मत्स्य. ९३।६२ ; अप. १।३०५ पृ. ५७५ केतुभ्यः (केतवे) समा (समाः) दक्षिणा (दक्षिणाः) ; शाम. २० अपवत् ; संदी. ७९ समा (समं).

(३) मत्स्य. ९३।६३ स्वमन्त्रेण प्र (समन्त्रेणैव) ; अप. १।३०५ पृ. ५७५ तृतीयार्धं नास्ति ; संत. ९४८ स्वम (सम) ; शाम. २१ प्रथमद्वितीयार्धयोः (सर्वेषामथवा गावो गुरुर्वा येन तुष्यति ।) स्वमन्त्रेण (समन्त्रेण) ; संदी. ७९ स्वमन्त्रेण (मन्त्रेणैव).

दक्षिणादानमन्त्राः

[१]कपिले सर्वदेवानां पूजनीयाऽसि रोहिणी।
तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥

[२]पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम्।
विष्णुना विधृतश्चासि ततः शान्तिं प्रयच्छ मे॥

[३]धर्मस्त्वं वृषरूपेण जगदानन्दकारकः।
अष्टमूर्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥

[४]हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

(१) मत्स्य. ९३।६४ ; प्रपा. ७९ (=) रोहिणि (रोहिणि) तीर्थ (सर्व) यस्मा (तस्मा) ; विपा. ५६१ (=) देवानां (भूतानां) रोहिणी (रोहिणि) ; संकौ. १४२ (=) रोहिणी (सर्वदा) तीर्थं (सर्वं) ; संग. १४९ (=) देवानां (भूतानां) ; संर. १६२ (=) संकौवत् ; संदी. ७९ रोहिणी (रोहिणि).

(२) मत्स्य. ९३।६५ ; प्रपा. ७९ (=) (त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे। पाञ्चजन्य प्रदास्यामि अतः शान्तिं प्रयच्छ मे ॥) ; विपा. ५६१ (=) तश्चासि ततः (तो यस्मादतः) ; संकौ. १४३ (=) (त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे । पाञ्चजन्य प्रदास्यामि ह्यतः शान्तिं प्रयच्छ मे ॥) ; संग. १४९ (=) विधृतश्चासि ततः (च धृतो नित्यमतः) ; संर. १६२ (=) संकौवत् ; संदी. ७९.

(३) मत्स्य. ९३।६६ कारकः (कारक) ; प्रपा. ७९ (=) धर्मस्त्वं (धर्म त्वं) कारकः (कारक) ; विपा. ५६१ (=) ; संकौ. १४३ (=) शान्तिं प्रयच्छ मे (पाहि सनातन) ; संग. १५० (=) ; संर. १६२ (=) मत्स्यवत् ; संदी. ७९–८०.

(४) मत्स्य. ९३।६७ गर्भस्थं (गर्भस्त्वं) ; प्रपा. ७९ (=) ; विपा. ५६१ (=) ; संकौ. १४३ (=) संक्षेपेण निर्देशः कृतः ; संग. १५० (=) मत्स्यवत् ; संर. १६२ (=) ; संदी. ८० मत्स्यवत्.

[१]पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम्।
प्रदानात्तस्य मे विष्णो ह्यतः शान्तिं प्रयच्छ मे ॥

[२]विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः।
चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे ॥

[३]यस्मात्त्वं पृथिवी सर्वा धेनुः केशवसंनिभा।
सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥

[४]यस्मादायस कर्माणि तवाधीनानि सर्वदा।
लाङ्गलाद्यायुधादीनि तस्माच्छान्तिं प्रयच्छ मे ॥

(१) मत्स्य. ९३।६८ ; प्रपा. ७९ (=) विष्णो ह्यतः (विष्णुरतः) ; विपा. ५६१ (=) पीतव (पीतं व) त्तस्य मे विष्णो ह्यतः (दस्य मे विष्णुस्ततः) यच्छ मे (यच्छतु) ; संकौ. १४३ (=) मे विष्णो ह्यतः (भो विष्णोरतः) ; संग. १५० (=) ह्यतः (अतः) ; संर. १६२ (=) युगं (मिदं) विष्णो ह्यतः (विष्णुः सदा) यच्छ मे (यच्छतु) ; संदी. ८०.

(२) मत्स्य. ९३।६९ ; प्रपा. ७९ (=) ; विपा. ५६२ (=) द्वितीयपादे (राजसे पृथिवीतले) ; संकौ. १४३ (=) ; संग. १५० (=) ; संर. १६२ (=) चन्द्रार्कवाहनो (सूर्यस्य वाहनं) ; संदी. ८०.

(३) मत्स्य. ९३।७० ; प्रपा. ७९ (=) पूर्वार्धे (येन त्वं पृथिवी सर्वा धेनो वै कृष्णसंनिभे।) ; विपा. ५६२ (=) संनिभा (वल्लभा) ; संकौ. १४३ (=) प्रपावत् ; संग. १५० (=) विपावत् ; संर. १६२ (=) द्वितीयपादे (धेनो वै कृष्णसंनिभे) ; संदी. ८०.

(४) मत्स्य. ९३।७१ ; प्रपा. ७९ (=) तवाधी (त्वदधी) ; विपा. ५६२ (=) कर्माणि (कार्याणि) लाङ्गलाद्या (हलागेला) ; संकौ. १४३ (=) कर्माणि तवा (कार्याणि त्वद) ; संग. १५१ (=) लाङ्गलाद्या (हलागेला) तस्मात् (अतः) ; संर. १६२ (=) संकौवत् ; संदी. ८०.

[1]यस्मात्त्वं छाग यज्ञानामङ्गत्वेन व्यवस्थितः ।
यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥
[2]गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छ्रिये मे स्यादिहलोके परत्र च ॥
[3]यस्मादशून्यं शयनं केशवस्य च सर्वदा ।
शय्या ममाप्यशून्याऽस्तु दत्ता जन्मनि जन्मनि ॥
[4]यथा रत्नेषु सर्वेषु सर्वे देवाः प्रतिष्ठिताः ।
तथा रत्नानि यच्छन्तु रत्नदानेन मे सुराः ॥
[5]यथा भूमिप्रदानस्य कलां नार्हन्ति षोडशीम् ।
दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवत्विह ॥

वित्तशाठ्यनिषेधः, ग्रहयज्ञस्य फलम् अनुकल्पश्च

[6]एवं संपूजयेद्भक्त्या वित्तशाठ्येन वर्जितः ।
रत्नकाञ्चनवस्त्रौघैर्धूपमाल्यानुलेपनैः ॥
[7]अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।
सर्वान् कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥

[1]यस्तु पीडाकरो नित्यमल्पवित्तस्य वा ग्रहः ।
तं च यत्नेन संपूज्य शेषानप्यर्चयेद्बुधः ॥
[2]सुस्थः स्वल्पोपचारेण दुःस्थः शक्त्याद्यपेक्षया ।
यत्नतः पूजनीयास्ते पूजिताश्चेच्छुभावहाः ॥
[3]ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः ।
पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः ॥
[4]यथा बाणप्रहाराणां कवचं स्यान्निवारणम् ।
तद्वद्दैवोपघातानां शान्तिर्भवति वारणम् ॥

दक्षिणाभावे फलाभावः

[5]तस्मान्न दक्षिणाहीनं कर्तव्यं भूतिमिच्छता ।
संपूर्णया दक्षिणया यस्माद्देवोऽपि तुष्यति ॥

अयुतहोमस्य कर्माङ्गत्वं काम्यत्वं च

[6]सदैवायुतहोमोऽयं नवग्रहमखे स्थितः ।
विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ॥
[7]निर्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगाद्भुतेषु च ।
कथितोऽयुतहोमोऽयं लक्षहोममतः शृणु ॥

---

(१) मत्स्य. ९३।७२ छाग (सर्व); प्रपा. ७९ (=); विपा. ५६२ (=); मत्स्यवत्; संकौ. १४३ (=); संग. १५१ (=) मत्स्यवत्; संर. १६३ (=); संदी. ८० मत्स्यवत्.

(२) मत्स्य. ९३।७३; विपा. ५६२ (=) निर्देशमात्रम्; संग. १५१ (=) च्छ्रिये (च्छिवं); संदी. ८० संगवत्.

(३) मत्स्य. ९३।७४; विपा. ५६३ (=) च सर्वदा (शिवस्य च); संदी. ८०.

(४) मत्स्य. ९३।७५; विपा. ५६३ (=) प्रतिष्ठिताः (प्रकीर्तिताः) रत्नानि (शान्तिं प्र); संदी. ८० यथा (यतो) तथा (ततो).

(५) मत्स्य. ९३।७६; विपा. ५६३ (=) वत्विह (वेदिह); संदी. ८० यथा (यतो).

(६) मत्स्य. ९३।७७; संदी. ८०.

(७) मत्स्य. ९३।७८; शाम. २१ चरेत् (रमेत्): २२; विपा. ५५५ क्रमेण मात्स्ये: ५६४; संग. १५३; संदी. ८०.

(१) मत्स्य. ९३।७९; दीक. १।३०७ वित्तस्य (वित्तोऽपि) तं च (तं तु) बुधः (नरः); संत. ९४८ तं च (स तं) बुधः (नरः); वीमि. १।३०७ (=) ग्रहः (पुनः) तं च (तं तु); संदी. ८० वा (वै).

(२) संत. ९४८.

(३) मत्स्य. ९३।८०; विपा. ५५५ क्रमेण मात्स्ये; संदी. ८१.

(४) मत्स्य. ९३।८१ स्यान्नि (भवति); विपा. ५५५ बाण (शस्त्र) तद्वत् (एवं); संदी. ८१ मत्स्यवत्.

(५) मत्स्य. ९३।८२ स्माद्देवो (स्मादेको); संदी. ८१.

(६) मत्स्य. ९३।८३; निप्र. २०९ उत्त.; शाम. २१ मखे स्थितः (मखः स्मृतः); विपा. ५५५-५५६ शामवत्, क्रमेण मात्स्ये; प्रका. २१८ शामवत्, शान्तिरत्ने; संग. ६७, १०६ उत्त., कर्मतत्त्वदीपिकायाम्; संदी. ७२ उत्त., कर्मतत्त्वदीपिकायाम्: ८१.

(७) मत्स्य. ९३।८४; निप्र. २०९ पू.; शाम. २१ पू.; विपा. ५५६ पू. क्रमेण मात्स्ये; प्रका. २१८ शान्ति-

विवाहेत्यादिना च विवाहादिषु काम्येषु (च) कर्मस्वङ्गत्वमुक्तम् । अत्र ग्रहस्वरूपवर्णदेशगोत्राग्निस्थानमुखाकारस्थापनहोममन्त्रचन्दनधूपदीपनैवेद्यसमिद्दक्षिणाधिदेवताप्रत्यधिदेवतोपदेशकवाक्येषु ग्रहाणां स्वरूपनिर्देशस्थापनहोममन्त्रोपदेशकवाक्येषु वाऽधिदेवताप्रत्यधिदेवताविनायकादिपञ्चलोकपालानामनेकस्मृतिपुराणभेदेन भूयोविसंवादिभिरनेकैः पर्यायशब्दैरुपस्थितेर्नात्रैकवैधशब्दनियमः । नापि मन्त्रवर्णैनैकशब्दोपस्थितिः । शब्दविशेषैर्देवता अनूद्य तत्स्मारकतया मन्त्रविनियोगेन मन्त्राणां देवताप्रापकत्वायोगात्, तेषां बाहुल्येनास्पष्टलिङ्गत्वाच्च । अतो द्रव्यत्यागादिषु स्वरूपातिनिर्देशकस्मृतिमन्त्रवर्णोपस्थितशब्दानामन्यतमेन शब्देनोद्देशो ग्रहादीनामिति । शिष्टाचारोऽप्येवम् । अत्र व्याहृतिकरणकेऽयुतहोमेऽग्निवायुसूर्यप्रजापतय एव देवताः, न नवग्रहाः, ऐन्द्यादिवत्तत्प्रकाशकत्वेन विनियोगाभावात् (?) । अत एव पारिजाते— 'ॐ भूर्भुवः सुवश्चेति तिस्रो व्याहृतयो जपेत् (? जपे) । आभिश्च होमे तिसृभिश्चतुर्थी स्यात्समासतः ॥' इति । 'समस्ताभिरेव होमः । स चाग्निवायुसूर्यदैवत्यः' इति तु मदनः । सर्वथा व्याहृतिहोमे न ग्रहा देवता इति । प्रधानं चात्र ग्रहपूजा, तद्धोमोऽयुतहोमादिश्च, 'श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।' इत्यादिना तत्पूजातद्धोमयोः फलसंबन्धात्, 'ग्रहयज्ञस्त्रिधा' इत्युक्त्वा 'प्रथमोऽयुतहोमः' इत्यादिनाऽयुतलक्षकोटिहोमानां ग्रहयज्ञविशेषत्वेनोपक्रमात्, 'तस्मादयुतहोमस्य विधानं तु समाचरेत् ।' इत्युपसंहाराच्च । ग्रहाग्रहदेवत्यकर्मसमूहे 'प्राणभृत उपदधाति' इतिवल्लिङ्गसमवायेन ग्रहयज्ञशब्दः । तातचरणास्त्वयुतहोमादीनामेव प्राधान्यं ग्रहहोमस्त्वङ्गमित्याहुः । तदाशयं न जाने । यो हि कामशब्देन फलसंबन्धः 'श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।' इत्यादिः स तावद् ग्रहपूजाहोमयोरेवोचितः, ग्रहसंबन्धप्राप्तेर्ग्रहयज्ञशब्दस्य तन्नामत्वात् । न चायुतहोमादीनां फलसंबन्धे तत्प्रकरणपाठाद्ग्रहपूजाहोमयोरङ्गतेति वाच्यम्, वैपरीत्यस्यापि सुवचत्वात् । अयुतहोमादिशब्दानां ग्रहयज्ञसामानाधिकरण्येन ग्रहयज्ञनामत्वं तु लिङ्गसमवायेन, न तदङ्गत्वेन । आर्थवादिकः फलसंबन्धस्तु 'अनेन विधिना यस्तु ग्रहपूजां समाचरेत् । सर्वान् कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥' इत्यत्र 'यज देवपूजासंगतिकरणदानेषु' इत्यनुशिष्टयोः पूजाहोमयोः, 'सदैवायुतहोमोऽयम्' इत्याद्युपक्रम्य 'निर्विघ्नार्थं मुनिश्रेष्ठ' इत्यादिना त्वयुतहोमादीनामपि । स्मृतिषु तु प्राय आर्थवादिकमेव फलम् ।

अत्र कामशब्दोपनीते फले सत्यार्थवादिकं संबध्यते न वेति तु विचारान्तरम् । किंच, याज्ञवल्क्यादिस्मृतिषु न तावदयुतहोमादीनां विधिर्नाप्यनुवादः । अतो ग्रहपूजाहोमयोः प्राधान्याभावे तत्रत्येतिकर्तव्यतासंबन्धो न स्यात् । अतो ग्रहपूजाहोमयोरपि प्राधान्यं भाति । अत एव क्वचित्केवलग्रहमखेषु तदङ्गकेषु च शान्तिकादिकर्मस्वेकस्मृत्युक्ताङ्गप्रधानादरेण स्मृत्यन्तरोक्तप्रधानभूतायुतादिहोमं विनाऽपि शाखान्तरोक्तग्रहयागाभ्यासं विनैकशाखीयग्रहयागाभ्यासमात्राणामिव पूजाग्रहदेवत्यहोमयोरेवानुष्ठानं कथंचित् शिष्टानां संगच्छते । ग्रहपूजाहोमयोरङ्गत्वे त्वङ्गमात्रानुष्ठानमेव स्यात् । शाम. २१–२२

### मण्डपविधानम्

[1]गृहस्योत्तरपूर्वेण मण्डपं कारयेद्बुधः ।
रुद्रायतनभूमौ वा चतुरस्रमुदक्प्लवम् ॥
[2]दशहस्तमथाष्टौ वा हस्तान्कुर्याद्विधानतः ।
तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः ॥

---

रत्ने; संग. ६७, १०६ गाद्मुतेषु (गोद्भवेषु) पू., कर्मतत्त्वदीपिकायाम्; संदी. ७३ घ्नार्थं (घ्नार्थे) गाद्मुतेषु (गोद्भवेषु) पू., कर्मतत्त्वदीपिकायाम् : ८१.

(१) मत्स्य. ९३।८६–८७ दक्प्लवम् (दङ्मुखम्); प्रपा. ६९–७० मण्डपं (मण्टपं) यतन (य नव); प्रर. २१; शाम. ११; विपा. ५३७; संग. १०७ (=); संर. १२४; संदी. ७३ कर्मतत्त्वदीपिकायाम् : ८१ मत्स्यवत्.

(२) मत्स्य. ९३।८७ पू.; प्रपा. ७० हस्तम (हस्तान); प्रर. २१ प्रपावत्; शाम. ११; विपा. ५३७;

[१]नित्यं नैमित्तिकं हित्वा सर्वमन्यत्समण्डपम् ॥

( १ ) एतन्मण्टपकरणं काम्ये नित्यम्, नित्यनैमित्तिकयोस्त्वनित्यम्, 'नित्यं नैमित्तिकं हित्वा सर्वमन्यत्समण्टपम्।' इति मत्स्येनाभिधानात्। प्रपा. ७०

( २ ) उत्तरपूर्वेणेति तृतीया सप्तम्यर्थे। उदक्प्लवम् उदक्क्रमनिम्नम्। अष्टौ वा हस्तान् कुर्यादित्यत्र मण्डपार्थमिति शेषः। कुर्यात् स्वीकुर्यादित्यर्थः। दशहस्तमष्टहस्तं वा मण्डपं कुर्यादिति फलितोऽर्थः। विधानत इत्यनेन भूमिशोधननवभागकरणादिः सर्वा क्रिया गृह्यते। तस्य मण्डपस्य। संर. १२४

[२]प्रागुदक्प्लवनां भूमिं कारयेद्यत्नतो बुधः।
प्रागुत्तरं समासाद्य प्रदेशं मण्डपस्य तु ॥

कुण्डलक्षणम्

[३]शोभनं कारयेत् कुण्डं यथावल्लक्षणान्वितम्।
चतुरस्रं समन्तात्तु योनिवक्त्रं समेखलम् ॥
चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता।
प्रागुदक्प्लवना कार्या सर्वतः समवस्थिता ॥
[४]शान्त्यर्थं सर्वलोकानां नवग्रहमखः स्मृतः।
मानहीनाधिकं कुण्डमनेकभयदं भवेत्।
यस्मात्तस्मात्सुसंपूर्णं शान्तिकुण्डं विधीयते ॥
[५]द्विरङ्गुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः।
अङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि ॥

संग. १०७ (=); संर. १२४; संदी. ७३ कर्मतत्त्वदीपिकायाम् : ८१ पू.

( १ ) प्रपा. ७०. मण्ड (मण्ट); प्रर. २१; संर. १२३.

( २ ) मत्स्य. ९३।८८; संदी. ८१.

( ३ ) मत्स्य. ९३।८९-९०; संदी. ८१.

( ४ ) मत्स्य. ९३।९१; प्रपा. ७० (=) द्वितीयार्धमात्रम्; प्रर. २१ द्वितीयार्धमात्रम्; विपा. ५३७ द्वितीयार्धमात्रम्; संग. १०८ द्वितीयार्धमात्रम्, विधानपारिजाते; संदी. ८१ : ८७ द्वितीयार्धमात्रम्, विधानपारिजाते.

( ५ ) मत्स्य. ९३।९६ द्विरङ्गुलो (व्यङ्गुलो ह्यु) समुदा (स उदा) लोच्छ्राय (लोच्छ्रय); प्रपा. ७० (=)

[१]द्व्यङ्गुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः।
दशाङ्गुलोच्छ्रिता भित्तिः स्थण्डिले स्यात्तथोपरि।
तस्मिन्नावाहयेद्देवान्पूर्ववत्पुष्पतण्डुलैः ॥

( १ ) इत्थमुक्तलक्षणं कुण्डं वेदिं च निर्माय ग्रहयज्ञः कर्तव्यः। 'कुण्डे वा स्थण्डिले वा' इत्याचार्यवचनाद्यदा स्थण्डिले क्रियते तदा वेदिरेव कार्या न मण्टपः, तथैव शिष्टाचारस्य दर्शनात्। प्रपा. ७०

( २ ) द्विरङ्गुलोच्छ्रित इत्यत्र सुप्प्रयोग आर्षः। उपरि प्रथमवप्रोपरि। सर्वेषां वप्राणाम्। संर. १२५

[२]वितस्तिमात्रा योनिः स्यात्षट्सप्ताङ्गुलिविस्तृता।
कूर्मपृष्ठोन्नता मध्ये पार्श्वयोश्चाङ्गुलोच्छ्रिता ॥
[३]गजोष्ठसदृशी तद्वदायता छिद्रसंयुता।
एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते।
मेखलोपरि सर्वत्राप्यश्वत्थदलसंनिभा ॥

अङ्गुलो (त्र्यङ्गुलो); प्रर. २१; शाम. १२ प्रपावत्; विपा. ५३७ अङ्गुलो (त्र्यङ्गुलो); संर. १२५; संदी. ८२ द्विरङ्गुलो (व्यङ्गुलं ह्यु) लोच्छ्राय (लोच्छ्रय).

( १ ) मत्स्य. ९३।९७ द्व्यङ्गुलस्तत्र (त्र्यङ्गुलस्य च) कथितो (कथ्यते); प्रपा. ७० (=) प्रथमार्धमात्रम्; प्रर. २१ प्रथमार्धमात्रम्; शाम. १२ प्ररवत्; विपा. ५३७ प्ररवत्; संग. १०८ प्ररवत्; संर. १२५ प्ररवत्; संदी. ८२ मत्स्यवत्.

( २ ) मत्स्य. ९३।१२४ ङ्गुलि (ङ्गुल); प्रपा. ७० स्कान्दे; प्रर. २१; शाम. ११ मत्स्यवत्; विपा. ५३७ पू.; संग. १०७ मत्स्यवत्, पू.; संर. १२४; संदी. ८४ मात्रा (मात्री) शेषं मत्स्यवत्.

( ३ ) मत्स्य. ९३।१२५-१२६ त्राप्यश्व (त्र अश्व) संनिभा (संनिभम्); प्रपा. ७० द्वितीयार्धं नास्ति, स्कन्दपुराणे; प्रर. २१ त्राप्यश्व (त्र अश्व) द्वितीयार्धं नास्ति;

[1]सा च पश्चिमतो ज्ञेया योनित्वादिति केचन ॥

(१) सा च योनिः पश्चिमतः कार्या। तथा च गर्गः– 'पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः।' इति। प्रपा. ७०

(२) गजोष्ठतुल्या, अश्वत्थदलतुल्या वेति विकल्पः। ¶ प्रर. २१

(३) तद्वत् अङ्गुलोच्छ्रायवत्, पार्श्वयोर्विस्तृतेत्यर्थः। $ संर. १२४

आदित्याभिमुखत्वेन ग्रहस्थापनम्

[2]आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवताः।
स्थापनीया मुनिश्रेष्ठ नान्तरे न पराङ्मुखाः॥

(१) नान्तरे न बहिर्योगिनः संनिहिताः इति व्याख्येयम्। † प्रपा. ७२

(२) आदित्यस्यान्यस्य च स्थापितग्रहस्यान्तरालेऽन्यो ग्रहो न स्थापनीयः। नाप्यादित्यपराङ्मुखाः कार्याः। अधिदैवतपूजाऽयुतहोमादौ कार्या। § संत. ९४६–९४७

दक्षिणादानम्

[1]दातव्या यजमानेन पूर्ववद्दक्षिणाः पृथक्।
कामक्रोधविहीनेन ऋत्विग्भ्यः शान्तचेतसा॥

अन्नमन्त्रदक्षिणाहीनस्यानिष्टफलत्वम्

[2]न कुर्याद्दक्षिणाहीनं वित्तशाठ्येन मानवः।
अददल्लोभतो मोहात्कुलक्षयमवाप्नुते॥
अन्नदानं यथाशक्त्या कर्तव्यं भूतिमिच्छता।
अन्नहीनः कृतो यस्माद्दुर्भिक्षफलदो भवेत्॥
[3]अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तथर्त्विजः।
यजन्तं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः॥

व्यस्तग्रहयज्ञः

[4]तस्मात्पीडाकरो नित्यं य एव भवति ग्रहः।
तमेव पूजयेद्भक्त्या द्वौ वा त्रीन् वा यथाविधि॥

अशक्तावेकब्राह्मणपूजनम्

[5]एकमप्यर्चयेद्भक्त्या ब्राह्मणं वेदपारगम्।
दक्षिणाभिः प्रयत्नेन न बहूनल्पवित्तवान्॥

---

¶ शेषं प्रपावत्।

$ शेषं प्रपावत् प्ररवच्च।

† विपा. प्रपानुवादः।

§ संग., संदी. संतवत्।

शाम. ११ सर्वं प्ररवत्; विपा. ५३७ सर्वं प्ररवत्; संग. १०७ सर्वं प्ररवत्; संर. १२४ सर्वं प्ररवत्; संदी. ८४ मत्स्यवत्.

(१) विपा. ५३७; संग. १०७.

(२) मत्स्य. ९३।९८ सर्वे (सर्वाः) नान्तरे न (नोत्तरेण); प्रपा. ७२; संत. ९४६ नान्तरे (नान्तरा); शाम. १४ पू.; विपा. ५४० नान्तरे न (नान्तरेण) व्याख्यानात् प्रपावत्पाठः; संग. ११४ विपावत्, चिन्तामणौ; संदी. ८२ नान्तरे न (नोत्तरेण): ९० श्रेष्ठ नान्तरे न (श्रेष्ठा नान्तरेण) स्कन्दपुराणे.

(१) मत्स्य. ९३।१०३–१०४; संत. ९४८ दक्षिणाः (दक्षिणा) काम (त्वरा).

(२) मत्स्य. ९३।१०९–११०; संदी. ८३.

(३) मत्स्य. ९३।१११ स्तथर्त्विजः (स्तु ऋत्विजः) यजन्तं (यष्टारं) हीनो (हीनं); स्मृच. १५९ स्तथर्त्विजः (स्तथा द्विजः); पमा. १५८ यजन्तं (आत्मानं); चम. ११९ र्त्विजः (र्त्विजम्) शेषं पमावत्; संम. ७६ (=) चमवत्; विपा. ५५४ स्तथर्त्विजः (स्तु ऋत्विजः) यजन्तं दक्षिणाहीनो (यजमानमदक्षिण्यो) क्रमेण मात्स्ये; संग. १५३ विपावत्; संदी. ८३ स्तथर्त्विजः (स्तु ऋत्विजः) यजन्तं (यष्टारं).

(४) मत्स्य. ९३।११२–११३ पूर्वार्धे (यस्मात्पीडाकरो नित्यं यज्ञे भवति विग्रहः।); दीक. १।३०७; संत. ९४८; संदी. ८३ मत्स्यवत्.

(५) मत्स्य. ९३।११३; दीक. १।३०७ न बहूनल्प (अनुकूलस्य); संत. ९४९; संदी. ८३.

अयुतहोमस्य काम्यकर्माङ्गत्वम्

[1]वश्यकर्माभिचारादि तथैवोच्चाटनादिकम् ।
नवग्रहमखं कृत्वा ततः काम्यं समाचरेत् ॥

[2]अन्यथा फलदं पुंसां न काम्यं जायते क्वचित् ।
तस्मादयुतहोमस्य विधानं पूर्वमाचरेत् ॥

आवाहने वर्णरूपगुणध्यानस्य व्याहृतिमन्त्रस्य च विधिः

[3]वर्णरूपगुणैर्युक्तान् व्याहृत्याऽऽवाहयेत्तु तान् ॥

ग्रहप्रतिमानां स्वरूपं मानं च

शिव उवाच–

[4]पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वः सप्तरज्जुश्च द्विभुजः स्यात्सदा रविः ॥

[1]श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः ।
गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥

[2]रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः ।
चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥

[3]पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः ।
खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥

[4]देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ ।
दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥

[5]इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः ।
बाणबाणासनधरः कर्तव्योऽर्कसुतस्तथा ॥

---

(१) मत्स्य. ९३।१४० ; शाम. २१ चरेत् ( रमेत् ) ; विपा. ५५६ रादि ( रादौ ) दिकम् ( दिके ) शेषं शामवत् , क्रमेण मात्स्ये ; प्रका. २१८ काम्यं ( कर्म ) शेषं विपावत् , शान्तिरत्ने ; संग. ६७ रादि ( रेषु ) दिकम् ( दिषु ) काम्यं ( कार्यं ) कर्मतत्त्वदीपिकायाम् : १०६ रादि ( रेषु ) दिकम् ( दिषु ) कर्मतत्त्वदीपिकायाम् ; संदी. ७३ रादि ( रेषु ) दिकम् ( दिषु ) चरेत् ( श्रयेत् ) कर्मतत्त्वदीपिकायाम् : ८६.

( २ ) मत्स्य. ९३।१४१ ; शाम. २१ पूर्वमा (तु समा) ; विपा. ५५६ शामवत् , क्रमेण मात्स्ये ; प्रका. २१८ पू. , शान्तिरत्ने ; संदी. ८६.

( ३ ) प्रपा. ७२ वर्ण ( सर्व ) ; शाम. १४ ( = ) ; विपा. ५३९ (=).

( ४ ) मत्स्य. ९४।१ ; मिता. १।२९७–२९८ सप्ताश्वः सप्तरज्जुश्च ( सप्ताश्वरथसंस्थश्च ) ; अप. १।२९६ पृ. ५६९ मितावत् ; चदा. ८७३ ' ब्रह्माण्डदाने ' इति निर्देशः ' पद्मासनः ' इत्यादीनां ' शतमष्टोत्तरं सदा ' इत्यन्तानां नवश्लोकानां कृतः , तत्रैव टिप्पण्यां तु ' मत्स्यपुराणे इति क्वचित्पाठः ' इत्युक्तम् । एतदग्रेतनानामष्टश्लोकानां विषयेऽपि द्रष्टव्यम् ; प्रपा. ७० सप्ताश्वः सप्तरज्जुश्च ( सप्ताश्वरथसंयुक्तो ) ; दीक. १।२९७ मितावत् ; निप्र. २१३ (=) मितावत् ; शाम. २२ मितावत् ; विपा. ५४५ ' पद्मासनः ' इत्यादीनां ' शतमष्टोत्तरं सदा ' इत्यन्तानां नवश्लोकानां निर्देशमात्रम् ; संग. १४२ मितावत् ; सस्मृ. ५५.

( १ ) मत्स्य. ९४।२ दशाश्वः श्वेतभूषणः ( श्वेताश्वः श्वेतवाहनः ) ; मिता. १।२९७–२९८ ; अप. १।२९६ पृ. ५६९ ; चदा ८७३ ; प्रपा. ७० ; दीक. १।२९७ ; शाम. २२ ; संग. १४२ भूषणः ( वाहनः ) ; सस्मृ. ५५.

( २ ) मत्स्य. ९४।३ मेषगमो ( श्वेतरोमा ) ; मिता. १।२९७–२९८ ; अप. १।२९६ पृ. ५६९ गदाधरः ( गदाकरः ); चदा. ८७३ ; प्रपा. ७० गमो (गतो) ; दीक. १।२९७ ; शाम. २२ ; संग. १४२ ; सस्मृ. ५५ पूर्वार्धे ( रक्तमाल्याम्बरः शक्तिशूलपाणिर्गदाधरः । ).

( ३ ) मत्स्य. ९४।४ ; मिता. १।२९७–२९८ ; अप. १।२९६ पृ. ५६९ सम ( दल ) ; चदा. ८७३ अपवत् ; प्रपा. ७० ; दीक. १।२९७ अपवत् ; शाम. २३ ; संग. १४२ ; सस्मृ. ५५.

( ४ ) मत्स्य. ९४।५ ; मिता. १।२९७–२९८ ; अप. १।२९६ पृ. ५६९ ; चदा. ८७३ ; प्रपा. ७० ; दीक. १।२९७ ; शाम. २३ ; संग. १४२ ; सस्मृ. ५५ तद्वत् (विधात्) .

( ५ ) मत्स्य. ९४।६ ; मिता. १।२९७–२९८ तथा ( सदा ) ; अप. १।२९६ पृ. ५६९ धरः ( करः ) तथा

[1]करालवदनः खड्गचर्मशूली वरप्रदः ।
नीलसिंहासनस्थश्च राहुरत्र प्रशस्यते ॥

[2]धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः ।
गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥

[3]सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः ।
स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा ॥

## स्कन्दपुराणम्

### ग्रहाणां पीडाकरत्वं सोदाहरणम्

[4]गार्ग्यं सुखासनासीनं कौशिकः परिपृच्छति ।
निखिलां ग्रहशान्तिं मे भगवन् वक्तुमर्हसि ॥

गार्ग्य उवाच–

[1]देवदानवगन्धर्वा यक्षराक्षसकिन्नराः ।
पीड्यन्ते ग्रहपीडाभिः किं पुनर्भुवि मानवाः ॥

[2]शनैश्चरेण सौदासो नरमांसे नियोजितः ।
राहुणा पीडितो राजा नलो भ्रान्तो महीतले ॥

[3]अङ्गारकविरोधेन रामो राष्ट्राद्विवासितः ।
अष्टमेन शशाङ्केन हिरण्यकशिपुर्हतः ॥

[4]रविणा सप्तमस्थेन रावणो विनिपातितः ।
गुरुणा जन्मसंस्थेन हतो राजा सुयोधनः ॥

[5]पाण्डवा बुधपीडायां विकर्मणि नियोजिताः ।
षष्ठेनोशनसा युद्धे हिरण्याक्षो निपातितः ।
एते चान्ये च बहवो ग्रहदोषैस्तु पीडिताः ॥

### कुण्डलक्षणं वेदिलक्षणं च

[6]नवग्रहमखे कुण्डं हस्तमात्रं समन्ततः ।
चतुरस्रमधोहस्तं योनिवक्त्रं समेखलम् ॥

(१) योनिरेव वक्त्रं यस्य तत् । पुत्रादिकामनया तु योन्याद्याकारा अपि भवन्ति । शाम. ११

(२) अधोहस्तम् अधोभागे हस्तपरिमितखातम् । योनिवक्त्रं योनिवक्त्रवत् । वक्त्रं कण्ठः, तद्वद्विस्तारवत् ।

---

(सदा); चदा. ८७३ मितावत्; प्रपा. ७०; दीक. १।२९७ मितावत्; शाम. २३ मितावत्; संग. १४२ मितावत्; सस्मृ. ५५ धरः (यनः).

(१) मत्स्य. ९४।७; मिता. १।२९७–२९८ नीलसिं (नीलः सिं); अप. १।२९६ पृ. ५६९ स्थश्च राहुरत्र (युतो राहुस्तत्र); चदा. ८७३–८७४ मितावत्; प्रपा. ७० शूली (धारी); दीक. १।२९७ स्थश्च (गतो) शेषं मितावत्; शाम. २३ मितावत्; संग. १४२ मितावत्; सस्मृ. ५५ शस्यते (दृश्यते).

(२) मत्स्य. ९४।८; मिता. १।२९७–२९८; अप. १।२९६ पृ. ५६९; चदा. ८७४; प्रपा. ७०; दीक. १।२९७ धूम्रा द्वि (कृतोर्ध्व); शाम. २३; संग. १४२ धूम्रा द्विबाहवः (धूम्रादि वा रुचः); सस्मृ. ५५.

(३) मत्स्य. ९४।९; मिता. १।२९७–२९८; अप. १।२९६ पृ. ५६९ तावहाः (तप्रदाः); चदा. ८७४; प्रपा. ७० पू.; दीक. १।२९७ स्वाङ्गु (अङ्गु) उत्त.; शाम. २३ दीकवत्; संग. १४२ स्वाङ्गु (अङ्गु) सदा (शतम्); सस्मृ. ५५.

(४) विपा. ५३६; संग. १०६ प्रथमपादे (सुखासीनममुं गार्ग्य).

(१) शाम. ११; विपा. ५३६; संग. १०६ किन्नराः (पन्नगाः).

(२) शाम. ११; विपा. ५३६; संग. १०६ मांसे नि (मांसेन).

(३) शाम. ११ राष्ट्राद्वि (राष्ट्रान्नि); विपा. ५३६; संग. १०६.

(४) शाम. ११; विपा. ५३६ हतो (मृतो); संग. १०६ सप्तम (चाष्टम).

(५) शाम. ११; विपा. ५३६ दोषैस्तु (दोषैश्च); संग. १०६.

(६) प्रपा. ७०; प्रर. २१; शाम. ११ समन्ततः (समं भवेत्); विपा. ५३७ शामवत्; संग. १०७ शामवत्; संर. १२४ चतुरस्र (चतुरश्र); संदी. ७३ शामवत्.

इदं कुण्डं मण्डपपक्षे तदीशानभाग उदीच्यां वा कार्यमिति हेमाद्रिः। मध्ये इति केचित्। संर. १२४

[1]**चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता।**
**मानहीनाधिकं कुण्डमनेकभयदं भवेत्॥**

अत्र विशेषोपदेशादेकैव मेखला। शाम. ११

[2]**तस्य चोत्तरपूर्वे तु स्थण्डिलं हस्तमात्रकम्।**
**त्रिवप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितम्॥**

(१) स्थण्डिलं वेदिः। वप्राः मेखलाः।

¶ प्रर. २१

(२) तस्य कुण्डस्य। स्थण्डिलं वेदिः। वप्रः मेखला। वितस्तिर्द्वादशाङ्गुला, तया परिमितो य उच्छ्रायस्तेन संमितं संबद्धमित्यर्थः। संर. १२५

ऋत्विक्संख्या

[3]**नवग्रहमखे कुर्यादृत्विजश्चतुरः शुभान्।**
**अथवा चैकमभ्यर्च्य विधिना ब्रह्मणा सह॥**

ग्रहाणां जन्मभूगोत्रादिज्ञानस्याऽऽवश्यकता

[4]**जन्मभूर्गोत्रमग्निश्च वर्णस्थानमुखानि च।**
**योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः॥**

ग्रहाणां जन्मदेशाः

[1]**उत्पन्नोऽर्कः कलिङ्गेषु यमुनायां च चन्द्रमाः।**
**अङ्गारकस्त्ववन्त्यां तु मगधाख्ये हिमांशुजः॥**
[2]**सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा।**
**शनैश्चरस्तु सौराष्ट्रे राहुर्वै राठिनापुरे।**
**अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः॥**

ग्रहगोत्राणि

[3]**यस्य यस्य च यद्गोत्रं तत्ते वक्ष्याम्यतः परम्।**
**आदित्यः काश्यपो गोत्र आत्रेयश्चन्द्रमा भवेत्॥**
[4]**भारद्वाजो भवेद्भौमस्तथाऽऽत्रेयश्च सोमजः।**
**शक्रपूज्योऽङ्गिरोगोत्रः शुक्रो वै भार्गवस्तथा॥**
[5]**शनिः काश्यप एवाथ राहुः पैठीनसिस्तथा।**
**केतवो जैमिनीयाश्च ग्रहाग्निस्तदनन्तरम्॥**

---

¶ शाम., विपा., संग., संदी. प्ररवत्।

(१) प्रपा. ७० पू.; प्रर. २१ पू.; शाम. ११ पू.; विपा. ५३७ पू.; संग. १०७ द्वितीयपादे (मेखलास्तद्वदुच्छ्रिताः); संदी. ७३ संगवत्.

(२) प्रपा. ७० क्रमेण स्कान्दे; प्रर. २१ मात्स्ये; शाम. १२ पर्वे तु (पूर्वेण); विपा. ५३७ प्रथमपादे (तस्याचोत्तरपूर्वेण) मात्स्ये; संग. १०८ विपावत्, विधानपारिजाते; संर. १२५ रस्रं (रश्रं) शेषं शामवत्, मात्स्ये; संदी. ८७ सर्वं संगवत्.

(३) शाम. १२; विपा. ५३८; संग. १०८; संदी. ८८.

(४) संत. ९४६ मग्निश्च (मेतेषां); शाम. १३ (=); विपा. ५३८ वर्णस्थानमु (वर्णः स्थानं मु); संग. ११३ (=); संदी. ८९ विपावत्.

(१) संत. ९४६; शाम. १३ वन्त्यां तु मगधाख्ये (वन्त्यायां मगधायां); विपा. ५३८; सं. ११३ (=) (वै मगधायां); संदी. ८९ तु मगधाख्ये (च तु मगधाख्ये मगधायां) संस्कारभास्करे.

(२) संत. ९४६ वैं राठिना (वैंराटिका); शाम. १३; विपा. ५३८ संतवत्; संग. ११३ (=) नापुरे (ने पुरे); संदी. ८९ वैं राठिना (वैंराटिने) संस्कारभास्करे.

(३) संत. ९४६ उत्त.; शाम. १३ काश्यपो (काश्यपे); विपा. ५३८; संग. ११३ (=) उत्त.; संदी. ८९ आत्रेय (अत्रिज) उत्त., संस्कारभास्करे.

(४) संत. ९४६ भार (भर) शक्रा (गुरुः पू.); शाम. १३ भारद्वाजो भवेद् (भरद्वाजोद्भवो); विपा. ५३८ संग. ११३ (=) सोमजः (चन्द्रजः) रोगोत्रः (रागोत्रः); संदी. ८९ सोमजः (चन्द्रजः) संस्कारभास्करे.

(५) संत. ९४६ एवाथ (एवायं) उत्तरार्ध (केतवो जैमिनेयाश्च ग्रहा लोकहिते रताः॥); शाम. १३ एवाथ

ग्रहाणामग्नयः

[१]आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते ।
धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः ॥
[२]गुरौ चैव शिखी नाम शुक्रे भवति हाटकः ।
शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः ॥

ग्रहवर्णाः

[३]भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ ।
सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ।
कृष्णं शनैश्चरं विद्याद्राहुं चित्राश्च केतवः ॥

ग्रहाणां दिग्भागाः, तण्डुलराशि–लेख्य–प्रतिमानां विकल्पः

[४]मध्ये तु भास्करं विद्याच्छशिनं पूर्वदक्षिणे ।
दक्षिणे लोहितं विद्याद्बुधं पूर्वोत्तरेण तु ॥
[५]उत्तरेण गुरुं विद्यात्पूर्वेणैव तु भार्गवम् ।
पश्चिमेन शनिं विद्याद्राहुं पश्चिमदक्षिणे ॥

[१]पश्चिमोत्तरतः केतुः स्थाप्यो वै शुक्लतण्डुलैः ।
अथवा वर्णकैः कार्याः कार्याः स्वर्णादिधातुभिः ॥

ग्रहपीठानां गणेशस्य चाऽऽकृतयः

[२]भानुं तु मण्डलाकारं सोमं तु चतुरस्रकम् ।
अङ्गारकं त्रिकोणं च बुधं बाणाकृतिं तथा ॥
[३]दीर्घचतुरस्रं गुरुं पञ्चास्रं भार्गवं तथा ।
धनुस्तुल्यं शनिं विद्याद्राहुं शूर्पाकृतिं तथा ।
ध्वजाकाराः केतवश्च गणेशं तत्र रूपिणम् ॥

रूपिणं हस्तपादाद्यवयवयुक्तम् । 'स्थापयेच्छुक्लतण्डुलैः, वर्णकैर्लेख्याः' इत्येतत्पक्षयोर्मण्डलाद्याकारतेति हेमाद्रिः । $ शाम. १४

ग्रहलेख्यमानानि

[४]द्वादशाङ्गुलमादित्यं सोमं तु द्विगुणं लिखेत् ।
भृगुं नवाङ्गुलं चैव गुरुं चैव षडङ्गुलम् ॥
बुधं भूमिसुतं सौरिं चतुस्त्रिद्व्यङ्गुलं तथा ।
सोम(?)मर्धाङ्गुलं राहुं केतुं कुर्यात् षडङ्गुलम् ॥

ग्रहमुखदिशः

[५]शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ ।
प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखाः ॥

(१) इदं च शुक्रादीनां प्राङ्मुखत्वादि 'आदित्याभिमुखाः सर्वे' (मत्स्य. ९३।१८) इति मात्स्योक्ता-

---

(एवाढ्य) नीयाश्च (नेयाश्च); विपा. ५३८; संग. ११३ (=); संदी. ८९ चतुर्थपादे (ग्रहगोत्राणि कीर्तयेत्) संस्कारभास्करे.

(१) शाम. १३ आदित्ये (आदित्यः) भौमे (भौमो) रोऽग्निर्बुधे (राग्निर्बुधः); विपा. ५३८; संग. ११३ (=); संदी. ८९ संस्कारगणपतौ.

(२) शाम. १३ गुरौ चैव (गुरोश्चैव) शुक्रे (शुक्रो) शनैश्चरे (शनैश्चरो); विपा. ५३८ हाटकः (हारकः); सं. ११३ (=); संदी. ८९ संस्कारगणपतौ.

(३) अप. १।२९६ पृ. ५६९–५७० चित्राश्च केतवः (केतुं तथैव च) मत्स्यपुराणम्; संत. ९४६ (सोमपुत्रो गुरुश्चैव तदुभौ पीतका स्मृतौ । चित्राश्च केतवः) एतावदेव; वसिष्ठसंहितास्कन्दपुराणगोभिलाः; शाम. १३ कृष्णं (कृष्णे) विद्यात् (विन्द्यात्); विपा. ५३९ श्वेतौ (शुक्लौ) राहुं चित्राश्च (चित्रा राहुश्च); संग. ११३–११४ (=) विपावत्.

(४) प्रपा. ७२ हेमाद्रौ; शाम. १३ विद्याद्बुधं (विन्द्याद्बुधं); विपा. ५३९.

(५) प्रपा. ७२ पश्चिमेन (पश्चिमे तु) पश्चिमदक्षिणे (दक्षिणपश्चिमे) हेमाद्रौ; शाम. १३ विद्यात् (विन्द्यात्);

$ विपा. शामगतम् ।

विपा. ५३९ उत्तरेण (उत्तरे तु) पूर्वेणैव तु भार्गवम् (पूर्वतो भार्गवं न्यसेत्) पश्चिमदक्षिणे (दक्षिणपश्चिमे).

(१) प्रपा. ७२ स्थाप्यो वै (स्थाप्यते) पू. हेमाद्रौ; शाम. १३; विपा. ५३९.

(२) शाम. १३ बुधं (बुधे); विपा. ५४२.

(३) शाम. १४ पञ्चास्रं (पञ्चाखं) विद्यात् (विन्द्यात्); विपा. ५४२ धनुस्तुल्यं (धनुःशल्यं) शूर्पा (सर्पा). (४) विपा. ५४३.

(५) शाम. १४; विपा. ५३९; संग. ११४; संदी. ९० शाकलकारिकायामप्ययं श्लोकः.

दित्याभिमुखत्वेन विकल्पते । यत्तु हेमाद्रिर्विकल्पपरिजिहीर्षया प्राङ्मुखावूर्ध्वदृष्टी, उदङ्मुखौ वामदृष्टी, प्रत्यङ्मुखोऽधोदृष्टिः, दक्षिणतोमुखा दक्षिणदृष्टय इति व्याचष्टे, तत्र मूलं चिन्त्यं विरोधतादवस्थ्यं च ।

शाम. १४

(२) प्राङ्मुखावूर्ध्वदृष्टी, उदङ्मुखौ वामदृष्टी, प्रत्यङ्मुखोऽधोदृष्टिः, दक्षिणतोमुखा दक्षिणदृष्टय इति व्याख्येयम्, 'आदित्याभिमुखाः' इत्युक्तत्वात् ।

विपा. ५३९

ग्रहाणां स्थापनमन्त्राः

**[१]अग्निं दूतं दिनेशाय चन्द्रायाप्स्वन्त इत्यपि ।**
**स्योना पृथिवि भौमाय इदं विष्णुर्बुधाय च ॥**
**[२]इन्द्र आसां सुरेज्याय शुक्रज्योतिः सिताय च ।**
**प्रजापतेऽथ सौराय आऽयं गौरिति राहवे ।**
**केतवे ब्रह्म जज्ञानं स्वैः स्वैर्मन्त्रैः प्रतिष्ठिताः ॥**

एतेषां च मन्त्राणां 'व्याहृत्याऽऽवाहयेत्तु तान्' इत्युक्ताभिर्व्याहृतिभिरावाहने विकल्पः । मदनस्तु आवाहनस्थापनयोर्भेदाद्व्याहृतिभिरावाहनमेतैर्मन्त्रैः स्थापनमित्यूचे ।

शाम. १४

देवाः (अधिदेवताः) अधिदेवाः (प्रत्यधिदेवताः)

तेषां स्थापनमन्त्राश्च

**[३]ईश्वरं भास्करे विद्यादुमां विद्यान्निशाकरे ।**
**स्कन्दमङ्गारके विद्याद्बुधे नारायणं विदुः ॥**
**[४]गुरौ वेदनिधिं विद्याच्छुक्रे शक्रो विधीयते ।**
**शनैश्चरे यमं विद्याद्राहोः कालस्तथैव च ।**
**चित्रगुप्तोऽधिपः केतोरित्येता ग्रहदेवताः ॥**

‡ संदी. विपावत् ।

(१) शाम. १४; विपा. ५४० द्वितीयपादे (सोमायाप्सु म इत्यथ) क्रमेण मात्स्ये.

(२) शाम. १४ पतेऽथ (पतेति); विपा. ५४१ इन्द्र आसां (इन्द्रं विश्वा) क्रमेण मात्स्ये.

(३) शाम. १६; विपा. ५४१ क्रमेण मात्स्ये.

(४) शाम. १६ राहोः (राहौ); विपा. ५४१ रित्येता (रित्येते) क्रमेण मात्स्ये.

वेदनिधिः ब्रह्मा । ¶ शाम. १६

**[१]वक्ष्ये स्थानानि देवानामीश्वरादि यथाक्रमम् ।**
**सूर्यस्यैवोत्तरे शम्भुमुमां सोमस्य दक्षिणे ॥**
**[२]स्कन्दमङ्गारकस्यैव दक्षिणस्यां निवेशयेत् ।**
**सौम्यात्पश्चिमतो विष्णुं ब्रह्मा जीवस्य पूर्वतः ॥**
**[३]इन्द्रमैन्द्र्यां सिताद्विद्धि मन्दादाग्नेयतो यमम् ।**
**राहोः पूर्वोत्तरे कालं सर्वभूतभयावहम् ।**
**केतोर्नैर्ऋतदिग्भागे चित्रगुप्तं निधापयेत् ॥**
**[४]अतः स्थापनमन्त्रांश्च कथयाम्यनुपूर्वशः ।**
**ईश्वरं त्र्यम्बकं चेति श्रीश्च ते चेति पार्वतीम् ॥**
**[५]यदक्रन्द इति स्कन्दं विष्णुं विष्णो रराडिति ।**
**आ ब्रह्मन्निति ब्रह्माणं सजोषेति च (? सजोषा इति) वासवम् ॥**
**[६]यमाय त्वेति च यमं कालं कार्षिरसीति च ।**
**चित्रावस्विति मन्त्रेण चित्रगुप्तं निधापयेत् ॥**
**अग्निरापः क्षितिर्विष्णुरिन्द्रश्चैन्द्री प्रजापतिः ।**
**सर्पो ब्रह्मा च निर्दिष्टा अधिदेवा यथाक्रमम् ॥**

¶ विपा. शामवत् ।

(१) शाम. १६ स्यैवो (स्य चो); विपा. ५४२; संग. १२१ उत्त., चिन्तामणौ.

(२) शाम. १६; विपा. ५४२ उत्तरार्धे (सौम्यस्य पश्चिमे विष्णुं विधिं जीवस्य पूर्वतः ॥); संग. १२१ चिन्तामणौ.

(३) शाम. १६; विपा. ५४२ प्रथमार्धे (इन्द्रमैन्द्र्यां सिताद्विद्यान्मन्दस्याग्ने यमो भवेत् ।) नैर्ऋत (नैर्ऋत्य); संग. १२१ नैर्ऋत (नैर्ऋति) चिन्तामणौ.

(४) शाम. १६; विपा. ५४३.

(५) शाम. १६ यदक्रन्द इति (यदक्रन्देति च) षेति च (षेन्द्रेति); विपा. ५४४ राडिति (राटतः).

(६) शाम. १६; विपा. ५४४.

[1]अग्निं दूतमिति त्वग्नेर्वरुणस्य उदुत्तमम् ।
स्योना पृथिवि मेदिन्या इदं विष्णुस्तु विष्णवे ॥

[2]इन्द्रायेन्दो इतीन्द्रस्योत्तानपर्णे शचीस्थितौ ।
प्रजापते प्रजेशस्य एष ब्रह्मेति वै विधेः ।
मन्त्रो नमोऽस्तु सर्पेभ्यः सर्पाणां स्थापने मतः ॥

[3]अत्र देवाधिदेवानां नैवेद्यं कुसुमानि च ।
ग्रहवच्चाऽऽसनं दानं स्थापनं चानुपूर्वशः ॥

सूर्यादयो ग्रहाः, ईश्वरादयो देवाः, अग्न्यादयोऽधिदेवाः । तत्र ईश्वरादिदेवानां 'सूर्यस्यैवोत्तरे शम्भुम्' इत्यादिना पूर्वं स्थलान्युक्तानि । अग्न्यादयोऽधिदेवास्तु ग्रहदेवयोर्मध्ये स्थाप्याः । तथा च मदनरत्ने गोभिलवसिष्ठौ— 'ग्रहदेवतयोर्मध्ये अधिदेवान्निधापयेत् ।' । तत्रैव संग्रहे तु ईश्वरादयो देवा अधिदेवतात्वेन व्यवहृताः, अग्न्यादयस्तु प्रत्यधिदेवतात्वेन । तेषां स्थानान्तरं चोक्तम्— 'अधिदेवा दक्षिणतो वामे प्रत्यधिदेवताः । स्थापनीयाः प्रयत्नेन व्याहृतीभिः पृथक् पृथक् ॥' । शाम. १६

गणपतिस्थापनदेशः

[4]उत्तरे शनिसूर्याभ्यां गुरुकेत्वोश्च दक्षिणे ।
गणाधिपं प्रतिष्ठाप्य सर्वदेवनमस्कृतम् ॥

रविशनिकेतुगुरूणां मध्ये इति फलितोऽर्थः । विनायकपदमुपलक्षणम्, तेन दुर्गादयोऽप्यत्रैव स्थाप्या इति केचित् । शाम. १७

ग्रहाणां चन्दनानि पुष्पाणि धूपाः दीपाश्च

[5]दिवाकरकुजाभ्यां हि दापयेद्रक्तचन्दनम् ।
चन्द्रे च भार्गवे चैव सितवर्णं प्रदापयेत् ॥

(१) शाम. १६ ; विपा. ५४५ त्वग्ने ( ह्यग्ने ).

(२) शाम. १६ ; विपा. ५४५.

(३) शाम. १६ अत्र ( ग्रह ) ; विपा. ५४५.

(४) शाम. १७ ; विपा. ५४२.

(५) शाम. १७ ; विपा. ५४६ ; संग. १२२ दिवा (दिन) चन्द्रे च ( चन्द्रे तु ) चिन्तामणौ.

[1]कुङ्कुमेन तु संयुक्तं चन्दनं जीवसौम्ययोः ।
अगुरुं चन्दनं दद्याद्राहुकेत्वर्कजेषु च ॥

[2]ग्रहवर्णानि पुष्पाणि गायत्र्या धूपमादहेत् ।
रवेः कुन्दुरुकं धूपं शशिनस्तु घृताप्लुतम् ॥

[3]भौमे सर्जरसं चैव अगुरुश्च बुधे स्मृतः ।
सिह्लकं गुरवे दद्याच्छुक्रे बिल्वागुरुं तथा ॥

[4]गुग्गुलुं मन्दचारे तु लाक्षा राहोश्च केतवे ।
उद्दीप्यस्वेति मन्त्रेण दीपं दद्यादतन्द्रितः ॥

(१) कुन्दुरुकः सल्लकीनिर्यासः । सिह्लकं सिह्ला इति मध्यदेशे प्रसिद्धम् । बिल्वागुरुं बिल्वफलनिर्याससहितमगुरुम् । मन्दचारः शनिः । शाम. १७

(२) कुन्दुरुकं सल्लकीरसः । सिह्लकः पिण्डकः । बिल्वागरुः बिल्वफलमज्जासहितः अगरुः । पूर्वोक्तकुन्दुरुकादिधूपाभावे सर्वेषां गुग्गुलुरेव धूपः । तथा च याज्ञवल्क्यः— 'धूपो देयश्च गुग्गुलुः' इति । आदित्यादीनां कुन्दुरुकादिधूपदाने तत्तदधिदेवताप्रत्यधिदेवतयोरपि त एव धूपाः । विनायकादीनां तु गुग्गुलुरेव, तेषां सर्वसाधारणत्वात् । संग. १२२

(१) शाम. १७ ; विपा. ५४६ ; संग. १२२ अगुरुं ( अगरुं ) चिन्तामणौ.

(२) वीमि. १।२९९ ( रवेः कुन्दुरकं धूपः शशिनस्तु घृतं यथा ॥ ) उत्त., चिन्तामणौ ; शाम. १७ घृताप्लुतम् ( घृताक्षताः ) ; विपा. ५४६ कुन्दुरुकं ( कुन्दरुकं ) ; संग. १२२ दहेत् ( हरेत् ) शेषं शामवत्, चिन्तामणौ.

(३) वीमि. १।२९९ सिह्लकं ( सिंहलं ) गुरुं तथा ( गुरु स्मृतम् ) चिन्तामणौ; शाम. १७ द्वितीयपादे ( अगुरुं च बुधे स्मृतम् ) ; विपा. ५४६ सिह्लकं ( सिंहलं ) बिल्वागुरुं ( बिल्वगिरिं ) ; संग. १२२ चैव अगुरुश्च ( चैवमगरुं च ) गुरुं तथा ( गुरुस्तथा ) चिन्तामणौ.

(४) वीमि. १।२९९ गुग्गुलुं ( गुग्गुलं ) चारे ( वारे ) पू., चिन्तामणौ ; शाम. १७ वीमिवत् ; विपा. ५४६ ; संग. १२२–१२३ चिन्तामणौ.

ग्रहाणामोदनाः तन्निवेदनं होमश्च

[1]गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम् ।
लोहिताय हविष्यान्नं बुधाय क्षीरषाष्टिकम् ॥
[2]दध्योदनं गुरोर्दद्याच्छुक्राय च घृतौदनम् ।
मिश्रितं तिलमाषैश्च नैवेद्यं तु शनैश्चरे ॥
राहोर्मांसौदनं दद्यात्केतोश्चित्रौदनं तथा ।
निवेदयित्वाऽऽहुतिभिर्होमं कुर्यादतन्द्रितः ॥

(१) चित्रौदनं 'तिलतण्डुलमिश्रं स्यादजाक्षीरं च शोणितम् । कर्णनासागृहीतं स्यादेतच्चित्रौदनं स्मृतम् ॥' इति दामोदरः । शाम. १७

(२) हविष्यान्नं नीवारादि । क्षीरषाष्टिकः क्षीरमिश्रः षाष्टिकौदनः । चित्रौदनं तु– 'अजाक्षीरेण संसिद्धा विमलाः सिततण्डुलाः । यवचूर्णेन संयुक्ताश्चित्रौदनमुदाहृताः ॥' । संग. १२३

ग्रहाणां समिधः तन्मानम् अञ्जनद्रव्याणि च

[4]प्रादेशमात्रा अर्कस्य समिधश्चार्कसंभवाः ।
दधिमध्वाज्यसंयुक्ताः प्रतिदेवं च होमयेत् ॥
पालाशीश्चैव सोमाय खादिरीर्लोहिताय च ।
आपामार्गीर्बुधायेति आश्वत्थीश्च बृहस्पतेः ॥
औदुम्बरीश्च शुक्राय मन्दाय च शमीमयीः ।
दौर्वी राहोः कुशान् केतोर्होममन्त्रास्ततः परम् ॥

प्रतिदेवं च होमयेदिति सर्वत्र योज्यम् । इतरेषां देवानां स्वस्वग्रहसमिद्भिरेव होमः । विपा. ५४७

होममन्त्राः नैवेद्यशेषहोमश्च

[1]आ कृष्णेन सहस्रांशोरिमं देवास्तथेन्दवे ।
अग्निर्मूर्धेति भौमाय उद्बुध्यस्व बुधाय च ॥
[2]बृहस्पते अति गुरोः शुक्रायान्नात् परिस्रुतः ।
शनैश्चरस्य मन्त्रोऽयं शं नो देवीरुदाहृतः ।
कया न इति राहोश्च केतुं कृण्वंस्तु केतवे ॥
[3]¶नैवेद्यशेषं हुत्वा च होममन्त्रैस्ततः परम् ।
अथ व्याहृतिभिर्हुत्वा एकैकस्य यथाक्रमम् ॥

(१) अस्यार्थः– पचनाग्नावेव पृथक् सह वा पक्त्वा प्रागुक्तगुडादिद्रव्यैर्मिश्रीकृत्य तेभ्यः किंचित्किंचिदाहृत्य सूर्यादिभ्यो निवेद्य तान्यवशिष्टान्यन्नानि तत्तन्मन्त्रैर्जुहुयादिति । एतच्छाखान्तरविषयम् । बह्वृचानां तु स्वगृह्यपरिशिष्टे प्रधानहोमानन्तरं नैवेद्यसमर्पणस्योक्तत्वात्तथैवानुष्ठानं युक्तमिति ज्ञेयम् । प्रपा. ७४

(२) अनेन (प्रकृतश्लोकस्य प्रयोगपारिजातव्याख्यानेन) आहुतिसंख्यादावपि परिशिष्टोक्तपक्षस्यैव बह्वृचैरादरः कार्य इत्युक्तं भवति । ‡संकौ. १३९

आहुतिसंख्या

[4]अष्टोत्तरसहस्रं वा शतमष्टाधिकं तथा ।
अष्टाविंशतिमष्टौ वा एकैकस्य तु होमयेत् ॥

---

¶ अस्य उत्तरस्य च श्लोकस्य शान्तिमयूखव्याख्यानं 'होतव्यम्' इत्यग्रिमश्लोकव्याख्याने द्रष्टव्यम् ।

‡ शेषं प्रपानुवादः ।

(१) शाम. १७ गुडौ (गुडो); विपा. ५४६ ; संग. १२३ षाष्टि (षाष्ठि) ग्रहदीपिकायां चिन्तामणौ.

(२) शाम. १७ घृतौ (घृतो); विपा. ५४७ ; संग. १२३ ग्रहदीपिकायां चिन्तामणौ.

(३) शाम. १७ मांसौ (मांसो) चित्रौ (चित्रो) पू. ; विपा. ५४७ ; संग. १२३ पू. ग्रहदीपिकायां चिन्तामणौ : १२४ उत्त , विधानपारिजाते.

(४) विपा. ५४७.

(१) शाम. १८ ; विपा. ५४७–५४८.

(२) शाम. १८ ते अति (तेति च) स्रुतः (श्रुतः) ; विपा. ५४८ कृण्वंस्तु (कृण्वन्न).

(३) प्रपा. ७४ द्वितीयपादे (होमं मन्त्रैरनन्तरम्) ; शाम. १९ मन्त्रैस्ततः परम् (मन्त्रादनन्तरम्) ; संकौ. १३९ शेषं (शेषे).

(४) प्रपा. ७३ त्तरसहस्रं वा (त्तरं तु साहस्रं) ; वीमि. १।३०३ मष्टौ (रष्टौ) चिन्तामणौ ; शाम. १९ त्तरसहस्रं वा (त्तरं च साहस्रं) मष्टौ (रष्टौ) ; विपा. ५५१ तथा (तु वा) शेषं प्रपावत् , चिन्तामणौ ; संकौ. १३९ मष्टाधिकं (मष्टोत्तरं).

इयमत्रोद्दिष्टसंख्या प्रधानदेवतानाम्, अधिदेवतादीनां तु वक्ष्यमाणगृह्यपरिशिष्टोक्तैवानुसंधेया । प्रपा. ७३

लक्षादिहोमे विशेषः

[1]होतव्यं च घृतं तत्र चरुर्लक्षादिकः पुनः ।
मन्त्रैर्दशाऽऽहुतीर्हुत्वा होमो व्याहृतिभिः स्मृतः ॥

अथेति अथवेत्यर्थः । 'गृहीत्वा तामथाम्बिकाम्' इतिवत् । मदनस्त्वथवेत्येव पपाठ । तत्तन्मन्त्राणां व्याहृतीनां च परस्परं विकल्पः । अथ अष्टोत्तरसहस्रादिसंख्या तु पक्षद्वयेऽपि, नैवेद्यशेषहोमस्तु शाखाविशेषपर इत्यपि स एव । लक्षादिकः पुनर्व्याहृतिभिर्होमो मन्त्रैर्दशाऽऽहुतीर्हुत्वा स्मृत इत्यन्वयः । मन्त्रैः ग्रहमन्त्रैः । व्याहृतिभिः व्यस्ताभिः समस्ताभिश्च । तातचरणास्तु— 'अथ व्याहृतिभिर्हुत्वा' इति पृथग्वाक्यम् । एकैकस्येति तु प्रतिदैवतमष्टादिसंख्यान्वयार्थम् । 'एकैकस्य तु होमयेत्' इत्येकैकपदं तु चर्वादिद्रव्यपरम्, न देवतापरम् । अस्मिन्नेव होमे घृतचरुद्रव्यविधिरग्रे । 'लक्षादिकः' इत्येतत्तु 'अथ व्याहृतिभिः' इति विहिते होमे लक्षादिसंख्याविध्यर्थम् । मैन्त्ररित्यादि तु चरुहोमोत्तरं 'सोमं राजानम्' इति मन्त्रेण यथाप्रकृति स्विष्टकृद्धुत्वा सूर्यादिमन्त्रैर्दशदशाऽऽहुतीः प्रतिदैवतं लक्षहोमादिद्रव्येण हुत्वा व्याहृतिभिर्लक्षादिहोमः कार्य (इत्येतत्परम्) इत्याहुः । यवाद्यन्यतमद्रव्येण ग्रहादिभ्यः प्रत्येकं दशाऽऽहुतीस्तत्तन्मन्त्रैर्हुत्वा तेनैव द्रव्येण व्यस्तसमस्तव्याहृतिभिरयुतलक्षकोट्यन्यतमसंख्यया जुहुयादिति हेमाद्रिमदनौ । शाम. १९

स्विष्टकृद्धोमः, बलिदानम्, पूर्णाहुतिः, दक्षिणादानम्

[2]होमं कृत्वा ग्रहाणां च हुनेत्स्विष्टकृतं ततः ।
नवाऽऽहुतीस्ततो हुत्वा बलिदानमथाऽऽचरेत् ॥

[1]मूर्धानमिति मन्त्रेण दद्यात्पूर्णाहुतिं ततः ।
होमशेषं समाप्याथ आचार्योऽथ द्विजैः सह ॥
[2]होमान्ते दक्षिणां दद्याच्छान्त्यर्थं पुष्टिवर्धिनीम् ।
आदित्याय शुभां धेनुं शङ्खं सोमाय दापयेत् ॥
[3]भौमाय रक्तवृषभं सोमपुत्राय काञ्चनम् ।
गुरवे पीतवासांसि शुक्रायाश्वं तु दापयेत् ॥
[4]कृष्णा गौर्मन्दचाराय राहवे त्वायसं शुभम् ।
केतवे छागमांसानि सर्वेषामेव काञ्चनम् ॥

व्यस्तग्रहयज्ञः

[5]यस्तु पीडाकरो नित्यं स्वल्पवित्तस्य वा ग्रहः ।
तमेव पूजयेद्भक्त्या दक्षिणाभिः स्वशक्तितः ॥

ग्रहयज्ञप्रशंसा

[6]यथा ग्रहा द्विजास्तद्वद्वेदवेदाङ्गपारगाः ।
तोषयेन्मृदुवस्त्रैर्वा तुष्टानेतान् विसर्जयेत् ॥
[7]अग्निदग्धं यथा भस्म वातोद्धूतं विनश्यति ।
दुरितं मन्त्रनिर्दग्धं दानोद्धूतं तथा नृणाम् ॥

---

(१) शाम. १९.

(२) विपा. ५५२ इत आरभ्य सार्धचत्वारः श्लोका विधानपारिजाते 'मात्स्ये' इत्युक्त्वा क्रमेण समुपलभ्यन्ते परं मत्स्यपुराणे अनुपलभ्यमानत्वात् विधानपारिजाते च प्रायोऽस्मिन् प्रकरणे मत्स्यस्कन्दपुराणवचनानामेव विद्यमानत्वाच्च स्कन्दपुराण एवास्माभिरेतेषां निवेशः कृतः । एवमग्रेऽपि स्कन्दपुराणीयत्वेन संगृहीतानां श्लोकानां विषये द्रष्टव्यम्; संग. १२६ पूर्वार्धे (पूजां कृत्वा ग्रहाणां च हुते स्विष्टकृदाहुतिः ।) हुतीस्त (हुति त) क्रमेण मात्स्ये.

(१) विपा. ५५२; संग. १२६ क्रमेण मात्स्ये.

(२) विपा. ५५३ वर्धिनीम् (वर्धनीम्); संग. १२६ क्रमेण मात्स्ये.

(३) विपा. ५५४; संग. १२७ क्रमेण मात्स्ये.

(४) शाम. २१ उत्त.; विपा. ५५४; संग. १२७ क्रमेण मात्स्ये.

(५) शाम. २१; विपा. ५५४.

(६) शाम. २१ (यथा ग्रहो द्विजस्तद्वद्विज्ञेयो वेदपारगः । तोषयेन्मृदुवस्त्राद्यैस्तृप्तमेनं विसर्जयेत् ॥); विपा. ५५४.

(७) विपा. ५५५.

[1]यथा समुत्थितं यन्त्रं यन्त्रेण प्रतिहन्यते ।
एवं समुत्थितं घोरं शीघ्रं शान्त्या विनश्यति ॥
[2]अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च ।
नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥

ग्रहयज्ञस्य प्रतिसंवत्सरं कर्तव्यता

ग्रहाणामिदमातिथ्यं कुर्यात्संवत्सरादपि ।
आरोग्यबलसंपन्नो जीवेच्च शरदां शतम् ॥

देवताविसर्जनम्

[3]एवं समग्रं निष्पाद्य देवान् सर्वान् विसर्जयेत् ॥

[4]यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।
इष्टकामप्रदानार्थं पुनरागमनाय च ॥

## विष्णुधर्मोत्तरपुराणम्

ग्रहाणामग्न्यादिदेवतारूपत्वम्

[5]अतः परं प्रवक्ष्यामि यो देवो यो ग्रहः स्मृतः ।
अग्निरर्कः स्मृतः सोमो वरुणः परिकीर्तितः ॥

अङ्गारकः कुमारश्च बुधश्च भगवान् हरिः ।
बृहस्पतिः स्मृतः शक्रः शुक्रो देवी च पार्वती ॥
[6]प्रजापतिः शनिश्चैव राहुर्श्चैयो गणाधिपः ।
विश्वकर्मा स्मृतः केतुर्ये ग्रहास्ते सुराः स्मृताः ॥

(१) शाम. २१ मुत्थितं य ( मन्वितं य ) त्थितं घो ( च्छ्रितं घो ) ; विपा. ५५५.

(२) शाम. २१ ; विपा. ५५५.

(३) शाम. २१ ( एवं समग्रान्निष्पाद्य सर्वान्देवान्विसर्जयेत् ॥ ) मात्स्ये ; विपा. ५५५.

(४) शाम. २१ दानार्थं ( सिद्ध्यर्थं ) ; विपा. ५५५.

(५) शाम. १४ ; विपा. ५४१-५४२.

(६) शाम. १४ ; विपा. ५४२ शनिश्चैव ( शनैश्चरो ).

अधिदेवताप्रत्यधिदेवतास्वरूपम्

[1]$पिङ्गभ्रूश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः ।
छागस्थः साक्षसूत्रोऽग्निः सप्तार्चिः शक्तिधारकः ।

चिह्नितं वरदेनास्य करमन्यं तु कारयेत् ॥

[2]आपः स्त्रीरूपधारिण्यः श्वेता मकरवाहनाः ।
दधानाः पाशकलशौ मुक्ताभरणभूषिताः ॥

शुक्लवर्णा मही कार्या दिव्याभरणभूषिता ।
चतुर्भुजा सौम्यवपुश्चण्डांशुसदृशाम्बरा ॥
[3]रत्नपात्रं सस्यपात्रं पात्रमोषधिसंयुतम् ।
पद्मं करे च कर्तव्यं भुवो यादवनन्दन ।
दिङ्नागानां चतुर्णां सा कार्या पृष्ठगता तथा ॥
[4]विष्णुः कौमोदकीपद्मशङ्खचक्रधरः क्रमात् ।
प्रदक्षिणं दक्षिणाधःकरादारभ्य नित्यशः ॥

$ अस्मिन्देवतास्वरूपवर्णनक्रमे प्रयोगपारिजातोऽनुसृतः । शान्तिमयूखे 'पञ्चवक्त्रो वृषारूढः' इत्यादीश्वरादिदेवतावर्णनमादौ, ततोऽग्न्यादिदेवतावर्णनं चानुक्रान्तम् । अत एव अग्न्यादीश्वरादिदेवतागणसाधारणयोर्विष्ण्विन्द्रयोरत्राग्न्यादिगणे पाठः , मयूखे तु ईश्वरादिगणे । इदमत्र विचार्यम् – अत्राग्न्यादयो देवताः पूर्वमनुक्रान्ताः , ततस्तासां स्वरूपं वर्णितम् । तत्र भूयान् विसंवादो दृश्यते । पूर्वं वरुणकुमारपार्वतीगणाधिपविश्वकर्माणोऽनुक्रान्ताः , परस्तात्तत्स्थानेषु यथाक्रमं महीशचीसर्पब्रह्मणां स्वरूपं वर्णितम् । अतो देवतानुक्रमणदेवतास्वरूपवर्णनयोरन्यतरद्विष्णुधर्मोत्तरीयं न भवेदिति कल्प्यते । मुद्रितविष्णुधर्मोत्तरपुस्तके तु व्यस्तसमस्तग्रहमखपरायां षोडशाध्याय्यामत्रोद्धृतेषु विष्णुधर्मोत्तरीयवचनेष्वेकमपि वचनं नोपलभ्यते ।

(१) प्रपा. ७०-७१ पीनाङ्गजठरो ( पिङ्गाक्षत्रितयो ) सूत्रोऽग्निः ( सूत्रश्च ) ; संल. ८७५ तृतीयार्धं नास्ति, आदित्यपुराणम् ; शाम. २३ पिङ्गभ्रू ( पिङ्गल ) तृतीयार्धे ( चिह्नितं चमरेणास्य करमन्यं प्रकल्पयेत् ॥ ).

(२) प्रपा. ७१ ; शाम. २३.

(३) प्रपा. ७१ मोषधि ( मौषधि ) ; शाम. २३.

(४) प्रपा. ७१ श्लोकार्धे व्यत्यासेन पठिते ; शाम. २३.

[1]चतुर्दन्तगजारूढो वज्री कुलिशभृत्करः ।
प्राचीपतिः प्रकर्तव्यो नानाभरणभूषितः ॥
[2]वामे शच्याः करे कार्या सौम्या संतानमञ्जरी ।
वरदा मण्डिता कार्या द्विभुजा च तथा शची ॥
[3]यज्ञोपवीती हंसस्थ एकवक्त्रश्चतुर्भुजः ।
अक्षं स्रुवं स्रुचं बिभ्रत्कुण्डिकां च प्रजापतिः ॥
अक्षम् अक्षमालाम् । कुण्डिकां कमण्डलुम् ।

शाम. २३

[4]अक्षसूत्रधराः सर्वे कुण्डिकापुच्छभूषणाः ।
एकभोगास्त्रिभोगा वा सर्पाः कार्याश्च भीषणाः॥
[5]पद्मासनस्थो जटिलो ब्रह्मा कार्यश्चतुर्भुजः ।
अक्षमालां स्रुवं बिभ्रत्पुस्तकं च कमण्डलुम् ।
वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च ॥
[6]पञ्चवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः ।
कपाली शूलखट्वाङ्गी चन्द्रमौलिः सदाशिवः ॥
[7]अक्षसूत्रं च कमलं दर्पणं च कमण्डलुम् ।
उमा बिभर्ति हस्तेषु पूजिता त्रिदशैरपि ॥
[8]कुमारः षण्मुखः कार्यः शिखण्डकविभूषणः ।
रक्ताम्बरधरो देवो मयूरवरवाहनः ॥
[9]कुक्कुटश्च तथा घण्टा तस्य दक्षिणहस्तयोः ।
पताका वैजयन्त्याख्या शक्तिः कार्या च वामयोः ॥

(१) प्रपा. ७१ गजा ( समा ) भृत्करः ( सत्करः ) ; शाम. २३ प्राची ( शची ).

(२) प्रपा. ७१ सौम्या ( सम्यक् ) ; शाम. २३.

(३) प्रपा. ७१ एकवक्त्र ( चतुर्वक्त्र ) तृतीयपादे ( अक्षसूत्रं स्रुवं बिभ्रत् ) ; शाम. २३.

(४) प्रपा. ७१ ; भूषणाः ( संयुताः ) ; शाम. २३ सर्वे ( सर्पाः ) सर्पाः ( सर्वे ).

(५) प्रपा. ७१; शाम. २३ तृतीयार्धं नास्ति.

(६) प्रपा. ७१ कपाली शू ( कपालशू ) ; शाम. २३.

(७) प्रपा. ७१ ; शाम. २३.

(८) प्रपा. ७१ देवो ( कार्यो ) ; शाम. २३.

(९) प्रपा. ७१ ; शाम. २३ घण्टा त ( घण्टास्त ) यन्त्याख्या ( यन्ती स्यात् ).

[1]ईषत्पीनो यमः कार्यो दण्डहस्तो विजानता ।
रक्तदृक्पाशभृत्कृष्णो महिषस्थो विभूषितः ॥
[2]कालः करालवदनो नीलाङ्गश्च विभीषणः ।
पाशहस्तो दण्डहस्तः सर्पवृश्चिकरोमवान् ॥
[3]उदीच्य( ? अपीच्य )वेषं स्वाकारं द्विभुजं सौम्यदर्शनम् ।
दक्षिणे लेखनीं चित्रगुप्तं वामे तु पात्रकम् ॥
[4]ग्रहाणां दक्षिणे पार्श्वे स्थापयेदधिदेवताः ।
ग्रहाणामुत्तरे पार्श्वे न्यसेत्प्रत्यधिदेवताः ॥

विनायकादिदेवतास्वरूपम्

[5]चतुर्भुजस्त्रिनेत्रश्च कर्तव्योऽत्र गजाननः ।
नागयज्ञोपवीतश्च शशाङ्ककृतशेखरः ॥
[6]दन्तं दक्षकरे दद्याद्द्वितीये चाक्षसूत्रकम् ।
तृतीये परशुं दद्याच्चतुर्थे मोदकं तथा ॥
[7]शक्तिं बाणं तथा शूलं खड्गं चक्रं च दक्षिणे ।
चन्द्रबिम्बमधो वामे खेटमूर्ध्वे कपालकम् ॥
[8]शुकं टङ्कं च बिभ्राणा सिंहारूढा तु दिग्भुजा ।
एषा देवी समुद्दिष्टा दुर्गा दुर्गासुहारिणी ॥

(१) प्रपा. ७१ ; शाम. २३ ईषत्पीनो ( ईषन्नीलो ) उत्तरार्धे ( रक्तदृक् पाशहस्तश्च महामहिषवाहनः ॥ ).

(२) प्रपा. ७१ नीलाङ्गश्च ( नित्यगश्च ) ; शाम. २३ सर्प ( कार्यो ).

(३) प्रपा. ७१ उत्तरार्धे ( दक्षिणे लेखनीं तस्य वामे पात्रं तु कारयेत् ॥ ) ; शाम. २३ उदीच्यवेषं स्वा ( अवीच्यवेषस्वा ).

(४) शाम. २३.

(५) प्रपा. ७१ ; शाम. २३.

(६) प्रपा. ७१ तृतीये (तृतीयं) दद्याच्चतुर्थे (विद्याच्चतुर्थे) ; शाम. २४ दन्तं दक्षकरे ( दक्षे दन्तं करे ).

(७) प्रपा. ७१ मधो ( मथो ) ; शाम. २४.

(८) प्रपा. ७१ तु दिग्भुजा ( चतुर्भुजा ) ; शाम. २४ शुकं टङ्कं ( सुकङ्कटं ) दुर्गासुहा ( दुर्गातिहा ).

[1]क्षेत्रपालं ततो ध्यायेच्छ्यामवर्णं त्रिलोचनम् ।
ऊर्ध्वकेशं सुदंष्ट्रं च भ्रुकुटीकुटिलाननम् ॥
नूपुरालङ्कृताङ्घ्रिं च सर्पमेखलया युतम् ।
सर्पाङ्गकमतिक्रुद्धं क्षुद्रघण्टामयं तथा ॥
करोटिकामयीं चापि मालां गुल्फावलम्बिनीम् ।
दधानमुरगाबद्धपुंमुद्रं चन्द्ररेखया ॥
दक्षिणैः शूलवेतालखड्गदुन्दुभिसंयुतैः ।
वामैः कपालघण्टासिचर्मचापसमायुतैः ।
अष्टभिश्च करैर्भीमं दिग्वाससमतिद्युतिम् ॥
[2]धावद्धरिणपृष्ठस्थो ध्वजधारी समीरणः ।
वरदानकरो धूम्रवर्णः कार्यो विजानता ॥
[3]नीलोत्पलाभं गगनं तद्वर्णाम्बरधारि च ।
चन्द्रार्कहस्तं कर्तव्यं द्विभुजं सौम्य षण्डवत् ॥
[4]द्विभुजौ देवभिषजौ कर्तव्यौ रूपसंयुतौ ।
तयोरोषधयः कार्या दिव्या दक्षिणहस्तयोः ॥
[5]वामयोः पुस्तकौ कार्यौ दर्शनीयौ तथा द्विजाः ।
एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव ॥
[6]नारीयुगं प्रकर्तव्यं सुरूपं चारुदर्शनम् ।
रत्नभाण्डकरे कार्ये चन्द्रशुक्लाम्बरे तथा ॥

अथ कर्मसाद्गुण्यदेवताः— 'चतुर्भुजस्त्रिनेत्रश्च.... चन्द्रशुक्लाम्बरे तथा ॥' इति । प्रपा. ७१

लोकपालस्वरूपम्

[7]खड्गचर्मधरो बालो निर्ऋतिर्नरवाहनः ।
ऊर्ध्वकेशो विरूपाक्षः करालः कालिकाप्रियः ॥
नागपाशधरो रक्तभूषणः पद्मिनीप्रियः ।
वरुणोऽम्बुपतिः स्वर्णवर्णो मकरवाहनः ॥

(१) प्रपा. ७१.
(२) प्रपा. ७१ ; शाम. २४.
(३) प्रपा. ७१ ; शाम. २४ सौम्य षण्ड ( सौम्यखण्ड ).
(४) प्रपा. ७१ रूप ( देव ) ; शाम. २४.
(५) प्रपा. ७१ ; शाम. २४.
(६) प्रपा. ७१ भाण्डकरे ( भाण्डारके ) ; शाम. २४.
(७) शाम. २४.

अथ लोकपालरूपाणि । तत्रेन्द्राग्नियमरूपाण्यधिप्रत्यधिदेवतोक्त्योक्तानि । 'खड्गचर्मधरो...... मकरवाहनः ॥' । वायुर्विनायकादिपञ्चक उक्तः । सोमो ग्रहेषु । *अनन्तः सर्पः, स प्रत्यधिदेवतासु । शाम. २४

शनिराह्वोर्मन्त्रौ

[1]शं नो देवीति सौरस्य काण्डात्काण्डेति राहवे ॥

## पद्मपुराणम्

रवेः पादहीनत्वम्

[2]अत एव रवेः पादौ न कश्चित् कारयेत्क्वचित् ।
यः करोति स पापिष्ठां गतिमाप्नोति निन्दिताम् ।
कुष्ठरूपमवाप्नोति लोकेऽस्मिन् दुःखसंज्ञितम् ॥

## भविष्यपुराणम्

अहिंसादिगुणयुक्ते ग्रहानुग्रहः

[3]अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च ।
नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥

ग्रहयज्ञान्ते महोत्सवकर्तव्यता

[4]ततः समाप्ते यज्ञे तु कारयेत्तु महोत्सवम् ।
शङ्खतूर्यनिनादेन ब्रह्मघोषरवेण च ॥

## देवीपुराणम्

ग्रहस्थापने ताम्रपात्रादिविकल्पः

[5]ताम्रपात्रे च कर्तव्या ग्रहा भागविकल्पिताः ।
श्यामे वा मण्डले वाऽपि सर्वकामफलप्रदाः ॥

सूर्यप्रतिमास्वरूपम्

[6]प्रभाकरस्य प्रतिमामिदानीं शृणुत द्विजाः ।
रथस्थं कारयेद्देवं पद्महस्तं सुलोचनम् ॥
सप्ताश्वं चैकवक्त्रं( ? सप्तयोक्त्रं ) च रथं तस्य प्रकल्पयेत् ।
मुकुटेन विचित्रेण पद्मगर्भसमप्रभम् ॥

* अत्र 'ईश्वरब्रह्माणावधिदेवतासु' इति ग्रन्थो न्यूनः ।
(१) विपा. ५४८. (२) अप. १।२९६ पृ. ५७०.
(३) दीक. १।३०८ स्कन्दपुराणेऽपि.
(४) शाम. २१. (५) वीमि. १।२९७.
(६) अप. १।२९६ पृ. ५७०.

नानाभरणभूषाभ्यां कराभ्यां धृतपुष्करम् ।
स्कन्धस्थे पुष्करे चैव लीलयैव धृते सदा ॥
चोलकच्छन्नवपुषं क्वचिच्चित्रेषु दर्शयेत् ।
वस्त्रयुग्मसमोपेतं चरणौ तेजसाऽऽवृतौ ॥
प्रतीहारौ च कर्तव्यौ पार्श्वयोर्दण्डपिङ्गलौ ।
कर्तव्यौ दण्डहस्तौ च पार्श्वयोः पुरुषावुभौ ॥
लेखनीकृतहस्तं च पार्श्वे धातारमव्ययम् ।
नानादेवगणैर्युक्तमेवं कुर्याद्दिवाकरम् ॥
अनूरुं सारथिं चास्य पद्मिनीपत्रसंनिभम् ।
अश्वौ च वलितग्रीवौ गन्धस्थौ तस्य पार्श्वयोः ॥
भुजङ्गरज्जुभिर्बद्धाः सप्ताश्वरथसंयुताः ।
सप्ताश्वस्थं पद्महस्तं तस्मिंश्चैव प्रकल्पयेत् ॥

गणपतये प्रथमाहुतिदानम्

[1]गणाधिपतये देया प्रथमा तु वराहुतिः ।
अन्यथा विफलं विप्र भवतीह न संशयः ॥

हवनीयद्रव्याणि

[2]यवव्रीहिघृतक्षीरतिलकङ्गुप्रसाधिताः ।
पङ्कजोशीरबिल्वार्कदला होमे प्रकीर्तिताः ॥

## अनिर्दिष्टकर्तृकवचनानि

ग्रहाणां दिग्भागाः आकृतयश्च

[3]पद्ममध्ये रविं रक्तं प्राङ्मुखं वर्तुलं सदा ।
अग्निकोणे सितं चन्द्रं चन्द्रार्धसदृशं शिवम् ॥
[4]दक्षिणे मङ्गलं विद्यात्त्रिकोणं लोहितं शुभम् ।
ऐशान्यां धनुराकारं पीतवर्णं तु सोमजम् ॥
[5]उत्तरे पीतवर्णं च पद्माकारं बृहस्पतिम् ।
चतुरस्रं तु पूर्वस्यां शुक्लवर्णं तु भार्गवम् ॥

(१) शाम. १८.

(२) शाम. १९ साधिताः (सारिकाः); विपा. ५८९ बिल्वार्क (बिल्वाम्र).

(३) संग. ११४-११५ शिवम् (विधुम्); संदी. ९० संस्कारगणपतौ.

(४) संग. ११५ ऐशान्यां धनुरा (ईशान्ये धनुषा); संदी. ९० संस्कारगणपतौ.

(५) संग. ११५; संदी. ९० संस्कारगणपतौ.

पश्चिमे कृष्णवर्णं तु दण्डाकारं शनैश्चरम् ।
नैर्ऋत्यां मकराकारं कृष्णाङ्गं रविमर्दनम् ।
धूम्रवर्णास्तु वायव्ये केतवः खड्गसंनिभाः ॥

ग्रहाणां जपसंख्या

[1]रवेः सप्त सहस्राणि चन्द्रस्यैकादशैव तु ।
कुजे दश सहस्राणि बुधे चतुःसहस्रकम् ॥
एकोनविंशतिर्जीवे शुक्रे षोडशमेव च ।
त्रयोविंशतिर्मन्दस्य राहोरष्टादशैव तु ॥
केतोः सप्तदश ह्येवं संख्या च ग्रहजापके ।
एवं संख्याविधिं कृत्वा ग्रहदुष्टे त्वयं विधिः ॥

अग्नि-दुर्गा-विनायक-ब्रह्मणां स्वरूपाणि

[2]वह्नेस्तु लक्षणं वक्ष्ये सर्वलक्षणलक्षितम् ।
दीप्तं सुवर्णवपुषमर्धचन्द्रासनं विभुम् ॥
बालार्कसदृशं तस्य वसनं चात्र कारयेत् ।
यज्ञोपवीतिनं कुर्याल्लम्बकूर्चभ्रुवं तथा ॥
कमण्डलुं वामकरे दक्षिणेऽस्याक्षसूत्रकम् ।
ज्वालावितानसंयुक्तमजवाहनमुज्ज्वलम् ॥
कुण्डस्थं वाऽपि कुर्वीत मूर्ध्नि सप्तशिखान्वितम् ।
कात्यायन्याः प्रवक्ष्यामि रूपं दशभुजं तथा ॥
त्रयाणामपि देवानामनुकारानुकारिणीम् ।
जटाजूटसमायुक्तामर्धेन्दुकृतलक्षणाम् ॥
लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ।
अतसीपुष्पसंकाशां सुप्रतिष्ठां सुलोचनाम् ॥
नवयौवनसंपन्नां सर्वावयवभूषिताम् ।
सुचारुदशनां तद्वत्पीनोन्नतपयोधराम् ॥
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् ।
त्रिशूलं दक्षिणे दद्यात्खड्गचक्रे तथैव च ॥
तीक्ष्णधारां तथा शक्तिं वामतोऽपि निबोधत ।
खेटकं पूर्णचापं च पाशमङ्कुशमेव च ॥
घण्टां च परशुं वाऽपि वामतः संनिवेशयेत् ।
अधस्तान्माहिषं तद्वद्विशिरस्कं प्रदर्शयेत् ॥

(१) संग. १२८-१२९.

(२) अप. १।२९६ पृ. ५७०-५७२.

शिरश्छेदे न्यसेत्तद्वद्दानवं खड्गपाणिकम् ।
हृदि शूलेन निर्भिन्नं तिर्यगूर्ध्वं च भूषितम् ॥
रक्तरक्तीकृताङ्गं च रक्तविस्फुरितेक्षणम् ।
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ॥
वमद्रुधिरवक्त्रं च देव्याः सिंहं प्रदर्शयेत् ।
देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् ॥
किंचिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ।
स्तूयमानं च तद्रूपममरैः संनिवेशयेत् ॥
विनायकं प्रवक्ष्यामि गजवक्त्रं त्रिलोचनम् ।
लम्बोदरं चतुर्बाहुं व्यालयज्ञोपवीतिनम् ॥
स्तब्धकर्णं बृहत्तुण्डमेकदंष्ट्रं पृथूदरम् ।
स्वदन्तं दक्षिणकरे उत्पलं चापरे तथा ॥
मोदकं परशुं चैव वामतः परिकल्पयेत् ।
बृहत्संक्षिप्तगहनं पीनस्कन्धाङ्घ्रिपाणिकम् ॥
युक्तं बुद्धिकुबुद्धिभ्यामधस्तान्मूषकान्वितम् ।
ब्रह्मा कमण्डलुधरः कर्तव्यः स चतुर्मुखः ॥
हंसारूढः क्वचित्कार्यः क्वचिच्च कमलासनः ।
वर्णेन कमलाभश्च चतुर्बाहुः शुभेक्षणः ॥
कमण्डलुं वामकरे सूत्रं हस्ते च दक्षिणे ।
वामे दण्डधरस्तद्वत्स्रुक्स्रुवौ चापि कल्पयेत् ॥
मुनिभिर्देवगन्धर्वैः स्तूयमानं समन्ततः ।
कुर्वाणमिव लोकांस्त्रीञ्छुक्लाम्बरधरं विभुम् ॥
मृगचर्मधरं चापि दिव्ययज्ञोपवीतिनम् ।
आज्यस्थाली तथा पार्श्वे तेनैव च चरुः पुरः ॥
वामे पार्श्वे च सावित्री दक्षिणेन सरस्वती ।
अग्रे च ऋषयस्तद्वत्कार्याः पैतामहे पदे ॥

अधिदेवताः तासां स्थानं च

[1]शिवोमास्कन्दगोविन्दब्रह्मेन्द्रयमकालभाः ।
चित्रगुप्तश्च सर्वेषां दक्षिणे त्वधिदेवताः ॥

ग्रहाणां वर्णाः, वस्त्रादीनां ग्रहवर्णत्वम्

[2]आदित्याङ्गारकौ रक्तौ बुधजीवौ च पीतकौ ।
सोमशुक्रौ विदुः श्वेतौ कृष्णौ राहुशनैश्चरौ ॥
धूम्रः केतुगणश्चैषां वस्त्राण्याभरणानि च ।
ग्रहवर्णानि गृह्णीयाद्गन्धं पुष्पं तथैव च ॥

कुम्भस्थापनम्

[1]ग्रहाणां शम्भुकोणे वा सौम्ये वा पद्ममालिखेत् ।
तन्मध्ये वारुणं कुम्भं पुण्यतोयप्रपूरितम् ।
अव्रणं सुदृढं रम्यं धान्यस्योपरि विन्यसेत् ॥

ग्रहाणां दानानि

[2]कौसुम्भवस्त्रं गुडहेमताम्रं
माणिक्यगोधूमसुवर्णपद्मम् ।
सवत्सगोदानमिति प्रणीतं
दुष्टाय सूर्याय मसूरिकाश्च ।
आरक्तकं चन्दनमम्बुजं च
वदन्ति दानं हि दिवाकराय ॥
घृतकलशसितवस्त्रं
दधिशङ्खमौक्तिकं सुवर्णं च ।
रजतं च संप्रदद्या-
च्चन्द्रारिष्टोपशमनाय ॥
सद्वंशपात्रस्थिततण्डुलांश्च
कर्पूरमुक्ताफलशुभ्रवस्त्रम् ।
युगोपयुक्तं वृषभं च रौप्यं
चन्द्राय दद्याद्घृतपूर्णकुम्भम् ॥
प्रवालगोधूममसूरिकाश्च
वृषश्च ताम्रः करवीरपुष्पम् ।
आरक्तवस्त्रं गुडहेमताम्रं
दुष्टाय भौमाय सचन्दनं हि ॥
नीलं वस्त्रं मुद्गदानं बुधाय
रत्नं पाचीदासिकाहेमसर्पिः ।
कांस्यं दन्तः कुञ्जरश्चा(? स्या)थ मेषो
रौप्यं सर्वं पुष्पजात्यादिकं च ॥
रथः सुवर्णं शुभपीतवस्त्रं
सपीतधान्यं लवणं सुपुष्पम् ।
सशर्करं सद्रजनीप्रयुक्तं
दुष्टाय शान्त्यै गुरवे प्रणीतम् ॥

(१) संग. १२१. (२) प्रपा. ७०.

(१) प्रपा. ७३. (२) कृभ. ११००-११०२.

चित्रवस्त्रमषिदानवर्धिते
दुष्टगे मुनिगणैः परिणीतम् ।
तण्डुलं घृतसुवर्णरूपकं
वज्रकं परिमलो धवला गौः ॥
चित्राम्बरं शुभ्रतरस्तुरङ्गो
धनुश्च वज्रं रजतं सुवर्णम् ।
सतण्डुलाज्योत्तमगन्धयुक्तं
वदन्ति दानं भृगुनन्दनाय ॥
नीलकं महिषं वस्त्रं कृष्णं लोहं सदक्षिणम् ।
दद्याच्च दक्षिणायुक्तं शनिदोषप्रशान्तये ॥
माषाश्च तैलं विमलेन्द्रनील-
स्तिलाः कुलित्था महिषी च लोहम् ।
सदक्षिणं चेदमुशन्ति नूनं
दुष्टाय दानं रविनन्दनाय ॥
गोमेदरत्नं च तुरंगमश्च
सुनीलचैलानि च कम्बलाश्च ।
तिलाश्च तैलं खलु लोहमिश्रं
स्वर्भानवे दानमिदं वदन्ति ॥
राहोर्दानं बुधैर्मेषो गोमेदो लोहकम्बलौ ।
सुवर्णं नागरूपं च सतिलं ताम्रभाजनम् ॥
वैडूर्यरत्नं सतिलं सतैलं
सकम्बलश्चापि मदो मृगस्य ।
शस्त्रं च केतोः परितोषहेतो-
रुदीरितं दानमिदं मुनीन्द्रैः ॥
केतोर्वैडूर्यममलं तैलं मृगमदस्तथा ।
ऊर्णां तिलैश्च संयुक्तां दद्यात्क्लेशापनुत्तये ॥

ग्रहाणां दिग्भागाः रत्नानि च

माणिक्यं तरणेर्मध्ये प्राच्यां वज्रं भृगोर्विधोः ।
आग्नेय्यां मौक्तिकं याम्यां प्रवालं मङ्गलस्य तु ॥
गोमेदं राक्षसे राहोः पश्चिमे नीलकं शनेः ।
वायौ वैडूर्यकं केतोरुदीच्यां पुष्पकं गुरोः ॥

चित्रौदनस्वरूपम्

[1]अजाक्षीरेण संसिद्धा विमलाः सिततण्डुलाः ।
यवचूर्णेन संयुक्ताश्चित्रौदनमुदाहृताः ॥

(१) संग. १२३.

## मानवसंहितायाम्

कलशस्थापनम्

[1]गोमयालेपिते देशे धात्वाद्यैः परिशोभिते ।
पङ्कजं कारयेत्तत्र चतुर्विंशद्दलान्वितम् ॥
[2]तण्डुलैः कारयेद्यद्वा रक्तपीतसिताक्षतैः ।
कर्णिकायां न्यसेद्व्रीहीन् स्थापयेत्तेषु
कुम्भकम् ॥
[3]आकलशेष्वित्यनया कलशस्थापनं शुभम् ।
इमं म इति मन्त्रेण पूरयेत्तीर्थवारिणा ।
कुम्भं च गन्धवस्त्राद्यैस्तत्तन्मन्त्रैः प्रपूरयेत् ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकाद्ध्रदगोकुलात् ।
मृदमानीय यत्नेन राजद्वाराच्चतुष्पथात् ।
उद्धृताऽसीति मन्त्रेण तस्मिन् कुम्भं
( ? कुम्भे ) विनिक्षिपेत् ॥
न्यग्रोधपिप्पलप्लक्षजम्बूचूततरूद्भवाः ।
रुवति भीम इत्यृचा त्वचस्तस्मिन्विनिक्षिपेत् ॥
गन्धद्वारामित्यनया गन्धं चैव विनिक्षिपेत् ।
प्र वो यज्ञेष्वित्यनया तेषां शाखा विनिक्षिपेत् ॥
विधिना पञ्चगव्यानि तत्तन्मन्त्रैर्विनिक्षिपेत् ।
या ओषधीरित्यनयौषधान्यपि शतानि च ।
अभावे दशमूलानि सुवर्णं वा विनिक्षिपेत् ॥
सर्वे समुद्रा गङ्गा च इमं मे गङ्ग इत्यृचा ।
आपो हि ष्ठादिभिर्मन्त्रैरभिमन्त्र्य च वारुणैः ॥

'न हि ते क्षत्रम्' इत्यादयो वारुणाः ।

प्रपा. ७३

[4]ततोऽस्मिन् वरुणं देवं मन्त्रैरावाह्य
स्थापयेत् ॥

तत्प्रकाशकमन्त्रैः 'तत्त्वा यामि' इत्यादिभिः ।

संदी. ९१

(१) प्रपा. ७३ ; संग. १२४ चैः परि ( चैरुप ) शद्दला ( शदला ) ; संदी. ९१ शद्द ( शतिद ) शेषं संगवत् .

(२) प्रपा. ७३ ; संग. १२४ येद्यद्वा ( येद्वाऽपि ) क्षतैः ( सितैः ) ; संदी. ९१ संगवत् .

(३) प्रपा. ७३.

(४) संदी. ९१.

## संग्रहकारः ( स्मृतिसंग्रहः )

देवतास्थापने दिशः मन्त्रश्च

[1]अधिदेवा दक्षिणतो वामे प्रत्यधिदेवताः ।
स्थापनीयाः प्रयत्नेन व्याहृतीभिः पृथक् पृथक् ॥
[2]राहुमन्ददिनेशानामुत्तरस्यां यथाक्रमम् ।
गणेशदुर्गावायूंश्च राहुकेत्वोस्तु दक्षिणे ।
आकाशमश्विनौ चेति पञ्चैतान् स्थापयेद्बुधः ॥

## हेमाद्रौ

होमः, हविर्द्रव्याणि, मन्त्राः, निर्वापः

[3]चतुरश्चतुरो मुष्टीन्निर्वपेद्व्रीहितण्डुलान् ।
यत्र या देवता प्रोक्ता तदुद्देशेन कारयेत् ॥
निर्वापप्रोक्षणे कृत्वा तमग्नौ श्रपयेच्चरुम् ।
ततोऽवदानधर्मेण स्रुचैव जुहुयाच्चरुम् ॥
घृताक्तार्कसमिद्भिश्च स्रुवेणाऽऽज्यं च हावयेत् ।
आ कृष्णेनेति मन्त्रेण तिलान् व्याहृतिभिर्हुनेत् ॥
[4]चरुणा च समिद्भिश्च सर्पिषा च तिलैः क्रमात् ।
तत्तन्मन्त्रैश्च होतव्याः क्रमात्तदधिदेवताः ॥

लोकपालबलिदानम्

[5]होमावसाने कृततूर्यनादो
गुरुर्गृहीत्वा बलिपुष्पधूपम् ।
आवाहयेल्लोकपतीन् क्रमेण
मन्त्रैरमीभिर्यजमानयुक्तः ॥

अग्नेरष्टदिक्षु यजमानसहित आचार्यः इन्द्रादिलोकपालानावाह्य नाममन्त्रैः संपूज्य वक्ष्यमाणमन्त्रैर्बलीन् दद्यादित्यर्थः । प्रपा. ७४

[6]संहितायां तु ये मन्त्रास्तद्दैवत्याः श्रुतौ स्मृताः ।
तैः पूजा लोकपालानां कर्तव्या तु समन्ततः ॥

(१) शाम. १६ ; संग. १२१ देवा ( देवान् ).
(२) शाम. १७ शदुर्गावायूंश्च ( शो दुर्गा वायुश्च ) त्वोस्तु ( त्वोश्च ) ; संग. १२१ पञ्चैतान् ( पञ्चैताः ).
(३) प्रपा. ७८.
(४) प्रपा. ७८ ; शाम. १९ क्रमात्तदधि ( क्रमादत्राधि ).
(५) प्रपा. ७४.
(६) प्रका. २७.

## उत्पलपरिमले

ग्रहयज्ञस्य निमित्तानि फलं च

[1]कार्यारम्भेषु सर्वेषु प्रतिष्ठास्वध्वरेषु च ।
नववेश्मप्रवेशे च गर्भाधानादिकर्मसु ॥
आरोग्यस्नानसमये संक्रान्तौ रोगसंभवे ।
अभिचारे च यः कुर्याद्ग्रहपूजां विधानतः ।
सोऽभीष्टफलमाप्नोति निर्विघ्नेन न संशयः ॥

अत्र कार्यारम्भेष्वित्यादौ सर्वत्र निमित्तसप्तमी । *प्रपा. ६८

पूर्वकृत्यम् आचार्यवरणं च

[2]पूर्वाह्णे विधिवत्स्नात्वा नित्यकर्म समाचरेत् ।
पुण्याहवाचनं कृत्वा क्रतुसंकल्पपूर्वकम् ।
आचार्यं वरयेत्कर्ता विधिज्ञं च सयत्नकम् ॥

तत्र यजमानः विधिज्ञम् आचारवन्तमाचार्यम् 'अस्मिन्ग्रहमखे आचार्यं त्वां वृणे' इति तत्पाणिं पाणिना संगृह्य वृणुयात्, अनधिकारिणा करणे दोषस्मरणात् । तदाह बृहस्पतिः— 'आथर्वणं प्रतिष्ठां च ग्रहयज्ञं क्रतुं व्रतम् । असंस्कृतमनुः कुर्वञ्छीघ्रमेति विपर्ययम् ॥' । प्रपा. ७२

अधिदेवतादीनां दिग्भागाः पूजनं जपो होमश्च

[3]ग्रहस्य दक्षिणे पार्श्वे स्थापयेदधिदेवताम् ।
ग्रहस्योत्तरपार्श्वे तु न्यसेत्प्रत्यधिदेवताम् ॥
शनैश्चराद्वायुदेशे स्थापयेद्विघ्ननायकम् ।
आ तून इन्द्र क्षुमन्तमित्यृचा विधिनाऽर्चयेत् ॥
तस्य याम्येऽर्चयेद्दुर्गां जातवेदसमन्त्रतः ।
तस्य दक्षिणतो वायुं प्राणाशिशुर्ऋचाऽर्चयेत् ॥
आदित्प्रत्नस्येत्यनयर्चाऽम्बरं पूजयेदथ ।
एषो उषा इत्यनया तस्य याम्येऽश्विनौ यजेत् ॥

* विपा., संग. प्रपावत् ।
(१) प्रपा. ६८ ; शाम. ११.
(२) प्रपा. ७१-७२ च सयत्नकम् ( नवयज्ञकम् ) : ७८.
(३) प्रपा. ७२.

ततो विनायकं दुर्गां वायुमम्बरमश्विनौ ।
आ तून इन्द्र इत्याद्यैर्मन्त्रैः प्रागीरितैर्यजेत् ॥
पुष्पाणि शतपत्राणि चन्दनं च विलेपनम् ।
एतेषां गुग्गुलो धूपो नैवेद्यं सघृतौदनम् ।
तत्तन्मन्त्रैर्जपं कुर्यात्ततो होमं समाचरेत् ॥
[1]पद्मप्राग्दलमारभ्य दलाग्रेषु क्रमान्न्यसेत् ।
इन्द्रादिलोकपालांश्च तत्तन्मन्त्रैः प्रपूजयेत् ॥
[2]सर्वेषां लोकपालानां चन्दनं च विलेपनम् ।
शतपत्राणि पुष्पाणि दद्याद्गुग्गुलधूपकम् ॥
[3]दीपं गोघृतसंयुक्तं नैवेद्यं सघृतौदनम् ।
तत्तन्मन्त्रैर्जपं कुर्यात्ततो होमं समाचरेत् ॥

## ब्रह्मयामले

ग्रहयज्ञफलम्

[4]दुष्टारिष्टे समायाते कर्तव्यं ग्रहशान्तिकम् ।
वृष्टिपुष्ट्यायुरारोग्यसततराज्याङ्गवृद्धये ॥

प्रतिमाप्रकृतयः

[5]ताम्रेण कारयेद्भानुं रजतेन निशाकरम् ।
कुजज्ञजीवरूपाणि सुवर्णेन प्रकल्पयेत् ॥
रजतेन ततः शुक्रं कृष्णलोहेन सूर्यजम् ।
नागेन कारयेद्राहुं केतुं कांस्येन कारयेत् ॥
नागं सीसम् । प्रपा. ७०

प्रतिमामानम्, वर्णकैर्लेखनम्

स्वाङ्गुलेनोच्छ्रिताः सर्वे ग्रहाः कार्या विधानतः ।
अथवा स्वर्णमात्रेण कारयेत्प्रतिमाः सुधीः ॥
तदर्धेन तदर्धेन यथावित्तानुसारतः ।
अथवा वर्णकैः कार्या ग्रहाः स्वर्णादिधातुभिः ॥

(१) प्रपा. ७२ क्रमेण उत्पलपरिमले; शाम. १७ प्रयोगपारिजाते : १९ उत्त. प्रयोगपारिजाते.
(२) प्रपा. ७२ क्रमेण उत्पलपरिमले.
(३) प्रपा. ७२ क्रमेण उत्पलपरिमले ; शाम. १९ चरेत् (रभेत्) उत्त., प्रयोगपारिजाते.
(४) प्रपा. ६९.
(५) प्रपा. ७०.

वितानम्, ग्रहाणां पीठं स्थापनं च

[1]वितानं कारयेत्तत्र फलपुष्पाङ्कितं शुभम् ।
ग्रहवर्णपताकाढ्यैस्तोरणाद्यैर्विराजितम् ॥
गोमयेनोपलिप्याथ ततस्तण्डुलकैः शुभैः ।
तत्रोपरि लिखेद्धीमान् पद्ममष्टदलं शुभम् ॥
क्रमेण स्थापयेत्तत्र भास्करादीन्नवग्रहान् ।

लोकपालानां स्वरूपाणि दिग्भागाः मन्त्राश्च

[2]इन्द्रस्त्वैरावतारूढो वज्रपाणिः शचीसखः ।
स्वर्णवर्णः सहस्राक्षो नाकपस्त्वमरेश्वरः ॥
पद्मपूर्वदलस्याग्रे इन्द्रमिन्दव(? इन्द्र इन्द्रं व) इत्यृचा ।
अग्निः सुवर्णवर्णाङ्गः सप्तार्चिः सप्तहस्तकः ॥
स्वाहासखो मेषवाहः शक्त्यन्नस्रुक्स्रुवादिधृक् ।
अग्निं दूतमित्यनया ऋचाऽऽग्नेयदलाग्रके ॥
इलाप्रियो दण्डधरो यमो महिषवाहनः ।
रक्तवर्णो हि लोकानां स्वस्वकर्मफलप्रदः ॥
याम्ये याज्यो दलाग्रे तु यमायेत्यनया ऋचा ।
खड्गचर्मधरो नीलो निर्ऋतिर्नरवाहनः ॥
ऊर्ध्वकेशो विरूपाक्षः करालः कालिकाप्रियः ।
मो षु णस्त्वितिमन्त्रेण नैर्ऋते तु दलाग्रके ॥
नागपाशधरो रक्तभूषणः पद्मिनीप्रियः ।
वरुणोऽम्बुपतिः स्वर्णवर्णो मकरवाहनः ॥
याज्यः पश्चिमपत्राग्रे त्वं नो अग्न ऋचा तथा ।
प्राणरूपो हि जगतो वायुः कृष्णमृगासनः ॥
हेमदण्डधरः श्यामो वर्णतो मोहिनीप्रियः ।
तव वायवृत इति याज्यो वायुर्मरुद्दिशि ॥
अश्वारूढः कुन्तपाणिः कुबेरश्चित्रिणीप्रियः ।
निधीश्वरः स्वर्णवर्णो धनदो रूपवान्प्रभुः ॥
सोमो धेनुमनेनैव याज्यश्चोदग्दलाग्रके ।
शुद्धस्फटिकसंकाशो गौरीशो वृषवाहनः ॥
वरदाभयशूलाक्षः सूत्रभृत्परमेश्वरः ।
कद्रुद्रायेतिमन्त्रेण याज्यः प्रागुत्तरे दले ॥

(१) प्रपा. ७२.
(२) प्रपा. ७२-७३.

## वामनग्रन्थे

आवाहनपूजनविसर्जनेषु नाममन्त्रविधिः

[1]प्रणवं त्वादितः कृत्वा भूर्भुवः स्वस्ततः परम् ।
चतुर्थ्या नाम संयुक्तं नमस्कारान्तयोजितम् ॥

[2]एष मन्त्रः समाख्यातो ग्रहपूजाविधायकः ।
अनेनाऽऽवाहनं कुर्यादनेनैव विसर्जयेत् ॥

कर्मफलग्रहणम्, दक्षिणादानम्, ब्राह्मणभोजनम्

[3]आचार्यप्रभृतिभ्यश्च ग्रहार्चनफलं ततः ।
समिदाज्यचरूणां च तिलहोमफलं ततः ॥

[4]ब्रह्मत्वे कुम्भपूजायां चार्चनस्य फलं च यत् ।
लोकपालगणेशाद्यास्तत्र या अङ्गदेवताः ॥

[5]तासां होमफलं तद्वद्गृह्णीयाजलपूर्वकम् ।
तत्रस्थेभ्यो यथाशक्ति दातव्या दक्षिणा ततः॥

[6]आचार्यार्धं जापकेभ्यो ब्रह्मणे चाथ तुष्टये ।
आज्यं निरीक्ष्य दत्त्वा च ब्राह्मणान् भोजये-
त्ततः ॥

## शारदातिलके

होमे स्थण्डिलविकल्पः

[7]नित्यं नैमित्तिकं होमं स्थण्डिले वा समा-
चरेत् ॥

अत्र द्वयोर्ग्रहणेन काम्ये न स्थण्डिलमित्यर्थादुक्तं भवति । संर. १२४

## ज्योतिःसागरे

अङ्गभूतग्रहयज्ञस्य प्राक्कालनियमः

[1]मण्डपस्थापनदिनात्पुरा ग्रहमखं चरेत् ।
दशाहे वाऽथ सप्ताहे ततः प्राङ्नैव तं चरेत् ॥

ग्रहयज्ञस्तु प्रधानसंकल्पदिनात् प्राक् सप्तदिनमध्ये दशदिनमध्ये एव वा कर्तव्यः, 'मण्डप...' इति ज्योतिःसागरवचनात् । मण्डपस्थापनदिनात् प्रधान-संकल्पदिनात् पुरा प्राक् ग्रहमखं ग्रहयज्ञं चरेत् कुर्यात् । तत्र कालनियममाह– दशाह इति । ततो दशाहात् सप्ताहाद्वा प्राङ्नैव तं ग्रहमखं कुर्यादित्यर्थः । संर. १९८

## शान्तिदीपिकायाम्

ग्रहयज्ञमुहूर्तः

[2]शुभग्रहार्कवारेषु मृदुक्षिप्रध्रुवेषु च ।
शुभराशिविलग्नेषु शुभं शान्तिकपौष्टिकम् ॥

मृदुगणः चित्रानुराधामृगशिरोरेवत्यः । क्षिप्रगणः लघुगणः पुष्याश्विहस्ताः । ध्रुवगणः रोहिण्युत्तरात्रयम् । संत. ९४३

व्यस्तग्रहयज्ञः

गोचरे वा विलग्ने वा ये ग्रहा रिष्टसूचकाः ।
पूजयेत्तान् प्रयत्नेन पूजिताः स्युः शुभावहाः ॥

गोचरे स्वराश्यपेक्षया यदा कदाऽपि । विलग्ने जन्म-लग्ने । सूचकाः, न तु रिष्टकारकाः । तेन दुष्टग्रहसूच-नीयदोषोपशमनं फलम् । संत. ९४३

ग्रहाणां मण्डलाकृतयः

[3]वर्तुलो भास्करः कार्यो ह्यर्धचन्द्रो निशाकरः ।
अङ्गारकस्त्रिकोणस्तु बुधश्चापाकृतिस्तथा ॥
पद्माकृतिर्गुरुः कार्यश्चतुष्कोणस्तु भार्गवः ।
सर्पाकृतिः शनिः कार्यो राहुस्तु मकराकृतिः ॥
खड्गाकृतिस्तथा केतुः कार्यो मण्डलपूजने ॥

---

(१) प्रपा. ६९, ७८; शाम. १४; संकौ. १४०.

(२) प्रपा. ६९, ७८; शाम. १४ विसर्जयेत् (विसर्जनम्); संकौ. १४० शामवत्, उत्त.

(३) प्रपा. ७८; शाम. २० होमफलं ततः (होमफलं च यत्); विपा. ६०२ प्रयोगपारिजाते; संकौ. १४०.

(४) प्रपा. ७८ यां चार्च (या अर्च); शाम. २० उत्तरार्धे (गणपक्षेत्रपाश्रीशदुर्गादिव्यङ्गदेवताः ॥); विपा. ६०२ पालग (पाला ग) प्रयोगपारिजाते; संकौ. १४० प्रपावत्.

(५) प्रपा. ७८ होम (जप); शाम. २० होम (जप) तद्वत् (सम्यक्) पू.; विपा. ६०२ होमफलं (जपफले) तत्र-स्थेभ्यो (ततस्तेभ्यो) प्रयोगपारिजाते; संकौ. १४० पू.

(६) प्रपा. ७८ आचार्यार्धं (आचार्यार्थे); विपा. ६०२ प्रयोगपारिजाते; संकौ. १४० उत्त.

(७) संर. १२४; संदी. ९१.

(१) संर. १९८.

(२) संत. ९४३ दीपिकायाम्.

(३) संत. ९४६.

चित्रान्नस्वरूपम्

[१]अजाक्षीरेण संस्विन्ना यवाश्च तिलतण्डुलाः ।
अजाकर्णस्य रक्तेन रक्ताश्चित्रान्नसंज्ञिताः ॥

## जातकाभरणे सारावल्याम्

ग्रहदानानि

[२]माणिक्यगोधूमसवत्सधेनुः
कौसुम्भवासो गुडहेमताम्रम् ।
आरक्तकं चन्दनमम्बुजं च
वदन्ति दानं हि विरोचनाय ॥

सद्वंशपात्रस्थिततण्डुलांश्च
कर्पूरमुक्ताफलशुभ्रवस्त्रम् ।
युगोपयुक्तं वृषभं च रौप्यं
चन्द्राय दद्याद् घृतपूर्णकुम्भम् ॥

प्रवालगोधूममसूरिकाश्च
वृषोऽरुणश्चापि गुडः सुवर्णम् ।
आरक्तवस्त्रं करवीरपुष्पं
ताम्रं च भौमाय वदन्ति दानम् ॥

चैलं च नीलं कलधौतकांस्यं
मुद्गाज्यगारुत्मतसर्वपुष्पम् ।
दासी च दन्तो द्विरदस्य नूनं
वदन्ति दानं विधुनन्दनाय ॥

शर्करा च रजनी तुरङ्गमः
पीतधान्यमपि पीतमम्बरम् ।
पुष्परागलवणं सकाञ्चनं
प्रीतये सुरगुरोः प्रदीयते ॥

चित्राम्बरं शुभ्रतरस्तुरङ्गो
धेनुश्च वज्रं रजतं सुवर्णम् ।
सुतण्डुलाज्योत्तमगन्धयुक्तं
वदन्ति दानं भृगुनन्दनाय ॥ *

गोमेदरत्नं च तुरङ्गमश्च
सुनीलचैलानि च कम्बलानि ।
तिलाश्च तैलं खलु लोहमिश्रं
स्वर्भानवे दानमिदं वदन्ति ॥

वैडूर्यरत्नं सतिलं च तैलं
सुकम्बलश्चापि मदो मृगस्य ।
शस्त्रं च केतोः परितोषहेतो-
श्छागश्च दानं कथितं मुनीन्द्रैः ॥

## आपदेवकृतग्रहपीठमालायाम्

ग्रहवेदी ग्रहपीठानि च

[१]मुनिवाक्यतः करमितां ग्रहवेदीं
नवधा विधाय खगपीठनिवेशान् ॥

एकाङ्गुलाचलयवाहितसंख्ययूका
व्यासार्धकेन मिहिरस्य विधेहि वृत्तम् ।
स्याद्द्वादशाङ्गुलफलं खलु काश्यपाख्य-
गोत्रस्य रक्तवपुषो हरिदिङ्मुखस्य ॥

अथ सूर्यपीठसाधनमाह— एकेति । अङ्गुलम् १ यवाः ७ यूकाः ६ एतत्प्रमाणेन कर्कटेन वृत्तं कुर्यादित्यर्थः । संग. ११६

वेदाङ्गुलाद्रियवपक्षसमानयूकै-
र्वेदैर्भुजैः कुरु कृतास्रमनुष्णरश्मेः ।
सिद्धाङ्गुलं क्षितिफलं परदिङ्मुखस्य
चाऽऽत्रेयगोत्रजनुषो धवलाङ्ग-
भासः ॥

अथ चन्द्रपीठसाधनमाह— वेदेति । अङ्गुलानि ४ यवाः ७ यूके २ एतत्प्रमाणाश्चतुरो( ? श्चत्वारो ) भुजाः कर्तव्या इत्यर्थः । संग. ११६

त्र्यङ्गुलस्वयवाम्बुधियूकं
त्रिभुजकृतत्रिकोणमिदमारस्य ।
भारद्वाजसगोत्रस्याऽवाग्-
वदनस्य श्रुतिफलमनलभासः ॥

* अतः परं शनैश्चरदानश्लोको भ्रष्टः ।

( १ ) संत. ९४७–९४८ दीपिका.

( २ ) बाल. १।२९५–२९६ पृ. ६०७–६०८.

( १ ) संग. ११६–११८.

अथ भौमपीठसाधनमाह— त्र्यङ्गुलेति । अङ्गुलानि ३ यवाः० यूकाः ४ एतत्प्रमाणं भुजत्रयं कर्तव्यमित्यर्थः । संग. ११७

तिर्यग्वेदयवान्तरौ कुरु भुजौ
वेदाङ्गुलौ ये तयो-
रग्रे चोर्ध्वमधः पृथक् त्रियवकैः
संवर्धिताभ्यां पुनः ।
देहि द्व्यङ्गुलषड्यवोन्मितगुण-
द्वन्द्वं मिथः संमिल-
द्वक्रं नेत्रयवैश्च चापसहितं
वेदाङ्गुलं वै विदः ॥

कुङ्कुमसंकाशरुचेः श्रेष्ठतरात्रेयगोत्रजातस्य ।
उदगाशाभिमुखस्य प्रोक्तं पीठं बुधस्योक्तम् ॥

अथ बुधपीठसाधनमाह— तिर्यगिति । दक्षिणोत्तरभुजौ चतुरङ्गुलौ कर्तव्यौ । कोटिश्चतुर्यवात्मकः । तदुत्तरभागे संलग्नं पूर्वापरं सूत्रं यवद्वयाधिकमेकाङ्गुलात्मकम्। अङ्गुले २ यवाः ६ एतत्प्रमितं गुणद्वयं देयं त्रिकोणम् । संग. ११७

दास्रा( ? दस्रा ) गुङ्लानलमिताङ्गुलबाहुकोटी
जातं च दीर्घचतुरस्रमिदं गुरोः स्यात् ।
तर्काङ्गुलक्षितिफलं खलु पीतभासः
सौम्याननस्य परमाङ्गिरसान्वयस्य ॥

अथ गुरुपीठसाधनमाह— दास्रेति । द्व्यङ्गुलः याम्योत्तरो भुजः । त्र्यङ्गुलमिता पूर्वापरा कोटिरित्यर्थः । संग. ११७

व्यासार्धतः कुनगबाणमिताङ्गुलाद्याद्
वृत्ते कृतेऽश्वियमराममिताङ्गुलाद्याः ।
ज्याः पञ्च शक्रहरितः कुरु तत्र मृड्ढि
वृत्तं नवाङ्गुलफलं हि कवेः
शरास्रम् ॥

अथ शुक्रपीठसाधनम् । तत्राऽऽदौ समकलमाह— व्यासार्धत इति । संग. ११७

वृत्तं द्व्यङ्गरसाङ्गुलादिकवितत्यर्धेन
कृत्वाऽङ्कय
प्राच्यास्त्रिद्विरसाङ्गुलादिभि-
रमुष्मिन्पञ्च बाहूंस्तनु ।
पश्चात्त्रिद्विमितांस्तृतीयमिलितान्वृत्तं च
कोणाधरान्
बाहून्मृड्ढि भृगोर्नवाङ्गुलफलं
पीठं शरास्रयुत्कलम् ॥

भार्गवगोत्रातजनेर्वासवकाष्ठाकृतास्येन्दोः ।
शुक्लतरदेहभासः पीठं शुक्रस्य साधु स्यात् ॥

प्रकारान्तरेणोत्कलिकं शुक्रपीठसाधनमाह— वृत्तमिति । संग. ११७

वेदाब्धिवेदाब्धिमिताङ्गुलादिना
व्यासार्धकेन भ्रमणाङ्घ्रिकाग्रयोः ।
ज्यामङ्गरामेषुमिताङ्गुलादिकां
देह्यङ्ककुः स्याद्धि शनेर्धनुर्निभम् ॥

अञ्जननीकाशरुचेः काश्यपगोत्रस्य सूर्यपुत्रस्य ।
वरुणाशाभिमुखस्य पीठं श्रेष्ठं च निर्दिष्टम् ॥

अथ शनिपीठसाधनमाह— वेदेति । संग. ११८

कृत्वा वेदास्त्रिवेदाङ्गुलमितभुजजं
वर्धयेदङ्गुलाद्यैः
पक्षाग्न्यम्भोधिसंख्यैरुभयत इह
तिर्यक् च कोणौ पुरोजौ ।
ताभ्यां प्रत्यक्स्थकोणद्वयगगुणयुते
सत्कृतेऽधो भुजार्धाद्
वृत्तार्धे द्वे लिखाब्ध्यस्त्रि गमय तमसो-
ऽर्हत्फलं शूर्परूपम् ॥

कालजलदनीलतनोर्यमहरिदास्यस्य सैंहिकेयस्य ।
पैठीनसिगोत्रभवस्य पीठमिति सम्यग्जिनाङ्गुलं हि ॥

अथ राहुपीठसाधनमाह– कृत्वेति । संग. ११८

**कुर्याः पूर्वपरौ गजाङ्गुलभुजौ तत्कोटिमर्धाङ्गुला-**
**मत्रार्वाक्स्थभुजं शराङ्गुलमधो हित्वोर्ध्वमेकाङ्गुलम् ।**
**शेषं मृड्ढि ततो गुणौ श्रुतिधरा-तुल्याङ्गुलाढयौ मिथो**
**लग्नास्यौ कुरु साचिगौ गजफलं केतोर्ध्वजाभं फलम् ॥**

केतुपीठसाधनमाह—कुर्या इति । संग. ११८

**जैमिनिसगोत्रातजनेर्याम्यदिशावक्त्रविधोः ।**
**धूमलवर्णाङ्गरुचेः पीठमिदं स्याच्छिखिनः ॥**

## ग्रहदीपिकायाम्

ऋत्विक्संख्या

[१]**ऋत्विजोऽष्टौ च चत्वारो द्वावप्येकस्तथैव च ।**
**नवग्रहमखे कुर्यादृत्विजश्चतुरः शुभान् ॥**

एतच्चोपलक्षणम् , बहवोऽपि कर्तव्याः । ' होमसंख्याकान् ऋत्विजो वृणीत ' ( इति ), सर्वत्राऽऽचार्यब्रह्माणौ नियतौ, वरणं विनाऽनर्त्विजत्वा( ? ऽनृत्विक्त्वा )-पत्तेः । तथा चोक्तं श्रीअ( ? श्रीमद )नन्तभाष्ये— ' होतृत्वप्रापणायैतद्वरणं त्विष्टसाधनम् । यजमानेन कर्तव्यमानन्त्यार्थमिहापि तत् ॥ ' । वरणानन्तरमृत्विजि ज्वरादियुक्ते मृते वा ( तदा ? ) यजमानस्तत्स्थानेऽन्यं वृत्वा कर्मणि योजयेत् । तथा च श्रौतसूत्रभाष्ये ब्रह्मवरणप्रकरणे श्रीअ( ? श्रीमद )नन्तेन लिखितम् । तद्यथा— ' यावन्न योज्यतेऽन्यस्तु वरणेन स्वकर्मणि । न तावत्तत्समाख्यानं लभते कर्तृहेतुकम् ॥ ' इति ।

¶ संग. १०८

¶ संदी. संगवत् ।

( १ ) संग. १०८ ; संदी. ८८ पू.

## संहिताप्रदीपे

ग्रहपीडानिवारणोपायाः

[१]**भानुस्ताम्बूलदानादपहरति नृणां वैकृतं वासरोत्थं**
**सोमः श्रीखण्डदानादवनितनुभुवो( ? भवो ) भोजनात् पुष्पदानात् ।**
**सौम्यः , शक्रस्य मन्त्री हरिहरनमनाद्भार्गवः शुभ्रवस्त्रै-**
**स्तैलस्नानात्प्रभाते दिनकरतनयो ब्रह्मनद्या ( ? नद्यां ) परौ च ॥**

## तन्त्रप्रकाशे

पीठस्थापितदेवताकहोमो नाममन्त्रेणैव, नाममन्त्रस्वरूपम्

[२]**प्रणवादिचतुर्थ्यन्तं स्वाहाशब्दसमन्वितम् ।**
**स्यात्पीठदेवताहोमे मन्त्रो नामैव कीर्तितः ॥**

सर्वतोभद्रादिपीठे ' मूलमन्त्रेण जुहुयात् ' इति वचनाभावान्न मूलमन्त्रेण होमः , किंतु ' प्रणवादिचतु- ... कीर्तितः ' इति तन्त्रप्रकाशकारोक्तेर्नमःशब्दरहितेनैव नाममन्त्रेण होम इति द्रष्टव्यम् । संर. १२८

## प्रपञ्चसारे

होमे स्थण्डिलविकल्पः

[३]**कुण्डमेवंविधं न स्यात्स्थण्डिलं वा समाश्रयेत् ॥**

## ज्ञानार्णवे

कलशे कुशब्रह्मपूजनम्

[४]**पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखैः स्थितः ।**
**संस्नाप्य स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः ।**
**ब्रह्म जज्ञानमिति वा गायत्र्या वा प्रपूजयेत् ॥**

कलशे ब्रह्मपूजनमप्युक्तं ज्ञानार्णवे– ' पञ्चाशद्भि... ' इति स्मृतिकौस्तुभे । संदी. ९१

( १ ) कुभ. ११०२.
( २ ) संर. १२८.
( ३ ) संदी. ९१.
( ४ ) संदी. ९१.

## रूपनारायणः

लेख्यग्रहाकृतयः तासां मानानि च

[१]वर्तुलं भास्करं विद्यादर्धचन्द्रं निशाकरम् ।
त्रिकोणं तु कुजं विद्याद्बुधं च धनुषाकृतिम् ॥
पद्माकृतिं गुरुं विद्याच्चतुःकोणं तु
भार्गवम् ।
नराकृतिं शनिं विद्याद्राहुं च मकराकृतिम् ॥
खड्गाकृतिं च केतुं च एवमाकृतिमालिखेत् ।
द्वादशाङ्गुलं सूर्यस्य सोमस्य द्विगुणं तथा ॥
चतुरङ्गुलकं भौमं बुधस्य तु षडङ्गुलम् ।
नवाङ्गुलं गुरुं विद्याच्छुक्रं कुर्याद्दशाङ्गुलम् ॥
द्वाविंशतिं शनिं विद्याद्राहुः स्यात्पञ्चविंशतिः ।
पञ्चविंशतिमानं च केतुं च कथितं नृप ॥

## शाकलकारिकाः

मण्डप–कुण्ड–वेदिकाः

[२]समण्डपेऽङ्गणे कुण्डं सलिलस्याग्रवेश्मनः ।
कुर्यात् कुण्डस्य चेशान्यां ग्रहाणां पूजना-
लयम् ॥

ग्रहाणां मुखदिशः

ग्रहाणां पूजनं वक्ष्ये सूर्यादीनामनुक्रमात् ।
वर्णदेशादिकं चैव तत्तन्मन्त्रपुरःसरम् ॥
शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्-
मुखौ ।
प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखाः ॥

ग्रह–देवतास्थापनम्, अधिदेवताः प्रत्यधिदेवताश्च

एवंभूतान् ग्रहान् सर्वान् ध्यात्वा तानभि-
संमुखान् ।
तत्तन्मन्त्रेण वै तत्तन्मण्डले स्थापयेत् क्रमात् ॥
प्रधानदेवतां मध्ये स्थापयेत्स्वस्य संमुखीम् ।
वामेऽधिदेवतां तस्या उदक् प्रत्यधिदेवताम् ॥
प्रधानदेवता सूर्यस्तस्याग्निरधिदेवता ।
आदित्यस्य तथा रुद्रो भवेत् प्रत्यधिदेवता ॥
चन्द्रस्याऽऽपस्तथा गौरी ह्यधिप्रत्यधिदेवते ।
पृथिवी च कुमारश्च भौमस्याथ च देवते ॥
बुधस्य देवते प्रोक्ते विष्णुः स्यात् (? च)
पुरुषस्तथा ।
इन्द्रोऽधिदेवता ब्रह्मा प्रत्यधिदेवता गुरोः ॥
इन्द्राणी च तथेन्द्रश्च स्यातां शुक्रस्य देवते ।
प्रजापतिर्यमश्चैव शनैश्चरस्य देवते ॥
राहोश्चैव भवेत् सर्पो मृत्युः प्रत्यधिदेवता ।
केतोर्ब्रह्मा भवेच्चित्रगुप्तः प्रत्यधिदेवता ॥

ग्रहदेवतानां मन्त्राः

आ कृष्णेनेति वै मन्त्रः सूर्यस्य समुदाहृतः ।
अग्निं दूतमथाग्नेः स्यात् कद्रुद्राय ततः परम् ॥
आ प्यायस्वेति सोमस्य ह्यप्सु मे सोम इत्यथ ।
गौरीर्मिमाय गौर्याः स्यान्मन्त्रश्चैष उदाहृतः ॥
अग्निर्मूर्धेति वै मन्त्रो भौमस्यैष उदाहृतः ।
स्योना भूम्याः कुमारस्य कुमारश्चित्प्रचक्षते ॥
बुधस्यैवोद्बुध्यध्वमिदं विष्णुरतः परम् ।
भवेत्सहस्रशीर्षेति मन्त्रोऽयं पुरुषस्य तु ॥
बृहस्पते अतीत्येव मन्त्रोऽयं स्याद्बृहस्पतेः ।
इन्द्र श्रेष्ठान्ययं मन्त्रो ब्रह्मणस्पत इत्यथ ॥
शुक्रं त इति शुक्रस्य इन्द्राणीमधिदेवता (?)।
इन्द्रं व इत्ययं मन्त्रो भवेत् प्रत्यधिदेवता (?)॥
शमग्निः स्याच्छनेश्चैव प्रजापते न इत्यथ ।
यमाय सोममित्यस्य(? सोमं सुनुत )मन्त्रोऽयं
स्याद्यमस्य तु ॥
कया न इति वै राहोश्चाऽऽयं गौः पृश्निरित्यथ।
परं मृत्यो भवेन्मन्त्रस्तस्य प्रत्यधिदेवता (?)॥
केतुं कृण्वन्नयं मन्त्रः केतोश्चैव भवेदथ ।
मन्त्रोऽयं ब्रह्म जज्ञानं स चित्र चित्रमित्यथ ॥
प्रधानदेवता चाऽऽदौ ततश्चैवाधिदेवता ।
प्रत्यधिदेवता पश्चान्मध्ये दक्षिण उत्तरे ॥

---

(१) संग. ११८–११९.
(२) शाका. ६९१–७३४ पृ. ८७–९२.

लोकपाल-साद्गुण्यदेवतानां स्थापनम् अनुक्रमः मन्त्राश्च

आसन्मन्त्रा रवेरेवमष्टदिक्षु क्रमेण तु ।
प्रागादीशानपर्यन्तं स्थापयेद्गणपादिकान् ॥
गणेशं च ततो दुर्गां क्षेत्रपं चाभयंकरम् ।
मृत्युंजयं तथा वास्तुमश्विनौ मरुतस्तथा ॥
केचित्तु देवताश्चैवं समिच्छन्ति न चापरे ।
बहुभिः संमतं चात्र वक्ष्येऽहं शाकलास्वहम् ॥
गणेशं च ततो दुर्गां क्षेत्रपं वायुमेव च ।
आकाशमश्विनौ देवौ साद्गुण्यदेवता इमाः ॥
गणेशस्य गणानां त्वा दुर्गाया जातवेदसे ।
क्षेत्रस्य क्षेत्रपतिना वायोः क्राणा शिशुस्त्विति ॥
आदित्प्रत्नस्येति मन्त्र आकाशस्य प्रकीर्तितः ।
अश्विना वर्तिरित्येतदश्विनौ पूजयेदथ ॥
इन्द्रश्चाग्निर्यमश्चैव निर्ऋतिर्वरुणस्तथा ।
वायुः सोमस्तथेशानो लोकपालाः स्मृता इमे ॥
इन्द्रं वो विश्वतो मन्त्र इन्द्रस्यैष उदाहृतः ।
अग्निं दूतं भवेदग्नेर्यमायेति यमस्य च ॥
मो षु णो निर्ऋतेर्मन्त्रस्तत्त्वा स्याद्वरुणस्य च ।
तव वायो भवेद्वायोः सोमो धेनुं ... नस्य तु ॥
तमीशानमितीशस्य मन्त्राः प्रोक्ताः क्रमेण तु ।
दिक्पालान् स्थापयेदेवमष्टौ तान् पूर्वतः क्रमात् ॥

उग्रस्थापनम्

उत्तानास्यं न्यसेदुग्रं ग्रहयज्ञाख्यकर्मणि ।
ग्रहाणामग्रतस्तत्तन्मण्डले नैव पार्श्वयोः ॥

ग्रहाणां वर्णाः उपचाराश्च

रक्तं श्वेतं महारक्तं पीतं पीततरं स्मृतम् ।
श्वेतं नीलं च कृष्णं च चित्रवर्णं भवेत्क्रमात् ॥
देशगोत्रादिसकलं ज्ञेयं ग्रन्थान्तरादपि ।
तत्तद्वर्णैर्ग्रहाणां च गन्धपुष्पाक्षतादिभिः ॥

पूजोत्तरं होमः, कुण्डस्थण्डिलयोर्विकल्पः, कुण्डलक्षणम्

पूजनं विधिवत् कुर्यात्ततो होमं समाचरेत् ।
होमानुसारतः कुण्डं स्थण्डिलं वाऽपि कारयेत् ॥
मेखलासहितं चैव योनिलक्षणसंयुतम् ।
रत्निमात्रं शतार्धे तु शते चारत्निमात्रकम् ॥
हस्तमात्रं सहस्रे स्यादयुते तु द्विहस्तकम् ।
लक्षहोमे चतुर्हस्तं षड्ढस्तं प्रयुते स्मृतम् ॥
अष्टहस्तं भवेत्कुण्डं कोटिहोमे तु नाडिके ।
स्वगृह्योक्तविधानेन कुर्यादुल्लेखनादिकम् ॥
इध्माभिघारणान्तं स्याद्धुत्वा चाऽऽज्येन चक्षुषी ।
समिधाऽऽज्येन चरुणा जुहुयात्सतिलैर्यवैः ॥
प्रधानदेवतामादौ तत्तन्मन्त्रेण वै क्रमात् ।
होमं(? हुत्वा) जपदशांशेन कुर्यात् स्विष्टकृदादिकम् ॥

बलिदानम्

होमं शेषं समाप्यैवं पूर्णाहुत्यन्तमेव च ।
इच्छन्त्यत्र बलिं केचिद्ग्रहयज्ञाख्यकर्मणि ॥
नववेश्मप्रवेशे च शान्तिके चापि केचन ।
अपरे बलिदानं च वदन्त्ययुतहोमके ॥
सहस्राहुतिके केचित् कृताकृतमिति स्थितिः ।
पूर्णाहुतेः परं कार्यं बलिदानं तु बह्वृचैः ॥
अन्यैः पूर्णाहुतेः पूर्वमिति यज्ञविदो विदुः ॥

ग्रहयज्ञनिमित्तानि

ग्रहाणां पूजनं कुर्याच्छुभार्थी चैव सर्वदा ।
मङ्गलादौ महाहोमे पूर्तोद्यापनशान्तिके ॥

## शौनककारिकाः

ग्रहयज्ञस्य नियतानियतनिमित्तानि

[१]ग्रहशान्तिं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम् ।
पुण्येऽहनि शुभे वारे जन्माद्यृक्षेषु च त्रिषु ॥
[२]अयने विषुवे चैव सोमसूर्योपरागयोः ।
ग्रहाणामुग्रचेष्टानां नित्यं शान्तिं समाचरेत् ॥

(१) प्रपा. ६८; विपा. ५३५ चतुर्थपादे (कुर्याद्वा च त्रिजन्मसु); संग. १०५ विपावत्; संदी. ७२ चतुर्थपादे (कुर्याद्वाऽथ त्रिजन्मसु).

(२) प्रपा. ६८; विपा. ५३५ नां नित्यं (नामेतां); संग. १०५ विपावत्; संदी. ७२ विपावत्.

[1]नित्योऽयं ग्रहयज्ञः स्यान्नैमित्तिक इतः परम् ।
गर्भाधानादिसंस्कारकर्मस्वपि विशेषतः ॥

[2]कार्यारम्भेषु सर्वेषु नववेश्मप्रवेशने ।
आरोग्यस्नानसमये संक्रान्तौ रोगसंभवे ॥

[3]अभिचारे च यः कुर्याद्ग्रहपूजां विधानतः ।
सोऽभीष्टं फलमाप्नोति निर्विघ्नेन न संशयः ॥

अत्र कार्यारम्भेषु इत्यादौ सर्वत्र निमित्तसप्तमी ज्ञेया ।

¶ विपा. ५३५

मण्डपः, ग्रहस्थानानि, स्थण्डिल–कुण्डाकाराश्च

[4]मनोरमे शुचौ देशे होमशालामलङ्कृताम् ।
कृत्वा तु संवृतां प्राज्ञो ग्रहस्थानं प्रकल्पयेत् ॥

तन्मध्ये भास्करस्थानं भवेत्पूर्वोत्तरे बुधः ।
पूर्वस्मिन्भार्गवस्थानं सोमो दक्षिणपूर्वके ॥

[5]दक्षिणस्यां कुजस्थानं राहोर्दक्षिणपश्चिमे ।
पश्चिमे तु शनिस्थानं केतोरुत्तरपश्चिमे ।
उत्तरस्मिन् गुरोः स्थानमेवं च स्थण्डिलं भवेत् ॥

स्थण्डिलमग्न्यर्थम् । ‡ शाम. १२

[6]भास्करस्य तु वृत्तं स्याच्चन्द्रस्य चतुरस्रकम् ।
कुजस्य तु त्रिकोणं स्याद्बाणाकारं बुधस्य तु ॥

[1]गुरोर्दीर्घचतुष्कोणं पञ्चकोणं सितस्य तु ।
चापाकारं शने राहोः शूर्पं केतोर्ध्वजाकृति ॥

'भास्करस्य तु वृत्तं स्यात्' इत्यादेः स्थानेऽन्वयः ।

कृभ. १०९०

वेदिः देवतावाहनं च

[2]तत्पुरस्तात्तु वेदिः स्यात्सुराणां स्थापनाय च ।
प्रादेशां तु चतुर्दिक्षु पञ्चाङ्गुलसमुन्नताम् ।
तस्यामावाहयेद्देवान्नाम्ना व्याहृतिभिः क्रमात् ॥

अग्निप्रणयनं होमः अग्निसमारोपश्च

[3]एकस्थानप्रणीतेऽग्नौ सर्वतः परिभाविते ।
होमं कुर्युर्द्विजाः सर्वे कुण्डे कुण्डे यथोदितम् ॥

[4]नवधा विभजेदग्निं श्रौतकर्मविधानतः ।
ऋत्विजश्च यथायोगं कुण्डेषु ब्राह्मणाः पृथक् ॥

[5]ततः स्रुवेण जुहुयात्सूर्यपावकरुद्रकान् ।
ऋत्विजो जुहुयुः सर्वे स्रुवेणैव पृथक्पृथक् ॥

[6]अष्टौ तु शकलान् गृह्य समारोपणमग्निषु ।
प्रधानाग्नौ निधायेमानित्थं होमं समाचरेत् ॥

(१) अस्यार्थः– कुण्डमध्ये विधिवदग्निं प्रतिष्ठाप्य श्रौतविहितविहरणविधिना प्रधानायतनाग्निं विभज्याष्टकुण्डेषु प्रणीय नवाप्याचार्या आज्यभागान्तं कृत्वा प्रागुक्तार्कादिसमिद्भिर्गुडान्नादिहविर्भिराज्येन च यथाक्रमं हुत्वा व्याहृतिभिस्तिलान् हुत्वा पूर्वोक्तवद्धोमशेषं समाप्य पूर्णाहुतिं हुत्वा होमपरिसमाप्तावष्टसमिद्भिः समारोप्य प्रधानाग्नौ निधायाभिषेकं कुर्यादिति । प्रपा. ७९

---

¶ संग. विपावत् ।

‡ कृभ. शामवत् ।

(१) विपा. ५३५ ; संग. १०५ ; संदी. ७२ परम् (परः).

(२) विपा. ५३५ ; संग. १०५, १०६ स्नान (ज्ञान) ; संदी. ७२.

(३) विपा. ५३५ ; संग. १०६ अभिचारे (अतिचारे) भीष्टं फल (भीष्टफल) (निर्विघ्नेन न संशयः ०) ; संदी. ७२ भीष्टं फल (भीष्टफल) (निर्विघ्नेन न संशयः ०).

(४) प्रपा. ७८ ; शाम. १२ ; कृभ. १०८९.

(५) प्रपा. ७८ मेवं च (मेव्वेव) ; शाम. १२ पश्चिमे तु शनि (शनेस्तु पश्चिमे) उत्तरस्मिन् (उत्तरस्यां) ; कृभ. १०८९ शामवत् .

(६) प्रपा. ७८ ; शाम. १२ तु वृत्तं (च वृत्तं) ; कृभ. १०९०.

(१) प्रपा. ७८; शाम. १२ ; कृभ. १०९० शूर्पं (सूर्यं).

(२) प्रपा. ७८.

(३) कृभ. १०९०.

(४) प्रपा. ७८–७९ ; शाम. १२ ; कृभ. १०९० योगं (योग्यं).

(५) प्रपा. ७९ ; शाम. १२ ततः (अथ) रुद्रकान् (दारुकान्) णैव (णैवं) ; कृभ. १०९० ततः (अथ).

(६) प्रपा. ७९ शकलान् (कलशान्) निधायेमानित्थं (विधायैतन्निल) ; शाम. १२ ; कृभ. १०९० तु (च) नाग्नौ नि (नेऽग्नौ वि) समाचरेत् (चरेदिति).

(२) अत्र 'एवं च स्थण्डिलं भवेत्' इत्यनेन स्थण्डिलानां कुण्डानां च सम आकारस्तत्तद्दिक्षु निवेशश्चोक्तः। 'ब्राह्मणाः पृथक्' इत्यनेन नव आचार्या ब्राह्मणाश्च नवेत्युक्तम्। † शाम. १२

(३) आचार्यः मध्यकुण्डेऽग्निं संस्थापयेत्। ततोऽष्टावाचार्या अष्टकुण्डेष्वग्निं प्रणयेयुः। ततो नवाऽऽचार्या आज्यभागान्तेऽर्कादिसमिद्भिर्गुडोदनादिहविर्भिराज्येन च ग्रहादिमन्त्रैर्हुत्वा व्यस्तसमस्ताभिर्व्याहृतिभिस्तिलान् हुत्वा स्विष्टकृदादिहोमान्ते पूर्णाहुतीर्जुहुयुः। ततोऽष्टाऽऽचार्याः प्रधानाग्नौ समिधा स्वस्वाग्निसमारोपणं कुर्युः। इत्यग्निस्थापनानन्तरमेवाऽऽचार्यकुण्डादग्निप्रणयनमुक्तम्। परे तु–तत्राऽऽचार्यकुण्डे अग्निस्थापनाद्याज्यभागान्तं कृत्वा अन्यकुण्डेष्वग्निप्रणयनं कार्यम्, तेनाऽऽज्यभागान्तं पूर्वाङ्गं स्विष्टकृदाद्युत्तराङ्गं च तन्त्रेण भवतीति वदन्ति। $ कृभ. १०९०–१०९१

[१]पुरस्तन्त्रं विधायाऽऽज्यसंस्कारान्तं यथाविधि।
पश्चादन्नं गृहे पक्वं पृथक्कृत्यान्यभाजने॥

तत्र त्वग्नावधिश्रित्य तत्रत्यमभिघार्य च।
उत्तरत्रावतीर्याग्नेः पुनरप्यभिघार्य च।
प्रत्यगग्नेर्निधायाऽऽज्यभाजनस्य समीपतः॥

[२]यत्तन्त्रमाज्यभागान्तमुक्तमुल्लेखनादिकम्।
अविस्तरेण तत्कृत्वा सर्वेषां होममाचरेत्॥

ग्रहाणामोदनाः

गुडौदनं पायसान्नं संयावं क्षीरषाष्टिकम्।
दध्योदनं घृतान्नं च कृसरं मांसचित्रकम्।
इत्येतानि हवींषि स्युः समित्संख्यासमाहुतीः॥

संयावो नाम यवागूः। क्षीरषाष्टिकं क्षीरमिश्रषष्टिकान्नम्। प्रपा. ७३

समिधः तत्प्रतिनिधिश्च

अर्कः पलाशः खदिरोऽप्यपामार्गोऽथ पिप्पलः।
उदुम्बरः शमी दूर्वा कुशाश्च समिधः स्मृताः।
एषामभावे शुद्धान्नं पालाशी वा समिद्भवेत्॥

[१]जुहुयात्समिदन्नाज्यैराभिर्ऋग्भिर्यथाक्रमम्॥

ग्रह–देवतानां मन्त्राः

[२]तथाऽऽकृष्णेन रजसा अग्निं दूतं वृणीमहे।
त्र्यम्बकमित्येताभिः (तु) सूर्यवह्नीश्वरान् पृथक्॥

आ प्यायस्व समेतु ते अप्सु मे सोमो अब्रवीत्।
गौरीर्मिमायेत्येताभिः सोमाम्बूमाः पृथक्पृथक्॥

अग्निर्मूर्धा दिवः ककुत्स्योना पृथिवि भवेत्तथा।
*क्षेत्रस्य पतिनेत्याभिर्भौममभूमिगुहान् क्रमात्॥

उद्बुध्यध्वमिदं विष्णुः सहस्रशीर्षा पुरुषः।
बुधं विष्णुं पुनर्विष्णुं जुहुयात्तिसृभिः क्रमात्॥

बृहस्पते अति यदर्य इन्द्र मरुत्व इहेति च।
ब्रह्म जज्ञानमित्यृग्भिर्गुरुशक्रचतुर्मुखान्॥

शुक्रं ते अन्यद्यजतमिन्द्राणीमासु नारिषु।
इन्द्रं वो विश्वतस्परि शुक्रेन्द्राणीशतक्रतून्॥

शमग्निरग्निभिरिति प्रजापते न त्वदिति।
यमाय सोममित्यृग्भिः शनिप्रजापतियमान्॥

कया नश्चित्र आ भुवदाऽयं गौः पृश्निरक्रमीत्।
परं मृत्यो अनु परे राहुसर्पयमान् क्रमात्॥

† शेषं प्रपानुवादः। 'अग्निम्' इत्यत्र 'स्मार्ताग्निम्' इति, 'व्याहृतिभिः' इत्यत्र च 'व्यस्तसमस्तव्याहृतिभिः' इति विशेषः।

$ शेषं शामगतम्।

(१) प्रपा. ८१. (२) प्रपा. ७३.

*क्षेत्रपाललिङ्गकोऽयं मन्त्रः सर्वत्र क्षेत्रपालार्चने विनियुक्तः, न कुत्रापि गुहार्चने। प्रयोगपारिजातीयप्रयोगे 'कुमारं माता०' इति मन्त्रो गुहार्चने विनियुक्तः, प्रयोगरत्नादौ तु 'कुमारश्चित्०' इति। ततोऽत्राशुद्धिसंभवो लक्ष्यते।

(१) प्रपा. ७३; शाम. १८ ज्यैराभि (ज्येनाऽऽभि) आश्वलायनः.

(२) प्रपा. ७३–७४.

केतुं कृण्वन्नकेतवे ब्रह्म जज्ञानमित्यृचा ।
स चित्र चित्रमित्याभिः केतुं ब्रह्माणमेव च ।
चित्रगुप्तं च तिसृभिरेषां होमो विधीयते ॥

सूर्य-पावक-रुद्राणां होममन्त्राः

[1]अथ स्रुवेण जुहुयात्सूर्यपावकरुद्रकान् ।
सूर्यो नो पञ्चकं(? नः पञ्चर्चं) सूक्तमुदु त्यं जातवेदसम् ॥
[2]नमो मित्रस्य वरुणस्य चित्रं देवानामित्यपि ।
उद्वेति सुभगः पञ्च आभिर्ऋग्भिर्घृताहुतीः ॥
[3]त्वमग्ने प्रथमं(? प्रथमः) सूक्तमित्यष्टादशकर्चकम् ।
त्वमग्ने द्युभिः षोडशभिर्घृतेन जुहुयात्ततः ॥

(१) प्रपा. ७४ ; संकौ. १३९.
(२) प्रपा. ७४ ; संकौ. १३९ पञ्च आ (पञ्चर्चा).
(३) प्रपा. ७४ द्वितीयपादे (यथावच्च दशर्चकम्) ; संकौ. १३९.

[1]अथ रुद्राय जुहुयात्कद्रुद्राय षडाहुतीः ।
इमा रुद्राय च तथा सूक्तेन च ततः परम् ।
आ ते पितर्मरुतामिति सूक्तेन च घृताहुतीः ॥

यजमानाभिषेकः, बलिदानम्, अग्न्यादिध्यानम्, पुष्पाञ्जलिदानम्

[2]ततस्तस्याभिषिक्तस्य रक्षार्थं बलिमुत्क्षिपेत् ।
दिग्विदिक्षु विचित्रान्नैर्दीपैर्नीराजयेत्ततः ॥

शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ।
ततो मण्टपमागत्य ध्यायेदग्निं ग्रहान् सुरान् ।
प्रत्येकं प्रतिमन्त्रैश्च दद्यात्पुष्पाञ्जलिं ततः ॥

(१) प्रपा. ७४ ; संकौ. १३९.
(२) प्रपा. ७८.

# मण्डपनिर्माणविधिः

## वसिष्ठः

मण्डपस्य मानं स्वरूपं च

[1]षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् ।
मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् ॥

[2]अष्टहस्तं तु रचयेन्मण्डपं वा द्विषट्करम् ॥

( १ ) तथा च यथासंभवं षोडशहस्तं द्वादशहस्तमष्टहस्तं वा विवाहमण्डपं कृत्वा स्तम्भतोरणादिभिरलङ्कृत्य मध्ये चतुर्हस्तकां वेदिकां कुर्यादित्यर्थः ।

विपा. १०

( २ ) तत्र मण्डपे । द्विषट्करो द्वादशकरः । एतस्य मण्डपस्योपनयनविवाहसंस्काराङ्गत्वात् तयोश्च सूत्रोक्तत्वात् सूत्रोक्तसंस्काराङ्गमण्डपे सूत्रोक्तचतुर्विंशाङ्गुलात्मक एवारत्निर्ग्राह्यः ।

संर. १८४

( ३ ) द्विगुणिताः षट् करा यस्य तम्, द्वादशहस्तमित्यर्थः । उत्तमः षोडशहस्तः, मध्यमो द्वादशहस्तः, अधमोऽष्टहस्तः । अयं च वैकल्पिको मण्डपो गृहमानत एव कार्यो न तु स्वेच्छया, 'मङ्गलेषु च सर्वेषु मण्डपो गृहमानतः । कार्यः षोडशहस्तो वा द्विषड्ढस्तो दशावधिः ॥' इति सप्तर्षिमतस्मरणात् ।

संदी. २५ ( भागः २ )

## अनिर्दिष्टकर्तृकवचनम्

मण्डपस्य स्थानं मानं च

[1]मण्डपः सद्मनो द्वारि कर्तव्यो गृहमानतः ॥

## विवाहपटले ( सप्तर्षिमते )

मण्डपमानम्

[2]मङ्गलेषु च सर्वेषु मण्डपो गृहमानतः ।
कार्यः षोडशहस्तो वा द्विषड्ढस्तो दशावधिः ॥

गृहमानत इति महति गृहे महान्मण्डपः, न्यूने न्यून इत्यर्थः । दशावधिरिति न्यूनतायां दशसंख्यावधिरित्यर्थः । अतो वसिष्ठोक्तोऽष्टहस्तपक्षोऽत्यन्तापद्विषयः ।

$ संकौ. २०८

## ज्योतिष्प्रकाशे

मानतो मण्डपस्य उत्तममध्यमाधमत्वम्

[3]चतुर्थो मण्डपः श्रेष्ठः सप्तमः पञ्चमस्तथा ।
नवमैकादशौ श्रेष्ठौ नेष्टौ षष्ठतृतीयकौ ॥

---

( १ ) गभा. ६५ ; प्रर. १०१ ; संप्र. ८१७ ; सिन्धु. ११२६ वेदिं ( वेदीं ) ; विपा. १० ( भागः २ ) ( षोडशारत्निकं कुर्यान्मण्डपं वा द्विषट्करम् । यद्वाऽष्टहस्तं रचयेच्चतुर्द्वारोपशोभितम् । मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् ॥ ) ; संकौ. २०८ ; प्रका. ३०७ ; संग. २२१–२२२ सिन्धुवत् ; संव. १४७ ; संर. १८४, ५२४ ; संदी. २५ ( भागः २ ) सिन्धुवत्.

( २ ) गभा. ६५ ; प्रर. १०१ ; संप्र. ८१७ ; सिन्धु. ११२६ द्विषट् ( त्रिषट् ) ; संकौ. २०८ ; प्रका. ३०७ ; संग. २२२ ; संव. १४७ ; संर. १८४, ५२४ ; संदी. २५ ( भागः २ ).

$ संर. संकौवत् ।

( १ ) संर. १८४.

( २ ) गभा. ६५ मानतः ( वामतः ) द्विषड्ढस्तो ( द्व्यूनहस्तो ) सप्तर्षिमते ; संप्र. ८१७ द्विषड्ढस्तो ( द्व्यूनहस्तो ) ; सिन्धु. ११२७ वधिः ( वधि ) सप्तर्षिमते ; संकौ. २०८ (=) द्विषड्ढस्तो ( न्यूनहस्तो ) ; संव. १४७ (=) संकौवत् ; संर. १८४ (=) द्विषड्ढस्तो ( न्यूनस्तु स्यात् ) : ५२४ (=) द्विषड्ढस्तो ( न्यूनहस्तो ) ; संदी. २५ ( भागः २ ) सप्तर्षिमतस्मरणम्.

( ३ ) सिन्धु. ११२८.

## रेणुकारिका:

मण्डपस्य मानं स्वरूपं च

[1]षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् ॥
मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् ।
अष्टहस्तो भवेद्वाऽपि मण्डपो वा द्विषट्करः ॥

(१) रेका. ९१–९२ पृ. ५४.

चतुर्थ इति । अष्टहस्तमारभ्य विंशतिहस्तान्ताः सप्त, पञ्चविंशतिहस्तः, पञ्चाशद्धस्तः, शतहस्तः, सहस्रहस्तश्चेत्येकादश मण्डपाः । चतुर्थः चतुर्दशहस्तः । आद्यौ द्वौ अष्टमश्च न विहिता न निषिद्धाः । कृभ. ११२८

# वेदीनिर्माणविधिः

## वसिष्ठः

वेदीलक्षणम्

[1]तुल्यां समन्ताद्गृहवामभागे
हस्तोच्छ्रितामुक्तशुभांशयुक्ताम् ।
समण्डपां प्राक्प्रवणामुदग्वा
सोपानरम्यां निबिडां ककुप्सु ॥
[2]विचित्रितामङ्कुरचित्रकुम्भ-
वितानानाविधतोरणाद्यैः ।
भृङ्गारपुष्पाङ्गणविप्रपीठ-
पण्याङ्गनानृत्यसुगीतवाद्यैः ॥
ताम्बूलपुष्पाक्षतगन्धवस्त्र-
माङ्गल्यसूत्रैः फलपूर्णपात्रैः ।
धान्याकहारिद्रगुडैः सलाजै-
र्दीपैरनेकैर्नयनाभिरामाम् ॥
सवेणुवीणामधुरस्वरेण
मनोरमां मङ्गलवेदघोषैः ।
प्रदक्षिणप्रक्रमणाद्युपेतां
तामारुरोहे( ? रुरुक्षे )न्मिथुनं च
वेदीम् ॥

## नारदः

वेद्याः स्थानं लक्षणं च

[3]हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः ।
स्तम्भैश्चतुर्भिः सुश्लक्ष्णां वामभागे तु सद्मनि ॥

( १ ) वसं. ३२।१४१ ; विसौ. ५८ ; संप्र. ८१९.

( २ ) वसं. ३२।१४२–१४४ ; विसौ. ५८ गन्धवस्त्र ( वस्त्रगन्ध ) धान्याक ( मरीच ) सलाजैः ( सजीरैः ) सवेणु ( सुवेणु ) तामारुरोहेन्मिथुनं च वेदीम् ( तामारुहेन्मङ्गलसंविधानैः । ).

( ३ ) ज्योना. २७।९६ पृ. ५७ सुश्लक्ष्णां ( श्लक्ष्णैर्वा ) तु सद्मनि ( स्वसद्मनः ) ; प्रपा. ३४८ ; गभा. ६५ चतुरस्रां ( चतुर्हस्तां ) सद्मनि ( सद्मनः ) ; प्रर. १०१ सद्मनि ( सद्मनः ) ; संप्र. ८१८ ; संम. ७२ सुश्लक्ष्णां ( सुश्लक्ष्णैः ) तु सद्मनि ( स्वसद्मनः ) ; सिन्धु. ११२७ ; विपा. ९ ( भागः २ ) ; संकौ. २०८ ; ज्योनि. १५७ ; संमवत् ; प्रका. ३०७ ; संग. २२२ संमवत् ; संव. १४७ संर. ५२४ भागे तु ( भागे च ) ; संदी. २५ ( भागः २ ) प्ररवत्.

[1]समां तथा चतुर्दिक्षु सोपानैरतिशोभिताम् ।
प्रागुदक्प्रवणां रम्भास्तम्भहंसशुकादिभिः ॥
[2]विचित्रितां चित्रकुम्भैर्विविधैस्तोरणाङ्कुरैः ।
भृङ्गारपुष्पनिकरैर्वर्णकैः समलङ्कृताम् ॥

( १ ) ज्योना. २७।९७ पृ. ५७ समां तथा (समण्डलं) शोभिताम् ( शोभनम् ) ; प्रपा. ३४८ समां तथा ( समण्टपां ) ; गभा. ६५ ; प्रर. १०१ नैरति ( नैरुप ) ; संप्र. ८१८ ; सिन्धु. ११२७ णां रम्भास्तम्भ ( णारम्भां स्तम्भैः ) ; विपा. ९ ( भागः २ ) ; संकौ. २०८ तथा ( चैव ) स्तम्भ ( स्तम्भैः ) ; ज्योनि. १५७ समां तथा ( समण्डपां ) ; प्रका. ३०७ ; संव. १४७ संकौवत् ; संर. ५२४ तथा ( चैव ) स्तम्भहंस ( स्तम्भैर्हस्ति ) ; संदी. २५ ( भागः २ ).

( २ ) ज्योना. २७।९८ पृ. ५८ निकरैः ( निचयैः ) ; प्रपा. ३४८ पूर्वार्धे ( विचित्रेणाङ्कितैः कुम्भैर्विहितैस्तोरणाङ्कितैः । ) ; प्रर. १०१ पूर्वार्धे ( विचित्रामङ्कितां कुम्भैर्विहितैस्तोरणाङ्कुरैः । ) भृङ्गार ( शृङ्गार ) ; संप्र. ८१८ पूर्वार्धे (विचित्रेणाङ्कितां कुम्भैर्विहितैस्तोरणाङ्कुरैः । ) ; संम. ७२ पू. ; विपा. ९ ( भागः २ ) पूर्वार्धे ( विचित्रामङ्कितां कुम्भैर्निहितैस्तोरणाङ्कुरैः । ) भृङ्गार ( शृङ्गार) ; संकौ. २०८ पूर्वार्धे (विचित्रेणाङ्कितैः कुम्भैर्विहितैस्तोरणाङ्कुरैः । ) ; ज्योनि. १५७ भृङ्गार ( शृङ्गार ) ; प्रका. ३०७ संप्रवत् ; संव. १४७ भृङ्गार ( शृङ्गार ) शेषं संकौवत् ; संर. ५२४ पूर्वार्धे ( विचित्रेणाङ्कितैः कुम्भैर्विविधैस्तोरणाङ्कुरैः । ) भृङ्गार ( शृङ्गार ).

**[१]विप्राशीर्वचनैः पुण्यस्त्रीभिर्दीपैर्मनोरमाम् ।
वादित्रनृत्यगीताद्यैर्हृदयानन्दिनीं शुभाम् ॥
[२]एवंविधामारुरुक्षेन्मिथुनं साग्निवेदिकाम् ॥**

( १ ) हस्तोऽत्र वध्वाः । सोपानकरणं पश्चिमभागे उपरि चतुर्दिक्षु वा अधो यथाचारम् । सोपानातिरेकेण चतुर्हस्ता चतुरस्रा शस्ता । प्रर. १०१

( २ ) साग्निवेदिकामिति दम्पत्योरारोहणात्पूर्वं होमोपयोगिनामग्न्यादीनामुपकल्पनं कार्यमित्याशयः । संकौ. २०८

(३) प्रागुदक्प्रवणा प्रागुदङ्निम्ना । सर्वेषां तृतीयान्तानां पदानां समलङ्कृतामित्यनेनान्वयः । धातुमयैः काष्ठमयैर्मार्तिकैर्वा हस्तिशुकादिभिः समन्तात्स्थापितैरलङ्कृतामित्यर्थः । विचित्रेण वर्णेनाङ्किताश्चिह्निताः कुम्भास्तैरलङ्कृतामित्यर्थः । शृङ्गारसंपादकानि मालतीप्रभृतिसुगन्धिपुष्पाणि, तेषां निकराः समूहाः, तैः शोभिताम् । वर्णकैर्नानावर्णैः शोभिताम् । पुण्यैर्विप्राशीर्वचनैरित्यनेन दम्पत्योर्वेद्यारोहणकाले विप्रैराशिषो देया इति द्योत्यते । त्रिभिर्दीपैर्वेद्याः पुरोभागे स्थापितैर्मनोरमाम् । वादित्रगीतनृत्याद्यैर्हृदयानन्ददायिनीमित्यनेन दम्पत्योर्वेद्यारोहणकाले वादित्रगीतनृत्यादिकं कारणीयमिति सूच्यते । साग्निवेदिकामित्यनेन दम्पत्योर्वेद्यारोहणात्पूर्वं होमोपयोगिनामग्न्यादीनामुपकल्पनं वेद्यां कार्यमिति सूच्यते । एतच्च साग्नीत्यस्य वेदिकाया विशेषणत्वपक्षे । मिथुनस्य साग्नीति विशेषणं भिन्नं पदं वेदिकापदात् । एतस्मिन् पक्षे आरोहणसमये अग्नेर्वेदिकायामुपकल्पनं ज्ञेयम् । एवंविधामुक्तविशेषणविशिष्टां वेदिं मिथुनमारुरुक्षेत्, वध्वा सहैव वर आरोहणं कुर्यादित्यर्थः । संर. ५२४–५२५

( १.) ज्योना. २७।९९ पृ. ५८ ; प्रपा. ३४८ नृत्य ( नृत्त ) ; प्रर. १०१ पुण्य ( पुण्यैः ) ; संप्र. ८१८ ; विपा. ९ ( भागः २ ) पुण्य ( पुण्यैः ) मनोरमाम् ( मनोहराम् ) ; संकौ. २०८ पुण्य ( पुण्यैः ) नृत्यगीताद्यैः ( गीतनृत्याद्यैः ) ; ज्योनि. १५७ ; प्रका. ३०७ प्ररवत् ; संव. १४७ नृत्यगीताद्यैः ( गीतनृत्याद्यैः ) ; संर. ५२४ पुण्यस्त्रीभिः ( पुण्यैस्त्रिभिः ) शेषं संववत् .

( २ ) ज्योना. २७।१०० पृ. ५८ ( एवंविधां तामारोहेन्मिथुनं साग्निवेदकम् ॥ ) ; प्रपा. ३४८ ; गभा. ६५ ; प्रर. १०१ ; संप्र. ८१९ ; संम. ७२ मारुरुक्षे ( मारुरोहे ) वेदिकाम् ( वेदिकम् ) ; सिन्धु. ११२७ ; विपा. ९ ( भागः २ ) ; संकौ. २०८ ; ज्योनि. १५७ विधामारुरुक्षेत् ( विधां तामारोहेत् ) ; प्रका. ३०७ ; संव. १४७ संर. ५२४ ; संदी. २५ ( भागः २ ) साग्निवेदिकाम् ( साग्नि वेदिकाम् ).

## अनिर्दिष्टकर्तृकवचनानि

वेदीप्रकाराः तद्व्यवस्था च, वेद्याः स्थानं लक्षणं च, कन्यावयसा वेदीमानस्य संनियोगः

**[१]वेदी चतुर्विधा प्रोक्ता चतुरस्रा च पद्मिनी ।
श्रीधरी सर्वतोभद्रा दीक्षासु स्थापनादिषु ॥
चतुरस्रा चतुष्कोणा वेदी सर्वफलप्रदा ।
तडागादिप्रतिष्ठायां पद्मिनी पद्मसंनिभा ॥
राज्ञां स्यात्सर्वतोभद्रा चतुर्भद्राऽभिषेचने ।
विवाहे श्रीधरी वेदी विंशत्यस्रसमन्विता ।
दर्पणोदरसंकाशा निम्नोन्नतविवर्जिता ॥
[२]कन्याहस्तैः पञ्चभिः सप्तभिर्वा
कार्या वेदिः कूर्मपृष्ठोन्नतांसा ।
हर्म्ये रम्ये निर्गमाद्वामभागे
जायापत्योराशिषैः स्तम्भयुक्ता ॥**

( १ ) कूभ. ११४३ कुण्डसिद्धिटीका इत्युक्तम् .

( २ ) धप्र. ४६ कार्या वेदिः ......... न्नतांसा ( वेदीं कुर्यात्कूर्मपृष्ठोच्छ्रिताङ्गीम् ) हर्म्ये रम्ये ( रम्ये हर्म्ये ) जाया .........युक्ता ( जायापत्योराशिषो वाचयित्वा ) ; संप्र. ८१९ पञ्चभिः सप्तभिर्वा ( सप्तभिः पञ्चभिर्वा ) कार्या वेदिः ( वेदी कार्या ) पू. ; संकौ. २०८ पञ्चभिः सप्तभिर्वा ( सप्तभिः पञ्चभिर्वा ) न्नतांसा ( न्नताग्रा ) कृष्णभट्टीये पक्षान्तरम् ; संग. २२२ कार्या वेदिः............तांसा ( वेदीं कुर्यात् कूर्मपृष्ठोन्नताङ्गीम् ) उत्तरार्धं धप्रवत्, धर्मप्रवृत्तौ ; कूभ. ११४३ ( कन्याहस्तैः सप्तभिः पञ्चभिर्वा कार्या वेदी

आशिषैरिति छान्दसम् । एतेन वरप्रमाणस्यात्र कैश्चिद्ग्राह्यतोक्ता सा निरस्ता द्रष्टव्या ।

संर. ५२४

[1]केचिदूचुर्ध्वजायेन रचयेद्धरिणाऽथवा ।
करोच्छ्रितां सप्तहस्तदीर्घा वा पञ्चविस्तृताम् ॥
[2]सप्तवर्षा यदा कन्या पञ्चहस्ता च वेदिका ।
पञ्चवर्षा यदा कन्या सप्तहस्ता च वेदिका ॥
वामे गृहस्य वेदी स्याद्विवाहे चोपनायने ।
सर्वेषामेव शाखीनां विना वाजसनेयिनाम् ॥
[3]सद्मनो वामभागे तु वेदी कार्या चतुष्करा ॥

## वराहमिहिरः

वेद्याः स्थानं लक्षणं च

[4]विस्तीर्णता हस्तचतुष्टयेन
हस्तोच्छ्रितां मन्दिरवामभागे ।
स्तम्भैश्चतुर्भिः कृतनिश्चलाङ्गीं
वेदिं विवाहे प्रवदन्ति तज्ज्ञाः ॥

हस्तपरिमाणं तु कन्याया एव, 'कन्याहस्तैः सप्तभिः पञ्चभिर्वा वेदी कार्या कूर्मपृष्ठोन्नतांसा ।' इति ग्रन्थान्तरोक्तेः ।

संप्र. ८१९

## विवाहवृन्दावनम्

वेदीस्थानम्

[5]वेदिकां विरचयेत्तथा यथा
स्यादियं प्रविशतश्च दक्षिणे ॥

विवाहार्थं वेदिकां तथा विरचयेत् यथेयं गृहं प्रविशतः पुरुषस्य दक्षिणे भागे भवेत् ।

लक्ष्मी.

## विवाहपटले (सप्तर्षिमते)

वेद्याः स्थानं लक्षणं च

[1]स्तम्भैश्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठिता ॥

'स्तम्भैश्चतुर्भिः' इत्यत्र युक्तेति शेषः । इदं च वेदिविशेषणम् । 'वेदिर्मध्ये प्रतिष्ठिता' इति वचनाद्वेद्यनुरोधेनैव मण्डपः कार्यः, न तु पृथक् । अन्यथा 'सद्मनो वामभागे तु वेदी कार्या चतुष्करा ।' इति 'वेदिर्मध्ये प्रतिष्ठिता' इति वचनयोर्विरोधः स्यात् । 'मण्डपः सद्मनो द्वारि कर्तव्यो गृहमानतः ।' इति वचनानुरोधेन मण्डपो यदि क्रियते तदा वेदेर्मण्डपबहिर्भाव एवेति द्रष्टव्यम् ।

संर. १८४

[2]द्वारादिदेहलीविद्धा कूपवृक्षव्यधा तथा ।
न कार्या वेदिका तज्ज्ञैः कार्या मङ्गलकर्मणि ॥

## ज्योतिष्प्रकाशः

वेदीलक्षणम्

[3]हस्तोच्छ्रिता चतुर्हस्ता चतुरस्रा समन्ततः ।
स्तम्भैश्चतुर्भिः संयुक्ता विवाहे वेदिका शुभा ॥

## मुहूर्तचिन्तामणिः

वेद्याः स्थानं लक्षणं च

[4]हस्तोच्छ्राया वेदहस्तैः समन्तात्
तुल्या वेदिः सद्मनो वामभागे ॥

हस्तोच्छ्रायेति । सद्मनो गृहस्य वामभागे हस्तोच्छ्राया एकहस्तमितोच्चा, समन्तात् सर्वतः चतुर्भिर्हस्तैस्तुल्या समाना, तादृशी वेदिः विवाहादिमङ्गलकृत्ये स्यात् । शोभाकारिस्तम्भसोपानादियुक्ता चेत्यनुक्तमपि ध्येयम् ।

पीटी.

---

श्रीधरी नित्यमेव ।) पू.; संर. १९९ न्नतांसा (न्नता सा) पू.: ५२४ न्नतांसा (न्नता सा)।

(१) ज्योनि. १५७. (२) संग. २२२.

(३) संर. १८४.

(४) विसौ. ५८-५९; धप्र. ४५ विस्तीर्णता (विस्तारिता) कृतनिश्चलाङ्गीं (परिनिर्मिताङ्गीं) तज्ज्ञाः (सन्तः) ज्योतिष्प्रकाशे; संप्र. ८१९.

(५) विवृ. १४।३१; विसौ. ५८; संप्र. ८१८ तथा यथा (यथा तथा) शतश्च (शतस्तु); संर. ५२५ तथा यथा (यथा तथा) तश्च दक्षिणे (तः प्रदक्षिणा).

(१) गभा. ६५ सप्तर्षिमते; संप्र. ८१७; सिन्धु. ११२७ सप्तर्षिमते; संकौ. २०८ (=); संव. १४७ (=); संर. १८४, ५२४ (=) वेदी म (वेदिर्म).

(२) संप्र. ८१८ 'कार्या मङ्गलकर्मणि' इत्यत्र 'शुभा मङ्गलकर्मसु' इति पीयूषधारायां पाठः

(३) धप्र. ४५. (४) मुचि. ६।१७.

## रेणुकारिकाः

वेद्याः स्थानं लक्षणं वर्णभेदेन मानव्यवस्था च

[1]पृथुत्वदैर्घ्याब्धिकरा विधेया
हस्तोच्छ्रया पक्वमृदिष्टकाभिः ।
बद्ध्वा गृहान्निर्गमदक्षिणेन
विवाहवेदीं सिकतोपकीर्णाम् ॥

आद्या वेदी ब्राह्मणस्योपदिष्टा
द्वाभ्यामूना क्षत्रियस्याङ्गुलिभ्याम् ।
वैश्ये शूद्रे त्र्यब्धिहीना हि सैव
वेदीमानं चैव शिष्टेन चोक्तम् ॥

(१) रेका. ९३–९४ पृ. ५४.

# ‡गणपतिपूजनादिक्रमः संकल्पविचारश्च

## कात्यायनः

मातृकापूजनायुष्यजपोत्तरं नान्दीश्राद्धस्य कर्तव्यता

**अनिष्ट्वा तु पितॄञ् श्राद्धे न कुर्यात् कर्म वैदिकम् ।**
**तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥**
**आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।**
**षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥**

## शातातपः

नान्दीश्राद्धात्पूर्वं मातृकापूजनम्

**नानिष्ट्वा तु पितॄञ् श्राद्धे कर्म वैदिकमाचरेत् ।**
**तेभ्योऽपि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥**

नैतावता श्राद्धाङ्गं मातृपूजा, 'कर्मादिषु च सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥' इति कात्यायनेन साक्षात्कर्मान्वियोक्तेः । अत एव श्राद्धसंकल्पात् पृथगेवास्याः संकल्पः । स्मार्तकर्माङ्गेषु पृथक् संकल्पः आचारप्रमाणकः । श्रौते तु न तथा । संग. ७३

**अकृत्वा मातृयागं तु यः श्राद्धं परिवेषयेत् ।**
**तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥**

अत्र युगपत्प्राप्तयोर्मातृयागश्राद्धयोर्मातृयागस्य प्राक्कर्तव्यता दर्शिता, श्राद्धेन सहाव्यभिचारश्च, न तु श्राद्धाङ्गता । व्यक्तमाह छन्दोगपरिशिष्टम्— 'कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥' इति । कर्मादिष्वित्यनेन मातृयागस्य कर्माङ्गता दर्शिता । अत्रापि शातातपवचनात् श्राद्धात्प्राक् मातृपूजेति । परिशिष्टे 'तदनु श्राद्धम्' इत्यनेन वसुधाराऽपि श्राद्धात्प्रागेव । एवं च मातृपूजावसुधारावृद्धिश्राद्धानां क्रमकर्तव्यत्वे सिद्धे युगपदुपस्थितत्वाभावात्केषांचिद्युगपत्संकल्पाचरणमनाचार एवेति प्रतीमः । न चैतेषु संकल्प एव नास्तीति वाच्यम्, अकृतमुख्यसंकल्पस्य पुंसोऽभ्युदयसाधनानामेषामुपरञ्जकाङ्गानां पृथक् संकल्पस्यावश्यानुष्ठेयत्वात्, 'वाचाऽभिलपति' इति हारीतेन नियमविधानात् । न च मुख्यसंकल्प एवाऽऽदौ कथं न क्रियते इति वाच्यम्, 'नानिष्ट्वा तु पितॄञ् श्राद्धे कर्म वैदिकमारभेत् ।' इति वचनात् । सगणाधिपा इत्यनेन विघ्नवारणाय ततोऽपि प्राक् गणेशपूजा कार्या, 'आदौ विनायकः पूज्यः' इति वक्ष्यमाणवचनाच्च । श्राकौ. ५०१–५०३

## भविष्यपुराणम्

नान्दीश्राद्धात्पूर्वं मातृकापूजनम्

**अकृत्वा मातृयज्ञं तु यः श्राद्धं परिवेषयेत् ।**
**तास्तस्य क्रोधसंपन्ना हिंसां कुर्वन्ति दारुणाम् ॥**

## कूर्मपुराणम्

नान्दीश्राद्धात्पूर्वं मातृकापूजनम्

**पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं बुधः ॥**

## चतुर्विंशतिमतम्

नान्दीश्राद्धात्पूर्वं देवकस्थापनं मातृकापूजनं च

**श्राद्ध आभ्युदये प्राप्ते देवतास्थापनं स्मृतम् ।**
**जातिधर्मकुलश्रेणीलोकानां वृद्धिकारकम् ॥**

(१) आभ्युदये अभ्युदयनिमित्ते श्राद्धे प्राप्ते कर्तव्यतया प्रस्तुते ततः प्रागेव मात्रादिपूजनार्थं देवतास्थापनं स्थण्डिलादौ मात्रादिगणाधिपान्तदेवतावाहनं स्मृतमिति प्रथमार्धस्यार्थः । * स्मृच. ५०२

(२) तत्र तावत् एतच्छ्राद्धं मण्डपदेवता—कुलदेवतास्थापनपूर्वकं मातृकापूजां विधाय वसोर्धाराश्च कृत्वा कार्यम् । तथा च चतुर्विंशतिमते—आभ्युदयिक इति । आभ्युदयिकश्राद्धे कर्तव्यतया प्रस्तुते सति ब्राह्मणक्षत्रिया-

‡ एतत्प्रकरणगतानां वचनानां स्थलनिर्देशादि पुण्याहवाचनादिप्रकरणेषु यथास्थानं द्रष्टव्यम् ।

* प्रपा. स्मृचानुवादः ।

द्विजातिविभागेन श्रुत्यादिषु समाम्नातं कुलवृद्धैश्चोपदिश्यमानं देवतानां प्रतिष्ठापनं कर्तव्यतया स्मृतम्। तद्धि लोकानां वृद्धेः मङ्गलपरम्परायाः कारणम्। अस्यानन्तरं मातृपूजनं कर्तव्यम्। चश्रा. १५३७

(३) वृद्धिश्राद्धे कर्तव्ये सति पूर्वं स्थण्डिलादौ मातृगणः संपूज्यः। विधा. २८ (आगः २)

**ब्राह्म्याद्याश्च तथा सप्त दुर्गाक्षेत्रगणाधिपान्।**
**वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान् पितॄन्॥**

वृद्ध्यादौ वृद्धिश्राद्धात् प्राक् (ब्राह्म्यादिदेवताः) षोडशभिरुपचारैः पूजयित्वा पश्चान्नान्दीमुखान् पितॄन् श्राद्धे पूजयेत्। स्मृच. ५०२

## वाचस्पतिमिश्रः

प्रधानसंकल्पः, पुण्याहवाचनम्, मातृकापूजनम्, नान्दीश्राद्धमित्यनुष्ठानक्रमः

**आदौ प्रधानसंकल्पस्ततः पुण्याहवाचनम्।**
**मातृपूजा ततः कार्या वृद्धिश्राद्धं ततः स्मृतम्॥**

यद्यपि 'आदौ प्रधान०' इति वाचस्पतिमिश्रोल्लेखात् मातृपूजनात् पूर्वमेव पुण्याहवाचनं प्रतीयते, तथाऽपि दानखण्डे मदनरत्ने सर्वासु ग्रहयज्ञमहारुद्रादिपद्धतिषु च आभ्युदयिकानन्तरमेवोक्तत्वादाभ्युदयिकानन्तरकरणमपि प्रामाणिकमेव। भट्टकुमारिलकारिकासु स्वस्तिवाचनप्रकरणे 'आदावन्ते प्रयोक्तव्यम्' इत्यत्राऽऽदिपदेन च वृद्धिश्राद्धानन्तरं कर्मादौ स्वस्तिवाचनमिति लभ्यते। तथा च प्रयोगपारिजाते– 'गर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि। वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम्॥' इति। कारिकाकारेण कुमारिलेन चौलादावपि तथैव प्रयोगः प्रदर्शितः– 'शुक्लपक्षे शुभर्क्षे तु कृत्वाऽऽभ्युदयिकं तथा। यथान्वयं वा केषांचिदुपनीत्या सहेष्यते। स्वस्त्यादि वाचयेत्पूर्वं वृद्धिपूर्तेषु कर्मसु॥' इति वदता। उपनयनादौ शौनकोऽपि – 'अपरेद्युः कृतस्नानभूषणः स्वस्तिवाचनम्।' इति वदन् तथैवाभिप्रैति। स्वस्तिवाचनप्रयोगेऽपि कुमारिलेन – 'प्रस्तुत्य देवतां यां तु' इत्यनया कारिकया प्रधानकर्मनिष्ठा स्वस्तिवाचनस्याव्यवधानस्यैव बोधिता। 'आचार्येणापि शास्त्रेऽस्मिन्मङ्गलार्थमुदीरितम्।' इति कुमारिलोक्तेश्चाऽऽभ्युदयिकानन्तर्यमेव पुण्याहवाचनस्य लभ्यते, मङ्गलस्य श्राद्धानन्तरमेव कर्तव्यत्वात्। तस्मादाभ्युदयिकानन्तरमेव पुण्याहवाचनमिति संप्रदायः¶। संदी. ६९–७०

## त्रिकाण्डमण्डनः

पुण्याहवाचननान्दीश्राद्धयोः पौर्वापर्यम्

**गर्भाधानादिसंस्कारेष्विष्टापूर्ते क्रतुष्वपि।**
**वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम्॥**

वृद्धिश्राद्धं पुरा कार्यम् इत्येतस्य वचनस्य यथाश्रुतमर्थमनुसरन्तः पूर्वं वृद्धिश्राद्धं ततः स्वस्तिवाचनमित्येतादृशक्रमेणैव केचिदनुष्ठानमाचरन्ति। अन्ये तु गर्भाधानादीत्यस्मिन्वाक्ये पूर्वं वृद्धिश्राद्धं ततः स्वस्तिवाचनमित्येतावतैव सिद्धे पुनः कर्मादावित्युक्तिर्वृद्धिश्राद्धसहितकर्मण आदौ स्वस्तिवाचनप्राप्त्यर्था। तेन पूर्वं स्वस्तिवाचनमनन्तरं वृद्धिश्राद्धमित्येवानुष्ठानक्रम इत्याहुः। संर. २८–२९

## रेणुकारिकाः

मातृकापूजनस्य नान्दीश्राद्धात्प्राक्कर्तव्यता

**ततो नान्दीमुखं श्राद्धं मातृपूजनपूर्वकम्॥**

## प्रकृतविषये निबन्धांशाः

प्रधानस्य पुण्याहवाचनादीनां च संकल्पे मतभेदाः संकल्पस्वरूपं च

**प्रयोगरत्नम्** (पृ. ६)– देशकालौ संकीर्त्य 'अमुकफलसिद्ध्यर्थं श्वोऽद्य वा अमुककर्म करिष्ये,

¶ 'मङ्गलस्य (पुण्याहवाचनस्य) श्राद्धानन्तरमेव कर्तव्यत्वात्' इति वाक्ये नान्दीश्राद्धस्यामङ्गलत्वसूचनं चिन्त्यम्, विवाहादिमङ्गलकार्यादौ क्रियमाणस्य देवकर्मरूपस्य तस्य मङ्गलरूपत्वे विवादायोगात्। किंच, 'आभ्युदयिकानन्तरकरणमपि प्रामाणिकमेव' इत्युपक्रमे, 'आभ्युदयिकानन्तरमेव पुण्याहवाचनम्' इत्युपसंहारे च अपिकारैवकारार्थयोर्विरोधः। महाराष्ट्रे आभ्युदयिकात्प्रागेव पुण्याहवाचनानुष्ठानमिति संप्रदाय इत्यपि अत्र ध्येयम्।

तदङ्गतयाऽऽदौ पुण्याहवाचनादि करिष्ये, इति संकल्पयेत्। यदा तु प्रयोगाद्बहिर्भूतं पुण्याहवाचनाद्यङ्गं तदा 'अमुकफलसिद्ध्यर्थममुककर्म कर्तुमङ्गभूतमादौ पुण्याहवाचनादि करिष्ये' इति प्रत्येकं संकल्पः। प्रधानसंकल्पस्तु सर्वं कृत्वा तद्दिन एव श्वो वा कार्यः। ततो यजमानः षोडशोपचारैर्गणपतिमभ्यर्च्य प्रार्थयेच्च।

**संस्कारकौस्तुभः** (पृ. १९) – आचम्य प्राणानायम्य यथाचारमिष्टदेवतादिनमस्कारपूर्वकम् 'सुमुखश्च' इत्यादि पठित्वा देशकालौ संकीर्त्य 'अमुककर्म करिष्ये, तदङ्गत्वेन स्वस्तिपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये, तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं करिष्ये' इति संकल्प्य ...।

**संस्काररत्नमाला** (पृ. ३३–३४)– पवित्रपाणिराचम्य प्राणानायम्येष्टदेवतादिनमस्कारपूर्वकम् 'सुमुखश्च' इत्यादीन्मङ्गलश्लोकान् पठित्वा देशकालौ संकीर्त्य 'अमुकं कर्म करिष्ये, तदङ्गत्वेन पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये' इति संकल्पं कुर्यात्। यदा तु प्रयोगाद्बहिर्भूतं पुण्याहवाचनादि तदा 'अमुकं कर्म कर्तुमादौ पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये' इति संकल्पपूर्वकं पुण्याहवाचनादि कृत्वा प्रधानसंकल्पं कुर्यात्। वस्तुतस्तु पुण्याहवाचनादीनां संकल्प एतेषां बहिर्भूतत्वकल्प एव, नान्तर्भूतत्वकल्प इति युक्तं प्रतिभाति। पुण्याहवाचनादीनां स्वस्वारम्भकाले वा संकल्पः। यथा– पुण्याहवाचनारम्भे 'पुण्याहवाचनं करिष्ये' इति, मातृकापूजनारम्भे 'मातृकापूजनं करिष्ये' इति, नान्दीश्राद्धारम्भे 'नान्दीश्राद्धं करिष्ये' इति। मातृकापूजनस्य नान्दीश्राद्धाङ्गत्वं ये स्वीकुर्वन्ति तन्मते तस्य पृथक्संकल्पो न, नान्दीश्राद्धसंकल्पेनैव तत्सिद्धेः। यानि भविष्यदनद्यतनकर्तव्यानि करोति जुहोति यजतीत्येवमादिविहितानि कर्माणि तेषु करिष्ये, होष्यामि, यक्ष्य इत्यादिशब्दस्थाने कर्ताहे, होताहे, यष्टाहे इत्येवं वा यथायथम्। कर्तृगामिक्रियाफलाभावे तु कर्तास्मि करिष्यामि इति प्रयोगः। एवं सर्वत्र। ¶ अतीताया रात्रेः पश्चार्धमारभ्याग्रिमरात्रेः पूर्वार्धपर्यन्तं भविष्यदद्यतनम्, ततः परं भविष्यदनद्यतनम्। ततस्तदादौ 'निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं करिष्ये' इति संकल्प्य...।

(पृ. ४०) 'गणशः क्रियमाणानां मातॄणां पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु॥' (ब्रह्मपुराणम्)। 'मातॄणां पूजनं सकृत्' इति पृथग्वचनादेवं ज्ञायते– मातृपूजनं नान्दीश्राद्धस्यानङ्गमेव भवतीति। अतोऽस्मिन्कल्पे मातृकापूजनस्य पृथगेव संकल्पः। 'यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः।' इति पुराणान्तरवचनेनाङ्गत्वम् *। अस्मिन् कल्पे न पृथक्संकल्पः।

(पृ. ५३९)– गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धमङ्कुरारोपणं ग्रहमखं मण्डपदेवताप्रतिष्ठापनं च कुर्यात्। अथवाऽङ्कुरारोपणग्रहमखौ पूर्वं पृथगेव यथावकाशं कार्यौ। न तु नान्दीश्राद्धोत्तरकर्तव्यतानियमः।

**संस्कारदीपकः** (पृ. १९–२०)–कैश्चित्–मातृपूजादीनां प्रयोगबहिर्भूताङ्गत्वं वदद्भिः 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयया यक्ष्ये' इति, § 'वाजपेयेन यक्ष्यमाणो बृहस्पतिसवेन यक्ष्ये' इति संकल्पवत्

---

¶ इयं रभसोक्तिः। वस्तुतस्तु, संकल्पक्षणमारभ्य आगामिन्या रात्रेः पूर्वार्धान्तिमक्षणान्तः कालो भविष्यदद्यतनः, अतीताया रात्रेः पश्चार्धप्रथमक्षणमारभ्य संकल्पक्षणपर्यन्तस्तु भूताद्यतन एव।

* 'यत्र यत्र श्राद्धं तत्र तत्र मातरः' इति व्याप्तेर्मातृकापूजननान्दीश्राद्धयोरङ्गाङ्गिभावः एव प्रयोजक इत्यभिमानः, संनियोगशिष्टत्वेन सहानुष्ठेयत्वस्यापि तत्प्रयोजकत्वसंभवात्। तथा च सहानुष्ठेयत्वस्य व्याप्तिबोध्यत्वसंभवात् 'यत्र यत्र भवेच्छ्राद्धम्' इति वचनस्याङ्गाङ्गिभावे प्रामाण्यं संदिग्धम्।

§ इयं रभसोक्तिरिति प्रतिभाति। तथाहि– 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति वाक्यस्य वाजपेयनिरूपितं बृहस्पतिसवनिष्ठं वाजपेयप्रयोगबहिर्भूतोत्तराङ्गत्वं विषय इति सर्वसंमतसिद्धान्तः। दीपकोट्टङ्कितसंकल्पाकारे तु अङ्गाङ्गिक्रमो

'करिष्यमाणामुककर्माङ्गत्वेन मातृपूजादीनि करिष्ये' इत्येवं मातृपूजादीनां संकल्प उक्तः ।

अन्यैस्तु प्रधानप्रयोगान्तःपातिगुणत्वं वदद्भिः 'अमुककर्म करिष्ये, तदङ्गत्वेन मातृपूजादीनि करिष्ये' इत्येवं प्रधानसंकल्पोत्तरमेव एषां संकल्प उक्तः ।

---

विपरीतः संवृत्तः । यदि दृष्टान्तदार्ष्टान्तिकयोर्बृहस्पतिसवसंकल्पमातृपूजादिसंकल्पयोरङ्गाङ्गिभावबोधकत्वमात्रं साधर्म्यं विवक्षितं तदा 'वाजपेयेनेष्टवान् बृहस्पतिसवेन यक्ष्ये' इति संकल्पाकारः संभवति । यदा तु अङ्गाङ्गिक्रमोऽपि साधर्म्यरूपेण विवक्षितस्तदा बृहस्पतिसवसंकल्पस्य दृष्टान्ततैव न संभवति । न च—मुद्रणदोषकृतोऽत्र शब्दव्यत्यासः संजातः, 'बृहस्पतिसवेन यक्ष्यमाणो वाजपेयेन यक्ष्ये' इति संकल्पाकारोऽभिप्रेतः—इत्यपि सुवचम्, मातृपूजादिसंकल्पस्याङ्गविषयत्वम्, अस्य तु प्रधानविषयत्वमिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यापातात्, प्रधानसंकल्पे एवंरूपस्याङ्गनिर्देशस्यान्याय्यत्वाच्च । तदिदं सुधीभिर्विवेचनीयम् ।

# गणपतिपूजनं विनायककल्पश्च

## बौधायनगृह्यशेषसूत्रम्

विनायककल्पस्य कालः फलं च

[1]अथातो विनायककल्पं व्याख्यास्यामः– मासिमासि चतुर्थ्यां शुक्लपक्षस्य पञ्चम्यां वाऽभ्युदयादौ सिद्धिकाम ऋद्धिकामः पशुकामो वा भगवतो विनायकस्य बलिं हरेत् ॥

पूर्वकृत्यं विनायकावाहनं च

[2]पूर्वेद्युः कृतैकभुक्तः शुचिरप आचम्याथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात्कृत्वा दक्षिणामुखं हस्तिमुखं दक्षिणतो ब्राह्मणमुपवेश्योपोत्थाय दैवतमावाहयति– 'विघ्न विघ्नेश्वराऽऽगच्छ विघ्नेत्येव नमस्कृत । अविघ्नाय भवान् सम्यक्सदाऽस्माकं भव प्रभो ॥' इति ॥

विनायकायार्घ्यदानम्

[3]अथ दूर्वाक्षतसुमनोमिश्रमर्घ्यं ददाति– 'इमा आपः शिवाः शिवतमाः शान्ताः शान्ततमाः पूताः पूततमाः पुण्याः पुण्यतमा मेध्या मेध्यतमा जुष्टा जुष्टतमा अमृता अमृतरसाः पाद्या अर्घ्या अर्हणीया अभिषेचनीया आचमनीया मार्जनीयाश्च प्रतिगृह्यन्तां प्रतिगृह्णातु भगवान् विनायको विनायकाय नमः' इति ॥

विनायकस्य पूजनमुपस्थानं च

अथ तूष्णीं वा गन्धपुष्पधूपदीपैरभ्यर्च्योपतिष्ठते– 'भूपतये नमो भुवनपतये नमो भूतानां पतये नमः' इति ॥

(१) बौगृशे. ३।१०।१ ; हिगृशे. ६।१६ पञ्चम्यां (चतुर्थ्यां) ; प्रका. २०८.

(२) बौगृशे. ३।१०।२ ; हिगृशे. ६।१६ मुक्तः (भक्तः) (हस्तिमुखं०) ; प्रका. २०८.

(३) बौगृशे. ३।१०।३–४ ; हिगृशे. ६।१६ ; प्रका. २०८.

होमः वरप्रदानान्तमुत्तरकृत्यं च

[1]उपस्थाय तिस्रो विनायकाहुतीर्जुहोति– 'विनायकाय भूपतये नमो विनायकाय स्वाहा । विनायकाय भुवनपतये नमो विनायकाय स्वाहा । विनायकाय भूतानां पतये नमो विनायकाय स्वाहा ।' इति । जयप्रभृति सिद्धमा धेनुवरप्रदानात् ॥

विनायकस्य बलिहरणम्

[2]अपूपं करम्भमोदकं सक्तून् पायसमित्यथास्मा उपहरति– 'विघ्नाय स्वाहा । विनायकाय स्वाहा । वीराय स्वाहा । शूराय स्वाहा । उग्राय स्वाहा । भीमाय स्वाहा । हस्तिमुखाय स्वाहा । वरदाय स्वाहा । विघ्नपार्षदेभ्यः स्वाहा । विघ्नपार्षदीभ्यः स्वाहा' इति ॥

भूतानां बलिहरणम्

अथ भूतेभ्यो बलिमुपहरेत्– 'ये भूताः प्रचरन्ति' इति ॥

कङ्कणबन्धनम्

अथ पञ्चसूत्रं कङ्कणं हस्ते व्याहृतिभिर्बध्नाति– 'विनायक महाबाहो विघ्नेश भवदाज्ञया । कामा मे साधिताः सर्वे इदं बध्नामि कङ्कणम् ॥' इति ॥

विनायकविसर्जनम्

[3]अथ साग्निकं विनायकं प्रदक्षिणं कृत्वा प्रणम्याभिवाद्य विनायकं विसर्जयति– 'कृतं यदि

(१) बौगृशे. ३।१०।५ ; हिगृशे. ६।१६ जयप्र (स्विष्टकृत्प्र) ; प्रका. २०८.

(२) बागृशे. ३।१०।६–८ ; हिगृशे. ६।१६ ; प्रका. २०९.

(३) बौगृशे. ३।१०।९ ; हिगृशे. ६।१६ (अथ०) वाद्य (वाद्यं) याहि (यदि) ; प्रका. २०९.

मया प्राप्तं श्रद्धया वा गणेश्वर । उत्तिष्ठ सगणः साधो याहि भद्रं प्रसीदतोम् ॥' इति ॥

[1]तस्मिन्याते द्वादशेध्मसमिद्धेनोपरि मध्यमं चैव दक्षिणोर्ध्वं समिधं तथा दधि मधु पय आज्यं संमिश्र्य परिषेचनं विसर्जनं कल्पयति ॥

## बह्वृचपरिशिष्टम्

विनायककुलदेवतयोरादावन्ते च, पूज्यत्वम्

[2]आदौ विनायकः पूज्यो ह्यन्ते च कुलदेवताः ॥

## हिरण्यकेशिगृह्यशेषसूत्रम्

गणपतिपूजनस्य कालः फलं च, गणपतेरावाहनमर्घ्यदानं च

* [3]अथातो गणपतिपूजनं व्याख्यास्यामः । अभ्युदयादौ सिद्धिकाम ऋद्धिकामः पशुकामो वा भगवतो गणेशस्य बलिं हरेत् । अथ गणपतिमावाहयति– 'विघ्न विघ्नेश्वराऽऽगच्छ विघ्नेत्येव नमस्कृत । अविघ्नाय भवान् सम्यक्सदाऽस्माकं भव प्रभो ॥' इति । अथ दूर्वाक्षतसुमनोमिश्रमर्घ्यं ददाति– 'इमा आपः (शिवाः) शिवतमाः शान्ताः शान्ततमाः पूताः पूततमाः पुण्याः पुण्यतमा मेध्या मेध्यतमा जुष्टा जुष्टतमा अमृता अमृतरसाः पाद्या अर्घ्या अर्हणीया अभिषेचनीया आचमनीया मार्जनीयाश्च प्रतिगृह्यन्तां प्रतिगृह्णातु भगवान् गणेशो गणेशाय नमः' इति ॥

गणपतेः पूजनम् उपस्थानं बलिहरणं विसर्जनं च

अथ तूष्णीं वा गन्धपुष्पधूपदीपैरभ्यर्च्योपतिष्ठते– 'भूपतये नमो भुवनपतये नमो भूतानां पतये नमः' इति । अपूपं करम्भमोदकं सक्तून् पायसमित्यथास्मा उपहरति– 'विघ्नाय स्वाहा । विनायकाय स्वाहा । वीराय स्वाहा । शूराय स्वाहा । उग्राय स्वाहा । भीमाय स्वाहा । हस्तिमुखाय स्वाहा । वरदाय स्वाहा । विघ्नपार्षदेभ्यः स्वाहा । विघ्नपार्षदीभ्यः स्वाहा' इति । अथ गणपतिं प्रदक्षिणं कृत्वा प्रणम्याभिवाद्य गणपतिं विसर्जयति– 'कृतं यदि मया प्राप्तं श्रद्धया वा गणेश्वर । उत्तिष्ठ सगणः साधो याहि भद्रं प्रसीदतोम् ॥' इति ॥

## मानवगृह्यसूत्रम्

विनायकचतुष्टयम्

[1]अथातो विनायकान् व्याख्यास्यामः । शालकटङ्कटश्च कूष्माण्डराजपुत्रश्चोस्मितश्च देवयजनश्चेति । एतैरधिगतानामिमानि रूपाणि भवन्ति ॥

अथातो विनायकान् व्याख्यास्यामः । अथातःशब्दौ अधिकारहेत्वर्थौ । अथ विनायकान् व्याख्यास्यामः । न त्वनधिकृतेनाधिकृतं विद्यात् । यस्माद्दौर्भाग्ययोगो विनायकाधिष्ठाने भवति अतो व्याख्यास्यामः । तेनाधिकृता विनायकाः । सौभाग्यकरणत्वाद्विनायकानाम् । आनन्तर्ये वाऽथशब्दः, काम्यकर्माधिकारात् । षष्ठीकल्पादनन्तरं काम्यहेतुकं व्याख्यास्यामः । संबन्धाने( ने )वाथ काम्यानन्तरम् । काम्यं पुनरत्र पराङ्मुखीभूतानां भाग्यानामात्मनोऽभिमुखं( ? खी )करणमिति हेतौ अतस्तत्कस्य हैतुकं व्याख्यास्यामः । भवति हि सौभाग्यतदुपायो हेतुत्वे । विनायकाश्चत्वारः शालकटङ्कटादयः । श्रेयसो विघ्नशमनार्थं यत्तेषां पूजाकर्म तदपि विनायका इत्युक्तं वा उच्यते तान् व्याख्यास्याम इत्याह– शालकटङ्कटश्च कूष्माण्डराजपुत्रश्चोस्मितश्च देवयजनश्च सु-

---

*पूर्वसंगृहीतहोमादिविशिष्टविनायककल्पात्पृथगिदं होमादिविहीनं गणपतिपूजनाख्यं कर्म ।

(१) बौगृशे. ३।१०।१० ; हिगृशे. ६।१६ जंनं कल्पयति ( जंनमिति विज्ञायते ) ; प्रका. २०९.

(२) निप्र. २०२ ह्यन्ते च ( अन्ते तु ) देवताः ( देवता ) ; श्रासौ. १२३ ( = ) ह्यन्ते ( अन्ते ) ; संम. ४ ह्यन्ते च ( अन्ते तु ) गृह्यपरिशिष्टे इत्युक्तम् ; शाम. ३ सर्वं संमवत् ; संग. ७३ देवताः ( मातरः ) ; संदी. ५४, ५६ देवताः ( देवता ).

(३) हिगृशे. ३।१.

(१) मागृ. २।१४।१-३३.

गमम् । एतैः तेषां विनायकानामधिगतानामधिष्ठितानां भूताक्रान्तानामाविष्टानां पुरुषेषु तेषां तैरिति वा । अधिगतानाम् उपहतानामित्यर्थः । इमानि रूपाणि चिह्नानि भवन्ति जायन्ते । अष्टाभा.

विनायकाविष्टलक्षणानि

**लोष्टं मृद्नाति । तृणानि च्छिनत्ति । अङ्गेषु लेखान् लिखति । अपस्वप्नं पश्यति । मुण्डान् पश्यति । जटिलान् पश्यति । काषायवाससः पश्यति । उष्ट्रान् सूकरान् गर्दभान् दिवाकीर्त्यादीनन्यांश्चाप्रयतान् स्वप्नान् पश्यति । अन्तरिक्षं क्रामति । अध्वानं व्रजन् मन्यते पृष्ठतो मे कश्चिदनुव्रजति ॥**

तान्याह— लोष्टं मृद्नाति तृणं छिनत्ति विना प्रयोजनेन मर्मच्छेदनेन लोष्टतृणं करोति । अपस्वप्नं पश्यति, मुण्डान् पश्यतीत्यादि । अपः शयानः पश्यति तथा मुण्डजटिलादींश्च पश्यति । अन्तरिक्षं रात्रौ शयानः क्राम्यति । अध्वानं गच्छति पृष्ठतो( ? तस्त )दनु कश्चिद् व्रजतीति । पलायमानमपश्यन् क्रोधनिविष्ट आक्रमतीव मन्यते । जाग्रदपि मादरमिदगणोनि पृष्ठतः (?) । अन्यदपि एवंरूपं चोदयति उष्ट्रदर्शनादिति च (?) । अष्टाभा.

विनायकावेशफलानि

**एतैः खलु विनायकैराविष्टा राजपुत्रा लक्षणवन्तो राज्यं न लभन्ते । कन्याः पतिकामा लक्षणवत्यो भर्तॄन्न लभन्ते । स्त्रियः प्रजाकामा लक्षणवत्यः प्रजां न लभन्ते । स्त्रीणामाचारवतीनामपत्यानि म्रियन्ते । श्रोत्रियोऽध्यापक आचार्यत्वं न प्राप्नोति । अध्येतॄणामध्ययने महाविघ्नानि भवन्ति । वणिजां वणिक्पथो विनश्यति । कृषिकराणां कृषिरल्पफला भवति ॥**

एतैः खलु विनायकैराविष्टाः । एतैर्ये विनायकैराक्रान्ताः तेषां किं भवतीत्याह— लक्षणवन्तः रणप्रत्ता इत्यादि प्रथमं लक्षणं पुरुषस्य स्त्रियाश्च ज्योतिषादिशास्त्रोक्तम् । आचारवतीनां गुरुशुश्रूषा चरमशय्या गुरोरुत्थानं गृहकृत्ये दक्षता ह्रीः क्षान्तिः मनोवाक्कायसंयमः इत्याचारसंयुक्तानाम् । अध्यापक इत्यादि । आचार्यत्वम् अध्यापननिमित्तं गरीयस्त्वम् । अध्येतॄणां विद्यार्थिनाम् । वणिक्पथः वाणिज्यसेवा (वणिग्भावो विनिङ्भारो ?) वा । शालकटङ्कटादिविनायकाधिष्ठितानां लोष्टं मृद्नातीत्यादिरूपाणि राज्यं न लभन्ते इत्यादि फलनाशा भवन्ति । अष्टाभा.

विनायकावेशप्रायश्चित्तम्, तत्र संभाराः,
विनायकाविष्टाभिषेकश्च

**तेषां प्रायश्चित्तम् । मृगाखरकुलायमृत्तिकारोचना गुग्गुलाः । चतुर्भ्यः प्रस्रवणेभ्यश्चतुरुदकुम्भानव्यङ्गानाहरेत् । सर्वगन्धसर्वरससर्वौषधीः सर्वरत्नानि चोपकल्प्य प्रतिसरदधिमधुघृतमिति । एतान् संभारान् संसृज्य ऋषभचर्माऽऽरुह्याथैनं— 'सहस्राक्षं शतधारमृषिभिः पावनं कृतम् । ताभिष्ट्वाऽभिषिञ्चामि पावमानीः पुनन्तु त्वा ॥ अग्निना दत्ताः, इन्द्रेण दत्ताः, सोमेन दत्ताः, वरुणेन दत्ताः, वायुना दत्ताः, विष्णुना दत्ताः, बृहस्पतिना दत्ताः, विश्वैर्देवैर्दत्ताः, सर्वैर्देवैर्दत्ता ओषधय आपो वरुणसंमिताः । ताभिष्ट्वाऽभिषिञ्चामि पावमानीः पुनन्तु त्वा ॥' इति सर्वत्रानुषजति । 'यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु ते सदा ॥ भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः । भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥' इति ॥**

तेषां प्रायश्चित्तं दुरितबाधनमित्यर्थः । संयोगकरणमिति यावत् । मृगोऽधिवासः कुलायकुत्र्यन्तको मृगमृत्तिकोपादेया रोचना गुग्गुलैः प्रसिद्धैर्ऋषभसेत्कास्ते सो(?) गोषु तस्य चर्म । चतुर्भ्यः प्रस्रवणेभ्यः परमनदीकच्छेषु प्रस्रवणानि भवन्ति । उदकुम्भान् नानाचिह्नान् आहरेत् ।

एकैकस्मात् प्रस्रवणादेकैकमुदकुम्भम्, सर्वाणि गन्धवन्ति द्रव्याणि न तु चन्दनादीनि, तथा मधुरादिरसान् ब्राह्म्यादीनोषधीस्तथा रत्नानि पद्मरागादीनि उपकल्प्य समीपे कृत्वेत्यर्थः। चतुर्षूदकुम्भेषु सर्वगन्धादि तत्परिद्रव्यजातान्युप्य। संसृज्य वाऽनुपुष्यते यदि संसृज्येति पाठः। ऋषभचर्मणि आरोह्य आरोप्येत्यर्थः। अथैनमुपनयन्ति। 'सहस्राक्षं शतधारम्' इत्यादिभिस्त्रिभिर्मन्त्रैरेकैनोदकुम्भेन अभिषिञ्चति। चतुर्थे मन्त्राभावात्तूष्णीमधः सर्वगात्रमित्यर्थः। तेषां प्रायश्चित्तं कुर्वीत मृगाखरकुलायमृत्तिकाप्रभृतिसंभारान् संसृज्य ऋषभचर्माऽऽरुह्य विनायकाविष्टं 'सहस्राक्षं शतधारम्' इति पावमानीभिः, 'यत्ते केशेषु दौर्भाग्यम्' इति मन्त्रेण स्नपयन्ति। चतुर्भिः कलशैश्चान्यैः स्नानार्थं च समाहरेत्। अव्रणैरेकवर्णैश्च चतुःप्रस्रवणं प्रातः ... सराण्युदकमाहरेत्। अशोष्यात् संगमात्। मृगाखरकुलायमृत्तिका अश्वस्थानात् गजस्थानात् वल्मीकात् फलिनो वृक्षात् शुभसंगमात् ह्रदात् गोरोचना गन्धचन्दनसर्वौषधीः। सर्वरत्नानि च कुङ्कुमं कस्तुरिकां गुग्गुलं चाप्सु निक्षिपेत् ... एभिः प्रकारैर्भद्रासने चतुःकलशान् स्थापयेत्। रक्तयुगां पुष्पमालां चन्दनेन विभूषयेत्। स्नानार्थं कलशे सर्वौषधिसर्वरत्नपञ्चपल्लवतीर्थोदकगुग्गुलं कस्तुरिकामृगाधिवासमृत्तिकाकुलालय(व)मृत्तिका अश्वस्थानात्। वृक्षादित्यादि गोरोचन्दनगन्धचन्दन—दधिमधुघृतमेतत्समस्तं संभारान् संसृज्य कुम्भेषु निक्षिपेत्। अष्टाभा.

विनायकाविष्टस्य मूर्धनि होमः

**अधिस्नातस्य निशायां सद्यःपीडितसर्षपतैलमौदुम्बरेण स्रुवेण मूर्धनि चतस्र आहुतीर्जुहोति '(ओं) शालकटङ्कटाय स्वाहा, उस्मिताय स्वाहा, कूष्माण्डराजपुत्राय स्वाहा, देवयजनाय स्वाहा' इति॥**

निशायांनिशायां जुहोति संबन्धः। सद्यःपीडितशब्देन आनन्तर्यमकारणं क्रियासंबन्धगरीयस्त्वम्। 'शालकटङ्कटाय स्वाहा' इत्याद्याश्चतस्र आहुतीर्निशायां मूर्धनि तैलेन जुहोति। सा परं तु प्राप्तं मया उच्यते(?)। अष्टाभा.

विनायकेभ्यो बलिदानम्

**अत ऊर्ध्वं ग्रामचतुष्पथे नगरचतुष्पथे निगमचतुष्पथे वा सर्वतोमुखान् दर्भानास्तीर्य नवे शूर्पे बलिमुपहरति फलीकृतांस्तण्डुलानफलीकृतांस्तण्डुलानामं मांसं पक्वं मांसमामान् मत्स्यान् पक्वान् मत्स्यानामानपूपान् पक्वानपूपान् पिष्टान् गन्धानपिष्टान् गन्धान् गन्धपानं मधुपानं मैरेयपानं सुरापानं मुक्तं माल्यं ग्रथितं माल्यं रक्तं माल्यं शुक्लं माल्यं रक्तपीतशुक्लकृष्णनीलहरितचित्रवासांसि माषकुल्माषमूलफलमिति॥**

'अत उर्ध्वम्' अतो? प्रवासा(त्) पूर्वं ग्रामचतुःपथे निगमचतुःपथे इति वा समो विकल्पः, निगमः अरण्यं ग्रामनगराभ्यामन्यत्वात्, नीचैर्गच्छन्त्यस्मिन्निति निगमः। ग्रामादिष्वन्यत्रैव चतुःपथे। सर्वतोमुखान् सर्वदिग्ग्रामास्तानास्तीर्य शूर्पे प्रत्यग्रं यत् शूर्पे तदन्ते कृत्वा बलिं नैवेद्यमुपहरति। शूर्पेण पृणाति किमित्याह फलीकृतांस्तण्डुलानित्यादि मूलफलान्तमुपहरति वक्ष्यमाणाभ्यो देवताभ्यः। अत ऊर्ध्वं देवानावाहयतीति वचनात् प्रथमं बल्युपहारं कृत्वा पश्चा(त्) देवताः संबन्धयेदिति गम्यते। तिलोदनं कृसर उच्यते। पिष्टगन्धं कुङ्कुमादि अपिष्टं च। गन्धपानं सुरभिगन्धपानमित्यर्थः। मधु माध्वीकं प्रसिद्धम्, मधुपानस्य पानं नि(पी)यतेऽनेनेति पानपात्रं सरक इरान्नं तद्विकार (निवेयं कामिनिकम्?) सुरा पैष्टी। एकध्या माधवी माल्या पुष्पाणि मुक्तम् अग्रथितमित्यर्थः। रक्तशुक्लत्वे ग्रथितस्य च मुक्तस्य च विशेषणे, रक्तादीनि वासांसि, माषा अमाः सिद्धा असिद्धा वा विशेषानुपादानात्। कुल्माषाः प्रसिद्धाः। मूलफलानि आर्द्रकादीनि। अत ऊर्ध्वं देवतामावाहयेत्। अष्टाभा.

देवतावाहनम्

**अथ देवानामावाहनम्—'विमुखः श्येनो बको यक्षः कलहो भी विनायकः कूष्माण्डराजपुत्रो**

**यक्षाविक्षेपी कुलङ्गापमारो यूपकेशी सूपरकोडी हैमवतो जम्भको विरूपाक्षो लोहिताक्षो वैश्रवणो महासेनो महादेवो महाराज इति । एते मे देवाः प्रीयन्तां प्रीता मां प्रीणयन्तु तृप्ता मां तर्पयन्तु ' इति ॥**

तण्डुलमांसादि निवेद्य प्रतिदेवतावाहनमुच्यते । द्विमुख, श्येन, बक, यक्ष, इत्यादि संबुध्यन्ते देवतापदमुचार्य एहीति प्रतिपदं युञ्जीत । आवाहयेदिति श्रुतत्वात् । द्विमुख एहीत्यन्ये समासेन एहि इत्यते( न्ते ) एते मे देवाः प्रीयन्तामित्यावाहनशेषः । अष्टाभा.

ग्रहोपस्थानम्

**अधिष्ठितेऽर्धरात्र आचार्यो ग्रहानुपतिष्ठते— ' भगवति भगं मे देहि, वर्णवति वर्णं मे देहि, रूपवति रूपं मे देहि, तेजस्विनि तेजो मे देहि, यशस्विनि यशो मे देहि, पुत्रवति पुत्रान् मे देहि, सर्ववति सर्वान् कामान् मे प्रदेहि ' इति ॥**

अवस्थिते अर्धरात्रे आचार्यो गृहानुपतिष्ठते ययाभिहिताभिवायिन्या( ? ) तदा भगवतीत्याद्यया गृहानिति अर्थादागत्य गृहानुपतिष्ठते समासन्नो भवतीत्यर्थः । अधिस्थितेऽर्धरात्रे अम्बिकागृहानुपतिष्ठते ततः आचार्याणां गृहानुपतिष्ठति( ते ) एतद्द्रव्ययुतं भौमान्तरिक्षत्रिविधोत्पातविनाशार्थं भगवद्भ्यश्चत्वराधिष्ठानदेवताभ्यः प्रीयताम् ( ? ) इदमाचमनमिति मध्यरात्रे चत्वरपूजा । अष्टाभा.

सूर्यपूजा अर्घ्यदानम् उपस्थानं च

**अत ऊर्ध्वमुदित आदित्ये विमले सुमुहूर्ते सूर्यपूजापूर्वकमर्घ्यदानमुपस्थानं च– ' नमस्ते अस्तु भगवञ्छतरश्मे तमोनुद । जहि मे देव दौर्भाग्यं सौभाग्येन मां संयोजयस्व ॥ ' इति ॥**

'अत ऊर्ध्वम्' अतो होमस्थानादूर्ध्वम् उदिते आदित्ये विमले मुहूर्ते सुप्रकाशे इत्यर्थः । नमोऽस्तु भगवन्नित्युपस्थानम् । अत ऊर्ध्वमुदित आदित्ये विमले मुहूर्ते नमस्ते अस्त्विति सूर्योपस्थानम् । प्रभाते अम्बिकागणपतिपूजनम् । कुसुमोदकदूर्वाश्च सर्षपपूर्णमञ्जलिं दत्वाऽर्घ्यं विनायकाय तद्वदम्बिकायै च । अष्टाभा.

ब्राह्मणतर्पणं दक्षिणादानं च

**अथ ब्राह्मणतर्पणम् । ऋषभो दक्षिणा ॥**

अथ ब्राह्मणम् । ऋषभो दक्षिणा अनग्निः कस्यचित्तत्कर्म कुर्यात् ।( इत्या )दीनामधिकारात् । अष्टाभा.

## बैजवापगृह्यम्

विनायकचतुष्टयम् , आवेशफलानि, आविष्टलक्षणानि

**[1]अथ विनायकाः । चत्वारः खलु विनायका भवन्ति । मितश्च संमितश्च शालकटङ्कटश्च कूष्माण्डराजपुत्रश्चेति । एतैर्विनायकैरुपसृष्टलक्षणा ब्राह्मणाः स्वाध्यायवन्तोऽप्याचार्यत्वं न लभन्ते । कुमारा राजपुत्रा राजलक्षणसंपन्ना अपि राज्यं न लभन्ते । कुमार्योऽपि लक्षणवत्योऽपि भर्तॄन्न लभन्ते । स्त्रीणामाचारवतीनामप्यपत्यानि म्रियन्ते । विनायकोपसृष्टलक्षणं खलु भवति– स्वप्ने सर्पान्पश्यति । अत्यन्तमपोऽवगाहते । अन्तरिक्षं क्रामति । पांसुकर्दमे चावसीदति । पृष्ठतो मां कश्चिद्धावतीति मन्यते । उष्ट्रान् गर्दभान् शुनो दिवाकीर्तिमन्यांश्चाप्रयतान् पश्यति । करणे मूढमात्मानं मलिनान्तरमन्यांश्च प्रयतान्पश्यति ॥**

उदकुम्भचतुष्टयोपकल्पनम्

**[2]चतुर्भ्यः प्रस्रवणेभ्यश्चतुरः कुम्भानाहृत्य तेषु सर्वौषधीः सर्वगन्धान् हिरण्यं व्रीहियवौ गुग्गुलं मृदमाखूत्कराम् ॥**

प्रक्षिपेदिति शेषः । अप. १।२७८

---

( १ ) अप. १।२७३–२७५.

( २ ) अप. १।२७८.

## याज्ञवल्क्यः

विनायकस्य कर्मविघ्नहेतुत्वं कर्मसिद्धिहेतुत्वं च

**[1]विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः ।**
**गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥**

(१) एवं तावच्छ्राद्धमुपदिष्टं निमित्तसंयोगौ च । इदं त्वत्र वक्तव्यम् । कस्मात्पुनरेतान्यनन्तरमेव स्वर्गादीनि फलानि कर्मणो नोत्पद्यन्ते ? विशिष्टशरीरोपभोग्यत्वात् स्वर्गस्येति चेत्, पुत्रादीनां तर्ह्यनन्तरोत्पादप्रसङ्गः । कस्य चैतदनिष्टम् ? । नन्वदर्शनाद्भवतः । मैवम्, निमित्तान्तरात् तददर्शनम्, न तु कर्मणामनुत्पादकत्वात् । किं तन्निमित्तान्तरमित्युच्यते— विनायक इति । विनायकशब्देनात्र व्यामोह उच्यते । स हि भावाभावाभ्यां कर्मविघ्नार्थं सिद्ध्यर्थं च विरुद्धासु क्रियासु पुरुषनयनाद्विनायकशब्दवाच्यः क्रोधादिष्वारम्भकत्वेनापकर्षहेतोर्गणस्याऽऽधिपत्ये विनियुक्तो रुद्रेण । ब्रह्मणा शरीरस्रष्ट्रेत्यर्थः । यद्वा प्राक्( ? क्कृ )ताशुभकर्मनिचयो विनायकशब्दवाच्यः । सोऽपि स्वफलोत्पादप्रवृत्तौ विविधं मनुष्यान् नयन् विनायक एव । स च सांप्रतं कर्मणः फलदानप्रवृत्तस्य विघ्नार्थं रुद्रब्रह्मशब्दवाच्यापूर्वशक्त्या विनियोजितः प्राणिगणानां बलवत्त्वेनाऽऽधिपत्यायैव प्रवृत्तः सर्वथा स्वेच्छाप्रवृत्तिं निरुणद्धीत्यर्थः । तथा च व्यासः— 'यत्तत्पूर्वकृतं कर्म न स्मरन्तीह मानवाः । तदिदं पाण्डवश्रेष्ठ दैवमित्यभिधीयते ॥' इति । देवैरिव सृष्टं दैवम् । रुद्रेण ब्रह्मणा चेत्यत्रापि योज्यम् । क्रोधो वा रुद्रः । ब्रह्म शास्त्रीयं विधानम् । तत्र क्रोधोपहतेन यद्ब्रह्म नाऽऽदृतं तेन ब्रह्मणा प्राक्कृताशुभेनैव रूपेणायमिदानीं क्रोधाख्यो विनायको विनियुक्त इत्यादि योज्यम् । अस्तु वा देवतैव विनायकोऽर्थवादानुसारात् । अधिकारतस्तु नित्यत्वाव्याघातः । विश्व.

(२) दृष्टादृष्टफलसाधनानि कर्माण्यभिहितान्यप्यभिधास्यन्ते च । तेषां स्वरूपनिष्पत्तिः फलसाधनत्वं चाविघ्नेन भवतीत्यविघ्नार्थं कर्म विधास्यन् विघ्नस्य कारकज्ञापकहेतूनाह— विनायक इति । 'विनायकः कर्मविघ्नसिद्ध्यर्थम्' इत्यादिनोभयविधहेतुपरिज्ञानाद्विघ्नस्य प्रागभावपरिपालनायोपस्थितस्य प्रध्वंसाय वा प्रेक्षापूर्वकारिणः प्रवर्तन्ते रोगस्येवोभयविधहेतुपरिज्ञानात् । विनायको विघ्नेश्वरः पुरुषार्थसाधनानां कर्मणां विघ्नसिद्ध्यर्थं स्वरूपफलसाधनत्वविघातसिद्ध्ये विनियोजितः नियुक्तः रुद्रेण ब्रह्मणा चकाराद्विष्णुना च गणानां पुष्पदन्तप्रभृतीनामाधिपत्ये स्वाम्ये । * मिता.

(३) अभीष्टकर्मफलप्राप्तौ विघ्नपरिहारस्याप्युपायमिदानीमाह— विनायक इति । विनायकाख्यो देवविशेषः सर्वेषां कर्तॄणां कर्मविघ्नार्थं कर्मसिद्ध्यर्थं च गणानां पुष्पदन्तादीनामीश्वरत्वे च रुद्रचतुर्मुखाभ्यां नियुक्तः, अतोऽसौ विहितोपायेनैव निवारयितुं च शक्यते इति तदुपायविधिरारभ्यते । अप.

विनायकोपसृष्टस्य स्वप्नजागरयोर्लक्षणानि

**[1]तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत ।**
**स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥**
**[2]काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ।**
**अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥**
**[3]व्रजन्नपि तथाऽऽत्मानं मन्यतेऽनुगतं परैः ॥**

---

(१) यास्मृ. १।२७१ ; विश्व. १।२६७ तथा (पुरा); मिता. ; अप. १।२७० ; वीमि. तथा (पुरा) ; शाम. ५ ; विपा. २३ ; कृभ. १०८७.

* वीमि. मितागतम् ।

(१) यास्मृ. १।२७२ ; विश्व. १।२६८ ; मिता. ; अप. १।२७१ ; वीमि ; शाम. ५ ; विपा. २३.

(२) यास्मृ. १।२७३ ; विश्व. १।२६९ ; मिता. ; अप. १।२७२ ; वीमि. ; शाम. ५ तिष्ठते (तिष्ठति) ; विपा. २४.

(३) यास्मृ. १।२७४ ; विश्व. १।२७० व्रजन्नपि (व्रजमानः) ; मिता. ; अप. १।२७३ व्रजन्नपि (व्रजन्तं च) ; वीमि. ; शाम. ५ ; विपा. २४.

(१) कथं पुनः प्राक्तनाशुभसंयोगः पुरुषस्यावगम्यते इत्याह— तेनोपसृष्ट इत्यादि। जाग्रदवस्थायामप्येतानि कौनख्यादिवत्पुराकृताशुभकर्मनिमित्तानि द्रष्टव्यानि। विश्व.

(२) एवं विघ्नस्य कारकहेतुमुक्त्वा ज्ञापकहेतुप्रदर्शनार्थमाह— तेनोपसृष्ट इति। तेन विनायकेन उपसृष्टो गृहीतो यस्तस्य लक्षणानि ज्ञापकानि निबोधत जानीध्वं हे मुनयः। पुनर्मुनीनां प्रत्यवमर्शः शान्तिप्रकरणप्रारम्भार्थः। स्वप्ने स्वप्नावस्थायां जलमत्यर्थमवगाहते स्रोतसा ह्रियते निमज्जति वा। मुण्डितशिरसः पुरुषान् पश्यति। काषायवाससो रक्तनीलादिवस्त्रप्रावरणांश्च। क्रव्यादा नाम मांसाशिनः पक्षिणः गृध्रादीन् मृगांश्च व्याघ्रादीनधिरोहति। तथा अन्त्यजैः चण्डालादिभिः गर्दभैः खरैः उष्ट्रैः क्रमेलकैः सह परिवृतस्तिष्ठति। व्रजन् गच्छन् आत्मानं परैः शत्रुभिः पृष्ठतो धावद्भिरनुगतम् अभिभूयमानं मन्यते। मिता.

(३) क्रव्यम् आममांसं तत् अदन्ति ये ते क्रव्यादाः। इति स्वप्ने। * अप.

(४) स्वाप्निकानि सर्वाणि बुद्धिसिद्धान्यवगन्तव्यानि। स्वाप्निकानि लक्षणान्यभिधाय जाग्रद्दशापन्नान्याह— व्रजन्नित्यादि। वस्तुगत्याऽपि व्रजन्नात्मानं परैरनुगतं क्रियमाणपश्चाद्गमनं मन्यते भ्रान्त्या विषयीकरोति। केचित्तु इदमपि स्वाप्निकमेव वर्णयन्ति। परैः शत्रुभिर्धावद्भिरनुगतम् अभिभूयमानं मन्यते इति च ग्रन्थं व्याचक्षते। चकारैर्बहूनां तैलाभ्यङ्गादीनां तत्र तत्राभिहितानां लक्षणानां संग्रहः। ¶ वीमि.

(४) स्वप्ने स्रोतसाऽपह्रियते, तत्र मज्जति वा। न त्ववगाहनमात्रं विवक्षितम्, तस्य शुभसूचकत्वात्। * शाम. ५

* शेषं मितागतम्।

¶ शेषं मितावत्।

[1]विमना विफलारम्भः संसीदत्यनिमित्ततः॥
[2]तेनोपसृष्टो लभते न राज्यं राजनन्दनः।
कुमारी च न भर्तारमपत्यं गर्भमङ्गना॥

[3]आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा।
वणिग्लाभं न चाऽऽप्नोति कृषिं चापि कृषीवलः॥

(१) इदं त्वत्रातिस्पष्टं प्राक्तनाशुभसंयोगनिमित्तम्— तेनोपसृष्ट इति। गर्भिणी अपत्यम्, ऋतुमत्यपि च गर्भमिति च योज्यम्। श्रोत्रियः श्रुतसंपन्नोऽप्याचार्यत्वं न लभते। शिष्यश्च शुचिः शोभनोऽप्रमत्तः शिष्यगुणयुक्तोऽप्यध्यापकमध्ययनं वा न लभते इति व्याख्येयम्। उदाहरणार्थं चैतत्। सर्वथा यो यद्योग्य इति शास्त्रतो लोकतो वाऽवगतः स तदलभमानः प्राक्तनाशुभकर्मोपसृष्ट इत्यवसेयम्। विश्व.

(२) एवं स्वप्नदर्शनान्युक्त्वा प्रत्यक्षलिङ्गान्याह— विमना इति। विमनाः विक्षिप्तचित्तः। विफलारम्भः विफला आरम्भा यस्य स तथोक्तः, न क्वचित्फलमाप्नोति। संसीदत्यनिमित्ततः विना कारणेन दीनमनस्को भवति। राजनन्दनः राजकुले जातः श्रुतशौर्यधैर्यादिगुणयुक्तोऽपि राज्यं न लभते। कुमारी रूपलक्षणाभिजनादिसंपन्नाऽपीप्सितं भर्तारम्। अङ्गना गर्भिणी अपत्यम्। ऋतुमती गर्भम्। अध्ययनतदर्थज्ञाने सत्यपि

(१) यास्मृ. १।२७४; विश्व. १।२७०; मिता.; अप. १।२७३; वीमि.; शाम. ५ निमित्ततः (निमित्तकः); विपा. २४ संसीद (स सीद).

(२) यास्मृ. १।२७५; विश्व. १।२७१ च न (न च) मङ्गना (मेव च); मिता.; अप. १।२७४ राज्यं (राष्ट्रं); वीमि. च न भर्तारमपत्यं (न च भर्तारं नापत्यं); शाम. ५ च न (नैव); विपा. २४ च न (न च).

(३) यास्मृ. १।२७६; विश्व. १।२७२ यश्च (यः सन्) चापि (चैव); मिता.; अप. १।२७५ चापि (चैव); वीमि.; शाम. ५ न चा (च ना); विपा. २४ शामवत्.

आचार्यत्वं श्रोत्रियः। विनयाचारादियुक्तोऽपि शिष्योऽध्ययनं श्रवणं वा। न लभते इति सर्वत्र संबध्यते। वणिक् वाणिज्योपजीवी तत्र कुशलोऽपि धान्यादिक्रयविक्रयादिषु लाभम्, कृषीवलः कर्षकः तत्राभियुक्तोऽपि कृषिफलं नाऽऽप्नोति। एवं यो यया वृत्त्या जीवति स तत्र निष्फलारम्भश्चेत्तेनोपसृष्टो वेदितव्यः। ¶ मिता.

(३) अनिमित्ततः दृष्टकारणाभावतः। $ अप.

(४) एवं लिङ्गान्युक्त्वा कर्मविघ्नांस्तत्प्रयुक्तानाह— तेनोपसृष्टो लभते इत्यादि। कुमारी गर्भिणीत्यत्र उपसृष्टेति लिङ्गविपरिणामेनान्वयः। आचार्यत्वम् उपनीयाध्यापकत्वजन्यसंस्कारविशेषरूपः(? पम्)। ‡ वीमि.

विनायकोपसृष्टस्य सेतिकर्तव्यताकं स्नपनम्

**[१]स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम्।**
**गौरसर्षपकल्केन साज्येनोत्सादितस्य च॥**

**[२]सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा।**
**भद्रासनोपविष्टस्य स्वस्ति वाच्या द्विजाः शुभाः॥**

(१) अयं त्वत्र प्रतिसमाधिः— स्नपनमिति। तथा स्नपनं कर्तव्यमिति संबन्धः। पुण्याहः चन्द्रबलादियोगः। उच्छादनम् उद्वर्तनम्। तच्च सद्यःपिष्टेन गौरसर्षपकल्केन। तुशब्दात्तेनैव शिरसो विलेपनम्। तथाशब्दाच्च सर्वौषधिगन्धैरुद्वर्तनम्। अप्रतिषिद्धौषधगन्धापेक्षः सर्वशब्दः। भद्रासनं शोभनमासनम्। स्वस्तिवाचनं ब्राह्मणेभ्यो हिरण्यादिदानम्। विश्व.

(२) एवं कारकज्ञापकहेतूनभिधाय विघ्नोपशान्त्यर्थं कर्मविधानमाह—स्नपनमिति। तस्य विनायकोपसृष्टस्य अनागतविनायकोपसर्गपरिहारार्थिनो वा स्नपनम् अभिषेचनं कर्तव्यम्। पुण्ये स्वानुकूलनक्षत्रादियुक्ते। अह्नि दिवसे, न रात्रौ। विधिपूर्वकं शास्त्रोक्तेतिकर्तव्यतासहितम्। स्नपनविधिमाह— गौरसर्षपेति। गौरसर्षपकल्केन सिद्धार्थपिष्टेन साज्येन घृतलोलीकृतेनोत्सादितस्योद्वर्तिताङ्गस्य तथा सर्वौषधैः प्रियङ्गुनागकेसरादिभिः सर्वगन्धैः चन्दनागुरुकस्तूरिकादिभिर्विलिप्तशिरसो वक्ष्यमाणभद्रासनोपविष्टस्य पुरुषस्य द्विजाः ब्राह्मणाः शुभाः श्रुताध्ययनवृत्तसंपन्नाः शोभनाकृतयश्चत्वारः 'अस्य स्वस्ति भवन्तो ब्रुवन्तु' इति वाच्याः। अस्मिन् समये गृह्योक्तमार्गेण पुण्याहवाचनं कुर्यादित्यर्थः। मिता.

(३) तस्य विनायकोपसृष्टस्य तदुपसर्गशान्तये पुण्याहे वक्ष्यमाणविधिना स्नपनं कार्यम्। यत्तु भविष्यत्पुराणे 'शुक्लपक्षे चतुर्थ्यां च वारेण धिषणस्य च। तिष्ये च वीरनक्षत्रे तस्यैव पुरतो नृप॥' इति, तत्तु श्रीकामविनायकस्नपने द्रष्टव्यम्। तदुपसृष्टस्नपनविषयाणां तु पुण्याहविधानम्, उपसृष्टस्य चिरकालविलम्बायोगात्। धिषणो बृहस्पतिः। तस्यैव विनायकस्येत्यर्थः। स्नपनविधिमाह— गौरसर्षपकल्केनेति। शुक्लसर्षपाणां चूर्णेनाऽऽज्यसहितेन स उद्वर्तनीयः, ततः सर्वौषधैः सगन्धैश्चूर्णितैः सोदकैर्विलिप्तमस्तकः कार्यः, ततो भद्रासन उपवेश्यः, ततस्तस्य 'स्वस्ति भवन्तो ब्रुवन्तु' इति द्विजाः विप्राः शुभाः कल्याणं वाच्याः। अत्र कर्तरि षष्ठी। ततश्च तेन वाच्या इत्यर्थः। तत्सा(? उत्सा)दनादि शिवादिदेवपूजां कृत्वा कार्यमित्युक्तं भविष्यत्पुराणे— 'व्योमकेशं तु संपूज्य पार्वतीं भीमजं तथा। कृष्णस्य पितरं तात अर्कमारं सितं तथा॥ धिषणं क्लेदपुत्रं च कोणं लक्ष्म च भारत। विधुंतुदं बाहुलेयं नन्दकस्य च धारिणम्॥'। व्योमकेशः शिवः। भीमजो गणेशः। कृष्णस्य पिता वसुदेवः। आरो भौमः। सितः शुक्रः। क्लेदपुत्रो

¶ शाम., कुभ. मितागतम्।

$ शेषं मितागतम्।

‡ शेषं मितावत्।

(१) यास्मृ. १।२७७; विश्व. १।२७३ साज्येनोत्सादितस्य च (साधेनोच्छादितस्य तु); मिता.; अप. १।२७६; वीमि.; शाम. ५; विपा. २४ स्नपनं (स्नापनं) च (तु); कुभ. १०८८ पू.

(२) यास्मृ. १।२७८; विश्व. १।२७४ वाच्या द्विजाः शुभाः (वाच्य द्विजाञ्छुभान्); मिता.; अप. १।२७७; वीमि.; शाम. ५–६; विपा. २४.

बुधः । कोणः शनैश्चरः । लक्ष्म लक्ष्मवांश्चन्द्रः, पूर्ण इत्यर्थः । विधुंतुदो राहुः । केतुरत्रानुक्तोऽपि ग्राह्यः, साहचर्यात् । बाहुलेयः स्कन्दः । नन्दकस्य धारी विष्णुः । सर्वौषधानि सहदेव्यादीनि । तथा च मत्स्यपुराणम्– 'सहदेवी वचा व्याघ्री बला चातिबला तथा । शङ्खपुष्पी तथा सिंही अष्टमी तु सुवर्चला । महौषध्यष्टकं ह्येतन्महास्नानेषु योजयेत् ॥' । ब्राह्मीसुवर्चलादीनि वा । तथा च भविष्यत्पुराणम्– 'ब्राह्मी सुवर्चला मुस्ता विष्णुक्रान्ता शतावरी । दुर्लभा शङ्खपुष्पी च प्रियङ्गुरजनी( ? ङ्गू रजनी ) वचा ॥' । सुरादीनि वा । तथा च स्मृतिः– 'सुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् । सती चम्पकमुस्तं च सर्वौषधिगणः स्मृतः ॥' । सुरा ताभोरा इति प्रसिद्धा । रजनीद्वयं हरिद्रादारुहरिद्रे । सती कर्पूरविशेषः । वालुकादीनि वा । तथा च वसिष्ठः– 'वालुका शङ्खपुष्पी च कुष्ठं चैव वचा तथा । नागकेसरचूर्णं च सर्वौषधिगणो भृगो ॥' । अप.

( ४ ) 'सुरा मांसी ... सर्वौषधिगणः स्मृतः ॥' इति परिभाषितैः, 'व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः । यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः ॥' इति परिभाषितैर्वा सर्वौषधैः, 'कस्तूरिकाया द्वौ भागौ चत्वारः कुङ्कुमस्य च । षोडशश्चन्दनस्यैकः कर्पूरस्य चतुष्टयम् । सर्वगन्ध इति प्रोक्तः समस्तसुरवल्लभः ॥' इति परिभाषितैश्च सर्वगन्धैर्विलिप्तशिरसः । 'कुङ्कुमागुरुकर्पूरजातिफलरूपः सर्वगन्धः' इति कल्पतरुः । भद्रासनं शुचिस्वनुलिप्तस्थण्डिलोपरिरचितपञ्चवर्णस्वस्तिके देशे आस्तीर्णवक्ष्यमाणचर्मणि स्थितं काश्मरीनिर्मितं वस्त्राच्छादितमासनम् । तत्रोपविष्टस्य सतः द्विजास्त्रयः शुभाः सौम्यमूर्तयः श्रुताध्ययनवृत्तसंपन्नाः 'स्वस्ति भवन्तो ब्रुवन्तु' इति वाच्याः । गुरुणा गृह्योक्तक्रमेण पुण्याहवाचनं कुर्यादिति पर्यवसितार्थः । चत्वारः स्वस्ति वाच्या इति मिताक्षरा । * वीमि.

* शेषं मितागतम् ।

( ५ ) वेद्यां सितवस्त्रप्रच्छादितश्रीपर्णीपीठं भद्रासनम् । * शाम. ६

[1]**अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् । मृत्तिकां रोचनां गन्धान् गुग्गुलं चाप्सु निक्षिपेत् ॥**

[2]**या आहृता ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् । चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः ॥**

( १ ) यथायोगं कल्पना । विश्व.

( २ ) किंच । अश्वस्थानगजस्थानवल्मीकसरित्संगमाशोष्यह्रदेभ्यः आहृतां पञ्चविधां मृदं गोरोचनं गन्धान् चन्दनकुङ्कुमागुरुप्रभृतीन् गुग्गुलं च तास्वप्सु विनिक्षिपेत् । या आप आहृता एकवर्णैः समानवर्णैश्चतुर्भिः कुम्भैः अव्रणास्फुटिताकालकैः ह्रदात् अशोष्यात् संगमाद्वा । ततश्चाऽऽनडुहे चर्मणि रक्ते लोहितवर्णे उत्तरलोमनि प्राचीनग्रीवे भद्रं मनोरममासनं श्रीपर्णीनिर्मितं स्थाप्यम् । ततः उक्तोदकमृत्तिकागन्धादिसहितान् चूतादिपल्लवोपशोभिताननान् स्रग्दामवेष्टितकण्ठांश्चन्दनचर्चितान् नवाहतवस्त्रविभूषितान् चतसृषु पूर्वादिदिक्षु स्थापयित्वा शुचौ सुलिप्ते स्थण्डिले रचितपञ्चवर्णस्वस्तिके लोहितमानडुहं चर्म उत्तरलोम प्राचीनग्रीवमास्तीर्य तस्योपरि श्वेतवस्त्रप्रच्छादितमासनं स्थापयेदित्येतद्भद्रासनम् । तस्मिन्नुपविष्टस्य स्वस्ति वाच्याः द्विजाः । ¶ मिता.

* शेषं अपवत् ।

¶ शाम. मितागतम् ।

( १ ) यास्मृ. १।२७९ ; विश्व. १।२७५ गुग्गुलं ( गुल्गुलुं ) निक्षि ( संक्षि ) ; मिता. ; अप. १।२७८ चाप्सु नि ( च विनि ) ; वीमि. ; शाम. ६ गन्धान् गुग्गुलं ( गन्धं गुग्गुलुं ) ; विपा. २४ गन्धान् ( गन्धं ).

( २ ) यास्मृ. १।२८० ; विश्व. १।२७६ ह्येक ( एक ) ततः ( तथा ) ; मिता. ; अप. १।२७९ ; वीमि. ; शाम. ६ ह्येक ( एक ) स्थाप्यं ( स्थाप्य ) ; विपा. २४ ता ह्येक ( तास्त्वेक ) स्थाप्यं ( स्थाप्य ) ( चन्दनागुरुकस्तूरीकर्पूराद्याः सुगन्धयः । ) इदमर्धं पूर्वोत्तरार्धयोर्मध्ये अधिकमुपलभ्यते.

(३) अनः शकटं यो वहति (तत् ?) सोऽनड्वान् बलीवर्दः । तच्चर्मणि लोहिते भद्रासनं प्रतिष्ठातन्त्रोक्तं ततः अप्सु मृदादिप्रक्षेपादनन्तरं स्थाप्यम् ।

* अप.

(४) तास्वप्सु कलशस्थाने च निक्षिपेत् ।

* वीमि.

**[१]सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ।**
**तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥**

(१) अमी तु स्नपनमन्त्राः— सहस्राक्षमिति (मन्त्रत्रयम्) । विश्व.

(२) किंच । स्वस्तिवाचनानन्तरं जीवत्पतिपुत्राभिः रूपगुणशालिनीभिः सुवेषाभिः कृतमङ्गलं पूर्वदिग्देशावस्थितं कलशमादायानेन मन्त्रेणाभिषिञ्चेद्गुरुः । सहस्राक्षम् अनेकशक्तिकं शतधारं बहुप्रवाहम् ऋषिभिर्मन्वादिभिर्यदुदकं पावनं पवित्रं कृतम् उत्पादितं तेनोदकेन त्वां विनायकोपसृष्टं विनायकोपसर्गशान्तये अभिषिञ्चामि । पावमान्यश्चैता आपस्त्वां पुनन्तु । $ मिता.

(३) तथा पतिपुत्रवतीभिः कृतमङ्गलं भद्रासनोपविष्टं पूर्वदिगादिस्थैश्चतुर्भिः कलशैः सहस्राक्षमित्यादिश्लोकत्रयात्मकमन्त्रेण प्रतिकलशमावृत्तेन गुरुः स्नापयेत् । एवं च कर्मपूर्वं गुरोर्वरणमप्यायाति । अत एवाभिषिञ्चामीति मन्त्रलिङ्गसंगतिः । केचित्तु एकैकश्लोकात्मकैस्त्रिभिर्मन्त्रैः कलशत्रयेण प्रत्येकं स्नपनम्, मिलितश्लोकमन्त्रेण चतुर्थकलशेन स्नानम्, 'सर्वैर्मन्त्रैश्चतुर्थम्' इति स्मृत्यन्तरादित्याहुः । * वीमि.

**[२]भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ।**
**भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥**

* शेषं मितावत् ।

$ शाम. मितागतम् ।

(१) यास्मृ. १।२८१ ; विश्व. १।२७७ पावमान्यः (पावमानीः) ; मिता ; अप. १।२८० ; वीमि. ; शाम. ६ विश्ववत् ; विपा. २४.

(२) यास्मृ. १।२८२ ; विश्व. १।२७८ ; मिता. ; अप. १।२८१ ; वीमि. ; शाम. ६ ; विपा. २४–२५.

तदनन्तरं दक्षिणदेशावस्थितं द्वितीयं कलशमादायानेन मन्त्रेणाभिषिञ्चेत् । भगं कल्याणं ते तुभ्यं वरुणो राजा, भगं सूर्यः, भगं बृहस्पतिः, भगमिन्द्रश्च वायुश्च, भगं सप्तर्षयश्च ददुरिति । *मिता.

**[१]यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ।**
**ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा ॥**

(१) त्रिभिर्मन्त्रैः प्रतिमन्त्रं कलशत्रयेण स्नापनम् । चतुर्थेन त्वविशेषात् सर्वमन्त्रैरेव । मन्त्रार्थास्तु व्याख्यातृभ्योऽवसेयाः । विश्व.

(२) ततस्तृतीयं कलशमादायानेन मन्त्रेणाभिषिञ्चेत् । ते तव केशेषु यद्दौर्भाग्यम् अकल्याणं सीमन्ते मूर्धनि च ललाटे कर्णयोरक्ष्णोश्च तत्सर्वमापो देव्यो घ्नन्तु उपशमयन्तु सर्वदेति । ततश्चतुर्थं कलशमादाय पूर्वोक्तैस्त्रिभिर्मन्त्रैरभिषिञ्चेत्, 'सर्वमन्त्रैश्चतुर्थम्' इति स्मृतिलिङ्गात् । $ मिता.

(३) सहस्राक्षमित्यादिभिर्मन्त्रैस्त्रिभिरेकैकेन कलशेन विनायकोपसृष्टस्य गुरुः स्नपनं करोति । प्रतिकलशं मन्त्रत्रयावृत्तिः । अप.

विनायकोपसृष्टस्य मूर्धनि होमः

**[२]स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण तु ।**
**जुहुयान्मूर्धनि कुशान्सव्येन परिगृह्य च ॥**

(१) एवं तावत्कलशचतुष्टयेनापि स्नातस्य...... परिगृह्य च । चशब्दो दक्षिणजान्वञ्चनादिप्रकारार्थः । विश्व.

* वीमि., शाम. मितागतम् ।

$ वीमि. मितागतम् ।

(१) यास्मृ. १।२८३ ; विश्व. १।२७९ सर्वदा (ते सदा) ; मिता. ; अप. १।२८२ विश्ववत् ; वीमि. ; शाम. ६ विश्ववत् ; विपा. २५ विश्ववत् .

(२) यास्मृ. १।२८४ ; विश्व. १।२८० ; मिता. ; अप. १।२८३ ; वीमि. तु (च) ; शाम. ६ ; विपा. २५ पं तैलं (पैस्तैलैः) परि (प्रति).

(२) उक्तेन प्रकारेण कृताभिषेकस्य मूर्धनि सव्यपाणिगृहीतकुशान्तर्हिते सार्षपं तैलम् उदुम्बरवृक्षोद्भवेन स्रुवेण वक्ष्यमाणैर्मन्त्रैर्जुहुयादाचार्यः । † मिता.

[१]**मितश्च संमितश्चैव तथा शालकटङ्कटः ।**
**कूष्माण्डराजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ॥**

(१) अमी तु होममन्त्राः— मितश्चेत्यादि । चत्वारो विनायकमन्त्राः । एतान्येव चतुर्णां नामानि । तत्र स्वाहाकारान्तैर्जपबलिकर्मणी स्वरूपेणैव वा बलिकर्मेति । अयं च प्रयोगप्रकारः— मिताय स्वाहा, संमिताय स्वाहा, सालकटङ्कटाय स्वाहा, कूश्माण्डराजपुत्राय स्वाहेति । चशब्दद्वयेन मितसंमितयोर्भेदं दर्शयन्नितरयोस्तदभावात् समासकरणाच्चाभेदं दर्शयति । अतश्चत्वार एव मन्त्रा इति । एवं तावद्गृह एव कर्म । विश्व.

(२) मितसंमितादिभिर्विनायकस्य नामभिः स्वाहाकारान्तैः प्रणवादिभिर्जुहुयादिति गतेन संबन्धः । स्वाहाकारयोगाच्चतुर्थी विभक्तिः । अतश्च ॐ मिताय स्वाहा, ॐ संमिताय स्वाहा, ॐ शालाय स्वाहा, ॐ कटङ्कटाय स्वाहा, ॐ कूष्माण्डाय स्वाहा, ॐ राजपुत्राय स्वाहेति षण्मन्त्रा भवन्ति । मिता.

(३) पूर्वोक्तेन प्रकारेण स्नातस्य शिरसि सव्येन पाणिना कुशान्परिगृह्येतरपाणिगृहीतेनौदुम्बरवृक्षमयेन स्रुवेण सर्षपतैलं मिताय स्वाहा, संमिताय स्वाहा, शालकटङ्कटाय स्वाहा, §कूष्माण्डराजपुत्राय स्वाहेति गुरुर्जुहुयात् । अप.

(४) एवकारः इतिकारेणान्वितः, तेन इति नामभिरेव न तु विनायकनाम्नेति व्यवच्छिद्यते । पूर्वश्लोकस्थचकाराभ्यां तैलं च मूर्धनि चेति योजिताभ्यां मूर्धाधिकरणकतैलहोमानन्तरं षड्भिर्नामभिः लौकिकाग्निपक्वस्थालीपाकहोमो लौकिकाग्नौ स्मृत्यन्तरेण बोधितः समुच्चीयते । मितश्चेति चकारेण प्रत्येकं षण्णां नाम्नां मन्त्रत्वमुक्तम् । ¶ वीमि.

(५) एतानि षट् विनायकनामानि इति विज्ञानेश्वरः । अपरार्कस्तु शालकटङ्कट इत्येकवचनान्तं पपाठ । तेन तन्मते पञ्चैवाऽऽहुतयो भवन्ति । शाम. ६

बलिदानम् अर्घ्यदानम् उपस्थानं च

[१]**नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः ।**
**दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ॥**

[२]**कृताकृतांस्तण्डुलांश्च पललौदनमेव च ।**
**मत्स्यान्पक्वांस्तथैवाऽऽमान्मांसमेतावदेव तु ॥**

[३]**पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि ।**
**मूलकं पूरिकापूपांस्तथैवोण्डेरकस्रजः ॥**

[४]**दध्यन्नं पायसं चैव गुडपिष्टं समोदकम् ।**
**एतान्सर्वान्समाहृत्य भूमौ कृत्वा ततः शिरः ॥**

---

† वीमि., शाम. मितागतम् ।

§ आदर्शपुस्तके एवमेव पाठः । 'मितादिभिश्चतुर्भिर्नामभिः' इत्यग्रिमो ग्रन्थश्च तदुपोद्बलकः । शान्तिमयूखात्तु 'कूष्माण्डाय स्वाहा' इति पृथङ्मन्त्रोऽपरार्काभिमत इति प्रतीयते ।

(१) यास्मृ. १।२८५; विश्व. १।२८१ शाल (साल) ष्माण्ड (श्माण्ड); मिता. ङ्कटः (ङ्कटौ) ष्माण्डरा (ष्माण्डो रा); अप. १।२८४; वीमि. मितावत्; शाम. ६ मितावत्; विपा. २५ श्चेत्यन्ते (श्चेत्येतैः) शेषं मितावत्.

¶ शेषं मितागतम् ।

(१) यास्मृ. १।२८६; विश्व. १।२८२; मिता.; अप. १।२८५; वीमि.; शाम. ६ सर्वतः (सर्वशः); विपा. २५.

(२) यास्मृ. १।२८७; विश्व. १।२८३; मिता. तण्डु (तन्दु); अप. १।२८६ स्तथैवा (स्तथा चा); वीमि.; शाम. ६; विपा. २५.

(३) यास्मृ. १।२८८; विश्व. १।२८४ वोण्डे (वोड्डे) स्रजः (स्रजम्); मिता.; अप. १।२८७ त्रिविधा (विविधा) स्रजः (स्रजम्); वीमि. ण्डेरक (ण्डेरिका); शाम. ६ गन्धं (गन्धिं); विपा. २५.

(४) यास्मृ. १।२८९; मिता.; अप. १।२८८ पिष्टं (मिश्रं) पू.; वीमि. सर्वान्समा (सर्वानुपा); शाम. ६;

[1]विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् ।
दूर्वासर्षपपुष्पाणां दत्त्वाऽर्घ्यं पूर्णमञ्जलिम् ॥
[2]रूपं देहि यशो देहि भगं भवति देहि मे ।
पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे ॥

(१) अतः परं तु– नामभिरिति । नामानि मितादीनि । बलिमन्त्रा बलिदानविहिताः 'नमस्क्रिया' इत्येवमादयः (?) । अत्र हि बलिलिङ्गयोगोऽस्ति 'नमोऽस्तु बलिमेभ्यो हरामि' इति । उपस्थाने चाम्बिकादर्शनात् स्त्रीमन्त्रत्वादेत एव युक्ताः । चतुष्पथे कुशास्तरणम्, न शूर्पे । स्पष्टमन्यत् । किं पुनस्तच्छूर्पे देयम्– कृताकृतानिति । कृताः फलीकृताः । अकृताः अफलीकृताः । चशब्दादोदनमपि द्विरूपमेव । मांसमप्येतावदेव पक्वमामं चेत्यर्थः । किंच– पुष्पमिति । एतत्सर्वं नामभिर्बलिमन्त्रैश्च दत्त्वा, अनन्तरम्– दूर्वेति । पूर्वमन्त्रैरेव । विनायकस्येति । अम्बिका चात्र बुद्धिरुच्यते । सा ह्यशुभनिमित्तं लोभादिं जनयति । यद्वा देव्येवाम्बिका रुद्रपत्नी, अधिकारनित्यत्वेनेत्युभयथाऽप्यदोषः । अयं तूपस्थानमन्त्रः– रूपमिति । विश्व.

(२) अनन्तरं लौकिकेऽग्नौ स्थालीपाकविधिना चरुं श्रपयित्वा एतैरेव षड्भिर्मन्त्रैस्तस्मिन्नेवाग्नौ हुत्वा तच्छेषं बलिमन्त्रैरिन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तानां नामभिश्चतुर्थ्यन्तैर्नमोन्वितैस्तेभ्यो बलिं दद्यात् । अनन्तरं किं कुर्यादित्याह– दद्यादिति । कृताकृताद्युपहारद्रव्यजातं विनायकस्योपाहृत्य, संनिधानात्तज्जनन्याश्च, शिरसा भूमिं गत्वा 'तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥' इत्यनेन मन्त्रेण विनायकम्, 'सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो गौरी प्रचोदयात् ॥' इत्यनेनाम्बिकां च नमस्कुर्यात् । तत उपहारशेषमास्तीर्णकुशे शूर्पे निधाय चतुष्पथे निदध्यात् 'बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा । मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ असुरा यातुधानाश्च पिशाचोरगमातरः । शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥ जृम्भकाः सिद्धगन्धर्वा मायाविद्याधरा नराः । दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥ जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः । मा विघ्नो मा च मे पापं मा सन्तु परिपन्थिनः । सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥' इत्येतैर्मन्त्रैः । कृताकृताः सकृदवहतास्तन्दुलाः । पललं तिलपिष्टम् । तन्मिश्र ओदनः पललौदनः । मत्स्याः पक्वा अपक्वाश्च । मांसमेतावदेव पक्वमपक्वं च । पुष्पं चित्रं रक्तपीतादिनानावर्णम् । चन्दनादि सुगन्धिद्रव्यम् । सुरा त्रिविधा गौडी माध्वी पैष्टी च । मूलकं मूलकः कन्दाकारो भक्ष्यविशेषः । पूरिका प्रसिद्धा । अपूपः अस्नेह( ? स्नेह )पक्वो गोधूमविकारः । उण्डेरकस्रजः, उण्डेरकाः पिष्टादिमय्यः, ताः प्रोताः स्रजः । दध्यन्नं दधिमिश्रमन्नम् । पायसं क्षैरेयी । गुडपिष्टं गुडमिश्रं शाल्यादिपिष्टम् । मोदकाः लड्डुकाः । अनन्तरं विनायकं तज्जननीमम्बिकां वक्ष्यमाणमन्त्रेणोपतिष्ठेत् । किं कृत्वेत्याह– दूर्वेति । सकुसुमोदकेनार्घ्यं दत्त्वा दूर्वासर्षपपुष्पाणां पूर्णमञ्जलिं दत्त्वोपतिष्ठेदिति गतेन संबन्धः । उपस्थानमन्त्रमाह– रूपमिति । विनायकोपस्थाने भगवन्नित्यूहः । मिता.

(३) तैरेव मितादिभिश्चतुर्भिर्नामभिश्चतुर्थ्यन्तैर्नमस्कारसमन्वितैश्चतुष्पथे शूर्पे स्थापयित्वा तत्र च सर्वतः सर्वदिगग्रान्कुशानास्तीर्य कृताकृततण्डुलादिरूपं बलिं

---

विपा. २५ पिष्टं (मिश्रं) शेषं वीमिवत्. विश्वरूपपुस्तके इदं वचनं नोपलभ्यते ।

(१) यास्मृ. १।२९० ; विश्व. १।२८५ पुष्पाणां (कल्केन) श्लोकार्धौ व्यत्यासेन पठितौ ; मिता. ; अप. १।२८८–२८९ ततो (तदा) त्वाऽर्घ्यं (त्वाऽर्घं) ; वीमि. ; शाम. ७ त्वाऽर्घ्यं (त्वाऽर्घं) सर्वका (सर्वान् का) ; विपा. २५.

(२) यास्मृ. १।२९१ ; विश्व. १।२८६ धनं देहि (श्रियं पुण्यान्) ; मिता. भवति (भगवन्) अप. १।२८९–२९० ; वीमि. भवति (भगवति) सर्वका (सर्वान् का) ; शाम. ७ सर्वका (सर्वान् का) ; विपा. २६ शामवत्, 'भगवन्देहि मे भगम्' इत्यूहः ।

दद्यात् । नामभिर्बलिमन्त्रैश्चेति विशेषेण निर्देशात् मितादिनामभिश्चतुर्थ्यन्तैर्नमस्कारमन्त्रैर्बलिमन्त्रतामापन्नैर्बलिर्देय इति गम्यते । अवघातादिना येषां व्रीहीणां तण्डुलीभावः प्रारब्धापरिसमाप्तश्चैते ( ? प्रारब्धोऽपरिसमाप्तश्च ते ) कृताकृतास्तण्डुलाः । तिलपिष्टमिश्र ओदनः पललौदनः । मूलकं शाकादिविशेषः । भृष्टा लोपिकाः पूरिकाः । क्षुद्रापूपास्तूण्डेरकाः । प्रसिद्धमन्यत् । एतत्सर्वमेकस्मिन्पात्रे कृत्वा सकृदेव दद्यात् । दूर्वया सर्षपैः पुष्पैरुदकेन च पूर्णमञ्जलिमर्घ्यं विधाय विनायकस्य जनन्यै अम्बिकायै दत्त्वा 'रूपं देहि' इत्यनेन तामुपतिष्ठेत ।

अप.

( ४ ) चकारादयोऽव्ययशब्दाः परस्परसाहित्यावश्यकत्वार्थाः । मन्त्रे च भगवन्निति पुंलिङ्गोहः कार्य इति सांप्रदायिकाः । अत्रोपहारादिकं सर्वं कर्म यजमानकृत्यम्, उपहर्तव्यमन्त्रलिङ्गादिति वदन्ति । ¶ वीमि.

( ५ ) अत्र लौकिकेऽग्नौ स्थालीपाकविधिना चरुं कृत्वा तेभ्य एवाऽऽहुतिषट्कं हुत्वेन्द्रादिदशलोकपालेभ्यस्तत्तन्नाम्ना बलिं दद्यादिति मिताक्षरायाम् । तत्र चरुहोमे इन्द्रादिभ्यो बलिदाने च मूलं चिन्त्यम् । अन्ते स्वाहासमन्वितैर्नामभिर्जुहुयात्, नमस्कारसमन्वितैश्चेत्यादिभ्य( ? श्च मितादिभ्य ) एव बलिं दद्यादिति वक्ष्यमाणेन संबध्यते इति तु युक्तम् ।

पललौदनः तिलपिष्टमिश्र ओदन इति मिताक्षरायाम् । अपक्वमांसमिश्र ओदन इति तु युक्तम्, 'पललं क्रव्यमामिषम्' इति कोशात् । मूलकं कन्दाकारो भक्ष्यविशेष इति मिताक्षरायाम् । स्वरूपत एव ग्राह्यमिति तु युक्तम् । उभयमपि ग्राह्यमिति महार्णवे । उण्डेरकाः पिष्टविकारा नानाविधाः, ते स्रज इत्युच्यन्ते । अत्र सुरा मांसं चाब्राह्मणविषयम्, ब्राह्मणैस्तु मांससुरास्थाने तु सलवणं पायसं दुग्धं च ग्राह्यम्, 'पायसं लवणोपेतं मांसस्थाने प्रकल्पयेत् । दुग्धं लवणसंमिश्रं सुरास्थाने प्रकल्पयेत् ॥' इति स्मरणादिति महार्णवादिषु । दद्यादित्यत्रापि देहलीदीपवदन्वेति ।

¶ शेषं मितावत् ।

भगवन्नित्यूह्य विनायकमप्युपतिष्ठेतेति विज्ञानेश्वरः । अत्र मदनः विनायकोपस्थानं कृत्वा अम्बिकोपस्थानं कार्यमित्याह । ¶ शाम. ६–७

ब्राह्मणभोजनं वस्त्रादिदानं च

**[१]ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।**
**ब्राह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ॥**

( १ ) एवमुपस्थाय ततः– तत इति । गुरुः स्नापकः । स्पष्टमन्यत् । विश्व.

( २ ) ततोऽभिषेकानन्तरं यजमानः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनो ब्राह्मणान्भोजयेद्यथाशक्ति । गुरवे श्रुताध्ययनवृत्तसंपन्नाय विनायकस्नपनविधिज्ञाय वस्त्रयुग्मं दद्यात् । अपिशब्दाद्यथाशक्ति दक्षिणां विनायकोद्देशेन ब्राह्मणेभ्यश्च । तत्रायं प्रयोगक्रमः– चतुर्भिर्ब्राह्मणैः सार्धमुक्तलक्षणो गुरुर्मन्त्रज्ञो भद्रासनरचनानन्तरं तत्संनिधौ विनायकं तज्जननीं चोक्तमन्त्राभ्यां गन्धपुष्पादिभिः समभ्यर्च्य चरुं श्रपयित्वा भद्रासनोपविष्टस्य यजमानस्य पुण्याहवाचनं कृत्वा चतुर्भिः कलशैरभिषिच्य सार्षपं तैलं शिरसि हुत्वा चरुहोमं विधायाभिषेकशालायां चतुर्दिक्षु इन्द्रादिलोकपालेभ्यो बलिं दद्यात् । यजमानस्तु स्नानानन्तरं शुक्लमाल्याम्बरधरो गुरुणा सहितो विनायकाम्बिकाभ्यामुपहारं दत्त्वा शिरसा भूमिं गत्वा कुसुमोदकेनार्घ्यं दत्त्वा दूर्वासर्षपपुष्पाञ्जलिं च दत्त्वा विनायकमम्बिकां चोपतिष्ठेत् । गुरुरुपहारशेषं शूर्पे कृत्वा चत्वरे निदध्यात् । अनन्तरं वस्त्रयुग्मं दक्षिणां ब्राह्मणभोजनं च दद्यादिति । इति विनायकस्नपनविधिः ।

मिता.

( ३ ) अम्बिकामुपस्थाय शुक्ले वाससी परिधाय शुक्लमाल्यानुलेपनैश्चाऽऽत्मानमलङ्कृत्य ब्राह्मणान् भोजयेत् । गुरवे च वस्त्रद्वयं दद्यात् । गुरुशब्दप्रयोगात्स्नपनकर्ता गुरुवत्पूज्य इति गमयति । अप.

¶ शेषं मितावत् ।

( १ ) यास्मृ. १।२९२ ; विश्व. १।२८७ पूर्वार्धे ( शुक्लाम्बरधरः शुक्लगन्धमाल्यानुलेपनः । ) ; मिता. ; अप. १।२९०–२९१ ; वीमि. ; शाम. ७ ; विपा. २६.

( ४ ) वस्त्रे एव दक्षिणा, अपिशब्दस्तु भोजनसमुच्चयार्थ इत्यप्याहुः । $वीमि.

( ५ ) गुरोराचार्याय । अपिशब्दाद्दक्षिणामपि ।

शाम. ७

विनायकस्नपनस्य ग्रहयज्ञस्य च कर्माङ्गत्वं काम्यत्वं च

[1]**एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ।**
**कर्मणां फलमाप्नोति श्रियं चाऽऽप्नोत्यनुत्तमाम् ॥**

( १ ) अशुभक्षपणार्थत्वादस्य कर्मणः क्षीणाशुभस्य कर्मफलावाप्तिरनवद्या । यस्तु पुण्यकृदिवोपलभ्यते, सोऽप्येतत्कृत्वा श्रियमनुत्तमां प्राप्नोति । अतस्तेनापि कर्तव्यमेव, 'आ मृत्योः श्रियमाकाङ्क्षेत्' इति वचनात् । ग्रहपूजाविधानं च वक्ष्यमाणं द्रष्टव्यम् । विश्व.

( २ ) अस्यैव विनायकस्नपनस्योक्तोपसंहारेण संयोगान्तरं दर्शयितुमाह— एवमिति । एवम् उक्तेन प्रकारेण विनायकं संपूज्य कर्मणां फलमविघ्नेनाऽऽप्नोतीत्युक्तोपसंहारः । संयोगान्तरमाह— श्रियं चोत्कृष्टतमामाप्नोतीति । श्रीकामश्चानेनैव विधानेन विनायकं पूजयेदित्यर्थः । आदित्यादिग्रहपीडाशान्तिकामस्य लक्ष्म्यादिकामस्य च ग्रहपूजादिकल्पं विधास्यन् ग्रहपूजामुपक्षिपति— ग्रहांश्चैव विधानत इति । ग्रहान् आदित्यादीन् वक्ष्यमाणेन विधिना संपूज्य कर्मणां सिद्धिमाप्नोति श्रियं चाऽऽप्नोति । मिता.

( ३ ) न विद्यते उत्तमा यस्याः सा अनुत्तमा । आप्नोतीति पुनर्वचनं श्रीकामं प्रति विनायकादिपूजायाः पृथग्विधानार्थम् । * अप.

( ४ ) चकारात् ग्रहयज्ञवक्ष्यमाणफलान्तराणां समुच्चयः । कर्मफलसिद्धेर्वक्ष्यमाणग्रहपूजाफलत्वमाह— ग्रहांश्चेति । पूज्य इति छान्दसः प्रयोगः । चकारेण ग्रहपूजायां ब्राह्मणभोजनाद्युत्तराङ्गसमुच्चयः । एवकारोऽवधारणे । तेन प्राप्नोत्येवेत्यन्वयः । § वीमि.

( ५ ) एवंविधं कर्म कुर्वतः फलमुक्तम्— एवमिति । अस्याः कर्माङ्गत्वेन पौष्टिकत्वेन च वर्णचतुष्टयस्याप्यत्राधिकारः, शूद्रस्य तु मन्त्रवर्जम्, तान्प्रक्रम्य 'मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीं क्रियाम् ।' इति मोक्षधर्मश्रवणादिति वदन्ति । महार्णवोऽपि 'यजमानस्तु शूद्रश्चेत्' इति वदन् तस्याधिकारमभिप्रैति । शाम. ७

महागणपत्यादीनां पूजनं तिलककरणं च

[1]**आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ।**
**महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ॥**

( १ ) यस्त्वेवमपि कर्मफलं न प्राप्नुयात् तस्यायमपरोऽभ्युपायः— आदित्यस्येति । अविशेषेण चेयं स्मृतिः । सर्वपुंसां सिद्ध्यर्थं पूजाविधिरवसेयः, सदाशब्दसामर्थ्यात् । स्पष्टमन्यत् । विश्व.

( २ ) नित्यकाम्यसंयोगानाह— आदित्यस्येति । आदित्यस्य भगवतः सदा प्रतिदिवसं रक्तचन्दनकुङ्कुमकुसुमादिभिः पूजां कुर्वन् स्कन्दस्य महागणपतेश्च नित्यं पूजां कुर्वन् सिद्धिं मोक्षम् आत्मज्ञानद्वारेण प्राप्नोतीति नित्यसंयोगः । आदित्यस्कन्दगणपतीनामन्यतमस्य सर्वेषां वा तिलकं स्वर्णादिनिर्मितं रूप्यनिर्मितं वा कुर्वन् सिद्धिम् अभिलषितामाप्नोति, तथा चक्षुषी चेति काम्यसंयोगः । मिता.

---

$ शेषं श्लोकव्याख्यानं मितावत् ।

(१) यास्मृ. १।२९३ ; विश्व. १।२८८ श्चैव ( श्चैवं ) ; मिता. ; अप. १।२९१–२९२ श्रियं चाऽऽ( श्रियमा ) ; गभा. १२६ एवं विनायकं पूज्य ( विनायकं संप्रपूज्य ) चतुर्थपादो नास्ति ; निप्र. २०९ ; प्रर. ५२ चतुर्थपादो नास्ति ; वीमि. ; शाम. ७ अपवत् ; विपा. २३ चतुर्थपादो नास्ति, २६ प्रथमपादमात्रम्, ३० चतुर्थपादो नास्ति ; संकौ. १२८ ; प्रका. २६ विधानतः ( विशेषतः ) : २०८ ; संग. ६७, १०६ एवं ( आदौ ) फल ( सिद्धि) श्रियं चा ( श्रेयश्चा ) त्तमाम् ( त्तमम् ) ; संव. १०७ : १११ पू. ; कृभ. १०८ चाऽऽप्नो ( प्राप्नो ) : १०८९ द्वितीयपादमात्रम् ; संदी. ५५, ७२ संगवत्, वैद्यनाथरुद्रपद्धतौ इत्युक्तम्.

* शेषं मितागतम् ।

§ शेषं मितावत् ।

(१) यास्मृ. १।२९४ ; विश्व. १।२८९ कं स्वा ( कस्वा ) ; मिता. ; अप. १।२९२–२९३ ; वीमि.

[ उभयोः फले तारतम्यमाह– नित्येति । शाश्वताशाश्वतरूपे फले इत्यर्थः । ' नान्यः ' इति श्रुत्यविरोधायाऽऽह– आत्मेति । श्रवणादिवदयमपि तदुपाय इति भावः । मौलक्रमेणाऽऽह– आदित्यादीति( १ त्येति ) । तिलकं प्रतिकृतिम् । अभीति । स्वर्गादिकामित्यर्थः । स्मृत्यन्तरानुरोधेनाऽऽह– तथेति । तद्वदित्यर्थः । चक्षुषी चेति नेत्रे चेत्यर्थः । बाल. ]

( ३ ) आदित्यस्य, स्वामिनः स्कन्दस्य महागणपतेश्च सर्वकालं पूजां तिलकं सुवर्णादिमयं कुर्वन्कर्मफलसिद्धिमवाप्नुयादिति । अप.

( ४ ) विनायकशान्तिप्रसङ्गेन तत्फलीभूतकर्मसिद्धिफलकान्धर्मानाह– आदित्यस्येति । सदा प्रत्यहं सूर्यस्य गणपतेश्च पूजाम्, स्वामिनः कार्तिकेयस्य गोरोचनादिमाङ्गल्येन तिलकं तथापदेन पूजां च कुर्वन्, कर्मणामारब्धानामपेक्षितानां वा सिद्धिं निष्पत्तिमवाप्नोतीत्यर्थः । महत्पदं च महाभारतवत्प्रशंसार्थम्, महेन्द्रवद्वा महागणपतिर्देवतान्तरम्, स्तुतशस्त्रनयात् ( जैसू. २।१।५) । चकारेण पूजाफलान्तरस्य तत्तत्पुराणाद्युक्तस्य समुच्चयः । एवकारः क्रियान्वयी फलावश्यंभावपरः । मिताक्षरायां तु सिद्धिपदं मोक्षपरतया व्याख्यातम्, सुवर्णतिलकस्य पूजायाश्चाऽऽदित्यादौ सर्वत्र संबन्ध उक्तः । तिलकस्य प्रकरणेन तद्दानमप्याक्षिप्यते । वीमि.

## बृहत्पराशरः

विनायकस्य स्तुतिः कर्मविघ्नहेतुत्वं च

**[1]शान्तीनामथ सर्वासां ग्रहशान्तिः परा स्मृता।**
**ग्रहेभ्योऽपि गणेशस्तु तस्य शान्तिरथोच्यते ॥**
**यदि पुंकृतकर्माणि भवन्ति फलदानि हि ।**
**तदा धर्मार्थकामास्तु संसिध्येरन् सदा नृणाम् ॥**
**तन्नृभिः क्रियमाणानां सर्वेषां कर्मणाममुम्।**
**विघ्नार्थमसृजद्ब्रह्मा शङ्करश्च विनायकम् ॥**

( १ ) बृपसं. ११।१–३ .

**[1]तेनोपहतपुंसां तु कर्म स्यान्निष्फलं कृतम् ।**
**स्त्रीणामपि तथा सर्वं क्रियमाणं तु निष्फलम् ॥**

विनायकोपहतानां लक्षणानि

**[2]जलावगाहनं स्वप्ने क्रव्यादारोहणं तथा ।**
**खरोष्ट्रम्लेच्छसंसर्गो मुण्डकाषायवाससम् ॥**
**पश्यत्यात्मानमेवेह सीदन्तं प्रतिवासरम् ।**
**यानि कुर्वन्ति कर्माणि तानि स्युः क्लेशदानि च ॥**

**राजपुत्रो न राज्याप्त्या वराप्त्या न तु कन्यका ।**
**अन्तर्वत्नी अपत्याप्त्या आचार्यत्वेन च द्विजः ॥**

**अधीयानास्तु विद्याप्त्या कृषिकृत्सस्यसंपदा ।**
**वणिग्वर्तनलाभेन युज्यते निर्धनश्च सन् ॥**

विनायकशान्तेः कालः कर्मसिद्धिहेतुत्वं च

**तस्मात्तदुपशान्त्यर्थं समभ्यर्च्य गणेश्वरम् ।**
**स्नपनं कारयेत्तस्य विधिवत्पुण्यवासरे ॥**
**[3]चतुर्थ्यां शुक्लपक्षे तु अयने चोत्तरे शुभे ।**
**पुण्यार्थं सर्वसिद्ध्यर्थं कुर्याच्छान्तिं विनायकीम् ॥**

वृद्ध्यभावश्छान्दस इति । पुण्यार्थं विवाहादिकर्माङ्गतया । देवनक्षत्रं कृत्तिकादिविशाखान्तं किंचिद्ग्राह्यम्, ' यत्पुण्यं नक्षत्रम् ' इति श्रुतेः । कुभ. १०८८

विनायकोपहतस्य स्नपनम्

**[4]स्वासनासीनं संस्थाप्य आरक्तार्षभचर्मणि ।**
**सितसर्षपकल्केन साज्येनाऽऽच्छादितस्य च ॥**

( १ ) बृपसं. ११।४ ; कुभ. १०८९ तु कर्म ( च कर्म ).

( २ ) बृपसं. ११।५–९.

( ३ ) बृपसं. ११।१० ; संकौ. १२८ अयने ( श्रवणे ) शुभे ( तथा ); प्रका. २०८ ; बाल. १।२९४ पृ. ६०३ संकौवत् ; संव. १०७ संकौवत् ; कुभ. १०८८ शुभे ( तथा ).

( ४ ) बृपसं. ११।११–३३.

विलिप्तशिरसस्तस्य गन्धैः सर्वैस्तथौषधैः ।
अष्टौ वा चतुरो वाऽपि स्वस्तिवाच्यान्
(? स्वस्ति वाच्य) द्विजान् शुभान् ॥
एकवर्णैश्चतुर्भिश्च पुम्भिः कुम्भैश्च यज्जलम् ।
समानीतं क्षिपेत्तत्र वक्ष्यमाणमृदस्तथा ॥
अश्वेभस्थानवल्मीकह्रदसंगममृत्तिकाः ।
रोचनां गुग्गुलं गन्धांस्तस्मिन्नम्भसि तान्
क्षिपेत् ॥
एतद्धि पावनं स्नानं सहस्राक्षमृषिस्मृतम् ।
तेन त्वां शतधारेण पावमान्यः पुनन्त्वमुम् ॥
नवभिः पावमानीभिः कुम्भं तमभिमन्त्रयेत् ।
शक्रादिदशदिक्पाला ब्रह्मेशकेशवादयः ॥
आपस्ते घ्नन्तु दौर्भाग्यं शान्तिं ददतु सर्वदा ।
सुमित्रिया न इत्याद्यैर्मन्त्रैरेकेऽभिषेचनम् ॥
वदन्ति वदतां श्रेष्ठा दौर्भाग्यस्योपशान्तये ।
समुद्रा गिरयो नद्यो मुनयश्च पतिव्रताः ॥
दौर्भाग्यं घ्नन्तु मे सर्वे शान्तिं यच्छन्तु
सर्वदा ।
पादगुल्फोरुजङ्घान्त्रनितम्बोदरनाभिषु ॥
स्तनोर(? रो)बाहुहस्ताग्रग्रीवाअंसाङ्गसंधिषु ।
नासाललाटकर्णभ्रूकेशान्तेषु च यत्स्थितम् ॥
तदापो घ्नन्तु दौर्भाग्यं शान्तिं यच्छन्तु सर्वदा ॥

विनायकोपहतस्य शिरसि होमः

स्नातस्य मस्तके दर्भान् साज्येन परिगृह्य च ॥
जुहुयात्सार्षपं तैलमौदुम्बरस्रुवेण तत् ।
मितश्च संमितश्चैव तथा सालकटङ्कटौ ॥
कूष्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ॥

बलिदानम्

नामभिश्च बलिं दद्यान्मन्त्रैर्नमःस्वधान्वितैः ।
चतुष्पथं समाश्रित्य शूर्पे कृत्वा कुशांस्तथा ॥
निधाय तेषु दर्भेषु शुक्लाशुक्लांश्च तण्डुलान् ।
ओदनं पललोपेतं पक्वामान्मत्स्यकानपि ॥
तथा मांसं च कुल्माषांस्तथैव त्रिविधां
सुराम् ।
पूरिका(? को)ण्डेरकापूपान् फलानि मूलकं
स्रजः ॥

पार्वत्या उपस्थानम्, अर्घ्यदानम्, वरयाचना च

गणेशमातुः पार्वत्याः कुर्यादुपस्थितिं पुनः ।
दूर्वासर्षपपुष्पैश्च पूर्णमर्घाञ्जलिं क्षिपेत् ॥
सौभाग्यमम्बिके देहि भगं रूपं यशोऽपि च ।
स्त्रियं पुत्रांश्च कामांश्च तथा शौर्यं च देहि मे ॥
गणेशमातर्हे बाले यत्किंचिन्मदभीप्सितम् ।
एकनाम्नैव तद्देवि देहि गौरि वरान् वरान् ॥

वस्त्रपरिवर्तः, ब्राह्मणभोजनम्, दक्षिणादानं च

ततस्तु वाससी शुक्ले परिधायाहते शुभे ।
सितचन्दनलिप्ताङ्गः सितस्रग्भूषणान्वितः ॥
तानन्यांश्च द्विजान् सर्वान् भोजयेद्विविधाशनैः ।
वस्त्रयुग्मं गुरोर्दद्यात्तेषु तस्य वराशिषः ॥

विनायकशान्तेः कर्माङ्गत्वं काम्यत्वं च

एतेन संपूज्य गणाधिनाथं
विघ्नोपशान्त्यै जननीं तथाऽस्य ।
स्मार्तोक्तसम्यग्विधिना स कामान्
प्राप्नोति चान्या(? न्य)न्मनसा
यदिच्छेत् ॥

कर्मसिद्ध्यर्थमम्बिकादिपूजनम्

स्नात्वा विधायार्चनमम्बिकायाः
संपूज्य लोकान्सखिबन्धुमिश्रान् ।
आचार्यवृद्धान्वनिताः कुमारीः
प्रध्वस्तविघ्नः श्रियमेति गुर्वीम् ॥

सर्वविघ्नशान्त्यर्थं गणपतिपूजनम्

स्मृत्युक्तमन्त्रैर्विधिवत्प्रयुक्तै-
र्नित्यं शिवानन्दनपूजनं च ।
कृता(? त्वाऽ)न्तरायान्विनिहत्य सर्वान्
कुर्यादथातो ग्रहयागमेनम् ॥

## मत्स्यपुराणम्

ध्येयं गणपतिस्वरूपम्

[1]स्वदन्तं दक्षिणकरे उत्पलं च तथाऽपरे ।
लड्डुकं परशुं चैव वामतः संप्रकल्पयेत् ।
संयुक्तं बुद्धिऋद्धिभ्यामधस्तान्मूषिकान्वितम् ॥

गणपतिपूजनस्य कर्मसिद्ध्यर्थता, उपचाराः, अर्घ्यदानं च

[2]उपचारैः ससिन्दूरैश्चन्दनै रक्तचन्दनैः ।
पुष्पैर्धूपैस्तथा दीपैराच्छादनसुशोभनैः ॥
इति पञ्चोपचारैश्च यन्मया पूजनं कृतम् ।
प्रारब्धकर्मसिद्ध्यर्थं देवाय कल्पयामि तत् ।
नारिकेलेन देयोऽर्घः फलेन फलकाङ्क्षिभिः ॥

पञ्चोपचारैरिति वाक्ये पञ्चोपचारग्रहणमुपलक्षणार्थम् । तेन षोडशोपचारा अपि भवन्ति । षोडशोपचारपूजनं विष्णुपुराणे– 'पूर्वमावाहनं प्रोक्तमासनं तदनन्तरम् । ततश्च पाद्यमर्घ्यं च ततस्त्वाचमनीयकम् ॥ स्नानं वस्त्रं चोपवीतं ततो गन्धादिचन्दनम् । पुष्पं धूपं च दीपं च नैवेद्यं तदनन्तरम् ॥ ततो देयः प्रणामश्च ततो देया प्रदक्षिणा । विसर्जनं ततो दद्यादुपचारास्तु षोडश ॥' । क्वचित्तु प्रणामप्रदक्षिणास्थाने ताम्बूलदक्षिणा इति ।

संग. ६७

## लिङ्गपुराणम्

गणपतिपूजनस्य चातुर्वर्ण्याधिकारिकत्वं कर्मसिद्ध्यर्थमादौ कर्तव्यता च

[3]सर्वकामसमृद्ध्यर्थमादौ पूज्यो विनायकः ॥
[4]ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैर्वा सिद्धिकामुकैः ।
कर्मनिर्विघ्नसिद्ध्यर्थं संपूज्यश्च गजाननः ॥

अत्र सर्वेषामधिकारः, 'ब्राह्मणैः ...' इति लैङ्गात्, 'यजमानस्तु शूद्रश्चेत् ...' इति महार्णवाच्च । कुमार्यादिस्त्रीणामपि, 'कुमारी न च भर्तारम् ...' इति याज्ञवल्क्यात् । 'तेनोपहतपुंसां च कर्म स्यान्निष्फलं कृतम् । स्त्रीणामपि तथा सर्वं क्रियमाणं तु निष्फलम् ॥' इति बृहत्पराशराच्च ।

कुभ. १०८८

## विष्णुधर्मोत्तरपुराणम्

विनायकशान्तिकालः– नक्षत्राणि मुहूर्तौ च

[1]हस्तपुष्याश्वयुक्सौम्यवैष्णवान्यतमे शुभे ।
नक्षत्रे च मुहूर्ते च मैत्रे वा ब्रह्मदैवते ॥

नक्षत्रान्तराणि विष्णुधर्मे इमां शान्तिं प्रकृत्य– हस्तपुष्येति ।

संकौ. १२८

## पद्मपुराणम्

गणपतिपूजनस्य कर्मसिद्ध्यर्थमादौ कर्तव्यता

[2]नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तमाः ।
तस्माद्विघ्नं समुत्पन्नं तत्क्रोधजमिदं खलु ॥

अथ गणपतिपूजनम् । तच्च सर्वकर्मस्वादौ कर्तव्यम्, निर्विघ्नार्थत्वात्, 'न ऋते त्वत्क्रियते' इति मन्त्रलिङ्गात्, 'नार्चितो हि ...' इति पद्मपुराणाच्च । अत्र पूजा द्विविधा– षोडशोपचारा पञ्चोपचारा वा । तत्र प्रतिष्ठितप्रतिमायामावाहनविसर्जनयोरभावेन चतुर्दशोपचारैव पूजा । अथवा आवाहनविसर्जनयोः स्थाने मन्त्रपुष्पाञ्जलिदानम्, तेन षोडशोपचारा भवन्ति । नूतनप्रतिमायां तु षोडशोपचारैव, आवाहनाभावे प्रतिमादौ पूजाया असंभवात् । क्वचित्तु वचनाद्विसर्जनमुत्कृष्यते, 'आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति' इतिवत् । यथा ग्रहयज्ञादौ– 'एवं समग्रं निष्पाद्य सर्वदेवान्विसर्जयेत् ।' इति मात्स्ये विधानादन्ते विसर्जनम् । ईदृश्येव चेयं पूजा वचनत्याजितकिंचित्पदार्था पिण्डरहितसंक्रान्तिश्राद्धवत्स्वतन्त्राऽपि । पञ्चोपचारपूजा तु यत्र स्थापितदेवानां विसर्जनात् प्राक् पूजा उक्ता तद्विषया । संर. २७

---

(१) चश्रा. १५४१ लड्डुकं (लड्डुकं); श्राप्र. २९५ मूषिका (मूलका).

(२) संग. ६६–६७; संदी. ५४ पञ्चमार्धं विना.

(३) संदी. ५४. (४) कुभ. १०८८.

(१) संकौ. १२८; प्रका. २०८; बाल. १।२९४ पृ. ६०३; संव. १०७; कुभ. १०८८.

(२) संग. ६६ न्नं तत्को (न्नमक्रो) खलु (तव); संर. २७; संदी. ५३ रोत्तमाः (रोत्तम्) तत्क्रोधजमिदं खलु (आकस्मिकमिदं तव).

## ब्रह्मवैवर्तपुराणम्

गणपतिपूजनस्येष्टसिद्धिहेतुत्वम्

[1]दुण्ढिराजः प्रियः पुत्रो भवान्याः शंकरस्य च ।
तस्य पूजनमात्रेण त्रयोऽपि वरदाः सदा ॥

त्रयः ब्रह्मविष्णुशिवाः , भवानीशंकरगणेशाः इति वा । † संग. ६६

## भविष्यपुराणम्

विनायकोपसृष्टस्य लक्षणानि

[2]करणे मूढमात्मानं मलिनान्तरगस्तथा ।
चतुर्भिश्चाऽऽवृतं यान्तं श्मशानान्तिकगं नृप ॥
पश्यते नृपशार्दूल पश्यते नात्र संशयः ।
तैलार्द्रगात्रं च विभो करवीरविभूषितम् ॥

विनायकशान्तिकालः

[3]शुक्लपक्षे चतुर्थ्यां च वारेण धिषणस्य च ।
तिष्ये च वीरनक्षत्रे तस्यैव पुरतो नृप ॥

उपनयनादिफलप्राप्त्यै क्रियमाणायामपि विनायकशान्तौ उपनयनकालाविरोधेन संभवत्कालोपसंग्रहः कार्यः , न तु तद्विरोधेनेति बोध्यम् । ¶ संकौ. १२८

विनायकशान्तौ पूजनीया देवताः

[4]व्योमकेशं तु संपूज्य पार्वतीं भीमजं तथा ।
कृष्णस्य पितरं तात अर्कमारं सितं तथा ॥
धिषणं क्लेदपुत्रं च कोणं लक्ष्म च भारत ।
विधुन्तुदं बाहुलेयं नन्दकस्य च धारिणम् ॥§

गणेशशान्तिः , तस्याः कर्माङ्गत्वं काम्यत्वं च

[1]चतुर्थ्यां वारणं हैमं पलादूर्ध्वं सुशोभनम् ।
कारयित्वाऽङ्कुशयुतं तिलद्रोणोपरि न्यसेत् ॥
वस्त्रैः पुष्पैः पूजयित्वा नैवेद्यान्तान्पृथक्पृथक् ।
ततस्तु ब्राह्मणे दद्याद्गणेशः प्रीयतामिति ॥
कार्यारम्भेषु सर्वेषु तस्य विघ्नं न जायते ।
वारणाः सप्त जन्मानि भवन्ति मदविह्वलाः ॥

एवं गणेशशान्तिरप्यस्ति भविष्ये– चतुर्थ्यामिति । कृभ. १०८९

## मेधातिथिः

विनायकशान्तिपूर्वकत्वं संकटग्रस्तशुभकर्मणः

[2]संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना ।
शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥

## महार्णवे

विनायकशान्तेः संभाराः

[3]अथोच्यन्तेऽत्र संभारा रोचना पञ्च मृत्तिकाः ।
अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥
[4]चन्दनागरुकस्तूरीकर्पूराद्याः सुगन्धयः ।
गौरसर्षपकल्कस्तु गव्याज्येन विमिश्रितः ।
गुग्गुलश्चापि संशुद्धः सर्वौषधिगणस्तथा ॥

---

† संदी. संगगतम् ।

¶ शेषमपरार्कानुवादः । अपरार्कव्याख्यानं तु 'स्नपनं तस्य कर्तव्यम्' इति याज्ञवल्क्यवचने (सं. का. पृ. १६५७) द्रष्टव्यम् ।

(१) संग. ६६ ; संदी. ५३.

(२) अप. १।२७५ 'चतुर्भिश्चाऽऽवृतं' इत्यत्र 'यातुभिश्चाऽऽवृतं' इति टिप्पण्यां पाठः ।

(३) अप. १।२७६ ; शाम. ५ ; संकौ १२८ ; प्रका. २०८ ; बाल. १।२९४ पृ. ६०३ ; संव. २०७ ; कृभ. १०८८ च वारेण (तु वासरे).

(४) अप. १।२७७ ; शाम. ५ पितरं तात (पितरे केतुं).

§ अपरार्कव्याख्यानं 'स्नपनं तस्य कर्तव्यम्' इति याज्ञवल्क्यवचने (सं. का. पृ. १६५७–१६५८) द्रष्टव्यम् । शाम. अपवत् ।

(१) कृभ. १०८९.

(२) गभा. ६८ ; धप्र. ५० (=) उत्तरार्धे (शान्तिं कृत्वा गणेशस्य पूजां कृत्वा समाचरेत् ॥) ; संप्र. ८१६ शौनकः ; सिन्धु. १०८७ ; ज्योनि. १६३ स्मृत्यन्तरम् ; संकौ. २०२ (=) ; प्रका. ३६२ (=) ; संव. १४५ (=) ; पुम. ४५२ ; संर. ४८२ (=).

(३) शाम. ६ (=) उत्त. ; संकौ. १३१ ; प्रका. २१७ संगमाद्ध्रदात् (ह्रदसंगमात्) उत्त. ; बाल. १।२९४ पृ. ६०७ ; संव. १११.

(४) संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ. ६०७ ; संव. १११.

*[1]मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
सटीचम्पकमुस्ताश्च सर्वौषधिगणः स्मृतः ॥
[2]चत्वारः कलशा एकवर्णाश्चास्फुटितात्रणाः ।
ह्रदोदकयुता वाऽपि निम्नगासंगमोदकाः ॥
[3]सग्रीवापुच्छमारक्तं चर्म चाऽऽनडुहं तथा ।
श्रीपर्णीकाष्ठपीठं च सहकारस्य पल्लवाः ॥
[4]अश्वत्थपल्लवा वा स्युः सुगन्धिसुमनांस्यपि ।
स्रजः शोभनगन्धाश्च विचित्रकुसुमानि च ॥
कलशावेष्टनार्थं तु नववस्त्रचतुष्टयम् ।
पीठस्याऽऽच्छादनार्थं तु शुभ्रवस्त्रमथापरम् ॥
[5]गणेशाम्बिकयोरर्थे वस्त्रयुग्मं सुशोभनम् ।
आचार्यदक्षिणार्थं तु महार्हवसनद्वयम् ॥
[6]पञ्चवर्णानि पिष्टानि स्वस्तिकस्य विनिर्मितैः
(? विनिर्मितौ) ।
तैलं च सार्षपं तद्वदुदुम्बरविनिर्मितः ॥
[7]स्रुवः कुशाश्चरुस्थाली पाकार्थे तण्डुलाः शुभाः ।
किंचिद्भन्तिक्रियाक्लृप्तास्तण्डुलाश्चापरे तथा ॥

† अस्य व्याख्यानानि कर्मपरिभाषाप्रकरणे (सं. का. पृ. १२९७) द्रष्टव्यानि ।

(१) स्थलादिनिर्देशः कर्मपरिभाषाप्रकरणे (सं. का. पृ. १२९७) द्रष्टव्यः.

(२) संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ. ६०७ ; संव १११.

(३) संकौ. १३१ सग्रीवा (सुग्रीव) श्रीपर्णी (श्रीपर्णि) ; प्रका. २१७ ; बाल १।२९४ पृ. ६०७ ; संव. १११ मारक्तं (मायुक्तं).

(४) संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ. ६०७ ; संव. १११.

(५) संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ. ६०७ महार्हव (महार्ह व) ; संव. १११.

(६) संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ. ६०७ ; संव. १११.

(७) संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ. ६०७ पाकार्थे (पाकार्थं) ; संव. १११.

[1]तिलपिष्टेन संयुक्त ओदनः शूर्पमेव च ।
पक्वाश्च मत्स्याश्चापक्वा मांसं पक्वमपक्वकम् ॥
[2]गौडी पैष्टी च माध्वी चेत्येवं वै त्रिविधा
सुरा ।
मत्स्यादिकं सुरान्तं च निषिद्धं यच्च यस्य तत् ॥
[3]न ग्राह्यं तु विशेषेण द्विजैस्त्याज्या सुरा सदा ।
यजमानस्तु शूद्रश्चेदद्विजैस्तानि योजयेत् ॥
[4]प्रत्यक्षमूलकं वा स्यादुक्तभक्षस्तथा कृतः ।
अपूपाः पूरिकाश्चैव तथैवोण्डेरकस्रजः ॥
[5]दध्यन्नं पायसं चैव पिष्टं च गुडमिश्रितम् ।
लड्डुकाश्च तथा दूर्वाः सर्षपा गौरसंज्ञिताः ॥
गणे [प्र]तिमा चैव गौर्याश्च प्रतिमा तथा ।
एवं संभृतसंभारः शान्तिं कुर्याच्छुभे दिने ॥

## रुद्रकल्पद्रुमे

### गणपतिपूजनस्य कर्मादौ कर्तव्यता

[6]गणेशः सर्वदेवानामादौ पूज्यः सदैव हि ।
सर्वैरपि महाविघ्ननाशकोऽन्यो न विद्यते ॥

(१) संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ ६०७ ; संव. १११.

(२) संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ. ६०७ त्रिविधा सुरा (त्रिविधाः सुराः) दिकं सु (दिकसु) यच्च यस्य (यस्य यच्च) ; संव. १११ त्रिविधा सुरा (त्रिविधाः सुराः) यत् (तत्).

(३) शाम. ७ तृतीयपादमात्रम् ; संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ. ६०७ ग्राह्यं तु (ग्राह्यं च) चतुर्थपादे (द्विजैस्तां विनियोजयेत्) ; संव. १११ सुरा (सुराः) ; कृभ. १०८८ तानि यो (तां नियो) उत्त.

(४) संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ. ६०७ दुक्तभक्षस्तथा कृतः (हुतभक्षस्तथा कृतिः) वोण्डेरक (वौडेरक) ; संव. १११ था कृतः (दाकृतिः).

(५) संकौ. १३१ ; प्रका. २१७ ; बाल. १।२९४ पृ. ६०७ ; संव. १११.

(६) संग. ६६ ; संदी ५४.

## रेणुकारिकाः

गणपतिपूजनस्य कर्तव्यता

[1]अविघ्नकारिणं देवं विघ्नराजं प्रपूजयेत् ॥

## परशुरामकारिकाः

गणपतिपूजनस्य कर्तव्यता पीठं च

[2]गणेशं पूजयेत्पूर्वं निर्विघ्नार्थं स्वकर्मणः ।
पट्टे वा मृन्मये पीठे रक्तवस्त्रेऽरुणाक्षतैः ॥
[3]कार्यमष्टदलं पद्मं तस्योपरि गणेश्वरम् ।
गणानां त्वेति संस्थाप्य पूजयेत्तदनन्तरम् ॥

पूजाविधिमाह रुद्रपद्धतिकृत्परशुरामः— गणेशमिति । गणेश्वरं संस्थाप्य 'गणानां त्वा' इति मन्त्रेण पूजयेदित्यन्वयः । स्थापनं गणेशप्रतिमायाः । 'गणानां त्वा' इतिमन्त्रपरिसमाप्तिस्तु कण्डिकापरिसमाप्त्या ज्ञेया । सर्वत्र स्मार्ते कर्मणि मन्त्रावसाने बोधकप्रमाणाभावे मन्त्रस्य कण्डिकान्तत्वात् । उक्तं च रेणुकारिकायाम्— 'गृह्यकर्मसु ये मन्त्रा ज्ञेयाः स्वाध्यायपाठतः । किंच मध्यमवृत्त्या ते न द्रुता न विलम्बिताः ॥' इति । यत्तु काशीदीक्षितैः विश्वनाथभट्टैश्च प्रयोगरत्ने रुद्रपद्धतौ च 'गणानां त्वा' इत्ययं मन्त्रः 'वसो मम' इत्यन्त इत्युक्तम्, तत् काण्वशाखाविषयम्, कण्वशाखायां 'गणानां त्वा' इति कण्डिकायाः 'वसो मम' इत्यन्ताया एव समधीतत्वात् । 'गणानां त्वा' इत्यादि 'गर्भधम्' इत्यन्तो मन्त्रो माध्यन्दिनानाम्, तत्रैव कण्डिकावसानात् । $ संग. ६६

(१) रेका. ९१ पृ. ५४.

(२) संग. ६६ पट्टे वा (यद्वेवा) वस्त्रेऽ (वस्त्रा); संदी. ५४ रुद्रपद्धतौ इत्युक्तम्.

(३) संग. ६६; संदी. ५४ रुद्रपद्धतौ इत्युक्तम्.

$ संदी. संगतम् ।

# पुण्याहवाचनम्

## बौधायनगृह्यसूत्रम्

पुण्याहवाचनस्य ब्राह्मणभोजनपूर्वकत्वम्

[1]¶ 'अथ विवाहः' इति ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इत्योंकारपूर्वं त्रिस्त्रिरेकैकामाशिषो वाचयित्वा... ॥

## बौधायनगृह्यपरिभाषासूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

पुण्याहवाचनप्रयोगः

[2]अथापरेद्युर्देवानामिति ॥

अथापरेद्युर्ब्राह्मणानन्नेन परिवेषयेदिति दैवतं भवति ॥

यद्देवत्यं भवति तस्य पुण्याहं वाचयिष्यन् नाम गृह्णात्यसौ प्रीयतामिति ॥

पुण्याहं वाचयिष्यन् ब्राह्मणान् संपूजयति ॥

अरिक्तपाणयः प्राङ्मुखा युग्मास्तिष्ठन्ति ॥

तेषां दक्षिणत उदङ्मुखोऽपिहितमुदकुम्भं धारयन् वाचयिता तिष्ठति ॥

तस्य दक्षिणं बाहुमन्वितरस्तिष्ठति ॥

[3]अथैनान् संपूजयति- 'मनः समाधीयताम्' इति ॥

[4]'समाहितमनसः स्मः' इतीतरेषां प्रतिवचनम् ॥

मनो वै चन्द्रमा ब्राह्मणा नक्षत्राणि । तस्माद् ब्राह्मणेषु मनः समादधाति ॥

'प्रसीदन्तु भवन्तः' इति । 'प्रसन्नाः स्मः' इतीतरेषां प्रतिवचनम् ॥

तथैवास्य प्रसन्ना भवन्ति ॥

'शान्तिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । ऋद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवं कर्मास्तु ।' इत्याशिषमेवैतामाशास्ते ॥

[1]तथैवेतरेषां प्रतिवचनम् ॥

[2]'ओमिति ब्रह्म । ओमितीदं सर्वम्' । तस्मादोमिति संधाय 'पुण्याहं भवन्तो ब्रुवन्तु' इत्येतेनाहश्च नक्षत्रं च पूते भवतः । ते एवैनं पूते पुनीतः ॥

'ॐ स्वस्ति भवन्तो ब्रुवन्तु' इत्येतेन गोब्राह्मणस्याऽऽशीरुक्ता भवति । त एवैनमाशिषा समर्धयन्ति ॥

[3]'ऋद्धिं भवन्तो ब्रुवन्तु' इत्येतेन ऋग्यजुःसाम्नामृद्धिरुक्ता । तैरेव ऋद्धिमान् भवति ॥

[4]य एवं विद्वान् पुण्याहं वाचयति नास्य कर्मोपहतं भवति ॥

---

¶ एवं संस्कारान्तरेष्वप्यादौ पुण्याहवाचनस्य निर्देशोऽस्ति ।

(१) बौगृप. १।१।२४ ; संग. ६९ ('अथ विवाहः' इति०) स्वस्ति... वाचयित्वा (स्वस्तिकृद्धिरित्योंकारपूर्वं त्रिस्त्रिरित्येकामाशिषं वाचयेत्).

(२) बौगृप. १।४।१-७ ; हिगृशे. ४।११.

(३) बौगृप. १।४।८ ; हिगृशे. ४।११ अथैनान् (अथैतान्).

(४) बौगृप. १।४।९-१३ ; हिगृशे. ४।११.

(१) बौगृप. १।४।१४ ; हिगृशे. ४।११, तथै (अथै).

(२) बौगृप. १।४।१५-१६ ; हिगृशे. ४।११ ब्रह्म (ब्रह्मा).

(३) बौगृप. १।४।१७ ; हिगृशे. ४।११ ऋद्धिमान् भवति + (श्रीरस्त्विति भवन्तो ब्रुवन्त्विति तैरेव श्रियमेवाप्नोति ।).

(४) बौगृप. १।४।१८ ; हिगृशे. ४।११.

## बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

कर्मविशेषेषु पुण्याहवाचनदेवताः

[1]अथातः पुण्याहदेवता व्याख्यास्यामः । विवाहस्याग्निः प्रीयताम् । औपासनस्याग्निस्सूर्य-प्रजापतयः प्रीयन्ताम् । पञ्चमेऽहन्युदुम्बरः । दशमेऽहन्यन्ते चित्र्याणि । स्थालीपाकस्याग्निः । गर्भाधानस्य ब्रह्मा । पुंसवनस्य प्रजापतिः । सीमन्तस्य धाता । विष्णुबलेः सविता । जातकर्मणो मृत्युः । नामकरणस्य सविता । तस्यान्ते प्रजापतिः । उपनिष्क्रामणस्य सविता । तस्यान्ते चित्र्याणि । अन्नप्राशनस्य सविता । चौलस्य केशिनः । तस्यान्ते प्रजापतिः । उपनयनस्येन्द्रः । श्रद्धामेधे इत्यन्ते । विसर्गे सुश्रवाः । पुनरुपनयनस्याग्निः । अथ यदि ब्रह्मचार्यव्रत्यमिव चरेत्तस्मिन्नध्यायहोमे सविता । समावर्तनस्य श्रीरिन्द्रो वा । शूलगवस्येशानः । प्रत्यवरोहणस्य सविता । उपाकर्मव्रतेषु च सविता । वास्तुहोमस्य वास्तोष्पतिः । अन्ते प्रजापतिः । अद्भुतहोमस्येन्द्रः । अन्ते प्रजापतिः । आयुष्यहोमस्याग्निरायुष्मान् । नक्षत्रहोमस्य नक्षत्रेष्टिसूक्तम् । अष्टमीप्रदोषस्येशानः । आग्रयणहोमस्याऽऽग्रयणदेवताः । सर्पबलेः सर्पाः । आदित्यपुरोगा ग्रहाः प्रीयन्ताम् । अथैकोद्दिष्टस्यान्ते प्रजापतिः । तटाकादीनां वरुणो देवता । यक्षिबलेर्यक्षी । ग्रहशान्तिहोमस्याऽऽदित्यादिनवग्रहाः । गर्भाधानादितन्त्रहोमस्य ब्रह्मादयः प्रीयन्तामिति । एवमन्येषां होमानां याज्यापुरोनुवाक्ययोर्देवता तस्यासौ प्रीयतामिति । सूतकान्ते प्रेतकान्ते प्रथमोदक्यान्ते च प्रजापतिः । कूश्माण्डहोमस्याग्न्यादयः । चान्द्रायणहोमस्या-

---

(१) बौगृशे. १।९।१ ग्रहशान्ति ( गृहशान्ति ); हिगृशे. ३।३ ( पञ्चमेऽहन्युदुम्बरः । दशमेऽहन्यन्ते चित्र्याणि० ) निष्क्रामणस्य ( निष्क्रमणस्य ) ( इत्यन्ते । विसर्गे सुश्रवाः ० ) ( गर्भाधानादितन्त्रहोमस्य ब्रह्मादयः प्रीयन्तामिति० ) प्रेतकान्ते ( प्रेतकर्मान्ते ) ऽग्नीषोमेन्द्राः ( ऽग्निष्टोमे चेन्द्रः ); संकौ. २३ ( अथातः... व्याख्यास्यामः० ) विवाहस्याग्निः प्रीयताम् ( विवाहस्याग्निः) (प्रीयन्ताम् । पञ्चमेऽहन्युदुम्बरः । दशमेऽहन्यन्ते चित्र्याणि० ) नामकरणस्य ( नामकर्मणः ) निष्क्रामणस्य ( निष्क्रमणस्य ) चित्र्याणि । अन्न ( चित्रियाणि । अन्न ) मेधे इत्यन्ते ( मेधे अन्ते ) चार्यव्रत्यमिव चरेत्तस्मिन्नध्याय ( चर्यव्रतमाचरेत्तस्मिन्नपाप ) कर्मव्रतेषु ( कर्मणि व्रतेषु ) अद्भुत ( अयुत ) नक्षत्रेष्टिसूक्तम् ( नक्षत्रेसूक्तम् ) आग्रयणहोमस्य ( आग्रयणस्य ) ( आदित्यपुरोगा ग्रहाः प्रीयन्ताम्० ) अथैको ( एको ) तटाका ( तडागा ) देवता । यक्षिबलेर्यक्षी ( यक्षबलेर्यक्षाः ) गर्भाधानादितन्त्रहोमस्य ( नागारितन्त्रहोमे ) एवमन्येषां ( एवमेवान्येषां ) याज्यापुरोनु... कर्मसु प्रजापतिः ( याज्यानुवाक्ययोर्देवतासौ प्रीयतामिति कूपतडागान्ते प्रधानोदकान्ते प्रजापतिः कूष्माण्डहोमस्याग्न्यादयश्चान्द्रायणस्याग्न्यादयोऽग्न्याधेयस्याग्न्यादयोऽग्निष्टोमस्येन्द्र एवान्येऽन्येष्टकर्मसु प्रजापतिरिति ); संर. ३२ अथातः ( अथ ) ( प्रीयताम्० ) ( प्रीयन्ताम् । पञ्चमेऽहन्युदुम्बरः । दशमेऽहन्यन्ते चित्र्याणि० ) बलेः सविता ( बलेर्विष्णुः ) नामकरणस्य ( नामकर्मणः ) निष्क्रामणस्य ( निष्क्रमणस्य ) चित्र्याणि । अन्न ( चित्रियाण्यन्न ) मेधे इत्यन्ते ( मेधे अन्ते ) ब्रह्मचार्य... न्नध्याय ( ब्रह्मचार्यव्रतमाचरेत्तस्मिन्नपाय ) कर्मव्रतेषु ( कर्मणि व्रतेषु ) अद्भुत ( अद्भुत ) सूक्तम् ( सूक्ता ) आग्रयणहोमस्या ( आग्रयणस्या ) ( आदित्यपुरोगा ग्रहाः प्रीयन्ताम्० ) अथैको ( एको ) तटाका ( तडागा ) देवता । यक्षिबलेर्यक्षी ( यक्षबलेर्यक्षाः ) गर्भाधानादितन्त्रहोमस्य ( नागारितन्त्रहोमे ) एवमन्येषां ( एवमेवान्येषां ) याज्यापुरोनु .. कर्मसु प्रजापतिः ( याज्यानुवाक्ययोर्देवताऽसौ प्रीयतामिति सूतकान्ते प्रधानोदकान्ते प्रजापतिः कूष्माण्डहोमस्याऽऽदित्यादयश्चान्द्रायणस्याग्न्यादयोऽग्न्याधेयस्याग्न्यादयोऽग्निष्टोम इन्द्र एवमनादिष्टकर्मसु प्रजापतिरित्याह भगवान् बौधायनः । ).

न्यादयः । अग्न्याधेयेऽग्नीषोमेन्द्राः । एवमना-दिष्टकर्मसु प्रजापतिः ॥

प्रयोगः

[1]अथातः पुण्याहं व्याख्यास्यामः ॥

[2]शुचौ समे देशे दर्भान् दूर्वा धारयमाणा-श्चत्वारो ब्राह्मणा अरिक्तहस्ताः प्राङ्मुखा युग्मा-स्तिष्ठन्ति ॥

प्रशस्ताः श्राद्धभोजनप्रतिग्रहादिरहिताः ।

संर. ३३

[3]तेषां दक्षिणत उदङ्मुखो वाऽपिहितमुद-कुम्भं धारयन् वाचयिता । तस्य दक्षिणं बाहु-माश्रित्य पत्न्यस्तिष्ठन्ति ॥

[4]पूर्णकुम्भमभ्यर्च्य दर्भेष्वासीनो दर्भान् धारय-माणोऽनुज्ञां कुर्यात्– ' भवद्भिरनुज्ञातः पुण्याहं वाचयिष्ये ' इति । ते प्रणवपूर्वं ' वाच्यताम् ' इति प्रतिब्रूयुः ॥

[5]ॐ स्थित्वा (?) तेषां सपवित्रेषु पाणिषु जलं ददाति– ' ओमापः ' इति । ' शिवा आपः सन्तु ' इति प्रत्यूचुः ॥

[6]ततः ' गन्धाः ' इति गन्धं ददाति । ' सुगन्धाः पान्तु ' इति प्रतिगृह्णन्ति ॥

(१) बौगृशे. १।१०।१ ; प्रका. २९ ; संर. ३२ पुण्याहं ( पुण्याहवाचनं ).

(२) बौगृशे. १।१०।२; प्रका. २९; संर. ३२ दर्भान् दूर्वा ( दूर्वादर्भान् ) ब्राह्मणाः + ( प्रशस्ताः ) ( युग्माः० ).

(३) बौगृशे. १।१०।३ ; प्रका. २९ ; संर. ३२ मुखो वाऽपि ( मुखोऽपि ) पत्न्यस्ति ( पत्नयस्ति ).

(४) बौगृशे. १।१०।४ ; प्रका. २९.

(५) बौगृशे. १।१०।५ ; प्रका. २९ ; संर. ३२ ( ओं स्थित्वा० ) तेषां ( ततः ) पाणिषु ( विप्रपाणिषु ) ददाति ( दद्यात् ) इति प्र ( इति ते प्र ).

(६) बौगृशे. १।१०।६ ; प्रका. २९ ; संर. ३२–३३.

[1]तेभ्यः ' सुमनसः ' इति पुष्पं ददाति । ते ' सौमनस्यमस्तु ' इति प्रतिगृह्णन्ति ॥

[2]तेषां पाणिषु ' अक्षतम् ' इति अक्षतान् ददाति । अक्षतशब्देन व्रीहिमिश्रास्तण्डुला उच्यन्ते । ' अक्षतं चारिष्टं चास्तु ' इति प्रति-गृह्णन्ति ॥

[3]ब्राह्मणा अभुक्ताश्चेत् ' ओमन्वाहार्यः ' इत्यो-दनं ददाति । ते ' स्वन्वाहार्योऽस्तु ' इति प्रति-गृह्णन्ति ॥

[4]तेभ्यः ' दक्षिणाः ' इति दक्षिणां ददाति । ' स्वस्ति दक्षिणाः पान्तु बहुदेयं चास्तु ' इति प्रत्यूचुः ॥

[5]ततो वाचयिता दक्षिणं जानु भूमौ निधाय सव्यमुत्थाप्योदङ्मुखः ' इडा देवहूः ' इति जपति । ' उदकुम्भमादायोपतिष्ठ ' इति प्रत्यूचुः ॥

[6]ततो वाचयिता ' मनः समाधीयताम् ' इति । ' समाहितमनसः स्मः ' इतीतरे प्रत्याहुः ॥

[7]कर्ता ' प्रसीदन्तु भवन्तः ' इति । ' प्रसन्नाः स्मः ' इति ( इतरे प्रत्याहुः ) । वाचयित्वा ( ? ता ) ( यद्वा– ? ) सर्वैर्मन्त्रैरनवानं वदेत् ॥ ( ? वदेत्– )

(१) बौगृशे. १।१०।७ ; प्रका. २९ ; संर. ३३ तेभ्यः ( ततः ) पुष्पं ( पुष्पाणि ) ( ते० ).

(२) बौगृशे. १।१०।८ ; प्रका. २९ ; संर. ३३ तेषां पाणिषु ' अक्षतम् ' ( ततोऽक्षता ).

(३) बौगृशे. १।१०।९ ; प्रका. २९.

(४) बौगृशे. १।१०।१० ; प्रका. २९ ; संर. ३३ तेभ्यः ( ततः ) प्रत्यूचुः ( प्रतिगृह्णन्ति ).

(५) बौगृशे. १।१०।११ ; प्रका. २९ ; संर. ३३ जपति ( जपित्वा ) योपतिष्ठ ' इति प्रत्यूचुः ( योपोत्तिष्ठति ).

(६) बौगृशे. १।१०।१२ ; प्रका. २९ ; संर. ३३ ( वाचयिता० ) इति । ' समा ( इति वदति । ' समा ) इती-तरे प्रत्याहुः ( इति विप्राः प्रत्यूचुः ).

(७) बौगृशे. १।१०।१३ ; प्रका. २९ ; संर. ३३ (ततो वाचयिता ' प्रसीदन्तु भवन्तः ' इति वदति । ' प्रसन्नाः स्मः ' इति विप्राः प्रत्यूचुः ).

[१] 'शान्तिरस्तु, पुष्टिरस्तु, तुष्टिरस्तु, वृद्धिरस्तु, अविघ्नमस्तु, आरोग्यमस्तु, शिवं कर्मास्तु' इति । एवमेवेतरे प्रत्याहुः ॥

[२] यद्देवत्यं भवति तस्य नाम गृह्णाति– 'असौ प्रीयताम्' इति । एवमेवेतरे ॥

[३] वाचयिता 'पुण्याहं भवन्तो ब्रुवन्तु' । 'ओं पुण्याहम्' इतीतरे प्रत्याहुः । एवमेव त्रिः ॥

[४] ततः 'स्वस्ति भवन्तो ब्रुवन्तु' इति । 'ओं स्वस्ति' इतीतरे प्रत्यूचुः ॥

[५] ततो वाचयिता 'ओं ऋद्धिं भवन्तो ब्रुवन्तु' इति । 'ओं ऋध्यताम्' इतीतरे प्रत्याहुः ॥

[६] एवमेव त्रिर्वाचयित्वा 'ओं पुण्याहसमृद्धिरस्तु', 'अस्तु' इति, 'ओं शिवं कर्मास्तु', 'अस्तु' इतीतरे प्रत्याहुः ॥

यद्देवत्यं भवति तस्य नाम गृह्णाति– 'असौ प्रीयताम्' इति ॥

'प्रीयतामसौ' इति प्रतिब्रूयुः ॥

---

(१) बौगृशे. १।१०।१४ ; प्रका. २९ ; संर. ३३ 'शान्तिरस्तु (ततो वाचयिता शान्तिरस्तु) अविघ्नमस्तु + (आयुष्यमस्तु) इति । एवमेवेतरे प्रत्याहुः (इति वदति । तथाऽस्त्विति विप्राः प्रत्यूचुः).

(२) बौगृशे. १।१०।१५ ; प्रका. २९ ; संर. ३३ यद्देवत्यं (कर्म यद्देवत्यं) (एवमेवेतरे०).

(३) बौगृशे. १।१०।१६ ; प्रका. २९ ; संर. ३३ (ततः पुण्याहं भवन्तो ब्रुवन्त्वित्यों पुण्याहमिति विप्राः प्रत्याहुः).

(४) बौगृशे. १।१०।१७ ; प्रका. २९ ; संर. ३३ इतरे प्रत्यूचुः (विप्राः प्रत्याहुः).

(५) बौगृशे. १।१०।१८ ; प्रका. २९ ; संर. ३३ (वाचयिता ओं०) इतरे (विप्राः) प्रत्याहुः + (सर्वाणि त्रिस्त्रिर्वाचयति).

(६) बौगृशे. १।१०।१९–२१ ; प्रका. २९.

[१] अथ व्याहृतिभिर्भूमौ जलं विसृज्योपविश्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतीभिरिति मार्जयित्वा पत्नीं च प्रोक्षतीत्याह भगवान्बोधायनः ॥

सुरभिमती 'दधिक्राव्णो अकारिषम्' इत्यृगेका । अब्लिङ्गाः आपो हि ष्ठादयः । वारुण्यः 'यच्चिद्धि ते' इत्यादयः । हिरण्यवर्णाः 'हिरण्यवर्णाः शुचयः पावकाः' इत्यादयः । पावमान्यः 'पवमानः सुवर्जनः' इत्यनुवाकोपात्ताः । अन्यत्स्पष्टम् । संर. ३३

## आश्वलायनगृह्यसूत्रम्

### विवाहान्ते स्वस्त्ययनविधिः

§[२] अथ स्वस्त्ययनं वाचयीत ॥

(१) अथ अनन्तरं स्वस्त्ययनवाचनं स्वस्तिरिति । देभा.

(२) 'ओं स्वस्ति भवन्तो ब्रुवन्तु' इति । ते च 'ओं स्वस्ति' इति प्रत्यूचुः । गानावृ.

(३) अथ तैर्भुक्तवद्भिः स्वस्त्ययनं वाचयेत् । 'स्वस्त्ययनमस्तु' इति वाचयेदित्यर्थ इति केचित् । पुण्याहवाचनोपलक्षणमित्यन्ये । तच्चरणभेदेन देशभेदेन च भिद्यते । अना.

---

§ यद्यपीदं सूत्रं विवाहान्ते स्वस्त्ययनस्य विधायकम्, तच्च स्वस्त्ययनं भाष्यकारादिमते न पुण्याहवाचनम्, तथापि येषां मते स्वस्त्ययनशब्दः परिशिष्टस्वारस्यात् उपलक्षणवृत्त्या पुण्याहवाचनपरः तन्मते पुण्याहवाचनस्याऽऽश्वलायनगृह्ये निर्देशोऽस्तीत्येतावन्मात्रं प्रदर्शयितुमत्रैतत्संगृहीतम् । मानवगृह्यादावप्येवमेव ज्ञेयम् ।

(१) बौगृशे. १।१०।२२ ; प्रका. २९ ; संर. ३३ (ततो विप्रा उपविश्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिश्च वाचयितारमभिषिञ्चेयुस्ततो वाचयिता भूर्भुवः सुवरोमिति जपतीत्याह भगवान् बौधायनः).

(२) आगृ. १।८।१५ ; प्रपा ६.

## आश्वलायनगृह्यपरिशिष्टम्

पुण्याहवाचनस्य विधिः कर्माद्यन्तयोः कर्तव्यता च

[1]*अथ स्वस्तिवाचनम्। ऋद्धिपूर्तेषु स्वस्त्ययनं वाचयेदित्याचार्यः । ऋद्धिर्विवाहान्ता अपत्यसंस्काराः । प्रतिष्ठोद्यापने पूर्तम् । तत् कर्मण आद्यन्तयोः कुर्यात् ॥

* अयमेव परिशिष्टपाठः सर्वेषु परिशिष्टपुस्तकेषूपलभ्यते । चतुर्वर्गचिन्तामणौ दानखण्डे (पृ. १४६–१४९) तु 'पुण्याहवाचनमुक्तं बह्वृचपरिशिष्टे' इत्युक्त्वा पुण्याहवाचनप्रयोगः संगृहीतः । स च परिशिष्टस्य यथाक्षरमनुवादो वा निबन्धकारस्याभिमतः, शिष्टाचारपरिप्राप्तपदार्थोपसंहारेण परिशिष्टानुसारिप्रयोगसंकलनं वाऽभिमतमिति न निश्चीयते । तत्र द्वितीयकोटेरुत्कटत्वस्यासदभिप्रेतत्वेऽपि अनुत्कटायाः प्रथमकोटेरपि संभावनासत्त्वात् स पाठोऽत्राशुद्धीः शोधयित्वा प्रदर्श्यते—

"अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं धारयित्वा दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च तेन आयुःप्रमाणेन पुण्याहं दीर्घमायुरस्तु । शिवा आपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । गन्धाः पान्तु । माङ्गल्यं चास्तु । पुष्पाणि पान्तु । सौश्रियमस्तु । अक्षतानि पान्तु । आयुष्यमस्तु । ताम्बूलानि पान्तु । ऐश्वर्यमस्तु । दक्षिणाः पान्तु । आरोग्यमस्तु । दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चाऽऽयुष्यं चास्तु । यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाशीर्वचनं बहुऋषिसंमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये । वाच्यताम् । 'द्रविणोदा द्रविणसस्तु' 'सविता पश्चातात्' 'नवो नवो भवति जायमानः' 'उच्चा दिवि दक्षिणावन्तो अस्थुः' इत्येता ऋचः पुण्याहे ब्रूयात् । व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् । समाहितमनसः स्मः । प्रसीदन्तु भवन्तः । प्रसन्नाः स्मः । शान्तिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवं कर्मास्तु । कर्मसिद्धिरस्तु । पुत्रसमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसंपदस्तु । अनिष्टनिरसनमस्तु । यत्पापं तत् प्रतिहतमस्तु । यच्छ्रेयस्तदस्तु । उत्तरे कर्मण्यविघ्नमस्तु । उत्तरोत्तरमहरहरभिवृद्धिरस्तु । उत्तरोत्तरक्रियाः शुभाः संपद्यन्ताम् । तिथिकरणमुहूर्तनक्षत्रसंपदस्तु । तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् । तिथिकरणे मुहूर्ते नक्षत्रे सग्रहे सदैवते प्रीयेताम् । दुर्गापाञ्चाल्यौ प्रीयेताम् । अग्निपुरोगा विश्वदेवाः प्रीयन्ताम् । इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् । वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् । माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् । अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् । विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् । ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् । ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् । श्रीसरस्वत्यौ प्रीयेताम् । श्रद्धामेधे प्रीयेताम् । भगवती कात्यायनी प्रीयताम् । भगवती माहेश्वरी प्रीयताम् । भगवती ऋद्धिकरी प्रीयताम् । भगवती वृद्धिकरी प्रीयताम् । भगवती पुष्टिकरी प्रीयताम् । भगवती तुष्टिकरी प्रीयताम् । भगवन्तौ विघ्नविनायकौ प्रीयेताम् । सर्वाः कुलदेवताः प्रीयन्ताम् । सर्वा ग्रामदेवताः प्रीयन्ताम् । हताश्च ब्रह्मद्विषः । हता विद्विषः । हताः परिपन्थिनः । हताश्च विघ्नकर्तारः । हताश्च विघ्नकराः । शत्रवः पराभवं यान्तु । शाम्यन्तु घोराणि । शाम्यन्तु पापानि । शाम्यन्तु ईतयः । शुभानि वर्धन्ताम् । शिवा आपः सन्तु । शिवा ऋतवः सन्तु । शिवा अग्नयः सन्तु । शिवा आहुतयः सन्तु । शिवा वनस्पतयः सन्तु । शिवा आपः सन्तु । अहोरात्रे शिवे स्याताम् । निकामे निकामे नः पर्जन्यो वर्षतु । फलवत्यो न ओषधयः पच्यन्ताम् । योगक्षेमो नः कल्पताम् । शुक्राङ्गारक-बुध-बृह-

(१) आगृप. १।१३ ; प्रपा. ६ पूर्तेषु + (कर्मसु) चयेदि (चयीते) पूर्तम् (पूर्तं) तत्कर्मण (तत्तत्कर्मणश्च) ; गभा. २९ (स्वस्त्ययनं वाचयेदित्याचार्यः) ण आद्य (णश्चाऽऽद्य) ; प्रर. १–२ गभावत् ; संम. ४ पूर्तम् (पूर्ते) तत्कर्म (कर्म) शेषं गभावत् ; प्रका. २८ पूर्तम् (पूर्ते) शेषं गभावत् ; संग. ६८ गभावत् ; संर. २८ (अथ स्वस्तिवाचनमृद्धिपूर्तेष्वृद्धिर्विवाहान्ता अपत्यसंस्काराः प्रतिष्ठोद्यापने पूर्ते) गृह्यपरिशिष्टे इत्युक्तम् .

अत्र प्रतिष्ठाग्रहणमुत्सर्गोपलक्षणम् ।  संर. २८

पुण्याहवाचनप्रयोगः

**[1]शुचिः स्वलङ्कृतो वाचयिता तथाभूते सद्मनि मङ्गलसंभारभृति युग्मान् ब्राह्मणान्**

---

स्पति-शनैश्चर-राहु-केतु-सोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् । भगवान् नारायणः प्रीयताम् । भगवान् पर्जन्यः प्रीयताम् । भगवान् स्वामी महासेनः प्रीयताम् । पुण्याहकालान् वाचयिष्ये । वाच्यताम् । 'उद्गातेव शकुने साम गायसि' 'याज्यया यजति' 'यत्पुण्यं नक्षत्रम् । तद्वट्कुर्वीतोपव्युषम् । यदा वै सूर्य उदेति । अथ नक्षत्रं नैति । यावति तत्र सूर्यो गच्छेत् । यत्र जघन्यं पश्येत् । तावति कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते । तानि वा एतानि यमनक्षत्राणि । यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते ।' पुण्याहं भवन्तो ब्रुवन्तु । ओं पुण्याहम् । 'स्वस्तये वायुमुप ब्रवामहै' 'आदित्य उदयनीयः' 'स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ।' 'अष्टौ देवा वसवः सोम्यासः । चतस्रो देवीरजराः श्रविष्ठाः । ते यज्ञं पान्तु रजसः परस्तात् । संवत्सरीणममृतं स्वस्ति ।' स्वस्ति भवन्तो ब्रुवन्तु । आयुष्मते स्वस्ति । 'ऋध्याम स्तोमं' 'सर्वामृद्धिम्' 'ऋध्यास्म हव्यैर्नमसोपसद्य । मित्रं देवं मित्रधेयं नो अस्तु । अनूराधान् हविषा वर्धयन्तः । शतं जीवेम शरदः सवीराः ।' 'त्रीणि त्रीणि वै देवानामृद्धानि । त्रीणि च्छन्दांसि । त्रीणि सवनानि । त्रय इमे लोकाः । ऋद्ध्यामेव तद्वीर्य एषु लोकेषु प्रति तिष्ठति ।' ऋद्धिं भवन्तो ब्रुवन्तु । ऋध्यताम् । 'श्रिये जातः' 'श्रिय एवैनम्' 'यस्मिन् ब्रह्माऽभ्यजयत् सर्वमेतत् । अमुं च लोकमिदमू च सर्वम् । तन्नो नक्षत्रमभिजिद्विजित्य । श्रियं दधात्वहृणीयमानम् । अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रयिविदा विदुः । ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम् ।' श्रीरस्त्विति भवन्तो ब्रुवन्तु । अस्तु श्रीः ।

(१) आगृप. १।१३ वाचयीता (वाचयीत); प्रपा. ६ भारभृति (भारान्संभृत्य) अर्घ्यादि (गन्धादि).

**प्रशस्तानाचारलक्षणसंपन्नानर्घ्यादिभिरभ्यर्च्य दक्षिणया तोषयेत् ॥**

**[2]अथ ते प्राङ्मुखाः प्रशस्ता दर्भपाणयस्तिष्ठेयुः । तद्दक्षिणतो वाचयितोदङ्मुखः । संस्कार्या वाचयितुर्दक्षिणपार्श्वमातिष्ठेयुः ॥**

**[3]अथ वाचयिता दर्भपाणिरपां पूर्णमुदकुम्भं स्वर्चितं सपल्लवमुखं धृत्वा तिष्ठन् समाहितो 'मनः समाधीयताम्' इति ब्राह्मणान्ब्रूयात् । 'समाहितमनसः स्मः' इति ते ब्रूयुः । 'प्रसीदन्तु भवन्तः' इति वाचयिता । 'प्रसन्नाः स्मः' इतीतरे ॥**

**[3]अथ ते सर्वे संहृत्य शान्तिः पुष्टिस्तुष्टिर्वृद्धिरविघ्नमायुष्यमारोग्यं शिवं कर्म कर्मसमृद्धिर्धर्मसमृद्धिः पुत्रसमृद्धिर्वेदसमृद्धिः शास्त्रसमृद्धिर्धनधान्यसमृद्धिरिष्टसंपदित्येतानि पञ्चदशास्त्वन्तानि वाक्यान्युक्त्वा तत्तन्नाम्ना कर्मदेवता प्रीयतामिति ब्रूयुः ॥**

**[4]अथ वाचयिता पूर्ववत् तत्तल्लिङ्गमन्त्रान् पठित्वा त्रिस्त्रिर्मन्द्रमध्योच्चस्वरैः 'ओं पुण्याहं**

---

पुण्याहसमृद्धिरस्तु । भगवान् प्रजापतिः प्रीयताम् ।' इति ।"

(१) आगृप. १।१३ (तै०); प्रपा. ६ प्रशस्ता (प्रसन्ना) णपार्श्वमा (णं पार्श्वमभि).

(२) आगृप. १।१३; प्रपा. ६.

(३) आगृप. १।१३ रिष्टसंपदित्ये (रिष्टसमृद्धिरित्ये) पञ्च...न्नाम्ना (पञ्चदश तन्त्राण्युक्तानि तन्नाम्ना); प्रपा. ६ (वाक्यानि०) तत्तन्नाम्ना (तन्नाम्ना); संकौ. २२-२३ अथ ते (अथ) मारोग्यं + (स्वस्ति).

(४) आगृप. १।१३ तत्तलिङ्ग (तल्लिङ्ग) मन्द्र (मन्द) ओं स्वस्ति (स्वस्ति) ओमृद्धिं (ऋद्धिं) ओमृध्य (ओमित्यृध्य); प्रपा. ६ तत्तल्लिङ्ग (तल्लिङ्ग); संकौ. २३ पूर्ववत् (पूर्व) तत्तलिङ्ग (तत्तल्लिङ्गान्) मध्योच्च (मध्यमोच्च) द्वौ प्रतिब्रूयुः(द्वौ ब्रूयुः).

**भवन्तो ब्रुवन्तु ' ' ओं स्वस्ति भवन्तो ब्रुवन्तु ' ' ओमृद्धिं भवन्तो ब्रुवन्तु ' इति ब्रूयात् । तेऽपि तथा प्रत्येकं प्रतिब्रूयुः । ' ओमृध्यताम् ' इत्यृद्धौ प्रतिब्रूयुः ॥**

[१]**अथ प्राङ्मुखमासीनं सामात्यं कर्तारं ब्राह्मणाः सपल्लवदर्भपाणयः प्रत्यङ्मुखास्तिष्ठन्तः शान्तिपवित्रलिङ्गाभिर्ऋग्भिरभिषिञ्चेयुः । पुरन्ध्र्यो नीराजनादि कुर्युः ॥**

## कौषीतकिगृह्यसूत्रम्

पुण्याहवाचनविधिः

†[२]**पुण्याहं वाचयति ॥**

ब्राह्मणेभ्यः किंचिद्दत्त्वा ' पुण्याहं भवन्तो ब्रुवन्तु ' इति ब्रूयात् । ततो ब्राह्मणाः ' पुण्याहम् ' इति त्रिर्वदन्ति । कौगृसं. पृ. १७

## आपस्तम्बगृह्यसूत्रम्

पुण्याहवाचनस्य ब्राह्मणभोजनपूर्वकत्वम्

¶[३]**ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा ॥**

( १ ) पूर्वेद्युर्नान्दीश्राद्धम् । ततः श्वोभूते ब्राह्मणान् भोजयित्वा तैराशिषो वाचयति— पुण्याहं स्वस्त्यृद्धिमिति । अनाकुला.

( २ ) ब्राह्मणान् भोजयित्वेत्यनेन यच्छ्राद्धं धर्मशास्त्रे ' शुचीन् — मन्त्रवतः सर्वकृत्येषु भोजयेत् ' ( आध. २।१५।११ ) इति विहितम्, यदेव नान्दीश्राद्धमभ्युदयश्राद्धमिति प्रसिद्धम्, तदेवोच्यते । तच्च स्मृत्यन्तरप्रसिद्धविधिना कर्तव्यम् । तस्य त्विह पुनः पाठः पाठक्रमेणानुष्ठानार्थः । अन्यथा पदार्थानां बद्धक्रमत्वाद्विवाहादिष्विव अन्ते एव स्यात् । आशीर्वचनेऽपि धर्मशास्त्रविहितेऽयमेव न्यायः । आशीर्वचनविधिश्च भाष्योक्तः । केचित्— पूर्वेद्युर्नान्दीश्राद्धम्, आचारात् स्मृत्यन्तराच्च, श्वोभूते च ब्राह्मणानां भोजनं भुक्तवद्भिरेवाऽऽशिषां वाचनार्थम्, सर्वकर्मणां चान्ते ' शुचीन् मन्त्रवतः सर्वकृत्येषु भोजयेत् ' इति वचनादिति । तातद.

## हिरण्यकेशिगृह्यसूत्रम्

पुण्याहवाचनस्य ब्राह्मणभोजनपूर्वकत्वम्

* [१]**युग्मान् ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्ययनमृद्धिमिति वाचयित्वा ॥**

युग्मान् युग्मप्रभृतीन् समसंख्याकान् ब्राह्मणान् वृद्धौ फलभूयस्त्वादन्नेन परिविष्य तर्पयित्वा पुण्याहं सुदिनत्वं सर्वकालमहनि ( ? ) स्वस्त्ययनं रक्षापुष्टिपुत्रधनधान्याद्यभिवृद्धिः ( ? ) । ' पुण्याहं भवन्तो ब्रुवन्तु ' ' स्वस्ति भवन्तो ब्रुवन्तु ' ' ऋद्धिं भवन्तो ब्रुवन्तु ' इत्येवं पुण्याहवाचनविधिना वाचयित्वेत्यर्थः । इतिशब्दो न्याय्याभिवचनानां परिग्रहार्थः । मातृवृ.

## हिरण्यकेशिगृह्यशेषसूत्रम्

कलशस्थापनविधिः

[२]**अथ कुम्भस्थापनविधिं व्याख्यास्यामः । ' मही द्यौः ' इति भूमिमभिमन्त्र्य, ' ओषधयः संवदन्ते ' इति धान्यराशिं ( प्रस्थपरिमितं वा ) कृत्वा, 'आजिघ्र कलशम् ' इति सौवर्णमयं रौप्यमयमौदुम्बरमयं मृन्मयं वा कलशं सुदृढं निधाय, ' इमं मे गङ्गे ' इति तीर्थजलेनाऽऽपूर्य, ' गन्धद्वाराम् ' इति गन्धं प्रक्षिप्य, ' पुष्पावतीः**

---

† इदं विवाहान्ते उक्तम् ।

¶ इदमुपनयनादावुक्तम् । एवमेव संस्कारान्तरेष्वपि ।

( १ ) आगृप. १।१३ तिष्ठन्तः ( तिष्ठेयुः ) आनन्दाश्रममुद्रितपरिशिष्टपुस्तके ' प्रत्यङ्मुखाः ' इत्यत्र ' प्राङ्मुखाः ' इति पाठः ; प्रपा. ६ अथ प्राङ्मुख ( अथोत्थाय ब्रूयुरथ प्राङ्मुख ) नीराजनादि ( नीराजनादिमङ्गलं ) ; संकौ. २३ ( प्रत्यङ्मुखास्तिष्ठन्तः ० ) अभिषिञ्चेयुः ( सिञ्चेयुः ) नीराजनादि ( नीराजनादिमङ्गलं ) .

( २ ) कौगृ. ११६।१०. ( ३ ) आपगृ. १०।५.

* इदमुपनयने । एवमेवेतरसंस्कारेष्वप्युक्तम् ।

( १ ) हिगृ. १९।१।६. ( २ ) हिगृशे. ३।२.

प्रसूवतीः' इति पुष्पम्, 'ओषधीरिति मातरः' इति तं भूषयित्वा, 'काण्डात्काण्डात्' इति दूर्वाम्, 'अश्वत्थे वो निषदनम्' इति पञ्च पल्लवान् 'याः फलिनीर्याः' इति फलम्, 'अग्ने रेतश्चन्द्रम्' इति हिरण्यम्, 'बृहस्पते जुषस्व नः' इति रत्नानि, 'युवा सुवासाः' इति वस्त्र-युगम्, 'पूर्णा दर्वि' इति पूर्णपात्रं तण्डुलपूरितं कुम्भस्याऽऽननेऽपिदध्यात् । अथ कलशं पूजयेत् 'इमं मे वरुण' 'तत्त्वा यामि' इति च ॥

पुण्याहवाचनविधिनिषेधौ

[१]अथातः पुण्याहवाचनं व्याख्यास्यामः । शुचौ देशे दूर्वान् (?) धारयमाणाश्चत्वारो ब्राह्मणा अरिक्ताः प्राङ्मुखा युग्मास्तिष्ठन्ति । अथैनमुदाहरन्ति–

[२]पुण्येऽहनि तु संप्राप्ते विवाहे चौलके तथा ।
व्रतबन्धे च यज्ञादौ तथा च व्रतकर्मणि ॥
[३]गृहारम्भे धनप्राप्तौ तीर्थाभिगमने तथा ।
नवग्रहमखे शान्तावद्भुतानां तथैव च ॥
[४]गृहप्रवेशने चैव ग्रामस्याभिनिवेशने ।
गजबन्धे तुरङ्गाणां दासादीनां च संग्रहे ॥
[५]सर्वेषु कर्ममात्रेषु प्रारम्भे स्वस्तिवाचनम् ।
अवृद्धिश्राद्धमात्रेषु न कुर्यात्पुण्यवाचनम् ॥
[६]अन्यस्मिन्नपि सर्वस्मिन् शुभे कर्मणि सत्तमैः ।
वाचनीया द्विजाः सम्यग्वेदशास्त्रपरायणाः ॥

(१) हिगृशे. ३।४.

(२) हिगृशे. ३।४ ; विपा. १७ च व्रत (जनन) सर्वे श्लोकाः स्मृतिसंग्रहे ; संर. २९ विपावत्, सर्वे श्लोकाः संग्रहे.

(३) हिगृशे. ३।४ ; विपा. १७ ; संर. २९.

(४) हिगृशे. ३।४ ; विपा. १८ दासादीनां (दासेराणां) ; संर. २९.

(५) विपा. १८ प्रकृतश्लोकमध्यपठितत्वादत्र संगृहीतः ; संर. २९ सर्वेषु कर्ममात्रेषु (धर्मकर्मसु सर्वेषु) पू.

(६) हिगृशे. ३।४ ; विपा. १८ उत्त.

पुण्याहवाचनानर्हा ब्राह्मणाः

[१]न तत्र कुनखी काणो हीनाङ्गो विकलस्तथा ।
क्षयरोगी च कुष्ठी च श्यामदन्तोऽभिशापकः ॥
[२]वन्ध्यश्च विधुरो वाग्मी क्रूरस्तु खलसेवकः ।
बकवृत्तिश्च दम्भी च हैतुको ज्ञानदुर्बलः ॥
[३]सहोपपत्तिरुन्मत्तो व्यसनी सोमविक्रयी ।
कन्याविक्रयकृद्वाजिविक्रयी पिशुनोऽनृतः ॥
[४]लोकदुष्टः पराधीनो राजद्रोहपरायणः ।
एते चान्येऽपि विप्राश्च न वाच्याः स्वस्ति-वाचने ॥

पुण्याहवाचनप्रयोगः

[५]ताम्बूलमक्षता द्रव्यं दूर्वाः पुष्पाणि चन्दनम् ।
कुङ्कुमं स्रक्शमीपत्राण्यक्षताः कुङ्कुमान्विताः ॥
[६]पुण्यतीर्थोदकं सम्यङ्निधाय कलशे शुभे ।
सुवर्णं तदभावे तु द्रव्यमात्रं निधापयेत् ॥
[७]पूगफलादिपुण्यानि फलानि तु विशेषतः ।
साक्षते भाजने पुण्ये दीपान्नीराजनात्मकान् ॥
[८]संगृह्य विधिवद्धीमान्वाचयेत्स्वस्तिवाचनम् ।
उदङ्मुखः प्राङ्मुखो वा यजमानः समाहितः ॥

(१) हिगृशे. ३।४ ; विपा. १८ ङ्गो विकल (ङ्गोऽङ्गाधिक) श्यामदन्तोऽभिशापकः (श्यावदन्तोऽभिशस्तकः).

(२) हिगृशे. ३।४ ; विपा. १८ वन्ध्य (बन्ध्य).

(३) हिगृशे. ३।४ ; विपा. १८ पत्ति (पति).

(४) हिगृशे. ३।४ ; विपा. १८ चान्येऽपि (चान्ये च).

(५) हिगृशे. ३।४ ; विपा. १८ कुङ्कुमं स्रक्शमीपत्राण्य (कुङ्कुमाक्तानि पात्राणि अ).

(६) हिगृशे. ३।४ ; विपा. १८ तदभावे तु (फलपुष्पाणि).

(७) हिगृशे. ३।४.

(८) हिगृशे. ३।४ ; विपा. १८ उत्त.

[1]निषण्णो मङ्गले पीठे तथाऽन्येऽपि द्विजातयः।
सदूर्वापाणयः सर्वे शुचयः शुचिवाससः॥

[2]गणेशं कुलदेवीं च नमस्कृत्य प्रयत्नवान्।
कालज्ञानं ततः कुर्यादनुज्ञातो द्विजातिभिः॥

[3]प्रारब्धकृत्यमुद्दिश्य पिधाय कलशं सुधीः।
मङ्गलद्रव्ययुक्तेन भाजनेन समाहितः॥

[4]उद्धृत्य सपिधानं तु कलशं हेमपूरितम्।
पद्मासनसमाविष्टो नमस्कुर्यात्प्रयत्नतः॥

[5]दीर्घमायुरस्तु। शिवा आपः सन्तु। सौमनस्यमस्तु। अक्षतं चारिष्टं चास्तु। गन्धाः पान्तु। सौमङ्गल्यं चास्तु। अक्षताः पान्तु। आयुष्यमस्तु। पुष्पाणि पान्तु। सौश्रियमस्तु। ताम्बूलानि पान्तु। ऐश्वर्यमस्तु। दक्षिणाः पान्तु। बहुदेयं चास्तु। दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु। श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चाऽऽयुष्यं चास्तु। यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते, तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाशीर्वचनं बहुऋषिमतं संविज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्य इति यजमानः पृच्छति। वाच्यतामिति तैर्वक्तव्यम्। 'भद्रं कर्णेभिः, द्रविणोदा, सविता, नवो नवो, उच्चा दिवि, आप उन्दन्तु, यस्त्वा हृदा, यस्मै त्वम्, सं त्वा सिञ्चामि, भद्रं भद्रम्, त्यमू षु वाजिनम्, को अद्य युङ्क्ते, सखाय आ शिषामहे' इति। त्रैविद्यवृद्धानां ब्राह्मणानां मनः समाधीयताम्। समाहितमनसः स्मः। प्रसीदन्तु भवन्तः। प्रसन्नाः स्मः। इति यजमानेनोक्ते सति तैर्वक्तव्यम्। ततः 'शान्तिरस्तु। पुष्टिरस्तु। तुष्टिरस्तु। ऋद्धिरस्तु। वृद्धिरस्तु। अविघ्नमस्तु। आयुष्यमस्तु। आरोग्यमस्तु। शिवं कर्मास्तु। कर्मसमृद्धिरस्तु। अहरहरभिवृद्धिरस्तु। धनधान्यसमृद्धिरस्तु। वेदसमृद्धिरस्तु। शास्त्रसंपदस्तु। पुत्रसंपदस्तु। इष्टसंपदस्तु। (बहिर्देशे) सर्वारिष्टनिरसनमस्तु। यत्पापं तत् प्रतिहतमस्तु। (मध्ये) यच्छ्रेयस्तदस्तु। उत्तरे कर्मण्यविघ्नमस्तु। उत्तरोत्तरं श्रीरस्तु। उत्तरोत्तरमहरहरभिवृद्धिरस्तु। उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यन्ताम्। तिथिकरणमुहूर्तनक्षत्रसंपदस्तु। तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम्। तिथिकरणे मुहूर्तनक्षत्रे सग्रहे सदैवते प्रीयेताम्। दुर्गापाञ्चाल्यौ प्रीयेताम्। अग्निपुरोगाः सर्वे देवाः प्रीयन्ताम्। इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम्। आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम्। ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम्। विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम्। माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम्। अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम्। वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम्। ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम्। श्रीसरस्वत्यौ प्रीयेताम्। श्रद्धामेधे प्रीयेताम्। भगवती कात्यायनी प्रीयताम्। भगवती महालक्ष्मीः प्रीयताम्। भगवती शान्तिकरी प्रीयताम्। भगवती पुष्टिकरी प्रीयताम्। भगवती तुष्टिकरी प्रीयताम्। भगवती ऋद्धिकरी प्रीयताम्। भगवती वृद्धिकरी प्रीयताम्। भगवन्तौ विघ्नविनायकौ प्रीयेताम्। भगवान् स्वामी महासेनः सपत्नीकः ससुतः सपार्षदः सर्वस्थानगतः प्रीयताम्। हरिहरहिरण्यगर्भाः प्रीयन्ताम्। सर्वाः कुलदेवताः प्रीयन्ताम्। सर्वा ग्रामदेवताः प्रीयन्ताम्। (बहिः) शाम्यन्तु घोराणि।

(१) हिगृशे. ३।४; विपा. १८ तथाऽन्येऽपि (स्थिता अन्ये) सदूर्वा (सुदूर्वा).

(२) हिगृशे. ३।४; विपा. १९ कालज्ञानं ततः (कालज्ञानादिकं). (३) हिगृशे. ३।४.

(४) हिगृशे. ३।४ सपिधानं (सविधानं); विपा. १९. (५) हिगृशे. ३।४.

शाम्यन्तु पापानि । शाम्यन्त्वीतयः । हता ब्रह्मद्विषः । हताः परिपन्थिनः । हताश्च कर्मणो विघ्नकर्तारः । शत्रवः पराभवं यान्तु । (अन्तः) शिवानि वर्धन्ताम् । शिवा आपः सन्तु । शिवा ऋतवः सन्तु । शिवा ओषधयः सन्तु । शिवा वनस्पतयः सन्तु । शिवा अग्नयः सन्तु । शिवा आहुतयः सन्तु । शिवा अतिथयः सन्तु । अहोरात्रे शिवे स्याताम् । निकामे निकामे नः पर्जन्यो वर्षतु । फलिन्यो न ओषधयः पच्यन्ताम् । योगक्षेमो नः कल्पताम् । ऋषयश्छन्दांस्याचार्या वेदा देवा यज्ञाश्च प्रीयन्ताम् । आदित्यसोमाङ्गारकबुधबृहस्पतिशुक्रशनिराहुकेतवो ग्रहाः प्रीयन्ताम् । भगवान्नारायणः प्रीयताम् । भगवान्स्वामी महासेनः प्रीयताम् । पुण्याहकालान् वाचयिष्ये' इति यजमानेन वक्तव्यम् । वाच्यतामिति विप्रैर्वक्तव्यम् । 'उद्गातेव०, याज्यया यजति०, (यत्पुण्यम्, तानि वा एतानि, भद्रो नो अग्निः' इति) मन्त्रब्राह्मणे पठित्वा पुण्याहम् (भवन्तो ब्रुवन्तु) इति यजमानो वदति त्रिवारम् । ॐ पुण्याहमिति त्रिवारं विप्रा ब्रूयुरुत्तरम् । 'स्वस्तये वायुं०, आदित्य उदयनीयः०, स्वस्ति न इन्द्रो०, अष्टौ देवा वसवः०, भद्रं मनः कृणुष्व०' इति मन्त्रब्राह्मणे पठित्वा स्वस्त्यस्त्विति भवन्तो ब्रुवन्त्विति त्रिवारं यजमानो वदति । तेऽपि त्रिवारं स्वस्ति ब्रूयुः । 'ऋध्याम स्तोमम्०, सर्वामृद्धिमृध्नुयामिति०, ऋध्यास्म हव्यैः०, त्रीणि त्रीणि वै०, भद्रो भद्रया सचमानः०' इति मन्त्रब्राह्मणपाठान्ते ऋद्धिं भवन्तो ब्रुवन्त्विति त्रिवारं यजमानो वदति । ऋध्यतामिति त्रिवारं विप्राः । ततः 'श्रिये जातः०, श्रिय एवैनम्०, यस्मिन्ब्रह्मा०, अहे बुध्निय०, श्रायन्त इव सूर्यम्०' इति मन्त्रब्राह्मणान्ते श्रीरस्त्विति यजमानो वदति त्रिवारम् । प्रतिवचनं तथैव त्रिवारम् । यद्देवत्यं भवति तस्य नाम गृह्णात्यसौ प्रीयतामिति । अथ पात्रे जलं विसृजेत्— 'वास्तोष्पते' इति चतसृभिः । अथवा व्याहृतिभिर्भूमौ वा जलं विसृज्योपविश्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरिति मार्जयित्वा पत्नीं च प्रोक्षतीति विज्ञायते ॥

## मानवगृह्यसूत्रम्

### पुण्याहवाचनविधिः

§[1]ततः स्वस्त्ययनं च ॥

स्वस्त्ययनं च स्वस्त्यादिशब्दयुक्ता मन्त्राः वाचयितव्याः । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

### ब्राह्मणभोजनपूर्वकत्वं पुण्याहवाचनस्य

*[2]ब्राह्मणान्भोजयित्वाऽऽशिषो वाचयित्वा... ॥

## वाराहगृह्यसूत्रम्

### स्वस्तिवाचनविधिः

$[3]यद्वा हविष्यं स्यात्तस्य स्वस्ति वाचयित्वा...॥

## आग्निवेश्यगृह्यसूत्रम्

### पुण्याहवाचनस्य कर्माङ्गत्वं प्रयोगश्च

[4]तत्र तत्र विनिर्दिष्टं पुण्याहादिविवाचनम् ।
कर्माङ्गं च विशुद्ध्यर्थं विस्तरेण मयोच्यते ॥
पुण्याहं वाचयिष्यन् हि शुक्लाम्बरधरः शुचिः ।
पवित्रपाणिराचान्तस्ततः कर्म समारभेत् ॥
श्रोत्रियान्क्षालितपदानाचान्तांश्च द्विजोत्तमान् ।
दर्भोपक्लृप्तासनेषु शुचीन्युग्मान् प्रवेशयेत् ॥
उपविश्य नवं कुम्भमद्भिः प्रक्षाल्य पूरयेत् ।
शुभाननमकल्माषमाढकापूरितं ततः ॥

---

§ इदं गर्भिण्याः फलस्नापने उक्तम् ।

* इदं चौलकर्मण्युक्तम् । अन्यत्र कुत्रापि नोक्तम् ।

$ इदं विवाहान्तर्गतसीमन्तकरणे उक्तम् ।

(१) मागृ. १।१६।४.   (२) भागृ. १।२८.

(३) वागृ. १६.   (४) आग्निगृ. २।३।३—४.

अर्चयेद्गन्धपुष्पाद्यैरक्षतैश्च फलान्वितैः ।
सादयित्वाऽथ दर्भेषु सकूर्चं पिहिताननम् ॥
अर्चयेत्तु ततः सम्यगुपविष्टान् द्विजोत्तमान् ।
आपो गन्धाः सुमनस इति दद्याज्जलादिकम् ॥
शिवा आपः सन्त्विति च सुगन्धाः पान्त्वि-
तीति च ।
सौमनस्यमिति ब्रूयुरस्त्वन्तमितरे द्विजाः ॥
शिवं कर्मेति चेत्युक्त्वा ब्राह्मणानां ददौ
(? ददेत्) जलम् ।
आपः स्वस्ति शिवं कर्मेत्यस्त्वन्तमितरे
द्विजाः ॥
भोज्यं दद्यात्ततस्तेभ्यो अन्वाहार्य इति द्विजः ।
ओदनं तण्डुलं वाऽपि स्वन्वाहार्योऽस्त्वितीत-
तरे ॥
गृह्णीयुर्दक्षिणां दद्याद्दक्षिणा इति च द्विजाः ।
स्वस्त्यादि दक्षिणाः पान्तु बहु देयमितीतरे ॥
अस्त्वन्तं प्रतिगृह्णीयुर्दद्यादक्षतमक्षतम् ।
इत्यक्षतं चारिष्टं चेत्यस्त्वन्तं ब्रूयुरर्चिताः ॥
वाचयेत्तु करस्थाना नामे भुक्तवतः श्रिते(?) ।
उत्तिष्ठेयुस्ततः पश्चान्मनः समाधीयतामिति ॥
समाहितमनसः स्मः प्रसीदन्तु भवन्त्विति ।
प्रसन्नाः स्म इति ब्रूयुः शान्तिपुष्टीति चोच्यते ॥
तुष्टिऋद्धी अविघ्नमस्त्वित्यायुष्यमिति चोच्यते ।
आरोग्यं शिवं कर्मास्तु इत्यूचुर्ब्राह्मणा
निशम् (?) ॥

* सप्रणवम् 'अस्तु' इति ब्रूयुः । प्रजापतिः प्रीयताम् । प्रीयतां भगवान्प्रजापतिः । एवं तत्तत्कर्मणि विहिता वाच्याः । पुण्याहं भवन्तो ब्रुवन्तु । 'ओं पुण्याहम्' इति । ओं परमस्वामिनाम्नः स्वस्ति भवन्तो ब्रुवन्तु । 'ओं स्वस्ति' । ओं ऋद्धिं भवन्तो ब्रुवन्तु । 'ओं ऋध्यताम्' । ओं त्रिः । पुण्याहसमृद्धिरस्तु । शिवं कर्मास्तु । एवं प्रतिवचनम् । नान्दीमुखाः पितरः प्रीयन्ताम् । '(प्रीयन्तां) भगवन्तो नान्दीमुखाः पितरः' इति प्रतिवचनम् । आपोहिष्ठादिभिर्मन्त्रैः प्रणीताप्रोक्षणंवदात्मानं प्रोक्षयेत् । पुण्याहं समाप्तम् ॥

## कात्यायनपरिशिष्टम्

पुण्याहवाचनस्य ब्राह्मणभोजनपूर्वकत्वम्

[1]ब्राह्मणान् भोजयित्वा स्वस्ति वाच्याऽऽशिषः प्रतिगृह्य ... ॥

## जैमिनिगृह्यसूत्रम्

पुण्याहवाचनस्य ब्राह्मणभोजनपूर्वकत्वम्

* [2]ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा ... ॥

परिविष्य तर्पयित्वा । पुण्याहं भवन्तो ब्रुवन्त्वित्यादि तैः पुण्याहं वाचयित्वा समापयेत् ।          श्रीव्या.

## वैखानसगृह्यसूत्रम्

पुण्याहवाचनस्य प्रयोगः, कर्मसिद्धिहेतुत्वम्, आदावन्ते च कर्तव्यता

[3]अथ पुण्याहम् । पञ्चावराञ्छ्रोत्रियानाहूयाभिपूजयति । आचार्यः करकं 'धारासु' इत्यद्भिरापूर्य, 'इदमापः शिवाः' इत्यपोऽभिमन्त्र्य, पुष्पाद्यैः 'सर्वतीर्थजलम्' इत्यभ्यर्च्य, प्रतिवाचकान् प्राङ्मुखानुदङ्मुखान्वा स्थापयित्वा, उदङ्मुखः 'सुपुण्याहं करोमि' इति संकल्प्य, 'स्वस्ति सुप्रोक्षितमस्तु' इति स्थानं प्रोक्ष्य, 'प्रजापतिः प्रीयताम्' इत्युक्त्वा, तैः 'प्रीयताम्' इति वाचयति । 'शाम्यन्तु घोराणि' इत्युत्तरान्तं त्रिरपः स्रावयति । 'अतो देवाः' इत्यग्रं

---

* आदर्शपुस्तके इतः प्राक् '(प्र ?)' इति संमुद्रय पृष्ठतले 'इतः पूर्वं किंचित् गलितं प्रतिभाति' इति टिप्पणी दत्ता ।

* इदं गृहकर्मण्युक्तम् ।

(१) गभा. १६५ याज्ञिकाः पठन्ति इत्युक्तम् ; संग. ५३०. (२) जैगृ. २।६ .

(३) वैगृ. १।६-७.

दैविके, 'सं त्वा सिञ्चामि' इत्यग्रं सूतके, 'शुची वो हव्या' इत्यग्रं प्रेतके, 'द्रविणोदाः' 'सविता' 'नवो नवो' 'विद्युत्' 'शतं जीव' 'अष्टौ देवाः' 'हिरण्यरूपः' 'ऋध्याम स्तोमम्' 'आहार्षं त्वा' 'अर्यमणम्' 'सोमᳪ राजानम्' इन्द्रावरुणा' 'श्रिये जातः' 'या गुङ्गूः' 'यस्त्वा हृदा' 'यस्मै त्वम्' 'नर्य प्रजाम्' 'सुत्रामाणम्' 'शतायुधाय' 'दक्षिणावताम्' 'भद्रं कर्णेभिः' 'शतमिन्नु' 'अदितिर्द्यौः' इत्यृत्विजः सर्वे वदेयुः ॥

देवा ऋषयः पितरो ग्रहा देव्य ऋषिपत्न्यः पितृपत्न्यो वेदा यज्ञाश्च सर्वाद्याः प्रीयन्तामन्तः (? प्रीयन्तामन्ताः । तथान्तं ) प्रतिवचनम् । पुण्याहं शिवमायुष्यम( ? मा )रोग्यमविघ्नमचलमैश्वर्यं यत्पापं तत्प्रतिहतं यच्छ्रेयः शिवं कर्म शिवः पक्ष इत्यस्त्वन्ताः । तथान्तः( ? न्तं) प्रतिवचनम् । शिवा ऋतवः सन्तु, शिवानि नक्षत्राणि भवन्तु, सर्वकर्मसमृद्धिरस्तु, सर्वधनधान्यसंपूर्णमस्तु, इत्येकैकमुक्तवन्तः (?) प्रतिवचनम् । 'यत्पुण्यं' 'स्वस्ति नः' 'ऋध्यास्म' इति पूर्वोक्तामितरेऽनुवदन्ति । यजमानस्य नक्षत्रनामादि गोत्रनाम सुतान्तं मातृगोत्रनामान्तात्परं शर्मान्तं नाम प्रणवादि भवन्तो ब्रुवन्तु पुण्याहं स्वस्त्यृद्ध्यन्तं प्रत्येकं त्रिधा त्रिधा यथाविभक्तिवाचितमनुवाचयेयुः । आपोहिरण्यपवमानैः प्रोक्षयति । पुण्याहे कृते तदहः पुण्यं भवति । आदावन्ते वा पुण्याहेन सर्वाः क्रियाः पुण्याः परिपूर्णा भवन्ति । 'स्वाङ्कृतोऽसि' इति दक्षिणाकालमुक्तवत्सु 'घृतात्परि' इत्यद्भिर्यथाशक्ति दक्षिणां हस्तेन दक्षिणेन ददाति । 'त्वमग्ने यज्ञानाᳪ होता' इति तदाददीरन् । यत्र दक्षिणादानादाने तत्रैवं स्यादिति विज्ञायते ॥

## हारीतः

### कलशस्थापनम्

[1]गोमयेनोपलिप्योर्वीं रङ्गवल्लिकयाऽर्चयेत् ।
[2]प्रस्थधान्योपरि स्थाप्यं पूर्णं हि कलशद्वयम् ॥
[3]दक्षिणे चोत्तरे चैव उत्तरे तु निधापयेत् ।
पात्रमक्षतपूर्णं तु फलपुष्पसमन्वितम् ॥
[4]ताम्बूलमक्षता द्रव्यं दूर्वाः पुष्पाणि चन्दनम् ।
कुङ्कुमाक्तानि पात्राणि अक्षताः कुङ्कुमान्विताः ॥

पुण्यतीर्थोदकं सम्यङ् निधाय कलशं शुभम् ।
सुवर्णफलपुष्पादिद्रव्यं तत्र निधापयेत् ।
पात्रमक्षतपूर्णं च कलशोपरि विन्यसेत् ॥

( १ ) 'उत्तरे तु निधापयेत्' इति वचनात् उत्तरकलश एव पूर्णपात्रं निधाय तत्र वरुणपूजां कुर्यात् । परशुरामेण एकस्यैव कलशस्य स्थापनमुक्तम् । एतदनुसारी शिष्टाचारोऽपि । कलशद्वयस्थापनं तु दाक्षिणात्या एवाऽऽचरन्ति । संग. ६९

( २ ) प्रतिष्ठाप्यमित्यत्र 'उपसर्गात्सुनोति०' ( पासू. ८।३।६५ ) इति षत्वम् । पूर्णम् उदकपूर्णम् । अयमर्थः— यत्र स्वस्तिवाचनं करिष्यन्भवति तत्राऽऽदौ गोमयेन भूमिमुपलिप्य रङ्गवल्लिकया तां भूषयेत् । ततो भूषितभूप्रदेशादुत्तरतः प्रस्थपरिमितं धान्यं स्थापयिष्यमाणकलशद्वयाधःप्रदेशद्वये पुञ्जीकरणार्थं संस्थाप्य तदुत्तरतः शुद्धोदकपूरितं कलशद्वयं स्थापयिष्यमाणकलशद्वयपरिपूरणार्थमुदक्संस्थं निधाय तदुत्तरतः पूजोपयोगिताम्बूलादिद्रव्याणि संस्थापयेत् । ताम्बूलाक्षतादिपात्राणि

---

( १ ) प्रपा. ८ स्थाप्यं ( स्थाप्य ); विपा. २२-२३ कलश ( कलस ) शौनकीये; संकौ. १९ प्रपावत्; संग. ६९; संर. ३० धान्योपरि स्थाप्यं ( धान्यं प्रतिष्ठाप्यं ).

( २ ) प्रपा. ८; विपा. २३ उत्तरे तु निधापयेत् ( सुवर्णेन समन्वितम् ) पू. शौनकीये; संकौ. १९; संग. ६९; संर. ३० पू.

( ३ ) संर. ३०.

कुङ्कुमेन रञ्जितानि कार्याणि । एवं कलशद्वयं पूजोपयोग्यक्षताश्च । पुण्यतीर्थजलपूरितं तृतीयं कलशं गणपत्यादिपूजार्थं निधाय सुवर्णफलधूपादिद्रव्याणि तृतीयकलशसमीपे निधाय स्थापयिष्यमाणकलशद्वयाननापिधानार्थं पात्रद्वयं समीपे संस्थाप्य तत्पूरणार्थक्षिता(?क्षत)-पात्रं कलशोपरि निधाय संकल्पमारभेदिति ।

संर. ३०

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

पुण्याहवाचनवाक्यानामोंकारपूर्वकत्वम्

**[१]लोके च भूतिकर्मस्वेतदादीन्येव वाक्यानि स्युर्यथा पुण्याहं स्वस्त्यृद्धिमिति ॥**

(१) यथा यज्ञेष्वोङ्कारादयः प्रसवाः, लोके च भूतिकर्मसु पाणिग्रहणादिषु एतदादीन्येव वाक्यानि स्युः । तानि उदाहरति– यथेति । पुण्याहवाचने 'ओं कर्मणः पुण्याहं भवन्तो ब्रुवन्तु' इति वाचयिता वदति । 'ओं पुण्याहं कर्मणोऽस्तु' इति प्रतिवक्तारः । 'ओं कर्मणे स्वस्ति भवन्तो ब्रुवन्तु' इति वाचयिता । 'ओं कर्मणे स्वस्ति' इतीतरे । 'ओं कर्मण ऋद्धिं भवन्तो ब्रुवन्तु' इति वाचयिता । 'ओं कर्मर्ध्यताम्' इतीतरे । तस्मादेवं प्रशस्त ओंकार इति । * उ.

(२) भूतिकर्मसु संपत्करकर्मसु, स्वस्तिवाचनादिष्विति यावत् । एतदादीनि प्रणवादीनि ।

चदा. १४६

---

* ब्रक., निप्र., पप्र. उगतम् ।

(१) आध. १।१३।९ ; हिध. २६।४।२३ स्वस्त्यृद्धि (स्वस्त्ययनमृद्धि) ; मेधा. २।८३ (तदादीनि वाक्यानि स्युः) एतावदेव ; ब्रक ५५ ; चव्र. ३७ (भूतिकर्माण्युच्चैस्तदादीन्येव वाक्यानि स्युर्यथा पुण्याहं सुसमृद्धमिति). कश्यपः ; चदा. १४६ (लोके भूतिकर्मसु वैतदादीन्येव वाक्यानि स्युर्यथा पुण्याहं सुसमृद्धमिति) कश्यपः ; निप्र. २७ (च०) कर्मस्वेत (कर्मसु चैत) ; पप्र. ७८ लोके च (लोकेषु) कर्मस्वेत (कर्मसु चैत) स्वस्त्यृद्धि (स्वस्तिमृद्धि).

## व्यासः

पुण्याहवाचनात्पूर्वं ब्राह्मणपूजनम्, पुण्याहवाचननिमित्तानि

**[१]संपूज्य गन्धमाल्याद्यैर्ब्राह्मणान्स्वस्ति वाचयेत् । धर्मकर्मणि माङ्गल्ये संग्रामेऽद्भुतदर्शने ॥**

(१) 'धर्मे कर्मणि' इति सप्तमीनिर्देशात् अमुककर्मणि 'स्वस्ति भवन्तो ब्रुवन्तु' इति ब्रूयात् ।

उत. १४२

(२) गन्धमाल्याद्यैरिति वचनं गन्धपूर्वभाविनां पादप्रक्षालनादीनामुपचाराणामनावश्यकत्वबोधनार्थम् । आद्यशब्देन ताम्बूलादिग्रहणम् । संर. २८

## यमः

पुण्याहवाचनं दैवकर्माङ्गम्, ब्राह्मणस्य सोंकारम्, क्षत्रियवैश्ययोर्निरोंकारम्, वैश्यशूद्रयोरुपांशु

**[१]पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते । एतदेव निरोंकारं कुर्यात् क्षत्रियवैश्ययोः ॥**

---

(१) चदा. १४५–१४६ मेऽद्भुत (माद्भुत) ; प्रपा. ५ ; गभा. २९ ; निप्र. २७ धर्मकर्मणि (धर्म्ये कर्मणि) मेऽद्भुत (माद्भुत) यमः ; उत. १४२ माल्याद्यै (पुष्पाद्यै) धर्म (धर्मे) माङ्गल्ये (मङ्गल्ये) मेऽद्भुत (माद्भुत) ; प्रर. १ ; संम. ४ ; प्रका. २८ ; संग. ६८ ; संर. २८.

(२) ब्रक. ५६ कुर्यात् (ब्रूयात्) ; चव्र. ३७ दैवे (देवि ?) ; चदा. १४६ ; प्रपा. ८ दैवे (चैव) एतदेव (तदेव च) ; निप्र. २७ ; उत. १४२ ; पप्र. ७८ ब्रकवत् ; विपा. २१ दैवे ...... एतदेव (पूर्वं सतारं ब्राह्मणस्य च । तदेव च) ग्रन्थस्य अव्यवस्थितत्वात् हारीतस्य यमस्य वेति न निर्णीयते : २३ प्रपावत्, अस्मिन् श्लोके 'तत्प्रमाणमुक्तं विष्णुधर्मोत्तरे' इत्यवतरणार्थाननुगमात् अस्य विष्णुधर्मोत्तरीयत्वं ग्रन्थकृतः अभिप्रेतं न स्यादिति संभाव्यते । अवतरणे प्रमाणशब्दः तिर्यङ्मानपरः । ; संग. ६९ विग्रा. पृ २१वत् ; संर. २९ दैवे (सर्वं) एतदेव (तदेव च).

(१) दैवे यज्ञादिकर्मणि । पप्र. ७८

(२) सर्वमोंकारसहितम् । निरोंकारमोंकाररहितम् । उच्चैरोंकाररहितमिति केचित् । संर. २९

[1]सोंकारं ब्राह्मणे ब्रूयान्निरोंकारं महीपतौ ।
उपांशु च तथा वैश्ये शूद्रे स्वस्ति प्रयोजयेत् ॥

वैश्ये शूद्रे च उपांशु स्वस्ति प्रकीर्तितमिति संबन्धः । संदी. ७०

## आश्वलायनः

पुण्याहवाचनस्य कर्मादौ कर्तव्यता, ब्राह्मणधर्माः, प्रयोगः

*[2]वैदिके तान्त्रिके चाऽऽदौ ततः पुण्याहमिष्यते ।
पुण्याहवाचने विप्रा युग्मा वेदविदः शुभाः ॥
[3]यज्ञोपवीतिनः शस्ताः प्राङ्मुखाः स्युः पवित्रिणः ।
गन्धपुष्पार्चिताः शुद्धाः सोत्तरीयाः कुशायुधाः ॥
[4]आसीनाः पश्चिमे भागे पूर्णकुम्भस्य सत्तमाः ।
गुरोर्दक्षिणभागे तु कर्ताऽऽसीत तदाज्ञया ॥

* 'वैदिके तान्त्रिके चाऽऽदौ' अयमंशो नान्दीश्राद्धविषयकः ।

(१) उत. १४२ ; संग. ६९ ब्रूयात् (कुर्यात्) शूद्रे स्वस्ति प्रयोजयेत् (स्वस्ति शूद्रे प्रकीर्तितम्) वैद्यनाथकृतरुद्रपद्धतौ ; संदी. ७० सर्वं संगवत्.

(२) आश्वस्मृ. ७।८ ; प्रपा. ६ ण्याहमि (ण्याह इ) ; गभा. २९ प्रपावत्, पू. ; प्रर. २ प्रपावत्, पू. ; प्रका. २८ प्रपावत्, पू. ; संग. ६८ प्रपावत् पू. : ७० उत्त., ग्रहतत्त्वदीपिकायाम् ; संर. २८ ततः पुण्याह (स्वस्तिवाचन) पू. ; संदी. ७० उत्त., ग्रहतत्त्वदीपिकायाम्.

(३) आश्वस्मृ. ७।९ शुद्धाः (शुभ्राः) ; प्रपा. ६ ; संग ७० ग्रहतत्त्वदीपिकायाम् ; संदी. ७० ग्रहतत्त्वदीपिकायाम्.

(४) आश्वस्मृ. ७।१०,१२ ; प्रपा ६ ; संकौ. २३ उत्त ; संग. ७० ग्रहतत्त्वदीपिकायाम् ; संदी. ७० पू., ग्रहतत्त्वदीपिकायाम्.

[1]सूत्रेण वेष्टितं कुम्भमपां पूर्णं सुधूपितम् ।
मृत्ताम्रादिमयं भूमौ रत्नगर्भं समर्चितम् ॥
[2]सिततण्डुलपूर्णेन पात्रेण पिहिताननम् ।
पल्लवाद्यैश्च संगृह्य गुरुस्तिष्ठेदुदङ्मुखः ॥
[3]वक्तारश्चापि तिष्ठेयुर्विप्रास्तान् वाचयेद्गुरुः ।
मनः समाधीयतामित्युक्तास्ते गुरुणा द्विजाः ॥
[4]समाहितमनसः स्म इति ब्रूयुस्ततः स्थिताः ।
प्रसीदन्तु भवन्तश्चेत्युक्ते ते चानुमन्त्रणम् ॥
[5]कुर्युः प्रसन्नाः स्म इति ततो गुरुमुखा द्विजाः ।
शान्तिः पुष्टिस्तुष्टिर्वृद्धिरविघ्नारोग्यमित्यपि ॥
[6]शिवं कर्म च कर्मान्ते सिद्धिरस्त्वित्युदाहरेत् ।
प्रत्युक्ते तैश्च पुण्याहकालमित्युत्तमेन तु ॥
[7]वाच्यतामितरे ब्रूयुराचार्यश्च ततो वदेत् ।
ओं पुण्याहं भवन्तश्च ब्रुवन्त्विति च ते द्विजाः ॥

(१) आश्वस्मृ. ७।१०-११ ; प्रपा. ६ ; संग. ७० मपां पूर्णं सुधूपितम् (मद्भिः पूर्णं सुशोभितम्) गर्भं स (गर्भस) ग्रहतत्त्वदीपिकायाम्.

(२) आश्वस्मृ. ७।११-१२ ; प्रपा. ६ ; संग. ७० ग्रहतत्त्वदीपिकायाम्.

(३) आश्वस्मृ. ७।१३ त्युक्तास्ते (त्युक्ते ते) ; प्रपा. ६ ; संकौ. २३ तृतीय एव चरणः ; संग. ७० ग्रहतत्त्वदीपिकायाम्.

(४) आश्वस्मृ. ७।१४ तमनसः स्म इति ब्रू (ताः स्म मनसेत्यनुब्रू) ; प्रपा. ६ ; संग. ७० मन्त्रणम् (मन्त्रिणम्) ग्रहतत्त्वदीपिकायाम्.

(५) आश्वस्मृ. ७।१५ उत्तरार्धे (शान्तिपुष्टिऋद्धिवृद्धिरविघ्नारोग्यकावपि ॥) ; प्रपा ६ ; संग. ७० कुर्युः (ब्रूयुः) पू., ग्रहतत्त्वदीपिकायाम्.

(६) आश्वस्मृ. ७।१६ शिवं कर्म (शिवकर्म) प्रत्युक्ते तैश्च (उक्तेभदिति) ; प्रपा. ६ कालमि (काल इ).

(७) आश्वस्मृ. ७।१७ मितरे (मिति ते) ; प्रपा. ६ च ते (वचो).

[1]ओं पुण्याहमिति ब्रूयुरों स्वस्तीति ततो गुरुः ।
पूर्ववच्च ब्रुवन्त्वन्तं ते चर्द्धिं च तथा द्विजाः ॥
[2]पूर्ववत्ते समासीना गुर्वाद्याः कलशं गुरुः ।
स्नाव्य पात्रे शुभे तस्मिन्स्थिते तान्वाचयेत्ततः ॥
[3]सावित्र्यादिस्वगृह्योक्तमन्त्रैः पुण्याहमिष्यते ।
बह्वृचोऽपीतरे तद्वदापो हि ष्ठादिभिस्ततः ॥
[4]नवभिर्वैश्वदेवेन सूक्तेनाऽऽन इति द्विजाः ।
अष्टाभिश्चाप न इति त्रिभिरेतो न्वितीरयेत् ॥
[5]स्वादिष्ठयेति नवभिरेकयर्चाऽथ च द्विजाः ।
तंरत्समन्दीसूक्तेन शुची व इति चैकया ॥
[6]यदन्तीति द्वादशभिरग्निः शुचिरिति त्वृचा ।
अखिलेष्वपि तस्मात्प्रागेवं पुण्याहमीरितम् ॥
[7]कुशाम्बुभिश्च कर्तारं प्रोक्षयेयुरिह द्विजाः ।
पठन्त्यृचो विशुद्ध्यर्थं बह्वृचाः स्वगृहे तथा ॥
[8]पुण्याहादि वदेत्पूर्वं मन्द्रमध्योत्तमस्वरैः ।
पुण्याहान्तेऽर्चयेद्विप्रान्दक्षिणाद्यैः स्वशक्तितः ॥

[1]यत्किंचिच्छ्राद्धिकं भुक्त्वा प्रतिगृह्याथवाऽशुचि ।
अब्राह्मणश्च पुण्याहे नार्हः स्यादिति मे मतिः ॥
[2]पुण्याहवाचनं शस्तमादौ स्यात्सर्वकर्मसु ।
तत्कृत्वैव सदा कुर्यात्सर्वकर्माणि मानवः ॥

वरणोत्तरं वधूवरगृहयोः पुण्याहवाचनस्य पृथक्कर्तव्यता

[3]वृत्वैवमिष्यते पश्चात्तयोः पुण्याहवाचनम् ।
अपश्यतोः पृथग्गेहे पृथगभ्युदयं पुरा ॥

## स्मृत्यन्तरम्

पुण्याहवाचने दक्षिणोत्तरकलशयोः क्रमेण स्थिरत्वं चरत्वं च

[4]पुण्याहवाचने चैव यः कुर्यात्कलशार्चनम् ।
दक्षिणस्थः स्थिरश्चैव उत्तरस्थश्चरो भवेत् ॥

दक्षिणकलशचालननिषेधः स्मृत्यन्तरे– पुण्याहेति । वास्तोष्पत इति धारापातात्प्राक् स्थिरता । संर. ३१

*[5]न चालयेद्दक्षिणस्थमुत्तरस्थं तु चालयेत् ।
अन्यथा धर्महानिः स्यादेष धर्मः सनातनः ॥

अभिषेकमन्त्राः

[6]चतुः स्वस्ति पयः पञ्च विष्णोर्द्वादश देवताः ।
प्रातः षट् पञ्च भगः पञ्चेन्द्रैः पञ्च वारुणैः ।
षड्वातैस्तु शान्तिरष्टौ जपान्मृत्युर्विनश्यति ॥

---

(१) आश्वस्मृ. ७।१८ चर्द्धिं (वृद्धिं) द्विजाः (ततः); प्रपा. ६.

(२) आश्वस्मृ. ७।१९ ; प्रपा. ६–७.

(३) आश्वस्मृ. ७।२० तरे त (रयेत्त); प्रपा. ७ ण्याहमि (ण्याह इ).

(४) आश्वस्मृ. ७।२१ नव (अष्ट) द्विजाः (द्विजः) अष्टा (अष्ट); प्रपा. ७.

(५) आश्वस्मृ. ७।२२ यर्चाऽथ च द्विजाः (याप ? इति द्विजः); प्रपा. ७.

(६) आश्वस्मृ. ७।२३ अखिलेष्वपि तस्मात् (खिलर्चा वाऽथ तस्याः); प्रपा. ७ त्वृचा (द्व्यृचा).

(७) आश्वस्मृ. ७।२४ भिश्च (भिस्तु) रिह (रिमा) उत्तरार्धे (पठन्तोऽर्चे विशुद्धोर्थे वह्वृचाः स्वैः पुरे तथा। ?); प्रपा. ७.

(८) आश्वस्मृ. ७।२५ मन्द्र (मन्द); प्रपा. ७; संकौ. २३ णाद्यैः (णाभिः) उत्त.

* अस्य स्मृतित्वेन निर्देशाभावेऽपि पूर्वश्लोकेनैकवाक्यतामभिप्रेत्यात्र संगृहीतः।

(१) आश्वस्मृ. ७।२६ शुचि (शुचिः); प्रपा. ७; संकौ. २३ ह्याथवाऽशुचि (ह्य च वाऽशुचिः).

(२) आश्वस्मृ. ७।२७ तत्कृत्वैव सदा (तत्कृत्वैवं बुधाः); प्रपा. ७; सकौ. २३ तत्कृत्वैव सदा (नाकृत्वै-तद्बुधः). (३) आश्वस्मृ. ११।३३९–३४०.

(४) संव. ३४ (=) रस्थश्चरो भवेत् (रतश्चरस्तथा); संर. ३१. (५) संव. ३४ (=).

(६) संग. ७१ ; संदी. ७१ विष्णोर्द्वादश (विष्णोः षड् द्वादश) वातैस्तु शा (वातैः शा).

(१) चतुः स्वस्ति इत्यनेनोक्तेन यस्मिन्मन्त्रे स्वस्तिपदानि चत्वारि सन्ति स ग्राह्यः। एवं सर्वत्र व्याख्येयम्। चतुः स्वस्ति 'स्वस्ति न इन्द्रः' इति कण्डिका। पयः पञ्च 'पयः पृथिव्याम्' इति कण्डिका। विष्णोरपि 'विष्णो रराटमसि' इति कण्डिका। द्वादश देवताः 'अग्निर्देवता वातो देवता' इति कण्डिका। प्रातः षट् 'प्रातरग्निम्' इति कण्डिका। पञ्च भगः 'भग प्रणेतः' इति कण्डिका। पञ्चेन्द्रैः 'त्रातारमिन्द्रम्' इति कण्डिका। पञ्च वारुणैः 'वरुणस्योत्तम्भनमसि' इति कण्डिका। षट् वातैः 'नियुत्वान्वायो' इति कण्डिका। शान्तिरष्टौ 'द्यौः शान्तिः' इति कण्डिका। एते अभिषेकमन्त्राः। संग. ७१–७२

(२) अभिषेकमन्त्राः स्मृत्यन्तरोक्ताः– 'स्वस्ति न इन्द्रः' 'पयः पृथिव्याम्' 'विष्णो रराटमसि' 'अग्निर्देवता' 'प्रातरग्निम्' 'भग प्रणेतः' 'त्रातारमिन्द्रम्' 'वरुणस्योत्तम्भनमसि' 'समुद्राय त्वा वाताय' 'द्यौः शान्तिः' एते मन्त्राः चतुःस्वस्त्यादिशब्दैर्ज्ञेयाः। कण्वशाखायां 'द्यौः शान्तिः' इति मन्त्रे अष्टावेव शान्तिशब्दा उपात्ता इति तदभिप्रायेण कारिकायां संस्कारगणपत्युक्तायां 'शान्तिरष्टौ' इत्युल्लेखः। संदी. ७१

## ब्रह्माण्डपुराणम्

कर्माद्यन्तयोः पुण्याहादेर्वाच्यत्वम्, दक्षिणास्वरूपम्, ब्राह्मणभोजनम्

[1]आदावन्ते पञ्चभिर्विप्रवर्यैः
पुण्याहं च स्वस्ति ऋद्धिं च वाच्यम्।
दद्यात्तेभ्यो दक्षिणां जातरूपं
वासो धान्यं भोजयेद्ब्राह्मणांश्च॥

## अनिर्दिष्टकर्तृकवचनानि

पुण्याहवाचनपीठं कलशस्थापनं च

[1]श्रीमत्स्वस्तिकमादितो भुवि शुभं
कुर्यात्सितैस्तण्डुलै-
र्द्वात्रिंशत्परितोऽङ्गुलानि सततं
तावच्च कोष्ठैर्युतम्।
प्राक्पश्चोत्तरतस्तु पञ्च वितता
मध्ये तु रेखाद्वयं
कोणेऽप्यायतनेषु वाऽप्युभयत-
स्तिर्यक्तथैकैकिका॥

एवं यच्चतुरस्रकं विरचयेत्
कुक्ष्योः पद्माकारवत्
प्राच्यां स्याद्गजशुण्डवत्कलशवत्
कुर्यात्प्रतीच्यां तथा।
मध्ये स्थाप्य च तण्डुलोपरि शुभौ
कुम्भौ लसत्पल्लवौ
पूर्णौ रत्नजलैस्ततो ह्युपविशे-
द्भद्रासने प्राङ्मुखः॥

[1]कलशस्थापनं कार्यं कमलेऽष्टदलेऽमले।
उदकुम्भं समानीय रुद्रकुम्भवदर्चितम्॥

आद्यं तृतीयं तृतीयं च भूताः
भूता द्वितीयं द्वितीयं चतुर्थम्।
चतुर्थमाद्यं च पुनस्तथेति
संयोजयेदिन्दुशरप्रमाणे॥

भूमिं भूरसि संप्रार्थ्याथाऽऽजिघ्रेत्यम्बुजे
न्यसेत्।
एवं कलशमापूर्य ...॥

[2]द्वात्रिंशदङ्गुलं दीर्घं समन्ताच्चतुरस्रकम्।
रेखे द्वे कोणतिर्यक्च विस्तृते पार्श्वयोर्द्वयोः॥
कोष्ठानि कारयेत्तत्र द्वात्रिंशत्संख्यकानि तु।
पद्मवत्पार्श्वयोस्तस्य पुरतो गजतुण्डवत्॥
पश्चिमे कलशाकारं निर्मितं ब्रह्मणा पुरा।
तदेवं स्वस्तिकं चेति प्रवदन्ति महर्षयः॥
तण्डुलैः स लिखेद्भूमावादौ तु शुभकर्मणाम्।
तन्मध्ये स्थापयेद्द्वाभ्याः सजलं कलशद्वयम्॥
सौवर्णं राजतं वाऽपि कांस्यं वा रत्नपूरितम्।
पात्रे द्वे विन्यसेत्तत्र सौवर्णे राजतेऽपि वा॥

---

(१) निप्र. २७. (२) कृभ. ११४५.

(१) संग. ६८–६९. (२) धप्र. ५७.

सफले कांस्यपात्रे वा न्यसेत्तण्डुलपूरिते ।
सुवर्णपत्रपुष्पैश्च पञ्चरत्नैः समन्विते ॥

कर्माङ्गत्वेन पुण्याहवाचनविधिः

[1]पत्नीपुत्रैः समायुक्तः शुभार्थी ब्राह्मणैः सह ॥
पुण्याहवाचनं कुर्यात्सर्वेष्वप्यृद्धिकर्मसु ॥

[2]विवाहान्तेषु सर्वेषु गर्भाधानादिकर्मसु ।
नान्दीश्राद्धं समुद्दिश्य स्वस्तिवाचनमाचरेत् ॥

पुण्याहवाचनदेवता

[3]प्रधानदेवता या तु स्वचिकीर्षितकर्मणः ।
असाविति च तां ब्रूयात् संदेहे तु प्रजापतिम् ॥

## स्मृतिसंग्रहे

शुभाशुभकर्मणोः कलशसंख्याव्यवस्था

[4]शुभे कर्मणि पुण्याहवाचने कलशद्वयम् ।
स्थापयेदशुभे त्वेकमिति यज्ञविदो विदुः ॥

अत्र स्थापयेदिति वचनात्स्थापनविषय एवाशुभसंबन्धिता। तेन शुभकर्मसंबन्धिपुण्याहवाचने बौधायनोक्तरीत्या कलशैकत्वेऽपि न क्षतिः, तत्र स्थापनाभावात् । संर. २९

## वाचस्पतिमिश्रः

पुण्याहवाचनस्य पौर्वापर्यम्

[5]आदौ प्रधानसंकल्पस्ततः पुण्याहवाचनम् ।
मातृपूजा ततः कार्या वृद्धिश्राद्धं ततः स्मृतम् ॥

## ग्रहतत्त्वदीपिकायाम्

आदिमध्यावसानेषु पुण्याहवाचनस्य कर्तव्यता

[6]आदौ मध्यावसाने च कुर्याद्ब्राह्मणवाचनम् ॥

(१) धप्र. ५७ ; संग. ६८ र्थी ब्रा (थैर्ब्रा) ष्वप्यृद्धि (षु वृद्धि).

(२) धप्र. ५७ ; संग. ६८. (३) प्रपा. ८.

(४) संर. २९.

(५) संग. ६७. पूजा (पूजां) कार्या (कृत्वा) स्मृतम् (परम्) ; संदी. ५५, ६९.

(६) संग. ६८.

## विश्वप्रकाशे

पुण्याहवाचनस्य प्रथमानुष्ठानात्मकनिमित्तानि

[1]उपाकर्मोत्सर्जनयोः श्रौतानां कर्मणां तथा ।
प्रथमानुष्ठितावेव स्वस्तिवाचनमिष्यते ॥

उपाकर्मोत्सर्जनग्रहणं नित्यानां श्रवणाकर्माग्रहायणीस्थालीपाकादीनामुपलक्षणम् । २९

स्वस्तिवाचनग्रहणं मातृकापूजनवृद्धिश्राद्धयोरुपलक्षणम् । संर. ११५५

## शाकलकारिकाः

पुण्याहवाचनस्याऽऽद्यन्तयोः कर्तव्यता

[2]स्वस्तिवाचनमात्रं तु कर्तव्यं शुभकर्मणाम् ।
आदावेव तथा चान्ते मङ्गलार्थमुदीरितम् ॥

निमित्तभेदेन पुण्याहवाचनप्रयोगभेदः

[3]पुत्रस्यापि च वाऽन्यस्य क्रियते शोभनं यदि ।
समानेऽहनि चेत्कुर्यात्पुण्याहं च पृथक्पृथक् ॥

## शौनककारिकाः

पुण्याहवाचनस्याऽऽद्यन्तयोः कर्तव्यता प्रयोगश्च

*[4]पुण्याहवाचनविधिं वक्ष्यामोऽथ यथाविधि ।
प्रयोक्तुः कर्मणामादावन्ते चोदयसिद्धये ॥

[5]अर्चिता ब्राह्मणाः पूर्वं गन्धमाल्यैः सदक्षिणैः ।
तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः ॥

[6]उदङ्मुखो वाचयिता तिष्ठेत्तेभ्यस्तु दक्षिणे ।
बिभ्रत्कुम्भमपां पूर्णं पिहिताननमर्चितम् ॥

* संस्कारकौस्तुभीयः शौनककारिकापाठः कुमारिलकारिकासु द्रष्टव्यः ।

(१) संर. २९, ११५५. (२) शाका. ७ पृ. १.

(३) शाका. १२ पृ. २.

(४) शौका. १ पृ २९ ; प्रपा. ७ णामादा (णो ह्यादा) ; गभा. २९ ; प्रर. २ ; संम. ४ णामादा (र्णां चाऽऽदा) ; शाम. ३ ; विपा. २१ प्रयोक्तुः (योक्तव्यः) ; प्रका. २८ ; संग. ६८.

(५) शौका. २ पृ. २९ ; प्रपा. ७ ; विपा. २१.

(६) शौका. ३ पृ. २९ ; प्रपा. ७ ; विपा. २१ तेभ्यस्तु (देभ्यश्च) कुम्भमपां पूर्णं (पूर्णमपां कुम्भं).

[1]तत्राऽऽदावाप इत्येवं वदेद्वाचयिता ततः ।
वक्तारोऽपि शिवा आपः सन्त्वित्येवं ब्रुवन्त्यथ ॥
[2]गन्धा इति वदेत्कर्ता सुगन्धाः सन्त्विवतीतरे ।
वदेत्पूर्वं सुमनस इत्येवमपरेऽपि च ॥
[3]सौमनस्यमिति ब्रूयुरस्तुशब्दान्तमत्वराः ।
पश्चादक्षतमित्येवं ब्रूयाद्वाचयिता ततः ॥
[4]अन्येऽक्षतं चारिष्टं चास्त्वित्येवं ब्रूयुरर्चिताः ।
ततो वाचयिता विप्रो दक्षिणा इत्युदीरयेत् ॥
स्वस्तिशब्दाद्यमुच्चार्य दक्षिणाः पान्त्विवतीतरे ।
बहुदेयमिति ब्रूयुरस्तुशब्दान्तमत्वराः ॥
[5]कर्ताऽथ दक्षिणं जानु पातयित्वा महीतले ।
उदङ्मुखो जपेत्सूक्तं श्रद्धयेत्येवमादिकम् ॥
[6]जपित्वोत्थाय तं कुम्भं बिभ्रत्तिष्ठन्नुदङ्मुखः ।
मनः समाधीयतामित्येवं वाचयिता वदेत् ॥
[7]समाहितमनसः स्म इत्येवं च ब्रुवन्त्यथ ।
प्रसीदन्तु भवन्त इत्यथ वाचयिता वदेत् ॥

(१) शौका. ४ पृ. २९ ; प्रपा. ७ ; विपा. २१.

(२) शौका. ५ पृ. २९ ; प्रपा. ७ सन्त्वि ( पान्त्वि ) ; विपा. २१ वदेत्कर्ता सुगन्धाः सन्त्वि (वदेदेकः सुमङ्गल्यमि).

(३) शौका. ६ पृ. २९ ; प्रपा. ७ ; विपा. २२ क्षतमि ( क्षत इ ).

(४) शौका. ७-८ पृ. २९ ; प्रपा. ७ ; विपा. २२.

(५) शौका. ९ पृ. २९ ; प्रपा. ७ ; विपा. २२ जानु ( जानुं ) ; संकौ. २३ विपावत्.

(६) शौका. १० पृ. २९ ; प्रपा. ७ त्वोत्थाय तं ( त्वोत्थापितं ) ; विपा. २२.

(७) शौका. ११ पृ. २९ ; प्रपा. ७ पू., उत्तरार्धं गलितमिति भाति ; विपा. २२ च ब्रु ( प्रब्रु ) इत्यथ ( इत्येवं ).

[1]प्रसन्नाः स्म इति प्रीताः प्रतिब्रूयुरथेतरे ।
शान्तिः पुष्टिस्तुष्टिर्ऋद्धिरविघ्नमित्यनुक्रमात् ॥
[2]आयुष्यमारोग्यमिति शिवं कर्मेत्यथापि च ॥
[3]कर्मधर्मवेदशास्त्रपुत्रधान्येष्टसंपदः ।
[4]अस्तुशब्दान्तमुच्चरेत्तथा वाचयिता परे ॥
[5]प्रजापतिः प्रीयतामित्येवं वाचयिता वदेत् ।
परे प्रथममुच्चार्य प्रीयतां भगवानिति ॥
[6]पश्चात्प्रजापतिरिति ब्रूयुः प्रयतमानसाः ।
पुण्याहं वाचयिष्येऽहमिति वाचयिता वदेत् ॥
[7]वाच्यतामिति भाषन्ते वक्तारश्च सुचेतसः ।
अथोद्गातेव शकुने साम गायसिपूर्विकाम् ॥

(१) शौका. १२ पृ. २९ रथेतरे ( रितीतरे ) उत्तरार्धे ( शान्तिः पुष्टिस्तथा तुष्टिर्वृद्ध्यविघ्नान्यनुक्रमात् ॥) ; प्रपा. ७ रथेतरे ( स्तथेतरे ) तुष्टिर्ऋद्धिरविघ्नमित्य ( तथा तुष्टिर्वृद्ध्यविघ्नान्य ) ; विपा. २२.

(२) शौका. १३ पृ. २९ कर्मेत्यथा ( कर्म तथा ) ; प्रपा. ७ ; विपा. २२ शौकावत्.

(३) प्रपा. ७ संपदः ( संपदाम् ) संपदः + ( समृद्धिरस्तु प्रत्येकमुभयेऽपि ब्रुवन्त्यथ । ), तलटिप्पण्याम् ; विपा. २२ पुत्रधान्येष्ट ( धनधान्येष्ट ). शौनककारिकादर्शपुस्तके नोपलभ्यते ।

(४) शौका. १३ पृ. २९ ; प्रपा. ७ मुच्चरेत्तथा वाचयिता ( मुच्येरन् वाचयिता तथा ) ; विपा. २२ मुचरेत्तथा वाचयिता ( मुच्चार्य वाचयित्वा तथा ).

(५) शौका. १४ पृ. २९ ; प्रपा. ७ त्येवं ( त्यथ ) ; विपा. २२.

(६) शौका. १५ पृ. २९ प्रयत ( प्रसन्न ); प्रपा. ७; विपा. १९ ; संग. ७० उत्त ; संदी. ७० उत्त.

(७) शौका. १६ पृ. २९ ; प्रपा. ७ ; विपा. १९ सुचेतसः (सुतेजसः) पूर्विकाम् ( पूर्वकम् ) ; संग. ७० पू. ; संदी. ७० पू. .

[1]ऋचं सर्वे सह ब्रूयुस्ततो वाचयिता द्विजः ।
ओमुक्तिपूर्वं पुण्याहं भवन्त इति भाषितात् ॥
[2]परं ब्रुवन्त्विति ब्रूयुरों पुण्याहमितीतरे ।
पुनरप्येवमेव द्विः कृत्वा पुण्याहवाचनम् ॥

ओमुक्तिपूर्वं ब्रुवन्त्विति परं पुण्याहं भवन्त इति यजमानो भाषत इत्यर्थः । संदी. ७१

[3]ततः स्वस्ति न इन्द्रेति ऋचं ब्रूयुः सहोभये ।
ततो वाचयिता पूर्वमों स्वस्तीत्यभिधाय तु ॥
[4]पश्चाद्भवन्त इत्येवं ब्रुवन्त्विति च भाषते ।
ओं स्वस्तीति तथैवान्ये प्रतिब्रूयुरतः परम् ॥
[5]प्रारिप्सितं चतुर्थ्योक्त्वा कर्म वाचयिता ततः ।
स्वस्तीत्याद्यं ब्रुवन्त्वन्तं पूर्ववत्समुदीरयेत् ॥
[6]वक्तारश्च चतुर्थ्यन्तं तत्तत्कर्मोक्तिपूर्वकम् ।
स्वस्तीति च प्रतिब्रूयुरथ सर्वेऽपि ते द्विजाः ॥
[7]ऋध्याम स्तोममित्यादि ऋचं ब्रूयुः सहोच्चकैः ।
ततो वाचयिता ऋद्धिं भवन्त इति पूर्वकम् ॥

(१) शौका. १७ पृ २९ भाषितात् ( भाषिता ); प्रपा. ७ ; विपा. १९ भाषितात् ( भाषते ) ; संग. ७० विपावत्, उत्त. ; संदी. ७० विपावत्, उत्त.

(२) शौका. १८ पृ. ३० ; प्रपा. ७ ; विपा. १९ परं ( परे ) ; संग. ७० विपावत् ; संदी. ७१ परं ब्रुवन्त्विति ( ब्रुवन्त्विति परं ).

(३) शौका. १९ पृ. ३० ; प्रपा. ७ ; विपा. १९ ; संकौ. २३.

(४) शौका. २० पृ. ३० इत्येवं (इति चेद्) ; प्रपा. ७; विपा. १९ इत्येवं ( इति च ) च भा ( प्रभा ) युरतः ( युस्ततः ) ; संकौ. २३ इत्येवं ( इति च ).

(५) शौका. २१ पृ. ३० क्त्वा ( क्त्या ) ; प्रपा. ७; द्यं ब्रुवन्त्वन्तं ( दि भवन्त्वन्तं ); विपा. १९ न्त्वन्तं ( न्त्वेव ) ; संकौ. २३ ; संग. ७१ क्त्वा ( क्त्या ) पू.

(६) शौका. २२ पृ. ३० ; प्रपा. ७ ऽपि ते द्विजाः ( द्विजातयः ) ; विपा. १९ न्तं तत्त ( न्ततत्त ) ; संकौ. २३ ( अथ सर्वेऽपि ते द्विजाः ० ) ; संग. ७१. पू

(७) शौका. २३ पृ. ३० ; प्रपा. ७ ; विपा. २०.

[1]ब्रुवन्त्विति वदेदन्ये ब्रूयुरोमृध्यतामिति ।
एवमेवोभयेऽपि द्विरभ्यस्येयुरिदं पुनः ॥
[2]ततो वाचयिता कुम्भजलं संस्कार्यमूर्धनि ।
किंचित्सिञ्चेत्सहैवान्ये ब्रूयुश्च विविधाशिषः ॥
[3]पुण्यहादेस्त्रिरभ्यासे मन्द्रमध्योच्चनिस्वनम् ।
आश्रयेरन्निमे सर्वे यथागमपरंपरम् ॥
[4]स्वस्तिवाचनमेतत्तु सर्वेषामृद्धिकर्मणाम् ।
आदावन्ते च कर्तव्यमिति यज्ञविदां मतम् ॥

## कुमारिलकारिकाः

पुण्याहवाचनस्याऽऽद्यन्तयोः कर्तव्यता प्रयोगश्च

[5]स्वस्तिवाचनमत्रेष्टं गृह्यकर्मसु केषुचित् ।
आचार्येणापि शास्त्रेऽस्मिन्मङ्गलार्थमुदीरितम् ॥
[6]अर्चिता ब्राह्मणाः सम्यग्गन्धमाल्यैः सदक्षिणैः ।
तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः ॥

(१) शौका. २४ पृ. ३० ; प्रपा. ७ ; विपा. २०. वदेदन्ये ( वदन्त्वन्ये ) स्येयु ( सेयु ).

(२) शौका. २५ पृ. ३० ; प्रपा. ७ ; विपा. २० सहैवा ( तथैवा ) अतः परं सार्धश्लोकद्वयमिदमधिकम्— ' आपो हि ष्ठादयस्तिस्रः शं नो देवी ऋचैकया । ईशाना वार्याणामिति शुद्धवत्यघमर्षणम् ॥ तरत्स मन्दीति सूक्तं सर्वपापप्रणोदनम् । पवस्व सोम इत्यादिऋग्भिः प्रोक्ष्य समन्ततः । पुण्याहं वाचयित्वैवं सर्वकल्याणवान् भवेत् ॥ ' इति ; संकौ. २३ ; संग. ७१ सिञ्चेत्सहै ( किंचित्तथै ).

(३) शौका. २६ पृ. ३० ; प्रपा. ७ ; विपा. २० स्वनम् ( स्वनाः ) ; संग. ७१ निस्व ( निःस्व ) विधानपारिजाते ; संदी. ७१ आश्रये ( श्रावये ) विधानपारिजाते.

(४) शौका. २७ पृ. ३० ; प्रपा. ७–८ विदां ( विदो ) ; विपा. २१ विदां मतम् ( विदो विदुः ) ; संकौ. १९ कर्मणाम् ( कारणम् ).

(५) कुका. १।३।१ ; प्रपा. ५ ; संग. ६१ प्रथमपादमात्रम् ; संदी. ७० उत्त.

(६) कुका. १।३।२ ; प्रपा. ५ ; संकौ. २२ जयन्तशौनकौ.

[1]तिष्ठेद्वाचयिता तेषां दक्षिणस्यामुदङ्मुखः ।
बिभ्रत्कुम्भमपां पूर्णं पिहिताननमर्चितम् ॥
[2]अथ वाचयितुर्बाहुं दक्षिणं समुपाश्रिताः ।
तिष्ठन्त्युदङ्मुखाः सर्वे संस्कार्यास्तत्र तत्र तु ॥
[3]मन इत्यादिकं मन्त्रमेकाग्रमतिरादिशेत् ।
मनसः स्म इति ब्रूयुस्ते समाहितपूर्वकम् ॥
[4]प्रसीदन्तु भवन्त इत्यथ वाचयिता वदेत् ।
प्रसन्नाः स्म इति स्पष्टमाचक्षीरंस्तथाऽन्विताः ॥
[5]शान्तिपुष्ट्यृद्ध्यविघ्नाद्याः शब्दाः पञ्चदशैव तु ।
अस्तुशब्दान्तमुच्चैरन्वाचयित्रा तथा परैः ॥
[6]प्रस्तुत्य देवतां यां तु होमं कुर्याद्विचक्षणः ।
तस्या नाम गृहीत्वाऽथ प्रीयतामिति भाषते ॥

(१) कुका. १।३।३ तिष्ठेत् (अथ); प्रपा. ५; संकौ. २२ जयन्तशौनकौ.

(२) कुका. १।३।४ प्रपा. ५ समुपा (तु समा) सर्वे (सम्यक्); संकौ. २२ प्रपावत्, जयन्तशौनकौ.

(३) कुका. १।३।५; प्रपा. ५; संकौ. २२ (मन इत्यादिकं मन्त्रं पूर्वं वाचयिता वदेत् । समाहितेत्यादीतरे मन्त्रं ब्रूयुः समाहिताः ॥) जयन्तशौनकौ.

(४) कुका. १।३।६; प्रपा. ५; संकौ. २२ उत्तरार्धे (प्रसन्नाः स्म इति ब्रूयुरर्चिता ब्राह्मणाः पुनः ।) जयन्तशौनकौ.

(५) कुका. १।३।७ पूर्वार्धे (शान्तिपुष्ट्यृद्ध्यविघ्नानि शिवं कर्म तथैव च ।) यित्रा (यित्वा); प्रपा. ५ पुष्ट्यृद्ध्य (पुष्टिर) तथा परैः (ततः परम्); संकौ. २२ यित्रा (यित्वा) जयन्तशौनकौ, अतः परमिदं सार्धश्लोकद्वयं शौनकस्याधिकम्– 'आशीर्वादानथान्यांश्च विविधानपि वाचयेत् । अतो देवा अवन्तु नः सूक्तं वैष्णवमुत्तमम् ॥ द्रविणोदाः सवितेति नवो विद्युन्नयेति च । आवदंस्त्वमित्युक्त्वाऽथ पुण्याहं वाचयेत्ततः ॥ वाचयित्वा यथाशक्ति सर्वाणि द्विजसत्तमैः ॥' इति.

(६) कुका. १।३।८ तां यां (तायां) तस्या (तस्य); प्रपा ५ तां यां तु होमं (तायास्तूहेन) भाषते (भाषिते); संकौ. २२ प्रस्तुत्य देवतां यां तु (प्रस्तुते देवतायास्तु) भाषते (चोच्यताम्) जयन्तशौनकौ; संदी. ७७ प्रथमपाद एव.

[1]पुण्याहं स्वस्ति ऋद्धिं च भवत्पूर्वं ब्रुवन्त्विति ।
प्रणवाद्यं त्रिराचष्टे भवदादि विना परे ॥
[2]पुण्याहादेस्त्रिरभ्यासे मन्द्रमध्योच्चनिस्वनम् ।
आश्रयेरन्निमे सर्वे यथागमपरम्परम् ॥
[3]प्रत्युक्तिविषये सेदस्तृतीये त्वृध्यतामिति ।
तुर्ये श्रीरस्त्विति ब्रूयादस्तु श्रीरिति च द्विजाः ॥
[4]आप इत्यादिभिः शान्तिं ततः कुर्यात्समाहितः ।
स्वस्तिवाचनमत्रेष्टं सर्वेषामृद्धिकर्मणाम् ॥

(१) कुका. १।३।९; प्रपा. ५–६ स्वस्ति ऋ (स्वस्तिमृ); संकौ. २२ प्रपावत्, जयन्तशौनकौ.

(२) कुका. १।३।१० से म (सैर्म) स्वनम् (स्वनैः) आश्रये (आचक्षी) परम्परम् (परम्परा); प्रपा. ६; संकौ. २२ च्चनिस्वनम् (त्तमस्वरम्) जयन्तशौनकौ; संव. ३७ कुकावत्, पू.

(३) कुका. १।३।११ ये त्वृ (यस्त्वृ) तुर्ये (तुर्थे); प्रपा. ६ ये त्वृ (यस्त्वृ); संकौ. २२ प्रत्युक्ति (प्रयुक्ति) पू., जयन्तशौनकौ, अतः परमिदं सार्धश्लोकचतुष्टयं शौनकस्याधिकम्– 'वक्तारो ब्रूयुरत्युच्चैरतिविस्पष्टमेव च । पुण्याहशब्दमुक्त्वा तु स्वस्ति न इत्यृचं जपेत् ॥ स्वस्तिशब्दं तथोक्त्वा च ऋध्यामेति ऋचं वदेत् । ऋद्धिं भवन्तो ब्रुवन्त्वित्यृध्यतामित्यथो वदेत् ॥ आपो हि ष्ठेति तिसृभिः शं नो देवीत्यृचैकया । ईशाना वार्याणां पञ्च शुद्धवत्यघमर्षणम् ॥ तरत्समन्दीसूक्तं तु सर्वपापापनोदनम् । पवस्व सोममित्यादिऋग्भिः प्रोक्ष्य समन्ततः ॥ पुण्याहं वाचयित्वैवं सर्वकल्याणवान् भवेत् ॥' इति ।

(४) कुका. १।३।१२; प्रपा. ६; संकौ. २२ कुर्यात् समाहितः (कुर्युः समाहिताः) मत्रेष्टं (मेवं तु) पूर्वार्धं जयन्तस्य, उत्तरार्धं जयन्तशौनकयोः; संव. ६१ तृतीयपाद एव.

**[1]आदावन्ते प्रयोक्तव्यमिति मन्त्रविदां मतम् ।**
**जयन्तस्वामिना प्रोक्तमिदं तु स्वस्तिवाचनम् ॥**
**[2]स्वस्त्यादि वाचयेत्पूर्वं वृद्धिपूर्तेषु कर्मसु ॥**

## त्रिकाण्डमण्डनः

पुण्याहवाचनस्य निमित्तानि पौर्वापर्यं च

**[3]गर्भाधानादिसंस्कारेष्विष्टापूर्ते क्रतुष्वपि ।**
**वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम् ॥**

इष्टानि अग्न्याधानदर्शपूर्णमासादीनि दर्शपूर्णमासस्थालीपाकादीनि च । पूर्तानि प्रतिष्ठादीनि । क्रतवः अग्निष्टोमादयः । वृद्धिश्राद्धं पुरा कार्यम् इत्येतस्य वचनस्य यथाश्रुतमर्थमनुसरन्तः पूर्वं वृद्धिश्राद्धं ततः स्वस्तिवाचनमित्येतादृशक्रमेणैव केचिदनुष्ठानमाचरन्ति । अन्ये तु गर्भाधानादीत्यस्मिन्वाक्ये पूर्वं वृद्धिश्राद्धं ततः स्वस्तिवाचनमित्येतावतैव सिद्धे पुनः कर्मादावित्युक्तिर्वृद्धिश्राद्धसहितकर्मण आदौ स्वस्तिवाचनप्राप्त्यर्था । तेन पूर्वं स्वस्तिवाचनमनन्तरं वृद्धिश्राद्धमित्येवानुष्ठानक्रम इत्याहुः ।

संर. २८–२९

(१) कुका. १।३।१३ ; प्रपा. ६ मन्त्रविदां (यज्ञविदो) ; संकौ. २२ प्रयोक्तव्यं (च कर्तव्यं) मन्त्र (यज्ञ) पू., जयन्तशौनकौ.

(२) कुका. १।१२।२ ; प्रपा. १९९ पूर्वं वृ (पूर्वमृ) ; धप्र. ३८.

(३) प्रपा. ५ ; संर. २८ पूर्ते क्र (पूर्तेक्र) प्रयोगपारिजाते स्मृत्यन्तरे ; संदी. ६९ संरवत्, प्रयोगपारिजाते इत्युक्तम्.

# [¶]अङ्कुरार्पणम्

बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

अङ्कुरार्पणप्रयोगः

[1]अथातोऽङ्कुरार्पणविधिं व्याख्यास्यामः— ब्राह्मणानन्नेन परिविष्य 'पुण्याहं स्वस्ति ऋद्धिम्' इति वाचयित्वा शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्याक्षतान् संप्रकीर्याद्भिरभ्युक्ष्य पञ्च पालिकाः सौवर्णा राजतास्ताम्रा मृण्मयीर्वा यथासंभवं गृह्णाति ॥

[2]मध्ये चतुर्मुखं विन्द्यात् पूर्वे वज्रिणमेव च ।
दक्षिणे तु यमं विन्द्यात् पश्चिमे वरुणं तथा ।
उत्तरे शशिनं विन्द्यात् पालिकास्थापनं क्रमात् ॥

[3]वल्मीकमृत्तिकां हृत्वा गोमयं च तथैव च ।
एतानि प्रक्षिपेत्तासु पालिकासु यथाक्रमम् ॥
दूर्वामश्वत्थपत्रं च शिरीषं बिल्वपत्रकम् ।
तासां मूलेषु बध्नीयाच्छ्वेतसूत्रेण वेष्टयेत् ॥

मध्यमायां व्याहृतीभिर्ब्रह्माणमावाहयति— 'ओं भूः ब्रह्माणमावाहयाम्यों भुवः प्रजापतिमावाहयाम्यों सुवः चतुर्मुखमावाहयाम्यों भूर्भुवः सुवः हिरण्यगर्भमावाहयामि' इति । एताभिरेव प्राच्याम् 'इन्द्रं वज्रिणं शचीपतिं शतक्रतुम्' इति । एताभिरेव दक्षिणस्याम् 'यमं वैवस्वतं पितृपतिं धर्मराजम्' इति । एताभिरेव प्रतीच्याम् 'वरुणं प्रचेतसं सुरूपिणमपां पतिम्' इति । एताभिरेवोदीच्याम् 'शशिनं निशाकरं चन्द्रं सोमम्' इति ॥

[1]अथैनान् स्नापयति 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः, 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः, 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन मार्जयित्वाऽथैनान् गन्धपुष्पधूपदीपैरभ्यर्चयति— 'अमुष्मै नमोऽमुष्मै नमः' इति ॥

[2]अथैनानुपतिष्ठते—

'दिशां पतीन्नमस्यामि सर्वकामफलप्रदान् ।
कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् ॥' इति ॥

व्रीहियवमाषतिलमुद्गसर्षपान् मिश्रीकृत्य क्षीरेण प्रक्षाल्यौषधिसूक्तेन 'या जाताः' इत्यनुवाकेनाभिमन्त्र्य यथाक्रमं निवपति— 'ब्रह्म जज्ञानम्, पिता विराजाम्' इति द्वाभ्यां मध्यमायाम्, 'यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः' इति द्वाभ्यां प्राच्याम्, 'योऽस्य कौष्ठ्य, यमं गाय' इति द्वाभ्यां दक्षिणस्याम्, 'इमं मे वरुण, तत्त्वा यामि' इति द्वाभ्यां प्रतीच्याम्, 'सोमो धेनुम्, आ प्यायस्व' इति द्वाभ्यामुत्तरस्याम् ॥

यथाक्रमं शुद्धाभिः सिकताभिः प्रच्छादयेत् ॥

[3]पञ्चगव्येन यथाक्रमं सेचयेत् ॥

---

¶ अस्य कालः 'विवाहाङ्गकालः' इति प्रकरणे (सं. का. पृ. १०४५–१०४८) द्रष्टव्यः ।

(१) बौगृशे. ४।१८।१ ; हिगृशे. ३।७ अङ्कुरार्पण (अङ्कुरारोपण) स्वस्ति (स्वस्त्ययनम्).

(२) बौगृशे. ४।१८।२ ; हिगृशे. ३।७ विन्द्यात् (विद्यात्).

(३) बौगृशे. ४।१८।३–५ ; हिगृशे. ३।७ व्याहृती (व्याहृति).

(१) बौगृशे. ४।१८।६ ; हिगृशे. ३।७ अथैनान् (अथैतान्).

(२) बौगृशे. ४।१८।७–९ ; हिगृशे. ३।७.

(३) बौगृशे. ४।१८।१० ; हिगृशे. ३।७ सेचयेत् (सेचयति).

[1]प्रणवेनैव सापिधानं कृत्वा यावत्कर्म तावत् सुरक्षितं गोपायेत् ॥

ब्राह्मणभोजनम् उद्वासनं च

समाप्ते कर्मणि ब्राह्मणान् पञ्च भोजयेत् ॥
व्याहृतीभिर्देवता यथाक्रममुद्वासयेत् ॥

अङ्कुरार्पणनिमित्तानि

[2]आधानगर्भसंस्कारजातकर्माणि नाम च ।
हित्वाऽन्यत्र विधातव्यं मङ्गलाङ्कुरवापनम् ॥

## नारदः

अङ्कुरार्पणकर्तव्यता

[3]कर्तव्यं मङ्गलेष्वादौ मङ्गलायाङ्कुरार्पणम् ॥

मङ्गलस्येति सामान्योपादानेऽपि गर्भाधानादिनामकरणान्तव्यतिरिक्तमङ्गलस्येति द्रष्टव्यम् । तथा च शौनकः— 'आधानं गर्भसंस्कारं जातकर्म च नाम च । हित्वाऽन्यत्र विधातव्यं मङ्गलेऽङ्कुरवापनम् ॥' इति । संप्र. २६३

प्रयोगः

[4]सम्यग्गृहाण्यलङ्कृत्य वितानध्वजतोरणैः ।
आशिषो वाचनं कार्यं पुण्यं पुण्याङ्गनादिभिः ॥

(१) बौगृशे. ४।१८।११–१३ ; हिगृशे. ३।७ व्याहृती (व्याहृति).

(२) बौगृशे. ५।२।१२ ; हिगृशे. ६।२६.

(३) ज्योना. २३।१ मङ्गलायाङ्कु (मङ्गलेषु क) ; गभा. १०० ज्योतिर्निबन्धे ; संसौ. ९४ मङ्गलेष्वादौ (मङ्गलस्याऽऽदौ) ; संप्र. २६३ संसौवत्; सिन्धु. ११२७ ; ज्योनि. १२० ; संग. २२० ज्योतिर्निबन्धे ; संर. ५२६.

(४) ज्योना. २३।२–३ ; गभा. १०९ पू., ज्योतिर्निबन्धे ; संसौ. ९४ पुण्यं (द्विजैः) ; संप्र. २६४ संसौवत् ; सिन्धु. ११२७ पू. ; विपा. ११ (भागः २) पू., शौनकः ; ज्योनि. १२० कार्यं (कुर्यात्) ; संग. २२१ सर्वं गभावत् ; संर. ५२६ पू.

[1]सह वादित्रनृत्याद्यैर्गत्वा प्रागुत्तरां दिशम् ।
तत्र मृत्सिकतां श्लक्ष्णां गृहीत्वा पुनरागतः ॥
[2]मृन्मयेष्वथवा वैणवेषु पात्रेषु पूरयेत् ।
अनेकबीजसंयुक्तां तोयपुष्पोपशोभिताम् ॥

(१) अनेकबीजानि व्रीह्यादिसर्षपान्तानि, 'व्रीहियवमाषतिलमुद्गमिश्रितसर्षपान् । तान् प्रक्षाल्य च तोयेषु वापयेदङ्कुरार्पणम् ॥' इति शौनकस्मरणात् । संप्र. २६४

(२) मृत्सिकता मृत्पांसवः । संर. ५२६

## शारदातिलके

अङ्कुरार्पणनिमित्तानि

[3]दीक्षायामभिषेके च नववेश्मप्रवेशने ।
उत्सवेषु च सर्वेषु विदध्यादङ्कुरार्पणम् ॥

शाला–मण्डल–लक्षणम्

मण्डपस्योत्तरे भागे शालां पूर्वोत्तरायताम् ।
गूढां कुर्यात्ततस्तस्यां मण्डलं रचयेत् सुधीः ॥
पञ्चहस्तप्रमाणानि पञ्च सूत्राणि पातयेत् ।
पूर्वापरायतान्येषामन्तरं द्वादशाङ्गुलम् ॥

(१) ज्योना. २३।३–४ सह (महा) गत्वा (गता) ; गभा. १०० ज्योतिर्निबन्धे ; संसौ. ९४ सिकतां श्लक्ष्णां (सिकतं श्लक्ष्णं) ; संप्र. २६४ संसौवत् ; सिन्धु. ११२७ ; विपा. ११ (भागः २) सिकतां श्लक्ष्णां (सिकताः श्लक्ष्णाः) शौनकः ; ज्योनि. १२० ; संग. २२१ ज्योतिर्निबन्धे ; संर. ५२६ सिकतां श्लक्ष्णां (सिकताः श्लक्ष्णाः).

(२) ज्योना. २३।४ युक्तां (युक्तं) तोय (तोयं) शोभिताम् (शोभितम्) ; गभा. १०० पूरयेत् (योजयेत्) ज्योतिर्निबन्धे ; संसौ. ९४ वैणवेषु (सम्यग्वेणु) पूरयेत् (पूजयेत्) युक्तां (युक्तं) शोभिताम् (शोभितम्) ; संप्र. २६४ संसौवत् ; सिन्धु. ११२८ गभावत् ; विपा. ११ (भागः २) पूरयेत् (वापयेत्) पू., शौनकः ; ज्योनि. १२० युक्तां (युक्तं) शोभिताम् (शोभितम्) ; संग. २२१ तोय (ततः) शेषं गभावत्, ज्योतिर्निबन्धे ; संर. ५२६ पूर्वार्धे (मृन्मयेष्वथ पात्रेषु वैणवेष्वथवा क्षिपेत् ।).

(३) लिप्र. २०७–२०८.

दक्षिणोत्तरसूत्राणि तद्वदेकादशार्पयेत् ।
पदानि तत्र जायन्ते चत्वारिंशत् प्रमार्जयेत् ॥
पङ्क्त्या वीथीश्चतस्रस्तु चतुष्कोभयपार्श्वयोः ।
वीथ्यौ द्वे द्वे चतुःकोष्ठत्रयमत्रावशिष्यते ॥
पदानि रञ्जयेत्तानि श्वेतपीतारुणासितैः ।
रजोभिः श्यामलेनाथ वीथीरारचयेत् सुधीः ॥

पात्रलक्षणं प्रयोगश्च

पात्राणि त्रिविधान्यस्मिन्नङ्कुरार्पणकर्मणि ।
पालिकाः पञ्च मुख्याश्च शरावाश्च चतुः
क्रमात् ॥
प्रोक्ताः स्युः सर्वतन्त्रज्ञैर्हरिब्रह्मशिवात्मकाः ।
एषामुत्सेध उन्नेयः षोडशद्वादशाष्टभिः ॥
अङ्गुलैः क्रमशस्तानि शुभान्यावेष्ट्य तन्तुना ।
प्रक्षाल्य देशिकस्तेषु पादेष्वाहितशालिषु ॥
सगन्धदर्भकूर्चेषु पश्चिमादि निवेशयेत् ।
करीषवालुकामृद्भिस्तानि पात्राणि पूरयेत् ॥
सुधाबीजेन बीजानि दुग्धे प्रक्षाल्य मन्त्रवित् ।
मूलमन्त्राभिजप्तानि पञ्चघोषपुरःसरम् ॥
आशीर्वादैर्द्विजातीनां मङ्गलाचारपूर्वकम् ।
निर्वपेत्तेषु पात्रेषु देशिको यतमानसः ॥
शालिश्यामाढकीमुद्गतिलनिष्पावसर्षपाः ।
कुलत्थकङ्गुमाषाश्च बीजान्यङ्कुरकर्मणि ॥
हरिद्राभिः समभ्युक्ष्य वस्त्रैराच्छाद्य देशिकः ।
बलिं त्रिविधपात्राणां दिक्षु पूर्वादितः क्षिपेत् ॥
प्रणवाद्यैर्नमोन्तैश्च रात्रौ रात्रीशनामभिः ।
भूतानि पितरो यक्षा नागा ब्रह्मा शिवो हरिः ॥
सप्तानामपि रात्रीणां देवताः समुदीरिताः ।
भूतेभ्यः स्युर्लाजतिलहरिद्रादधिसक्तवः ॥
सान्नाः पितृभ्यः सतिलास्तण्डुलाः परि-
कीर्तिताः ।
करम्भलाजा यक्षेभ्यो नारिकेलोदकान्वितम् ॥
सक्तुपिष्टं च नागेभ्यो ब्रह्मणे पङ्कजाक्षतम् ।
सापूपमन्नं शर्वाय विष्णवे स्याद्गुडौदनम् ।
ततो लोकेश्वरेभ्योऽपि विधिवद्विकिरेद्बलिम् ॥

सप्तदिनात् पूर्वमारम्भे सप्त देवताः क्रमेण । नव-
दिनात् पूर्वमारम्भे हरयेऽधिकदिनद्वये बलिः ।
निप्र. २०९

## शौनककारिका:

अङ्कुरार्पणप्रयोगः

[1]अथाङ्कुरार्पणविधिं प्रवक्ष्यामि विशेषतः ।
शौनकोऽहं द्विजातीनां मङ्गलार्थमुदीरितम् ॥
[2]शुभे मुहूर्ते कल्याणे गोमयेनोपलिप्य च ।
सिताक्षतैः संप्रकीर्य पालिकाः स्थापयेद्द्विजः ॥
पालिकाः शरावाणि । संप्र. २६४
[3]मध्ये चतुर्मुखं विद्यात् पूर्वे वज्रिणमेव च ।
दक्षिणे तु यमं विद्यात् पश्चिमे वरुणं तथा ॥
[4]उत्तरे शशिनं विद्यात् पालिकास्थाधिदेवताः ।
वल्मीकमृत्तिकां ह्रादं शुष्कगोमयमेव च ॥
ह्रादं ह्रदपङ्कम् । संप्र. २६५
[5]एतानि प्रक्षिपेत्तासु पालिकासु यथाविधि ।
दूर्वाश्चाश्वत्थपर्णं च शिरीषं बिल्वपत्रकम् ॥
[6]तासां मूलेषु विन्यस्य श्वेतसूत्रेण वेष्टयेत् ।
मध्ये ब्रह्माणमाराध्य गन्धाद्यैरर्चयेत् क्रमात् ॥
( पण्डित इति ) वेष्टयेदिति शेषः । संप्र. २६५

---

( १ ) शौका. १ पृ. ३० मुदीरितम् ( मुदीरयेत् ) ; प्रपा. ११ शौनकोऽहं ( शौनको हि ) ; संप्र. २६४ ; विपा. ११ ( भागः २ ).

( २ ) शौका. २ पृ. ३० ; प्रपा. ११ ; संप्र. २६४ ; विपा. ११ ( भागः २ ) शुभे मुहूर्ते ( सुमुहूर्तेऽथ ).

( ३ ) शौका. ३ पृ. ३० ; प्रपा. ११-१२ ; संप्र. २६४ ; विपा. ११ ( भागः २ ).

( ४ ) शौका. ४ पृ. ३० पालिकास्थाधि ( पालिका अधि ) ; प्रपा. १२ वल्मीक ( वाल्मीकीं ) ह्रादं ( ह्रादीं ) ; संप्र. २६५ ; विपा. ११ ( भागः २ ) द्वितीयपादे ( पालिकानां च देवताः ).

( ५ ) शौका. ५ पृ. ३० ; प्रपा. १२ ; संप्र. २६५ दूर्वाश्चाश्व ( दूर्वामश्व ) ; विपा. ११ ( भागः २ ).

( ६ ) शौका. ६ पृ. ३० ; प्रपा. १२ विन्यस्य (विन्यसयेत् ) वेष्टयेत् ( मण्डितम् ) ; संप्र. २६५ वेष्टयेत् ( पण्डितः ) ; विपा. ११ ( भागः २ ) वेष्टयेत् ( मण्डिताः ) माराध्य ( मावाह्य ).

[१]ऐन्द्रादिक्रम एवं स्यादमुष्मै नम एव च ।
तिष्ठन्कर्ता जपेन्मन्त्रं पश्चात्प्राङ्मुख एव च ॥

[२]दिशां पतीन्नमस्यामि सर्वकामफलप्रदान् ।
कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् ॥

[३]व्रीहियवमाषतिलमुद्गमिश्रितसर्षपान् ।
तान् प्रक्षाल्य च तोयेषु वापयेदङ्कुरार्पणम् ॥

[४]रात्रौ मुहूर्ते कल्याणे कारयेदङ्कुरार्पणम् ।
ब्रह्म जज्ञानमिति तु मध्ये ब्रह्माणमर्चयेत् ॥

[५]यत इन्द्र भयामहे प्राच्यां प्रक्षेपयेद्बुधः ।
नाके सुपर्णमिति च ततो दक्षिण एव तु ॥

[६]तत्त्वा यामि ब्रह्मणेति प्रतीच्यां वापयेद्बुधः ।
सोमो धेनुमुदीच्यां च ह्योषधीर्वापयेत्क्रमात् ॥

[७]शुद्धाभिः सिकताभिश्च प्रच्छाद्यापः प्रसेचयेत् ।
विधाय गुप्तये सर्वमात्मानमिति मन्यते ॥

(१) शौका. ७ पृ. ३० ; प्रपा. १२ ; संप्र. २६५ ; विपा. ११-१२ ( भागः २ ) ऐन्द्रादि ( इन्द्रादि ).

(२) शौका. ८ पृ. ३० ; प्रपा. १२ ; संप्र. २६५ ; विपा. १२, १५ ( भागः २ ) ; संर. ४७ ( = ).

(३) शौका. ९ पृ. ३१ ; प्रपा. १२ ; संप्र. २६४, २६५ ; विपा. १२ ( भागः २ ).

(४) शौका. १० पृ. ३१ ; प्रपा. १२ ; संप्र. २६५ ; विपा. १२ ( भागः २) ; संर. ४८ द्वितीयपादे ( प्रथमेऽङ्कुररोपणम् ) पू.

(५) शौका. ११ पृ. ३१ ; प्रपा. १२ प्रथमपादे ( यत इन्द्रेति मन्त्रेण ) ; संप्र. २६५ ; विपा. १२ ( भागः २ ) बुधः ( द्विजः ).

(६) शौका. १२ पृ. ३१ ; प्रपा. १२ ; संप्र. २६५ ; विपा. १२ ( भागः २ ) प्रथमपादे ( तत्त्वा यामीति मन्त्रेण ) बुधः ( द्विजः ) ह्योष ( ओष ).

(७) शौका. १३ पृ. ३१ विधाय ( पिधाय ) ; प्रपा. १२ ; संप्र. २६५ ; विपा. १२ ( भागः २ ).

अङ्कुरार्पणस्य फलं कर्तव्यता अनुकल्पश्च

[१]आयुष्करं श्रीप्रदं च शुभेष्वन्येषु सर्वशः ।
तस्मात् सर्वेषु कार्येषु वापयेदङ्कुरार्पणम् ॥

[२]यद्यङ्कुराणां रहितं तत्सर्वमशुभं भवेत् ।
सद्योऽङ्कुरार्पणं वाऽपि सद्यः कर्तुं समाहितः ॥

[३]अशक्तौ तण्डुलैः सिद्धैः सद्य एव शुभाङ्कुरे ।
पालिकानि प्रपूर्यैव पञ्च त्रीण्येकमेव वा ॥

[४]अलंकृत्य च पद्माभैः पुष्पैरापूर्यतेऽपि च ।
अङ्कुरोक्ताः क्रियाः सर्वास्तैस्तैरेव समाचरेत् ॥

अङ्कुरार्पणनिमित्तानि

[५]आधानं गर्भसंस्कारं जातकर्म च नाम च ।
हित्वाऽङ्कुरार्पणं विद्यादन्यत्र शुभकर्मसु ॥

कर्मविशेषेऽङ्कुरारोपणस्याक्रियोक्ता तेनैव- ' निषेकं ... कर्मसु ' इति । निषेकः गर्भाधानम् । संर. ४८

(१) शौका. १६ पृ. ३१ ; प्रपा. १२ ; संप्र. २६६ ; विपा. १३ ( भागः २ ).

(२) शौका. १७ पृ. ३१ ; प्रपा. १२ यद्यङ्कु ( यदङ्कु ) सद्यो ( अथो ) ; संप्र. २६६ ; विपा. १३ ( भागः २ ) द्वितीयपादे ( तत्कर्माशुभकारणम् ) समाहितः ( समीहितः ).

(३) शौका. १८ पृ. ३१ पालिकानि ( पालिकांश्च ) ; प्रपा. १२ सिद्धैः ( शुद्धैः ) पालिकानि ( पालिकाश्च ) ; संप्र. २६६ ; विपा. १३ ( भागः २ ) सिद्धैः ( शुद्धैः ) शुभाङ्कुरे ( शुभाङ्कुरैः ) पूर्यैव ( पूर्यैवं ).

(४) शौका. १९ पृ. ३१ ; प्रपा. १२ पद्माभैः (पद्माद्यैः) ; संप्र. २६६ अङ्कुरोक्ताः क्रि ( अङ्कुरोक्तक्रि ) ; विपा. १३ ( भागः २ ) प्रपावत् .

(५) शौका. २१ पृ. ३१ ; प्रपा. १२ ; गभा. १०० उत्तरार्धे ( हित्वाऽन्यत्र विधातव्यं मङ्गलेऽङ्कुरवापनम् ॥ ) ; संसौ. ९५ गभावत् ; संप्र. २६३ गभावत् ; २६६ ; सिन्धु. ११२८ गभावत् ; विपा. १३ ( भागः २ ) ; संग. २२१ गभावत् ; संर. ४८ आधानं ( निषेकं ) पैणं विद्या (रोपणं स्या).

# मातृकापूजनम्

——:०:——

## कौषीतकिगृह्यसूत्रम्

मातृकापूजनविधिः

[1]मातृयागं कृत्वा ॥

## हिरण्यकेशिगृह्यशेषसूत्रम्

कर्मादौ मातृकापूजनस्य कर्तव्यता

[2]अथातो मातृकापूजाविधिं व्याख्यास्यामः–
कर्मादिषु च सर्वेषु च मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥

मातृणां प्रतीकानि पृथङ्नैवेद्यता च

प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु ।
अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥

मातृगणना

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश ॥
इति ॥

## कात्यायनः

मातृगणना

[3]गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥

(१) कौगृ. ४।४।३.

(२) हिगृशे. ३।५.

(३) कास्मृ. १।११ ; स्मृच. ५०३ ; प्रपा. १४ ; मर. १७२ ; श्राका. ५१२ परिशिष्टम् ; गभा. ३१ ; श्राकौ. ५०३, ५३० गृह्यपरिशिष्टे ; कृत. ४७१ गृह्यपरिशिष्टम् ; श्रात. ३११ बह्वृचगृह्यपरिशिष्टम् ; प्रर. १३ ; मुक्ता. ७५३ सेना (सेनाः) मातरो लोक (मातरौ लोक) ; श्राम. ८८ स्मृत्यन्तरम् ; सिन्धु.



[1]धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
गणेशेनाधिकास्त्वेता वृद्धौ पूज्याश्चतुर्दश ॥

(१) आत्मदेवता आत्मनोऽभीष्टदेवता ।

¶ स्मृच. ५०३

(२) क्वचित् 'वृद्धौ पूज्याश्चतुर्दश' इति पाठः । तस्मिन् पक्षे 'मातरो लोकमातरः' इति सर्वासां विशेषणम् । मर. १७२

¶ प्रपा., मुक्ता. स्मृचवत् ।

१७३६ ; विपा. २८ (भागः २) ; आन. १४४ ; प्रका. ३१ ; संग. ७३, १०१, ६०२ ; संदी. ५६. शातातपेऽपि एतत्सदृशवचनं समुपलभ्यते ।

(१) कास्मृ. १।१२ ; स्मृच. ५०३ उत्तरार्धे (आभ्योऽर्घ्यं गन्धपुष्पं च धूपदीपं निवेदयेत् ॥) ; प्रपा. १४ उत्तरार्धे (आवाह्य गन्धपुष्पाणि धूपं दीपं निवेदयेत् ॥) ; मर. १७२ कास्त्वेता (का ह्येता) चतुर्दश (तु षोडश) ; श्राका. ५१२ कास्त्वेता (का ह्येता) परिशिष्टम् ; गभा. ३१ पू. ; श्राकौ. ५०३, ५३० (शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह । आदौ विनायकः पूज्यो अन्ते च कुलदेवता ॥) गृह्यपरिशिष्टे, 'आदौ विनायकः पूज्यो०' एतत्सदृशमुत्तरार्धं बह्वृचगृह्यपरिशिष्टेऽपि समुपलभ्यते ; कृत. ४७१ श्राकौवत्, गृह्यपरिशिष्टम् ; श्रात. ३११ देवता (देवताः) शेषं श्राकौवत्, बह्वृचगृह्यपरिशिष्टम् ; प्रर. १३ पू. ; मुक्ता. ७५३ स्मृचवत् ; श्राम ८८ (धृतिः पुष्टिस्तथा तुष्टिः कुलदेवतया सह । विनायकेन सहिता पूजनीयाः प्रयत्नतः ॥) स्मृत्यन्तरे ; सिन्धु. १७३६ श्राकावत् ; विपा. २८ (भागः २) प्रपावत् ; आन. १४४ पू. ; प्रका. ३१ मरवत् ; संग. ७३, १०१, ६०२ देवतया सह (नः कुलदेवता) शेषं मरवत् ; संदी. ५६ आत्मदेवतया सह (तथाऽऽत्मकुलदेवता) शेषं मरवत्.

( ३ ) चतुर्विंशतिमते तु— ' ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपाः । वृद्धौ वृद्धौ सदा पूज्याः पश्चान्नान्दीमुखान् पितॄन् ॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथैन्द्री च चामुण्डा देवमातरः ॥ तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा । इत्येता मातरः प्रोक्ता पितृमातृष्वसाऽष्टमी ॥ ' इति । अत्र यथाशाखं यथाजातिकुलं वा व्यवस्थेत्यविरोधः । तथा चतुर्विंशतिमते— ' श्राद्ध आभ्युदये प्राप्ते देवतास्थापनं स्मृतम् । जातिधर्मकुलश्रेणिलोकानां वृद्धिकारकम् ॥ ' इति । तत्र माध्यंदिनशाखायामनुक्तत्वात् किं छन्दोगोक्तं कार्यमुतान्यस्मृत्युक्तमिति संदेहः । तत्रैके आहुः— 'परोक्तत्वात् यत्किंचिदिच्छया ' इति । तथा च संग्रहकारः— 'सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते । स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत् ॥ ' इति । तदयुक्तम् , सूत्रपरिशिष्टयोरेककर्तृकत्वात्तस्यान्यशाखिविषयत्वात् पारस्करमतस्याऽऽश्रयणीयत्वाच्च । तथा च स्मृतिसंग्रहः— ' न गृह्यादिस्मृतिर्येषां श्राद्धादावुपलभ्यते । कर्तुमर्हन्ति ते सर्वे पारस्करमुनीरितम् ॥ ' इति । परेषां करोतीति हि व्युत्पत्तेः । अतश्च गौर्यादय एवात्र शाखायामिति । श्राका. ५१२–५१३

( ४ ) आत्मदेवता आत्मकुलदेवता । § गभा. ३१

( ५ ) मातरो लोकमातर इति सर्वासां विशेषणमिति प्राञ्चः । अन्ये तु नामगणमध्यपाठात् बहुवचनान्तमेव देवताद्वयमिति वदन्ति । पितृदयिता—पशुपतिनिबन्धादिषु लिखनात् ' शान्तिः पुष्टिर्धृतिस्तुष्टिः ' इत्येव पाठ इति प्राञ्चः । अन्ये तु सामगगोचरोऽयं पाठः , यजुर्वेदिनां तु ' धृतिः पुष्टिस्तथा तुष्टिः ' इति वदन्ति । तन्मन्दम् , एकेनैव गृह्यपरिशिष्टेनोक्तत्वात् पाठद्वयस्यानौचित्यात् , न ह्येकमुनिना एकस्मिन् वचने पाठद्वयं कल्प्यते, मातॄणां षोडशसंख्यकत्वप्रसिद्धेश्च । एतेन ' मातरो लोकमातरः ' इति ( न ) पृथग्देवताद्वयमिति मतं निरस्तम् । श्रीदत्तस्तु— ' हृष्टिः पुष्टिस्तथा तुष्टिस्तथैव कुलदेवता । ' इत्येतावन्मात्रं पठित्वा सर्वशाखिगोचरतया एताः षोडश मातर इत्याह । श्राकौ. ५०३–५०४

( ६ ) मातरः इति सर्वासां विशेषणम् । अत एव ' एतत्पाद्यं गौर्यै मात्रे नमः ' इति प्रयोगः । मातरो लोकमातरो ज्ञेयाः । अत एवैतयोर्बहुत्वेन निर्देशः । श्रात. ३११

( ७ ) मातरो लोकमातर इति सर्वविशेषणम् । तेन चतुर्दशत्वम् । यदा षोडशेति पाठस्तदा देवतान्तरम् । सिन्धु. १७३६

( ८ ) आत्मदेवता इष्टदेवता । तया सह पञ्चदश मातरः पूज्या इत्यर्थः । आन. १४४

( ९ ) अन्ते श्रुतमपि गणपतिपूजनमादौ कार्यम् , ' आदौ विनायकः पूज्यो ह्यन्ते च कुलमातरः । ' इति स्मृतिकौस्तुभे बह्वृचपरिशिष्टात् । एतेन मदनरत्नादीनामन्ते गणपतिपूजोक्तिर्नाऽऽदरणीया । इदं च गणपतिपूजनं मातृपूजाङ्गम् , ' मातरः सगणाधिपाः ' इत्यनेनोक्तत्वात् । अत एव कर्मारम्भे निर्विघ्नफलसिद्ध्यर्थमपि गणपतिपूजनम् । अत्र चतुर्दशपदसमभिव्याहारात् मातरो लोकमातर इति सर्वासां विशेषणम् । एता मातरो लोकमातरो भवन्ति । एता मातरो वृद्धौ पूज्या इत्यर्थः । एवमेव नारायणवृत्तावादित्यभाष्ये च । परशुरामादीनां मतेऽप्येवम् । हेमाद्रिरूपनारायणमदनरत्नदानसागरदानप्रदीपादिकारास्तु ' पूज्याश्च षोडश ' इत्येव ' मातरो लोकमातरः ' इति परिगणनातः पठन्ति । अत एव पद्धतिकारैर्द्वौ पक्षावुपन्यस्तौ । वस्तुतस्तु चतुर्दशमन्त्राणामेव सत्त्वात् चतुर्दशेत्येव पाठः साधीयान् । अत एवाविच्छिन्नाध्ययनसंप्रदायसमागतं पाठं सम्यग् जानन्तः परिशिष्टाध्येतारोऽपि ' वृद्धौ पूज्याश्चतुर्दश ' इत्येव पठन्ति ।

वाजसनेयिभिश्च यद्यपि स्वगृह्ये मातृपूजाविधेरनुक्तत्वात् ' सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते । स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत् ॥ ' इति संग्रहवचनाद्यद्यपि स्वेच्छयोक्तं तथाऽपि छन्दोगपरिशिष्टोक्ता एव मातरः पूज्याः , सूत्रपरिशिष्टयोरेककर्तृक-

§ मर. गभावत् ।

त्वात्, पारस्करमतस्याप्याश्रयणीयत्वाच्च । तथा च स्मृतिसंग्रहः– 'न गृह्याणि स्मृतिर्येषां श्राद्धादावुपलभ्यते । कर्तुमर्हन्ति ते सर्वे पारस्करमुनीरितम् ॥' इति ।

अत्र केचित् 'मातरः सगणाधिपाः' इत्यत्र मातॄणां गौर्याद्यविशेषितानां पूज्यत्वावगमात् तासामेव मिलितानां देवतात्वम्, न तु गौर्यादिविशेषितानाम्, अश्रुतत्वात्तासाम् । यद्यपि 'गौरी पद्मा' इत्यादिना विशेषिता एव मातरो देवतात्वेन श्रूयन्ते, तथाऽपि तस्य वचनस्योद्देशमात्रपरत्वान्मिलितानामेव मातॄणां देवतात्वमिति मन्यन्ते । अन्ये तु गौर्यादीनां प्रत्येकं देवतात्वमाहुः । युक्ततरमिति( ? )चैतत्, अन्यथा बहुत्वविशिष्टमातॄणामेकदेवतात्वे 'वृद्धौ पूज्याश्चतुर्दश' इति चतुर्दशसंख्यानुपपत्तेः, 'दशोपचारैर्देवेशि प्रत्येकं नामभेदतः ।' इति रुद्रयामले प्रत्येकं पूज्यत्वविधानानुपपत्तेश्च । तस्मात्प्रत्येकं देवतात्वम् । संग. ७३–७४

( १० ) प्रसङ्गाद्वक्ष्यमाणोपयोगिनं कंचिदर्थमाह– गौरी पद्मेति द्वाभ्याम् । गणेशसहिता एताश्चतुर्दश मातरो वृद्धावाधानादौ पूजनीयाः । चतुर्दशेत्युपादानात् 'मातरो लोकमातरः' इति सर्वासां विशेषणम् । एता मातरो लोकमातर इत्यर्थः । 'वृद्धौ पूज्याश्च षोडश' इति पाठे 'मातरो लोकमातरः' इति स्वतन्त्रं देवताद्वयम् । तदिदं श्लोकद्वयं सर्वेषु पुस्तकेषु दृष्टत्वात् कमलाकरेण छन्दोगपरिशिष्टनाम्ना लिखितत्वात् व्याख्यातत्वाच्चास्माभिर्व्याख्यातम् । नारायणोपाध्यायेन तु नैतत् पठितं न वा व्याख्यातम् । प्रभा.

( ११ ) कर्मारम्भे निर्विघ्नफलसिद्ध्यर्थं गणपतिपूजनं पृथक्कार्यम्, तस्य पुरुषार्थत्वेन मातृपूजाङ्गभूतस्य च कर्मार्थत्वेन तयोर्भेदात् । अत एव तन्त्रेणापि न तयोरनुष्ठानम् ।

अत्र प्रत्येकं मातॄणां देवतात्वमिति सिद्धान्तः । तथा च प्रत्येकं पृथक् पृथक् प्रतिष्ठां विधाय ओङ्कारादिनमोन्तेन चतुर्थ्यन्तेन स्वस्वनाम्ना गौर्यादयो मातरो गन्धादिभिरर्चनीयाः । अर्चनं च पदार्थानुसमयेनैव आसां कर्तव्यमिति रुद्रपद्धतौ नारायणभट्टाः । ग्रहपूजाऽपि पदार्थानुसमयेनैवेति शान्तिमयूखे । पदार्थानुसमयो नाम सर्वेषामेकैकपदार्थसमर्पणानन्तरं पदार्थान्तरार्पणम्, न तु सर्वपदार्थार्पणमेकस्य कृत्वाऽन्यस्य कर्तव्यम् । स्पष्टं चेदं गदाधरकृते श्राद्धसूत्रभाष्ये द्वितीयकण्डिकाव्याख्याने । अत्र चतुर्दशत्वषोडशत्वपक्षौ शाखाभेदेन व्यवस्थितौ । षोडशत्वपक्ष एव बहुसंमतः । ¶ संदी. ५६–५७

कर्मादौ मातृकापूजनस्य कर्तव्यता

**[1]कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः ।**
**पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥**

( १ ) कर्मादिषु नान्दीश्राद्धप्रयोजककर्मोपक्रमेषु । स्मृच. ५०२

( २ ) कर्मादिषु नान्दीमुखादिषु । मपा. ६३७

( ३ ) मातरो द्विप्रकाराः मानुष्यो दैव्यश्च । मानुष्यो मात्रादयः । दैव्यो ब्राह्म्यादयः । प्रपा. १४

( ४ ) सर्वेषु श्राद्धवत्सु । द्वैनि. ७१

( ५ ) अपरमपि साधारणं कर्माङ्गमाह– कर्मादिष्विति । सर्ववैदिककर्मारम्भात्पूर्वं गणपतिसमेता गौर्यादिमातरः प्रयत्नतो भक्तिश्रद्धाभ्यां पूजयितव्याः । पूजाफल-

---

¶ शेषं संगगतम् ।

(१) कास्मृ. १।१३; अप. १।२४९ पृ. ५१७; श्राक. २७२; स्मृच. ५०२, ५०३ तु (च); चश्रा. १५३९ तु (च) षट्त्रिंशन्मते; स्मृसा. १०७ कर्मादिषु तु (कर्मादिकेषु); मपा. ६३७ तु (च); प्रपा. १४ तु (च) मनुः; मर. १७२ तु (च); द्वैनि. ७०–७१ तु (च); निप्र. २०२ तु (च); श्राकौ. ५०२ तु (च); श्रात. ३०९; श्रासौ. १२२; श्राप्र. २९३ सर्वं चश्रावत्; मुक्ता. ७५३ तु (च); संम. ४ तु सर्वेषु (च सर्वत्र); शाम. ३ सर्वेषु (सर्वत्र); श्राम. ८८ तु (च); सिन्धु. १७३३; विपा. २७ (भागः २) सर्वं प्रपावत्; संकौ. २४ सर्वं चश्रावत्; आन. १४४ तु (च); बाल. १।२५० पृ. ५७३ (=); संग. ७३ तु (च); संदी. ५६ तु (च).

माह— ताः पूजिताः पूजाकर्तारमभ्युदयसंपादनेन प्रीणयन्ति । $ प्रकाश.

(६) कर्मादिष्वित्यनेन मातृयागस्य कर्माङ्गता दर्शिता । कर्मपदमत्र वृद्धिश्राद्धाङ्गकवैदिककर्मपरम् । तेन गृह्यानुक्तेषु प्रतिष्ठादिष्वपि आदौ मातृपूजनम् । वैदिकेतरस्थले तु गृहप्रवेशे पुत्रजन्मनि च 'यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः ।' इति वक्ष्यमाणवचनात् मातृपूजालाभः । संगणाधिपा इत्यनेन विघ्नवारणाय ततोऽपि प्राक् गणेशपूजा कार्या, 'आदौ विनायकः पूज्यः' इति वक्ष्यमाणवचनाच्च । प्रयत्नेन भक्तिश्रद्धातिशयेन । पूजयन्ति अभ्युदयदानेन पूजकं प्रीणयन्तीत्यर्थः । श्राकौ. ५०१–५०३

(७) मातरो गौर्यादयः षोडश । संम. ४

मातृकाप्रतीकानि पृथङ्नैवेद्यता च

**[1]प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु ।**
**अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥**

(१) शुद्धासु रजतादिधातुमयीषु । अक्षतपुञ्जाः यवमुष्टयः । यथासंभवं यथाकुलं च विकल्पः । व्यवस्थितविकल्पो वा, 'जातकर्मणि बालानां नामाह्वयनकर्मणि । निरीक्षणे प्राशने च यवस्थं मातृपूजनम् ॥' इति वचनात् । अत एव पृथग्विधैरित्युक्तम् । गन्धताम्बूलवस्त्रादिश्चशब्दार्थः । श्राका. ५१३

(२) पूजास्थानानि तदुपकरणानि चाऽऽह— प्रतिमास्विति । (प्रतिमासु) प्रतिकृतिषु । शुभ्रासु रजतस्फटिकादिमयीषु । शुद्धास्विति पाठेऽप्ययमेवार्थः । अयं मुख्यकल्पः । अनुकल्पमाह— पटादिष्वित्यादिः । वर्णकलिखिता वा । आपत्कल्पमाह— यवपुञ्जेष्वपि वा । मातरः पूजनीया इत्यनुषङ्गः । निवेदनीयैश्च नानाविधैर्गन्धपुष्पधूपदीपपायसमोदकापूपकादिभिः । चकारो भक्तिश्रद्धासमुच्चये । प्रकाश.

(३) शुभ्रासु शुक्लासु स्फटिकादिमयीषु, लिखिता मातरः पूज्या आलेख्येषु वेत्यर्थः । पुञ्जेष्विति बहुवचनात् पृथक् पृथक् यवपुञ्जेषु वा पूजनीयाः । अत्र पूर्वे पूर्वे फलातिशयः, न तु मुख्यकल्पानुकल्पेन(? ल्पत्वेन) व्यवस्था, शक्तस्यान्यत्र फलाभावकल्पनागौरवात् । पृथग्विधैः नानाविधैः । अत्रापि बहुवचनात् पृथक् नैवेद्यैरित्यर्थः । ¶ श्राकौ. ५०३

(४) आदिशब्दात् भित्त्यादिषु । § श्रात. ३११

(५) नैवेद्यैरिति पञ्चोपचारान्तरोपलक्षणम् । संग. ७४

नान्दीश्राद्धस्याऽऽवश्यकता, मातृपूजनस्य नान्दीश्राद्धात्पूर्वमनुष्ठानम्

**[1]अनिष्ट्वा तु पितॄन् श्राद्धे न कुर्यात् कर्म वैदिकम् ।**
**तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥**

प्रधानावृत्तावपि मातृपूजनस्य नान्दीश्राद्धस्य च नाऽऽवृत्तिः, आवर्तमानप्रधाननियमश्च

***[2]असकृद्यानि कर्माणि क्रियेरन् कर्मकारिभिः ।**
**प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च ॥**

---

$ श्रात. प्रकाशगतम् ।

(१) कास्मृ. १।१४; अप. १।२४९ पृ. ५१७ लिखित्वा (लिखिता); श्राक. २७२ शुभ्रासु लिखित्वा वा (शुद्धासु लिखितासु) वाऽक्षत (चाक्षत); स्मृच. ५०२ शुभ्रासु लिखित्वा (शुद्धासु लिखिता) अपि वाऽक्षतपुञ्जेषु (गन्धपुष्पाक्षतैश्चैव); चश्रा. १५३९ अपवत्, षट्त्रिंशन्मते, स्मृसा १०७ पू.; मपा. ६३७ शुभ्रासु लिखित्वा (शुद्धासु लिखिता) वाऽक्षत (चाक्षत); मर. १७२; श्राका. ५१३ शुभ्रासु (शुद्धासु) वाऽक्षत (चाक्षत); श्राकौ. ५०२ अपवत्; श्रात. ३०९ अपवत्; श्रासा. १२२ अपवत्; श्राप्र. २९३ वा पटा (च पटा) षट्त्रिंशन्मते; मुक्ता. ७५३ स्मृचवत्; संम. ४ शुभ्रासु (शुद्धासु); शाम. ३ संमवत्; श्राम. ८८; सिन्धु. १७३४ शुभ्रासु लिखित्वा (शुद्धासु लिखिता); आन. १४४ स्मृचवत्, उत्त.; संग. ७४; संदी. ५७.

¶ श्राप्र. श्राकौगतम् ।

§ शेषं श्राकौगतम् ।

* व्याख्यासंग्रहः नान्दीश्राद्धप्रकरणे द्रष्टव्यः ।

(१) कास्मृ. १।१६.

(२) कास्मृ. १।५८–६०. शेषः स्थलादिनिर्देशः नान्दीश्राद्धप्रकरणे द्रष्टव्यः ।

**आधाने होमयोश्चैव वैश्वदेवे तथैव च ।**
**बलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥**
**नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ॥**

सकृत्कृतस्य मातृपूजनस्य नान्दीश्राद्धस्य च कर्मगणोपकारकत्वम्

**[1]गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।**
**सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥**

(१) यदा संस्कारातिक्रमे एकदोपनयनकाले जातकर्मादीनि क्रियन्ते, एवमन्यत्रापि यत्र यत्र संभूयान्यानि कर्माणि माङ्गल्यानि क्रियन्ते, स कर्मगणः, तत्र सकृत् तन्त्रेण कुर्यात् । पृथगादिषु स्वस्वकाले पृथक् क्रियमाणेषु न तन्त्रेण, किंत्वावृत्त्येति । मपा. ६३८–६३९

(२) 'नान्दीमुखान् पितॄनादौ तर्पयेत्' इत्यादिवचनोक्तनान्दीमुखश्राद्धस्यानुष्ठानं कस्मिंश्चिद्विषये तन्त्रेण कार्यं नाऽऽवृत्त्येत्याह स एव– गणश इति । अस्यार्थः– देशान्तरगतस्य चिरकालादश्रूयमाणसद्भावस्य मृत इति बुद्ध्या पुत्रादिना कृतमृतकार्यस्य कालान्तरे आगतस्य यानि जातकर्मादीनि संस्कारकर्माणि पुनः क्रियन्ते, तथोपनयनात् प्राक् स्वकाले कथंचिदकृतचौलकर्मपर्यन्तसंस्कारस्य यानि जातकर्मादीन्युपनयनकाले संभूय क्रियन्ते, तेषु गणशः संभूय क्रियमाणेषु जातकर्मादिसंस्कारेषु मात्रादिपूजायाः नान्दीश्राद्धस्य च सकृत् तन्त्रेण प्रथमं क्रियमाणस्य संस्कारकर्मण आदावनुष्ठानम्, न पृथगादिषु नाऽऽवृत्त्या संस्कारकर्मणामादिषु इति । $ प्रपा. १३

(३) यानि कर्माणि विधिवशेनार्थवशेन वा एकस्मिन्नेव दिने क्रियन्ते, यथा आधानं होमश्च, यद्वोत्कृष्य क्रियमाणं जातकर्मादि, तत्र न्यायेन सकृदेव करणं प्राप्तमनूद्यते, बहिःप्रयोगगतत्वेन सर्वान् प्रत्यविशिष्टत्वात् इति । निप्र. २०१–२०२

(४) गणशः समुदायेन क्रियमाणेषु मातृभ्यः पूजा सर्वदा सकृदेव । यथा यजनीयेऽहनि नित्ये नवयज्ञवास्तुशमनगोयज्ञाश्वयज्ञेषु समुदायेन क्रियमाणेषु । श्राद्धमपि तेषु गणादौ एकमेव, न कर्मसंख्यानुसारेण श्राद्धान्यपि तावत्संख्याकानीति । * प्रकाश.

(५) मातृभ्य इति तादर्थ्ये चतुर्थी । एवं च सामान्यतो विधानादेकस्मिन् दिने अनेकपुत्रसंस्कारेष्वपि सकृदेव श्राद्धम्, गणत्वाविशेषात् । यद्यप्यङ्गानामेक( प्रकरणमात्रत्वेन बाह्यत्वात्कर्माङ्गाचमनादिवदकृतेऽपि प्रधाने ? )प्रयोगविध्युपसंहारे सत्येव तन्त्रत्वम्, तथाऽप्यत्र वचनादिति श्राद्धचिन्तामणिः । वस्तुतस्तु अनेकानुष्ठानजन्यानेकफलोद्देशेन सकृदेवानुष्ठानं हि तन्त्रता, नात्रैकप्रयोगविध्युपसंग्रहः कारणम् । किं तर्हि ? समानाङ्गदेशकालकर्तृकत्वे सति अगृह्यमाणविशेषतया लाघवमेव, तच्चाङ्गेष्विव प्रधानेष्वप्यस्तीति किमिति तन्त्रानुष्ठानेन ( न ) भवितव्यम् । ( ? ) § श्राकौ. ५२६–५२७

---

(१) कास्मृ. १।६६ ; अप. १।२४९ पृ. ५१६ ; श्राक. २७५ सकृत् ( सदा ) ; मपा. ६३८ मातृभ्यः ( पितृभ्यः ) शेषं श्राकवत् ; प्रपा. १३ माणेषु ( माणानां ), 'स एव' इत्युक्तम्, तथापि ऋषिनिर्णयो न भवति ; निप्र. २०१ माणेषु मातृभ्यः ( माणे तु मातॄणां ) पू. ; श्राकौ. ५२६ ; श्रात. ३२० ; संत. ९१२ माणेषु ( माणे तु ) ; श्राप्र. ३१३ ; मुक्ता. ७५३ ; श्राम. ८८ ; सिन्धु. ९४९ माणेषु मातृभ्यः ( माणानां मातॄणां ) : १७३७ प्रपावत् ; विपा. ४८०, २७ ( भागः २ ) माणेषु मातृभ्यः ( माणानां मातॄणां ) ; संकौ. २६ ; आन. १४३ ; प्रका. १३० ; बाल. १।११–१२ पृ. १४ विपावत् ; १।२५० पृ. ५७० विपावत्, वसिष्ठः ; संग. ७७ ( गणशः क्रियमाणानामेकं स्यान्मातृपूजनम् । नान्दीश्राद्धं भवेदेकं होममन्त्राः पृथक्पृथक् ॥ ) : ६३२ ( गणशः क्रियमाणानाम् ) एतावदेव.

$ विपा. प्रपावत् । आन. प्रपागतम् । कुभ. प्रपागतं श्रामगतं च ।

* श्रात., प्रभा. प्रकाशवत् ।

§ शेषं प्रकाशवत् ।

( ६ ) अङ्गवङ्गकलिङ्गेषु तीर्थयात्रां विना गमने कर्मनाशाजलस्पर्शादौ च प्रायश्चित्ततया पुनःसंस्काराणां युगपदनुष्ठानम् । ( तत्र ) आदौ मातृपूजा श्राद्धं च सकृदेवेत्यपरे । § श्राप्र. ३१४

( ७ ) तथा व्रतानि यदा संभूय क्रियन्ते, ... तथा पतितस्य कृतप्रायश्चित्तस्य यानि जातकर्मादीनि पुनः संभूय क्रियन्ते, तेषु... । * मुक्ता. ७५३

( ८ ) यदा तु नामकर्मान्नप्राशनचौलोपनयनकर्माण्येकस्य शिशोरेककाले क्रियन्ते, तदा वृद्धिश्राद्धं तन्त्रेणैव कार्यम् । तथा च तत्रैव—गणश इति । अनेकेषां पुंरूपाणां ( स्त्रीरूपाणां ) वाऽपत्यानां सजातीयविजातीयानेकोपनयनोद्वाहादिसंस्कारे देशकालकर्त्रैक्याद्वृद्धिश्राद्धं तन्त्रेणेति कश्चित् । तत्तुच्छम्, यथा योगसिद्ध्यधिकरणे ( जैसू. ४।३।११ ) सर्वफलार्थतया बुद्धस्यापि ज्योतिष्टोमादेरेकस्मात् प्रयोगादेकमेव फलम्, नानेकानि, 'एकया सामग्र्या एकमेव कार्यं जन्यते' इति नियमादित्युक्तम्, तथेहाप्युपनयनविवाहादिजन्यपरमापूर्वाणामनेकतत्तत्संस्कार्यनिष्ठत्वेन तदङ्गाभ्युदयिकश्राद्धजन्यानामङ्गापूर्वाणामपि तन्निष्ठतापत्तेः । न च तत्संभवति, पूर्वोक्तनियमविरोधात् । अतः पृथगेव वृद्धिश्राद्धमिति दिक् । श्राम. ८८

( ९ ) एतत् बहूनामपत्यानां युगपत्संस्कारकरणविषयमिति बोपदेवः । अतीतसंस्काराणां युगपत्करण इत्यन्ये । तत्रापि चौलस्य उपनीत्या सहेति पक्षे उपनीतिदिने एवानुष्ठानं न पूर्वदिने, सहत्वस्य दिवसैक्ये संनिकृष्टतरत्वात् । वृद्धाचारोऽप्येवम् । पृ. ९४९

अत्र चौलादीनां यौगपद्ये तन्त्रतोक्ता छन्दोगपरिशिष्टे—गणश इति । मातृभ्यः इति षष्ठ्यर्थे चतुर्थी । गणशः एकानेकपुत्राणां संस्कारेष्वेकदिने एकदेशकालकर्त्रैक्यादित्यर्थः । $ सिन्धु. १७३७—१७३८

[ गणश इति । एकस्य शिशोः नामकर्मान्नप्राशनचौलोपनयनानि यदा एकस्मिन् काले क्रियन्ते, तदा वृद्धिश्राद्धं तन्त्रेणैव कार्यमित्यर्थः । यत्र यत्र श्राद्धं भवेत्तत्र मातरः पूज्या इति च । $ पृ. १७३७

एकानेकेति । एकस्यापत्यादेरनेकेषु नामकर्मादिसंस्कारेषु एकदिने एकेन कर्त्रा क्रियमाणेषु देशकालकर्त्रैक्याद्वृद्धिश्राद्धं सकृत् मातॄणां पूजा च सकृदित्येकोऽन्वयः । एवमनेकस्यापत्यादेः जातकर्मादिसंस्कारे प्रतिस्वमङ्गापूर्वोत्पत्तये संस्कार्याणां भेदेन संस्काराणां भेदेऽपि तत्र श्राद्धमेकमेवेत्यपर इति । तत्रानेकपदं दर्शितकेचिन्मतानुरोधि, न च तत्र निर्भरः कार्यः, योगसिद्ध्यधिकरणविरोधप्रसङ्गात् । न च कर्मनाशाजलस्पर्शादिना यत्रानेकपुत्रादेः पुनरुपनयनं तत्परताऽनेकपदस्य युज्यते, तस्य प्रायश्चित्तत्वेन श्राद्धस्यैवाभावात् । $ कृभ. १७३८ ]

( १० ) अत्र आदौ यज्जन्मनिमित्तं यच्च संस्कारादिषु विहितं तत् सकृदेव कार्यम्, न पृथगित्यन्वयः । ततश्च पुत्रजनिनिमित्तं चौलान्तसंस्काराङ्गं च नान्दीश्राद्धं तन्त्रेण करिष्ये इति संकल्पः । * संकौ. २६

( ११ ) जातकर्मादिसंस्कारेषु उपनयनेन सह क्रियमाणेषु व्रतादिषु समावर्तनेन सह क्रियमाणेषु नान्दीश्राद्धमादावेव सकृत् कार्यमित्यर्थः । आन. १४३

( १२ ) एतच्च समानगोत्रजानामेकदैव यदोद्वाहादिप्रसङ्गः, एकस्यैव वा एकदा जातकर्मादिसकलसंस्कारप्रसङ्गः, तदा एकदैवेति वसिष्ठः— 'गणशः...' इति । अत्र आदिषु जन्मादिसंस्कारेषु यद्विहितं तन्निमित्तकमिति यावत् । तेषामादौ सकृदेव कार्यं न पृथगित्यन्वयः । ¶ बाल. १।२५० पृ. ५७०

मातृपूजनस्य नान्दीश्राद्धव्यापकत्वं तद्व्याप्यत्वं च

[1]यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः ॥

---

§ शेषं प्रकाशवत् प्रपानुवादश्च ।

* शेषं प्रपावत् । $ संग. सिन्धुगतम् ।

$ शेषं श्रामवत् ।

* शेषं प्रपागतम् । ¶ शेषं सिन्धुगतम् ।

( १ ) कास्मृ. १।६८ ; श्राक. २७५ ; श्राकौ. ५२६ ; निप्र. २०२ च ( तु ) ; श्रात. ३२० तत्र च ( तत्रैव ) ; श्रासौ. १२३ (=) च ( तु ) ; श्राम. ८८ ; संग. ७३ परिशिष्टम् ; संदी. ५५ परिशिष्टम्.

( १ ) मातरः पूजनीयाः इति शेषः । श्राक. २७६

( २ ) पूज्या इति शेषः । ' कर्मादिषु ' इत्यनेनैव वैदिककर्मादौ यद्वृद्धिश्राद्धं तत्र पूजोपक्रमे मातृपूजोक्ता । इदानीं पुत्रजन्ममुखदर्शनाद्यन्तेऽपि यच्छ्राद्धं तत्रापि मातृपूजेति ' यत्र यत्र ' इत्यनेनोक्तमित्यपुनरुक्तिः ।
प्रकाश.

( ३ ) यत्र यत्रेति । मातृपूजनमुपलक्षणम् , वसुधारादानमपि ज्ञेयम् । पूर्वं तु ' कर्मादिषु च सर्वेषु ' इत्यनेन वैदिककर्मादौ मातृपूजनं विहितम् , अत्र तु वैदिकेतरस्थले गृहप्रवेशे पुत्रमुखदर्शने पुत्रजन्मनि च श्राद्धसाहचर्यात् मातृपूजादिकं विधीयते । अष्टकायागादौ च यत्र यत्र श्राद्धं निषिद्धं तत्र मातृपूजनं च निषिध्यते इति ।
श्राकौ. ५२०

( ४ ) ननु कर्मादौ ' षड्भ्यः पितृभ्यः ' इत्यनेन श्राद्धं विहितम् , ' कर्मादिषु च सर्वेषु' इत्यनेन मातृपूजा विहिता इति पुनरुक्तिः । न, वैदिककर्मादौ मातृपूजा पूर्वमुक्ता, अनेन पुत्रजन्मादौ वैदिककर्मादित्वाभावेऽपि श्राद्धनिमित्तत्वादेव विधीयते । यद्वा यत्र यत्र श्राद्धं भवेत्तत्र तत्रैव मातरः इति वचनार्थः , तेनाष्टकादौ वृद्धिश्राद्धनिषेधे मातृपूजानिषेधः । श्रात. ३२२

## शातातपः

नान्दीश्राद्धस्याऽऽवश्यकता, मातृपूजनस्य नान्दीश्राद्धात्पूर्वमनुष्ठानम्

***[1]नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् ।**
**तेभ्योऽपि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥**

* तेभ्योऽपीति स्थाने तिस्रोऽपीति ये ग्रन्थकृतः पठन्ति, येषु च पूर्वार्धमात्रम् , तत्कृतं व्याख्यानं स्थलनिर्देशादि चात्रानुपयुक्तत्वान्नान्दीश्राद्धप्रकरणे निवेशितम् ।

(१) श्राक. २७२ वैदिक ( दैविक ) ; चदा. १४० पूर्वार्धे ( नानिष्ट्वा पितृयज्ञेन वैदिकं किंचिदाचरेत् । ) तेभ्योऽपि ( तत्रापि ) ; मर. १७१ ; गभा. ५०९ पूर्वार्धे ( अनिष्ट्वा पितृयज्ञेन वैदिकं किंचिदाचरेत् । ) तेभ्योऽपि ( तत्रापि ) ; निप्र. १९९ कर्म वैदिकमा ( वैदिकं किंचिदा ) तेभ्योऽपि ( तत्रापि ) ; बाल. १।२५० पृ. ५६८ कर्म वैदिकमा ( वैदिकं किंचिदा ) मनुः : पृ. ५७३ कर्म वैदिकमा ( वैदिकं किंचिदा ) पू . , मानवशातातपाभ्यामिति ; संग. ७३ वैदिकमाचरेत् ( कुर्याच्च वैदिकम् ) ; संदी. ५५–५६ संगवत् .

( १ ) दैविकमत्र आभ्युदयिकम् , पितॄणां नान्दीमुखानां देववदुपचारात् । श्राक. २७२

( २ ) वैदिकम् आधानदर्शपूर्णमासादि ।
बाल. १।२५० पृ. ५६८

( ३ ) नैतावता श्राद्धाङ्गं मातृपूजा, ' कर्मादिषु च सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥ ' इति कात्यायनेन साक्षात्कर्मान्वयोक्तेः । अत एव श्राद्धसंकल्पात् पृथगेवास्याः संकल्पः । स्मार्तकर्माङ्गेषु पृथक् संकल्प आचारप्रमाणकः । श्रौते तु न तथा । संग. ७३

( ४ ) अत एव ( साक्षात्कर्मान्वयोक्तेरेव ) श्राद्धरहितेष्वपि एतासां पूजनं दृश्यते वर्षवृद्ध्यादिकर्मसु ।
* संदी. ५६

**[1]अकृत्वा मातृयागं तु यः श्राद्धं परिवेषयेत् ।**
**तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥**

( १ ) मातृयागः मातृपूजा । § श्राक. २७२

* शेषं संगतम् ।

§ मर. श्राकवत् ।

( १ ) अप. १।२४९ पृ. ५१५ इच्छन्ति ( कुर्वन्ति ) ; श्राक. २७२ श्राद्धं ( श्राद्धे ) ; चदा. १४० यः श्राद्धं परिवेषयेत् ( वैदिकं यः समाचरेत् ) ; मर. १७१–१७२ वेषयेत् ( षेचयेत् ) ; श्राका. ५१२ (=) ; द्वैनि. ७१ (=) यः श्राद्धं ( पितृभ्यः ) ; गभा. ५०९ चदावत् ; श्राकौ. ५०१ अपवत् ; श्रासौ. १२० ; सिन्धु. १७३३ श्राकवत् .

(२) मातरो गौर्यादयो वक्ष्यमाणाः । अत्र युगपत्प्राप्तयोर्मातृयागश्राद्धयोः मातृयागस्य प्राक्कर्तव्यता दर्शिता श्राद्धेन सहाव्यभिचारश्च, न तु श्राद्धाङ्गता ।

श्राकौ. ५०१

मातृगणना

[1]गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
[2]धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
आभ्योऽर्घ्यं गन्धपुष्पं च धूपं दीपं निवेदयेत् ॥

आत्मदेवता कुलदेवता । अर्घ्यग्रहणेन षोडशोपचारपूजा आवश्यकीति द्योत्यते । संकौ. २५

## स्मृत्यन्तरम्

मातृगणना

[3]ब्रह्माणी माहेशी कौमारी वैष्णवी च वाराही ।
इन्द्राणी चामुण्डा महालक्ष्मीश्च मातरः प्रोक्ताः ॥

## मार्कण्डेयपुराणम्

ब्रह्माण्यादीनां स्वरूपाणि

[4]हंसयुक्तविमानाग्रे साक्षसूत्रकमण्डलुः ।
आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साऽभिधीयते ॥

(१) अप. १।२४९ पृ. ५१७ (=); चश्रा. १५३८; मपा. ६३७ (=); श्रासौ. १२३ बह्वृचपरिशिष्टम्; श्राप्र. २९३; संकौ. २५ (=).

(२) अप. १।२४९ पृ. ५१८ (=) आभ्योऽ (अपोऽ); चश्रा. १५३८–१५३९ र्घ्यं गन्ध (र्घ्यंगन्ध); मपा. ६३८ (=) आभ्योऽर्घ्यं गन्ध (आभ्यो गन्धं च); श्रासौ. १२३ पुष्टिस्तथा तुष्टिः (तुष्टिः क्षमा पुष्टिः) पू., बह्वृचपरिशिष्टम्; श्राप्र. २९३ ऽर्घ्यं (ऽर्घं); संकौ. २५ (=).

(३) चश्रा. १५३८ शाखान्तरे; श्राप्र. २९३.

(४) चश्रा. १५३९ विमानाग्रे (विमानस्था); श्राप्र. २९३–२९४.

[1]माहेश्वरी वृषारूढा त्रिशूलवरधारिणी ।
महाहिवलया प्राप्ता चन्द्ररेखाविभूषणा ॥
कौमारी शक्तिहस्ता च मयूरवरवाहना ।
योद्धुमभ्याययौ दैत्यानम्बिका गुहरूपिणी ॥
तथैव वैष्णवी शक्तिर्गरुडोपरि संस्थिता ।
शङ्खचक्रगदाशार्ङ्गखड्गहस्ताऽभ्युपाययौ ॥
यज्ञवाराहमतुलं रूपं या बिभ्रतो हरेः ।
शक्तिः साऽप्याययौ तत्र वाराहीं बिभ्रती तनुम् ॥
नारसिंही नृसिंहस्य बिभ्रती सदृशं वपुः ।
प्राप्ता तत्र सटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥
वज्रहस्ता तथैवैन्द्री गजराजोपरि स्थिता ।
प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा ॥

## विष्णुपुराणे

मातृपूजनस्याऽऽवश्यकता

[2]तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥
[3]अकृत्वा मातृयागं तु वैदिकं यः समाचरेत् ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥

## ब्रह्मपुराणम्

महालक्ष्म्या गौर्याश्च स्वरूपम्

[4]महालक्ष्मीश्च कर्तव्या नृत्यमाना कपालिनी ॥
कार्तिकी तुङ्गखट्वाङ्गत्रिमालाम्बुजधारिणी ।
कूष्माण्डा पातु(? या तु) प्रेतस्था दन्तुरा वर्वरं शिरः ॥

अत्र गौरीस्वरूपम्– 'कार्तिकी' इति ।

श्राप्र. २९४

(१) चश्रा. १५३९–१५४०; श्राप्र. २९४.

(२) प्रपा. १३; विपा. २७ (भागः २).

(३) प्रपा. १३–१४; विपा. २७ (भागः २); संग. ७२–७३ समाविष्टा (समायुक्ता); संदी. ५५ संगवत्.

(४) चश्रा. १५४० कूष्माण्डा पातु (कूष्माण्डया तु); श्राप्र. २९४.

सकृत्कृतस्य मातृपूजनस्य नान्दीश्राद्धस्य च कर्मगणोपकारकत्वम्

**[१]गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।**
**सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥**

(१) आभ्युदयिकश्राद्धं वक्ष्यमाणं च मातृपूजनं एकस्यानेकसंस्कारेष्वेककर्तृकेषु युगपदुपस्थितेषु सर्वादौ सकृदेव तन्त्रेणैव कार्यम्, न तु प्रतिसंस्कारमावृत्त्या— यथा दैवादकृतजातकर्मादिकस्योपनयनकाले जातकर्माद्यनुष्ठाने, देशान्तरगतस्य मृतबुद्ध्या कृतौर्ध्वदेहिकस्याऽऽगतस्य पुनर्जातकर्मादिसंस्काराणां विहितानां युगपदनुष्ठाने, कर्मनाशाजलस्पृष्टादीनां प्रायश्चित्ततया पुनःसंस्काराणां युगपदनुष्ठाने वा । तदुक्तं ब्रह्मपुराणे— 'गणशः०' इति । § गभा. ३१

(२) ... एवं च जातकर्मातिरिक्तसंस्कारेषु नान्दीश्राद्धस्य अङ्गत्वे सिद्धे यदा एकसंस्कार्यस्यानेकसंस्कारेषु एककर्तृकेषु एकस्मिन् काले युगपदुपस्थितेषु देशकालकर्त्रैक्यादगृह्यमाणविशेषरूपतन्त्रन्यायादेव मातृपूजनाभ्युदयिकयोः सकृदनुष्ठानप्राप्तेः 'गणशः ... पृथगादिषु' इति ब्राह्मवचनमनुवादकमेव, न सकृत्त्वविधिपरम् । अन्ये तु अनेनैव न्यायेन अनेकसंस्कार्याणां सजातीयविजातीयानेकसंस्कारेष्वपि सकृदेव तदित्याहुः । तन्न, संस्कारजन्यचरमापूर्वाणामनेकसंस्कार्यनिष्ठत्वेन तदङ्गाभ्युदयिकश्राद्धजन्याङ्गापूर्वाणामपि तन्निष्ठत्वस्याऽऽवश्यकत्वात् । न च तत्संभवति, एकया सामग्र्या एकमेव कार्यं जन्यते इति नियमस्य योगसिद्ध्यधिकरणे स्थापितत्वात्, न सकृदनुष्ठितेनाऽऽभ्युदयिकेनानेकापूर्वोत्पत्तिरिति अनेकसंस्कार्येषु पृथगेव वृद्धिश्राद्धमिति तातचरणाः । ननु सत्रादिष्वनेकयजमानगतानि अनेकान्यपूर्वाणि एकस्मात्सत्रप्रयोगादुत्पद्यन्ते इति उक्तनियमे व्यभिचारात् प्रकृतेऽपि तथाऽस्त्विति चेन्न, तत्रापि स्वस्वात्मघटितसामग्रीभेदात् । संम. ५

(३) बह्वपत्यानां युगपत्संस्कारकरणविषयमिदं वचनमिति बोपदेव आह । 'मातॄणां पूजनं सकृत्' इति पृथग्वचनादेवं ज्ञायते मातृपूजनं नान्दीश्राद्धस्यानङ्गमेव भवतीति । अतोऽस्मिन्कल्पे मातृकापूजनस्य पृथगेव संकल्पः । 'यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः ।' इति पुराणान्तरवचनेन अङ्गत्वम् । अस्मिन् कल्पे न पृथक् संकल्पः । ‡ संर. ४०

(४) तेषां क्रियमाणानां कर्मणामादिषु पृथक् भिन्नतया मातृपूजनं श्राद्धं च न कार्यमित्यर्थः । ‡ संदी. ५८

## भविष्यपुराणम्

मातृपूजनस्य नान्दीश्राद्धात्पूर्वमनुष्ठानम्

**[१]अकृत्वा मातृयज्ञं तु यः श्राद्धं परिवेषयेत् ।**
**तास्तस्य क्रोधसंपन्ना हिंसां कुर्वन्ति दारुणाम् ॥**

एतन्मातृपूजनस्याकरणे भविष्यत्पुराणे दोषो दर्शितः— अकृत्वेति । चश्रा. १५३९

मातृगणना

**[२]गौरी पद्मा शची मेधा सावित्री विजया जया ।**
**देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥**
**धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ॥**

§ प्रर. गभानुवादः । संग. गभावत् । संव. गभागतम् ।

(१) गभा. ३१ माणेषु (माणानां); प्रर. १२ गभावत्; संम. ५; प्रका. ३०; संग. ७७ माणेषु (माणानां) न पृथगादिषु (न तु पृथक् पृथक्); संव. ४२ माणेषु मातृभ्यः (माणानां मातॄणां): ५२ गभावत्; संर. ४० माणेषु मातृभ्यः (माणानां मातॄणां); संदी. ५८ संरवत्.

‡ शेषं गभावत् ।

(१) चश्रा. १५३९ दारुणाम् (दारुणम्); श्राप्र. २९३; संकौ. २४; संव. ४० यः श्राद्धं परिवेषयेत् (यजनं यः समाचरेत्).

(२) चदा. १४० मातरो लोकमातरः (माताऽन्या लोकमातृकाः) धृतिः (हृष्टिः); गभा. ५०९; निप्र. २०२.

मातृपीठम्

[1]**पूज्याश्चित्रेऽथवाऽर्चायां वरदाभयपाणयः ॥**

अक्षतपुञ्जेषु वा, छन्दोगपरिशिष्टात् । ' सगणाधिपाः ' इति वचनात् गणपतिना सहाष्टादश ।

निप्र. २०२

## कूर्मपुराणम्

मातृपूजनस्य नान्दीश्राद्धात्पूर्वमनुष्ठानम्, मातृपीठानि

[2]**पूर्वं तु मातरः पूज्या भक्त्या वै सगणेश्वराः ।**
**स्थण्डिलेषु पवित्रेषु प्रतिमासु द्विजातिषु ॥**

[3]**पुष्पैर्धूपैः सनैवेद्यैर्गन्धाद्यैर्भूषणैरपि ।**
**पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं बुधः ॥**

## चतुर्विंशतिमतम्

मातृपूजनस्य नान्दीश्राद्धात्पूर्वमनुष्ठानम्,
मातृगणना च

[4]**श्राद्ध आभ्युदये प्राप्ते देवतास्थापनं स्मृतम् ।**
**जातिधर्मकुलश्रेणीलोकानां वृद्धिकारकम् ॥**

(१) आभ्युदये अभ्युदयनिमित्ते श्राद्धे प्राप्ते कर्तव्यतया प्रस्तुते ततः प्रागेव मात्रादिपूजनार्थं देवतास्थापनं स्थण्डिलादौ मात्रादिगणाधिपान्तदेवतावाहनं स्मृतमिति प्रथमार्धस्यार्थः । ¶ स्मृच. ५०२

(२) तत्र तावत् एतच्छ्राद्धं मण्डपदेवता—कुलदेवतास्थापनपूर्वकं मातृकापूजां विधाय वसोर्धाराश्च कृत्वा कार्यम् । तथा च चतुर्विंशतिमते— आभ्युदयिक इति । आभ्युदयिकश्राद्धे कर्तव्यतया प्रस्तुते सति ब्राह्मणक्षत्रियादिजातिविभागेन श्रुत्यादिषु समाम्नातं कुलवृद्धैश्चोपदिश्यमानं देवतानां प्रतिष्ठापनं कर्तव्यतया स्मृतम् । तद्धि लोकानां वृद्धेः मङ्गलपरम्परायाः कारणम् । अस्यानन्तरं मातृपूजनं कर्तव्यम् । चश्रा. १५३७

(३) वृद्धिश्राद्धे कर्तव्ये सति पूर्वं स्थण्डिलादौ मातृगणः संपूज्यः । विपा. २८ (भागः २)

[1]**ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।**
**वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ॥**

वसोर्धारायां पूज्या एता इति याज्ञिकाः ।

कृभ. १७३७

[2]**तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।**
**इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाऽष्टमी ॥**

---

¶ प्रपा. स्मृचानुवादः ।

(१) चदा. १४१; निप्र. २०२; श्रात. ३११ वाऽर्चायां (वा कार्या); कृत. ४७१ ऽथवाऽर्चायां (तथा कार्या).

(२) चश्रा. १५३७ पू.; प्रपा. १४ भक्त्या वै (भक्त्यैव); श्राप्र. २९२ पू.

(३) प्रपा. १४; सिन्धु. १७३३; मञ्जरी. ८५.

(४) अप. १।२४९ पृ. ५१७ श्राद्ध आभ्युदये (अथाऽऽभ्युदयिके) श्रेणी (श्रेणि) कारकम् (कारणम्); स्मृच. ५०२; चश्रा. १५३७ श्राद्ध आभ्युदये प्राप्ते (आभ्युदयिके संप्राप्ते) कुलश्रेणी (कुलाम्नातं); मपा. ६३८ आभ्युदये (आभ्युदयिके) जातिधर्मकुलश्रेणी (जातकर्मकुलश्रेणि); प्रपा. १४ श्राद्ध आभ्यु (श्राद्धे ह्यभ्यु); श्राका. ५१२ श्रेणी (श्रेणि); विपा. २८ (भागः २) प्रपावत्.

(१) अप. १।२४९ पृ. ५१७ (=) (ब्रह्माणी चैव माहेशी कौमारी वैष्णवी क्रमात् । वाराही नारसिंह्यैन्द्री सप्तैता मातरो मताः ॥); श्राका. ५१२ तथेन्द्राणी (तथैन्द्री च) सप्त मातरः (देवमातरः); प्रर. १३ (=); सिन्धु. १७३७ अपरार्के इत्युक्तम्; प्रका ३० (=); संव. ४१.

(२) अप. १।२४९ पृ. ५१७ पूर्वार्धे (तिस्रः पूज्याः पितुस्तिस्रः पूज्या मातामही तथा ।) पितुर्मातुः स्वसा (पितृमातृष्वसा); स्मृच. ५०२ पितुर्मातुः स्वसा (पितृमातृष्वसा); चश्रा. १५३७ तिस्रो मातामहे तथा (तिस्र पूज्यास्तु मातृके) शेषं स्मृचवत्; मपा. ६३८ स्मृचवत्; प्रपा. १४; श्राका. ५१२ स्मृचवत्; श्राप्र. २९२ पितुः पक्षे (पितृपक्षे) शेषं चश्रावत्; सिन्धु. १७३६; विपा. २८ (भागः२); संकौ. २४ तिस्रो

( १ ) माता पितामही प्रपितामहीति तिस्रः पितृपक्षे । मातामही मातुः पितामही मातुः प्रपितामहीति तिस्रो मातृवर्गे । तथा मातृष्वसा पितृष्वसा चेत्यष्टौ मातरः । अप. १।२४९ पृ. ५१०

( २ ) पितुः पक्षे पितृवर्गे तिस्रः मातृपितामही-प्रपितामह्यः पूज्याः । तथा मातामहे मातामहवर्गे तिस्रः मातामहीमातुःपितामहीमातुःप्रपितामह्यः । 'पितृमातृ-ष्वसाऽष्टमी' इति पितृष्वसा सप्तमी मातृष्वसा अष्टमी पूज्या इत्यष्टौ मनुष्यमातरः प्रोक्ता इति । † स्मृच. ५०२

( ३ ) एताश्च प्रत्यक्षाः प्रत्यक्षमेव कुङ्कुमकुसुम-वस्त्राभरणभोजनैः पूजनीयाः । परोक्षास्तु वक्ष्यमाण-देवमातृवदक्षतादिपुञ्जेष्वावाह्य पूजनीयाः । $ चश्रा. १५३८

**[1]ब्राह्म्याद्याश्च तथा सप्त दुर्गाक्षेत्रगणाधिपान् ।**
**वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान् पितॄन् ॥**

( १ ) ब्रह्माण्याद्यास्तथा सप्त । ब्राह्मी माहेश्वरी वैष्णवी ऐन्द्री वाराही कौमारी चामुण्डा इत्येताः सप्त देवमातरः । तथा दुर्गाक्षेत्रगणाधिपान् दुर्गां क्षेत्राधिपं गणाधिपं च वृद्ध्यादौ वृद्धिश्राद्धात् प्राक् षोडशभिरुप-चारैः पूजयित्वा पश्चान्नान्दीमुखान् पितॄन् श्राद्धे पूजयेत् । * स्मृच. ५०२

( २ ) शास्त्रान्तरे महालक्ष्म्या सह अष्टौ ब्रह्माण्या-द्याः पूज्या इत्युक्तम् । ¶ संकौ. २५

( ३ ) ब्रह्माणीति, ब्रह्माणमानयति जीवयतीति व्युत्पत्तेः । तेन 'इन्द्रवरुण०' (पासू. ४।१।४९) सूत्रे ब्रह्मपदादानुगविधानेऽपि न दोषः । कुभ. १७३७

**[1]गौरी पद्मा शची मेधा सावित्री विजया जया ।**
**देवसेना स्वधा स्वाहा मातरो लोकमातरः ।**
**एतास्त्वभ्युदये पूज्या आत्मदेवतया सह ॥**

आत्मदेवता स्वकीयकुलदेवता । तया सहैताः पूज्याः । शास्त्रान्तरे ब्रह्माण्याद्यास्त्वष्टौ दर्शिताः— 'ब्रह्माणी माहेशी कौमारी वैष्णवी च वाराही । इन्द्राणी चामुण्डा महालक्ष्मीश्च मातरः प्रोक्ताः ॥' । § चश्रा. १५३८

---

† प्रपा. स्मृचानुवादः । मपा., विपा. स्मृचवत् ।

$ शेषं स्मृचवत् । श्राप्र., सिन्धु. चश्रागतम् । संकौ. चश्रावत् ।

* चश्रा., प्रपा., श्राप्र., विपा. स्मृचवत् । मपा., प्रर. स्मृचगतम् ।

¶ शेषं स्मृचगतम् ।

§ श्राप्र. चश्रावत् ।

मातामहे तथा (तिस्रः पूज्याश्च मातृके) शेषं स्मृचवत्; साप्र. २ ; बाल. १।५३ पृ. १९१ ; संव. ४० संकौवत्; कुभ. ९९९ ; संदी. १४ (भागः २) (=) चतुर्थपादं विना.

(१) अप. १।२४९ पृ. ५१७ ब्राह्म्याद्याश्च (ब्रह्मा-ण्याद्याः); स्मृच. ५०२ अपवत्, म्हैसूरमुद्रितचन्द्रिकापुस्तके 'ब्राह्म्याद्याश्च' इत्येव पाठः ; चश्रा. १५३८ (ब्रह्मा-ण्याद्याः स्मृताः सप्त दुर्गाक्षेत्रगणाधिपाः । आदौ वृद्धौ सदा पूज्याः पश्चान्नान्दीमुखान् पितॄन् ।। ) व्याख्यानावसरे तु 'आदौ वृद्धौ' इत्यत्र 'वृद्ध्यादौ' इत्येव पाठः स्वीकृतः ; मपा. ६३८ अपवत्, पू. ; प्रपा. १४ ब्राह्म्याद्याश्च (ब्राह्मीत्याद्याः) ; श्राका. ५१२ (ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपाः । वृद्धौ वृद्धौ सदा पूज्याः पश्चान्नान्दी-मुखान् पितॄन् ।। ) ; प्रर. १३ (=) अपवत्, पू. ; श्राप्र. २९२ (ब्रह्माण्याद्याः स्मृताः सप्त दुर्गाक्षेत्रगणा-धिपाः । वृद्धौ वृद्धौ सदा पूज्याः पश्चान्नान्दीमुखान् पितॄन् ।। ) व्याख्यानपर्यालोचनया तु ग्रन्थकारस्य अपरा-र्कपाठः अभिमत इति भाति ; सिन्धु. १७३७ अपवत् ; विपा. २८ (भागः २) अपवत् ; संकौ. २४ श्राप्रवत् ; प्रका. ३० (=) अपवत्, पू. ; संव. ४० श्राप्रवत्.

(१) चश्रा. १५३८ मेधा (दक्षा) ; श्राप्र. २९२ चश्रावत् ; संकौ. २४ ; संव. ४०.

## लक्षणसंग्रहे

गौर्यादिमातृस्वरूपाणि

[१]गौरी चतुर्मुखी वीरा अक्षमालास्रुचान्विता ।
कुण्डाज्यपात्रिणी वामे ब्रह्माणी हंससंस्थिता ॥

गौरी गौरवर्णा । ब्रह्माणीविशेषणमेतत् ।

चदा. ३२८

त्रिनेत्रा शूलहस्ता च जटाखण्डेन्दुमण्डिता ।
कपालमालिनी शुक्ला रुद्राणी वृषसंस्थिता ॥
रक्ता शक्तिधरा देवी रक्तमाल्याम्बरान्विता ।
शिखिपृष्ठसमारूढा कौमारी स्कन्दरूपिणी ॥
शङ्खचक्रगदाशार्ङ्गखड्गहस्ता च तार्क्ष्यगा ।
श्यामा चतुर्भुजा देवी वैष्णवी वनमालिनी ॥
कृष्णा पीनोदरा क्रूरा शूकरास्यानुकारिणी ।
सवस्त्रा यौवनोद्भिन्ना नार्याभरणभूषिता ॥
वाराही महिषस्था तु मदिरादण्डधारिणी ।
खड्गखेटकसंयुक्ता अथवाऽपि चतुर्भुजा ॥
सहस्राक्षा गजारूढा हेमाभा वज्रधारिणी ।
इन्द्राणी सर्वसिद्धार्था सर्वाभरणभूषिता ॥
गर्ताक्षी क्षीणदेहा तु क्षामकुक्षिभयंकरी ।
विवृतास्या च दंष्ट्रोग्रा शिवे वा कौशिके स्थिता ॥
लेलिहाना विमुक्ताक्षी ज्वलत्केशाऽहि-मण्डिता ।
द्वीपिचर्माम्बरा क्रुद्धा चामुण्डा मुण्डमालिनी ॥
जटिला वर्तुला त्र्यक्षा चतुर्बाहुषु बिभ्रती ।
कपालकर्तरी याम्ये पाशं शूलं च वामतः ॥

## सिद्धार्थपृच्छायाम्

पद्मादिमातृस्वरूपाणि

[२]चन्द्रार्धनवचक्षुर्भ्यां भास्करेण क्रमेण च ।
विद्योतन्ते करा यस्याः पद्मा सा च प्रकीर्तिता ॥

(१) चदा. ३२८–३२९.

(२) चश्रा. १५४० ; श्राप्र. २९४ क्रमेण ( विषयेण ?).

[१]कीरकं व्यजनीं चैव व्यजनं समिधं तथा ।
या बिभर्ति कराग्रैः सा शचीनाम्ना प्रकीर्तिता ॥
[२]धत्ते या समिधं हस्तैर्व्यजनीकीरकावपि ।
क्रमतस्तालवृन्तं च सा च मेधाऽभिधीयते ॥
[३]अक्षसूत्रं स्रुवं चैव शक्तिकां च कमण्डलुम् ।
कलयन्ति करा यस्याः सावित्री सा प्रकीर्तिता ॥
कार्मुकं चार्घ्यपात्रं च योगमुद्रां कृपाणिकाम् ।
पाणिभिर्या क्रमाद्धत्ते सा दुर्गा परिगीयते ॥
[४]योगमुद्रां च चापं च क्रमेणैवार्घभाजनम् ।
कृपाणीं चैव या धत्ते सा चामुण्डा प्रकीर्तिता ॥
[५]या कपालं च कोशं च पीयूषं पाशमेव च ।
आबिभर्ति कराम्भोजैर्विजया सा प्रकीर्तिता ॥
[६]क्रमात्कोशकपाले च पीयषं च सपाशकम् ।
आश्रित्य यत्कराग्राणि विजयन्ते जया च सा ॥

## तत्त्वसागरसंहितायाम्

मातृस्वरूपम्

[७]दर्पणं पङ्कजं पद्मं पुष्टिकां दधतीं स्मरेत् ।
पुष्टिं लक्ष्मीं सितां सौम्यां पङ्कजासन-संस्थिताम् ॥

(१) चश्रा. १५४० कीरकं व्यजनीं ( कीरकव्यजिनी ) ; श्राप्र. २९४ कराग्रैः ( कराग्रे ).

(२) चश्रा. १५४० व्यजनी ( रजनी ) ; श्राप्र. २९४.

(३) चश्रा. १५४०–१५४१ ; श्राप्र. २९४ चार्घ्यं (चार्धं).

(४) चश्रा. १५४१ ; श्राप्र. २९४.

(५) चश्रा. १५४१ आबिभर्ति ( या बिभर्ति ) ; श्राप्र. २९४.

(६) चश्रा. १५४१ ; श्राप्र. २९४.

(७) चश्रा. १५४१ ; श्राप्र. २९५ पुष्टिकां ( पुष्टिकं ) पुष्टिं ( पुष्टीं ) तथाऽऽदर्शं ( तथा दर्शं ) सा वै ( सा या ).

वज्रं पद्मं तथाऽऽदर्शं पीयूषं दधतीं स्मरेत् ।
सा वै तुष्टिर्महालक्ष्मीः स्थिता वीरासनोपरि ॥

## चूडारत्ने

देशान्तरे प्रधानानुष्ठानेऽपि मातृकादिपूजनस्य स्वगृहेऽनुष्ठानम्

[1]देशान्तरे विवाहश्चेन्मध्येऽद्रिर्वा महानदी ।
गव्यूतित्रयपर्यन्तं स्वगृहे देवतार्चनम् ॥

(१) संग. २२५.

## रेणुकारिकाः

मातृकापूजनस्य कर्मादौ कर्तव्यता, मातृपीठानि, मातृगणना

[1]कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥
प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु ।
अथवाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥
गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश ॥

(१) रेका. ९७-१०० पृ. ५५.

# वसोर्धारा आयुष्यजपश्च

## महाभारतम्

वसोर्धाराया वसूद्देश्यकत्वम्

[1]एकं त्वनुग्रहं तुभ्यं दद्मो वै नृपसत्तम ॥
[2]यावत्त्वं शापदोषेण कालमाप्स्यसेऽनघ ।
भूमेर्विवरगो भूत्वा तावन्तं कालमाप्स्यसि ।
यज्ञेषु सुहुतां विप्रैर्वसोर्धारां महात्मभिः ॥
[3]प्राप्स्यसेऽस्मदनुध्यानान्मा च त्वां ग्लानि-
रास्पृशेत् ।
न क्षुत्पिपासे राजेन्द्र भूमेश्छिद्रे भविष्यतः ॥
[4]वसोर्धारानुपीतत्वात्तेजसाऽऽप्यायितेन च ।
स देवोऽस्मद्वरात्प्रीतो ब्रह्मलोकं हि नेष्यति ॥

विप्रैः सह यज्ञेषु जुह्वतां यजमानानां संबन्धिनीं वसोः घृतस्य धारामित्यर्थः । स देवो ब्रह्मा । श्राकौ. ५०५

## कात्यायनः

घृतधाराणां संख्या आयामश्च

[5]कुड्यलग्नां वसोर्धारां सप्तधारां घृतेन तु ।
कारयेत् पञ्चधारां वा नातिनीचां न चोच्छ्रि-
ताम् ॥

(१) कारयेदिति स्वार्थे णिच् । स्वकर्तृत्वानियमार्थो वा । नातिनीचां न चोच्छ्रितामिति मातृसंमितामेव, न तासामधः ऊर्ध्वं वाऽधिकामित्यर्थः ।

श्राका. ५१३

(२) तदनन्तरं च, भित्तिसंसक्तां घृतेन सप्तधाराम्, बहुघृतासंभवे पञ्चधाराम्, वसोश्चेदिराजस्य तदुद्देशप्रवृत्तत्वेन संबन्धिनीम्, नातिदीर्घां नातिह्रस्वां वा कुर्यात् । वसोश्च सर्वोत्सवप्रवर्तकत्वेन मङ्गलहेतुत्वात् विवाहपुत्रजन्मादिमङ्गले पूजा युक्तेति । वसोः अग्नेर्वा ।

प्रकाश.

---

(१) भा. १२।३२४।२२ ; श्राकौ. ५०४ दद्मो वै नृपसत्तम (ददाम नृपनन्दन) ; श्रासौ. १२३ दद्मो वै (ददानि).

(२) भा. १२।३२४।२३ ; श्राकौ. ५०४ यावत्त्वं (यावन्तं) माप्स्यसि (मापदि) सुहुतां (जुह्वतां) ; श्रासौ. १२३ श्राकौवत्.

(३) भा. १२।३२४।२४ ; श्राकौ. ५०४ प्राप्स्यसे (पास्यसे) रास्पृशेत् (रस्पृशत्) ; श्रासौ. १२३ श्राकौवत्.

(४) भा. १२।३२४।२५ ; श्राकौ. ५०५ रानुपी (राभिपी) रात्प्रीतो (रप्रीतो) हि नेष्यति (नयिष्यति) ; श्रासौ. १२३ श्राकौवत्.

(५) कास्मृ. १।१५ ; अप. १।२४९ पृ. ५१७ (कुड्यलग्ना वसोर्धाराः पञ्च धारा घृतेन तु । कारयेत्सप्त धारा वा नातिनीचा न चोच्छ्रिताः ॥) ; श्राक. २७२ ; स्मृच. ५०२ अपवत् ; चश्रा. १५३९ अपवत्, षट्त्रिंशन्मते ; स्मृसा. १०७ ; मपा. ६३७ सप्तधारां (सप्तधारा) नाति (नाभि) ; प्रपा. १४ (गौर्याद्यासु विलेख्यासु पञ्चधारा घृतेन तु । कारयेत् सप्तधारा वा नातिनीचा न चोच्छ्रिताः ॥) ; मर. १७२ ; श्राका. ५१३ ; गभा. ३१ (कुड्यलग्ना वसोर्धाराः पञ्च धारा घृतेन तु । कारयेत् सप्त वा धारा नातिनीचा न चोच्छ्रिताः ॥) ; निप्र. २०३ सप्तधारां (सप्तवारान्) पञ्चधारां (पञ्चवारान्) ; श्राकौ. ५०२ निप्रवत् ; श्रात. ३०९ निप्रवत् ; प्रर. १३ गभावत् ; श्रासौ. १२२ निप्रवत् ; श्राप्र. २९३ गभावत्, षट्त्रिंशन्मते ; संम. ४ (कुड्यलग्ना वसोर्धाराः सप्तवारं घृतेन तु । कारयेत् पञ्चधारा वा नातिनीचा न चोच्छ्रिताः ॥) ; श्राम. ८८ सप्तधारां (सप्तवारं) पञ्चधारां (पञ्चवारान्) नातिनीचां (नातिलम्बां) ; शाम. ३ संमवत् ; सिन्धु. १७३४ ; विपा. २९ (भागः २) (कुड्यलग्ना वसोर्धाराः पञ्च वाऽथ घृतेन तु । कारयेत् सप्तधारा वा नातिनीचा न चोच्छ्रिताः ॥) ; संकौ. २५ (=) अपवत् ; प्रका. ३१ अपवत् ; बाल. १।२५० पृ. ५६८ (कुड्यलग्ना वसोर्धाराः पञ्चधारा घृतेन तु । प्रकुर्यात् सप्त धारा वा नातिनीचा न चोच्छ्रिताः ॥) ; संग. ७५ (कुड्यलग्ना वसोर्धाराः पञ्च

( ३ ) कुड्यं भित्तिः । वसुः अत्रोद्देश्यश्चेदिराजः, तस्य संबन्धिनीं धारां घृतेन दद्यादित्यर्थः । महाभारते मोक्षधर्मे वसुं प्रति देववाक्यम्– 'एकं त्वनुग्रहं ... ब्रह्मलोकं नयिष्यति ॥' । विप्रैः सह यज्ञेषु जुह्वतां यजमानानां संबन्धिनीं वसोर्घृतस्य धारामित्यर्थः । स देवो ब्रह्मा । पञ्चवारानिति बहुघृतासंभवे इति केचित् । उद्देश्यगतप्रीत्यतिशयद्वारा सप्तवारेषु फलातिशय इत्यभियुक्ताः । फलं चास्य वृद्धिश्राद्धवत् प्रकृतकर्मणोऽभ्युदय एव । मन्त्रस्तु– 'वसोः पवित्रमसि' इत्यादिर्वसुधाराप्रकाशको यजुर्वेदोक्त एव सर्वशाखिनाम्, 'परोक्तमविरोधि च' इति वचनात् । अस्य सकृदेव पाठः, न त्वावृत्तिः, प्रमाणाभावात् (¶मन्त्रान्तरे प्रमाणाभावात्)। एतच्चोपविश्यैव कर्तव्यम्, 'आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः । तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥' इति परिशिष्टवचनात् ।

श्राकौ. ५०४–५०५

( ४ ) वसोः चेदिराजस्य । वसोर्धारामिति । 'वसोर्धाराधिपातेन' इत्यादिदर्शनात् अलुक्समासेनैव प्रयोगः कर्तव्यः । श्रात. ३११

( ५ ) वसोर्धारासु च ब्राह्मी–माहेश्वरी–कौमारी–वैष्णवी–वाराही–न्द्राणी–चामुण्डाख्या देवताः पूजयन्ति शिष्टाः । * श्राम. ८८

( ६ ) इयं च वसोर्धारा तच्छाखीयानां नियता, अन्येषां त्वनियता, 'बह्वल्पं वा स्वगृह्योक्तम्' इत्युक्तेः । करणे त्वभ्युदयः । सिन्धु. १७३४–१७३५

( ७ ) वसोर्धारामातरः कुड्ये समालिख्य पूज्या इत्युक्तं तत्रैव– कुड्यलग्ना इति । इदं कात्यायनपरिशिष्टोक्तं कातीयानां काण्वमाध्यंदिनानामेवेति वेदितव्यम् । विपा. २८–२९ ( भागः २ )

---

¶ कंसस्थितो ग्रन्थः 'इति वचनात्' इत्यस्यानन्तरं भवितुमर्हति ।

* संम. श्रामगतम् ।

धारा घृतेन तु । कारयेत् सप्त धाराश्च नातिनीचा न चोच्छ्रिताः ॥ ) ; संदी. ५७ अपवत् .

( ८ ) छन्दोगपरिशिष्टे मातृपूजामुक्त्वा– 'कुड्यलग्ना वसोर्धाराः ... न चोच्छ्रिताः' इति । कुड्यादौ 'वसोः पवित्रमसि' इति । 'घृतधारा उदक्संस्था कुर्याद् गुडघृतेन च ।' इति सगुडेन घृतेन वसोर्धाराः कार्या इत्युक्तं रुद्रकल्पद्रुमे मदनरत्ने । ततः 'वसोर्धारादेवताभ्यो नमः' इति पञ्चोपचारैः पूजां कुर्यात् । वसोर्धाराकरणं च कातीयानामेव, नान्येषाम् । वसोर्धाराऽपि स्वतन्त्रैव । नापि सा मातृसांप्रदायिका, मन्त्रलिङ्गादेश्चोदकस्याभावात्, वसोर्धारेति समाख्यानात् । एषा वसोर्धारा मातृसंनिहितकुड्यादिलग्ना विवक्षिता । पाञ्चालदेशीयास्तु मातृपट्टं कुड्यलग्नं विधाय तस्योपरि वसोर्धारां पातयन्ति, तत्र प्रमाणमन्वेषणीयम् । अन्येऽपि देशाचारा बहवो दृश्यन्ते– गोमयमातृकाः, तृणतोरणमातृकाः, हरिद्रामातृकाः, ब्राह्म्यादिमातृकादयोऽश्रुतसंख्याः । संग. ७४–७५

आयुष्यसूक्तजपः

**[1]आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ॥**

( १ ) आयुष्याणि आनोभद्रीयादीनि ।

* अप. १।२४९ पृ. ५१७

( २ ) आयुष्याणि आयुर्वृद्धिकरसूक्तानि ।

श्राक. २७२

---

* स्मृच., मपा., गभा., प्रर.; मुक्ता., सिन्धु. अपवत् ।

( १ ) कास्मृ. १।१७ ; अप. १।२४९ पृ. ५१७ ; श्राक. २७२ ; स्मृच. ५०३ ; चश्रा. १०६, १५३९ षट्त्रिंशन्मते ; मपा. ६३७ ; प्रपा. १४ जप्त्वा तत्र (जपित्वाऽत्र) ; गभा. ३१ जप्त्वा तत्र (जपेदत्र) ; निप्र. २०३ ; श्राकौ. ५०२ ; श्रात. ३०९ आयुष्याणि च (आयुष्मानिति) ; प्रर. १३ गभावत् ; श्रासौ. १२२ ; श्राप्र. २९३ षट्त्रिंशन्मते ; मुक्ता. ७५३ ; संम. ४ ; श्राम. ८८ ; शाम. ३ ; सिन्धु. १७३४ ; विपा. २९ (भागः २) जप्त्वा तत्र (जपित्वाऽथ) ; संकौ. २५ (=) ; आन. १४४ शान्त्यर्थं (सूक्तानि) ; प्रका. ३१ ; संग. ८१.

(३) आयुष्याणि आनोभद्रीयादीन्याशीःप्रधानानि सूक्तानि, तथा तथाविधमन्त्राधाराणि सामानि च। तत्रेति, यत्र मातृपूजा वसोर्धारा च कृता।

‡ चश्रा. १५३९

(४) आयुषे हितानि अमङ्गलनाशाय जप्त्वा। तत्र कर्मादौ। प्रकाश.

(५) आयुष्याणि आयुषे हितानि 'आयुषे मे पवस्व' इत्यादीनि। शान्त्यर्थम् अभ्युदयस्यानिष्टनिवृत्त्यर्थम्। श्रात. ३११

(६) आयुष्याणि आनोभद्रादीनि सूक्तानि। तत्रेति, यत्र मातृपूजायां वसोर्धारा कृता कातीयगृह्याद्यनुसारेण तत्रायमायुष्यसूक्तजपः कार्यः। अनेनैव वसोर्धाराया अनित्यत्वं ज्ञापितम्। संकौ. २५

‡ श्राप्र. चश्रागतम्।

## अनिर्दिष्टकर्तृकवचनम्

घृतधाराणां मातृरूपता नामानि च

[१]श्रीश्च लक्ष्मीर्धृतिर्मेधा स्वाहा प्रज्ञा सरस्वती।
माङ्गल्येषु तु पूज्यन्ते सप्तैता घृतमातरः॥

## मदनरत्ने

धाराणामुदक्संस्थता सगुडघृतसाध्यता च

[२]घृतधारा उदक्संस्थाः कुर्याद्गुडघृतेन च॥

## रेणुकारिकाः

घृतधाराणां संख्या आयामश्च, आयुष्यसूक्तजपः

[३]कुड्यलग्ना वसोर्धाराः सप्त धारा घृतेन तु।
कारयेत् पञ्च धारा वा नातिनीचा न चोच्छ्रिताः॥
आयुष्याणि च शान्त्यर्थं जपेदभ्युदयं ततः॥

(१) संग. १०१. (२) संग. ७५.
(३) रेका. १०२-१०३ पृ. ५५.

# नान्दीश्राद्धम्

## बौधायनश्रौतसूत्रम्

जीवत्पितृककर्तृकश्राद्धे देवतानिर्णयः

$[1]'कथमु खलु जीवपितुः पिण्डदानं भवतीति ॥

येभ्य एव पिता ददाति तेभ्यः पुत्रो ददाति ॥

द्वाभ्यां जीवपिता ददाति ॥

एकस्मै जीवपितामहो ददाति ॥

न जीवन्तमतिदद्यादित्येके ॥

पुत्रिकापुत्रकर्तृकश्राद्धे देवताः तदभिलापप्रकारश्च

कथमु खलु पुत्रिकापुत्रस्य पिण्डदानं भवतीति ॥

'एतत्तेऽमुष्यै तत मम पितामह ये च त्वामनु, एतत्तेऽमुष्यै पितामह मम प्रपितामह ये च त्वामनु, एतत्तेऽमुष्यै प्रपितामह मम प्रपितामह ये च त्वामनु' इति ॥

प्रविदानकल्पेन वा दद्यात्– 'स्वधा पितृभ्यः पृथिवीषद्भ्यः, स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः, स्वधा पितृभ्यो दिविषद्भ्यः' इति ॥

पित्रादिनामाज्ञाने देवताभिलापप्रकारः

पितुश्चेत् पितामहस्य प्रपितामहस्येति नामानि न जानीयात् कथं तत्र पिण्डदानं भवतीति ॥

प्रविदानकल्पेन वा दद्यात् ॥

अपि वा 'एतत्ते तत ये च त्वामनु, एतत्ते पितामह ये च त्वामनु, एतत्ते प्रपितामह ये च त्वामनु' इति ॥

---

$ निबन्धकारैर्नान्दीश्राद्धप्रकरणे देवतानिर्णये कानिचित् पिण्डपितृयज्ञप्रकरणपठितानि श्रौतसूत्रीयवचनानि प्रमाणीकृतानि । आश्वलायनेन च गृह्यसूत्रे 'पिण्डैर्व्याख्यातम्' (१।७।४) इति श्रौतसूत्रीयदेवतानिर्णयः प्रकृतिभूतपार्वणश्राद्धेऽतिदिष्टः । तदनुरोधेनास्माभिः सर्वेभ्यः श्रौतसूत्रेभ्यस्तादृशानि वचनानि समुद्धृत्यात्र संगृहीतानि ।

(१) वैदिकसंशोधनमण्डलप्रकाशितश्रौतकोशात् (भागः १ पृ. ३१०) अयं भागः संगृहीतः ।

## आश्वलायनश्रौतसूत्रम्

त्रयाणां मध्ये प्रेतेभ्यः पिण्डदानम्, जीवतां प्रत्यक्षमर्चनमिति मतम्

[1]'तस्मै तस्मै य एषां प्रेताः स्युरिति गाणगारिः । प्रत्यक्षमितरानर्चयेत्तदर्थत्वात् ॥

त्रयाणां मध्ये प्रेतानां पिण्डदानम्, जीवानां प्रत्यक्षार्चनमिति गाणगारेर्मतम्, पितृप्रीत्यर्थत्वात् कर्मण इति । गानार्थः.

मृतजीवत्साधारणं पिण्डदानमिति मतान्तरम्

सर्वेभ्य एव निपृणीयादिति तौल्वलिः, क्रियागुणत्वात् ॥

पित्रादिभ्यस्त्रिभ्यः प्रेतेभ्यो जीवद्भ्यश्च सर्वेभ्यो निपरणं तौल्वलिर्मन्यते । क्रियायामुद्देशकारकत्वेन च गुणभूताः पितरः, न तेषां प्रीतिः शास्त्रतो लोकतोऽवगम्यते इति । गानार्थः.

जीवदूर्ध्वेभ्यस्त्रिभ्यः प्रेतेभ्यः पिण्डदानमित्यपरं मतम्

अपि जीवान्त आ त्रिभ्यः प्रेतेभ्य एव निपृणीयादिति गौतमः । क्रिया ह्यर्थकारिता ॥

आदिमध्यान्तशब्दैः पितृपितामहप्रपितामहाः उच्यन्ते । जीवः अन्तः यस्य स जीवान्तः । अपिशब्देन जीवादिर्जीवमध्य इत्यपि लभ्यते, जीवसर्व इति च । अत्र त्रयाणामेकस्मिन् द्वयोः सर्वेषु वा जीवत्सु वा यावदर्थं परान् पितॄन् गृहीत्वा प्रेतेभ्यस्त्रिभ्यो दद्यात् इति गौतमो मन्यते । क्रिया ह्यर्थकारिता । मरणपदार्थप्रवृत्ता यस्मात् क्रियेत्यर्थः । गानार्थः.

---

(१) आश्रौ. १।२।६ ; श्राक. २४० (जुहुयाज्जीवेभ्यः । सर्वहुतं सर्वजीविनः । नामान्यविद्वांस्ततपितामहप्रपितामहेति) एतावदेव ; संकौ. २८ (प्रेतेभ्य एव निपृणीयात्) एतावदेव ; बाल. १।२५० पृ. ५७३ अनुवादरूपेण.

उत्तमस्यैव, मध्यमोत्तमयोरेव, त्रयाणां च जीवने त्रयाणां मरणे च जीवदुद्देशेन पिण्डहोमः मृतोद्देशेन च पिण्डदानमिति सिद्धान्तः

**उपायविशेषो जीवमृतानाम् ॥**

पित्रादीनां जीवानां मृतानां च पिण्डदाने उपायविशेषो वक्ष्यते इत्यर्थः। गानावृ.

**न परेभ्योऽनधिकारात्। न प्रत्यक्षम्। न जीवेभ्यो निपृणीयात् ॥**

उपन्यस्तान् पक्षान् दूषयितुमाह— नेति। गौतमगाणगारितौल्वलीनां क्रमेण दूषणानि। गानावृ.

**न जीवान्तर्हितेभ्यः ॥**

जीवव्यवहितेभ्यो न निपृणीयादित्यर्थः। सर्वपक्षव्यापीदं दूषणम्। सर्वत्रानधिकारादित्ययमेव हेतुः। अनधिकारात् अयोग्यत्वादित्यर्थः। क्वचिद्विध्यभावात् क्वचिन्निषेधादयोग्यत्वमवगम्यते। गानावृ.

**जुहुयाज्जीवेभ्यः ॥**

अयमुपायविशेष उच्यते— जुहुयादिति। जीवेभ्यो जुहुयात्, प्रेतेभ्यो निपृणीयादित्यर्थः। 'न जीवन्तमतीत्य दद्यात्' इति अत्रापि निषेधोऽस्ति। तेन जीवपितुः जीवपितामहस्य जीवोभयस्य वाऽयमपि पक्षो नास्ति। तत्र होमान्तमनारम्भो वा। $ गानावृ.

**सर्वहुतं सर्वजीविनः ॥**

अथ सर्वेषु जीवत्सु कथमित्याह— सर्वहुतमिति। सर्वे पिण्डा होतव्या इत्यर्थः। पिण्डहोमो निपरणमन्त्रेण स्वाहाकारान्तेन कर्तव्यः। अत्र दूषणीयपक्षाणामुपन्यासे प्रयोजनं सपिण्डीकरणे पितामहे जीवति पितरि मृते संवत्सरादिषु कालेषु तस्याऽऽवश्यकर्तव्यात् तत्रैषां पक्षाणामुपयोग इत्येवमर्थम्। एवमादीन्यन्यान्यपि प्रयोजनानि चिन्त्यानि। $ गानावृ.

पित्रादिनामाज्ञाने ततादिशब्दप्रयोगः

**नामान्यविद्वांस्ततपितामहप्रपितामहेति ॥**

पित्रादीनां नामाज्ञाने ततादयः शब्दाः नामस्थाने प्रयोक्तव्याः। गानावृ.

$ श्राक. गानावृवत्।

## शाङ्खायनश्रौतसूत्रम्

पितृद्वित्वे पितृपिण्डद्वित्वम्

**[1]उभावेकस्मिन् पितृभेदे ॥**

उभौ पिण्डौ निदध्यादेकस्मिन् स्थाने। पितृभेदे पितृद्वित्वे। पुत्रिकापुत्रादिविषयं च पितृद्वित्वम्। तथा मनुनोक्तम् — 'दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरन्। स एव दद्यात् तत्पिण्डं पित्रे मातामहाय च ॥' (मस्मृ. ९।१३२) इति। एवं द्विगोत्रत्वे पितामहप्रपितामहस्थानयोरपि द्वौ द्वौ पिण्डौ निदध्यात्। अवनेजनमप्येवं तादर्थ्यात्। आभा.

जीवत्पितृकस्यानधिकारः

**न जीवपितुरस्ति ॥**

जीवपितृकस्यैतत्कर्म न भवति, 'प्रेतेभ्यो ददाति' इति तन्त्रान्तरदर्शनात् वाक्यशेषाच्च। 'अथो परामु वै परावतं पितरो गताः' (शाब्रा. ५।७) इति, "इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम्। शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥' इति जीवेभ्यश्चैवैतां पितृभ्यश्च मर्यादां करोत्यसंभेदाय। तस्मादु हैतज्जीवाश्च पितरश्च न दृश्यन्ते" (शब्रा. १३।८।४।१२) इति लिङ्गात्। आभा.

जीवद्व्यवहितस्य श्राद्धदेवतात्वाभावः

**न जीवान्तर्हिताय ॥**

जीवता अन्तर्हितः जीवान्तर्हितः। कोऽसौ? पितामहादिः पित्रादौ जीवति। तस्मै अपि पिण्डदानं न भवति। कुतः? 'न जीवन्तमतिददाति' इति श्रुतेः। आभा.

जीवत्पितृककर्तृकश्राद्धे पितुः पित्रादीनां देवतात्वम्, होमान्तत्वपक्षश्च

**येभ्यो वा पिता तेभ्यः पुत्रः ॥**

जीवपितृकस्य पक्षान्तरम्। येभ्यः पिता पिण्डान् ददाति तेभ्यः पुत्रोऽपि दद्यात्। तथा च श्रुत्यन्तरम्—

(१) शाश्रौ. ४।४।६–१०; श्राक. २४१ वेकस्मिन् + (पिण्डे) जीवपितु (जीवपितु).

'पितापुत्रौ चेदाहिताग्नी स्यातां येभ्यः पिता दद्यात्तेभ्यः पुत्रो ददाति' इति । आभा.

**होमान्तं वा ॥**

न जीवपितुरस्तीत्यस्यैतत् पक्षान्तरम् । होमान्तं वा पिण्डपितृयज्ञं भवति । आभा.

## आपस्तम्बश्रौतसूत्रम्

पित्रादिनामोच्चारणस्याऽऽवश्यकत्वम्, नामाज्ञाने पिण्डदानप्रकारः, पितृद्वित्वे एकस्मिन्पिण्डे द्वयोरुद्देशः

**[1]नानामगृहीतं गच्छति । यदि बन्धू न विद्यात् 'स्वधा पितृभ्यः पृथिविषद्भ्यः' इति प्रथमं पिण्डं दद्यात् । 'स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः' इति द्वितीयम् । 'स्वधा पितृभ्यो दिविषद्भ्यः' इति तृतीयम् । यदि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौद्वावुपलक्षयेत् ॥**

नानामगृहीतं गच्छतीति । पित्रादिनामग्रहणरहितपिण्डदाने तत्पिण्डदानं पितॄन्न प्राप्नोतीति । रामा.

जीवत्पितृकस्य होमान्तकरणपक्षः

**यदि जीवपिता दद्यादा होमात्कृत्वा विरमेत् ॥**

## सत्याषाढश्रौतसूत्रम्

पित्रादिनामाज्ञाने पिण्डदानप्रकारः

**[2]अथ यदि नामधेयानि न विन्द्यात् 'स्वधा पितृभ्यः पृथिविषद्भ्यः' इति पित्रे पिण्डं दद्यात् । 'स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः' इति पितामहाय । 'स्वधा पितृभ्यो दिविषद्भ्यः' इति प्रपितामहाय ॥**

पित्रादिनामाज्ञाने त्वेतैरेव मन्त्रैर्यथापूर्वं दद्यात् । पित्रोर्मरणे स्वयं बाल एव, पश्चादन्येनोपनयनादिना संस्कृतस्तत्र पित्रादिनामधेयानि नाज्ञासीदिति तद्वाल्ये मृतपित्रादिविषयं प्रवसति यजमानेऽध्वर्युविषयं च । पृथिविषद्भ्य इति पृथिवीशब्दे ह्रस्वत्वं छान्दसम् । वैज.

(१) आपश्रौ. १।९।१२. (२) सश्रौ. २।७.

पितृद्वित्वे एकैकस्मिन् पिण्डे द्वयोर्द्वयोरुद्देशः

**यदि द्विपितैकैकस्मिन् पिण्डे द्वौद्वावुपलक्षयेत् ॥**

दत्तक्रीतादिर्द्विपिता, स एकस्मिन् पिण्डे द्वौ पितरौ, पितामहपिण्डे द्वौ पितामहौ, प्रपितामहपिण्डे द्वौ प्रपितामहावुच्चारयेदूहेनेत्यर्थः । एतद्वां ततौ विष्णुकृष्णशर्माणौ ये च त्वामनु । एवमुत्तरत्रापि । अत्रापि नामाज्ञाने 'स्वधा पितृभ्यः' इत्यादिभिरेव दानम् । वैज.

जीवद्व्यवहितस्यापि श्राद्धदेवतात्वम्

**जीवपिता पितामहाय प्रपितामहायेति दद्यात् ॥**

जीवः पिता यस्येति तथा स द्वौ पिण्डौ दद्यात् । इतिकरणः प्रकारवाची । तेन जीवपितामहः पित्रे प्रपितामहाय, जीवप्रपितामहः इतरयोर्यौ जीवतस्तदन्यस्मै, सर्वेषु न कस्मा अपीतिकरणार्थः । वैज.

जीवद्व्यवहितस्य श्राद्धदेवतात्वाभावः

**न जीवन्तमति ददातीत्येकेषाम् ॥**

उभयोर्मध्ये यो जीवति तमतिक्रम्य न ददातीत्यर्थः । प्रपितामहे जीवति पूर्वाभ्याम्, द्वयोर्जीवतोः पित्रे दातव्यमेव, अतिक्रमणमात्रप्रतिषेधात्पूर्वं यस्मै देयस्तस्मिन् जीवति परस्मै दीयते, तत्रैव प्रतिषेधः पूर्वसूत्रप्राप्तस्य । वैज.

जीवत्पितृकस्य होमान्तकर्तव्यता

**होमान्तमेव कुर्यात् ॥**

तत्र यावति कर्मण्यनधिकारस्तावदेव त्याज्यम्, न पिण्डपितृयज्ञ एव, न ददातीति दानमात्रप्रतिषेधात् कार्यमेवेत्यभिप्रायेणाऽऽह– होमान्तमिति । मेक्षणप्रहरणान्तमित्यर्थः । वैज.

**जीवपितुः पिण्डदानप्रभृत्युत्तरं लुप्यते ॥**

किमर्थमिदमुच्यते, गतार्थत्वात् । उच्यते– द्विपितुरेकस्मिन् जीवति तत्प्रभृति तत्प्रमुखं द्वयं लुप्यते, न त्वन्यदपीत्येवमर्थमिदमिति ब्रूमः । वैज.

## मानवश्रौतसूत्रम्

जीवत्पित्रादेः पिण्डदाननिषेधः, जीवद्व्यवहितस्य श्राद्धदेवतात्वाभावः, पितुः पित्रादीनां वा देवतात्वम्

[1]लुप्यते जीवत्पितुः पिण्डनिधानं जीवत्पितामहस्य वा । न जीवन्तमतिदद्यात् । यदि दद्याद्येभ्य एव पिता दद्यात्तेभ्यो दद्यात् ॥

पित्रादिनामाज्ञाने पिण्डदानप्रकारः

यदि बन्धुनाम न विदितम् 'स्वधा पितृभ्यः पृथिवीषद्भ्यः' इति प्रथमं पिण्डं निदध्यात् । 'स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः' इति द्वितीयम् । 'स्वधा पितृभ्यो दिविषद्भ्यः' इति तृतीयम् ॥

## भारद्वाजश्रौतसूत्रम्

द्विपितृकश्राद्धे पिण्डद्वयम्, एकैकस्मिन् पिण्डे द्वयोर्द्वयोरुद्देशो वा

[2]अथ यदि द्विपिता स्यात् प्रतिपूरुषं पिण्डान् दद्यात् ॥

अपि वैकैकस्मिन् पिण्डे द्वौद्वावुपलक्षयेत् ॥

जीवद्व्यवहितस्यापि देवतात्वम्, जीवद्व्यवहितस्य देवतात्वाभावः, होमान्तकर्तव्यता वेति पक्षत्रयम्

अथ यदि जीवपिता स्यात् पितामहाय प्रपितामहाय च दद्यात् ॥

न जीवन्तमतिददातीत्येकेषाम् ॥

होमान्तमेव कुर्वीत ॥

पित्रादिनामाज्ञाने पिण्डदानप्रकारः

[3]अथ यदि बन्धुनाम न विदितम् 'स्वधा पितृभ्यः पृथिवीषद्भ्यः' इति प्रथमं पिण्डं दद्यात् । 'स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः' इति द्वितीयम् । 'स्वधा पितृभ्यो दिविषद्भ्यः' इति तृतीयम् ॥

(१) माश्रौ. १।१।२।२१–२२.
(२) भाश्रौ. १।८।८–१२.
(३) भाश्रौ. १।९।१.

## कात्यायनश्रौतसूत्रम्

जीवत्पितृकस्यापि श्राद्धाधिकारः, जीवद्व्यवहितस्यापि देवतात्वम्

[1]प्रेतेभ्यो ददाति जीवपितृकोऽपि जीवान्तर्हितेऽपि ॥

(१) पिण्डपितृयज्ञस्याधिकारनिरूपणायाऽऽह– प्रेतेभ्य इति । दानं प्रवर्तत एव, पितृशब्दस्याविशेषविषयत्वात् । कर्क.

(२) जीवत्पितृकस्य त्रयः पक्षाः– जीवन्तं पितरमतिक्रम्य येभ्यः पिता दद्यात् तेभ्यो दद्यादित्येकः । होमान्तं 'सोमाय पितृमते' (आश्रौ. १।२।६) इत्यादि दक्षिणाग्नौ होममात्रमित्यपरः । 'अनारम्भो वा' अकरणमेव वा इति तृतीयः । 'न व्यवेते' इति न जीवता केनचिद्व्यवहिते देयमित्यर्थः ।

¶ श्राक. २४०

जीवत्पितृकस्य होमान्तकर्तव्यता, जीवद्व्यवहितस्य न देवतात्वम्

जीवत्पितृकस्य होमान्तम् ॥

कर्म स्यात् । कर्क.

(न) व्यवेते जातूकर्ण्यः ॥

कुतः ? यस्मान्न जीवेन व्यवेते दानं मेने जातूकर्ण्यः । कर्क.

न जीवन्तमतीत्य ददातीति ॥

किमिति न व्यवेते– नेति । शाखान्तरेषु श्रवणात् । अतो होमान्तं कर्म स्यात् । कर्क.

जीवत्पितृकस्य श्राद्धानधिकारः

अनारम्भ एव (वा) ॥

यद्येवमनारम्भ एव श्रेयान् । कुतः ? दानस्य प्रधानभूतत्वात् । न च प्रधानाभावेऽङ्गानां प्रवृत्तिरस्ति । अतोऽनारम्भ एवेत्यवधार्यते । कर्क.

¶ इदं व्याख्यानं सर्वेषां सूत्राणाम् ।

(१) काश्रौ. ४।२३–२७ ; श्राक. २४० जीवपितृको (जीवत्पितृको) अनारम्भ एव (वा) (अनारम्भो वा).

## बौधायनगृह्यसूत्रम्

नान्दीश्राद्धस्य पूर्वेद्युः कर्तव्यता निमित्तानि प्रयोगः परिभाषा च

[1]पूर्वेद्युरेवर्द्धिपूर्तेषु युग्मान्ब्राह्मणान्भोजयेत् ॥

प्रदक्षिणमुपचारः ॥

पुष्पफलाक्षतमिश्रैर्यवैः तिलार्थमुपलिप्य, दध्योदनं संप्रकीर्य, दक्षिणं जानुं भूमौ निधाय, सव्यमुद्धृत्य 'इडा देवहूः' इति जपित्वा, 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति वाचयित्वा ... ॥

[2]अथाऽऽभ्युदयिकेषु प्रदक्षिणमुपचारः। यज्ञोपवीतम्। प्रागग्रान् दर्भान्। युग्मान् ब्राह्मणान्। यवैस्तिलार्थः। पृषदाज्यं हविः ॥

सोपयामेन पात्रेण नान्दीमुखाः पितरः प्रीयन्तामित्यपां प्रतिग्रहणं विसर्जनं च ॥

नान्दीमुखेभ्यः पितृभ्यः स्वाहेत्यग्नौकरणमनुदेशनम् ॥

आशयेषु परिसमूढेषु प्रागग्रेषु दर्भेषु पृषदाज्येनानुप्रदानं सर्वं द्विर्द्विरिति ॥

## बौधायनीयगृह्यपरिभाषासूत्रम्

नान्दीश्राद्धस्य पूर्वेद्युः कर्तव्यता निमित्तानि प्रयोगश्च

[3]अथाप आचम्य बाह्याभ्यन्तरतः पूतो मेध्यो यज्ञियो भूत्वा वेदकर्माणि प्रयोक्ष्यन् पूर्वेद्युरेव युग्मान् ब्राह्मणान् भोजयेदिति। नान्दीमुखा एवैते उक्ता भवन्ति ॥

(१) बौगृ. १।१।२२–२४.

(२) बौगृ. ३।१२।२–५.

(३) बौगृप. १।३।९ एवैते (एवैता); चका. ४५९ (वेदकर्मणि प्रयोगात्पूर्वेद्युरेव युग्मान् ब्राह्मणान् भोजयेदिति, नान्दीमुखा एवमुक्ता भवन्ति); चश्रा. १९२ (अथाप आचम्य... भूत्वा०); श्राप्र. २९१ प्रयोक्ष्यन् (प्रयोज्यन्) एवैते (नवैता) शेषं चश्रावत्.

[1]तेषु भुक्तवत्सु स्वधायै स्थाने 'मधु मनिष्ये मधु जनिष्ये' इत्येतद्यजुर्जपित्वा 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यपो निनयति, स्वधैवैषोक्ता भवति ॥

[2]नैकाह्ना पित्र्यं दैवं च कुर्वन्ति। 'यस्यैकाह्ना पित्र्यं दैवं च कुर्वन्ति प्रजा हास्य प्रमायुका भवति। तस्मात्पितृभ्यः पूर्वेद्युः क्रियते। यत् पितृभ्यः पूर्वेद्युः करोति पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते' इति ब्राह्मणम् ॥

अत्र ब्राह्मणवाक्येऽपि वृद्धिश्राद्धस्यास्य प्रजाः प्रमायुका अल्पकालजीवना भवन्तीति निन्दया एकाहेन कर्तव्यताया अप्रशस्तत्वाद्दिनद्वयकर्तव्यतायामतिप्राशस्त्यम्। महत्सु कर्मसु पूर्वेद्युरल्पेषु तदहरेव। तथा च गृह्यपरिशिष्टम्– 'महत्सु पूर्वेद्युस्तदहरल्पेषु' इति।

श्राप्र. २९१–२९२

## बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

नान्दीश्राद्धप्रयोगः

[3]अथातो नान्दीमुखं व्याख्यास्यामः। आदित एव द्वौ विप्रौ निमन्त्र्य, चतुरवरांश्च पित्रर्थान्,

(१) बौगृप. १।३।१०.

(२) बौगृप. १।३।११; चका. ४५९ नैकाह्ना (नैकाहेन) हास्य (अस्य) तस्मात् पितृभ्यः पूर्वेद्युः (तस्मात् पूर्वेद्युः पितृभ्यः); चश्रा. १९२ नैकाह्ना (नैकाहेन) हास्य (अस्य) भवति (भवन्ति) (क्रियते। यत् पितृभ्यः पूर्वेद्युः ०); श्राप्र. २९१ (नैकाहेनैव दैवं पित्र्यं च कुर्वीत यस्यैकाह्ना दैवं पित्र्यं च कुर्वीत प्रजा अस्य प्रमायुका भवन्ति तस्मात् पितृभ्यः पूर्वेभ्यः करोति पितृभ्य एव तद्यज्ञं निःक्रीय यजमानः प्रतनुत इति ब्राह्मणम्).

(३) बौगृशे. ४।१९।१; हिगृशे. १।३।६ (श्मश्रुकर्माभ्यञ्जनस्नानैः०) अथालङ्कृत्यैवमेव (अथालङ्कृत्यैतमेव); चश्रा. १५६१–१५६२ (व्याख्यास्यामः०)

अथ श्मश्रुकर्माभ्यञ्जनस्नानैर्यथोपपादं संपूज्य, अग्निमुपसमाधाय संपरिस्तीर्य, आज्यं विलाप्योत्पूय, दध्ना घृतेन संयुत्य, स्रुवं संमृज्य, देवार्थौ विप्रावुपवेश्य, अलङ्कृत्यानुदेश्य, द्विःपवित्र एव यवोदकं निधाय पुष्पफलाक्षतमिश्रम्, भोजनस्थानेष्वासनेषु यवान् सिकताश्च संप्रकीर्य, पित्रर्थानुपवेश्य, तेषां सपवित्रेषु पाणिषु 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यनेन मन्त्रेण पात्रान्तरेणोपहृत्य यवोदकं दत्त्वा द्विः, अथालङ्कृत्यैवमेव दत्त्वा, अग्नौकरणमनुज्ञाप्यालङ्कृत्य, पृषदाज्यात् स्रुवेणोपहत्य, 'नान्दीमुखेभ्यः पितृभ्यः स्वाहा' इत्येतावदग्नौ कृत्वा, अन्नमुपस्तीर्णाभिघारितं पात्रेषूद्धृत्य, पृषदाज्येन संसृज्य, दर्भेषु सादयित्वा, दर्भैः प्रतिच्छाद्य, 'नान्दीमुखार्थानां पितॄणां क्षेष्ठा अमुत्रामुष्मिन् लोके' इति मन्त्रमूह्याभिमृश्य, विप्रेभ्यो द्विरुपस्तीर्याभिमृष्टस्यान्नस्य द्विरवदाय द्विरभिघार्य यथावद्भोजयेत् ॥

[1]पितृसामान्यवाचिस्वधायुक्तानि ब्रह्माण्यभिश्राव्य, भुक्तवत्स्वाचान्तेषूपलिप्य, आशयेषु दध्योदनं संप्रकीर्य, संक्षालनेन प्रदक्षिणं द्विः परिषिच्य, पूर्ववद्यवोदकं दत्त्वा दक्षिणां प्रदाय, 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति वाचयित्वाऽभिवाद्य, स्वधायै स्थाने सर्वैः समानं दक्षिणं जानुं निपात्य सव्यमुद्धृत्य जपति 'इडा देवहूः' इत्याऽन्तादनुवाकस्य। जपित्वा, 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यपो निनीय, ब्राह्मणानुत्थाप्य प्रसाद्य संसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्य देवतां च विसृज्य, दक्षिणेनाग्निं प्रागग्रेषु दर्भेषु नान्दीमुखेभ्यः पितृभ्यो दद्यात् 'नान्दीमुखेभ्यः पितृभ्यः स्वाहा' इति। संक्षालनेन प्रदक्षिणं परिषिच्य 'ऊर्जं वहन्तीः' इति, भाविजयाद्यर्थेन कालहोमान् पृषदाज्येन पूर्ववद्धोमं केचिदिच्छन्ति, इत्युक्तमेतन्नान्दीमुखम् ॥

चतुरवरांश्च (अपरांश्च) घृतेन संयुत्य (संविपूय) देवार्थौ (दैवे द्वौ) त्यानुदेश्य (त्यानुद्दिश्य) द्विःपवित्र एव (द्विपवित्रमेव) सिकताश्च (सिकताः) तेषां (तेषु) (पाणिषु०) णोपहत्य (णोपयुज्य) यवोदकं दत्त्वा (यवोदकं) मनुज्ञाप्य (मनुस्थाप्य) संसृज्य + (दक्षिणेनाग्निं) प्रतिच्छाद्य (प्रच्छाद्य) नान्दीमुखार्थानां... यथावद्भोजयेत् ('नान्दीमुखानाम्' इति मन्त्रमूहयित्वा विप्रेभ्यो द्विरुपस्तीर्याभीष्टस्यान्नस्य द्विर्द्विरवदाय द्विर्द्विरभिघार्य यथावद्भोजयेत्).

(१) बौगृशे. ४।१९।२; हिगृशे. १।३।६ उपलिप्य (उपलिख्य) (आऽन्तादनुवाकस्य०) 'नान्दीमुखेभ्यः पितृभ्यः स्वाहा' इति (नान्दीमुखाभ्यो मातृभ्यः स्वाहा नान्दीमुखेभ्यः पितृभ्यः स्वाहा नान्दीमुखेभ्यो मातामहेभ्यः स्वाहा इति) इच्छन्ति, इति + (उपास्मै गायतामिति मन्त्रै-

## आश्वलायनगृह्यसूत्रम्

नान्दीश्राद्धस्य परिभाषा निमित्तानि च

[1]युग्मान् वृद्धिपूर्तेषु ॥

(१) पुंसवनसीमन्तोन्नयनचौलकर्मोपनयनविवाहाः इति पञ्च अग्न्याधेयादीनि च श्रौतानि वृद्धिश्राद्धस्य

रुपगायेयुरिति विज्ञायते); चश्रा. १५६२ (पितृसामान्यवाचीनि स्वधायुक्तानि ब्राह्मणान्यभिश्राव्य भुक्तवत्स्वाचान्तेषु दध्योदनं संप्रकीर्य संक्षालनेन द्विर्द्विः परिषिच्य पूर्ववद्यवोदकं दत्त्वा दक्षिणाः प्रदाय 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति वाचयित्वाऽभिवाद्य स्वधास्थाने दक्षिणं जानु निधाय सव्यमुद्धृत्य 'इडा देवहूः' इति जपित्वाऽन्तेऽनुवाकस्य 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यपो निनीय समुत्थाप्य प्रसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्य दैवतं च विसृज्य प्रदक्षिणेनाग्निं प्रागग्रेषु दर्भेषु नान्दीमुखेभ्यः पितृभ्यो दद्यात् 'नान्दीमुखेभ्यः स्वाहा' इति संक्षालनेन प्रदक्षिणं परिषिञ्चति 'ऊर्जं वहन्तीः' इति इहापि जयाद्यर्थेन कालहोमान् पृषदाज्येन पूर्ववद्धोमं सकृदित्थं सक्तमेतत्).

(१) आगृ. २।५।१३; प्रपा. १३; संर. १०४४.

विषयः इत्येके । अन्ये षोडश संस्काराः श्रवणाकर्मादयश्च श्रौतानि च इत्याहुः, 'अनिष्ट्वा तु पितॄन् श्राद्धे वैदिकं कर्म नाऽऽरभेत्।' इति स्मृतेः। वापीकूपतडागारामाद्युद्यापनादि पूर्तश्राद्धस्य विषयः। उभयत्र युग्मान् भोजयेत्। † गानावृ.

( २ ) आभ्युदयिकेषु श्राद्धेषु युग्मान् भोजयेत्। पार्वणेन सहाभ्युदयश्राद्धं वक्ष्यते, तत्र युग्मनियमार्थमिदम्। तेन 'एकैकमेकैकस्य' इत्यादिकल्पान्तरमाभ्युदयिकेषु न भवति। केषु पुनः कर्मस्वभ्युदयश्राद्धं भवति ? येष्वपरेद्युर्देवेज्या भवति, 'तस्मात्पूर्वेद्युः पितृभ्यः क्रियते। उत्तरमहर्देवान् यजन्ते' इत्येतच्छ्रुतिमूलत्वात्। अना.

**¹प्रदक्षिणमुपचारः। यवैस्तिलार्थः ॥**

( १ ) वृद्धिपूर्तेष्विति शेषः। अत्र प्रदक्षिणमिति वचनात् इतरश्राद्धेषु प्रसव्यमुपचार इति गम्यते। तिलकार्ये यवान् कुर्यात्। यज्ञोपवीतयुग्मकर्मादीनामुपलक्षणमिदम्। गानावृ.

§ आभ्युदयिके तु युग्मा ब्राह्मणाः, अमूला दर्भाः, प्राङ्मुखो यज्ञोपवीती स्यात्, प्रदक्षिणमुपचारः, यवैस्तिलार्थः, गन्धादिदानं द्विर्द्विः, ऋजुदर्भानासने दद्यात्। 'यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄनिमाँल्लोकान् प्रीणयाहि नः स्वाहा ॥' इति यवावपनम्। 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यर्घ्यनिवेदनं यथालिङ्गम्। 'नान्दीमुखाः पितर इदं वोऽर्घ्यम्' इत्यर्घ्यप्रदानमन्त्रो यथालिङ्गम्। पाणौ होमः। 'अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहा' इति होममन्त्रौ। 'मधु वाता' इति तृचस्य स्थाने 'उपास्मै गायत' इति पञ्च मधुमतीः श्रावयेत्। 'अक्षन्नमीमदन्त' इति षष्ठीम्। आचान्तेषु भुक्ताशयान् गोमयेनोपलिप्य तेषु प्राचीनाग्रान् दर्भानास्तीर्य तेषु पृषदाज्यमिश्रेषु( ? मिश्रेण) भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्तेनैव क्रमेण। मन्त्रावृत्तिरुक्ता। अन्ये तु 'नान्दीमुखेभ्यः पितृभ्यः स्वाहा' इति एवं यथालिङ्गं पिण्डान्निपृणन्ति। 'सर्पिषि दध्यानयति' एतदेव पृषदाज्यम्। अनुमन्त्रणादि पूर्ववत्। अन्ये त्वनुमन्त्रणादि नेच्छन्ति। 'ओं स्वधोच्यताम्' इत्यस्य स्थाने 'उपसंपन्नम्' इति। शेषं पूर्ववत्। गानावृ. ४।८।१५

( २ ) वृद्धिपूर्तेष्विति संबध्यते। तत्र प्रदक्षिणमुपचारः स्यात्। उपचारः क्रिया। अन्यत्राप्रदक्षिणम्। परिस्तरणाद्युदाहरणम्। यच्छ्राद्धेषु तिलकृत्यं तदाभ्युदयिकेषु यवैः कर्तव्यम्। आपस्तम्बश्च— 'अवकाशेषु तिलान् विकिरति। पिण्डांश्च तिलमिश्रान् निपृणाति। मासि श्राद्धे तिलानां द्रोणं द्रोणं येनोपायेन शक्नुयात् तेनोपयोजयेत्' इति। तत्र सर्वत्र यवा भवन्ति। स्वधाग्रहणे च 'तिलोऽसि सोमदेवत्यः' इत्यत्र 'यवोऽसि सोमदेवत्यः' इत्यूहेन यवप्रक्षेपः। अना.

## आश्वलायनगृह्यपरिशिष्टम्

नान्दीश्राद्धस्य परिभाषाः प्रयोगश्च

**¹अथाऽऽभ्युदयिके नान्दीमुखाः पितरः। एकैकस्य युग्मा ब्राह्मणाः। अमूला दर्भाः। प्रदक्षिण-**

---

† प्रपा., संर., गानावृअनुवादः।

§ श्राद्धप्रकरणस्थस्य 'अस्तु स्वधेति वा' ( आगृ. ४।८।१५ ) इति सूत्रस्य गार्ग्यनारायणवृत्तौ स्थितः नान्दीश्राद्धस्य संकलितः प्रयोगः अस्माभिरत्र संगृहीतः।

( १ ) आगृ. २।५।१५ ; प्रपा. १७.

( १ ) आगृप. २।१९ अमूला दर्भाः ( अमूलदर्भाः ) एके नानुमन्त्र ( उदकेनानुमन्त्र ) पिण्डा ( पिण्ड ) (ओं०) ; मिता. १।२५० ( अथाऽऽभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखो यज्ञोपवीती स्यात् प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात्। 'यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄनिमाँल्लोकान् प्रीणयाहि नः स्वाहा' इति यवावपनम्। 'विश्वेदेवा इदं वोऽर्घ्यम्, नान्दीमुखाः पितर इदं वोऽर्घ्यम्' इति यथालिङ्गमर्घ्यदानम्। पाणौ होमः 'अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा' इति।

**मुपचारः । यवैस्तिलार्थः । प्राङ्मुखो यज्ञोपवीती कुर्यात् । ऋजून् दर्भानासनं दक्षिणतो दद्यात् । अर्घ्यपात्राणि प्राक्संस्थानि स्युः ॥**

**'यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄ-**

---

'मधु वाता ऋतायते' इति तृचस्थाने 'उपास्मै गायत' इति पञ्च मधुमतीः श्रावयेत् । 'अक्षन्नमीमदन्त' इति षष्ठीम् । आचान्तेषु मुक्ताशयान् गोमयेनोपलिप्य प्राचीनाग्रान् दर्भान् संस्तीर्य तेषु पृषदाज्यमिश्रेण मुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात् ); अप. ११२४९ पृ. ५२० (आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखेभ्य उदङ्मुखो दद्यात् । उदङ्मुखेभ्यो वा प्राङ्मुखः । द्वौ दर्भौ पवित्रे सोपयामानि पात्राणि चत्वारि 'शं नो देवीः' इत्यभिमन्त्रितासु यवानावपति । 'यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नवद्भिः प्रमुस्तुष्ट्या नान्दीमुखाँल्लोकान् प्रीणयाहि नः स्वाहा' इति 'पितरः प्रीयन्ताम्' इत्येषां प्रतिग्रहणं विसर्जनं च.। एवमुत्तरयोः पितृपितामहयोर्नित्यं चाग्नौकरणम् । स्वाहाकारेण होमश्च । 'अतो देवा अवन्तु नः' इत्यङ्गुष्ठग्रहः । 'इदं विष्णुर्वि चक्रमे' इत्यत्र पावमानीः शंवतीरैन्द्रीरप्रतिरथं च श्रावयेत् । मुक्त्वा च येषु पिण्डदानमाशयान् गोमयेनोपलिप्य तेषु प्रागग्रान् कुशानास्तीर्यालंकृत्य पृथगाज्यमिश्रगुडौदनो हविः सर्वत्र तस्यार्धेन द्वेद्वे आज्याहुतीर्जुहुयात् । 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति विसृजेत् । प्रदक्षिणमुपचारः । यवैस्तिलार्थः सर्वं द्विर्द्विः ); स्मृच. ४९९ (आभ्युदयिके युग्मा ब्राह्मणाः, अमूला दर्भाः, प्राङ्मुखेभ्य उदङ्मुखो दद्यादुदङ्मुखेभ्यो वा प्राङ्मुखो द्वौ दर्भौ पवित्रे ) एतावदेव : ५०० (द्वौ दर्भौ पवित्रे । पात्राणि चत्वारि । 'शं नो देवीः' इत्यनुमन्त्रितासु यवानावपति । 'यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । पृक्तवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄनिमाँल्लोकान् प्रीणयाहि नः स्वाहा' इति स्वधाऽर्घ्याः ) : ५०१ ('विश्वेदेवा इदं वो अर्घ्यं नान्दीमुखाः पितरः' इति यथालिङ्गमर्घ्यदानम् । गन्धादिदानं द्विर्द्विः । पाणौ होमः 'अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा' इति । 'नित्यं चाग्नौकरणं स्वाहाकारेण होमश्च' इति पाठान्तरम् । 'अतो देवा अवन्तु नः' इत्यङ्गुष्ठग्रहणम् । पावमानीः शंवतीरैन्द्रीरप्रतिरथं च श्रावयेत् । 'उपास्मै गायता नरः' इति पञ्च मधुमतीश्च श्रावयेत्, 'अक्षन्नमीमदन्त' इति षष्ठीम् ); चश्रा. १५४६ स्मृच. पृ. ४९९ वत् : १५५१ (सोपयामानि पवित्राणि चत्वारि । 'शं नो देवीः' इत्यनुमन्त्रितासु यवानावपति । 'यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नवद्भिः पृक्तः पुष्ट्या नान्दीमुखान् लोकान् प्रीणयाहि नः स्वाहा' इति । 'विश्वेदेवा इदं वोऽर्घ्यम्, नान्दीमुखाः पितरः' इति यथालिङ्गमर्घ्यदानम् । 'पितरः प्रीयन्ताम्' इत्यपां प्रतिग्रहणं विसर्जनं चैवमुत्तरयोरपि पितामह-प्रपितामहयोः ) : १५५२ (प्रदक्षिणमुपचारो यवैस्तिलार्थः । सर्वं द्विर्द्विः । नित्यं चाग्नौकरणं स्वाहाकारेण होमश्च । [अत्र पाठान्तरम्- 'पाणौ होमोऽग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा' इति ] पृषदाज्यमिश्र ओदनो हविः सर्वत्र । तस्यार्धेन द्वेद्वे आहुती जुहुयात् ) : १५५३ (अतो देवा अवन्तु नः' इत्यङ्गुष्ठग्रहणम् । 'इदं विष्णुर्वि चक्रमे' इत्यन्यत्र । [अक्षन्नमीमन्दत इति च षष्ठीति पाठान्तरम्] पावमानीः शम्वती रौद्रं चाप्रतिरथं चाऽऽश्रावयीत ) : १५५६ (आशयेषु पिण्डदानं गोमयोपलिप्तेषु प्रागग्रान् कुशानास्तीर्य ) : १५५८ (नान्दीमुखाः पितरः प्रीयन्ताम् इति विसृजेत् ); मपा. ६३२ (आभ्युदयिके युग्मा ब्राह्मणाः, अमूलदर्भाः । प्राङ्मुखेभ्य उदङ्मुखो दद्यात्, उदङ्मुखेभ्यो वा प्राङ्मुखः, द्वौ दर्भौ पवित्रे ) एतावदेव : ६३४ (विश्वेदेवा इदं वो अर्घ्यम्, नान्दीमुखाः पितर इदं वो अर्घ्यम्, इतियथालिङ्गमर्घ्यदानम् । पाणौ होमः 'अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहा' इति । 'मधु वाता ऋतायते' इति ऋचः स्थाने 'उपास्मै गायत' इति पञ्च मधुमतीः श्रावयेत् । 'अक्षन्नमीमदन्त' इति च षष्ठीम् । आचान्तेषु मुक्त्वाशयान् गोमयेनोपलिप्य तेषु प्राचीनाग्रान् दर्भान् संस्तीर्य तेषु पृषदाज्यमिश्रेण भुक्तशेषेणैकस्य द्वौ द्वौ पिण्डौ दद्यात् ); प्रपा. १७ ऋजून् दर्भानासनं (ऋजुदर्भासनं)

निमाँल्लोकान् प्रीणयाहि नः स्वाहा ॥' इति यवावपनम् ॥

'नान्दीमुखाः पितरः प्रीयन्ताम्' इति यथालिङ्गं सकृदर्घ्यं निवेद्य 'नान्दीमुखाः पितर इदं

---

('नान्दीमुखाः पितरः प्रीयन्ताम्' इति यथालिङ्गं सकृदर्घ्यं निवेद्य०) नास्तीर्य + (तेषु) पृषदाज्यमाह (पृषदाज्यमिश्रणम्): १९ (नेह पिण्ड इत्यन्ये) एतावदेव; मर. १७१ (आभ्युदयिके युग्मा ब्राह्मणाः, अमूला दर्भाः, प्राङ्मुखेभ्य उदङ्मुखो दद्यादुदङ्मुखेभ्यः प्राङ्मुखः, द्वौ दर्भौ पवित्रे। प्राङ्मुखो यज्ञोपवीती स्यात्, प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात् 'यवोऽसि सोमदेवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः पृक्तः पुष्ट्या नान्दीमुखान् पितॄनिमान् लोकान् प्रीणयाहि नः स्वाहा' इति यवावपनम्। विश्वेदेवा इदं वो अर्घ्यं नान्दीमुखाः पितर इदं वो अर्घ्यमिति यथालिङ्गमर्घ्यदानं पाणौ होमः 'अग्नये कव्यवाहनाय स्वाहा सोमाय च पितृमते स्वाहा' इति 'मधु वाता ऋतायते' इति स्थाने 'उपास्मै गायत' इति पञ्च मधुमतीः श्रावयेत् 'अक्षन्नमीमदन्त' इति षष्ठीम्। आचान्तेषु मुक्ताशयान् गोमयेनोपलिप्य तेषु प्राचीनाग्रान् दर्भानास्तीर्य तेषु पृषदाज्यमिश्रेण भुक्तशेषेण एकैकस्य द्वौ द्वौ पिण्डान् दद्यात्); श्राका. ५१४ (यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् लोकान् प्रीणाहि नः स्वाहा) एतावदेव; श्राकौ. ५०८ (आभ्युदयिके युग्मा ब्राह्मणाः प्राङ्मुखेभ्य उदङ्मुखो दद्यात् उदङ्मुखेभ्यो वा प्राङ्मुखो दद्यात्) एतावदेव: ५११ (समूला दर्भाः) एतावदेव: ५१५ (शं नो देवीरित्यभिमन्त्रितान् सप्त यवानावपति– 'यवोऽसि सोमदेवत्यो गोषवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् पितॄन् लोकान् प्रीणाहि नः स्वाहा' इति) एतावदेव; श्रात. ३१५ (आभ्युदयिके युग्मा ब्राह्मणाः समूला दर्भाः प्राङ्मुखेभ्य उदङ्मुखो दद्यात् उदङ्मुखेभ्यः प्राङ्मुखो वा) एतावदेव; यजुःश्रात. ४९८ (आभ्युदयिके युग्मा ब्राह्मणाः समूला दर्भाः प्राङ्मुखेभ्य उदङ्मुखो दद्यात्) एतावदेव; श्रासौ. १२१ (आभ्युदयिके युग्मा ब्राह्मणाः समूला दर्भाः प्राङ्मुखेभ्यस्तूदङ्मुखो दद्यात्, उदङ्मुखेभ्यो वा प्राङ्मुखः। द्वौ दर्भौ पवित्रे सोपयामानि पात्राणि चत्वारि। शं नो देवीत्यनुमन्त्रितास्वप्सु यवानावपति। 'यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् लोकान् प्रीणाहि नः स्वाहा' इति नान्दीमुखाः पितरः प्रीयन्तामित्यपां ग्रहणं विसर्जनं च। एवमुत्तरयोरपि पितामहप्रपितामहयोः। नित्यं चाग्नौकरणं स्वाहाकारेण होमश्च। 'अतो देवा अवन्तु नः' इत्यङ्गुष्ठग्रहः। 'इदं विष्णुर्वि चक्रमे' इत्यत्र पावमानीः शंवतीरप्रतिरथं च श्रावयते। मुक्ताशयेषु पिण्डदानमाशयान् गोमयेनोपलिप्य तेषु प्रागग्रान्कुशानास्तीर्यालङ्कृत्य पृषदाज्यमिश्रौदनो हविः सर्वत्र तस्यार्धेन द्वे द्वे आज्याहुतीर्जुहुयात्। नान्दीमुखाः पितरः प्रीयन्तामिति विसर्जयेत्। प्रदक्षिणमुपचारो यवैस्तिलार्थः सर्वं द्विर्द्विरिति); श्राप्र. २९९ (अभ्युदये युग्मा ब्राह्मणाः, अमूला दर्भाः, प्राङ्मुखेभ्य उदङ्मुखो दद्यात् उदङ्मुखेभ्यः प्राङ्मुखो द्वौ दर्भौ पवित्रे): ३०१ (द्वौ दर्भौ पवित्रे। सोपयामानि पात्राणि चत्वारि। 'शं नो देवीः' इत्यनुमन्त्रितास्वप्सु यवानावपति। 'यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् लोकान् प्रीणयाहि नः स्वाहा' इति। विश्वेदेवा इदं वोऽर्घ्यं नान्दीमुखाः पितरः ['इदं वोऽर्घ्यम्' इति अत्र अग्रिमग्रन्थालोचनेन आवश्यकमिति भाति] इति यथालिङ्गमर्घ्यदानम्। पितरः प्रीयन्तामित्यपां प्रतिग्रहणं विसर्जनं च, एवमुत्तरयोरपि पितामहप्रपितामहयोः, नित्यं चाग्नौकरणं स्वाहाकारेण होमश्च 'अतो देवा अवन्तु नः' इत्यङ्गुष्ठग्रहः): ३०२ (प्रदक्षिणमुपचारो यवैस्तिलार्थः सर्वं द्विर्द्विः। नित्यं चाग्नौ स्वाहाकारेण होमश्च। पाणौ होमः, अग्नये कव्यवाहनाय स्वाहा। सोमाय पितृमते स्वाहा। तथा पृषदाज्यमिश्र उष्णो हविः सर्वत्र, तस्यार्धेन द्वेद्वे आहुती जुहुयात्): ३०३ ('अतो देवा अवन्तु नः' इत्यङ्गुष्ठग्रहणम्। पावमानीः शंवती रौद्री चाप्रतिरथं च श्रावयीत): ३०४

**वोऽर्घ्यम्' इति प्रत्येकं विगृह्य दत्त्वाऽनुमन्त्रणम्। द्विर्द्विर्गन्धादि दद्यात्। 'अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहा' इति पाणिषूक्तवद्धोमः। तृप्तेषु 'उपास्मै गायता नरः' इति पञ्च मधुमतीः 'अक्षन्नमीमदन्त' इति श्रावयेत्। अनाचान्तेषु भुक्ताशयानुपलिप्य, प्रागग्रान् दर्भानास्तीर्य, पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात् पूर्वेण मन्त्रेण, 'नान्दीमुखेभ्यः पितृभ्यः स्वाहा' इति वा। यथालिङ्ग-**

('मधु वाता ऋतायते' इति तृचस्थाने 'उपास्मै गायता नरः' इति पञ्च मधुमतीः श्रावयेत् 'अक्षन्नमीमदन्त' इति च षष्ठीम्): ३१० (नान्दीमुखाः पितर इदं वोऽर्घ्यं पितामहाः प्रपितामहा इति यथालिङ्गमर्घ्यदानं पितरः प्रीयन्तामित्यपां प्रतिग्रहणं विसर्जनं च, एवमुत्तरयोः पितामहप्रपितामहयोः); चम. १७८ (अथाऽऽभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखो यज्ञोपवीती स्यात् प्रदक्षिणमुपचारो यवैस्तिलार्थो गन्धादिदानं द्विर्द्विः ऋजुदर्भानासने दद्यात् यवोऽसीति स्वाहान्तेन मन्त्रेण यवावपनं विश्वेदेवा इदं वोऽर्घ्यं नान्दीमुखाः पितर इदमर्घ्यमिति यथालिङ्गमर्घ्यदानं पाणौ होमः अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहेति, 'मधु वाता' इति ऋचः स्थाने 'उपास्मै गायत' इति पञ्च मधुमतीः श्रावयेत् 'अक्षन्नमीमदन्त' इति च षष्ठीम्। आचान्तेषु भुक्ताशयान् गोमयेनोपलिप्य तेषु प्राचीनाग्रान् दर्भान् संस्तीर्य तेषु पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्); मुक्ता. ७५५ (अथाऽऽभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखो यज्ञोपवीती स्यात्। प्रदक्षिणमुपचारो यवास्तिलार्था गन्धादिदानं च ऋजुदर्भावासने दद्यात्। 'यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नवद्भ्यः प्रत्तः पुनर्नान्दीमुखान् प्रीणयाहि नः स्वाहा' इति यववापनम्): ७५६ (प्राचीनाग्रान् दर्भान् संस्तीर्य तेषु पृषदाज्यमिश्रेण मुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्); लता. ११८ स्मृच. ४९९ वत्; श्राम. ९० (सोपयामानि चत्वारि पात्राणि, शं नो देवीरित्यनुमन्त्रितासु यवानावपति 'यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीन् लोकान् प्रीणयाहि नः स्वाहा'। विश्वेदेवा इदं वोऽर्घ्यं नान्दीमुखाः पितर इति यथालिङ्गमर्घ्यदानम् 'पितरः प्रीयन्ताम्' इति अपां प्रतिग्रहणं चैवमुत्तरयोरपि पितामहप्रपितामहयोः। सर्वं द्विर्द्विः। नित्यं वाऽग्नौकरणं स्वाहाकारेण होमश्च [अग्नौकरणमित्यस्याग्रे पाठान्तरम्— 'पाणौ होमोऽग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा' इति] पृषदाज्यमिश्र ओदनो हविः सर्वत्र तस्यार्धे द्वे द्वे आहुती जुहुयात्। 'अतो देवा अवन्तु नः' इत्यङ्गुष्ठग्रहणम्। पावमानीः शंवती रौद्रीं चाप्रतिरथं च श्रावयेत्); सिन्धु. १७५३ (द्वौ दर्भौ पवित्रे, पवित्राणि चत्वारि। शं नो देवीत्यनुमन्त्रितासु यवानावपति— 'यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄनिमाँल्लोकान् प्रीणयाहि नः स्वाहा' इति स्वाहार्घ्याः इति पृच्छति। विश्वेदेवा इदं वो अर्घ्यम्, नान्दीमुखाः पितर इति यथालिङ्गमर्घ्यदानं गन्धादिदानं द्विर्द्विः। पाणौ होमः 'अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा' इति। 'अतो देवा अवन्तु नः' इत्यङ्गुष्ठग्रहणम्। पावमानीः शंवतीरैन्द्रीरप्रतिरथं च श्रावयेत्। मधु वाता ऋचः स्थाने उपास्मै गायतेति पञ्च मधुमतीः श्रावयेत् 'अक्षन्नमीमदन्त' इति च षष्ठीं मुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्); संकौ. २५ स्मृच. ४९९ वत्; बाल. १।२५० पृ. ५६७ (नान्दीमुखाः पितर इदं वोऽर्घ्यम्) एतावदेव: ५७७ (ओं संपन्नमिति विसृजेत्) एतावदेव; संग. ७८ स्मृच. ४९९ वत्: ८३ (आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः। यवैस्तिलार्थाः। 'यवोऽसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् पितॄन् लोकान् प्रीणाहि नः स्वाहा'); पुम. ३८० (नान्दीमुखाः पितर इति इदं वो अर्घ्यम् इत्यर्घ्यप्रदानमन्त्रो यथालिङ्गम्) एतावदेव; कृभ. १७५३ (पितरः प्रीयन्तामित्यपां प्रतिग्रहणम्। एवमुत्तरयोरपि पितामहप्रपितामहयोः। सर्वं द्विर्द्विः। पृषदाज्यमिश्र ओदनो हविः सर्वत्र, तस्य अर्धं द्वे द्वे आहुती जुहुयात्) एतावदेव.

**मन्यत् । एके नानुमन्त्रणादीच्छन्ति । नेह पिण्डा इत्यन्ये । सर्पिषि दध्यानयत्येवमेतत्पृषदाज्यमाह । ओं संपन्नमिति विसृजेत् ॥**

( १ ) 'विश्वेदेवा इदं वः' इत्यत्र सत्यवसुसंज्ञका विश्वेदेवा इति पूर्वप्रकरणोक्तो विशेषो द्रष्टव्यः । एवं यत्र यत्र विश्वेषां देवानां नामनिर्देशः क्रियते तत्र तत्रायं विशेषोऽनुसंधेयः ।

पूर्ववदिति वक्तव्ये नित्यमिति तत्र तत्र परिशिष्टकारादिभिरुच्यते । ततश्चायमर्थः— नित्यं चाग्नौकरणं पूर्ववदेवाग्नौकरणमिति । पार्वणवदग्नौ पाणौ वा करणमिति ।

पावमानीः 'स्वादिष्ठया' इत्येवमाद्याः । शंवतीः 'शं न इन्द्राग्नी भवतामवोभिः' इत्याद्याः । ऐन्द्रीः 'इन्द्र त्वा वृषभं वयम्' इत्याद्याः । अप्रतिरथम् 'आशुः शिशानः' इति सूक्तम् । स्मृचं. ५०१

( २ ) उदङ्मुखत्व— प्राङ्मुखत्वयोः व्यवस्थोक्ता आश्वलायनगृह्यपरिशिष्टे— आभ्युदयिके युग्मा इति ।

पृ. १५४६

अर्घ्यदानं च आवाहनपूर्वकं कर्तव्यम् ।

पृ. १५५१

गन्धादिकमेकैकस्य हस्ते द्विर्द्विः प्रदेयम् । तथा चाऽऽश्वलायनगृह्यपरिशिष्टे प्रदक्षिणमिति । गन्धादिदानानन्तरं चाग्नौकरणं कर्तव्यम् । एतदपि तत्रैवोक्तम्— नित्यं चेति । सर्वत्रेति अग्नौकरण—द्विजभोजन—विकिरण—पिण्डदानेषु । दधिमिश्रमाज्यं पृषदाज्यम्, तन्मिश्रस्य ओदनस्य पूर्वापरार्धे विभागं कल्पयित्वा द्विरवदाय होमः कार्य इत्यर्थः । पृ. १५५२

'अतो देवा अवन्तु नः' इत्येतयर्चा नान्दीश्राद्धे अङ्गुष्ठग्रहणम् । अन्यत्र श्राद्धान्तरे अन्ययर्चेत्यर्थः । भुञ्जानेषु जपोऽपि तत्रैवोक्तः— पावमानीरिति ।

चश्रा. १५५३

( ३ ) भुक्ताशयाः भुक्तप्रदेशाः । भोजनशालाया बहिर्वा दद्यात् । मपा. ६३४

( ४ ) अत्र यत्र विरोधस्तत्र स्वशाखानुसारेण व्यवस्था । येषां शाखायामेकैकस्य पिण्डद्वयद्वयदानं तैर्नामगोत्रोच्चारणपूर्वकं प्रथमः पिण्डो देयः, द्वितीयस्तूष्णीम् । मर. १७१

( ५ ) 'आभ्युदयिके ... प्राङ्मुखो वा' इत्याश्वलायनवचनेऽपि द्वितीयकल्पाभिधानं छन्दोगपितृपक्षपरम् ।

* श्रात. ३१५

( ६ ) उपयामः उपग्रहः पात्राधस्तात् कुशधारणरूपः । पृ. ३०१

अत्र च 'सर्वे द्विर्द्विः' इति वचनात् गन्धादिपञ्चकस्यापि द्विर्द्विर्दानमित्येव प्रतीयते । 'द्विर्भुङ्क्ते' इत्यत्रेव द्विर्द्विरिति सुचः क्रियाया आवृत्तौ विहितत्वात्, द्रव्यावृत्तिं विना तु क्रियावृत्तेरनुपपन्नत्वात् । तेन गन्धादिवद्वासोद्वयमपि देयम् । पृ. ३०२

शंवतीः 'शं न इन्द्राग्नी' इत्यादि । रौद्री रुद्राध्यायादि । अप्रतिरथम् 'आशुः शिशानः' इति ।

¶ श्राप्र. ३०३

(७) सोपयामानि सहायभूतपात्रान्तरसहितानीत्यर्थः ।

‡ श्राम. ९०

( ८ ) मङ्गलात्मकविवाहाद्यारम्भे क्रियमाणनान्दीश्राद्धे कुशस्थाने दूर्वाविधिः, यज्ञाद्यारम्भे तु क्रियमाणे अमूलदर्भविधिरिति व्यवस्था बोध्या । संकौ. २५

( ९ ) अमूलाः छिन्नमूलाः । प्रदक्षिणमिति क्रियाविशेषणम् । तिलार्थः तिलकार्याणि । इति अयमर्घ्यप्रदानमन्त्रः । स्त्रीषु विशेषमाह— यथालिङ्गमिति । होममन्त्रावाह— अग्नये इति । तृचः ऋक्त्रयस्य । आचान्तेषु ब्राह्मणेषु, भुक्ताशयान् भोजनस्थानानि । सर्पिषि दध्यानयति एतदेव पृषदाज्यम् । दद्यादिति तेनैव मन्त्रेण मन्त्रावृत्त्येति भावः । बाल. १।२५० पृ. ५६६

( १० ) अत्र कर्तुर्दिङ्नियमोऽभिहितः आश्वलायनगृह्यपरिशिष्टे— आभ्युदयिक इति । अत्र प्राङ्मुखेभ्य

---

* अधिकं विवरणं 'प्रातरामन्त्रितान् विप्रान्' इति कात्यायनवचने द्रष्टव्यम् ।

¶ शेषं चश्रागतम् ।

‡ शेषं पूर्वव्याख्यानेषु गतार्थम् ।

उदङ्मुखो दद्यादित्युदङ्मुखतानियमः । उदङ्मुखेभ्यो वा प्राङ्मुख इत्यनेन प्राङ्मुखत्वोदङ्मुखत्वयोर्विकल्प उक्तः । अत एव हेमाद्रौ मार्कण्डेयपुराणे– उदङ्मुखः प्राङ्मुखो वेति । पृ. ७८

अत्र ये तिलार्थास्ते सर्वे यवैः कार्याः । तदत्र मन्त्रे यवोऽसीति ऊहः कार्यः, मुख्यद्रव्याभिधायकत्वात् । संग. ८३

नान्दीश्राद्धस्य निमित्तानि, पूर्वेद्युः प्रधानदिवसे च कर्तव्यताव्यवस्था

**[1]तदेतत् पुंसवनादिष्वपत्यसंस्कारेषु अग्न्याधेयादिषु श्रौतेषु च पूर्तेषु च क्रियते ॥**

**[2]महत्सु पूर्वेद्युः । तदहरल्पेषु ॥**

( १ ) एतच्च नान्दीश्राद्धं महत्सु कर्मसु पूर्वेद्युः कार्यम् । अल्पेषु तु तदहरेव । तथा च गृह्यपरिशिष्टम्– महत्स्विति । प्रपा. १५

( २ ) महत्सु उपनयनादिषु । अल्पेषु पुंसवनादिषु । ‡ संकौ. २६

( ३ ) बौधायनेन सर्वत्र नान्दीश्राद्धस्य संस्कारदिनात्पूर्वेद्युरनुष्ठानमुक्तम् । गृह्यपरिशिष्टे तु 'महत्सु पूर्वेद्युस्तदहरल्पेषु' इत्येवं व्यवस्थोक्ता । महत्सु अनेकदिनसाध्येषु । अल्पेषु एतद्भिन्नेषु । संर. २९

मातृपितृमातामहाद्युद्देशेन श्राद्धानां त्रित्वम्

**[1]तदिदमेके मातॄणां पृथक्कुर्वन्त्यथ पितॄणां ततो मातामहानामिति त्रितयमिच्छन्ति ॥**

सुतसंस्कारेषु जीवत्पित्रादेः पार्वणनियमः

**§ [2]तस्माज्जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात् । तस्यां जीवन्त्यां पितृमातामहयोः कुर्यात् । पित्रोर्जीवतोर्मातामहस्यैव कुर्यात् ॥**

---

‡ बाल., संव. संकौवत् ।

(१) आगृप. २।१९ तदेतत् (तदैतत्) नायं पाठभेदोऽस्ति सर्वपुस्तकेषु ; प्रपा. १७ श्रौतेषु च + (वृद्धेषु च) ; बाल. १।२५० पृ. ५७७ नादिष्वप (नाद्यप) श्रौतेषु च (श्रौतेषु).

(२) आगृप. २।१९ ; प्रपा. १५, १७ ; श्राप्र. २९२ ; सिन्धु. १७३० ; विपा. ३१ (भागः २) रल्पेषु (रेवाल्पेषु) ; संकौ. २६ ; बाल. १।२५० पृ. ५७७ ; संव. ४१ ; संर. २९.

§ पुमव्याख्यानम् 'उद्वाहे पुत्रजनने' इति मैत्रायणीयपरिशिष्टवचने द्रष्टव्यम् ।

(१) आगृप. २।१९ ; प्रपा. १७ ; संकौ. २६ ततो माता (अथ माता) ; बाल. १।२५० पृ. ५७७ कुर्वन्ति (पूर्वे) शेषं संकौवत् ; संव. ४१ संकौवत्.

(२) आगृप. २।१९ जीवन्त्यां (जीवत्यां) ; प्रपा. १७ (तस्माज्जीवत्पितृकः सुतसंस्कारेषु मातृमातामहयोः कुर्यात्तस्यां च जीवत्यां मातामहस्य कुर्यात्) : २० (जीवत्पितृकः सुतसंस्कारेषु मातृमातामहयोः कुर्यात्तस्यां च जीवत्यां मातामहस्यैव कुर्यात्) ; गभा. ३२ (जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात् तस्यां जीवत्यां मातामहस्यैव कुर्यात्) ; प्रर. १४ गभावत् ; श्राम. २७ (जीवत्पिता सुतसंस्कारेषु मातृमातामहयोस्तस्यां जीवन्त्यां मातामहस्य कुर्यात्) ; संम. ७ श्रामवत् ; सिन्धु. १७४६ (जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात् तस्यां जीवन्त्यां मातामहस्यैव) ; विपा. ३६ (भागः २) सिन्धुवत् ; संकौ. २६ (पितृमातामहयोः कुर्यात् । पित्रोर्जीवतोः ०) ; प्रका. ३४ (जीवत्पिता तु सुतसंस्कारेषु मातृमातामहयोः कुर्यात् तस्यां जीवत्यां मातामहस्य कुर्यात्) ; बाल. १।२५० पृ. ५७७ ; संग. ८९ गभावत् ; संव. ४१ संस्कारेषु (संस्कारे) शेषं संकौवत् ; पुम. ३७८ (जीवत्पितृकः सुतसंस्कारेषु मातृमातामहयोः कुर्यात्तस्यां जीवन्त्यां मातामहस्यैव कुर्यात्) : ३८० (जीवत्पिता सुतसंस्कारेषु मातृमातामहयोरेव) एतावदेव ; मञ्जरी. ८५ (जीवत्पिता सुतसंस्कारे मातृमातामहयोः कुर्यात् तस्यां जीवन्त्यां मातामहस्यैव) ; संदी. ६७, ६८ (तस्मात् ०).

मातृपितृमातामहानां जीवने श्राद्धाभावः

[1]त्रिषु जीवत्सु न कुर्यात् ॥

(१) गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्माद्यपत्यसंस्कारेषु त्वाश्वलायनानां प्रतिप्रसूयन्ते * प्रयोगपारिजाते आश्वलायनगृह्यपरिशिष्टे— 'जीवत्पिता सुतसंस्कारेषु मातृमातामहयोस्तस्यां जीवन्त्यां मातामहस्य कुर्यात्' इति। अनयोरन्यतरजीवने तु पितृनिरूपितः स वर्ग इति, उभयोर्जीवने तु वर्गत्रयमपि पितृनिरूपितमेव। ये त्वेतद्वचसा स्वीयमातृमातामहपार्वणे एव भवतः, न पितृपार्वणमित्याहुः, तन्न, अग्निहोत्रे मान्त्रवर्णिकाग्निसूर्ययोः पृष्ठभावेन प्रजापतिविधाविव तयोः 'पितरो यत्र पूज्यन्ते तत्र मातामहा अपि।' इति पितृप्राप्तेर्मातामहप्राप्तावुपजीव्यत्वेन तद्बाधायोगात् मानाभावाच्च।

श्राम. २७

(२) अत्रानयोरन्यतरजीवने तु (पितृनिरूपितः) स वर्ग इज्यः§, उभयोर्जीवने तु वर्गत्रयमपि पितृनिरूपितमेव। केचित्तु एतद्वचसाऽपि स्वीयमातृमातामहपार्वणे एव भवतः, न पितृपार्वणमित्याहुरिति दिक्।

संम. ७

(३) यत्तु बह्वृचपरिशिष्टे— 'जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात्। तस्यां जीवन्त्यां मातामहस्यैव' इति, तत् तच्छाखीयानामेवेति दिक्। स्मृतितत्त्वादिगौडग्रन्थेषु तु जीवन्मातृकः पितामह्यादिभ्यो वृद्धौ दद्यात्, 'जीवन्तमपि दद्याद्वा प्रेतायान्नोदके द्विजः।' इति कात्यायनोक्तेः, 'जीवे तस्मिन् सुताः कुर्युः पितामह्या सहैव तु। तस्यां चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः॥' इति हारीतोक्तेश्चेत्युक्तम्। तस्मिन् भर्तरि। दाक्षिणात्यास्तु पूर्वोक्तस्य सपिण्डीकरणादिविषयत्वात् 'जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत्।' इति वचनात्तद्वर्गस्य लोप एवेत्याहुः।

सिन्धु. १७४६–१७४७

(४) अथ जीवत्पितृकस्य संस्कर्तुर्नान्दीश्राद्धनिर्णयः— तत्र कात्यायनः— 'वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति। येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः॥' इति। गृह्यपरिशिष्टे तु नान्दीश्राद्धं प्रकृत्योक्तम्— 'महत्सु पूर्वेद्युस्तदहरल्पेषु। तदिदमेके मातॄणां पृथक्कुर्वन्ति, अथ पितॄणामथ मातामहानामिति त्रितयमिच्छन्ति। तस्माज्जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात्। तस्यां जीवन्त्यां मातामहस्यैव कुर्यात्' इति। महत्सु उपनयनादिषु। अल्पेषु पुंसवनादिषु। पृथक् दिनभेदेन पूर्वाह्णादिकालभेदेन वा। त्रितयं श्राद्धत्रयं भिन्नप्रयोगमित्याशयः। तथा च गार्ग्यः— 'मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकम्। मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम्॥' इति। तथा च शातातपः— 'पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥' इति। 'एके इच्छन्ति' इति परिशिष्टोक्त्या सहप्रयोगः स्वाभिमतत्वेन सूचितः। उक्तश्चानुकल्पत्वेन वृद्धमनुना— 'अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः। पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम्॥' इति।

एवं जीवत्पितृकं प्रत्यपि तीर्थ इव श्राद्धत्रयप्राप्तौ विषयविशेषेऽपवादार्थमुच्यते— तस्मादिति। तत्र पार्वणद्वयेनैव नान्दीश्राद्धफलसिद्धिरित्याशयः। एवं जीवन्मातृपितृकस्य मातामहश्राद्धेनैव तत्सिद्धिरित्याशयेनोक्तम्— तस्यामित्यादि। एतच्चोपलक्षणार्थम्, जीवत्पितृमातामहस्य मातृपार्वणेनैव तत्सिद्धिरित्यपि बोध्यम्, यद्वर्गाद्यो जीवति तत्पार्वणातिरिक्तपार्वणानुष्ठाने नान्दी-

* प्रथमप्राप्ताः स्वनिरूपितपित्रादयः 'येभ्य एव पिता दद्यात्' इत्यादिवचनैः पितृनिरूपितपित्राद्युपदेशेन बाधिताः सन्तः पुनरनेनोपदिश्यन्ते इति प्रकरणलभ्योऽर्थः।

§ अत्र 'इज्यः' इतिपाठानुसारेण 'पितृनिरूपितः' इति पदं कंसे निवेशितम्। एवं चास्य श्राद्धमयूखेन संवादः। 'इज्यः' इत्यत्र 'त्याज्यः' इति पुस्तकान्तरे पाठः। तत्र 'पितृनिरूपितः' इति न संगच्छते। तस्मिन् पाठे तु 'स्वनिरूपितः स वर्गस्त्याज्यः, पितृनिरूपितस्तु इज्य एव' इति तात्पर्यार्थः। एवं च अग्रिमकेचित्तुमतादर्थान्तरत्वं सिध्यति, श्राद्धमयूखसंवादश्च।

(१) आगृप. २।१९; बाल. १।२५० पृ. ५७७; संदी. ६७ : ६८ न (नैव).

श्राद्धफलसिद्धिरित्यत्र तात्पर्यस्य वाक्यभेदभयेन तस्मादित्यादिग्रन्थे स्वीकर्तुमुचितत्वात्, एवं च सति मृतपितृकजीवन्मातृमातामहस्य पितृपार्वणमात्रेण नान्दीश्राद्धसिद्धेः साधकतया सकलदाक्षिणात्यस्वीकृतेन 'पितृवर्गे मातृवर्गे तथा मातामहस्य च। जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत्॥' इति शास्त्रेण संवादलाभात्। एवं सति 'येभ्य एव पिता दद्यात्' इति शास्त्रेण पितुः पितृपार्वणं परिशिष्टबलेन च स्वमात्रादिपार्वणं समुच्चयेन कार्यमित्यत्यन्तानुचितम्, परिशिष्टस्वरसविरोधात्, 'तस्यां जीवन्त्यां मातामहस्यैव कुर्यात्' इति पारिजाताद्यनेकग्रन्थसंमतपाठे एवकारविरोधाच्च, 'न गिरागिरेति ब्रूयात्' इतिवदर्थप्राप्तेतरनिवृत्त्यनुवादतया तत्स्वीकारेण 'अत्र ह्येवाऽऽवपन्ति' इतिवत् श्रौतपरिसंख्याङ्गीकारगौरवस्याप्यनापत्तेश्च, 'तं वर्गं तु परित्यजेत्' इतिशास्त्रविरोधाच्च, 'येभ्य एव' इति शास्त्रस्य परिशिष्टस्य च पारिजातोक्तव्यवस्थाविरोधापत्तेश्च।

तथा हि— तत्रोक्तपरिशिष्टमुदाहृत्य तत्संवादितया 'सपितुः पितृकृत्येषु अधिकारो न विद्यते। न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिः॥' इति कातीयवचनमुदाहृत्य पितृकृत्येषु पितामहादिसंबन्धिषु श्राद्धेष्वित्यर्थः इति व्याख्याय केषुचिदेतदपवादत्वेन 'उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे। तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः॥' इति मैत्रायणीयपरिशिष्टमुदाहृतम्। तदधिकारे च 'येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः।' इत्येतत्समानार्था विष्णुस्मृतिरुदाहृता— 'पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात्, पितरि पितामहे च येषां पितामहः' इति। ततश्च बह्वृचपरिशिष्टस्य सुतसंस्कारविषयत्वात् 'न जीवन्तमतिक्रम्य' इत्येतद्विषयम्, मैत्रपरिशिष्टस्य तु तदतिरिक्तविषयत्वात् 'येभ्य एव पिता दद्यात्' इत्येतद्विषयमित्येवं व्यवस्था प्रतीयते इति वार्त्रघ्नीवृधन्वत्योरिव समुच्चयासंभवः। न च मैत्रपरिशिष्टस्य सुतसंस्कारविषयत्वमस्तीति शङ्क्यम्, उद्वाहशब्दस्य कर्तुर्द्वितीयविवाहपरत्वात्, 'नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः। अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्॥' इति वचनात्। न च पुत्रजननिमित्तकमिति संस्काराङ्गम्, तीर्थे इव तत्रापि पुरुषार्थस्यैव विधानात्। न च जीवद्वर्गत्रयाद्यस्य सुतसंस्कारेष्वपि 'येभ्य एव पिता दद्यात्' इत्येतत्स्वीकार आवश्यक इति शङ्क्यम्, 'पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्' इति विष्णूक्तरीत्या लोपस्यौचित्यप्रतीतेः। एतदपवादमप्यनन्तरं वक्ष्यामः।

यत्तु पारिजातोक्तव्यवस्थादूषणाय स्मृतिरत्नावल्यामुक्तम्— 'बह्वृचपरिशिष्टस्य बह्वृचविषयत्वात् मैत्रायणीयस्य तच्छाखिविषयत्वात् न व्यवस्थान्तरं कल्पनीयम्' इति, तन्न, आश्वलायनपरिशिष्टे सुतसंस्कारेष्विति श्रवणात् परिशिष्टान्तरे च तद्भिन्नकर्मणामेव श्रवणात् कर्मभेदेन व्यवस्थाया अकल्प्यत्वात् शब्दानारूढशाखाभेदव्यवस्थाकल्पनस्यैवान्याय्यत्वात् होलाकाधिकरणन्यायबाधितत्वाच्च।

यत्तु पारिजाते— 'न जीवतः पितुः कुर्याच्छ्राद्धमग्निमृते द्विजः। येभ्य एव पिता कुर्यात्तेभ्यः कुर्वीत साग्निकः॥ पितामहेऽप्येवमेव कुर्याज्जीवति साग्निकः। साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे॥' इति सुमन्तुवचनात् मैत्रायणीयपरिशिष्टोक्तविषयेष्वपि जीवत्पितृकस्य साग्नेरेवाधिकारः, न निरग्नेरिति प्रतिपादितम्, तदुद्वाहपुत्रजननिमित्तकनान्दीश्राद्धव्यतिरिक्ततीर्थश्राद्धादिविषयम्, 'अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि। येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम्॥' इति आचारमदनरत्नोदाहृतहारीतवचनेन सुमन्तुवाक्यापवादात्। साग्निरत्र श्रौताग्निमान् स्मार्ताग्निमांश्च, तदितरो निरग्निरित्यपि तत्रैवोक्तम्। अतश्च निरग्नेर्जीवत्पितृकस्य तीर्थश्राद्धादौ नाधिकार इति सिद्धम्।

यत्तु तत्रैवोक्तम्— 'येभ्य एव पिता दद्यात्' इत्यत्र येभ्य इति पितुः पित्रादय एव परामृश्यन्ते, न तु मात्रादयो मातामहादयश्च। 'न जीवन्तमतिक्रम्य किंचिद्दद्यात्' इत्यादिशास्त्रेण तावत् पितृपार्वणमेव निषिध्यते, तत्रैव जीवतोऽतिक्रमसंभवात्, प्रमीतस्वमात्रादिकेन स्वमात्राद्युद्देशेन श्राद्धकरणे तदभावात्, प्रतिप्रसवार्थस्य च 'येभ्यः' इति शास्त्रस्य निषेधसमानविषयत्वौचित्यात्। किंच 'येभ्यः'

इत्युक्तवाक्ये पितुर्मात्रादिग्रहणे तत्समानार्थे विष्णुवाक्येऽपि तदापद्येत । तच्चेत्थं पठ्यते– ‘ पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात्, पितरि पितामहे च जीवति येषां पितामहः, पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात् । यस्य पिता प्रेतः स्यात् स पित्रे पिण्डं निधाय पितामहात् परं द्वाभ्यां दद्यात् । मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः । मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥ ’ इति । अत्र च प्रमीतमातृमातामहोऽपि जीवत्पितृकः पितुः पित्रादीनिव तदीयानेव मात्रादीन्मातामहादींश्चोद्दिश्य श्राद्धं कुर्यादिति चेत्प्रथमवाक्ये विवक्षितार्थः स्यात्तदा ‘ येषां पितामहः कुर्यात्तेषां कुर्यात् ’ इति सानुषङ्गे द्वितीयवाक्ये तथैव विवक्षाऽऽपद्येत । ततश्च स्वीयानां मात्रादीनां मातामहादीनां पितुर्मात्रादीनां मातामहादीनां च प्रमीतानां परित्यागेन पितामहस्य मात्रादीन्मातामहादींश्चोद्दिश्योद्वाहपुत्रजननादौ जीवत्पितृपितामहस्य श्राद्धानुष्ठानमापद्येत । तथा ‘ मातामहानामप्येवम् ’ इत्यतिदेशात् जीवन्मातामहस्य स्वीयानां पैतृकाणां पैतामहानां च मात्रादिमातामहादीनां च प्रमीतानां परित्यागेन मातामहस्य मात्रादीन् मातामहादींश्चोद्दिश्य तदनुष्ठानं स्यादिति प्रथममेव वाक्यं पितुः पित्रादिपार्वणस्यैव प्रापकमिति स्वीकृत्य जीवत्पितृकस्तेन सह स्वीयानामेव मात्रादीनां मातामहादीनां च श्राद्धं कुर्यादिति स्वीकर्तुमुचितमिति– तन्न, यतो ‘ येभ्य एव पिता दद्यात् ’ ईदृशार्थकानां विष्णुस्मृत्यादिवाक्यानां प्रतिप्रसवत्वं तदैव घटते यदा ‘ न जीवन्तमतिक्रम्य ’ इत्यादीनां जीवत्पितृकं प्रति पितुः पित्राद्युद्देश्यकपार्वणनिषेधपरत्वं भवति । न चैतत्, प्रतिप्रसवत्वाभिमतवाक्यभिन्नस्य तादृशपार्वणप्रापकस्य निषेधापेक्षितस्याभावात् तत्तच्छ्राद्धविधिषु पित्रादिशब्दानां ससंबन्धिकत्वमहिम्ना कर्तुः पित्रादीनामेव प्रतीत्याः तैस्तादृशपार्वणप्राप्तेरनाशङ्क्यत्वात् निषेधस्य च ‘प्रेतेभ्य एव निपृणीयात् ’ इति पितृयज्ञप्रकरणस्थाश्वलायनोक्तितुल्यप्रवृत्तिकेन ‘ जीवमाने न देयं स्याद्यस्माद्भरतसत्तम । तस्माज्जीवत्पिता कुर्याद्द्वाभ्यामेव न संशयः ॥ ’ इति भविष्यपुराणवचनेन प्राप्तस्य मृतपुंद्वयमात्रोद्देश्यकप्रदानस्य निषेधकतयोपपत्तेः । शक्यते च हारीतवचनस्थानग्निकं प्रति मात्रादिपार्वणविषयेऽपि प्रतिप्रसवत्वं वक्तुम्, अनायासेन तस्यापि वृद्धितीर्थादौ मैत्रायणीयप्राप्तस्य सुमन्तुवचनेन निषिद्धत्वात् । यत्तु जीवत्पितृपितामहेन पितामहमात्राद्युद्देशेन श्राद्धं स्यादित्युक्तं तन्नानिष्टम्, पितुर्मात्राद्युद्देशेनेव तदुद्देशेनापि प्रमाणसिद्धस्य तदनुष्ठानस्य स्वीकर्तुमुचितत्वात् । यत्तु ‘ मातामहानामप्येवम् ’ इत्यतिदेशमूलकमनिष्टापादनं तत्तदर्थाज्ञानविजृम्भितम् । अत्र हि मातामहानां श्राद्धं पितृपार्वणवत् कर्तव्यमुचितमन्त्रोहयुक्तमित्यतिदिश्यते । इत्थमतिदेशेन च यथा विसर्जनान्तान्यङ्गान्यतिदिश्यन्ते तथाऽव्यवहितपूर्वग्रन्थोक्तक्रमेणैकद्यादिजीवननिमित्तात् व्युत्क्रममरणनिमित्ताच्च पितृपार्वणगता देवताव्यवस्थाऽपि, अङ्गत्वाविशेषात् । न चैवं मात्रादिश्राद्धं पितृपार्वणाङ्गं येनातिदिश्येत । न च विष्णुस्मृतिव्याख्यातारोऽपि ‘ मातामहानामप्येवम् ’ इति वचस इतरेतिकर्तव्यतातिदेशपरतामिवोक्तविधदेवताव्यवस्थातिदेशपरतां मन्यमाना अपि मात्रादिपार्वणातिदेशपरतां मन्यन्ते । मन्यन्ते च ‘ स येषां पिता कुर्यात् ’ ‘ येषां पितामहः ’ इत्यनयोर्मात्रादिमातामहादिपार्वणगोचरतामपि । युक्तं चैतत्, येषामिति यच्छब्देन पितृकर्तृकश्राद्धोद्देश्यतायाः पुत्रकर्तृकश्राद्धोद्देश्यत्वव्याप्यत्वप्रतीतेः । यद्यत्कृतकं तदनित्यमितिवद्येभ्य एव पिता दद्यादिति यच्छब्दोपबद्धैवकारेण वीप्साप्रतीतेश्च, ‘ यमेव धार्तराष्ट्रं तु भीमसेनोऽभ्यवेक्षते । क्षणमात्रेण तं हन्ति व्याघ्रो मृगगणं यथा ॥ ’ इतिवत् ।

अतः ‘ येभ्य एव पिता दद्यात् ’ ईदृशशास्त्रानुसारिण्यनुष्ठाने पितृकर्तृकश्राद्धोद्देश्यपितृमातृमातामहाद्युद्देश्यकश्राद्धत्रयस्य कर्तव्यत्वात् न पुत्रेण आत्मीयमात्राद्युद्देशेन श्राद्धसंभवः । न चाऽऽश्वलायनपरिशिष्टानुसारिण्यनुष्ठाने पितुः पुत्राद्युद्देशेन तत्संभव इति प्रागेवाऽऽवेदितम् । अतस्तदुभयार्थसमुच्चयोक्तिः साहसमात्रम् । सत्यपि विष्णुस्मृतेः सुतसंस्कारसाधारण्ये आश्वलायनशाखिभिस्तत्परिशिष्टोक्त एव पक्षः संभवे कर्तु-

मुचितः, 'बह्वल्पं वा स्वगृह्योक्तम्' इति स्मृतेः। कुलपरम्परायातत्वेन यदि तच्छाखिनोऽपि विष्णुस्मृत्युक्तमाचरन्ति, आचरन्तु। न तूक्तसमुच्चयः परम्परायातोऽस्ति। एवं च जीवत्पितृमातामहेन यदा मातृपार्वणमात्रेण नान्दीश्राद्धसिद्धिरङ्गीक्रियते, न तत्र देवा अपि, श्राद्धहेमाद्रिसमुदाहृतेन 'नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च। मातृश्राद्धं तु युग्मैः स्याददैवं प्राङ्मुखैः पृथक्॥' इति वचनेन पूर्वाह्णादिकालभेदेन पार्वणत्रयानुष्ठानपक्षे पार्वणान्तरासाहित्येन क्रियमाणे मातृश्राद्ध इवोक्तविधमातृश्राद्धेऽपि तादृशे अदैवत्वबोधनात्। नान्दीश्राद्धमात्रेऽपि च विश्वेदेवाः कृताकृताः, 'विश्वेदेवविहीनं तु केचिदिच्छन्ति मानवाः। युग्माश्चात्र द्विजाः कार्यास्ते पूज्याश्च प्रदक्षिणम्॥' इति तत्रैव मार्कण्डेयवचनादित्यलम्।

* संकौ. २६–२९

(५) तदिह सप्त पक्षाः सिद्धाः। पित्रादित्रयान्यतरसत्त्वेऽनधिकार इत्येकः। जीवन्तमुल्लङ्घ्यान्येभ्यो दद्यादिति द्वितीयः। मृतमात्रस्यैव जीवदनतिक्रमेण दद्यादिति तृतीयः। जीवदनुज्ञया ततोऽन्येषामपीति तुर्यः। जीवन्तं भोजयित्वाऽन्ययोरिति पञ्चमः। त्रीन् पिण्डान् निरूप्य जीवतः पिण्डं तेनैवाऽऽदयित्वेति षष्ठः। जीवति होमान्तं कृत्वाऽन्येषां कुर्यादिति सप्तमः। एषां च यथाशाखं यथाचारं च व्यवस्थेति गोविन्दार्णवे। यत्तु मनुः— 'विप्रवद्वाऽपि तं श्राद्धे स्वकं पितरमाशयेत्।' (मस्मृ. ३।२२०) इति, 'पितुः स नाम' (मस्मृ. ३।२२१) इत्यग्रिमं 'पितामहो वा तच्छ्राद्धे भुञ्जीतेत्यब्रवीन्मनुः।' (मस्मृ. ३।२२२) इति च, तल्लोकविद्विष्टत्वादननुष्ठेयम्। यदपि तेनोक्तम्— 'पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः। पितुः स नाम संकीर्त्य कीर्तयेत् प्रपितामहम्॥' (मस्मृ. ३।२२१) इति पिण्डदानादिषु पितृसंबन्धकीर्तनपूर्वकमेव तन्नाम गृह्णीयादिति, तस्यार्थः। पितुः पित्रादीति यावत्। अग्रे तु विष्ण्वादिनोक्तमेव। यदा तु त्रयोऽपि जीवन्ति तदा नैव कुर्यात्, तदाऽक्षतमातृपूजामात्रं कार्यम्। एवं मातृमातामहमातामहीश्राद्धेष्वपि द्रष्टव्यम्। इदमपि सर्वं तीर्थश्राद्धादिविषयमेव। नान्दीश्राद्धे तु येषां मते पित्रादय एव देवतास्तस्य प्रौष्ठपदीत्रिविषयत्वात् तेषां तद्विषयमपि। येषां तु तत्रानाश्वासस्तेषां न तद्विषयमिति केचित्। वस्तुतस्तु प्रकरणाद्यथा तस्य तद्विषयत्वमेवमितोऽपि वचनजातात्, अन्यथा वृद्धावित्यादेरानर्थक्यं स्पष्टमेवेति तदेव मतं सम्यगिति बोध्यम्। व्युत्क्रममृते सपिण्डीकरणमस्तीत्येतस्यापीदमेव वचनजातं मूलमिति तदभिप्रायकमिदम्। यथैवं सति अग्रिमविज्ञानेश्वरविरोधो न तथा तत्रैव वक्ष्यते। न चोक्तवचनजातात् त्रिषु जीवत्स्वकरणं लभ्यते, 'दद्यात् त्रिभ्यः परेभ्यस्तु जीवेच्च त्रितयं यदि।' इति प्रागुक्तयमात्तत्रापि करणं लभ्यत इति मिथो विरोध इति वाच्यम्, तादृशस्थले प्रौष्ठपदीश्राद्धीयदेवतानामेवोद्देश्यत्वमिति तदाशयात्। तथा च व्रीहियववद्विकल्पस्तत्र। यद्वा तेषामप्यक्षतमातृपूजावत् पूजनमात्रं कार्यमित्याशयात्। दद्यादित्यस्य पूजामिति शेषः। अत एव 'तेन श्राद्धं न कर्तव्यं विधिलोपं च यादव। पूजनीयाश्च पितरः पितामहपितुः स्वयम्॥' इति प्रागुक्तविष्णुधर्मोक्तिसंगतिः। तत्र मन्त्रहीनमित्यस्य तन्मन्त्रहीनमित्यर्थः।

न चैवमपि 'ओं संपन्नमिति विसृजेत्' इत्यस्मादग्रे आश्वलायनगृह्यपरिशिष्टे उक्तम्— 'तदेतत्पुंसवनाद्यपत्यसंस्कारेषु अग्न्याधेयादिषु श्रौतेषु पूर्तेषु च क्रियते। महत्सु पूर्वेद्युः, तदहरल्पेषु। तदिदमेके मातॄणां पृथक् पूर्वमथ पितॄणां ततो मातामहानामिति त्रितयमिच्छन्ति। तस्मात् जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात्। तस्यां जीवन्त्यां पितृमातामहयोः कुर्यात्। पित्रोर्जीवतोः मातामहस्यैव कुर्यात्। त्रिषु जीवत्सु न कुर्यात्' इति, तद्विरुध्यतैवेति वाच्यम्, तत्र तस्मादित्यस्य पूर्वसाकाङ्क्षत्वेन त्रितयस्येष्यमाणत्वादिति तदर्थसत्त्वेनैकीयमताभिप्रायकत्वस्य तत्र सत्त्वात्। अत एव सर्वैकवाक्यता। सुतसंस्कारेष्विति तवाप्युपलक्षणमन्येषामपि पूर्वानुरोधात्। त्रिषु वर्गत्रयाद्येषु। आदरे वीप्सा।

---

* संव., संकौगतम्।

तस्मात्सर्वैरपि जीवत्पितृभिः 'येभ्य एव' इत्याद्युक्तरीत्यैव नान्दीश्राद्धं कार्यमिति सिद्धम्। तत्र महत्सु उपनयनादिषु, अल्पेषु पुंसवनादिषु। पृथक् दिनभेदेन (पूर्वाह्णादिभेदेन) वा। त्रितयं श्राद्धत्रयम्, भिन्नप्रयोगमित्यर्थः। तत्राऽऽद्ये गार्ग्यादिरुक्तः ('तत्राऽऽद्ये मातृकं कर्म द्वितीयेऽहनि पैतृकम्। उत्तरेद्युर्भवेच्छेषम्') । द्वितीये शातातपः— 'पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥' इति। अत्रैके इत्युक्त्या सहप्रयोगः स्वेष्टत्वेन सूचितः। स चानुकल्पत्वेन वृद्धमनुनोक्तः प्राक्। पिण्डपितृयज्ञविषये तु प्रागुक्तकात्यायनसूत्रात् कातीयानां तथैव। तैत्तिरीयाणामपि प्रागुक्तापस्तम्बसूत्रात्तथैव। प्रागुक्तयमोऽप्यत्रानुसंधेयः। एवमन्यस्य यस्य कल्पसूत्रे तथोक्तं तथैव तेनानुष्ठेयमिति सर्वं चतुरस्रमिति दिगिति।

बाल. १।२५० पृ. ५७६–५७७

(६) धर्मसिन्धुकारोऽपि इत्थमेव वचनानां व्यवस्थामभिप्रेत्य 'येभ्य एव पिता दद्यात्' इति पक्षस्य वर्गाद्यजीवने तत्पार्वणलोपपक्षस्य च द्वितीयविवाहादिस्वसंस्कारसुतसंस्कारभेदेन व्यवस्थामङ्गीचकार, पक्षद्वयस्यैच्छिकत्वं च 'केचित्तु' इत्यादिना प्रतिपादयामास। 'येभ्य एव पिता दद्यात्' इति पक्षमेव सर्वत्राङ्गीकृत्य तत्र च स्वेन पित्रा वा श्राद्धकरणे पितॄणां समानत्वात् पितरि जीवति सुतसंस्कारेषु द्वितीयविवाहादिस्वसंस्कारेषु च सर्वत्र पित्रैव नान्दीश्राद्धं कर्तव्यम्, समाचारादिति वदन्ति। सर्वत्र 'येभ्य एव' इति पक्षस्य स्वीकारेऽपि नान्दीश्राद्धं स्वेनैवानुष्ठेयम्, वचनेन तथैव बोधनादिति युक्तं पश्यामः। गर्भाधानस्य साक्षात्सुतसंस्कारत्वाभावेऽपि स्वसंस्कारत्वाभावात् तत्रापि 'जीवेत्तु यदि वर्गाद्यः' इति द्वारलोपपक्ष एवाऽऽश्रयणीयो व्यवस्थितत्वपक्षे। ऐच्छिकत्वपक्षे तु न शङ्केति दिक्।

¶ संदी. ६८–६९

¶ शेषं संकौगतम्।

## कौषीतकिगृह्यसूत्रम्

नान्दीश्राद्धपरिभाषा

**'अथात आभ्युदयिकम्। आपूर्यमाणपक्षे पुण्याहे। मातृयागं कृत्वा। युग्मान् वेदविदो ब्राह्मणानुपवेश्य। पूर्वाह्णे। प्रदक्षिणमुपचारः। पितृमन्त्रवर्जं जपः। ऋजवो दर्भाः। यवैस्तिलार्थः। दधिबदराक्षतमिश्राः पिण्डाः। 'नान्दीमुखान्पितॄनावाहयिष्ये' इत्यावाहने। 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यक्षय्यस्थाने। 'नान्दीमुखान्पितॄन्वाचयिष्ये' इति वाचने। 'संपन्नम्' इति तृप्तिप्रश्ने। समानमन्यदविरुद्धमिति॥**

आभ्युदयिकं श्राद्धं वक्ष्यामः। पैतृकमन्त्रा न जप्याः। ऋजवो दर्भाः। यवैस्तिलार्थः। तृप्तिप्रश्ने 'संपन्नम्' इति पृच्छेत्। दधिबदराक्षतमिश्राः पिण्डाः। 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यक्षय्यस्थाने। शेषं समानं पार्वणेन। कौगृसं.

## शाङ्खायनपरिशिष्टम्

नान्दीश्राद्धात्प्राक् वैश्वदेवानुष्ठानम्

**'आदौ वृद्धौ क्षये चान्ते दर्शे मध्ये महालये। एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते॥**

(१) अत्र साग्निरनग्निर्वा आदौ वैश्वदेवं कुर्यात्, 'आदौ वृद्धौ ... विधीयते॥' इति आशार्के शाङ्खायनपरिशिष्टात्। हेमाद्रौ तु— 'शेषमन्नमनुज्ञाप्य वैश्वदेवक्रियां ततः। श्राद्धाह्नि श्राद्धशेषेण वैश्वदेवं समाचरेत्॥' इति चतुर्विंशतिमतान्नान्दीश्राद्धेऽप्यन्ते वैश्वदेव उक्तः। बह्वृचानामपि वृत्त्यालोचनात्तथैव। पूर्वोक्तं तु येषां परिशिष्टं तद्विषयमन्यविषयं वा ज्ञेयम्।

(१) कौगृ. ४।४।१–१५.

(२) सिन्धु. १७५५; संकौ. ३१ दर्शे मध्ये महालये (मध्ये दर्शे तु पार्वणे); संग. ६५ (वृद्धावादौ क्षये चान्त्ये दर्शे मध्ये तु कुर्वते। महालये च पिण्डान्ते वैश्वदेवं विधीयते॥).

अत्र श्राद्धाङ्गतर्पणं नेत्युक्तं प्राक् ।

सिन्धु. १७५४–१७५५

(२) वृद्धिश्राद्धारम्भे श्राद्धीयात्पाकात्पाकान्तरेण वैश्वदेवः सर्वैः कार्यः, 'आदौ...विधीयते ॥' इति साङ्ख्यायनपरिशिष्टात्, अस्य बह्वृचैः पठ्यमानस्यापि होलाकाधिकरणन्यायेन सर्वसाधारण्यात् । यत्तु श्राद्धहेमाद्रौ– 'शेषमन्नमनुज्ञाप्य वैश्वदेवक्रियां ततः । श्राद्धाह्नि श्राद्धशेषेण सकलं तु समाचरेत् ॥' इति चतुर्विंशतिमतात् अन्ते वैश्वदेवाचरणमुक्तं तच्छ्राद्धसामान्यविषयत्वाद्विशेषशास्त्रानुरोधेनाशक्तं प्रत्यनुकल्पभूतपक्षान्तरविधायकम् । अनेनैवाऽऽशयेन श्राद्धसामान्यपुरस्कारेणैव कालहेमाद्रावपि ईदृशोपन्यासाच्च । तथा चोक्तं दीपिकायाम्– 'भिन्नान्नेन तु वैश्वदेविकमनुश्राद्धं चरेत्साग्निकः पश्चाद् भूतमखाद्यनग्निकजनस्त्वग्नौ कृतेर्वोत्तरम् । स्वस्त्युक्तेर्विकिरस्य चान्तरुत तत्पाकान्तरेणाऽऽचरेद्देवाख्यं मखमन्ततः पितृयजेः स्याद्भूतयज्ञोऽथवा ॥ श्राद्धान्नेन तदन्त एव सकलं स्याद्वैश्वदेवादिकम् ॥' इति । अत्र सकलं साग्निककर्तृकं निरग्निककर्तृकं च । न पूर्वोक्तेन सह तुल्यविकल्पः, 'पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः । पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥' इत्याद्यनेकविशेषशास्त्रविरोधात् ।

संकौ. ३१

## मैत्रायणीयपरिशिष्टम्

नान्दीश्राद्धे जीवत्पितृकस्याप्यधिकारः

**¶ 'उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।**
**तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥**

(१) जीवत्पितृकस्य षडेते श्राद्धकाला इत्यर्थः । पित्र्येष्टिश्चातुर्मास्येषु । सौमिके मखे पुरोडाशात्पिण्डदानम् । अत्र च पितृग्रहणमुपलक्षणार्थम्, यदाह विष्णुः– 'पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेभ्यः कुर्यात् । पितामहे जीवति येषां पितामहः । पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्' इति ।

अप. १।२१८ पृ. ४१८

(२) अत्र (सपितुः पितृकृत्येषु) केषुचिदपवादो मैत्रायणीयपरिशिष्टे दर्शितः– उद्वाहे इति । एतत्साग्निकाभिप्रायम् । अत एव सुमन्तुः– 'न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विज । येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ॥ पितामहेऽप्येवमेव कुर्याज्जीवति साग्निकः । साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे ॥' इति ।

‡ स्मृच. ३३८

(३) जीवतः पितुः पुत्रस्येति शेषः । अनादरेण (इति) वा षष्ठ्यर्थः । जीवन्तमनादृत्य तदूर्ध्वपितृदेवत्यकर्मकाला इत्यर्थः । उद्वाहे द्वितायादिविवाहे, 'नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः । अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् ॥' इति स्मृतेः । पुत्रजननं नामकरणादीनामुपलक्षणमिति निबन्धकाराः । पित्र्येष्टिश्चातुर्मास्येषु साकमेधपर्वणि प्रसिद्धा । सौमिके मखे तृतीयसवने सत्रेषु नाराशंसेषु पुरोडाशशकलपिण्डदाने । तीर्थे तत्प्राप्तौ । ब्राह्मण आयाते तत्संपत्तौ, 'द्रव्यं ब्राह्मणसंपत्तिः' इति याज्ञवल्क्येन तत्संपत्तेरपि श्राद्धकालतोक्तेः । स्मृत्यन्तरपि– 'वृद्धौ तीर्थे च संन्यस्ते ताते

---

¶ अस्य श्लोकस्य श्राकाव्याख्यानम् अग्रे 'नान्दीमुखान् पितॄन्०' इति पारस्करगृह्यपरिशिष्टश्राद्धसूत्रव्याख्याने द्रष्टव्यम् । सिन्धुव्याख्यानम् 'अनग्निकोऽपि' इति हारीतवचने द्रष्टव्यम् । संकौव्याख्यानम् 'तस्माज्जीवत्पिता' इति आश्वलायनगृह्यपरिशिष्टव्याख्याने (संका. पृ. १७२४–१७२५) द्रष्टव्यम् ।

(१) अप. १।२१८ पृ. ४१८ ; स्मृच. ३३८ पित्र्येष्ट्यां (पित्रेष्ट्यां) ; प्रपा. २० पित्र्येष्ट्यां (पुत्रेष्ट्यां) ; श्राका. ५१७ ब्राह्मण आयाते (ब्राह्मणमायाते) ; श्राप्र. १८ ; मुक्ता. ७५३ सरणम् ; लता. १४ ; सिन्धु. १७४२ : १७५९ पित्र्येष्ट्यां (पैत्र्येष्ट्यां) : १७६० चतुर्थपादमात्रम् ; संकौ. २७ स्मृचवत् ; श्रान. १४३ सरणम् : १४४ (=) पू. ; बाल. १।८९ पृ. २७० : १।२५० पृ. ५७१ स्मृचवत् ; पुम. ३८० उद्वाहे (विवाहे) ; कुभ. १७४३ (=) तृतीयपादमात्रम् : १७४४, १७४६ (=) निर्देशमात्रम् ; संर. १०५५ स्मृचवत् ; संदी. ६८,

‡ शेषं अपगतम् । प्रपा. स्मृचवत् ।

च पतिते सति। येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥' इति। यत्तु सुमन्तुनोक्तम्— 'न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः। येभ्य एव पिता दद्यात् तेभ्यः कुर्वीत साग्निकः ॥' इति जीवत्पितृकस्य श्राद्धं नास्तीति, तद्वृद्धिश्राद्धेतरविषयम्। 'अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि। येभ्य एव पिता दद्यात् तानेवोद्दिश्य पार्वणम् ॥' इति हारीते तस्यापि वृद्धिश्राद्धोक्तेः। श्राप्र. १८

(४) एते षट् काला इत्यर्थः। केचित्— उद्वाहोऽत्र द्वितीयादिः। प्रथमोद्वाहे पितुरेवाधिकारः। तदुक्तम्— 'नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः। अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् ॥' इत्याहुः। तन्न, प्रथमोद्वाहेऽपि पितुर्जीवत्पितृकत्वेन पुत्रोद्वाहप्रयुक्तश्राद्धानधिकारप्रसङ्गात्। तस्मादुद्वाहप्रयुक्तं नान्दीश्राद्धं यस्य यदा प्राप्तं तेन तदा कर्तव्यमित्यविशेषेण विधीयते, सङ्कोचकाभावात्। तच्च प्रथमे पितुरेव प्राप्तमिति तस्यापि जीवत्पितृकत्वे भवति। द्वितीयादौ तु पुत्रस्यैवेति तस्यापि जीवत्पितृकत्वे भवत्येव तदिति यथास्थितमेव साधीय इति। परिशिष्टचन्द्रिकायां तु प्रथमविवाहस्य संस्कारत्वात् द्वितीयविवाहे न श्राद्धम्। अत एव ब्रह्मपुराणे— 'सर्वे विद्याव्रतस्नाता विवाह्या ब्राह्मणादयः।' इत्यभिधाय 'नान्दीमुखेभ्यः श्राद्धं तु पितृभ्यः कार्यमृद्धये। ततो विवाहः कर्तव्यः शुद्धः शुद्धसुतप्रदः ॥' इति स्नातकस्यैव विवाहाङ्गश्राद्धकर्तव्यतोपदेशादित्युक्तम्। पित्र्येष्ट्यां चातुर्मास्येषु, तथा पिण्डपितृयज्ञे च। सौमिके मखे सोमादौ पुरोडाशात् पिण्डदाने च। लता. १४-१५

(५) एतच्च कर्माङ्गं श्राद्धम्। आन. १४४

(६) स्वस्य द्वितीयादिविवाहाङ्गभूतं नान्दीश्राद्धम्, स्वकीयापत्यस्य गर्भाधानादिविवाहान्तसंस्काराङ्गभूतं च, लक्षहोमतुलापुरुषादिशान्तिकपौष्टिककर्माङ्गभूतं च, चातुर्मास्यान्तर्गतमहापितृयज्ञे, सोमयागीयतृतीयसवने च पुरोडाशखण्डैः क्रियमाणं पिण्डदानम्, 'उत्पन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः।' इत्यादिनिगमाद्युक्तविशिष्टद्रव्यस्य, त्रिणाचिकेतत्रिमधुत्रिसुपर्णत्वाद्युत्तमगुणयुक्तब्राह्मणस्य च संपत्तौ विहितं च, तीर्थेषु परिगणिताः वा समुद्रगामिनीर्नदीः क्षेत्राणि वोद्दिश्य, प्रसङ्गाद्वा गमने तन्निमित्तकं तीर्थश्राद्धं तदङ्गभूतमादावन्ते च क्रियमाणं घृतदधिश्राद्धद्वयं च, वाणिज्याद्युद्देशेन गमने मध्ये प्रसङ्गाद्वयाप्राप्तौ सत्यां तन्निमित्तकं तीर्थश्राद्धं च, तच्चरमाङ्गभूतं घृतश्राद्धं द्वयं च, पञ्चस्वन्वष्टकासु विहितं च, पिण्डपितृयज्ञकरणपक्षे श्रौताग्निमता स्मार्ताग्निमता वा क्रियमाणं पाक्षिकं पिण्डदानम्, मातुः क्षयाहश्राद्धं च न निषिद्धम्।

तथा च मैत्रायणीयपरिशिष्टे— उद्वाहे इति। उद्वाहोऽत्र द्वितीयादिः, प्रथमे पितुरेवाधिकारात्। पुत्रजनने जातकर्मणि, इदमपत्यसंस्कारमात्रोपलक्षणम्। पित्र्येष्ट्यां चातुर्मास्यान्तर्गतायाम्, सौमिके मखे तार्तीयसवनिकैः पुरोडाशखण्डैः स्वचमसाधस्तात् पिण्डदानम्, ब्राह्मण आयाते 'त्रिमधुस्त्रिसुपर्णकः' इत्यादिगुणयुतविप्रसंपदि च। तथा च— 'अग्र्यः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा। वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥' इति सुमन्तुः। तथा च जीवतः पितुः पुत्रस्यैते श्राद्धकालाः षडिति सिद्धम्।

तथा च हारीतः— 'महानदीषु सर्वासु तीर्थेषु च गयामृते। जीवत्पिताऽपि कुर्वीत श्राद्धं पार्वणधर्मवत् ॥' इति। स्मृतिसंग्रहे तथा परिशिष्टे— 'अन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि। मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥' इति। 'येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः।' इति सुमन्तुः। 'अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि। येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम् ॥' इति हारीतः।

१।८९ पृ. २६९-२७०

षट्त्वसंख्या न्यूनत्वव्यवच्छेदाय। तेन तत्राऽऽवश्यकत्वं प्रतिपादितं भवति। संख्याया आधिक्याव्यवच्छेदकत्वादेव निमित्तान्तरमपि तत्रैवोक्तम्— 'आन्वष्टक्ये गयाप्राप्तौ सत्यां यच्च मृतेऽहनि। मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥' इति। वैष्णवादी-

न्यग्रेऽपि निमित्तान्तराणि वक्ष्यन्ते । गयायामित्येव सिद्धे प्राप्तौ सत्यामित्युक्तेः प्रासङ्गिकगयाप्राप्तौ सत्यामित्यर्थः । गयाश्राद्धोद्देशेन गयागमनं तु न । 'गयां प्रसङ्गतो गत्वा मातुः श्राद्धं समाचरेत् ।' इत्युक्तेः, 'दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् । न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥' इति लौगाक्षिकृतनिषेधाच्च ।

* बाल. १।२५० पृ. ५७१–५७२

(७) यत्तु– 'विवाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥' इति मैत्रायणीयपरिशिष्टवचनं तत् 'न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः । येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ॥ पितामहेऽप्येवमेव कुर्याज्जीवति साग्निकः । साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे ॥' इति सुमन्तुवचनैकवाक्यत्वात् साग्निविषयमेव । एवं च– 'वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥ अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि । येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम् ॥' इत्यादिवचनानि फलार्थिजीवत्पितृकादिविषयाणीति बोध्यम् । एतेन जीवत्पिता सुतसंस्कारेषु मातृमातामहयोरेवेति बह्वृचपरिशिष्टं बह्वृचविषयमेवेति निर्णयसिन्ध्वादय उपेक्ष्याः, विष्ण्वादिवचनहेमाद्र्यर्थाज्ञाननिबन्धनत्वात् । यत्तु, यदा जीवत्पितृकः पितामहादीनां श्राद्धं करोति, तदा 'येभ्य एव पिता दद्यात्' इति वचनात् पितुरेव मात्रादीनां मातामहादीनां च कुर्यादिति कैश्चिदर्वाचीनैरुक्तम्, तदयुक्तम्, जीवत्पिता मातृमातामहयोरेव कुर्यादिति मात्रादिश्राद्धस्य विधानात् । मात्रादिशब्दानां संबन्धिशब्दत्वेनोपस्थितस्वमात्रादिपरित्यागेनानुपस्थितपितृमात्रादिग्रहणस्यायुक्तत्वादिति ज्ञेयम् । पुम. ३८०

(८) 'उद्वाहे' इति वाक्ये षट्पदं न षट्स्वेवेति परिसंख्यार्थम्, त्रैदोष्यात्, 'आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।' इत्यादिवचनान्तरविरोधाच्च । किंतूपलक्षणम् । तत्रोद्वाहपदं स्वद्वितीयोद्वाहपरम् । पुत्रजनने इति संस्कारसामान्योपलक्षणम् । पित्र्येष्ट्यामिति द्वयम् उद्वाहादिचतुष्टयं वा यत्र प्रधाने जीवत्पितृकस्याधिकारस्तत्र तदङ्गपित्र्यस्योपलक्षणम्, साजात्यात् । तेनाग्न्याधानरुद्रानुष्ठाननववेश्मप्रवेशाश्रमान्तरस्वीकारतडागारामकूपाद्युत्सर्गतुलापुरुषादिमहादानदर्शपूर्णमासादिषु जीवत्पितृकस्य नान्दीश्राद्धाधिकारः । उत्तरार्धे तु 'तीर्थे ब्राह्मण आयाते' इत्येताभ्यां स्वतन्त्रं श्राद्धमुपलक्ष्यते । तदेव च 'आन्वष्टक्यं गयाप्राप्तौ सत्याम्' इति वचनोक्तमात्रान्वष्टक्यादित्रयमेव । न चैवमुक्तत्रयमात्रोपलक्षणे अहरहःश्राद्धसंक्रान्तियुगादिमन्वादिग्रहणादिश्राद्धादौ जीवत्पितृकस्याधिकाराभावे 'दर्शश्राद्धं गयाश्राद्धं श्राद्धं चाऽऽपरपक्षिकम् । न जीवत्पितृकः कुर्यात् तिलैः कृष्णैश्च तर्पणम् ॥' इति दर्शापरपक्षिकश्राद्धयोः प्राप्त्यभावान्निषेधानुपपत्तिरिति वाच्यम्, तीर्थे इत्यनेन प्राप्तस्य गयाश्राद्धस्यैवायं निषेधः, वाक्यान्तरेण गयाप्राप्तौ सत्यां मातृश्राद्धमात्रस्य विधानात्, तत्र दर्शश्राद्धापरपक्षश्राद्धे दृष्टान्त इति । तेन गयाश्राद्धेतरतीर्थश्राद्धम्, ब्राह्मणपदस्य द्रव्योपलक्षणत्वात् द्रव्यब्राह्मणप्राप्तिश्राद्धद्वयम्, मात्रान्वष्टक्यादिश्राद्धत्रयं चेति षट्सु स्वतन्त्रश्राद्धेषु जीवत्पितृकस्याधिकार इति । अथवा 'सपितुः पितृकृत्येषु अधिकारो न विद्यते ।' इति श्राद्धे सामान्यतो जीवत्पितृकस्याधिकारो निराकृतः । तत्र 'उद्वाहे पुत्रजनने' इत्यनेन विवाहादिषु तीर्थादौ च जीवत्पितृकः कर्ता विधीयते । तत्र पुत्रजनने इत्यनेन पुत्रजन्मनिमित्तकश्राद्धे विहितः स कर्ता आधानाद्यङ्गभूते आभ्युदयिकेऽतिदेशेन लभ्यते । अतिदेशश्च 'निषेककाले सोमे च' इत्यादिः प्राक् पारस्करेणोक्तः । तत्र सोमग्रहणमाधानाग्निहोत्रादीनां सर्वेषामुपलक्षणम् । एवं च जीवत्पितृकेण नान्दीश्राद्धं विनैवाऽऽधानादि कार्यमिति न भ्रमितव्यमिति । कृभ. १७४२–१७४४

(९) यत्तु प्रयोगपारिजाते 'न जीवतः पितुः कुर्याच्छ्राद्धमग्निमृते द्विजः । येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ॥' इति सुमन्तुवचनान्मैत्रायणीयपरिशिष्टोक्तविषयेष्वपि जीवत्पितृकस्य साग्नेरेवाधिकारो न

---

* शेषं लतागतम् ।

निरग्नेरिति प्रतिपादितम्, तदुद्वाहपुत्रजनननिमित्तक-नान्दीश्राद्धव्यतिरिक्ततीर्थश्राद्धादिविषयम्, 'अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि। येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम् ॥' इत्याचारमदनरत्नोदाहृतहारीतवचनेन सुमन्तुवाक्यापवादात्। साग्निरत्र श्रौताग्निमान् स्मार्ताग्निमांश्च। तदितरो निरग्निरित्यपि तत्रैवोक्तम्। अतश्च जीवत्पितृकस्य निरग्नेस्तीर्थश्राद्धादौ नाधिकार इति सिद्धम्। संर. १०५५–१०५६

## भारद्वाजगृह्यसूत्रम्

### नान्दीश्राद्धस्य पूर्वेद्युः कर्तव्यता, परिभाषा, प्रयोगश्च

[१]नान्दीश्राद्धस्य पूर्वपक्षे यथोपदेशं पूर्वेद्युर्वा युग्मान्ब्राह्मणान्भोजयेत्। प्रदक्षिणमुपचारः। अग्निमिद्ध्वा दूर्वाभिः संस्तीर्य भोजनस्थानेषु च पवित्रे कृत्वा पात्रे निधायोत्पूय यवान्निधाय प्रणीतावदुपचारं हविष्यं च दध्योदनं चाऽऽसाद्य 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यपां प्रतिग्रहणं विसर्जनं च। पश्चादेवं विश्वेभ्यो देवेभ्यः। 'नान्दीमुखेभ्यः पितृभ्यः स्वाहा' इति हुत्वोपस्तीर्य सर्वं द्विर्द्विरवद्यति। अभिघार्य वैष्णव्यर्चोपस्पर्शयित्वाऽऽचान्तेषु पूर्णपात्रं दत्त्वा गोमयेनोपलिप्य दध्योदनशेषं यवोदकेनावोक्ष्य न्युप्य पश्चात्परिषेचनम्। संपन्नमिति पृष्ट्वा 'इडा देवहूः' इत्यनुवाकशेषं जपेत्। ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयति ॥

## आग्निवेश्यगृह्यसूत्रम्

### नान्दीश्राद्धस्य पूर्वेद्युः प्रधानदिवसे चानुष्ठानव्यवस्था प्रयोगश्च

[२]अथातो नान्दीमुखेभ्यः पितृभ्यः पूर्वेद्युः कर्म व्याख्यास्यामः। आपूर्यमाणपक्षे पुण्ये नक्षत्रे श्वः करिष्यामीति श्वोभूते वाऽन्नं संस्कृत्य शुचीन् श्रोत्रियान् ब्राह्मणानामन्त्रयते। शुचि शुक्लमनाद्रैमाच्छाद्य यज्ञोपवीत्यप आचम्य चतुर्वारं शुक्लान् बलीन् हरति– 'दधितण्डुलसुरभिशुक्लाः सुमनसः' इति। अग्न्यायतने प्रागग्रान् दर्भान् संस्तीर्य तेष्वष्टौ बलीन् ददाति– 'अग्नये सोमाय प्रजापतये विश्वेभ्यो देवेभ्य ऋषिभ्यो भूतेभ्यः पितृभ्यः सर्वाभ्यो देवताभ्यो नमः' इति। हविष्यमन्नं ब्राह्मणेभ्यः प्रदापयति च। दध्ना माषमत्स्यमांसभक्ष्याशनमित्यपरम्। अथ चतुष्टयमादाय व्रीहियवपुष्पसर्षपाणीति सह तैरेवोदकुम्भमादाय 'ओं मनः समाधीयताम्' 'प्रसीदन्तु भवन्तः' इत्युक्त्वा 'सप्रणवनान्दीमुखाः पितरः प्रीयन्ताम्' इत्येवम्। यथार्थमितरे प्रतिब्रूयुः ॥

अस्य कर्मणः पुण्याहं वक्ष्यामः। स्थण्डिलाद्युपनान्दिं कृत्वाऽपआदिशिखान्तिकं करोति। पुनःकल्पनाद्यानमस्कारं कृत्वाऽन्वाहार्यादिप्रणवादिकं करोति। अन्यत्र जातकर्मनामकरणयोः पूर्वेद्युः। संतिष्ठते नान्दीश्राद्धः ॥

## पारस्करगृह्यपरिशिष्टश्राद्धसूत्रम्

### नान्दीश्राद्धस्य परिभाषा प्रयोगश्च

[१]आभ्युदयिके प्रदक्षिणमुपचारः ॥

(१) पुत्रजन्मादौ अभ्युदये यत् श्राद्धं तत् आभ्युदयिकमुच्यते। तत्र प्रदक्षिणमुपचारः। प्रदक्षिणग्रहणात् यज्ञोपवीतिना प्राक्संस्थमुदक्संस्थं वा प्राङ्मुखेन वा कर्तव्यतादि भवेत्। कभा.

---

(१) भागृ. ३।१६.

(२) आग्निगृ. २।३।२.

(१) पागृश्रा. ६; अप. १।२४९ पृ. ५१८; श्राक. २७०; चश्रा. १५६०; चदा. १४१; स्मृसा. १०८ आभ्यु (अभ्यु); पमा. ७८३ आभ्युदयिके + (श्राद्धे); मपा. ६३२ प्रदक्षिणमु (दक्षिणामु); प्रपा. १५; मर. १६९ स्मृसावत्; श्राकौ. ५१०; यजुःश्रात. ४९७ आभ्युदयिके (आभ्युदयिकश्राद्धे); श्रासौ. १२१; लता. ११८; संग. ७७ (आभ्युदयिके०); संदी. ५८: ६२ (प्रदक्षिणमुपचारः) एतावदेव.

( २ ) आभ्युदयिके पुत्रजन्म–विवाहादिरूपाभ्युदयनिमित्तके श्राद्धे । प्रदक्षिणग्रहणेन यज्ञोपवीतित्व-प्रागुदङ्मुखत्व– प्रागुदक्संस्थत्वं चोपलक्षितम् । उपचारः अनुष्ठानम् । चश्रा. १५६०

(३) इत्थं पार्वणैकोद्दिष्टसपिण्डनश्राद्धेषु अप्रदक्षिणादिधर्माननुपदिश्य इदानीं स्वीकृतत्वेन तद्विपरीतप्रदक्षिणादिधर्मान् प्रतिपिपादयिषुराभ्युदयिकश्राद्धमारभते– आभ्युदयिके इति । अभ्युदयो वृद्धिरित्यनर्थान्तरम्, ‘अग्न्याधानाभिषेकादाविष्टापूर्ते स्त्रिया ऋतौ । वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा ॥’ इति वृद्धगार्ग्यवचनात् । आदिशब्दः पुत्रजन्मविवाहाद्यर्थः । तथा च स एव– ‘पुत्रोत्पत्तिप्रतिष्ठासु तन्मौञ्जीत्यागबन्धने । चूडायां च विवाहेषु वृद्धिश्राद्धं विधीयते ॥’ इति । ननु च नान्दीमुखं कर्माङ्गं चेति संज्ञाभेदात् कथमाभ्युदयिकं वृद्धिश्राद्धमिति ? उच्यते– वृद्धिश्राद्धमेव नान्दीमुखमिति । संज्ञाभेदः प्रयोगविशेषणार्थः । तथा च वृद्धवसिष्ठः– ‘पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् । तत्र नान्दीमुखमिति विशेषः समुदाहृतः ॥’ इति । यत्तु कर्माङ्गमिति संज्ञान्तरं तदपि वृद्धिधर्मातिदेशेन तद्रूपमेव संज्ञाभेदेऽपीत्यविरोधः । तथा च पारस्करः– ‘निषेककाले सोमे च सीमन्तोन्नयने तथा । ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥’ । लौगाक्षिरपि– ‘नामान्नचौलगोदानसोमोपनयपुंसवे । स्नानदानविवाहेषु नान्दीश्राद्धं विधीयते ॥’ इति । अत्राऽऽभ्युदयिक इति वदता मातृस्थापनाद्यङ्गेषु प्रागुदक्संस्थतैवोक्ता दैविकत्वादिति गम्यते । अत एव प्राङ्मुखस्य कर्तुरुदक्संस्थतायामप्रादक्षिण्यमपि स्यादित्याहुः । तत्रापि प्रादक्षिण्यमेवेत्युदङ्मुखस्यैव कर्तृत्वमित्यन्ये । अत्रानूचानाः प्रमाणम् ।

अत्रैतच्चिन्त्यते– किं वृद्धिश्राद्धं दिनत्रये कार्यमुतैकदिने एवेति । तत्रैके आहुः– एकस्मिन् कर्माह एवेति, ‘मातृभ्यः प्रथमं दद्यात् पितृभ्यस्तदनन्तरम् । ततो मातामहेभ्यश्च वृद्धौ श्राद्धत्रयं स्मृतम् ॥’ इति वचनादिति, तदयुक्तम्, अस्यापि त्रिदिनविधायकत्वप्रतिभानात् । तथा च स्मृतिः– ‘मातृश्राद्धं तु पूर्वेद्युः कर्माहन्येव पैतृकम् । मातामह्यं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं भवेत् ॥’ । वसिष्ठोऽपि– ‘पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा । उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु ॥’ इति । नन्वेकदिनकरणं दिनत्रयाशक्तौ कर्माहे वेदितव्यमिति चेत्, तदपि न, तत्रापि पूर्वेद्युरेव विहितत्वात् । तथा च– ‘पृथग्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे । श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम् ॥’ इति । तान्त्रिकमित्येकदिने विशिष्टविधिः । वृद्धमनुरपि– ‘अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधैः । पूर्वेद्युरेव कर्तव्यं पूर्वाह्णे मातृपूर्वकम् ॥’ इति । यत्तु एकदिने एवात्राऽऽचरन्ति तद्वचनादर्शननिबन्धनमित्यवधेयम्, जातकर्मादिविषयं वेत्यविरोधः । पठन्ति च– ‘पुंसवने च सीमन्ते अन्नचौलोपनायने । गोदाने स्नान उद्वाहे नान्दीश्राद्धं पुरोहितम् ॥’ इति । अतश्चाविहितेषु पूर्वेद्युरेवेति । श्राका.

( ४ ) पुत्रजन्मविवाहादौ अभ्युदये यच्छ्राद्धं तदाभ्युदयिकशब्देनोच्यते । तत्र प्रदक्षिणमुपचारः । प्रदक्षिणग्रहणेन यज्ञोपवीतिना प्राक्संस्थमुदक्संस्थं वा प्राङ्मुखेन ( उदङ्मुखेन ) वा कार्यमिति लभ्यते । गभा.

( ५ ) आभ्युदयिके अभ्युदयसाधने श्राद्धे । एतेनाभ्युदयोऽस्य श्राद्धस्य फलमिति दर्शितम् । श्राकौ. ५११

( ६ ) अस्यार्थः– पुत्रजन्मादावभ्युदये यत् श्राद्धं तदाभ्युदयिकमुच्यते । प्रदक्षिणं देवपितृकर्मकरणाय दक्षिणावर्तेन गन्तव्यम्, न वामावर्तेन । एतेन दक्षिणत आरभ्य आसनादिसंप्रदानं मैथिलापिपालरायमुकुटाद्युक्तं युक्तम् । अत्र ‘आभ्युदयिके युग्मा ब्राह्मणाः, समूला दर्भाः, प्राङ्मुखेभ्य उदङ्मुखो दद्यात्’ इति आश्वलायनवचनात् मात्रादिब्राह्मणानां प्राङ्मुखत्वमिति पार्वणाद्विशेषः । ततश्च पश्चिमदिशि नैर्ऋतकोणे देवानाम्, तदुत्तरे मातॄणां तदुत्तरे पितॄणां तदुत्तरे मातामहानामासनानि प्रागग्रदर्भद्वययुक्तानि परिकल्प्य दक्षिणावर्तेन कर्म कुर्यात् । एवमेवापिपालमैथिलरायमुकुट-

प्रभृतिपद्धतिषु । न च अन्वष्टकायां देवब्राह्मणदक्षिणतो मात्रादिब्राह्मणानामुपवेशनस्य दृष्टत्वात् अत्रापि तदनुसारेण वायुकोणे देवब्राह्मणानुपकल्प्य प्रादक्षिण्येन गत्वा निर्ऋतिकोणादारभ्य मात्रादिब्राह्मणोपवेशनं युक्तमिति वाच्यम् । अन्वष्टकायां वामाचारानुरोधः, न देवब्राह्मणस्य दक्षिणपार्श्वे मात्रादिब्राह्मणोपवेशनम् । अत्र च दक्षिणोपचारेण तदितरकल्पनस्यादोषात् अन्वष्टकायां देवब्राह्मणसंनिधानक्रमेण मातृपितृमातामहब्राह्मणानामुपवेशनस्य दृष्टत्वादत्रापि तथैव युक्तत्वाच्च । एवं च 'दध्यक्षतैः सबदरैः प्राङ्मुखोदङ्मुखोऽपि वा । दैवतीर्थेन वै पिण्डं दद्यात् कायेन वा नृप ॥' इति विष्णुपुराणीयेन पिण्डदाने उदङ्मुखत्वाभिधानमपि यजुर्वेदिपरम् । आसनादिदाने उदङ्मुखत्वस्य प्राप्तत्वात् पिण्डदानेऽपि तथैव युक्तत्वात् । प्राङ्मुखपिण्डदाने आवाहितपितॄणां पृष्ठस्थतापत्तेः । यजुःश्रात. ४९८–४९९

(७) उपचरणम् उपचारः, अनुष्ठानं करणमिति यावत् । तेनात्र सर्वमनुष्ठानं प्रदक्षिणं भवतीत्यर्थः । अत्र प्रदक्षिणग्रहणं कर्मकर्तृनिष्ठसकलदेवधर्मोपलक्षणार्थम् । ततश्च प्राक्संस्थत्वोदक्संस्थत्वोपवीतित्वप्राङ्मुखोदङ्मुखत्वदक्षिणजानुनिपातित्वदेवतीर्थत्वत्वादिः दैवधर्मः कृत्स्नोऽत्र भवति । ‡ संग. ७७

'पूर्वाह्णे ॥

(१) पूर्वाह्णे, नापराह्णे । कभा.

(२) कालमाह– पूर्वाह्णे इति । श्राद्धं कुर्यादिति शेषः । एतच्च सकलं दैवधर्मोपलक्षणम् । तेनोपवीति(त्व)प्रागुदङ्मुख(त्व)दक्षिणजानुपातदेवतीर्थप्रागुदक्संस्थाननमस्कारादिदैवधर्मः सर्वोऽत्र प्राप्नोतीत्यर्थः । तथा च प्रचेताः– 'अपसव्यं न कुर्वीत न कुर्यादप्रदक्षिणम् । प्राङ्मुखो देवतीर्थेन क्षिप्रं देशविसर्जनम् ॥ दक्षिणं पातयेज्जानु देवान् परिचरेत्सदा । निपातो नहि सव्यस्य जानुनो विद्यते क्वचित् ॥ यथैवोपचरेद्देवांस्तथा वृद्धौ पितॄनपि । दध्यक्षतैः सबदरैः प्राङ्मुखोदङ्मुखोऽपि वा ॥'। तथा 'पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पैतृकम् । एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥' इति । दैविकं द्वादश्यादिषु वैष्णवम् । तथा च विश्वामित्रः– 'देवानुद्दिश्य क्रियते यत्तु दैविकमुच्यते । तन्नित्यश्राद्धवत्कुर्याद् द्वादश्यादिषु यत्नतः ॥' इति । ननु च 'प्रातर्वृद्धिनिमित्तकम्' इत्यनेन प्रातरेवास्य विहितत्वात्कथं पूर्वाह्ण इति । उच्यते– प्रातःशब्देन पूर्वाह्णस्यैवोक्तत्वादिति वक्ष्यमाणत्वात् । एवं च सति पूर्वाह्णः किं द्वेधा विभक्तेऽह्नि आद्यः, किं त्रेधा विभागाद्वा ? उच्यते– देवमानुषपित्र्यकालापेक्षया विभागौचित्यात्त्रिधा विभाग एव ग्राह्य इत्यदोषः । तथा च श्रुतिः– 'पूर्वाह्णो देवानां मध्यंदिनं मनुष्याणामपराह्णः पितॄणाम्' इति । नन्वेवमपि श्रुतिरेव पुनः अह्नः 'पूर्वाह्णो देवा अपराह्णः पितरः' इति द्विधैवाऽऽह, तत्कथं त्रिधा विभाग एवेति । नैवम्, सामान्येनास्याः श्रुतेराभ्युदयिकादन्यपित्र्यविषयत्वात् । यत्तु 'पितॄनप्यत्र देववत्' इत्यतिदेशेन 'प्रागावर्तनादह्नः कालं विद्यात्' इति गोभिलसूत्रेण च द्विधा विभागेन मध्याह्नो(? पूर्वाह्णो)ऽभिहितः स पाकयज्ञादिदैवकर्मविषयः । अन्यथाऽपराह्णे पाकयज्ञसंभवात् । तस्मात्त्रिभाग एव ग्राह्य इति सिद्धम् । तथा च गार्ग्यः– 'ललाटसंमिते भानौ प्रथमः प्रहरः स्मृतः । स एवाध्यर्धसंयुक्तः प्रातरित्यभिधीयते ॥'। अध्यर्धमधिकार्धम् । सार्धप्रहर इत्यर्थः । अग्न्याधानाभ्युदयिके तु गालवः– 'पार्वणं चापराह्णं तु वृद्धिश्राद्धं तथाऽग्निकम् ॥' इति । अग्न्याधाननिमित्तकमपराह्ण इत्यर्थः । * श्राका.

(३) एतदाभ्युदयिकं पूर्वाह्णे भवति, नापराह्णे । पुत्रजन्मादौ तु तत्काल एव । † गभा.

‡ संदी. संगगतम् ।

(१) पागृश्रा. ६ ; श्राक. २७० ; चदा. १४१ ; प्रपा. १५ (पूर्वाह्णः) ; संग. ७९ ; संदी. ५८, ६०.

* संग. श्राकागतं गभागतं च ।

† संदी. गभागतम् ।

(४) वृद्धिश्राद्धे कालमाह— 'पूर्वाह्णे' इति सूत्रम्। पूर्वाह्णे आभ्युदयिकं विधेयमित्यर्थः। अत्र पूर्वाह्णः त्रेधाविभक्तस्याह्नः प्रथमो भागः। ... पूर्वेद्युर्मातृपार्वणम्। कर्माहे पितृपार्वणम्। कर्मोत्तराहे मातामहपार्वणम्। अस्याप्यसंभवे पूर्वेद्युरेव पूर्वाह्णे मातृपार्वणं मध्याह्ने पैतृकमपराह्णे मातामहानाम्। तथा च हेमाद्रौ गार्ग्यशातातपौ— 'मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकम्। मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम्॥ पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥' इति। कालत्रयं त्वेतदन्यशाखाविषयम्। वाजसनेयिनां तु एकवचननिर्देशादेकस्मिन् पूर्वाह्णे आभ्युदयिकं कार्यमित्यर्थात् 'पूर्वाह्णे' इति सूत्रादाभ्युदयिकश्राद्धस्यैककालसाध्यतावगमात्। यदि तु मात्रादित्रीणि श्राद्धानि सूत्रकृता उक्तानि स्युस्तदा तेषां दिनत्रयसाध्यता पूर्वाह्णादिकालत्रयसाध्यता वा स्यात्। नैव सूत्रकृता त्रीणि श्राद्धान्युक्तानि, किंतु पितृमातामहपार्वणद्वयात्मकं श्राद्धद्वयमेवोक्तम्। अपि च मात्रादिश्राद्धानां कालभेदात् प्रयोगभेदो भविष्यति। सूत्रकारस्तु द्वयोर्द्वयोः प्रयोगैकत्वं दर्शयति— 'नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति'। एतच्च प्रकृतिमिव सहप्रयोगे एवोपपद्यते। 'प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत्। अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति पात्रतः॥ द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः। मातामहप्रभृतींस्तु एतेषामेव वामतः॥' इति छन्दोगपरिशिष्टे कात्यायनेन निःसंदिग्धं सहप्रयोगो दर्शितः। आद्यं पितरं द्वितीयं पितामहं तृतीयं प्रपितामहम्। नहि प्रयोगभेदे पित्रादीनां वामतो मातामहादीनामवनेजनं संभवति। यदपि— 'अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः। पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम्॥' इति वृद्धमनुवचनं तदपि शाखान्तरविषयम्। अत एव छन्दोगपरिशिष्टे— 'आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः। षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्॥'। ¶ संग. ७९–८१

¶ शेषं श्राकागतं गभागतं च।

[१]पित्र्यमन्त्रवर्जं जपः॥

(१) स चायमश्नत्सु यः पितृमन्त्रजपः स प्रतिषिध्यते, न तु 'आयन्तु नः' इत्ययम्, पित्र्यमन्त्र इति संज्ञाशब्दत्वात्, अस्य च जपावाहनार्थत्वात्। ‡ कभा.

(२) मधुमतीपितृसंहितयोरुपलक्षणं चैतत्। तथा च मनुकात्यायनौ— 'मधुवाताजपस्थाने कुर्यात्तत्र प्रयत्नतः। उपास्मै गायतेत्यादि ऋचः पञ्च जपेत्तथा॥' 'मधु मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्। गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः॥ न चाश्नत्सु जपेदत्र कदाचित्पितृसंहिताम्। अन्य एव जपः कार्यः सोमसामादिकः शुभः॥' इति। पित्र्यमन्त्राः 'अश्नत्सु जपेत्' (पागृश्रा. ३) इत्यत्रोक्ताः, तान्वर्जयित्वा जपः कर्तव्य इत्यर्थः। अत्र जपत्वाविशेषात् 'उशन्तस्त्वा' 'आयन्तु नः' इत्यादीनामपि प्रतिषेध इति केचित्। आवाहनार्थत्वादनयोर्न प्रतिषेध इत्यन्ये। एवं च सति ब्राह्मणानामग्निस्थानीयत्वात्तच्छरीरवर्तिपित्रावाहनस्य मन्त्रेणैवोचितत्वाच्च विधिरेव युक्तः, अन्यथा मन्त्रवत्क्रियाणाममन्त्रकत्वेनाफलत्वापत्तेः। अत्रैतच्चिन्त्यते— किं वस्त्रादिप्रयोगः कर्तव्य उत नेति। अत्र 'शेषं पार्वणवत्' इत्यतिदेशेन प्राप्नोतीति। तदयुक्तम्, पितॄणामप्यत्र देवरूपत्वात्। तथा च स्मृतिः— 'पितॄणां रूपमास्थाय देवा अन्नमदन्ति ते। तस्मात्सव्येन दातव्यं वृद्धिपूर्वेषु दातृभिः॥'। नान्दीमुखेति प्रयोगस्य तत्प्रतिनिधिरूपत्वाच्च। तथा ह्युक्तम्— 'तत्र नान्दीमुखमिति विशेषः समुदाहृतः।'। अपि च चतुर्विंशतिमते— नान्दीमुखमिति विशेषः संपादितो नान्य इत्यर्थः। श्राका.

‡ चश्रा., मर. कभागतम्।

(१) पागृश्रा. ६; अप. १।२४९ पृ. ५१८; श्राक. २७० (जपः ०); चश्रा. १५६०; चदा. १४१ जपः (जपं); स्मृसा. १०८; पमा. ७८३ (पित्र्यमन्त्रवर्जनम्); मपा. ६३२ (पितृमन्त्रवर्जं जपन्); मर. १६९ वर्जम् (वर्ज्यम्); श्राकौ. ५१०; यजुःश्रात. ४९७;

(३) अयं चाश्नत्सु यो जपः स निषिध्यते न तु 'आयन्तु नः' इत्ययम्, 'उदीरतामिति त्रयोदशर्चं पित्र्यम्' इति पित्र्यमन्त्रसंज्ञायास्तस्यैव श्रवणात्।

गभा.

(४) ब्राह्मणभोजनकाले पितृप्रकाशमन्त्रं स्तवं वा वर्जयित्वा पुरुषसूक्तत्रिसुपर्णादिकं जपेदित्यर्थः। तथा च परिशिष्टे– 'न चाश्नत्सु जपेदत्र कदाचित् पितृसंहिताम्। अन्य एव जपः कार्यः सोमसामादिकः शुभः॥'।

$ श्राकौ. ५११

(५) पित्र्यमन्त्राः अश्नत्सु जपेदित्यत्रोक्ताः 'उदीरतामवरे' इत्यादयः, तान् वर्जयित्वा जपेदित्यर्थः। पित्र्यमन्त्रग्रहणं मधुमतीपितृसंहितयोरुपलक्षणार्थम्। तथा च श्राद्धकाशिकायां मनुकात्यायनौ– 'मधुवाता जपस्थाने कुर्यात्तत्र प्रयत्नतः। उपास्मै गायतेत्यादि ऋचः पञ्च जपेत्तथा॥' इति। पञ्चर्चो जपविधानं ऋक्शाखीयविषयम्। अत्र जपशब्दाद्यो भुञ्जानेषु द्विजेषु पितृलिङ्गकानां मन्त्राणां जपः स एव निषिध्यते, न तु पदार्थानुकरणीभूतानामपि। अत एवाऽऽह जातूकर्ण्यः– 'पितृलिङ्गेन मन्त्रेण यत् कर्म मुनिभिः स्मृतम्। तेनैव तद्विधातव्यममन्त्रमकृतं यतः॥' इति। संग. ८२

[1]ऋजवो दर्भाः॥

(१) पित्र्ये द्विगुणाः प्राप्नुवन्ति ते च प्रतिषिध्यन्ते। ऋजवः प्रत्येतव्याः। § कभा.

(२) ऋजवो दर्भाः, न तु द्विगुणभुग्नाः।

चश्रा. १५६१

(३) दर्भशब्दोऽत्र दूर्वादिद्रव्योपलक्षकः, न समूलत्वज्ञापकः। तेनात्र दूर्वासाहचर्यादमूला ऋजुदर्भा भवन्तीत्यर्थः। तथा च पुराणसमुच्चये– 'दधिदूर्वाक्षतमधुरान्नमिश्रैः। अनुलेपनगन्धादि रक्तसूत्रं च शस्यते॥'। श्राका.

(४) ऋजवो दर्भा इति द्विगुणभुग्नकुशनिषेधः। 'समूला दर्भाः' इत्याश्वलायनवचनादत्र समूला दर्भा ग्राह्याः। श्राकौ. ५११

(५) अत्र अमूला ऋजवो दर्भा भवन्ति न द्विगुणा इत्यर्थः। दर्भाणाममूलत्वविशेषणमुक्तं रुद्रकल्पद्रुमे आश्वलायनसूत्रे 'आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः' इति। संग. ८२-८३

*[1]यवैस्तिलार्थाः॥

(१) यस्तिलार्थः स सर्वो यवैः कर्तव्यः। तदत्र द्रव्याभिधायकत्वात् तन्मन्त्रः 'यवोऽसि' इति यथार्थमूहितव्यः। ¶ कभा.

(२) तिलार्थः तिलकार्यं कर्तव्यमित्यर्थः।

स्मृच. ४९९

---

$ यजुःश्रात. श्राकौवत्।

§ मर., गभा., यजुःश्रात. कमागतम्। श्रासौ. १२१ वर्जम् (वर्जितम्); लता. ११८ मरवत्; संग. ८२; संदी. ५८.

(१) पागृश्रा. ६; अप. १।२४९ पृ. ५१८; श्राक. २७०; चश्रा. १५६०; चदा. १४१; स्मृसा. १०८; पमा. ७८३; मपा. ६३२; मर. १६९; श्राकौ. ५१०; यजुःश्रात. ४९७; श्रासौ. १२१; लता. ११८; संग. ८२; संदी. ५८.

* स्मृतिचन्द्रिकायां अस्मात्सूत्रादनन्तरं 'तत्र यवोऽसीत्यूहः' इति कात्यायनीयत्वेन सूत्रं सव्याख्यं विद्यते, परंतु एतत् पारस्करगृह्यश्राद्धसूत्रे न विद्यते, न वा अन्यैर्निबन्धकारैरुल्लिख्यते, अतः नास्माभिः संगृहीतम्। तत्रत्यग्रन्थश्चैवम्– "एवं च 'तिलोऽसि सोमदेवत्यः' इति मन्त्रे 'यवोऽसि' इत्यूहः कार्य इत्याह स एव– 'तत्र यवोऽसीत्यूहः' इति। तत्र तथा सति तिलकार्यार्थं यवोपादाने सतीत्यर्थः"।

¶ प्रायः सर्वग्रन्थानां व्याख्यानानि कभावत्।

(१) पागृश्रा. ६; अप. १।२४९ पृ. ५१८ तिलार्थाः (तिलार्थः); श्राक. २७० अपवत्; स्मृच. ४९९ अपवत्; चश्रा. १५६०; चदा. १४१; स्मृसा. १०८; पमा. ७८३ तिलार्थाः (तिलार्थम्); मपा. ६३२ (यवास्तिलार्थम्); मर. १६९ अपवत्; श्राकौ. ५१० अपवत्; यजुःश्रात. ४९८ अपवत्; श्रासौ. १२१ अप-

(३) अर्थः प्रयोजनम्। प्रतिनिध्युपलक्षणं चैतत्। तेन यवस्तिलप्रतिनिधिर्यथा तथा स्वधादिपदेषु स्वाहादिपदानि प्रतिनिधातव्यानीत्यर्थः। तथा चेश्वरः– 'कुर्यात् स्वाहा स्वधास्थाने वाचने प्रीयतामिति। वृद्धिश्राद्धेषु सर्वत्र नमो मे वृद्धिरिष्यते॥' इति। न च 'यवैस्तिलार्थाः' इति वदता यवप्रक्षेपमन्त्रोऽपि पितृपात्रेषु स्यादित्युक्तम्। तिलार्थस्यैव यवैरुपदिष्टत्वान्न मन्त्रस्येति। तिलोऽसीति-प्रत्यक्षविरुद्धत्वाच्च। अतश्च 'तिलोऽसि' इति मन्त्र एव 'यवोऽसि' इत्यादिपदक्षेपः पितृपात्रेष्वपीति। तथा चाऽऽश्वलायनः– 'यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः पृष्ठा नान्दीमुखान् लोकान् प्रीणाहि नः स्वाहा॥' इति। श्राका.

[१]**संपन्नमिति तृप्तिप्रश्नः। सुसंपन्नमितीतरे ब्रूयुः॥**

(१) 'तृप्ताः स्थ' इत्यस्य स्थाने 'संपन्नम्' इत्ययं प्रश्नो भवति। * कभा.

(२) 'तृप्ताः स्थ' इत्यस्य स्थाने 'संपन्नम्' इति प्रश्नः कार्यः। ब्राह्मणैश्च 'सुसंपन्नम्' इत्युत्तरं प्रदेयम्। चश्रा. १५६१

(३) 'तृप्ताः स्थ' इत्यत्र 'संपन्नम्' इति वदेदित्यर्थः। साकाङ्क्षत्वात् सुसंपन्नमिति प्रतिवचनम्।

---

* स्मृच., मर., गभा. कभावत्।

वत्; वीमि. १।२५० पृ. ३१० अपवत्; मुक्ता. ७५५ अपवत्; लता. ११८ अपवत्; संग. ८३; संदी. ५८.

(१) पागृश्रा. ६; अप. १।२५० पृ. ५१८ (सुसंपन्नमितीतरे ब्रूयुः ०); श्राक. २७० अपवत्; स्मृच. ४९९ प्रश्नः (प्रश्नम्) शेषं अपवत्; चश्रा. १५६०; चदा. १४१ इतीतरे ब्रूयुः (इत्यनुज्ञातः); स्मृसा. १०८ प्रश्नः (प्रश्ने) शेषं अपवत्; पमा. ७८३ (सुसंपन्नमिति तृप्तिप्रश्नः, सुसंपन्नमित्यनुज्ञा); मपा. ६३२ अपवत्; मर. १६९ अपवत्; श्राकौ. ५१० अपवत्; यजुःश्रात. ४९८ इतीतरे ब्रूयुः (इत्यनुज्ञानम्); श्रासौ. १२१ अपवत्; मुक्ता. ७५६ प्रश्नः (प्रश्ने) शेषं अपवत्; लता. ११८ अपवत्; संग. ८३; संदी. ५८.

एतच्च पाकश्राद्धे एव, न आमे, तत्रैतदसंभवात्। तथा च– 'आमश्राद्धमनङ्गुष्ठमग्नौकरणवर्जितम्। तृप्तिप्रश्नविहीनं तु कर्तव्यं मानवैर्ध्रुवम्॥' इति। विहितं च विकल्पेन आमश्राद्धम्। तथा च याज्ञवल्क्यः– 'आमश्राद्धं प्रकर्तव्यं वृद्धौ नान्दीमुखे सदा। पाकेन वा बहिःशाले सोदनं बदरं दधि॥' इति। अत्र यथाकुलं यथासंभवं वा विकल्पः।

अत्रैतच्चिन्त्यते– किमामश्राद्धे पिण्डदानमामेन कार्यमुत पाकेनेति। तत्रैके आहुः– 'आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदस्तदा। तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत्॥' 'यत्प्रदद्याद्द्विजातिभ्यः शृतं वा यदि वाऽशृतम्। तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत्॥' इति मत्स्यपुराणव्यासवचनाभ्यामामेन विहितत्वादामेनैवेति। तदयुक्तम्, 'आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत्। गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा॥' इति पाकेन विहितत्वात्। एवं तर्हि विकल्पोऽस्त्विति। न, व्यवस्थासंभवेऽष्टदोषदुष्टत्वात्। तस्मात् द्विजकर्तृके पाकेन, शूद्रकर्तृके आमेनेति व्यवस्थेत्यन्ये। तन्नातीव शोभते, साग्निनिरग्न्योर्विषयानव्यत्रसायापत्तेः (? साग्निनिरग्न्योर्विषयत्वेन व्यवस्थोपपत्तेः)। तस्मात् साग्नेः पाकेनाग्नौकरणं पिण्डं (? पिण्डाश्च), निरग्नेरामान्नेनेति व्यवस्था। अथवा यथाकुलमिति। यच्च– 'आमेन पिण्डान् दद्याद्यो विप्रान् पक्वेन भोजयेत्। पक्वेन कुरुते पिण्डान् विप्रेष्वामं प्रयच्छति॥ तावुभौ मनुना प्रोक्तौ नरकार्हौ न संशयः। तस्माद्विपर्ययं विद्वान्न कुर्याच्छ्राद्धकर्मणि॥' इति, तत् श्राद्धान्तरविषयम्। श्राका.

(४) अनुज्ञानं प्रत्युत्तरम्। यजुःश्रात. ४९९

(५) 'तृप्ताः स्थ' इत्यस्य स्थाने 'संपन्नम्' इत्ययं प्रश्नो भवति। 'सुसंपन्नमितीतरे ब्रूयुः' इति पठन्ति, तत्तु अनादृतं कर्कोपाध्यायादिभिर्भाष्यकारैः। छन्दोगपरिशिष्टे कात्यायनोऽपि– 'संपन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते। सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत्॥' इति। संग. ८३–८४

[1]दधिबदराक्षतमिश्राः पिण्डाः ॥

( १ ) दधिबदराक्षतमिश्रेण अन्नेन पिण्डा देयाः । § कभा.

( २ ) अक्षताः यवाः । मिश्रणं मिश्रः । दध्यादिभिर्मिश्रितौदनेन पिण्डा देया इत्यर्थः, बहुव्रीह्युपलब्धेः । अत्रैके आहुः— दध्यादित्रयमेव मेलयित्वा देया इति । तदयुक्तम्, शाल्यन्नस्य विहितत्वात् । तथा चाङ्गिराः— 'शाल्यन्नं मधुसंयुक्तं बदराणि यवास्तथा । मिश्राणि कृत्वा चत्वारि पिण्डाञ्श्रीफलसंमितान् ॥ दद्यात् ...' इति । कात्यायनोऽपि— 'सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च । संयोज्य यवकर्कन्धुदधिभिः प्राङ्मुखस्ततः ॥' इति । पिण्डग्रहणमपिण्डकव्युदासार्थम् । एतच्च साग्निविषयम् । तथा च निगमः— 'आहिताग्नेः पित्रर्चनं पिण्डैरेव' इति । 'योऽग्नौ तु विद्यमाने हि वृद्धौ पिण्डान्न निर्वपेत् । पतन्ति पितरस्तस्य नरके स तु पच्यते ॥' इति । यत्तु— 'पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप ।' इति भविष्यवचनम्, यच्च— 'वृद्धौ विकल्पेन पिण्डदानं बुधैः स्मृतम् ।' इति वचनम्, तन्निरग्निविषयम् । तथा च— 'यावत्तु नाग्निसंबन्ध उत्सन्नाग्निस्तथैव च । तावद्वृद्धिषु सर्वासु संकल्पश्राद्धमाचरेत् ॥' । संकल्पश्राद्धमपिण्डकम् । अत्र विशेषः— 'पिण्डहीनेऽपि कर्तव्यं विकिरं पात्रपूरणम् । अग्नौकरणमर्घं चेत्येतच्छ्राद्धे चतुष्टयम् ॥ वर्जने (? अर्चने) पिण्डहीनेऽपि सर्वमर्घादिकं भवेत् । कुशान् स्थाप्य स्वधां कुर्यात्क्षिपेदग्नौ जलेऽपि वा ॥' इति । यत्तु 'संकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।' इत्यादि, तत् श्राद्धान्तरविषयमपिण्डकयथादेशकुलाचारविषयं वा, 'वृद्धिश्राद्धे कुलाचारदेशकालाद्यपेक्ष्य हि ।' इति भविष्यद्वाक्यशेषात् ।

अत्रैतच्चिन्त्यते— किमत्रावनेजनमुदकेन देयमुतान्यद्रव्येणेति । तत्रैके आहुः— 'तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत् ।' इत्यनेन पिण्डपात्रक्षालनजलेनैवेति । अन्ये त्वाहुः— क्षालनोदकस्य छन्दोगविषयत्वात् उदकेनैवेति । तदुभयमपि विशेषवचनानुपलब्धिनिबन्धनमित्यवधेयम्, क्षालनोदकस्य प्रत्यवनेजनविषयत्वात्क्षीरेण विशिष्ट(? ष्य)विधानाच्चेति । तथा— 'प्राङ्मुखस्त्वथ दर्भेषु दद्यात्क्षीरावनेजनम् । दधिबदरयवमधुयुक्तं श्रीफलसंनिभम् ॥ तथाऽक्षय्योदकस्थाने दद्यात्क्षीरयवोदकम् ।' इति ब्रह्मपुराणवचनात् । अतश्च क्षीरेणैवेति ।

पुनश्चिन्त्यते—पिण्डदानमपि किं देवतीर्थेनाऽऽहोस्वित् प्राजापत्येनेति । तत्रैके आहुः— 'दध्यक्षतैः सबदरैः प्राङ्मुखो वाऽप्युदङ्मुखः । देवतीर्थेन वा पिण्डान् दद्यात्कायेन वा नृप ॥' इत्यनेनोभयतीर्थस्य विहितत्वाद्विकल्प एवेति । अन्ये त्वाहुः— छन्दोगा देवतीर्थेन वाजसनेयिप्रभृतयः प्राजापत्येनेति । तथा च मार्कण्डेयः— 'नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम् । प्राजापत्येन तीर्थेन यच्च किंचित्प्रदीयते ॥' इति । अत्रानूचानाः प्रमाणम् । पिण्डोदकव्यतिरिक्तं देवतीर्थेन, पिण्डोदकं प्राजापत्येनेति व्यवस्था वा ।

अत्र विशेषमाह स्मृतिः— 'बहुमातृकपुत्रो यः श्राद्धेष्वन्वष्टकादिषु । सर्वासां नाम संकीर्त्य पिण्डमेकं स निर्वपेत् ॥' । पुराणसमुच्चये— 'एकस्य बहवो भार्या एकः पुत्रस्तथा यदि । एकेनापि सपुत्रास्ताः सर्वासां पिण्डदस्तु सः ॥ बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । तेन पुत्रेण पुत्रिण्यः सर्वास्ता मनुरब्रवीत् ॥' इति । अत्रैतत्संदिह्यते— किमर्घदाने पिण्डवदेकस्मिन् सर्वासामुद्देशः किंवा पृथगिति । तत्रैके आहुः— अर्घस्य पिण्डाङ्गत्वेनेदानीं प्रधानकर्मत्वानुरोधेन पिण्डवद्विधानमेवेति । तदयुक्तम्, अर्घदानस्य पृथक्त्वेनोपदेशात् । तथा च गालवः— 'अनेका मातरो

---

§ गभा. कभावत् ।

( १ ) पागृश्रा. ६ ; अप. ११२४९ पृ. ५१८ ; श्राक. २७० ; स्मृच. ४९९ ; चश्रा. १५६० ; चदा. १४१ ; स्मृसा. १०८ ; पमा. ७८३ ; मपा. ६३२ ; मर. १६९ ; श्राकौ. ५१० ; यजुःश्रात. ४९८ ; श्रासौ. १२१ मिश्राः पिण्डाः (मिश्रान् पिण्डान्) ; मुक्ता. ७५६ ; लता. ११८ ; संग. ८४ ; संदी. ५८.

यस्य श्राद्धे चापरपाक्षिके । अर्घदानं पृथक्कुर्यात्पिण्डमेकं च निर्वपेत् ॥ ' इति । अपरपाक्षिके इति श्राद्धान्तरोपलक्षणम् ।

अत्रैके दाक्षिणात्याः वृद्धिश्राद्धेषु प्रपितामहमारभ्यार्वाचीनं पिण्डदानादिप्रयोगमाचरन्ति, ' नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् । वाक्यं समुच्चरेद्विद्वानन्यत्र पितृपूर्वकम् ॥ ' इति वचनादिति । तदनुचितम्, (*नान्दीमुखाः पितरः पितामहाः प्रपितामहाः श्राद्धकर्मणि । तस्माच्छ्राद्धेषु सर्वेषु वृद्धिमत्स्वितरेषु च । मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्वपेदिति । उत्तरोत्तरपुत्रपौत्रादिभिः समृतः । अधराणामग्रमध्यमूलक्रमेणाधोदानेनाधरः पुत्रादिभिर्हीनो भवेदित्यर्थः । तस्मादत्र शाखायां तन्नोचितमिति । ) यत्तु– ' नान्दीमुखे विवाहे च ' इति वचनम्, तदन्यशाखिविषयं देशकुलधर्मादिविषयं वेत्यर्थः ।

अत्रैतच्चिन्त्यते– वेदिकायां रेखात्रयं पिण्डदानं च किमुदक्संस्थं कर्तव्यमुत दक्षिणासंस्थमिति । अत्रैके आहुः– अप्रदक्षिणत्वेऽपि अस्य श्राद्धस्य दैविकत्वादुदक्संस्थमेवेति । तदयुक्तम्, ' आभ्युदयिके प्रदक्षिणमुपचारः ' इति विरोधात् । अप्रदक्षिणत्वे तु न प्रमाणमुपलब्धम् । दक्षिणासंस्थत्वे च प्रदक्षिणं प्रमाणमस्ति । तस्माद्दक्षिणासंस्थमेव रेखापिण्डदानादि । तथा च कात्यायन एव– ' द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः । मातामहादिप्रभृतीनेतेषामेव वामतः ॥ ' इति । एतेषां पित्रादित्रयाणां वाम इत्यर्थः । तत्र पित्रादीनां मध्ये देयत्वेन संबोध्यत्वेन च स्वसंमुखत्वात् दक्षिणासंस्थत्वेन तेषां वामता । यत्तु आशादित्येन पिण्डानामवयवाभावाद्वामतायां कर्तृगतोऽवयव इष्यते इत्युक्तम्, तदसंगतम्, ' एतेषामेव वामतः ' इत्येतच्छब्देन पित्रादीनां परामृष्टत्वात्, कर्त्रवयवत्वे त्वेतेषामिति बहुत्वविरोधाच्च । तस्माद्दक्षिणासंस्थत्वेनैव तद्वामतासंभवः । अत्रार्थे वृद्धयाज्ञवल्क्यः– ' जीवद्भर्तरि दक्षिणे ' इति । अपि च स्मृत्यन्तरम्– ' श्राद्धे सदैव वामाङ्गे पत्नीनामुदकं हरेत् । वृद्धिश्राद्धेषु नारीणां दक्षिणाङ्गे सदा भवेत् ॥ ' इति । ' श्राद्धे सदैव वामाङ्गे ' इत्येतदापस्तम्बादिविषयम्, तेषां पित्रादिपिण्डपश्चिमत एव पत्नीपिण्डविधानात् । तथा चाऽऽपस्तम्बगृह्यम्– ' द्विधाभूतं भवति तथा सदक्षिणाग्रान् दर्भान् लिखितदेशे संस्तीर्य तत्र पूर्वभागे पित्रादिवर्गार्थं स्तरणं पश्चाद्भागे तु मात्रादिवर्गार्थम् ' इति । ' स्त्रीभ्यश्च पिण्डा इह पश्चिमाः स्युः ' इति तद्गृह्यभाष्यार्थसंग्रहकारः । ' वृद्धिश्राद्धेषु नारीणां दक्षिणाङ्गे सदा भवेत् । ' इति तु सर्वविषयम् । तस्माद्रेखापिण्डदानादिकं प्राङ्मुखकर्तुर्दक्षिणासंस्थमेव वृद्धिश्राद्धेषु सर्वत्र कर्तव्यमिति सर्वमनवद्यम् । ब्राह्मणनिवेशोऽप्येवं प्रागारभ्य पश्चात्संस्थ एवेति । ‡ श्राका.

( ३ ) दधिबदरेत्यादिना वृद्धिश्राद्धे दध्यादीनां प्राशस्त्यमुक्तम् । श्राकौ. ५११

**[1]नान्दीमुखान् पितॄनावाहयिष्य इति पृच्छति ॥**

( १ ) ' पितॄनावाहयिष्ये ' इत्यस्य स्थाने ' नान्दीमुखान् पितॄनावाहयिष्ये ' इति प्रयोगः । एवं यत्र यत्र पितृपदप्रयोगः तत्र तत्र नान्दीमुखपदं पूर्वं प्रयोज्यमिति ज्ञेयम् । $ चश्रा. १५६१

( २ ) लिङर्थे लट् । अत्रैतद्वक्तव्यम्– किं पित्रादिकस्य नान्दीमुखत्वमाहोस्विद्वृद्धप्रपितामहादित्रिकस्येति,

* कंसस्थो ग्रन्थः अत्यन्ताशुद्धो वर्तते ।

‡ संग. श्राकागतम् ।

$ गभा. चश्रागतम् ।

( १ ) पागृश्रा. ६ ; अप. १।२४९ पृ. ५१८ ; श्राक. २७० ; स्मृच. ४९९ ; चश्रा. १०७ : १५६० आवाहयिष्य ( वाचयिष्य ) ; चदा. १४१ अवाहयिष्य ( वाचयिष्ये ), तत्रैव ' नान्दीमुखान् पितॄनावाहयिष्य इति पृच्छति ' इत्यादर्शानुसारिपाठोऽपि समुपलभ्यते ; पमा. ७८३ ; मपा. ६३२ पृच्छति + ( च ) ; प्रपा. १५ आवाहयिष्य ( आवाहय ) ; मर. १६९ ; श्राकौ. ४९२, ५१० ; यजुःश्रात. ४९८ ; श्रासौ. १२१ ; मुक्ता. ७५६ ; लता. ११८ ; विपा. ३१ ( भागः २ ) ; संग. ८७ आवाहयिष्य ( आवाहिष्य ) ; संदी. ५८.

स्मृतिषूभयथा दर्शनात् । तथा च ब्रह्मपुराणम्– ‘ पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा एते पितरः परिकीर्तिताः ॥ तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैषिणः । ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥ प्रसन्नमुखसंसर्गान्मङ्गलीयास्ततस्तु ते ॥ ’ इति । अतश्च वृद्धप्रपितामहादिकस्यैव नान्दीमुखत्वेनाऽऽभ्युदयिकत्वं प्राप्नोतीति । अथवा– ‘ पिता पितामहश्चैव तथैव प्रपितामहः । पिण्डसंबन्धिनो ह्येते पितरः परिकीर्तिताः ॥ ’ इत्यादिवचनैरश्रुमुखानामेव पिण्डसंबन्धित्वात् पित्रादिकस्यापि नान्दीमुखत्वमिति । तथा च सूत्रम्– ‘ नान्दीमुखाः पितरः पितामहाः प्रपितामहाः ’ इति । मार्कण्डेयोऽपि– ‘ ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखा अपि । ’ इति प्रपितामहस्यापि नान्दीमुखत्वम्, न वृद्धादित्रिकस्यैवेति । एवं च सत्युभयेषामपि नान्दीमुखत्वमविरुद्धम् । यच्चाश्रुमुखादिसंज्ञाकीर्तनं तत् कारणपरम्, प्रसन्नमुखसंसर्गादित्यादिना नान्दीमुखा वंशवृद्धिमीहन्ते, अश्रुमुखास्तु पित्रुद्धरणसमर्था सन्तमिति (?) ब्राह्मे निरूपितत्वात् । तस्माज्जीवत्पितृ( मातृ )-मातामहादिकस्य कर्तुरधिकारार्थं वृद्धप्रपितामहादिकस्य नान्दीमुखत्वोत्कीर्तनम्, मृतपितृमातृमातामहादिकस्य कर्तुरधिकारार्थमश्रुमुखानां नान्दीमुखत्वमिति व्यवस्थेत्यविरोधः । तथा च चतुर्विंशतिमतम्– ‘ नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् । वाक्यं समुच्चरेद्विद्वानन्यत्र पितृपूर्वकम् ॥ ’ । जीवत्पितृकः प्रपितामहपूर्वकमन्यः मृतपितृकः पितृपूर्वकमित्यर्थः । दाक्षिणात्यास्तु– प्रपितामहपितामहपितरिति( ? तर इति )क्रमविपर्ययमेतदित्याहुः । कात्यायनोऽपि– ‘ जीवन्तमति दद्याद्वा प्रेतायान्नोदके द्विजः । पितुः पितृभ्यो वा दद्यात्सपितेत्यपरा श्रुतिः ॥ ’ । ब्राह्मेऽपि– ‘ उक्तमादाय पिण्डं तु कृत्वा बिल्वप्रमाणकम् । दद्यात्पितामहादिभ्यो दर्भमूले यथाक्रमम् ॥ ’ इति । पठन्ति च– ‘ जनन्यां विद्यमानायां यजेद्यस्तु पितामहीम् । मातृघ्नः स च विज्ञेयो वृद्धिश्राद्धादृते क्वचित् ॥ ’ इति । अतश्च जीवत्पित्रादिपङ्क्तित्रिकस्य वृद्धिश्राद्धेऽधिकार इति सिद्धम् ।

अत्रैक आहुः– पितृमातृमातामहानां मध्ये यो जीवति तद्वर्गं परित्यज्य पार्वणद्वयमेकं वा यथासंभवं कर्तव्यम्, त्रिषु जीवत्सु मातृपूजनमेव, न श्राद्धमिति, तथा च– ‘ पितृवर्गे मातृवर्गे तथा मातामहस्य च । जीवेद्यदि च वर्गादिस्तं वर्गं तु परित्यजेत् ॥ ’ इति, तथा– ‘ सपितुः पितृकृत्येषु अधिकारो न विद्यते । न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिः ॥ ’, तथा– ‘ पित्र्यं जीवत्पितुर्नोक्तमग्नौ होमोऽपि पाक्षिकः । न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिः ॥ ’ इति, ‘जीवत्पितृकस्य होमान्तमनारम्भो वा ’ इत्यादिवचनेभ्य इति । यत्तु– ‘ उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥ ’ इति मैत्रायणीयपरिशिष्टं तन्मैत्रायणीयशाखिनां साग्नीनामेव, ‘ न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः । येभ्य एव पिता दद्यात्तेभ्यः कुर्यात्तु साग्निकः ॥ ’ इति सुमन्तुवचनेन निरग्नेर्जीवत्पितृकस्य श्राद्धानधिकारादिति । अत्रोच्यते– यदुक्तम्– ‘ पितृवर्गे मातृवर्गे तथा मातामहस्य च । ’ इत्यादि, तन्न, जीवद्वर्गपरित्यागस्य तीर्थब्राह्मणसंपत्त्यादौ निरग्निजीवत्पितृकविषयत्वेन चरितार्थत्वात् । तथा चाधिकारमाह– ‘ महानदीषु सर्वासु तीर्थेषु च गयां विना । जीवत्पिताऽपि कुर्वीत श्राद्धं पार्वणधर्मवत् ॥ ’ इति । यच्चोक्तम्– त्रिषु जीवत्सु मातृपूजनेनैव श्राद्धसिद्धिरिति, तदप्यसंगतम्, अङ्गिनः श्राद्धस्य लोपेऽङ्गस्य मातृपूजनस्य प्रवृत्तावाश्रयो( ? यानु)-पपत्तेः । न च श्राद्धमन्तरेण मातृपूजायाः कर्मणोऽङ्गत्वम् । यच्चाभ्यधायि– ‘सपितुः पितृकृत्येषु’ इत्यादिनिषेधः, तस्य वृद्धिश्राद्धादन्यश्राद्धविषयत्वात् । तथा च क्रतुः– ‘ अष्टकासु च संक्रान्तौ मन्वादिषु युगादिषु । चन्द्रसूर्यग्रहे पाते स्वेच्छया पूज्ययोगतः । जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाऽखिलम् ॥ ’ । अखिलमिति ‘ व्यतीपातो जन्मऋक्षं चन्द्रसूर्यग्रहौ तथा । तिथिनक्षत्रवारांश्च उद्दिश्याभ्युदयं तथा । एतांस्तु श्राद्धकालान्वै काम्यानाह प्रजापतिः ॥ ’ इत्यादिकम् । अभ्युदय आराममहादानाद्युत्सवः । यत्त्वाम्नातम्– ‘ न जीव-

त्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः ।' इत्यनेन (निरग्निजीवत्पितृक इत्यनेन ?) साग्निजीवत्पितृकस्य श्राद्धविधानम्, तदष्टकादिनियतश्राद्धविषयम्, न सामान्येन सर्वश्राद्धविषयम्, गयापरपक्षादिश्राद्धनिषेधानुपपत्तेः । यदप्युक्तम्– 'जीवत्पितृकस्य होमान्तमनारम्भो वा' इति, तत् साग्नेः पिण्डपितृयज्ञादिनिषेधविषयम्, नाऽऽभ्युदयिकस्येति, 'तेभ्यः पूर्वतरा ये वै' इत्यादिनाऽऽभ्युदयिकस्य प्रतिप्रसवोपपत्तेः । तस्माज्जीवत्पित्रादित्रिकस्याऽऽभ्युदयिकं श्राद्धं कर्तुमुचितमिति सिद्धम् । श्राका.

(३) 'नान्दीमुखान्' इति नान्दीमुखविशेषणवत्तया पित्रादीनामत्र देवतात्वं दर्शितम् ।

श्राकौ. ५११

(४) 'नान्दी ... पृच्छति' । क्व ? 'पितॄनावाहयिष्ये' इत्यस्य स्थाने 'नान्दीमुखान् पितॄनावाहयिष्ये' इत्ययं प्रश्नो भवति । गभा.

(५) 'नान्दीमुखान् पितॄन्' इत्यनेन मन्त्रेऽभिलापे च नान्दीमुखविशेषणवत्त्वेनोल्लेखः पित्रादीनाम् । एतच्च पार्वणोक्तस्थाने कार्यम् । यजुःश्रात. ४९९

(६) अत्रेदं तात्पर्यम्– द्विविधा नान्दीमुखाः, पित्रादयस्त्रयः प्रपितामहपित्रादयश्च । तत्र पित्रादयो नान्दीमुखा वृद्धिश्राद्धदेवता ज्ञेयाः, 'पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः । प्रसन्नमुखसंज्ञास्तु मङ्गलीया यतस्तु ते ॥' इति ब्रह्मपुराणे तेषामेव मङ्गलकर्मसु देवतात्वश्रवणात् । प्रपितामहस्य पित्रादयस्तु प्रौष्ठपदपौर्णमासीनिमित्तश्राद्धे देवता इति मन्तव्यम् । 'पिता पितामहश्चैव तथैव प्रपितामहः ।' इत्युक्त्वा 'तेभ्यः पूर्वतराः पञ्च (? ये च) प्रजावन्तः सुखैषिणः । ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥' इति तेषामपि नान्दीमुखसंज्ञां विधाय 'नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ । पौर्णमास्यां तु कर्तव्यं वाराहवचनं यथा ॥' इति ब्रह्मपुराणवचनात् । अतः सिद्धं वृद्धिश्राद्धे पित्रादित्रिकस्यैव देवतात्वमिति । विपा. ३१–३२ (भागः २)

(७) 'पितॄनावाहयिष्ये' इत्यस्य स्थाने 'नान्दीमुखान् पितॄनावाहयिष्ये' इति पृच्छेदित्यर्थः । अत्र पितृग्रहणाद्देवानां नान्दीमुखविशेषणं न भवतीत्युक्तं भवति । वृद्धपराशरेण तु देवानामपि नान्दीमुखविशेषणमुक्तम्– 'नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणं कुशासनम्' इति । अतश्च विकल्पः । स च शाखाभेदेन व्यवस्थितो द्रष्टव्यः । संग. ८७

**[1]आवाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने ॥**

(१) अक्षय्योदकस्थाने 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति प्रयोगो भवति । ¶ कभा.

(२) अत्र 'नान्दीमुखान् पितॄनावाहयिष्ये' इत्यनेनैव नान्दीमुखत्वप्राप्तौ पुनस्तद्ग्रहणं सर्वत्र प्रयोगार्थम् । तदुक्तम्– 'तत्र नान्दीमुखमिति विशेषः समुदाहृतः ।' इति । प्रकृतिश्राद्धेषु 'अक्षय्योदकदानं तु अर्घदानवदिष्यते । षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन ॥' इति कात्यायनेन षष्ठीतन्त्रयोर्विहितत्वादत्र तन्निषेधो वाचनिकः । तेन प्रथमाविभक्त्या तन्त्रेण चाक्षय्योदकदानमत्र क्षीरयवोदकैर्भवतीत्यर्थः । तथा च– 'तथाऽक्षय्योदकस्थाने दद्यात्क्षीरयवोदकम् ।' इति । पितृग्रहणं स्वपितृप्राप्त्यर्थम् । तेन जीवत्पित्रादिकोऽपि स्वमातृमातामहादिभ्य एव दद्यान्न पितृसंबन्धिभ्य इत्यर्थः ।

---

¶ मर., गभा. कभावत् ।

(१) पागृश्रा. ६; अप. १।२४९ पृ. ५१८ (आवाहयेत्यनुज्ञातो०); श्राक. २७०; चश्रा. १०७ अपवत्; स्मृसा. १०८ अपवत्; पमा. ७८३ अपवत्; मपा. ६३२ (नान्दीमुखाः प्रीयन्तामक्षय्यस्थाने) एतावदेव; प्रपा. १५ अक्षय्य (अक्षय) शेषं अपवत्; मर. १६९ अपवत्; श्राकौ. ४९२ (नान्दीमुखाः पितरः प्रीयन्ताम्) एतावदेव: ५१० अपवत्; यजुःश्रात. ४९८ अपवत्; श्रासौ. १२१ अपवत्; मुक्ता. ७५६ (नान्दीमुखाः पितरः प्रीयन्ताम्) एतावदेव; लता. ११८ अपवत्; सिन्धु. १७५४ अपवत्; संग. ९० अपवत्; संदी. ५८.

अत्रैके आहुः— 'अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि । येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम् ॥' इत्यादिवचनेषु यत्तच्छब्दनिर्देशात् (पितुः) पितृभ्य एव दद्यात्, न स्वपितृभ्य इति । तदयुक्तम्, 'स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ॥' इति कात्यायनेन 'प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः । स्नात्वाऽनन्तरमात्मीयान्पितॄन् श्राद्धेन तर्पयेत् ॥' इति कार्ष्णाजिनिना च स्वपितृभ्य एव श्राद्धविधानात् । न च मातृमातामहादिकं परित्यज्य पितृसंबन्धिभ्यो दातुमुचितम् । अतश्च स्वपितृभ्य एवेति सूक्तम् । श्राका.

(३) 'नान्दीमुखाः पितरः (प्रीयन्ताम्) इत्यक्षय्यस्थाने' इत्यनेन पार्वणोक्ताक्षय्यदानवाक्यस्य नान्दीमुखे प्रकारान्तरविधिरयम्, न तु कर्मान्तरविधिः, एकोद्दिष्टे 'उपतिष्ठतामित्यक्षय्यस्थाने' इतिवत् । तत्र पार्वणे 'अमुकगोत्रस्य पितुरमुकशर्मणः सर्वं दत्तमिदमन्नपानादिकमक्षय्यमस्त्विति यथाक्रमं पित्रादिब्राह्मणहस्ते सतिलजलदानम्, सर्वत्रास्त्विति ब्राह्मणवचनम्' इति गरुडपुराणादक्षय्यदानस्य दत्तपानादीनामक्षय्यप्रश्नार्थत्वे सति तत्र प्राप्तानां षष्ठ्यन्तगोत्रनाम्नां प्रथमाबहुवचनान्तता, तथा 'अक्षय्यमस्तु' इति स्थाने 'प्रीयन्ताम्' इति विधीयते । (नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान्पितॄन्वाचयिष्ये इति पृच्छति ?) ततश्च प्रीयन्तामिति क्रियान्वयानुरोधात् तत्रोक्तस्यान्नपानादिकमित्यस्य तृतीयान्ततया परिणामः । अत एव पितृपदस्य संबन्धार्पकपदोपलक्षकत्वम् । तेन 'अमुकगोत्रा नान्दीमुखाः पितरोऽमुकशर्माणः सर्वेण दत्तेनानेनान्नपानादिना प्रीयन्ताम्' इति वाक्यं संपन्नम् । एवं पितामहप्रपितामहमात्रादित्रिकमातामहादित्रिकाणामक्षय्ये बहुवचनान्तपितामहादिपदप्रक्षेपः कार्यः । 'अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने । तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचन एव च ॥' इति परिशिष्टेन तन्त्रतानिषेधादेकस्मिन्बहुवचनमदृष्टार्थमेव, स्वधावाचनवत् । न बहुवचनात्तन्त्रताविधिरत्रेति वाच्यम्, अन्यथासिद्धस्य निषेधबाधाक्षमत्वात् पितृपदस्य षट्पुरुषिकपरतया मात्रादिपक्षेऽनिस्ताराच्च । न च स्वधावाचनेऽपि गोत्रनामानुकीर्तनप्रसङ्ग इति वाच्यम्, प्रकृतौ तथानुक्तत्वात्, अक्षय्ये तु प्रकृतौ तथोक्तत्वात् । यथा पारस्करः— 'अर्घ्यदानेऽन्नसंकल्पे पिण्डदाने तथाऽक्षये । गोत्रसंबन्धनामानि यथावत् प्रतिपादयेत् ॥' । एतेन 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्येव सकृदेव वाच्यमित्याधुनिकानां मतमपास्तम् । अक्षय्यदानात् पृथगेव कर्मान्तरविधिरयमिति श्रीदत्तमतमपि तिरस्कृतम् । सामगानां तु गोभिलेन विशेषानुक्तत्वात् पार्वणवत् षष्ठ्यन्तेनैवाक्षय्यदानम् । एतदेव विवृतं छन्दोगपरिशिष्टे— 'अक्षय्योदकदानं तु अर्घ्यदानवदिष्यते । षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन ॥' । श्राकौ. ५११–५१३

(४) अक्षय्यस्थाने इत्यनेन यजुर्विदाम् 'अक्षय्यमस्तु' इत्यन्तवाक्यमनुक्त्वा प्राप्तपितृलोकोपाधित्वेन सर्वानुद्दिश्य 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यनेन सकृदेव जलं दातव्यम्, आवाहनवत् । अत्र कश्चित् —प्रकृते पार्वणे 'पितुरक्षय्यकाले' इति वचनात्, तथा 'अक्षय्योदकदानं तु अर्घ्यदानवदिष्यते ।', तथा 'अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने ।' इति वचनाच्च 'अमुकगोत्रस्य नान्दीमुखस्य पितुरमुकदेवशर्मणो दत्तेनानेनान्नपानादिना नान्दीमुखाः पितरः प्रीयन्ताम्', एवं पितामहादीनामपि '... प्रीयन्ताम्' इति क्रियानुरोधेन दत्तमित्यादेर्दत्तेनेत्यादिना विभक्तिविपरिणाम इति । तन्न, 'अक्षय्यं वाचयेत् पित्र्ये चरमं सतिलोदकम् ।' इति देवलवचनात् पार्वणे 'अक्षय्यम्' इति विशेषणपदविधेर्विशेष्याकाङ्क्षायां प्रकृतत्वात् श्राद्धे दत्तस्यैवान्वयात् । अत्र चतुर्थी-संबुद्ध्यन्तपदप्राप्तौ षष्ठ्यन्ताभिधानं वाचनिकम् । 'नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने' इति वृद्धिश्राद्धे अक्षय्यवाचनस्थाने नान्दीमुखा इत्यादिविधेरक्षय्यनिवृत्तौ विशेष्याकाङ्क्षाविरहात् दत्तमिदमित्यादेराकाङ्क्षितस्यान्वये मानाभावात् तदन्वयिषष्ठ्यन्तसंबुद्ध्यादिपदानामपि निवृत्तिः । अत एव 'नान्दीमुखाः पितरः प्रीयन्तामिति वाचयेत्'

इति ब्रह्मपुराणवचनेनापि अक्षय्यस्थाने नान्दीमुखा इत्यादिवचनं विशेषाभिधानेन पदाहवनीयन्यायेन सामान्याक्षय्यवाक्यबाधकमिति वाच्यम् । न चैवमेको-द्दिष्टेऽपि 'उपतिष्ठतामित्यक्षय्यस्थाने' इति पारस्करदर्श-नात् अत्रापि षष्ठ्यन्तप्रयोगो माऽस्त्विति वाच्यम्, तत्र उपतिष्ठतामित्युक्तेः किमित्याकाङ्क्षायामक्षय्यवदुपस्थि-तस्य दत्तमिदमित्यादेरन्वये संबन्धितया षष्ठ्यन्तस्यापि आकाङ्क्षितत्वात् । न च प्रकृतेऽपि तथा, 'विश्वे देवाः प्रीयन्ताम्' 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यादि-स्वधावाचनस्थानीयवत् तन्मात्रेणैवाभिधानपर्यवसानात् । 'षष्ठ्यैव नित्यम्' इत्यत्र नित्यपदं च नान्दीमुखप्रकरण-पठितत्वेन न तु तन्मात्रपरं किंतु पार्वणादिपरम् । एतत्परमुत्तरार्धे पार्वणेऽपीति निबन्धारः । न च 'अर्घ्ये-ऽक्षय्योदके चैव' इत्यादिवचनविषयत्वेन कुतस्तन्त्रता इति वाच्यम्, लाघवस्यैव बाधासहकृतस्य तन्त्रतासाधक-त्वात् । एतेन 'अक्षय्योदकं दत्वा नान्दीमुखाः पितरः प्रीयन्तामिति पितृब्राह्मणकरे जलं दद्यात्' इति श्रीदत्तादि-लिखितं चिन्त्यमिति श्राद्धचन्द्रिकायां गुरुचरणाः ।

यजुःश्रात. ४९९–५००

**[1]नान्दीमुखान् पितॄन् वाचयिष्य इति पृच्छति । वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति ॥**

**[1]न स्वधां प्रयुञ्जीत ॥**

(१) नान्दीमुखान् पितॄन् वाचयिष्ये इति पृच्छति । वाच्यतामिति ब्राह्मणैरनुज्ञातः 'नान्दीमुखाः पितरः' इतीमं मन्त्रमुदाहरेत् । न स्वधां प्रयुञ्जीत, स्वधोदाहरण-प्रतिषेधात्, तत्सारूप्यात् 'नान्दीमुखान् पितॄन् वाचयिष्ये' इति तत्स्थाने प्रयोगः कर्तव्यः । तत्र केचित् स्वधोदाहरणप्रतिषेधात् 'अस्तु स्वधेत्युच्यमाने' (पागृश्रा. ३) इति चोपदेशात् कुशेष्वपां निषेकं

---

(१) **पागृश्रा.** ६; **अप.** १।२४९ पृ. ५१८ (नान्दीमुखान् पितॄन् वाचयिष्य इति पृच्छति । नान्दीमुखाः पितरः पितामहाः प्रपितामहाः प्रीयन्तामिति) एतावदेव; **श्राक.** २७०–२७१ प्रपितामहाः (प्रपितामहाश्च) (मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च०); **स्मृच.** ४९९ (नान्दीमुखाः पितरः प्रीयन्तामिति) एतावदेव, म्हैसूरमुद्रितपुस्तके तु अन्यविध एव पाठः (पृ. ४३९); **चश्रा.** १०७ (नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च) एतावदेव : १५६० (वाच्यतामित्यनुज्ञातो०) मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च (मातामहाश्च); **चदा.** १४१ मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च (मातरो मातामहाश्च); **पमा.** ७८३ (नान्दीमुखान् पितॄनर्चयिष्ये इति पृच्छति, नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तामित्यनेन[ ? मिति ]); **मपा.** ६३२–६३३ पृच्छति (पृच्छति च) (वाच्यतामित्यनुज्ञातो०) शेषं श्राकवत्; **प्रपा.** १५. (नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तामिति) एतावदेव; **मर.** १६९ मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च (नान्दीमुखा मातामहाः प्रमातामहाश्च); **श्राकौ.** ५१०–५११ (इति पृच्छति०) प्रीयन्तामिति (प्रीयन्ताम्); **यजुःश्रात.** ४९८ (वाच्यतामित्यनुज्ञातो०) महाश्च प्रीयन्तामिति (महाः प्रीयन्ताम्); **श्रासौ.** ११९, १२५ (नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तामिति) एतावदेव : १२१ (वाच्यतामित्यनुज्ञातो०) (मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च०) प्रीयन्तामिति (प्रीयन्ताम्); **श्राप्र.** २९६ (नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च) एतावदेव : ३१० (नान्दीमुखाः पितरः पितामहाः प्रपितामहाः) एतावदेव; **लता.** ११८ पृच्छति + (च) (वाच्यतामित्यनुज्ञातो०); **सिन्धु.** १७५४ (नान्दीमुखान् पितॄन् वाचयिष्ये) एतावदेव; **बाल.** १।२५० पृ. ५६७, ५६९ (नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्ताम्) एतावदेव; **पुम.** ३८० (नान्दीमुखाः पितरः पितामहाः प्रपितामहाः) एतावदेव, कात्यायनगोभिलौ; **संग.** ८० (नान्दीमुखान् पितॄन् ... मित्यनुज्ञातो०); **संदी.** ५८–५९.

(१) **पागृश्रा.** ६; **अप.** १।२४९ पृ. ५१८ (न०); **श्राक.** २७१; **स्मृच.** ४९९; **चश्रा.** १५६०; **चदा.** १४१; **स्मृसा.** १०८; **पमा.** ७८३ (न स्वधां कुर्यात्); **मपा.** ६३३; **मर.** १६९; **श्राकौ.** ५११ स्वधां (स्वधां च); **यजुःश्रात.** ४९८ श्राकौवत्; **श्रासौ.** १२१ : १२५ कात्यायनगोभिलौ; **लता.** ११८; **सिन्धु.** १७५४; **संग.** ८४; **संदी.** ५९, ६०, ६१.

नेच्छन्ति, तदयुक्तम्, मन्त्रनिषेकयोः शेषशेषित्वाभावात्। तस्मात् तस्मिन् काले निषेक इति। * कभा.

( २ ) अन्नत्यागादौ स्वधाशब्दो न प्रयोक्तव्य इत्याह स एव– न स्वधां प्रयुञ्जीतेति। एवं च 'स्वधा नमः' इत्यत्र स्वधाशब्दस्य स्थाने 'स्वाहा' इत्येवं प्रयोगः। 'स्वधाऽर्घ्याः' इत्यत्र 'स्वाहाऽर्घ्याः' इत्येवं प्रयोगः कर्तव्यः, 'सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत्।' इति तेनैवाभिधानात्। स्मृच. ४९९

( ३ ) अत्र 'नान्दीमुखानां पितॄणामिदमासनम्, नान्दीमुखान् पितॄनावाहयिष्ये' इत्येवमादिभिर्वाक्यैः प्रयोगो विधेयः। एवमेव च कात्यायनीयं प्रयोगवचनम्– 'नान्दीमुखान् पितॄनावाहयिष्य इति पृच्छति, नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने, नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च' इति। कर्माङ्गाभ्युदयिकेऽप्येते एव पितरो देवताः, 'निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्॥' इति वचनेन वृद्धिश्राद्धधर्मातिदेशात्। तदेवमत्र मातृ–पितामही–प्रपितामहीनां पितृ– पितामह–प्रपितामहानां मातामह–प्रमातामह–वृद्धप्रमातामहानां च वृद्धिश्राद्धदेवतात्वे स्थिते 'वृद्धौ नान्दीमुखान् पितॄन् यजेत' इत्यादिषु त एव नान्दीमुखशब्दाभिधेयत्वेन विवक्षिताः। ¶ पृ. १०६–१०७

स्वधावाचनस्थाने च 'नान्दीमुखान् पितॄन् स्वाहां वाचयिष्ये' इति पृच्छति। 'वाच्यताम्' इति ब्राह्मणैरनुज्ञातः 'नान्दीमुखेभ्यः स्वाहोच्यताम्' इति प्रेष्यति। 'अस्तु स्वाहा' इति ब्राह्मणैरनुज्ञातः 'ऊर्जम्' इत्यादिमन्त्रे 'स्वाहा स्थ' इत्यूहं विधाय भूमावास्तृतासु दूर्वासु जलं निषिञ्चेत्। चश्रा. १५६१

( ४ ) अत्र 'नान्दीमुखाः पितरः' इति मातॄणां मातामहादीनामपि प्रदर्शनार्थम्। मपा. ६२३

( ५ ) अत्र च प्रथमोद्दिष्टनान्दीमुखशब्देन वृद्धप्रमाता( ? प्रपिता )महादित्रिकस्यैव नान्दीमुखत्वं मा भूदित्यश्रुमुखानामपि तत्प्राप्त्यर्थं पुनर्नान्दीमुखग्रहणम्। एवं मातामहेष्वपि। अत एव मन्त्रे 'पितरः पितामहाः' इति बहुत्वमुक्तम्। चकारो मातृवर्गप्राप्त्यर्थः। तथा च ब्रह्मपुराणम्– 'मातामहेभ्यश्च तथा नान्दीवक्त्रेभ्य एव च। अथ नान्दीमुखीभ्यश्च मातृभ्यः श्राद्धमुत्तमम्॥' इति। ननु च– आभ्युदयिके मातृश्राद्धस्य पूर्वभावित्वात्पितृग्रहणं किमर्थम्? उच्यते– 'अग्निहोत्रं जुहोति, यवागूं पचति' इतिवत् पाठोऽर्थेन बाध्यते इत्यदोषः। तथा च शाट्यायनः– 'नान्दीमुखीभ्यः' इत्यादि, 'मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम्। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥' इत्यादि च। अतश्च 'नान्दीमुख्यो मातरः प्रीयन्ताम्' इत्यादिक्रमेण यथालिङ्गं प्रयोगः।

अत्रैतत्संदिह्यते– किमत्र नवदैवत्यं श्राद्धमुत द्वादशदैवत्यमिति, उभयथा च वचनदर्शनात्। तथा हि– 'मातृभ्यः प्रथमं दद्यात् पितृभ्यस्तदनन्तरम्। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥' इत्यादि। चतुर्विंशतिमते तु– 'मातृपूर्वान् पितॄन्पूज्य ततो मातामहीस्तथा। मातामहं( ? हान् ) ततः केचिदेव...स्तु भोजयेत्॥'। पुराणसमुच्चयेऽपि– 'शस्तं नान्दीमुखश्राद्धं पिण्डैर्द्वादशभिस्तदा॥'। तथा– 'अपि दूर्वाक्षतयवैर्बदरेण विमिश्रिताः। पिण्डा नान्दीमुखे देया मातृपूर्वाश्च द्वादश॥' इति। एवं विप्रतिपत्तौ यथाशाखं यथाकुलदेशं वा व्यवस्थेत्यविरोधः। तुल्यविकल्पो वा। अथवा– धनधान्यपुत्रपश्वादिवृद्ध्यर्थं क्रियमाणं वृद्धिश्राद्धम्, अग्न्याधानाद्यभ्युदयनिमित्तमाभ्युदयिकमिति भेदः। तत्र वृद्धिश्राद्धं द्वादशदैवत्यम्, आभ्युदयिकं नवदैवत्यमिति व्यवस्थेति, 'अन्वष्टकायां यच्छ्राद्धं यच्छ्राद्धं वृद्धिहेतुकम्। पित्रादीनां पृथग्दानं स्त्रीणां पिण्डः पृथक् पृथक्॥' इत्यत्र वृद्धिहेतुकमित्यभिधानात्, तथा– 'शरीरोपचये श्राद्धमर्थोपचय एव च। पुष्ट्यर्थमिति विज्ञेयमौपचारिकमुच्यते॥', तथा– 'नक्षत्रग्रहपीडासु

* मर. कभागतम्।

¶ प्रपा. चश्रावत्।

दुष्टस्वप्नावलोकने । इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथा ॥' इति वचनादिति ।

'न स्वधां प्रयुञ्जीत'। निषेधान्तरोपलक्षणं चैतत्। तेन शर्मादिकमप्यत्र न प्रयुञ्जीतेत्यर्थः । तथा च पुराणसमुच्चये– 'न स्वधा शर्म वर्मेति पितृनाम न चोच्चरेत् । न कर्म पितृतीर्थेन न कुशा द्विगुणीकृताः ॥ न तिलैर्नापसव्येन पित्र्यमन्त्रविवर्जितम् । असच्छन्दं न कुर्वीत श्राद्धे नान्दीमुखे क्वचित् ॥' इति । अतश्च 'नान्दीमुख पितरमुकगोत्र' इत्यादिप्रयोगः । अन्ये तु पार्वणवन्नामशर्मादिकमपि प्रयुञ्जते । तन्निषेधदर्शनात्कथमिति (न) वाच्यम्, पार्वणवदित्यतिदेशाद्वा तद्विधिः। प्रकृते स्वधावाचने 'स्वधां न प्रयुञ्जीत' इति निषेध इति । तदयुक्तम्, सामान्येनाऽऽभ्युदयिके तन्निषेधात् ।

श्राका.

(६) स्वधावाचनवाक्यस्य पार्वणात्प्रकारान्तरमाह– नान्दीमुखान् पितॄनिति । अत्रापि बहुवचनमदृष्टार्थम् । अत्र चकारं कृत्वा प्रत्येकेन क्रियान्वयदर्शनात् स्वधावाचने तन्त्रतानिषेधाच्च पृथगेव प्रत्येकं वाक्यम्, न तु सकृदेवेति श्रीदत्तमतमादरणीयम् । एवं च मात्रादिपक्षे स्वधावाचनप्रकारापेक्षायां लाघवात् पित्रादिदृष्टमेव वाक्यं नान्दीमुख्यो मातरः प्रीयन्तामिति मन्तव्यम् । प्रतिवचनं च प्रीयन्तामिति सर्वत्रैव । सामगानां तु 'नान्दीमुखेभ्यः प्रीयन्ताम्' इति प्रथमास्थाने चतुर्थी वाचनिकी । यथा गोभिलः– 'आभ्युदयिके युग्मानाशयेत् । प्रदक्षिणमुपचारः । ऋजवो दर्भाः । यवैस्तिलार्थः । संपन्नमिति तृप्तिप्रश्नः । दधिबदराक्षतमिश्राः पिण्डाः । नान्दीमुखाः पितरः प्रीयन्तामिति दैवे वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च प्रीयन्तामिति । न स्वधां प्रयुञ्जीत'। पारस्करे गोभिले च स्वधावाचने प्रकारमुक्त्वा 'न स्वधां प्रयुञ्जीत' इत्यनेन मन्त्रे वाक्ये च स्वधाशब्दो निषिध्यते । किंतु सर्वत्र मन्त्रे स्वधास्थाने पुष्टिपदप्रयोगः कार्यः, आश्वलायनगृह्ये 'तिलोऽसि' इति मन्त्रे यवपदोहं कृत्वा स्वधास्थाने पुष्टिपदनिक्षेपात् । यथा तत्र– 'शं नो देवीरित्यभिमन्त्रितान् सप्त यवानावपति । यवोऽसि सोमदेवत्यो गोषवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् पितॄन् लोकान् प्रीणाहि नः स्वाहा ॥' इति । अत एव मन्त्रेऽपि सर्वत्र पितृपदे नान्दीमुखविशेषणं देयम् । एवं च मन्त्रे पुष्टिपददर्शनात् वाक्येऽपि स्वधास्थाने पुष्टिपदं केचिदाहुः, तन्मन्दम्, तस्य त्यागवाचकत्वाभावात् तद्योगे चतुर्थ्यनुपपत्तेश्च, किन्तु स्वधास्थाने नमःप्रयोग एव कार्यः, 'सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ।' इत्यतिदेशात् । 'देवानां नमसा देयं पितॄणां च स्वधेति च ।' इति देवलादिवचनात् देवदाने नमःपदं प्रागेव निर्णीतम् । ततश्च स्वाहापदं श्रीदत्तेन वृद्धिश्राद्धे लिखितं प्रमादकृतमेव ।

श्राकौ. ५१४–५१६

(७) नान्दीमुखानिति । 'स्वधां वाचयिष्ये' इत्यस्य स्थाने 'नान्दीमुखान् पितॄन् वाचयिष्ये' इति । 'पितृभ्यः स्वधोच्यताम्' इत्यादिस्थाने 'नान्दीमुखाः पितरः' इत्यादि । यद्यपि पारस्करेण पित्रादीनामेवोपादानं कृतं न मात्रादीनाम्, तथापि पार्वणे 'शुन्धन्तां पितरः' इत्यादिमन्त्राणां मातामहादाविवोहेन 'नान्दीमुख्यो मातरः प्रीयन्ताम्' इत्यूहेन मन्त्रादिषु विनियोगः । न च 'मातामहानामपि एवम्' इत्यादिवचनादस्तु तत्र प्रकृतावूहः, यावद्वचनं तु वाचनिकमिति न्यायात्, प्रकृते तु वचनाभावात् 'न प्रकृतावूहोऽपूर्वत्वात्' (काश्रौ. ४।९९) इत्यादिकात्यायनवचनात् कथमूह इति वाच्यम् । अत्र जीवति पित्रादौ उक्तक्रमातिदेशस्य यावत् पार्वणोद्देश्य एवाऽऽकाङ्क्षितत्वेन मातामहानामिति बहुवचनेन तेषामेवोपादानान्मात्रादीनामपि पार्वणोद्देश्यत्वाविशेषात् तत्रोहविधेर्वाचनिकत्वात् । अन्यथा मात्रादिजीवने वृद्धयन्वष्टकादौ अनिर्णयापत्तेः, जीवति पितरि वृद्धप्रपितामहे श्राद्धे 'शुन्धन्ताम्' इति बहुवचनस्यानूहापाताच्च । न च पार्वणीयत्वेन वृद्ध्यादावूहविधायकमिति वाच्यम्, तस्य सकलश्राद्धप्रकृतित्वेन विकृतावपि तथात्वलाभात् । प्रीयन्तामित्यस्य सर्वत्रानुषङ्गः, स्वधा-

वाचने तन्त्रतानिषेधादिति प्राञ्चः। अनुषङ्ग एव सूत्रस्वरस इति पाश्चात्त्याः। 'न स्वधां च प्रयुञ्जीत' इति पारस्करसूत्रेण स्वधावाचननिषेधात् 'अर्घ्येऽक्षय्योदके' इत्यस्याविषयत्वे लाघवात् सकृदेव 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाः प्रीयन्ताम्' इत्यादि वाच्यम्। नानुषङ्गो गौरवात्, बाधकं विना सूत्रस्वरसहानेरनौचित्यात्। अत एव पारस्करेण विवाहप्रकरणे जायाहोमे 'सर्वत्रानुषजति' इत्युक्तम्। न स्वधेति अत्र सामान्यतो निर्देशात् वाक्ये मन्त्रे स्वधावाचने च स्वधानिषेधः। अत एव बह्वृचकारिका प्रदर्शनार्था— 'स्वधयेति पदस्थाने पुष्ट्याशब्दं वदेदिह। पितॄनिति पदात् पूर्वं वदेन्नान्दीमुखानिति॥'। यजुश्रात. ५००–५०१

## [१]युग्मानाशयेदत्र॥

(१) आभ्युदयिके युग्मानाशयेदिति। कंभा.

(२) अत्र वृद्धिश्राद्धे पित्रुद्देशेन युग्मान् ब्राह्मणान् भोजयेन्न त्वयुग्मानित्यर्थः। मर. १६९

(३) अत्र आभ्युदयिके युग्मान् द्विचतुरादीन् विप्रानाशयेत् भोजयेदित्यर्थः। अस्य दैविकत्वात् 'दैवे युग्मान् यथाशक्ति' इति परिभाषयैव युग्मत्वप्राप्तौ विशिष्टविध्यर्थं युग्मग्रहणम्। तेन पित्र्येऽपि युग्मानेव प्रातर्निमन्त्र्याऽऽशयेदित्यर्थः। तथा च कात्यायनः— 'प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथा॥' इति। अन्यच्च— 'ज्येष्ठोत्तरकरान्युग्मान् कराग्राग्रपवित्रकान्। कृत्वाऽर्घं संप्रदातव्यं नैकैकस्यात्र दीयते॥' इति। युग्मानिति पुंस्त्वमविवक्षितम्। तेन पुमभावे स्त्रियोऽपीत्यर्थः, तथा च— 'मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि। पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः॥' इति वृद्धवसिष्ठवचनात्। शङ्खोपि— 'पित्रादित्रयपत्नीस्तु भोज्या मातृप्रति द्विजैः (?)। स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमतः स्मृतम्॥' इति। आशयेदित्यपि विशिष्टविध्यर्थम्, तृप्तिप्रश्नेनैव भोजनोपलब्धेः। अतश्च गुडशर्करादिना मधुरान्नं भोजयेदिति विशिष्टविधिरित्यर्थः। तथा च भविष्यत्पुराणम्— 'ब्राह्मणेभ्यस्ततो दद्याद्भोजनं मधुरं खग। गुडमिश्रं सितायुक्तं जवं (? सजवं) चोदनोत्तरम्। सरलान्नोदकांश्चैव नवाम्लकटुकांस्तथा(?)॥'। कृष्णात्रेयोऽपि— 'अत्र श्राद्धेषु दातव्यं न मांसं पितृपूजने॥' इति। अपि च— 'अपसव्यं जानुपातमम्लं मांसं च वारिजम्। रक्तं विवर्जयेत् (दर्भान्) समूलांश्च तिलानपि॥' इति। तथा— 'द्राक्षामलकमूलानि यवान्वाऽथ निवेदयेत्। तानेव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा॥' इति ब्रह्मपुराणम्। अतश्च 'द्राक्षामलकमूलयवनिष्क्रयिणीं दक्षिणां युवाभ्यां संप्रददे' इत्यादिप्रयोगः, 'नैकैकस्यात्र दीयते' इत्युक्तेः।

अथाऽऽभ्युदयिकश्राद्धसंदेहो निरस्यते— तत्र कात्यायनः— 'स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु। पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्॥'। अस्यार्थः— पिण्डशब्दः श्राद्धं लक्षयति। आ उद्वहनादिति आङ् अभिविधौ। ततश्च पुत्रस्य निषेकादिप्रथमविवाहपर्यन्तेषु संस्कारकर्मसु पिता स्वमातृस्वपितृस्वमातामहेभ्यः श्राद्धं दद्यात्, न पुत्रमातृमातामहादिभ्यः। तस्य पितुरभावे तेषां पितुर्मात्रादीनामेव नवानां तत्क्रमात् (? क्रमात्) येन क्रमेण पित्रा दत्तं तेनैव क्रमेणाधिकारी ज्येष्ठभ्रात्रादिरपि दद्यादिति। नन्वेवं सति संस्कार्यस्य पुत्रादेर्मृतपित्रोः श्राद्धादौ मुख्याधिकारित्वात् तदतिक्रमो न युक्त इति। न च जीवत्पित्रोर्योऽनुष्ठानक्रमः स मृतपित्रोरपि उचितः इति वाच्यम्, 'प्रेतेभ्यो दद्यात्' इति (वचनात्)। न च जीवत्पित्रादिमारभ्यैव श्राद्धं भ्रात्रादिरप्यधिकारी कुर्यादित्येवार्थः, 'तस्याभावे सुतः (? त–) क्रमात्' इति पाठेऽपि तदर्थस्य प्रतीयमानत्वाच्चेति। अत्रोच्यते— 'असं-

(१) पागृश्रा. ६; अप. १।२४९ पृ. ५२८ (अत्र०); श्राक. २७१ अपवत्; चश्रा. १५६० अपवत्; चदा. १४१ अपवत्; स्मृसा. १०८ अपवत्; पमा. ७८३ अपवत्; मपा. ६३३ अपवत्; मर. १६९; श्राकौ. ५११ अपवत्; श्रासौ. १२१ अपवत्; लता. ११८; संग. ९०; संदी. ५९.

स्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।' इत्यादिना भ्रात्रादयः पित्रभावे प्रतिनिधित्वेन विधीयन्ते । प्रतिनिधेश्च 'स तद्धर्मा कर्मयोगात्' इति कात्यायनपरिभाषया पितृधर्मप्राप्तेर्भ्रात्रादिः पितृसमानधर्मेति । किंच– 'तस्याभावे' इत्यभावः पञ्चविधः– प्रागभावः प्रध्वंसाभावः संनिध्यभावोऽधिकाराभावोऽत्यन्ताभावश्चेति । तत्र संस्कार्ये सति प्रागभावात्यन्ताभावयोरसंभव एव, प्रध्वंसाभावसंनिध्यभावाधिकाराभावानां संभवोऽस्तीति तत्र सर्वत्रापि वचनबलात् पितुः पितृभ्यो दानं विधीयते, न संस्कार्यपितृभ्यः । तथा च स्मृतिः– 'पितरो जनकस्येज्या यावद्व्रतमनाहितम् । समाहितव्रतः पश्चात्स्वान् यजेत पितामहान् ॥' इति । पितामहानिति पित्राद्युपलक्षणम् । तथा– 'ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते । व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥' इत्यादि । यत्तु– 'प्रेतेभ्यो दद्यात्' इति वचनं तदधिकारसंभवविषयम् । अधिकारश्च सदारत्वेन विवाहानन्तरं स्वपितृभ्यो दातुं भवतीति । तथा च ऋष्यशृङ्गः– 'नाश्नाति यो द्विजो मांसं यस्य नो दारसंग्रहः । तावेतौ मुनिभिः प्रोक्तावनर्हौ मश्च( ? श्राद्ध– ) दूषकौ ॥' इति । नाश्नाति मांसं श्राद्ध इति शेषः । ननु च– 'समाहितव्रतः पश्चात्स्वान् यजेत पितामहान् ।' इत्यनेनोपनयनादूर्ध्वमेव स्वपितृभ्यो दातुमधिकारः, तत्कथं विवाहानन्तरमिति । उच्यते– उपनयनादूर्ध्वं स्वपितृभ्यो दातुं कर्त्रन्तराभावे एकपुत्रविषयम् । कर्त्रन्तरसद्भावे तु प्रतिनिधिभूतः स एव तदाद्यविवाहपर्यन्तं संस्कार्यस्य पितृपितृभ्य एव दद्यादिति । तथा च सुमन्तुः– 'श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः । व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि ॥' इति । तस्माद्युक्तमुक्तं पित्रभावे प्रतिनिधेः पितृधर्मप्राप्त्या संस्कार्यस्य पितुर्मातृपितृमातामहेभ्यः श्राद्धं दद्यादिति । तथा च स्मृतिः– 'नान्दीश्राद्धं पिता दद्यादाद्ये पाणिग्रहे बुधः । अत ऊर्ध्वं प्रकर्तव्यं स्वयमेव तु नान्दिकम् ॥' । अपरमपि– 'पित्रोस्तु जीवतोः पुत्रः कुरुते दारसंग्रहम् । पितुर्नान्दीमुखं प्रोक्तं न पुत्रस्य कथंचन ॥' इति । ननु– पित्रोर्जीवतोरेव तत्पित्रोर्नान्दीमुखत्वं प्रोक्तम्, मृतयोस्त्वन्यः करोतीति तत्कथं संस्कार्यस्य पितॄणामतिक्रमो युक्तः ? सत्यम्, ओद्वहनादित्यवधिना पितृपितृभ्य एव विधानात् 'स तद्धर्मा' इति परिभाषया प्रतिषेधः( ? प्रतिनिधेः ) तदतिक्रमस्य वाचनिकत्वात्, अपि च वचनान्तरम्( ? रे ) – 'कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः । नामकर्मणि बालानां चूडाकर्मादिके तथा ॥ सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने । नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही ॥' इति गृहिण एवोपदेशात् । चूडाकर्मादिके इत्याद्यविवाहपर्यन्तं वेदितव्यम् । तदूर्ध्वं तु द्वितीयविवाहादावपि सर्वत्र जीवत्पितृकः पितृपितृभ्यो मृतपितृकः स्वपितृभ्य इति विवेकः । तथा चायमर्थः– पिता स्वपुत्रस्य निषेकादिविवाहपर्यन्तसंस्कारकर्मसु स्वमातृपितृमातामहेभ्यः श्राद्धं कुर्यात् । पितुरभावेऽसंनिहिते वाऽधिकाराभावे वा तत्प्रतिनिधिर्ज्येष्ठभ्रात्रादिर्विवाहपर्यन्तकर्मसु संस्कार्यस्य ( पितृ )पितृभ्य एवेति सर्वमनवद्यम् । श्राका.

( ४ ) अत्र आभ्युदयिके युग्मान् बहुवचनोपदेशात् चतुरादीन् ब्राह्मणान् आशयेत् भोजयेदित्यर्थः । तेन पित्र्येऽपि युग्मानाशयेत् । संग. ९०

## गोभिलगृह्यसूत्रम्

नान्दीश्राद्धस्य निमित्तानि परिभाषा च

[1]**वृद्धिपूर्तेषु युग्मानाशयेत् ॥**

**प्रदक्षिणमुपचारः ॥**

**यवैस्तिलार्थः ॥**

## गोभिलीयश्राद्धकल्पः

नान्दीश्राद्धस्य परिभाषा प्रयोगश्च

[2]**अथाऽऽभ्युदयिके श्राद्धे ॥**

---

( १ ) गोगृ. ४।३।३५-३७.

( २ ) गोश्रा. ४।१ ; चश्रा. १५६१ ( अथ० ) ; श्राकौ. ५०८, ५१४ ( आभ्युदयिके ) एतावदेव ; श्रात. ३०७.

( १ ) आभ्युदयिके अभ्युदयनिमित्तके । अभ्युदयः इष्टलाभः विवाहादिः । तदर्थं श्राद्धम् आभ्युदयिकम् । तच्च भूतभविष्यद्भेदेन द्विविधम् । तत्र भूतं पुत्रजन्मादि, भविष्यद्विवाहादि । एवं च श्राद्धविवेकादौ श्राद्धभेदगणने वृद्धिश्राद्धत्वेन कर्माङ्गत्वेन च यदुभयत्वमुक्तं तदुभयमेवाऽऽभ्युदयिकत्वेनोपपन्नम् । तेनाभिलापे आभ्युदयिकश्राद्धमिति प्रयोज्यम् । श्रात. ३०७

( २ ) अथेदानीमाभ्युदयिके श्राद्धे यो विशेषः सोऽभिधीयते । अभ्युदयः मङ्गलं विवाहादिकमित्येतत् । तत्र यत् क्रियते श्राद्धं तदिदमाभ्युदयिकं श्राद्धमिति कर्मणो नामधेयमेतत् । तेनाभिलापे आभ्युदयिकश्राद्धमित्युल्लेख्यम् । तदिदं श्राद्धं मातृपूजावसोर्धारायुष्यमन्त्रजपं कृत्वा करणीयम् । तथा च छन्दोगपरिशिष्टे कात्यायनः– 'कर्मादिषु च सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥ प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु । अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥ कुड्यलग्नां वसोर्धारां सप्तवारान् घृतेन तु । कारयेत् पञ्चवारान्वा नातिनीचां न चोच्छ्रिताम् ॥ आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः । षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥' इति । तदिदं श्राद्धं यत्र यत्र न भवति, तदपि तत्रैव द्रष्टव्यम् । गोश्राभा.

( ३ ) अथेत्यारम्भार्थकमपि मुखतो मङ्गलार्थम् । आभ्युदयिके अभ्युदयप्रयोजनके, 'तदस्य' इत्यधिकृत्य 'प्रयोजनम्' (पासू. ५।१।१०९) इति विहितस्य ठञ इकादेशेन पदसिद्धेरुपपादनात् । अभ्युदयः समृद्धिरित्यनर्थान्तरम् । 'नान्दी समृद्धिरिति कथ्यते' इति शुभकर्मनिर्णयधृतं भविष्यपुराणम् । तथा च नान्दीपदस्य चतुर्थीसमासबलेन तदर्थपरतया नान्दीश्राद्धमप्येतदेव । अत एवात्र पितरोऽपि नान्दीमुखा एव सूत्रेऽन्यत्र चाभिहिताः । तदिदं श्राद्धं मातृकापूजावसोर्धारायुष्यमन्त्रजपान् कृत्वा कार्यम् । तथा च कर्मप्रदीपे कात्यायनः– 'कर्मादिषु च सर्वेषु ... श्राद्धदानमुपक्रमेत् ॥' इति । कर्मादिषु कर्मणामादिषु । सर्वेषु श्राद्धवत्सु । 'मातॄः संपूजयित्वा तु पितृभ्यः सुसमाहितः । वृद्धिश्राद्धं ततः कुर्यात् सदाऽभ्युदयकारकम् ॥' इत्यादिवचनेषु सर्वत्र आभ्युदयिकसहभावेनैतद्विधानात् तदेकमूलकत्वकल्पनालाघवात्, 'यत्र यत्र भवेच्छ्राद्धं तत्र तत्रैव मातरः ।' इति कात्यायनोक्तेश्च । तेन यत्र आभ्युदयिकश्राद्धं न विहितम्, यथा निष्क्रमणान्नप्राशनयोस्तत्रैतदपि न भवति । मृदुला.

'युग्मानाशयेत् ॥

(१) अत्र 'यवैस्तिलार्थः' इत्यनेन पार्वणश्राद्धप्राप्ततिलस्थाने यवविधानादाभ्युदयिकस्यापि पार्वणप्रकृतिकत्वं प्रतीयते, अन्यथा 'तिलार्थः' इत्युपादानं व्यर्थं स्यात् । ततश्च पार्वणप्रकृतिकत्वेन पित्र्ये अयुग्मब्राह्मणप्राप्तौ तन्निरासाय पितृपक्षे ब्राह्मणयुग्मत्वोपदेशः, दैवे युग्मत्वस्य पार्वणप्राप्तत्वात् न तदर्थोपदेशः । श्रात. ३०७

( २ ) पितॄणामप्यत्र युग्मान् ब्राह्मणानाशयेत् । ब्राह्मणानां चात्रापि कर्मणि दैवे प्राङ्मुखत्वं पित्र्ये चोदङ्मुखत्वं पार्वणवदेव भवति, तत्रापवादकवचनाभावात् । तथा च कात्यायनः– 'प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ।उपवेश्य कुशान् दद्यादृजुनैव हि पाणिना ॥' इति तथा पार्वणवदेव उपवेशनं ब्राह्मणानामाह । कर्ता पुनरत्र प्राङ्मुखः स्यात् । कथं ज्ञायते ? तत्र पित्र्ये कर्मणि दक्षिणामुखत्वं दक्षिणाया दिशः पित्र्यत्वादुपपन्नतमम्, इह तु 'सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ।' इति कात्यायनेन पितॄणां देववत् परिचरणस्योपदेशात् अमाङ्गलिकं दक्षिणामुखत्वं न युक्तं वर्णयितुमिति । तथा च, पिण्डदाने प्राङ्मुखत्वस्य तेनाभिधानात् सर्वत्र तथात्वमवगच्छामः । गोश्राभा.

'प्रदक्षिणमुपचारः ॥

---

( १ ) गोश्रा. ४१२; चश्रा. १५६१ युग्मानाशयेत् ( युग्मा ब्राह्मणाः ); श्राकौ. ५१४; श्रात. ३०७.

( २ ) गोश्रा. ४१३; चश्रा. १५६१; श्राकौ. ५०८, ५१४; श्रात. ३०७.

(१) 'अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम्।' इति (यास्मृ. १।२३२) याज्ञवल्क्यवचनेन देवकर्मानन्तरं पितृकर्मकरणे प्राप्तवामोपचारनिरासाय प्रदक्षिणमुपचारः। तेन देवपितृकर्मकरणाय दक्षिणावर्तेन गन्तव्यम्। श्रात. ३०७

(२) प्रदक्षिणं यथा भवति तथा उपचारः कर्तव्यः। अस्माच्च विशेषाभिधानात् तत्रा(? अन्यत्रा)प्रादक्षिण्यमुपचारस्यावगम्यते। अन्येऽपि विशेषाः 'निपातो न हि सव्यस्य जानुनो विद्यते क्वचित्। सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत्॥' इत्येवमाद्याः कात्यायनोक्ताश्छन्दोगपरिशिष्टादुपलब्धव्याः। गोश्राभा.

[१]ऋजवो दर्भाः॥

द्विगुणभुग्नत्वनिरासाय ऋजवो दर्भा इति ऋजुत्वोपदेशः। ‡ श्रात. ३०७

*यवैस्तिलार्थः॥

तत्र तिलैर्योऽर्थः प्रयोजनं क्रियते, सोऽत्र यवैः कर्तव्यः। तेन 'तिलोऽसि' इति मन्त्रे 'यवोऽसि' इत्यूहितव्यं भवति। † गोश्राभा.

[१]संपन्नमिति तृप्तिप्रश्नः॥

(१) 'तृप्ताः स्थ' इत्यनेन तृप्तिप्रश्ने 'संपन्नम्' इति प्रष्टव्यम्। योग्यत्वात् 'सुसंपन्नमिति प्रोक्ते' (इति) वक्ष्यमाणछन्दोगपरिशिष्टवचनाच्च 'सुसंपन्नम्' इत्युत्तरम्। एतद्दर्भमयब्राह्मणपक्षेऽप्यबाधितत्वाद्ग्राह्यम्। श्रात. ३०७

(२) 'तृप्ताः स्थ' इति तृप्तिप्रश्नस्थाने 'संपन्नम्' इति वक्तव्यम्। ते च 'सुसंपन्नम्' इति ब्रूयुः। तथा च कात्यायनः— 'संपन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते। सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत्॥' इति।

केचिदत्र 'मधु मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्। गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः॥' इति छन्दोगपरिशिष्टे मधुमन्त्रजपनिषेधात् मधुनो वर्जनमाहुः। तदसंगतम्। कस्मात्? 'वसिष्ठोक्तो विधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः।' इति छन्दोगपरिशिष्टे आमिषव्युदासेन वसिष्ठोक्तस्य कृत्स्नस्य विधेरतिदेशात् मधुनः प्राप्तेः। मधुमन्त्रजपनिषेधात् मधुनो निषेधः इत्यसंगतैषा कल्पना, प्रमाणाभावात्, मधुमन्त्रजपनिषेधाच्च मधुनोऽस्तित्वावगतेः। इतरथा मधुनोऽभावादेव मन्त्रोऽपि तत्प्रकाशको निवर्त्स्यति, किमित्यसौ निषिध्यते? ननु गुणस्य मन्त्रस्य वर्जनोपदेशादेव द्रव्यस्य वर्जनमिति नायमनर्थको निषेधः। नैतदस्ति। कुतः? 'गुणलोपे च मुख्यस्य' इति सिद्धान्तविरोधात्। अथ— मा तावत् मन्त्रवर्जनोपदेशात् द्रव्यस्य वर्जनं सेधि, किंतु मन्त्रवर्जनोपदेशात् द्रव्यवर्जनमनुमास्यामहे। एवं खल्वसौ निषेधो न्यायमूलो भविष्यति— इति, तदपि नास्ति। मन्त्रवर्जनस्य न्यायमूलत्वोपपिपादयिषया तावत् द्रव्यवर्जनमनुमितसति भवान्। तत्रैवं सति क्व ते लाघवम्? तद्वरं सति द्रव्ये मन्त्रवर्जनं वाचनिकमिष्यताम्। अलं द्रव्यस्य वर्जनानुमानेन। यतोऽवश्यमेकस्य वाचनिकत्वं भवताऽप्यभ्युपगन्तव्यम्। एवं खलु सिद्धान्तोऽप्यनुग्रहीष्यते। अनैकान्तिकं चैतत् लिङ्गं न खल्वपि द्रव्यस्य वर्जनं शक्नोत्यनुमापयितुम्। 'मधु' इत्येतस्य त्रिर्जपोपदेशोऽप्येवं सति भवन्मते न स्यात्। यद्यप्येवम्, तथापि कलौ तावन्मधु न देयमित्युक्तमादावेव। गोश्राभा.

[१]दधिबदराक्षतमिश्राः पिण्डाः॥

---

‡ गोश्राभा. श्रातवत्।

* 'युग्मानाशयेत्' इति पूर्वसूत्रे श्रातव्याख्यानं द्रष्टव्यम्।

† मृदुला. गोश्राभागतम्।

(१) गोश्रा. ४१४-५; चश्रा. १५६१; श्राकौ. ५१४; श्रात. ३०७.

(२) गोश्रा. ४१६; श्राकौ. ५१४; श्रात. ३०७.

(१) गोश्रा. ४१७; चश्रा. १५६१; श्राकौ. ५१४; श्रात. ३०७. 'दधिबदराक्षतमिश्रान् पिण्डान्' इति मृदुलापुस्तकपाठः।

( १ ) दधिबदराक्षतमिश्राः इत्यनेन दध्यादिमिश्रणमावश्यकम् । अक्षतो यवः, 'अक्षताश्च यवाः प्रोक्ता भृष्टा धाना भवन्ति ते ।' इति भट्टनारायणधृतात् । अत एव वक्ष्यमाणछन्दोगपरिशिष्टवचनेऽक्षतमनुक्त्वा 'संयोज्य यवकर्कन्धुदधिभिः' इति निःसंदिग्धमुक्तम् ।

श्रात. ३०७-३०८

( २ ) दधिबदरे प्रसिद्धे । अक्षतो यवः । कुतः ? 'अक्षतास्तु यवाः प्रोक्ताः' इति स्मरणात् । तैर्मिश्राः पिण्डा भवन्ति । तथा च कात्यायनः— 'सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च । संयोज्य यवकर्कन्धूदधिभिः प्राङ्मुखस्ततः ॥ अवनेजनवत्पिण्डान् दत्त्वा बिल्वप्रमाणकान् । तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत् ॥' इति । तदनेन शेषद्रव्यघटितपिण्डानां दधिबदराक्षतमिश्रत्वरूपगुणमात्रविधानात् नात्र ब्राह्मणभोजने दध्यादिकमवश्यं प्राप्नोति, फलचमसन्यायवैषम्यात् । राजन्यवैश्यकर्तृकज्योतिष्टोमे हि संस्कारस्य तदर्थत्वात् होमविशेषवचनात् चमसैस्तुल्यकालत्वात् लिङ्गदर्शनाच्च फलचमसस्येज्याविकारत्वम्, इह तु न तद्वत्किंचित्कारणमस्ति दध्यादीनां ब्राह्मणभोजनेऽप्यवश्यं प्राप्तौ । राजन्यवैश्यकर्तृकज्योतिष्टोमे भक्षणं प्रतिपत्तिः, तत्र फलचमसविधानात् यागावशिष्टस्य च ऋत्विजां भक्ष्यत्वात् यागेऽपि फलचमसप्राप्तिरिति तु न समीचीनम् । हविःसंस्कारार्थे खल्वेतद्भक्षणमित्यध्वरमीमांसायास्तृतीयेऽध्याये द्रष्टव्यम् । पिण्डदानं तु 'प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत् । अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ॥ द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः । मातामहप्रभृतींस्तु एतेषामेव वामतः ॥' इति कात्यायनोक्तप्रकारेणावनेनिज्य करणीयम् । 'एतेषामेव वामतः' इत्यभिधानादाबाहितानां पित्रादीनामेव वामतः, न कर्तुरिति । तदनेन पितृपक्षास्तृतदर्भाणां दक्षिणतो मातामहपक्षदर्भास्तरणं कर्तव्यं भवति । एवं किल प्रदक्षिणोपचारत्वमुपपत्स्यते इति ।

गोश्राभा.

( ३ ) दधीति मधुनोऽप्युपलक्षणम् । तथा च ब्रह्मपुराणम्— 'शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा । मिश्रीकृत्य च चत्वारि पिण्डान् श्रीफलसंनिभान् ॥ दद्यान्नान्दीमुखेभ्यस्तु पितृभ्यो विधिपूर्वकम् । अर्घ्यं पुष्पं च धूपं च प्रशस्तमनुलेपनम् ॥ वासश्चाप्यहतं तत्र देयं च सदृशं समम् । द्राक्षामलकमूलानि यवांश्च विनिवेदयेत् ॥ तान्येव दक्षिणां चैव दद्याद्विप्रेषु सर्वदा ॥' इति । दधिमधुनोर्मिलितयोरुपादानाच्चतुष्ट्वसिद्धिः ।

मृदुला.

## 'नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने ॥

( १ ) स्वधावाचनप्रश्ननिवृत्तये नान्दीमुखाः पितरः प्रीयन्तामित्युपदेशः ।

श्रात. ३०८

( २ ) 'उपतिष्ठतामित्यक्षय्यस्थाने' इतिवद्वर्णनीयम् । तथा छन्दोगपरिशिष्टम्— 'अक्षय्योदकदानं च अर्घ्यदानवदिष्यते । षष्ठ्यैव नित्यं तत्कार्यं न चतुर्थ्या कदाचन ॥' इति । 'नान्दीमुखाः पितरः' इत्यत्र पितृपदस्य प्राप्तपितृलोकपरतया न तत्र पितामहादिपदप्रयोगः । ये तु 'अक्षय्यमस्तु' इत्यन्तं वाक्यमुच्चार्य 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति वदन्ति, ते खल्वेकोद्दिष्टेऽपि तथैव वाक्यमुल्लिख्य 'उपतिष्ठताम्' इति किमिति न वदन्तीति प्रष्टव्याः । तुल्यं खल्वनयोः सूत्रणम्— 'उपतिष्ठतामित्यक्षय्यस्थाने' इति, 'नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने' इति च । तच्चैतद्वाक्यं वैकल्पिकं मन्तव्यम् । कुतः ? 'अक्षय्योदकदानं च' इति छन्दोगपरिशिष्टवचनादत्रैव कर्मणि 'अक्षय्यमस्तु' इत्यस्यापि प्राप्तेः ।

अत्र किंचिद्वक्तव्यमस्ति । तत्र तावत् 'नान्दीमुखाः पितरः' इति वचनात् नान्दीमुखानां पितॄणामत्र देवतात्वं गम्यते । तदेवं वैकृताद्विधेरनुमानात् प्राकृतानां केवलपित्रादीनां देवतात्वमत्र निवर्तते । यथा चातुर्मास्येषु साकमेधे तृतीये पर्वणि 'अग्नयेऽनीकवते प्रात-

---

( १ ) गोश्रा. ४१८ ; चश्रा. १५६१ ( नान्दीमुखाः प्रीयन्तामिति ) एतावदेव ; श्राकौ. ५१४ ( अक्षय्यस्थाने० ) ; श्रात. ३०७ श्राकौवत् ; श्रासौ. ११९ कात्यायनगोभिलौ. 'नान्दीमुखाः पितरः प्रीयन्तामिति वाचयेदिति' इति मृदुलापाठः ।

रष्टाकपालो मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुर्मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति प्रातर्मध्यंदिने सायमित्यह्नः कालेषु इष्टीनां समाम्नानात्— यथा देवदत्तः प्रातरपूपान् भक्षयति, मध्यंदिने विविधमन्नमश्नाति, अपराह्णे मोदकान् खादति, इत्येकस्मिन्नहनि इति गम्यते, तथाऽत्रापि गम्यते, इत्येकस्मिन्नहनि इष्टीनामवगमात् सद्यस्कालता विकृतीनाममूषामिष्टीनामिति चोदकप्राप्तं द्वैयहकाल्यं बाध्यते इति पञ्चमेऽध्याये सिद्धान्तितम्, तद्वदत्रापि बोद्धव्यम्। तथा चोक्तम्— 'अपि वा क्रमकालसंयुक्ताः सद्यः क्रियेत तत्र विधेरनुमानात् प्राकृतधर्मलोपः स्यात्' इति। तस्मान्नान्दीमुखविशेषणविशिष्टानां पित्रादीनामत्र देवतात्वावगमात् चोदकप्राप्तं केवलानां पित्रादीनां देवतात्वं निवर्तते । तेनाभिलापे 'नान्दीमुख पितः' इत्यादिकं प्रयोज्यम्। मन्त्रेष्वपि 'आवह नान्दीमुखान् पितॄन्' इति, 'एत नान्दीमुखाः पितरः' इति चैवमादिकं प्रयुञ्जते । न च 'आगन्तुकानामन्तेऽभिनिवेशः' इति न्यायात् पित्रादिनाम्नः परतो नान्दीमुखपदमुल्लेखनीयमिति वाच्यम्, प्राकृतदेवताबाधेनात्रामीषां देवतात्वेनाऽऽगन्तुकत्वाभावात्, 'नान्दीमुखाः पितरः' इति सूत्रोपात्तक्रमस्यान्यथाकरणस्यानुचितत्वाच्च ।

ननु अक्षय्योदकदाने स्वधावाचने च विशिष्य नान्दीमुखपदोपादानादितरत्र नान्दीमुखपदोल्लेखो नास्ति इति गम्यते । अन्यथा द्वयोर्विशिष्योपादानमनर्थकं स्यात्। नैष दोषः, तस्यार्थवत्त्वोपपत्तेः । कथम्? वैकृतः खल्वसौ विशेषोपदेशोऽक्षय्यस्थाने इति अत्र तावदेतत् वक्तव्यमेव। उच्यतां तर्ह्यत्रैव, स्वधावाचने च 'नान्दीमुखेभ्यः' इत्यनर्थकं वचनम्, नन्वस्मादेव वचनान्नान्दीमुखानां पितॄणां देवतात्वमनुमास्यते । उच्यते— स्वधावाचने यद्येतत् न पुनरुच्येत, न तत्र नान्दीमुखपदस्योल्लेखो भवेत् । किं कारणम्? नान्दीमुखपदस्य खल्ववचने 'पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वाहोच्यताम्' इत्येतावन्मात्रं तत्रोच्येत । सोऽयं वैकृतो विशेषोपदेशः स्यात्। तत्कथं नान्दीमुखपदमधिकं तत्र प्रयोक्ष्यते? आनुमानिकं खल्वेतत् प्रयुयुक्षितम्। प्रत्यक्षश्चोपदेशः। एतस्मात्कारणात् द्वयोर्विशिष्योपदेशोऽर्थवानेव भवति, न त्वनर्थकः। अथापि स्यात्— 'आवह पितॄन्' इति, 'एत पितरः' इति चैवमादिकमपि प्रत्यक्षमुपदिश्यते । कथं तत्राऽऽनुमानिकस्य नान्दीमुखपदस्य प्रयोगः? नायं दोषः। पार्वणे हि तत् प्रत्यक्षमुपदिश्यते, न त्वाभ्युदयिके। चोदकः खल्वत्र तत् प्रापयति। तस्मात् तदप्यानुमानिकमेव, इति न किंचिदनुचितम्।

सूत्रद्वयं वैतत् 'नान्दीमुखाः पितरः' इति, 'प्रीयन्तामित्यक्षय्यस्थाने' इति च। तत्रापि 'नान्दीमुखाः पितरः' इति द्वयी गतिः स्यात्— नान्दीमुखानां वा पितृत्वम्, पितॄणां वा नान्दीमुखत्वमनेन सूत्रेणोच्यते इति। तत्र प्रथमस्तावत् पक्षो न संभवति। कुतः? यतो नो खल्वपि ज्ञायते— क इमे नान्दीमुखा नाम? इति। यद्धि नैव ज्ञायते, कथं तदनूद्य विशेषस्य विधिर्भविष्यति? अथ तदपि विधास्यसि, भेत्स्यसि तर्हि वाक्यम्। अन्यत् खलु रूपमस्य विधीयमानस्य, अन्यच्चानूद्यमानस्य स्यात्। अथ मन्यसे— तन्त्रान्तरसिद्धान् नान्दीमुखाननूद्य पितृत्वममीषां विधास्यते इति। तदपि नास्ति। कस्मात्? अन्यशास्त्रसंकेतस्यान्यत्रानुपयोगात्। स्वशास्त्रविरोधश्चैवमापत्स्यते। तच्च वक्ष्यामः।

विधित्सितं पितृत्वमपि किमिहाभिप्रेयते, तदपि वक्तव्यम्। तच्च यदि प्राप्तपितृलोकत्वम्, यदि वा परंपरया जनकत्वम्, उभयथाऽपि प्रज्ञातमेव तदिति न पुनर्विधातव्यं भवति। पितॄणामिव श्राद्धोद्देश्यत्वं विधीयते इति चेत्, नैषा साध्वी कल्पना भवति। लक्षणाशब्दः खल्वेवमसौ स्यात् । श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसीत्याचक्षते । विधौ च न परः शब्दार्थस्तान्त्रिकाणामनुमतः। तस्मात् पारिशेष्यात् चोदकप्राप्तान् पितॄननूद्य तेषां विशेषो नान्दीमुखत्वमनेन विधीयते इति वक्तव्यं भवति। तदेवं नान्दीमुखविशेषणवन्तः पितर इह देवता भवन्ति, इति न किमपि विरोत्स्यते।

कथं पराचीनमुद्दिश्य प्राचीनस्य विधिरिति चेत्। किं क्रियताम्, यत्र प्राचीनमुद्दिश्य पराचीनस्य विधिर्न संभवति। न चैवमत्रैव केवलं भवति, 'मधुरः सुधावदधरः' इत्यादौ बहुत्र तदुपलम्भात्। किं भवति प्रयोजनं व्यत्यस्योपदेशस्य? नान्दीमुखपदस्य पित्रादिपदात्पूर्वं प्रयोगप्रज्ञापनमिति ब्रूमः। तस्मात्– 'नान्दीमुखाः पितरः' इत्यनेन वृद्धप्रपितामहादीनामत्र देवतात्वम्, स्वधावचने पित्रादिपदमेव वृद्धप्रपितामहादिबोधकम्– इत्यसंगतं वचनम्, 'पितृभ्यः पितामहेभ्यः' इत्यादिस्पष्टार्थपराणां वाक्यानामन्यार्थपरत्ववर्णनस्यानुचितत्वात् च। तथा कात्यायनः– 'स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु। पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात्॥' इति 'स्वपितृभ्यः' इति ब्रुवाणः पित्रादीनामेवात्र देवतात्वं ज्ञापयति। 'स्वपदस्य प्रपितामहपित्रादित्रयावर्तकतयैव सार्थकत्वात्' इति नारायणोपाध्यायाः। यत्पुनर्ब्रह्मपुराणीयं वचनम्– 'पिता पितामहश्चैव तथैव प्रपितामहः। त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः॥ तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखोचिताः। ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते॥ कर्मण्यथाऽऽभ्युदयिके मङ्गल्यवति शोभने। जन्मन्यथोपनयने विवाहे पुत्रकस्य च॥ पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्।' इति, यच्च मार्कण्डेयपुराणस्य– 'ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखा इति।' इति, तदुभयमपि तत्तदुक्तप्रयोगविषयम्, अस्मच्छास्त्रविरोधेनैतद्विषयत्वासंभवात्। अनयोस्तत्तत्प्रयोगविषयत्वादेव एकत्र प्रपितामहादूर्ध्वानाम्, अन्यत्र प्रपितामहमारभ्य नान्दीमुखसंज्ञाविधानमुपपद्यते। तदनेन 'वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते।' इति स्मृतिरपि व्याख्याता। अस्माद्वचनात् पित्रादिष्वेव वृद्धशब्दप्रयोगः इत्यहृदयव्याहृतम्। न ह्यत्र पित्रादीनां वृद्धसंज्ञा विधीयते, वृद्धमुख्यांस्तु पितॄननूद्य भोक्तृत्वं तेषामुच्यते, इति। अनयैव दिशा 'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्। वाक्यमुच्चारयेद्विद्वानन्यत्र पितृपूर्वकम्॥' इति वृद्धवसिष्ठादिवचनान्यपि व्याख्येयानि। रघुनन्दनस्त्वेतदनालोचयन्नाह– 'नान्दीमुखे पुत्रादिसमृद्धीनामादिभूते विवाहे। चस्त्वर्थः अन्यत्रप्राप्तपित्रादिक्रमव्यवच्छेदाय' इति, तदश्रद्धेयम्। हेमाद्रिस्तु– 'नान्दीमुखानां श्राद्धं तु कन्याराशिगते रवौ। पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा॥' इति प्रौष्ठपदीविषय एव वृद्धप्रपितामहादीनां देवतात्वमित्याह। तदसंगतम्, पूर्वोक्तब्रह्मपुराणे वृद्धप्रपितामहादीनां नान्दीमुखसंज्ञामभिधाय 'कर्मण्यथाऽऽभ्युदयिके' इत्यादिना तेषामेवाऽऽभ्युदयिकदेवतात्वाभिधानात्। यदपि– 'अमावस्यायां पितरः पूज्या नान्दीमुखा अपि।' इति ब्रह्मपुराणीयकन्यागतापरपक्षविषयं प्रागुक्तनान्दीमुखसंज्ञाविधानमिति, तदप्यसंगतम्, 'ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्विति।' इति कन्यागतापरपक्षप्रकरणस्थब्रह्मपुराणे एव तत्र पृथङ्नान्दीमुखसंज्ञाविधानात्। "स्वजनकादीनां देवतात्वप्रतीतेर्ब्रह्मपुराणीयप्रपितामहपित्रादित्रिकपक्षो जीवत्पित्रादित्रिकयजमानविषयः। 'यस्य त्रयो जीवन्ति स नैव कुर्यात्' इति विष्णूक्तनिषेधो वृद्धिश्राद्धेऽप्यतिदेशात् प्राप्त इति चेत्, न, उपदेशेनातिदेशबाधात्" इति कल्पतरुः। 'युक्तं चैतत्। पित्रादीनां त्रयाणामपि विद्यमानत्वात् चतुर्थादयः प्रजावन्तः, चतुर्थादिसंनिहितत्वेन पित्रादित्रयाणां तद्विषयदुःखभाजनत्वेन संनिहितमरणधर्मकत्वाच्चाश्रुमुखत्वम्' इति मदनपारिजातः। शूलपाणिस्तु 'यदा त्रयः प्रव्रजिताः पतिता वा मृतास्तदा ब्रह्मपुराणीयवचनम्' इत्याह। तदपि न सुन्दरम्, तदानीं वृद्धप्रपितामहादीनां प्रजावत्त्वाभावात्। 'ब्राह्मणादिहते ताते पतिते संगवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ॥' इति छन्दोगपरिशिष्टवचनेन तन्मते तेषां पार्वणादिसकलश्राद्धार्हतया आभ्युदयिकमात्रगोचरो वचनारम्भश्च न पुनराञ्जस्येनोपपद्यते।

एवं तावत्पर्यवसिता पूर्वसूत्रवर्णना। 'प्रीयन्तामित्यक्षय्यस्थाने' इति चोत्तरसूत्रे प्रीयन्तामित्यस्य साकाङ्क्षतया तत्र 'नान्दीमुखाः पितरः' इत्ययमेव परिपूरणसमर्थो वाक्यशेषो भवति। तस्मात् तस्यानुषङ्गः कर्तव्यः।

तथा चोक्तम्— 'अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात्' इति। तेन 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति पूर्वोक्त एव मन्त्रो भवति। गोश्राभा.

(३) 'नान्दीमुखाः पितरः' इति। तेनात्र मात्रादीनां नवानामपि नान्दीमुखत्वविशिष्टानां देवतात्वम्, 'दद्यान्नान्दीमुखेभ्यस्तु' इत्यादिवचनात्। तेन सर्वत्र त्यागवाक्ये नान्दीमुखपदप्रयोगः कार्यः। आवाहनादौ तु विशेषोपदेशादेव तत्प्रयोगः। यत्तु 'नान्दीमुखान्पितृगणानभ्यर्चेत्प्रयतो गृही।' इत्यादिवचनात् तेन रूपेण देवतात्वावगमात् सर्वत्र मन्त्रादावपि नान्दीमुखपदं प्रक्षेप्यमिति, तन्न, एवमभ्यर्चाप्रयोजकवाक्ये एवैतत्प्रयोगलाभात्। अत एव 'तिलोऽसि' इति मन्त्रे 'पितॄनिति पदात्पूर्वं वदेन्नान्दीमुखानिति।' इत्याश्वलायनविशेषोपदेशः संगच्छते। अन्यथा तद्वैयर्थ्यमापद्येत। अत्र यद्यपि 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति गोभिलसूत्रात्, 'पितॄनिति पदात्पूर्वं...' इत्याश्वलायनवचनादेश्च नान्दीमुखपदस्य पितृपदात्पूर्वनिपात आयाति, तथापि वैदिकपदप्रयोगे एवायं नियमः, न तु लौकिकत्यागवाक्येऽपि, 'पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्।' इति ब्रह्मपुराणसंवादात् शिष्टाचाराच्चेति बहवः। अत्र पित्रादित्रिकपूर्वाणामेव नान्दीमुखत्वम्, एवं संकल्पवाक्ये प्रपितामहपूर्वकत्वं कुतो न? इत्यादि सुबहूपन्यस्य खण्डितं शुभकर्मनिर्णये, तत्तत एवावगन्तव्यम्। मृदुला.

**[1]दैवे वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वाहोच्यताम्॥**

(१) गोश्रा. ४।९; चश्रा. १५६१ वृद्धप्रमातामहेभ्यश्च स्वाहोच्यताम् (वृद्धप्रमातामहेभ्यः स्वाहोच्यतामिति स्वधावाचनस्थाने); श्राकौ. ५१४-५१५ स्वाहोच्यताम् (प्रीयन्तामिति); श्रात. ३०७ स्वाहोच्यताम् (प्रीयन्ताम्); श्रासौ. ११९ कात्यायनगोभिलौ; श्राप्र. २९६ (नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यश्च) एतावदेव. 'पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धमातामहेभ्यः स्वाहोच्यतामिति' इति मृदुलापाठः।

(१) अत्र 'नान्दीमुखाः पितरः प्रीयन्तामिति दैवे वाचयित्वा' इति देवब्राह्मणे पितृप्रीतिवाचनं पार्वणादधिकं सामगानामेव इति। स्वधावाचनप्रश्नस्तु गोभिलेन नोक्तः, 'नान्दीमुखान् पितॄन्वाचयिष्ये इति वाच्यतामित्यनुज्ञातः' इति पारस्करोक्त एव ग्राह्यः, 'परोक्तमविरोधि च' इति वचनात्। श्राकौ. ५१५

(२) 'स्वधां वाचयिष्ये' इति पितृपक्ष एव प्रश्नः। अत एव तन्निवृत्तये दैव इति। देवपक्षे 'नान्दीमुखाः पितरः प्रीयन्ताम् (वाचयिष्ये)' इति प्रश्नः, उत्तरं च 'प्रीयन्ताम्' इति। ततः पितृपक्षे स्वधावाचनस्थानीयत्वेन वृद्धप्रमातामहेभ्यश्चेति चकारनिर्देशेन च 'स्वधोच्यताम्' इतिवत् प्रत्येकमेव 'प्रीयन्ताम्' इति पृच्छेत्*। प्रत्युत्तरं च 'अस्तु स्वधा' इतिवत् तन्त्रेणैव 'प्रीयन्ताम्' इति। अत्र 'नान्दीमुखाः पितरः' इत्यादि 'नान्दीमुखेभ्यः पितृभ्यः' इति निर्देशेन च 'नान्दीमुखं पितृगणम्' इति विष्णुपुराणेन च 'मातामहेभ्यश्च तथा नान्दीमुखेभ्य एव च।' इति ब्रह्मपुराणे च नान्दीमुखपदश्रुतेस्तद्विशेषणविशिष्टस्यैवाऽऽभ्युदयिके देवतात्वम्। ततश्चात्रापि प्रीयन्तामितिवत् 'नान्दीमुखेभ्यः पितामहेभ्यः' इत्यादि वाच्यम्, न तु नान्दीमुखविशेषणशून्यं 'पितामहेभ्यः प्रीयन्ताम्' इत्यादि पितृदयितोक्तं युक्तम्। (§'नान्दीमुखेभ्यः पितृभ्यः प्रीयन्ताम्' इत्यत्रान्वितस्य नान्दीमुखेभ्य इत्यस्य पितामहेभ्य इत्यादावनन्वयित्वेन प्रागुक्तयुक्त्या प्राप्तस्य नान्दीमुखविशेषणस्य पितामहेभ्य इत्यादावप्राप्तेः।) एतेनात्र मैथिलोक्ततन्त्रताविधानमपि निरस्तम्। श्रात. ३०८

(३) ऋजुरक्षरार्थः। 'दैवे वाचयित्वा' इत्यत्र किमित्याकाङ्क्षायां पूर्वोक्तमनुषञ्जनीयम्। तेन इदानीं 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति दैवे वाचयेत्। प्रीयन्तामित्युत्तरम्। अथ 'स्वाहां वाचयिष्ये' इति पृच्छति। वाच्यतामित्युक्ते 'नान्दीमुखेभ्यः पितृभ्यः स्वाहोच्यताम्' इत्यादिकं वदेत्। ते च 'अस्तु स्वाहा' इति प्रत्येकं ब्रूयुः।

* प्रेषयेदित्यर्थः।

§ ग्रन्थोऽयं न संगच्छते।

स खल्वयं ग्रन्थ एवमेव महायशःप्रभृतिभिः पठितो व्याख्यातश्च । अन्ये पुनरन्यथेमं ग्रन्थं पठन्ति 'नान्दीमुखाः पितरः' इत्यादिम्— 'नान्दीमुखाः पितरः प्रीयन्तामिति दैवे वाचयित्वा, नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च प्रीयन्ताम्' इति । तेषां 'नान्दीमुखेभ्यः पितृभ्यः प्रीयन्ताम्' इत्यादिवत् 'प्रीयन्तां वाचयिष्ये' इति, 'अस्तु प्रीयन्ताम्' इति च न किमपि समवैति इति द्रष्टव्यम् । रघुनन्दनस्तु 'प्रीयन्तां वाचयिष्ये' इति, 'नान्दीमुखेभ्यः पितृभ्यः प्रीयन्ताम्' इति चैवमादिकं प्रयोगमभ्युपगच्छन्नपि 'अस्तु स्वधा' इतिवत् 'अस्तु प्रीयन्ताम्' इति प्रत्युत्तरं नाभ्युपगच्छति, किंतु 'प्रीयन्ताम्' इत्येतावन्मात्रम् । तदत्र भगवन्तो भूमिदेवाः प्रमाणम् । गोश्राभा.

***[१]न स्वधां प्रयुञ्जीत ॥**

( १ ) पार्वणवत् स्वधाप्राप्तेः तन्निरासाय— न स्वधां प्रयुञ्जीतेति । अत्र विशेषादभिलापे मन्त्रे च स्वधापदनिवृत्तिः । अभिलापे नम इति ब्रूयात् । 'अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः ।' इति ब्रह्मपुराणे श्राद्धे स्वधानमःपदयोस्त्यागबोधकत्वेन विकल्पादत्राऽऽभ्युदयिके स्वधानिषेधान्नम एवान्वेति । 'पितॄनप्यत्र देववत्' इत्यनेनापि पार्वणोक्तं विश्वदेवपक्षीयं नम एव प्रतीयते, न तु मैथिलोक्तं स्वाहेति, श्राद्धे तथा प्रयोगे प्रमाणाभावात् । एवमाश्वलायनगृह्ये 'यवोऽसि' इति मन्त्रे तु पुष्ट्या इति श्रुतेर्मन्त्रमात्रे स्वधापदस्थाने पुष्टिपदप्रयोगः । अत एव 'स्वधयेति पदस्थाने पुष्ट्याशब्दं वदेदिह । पितॄनिति पदात् पूर्वं वदेन्नान्दीमुखानिति ॥' इति बह्वृचकारिकाप्रदर्शनात् । श्रात. ३०८–३०९

( २ ) ऋजुरक्षरार्थः । सोऽयं चोदकप्राप्तस्वधानिषेधः । किं पुनरत्र त्यागवाक्यादौ प्रयोक्तव्यं भवति ? 'स्वाहा' इति ब्रूमः । कथम् ? 'स्वाहोच्यताम्' इत्यत्र स्वधापदस्थाने स्वाहापददर्शनात् स्वधानिषेधे सर्वत्रैव स्वाहेत्येतदागच्छति हृदयम् । आगच्छति चेत् नतरामुत्स्रष्टव्यम् । स्वाहाशब्दः खल्वसौ स्वधाशब्दस्थाने प्रयुक्तः सर्वं तत्प्रयोजनमभिनिर्वर्तयति । अभिनिर्वर्तयति चेत्, नूनमन्यत्राप्यभिनिर्वर्तयिष्यति । न च शब्दान्तरप्रयोगे प्रमाणं पश्यामः । रघुनन्दनस्त्वेतदनालोच्य श्राद्धे स्वाहाशब्दप्रयोगे प्रमाणं नास्ति इत्याह । यदपि 'सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ।' इति छन्दोगपरिशिष्टवचनात् देवपक्षीयं नम एवाऽऽयाति इत्युक्तम्, तदप्ययुक्तम्, देववत्परिचरणमात्राभिधानेन मन्त्रस्य तदीयस्याप्राप्तेः । इतरथा आवाहनादावप्यत्र देवपक्षोक्त एव मन्त्रः स्यात् । न चैवमिष्यते । अत एव 'निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ।' इति पूर्वार्धेन सव्यजानुपातनिषेधात् दक्षिणजानुपातादिकमुत्तरार्धेनाभिधत्ते । अपि च एवमपि 'स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् ।' इति छन्दोगपरिशिष्ट एव दैवे स्वाहाकारस्योपदेशात् नित्यवत्तन्निषेधानुपपत्तिः स्यात् । तस्मात् उक्तयुक्तेः स्वाहाशब्द एव प्रयोक्तव्यो भवति । उभयमपि खल्वेवमनुग्रहीष्यते । तेन 'ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वाहा' इति वक्तव्यम् । एवं 'पृक्तः स्वधया' इत्यत्र 'पृक्तः स्वाहया' इति, 'स्वधाः स्थ' इत्यत्र 'स्वाहाः स्थ' इति चोहनीयम् । 'स्वधयेति पदस्थाने पुष्ट्याशब्दं वदेदिह ।' इति बह्वृचकारिका तु तन्मात्रपरा, तेषामेव गृह्यपरिशिष्टे 'पृक्तः पुष्ट्या' इति पठितत्वात् ।

तदत्र ब्राह्मणानामेव युग्मत्वोपदेशात् अर्घ्यपिण्डादीनां न युग्मत्वम्, प्रकृतौ ब्राह्मणबहुत्वेऽप्येकस्यार्घ्यस्य दर्शनात् । यत्तु 'एकं नाम्ना परं तूर्ष्णीं दद्यात् पिण्डान् पृथक् पृथक् ।' इति चतुर्विंशतिमतवचनम्, तदस्मत्प्रयोगव्यतिरिक्तविषयम् । न चेदेवम्, 'तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा । इत्येता मातरः प्रोक्ताः

---

* अस्य श्राद्धक्रियाकौमुदीगतं व्याख्यानं पारस्करगृह्यपरिशिष्टश्राद्धसूत्रे ( सं. का. पृ. १७४४ ) द्रष्टव्यम् ।

( १ ) **गोश्रा.** ४१० ; **चश्रा.** १५६१ अशुद्धः पाठः ; **श्राकौ.** ५१५ ; **श्रात.** ३०७ स्वधां + ( च ). 'अस्तु स्वाहेत्युक्ते न स्वधां प्रयुञ्जीत' इति मृदुलापाठः ।

पितृमातृष्वसाऽष्टमी ॥ ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् ।' इति तदुक्तमातरोऽप्यस्माकं भवेयुः । न त्वेवमिष्यते । अस्माकं तु— 'गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह । गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश ॥' इति कात्यायनोक्ता एव मातरः पूजितव्या भवन्ति । एतदविद्वांस एव बह्वृचगृह्यपरिशिष्टोक्तानां मातॄणां पूजनं वदन्ति । तदेतद्वचनं परिशिष्टग्रन्थेषु दृश्यते । मदनपारिजातादावपि कात्यायनीयमिति कृत्वैवैतल्लिखितम् । परंतु 'गणेशेनाधिकाः' इत्यर्धं तत्र नास्ति । तस्मात् तदुक्तमातृपूजावत् तदुक्तपिण्डद्वयमप्यस्माकं न भवति । तथा भविष्ये — 'पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः । वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु ॥' इति । 'पिण्डनिर्वपणमित्युपलक्षणम्, अतो यत्कुले यावती इतिकर्तव्यता वृद्धिश्राद्धे तावत्येव कर्तव्या, नाधिका' इति मदनपारिजातः । गोभिलादयः खल्वस्माकं कुलधर्मोपदेशगुरवः इत्यवोचाम । गौडास्तु प्रत्येकमर्घ्यपात्रादिकं किंचित् युग्मं पिण्डादिकं च किंचिदयुग्ममित्यर्धजरतीयं कुर्वन्ति ।
गोश्राभा.

## जैमिनिगृह्यसूत्रम्

नान्दीश्राद्धार्थं ब्राह्मणनिमन्त्रणम्

[1]**अथातो नान्दीमुखेभ्यः पितृभ्यः पूर्वेद्युर्व्याख्यास्यामः । आपूर्यमाणपक्षे पुण्ये नक्षत्रे श्वः करिष्यामीति श्वो भूते वाऽन्नं संस्कृत्य शुचीन् श्रोत्रियान् ब्राह्मणाननुमन्त्रयते ॥**

श्व इत्यादि । नान्दीमुखदिनात्पूर्वेद्युर्वा, नान्दीमुखदिने एवान्नं संस्कृत्य तदनन्तरं वा इत्यर्थः । श्रीव्या.

नान्दीश्राद्धप्रयोगः

**शुचिः शुक्लमनार्द्रमाच्छाद्य यज्ञोपवीत्यप आचम्य चतुः शुक्लान् बलीन् हरति दधि तण्डुलाः सुरभि शुक्लाः सुमनस इत्यग्न्यायतने प्रागग्रान् दर्भान् संस्तीर्य 'अग्नये सोमाय प्रजापतये विश्वेभ्यो देवेभ्य ऋषिभ्यो भूतेभ्यः पितृभ्यः सर्वाभ्यो देवताभ्यो नमः' इति ॥**

दध्यादिभिश्चतुर्भिः शुक्लद्रव्यैरष्टाभ्यो देवताभ्यः प्रतिद्रव्यमेकैका पङ्क्तिरिति चतुर्धा हरति । नमःशब्दस्य पृथक्पृथक् योगः । अग्न्यायतने यत्राग्निः प्रणेष्यते तत्रेत्यर्थः । श्रीव्या.

**हविष्यमन्नं ब्राह्मणेभ्यः प्रदाय दध्ना माषमत्स्यमांसभक्ष्याशनैरित्यपरम् ॥**

माषाशनेन मत्स्याशनेन मांसाशनेन भक्ष्याशनेन वा मिश्रयेदित्यपरं मतमित्यर्थः । श्रीव्या.

**अथ चतुष्टयमादाय व्रीहियवपुष्पसर्षपाणीति सह तैरेवोदकुम्भमादाय 'मनः समाधीयताम्' 'प्रसीदन्तु भवन्तः' इत्युक्त्वा सप्रणवं 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्येवम् । यथार्थमितरे प्रतिब्रूयुः ॥**

## वैखानसगृह्यसूत्रम्

नान्दीश्राद्धस्य निमित्तानि पूर्वेद्युः कर्तव्यता प्रयोगश्च

[1]**अथ शारीरेषु संस्कारेष्वृतुसंगमनवर्जं नान्दीमुखं कुर्यात् श्वः कर्ताऽस्मीति । गर्भाधानादिक्रियां यदहः करोति तदहर्नान्दी भवति । तस्या मुखं सर्वदेवपितृदैवत्यं नान्दीमुखमभ्युदयश्राद्धं दैविकवत्करोति । पूर्वेद्युरेव पूर्वाह्णे युग्मान् ब्राह्मणान् सुप्रक्षालितपाणिपादान् श्रोत्रियानन्नेन परिवेष्याथेडामभ्युक्ष्याथावनीदमिति मण्डलान्युपलिप्य 'अस्त्वासनम्' इत्यासनानि सदर्भयवानि निधाय तेष्वासीनान् पुष्पाद्यैर्यथोपपादमलङ्करोति । शुक्लबलिश्वेतसर्षपदधितण्डुलमित्यामनन्ति चतुःशुक्लम् । एतदादायाग्नेर्दक्षिणतः 'अग्नये सोमाय प्रजेशाय विश्वेभ्यो देवेभ्य ऋषिभ्यः पितृभ्यो भूतेभ्यः सर्वाभ्यो**

(१) जैगृ. १।६.

(१) वैगृ. २।१-२.

देवताभ्यो नमः' इत्यन्तेन तन्नाम्ना पुष्पादिभिरभ्यर्च्य बलिं ददाति ॥

चरुमपूपादि च निवेद्योदकुम्भं 'धारासु' इत्यद्भिरापूर्य 'नमः सुलोमी' इति पाप्मनोऽपहत्यै सपल्लवं कूर्चं पवित्रमाभरणं तस्मिन्निदधाति । प्रतिसरां कुतपस्य दुकूलस्य वा त्रिवृतां पुष्पाद्यपि संभृत्याऽऽदाय जुहुयाद्वचोऽग्नेनयाद्यग्निदैवत्याः, सोमोधेन्वादिसौमदैवत्याः, ब्रह्मजज्ञानादिब्रह्मदैवत्ये, रुद्रमन्यमित्यादिरुद्रदैवत्ये, अतोदेवादिविष्णुदैवत्याः, आनोविश्वादिविश्वेदेवदैवत्याः, यतःस्वमसीत्यादिसप्तर्षिदैवत्याः, येभूताइत्यादिभूतदैवत्याः, व्याहृतीः, 'अग्नये कव्यवाहनाय सोमाय पितृमते यमाय चाङ्गिरस्पतये एते य इह पितर उशन्तस्त्वा सा नो ददातु' इत्यृचः पितृदैवत्याः, 'पृथिवीगतेभ्यः पितृभ्योऽन्तरिक्षगतेभ्यः पितामहेभ्यो दिवि गतेभ्यः प्रपितामहेभ्यः स्वधा नमः स्वाहा' इति पितृभ्यः पैतृकमुपवती हुत्वा व्याहृतीः सामान्यतो देवताभ्यस्ताभ्योऽष्टाभ्यो जुहोति । पात्रेष्वाज्यभागं स्रुवेणाभिघार्य द्विर्देवशेषं पितृभ्यः प्रागन्तं क्षिप्त्वा तदङ्गुष्ठेन तच्चरुं स्पर्शयति । ततो नमस्कृत्य 'आ सत्येन रजसा' इति क्षीरेण दध्ना वा श्वेतमन्नं ब्राह्मणान् भोजयेत् । अनुत्थितेभ्यः समूह्योच्छिष्टं शोधयित्वाऽऽचान्ताननुमान्य पुण्याहं वाचयित्वा स्वस्तिसूक्तेन तामभिमृश्य 'स्वस्तिदा विशस्पतिः' इति प्रतिसरां बध्नाति । 'नान्दीमुखेभ्यः पितृभ्यः स्वधा नमो नान्दीमुखेभ्यः पितामहेभ्यः स्वधा नमो नान्दीमुखेभ्यः प्रपितामहेभ्यः स्वधा नमः' इत्युक्ते 'स्वधाऽस्तु' इति प्रतिवदतो देवान्तं विसर्जयति । तेनोदकुम्भेनापरेद्युः स्नायात् । नान्दीमुखमिति विज्ञायते ॥

[1]गर्भाधानादिसंस्कारेषु नान्दीमुखेऽभ्युदयश्राद्धे हीने दैविकेन सहैकाहे पैतृकवत्कृते च तत्कार्यमशुभं भवति । तस्मात्पूर्वेद्युर्दैविकवत् कुर्यात् । द्वौ विश्वेदेवौ चतुरः पितॄन् ब्राह्मणान् वरयित्वा 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति हस्ते यवोदकं दत्त्वाऽऽघारान्ते पूर्ववद्धोमं हुत्वाऽन्ते ब्राह्मणान् भोजयेदुद्यन्तं वा ददाति । अन्यथा नान्दीमुखं कृत्वा पुनः शुभकर्म कुर्यात् । जातकर्मोत्थानयोर्नान्दीमुखं वर्जयेदित्येके ॥

## हारीतः

नान्दीश्राद्धस्य प्रातःकर्तव्यता

[2]आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यमे ।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥

अनग्निकस्यापि नान्दीश्राद्धेऽधिकारः, पितरि जीवति पितुः पित्रादेर्देवतात्वम्, श्राद्धाभावो वेति मतद्वयम्

*[3]अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि ।
येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम् ॥

(१) पार्वणं तद्धर्मकम् । श्राप्र. १८

(२) अतश्च साग्निकस्यैव जीवत्पितृकाधिकारबोधके वाक्ये साग्निकग्रहणमुपलक्षणम् । श्राम. ८९

(३) यत्तु मतम्— जीवत्पितुः पुत्रनामकर्मादौ न वृद्धिश्राद्धम्, हारीतीये 'जन्मादौ' इत्यादिशब्देन

---

* श्राकाव्याख्यानम् 'आवाहयेत्यनुज्ञातः' इति पारस्करगृह्यपरिशिष्टश्राद्धसूत्रे (सं. का. पृ. १७४१) द्रष्टव्यम् ।

(१) वैगृ. ६।२.

(२) चश्रा. २८८ मध्यमे (मध्यतः); चका. ५७५ चश्रावत्, शातातपहारीतौ; निप्र. ८६.

(३) श्राका. ५१७ 'एके आहुः' इत्युक्तम्; श्राप्र. १८; श्राम. ८९; सिन्धु. १७४१ पार्वणम् (तर्पयेत्); संकौ. २८; बाल. १।८९ पृ. २७० पार्वणम् (पार्वणः): १।२५० पृ. ५७२ अनग्निकोऽपि (अनग्निरपि); पुम. ३८० (=); संर. १०५५.

तत्प्राप्तावपि 'उद्वाहे पुत्रजनने ... ॥' इति मैत्रायणीयपरिशिष्टे उद्वाह एव तस्योपसंहारात् । एवं यत्र संस्कारादिपदं तदप्युद्वाहादिपरमेवेति, तन्न, उद्वाहपदस्य स्वविवाहपरत्वस्यापि संभवात्, पुत्रविवाहपरत्वे मानाभावात्, 'नामकर्मणि बालानां चूडाकर्मादिके तथा ।' इत्यादिभिर्नित्यश्राद्धस्य¶ चौलाद्यङ्गत्वावगतौ नित्यानित्यसंयोगविरोधाच्च । अतो 'जन्मादौ' इति सर्वसंस्कारसंग्रहः । सिन्धु. १७४२–१७४३

[1]जीवे पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् ।
येषां वाऽपि पिता दद्यात्तेषामेके प्रचक्षते ॥

¶ सर्वेषु मुद्रितपुस्तकेषु 'नित्यश्राद्धस्य' इत्येव पाठोऽस्ति । स न साधुः, पूर्वपक्ष्यभिमतश्राद्धानित्यत्वेऽनेन हेतुना निराक्रियमाणे श्राद्धनित्यत्वस्य हेतुघटकत्वानुपपत्तेः, सति तस्मिन् सिद्धत्वेन विप्रतिपत्त्यभावाद्विचारानुत्थानप्रसङ्गात्, 'नित्यानित्यसंयोगविरोधात्' इत्यत्रानित्यपदेन श्राद्धस्य विवक्षणात्तद्विरोधापत्तेश्च । स्पष्टं चेदं कृष्णम्भट्टीव्याख्यानात् । तद्यथा– अयमेव नित्यानित्यसंयोगविरोधः सिन्धौ प्रागपि 'वक्ष्यमाणनित्यानित्यसंयोगविरोधात्' इति ग्रन्थेन हेतूकृतः । तत्र कृष्णम्भट्टी– 'नित्येति । जातकर्मादिकं कुर्यादिति नित्यं संस्कारादिकमनित्येन वृद्धिश्राद्धेन कुर्यादित्यर्थपर्यवसानात्' इति । तत्रोपनयनान्तसंस्काराणां नित्यत्वं निर्विवादम् । नान्दीश्राद्धस्य तु, पुत्रनामकर्मादौ जीवत्पितृकस्य नास्ति, मृतपितृकस्य चास्तीति पूर्वपक्षे अनित्यत्वम् । अत्रत्येषु प्रायः सर्वेषु हस्तलिखितपुस्तकेषु 'नामकर्मणि ... विरोधाच्च' इति ग्रन्थो नास्ति, 'वक्ष्यमाण ...' इति पूर्वो ग्रन्थस्त्वस्तीति विरोधश्चिन्तनीयः । एकस्मिन् हस्तलिखितपुस्तके 'नित्यं श्राद्धस्य' इति पाठोऽस्ति । सोपि श्राद्धनित्यत्वे पर्यवसानाच्चिन्त्य एव । तस्मात् 'अनित्यश्राद्धस्य' इति, 'नान्दीश्राद्धस्य' इति, निर्विशेषणः 'श्राद्धस्य' इति वा पाठः साधीयान् । हन्त स तु नोपलभ्यते ।

(१) अप. १।२१७–२१८ पृ. ४१८ कालं (कर्म) येषां (येभ्यो) तेषां (तेभ्यः); श्राकौ. ५५३; उत.

तेभ्य एवेति (? तेभ्य एके इति) च पक्षः साम्निकस्यैव । अप. १।२१७–२१८

पितामहे जीवति केवलपितुर्देवतात्वम्

[1]पितामहेऽपि जीवे वै पितर्येव समापयेत् ।
उदकाञ्जलिं प्रदीपं च अञ्जनं च प्रयत्नतः ॥

पितरि जीवति मात्रादीनाम्, मातरि जीवन्त्यां पितामह्यादीनां च देवतात्वम्

[2]जीवे तस्मिन् सुताः कुर्युः पितामह्या सहैव तु ।
तस्यां चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः ॥

स्मृतितत्त्वादिगौडग्रन्थेषु तु जीवन्मातृकः पितामह्यादिभ्यो वृद्धौ दद्यात्, 'जीवन्तमपि (? ति) दद्याद्वा प्रेतायान्नोदके द्विजः ।' इति कात्यायनोक्तेः, 'जीवे तस्मिन्...निश्चयः ॥' इति हारीतोक्तेश्चेत्युक्तम् । तस्मिन् भर्तरि । दाक्षिणात्यास्तु पूर्वोक्तस्य सपिण्डीकरणादिविषयत्वात् 'जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत् ।' इति वचनात्तद्वर्गस्य लोप एवेत्याहुः ।

सिन्धु. १७४६–१७४७

सर्वव्यवहारेषु ज्येष्ठपुत्रस्य जीवत्पितुः प्रतिनिधित्वम्

[3]जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यम्, कामं दीने प्रोषिते चाऽऽर्तिं गते ज्येष्ठोऽर्थांश्चिन्तयेत् ॥

१३७; श्राप्र. १५; सिन्धु. १७५६ पू.; बाल. १।२५० पृ. ५७६ जीवे (जीवेत्); पुम. ३७९ तेषामेके (तेभ्यो दानं).

(१) श्राकौ. ५५३ ऽपि जीवे (सजीवे) पू.; सिन्धु. १७६४ ऽपि जीवे (जीवति) पू.; बाल. १।२५० पृ. ५७६.

(२) स्मृसा. ८७ (तस्मिन् सति सुताः कुर्युः पितामह्यादिभिः सह ।) पू., लघुहारीतः; दीक. १।२५४ जीवे तस्मिन् (तस्मिन् सति) निश्चयः (निर्णयः); उत. १३६ जीवे तस्मिन् (तस्मिन् सति); श्रात. ३१४ उतवत्, लघुहारीतः; सिन्धु. १७४७ जीवन्त्यां (जीवत्यां).

(३) उत. १३६.

पितुर्देशान्तरस्थायित्वे च तत्प्रतिनिधित्वेन पुत्रादिना वृद्धिश्राद्धं कर्तव्यम् । तथा च हारीतः– जीवतीति । अर्थान् दृष्टादृष्टप्रयोजनानि । उत. १३६

## लघुहारीतः

नान्दीश्राद्धदेवतात्वार्थं पितुः सपिण्डनापकर्षः

**[1]भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।**
**सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥**
**[2]तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ॥**

( १ ) अकृतसपिण्डनश्राद्धः आभ्युदयिकं न कुर्यात्, किंतु सपिण्डीकरणे कृते एव । कृते सपिण्डने आभ्युदयिकाङ्गं काम्यं कर्म प्रथमाब्दे न कर्तव्यम् । यदाह लघुहारीतः– 'भ्राता वा ... प्रथमादृते ॥' । तथैव आभ्युदयिकयुक्तमित्यर्थः । केचिदाहुः– यस्य प्रेतस्य सपिण्डनं न कृतं वर्तते तस्यैवाऽऽभ्युदयिकं न कर्तव्यम् । तन्न, असंकोचात् समानकर्तृकत्वावगतेः यः कश्चित् सपिण्डीकरणाधिकृतः स यस्य कस्यचिदाभ्युदयिकं सपिण्डीकरणं कृत्वा कुर्यादिति वाक्यात् प्रतीतेः । एवं च सपिण्डनानधिकारिणा कनिष्ठेनापि सपिण्डितपितृप्रभूतः ( ? असपिण्डितेऽपि पितरि सपिण्डिततत्पितृप्रभृतेः ) श्राद्धं पुत्रजन्मादौ कर्तव्यमेव । न च स्वपितृभ्यो दद्यादिति विरोधः, पितरि श्राद्धायोग्ये पितामहादीनामेव स्वपितृत्वात् । तदुक्तम्– 'ब्राह्मणादिहते वाऽपि ( ? ताते) पतिते सङ्गवर्जिते । व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥' । सङ्गवर्जिते ज्ञातिबन्धुबहिष्कृते । व्युत्क्रमात् आत्मघातात् । अत्र च ब्राह्मणादिहते वेति श्राद्धानर्हपित्रुपलक्षणम् । तेन असपिण्डितस्यापि परिग्रहः । एवं च पितर्यसपिण्डिते कनिष्ठेन स्वविवाहे पितामहाद्याभ्युदयिकं कर्तव्यम्, सपिण्डने ज्येष्ठस्यैवाधिकारात् । तस्यैव क्त्वावाच्यसमानकर्तृकत्वोपस्थापितपौर्वापर्यं सपिण्डनाभ्युदययोर्नियतम् । एवं काम्यमपि कर्तव्यम्, षोडशश्राद्धे कनिष्ठस्याधिकारित्वकर्तृत्वयोरयोगात् ।

स्मृसा. ९३–९४

( २ ) पुत्रेण वृद्धिश्राद्धे कर्तव्ये सति वर्षान्तादिविहितकालाभावेऽपि वृद्ध्युपस्थितिरूप एव काले प्रेतस्य पितुः सपिण्डीकरणं कृत्वा पश्चात्तमादाय वृद्धिश्राद्धं कार्यम् । अन्यथा सपिण्डनाभावे प्रेतत्वानिवृत्तौ तमादाय वृद्धिश्राद्धं न स्यात् । यत्र तु सपिण्डनाधिकार्यसंनिधाने वृद्ध्युपस्थितिस्तत्रान्यद्वाराऽपि सपिण्डनं कारयित्वा वृद्धिश्राद्धं कर्तव्यम्, पूर्वोक्तयुक्तेः । तदाह लघुहारीतः– 'भ्राता वा ... ततः ॥' इति । यदा वृद्ध्युपस्थितावेव सपिण्डनं क्रियते तदाऽप्रेतनानि मासिकान्यपकृष्य कृत्वा पश्चात्सपिण्डनं कार्यम् । 'श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनम् ।' इति गोभिलोक्तेः । तथा– 'श्राद्धानि षोडशाऽऽपाद्य विदधीत सपिण्डनम् ।' इति लौगाक्षिस्मृतेश्च । वृद्ध्यनन्तरं कात्यायनेन निषिद्धत्वाच्च ।

लता. २२५

( ३ ) केचिन्नवीनाः– 'भ्राता वा... ततः ॥' इति लघुहारीतवाक्ये भ्रातृशिष्याद्युक्तेर्न नान्दीश्राद्धेज्यदेवतामात्रपरोऽपकर्ष इति । अस्मिन्मते भ्रात्रादिमरणे तत्सपिण्डनमासिकानामपकर्षं विना न नान्दीश्राद्धमिति । अन्ये नवीनास्तु यस्याऽऽभ्युदयिकश्राद्धान्तर्गतदेवताभूतस्य सपिण्डनं विना न तन्निर्वहति तस्यैवेह वाक्ये सपिण्डनं विधीयते, आकाङ्क्षितविधानात् । अन्यथा भिन्नजातीयगुरोरपि सपिण्डनं शिष्येण कार्यं स्यादित्याहुः । एतस्मिन्मते तु तद्विनाऽपि भवतीति भेदो द्रष्टव्यः । सकलदाक्षिणात्यप्रभृत्यनेकशिष्टाचारसंवादान्नान्दीश्राद्धेज्यदेवतामात्रपरोऽपकर्ष इति द्वितीयमतमेव युक्तम् । 'प्रेतकर्माण्यनिर्वर्त्य' इत्यत्र यद्यपि प्रेतकर्मभिः सहाऽऽभ्युदयिकक्रियाया मङ्गलापरपर्यायायाः समानकर्तृकत्वं प्रतीयते, तथाऽपि तदसति कर्त्रन्तरे मुख्यम्, सति तु प्रेतकर्मसु प्रयोजककर्तृतामादायोपपादनीयम् ।

( १ ) अप. १।२५३ पृ. ५३९ ; श्राक. २५७ शिष्य एव वा ( शिष्ट एव च ) वृद्धशातातपः ; स्मृसा. ९३ ; श्रासौ. १२७ पू. (=) ; लता. २२५ ; संकौ. २०३ ; बाल. १।२५० पृ. ५७१ पू. ; संर. ४८५ : ४८७ (=) ; संदी. ६७ (=) कुर्यादभ्युदयं ततः ( पश्चादभ्युदयं चरेत् ).

( २ ) स्मृसा. ९३.

इत्थमेव हि 'वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानीयो वा द्विर्लाजानावपति' इत्याश्वलायनसूत्रे वृत्तिकृदादिभिस्तु तदुपपाद्यते विवाहहोमे उपस्तरणस्य वरकर्तृकत्वम्, लाजावपनस्य भ्रात्रादिकर्तृकत्वम्, विच्छिन्नसंधानार्थे तु तस्मिँल्लाजहोमस्यापि वरकर्तृकत्वं वदद्भिः। एवं नान्दीश्राद्धदेवतात्वसिद्ध्यर्थे सपिण्डीकरणापकर्षपरत्वेन पराभिमतवचनेऽपि समानकर्तृकत्वमित्थमेव स्वीकार्यम्। तद्यथा शाट्यायनिः– 'प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा। अपकृष्यापि कुर्वीत कर्तुं नान्दीमुखं द्विजः॥' इति। लघुहारीतोऽपि– 'भ्राता वा... ततः॥' इति।

मृतस्य कन्यादाने हि तस्य ज्येष्ठकनिष्ठभ्रातरावधिकारिणौ कन्यायाः पितृपितामहभ्रात्रभावात्संभवतः, 'पिता पितामहो भ्राता सकुल्यो जननी तथा। कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥' (यास्मृ. १।६३) इति याज्ञवल्क्यवचनात्। तस्य सपिण्डीकरणे तु कनिष्ठस्यैवाधिकारो न ज्येष्ठस्य, 'न पुत्रस्य पिता दद्यान्नानुजस्य तथाऽग्रजः। अपि स्नेहेन कुर्यातां सपिण्डीकरणं विना॥' इति सपिण्डीकरणस्य तं प्रति विशिष्य निषेधात्। अतो ज्येष्ठस्य सपिण्डीकरणे प्रयोजककर्तृकत्वं कनिष्ठस्य मुख्यकर्तृकतामङ्गीकृत्यैवोक्तवचनयोः समानकर्तृकत्वमुपपादनीयम्। एवं चानयोर्वचनयोर्देवतात्वसिद्धिप्रयोजनासंकीर्तनाद्विधेयार्थैक्याच्च मूलैक्यलाघवानुरोधेन 'प्रेतकर्माण्यनिर्वर्त्य' इति कृष्णभट्टीप्रयोगोदाहृतवचनार्थपरत्वं स्वीकर्तुमुचितमिति कौस्तुभे।

अन्यच्च तत्रैव। पितामहे प्रपितामहे वाऽकृतसपिण्डने सति पितरि मृते औचित्येन तयोः सपिण्डीकरणोत्तरं पितुः सपिण्डीकरणकर्तव्यतायां प्राप्तायामपि यदा तथाऽनुष्ठानेन पितुः सपिण्डीकरणकालातिक्रमो भवति तदा न्यायतः कालातिक्रमेण तथैव तत्कर्तव्यतयां प्राप्तायां वचनेनाकृतसपिण्डीकरणाभ्यामपि ताभ्यां पितुः सपिण्डीकरणं कर्तव्यतया विहितम्। यथाऽऽह कात्यायनः– 'असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः। पितरं तत्र संस्कुर्यादिति शातातपोऽब्रवीत्॥ पापिष्ठमपि शुद्धेन शुद्धं पापकृताऽपि वा। पितामहेन पितरं संस्कुर्यादिति निश्चयः॥' इति। असंस्कृतौ अकृतसपिण्डीकरणौ। पूर्वौ पितामहप्रपितामहौ। पापिष्ठमकृतसपिण्डनं पितरं शुद्धेन कृतसपिण्डनेन पापकृताऽकृतसपिण्डनेन वा पितामहेन सह शुद्धं निवृत्तप्रेतावस्थं कुर्यादित्यर्थः। एवं कृते दर्शश्राद्धमपि तादृशाभ्यां सह कर्तव्यमित्यपि तेनैवोक्तम्– 'पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम्।' इति। एवं च दर्शश्राद्धविकृतित्वान्नान्दीश्राद्धेऽपि तादृशयोर्देवतात्वसंभवेऽपि माङ्गलिकविवाहाद्यनुरोधेन तयोः सपिण्डीकरणं कृत्वैव माङ्गलिकं कर्म कार्यम्, तयोश्चतुष्पुरुषान्तरगतत्वात्।

'प्रेतकर्माण्यनिर्वर्त्य' इति वाक्यात्, 'भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा। सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः॥' इति वाक्याच्च चतुष्पुरुषपर्यन्तं यस्य कस्यापि सगोत्रसपिण्डस्य तत्पुत्रे प्रोषितेऽपि व्यवहितोऽपि सपिण्डः प्रेतस्य प्रेतश्राद्धसपिण्डीकरणमासिकानि कृत्वैव वृद्धिश्राद्धं कुर्यादित्यर्थः।

संर. ४८५–४८७

नान्दीश्राद्धे मातृश्राद्धस्य पृथक्त्वम्

**[1]मातृश्राद्धं तु युग्मैः स्यात्सदैवं प्राङ्मुखैः पृथक्॥**

युग्मैर्ब्राह्मणैरित्यर्थः। पृथक् सदैवं कर्तव्यम्, मात्रर्थं देवश्राद्धं पृथक् कर्तव्यमित्यर्थः। पृथक् दैवकरणं फलातिशयार्थम्, तन्त्रेणापि सिद्धेः। अत एव 'वैश्वदेवविहीनं तु केचिदिच्छन्ति सत्तमाः।' इति मार्कण्डेयपुराणे पृथक् वैश्वदेवनिषेध उक्तः। श्राकौ. ४९४

## बौधायनः

पुत्रजन्मनिमित्तकं श्राद्धं हेम्नैव

**[2]अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि।**
**हेमश्राद्धं सग्रहे च शूद्रः कुर्यात् सदैव हि॥**

(१) स्मृसा. १०८ मुखैः (मुखं) हारीतः; श्राकौ. ४९३ : ५०७ हारीतः; श्रासौ. १२१.

(२) स्मृच. २२९; मपा. ४८१ अन्नाभावे द्वि (संक्रमेऽन्नद्वि) चतुर्थपादे (द्विजः शूद्रः सदाऽऽचरेत्);

(१) आमाभावे हेमश्राद्धम् । संक्रमग्रहणयोस्तु आमश्राद्धं पाकाभावे ब्राह्मणासंभवे वा भवति । अत्र शिष्टाचारः प्रमाणम् ।                                    मपा. ४८१

(२) अत्र सर्वत्र हेमविधिः आमाभावे ज्ञेयः, अत्र प्रकृतित्वेनाऽऽमस्यान्तरङ्गत्वात्, 'आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान् । धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषा ॥' इति मरीचिवचनाच्च । पुत्रजन्मनि तु विशेषः संवर्तेनोक्तः– 'पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् । न पक्वेन न चाऽऽमेन कल्याणान्यभिकामयन् ॥' । अत एव पुत्रजन्मनि न हेम्नोऽनुकल्पत्वम् । ग्रहणप्रवासादिषु तु अन्नाद्यभाव एतद्विधिर्ज्ञेयः ।                                    श्राप्र. २८३–२८४

## वसिष्ठः

दिनत्रये एकस्मिन्वा दिने श्राद्धत्रयमिति पक्षद्वयम्, नान्दीश्राद्धपरिभाषा

**[1]पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा ।**
**उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु ॥**

(१) किं वृद्धिश्राद्धं दिनत्रये कार्यमुत एकदिने एवेति ? तत्रैके आहुः– एकस्मिन् कर्माहे एवेति, 'मातृभ्यः प्रथमं दद्यात्पितृभ्यस्तदनन्तरम् । ततो मातामहेभ्यश्च वृद्धौ श्राद्धत्रयं स्मृतम् ॥' इति वचनादिति । तदयुक्तम्, अस्यापि त्रिदिनविधायकत्वप्रतिभानात् । तथा च स्मृतिः – 'मातृश्राद्धं तु पूर्वेद्युः कर्माहन्येव पैतृकम् । मातामह्यं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं भवेत् ॥' । वसिष्ठोऽपि– 'पूर्वेद्युर्मातृकं... गणस्य तु ॥' इति ।                                    श्राका. ५१२

(२) अस्य मुख्यकालमाह वसिष्ठः– पूर्वेद्युर्मातृकमिति ।                                    चम. १७९

(३) अत्र दिनत्रयेण श्राद्धत्रयं देयमिति केचित् । तथा च वसिष्ठः– पूर्वेद्युरिति । शातातपोक्तः कर्माहन्येव तु सांप्रतमाचारस्तत्पूर्वदिने एव वा ।

बाल. १।२५० पृ. ५६७

**[2]श्राद्धत्रयं प्रकुर्वीत तन्त्रं वा वैश्वदेविकम् ॥**
**[3]मातृभ्यः कल्पयेत्पूर्वं पितृभ्यस्तदनन्तरम् ।**
**ततो मातामहानां च कुर्याच्छ्राद्धं क्रमेण वै ॥**

अत्र केचित् मातामह्यादित्रिदैवत्यं चतुर्थमपि श्राद्धमाचक्षते ।                                    चश्रा. १५४२

**[4]प्राङ्मुखो देवतीर्थेन प्राक्कूलेषु कुशेषु च ।**
**दत्त्वा पिण्डान्न कुर्वीत पिण्डपात्रमधोमुखम् ॥**

पिण्डप्रदानेऽपि विशेषमाह स एव– प्राङ्मुख इति । प्राक्कूलेषु प्रागग्रेषु ।                                    * स्मृच. ४९९

**[5]संपन्नमित्याभ्युदयिकेषु ॥**

## वृद्धवसिष्ठः

नान्दीश्राद्धविशेषस्य वृद्धिश्राद्धसंज्ञा, नान्दीश्राद्धपरिभाषा

**[1]पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् ।**
**तत्र नान्दीमुखमिति विशेषः समुदाहृतः ॥**

---

श्राप्र. २८३ अन्नाभावे द्वि (संक्रमेऽन्नद्वि) चतुर्थपादे (द्विजः शूद्रः सदा चरेत्); मुक्ता. ७९ सग्रहे च शूद्रः (संग्रहे च कुर्याच्छूद्रः): २७२ सग्रहे च शूद्रः कुर्यात् (संक्रमे च कुर्याच्छूद्रः).

(१) अप. १।२४९ पृ ५१६ वृद्धवसिष्ठः; चश्रा. १३८ (=) पैतृकं (पितृकं): १९२; चका. ४५८; प्रपा. १४–१५ तु (च); श्राका. ५१२; श्राप्र. २९१: २९६ तथा (स्मृतम्) पू.; चम. १७९; श्राम. ८९; संम. ६; विपा. ३० (भागः २) कर्माहे (मध्याह्ने); बाल. १।२५० पृ. ५६७; पुम. ३७८.

* चश्रा., प्रपा., श्राप्र. स्मृचवत् ।

(१) अप. १।२४९ पृ. ५१६; चश्रा. १३८.

(२) अप. १।२४९ पृ. ५१६ च कुर्याच्छ्राद्धं क्रमेण वै (तु पिण्डान् दद्यात्क्रमेण तु); चश्रा. १५४२; संकौ. २४ वै (वा).

(३) स्मृच. ४९९ वृद्धवसिष्ठः; चश्रा. १५५६ दत्त्वा पिण्डान्न (पितृपिण्डांस्तु) प्रचेताः; पमा. ७८४; प्रपा. १९ दत्त्वा (दद्यात्); श्राका. ५१४ उत्त.; श्राप्र. ३०६; मुक्ता. ७५६ वृद्धवसिष्ठः; श्राम. ९० वृद्धवसिष्ठः; सिन्धु. १७५२.                    (४) वस्मृ. ३।६४.

(५) स्मृच. ३३४, ४४३, ४९७ पू.; चश्रा. १४४, १९० पू.; चका. ४५७ पू.; पमा. ६५०, ७३१ पू.;

(१) पुत्रजन्मविवाहादौ क्रियमाणमाभ्युदयिकं श्राद्धं वृद्धिश्राद्धमिति व्यपदिश्यते इत्यर्थः । आदिशब्देन गर्भाधानपुंसवनसीमन्तव्यतिरिक्तानामन्नप्राशनचूडाकरणादिसंस्कारकर्मणां संग्रहणम्, गर्भाधानपुंसवनसीमन्तेषु क्रियमाणाभ्युदयिकश्राद्धस्य कर्माङ्गश्राद्धकोटिप्रविष्टत्वात् ।

‡ स्मृच. ४४३

(२) वृद्धिर्नाम पुत्रजन्मादिनिमित्तोपलक्षितः कालः । तथा च वृद्धवसिष्ठः— पुत्रजन्मेति ।　　चश्रा. १९०

**†'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।**
**नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥**

---

‡ चश्रा., पमा., प्रपा., चम. स्मृचवत् ।

† अस्य प्रयोगपारिजातश्राद्धप्रकाशश्राद्धकल्पलताबालंभट्टीव्याख्यानानि 'माता पितामही चैव' इत्याश्वलायनपद्ये द्रष्टव्यानि । प्रर., संम., संकौ. तत्रत्यप्रयोगपारिजातव्याख्यानगतार्थाः ।

प्रपा. १६ पू.; श्राका. ५१२; श्राप्र. २८९ पू., वसिष्ठः : ३३१ उदाहृतम् (प्रकीर्तितम्) पू., वसिष्ठः; चम. १५० पू.

(१) स्मृसा. १४ (=) नाम संकीर्तयेत् (वाक्यमुच्चारयेत्); प्रपा. १४; मर. १७१ स्मृत्यन्तरम्; श्राका. ५१५ (=) नाम संकीर्तयेत् (वाक्यं समुच्चरेत्) : ५१६ चतुर्विंशतिमतम्, पाठभेदस्तु पृ. ५१५ वत्, 'अन्यत्र' इत्यत्र 'अन्यस्तु' इति, 'अन्यश्च' इति वा पाठो व्याख्यानात् प्रतीयते; द्वैनि. ७१ (=) स्मृसावत्; गभा. ३१; संत. ८९१ स्मृसावत्; उत. १४५ स्मृसावत्, धनञ्जयकृतसंबन्धविवेके; प्रर. १३; धप्र. ५८ हेमाद्रौ; संप्र. ८२९ मुखे (श्राद्धे); श्राप्र. २९६, ३१०; मुक्ता. १४९ व्यासः; लता. २५५; संम. ६; सिन्धु. ११३५ स्मृत्यर्थसारे : १७३२; विपा. ३० (भागः २); संकौ. २६ : २१८ (नान्दीमुखे... संकीर्तयेत्) एतावदेव, क्रमेण वृद्धवसिष्ठः; आन. १४५ पू., स्मृतिः : १८० (=); प्रका. ३१, ३२; बाल. १।२५० पृ. ५६७; संग. ८५ वसिष्ठः; पुम. ३८०;

(१) नान्दीमुखे आभ्युदयिके । श्राद्धमहं करिष्ये इति संकल्पमात्रे प्रपितामहपूर्वता न तु श्राद्धप्रयोगे, 'पित्रे पितामहाय प्रपितामहाय' इति श्रौतक्रमविरोधात् । तद्बाधे स्मृतेरसामर्थ्यात् । संकल्पाभिलापस्त्वाचारात् । ततश्च बलवती श्रुतिः (? स्मृतिः) ।　　स्मृसा. १४

(२) अत्र वृद्धिश्राद्धे पित्रादीनां प्रातिलोम्येन निर्देशः कर्तव्य इत्युक्तं हेमाद्र्युदाहृतस्मृत्यन्तरवाक्ये— 'नान्दीमुखे ... पितृपूर्वकम् ॥' इति, (तत्) वाजसनेयिभिश्छन्दोगैश्च न कर्तव्यम्, पूर्वोदाहृतकात्यायनसूत्रच्छन्दोगपरिशिष्टविरोधात् ।　　मर. १७१

(३) यत्तु 'नान्दीमुखे विवाहे च' इति वचनम्, तदन्यशाखिविषयं देशकुलधर्मादिविषयं वेत्यर्थः ।

पृ. ५१५

जीवत्पितृकः प्रपितामहपूर्वकम्, अन्यः मृतपितृकः पितृपूर्वकमित्यर्थः । दाक्षिणात्यास्तु— प्रपितामहपितामहपितरिति (? पितर इति) क्रमविध्यर्थमेतदित्याहुः ।

श्राका. ५१६

(४) यत्तु वृद्धवसिष्ठः— 'नान्दीमुखे विवाहे च ... ॥' इति, स्मृत्यर्थसारश्च— 'वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते ।' इति, तच्छाखान्तरविषयम् । कात्यायनानां तु आनुलोम्येन मात्रादिक्रमेणैव, 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाः' इति प्रयोगदर्शनात् ।　　गभा. ३१

(५) 'नान्दी समृद्धिरिति कथ्यते' इति ब्रह्मपुराणात् नान्दीमुखे पुत्रादिसमृद्धिप्रधानरूपे विवाहे । विशेषणं तु विवाहादेव पुत्रादिलाभविशेषज्ञापनाय । चस्त्वर्थः, अन्यत्रप्राप्तपित्रादिक्रमव्यवच्छेदाय । नान्दीमुखपदस्य श्राद्धपरत्वेऽनेकवचनप्राप्तपितृपूर्वकाभिलापबाधापत्तेश्च ।　　संत. ८९१

(६) यत्तु वृद्धवसिष्ठः— 'नान्दीमुखे ...', यच्च स्मृत्यर्थसारे 'वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जन्ते ।'

---

संर. ५४९; संदी. ६३ (=) नाम संकीर्तयेद्विद्वान् (वाक्यमुच्चारयेद्धीमान्).

इति, यच्च गारुडे व्युत्क्रमप्रतिपादनम्, तच्च शाखान्तरविषयम्, 'पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः' इति बह्वृचपरिशिष्टे कात्यायनेन चाऽऽनुलोम्याम्नानात्। पृथ्वीचन्द्रोदयेऽप्येवम्।                सिन्धु. १७३२

(७) यत्तु 'नान्दीमुखे विवाहे ...' इति वृद्धवसिष्ठवचनम्, तत् 'नान्दीमुखाः पितर इति इदं वोऽर्घ्यमित्यर्घ्यप्रदानमन्त्रो यथालिङ्गम् (?)' इत्याश्वलायनसूत्र (? परिशिष्ट)– 'नान्दीमुखास्तु पितरः प्रीयन्तामिति मन्त्रतः। इममेव वदेन्मन्त्रं पितामहपदान्वितम्॥' इतितत्कारिका– 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाः' इतिकात्यायनगोभिलसूत्रविरोधात् यस्यां शाखायां पित्रादित्वबोधकवचनं नास्ति, तद्विषयं ज्ञेयम्। नान्दीमुखे पुत्रादिप्रयोजकत्वेन हर्षसंपादके इति विवाहस्यैवेदं विशेषणमिति विवाहतत्त्वकारः।

पुम. ३८०–३८१

(८) नान्दीमुखे प्रपितामहपूर्वकत्वं यच्छाखायां विहितं भवति तद्विषयम्, नास्मत्सूत्रविषयम्, अस्मत्सूत्रे तस्य विधानाभावात् यज्ञतन्त्रचौण्डपाचार्यरामाण्डारादिभिरानुलोम्यस्यैवोक्तत्वाच्च। केचित्तु– 'नान्दीमुख इति विवाहविशेषणम्। पुत्रादिप्रयोजकत्वेन हर्षसंपादके इति तदर्थः। चस्त्वर्थे' इत्याहुः। अनया रीत्या नान्दीमुखे प्रपितामहपूर्वकत्वस्याप्राप्तिरेव। अस्मिन्मते राक्षसादिविवाहस्य हर्षसंपादकत्वाभावान्न तत्र प्रपितामहपूर्वकत्वम्।                संर. ५४९

**[1]तृप्तिप्रश्ने तु संपन्नं दैवे रुचितमित्यपि।**
**दधिकर्कन्धुसंमिश्राः पिण्डाः कार्या यथाक्रमम्॥**

---

(१) स्मृच. ४९९; चश्रा. १५५४ तृप्ति (तृप्त) रुचितमि (रोचत इ); प्रपा. १९ वसिष्ठः; गभा. ३२ संमिश्राः पिण्डाः कार्या (मिश्रांश्च पिण्डान् दद्यात्) उत्त., वसिष्ठः; प्रर. १३ मिश्राः पिण्डाः कार्या (मिश्रान् पिण्डान् दद्यात्) उत्त., वसिष्ठः; श्राप्र. ३०५ रुचितमि (रोचत इ) पू.; मुक्ता. ७५६ उत्त.; श्राम. ९० रुचितमि (रोचत इ) संमिश्राः (सहिताः); संम. ६.

(१) कर्कन्धुः बदरीफलम्।        * स्मृच. ४९९

(२) संपन्नं पित्र्ये, दैवे तु रोचत इति।

¶ चश्रा. १५५४

मातृश्राद्धे विप्रालभे सुवासिनीभोजनम्

**[1]मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि।**
**पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः॥**

(१) मातृवर्गे मातामहीवर्गे वा ब्राह्मणालाभे पतिपुत्रान्विताश्चतस्रश्चतस्रः सुवासिन्यो भोजनीया इत्युक्तं वृद्धवसिष्ठेन– मातृश्राद्धे इति।                श्राप्र. २९८

(२) अत्र विप्रालाभे स्त्रियोऽपि भोज्या इत्याहापरार्के वृद्धवसिष्ठः– मातृश्राद्ध इति। मातृत्रिके चतस्रः मातामहीत्रिके चेत्यष्टाविति हेमाद्रिः।  सिन्धु. १७४९

[ मातृत्रिके इति द्वादशदैवत्यपरम्। मातामहीश्राद्धस्य मातृश्राद्धत्वं कथमित्यरुचिः। चतस्रः प्राङ्मुख्यः चतस्र उदङ्मुख्य इति युक्तम्। कुभ. ]

## विष्णुः

पितरि जीवति पितुः पित्रादीनां देवतात्वम्

**[2]पितरि जीवति यः श्राद्धं कुर्यात् स येषां पिता कुर्यात् तेषां कुर्यात्॥**

---

* प्रपा., गभा., प्रर., संम. स्मृचवत्।

¶ शेषं स्मृचवत्। श्राप्र., श्राम. चश्रावत्।

प्ररवत्, उत्त.; सिन्धु. १७५३–१७५४ तृप्ति (पितृ) संमिश्राः (मिश्राश्च); प्रका. ३३ प्ररवत्; मञ्जरी. ८३ पू., वसिष्ठः, 'रुचिरमिति क्वचित् पाठः' इत्युक्तम्.

(१) अप. १।२४९ पृ. ५१७ कुलोद्भवाः (मुदाऽन्विताः); चश्रा. १५४३–१५४४ अपवत्; श्राका. ५१८; श्राप्र. २९८, ३१५ अपवत्; श्राम. ८९ अपवत्; सिन्धु. १७४९.

(२) विस्मृ. ७५।१; अप. १।२१७–२१८ पृ. ४१८ तेषां (तेभ्यः); श्राक. २३६; स्मृच. ३३९ वचनग्रन्थः पतितः (म्हैसूर. पृ. १६); स्मृसा. ९७ येषां पिता कुर्यात् तेषां कुर्यात् (येभ्यः पिता दद्यात् तेभ्यस्तु

(१) पितरि जीवतीति। अन्येषु मृतेष्विति शेषः। श्राकौ. ५५५

(२) पितरि जीवति पितर्येव जीवतीत्यर्थः। एवमुत्तरत्र। यः श्राद्धं कुर्यादिति यच्छब्दादकरणपक्षोऽपि सूचितः। तथा च कात्यायनः— 'सपितुः पितृकृत्येषु अधिकारो न विद्यते।' 'पितुः पितृभ्यो वा दद्यात् सपितेत्यपरा श्रुतिः।' इति। हारीतोऽपि— 'जीवे पितरि ... प्रचक्षते॥' इति। अन्तर्हितेभ्योऽनन्तर्हितेभ्यो वा प्रेतेभ्यस्त्रिभ्यः क्रमेण श्राद्धं कार्यमिति विष्णुवचनसमुदायार्थः। श्राप्र. १५

(३) अत्र 'यः कुर्यात्' इति यच्छब्दप्रयोगात् जीवत्पितृकस्याकरणे न प्रत्यवायः, किंतु कुर्वाणस्य फलविशेषो भवतीति हेमाद्रिः संगच्छते। $पुम. ३७९

पितृपितामहयोर्जीवने पितामहपित्रादीनां
देवतात्वम्, त्रयाणां जीवने श्राद्धलोपः

**[1]पितरि पितामहे च जीवति येषां पितामहः॥**

$ शेषं श्राप्रवत्।

दद्यात्); प्रपा. २०; गभा. ३२ तेषां कुर्यात् (तेभ्य एव तत् कुर्यात्); गप. ३३१ (जीवति पितरि येभ्यः स दद्यात् तेभ्यः); श्राकौ. ५५५ (स०); प्रर. १४; श्राप्र. १५ (पितरि जीवति यः श्राद्धं कुर्यात्) एतावदेव : २९७ (स०) (तेषां कुर्यात्०); लता. १६ यः (यत्) (स०); श्राम. २७ (स०); संम. ७ विष्णुपुराणे; सिन्धु. १७६२–१७६३ (स०) तेषां कुर्यात् (तेषां); विपा. ८१७ (भागः २) स येषां पिता कुर्यात् (पिता येषां कुर्यात् स); संकौ. २७, २८; प्रका. ३४; बाल. १।२५० पृ. ५७४; संग. ८८; पुम. ३७९ (स०); संदी. ६७, ६८.

(१) विस्मृ. ७५।२; अप. १।२१७–२१८ पृ. ४१८ पितरि पितामहे च (पितामहे); श्राक. २३६; स्मृच. ३३९ वचनग्रन्थः पतितः (म्हैसूर. पृ. १६); स्मृसा. ९७ येषां पितामहः + (दद्यात्तेभ्योऽपि दद्यात्); प्रपा. २० (जीवति०); गभा. ३२ प्रपावत्; गप. ३३१ येषां पितामहः (येभ्यः पितामहो दद्यात्); श्राकौ.

**[1]पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्॥**

(१) यत्तु विष्णुः— 'पितरि पितामहे ... नैव कुर्यात्' इति, तद्दर्शादिविषयमिति कल्पतरुः। मदनपारिजातेऽप्येवम्। पृ. १७३३

त्रिषु जीवत्सु विष्णुराह— 'त्रिषु जीवत्सु नैव कुर्यात्' इति। एतद्दर्शादिविषयम्, नान्दीश्राद्धं तु परेभ्यस्त्रिभ्यो भवत्येव इति कल्पतरुः। पृथ्वीचन्द्रोदयस्तु 'दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्त्रितयं यदि।' इति मनूक्तेः सर्वत्र विकल्पः। स च देशाचाराद्व्यवतिष्ठत इत्याह।

सिन्धु. १७६५

५५५; प्रर. १४ (जीवति०) पितामहः (प्रपितामहः); लता. १६; संम. ७ प्रपावत्, विष्णुपुराणे; सिन्धु. १७६३; विपा. ८१८ (भागः २) पितामहः + (कुर्यात्स तेषां कुर्यात्); संकौ. २७ प्रपावत्: २८; प्रका. ३४ प्रपावत्; बाल. १।२५० पृ. ५७४; संग. ८८ प्रपावत्; पुम. ३७९ पितामहः + (कुर्यात्); संदी. ६७.

(१) विस्मृ. ७५।३; अप. १।२१७–२१८ पृ. ४१८; श्राक. २३६, २७०; स्मृच. ३३९ वचनग्रन्थः पतितः (म्हैसूर. पृ. १६); स्मृसा. ९७; मपा. ६३३ (प्रपितामहे०); प्रपा. २० कुर्यात् (दद्यात्); गभा. ३२ (जीवति०) कुर्यात् (दद्यात्); गप. ३३१ (पित्रादित्रये जीवति नैव कुर्यात्); श्राकौ. ५५५; उत. १३७; प्रर. १४ गभावत्; श्रासौ. १२० (यस्य त्रयो जीवन्ति स नैव कुर्यात्); श्राप्र. २९७ (त्रिषु जीवत्सु नैव कुर्यात्); लता. १६; श्राम. २७ मपावत्; संम. ७ गभावत्; सिन्धु. १७३३ : १७६३ 'त्रिषु जीवत्सु नैव कुर्यात्' इत्यपि पाठः : १७६५ श्राप्रवत्; विपा. ८१७ (भागः २) श्राप्रवत्; संकौ. २८; प्रका. ३४ गभावत्; बाल. १।२५० पृ. ५७० (जीवति नैव कुर्यात्) एतावदेव : पृ. ५७४; संग. ८८ गभावत्; पुम. ३०१, ३७९; संदी. ६७.

(२) यत्तु 'पितरि पितामहे... न कुर्यात्' इति विष्णुवचनं तत् जीवत् पित्रादित्रिकं यस्य तत्कर्तृकतीर्थश्राद्धविषयम्, श्राद्धमिति सामान्येनैवोपक्रमात्। एवमेव रुद्रकल्पद्रुमे कल्पतरौ हलायुधभाष्ये च व्यवस्थापितम्। स्वोद्वाहादिनिमित्तकवृद्धिश्राद्धे तु पितरि पितामहे प्रपितामहे च जीवति वृद्धप्रपितामहादिभ्यो दद्यात्। 'दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्त्रितयं यदा।' इति निगमोक्तेः। * संदी. ६७

पितृपितामहप्रपितामहानां मध्ये प्रथमस्य, प्रथमद्वितीययोः, द्वितीयस्य, प्रथमतृतीययोश्च मरणे श्राद्धदेवतानिर्णयः

**[१]यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात्॥**

'पिता प्रेतः स्यात्' इति, पितैव प्रेतो भवति पितामहप्रपितामहौ च जीवत इत्यर्थः। † श्राक. २३७

**[२]यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात्॥**

(१) यस्य पिता पितामहश्चेति। प्रपितामहे जीवतीति शेषः। श्राकौ. ५५६

(२) यत्र तु पितृपितामहौ प्रेतौ प्रपितामहश्च जीवति तत्राऽऽह विष्णुः– 'यस्य पितापितामहौ .... दद्यात्' इति। अतश्च प्रेतस्य पितृपितामहप्रपितामहानां मध्ये य एव जीवति तमतिक्रम्य तदग्रेतनं गृहीत्वा त्रिकः पूरणीयः, 'त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते। चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते॥' इति वचनादिति दिवोदासचन्द्रप्रकाशादयः। लता. २४७–२४८

**[३]यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात्॥**

यस्य पितामहः प्रेतः स्यादिति। पितरि प्रपितामहे च जीवतीति शेषः। श्राकौ. ५५६

**[४]यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्॥**

---

* संग संदीवत्, स्पष्टत्वात् संदीव्याख्यानं संगृहीतम्।

† श्राकौ. श्राकवत्।

(१) विस्मृ. ७५।४; गोरा. ३।२२१ निधाय (विधाय) प्रपितामहात्परं (पितामहात्पराभ्यां); श्राक. २३६–२३७ प्रपिता (पिता) व्याख्यानात्तु आदर्शवदेव पाठः; स्मृच. ३३९ वचनग्रन्थः पतितः (म्हैसूर. पृ. १६ श्राकवत्पाठः); श्राकौ. ५५५ पित्रे (तस्मै); श्राप्र. १३ श्राकवत्: १५ प्रपितामहात्परं (पितामहात्पराभ्यां): १६ निर्देशमात्रम्: २९७ प्रपितामहात्परं (पितामहात्पराभ्यां); चम. १७३ पिण्डं (पिण्डे) प्रपितामहात्परं (पितामहात्पराभ्यां); लता. १६ श्राकवत्: २४७ (=) श्राकवत्; श्राम. २७ प्रपितामहात्परं (पितामहात्पराभ्यां); सिन्धु. १७६३ श्रामवत्; विपा. ८१७ (भागः २) (यस्य पिता प्रेतः स्यात् पितामहे प्रपितामहे च जीवति पित्रे पिण्डं निधाय प्रपितामहात्पराभ्यां दद्यात्); संकौ. २८ श्राकवत्; बाल. १।२५० पृ. ५७४ श्रामवत्; पुम. ३७९ श्रामवत्.

(२) विस्मृ. ७५।५; श्राक. २३७; श्राकौ. ५५५; श्राप्र. १५ पिण्डौ (पिण्डं); लता. १६: २४८ पिता पितामहः (पितापितामहौ); श्राम. २७; सिन्धु. १७६३; विपा. ८१७ (भागः २) पितामहपितामहाय (पितामहात्पराभ्यां द्वाभ्यां?); बाल. १।२५० पृ. ५७४ (यस्य०); पुम. ३७९.

(३) विस्मृ. ७५।६; श्राक. २३७; स्मृच. ३३९ वचनग्रन्थः पतितः (म्हैसूर. पृ. १६); श्राकौ. ५५५; श्राप्र. १५; लता. १६; श्राम. २७ महात्परं (महात्पराभ्यां); सिन्धु. १७६३ त्परं द्वाभ्यां (त्पराभ्यां); बाल. १।२५० पृ. ५७४ श्रामवत्.

(४) विस्मृ. (कलकत्ता) ७५।७; मिता. १।२५३–२५४ (यस्य पिता प्रेतः स्यात्स पितृपिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात्) व्याख्यानात्तु

( १ ) यदपि विष्णुवचनम्— 'यस्य पिता .. दद्यात्' इति, तस्यायमर्थः— पितामहे ध्रियमाणे प्रेते च पितरि पितुरेकं पिण्डमेकोद्दिष्टविधानेन निधाय पितुर्यः पितामहस्ततः पराभ्यां द्वाभ्यां दद्यात् । पितामहस्त्वात्मनः प्रपितामहः संप्रदानभूतः स्थित एवेति प्रपितामहाय ततः पराभ्यां द्वाभ्यां च दद्यादिति ।

मिता. १।२५३–२५४

( २ ) यस्य पिता प्रपितामहश्चेति । पितामहे जीवतीति शेषः ।

श्राकौ. ५५६

( ३ ) यत्त्वत्र विज्ञानेश्वरेणोक्तम्— 'पित्रे पिण्डं निधाय' इति पितुरेकोद्दिष्टविधिना श्राद्धं कृत्वा प्रपितामहादिभ्यः पार्वणं कुर्यात्, तत् व्युत्क्रममृतसपिण्डीकरणाभावपक्षे सपिण्डीकरणस्थानापन्नं ज्ञेयम्, 'व्युत्क्रमात्तु प्रमीतानां नैव कार्या सपिण्डता ।' इति वचनात् ।

सिन्धु. १७६४

पित्रादिमरणे पूर्वोक्तस्य देवतानिर्णयस्य मातामहादिमरणेऽतिदेशः, प्राकृतमन्त्रेषु विकृतावूहविधानम्

**[१]मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ।**
**मन्त्रोहेण यथान्यायं शेषाणां मन्त्रवर्जितम् ॥**

आदर्शवदेव पाठः; स्मृच. ३३९ वचनग्रन्थः पतितः (म्हैसूर. पृ. १६); ममु. ३।२२१ पिता प्रपितामहश्च (पितृप्रपितामहौ); श्राकौ. ५५५; मच. ३।२२२ प्रेतौ स्यातां (मृतौ) शेषं ममुवत्; श्राप्र. १५ पित्रे... द्वाभ्यां (ताभ्यां पिण्डौ दत्त्वा पितामहप्रपितामहाय); लता. १६; श्राम. २७ श्राप्रवत्; सिन्धु. १७६३ यद्यपि सिन्धुपुस्तके इदं वचनं नोपलभ्यते तथापि एतद्वचनमिताक्षरव्याख्यानानुवादात् पूर्वं स्थितमपि उच्छिन्नमिति कल्प्यते; बाल. १।२५० पृ. ५७४ परं (पराभ्यां).

(१) विस्मृ. ७५।७; श्राक. २३७; स्मृसा. ९७ (=): १०२; गप. ३३० पू.; श्राकौ. ५५५; श्राप्र. १६ पू.; श्राम. २८, ७४ हेण (हेन); सिन्धु. १७५७, १७६३ श्रामवत्; विपा. ८१७ (मागः २); संकौ. २८ श्रामवत्; बाल. १।२५० पृ. ५७४ न्यायं शेषाणां (न्यायमन्येषां) शेषं श्रामवत्; पुम. ३७९ पू.; कुभ. १७६३ पू.

( १ ) मन्त्रोहेण 'शुन्धन्तां पितरः' इत्यादिमन्त्रेषु 'पितरः' इत्यत्र 'मातामहाः' इत्यादिपदप्रक्षेपलक्षणेन । शेषाणां पितृव्यमातुलादीनाम् । मन्त्रवर्जितम्, आवाहनादिकं मन्त्रवर्जं कार्यमित्यर्थः ।

श्राक. २३७

( २ ) मन्त्रोहन्यायः— ये मन्त्रा असमवेतार्थास्ते तावन्नोह्याः, असमवेतार्थत्वादेव । येऽपि 'शं नो देवीः' 'तिलोऽसि' इति 'या दिव्याः' इत्याद्याः प्रकृतिविकृत्योरेकार्थास्तेऽपि नोह्याः, अर्थान्तरप्राप्त्यभावात् । ये पुनः 'आयन्तु नः पितरः' 'अत्र मादयध्वम्' 'अमीमदन्त पितरः' 'नमो वः पितरः' इत्याद्याः ते च समवेतार्थत्वात् दृष्टार्थत्वाच्च प्रकृतौ पित्रादिप्रकाशका ज्ञाता विकृतौ चापि पित्रादिपदस्थानपतितमातामहादिपदवत्तयोह्याः । एतेन मातृपदवत्तया मातृश्राद्धे तूह्याः । शेषाणां पितृव्यादीनामूह्यमन्त्ररहितमेव श्राद्धं कुर्यात् । अयं च पित्रादित्रिकमातामहादित्रिकश्राद्धयोः प्रकृतिविकारभावाभावादप्राप्त एवोहो वचनेन विधीयते ।

स्मृसा. ९७

( ३ ) मातामहानामिति । एवं पूर्वोक्तं सर्वं मातामहादीनां त्रयाणामप्यतिदेश्यम् । मन्त्रोहेणेति । प्रकृतौ समवेतार्थकमन्त्रे विकृतौ यत्पदमसमवेतार्थं स्यात् तत्र समवेतार्थकपदप्रक्षेपेण श्राद्धं कार्यम्, यत्तु प्रकृतावसमवेतार्थकं पदं तत्र नास्त्यूहः, अदृष्टार्थकत्वादिति प्रागेव व्याख्यातमिदं वचनमेकोद्दिष्टप्रकरणे ।

श्राकौ. ५५६

( ४ ) मातामहादीनामेकद्वित्रिषु जीवत्सु एवं पितृपार्वणवदित्यर्थः । मात्रादिष्वप्येवम्, न्यायसाम्यात् । 'मन्त्रोहेण' इत्यादि व्याख्यास्यते ऊहप्रकरणे । *

श्राम. २८

* ऊहप्रकरणे इत्थं व्याख्यातम्— "यत्तु विष्णुवाक्यं 'मातामहाना...' इति, तदपि न पूर्वोक्तेषु मन्त्रेषु ('आयन्तु नः पितरः' 'पितॄन् हविषे अत्तवे' 'एतद्वः पितरो वासो' 'अमीमदन्त पितरः' इत्यादिषु) ऊहं विदधाति, 'यथान्यायम्' इत्यनेन न्यायप्राप्तानुवादप्रतीतेः। अतो यत्र 'शुन्धतां पितरः शुन्धतां पितामहाः शुन्धन्तां प्रपितामहाः' इत्यादिषु पितामहप्रपितामहोपादानेन पितृ-

(५) एवं जीवन्मातामहेनाप्यूहेन कार्यम्, 'माता-महाना...' इति विष्णूक्तेः, 'एवं मात्रादिकस्यापि तथा मातामहादिके।' इति पृथ्वीचन्द्रोदयेऽग्निपुराणाच्च। पितरि जीवति तु स्वमातरि मृतायामपि पितुरेव मातृमातामहयोः कुर्यात्, 'येभ्य एव पिता दद्यात्' इति वक्ष्यमाणवचनात् इति पितामहचरणाः। मदनरत्ने तु जीवत्पिता स्वमातृमातामहयोर्दद्यादित्युक्तम्। कालादर्शेऽप्येवम्। मृते तु पितरि जीवन्मातृकः पितामह्यादिभ्यो वृद्धौ दद्यादिति स्मृतितत्त्वादिगौडग्रन्थाः। दाक्षिणात्यास्तु 'पितृवर्गे मातृवर्गे तथा मातामहस्य च। जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत्॥' इति वचनात्तद्वर्गत्याग एवेत्याहुः। पृ. १७५७

[पितरि जीवति त्विति आश्वलायनान्यपरम्, आश्वलायनादीनामपत्यसंस्कारेतरपरं च। अपत्यसंस्कारे तु 'जीवत्पिता सुतसंस्कारेषु' इत्यादि। मृते त्विति मतान्तरं न दाक्षिणात्येषूपयुक्तम्। कृभ.]

अत्र पितृवन्मातामहे जीवति तत्पित्रादिभ्यः, यथा तत्र त्रिषु जीवत्सु नैव कुर्यात्तथाऽत्रापीत्यादि सर्वमतिदेश्यम्। एवं मातृजीवनेऽपीति शूलपाणिकालादर्शौ। तन्न, 'येभ्य एव' इत्यादौ यच्छब्दादेर्व्यक्तिविशेषवाचित्वेन तदप्रसङ्गादिति दिक्। उत्तरार्धं व्याख्यातं प्राक्। सिन्धु. १७६३

[मातामहे जीवतीति। मातामहादीनामेकद्वित्रिषु जीवत्सु एवं पितृपार्वणवदित्यर्थः। एवमिति। मात्रादिष्वप्येवम्, न्यायसाम्यादित्यर्थः। न च 'मातामहाना...' इत्यत्र मातामहे जीवति चशब्दान्मातरि च जीवन्त्यां मातृपितामहप्रपितामहादिभ्यो देयमिति वाच्यम्, एवंशब्देन अतिदेशवाक्यस्य 'येभ्य एव पिता दद्यात्तेभ्यो दद्यात्' इत्यादिसाक्षाद्विधायकवचनैर्बाधात्। तत्तु मृतपितृकपरम्। आदिना जीवन्मातृपितृकः पितुः पितृमात्रादिभ्यो दत्त्वा स्वमातामहेभ्यो दद्यात्। तथा जीवत्पितृमातामहकः पितुः पितृमातामहादिभ्यो दत्त्वा स्वमात्रादिभ्यो दद्यादित्यस्य ग्रहः। तदप्रसङ्गादिति। स्वीयमातृमातामहादिभ्यो दानाप्रसङ्गादित्यर्थः। लक्षणायां माना-

---

शब्दस्य जनकपरत्वान्मातामहादिमातृवर्गादिषु 'शुन्धन्तां मातामहाः शुन्धन्तां मातरः' इत्यादिरूपेण प्राप्तोहस्यानुवादः। न च प्रकृतावेकस्मिन् पितरि बहुवचनस्यासमवेतत्वाद्विकृतावेकवचनान्त एव प्रयोज्य इति वाच्यम्, प्रकृतौ बहुवचनस्यासमवेतार्थत्वे विकृतावप्यविकृतस्यैव प्रयोग इति नवमे पाशाधिकरणे स्थितत्वात्। एवं च 'शुन्धतां मातामहाः' 'शुन्धन्तां मातरः' इत्याद्येवोह्यम्। येषां च 'पितृभ्यः स्वधोच्यताम्, पितामहेभ्यः स्वधोच्यताम्, प्रपितामहेभ्यः स्वधोच्यताम्' इति शुन्धनमन्त्राः तेषामपि पूर्वोक्तन्यायेन भवत्येवोहः। ननु– अस्त्वेवमत्र, 'एतद्वः पितरः' इत्यादिमन्त्रेषु पितृशब्दगतबहुवचनेन पितृशब्दो जनकपरोऽपि लिङ्गसमवायात् पित्रपितृसमुदाये वर्तते, तादृशस्य च विकृतौ मातामहादिश्राद्धेऽसमर्थत्वात् प्रकृतिवदेव मातामहामातामहेषु मातामहा इत्यूहः ऋङ्मन्त्रेषु वाक्यान्निषेधेऽप्यनृङ्मन्त्रेषु कथं न प्राप्नोतीति चेत्, उच्यते– पितृशब्दस्तावदुभयोः (जनक–सपिण्डीकरणान्तश्राद्धजन्यपितृत्ववतोः) वाचक इत्युक्तम्। तत्र जनकपरत्वेऽङ्गीक्रियमाणे गौणीप्रसक्तेरितरपरत्वमेव गृह्यते। एवं च बहुवचनमप्युपपन्नं भवति। एवं च प्रकृतौ यादृशः शास्त्रार्थस्तादृश एव विकृतौ इति नोहप्रसङ्गः। अत्र पितामहचरणाः– 'पितरेतत्तेऽर्घ्यम्' इत्यादिषूह्यानूहविचारानवकाशः, एतस्याभिलापमात्रत्वेन मन्त्रत्वाभावात्। अन्यथा 'शेषाणां मन्त्रवर्जितम्' इत्युक्त्या शूद्रादीनां तथाऽभिलापाप्रसक्तेः। अतोऽपौरुषेये वैदिकप्रसिद्धे मन्त्रशब्दो मुख्यः, अन्यत्र गौणः। अत एव भावार्थपादे ऊहप्रवरनाम्नाममन्त्रत्वमित्याह भगवान् सूत्रकारः, तेषां लोके प्रयुज्यमानत्वात् इत्याहुः। एवं मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादिभिर्मन्त्राणामूहनिर्णयः कार्यः। 'शेषाणां मन्त्रवर्जितम्' इति पूर्वोक्तविष्णुवचनशेषः एवं पितृव्याद्येकोद्दिष्टे ऊहयोग्यपितृपदयुक्तमन्त्रपर्युदासार्थं इति शूलपाणिः। पितृव्याद्येकोद्दिष्ट एवाऽऽवाहनादिमन्त्राणां पर्युदासार्थं इति कल्पतरौ। उभयमप्येतत्प्रमाणशून्यम्। भोगस्त्रीणां शूद्रापुत्रस्य चैकोद्दिष्टे मन्त्रपर्युदासार्थमिति पितामहचरणाः''। (श्राम. ७४, ७५)।

भावादिति भावः। मृतमातृकादिरपि पितुरेव पितृमातृमातामहादिभ्य एव दद्यादिति दिगर्थः। ¶ क्रम.]

(६) एवमिति 'पितरि जीवति यः श्राद्धं कुर्यात्' इत्यस्यातिदेशः। तथा च मातामहे जीवति येषां मातामहः कुर्यात्तेषां कुर्यादित्यादि योज्यम्। मातृजीवनेऽप्येवमेव, न्यायसाम्यात्। ततश्च जीवत्पितृकः पितृपित्रादिभ्यस्त्रिभ्यो दत्त्वा यदि मृतमातृकस्तदा स्वमात्रादिभ्यो दद्यात्। मातृसद्भावे पितामह्यादिभ्यस्तिसृभ्यो दत्त्वा स्वमातामहादिभ्यो दद्यात्। मातामहसद्भावे मातृपितामहादिभ्यस्त्रिभ्यो दद्यादिति फलितार्थः। न च 'येभ्य एव पिता दद्यात्' इति वचनविरोधः, मातृमातामहशब्दयोः संबन्धिशब्दत्वात् पुत्रसंबद्धानामेव मात्रादीनां मातामहादीनां च यत्तच्छब्दवाच्यत्वेनैक्यात् तच्छ्राद्धे देवतात्वमिति व्याख्यानात्। ततश्च जीवत्पितृकस्य स्वसंबन्धिमातृमातामहादीनामेव श्राद्धमिति। तदपेशलम्, यच्छब्दवाच्येभ्यस्तच्छब्दवाच्येभ्य इति व्याख्याने यत्तच्छब्दयोर्लक्षणापत्तेः। पितृपित्रादिविषये श्रुत्यर्थसंभवेन युगपद्वृत्तिद्वयकल्पनाप्रसङ्गाच्च। किंच, अत्र यत्तच्छब्दाभ्यामेव वाक्ये निर्देशः। सोऽपि येभ्यः पितेति पितृप्रतियोगिकत्वेन, न तु स्वप्रतियोगिकत्वेन। तथा च स्वसंबन्धिशब्दबलात् न पुत्रसंबन्धिमात्रादिप्राप्तिः। तस्मात् मृतमातृकस्यापि जीवत्पितृकस्य तीर्थश्राद्धे पितृसंबद्धा मात्रादयस्तत्संबद्धा एव मातामहादयश्च श्राद्धदेवताः, न तु स्वसंबद्धा इति निष्कर्षः। स्वमातुश्च पितृपत्नीत्वेनैकोद्दिष्टम्। एवं स्वमातामहस्यापि पितृश्वशुरत्वेनैकोद्दिष्टमेव। इति सर्वं समञ्जसम्।

विपा. ८१७–८१८ (भागः २)

नान्दीश्राद्धस्य काम्यत्वम्

**[१]आदित्यसंक्रमणम्। विषुवद्द्वयम्। विशेषेणायनद्वयम्। व्यतीपातः। जन्मर्क्षम्। अभ्युदयश्च॥**

**[१]एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः।**
**श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते॥**

नान्दीश्राद्धस्य प्रातः कर्तव्यता, आधानाङ्गस्य त्वपराह्णकर्तव्यता

**[२]नान्दीमुखाह्वयं प्रातराह्निकं त्वपराह्णतः॥**

आधानाद्यङ्गभूतनान्दीश्राद्धं त्वपराह्णे, 'नान्दी... ह्णतः।' इति विष्णूक्तेः। एतस्माद्वचनात् पूर्वेद्युरेव नान्दीश्राद्धानुष्ठानं युक्तम्। नान्दीश्राद्धपूर्वभावित्वात्पुण्याहवाचनमातृकापूजनयोरपि। द्वितीयदिनेऽनुष्ठीयमाने कर्मान्तःपातित्वं स्यात्। नहि श्रौतकर्ममध्ये स्मार्तानुष्ठानं युक्तम्। गणपतिपूजनं तूभयदिनेऽपि। जातकर्मार्थनान्दीश्राद्धं तात्कालिकमेव, 'पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम्। पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः॥' इत्यत्रिस्मरणात्। आपस्तम्बसूत्रानुसारिणस्तु संभारस्पर्शोत्तरं नान्दीश्राद्धमाचरन्ति, तदुपेक्ष्यमेव। संर. १०४५

नान्दीश्राद्धस्य कर्मादौ कर्तव्यता

**[३]नान्दीमुखान् पितॄनादौ तर्पयेत् पितृदेवताः॥**

मात्रादीन् विशिनष्टि विष्णुः– नान्दीमुखानिति। अत्र पितृशब्दो न जनकपरः, किन्तु सपिण्डीकरणजन्यपितृभावपरः, पितॄनिति बहुवचनात्। संम. ६

---

¶ शेषं श्राद्धमयूखस्य टिप्पण्यां संगृहीते तदीयोहप्रकरणस्थैतच्छ्लोकव्याख्याने गतम्।

(१) विस्मृ. ७७।१–६; अप. १।२१८ पृ. ४२६ वद्वय (वद्द्वय); स्मृच ३४१ (म्हैसूर पृ. २३) क्रमणं (क्रमः) (विशेषेणायनद्वयम्०); दीक. १।२१८ विषुवद्वयम्। विशेषेणायनद्वयम् (विशेषेणायनद्वयम्। विषुवद्वयम्); श्रात. ३१९ (च०).

(१) विस्मृ. ७७।७; अप. १।२१८ पृ. ४२६; स्मृच. ३४१ श्राद्धमे (द्रव्यमे); दीक. १।२१८ काम्या (निला); द्वैनि. ७७ दीकवत् पू.; श्रात. ३१९.

(२) मुक्ता. ७५४ त्वपराह्णतः (त्वपराह्णके) कालादर्शकारः; लता. ३१ 'ग्रन्थान्तरे' इत्युक्तम्; सिन्धु. १७३१ राह्निकं (राब्दिकं ?); संर. १०४५; मञ्जरी. ७९ (आह्निकं त्वपराह्णतः) एतावदेव.

(३) संम. ६.

## शङ्खः लिखितः च

नान्दीश्राद्धस्य मात्रादिपार्वणकश्राद्धत्रयात्मकत्वम्

[1]मातुः श्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम्।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥

मातृश्राद्धस्य विश्वदेवपूर्वकत्वम्

[2]देवपूर्वं मात्रे पितामह्यै च भोजयेत्॥

मातृश्राद्धेऽपि द्विजानां भोज्यत्वम्

[3]पित्रादित्रयपत्नीषु भोज्या मातुः प्रति द्विजाः।
स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमिहोच्यते॥

मातृश्राद्धस्य पृथक्कर्तव्यतानिमित्तानि

[4]अन्वष्टकां तथा मातृश्राद्धं चैव मृताहनि।
एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत्पृथग्भवेत्॥

मातृश्राद्धं नान्दीश्राद्धम्। स्मृच. ३६९

श्राद्धभेदेन विश्वदेवसंज्ञाभेदः

[5]इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्यौ वैश्वदेविके।
नान्दीमुखे सत्यवसू काम्ये च धुरिलोचनौ॥

(१) इष्टिश्राद्धं यागादिकर्माङ्गम्, श्रौतस्मार्तकर्मणामाधानसोमयागपुंसवनसीमन्तादीनामादौ तदङ्गत्वेनानुष्ठीयमानं श्राद्धमिति यावत्। 'निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत् कृतम्॥' इति कर्माङ्गश्राद्धलक्षणमभिदधता पारस्करेणैव वृद्धिवत्कृतमित्यभिधानात् कर्माङ्गश्राद्धं वृद्धिश्राद्धादन्यदिति दर्शितम्। नान्दीमुखं नान्दीमुखसंज्ञकपितृदेवताकम्, वृद्धिश्राद्धमिति यावत्, 'एवं प्रदक्षिणीकृत्य वृद्धौ नान्दीमुखान् पितॄन्। यजेत ...॥' इति याज्ञवल्क्येन वृद्धिश्राद्धे नान्दीमुखसंज्ञकपितॄणां देवतात्वेन विधानात्। वृद्धिश्राद्धं च वृद्धवसिष्ठेन निरूपितम्— 'पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम्।' इति। पुत्रजन्मविवाहादौ क्रियमाणमाभ्युदयिकं श्राद्धं वृद्धिश्राद्धमिति व्यपदिश्यते इत्यर्थः। आदिशब्देन गर्भाधानपुंसवनसीमन्तव्यतिरिक्तानामन्नप्राशनचूडाकरणादिसंस्कारकर्मणां संग्रहणम्, गर्भाधानपुंसवनसीमन्तेषु क्रियमाणाभ्युदयिकश्राद्धस्य कर्माङ्गश्राद्धकोटिप्रविष्टत्वात्। काम्यं फलकामनयाऽनुष्ठेयं महालयादिश्राद्धम्, 'पुत्रानायुस्तथाऽऽरोग्यमैश्वर्यमतुलं तथा। प्राप्नोति पञ्चमे दत्त्वा श्राद्धं कामांश्च पुष्कलान्॥' इति पञ्चमपक्षे कन्यागते सूर्ये महालयाख्यश्राद्धस्य पुत्रादिकाम्यफलसाधकत्वस्मरणात्। * स्मृच. ४४३

(२) वृद्धिश्राद्धे विश्वेदेवाः सत्यवसुसंज्ञकाः, कर्माङ्गनान्दीश्राद्धे क्रतुदक्षसंज्ञकाः, 'इष्टिश्राद्धे क्रतुर्दक्षः' इति वचनात्, इष्टिश्राद्धं कर्माङ्गश्राद्धमिति हेमाद्रिणा

---

(१) लिस्मृ. ४८. (२) स्मृसा. १०८ शङ्खः.

(३) अप. १।२१८ पृ. ४३१; श्राका. ५१८ (पित्रादित्रयपत्नीस्तु भोज्या मातृप्रति द्विजैः। स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमतः स्मृतम्॥); श्रासौ. ११७. सर्वेषु ग्रन्थेषु शङ्खः इति।

(४) अप. १।२१८ पृ. ४३१ शङ्खः; स्मृच. ३६९ पूर्वार्धे (अन्वष्टक्यां तथा वृद्धौ मातुः श्राद्धं मृताहनि।) शङ्खः, म्हैसूरमुद्रितपुस्तके तु (पृ. ९९–१००) 'अन्वष्टके तथा मातृश्राद्धे चैव मृतेऽहनि। एकोद्दिष्टं तथा मुक्त्वा त्रिषु नान्यत् पृथग्भवेत्॥' एवं पाठः; श्राकौ. ४९४ (अन्वष्टका–गया–वृद्धिश्राद्धं चैव मृताहनि। एकोद्दिष्टं तथा मुक्त्वा मातुर्नान्यद्भवेत्कचित्॥) शङ्खः; श्रासौ. ११७ अन्वष्टकां (अन्वष्टका) तथा (सदा) स्त्रीषु नान्यत्पृथग्भवेत् (त्रिषु ह्यन्यत्प्रकल्पयेत्) शङ्खः; लता. १२१ (=) पूर्वार्धे (अन्वष्टक्यं तथा वृद्धिं मातुः श्राद्धं मृतेऽहनि।) स्त्रीषु (स्त्रीणां); कृभ. १७४३ (=) (आन्वष्टक्यं गयाप्राप्तौ सतां यच्च मृतेऽहनि।) पू.

(५) स्मृच. ४४३ शङ्खः; चश्रा. १४३ लोचनौ (रोचनौ) शङ्खः; पमा. ७३१ देविके (दैविके) धुरि (धुनि) शङ्खः; प्रपा. १६ देविके (देवकौ) शङ्खः; चम. १४९ क्रतुर्दक्षः (क्रतुदक्षौ) च (तु) शङ्खः; लता. ९० देविके (देविकौ) धुरि (धूरि) पारिजाते; सिन्धु. १०३१ (नान्दीमुखे सत्यवसू संकीर्त्यौ वैश्वदेविके।) एतावदेव, शङ्खः; संकौ. २५ (=) (इष्टिश्राद्धे क्रतुर्दक्षः) एतावदेव; संग. ७९ (इष्टिश्राद्धे क्रतूदक्षौ सत्यौ नान्दीमुखे वसू।) एतावदेव, शङ्खः; मञ्जरी. १७ (=) (इष्टिश्राद्धे क्रतुदक्षौ वृद्धौ सत्यवसू स्मृतौ। नैमित्तिके कामकालौ काम्ये च धूरिलोचनौ॥).

* चश्रा., पमा., प्रपा., चम. स्मृचगतम्।

व्याख्यानात् । न च योगानुसारेण इष्टयङ्गश्राद्धमित्येव व्याख्या उचितेति शङ्क्यम्, प्रधानस्याङ्गिनोऽङ्गत्वस्य प्रवेशेनैवोद्देश्यबुद्धिपर्यवसाने सति इष्टिग्रहणस्य 'पश्चावत्तैव वपा कार्या' इत्यत्र वपाग्रहणस्येवाविवक्षितत्वात्। अत एव 'निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्॥' इति वाक्येऽपि निषेकादिग्रहणमाधानाद्युपलक्षणार्थमिति पारिजातादयः। सोमशब्दस्तेषामुपलक्षणार्थं इति मदनरत्नादयः। अस्मिन्पक्षे पुत्रजन्मनिमित्तके प्रधानभूते नान्दीश्राद्धे सत्यवसू नाङ्गभूतौ। अन्ये तु निषेकादिशब्दानामुपलक्षणार्थतामन्याय्यां मन्यमाना निषेकादिगणितकर्मान्यकर्माङ्गनान्दीश्राद्धे सत्यवसू, गणितेषु क्रतुदक्षावित्याहुः।

संकौ. २५

## मनुः

पितुर्जीवत्त्वे श्राद्धदेवतानिर्णयः

**'म्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत्।**
**विप्रवद्वाऽपि तं श्राद्धे स्वकं पितरमाशयेत्॥**

(१) उक्तं 'पितृभ्यः पिण्डान्निर्वपेत्' इति। क एते पितरो नाम? अनेकार्थो हि पितृशब्दः जनयितरि वर्तते। जनकः पितेति संबन्धिशब्दो दृश्यते। पूर्वप्रमीताः पित्रादयः अन्ये च संबन्धिनः प्रेताः पितर उच्यन्ते। तथा च 'नमो वः पितरः' इत्यादिमन्त्रा बहुवचनान्ताः समर्था निगदा भवन्ति। अत एव स्त्रीश्राद्धे नोह्यन्ते। नमस्ते मातः, नमस्ते पितामहि इत्यादि न क्रियते। अत एकोद्दिष्टे संख्योहः क्रियते, न प्रातिपदिकोहः। तथा च सूत्रकारः— 'एकवन्मन्त्रानूहेत' इत्यादि। 'नमस्ते पितः' इत्येवमूहः क्रियते। यो भ्रातुः पितामहादेर्वा एकोद्दिष्टं करोति स चैवम् (? नैवम्) ऊहति— नमस्ते भ्रातः, नमस्ते पितामह, नमस्ते पितृव्य इत्यादि। पितृव्यादीनामनपत्यानां श्राद्धं विहितम्— 'यो यत आददीत स तस्मै दद्यात्' इति। देवताविशेषवचनोऽप्यस्ति पितृशब्दः कूटस्थनित्येऽर्थे वर्तते। निरुक्तकारा हि दैवते मध्यस्थान् पितॄन् समामनन्ति— 'मरुतः रुद्राक्षभृतः पितरः' इति। एवमनेकार्थे पितृशब्दे विशेषावधारणार्थमाह— म्रियमाणे जीवति पितरि सति पूर्वेषां पितामहप्रपितामहतत्पितॄणां निर्वपेत् त्रयाणाम्, बहुवचननिर्देशात्। तथा च गृह्ये— 'येभ्यः पिता दद्यात्तेभ्यः पुत्रो दद्यात् पितापुत्रौ चेदाहिताग्नी स्याताम्' इति। ननु च न चतुर्थे पिण्डो गच्छतीत्याहुः। सत्यम्, नैवात्र चतुर्थः पिण्डो दीयते।

पक्षान्तरमाह— विप्रवद्वा। यथा ब्राह्मणा निमन्त्रणापूर्वकं ब्रह्मचारिणो नियमवन्तश्च पूज्यन्ते, तथैव जीवत्पितृकेण पिता भोजनीयः। श्राद्धं श्राद्धार्थमन्नं श्राद्धम्। अत्र च पितृत्वमेव भोज्यत्वे कारणम्, न जातिगुणावपेक्ष्यौ। एवं ह्याहुः— पितृप्रीत्यर्थं श्राद्धम्, तत्र मृतस्य प्रीतौ कर्तव्यायां को जीवति पितरि परिभवो येनासौ न भोज्येत? स्वकमित्यनुवादः, संबन्धिशब्दत्वादेव सिद्धेः। भोजनमत्र पितुश्चोदितं हितम्। पिण्डनिर्वपणं तु दर्भेषु पितॄणां कर्तव्यमेतत्त इति विरोधात्। यदि हि पात्रस्थानीया दर्भास्तदा जीवतः पितुः स्वाम्ये दानोत्पत्तौ अल्पिकां मात्रामाशयेदिति न युज्यते। जीवतो हि स्वमिच्छाविनियोज्यम्। न च तस्मिन्पिण्डेऽञ्जनादिदानमुपपद्यते, अर्धजरतीयप्रसङ्गात्। न ह्यत्राञ्जनादिसंस्कृतेन पितुः किञ्चित् प्रयोजनमस्ति। तस्माददृष्टार्थमञ्जनादिदानम्। अञ्जनादिरहितं तु कदाचिदात्मनः पितुः परस्य वा भोजनयोग्यं भवतीत्येवमर्धजरतीयम्। तस्मादस्मिन्पक्षे पिण्डनिर्वपणं द्वयोः पितामहप्रपितामहयोः। गृह्यकारास्तु स्मरन्ति— 'जीवत्पितृकस्य न पिण्डपितृयज्ञो न श्राद्धम्', किं तर्हि?

(१) मस्मृ. ३।२२०; विश्व. १।२२५ (=); मेधा. श्राद्धे (श्राद्धं); मिता. १।२५३–२५४ पू.; स्मृसा. ९७; मपा. ५४२ तं श्राद्धे (तच्छ्राद्धं); श्राकौ. ५५३; श्राप्र. १३ पू.: १५; लता. १५; सिन्धु. १७५६ पू.; बाल. १।२५० पृ. ५७६; कुभ. १७६१ पू.

‘ अनारम्भ एव तस्य कर्मणो होमान्तता वा ’ ।

§ मेधा.

( २ ) जीवति पितरि पितामहादीनामेव त्रयाणां श्राद्धं कुर्यात्, न पितुः । अथवा पितृस्थाने तमेव स्वकं पितरं श्राद्धे भोजयेत्, पितामहप्रपितामहयोश्च ब्राह्मणौ भोजयेत् पिण्डौ च दद्यात् ।

गोरा.

( ३ ) म्रियमाणे जीवति पितरि जनके । पूर्वेषां पितामहादीनां त्रयाणाम् । पक्षान्तरमाह– विप्रवदिति । यथा मृते पितरि तदर्थं ब्राह्मणो भोज्यः तथा जीवति पितरि तमेव भोजयेत् पिण्डं वा ( ? न ) दद्यात् । पितामहप्रपितामहार्थं विप्रौ भोजयेत्, पिण्डं च दद्यात् । एवं पितामहे जीवति पक्षद्वयम्, तावताऽपि त्रयसंपत्तेः ।

स्मृसा. ९७

( ४ ) पितुः पूर्वेषां पुरुषत्रयाणामित्यर्थः । पक्षान्तरमाह– विप्रवदिति । श्राद्धे श्राद्धनिमित्तं तं पितरं विप्रवदादराद्यतिशयेन भोजयेत् । तेन जीवन्तं पितरमादौ भोजयित्वा पुरुषद्वयस्य श्राद्धं कर्तव्यमित्यर्थः, न तु जीवतोऽपि पितुस्तस्मिन् श्राद्धं कर्तव्यम्, ‘ पितरं भोजयित्वा तु पिण्डौ निपृणुयात् परौ । ’ इति यज्ञपार्श्वपरिशिष्टवचनात् ।

श्राकौ. ५५४

( ५ ) म्रियमाणे जीवति । पूर्वेषां वृद्धप्रपितामहस्य पितामहप्रपितामहयोः ब्राह्मणद्वयं च कुर्यात् । पितृस्थाने स्वकं पितरमित्यन्वयः ।

मच.

( ६ ) विप्रवत् गन्धाद्यर्चनपूर्वकम् । विप्रविहितनिमन्त्रणब्रह्मचर्यादिनियमयुक्तमिति मेधातिथिः । पितामहप्रपितामहस्थाने तु ब्राह्मणान् भोजयेत् । पितुर्भोजनपक्षे न पिण्डदानम्, ‘ पितरं भोजयित्वा तु पिण्डौ निपृणुयात्परौ । ’ इति यज्ञपार्श्वपरिशिष्टात् । अनेन स्वकं पितरमादितो भोजयित्वा तदूर्ध्वं पुरुषत्रयस्य श्राद्धं कर्तव्यमिति हलायुधव्याख्यानं प्रशस्तम् ( ? निरस्तम् ) ।

* श्राप्र. १६

( ७ ) पितृशब्दः पितामहप्रपितामहयोरप्युपलक्षणम् ।

‡ नन्द.

पितुर्मृतत्वे पितामहस्य जीवत्त्वे च श्राद्धदेवतानिर्णयः

**‘पिता यस्य निवृत्तः स्याज्जीवेद्वाऽपि पितामहः ।**
**पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम् ॥**

( १ ) पितुर्नामसंकीर्तनेन तदीयावाहनपिण्डदानब्राह्मणभोजनानि लक्ष्यन्ते । कीर्तयेत्प्रपितामहम् । जीवते पितामहाय न दद्यात् । किं तर्हि ? ततः पूर्वाभ्याम् । ‘ पितुः पितृभ्यो निपृणीयात् ’ इति स्मरन्ति ।

¶ मेधा.

( २ ) पितृजीवनपक्षापेक्षो वाशब्दः । यस्य पुनः पिता मृतः स्यात् पितामहश्च जीवेच्च, स पितुः ब्राह्मणभोजनपिण्डदानादौ नामोच्चार्य प्रपितामहं कीर्तयेत् । ताभ्यां द्वाभ्यां श्राद्धं कुर्यात् प्रपितामहस्य च पितुः । यथाऽऽह विष्णुः– ‘ यस्य पिता ( प्रपितामहश्च ) प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात् ’ इति ।

गोरा.

( ३ ) यत्तु मनुवचनम्– ‘ पिता यस्य... प्रपितामहम् ॥ ’ इति तदपि पितृशब्दप्रयोगनियमाय, न पिण्ड-

---

§ मवि., ममु., मपा., लता., भाच. मेधागतम् ।

* शेषं मेधागतम् ।

‡ शेषं मेधागतम् ।

¶ लताव्याख्यानं द्रष्टव्यम् । श्राकौ. मेधागतम् ।

( १ ) मस्मृ. ३।२२१ ; विश्व. १।२२५ निवृत्तः ( तु वृत्तः ) ; मिता. १।२५३–२५४ द्वाऽपि ( चापि ) ; स्मृसा. ९७ (=) यस्य नि (यस्याति) पितुः स (स पितुः) ; मपा. ५४२ निवृत्तः स्यात् (तु वृत्तस्थो ) स नाम (स्वनाम) ; गप. ३३० निवृत्तः ( तु वृत्तः ) स नाम ( स्वनाम ) विष्णुपुराणम् ; श्राकौ. ५५३ निवृत्तः ( तु वृत्तः ) द्वाऽपि ( चापि ) ; मच. विश्ववत् ; श्राप्र. १६ श्राकौवत् ; चम. १७३ श्राकौवत् ; लता. २४७ ; सिन्धु. १७६२ मितावत् ; बाल. १।२५० पृ. ५७६ श्राकौवत् ; नन्द. विश्ववत्, अग्रिमश्लोकव्याख्यानावसरे ‘ स नाम ’ इत्यस्य स्थाने ‘ स्वनाम ’ इति पाठः ; भाच. विश्ववत् ; कृभ. १७६१ उत्त.

द्वयदानार्थम्। कथम्? 'म्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत्।' 'पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः।' सोऽपि पूर्वेषामेव निर्वपेदित्यन्वयः। पक्षद्वयेऽपि कथं निर्वपेदित्याह– 'पितुः स नाम संकीर्त्य कीर्तयेत् प्रपितामहम्।' इति। आद्यन्तग्रहणेन सर्वत्र पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इत्येवं प्रयोगः, न पुनः कदाचिदपि पितामहस्य प्रपितामहस्य वाऽऽदित्वं वृद्धप्रपितामहस्य तत्पितुर्वाऽन्तत्वम्। अतश्च पित्रादिशब्दानां संबन्धिवचनत्वात् म्रियमाणेऽपि पितरि पितुः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति। पितामहे म्रियमाणे पितामहस्य पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति। अतश्च पिण्डपितृयज्ञे 'शुन्धन्तां पितरः' इत्यादिमन्त्राणामूहो न भवति। मिता. १।२५३–२५४

(४) निवृत्तो मृतः। जीवेद्वाऽपीति वाशब्दश्चार्थे। कीर्तयेत्प्रपितामहं प्रपितामहनाम कीर्तयेत्। नामकीर्तनेन श्राद्धं प्रवर्तयेदित्युक्तं भवति। मवि.

(५) नामकीर्तनमत्र श्राद्धोपलक्षणार्थम्। पितृजीवनापेक्षोऽयं वाशब्दः। यस्य पुनः पिता मृतः स्यात् पितामहो जीवति स पितृप्रपितामहयोः श्राद्धं कुर्यात्। गोविन्दराजस्तु 'यस्य पितृप्रपितामहौ प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्' इति विष्णुवचनात् प्रपितामहतत्पितृभ्यां दद्यादिति व्याख्यातवान्। $ममु.

(६) पितुः स्वनाम संकीर्त्य अस्मत्पितुः पितामह इति स्वप्रपितामहनामापि पिण्डदानादिषु गृह्णीयादित्यर्थः। मपा. ५४२–५४३

(७) नाम संकीर्त्येति श्राद्धोपलक्षणार्थम्। प्रपितामहमिति वृद्धप्रपितामहस्याप्युपलक्षणम्। 'त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते। चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते॥' (मस्मृ. ९।१८६) इति मनूक्तेः। 'यस्य पिता प्रेतः स्यात्' इत्युदाहृतविष्णुवचनाच्च। श्राप्र. १६

$ मच., नन्द., भाच. ममुगतम्।

(८) 'जीवते पितामहाय न दद्यात्। किं तर्हि? ततः पूर्वाभ्यां पितुश्चेत्येवं त्रिभ्यो निपृणीयादिति स्मरन्ति' इति (मेधातिथिः)। गोविन्दराजोऽप्येवमाह, 'यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्' इति वचनादिति। कुल्लूकभट्टस्तु– 'नामकीर्तनमत्र श्राद्धोपलक्षणम्। यस्य पुनः पिता मृतः स्यात्, पितामहश्च जीवति, स पितृपितामहयोर्द्वयोरेव श्राद्धं कुर्यात्' इत्याह। सर्वज्ञनारायणकृता तु व्याख्याऽन्यथैव। यथा– "वृत्तो मृतः। 'जीवेद्वाऽपि' इति वाशब्दश्चार्थे। कीर्तयेत्प्रपितामहम्, प्रपितामहनामकीर्तनेन श्राद्धं प्रवर्तयेदित्युक्तं भवति" इति। विज्ञानेश्वरोऽप्यन्यथैवाऽऽह– "'पितुः स नाम संकीर्त्य' इति शब्दप्रयोगनियमाय, न पिण्डद्वयदानार्थम्। 'पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम्।' इत्याद्यन्तग्रहणात्सर्वत्र पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः इत्येव प्रयोगः, न पुनः कदाचिदपि पितामहस्य प्रपितामहस्य वाऽऽदित्वं वृद्धप्रपितामहस्य तत्पितुर्वाऽन्तत्वम्" इति। तदेतद्बहुनिबन्धासंमतमाचाराननुगतं च दृश्यत इति मेधातिथिप्रमुखव्याख्यैवाऽऽदरणीयेति। लता. २४७

**[१]पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः।**
**कामं वा समनुज्ञातः स्वयमेव समाचरेत्॥**

(१) अयमस्यार्थः– 'म्रियमाणे तु पितरि' इत्यादीतिकरणान्तमुक्तवान् मनुः, न त्वनुष्ठितवान्। काममेव तु तेनैव पितामहेन विदुषा शास्त्रार्थमालोच्यानुज्ञातो यद् युक्तं तत्स्वयमेव समाचरेदिति। तथा चाऽऽम्नायोऽप्युक्तमप्यननुष्ठितमकर्तव्यतयैव दर्शयति– 'तद्वै सन्तो मीमांसामेव चक्रे न तु चकार

(१) मस्मृ. ३।२२२; विश्व. १।२२५ (=) समनु (तदनु); श्राकौ. ५५४ कामं (कामात्) शेषं विश्ववत्; श्राप्र. १६ विश्ववत्; लता. १५ पू.; सिन्धु. १७६२ तच्छ्राद्धं (तच्छ्राद्धे) पू.; बाल. १।२५० पू. ५७४ विश्ववत्, उत्त.; नन्द. विश्ववत्; भाच. तच्छ्राद्धं (तच्छ्राद्धे) शेषं विश्ववत्.

तत्कृतमेव ' इति । अनुष्ठानकृतमेव प्रामाण्यं नाभिधानमात्रकृतमित्यभिप्रायः । विश्व. १।२२५

(२) यथा जीवन् पिता भोज्यते तद्वत् पितामहोऽपि । अनुज्ञां पितामहात्प्राप्य समाचरेत्स्वयम् । परतो द्वयोर्दद्यात्, प्रपितामहाय एकस्मा एव वा। एष ' कामम् ' ' स्वयम् ' इत्यनयोरर्थः । मेधा.

(३) पितामहविप्रस्थाने पितामहं वा भोजयेत् । पितृप्रपितामहयोः पिण्डदानं ब्राह्मणभोजनं च कुर्यात् । अथवा पित्रा पितामहेन वा जीवता अहं न भुञ्जे, यथेच्छमेव (कुर्विति) अनुज्ञातः स्वयमेव यथारुचि समाचरेत् । उक्तपक्षेभ्यः पक्षान्तरं यथा गृह्ये उक्तम् —' जीवत्पितृकस्यानारम्भः कर्माणीति होमान्तः (? जीवत्पितृकस्य होमान्तम् । अनारम्भ एव वा) ' (काश्रौ. ४।२५, २७)। ‡ गोरा.

(४) जीवत्पितुः पितृभोजनवत् । तच्छ्राद्धं पितामहश्राद्धार्थमन्नादि । कामं वेति । पितामहानुज्ञया स्वयं पौत्रः समाचरेत् त्रिपुरुषं श्राद्धमाचरेत् । तेन पितुः प्रपितामहवृद्धप्रपितामहयोश्च श्राद्धं कुर्यादिति लभ्यते । * मवि.

(५) यथा जीवत्पिता भोज्यस्तथा पितामहोऽपि पितामहब्राह्मणस्थाने भोज्यः । पितृप्रपितामहयोश्च ब्राह्मणभोजनं पिण्डदानं च कुर्यात् । अथवा जीवता पितामहेन त्वमेव यथारुचि कुर्विति दत्तानुज्ञः स्वरुच्या पितामहं वा भोजयेत्, पितृप्रपितामहयोर्वा श्राद्धद्वयं कुर्यादिति, विष्णुवचनात् पितृप्रपितामहवृद्धप्रपितामहानां श्राद्धत्रयं कुर्यात् । ममु.

(६) श्राद्धं श्राद्धार्हद्रव्यम्, श्राद्धकर्मणो भोजनासंभवात् । तेन जीवन्तं पितामहं श्राद्धार्हद्रव्यैरादौ भोजयित्वा पितुः प्रपितामहस्य च श्राद्धं कुर्यादित्यर्थः । श्राकौ. ५५४

(७) कामं वेति । तदनुज्ञातः तेन जीवता पित्रा पितामहेन वा । उपलक्षणमेतज्जीवमात्रस्य । कामम् अभिलषितं समाचरेत् । तदयमर्थः— यो जीवति तदाज्ञाग्रहणमेव तच्छ्राद्धस्थानीयम् । तथा च पितरि जीवति पितुराज्ञां गृहीत्वा पितामहप्रपितामहयोरेव श्राद्धं कुर्यात् । पितामहे जीवति पित्रे श्राद्धं दत्त्वा पितामहाज्ञां गृहीत्वा प्रपितामहायैव श्राद्धं दद्यादिति । एवमन्यत्र । एवं च जीवन्तमतिक्रम्य दद्यात्, जीवन्तं वा भोजयेत्, आज्ञां वा गृह्णीयात् इति पक्षत्रयं सिद्धम् । तत्र भोजनपक्षः कलौ निषिद्धः, ' प्रत्यक्षमर्चनं श्राद्धे निषिद्धं मनुरब्रवीत् ।' इति पृथ्वीचन्द्रोदये भविष्योक्तेः । चन्द्रिकायामप्येवम् । एवं जीवन्मातामहस्य, ' मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ।' इति जीवत्पितृकश्राद्धोक्तक्रमातिदेशकविष्णुवचनात् । श्राप्र. १६

(८) अथ पितामहे जीवति मृते च पितरि यद्यपि 'पितामहो ... मनुः ॥' इति मनुना जीवतः पितामहस्य भोजनमुक्तम्, तथाऽपि प्रत्यक्षार्चनस्य पूर्वं निषिद्धत्वात् पितामहं विहाय पितृप्रपितामहवृद्धप्रपितामहेभ्यो देयम्, ' पिता यस्य निवृत्तः स्याज्जीवेच्चापि पितामहः । पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम् ॥ ' इति मनूक्तेः । अयमेव सर्वसंमतः पक्षः । सिन्धु. १७६२

(९) पितुः पितामहस्य वा भोजनपक्षे द्वयोरेव पिण्डदानम्, पिण्डदानस्थाने भोजनविधानात् । ' पितुः स्वनाम संकीर्त्य कीर्तयेत्प्रपितामहम् । ' इत्यस्मिन्पक्षे तु प्रपितामहपित्रे पिण्डं दद्यात् । कुतः ? ' त्रिषु पिण्डः प्रवर्तते ' इति नियमात् । पक्षान्तरमुत्तरार्धेनोक्तम् । तदनुज्ञातः पितामहानुज्ञातः । युक्तसमाचरणं चात्र पितामहस्यापि पिण्डदानं समस्तपिण्डविलोपो वा । कुतः ? पक्षान्तरस्यासंभवात् । नन्द.

पित्रादित्रितयस्य जीवत्वे तत्परेषां देवतात्वम्

[1]दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्त्रितयं यदि ॥

प्राकृतजपस्थाने वैकृतजपविधिः

[2]मधुवाताजपस्थाने कुर्यात्तत्र प्रयत्नतः ।
उपास्मै गायतेत्यादि ऋचः पञ्च जपेत्तथा ॥

‡ भाच. गोरागतम् ।
* मच. मविवत् ।

(१) सिन्धु. १७६५.
(२) श्राका. ५१३ वाता (वाते) मनुकात्यायनौ; संग. ८२ मनुकात्यायनौ.

[१]मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् ।
गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः ॥
न चाश्नत्सु जपेदत्र कदाचित् पितृसंहिताम् ।
अन्य एव जपः कार्यः सोमसामादिकः शुभः ॥

पञ्चर्चो जपविधानमृक्शाखीयविषयम् ।

संग. ८२

कर्मादौ मातृपूजनपूर्वकनान्दीश्राद्धस्य कर्तव्यता

[२]नानिष्ट्वा तु पितॄञ्श्राद्धे वैदिकं किंचिदाचरेत् ।
तेभ्योऽपि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥

नान्दीमुखं विना वैदिककर्मानुष्ठाने निषेधमाह मनुः– 'नानिष्ट्वा ... ' इति । वैदिकम् आधानदर्शपूर्णमासादि । बाल. १।२५० पृ. ५६८

## वृद्धमनुः

मात्रादिश्राद्धत्रयस्य भिन्नदिनकरणासंभवे पूर्वेद्युः पूर्वाह्णे कर्तव्यता

[३]अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः ।
पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम् ॥

(१) एवंविधस्यापि कालभेदस्य ( ' पूर्वाह्णे मातृकं श्राद्धम् ' इति शातातपोक्तस्य ) असंभवे आह वृद्धमनुः– अलाभे इति । * चश्रा. १९२

(२) वृद्धिश्राद्धे च कालः– कर्माहात्पूर्वेद्युर्मातृपार्वणं कर्माहे पितृपार्वणं कर्मोत्तराहे मातामहपार्वणमिति । अस्यासंभवे पूर्वेद्युरेव पूर्वाह्णे मातृकं मध्याह्ने पैतृकमपराह्णे मातामहानाम् । अस्याप्यसंभवे आह वृद्धमनुः– अलाभ इति । इदं च महत्सु कर्मसु । अल्पेषु तु कर्माह एव श्राद्धम् । पुत्रजन्मनि तु दिने वा रात्रौ वा, भुक्तवतोपवासिना वा पुत्रजन्मानन्तरमेव कार्यम् । § गभा. ३२

(३) वाशब्देनात्र कर्माहपक्ष उक्तः । बाल. १।२५० पृ. ५६८

अनाहिताग्नित्वे उत्सन्नाग्नित्वे च नान्दीश्राद्धस्य सांकल्पिकत्वम्

[१]* यावत्तु नाग्निसंबन्ध उत्सन्नाग्निस्तथैव च ।
तावद्वृद्धिषु सर्वासु संकल्पश्राद्धमाचरेत् ॥

(१) संकल्पश्राद्धम् अपिण्डकम् । श्राका. ५१५

(२) अपिण्डकं वृद्धिश्राद्धमनग्निकविषयमिति केचित्, ' यावन्मन्त्राग्निसंबन्ध ... ' इति वृद्धमनूक्तेः । विपा. ३४ ( भागः २ )

## याज्ञवल्क्यः

नान्दीश्राद्धस्य वृद्धिनिमित्तकत्वम्

[२]अमावास्याऽष्टका वृद्धिः ... ... ... ... ... ।
... ... ... ... ... श्राद्धकालाः प्रकीर्तिताः ॥

---

* प्रपा., श्राप्र. चश्रावत् ।

(१) श्राका. ५१३ मनुकात्यायनौ.

(२) बाल. १।२५० पृ. ५३८ : ५७३ मानवशातातपौ, पू.

(३) चश्रा. १९२; चका. ४५९ त्रयं ( त्रये ); प्रपा. १५ भिन्न ( श्राद्ध ) द्युर्वै प्र ( द्युरेव ); श्राका. ५१२ बुधः ( बुधैः ) द्युर्वै प्रकुर्वीत ( द्युरेव कर्तव्यं ); गभा. ३२ प्रपावत्; प्रर. १३ प्रपावत्; श्राप्र. २९१; चम. १७९ अलाभे ( अभावे ); श्राम. ८९ मातृ ( पितृ ); संम. ६ वसिष्ठः; सिन्धु. १७३०; विपा. ३० ( भागः २ ) प्रपावत्; संकौ. २६; प्रका. ३२ द्युर्वै प्र ( द्युरेव ); बाल. १।२५० पृ. ५६८ द्युर्वै ( द्युर्वा ); संग. ८०; संव. ४१ (=); पुम. ३७८ बृहन्मनुः.

§ प्रर. गभानुवादः ।

* शोधितोऽयं पाठः ।

(१) श्राका. ५१५ (=) पूर्वार्धे ( यावत्सन्नाग्निसंबन्ध उत्पन्नाग्निस्तथैव च । ); विपा. ३४ ( भागः २ ) यावत्तु नाग्नि ( यावन्मन्त्राग्नि ) श्राद्ध ( मात्र ).

(२) यास्मृ. १।२१७–२१८; विश्व. १।२१४–२१५; मिता.; अप. १।२१७–२१८ अमावास्या ( अमावस्या ); स्मृच. ३३९; चश्रा. १६७–१६८; स्मृसा. ९७–९८; पमा. ६५५; वीमि.; श्राप्र. २८७; चम. १२२; लता. १८.

( १ ) वृद्धिः पुत्रजन्मादिः । *मिता.

( २ ) वृद्धिः विवाहादिः वैदिकः कर्मगणः पुत्रजन्मादिश्च । सा च निमित्तत्वादनुपादेयेति कालतुल्यत्वात् ' श्राद्धकालाः प्रकीर्तिताः ' इति कालशब्देन शक्या संग्रहीतुम् । ततश्च वृद्धिश्राद्धं नैमित्तिकत्वादावश्यकम् । अत एव वृद्धशातातपः— 'वृद्धौ न तर्पिता यैर्वै देवता गृहमेधिभिः । तद्दानमफलं सर्वमासुरो विधिरेव सः ॥ ' इति । अप. १।२१७–२१८ पृ. ४२२

( ३ ) वृद्धिर्नाम पुत्रजन्मादिनिमित्तोपलक्षितः कालः । पृ. १९०

सकलश्राद्धकालोद्देशस्थानीये याज्ञवल्क्यवचने वृद्धिशब्दस्याशेषनान्दीमुखश्राद्धकालोपलक्षणपरत्वात् कर्माङ्गश्राद्धकाला अपि संगृहीताः । तेनाऽऽह पारस्करः— ' निषेककाले सोमे च सीमन्तोन्नयने तथा । ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥ ' ।

$ चश्रा. १९२–१९३

नान्दीश्राद्धे ब्राह्मणसंख्या

**'युग्मान् दैवे यथाशक्ति ।**

( १ ) शक्तिश्चावैगुण्यलक्षणा द्रष्टव्या । विश्व.

( २ ) दैवे आभ्युदयिके श्राद्धे युग्मान् समान् ब्राह्मणानुपवेशयेत् । कथम् ? यथाशक्ति शक्तिमनतिक्रम्य । तत्र वैश्वदेवे द्वौ मात्रादीनां तिसृणामेकैकस्या द्वौ द्वौ तिसृणां वा द्वौ, एवं पित्रादीनामेकैकस्य द्वौ द्वौ त्रयाणां वा द्वौ । एवं मातामहादीनां च । वर्गत्रये वैश्वदेवं पृथक् तन्त्रं वा । मिता.

( ३ ) दैवे वैश्वदेविके । द्विचतुरादिसंख्याका युग्माः । † अप.

* स्मृच., स्मृसा., वीमि., लता. मितावत् ।

$ पमा., चम. चश्रागतम् ।

† वीमि. अपवत् ।

( १ ) यास्मृ. १।२२७ ; विश्व. १।२२४ युग्मान् दैवे ( दैवे युग्मान् ) ; मिता. ; अप. ; वीमि. विश्ववत्.

नान्दीश्राद्धेऽङ्गविकारविधिः

**'एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान्पितॄन् । यजेत दधिकर्कन्धूमिश्रान्पिण्डान्यवैः क्रियाः ॥**

( १ ) सर्वप्रकृतिभूतं श्राद्धमुपन्यस्य विकारोपदेशमिदानीमाह—एवमिति । यथा च श्राद्धमुक्तममावास्यादौ, एवमेव वृद्धावपि । अयं तु विशेषः— आदित एव प्रदक्षिणं कृत्वा सर्वं श्राद्धं कुर्यात् । प्रदक्षिणवचनं चापसव्यादिनिवृत्त्यर्थमपि । कुत एतत् ? यत आह— यजन्तीति । अस्यायमर्थः— देवतात्वेनात्र पितरो न संप्रदानत्वेन । ततश्च पितॄणामपि देवतात्वात् तद्धर्मा एव यज्ञोपवीतादयः प्रवर्तन्ते, न पितृधर्माः प्राचीनावीतादयः । तथा च व्यासः— ' पितॄणां रूपमास्थाय देवा अन्नमदन्ति हि । ' इति । अयं विशेषः— पितॄनावाहयिष्य इत्येवमादिषु नान्दीमुखशब्दः प्रयोक्तव्यः । पिण्डदानं तु नामगोत्रेणैव । दधिकर्कन्धूमिश्राश्च पिण्डाः कार्याः । कर्कन्धूर्बदरम् । मिश्रवचनाचान्नेनैव पिण्डाः । यवैस्तिलार्थाः कार्याः । देवत्वादेव यवप्राप्तौ तद्वचनाद्वैश्वदेवेऽपि तिलप्राप्तिरस्तीति ज्ञापयति । ततश्च प्रकृतौ वैश्वदेविके वैकल्पिकास्तिला इत्यवसेयम् । देवत्वादेव च स्वधावचननिवृत्तिः । प्रयोगस्तु प्रपञ्चनीयः । ननु च पूर्वं श्राद्धमपि वृद्धावुपदिष्टम् ' अमावास्याऽष्टका वृद्धिः ' इति । सत्यम् । वृद्धौ तु निमित्ते पूर्वं तु यच्छ्राद्धमाभ्युदयिकाख्यम् , तस्यायं विधिः , यथा समावर्तनाद्यारम्भे ।

( १ ) यास्मृ. १।२५० ; विश्व. १।२४६ णावृत्को ( णं कृत्वा ) यजेत ( यजन्ति ) मिश्रान् पिण्डान् ( मिश्राः पिण्डाः ) ; मिता. ; अप. १।२४९ णावृत्को ( णं कृत्वा ) न्धूमिश्रान्पिण्डान् ( न्धुमिश्राः पिण्डाः ) ; स्मृच. ४४३ ( दधिकर्कन्धूमिश्रान् पिण्डान् यवैः क्रियाः० ) ; चश्रा. १०५ अपवत् : १४४ णावृत्को ( णीकृत्य ) शेषं स्मृचवत् ; पमा. ७८२ णावृत्को ( णावृत्तो ) न्धूमिश्रान् पिण्डान् ( न्धुमिश्राः पिण्डाः ) ; प्रपा. १६ स्मृचवत् ; वीमि. ; श्राप्र. २९६ स्मृचवत् : ३०५ कर्कन्धू ( कर्कन्धु ) ; चम. १७८ ; मुक्ता. ७५५ कर्कन्धू ( कर्कन्धु ).

यत्तूत्पन्नायां वृद्धौ पुत्रजन्मादिलक्षणायाम्, तत् पूर्ववदेवेति व्यवस्था। यद्वा निमित्तमात्रतयैव तत्र वृद्धयुपादानम्, इह तु प्रकारोपदेश इति व्याख्येयम्। विश्व.

(२) एवं पार्वणश्राद्धमुक्त्वेदानीं वृद्धिश्राद्धमाह— एवमिति। वृद्धौ पुत्रजन्मादिनिमित्ते श्राद्धे एवम् उक्तेन प्रकारेण पितॄन् यजेत पूजयेत्। तत्र विशेषमाह— प्रदक्षिणावृत्क इति। प्रदक्षिणा आवृत् अनुष्ठानपद्धतिर्यस्यासौ प्रदक्षिणावृत्कः, प्रदक्षिणप्रचार इति यावत्। नान्दीमुखानिति पितॄणां विशेषणम्। अतश्चाऽऽवाहनादौ 'नान्दीमुखान्पितॄनावाहयिष्ये' 'नान्दीमुखान्पितामहान्' इत्यादिप्रयोगो द्रष्टव्यः। कथं यजेतेत्याह— दधिकर्कन्धूमिश्रान्। कर्कन्धूर्बदरीफलम्। दध्ना बदरीफलैश्च मिश्रान्पिण्डान्दत्वा यजेतेति संबध्यते। तिलसाध्याः सर्वाः क्रिया यवैः कर्तव्याः। अत्र च ब्राह्मणसंख्या दर्शितैव 'युग्मान्दैवे यथाशक्ति' (१।२२७) इत्यत्र। प्रदक्षिणावृत्कत्वादिपरिगणनमन्येषामपि स्मृत्यन्तरोक्तानां विशेषधर्माणां प्रदर्शनार्थम्। यथाऽऽहाऽऽश्वलायनः— 'अथाऽऽभ्युदयिके युग्मा ब्राह्मणाः ... भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्' (आगृप. २।१९) इत्यादि। यद्यपि पितॄन्यजेतेति सामान्येनोक्तम्, तथापि श्राद्धत्रयं क्रमश्च स्मृत्यन्तरादवगन्तव्यः। यथाऽऽह शातातपः— 'मातुः श्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम्। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥' इति।

$ मिता.

(३) प्रदक्षिणं कृत्वा प्रदक्षिणं कुर्वन्नित्यर्थः। अत्र पौर्वापर्यमविवक्षितम्। संमील्य हसतीतिवत्।

* अप. पृ. ५१४

(४) सर्वश्राद्धप्रकृतित्वेन प्रथमं पार्वणमभिधाय तद्विकृतिभूतेष्वाभ्युदयिकैकोद्दिष्टसपिण्डीकरणेषु विशेषानाह पञ्चभिः— एवमिति। एवं पार्वणरीत्या वृद्धौ पुत्रजन्मकन्याविवाहादौ। अत्र तु विशेषः— प्रदक्षिणा आवृत् अनुक्रमो यस्य स यजमानः। तेनाप्रदक्षिणत्वस्य पार्वणोक्तस्य बाधः। एतच्च सकलपित्र्यधर्मनिषेधोपलक्षणम्। नान्दीमुखानित्यनेन नान्दीमुखत्वविशिष्टानां पित्रादीनां देवतात्वमुक्तम्, तेन 'नान्दीमुख पितः' इत्यादिप्रयोगः सिध्यति। दधि प्रसिद्धम्, कर्कन्धूर्बदरीफलम्, ताभ्यां मिश्रान्पिण्डान्प्रकृतश्राद्धद्रव्यनिर्मितान् कुर्यात्। पिण्डरहितमप्याभ्युदयिकश्राद्धमाधुनिकशिष्टा आचरन्ति। तस्मिंस्तु पक्षे 'अग्नौकरणमर्घ्यं चाऽऽवाहनं चावनेजनम्। पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्जयेत्॥' इति वचनादग्नौकरणादिबाधः। यवैश्च तिलसाध्याः सर्वाः (क्रियाः) कार्याः, 'यवैस्तिलार्थः' इति कात्यायनोक्तेः। पितृशब्देन चात्र मात्रादित्रिकमप्युपलक्ष्यते। 'मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम्। ततो मातामहादीनां वृद्धौ श्राद्धत्रयं स्मृतम्॥' इति शातातपवचनात्। मातॄणां श्राद्धं मातृश्राद्धम्। अत्र चान्ये स्वधापदस्थाने स्वाहापदप्रयोगाद्या विशेषाः स्मृत्यन्तरेभ्योऽवगन्तव्याः। वीमि.

$ पमा., दीक., श्राप्र., चम., मितागतम्।

* शेषं विश्वगतम्।

## वृद्धयाज्ञवल्क्यः

नान्दीश्राद्धस्याऽऽमेन पाकेन वा कर्तव्यता

**'आमश्राद्धं प्रकर्तव्यं वृद्धौ नान्दीमुखे सदा।**
**पाकेन वा बहिःशाले सोदनं बदरं दधि॥**

अत्र यथाकुलं यथासंभवं वा विकल्पः।

श्राका. ५१४

## बृहस्पतिः

नान्दीश्राद्धे विश्वदेवसंज्ञाविधिः

**'इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः॥**

(१) इष्टिश्राद्धं इच्छाश्राद्धम्। श्राक. १४२

(२) इष्टिश्राद्धं कर्माङ्गश्राद्धं 'नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत्।' इति वचनेनोक्तं 'कर्माङ्गं नवमे प्रोक्तम्' इति चोक्तम्। स्मृसा. १०१

(१) श्राका. ५१४ याज्ञवल्क्यः; विपा. ३४ (भागः २) प्रकर्तव्यं (पिण्डवर्जे) पू.

(२) अप. १।२२९ ; श्राक. १४२ ; चश्रा. १४३ ; स्मृसा. १०१ ; श्राप्र. २३ : २६ (सत्यो नान्दीमुखे वसुः०).

( ३ ) इष्टिश्राद्धं 'कर्माङ्गं नवमे प्रोक्तम्' इत्यनेन विश्वामित्रेणोक्तम्। तच्च 'निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ॥' इत्यादिना भविष्यपुराणादिवाक्येन विवृतम्। नान्दीमुखं तु वृद्धिश्राद्धम्। तच्च 'वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते।' इति भविष्यपुराणेनोक्तम्। वृद्धिः पुत्रजन्मादि। कल्पतरुकारादयस्तु– इष्टिश्राद्धमिच्छाश्राद्धम्, तच्च 'श्राद्धं प्रति रुचिश्चैव' इत्यनेन याज्ञवल्क्येन विहितमिति व्याख्यातवन्तः। तन्मते च कर्माङ्गश्राद्धस्य नान्दीमुखश्राद्धेऽन्तर्भावाद्वसुसत्यावेव तत्र देवौ।

श्राप्र. २३–२४

रजस्वलापतेर्नान्दीश्राद्धानधिकारः

**[१]प्राप्तमभ्युदयश्राद्धं पुत्रसंस्कारकर्मणि।
पत्नी रजस्वला चेत्स्यान्न कुर्यात्तत्पिता तदा ॥**

मातरि रजस्वलायां तु विशेषः। बृहस्पतिः– प्राप्तमिति। पितेति कर्तृमात्रोपलक्षणम्। † गभा. १९०

## कात्यायनः

नान्दीश्राद्धस्य मातृकापूजनाद्युत्तरमारम्भः षड्देवत्यत्वं च

***[२]अनिष्ट्वा तु पितॄञ्श्राद्धे न कुर्यात्कर्म वैदिकम्।
तत्रापि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥
[१]षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥**

( १ ) षड्भ्यः पित्रादिभ्यः मातामहादिभ्यश्च त्रिभ्यः। षड्भ्य इति च मातृपितामहीप्रपितामहीनामुपलक्षणम्।

श्राक. २७२–२७३

( २ ) षड्भ्य इति पुंवर्गद्वयविवक्षया, मातृश्राद्धस्य 'संपूज्या मातरः पूर्वम्' इति स्मृत्यन्तरे विहितत्वात्।

पृ. १०३

तदनु मातृपूजाद्युत्तरकालम्। चश्रा. १५४२

( ३ ) मातृपूजावसुधारायुष्यजपेभ्योऽनन्तरं पित्रादिभ्यः ( त्रिभ्यः ) मातामहादिभ्यश्च त्रिभ्यः श्राद्धदानमारभेत। एतच्च वृद्धिश्राद्धं वैदिककर्मस्वादौ कर्तव्यम्, तदङ्गं च। तथा च शातातपः– 'नानिष्ट्वा तु पितॄञ्श्राद्धे कर्म वैदिकमारभेत्।'। भविष्यपुराणं च– 'निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ॥'। एतच्च वैदिककर्ममात्रोपलक्षणम्, 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायस्याविशेषात्। लौकिके तु कर्मणि न वैदिकस्य श्राद्धस्याङ्गता, किंतु तत् श्राद्धस्य निमित्तमात्रम्। निमित्तानन्तरं च नैमित्तिकम्। अतः पुत्रजन्माद्युत्तरकालमेव सूर्यग्रहादिनिमित्तकश्राद्धवत् वृद्धितत्वात्। एतत्समानार्थकशातातपवचनं तु निबन्धकारैर्मतभेदेन श्राद्धविषयं मातृकापूजनविषयं च व्याख्यातम्। अस्मिन्प्रकरणे मातृकापूजनप्रकरणे च 'नानिष्ट्वा तु' इति शातातपवचनव्याख्यानं द्रष्टव्यम्।

---

† सिन्धु., विपा. गभानुवादः।

* अयं श्लोकः प्रकाश–प्रभायुत–कर्मप्रदीपे नास्ति। अपि अत्र 'तत्रापि मातरः' इति न मातृश्राद्धविषयम्, कातीयानां छन्दोगानां च वृद्धौ तु मातृकापूजनविषयम्, प्रकाशश्राद्धतत्त्वादिभिः साटोपं व्यवस्थापि मातृश्राद्धाभावस्य प्रकाशश्राद्धतत्त्वादिभिः साटोपं व्यवस्थापि-

( १ ) गभा. १९० ; सिन्धु. ९२० ; विपा. ४८० : ( १ ) बाल. १।१२ पृ. ४ ( भागः २ ) संग्रहे इत्युक्तम् ; बाल. १।१२ पृ. ३२ (=).

( २ ) कास्मृ. १।१६ ; विश्व. १।२२५ (=) पू. ; मुक्ता. ७५५ ( नानिष्ट्वा तु पितॄञ्छ्राद्धे कर्म वैदिकमाचरेत्। ) पू. ; कृभ. १७२७ पू.

( १ ) कास्मृ. १।१७ श्राद्धदानमु ( भक्त्या दानमु ) ; श्राक. २७२ ; स्मृच. ५०३ (=) ; चश्रा. १०६, १५४१ चतुर्विंशतिमते ; स्मृसा. ४२ निर्देशमात्रम् : १०२, १०७ ; प्रपा. १४ ; द्वैनि. ७१ ; श्राकौ. ४९३, ४९५ परिशिष्टम् : ५०२ ; श्रात. ३०९ ; उत. १३६ ; श्रासौ. ११९, १२२ उत्त. : १२६ निर्देशमात्रम् ; श्राप्र. २९५ ; मुक्ता. ७५३ ; श्राम. ८८ ; शाम. ३ ; संम. ४ ; सिन्धु. १७३४ ; विपा. २९ ( भागः २ ) ; श्रान. १४४ ; संग. ८१ ; संदी. ५९.

श्राद्धमिति स्थितम् । अत एव मार्कण्डेयपुराणम् — ‘ नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम् । पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैः ॥ ’ । एतदपि पुत्रमुखदर्शनाद्युपलक्षणार्थम् , अनुपादेयत्वाप्रधानत्वयोरविशेषात् । एतेन ‘ सर्वाण्येवान्वाहार्यवन्ति ’ इति सूत्रोक्तमन्वाहार्यपदं मातृपूजादिभ्योऽन्वाह्रियमाणत्वात् वृद्धिश्राद्धपरमिति स्पष्टीकृतम् । अत एव ‘ यच्छ्राद्धं कर्मणामादौ या चान्ते दक्षिणा भवेत् । अमावास्यां द्वितीयं यदन्वाहार्यं तदुच्यते ॥ ’ इति गृह्यान्तरम् । पिण्डपितृयज्ञरूपश्राद्धाद् द्वितीयं श्राद्धमित्यर्थः । तथा च गोभिलः— ‘ अन्वष्टक्यस्थालीपाकेन पिण्डपितृयज्ञो व्याख्यातः । अमावास्यायां तच्छ्राद्धमितरदन्वाहार्यं मासीनम् ’ । वृद्धिश्राद्धे च पितॄणां नान्दीमुखविशेषणविशिष्टानां देवतात्वम् । तथा विष्णुपुराणम्— ‘ कन्यापुत्रविवाहे च प्रवेशे नववेश्मनः । नामकर्मणि बालानां चूडाकर्मादिके तथा ॥ सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने । नान्दीमुखं पितृगणमर्चयेत्प्रयतो गृही ॥ ’ । ब्रह्मपुराणम्— ‘ कर्मण्यथाऽऽभ्युदयिके मङ्गल्यवति शोभने । जन्मन्यथोपनयने विवाहे पुत्रकस्य च । पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ॥ ’ । गोभिलेनापि— ‘ नान्दीमुखाः पितरः प्रीयन्तामिति दैवे वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यश्च प्रीयन्ताम् ’ इत्युक्तम् । यद्यपि ‘ पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ॥ तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिताः । ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥ ’, तथा— ‘ ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्विति । प्रसन्नमुखसंज्ञास्तु मङ्गलीया यतस्तु ते ॥ ’ इति ब्रह्मपुराणवचनात् प्रसन्नमुखतारूपं नान्दीमुखत्वं प्रपितामहपित्रादीनां त्रयाणामेव, ‘ ये स्युः पितामहादूर्ध्वम् ’ इत्यत्रापि पितामहपदं प्रपितामहपरम् , ‘ तेभ्यः पूर्वतरा ये च ’ इत्येतद्दर्शनात् , ततश्च तेषामेव वृद्धिश्राद्धे देवतात्वं युक्तम् , तथापि ‘ षड्भ्यः पितृभ्यः ’ इति यजमानपितॄणामेव प्रतीतेर्देवतात्वं युक्तम् । तथा च ‘ स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु । ’ इति स्पष्टमेवोक्तम् , स्वपदस्य प्रपितामहपित्रादिव्यावर्तकतयैव सार्थकत्वात् । तथा ‘ नान्दीमुखाः पितरः प्रीयन्तामिति पितामहाः प्रपितामहा मातामहाश्च प्रीयन्ताम् ’ इति कात्यायनवचने, ‘ नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च प्रीयन्ताम् ’ इति गोभिलसूत्रे च यजमानस्यैव पित्रादयः संबन्धिशब्दत्वात् मातामहसमभिव्याहाराच्च गम्यन्ते । नान्दीमुखता च तेषामेवाऽऽरोपात् माणवकस्येवाग्नित्वम् । मङ्गल्ये च विवाहपुत्रजन्मादौ अश्रुमुखानाममाङ्गलिकानां श्राद्धसंनिधौ आरोपादपि माङ्गलिकनान्दीमुखशब्देन निर्देशो युक्तः । अत एवामाङ्गलिककपालादिशब्दवाच्ये आरोपादपि अमङ्गलपरिहाराय भगालादिशब्दं श्रीकामज्ञानादिवाचकभगपदयुक्तं मुनयः प्रयुञ्जते । एवमायुष्यमन्त्रजपोऽपि शान्त्यर्थमुपपन्नो भविष्यति । अत एव— ‘ पठेच्छन्दांसि सूक्तं तु स्वस्तिसूक्तं शुभं तथा । ’ इति ब्रह्मपुराणेऽपि स्वस्त्ययनार्थं सूक्तजपोपदेश एवमुपपन्नो भविष्यति । क्वचित्सत्यस्य च क्वचिदारोपात् आरोपार्थमेव वास्तवं नान्दीमुखत्वं ब्रह्मपुराणे दर्शितम् ।

केचित्तु शाखाविशेषव्यवस्थितो ब्रह्मपुराणीयः पक्ष इत्याहुः । जीवत्पित्रादित्रयव्यवस्थित इत्यपरे । तदयुक्तम् , ‘ स्वपितृभ्यः पिता दद्यात् ’ इत्यस्मिन्वचने पित्रभाव एव सुतस्य वृद्धिश्राद्धविधानात् , ‘ त्रिषु जीवत्सु नैव ’ इति विष्णुना पार्वणश्राद्धनिषेधात् , तद्विकृतित्वाच्च वृद्धिश्राद्धस्येति । यत एव आरोपितं नान्दीमुखत्वम् , अत एव ‘ मातामहेभ्यश्च तथा नान्दीवक्त्रेभ्य एव च । ’ इति ब्रह्मपुराणे मातामहानामपि नान्दीमुखत्वमुक्तम् । तथा कात्यायनेन ‘ नान्दीमुखाः पितरः प्रीयन्ताम् ’ इत्यादिना, गोभिलेन च ‘ नान्दीमुखेभ्यः पितृभ्यः ’ इत्यादिना मातामहानामपि नान्दीमुखत्वमुक्तम् ।

(४) तदन्विति क्रमविधानार्थम्। षड्भ्य इति मातृश्राद्धनिषेधार्थम्, अन्यथा वैयर्थ्यादिति प्रागुक्तम्। जीवन्मात्रादित्रिकविषयमिति श्रीदत्तः। तच्चिन्त्यम्, 'न योषिद्भ्यः' इति सामान्येन छन्दोगविषये निषेधात्।

श्राकौ. ५०५-५०६

(५) षड्भ्य इति छन्दोगानां 'मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम्। ततो मातामहानां च वृद्धौ श्राद्धत्रयं भवेत्॥' इति शातातपोक्तमातृश्राद्धव्युदासार्थम्। अत एव तत्रैव छन्दोगपरिशिष्टे षण्णामेव पिण्डेतिकर्तव्यता वक्ष्यते। गोभिलसूत्रेऽपि पित्रादिवृद्धप्रमातामहान्तानामुल्लेखः कृतः, न मात्रादीनाम्। 'न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते। स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता॥' इति छन्दोगपरिशिष्टेन वृद्ध्यादौ योषिच्छ्राद्धं छन्दोगानां पर्युदस्तं च। न च- अवसानदिनेतरत्र योषिद्भ्योऽपृथग्दद्यात्। यतः स्वभर्तृपिण्डांशेभ्य उभयोद्देश्यकदत्तेभ्य एव योषितां तृप्तिः, पुरुषाणां योषिज्जीवनादौ पृथक्पिण्डादपि तृप्तिसत्त्वात् योषित्पदमपि सार्थकमिति वाच्यम्, तथात्वे 'अवसानदिनादृते' इति व्यर्थं स्यात्। तथाहि- परिप्राप्ते योषितां श्राद्धेऽपृथक्त्वं विधीयते, किंवाऽपृथक्श्राद्धवैशिष्ट्यं विधीयते? नाऽऽद्यः, अमावास्यादौ योषिद्दानाप्राप्तौ कथं तदनूद्यापृथक्त्वमात्रविधानम्? नच- 'अमावास्यायां पितृभ्यो दद्यात्' इत्यत्र 'प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।' इति विष्णुपुराणीयेऽपि (? येन *) योषितामपि पितृत्वात् श्राद्धप्राप्तिरिति वाच्यम्, 'पितृभ्यो दद्यात्' इत्यत्र पितृपदं न प्राप्तपितृलोकमात्रपरम्, किंतु पितृपितामहप्रपितामहमात्रपरम्, 'असावेतत्ते इति यजमानस्य पित्रे, असावेतत्ते इति यजमानस्य पितामहाय, असावेतत्ते इति यजमानस्य प्रपितामहाय' इति श्रुत्याद्येकवाक्यत्वात्, 'त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते। चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते॥' इत्यत्र त्रयाणामित्यनेन पितृपितामहप्रपितामहानां पत्नीनिरपेक्षाणां तर्पणवत् देवतात्वावगमाच्च। मातामहादिलाभस्तु 'पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्। अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत्॥' इति वृद्धयाज्ञवल्क्यवचनात्। मातामहा इति तदादित्रिकपरम्, 'इत्यादिबहुवचनान्ता गणस्य संसूचकाः' इत्युक्तेः, श्राद्धेतिकर्तव्यतायां मातामहादित्रिकोपादानाच्च। नान्त्यः, तथा हि 'अवसानदिनादृते' इति व्यर्थं स्यात्, अवसानदिने तु 'ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा।' इति छन्दोगपरिशिष्टीयेन स्त्रीपुंसयोः साधारणत्वेन श्राद्धप्राप्त्या 'स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम्। मृताहनि यथान्यायं नृणां यद्वदिहोदितम्॥' इति मार्कण्डेयपुराणीयेन विशेषतः श्राद्धप्राप्त्या च विशिष्टविधित्वानुपपत्तेः। [§ न च- एवं परशाखिकाविरोधि सर्वकर्मानुष्ठानप्रसक्तिरिति वाच्यम्, 'अविरोधि च' इति चकारेण आकाङ्क्षितस्यैव लाभात्। अत एवानाकाङ्क्षिते गृह्यपरिशिष्टम्- 'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्॥' इति।] तस्मात् 'अवसानदिनादृते' इति वाक्यस्य सार्थकत्वाय पृथक्पदमत्रानुवादः। नच वैपरीत्यम्, तथात्वे वाक्यानुवादः स्यात्। अव्ययपदानुवादे तु विभक्तेर्नानुवादकतेति। एवमेव ईशानन्यायाचार्याः। तस्मात् 'श्राद्धं सपिण्डकं कुर्यात् स्वसूत्रोक्तविधानतः। अन्वष्टकासु वृद्धौ च गयायां च क्षयाहनि॥ मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह। वृद्धिश्राद्धे तु मात्रादि गयायां पितृपूर्वकम्॥' इति तीर्थचिन्तामणिधृतवायुपुराणीयेन वृद्ध्यन्वष्टकावसानदिनगयानिमित्तकश्राद्धकरणेषु छन्दोगेतरोऽवसानदिनेतरत्र वृद्ध्यादौ योषिद्भ्यः पृथक् श्राद्धायान्नं दद्यात्। अवसानदिने तु छन्दोगाच्छन्दोगोभयो योषिद्भ्यो दद्यादित्यर्थात्सिद्धम्। ततश्च

* कंसस्थितः उद्धाहतत्त्वे पाठः, स एव श्रेयान्।

§ चतुरस्रकंसस्थितोऽयं ग्रन्थः 'यन्नाऽऽम्नातं स्वशाखायां परोक्तमविरोधि च।' इति छन्दोगपरिशिष्टवचनं गोचरयन्नत्र चासंगच्छमानोऽत्र प्रमादपतित इति भाति।

वृद्ध्यादौ छन्दोगयोषितां कथं तृप्तिरित्याकाङ्क्षामुत्थाप्य उत्तरार्धेनान्वयः इति । एतदर्थमेव 'स्वसूत्रोक्तविधानतः' इत्युक्तम् । सूत्रेति स्वगृह्यशास्त्रपरम् । अन्यत्र अमावास्यादौ पतिना सह श्राद्धं भोग्यं कुर्यादित्येवार्थः, 'असावेतत्त इति यजमानस्य पित्रे' इति प्रागुक्तश्रुत्या श्राद्धे पत्नीनिरपेक्षण( ? निरपेक्ष )पित्रादित्रिकबोधिकया, 'सपिण्डीकरणादूर्ध्वं यत् पितृभ्यः प्रदीयते । सर्वेष्वंशहरा माता इति धर्मेषु निश्चयः ॥' इति स्मृत्या भर्तृदत्तांशभागित्वबोधिकया चैकवाक्यत्वात् । एतेन षड्भ्य इति जीवन्मातृकविषयमिति हलायुधोक्तं निरस्तम् । जीवन्मातृकेण छन्दोगेतरेण पितामह्यादीनां श्राद्धं क्रियते, 'जीवन्तमतिदद्याद्वा प्रेतायान्नोदके द्विजः ।' इति छन्दोगपरिशिष्टात् । जीवन्तमित्यत्र निमित्तविशेषणत्वेन पुंस्त्वमविवक्षितम् । अत एव लघुहारीतेनाप्युक्तं सपिण्डीकरणे– 'स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः । एकत्वं सा गता यस्माच्चरुमन्त्राहुतिव्रतैः ॥ तस्मिन् सति सुताः कुर्युः पितामह्या सहैव तु । तस्यां चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः ॥' इति । तदनु आयुष्यजपानन्तरम् । श्राद्धदानं श्राद्धीयद्रव्यदानम् । श्रात. ३११–३१४

( ६ ) षड्भ्य इति गोभिलीयान् प्रति, तत्सूत्रे पार्वणद्वयाम्नानादिति नारायणवृत्तिकृत् । कातीयानामप्येवमिति केचित् । श्राम. ८८

( ७ ) षडभ्य इति कातीयच्छन्दोगपरम् । अन्येषां तु नवदैवत्यम्, 'महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च । नवदैवतमत्रेष्टं शेषं षाट्पौरुषं विदुः ॥' इति हेमाद्रौ वचनादिति तातचरणाः । मम तु प्रतिभाति– 'महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च । ज्ञेयं द्वादशदैवत्यं तीर्थे प्रोष्ठपदासु च ॥' इति द्वादशदैवत्यविधानात्पक्षत्रयमपि यथासंप्रदायं व्यवतिष्ठते इति । ¶ संम. ४

¶ श्राम. संमगतम् ।

( ८ ) षड्भ्य इति मात्रादित्रिकोपलक्षणमिति पृथ्वीचन्द्रोदयः । छन्दोगानां षड्दैवत्यमन्येषां नवदैवत्यमित्याशार्कः । मम तु मतम्– कोकिलमतानुसारिणां मातृमातामहप्रमातामहा इति मात्रा सहैव मातामहश्राद्धकरणात् तद्विषयमिदं षड्भ्य इति ।

सिन्धु. १७३५–१७३६

[ षड्भ्य इति । तथा च नवदैवत्यमेव तेनोक्तं भवति । परन्तु लक्षणां विनैव षट्त्वस्य छन्दोगादिपरत्वसंभवादुक्तव्याख्यावैयर्थ्यमरुचिः । छन्दोगानामिति । गोभिलसूत्रे पार्वणद्वयाम्नानात् । कातीयानामप्येवमिति केचित् । अन्येषामिति । 'महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च । नवदैवतमत्रेष्टम्' इति वचनात् । अत्र 'महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च । ज्ञेयं द्वादशदैवत्यं तीर्थे प्रोष्ठे मघासु च ॥' इति वचनाद्यथासंप्रदायं पक्षत्रयमिति मयूखः । तद्वक्ष्यति– अत्र द्वादशदैवत्यस्येति । मम त्विति । एकेनैव पार्वणेन मातृमातामहयोश्चारितार्थ्यान्न षट्त्वानुपपत्तिरिति भावः । कृभ. ]

( ९ ) षड्भ्यः पितृभ्य इति । तेषां ( कातीयानां ) सूत्रे 'नान्दीश्राद्धस्य षडेव' इत्यभिधानादविरुद्धम्, 'बह्वल्पं वा स्वगृह्योक्तम्' इति वचनानुग्रहाच्च । प्रयोगपारिजातकृता तु 'षड्भ्यः श्राद्धमुपक्रमेत्' इति एवं व्याख्यातम्– त्रिभ्यः पित्रादिभ्यः त्रिभ्यो मातामहादिभ्यो मातृश्राद्धपूर्वकं श्राद्धमुपक्रमेत्, 'उत्सवानन्दसंताने यज्ञोद्वाहादिमङ्गले । मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् । ततो मातामहाः पूज्या विश्वेदेवास्तथैव च ॥' इति हेमाद्रौ मत्स्यपुराणवचनात् । तदेतदाश्वलायनशाखादिविषयत्वेन नेतुं शक्यते, 'माता पितामही चैव संपूज्या प्रपितामही । पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः । एते नवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः ॥' इत्याश्वलायनस्मरणात् ।

विपा. २९ ( भागः २ )

( १० ) यत्तु कैश्चिदुक्तम्– 'षड्भ्यः पितृभ्यः' इति वाक्यं कोकिलविषयमिति, तन्न, यतश्छन्दोगपरिशिष्ट एव 'षड्भ्यः पितृभ्यः' इति वाक्यमधि पित्रा-

दीनामवनेजनमुक्त्वा 'मातामहप्रभर्तीस्तु एतेषामेव वामतः ।' इत्यादिना मातामहादीनामवनेजनं कात्यायनो ब्रूते । न चैवं कोकिलमते संभवति, मातृमातामहप्रमातामहानां त्रयाणामुद्देशेनैव द्वितीयपार्वणस्य सर्वत्र तन्मते विहितत्वात् । तस्मान्न 'षड्भ्यः पितृभ्यः' इति वचनं कोकिलविषयमिति । अतश्च कात्यायनसूत्रानुसारिणां वाजसनेयिनां वासिष्ठसूत्रानुसारिणां छन्दोगानां च षड्दैवत्यमेवाऽऽभ्युदयिकश्राद्धं भवतीति सिद्धम् ।

संग. ८१

(११) अत्र नवदैवत्यं श्राद्धं बहुषु स्मृतिषूपलभ्यते । कात्यायनश्राद्धकल्पे स्वधावाचने षण्णामेवोल्लेखात् मातॄणामनुल्लेखात् कातीयानां षड्दैवतमेवेति केचित् । अत एव 'षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ।' इति छन्दोगपरिशिष्टं संगच्छते । अन्ये तु– पूर्वोक्तं वचनं कोकिलमताभिप्रायेण, तेषां मातृमातामहपार्वणयोः पृथगभावात् । अन्येषां नवदैवतमेव, बहुषु स्मृतिषु तथैवोपलम्भादित्याहुः । कात्यायनानां सूत्रे परिशिष्टे च तथोपलम्भात् तेषां गोभिलीयानां च षड्दैवतम्, अन्येषां नवदैवतम् । छन्दोगपरिशिष्टवचनस्य कोकिलमतानुसार्यभिप्रायकत्वे स्वधावाचनसूत्रे 'मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यः' इत्युल्लेखो नोपपद्यते, तेषां मते वृद्धप्रमातामहस्य श्राद्धदेवतात्वाभावात् इति संस्कारगणपतौ । तत्परिशिष्टस्य कात्यायनकृतत्वेऽपि छन्दोगानुद्दिश्यैव करणात् छन्दोगानां षड्दैवतमन्येषां नवदैवतमेवेति स्वारसिकोऽर्थः । षड्भ्य इति वचनं मात्रादेरप्युपलक्षणमिति कल्पतरुः । जीवन्मात्रादित्रिकपरमिति श्राद्धकल्पः । वस्तुतस्तु– 'षड्भ्यः पितृभ्यः' इत्यस्य शातातपादिवचनैकवाक्यतालाघवात् आनन्तर्यमात्रविधायकत्वात् न संख्यायां तात्पर्यमिति न कोऽपि विरोधशङ्कावकाशः इति निष्कण्टकः पन्थाः ।

संदी. ५९–६०

## नान्दीश्राद्धे प्राकृताङ्गातिदेशः वैकृताङ्गविशेषविधिः प्रयोगश्च

**'वसिष्ठोक्तो विधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः ।**
**अतः परं प्रवक्ष्यामि विशेष इह यो भवेत् ॥**

(१) वसिष्ठोक्तो विधिः वसिष्ठादिस्मृतिकारोक्तविधिः ।

स्मृच. ५०३

(२) आमिषं मांसम्, तद्वर्जितः ।

* चश्रा. १५४२

(३) कया परिपाट्या श्राद्धं कर्तव्यमित्याह– वसिष्ठोक्त इति । वसिष्ठेन छान्दोग्यगृह्यपरिशिष्टे यः पार्वणविधिरुक्तः सोऽत्र सर्व आमिषपर्युदासेन द्रष्टव्यः । अतोऽनन्तरं वसिष्ठोक्ताद्विधेर्योऽत्र श्राद्धे विशेषो भवेत्तं सम्यग्वक्ष्यामि । मधु चात्र दातव्यमेव, 'शाल्यन्नं दधि मध्वक्तं बदराणि यवांस्तथा । मिश्रीकृतानि चत्वारि पिण्डान् श्रीफलसंनिभान् ॥' इति ब्रह्मपुराणवचनात् ।

प्रकाश.

(४) अत्राऽऽमिषत्वातिदेशात् (? त्वाविशेषात्) मधुनो निवृत्तिरिति केचित् । तन्न, 'शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा ।' इति ब्रह्मपुराणे पिण्डे मध्वनुज्ञानेन श्राद्धेऽपि तदनुज्ञानात्, पिण्डस्य श्राद्धशेषद्रव्यकर्तव्यत्वात् । उक्तं च गोभिले– 'सर्वमन्नमेकत्रोद्धृत्य' इति । किंच– 'मधु मध्विति यस्तत्र' इति

---

* शेषं स्मृचवत् । श्राप्र. चश्रागतम् ।

(१) कास्मृ. १।१८; अप. १।२४९ पृ. ५१८ उत्त.; श्राक. २७२; स्मृच. ५००: ५०३ (=); चश्रा. १५४२ पू., चतुर्विंशतिमते: १५४९ उत्त.; स्मृसा. पू.; मर. १६९ अतः (ततः); द्वैनि. ७३; श्राकौ. ५०६ श्लोकार्धौ व्यत्यासेन पठितौ, परिशिष्टम्; श्रात. ३०९ क्तो विधिः (क्तविधिः); श्रासौ. १२२; श्राप्र. २९५ पू.: २९९ उत्त.; बाल. १।२५० पृ ५६८ उत्त., पारस्करः.

वचने मधुमन्त्रवर्जनान्मधुनो निवृत्तिर्नास्तीत्यवगम्यते इति वक्ष्यते । श्राकौ. ५०६–५०७

(५) यत्तु 'मधुमांसाभ्यञ्जन' इति याज्ञवल्क्यादौ ब्रह्मचारिणो निषेधे संनियोगशिष्टत्वान्मांसनिषेधे मधुनिषेध इत्युक्तम्, निरामिषश्राद्धशेषघटितपिण्डानां 'पिण्डांस्तु दधिमध्वक्तान्' इत्यादिना तदुक्तरूपविशेषणमात्रविधानान्नात्र फलचमसन्यायेन श्राद्धे मधुप्राप्तिरिति द्वैतनिर्णयोक्तं च, तदयुक्तम्, 'शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा । मिश्रीकृत्य च चत्वारि पिण्डाञ् श्रीफलसंनिभान् ॥' इति ब्रह्मपुराणवचनेन पिण्डघटकान्नस्य दधिमध्वक्तत्वेन, पिण्डस्य च 'सर्वस्मात् प्रकृतादन्नादुद्धृत्य' इत्यनेन श्राद्धशेषद्रव्यकर्तव्यतया फलचमसन्यायेन श्राद्धेष्वपि मधुप्राप्तेः । एवमेव श्राद्धप्रदीपे वर्धमानोपाध्यायाः । तन्न्यायश्च राजन्यवैश्यकर्तृके ज्योतिष्टोमे 'फलचमसमस्मै भक्ष्यं ददाति' इति श्रुत्या ऋत्विग्भक्ष्यत्वेन फलचमसविधानात् ऋत्विग्भक्ष्यस्य च यज्ञशेषद्रव्यत्वेन तत्सिद्धे यज्ञेऽपि फलचमसलाभः । फलचमसश्च दधिमिश्रितवटत्वक्चूर्णमिति । अत एव मधुजपः अन्नोत्सर्गानन्तरं 'मधु वाता' इत्यादिजपश्चाऽऽभ्युदयिके मधुसत्त्वे मधुद्रव्यप्रकाशकत्वात् दृष्टार्थकः, अन्यथाऽदृष्टार्थकता स्यात् । व्यक्तमाह गोभिलभाष्ये यशोधरधृतवचनम्– 'कृत्वा नान्दीमुखश्राद्धं दधिमध्वाज्यद्रव्यकम् । अन्नं च प्राशयेदन्नपत इत्यभिमन्त्रितम् ॥' । गोभिलानुक्तस्यान्नप्राशनस्याप्यनेनाऽऽभ्युदयिकश्राद्धवत्त्वं प्रतीयते । ¶ श्रात. ३१४–३१५

**[1]प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथा ।**
**उपवेश्य कुशान् दद्यादृजुनैव हि पाणिना ॥**

(१) प्रातरुपवेश्येत्यन्वयः । आमन्त्रणं पूर्वेद्युरेव । अप. १।२४९ पृ. ५१८

(२) 'प्रातरामन्त्रितान्' इति च वचनाद्वैकल्पिकमपि सायमामन्त्रणं निवर्तते । उभयतः पितृपक्षे वैश्वदेवपक्षे च । $ श्राक. २७२

(३) पूर्वेद्युर्निमन्त्रितान् विप्रान् उत्तरेद्युः प्रातः पूर्वाह्णे प्रक्षालितपादानासनेषूपवेश्य 'प्रक्रान्तं कर्म करिष्ये' इत्यादि पार्वणवत्कुर्यात् । विशेषस्तु वैश्वदेविकार्थे पित्र्यर्थमपि युग्मानेव ब्राह्मणानुपवेश्य ऋजून् द्विगुणभङ्गरहितान् युग्मान् समूलान् कुशानासनार्थे विप्राणां प्राङ्मुखानामुदङ्मुखानां वा दक्षिणोरुसमीपे पूर्वक्लृप्तासनस्योपरि प्राङ्मुख उदङ्मुखो वा दद्यात् । स्मृच. ५००

(४) अस्यार्थः– पूर्वेद्युस्तदहर्वाऽभिमन्त्रितान् विप्रान् प्रातरेव पूर्वाह्ण एव आहूय चन्दनाक्षतकुसुमार्चिते चतुरस्रमण्डले सत्यवसुसंज्ञकान् विश्वेदेवान् नान्दीमुखसंज्ञकांश्च पित्रादीननुकीर्त्य तच्चरणक्षालनं कृत्वाऽऽसनेषूपवेश्य ऋजुभूतैरेव दर्भैरासनं दद्यात् । उभयत इति चतुरः पूर्वमुखानेकत उपवेश्यान्यतश्चतुर उदङ्मुखानुपवेशयेत् । तथा च भविष्यत्पुराणे– 'प्राङ्मुखांश्चतुरश्चैव चतुरश्च उदङ्मुखान् । निवेश्य ऋजुभिर्दर्भैर्दद्यादासनमादरात् ॥' । अथवा सर्वेऽपि प्राङ्मुखा उपवेश्याः । तथा च छागलेयः– 'सर्वानेव तु तान् विप्रान्प्राङ्मुखानुपवेशयेत् ।' । चश्रा. १५४९

(५) विशेषमाह– प्रातरिति । प्रथमघटिकात्रये आमन्त्रितान् युग्मब्राह्मणान् दैवे पित्र्ये च तथा पार्वणवत्

¶ शेषं प्रकाशगतम् ।

$ श्राप्र. श्राद्धकल्पतरोरनुवादः, चश्रागतं श्रातगतं च ।

[1] (१) कास्मृ. ११।९ ; अप. १।२४९ पृ. ५१८ ; श्राक. २७२ ऋजुनैव (ऋजुनेव) ; स्मृच. ५०० श्राकवत् ; चश्रा. १५४९ पाणिना (पातितान्) शेषं श्राकवत् ; मर. १७० ; श्राका. ५१८ (प्रातरामन्त्रितान्विप्रान्प्राङ्मुखान्नयतस्तथा । ?) एतावदेव ; श्राकौ. ५०६ परिशिष्टम् ; श्रात. मर., संदी. श्राकगतम् । ३०९ ; श्रासौ. १२२ ; श्राप्र. २९९ ; श्राम. ९० उपवेश्य (उपविश्य) पाणिना (पातितान्) ; सिन्धु. १७४९ पू ; बाल. १।२५० पृ. ५६८ पू., पारस्करः ; संग. ९० पू. ; कृभ. १७४९ श्रामवत्, उत्त. ; संदी. ६२ तथा (स्थितान्).

प्राङ्मुखान् दैवे उदङ्मुखान् पित्र्ये उपवेश्य ऋजुनैव हस्तेन कुशानासने दद्यात् । प्रकाश.

( ६ ) प्रातरामन्त्रितानिति पूर्वदिनामन्त्रणनिषेधः । न च– आमन्त्रितान् विप्रान् प्रातरुपवेश्येत्यन्वयेन प्रातःकालविधानादतिदेशप्राप्तस्य पूर्वदिनामन्त्रणस्य न बाध इति वाच्यम्, आमन्त्रितानित्यस्य वैयर्थ्यभिया तस्य प्रातःपदसंबन्धेन पूर्वदिननिमन्त्रणप्रतिषेधस्य दुर्निवारत्वात् । युग्मानिति पित्रादिपक्षेऽयुग्मस्थाने युग्मविधिविषयम्, अन्यथा वैयर्थ्यात्, दैवे युग्मस्य प्राप्तत्वात् । तथा च शातातपः– ' मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम् । ततो मातामहादीनां वृद्धौ श्राद्धत्रयं स्मृतम् ॥ त्रिष्वप्येतेषु युग्मांस्तु भोजयेद्ब्राह्मणाञ्शुचिः । प्रदक्षिणं तु सव्येन प्रदद्याद्देवपूर्वकम् ॥ '। उभयतस्तथेति । उभयतः उभयदिशि पार्वणवत् दक्षिणे पितृब्राह्मणान् पश्चिमे देवब्राह्मणानुपवेश्येत्यर्थः, न तु ' मातृश्राद्धं तु युग्मैः स्यात्सदैवं प्राङ्मुखैः पृथक् । ' इति हारीतवचनात् ' पितॄनप्यत्र देववत् ' इत्यतिदेशाच्च पश्चिमे सामगानामपि पितृब्राह्मणोपवेशनम् । अत एवाऽऽश्वलायनगृह्ये– ' आभ्युदयिके युग्मा ब्राह्मणाः । प्राङ्मुखेभ्य उदङ्मुखो दद्यादुदङ्मुखेभ्यो वा प्राङ्मुखो दद्यात् ' इति व्यवस्थितो विकल्प उक्तः । तत्र च सामगेतरेषां ' प्राङ्मुखेभ्य उदङ्मुखो दद्यात् ' इति, सामगानां तु ' उदङ्मुखेभ्यो वा प्राङ्मुखः ' इति । अत एव छन्दोगपरिशिष्टे– ' संयोज्य यवकर्कन्धुदधिभिः प्राङ्मुखस्ततः । ' इति पिण्डदाने प्राङ्मुखत्वं वक्ष्यते । तथा च ब्रह्मपुराणे– ' नान्दीमुखानां कर्तव्यं पितृकार्यार्थसिद्धये । सयवैश्च तथर्जुभिर्दर्भैः पूर्वामुखः स्थितः ॥ ' । किंतु दक्षिणदिश्येव पितृब्राह्मणवामे मातामहब्राह्मणोपवेशनं पार्वणाद्विपरीतमत्रेति, ' आभ्युदयिके प्रदक्षिणमुपचारः ' इति गोभिलवचनात् । केचित्तु– ' उदङ्मुखेभ्यो वा प्राङ्मुखः ' इति सामान्यतो विधानात् देवब्राह्मणस्यापि दक्षिणस्यामुदङ्मुखोपवेशनमाहुः । तन्मन्दम्, पार्वणातिदेशप्राप्तं पित्रादिब्राह्मणानामुदङ्मुखत्वमनूद्य कर्तुः प्राङ्मुखत्वमात्रविधानेनैवोपपत्तेर्देवब्राह्मणस्योदङ्मुखत्वविधानगौरवात् । किंच पित्रादिब्राह्मणे उदङ्मुखत्वमनुवादो देवब्राह्मणे विधिरिति विधिवैषम्यं स्यात् । यजुर्वेदिनां तु पश्चिमे सर्वादौ देवब्राह्मणम्( १ णोपवेशनम् ), तद्वामे मातॄणाम्, तद्वामे पितॄणाम्, ( तद्वामे ) मातामहानां ब्राह्मणोपवेशनमिति क्रमः । तथा च निर्णयामृतलिखितं भविष्यपुराणवचनम्– ' सर्वादौ दक्षिणे देवा मातॄणां च तदुत्तरे । पित्रादीनामुदक् तस्मात्ततो मातामहद्विजाः ॥ ' । अत्र दक्षिणशब्दो दक्षिणदिग्वाचकः, उदक्शब्दसांनिध्यात् ।

एतेन– पार्वणे देवविप्रदक्षिणे पितृविप्रावस्थानात् ' प्रकृतिवद्विकृतिः ' इति न्यायादत्रापि तथा, किंतु दैवे दत्त्वा प्रदक्षिणीभूय मात्रादिभ्यो देयमित्याधुनिकानां मतमपास्तम्, ' प्रदक्षिणमुपचारः ' इति पारस्करादिभिरुक्तत्वात् प्रदक्षिणक्रमोपवेशनस्यापि तुल्यन्यायेनानुसिद्धत्वाच्च । अन्यथा सामगानां मातामहविप्रोपवेशनं पितृविप्रदक्षिणे पार्वणवत् कथं न स्यात्? तत्रापि प्रदक्षिणीभूय मातामहेभ्यो दाने दक्षिणोपचारसंभवात् ।
* श्राकौ. ५०७–५०९

( ७ ) प्रातरामन्त्रितानिति पूर्वदिननिमन्त्रणनिरासार्थम् । युग्मानिति अयुग्मव्यावृत्त्यर्थम् । उभयतः पितृपक्षे मातामहपक्षे च, दैवपक्षे युग्मत्वस्य पार्वणे प्राप्तत्वात् । तथा पार्वणवदुदङ्मुखीकृत्य ब्राह्मणानुपवेश्य वक्ष्यमाणप्रकारेण कुशान् दद्यात् । कर्तुस्तु पार्वणवन्न दक्षिणाभिमुखत्वम्, किंतु प्राङ्मुखत्वम्, पिण्डदाने तथा दर्शनात् । एवं च ' आभ्युदयिके युग्मा ब्राह्मणाः । समूला दर्भाः । प्राङ्मुखेभ्य उदङ्मुखो दद्यात् उदङ्मुखेभ्यः प्राङ्मुखो वा ' इत्याश्वलायनवचनेऽपि द्वितीयकल्पाभिधानं छन्दोगपितृपक्षपरम् । न च– एतद्देवपक्षपितृपक्षोभयसाधारणच्छन्दोगपरमस्तु, अविशेषादिति वाच्यम्, आभ्युदयिके छन्दोगानामपि देवपक्षस्य पार्वणतुल्यत्वात्, ' ये चात्र विश्वेदेवार्थं पूर्वं विप्रा निमन्त्रिताः । प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि च ॥ ' इति देवलोक्तसर्वशाखिगोचरसामान्यविधीनां संकोचे हेत्वभावात् । किंच, यथा पार्वणे छन्दोगेतरेषां

§ श्राम. श्राकौगतम् ।

ब्राह्मणयुग्मत्वप्राङ्मुखत्वयोः कर्तुरुदङ्मुखत्वस्य च दैवे प्राप्तत्वेन विध्यभावात् पितृपक्ष एव ब्राह्मणयुग्मत्व-प्राङ्मुखत्वे कर्तुरुदङ्मुखत्वं च विधेयम्, तथा छन्दो-गानामपि साहचर्यात् पार्वणप्राप्तब्राह्मणोदङ्मुखत्वमनूद्य पितृपक्ष एव कर्तुः प्राङ्मुखत्वमात्रं विधेयम्। एतेन छन्दोगानां दैवब्राह्मणोदङ्मुखत्वं मैथिलमतं निरस्तम्, अन्यथा पार्वणेनैव ब्राह्मणोदङ्मुखत्वस्य प्राप्तत्वे पितृ-ब्राह्मणस्य च प्राप्तत्वे विध्यनुवादापत्तेः। किंत्वत्र वसुसत्ययोर्देवतात्वं (पितृपक्षवत् ?) मधुमन्त्रवर्जनं चेति पार्वणाद्विशेषः। ऋजुना देवतीर्थेन, न तु पितृतीर्थेन।

श्रात. ३१५

(८) उभयतः दैवे पित्र्ये च। वैश्वदेवौ द्वौ विप्रौ, पित्रादीनामेकैकस्य द्वौ द्वाविति विंशतिः। त्रिके वा द्वावित्यष्टौ विप्राः।

सिन्धु. १७४९

[उभयतः प्राङ्मुखानुदङ्मुखांश्चेत्यन्ये। वैश्वदेवे द्वाविति। 'एकैकस्य तु वर्गस्य द्वौ द्वौ विप्रौ समर्चयेत्। वैश्वदेवे तथा द्वौ च न प्रसज्येत विस्तरे॥' इति छागलेयवाक्यात्, वर्गस्येत्यस्य वर्गस्थस्येत्यर्थात्। वर्ग-स्येति यथाश्रुतेऽप्याह— त्रिके वेति। 'पूर्वाह्णे भोजये-द्विप्रानष्टौ सर्वं प्रदक्षिणम्।' इति भविष्यात्। 'तथा च नवमं विप्रं चतुरस्रे खगेश्वर।' इति भविष्यम्, तत्र क्रियमाणे योऽतिथिरागच्छेत्तं नवमं भोजयेदित्यर्थः।

कृभ.]

(९) अत्र प्रातरामन्त्रणोक्त्या कृतब्रह्मचर्याणामेव श्राद्धभोजनेऽधिकारादर्थात्पूर्वेद्युस्तज्ज्ञानमात्रं कार्यम्, यथा ते ब्रह्मचारिणः स्युः।

बाल. १।२५० पृ. ५६८

**'निपातो न हि सव्यस्य जानुनो विद्यते क्वचित्।**
**सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत्॥**

(१) कास्मृ. १।२४ न हि (नैव); अप. १।२४९ पृ. ५१८; श्राक. २७३; स्मृच. ४९९; चश्रा १५४५ उत्त.: १५४७ पू.; स्मृसा. १०७; प्रपा. १९ पू.;

(१) देववदित्यभिधानात्सव्यजानुप्रपतनं पित्र्येषू-पचारेषु न कर्तव्यम्। तथा चोक्तं तेनैव— 'निपातो … क्वचित्।' इति। एवं च यत्र यत्र पार्वणश्राद्धे दैविक-प्रचारादन्यथा पैतृकप्रचारः स्मृतः तत्र तत्र वृद्धिश्राद्धे दैविकप्रचार आश्रयणीयः।

स्मृच. ४९९

(२) अनेन वैश्वदेविके ये धर्मास्ते सर्वेऽप्यत्र कर्तव्याः, न पित्र्यश्राद्धधर्मा इत्युक्तं भवति।

* चश्रा. १५४५

(३) अत्र वामजानुपातनं क्वचिदपि नास्ति। किं तर्हि ? पितॄंश्च देववत्परिचरेत्। सदा यावत्प्रयोग-मित्यर्थः।

प्रकाश.

(४) सव्यस्य वामस्य। देववत् दक्षिणजानुपातेन प्रागग्रकुशद्वययुक्तासनेन च।

श्रात. ३१५

**'पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान्।**
**गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत्॥**

(१) पूर्वमासने कुशदानमुक्तम्, तत्पितॄनुद्दिश्य दातव्यं न ब्राह्मणानित्याह— पितृभ्य इति। इति 'ऋजुनैव

* श्राकौ. चश्रावत्तात्पर्यम्।

मर. १७० क्रमेण कात्यायनः; श्राका. ५१३ पू., प्रचेताः; श्राकौ. ५०६ परिशिष्टम्: ५१५ (=) उत्त.; श्रात. ३०९; श्रासौ. १२२; श्राप्र. ३०३ पू.; मुक्ता. ७५५ न हि (हि न) श्लोकार्धौ व्यत्यासेन पठितौ; श्राम. ८९ श्लोकार्धौ व्यत्यासेन पठितौ; संग. ७७–७८; कृभ. १७५० श्रामवत्; मञ्जरी. ८१ उत्त.; संदी. ५९.

(१) कास्मृ. १।२५; अप. १।२४९ पृ. ५१८; श्राक. २७३ नर्घ्य (नर्घं); स्मृच. ५०० पितॄनर्घ्यं (पितृभ्योऽर्घ्यं) उत्त.; चश्रा. १५५०; मपा. ६३५ प्रदा-पयेत् (निवेदयेत्) शेषं स्मृचवत्, उत्त.; मर. १७० उप (सूप) पितॄनर्घ्यं (पितृभ्योऽर्घ्यं); श्राकौ. ५०६ परि-शिष्टम्; श्रात ३०९ श्राकवत्; श्रासौ. १२२ श्राकवत् श्राप्र. १३ उत्त.: ३००, ३०९ श्राकवत्, उत्त.; सिन्धु. १७३२, १७५० स्मृचवत्, उत्त.; संदी. ६१ उत्त.

हि पाणिना ' इत्युक्तप्रकारेण पितृभ्यो दत्तेषु कुशेषु तान् ब्राह्मणानुपवेश्य गोत्रनामभिः संबोध्य पितृनर्घ्यम् अर्घ्यपात्रस्थजलादि दापयेत् दद्यादित्यर्थः । तेन संबोधनान्तेन गोत्रनामनी उच्चार्ये इत्युक्तं भवति ।

प्रकाश.

(२) पितृभ्य इति । वक्ष्यमाणगोत्रनामामन्त्रण-प्रकारेण पितृभ्यो दत्तेषु कुशेषु उपवेश्येत्यर्थः ।

$ श्राकौ. ५१०

**'नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ।**
**पात्राणां पूरणादीनि दैवेनैव हि कारयेत् ॥**

(१) दैवेन दर्भाजेव एव सव्यदेवतीर्थादिना वैश्वदेविकधर्मेण । * चश्रा. १५५०

(२) विशेषान्तरमाह– नेति । पार्वणवन्नात्र प्राचीनावीतित्वकरणम्, न च पित्र्यं तीर्थं जलगन्धादिदानाय मुनिभिरिष्यते । किं तर्हि ? अर्घ्यपात्राणां जलेन पूरणम्, आदिशब्दात्तत्रैव गन्धादिदानम्, बहुवचनाद्दत्तोत्सर्गादि यावदेव पित्रर्थं कर्म दैवेनैव तीर्थेन कुर्यात् । एवकारः ' नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम् । प्राजापत्येन तीर्थेन यच्च किंचित्प्रजापतेः ॥' इति मार्कण्डेयपुराणोक्तप्राजापत्यतीर्थव्यावृत्त्यर्थः । उपवीतित्वमप्यत्र कर्तव्यम् । यथा ब्रह्मपुराणम्– ' तिलार्थे तत्र विकिरेत् प्रशस्तांश्च तथा यवान् । सर्वं यज्ञोपवीती तु न कुर्यादपसव्यकम् ॥ ' । कारयेदित्यादिप्रयोजकनिर्देशस्तु परोपदेशपक्षे अन्यद्वाराऽपि पार्वणवत् वृद्धिश्राद्धं कर्तव्यम्, नैकोद्दिष्टवत् स्वयंकर्तव्यतानियम इत्येतदर्थः । तथाऽत्र न वामोपचारः, किंतु दक्षिणोपचारः । यथा शातातपः– ' पूर्वाह्णे दैविकं कार्यं श्राद्धमभ्युदयार्थकम् । सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता ॥ ' । सव्येन दक्षिणोपचारेण । अत एव कात्यायनः– ' अथाऽऽभ्युदयिकम् । प्रदक्षिणमुपचारः ' । गोभिलश्चाऽऽह– 'अथाऽऽभ्युदयिके श्राद्धे युग्मानाशयेत् । प्रदक्षिणमुपचारः ' इति ।

§ प्रकाश.

(३) पितृतीर्थं तर्जन्यङ्गुष्ठयोर्मध्यरूपं नात्र, किंतु अङ्गुल्यग्ररूपं देवतीर्थम् । * श्रात. ३१६

**'ज्येष्ठोत्तरकरान् युग्मान्कराग्राग्रपवित्रकान् ।**
**कृत्वाऽर्घ्यं संप्रदातव्यं नैकैकस्यात्र दीयते ॥**

(१) द्वयोर्द्वयोर्ब्राह्मणयोर्हस्तौ मेलयित्वाऽर्घ्यदानं कार्यम् । तत्र ज्येष्ठस्य विप्रस्य हस्त उत्तरः कार्यः ।

¶ अप. १।२४९ पृ. ५१८

(२) ज्येष्ठोत्तरकरान् ज्येष्ठस्य प्रथमोपवेशितकरस्योपरि (? तस्य कर उपरि) यथा (करो ?) भवति तथेत्यर्थः । कराग्राग्रपवित्रकान् कराग्रे अग्रपवित्रकं पवित्राग्रं येषां ते तान् ।

श्राक. २७३

---

$ श्रात. श्राकौवत् ।

* मर. चश्रागतम् ।

(१) कास्मृ. १।२६ ; अप. १।२४९ पृ. ५१८ ; श्राक. २७३ ; स्मृच. ५०० ; चश्रा. १५४७ पू. : १५५० उत्त. ; स्मृसा. १०७ : १०८ (=) पू ; मपा. ६३५ पित्र्यं तीर्थं (पित्र्यतीर्थं) ; मर. १७० ; श्राकौ. ५०६, ५१०, ५२० परिशिष्टम् ; श्रात. ३०९ हि (तु) : ३१७ (=) उत्त ; श्रासौ. १२१ ; १२२ ; श्राप्र. ३०० श्लोकार्धयोः क्रमः विपरीतः ; श्राम. ९० दैवेनैव हि (दैवे नेह तु) उत्त. ; सिन्धु. १७५० पू. ; संग. ८६.

§ श्राकौ. प्रकाशगतम् ।

* शेषं प्रकाशगतम् ।

¶ स्मृच. अपरार्कानुवादः । मपा. अपवत् ।

(१) कास्मृ. १।२७ स्यात्र दी (स्य प्रदी) ; अप. १।२४९ पृ. ५१८ ; श्राक. २७३ र्घ्यं (र्घं) ; स्मृच. ५०० नैकैकस्यात्र दी (नैकस्यात्र प्रदी) ; चश्रा. १५५० कास्मृवत् ; स्मृसा. १०८ र्घ्यं (र्घः) तव्यं (तव्यो) क्रमेण विष्णुपुराणम् ; मपा. ६३५ स्मृचवत् ; मर. १७० श्राका. ५१८ श्राकवत् ; श्राकौ. ५१६ ; श्रात. ३०९ ; श्रासौ. १२२ ; श्राप्र. ३०० कास्मृवत् ; श्राम. ९० पू. ; सिन्धु. १७५० ; संग. ८३ र्घ्यं (र्घः) तव्यं (तव्यो).

( ३ ) ज्येष्ठस्य युग्माद्यस्य विप्रस्य करो युग्मद्वितीयविप्रकरस्योत्तरो येषु ते तथा । कराग्रेऽग्रं पवित्राणां येषु ते कराग्राग्रपवित्रकाः । एवंविधान् कृत्वाऽर्घ्यं प्रदद्यात् । पूर्वोक्तेन संस्थानेन द्वयोर्द्वयोर्हस्तौ मेलयित्वा तत्र तत्र च पूर्वाग्रौ द्वौ कुशौ स्थापयित्वा एकैकस्मिन्मातृपितृादिवर्गे वैश्वदेविके च सकृदेवार्घ्यः प्रदेयः, नैकैकस्य विप्रस्य करे इत्यर्थः । चश्रा. १५५०

( ४ ) अर्घ्यदाने पार्वणाद्विशेषमाह– ज्येष्ठेति । युग्मान् पितृब्राह्मणान् ज्येष्ठोत्तरकरान् ज्येष्ठस्य प्रथमोपवेशितस्य करः उपरि येषां ते तथा । कराग्रे पवित्राग्रं येषां ते कराग्राग्रपवित्रकाः । तांस्तथाविधान् कृत्वा अर्घ्यपात्रस्थजलपुष्पादि तद्धस्ते दातव्यम्, न तु यथा पार्वणे एकस्य पितृब्राह्मणस्य हस्ते, तथा पितामहस्य, तथाऽपरस्य प्रपितामहस्य दीयते, तथाऽत्रेति । प्रकाश.

( ५ ) अत्र सर्वकरोपरिस्थिते पङ्क्तिश्रेष्ठकरे एव पवित्रार्घ्यदानं पार्वणादधिकं विधीयते, कराग्रे पवित्राग्रकरणं तु पार्वणेऽपीति, नैकैकस्येत्युपसंहारात् पार्वणे विशेषानभिधानादिह दृष्टस्यैव न्याय्यत्वाच्च, अन्यत्राप्येष एव स्यादिति वक्ष्यमाणवचनात् । * श्राकौ. ५१८

( ६ ) एतेन– पितृब्राह्मणयोर्हस्तोपरि उत्तराग्रं पवित्रं दत्त्वा अर्घ्योत्सर्गान्तमुक्त्वा 'एवमेव पितामहादीनां पञ्चानामेकैकशः द्वयोर्द्वयोर्ब्राह्मणयोर्दद्यात्' इति पितृदयितोक्तं निरस्तम् । एवं "कराग्राग्रपवित्रकत्वमाभ्युदयिके विशेष इत्यायाति, तथा चैतद्वैपरीत्यं पार्वणे स्यादिति चेत्, नैवम्, मिलितहस्ते पवित्रदानमभिधाय 'नैकैकस्यात्र दीयते' इति यत् पुनरभिधत्ते तेन ज्ञापयति– इदमेवात्र विधीयते कराग्राग्रपवित्रकत्वमनूद्य" इति कृत्यप्रदीपोक्तमपि निरस्तम्, 'नैकैकस्यात्र दीयते' इत्यभिधानं विना पित्रादित्रयब्राह्मणानां मिलितहस्तोपरि दानानुपपत्त्या 'नैकैकस्यात्र दीयते' इत्यस्य पुनरभिधानानुपपत्तेः $ । न च ज्येष्ठोत्तरकरत्वेनैव मिलितहस्तलाभः, ज्येष्ठोत्तरकरत्वस्य च पित्रादिप्रत्येकब्राह्मणद्वयापेक्षयाऽपि संभवेन तथात्वानुपपत्तेः‡ । कराग्राग्रपवित्रकत्वस्यापि पार्वणे केनाप्यनुक्तत्वेनाऽऽभ्युदयिकेऽनुवादानुपपत्तेश्च । तस्मात् ज्येष्ठोत्तर*कराग्राग्रपवित्रकत्वस्य पित्रादित्रयमिलितब्राह्मण( ? ब्राह्मणमिलित )हस्तोपरि दानस्य च विशेषादाभ्युदयिक एव विधानम् । पार्वणे त्वासनादिदर्भवदर्घ्यदानेऽपि पवित्रदानस्य दक्षिणाग्रत्वं प्रतीयते । ¶ श्रात. ३१६–३१७

‡ शेषं प्रकाशगतम् ।

( ७ ) द्वयोर्द्वयोर्हस्तौ † संयोज्य तत्र प्रागग्रं पवित्रं स्थापयित्वा एकैकस्मिन् मातृपित्रादिवर्गे वैश्वदेविके च सकृदेवार्घः प्रदेयः, नैकैकस्य विप्रस्य करे इति निष्कृष्टोऽर्थः । + श्राप्र. ३०१

( ८ ) इदं छन्दोगविषयम्, तत्परिशिष्टगतत्वादिति स्मृतिरत्नावलीकारः । तेनास्य मते प्रकृतिवदेवार्घदानम्, न त्विह कश्चिद्विशेषः । अन्ये मदनरत्नढोण्डूपद्धतिकारादयस्तु अर्घदाने विशेषविधेर्वाजसनेयिशाखासाधारण्यं मन्यन्ते । ¶ संग. ८३

**[१]मधुवाताजपस्थाने कुर्यात्तत्र प्रयत्नतः ।**
**उपास्मै गायतेत्यादि ऋचः पञ्च जपेत्तथा ॥**

$ पुनरभिधानेति भावप्रधानम्, पुनरुक्तत्वानुपपत्तेरित्यर्थः ।

‡ पित्रादित्रयब्राह्मणमिलितहस्तलम्भकत्वानुपपत्तेरित्यर्थः ।

* अत्र 'ज्येष्ठोत्तर' इति पदं प्रामादिकं वा विवक्षितं वेति चिन्त्यम् । तत्रायं फलभेदः– यदि प्रामादिकम्, तदा प्रत्येकं ब्राह्मणस्य हस्ते पवित्रदानं प्रतीयते । तच्च सर्वेषु व्याख्यानेषु स्वारसिकमिति भाति । अथ विवक्षितम्, तदा ज्येष्ठब्राह्मणस्यैव हस्ते पवित्रदानं प्रतीयत इति ।

¶ शेषं प्रकाशगतम् ।

† दक्षिणहस्तौ इति सिन्धुः ।

+ शेषं प्रकाशगतम् । सिन्धु श्राप्रवत् ।

( १ ) श्राका. ५१३ वाता ( वाते ) मनुकात्यायनौ ; संग. ८२ मनुकात्यायनौ.

**'मधु मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्।**
**गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः ॥**

( १ ) आपोशनदानानन्तरं जपे विशेषः कात्यायनेन दर्शितः— मधु मध्वितीति । मधुमन्त्रः 'मधु वाताः' इत्यादिमन्त्रः । स्मृच. ५०१

( २ ) वसिष्ठोक्तादपरान् बहून्विशेषानाह— मध्विति । वसिष्ठोक्तपार्वणे भोक्तुमिच्छतां श्राव्यत्वेन संबन्धी गायत्र्याः पश्चाद्भवो यो मधु मध्विति त्रिर्जपः 'मधु वाताः' इति मन्त्रसहितः, सोऽत्र तन्मन्त्रं विना पठनीयः । एवं च भोजनकाले मन्त्रः पठनीय एव, पूर्वकाले निषेधात् । प्रकाश.

( ३ ) मधु मध्विति । मध्वशितुमिच्छताम् ... । मधुमन्त्रनिषेधाच्च मधुनो निवृत्तिर्नास्तीत्यवगम्यते । अन्यथा प्रधाननिवृत्तौ गुणनिवृत्तेरप्यर्थसिद्धत्वान्निषेधविधेरसंभवात् । न च गुणनिवृत्त्या प्रधाननिवृत्तिरिति वाच्यम्, 'गुणलोपे न मुख्यस्य' इति न्यायविरोधात्, मध्विति त्रिर्जपाभ्यनुज्ञानं च न स्यात्, मध्वशितुमिच्छतामित्यनुवादाच्च । अन्ये तु 'मधु मधु मधु' इति मन्त्रस्य मधु मध्विति एकदेशकीर्तनमात्रम्, अन्यथा षड्जपप्रसङ्गात् । न च तथा, "पार्वणे गायत्रीं 'मधु वाताः' इति तृचं मध्विति त्रिकं च जपित्वा" इति गरुडपुराणादौ त्रिर्जपविधानादित्याहुः । * श्राकौ. ५१८–५१९

( ४ ) गायत्रीपाठोत्तरं मधुमतीस्थाने 'उपास्मै गायता नरः' इति पञ्चर्चम् 'अक्षन्नमीमदन्त' इति च षष्ठीमृचं श्रावयित्वा ततो 'मधु मधु मधु' इति त्रिर्जपेत् । तथा चोक्तमाश्वलायनेन— 'मधु वाता ऋतायत इति तृचस्थाने उपास्मै गायता नर इति पञ्च मधुमतीः श्रावयेत् । अक्षन्नमीमदन्त इति च षष्ठीम्' इति । ¶ श्राप्र. ३०४

**'न चाश्नत्सु जपेदत्र कदाचित्पितृसंहिताम् ।**
**अन्य एव जपः कार्यः सोमसामादिकः शुभः ॥**

( १ ) भुञ्जानेषु विप्रेषु जप्यमन्त्रविशेषस्तेनैवोक्तः— न चेति । स्मृच. ५०१

( २ ) भुञ्जानेषु 'यद्वा उ विश्पतिः' इत्यादिपितृसंहिताजपो यस्तत्र विहितः सोऽत्र न कर्तव्यः, किंतु तत्स्थानेऽन्य एव सोमसामादिजपो मङ्गल्यः कार्य इति । तथा च कात्यायनः— 'पित्र्यमन्त्रवर्जं जपः' इति । प्रकाश.

( ३ ) पितृसंहितामित्युपलक्षणम्, पितृप्रकाशकस्तवादिकमपीति । ‡ श्राकौ. ५१९

( ४ ) सोमसामादिकः सोमसामत्वेनैव प्रसिद्धः । श्राप्र. ३०४

---

* शेषं प्रकाशवत् । श्रात. श्राकौगतम् ।

¶ शेषं प्रकाशगतम् ।

‡ श्रात. श्राकौवत् ।

(१) कास्मृ. ११३९ ; अप. ११२४९ पृ. ५१९ ; श्राक. २७३ ; स्मृच. ५०१ त्रिर्जपोऽशितुमिच्छताम् ( त्रिर्जपेच्छ्रेय इच्छता ) गायत्र्यनन्तरं ( गायत्र्याऽन्नं तत्र ) ; चश्रा. १५४७ जपोऽशितुमिच्छताम् ( जपः श्रेय इच्छता ) नन्तरं ( नन्तरः ) विवर्जितः ( विसर्जितः ) ; मर. १७० ; श्राका. ५११ मनुकात्यायनौ ; श्राकौ. ५१६ ; श्रासौ. १२२ ; श्रात. १०९ ; श्राप्र. ३०४ ; श्राम. ८९ नन्तरं ( नन्तरः ) ; सिन्धु. १७५० सोऽत्र ( स्तोत्रं ) वर्जितः ( वर्जितम् ) ; मञ्जरी. ८२ निर्णयसिन्धौ.

(१) कास्मृ. ११४० ; अप. ११२४९ पृ. ५१९ ; श्राक. २७३ जपेदत्र ( जपेत्तत्र ) ; स्मृच. ५०१ ; चश्रा. १५५३ अन्य एव ( अन्यत्र च ) उत्त. ; स्मृसा. १०८ पू. ; मर. १७० ; श्राका. ५१३ मनुकात्यायनौ ; श्राकौ. ५११ परिशिष्टम् : ५१६ जपेदत्र ( जपेत्किंचित् ) ; श्रात. १०९ ; यजुःश्रात. ४९९ ; श्राप्र. ३०४ ; श्राम. ८९ अन्य ( अल्प ) उत्त. ; सिन्धु. १७५० चाश्नत्सु ( चाश्नत्सु ) संहिताम् ( सूक्तकम् ) पू. ; कृभ. १७५१ ( = ) उत्त. ; मञ्जरी. ८२ संहिताम् ( सूक्तकम् ) पू., निर्णयसिन्धौ.

[1]यस्तत्र प्रकरोऽन्नस्य तिलवद्यवत्तथा ।
उच्छिष्टसंनिधौ सोऽत्र तृप्तेषु विपरीतकः ॥

(१) तिलवद्यववत्तथेति । योऽन्यत्र तिलयुक्तोऽन्नप्रकरः क्रियते सोऽत्र यवयुक्तो यथा भवति तथा कर्तव्यः । विपरीतकः देवतीर्थादिना दानप्रकारेण ।

* श्राक. २७४–२७५

(२) तत्र पार्वणे तृप्तेषु विप्रेषु उच्छिष्टसंनिधौ योऽन्नादेः प्रकरः (विकिरः) तृप्तिप्रश्नतदुत्तराभ्यां प्रागनुष्ठेयतया तदीयगृह्यसूत्रे उक्तः, सोऽत्र वृद्धिश्राद्धे विपरीतकः तृप्तिप्रश्नतदुत्तराभ्यामूर्ध्वमनुष्ठेय इत्यर्थः ।

स्मृच. ५०१

(३) वैश्वदेविकः यववान् पित्र्यः तिलवान् । विपरीतकः सर्वोऽपि यववानित्यर्थः ।

¶ चश्रा. १५४७

(४) पार्वणे उच्छिष्टसंनिधौ तृप्त्यनन्तरं यदन्नविकरणं तिलयुक्तं तदत्र विपरीतं तृप्तेः पूर्वमित्यर्थः । तथा स प्रकरोऽत्र यववत् यवयुक्तं यथा स्यात्तथा कार्यः ।

प्रकाश.

(५) एतच्च सामगमात्रपरम्, यजुर्वेदिनां पार्वणेऽपि तृप्तिप्रश्नात् प्रागेवान्नविकरणम् । न च– पार्वणे पैत्रधर्मेण नान्दीमुखे देवधर्मेणेति वैपरीत्यं कल्पतरूक्तम्, तृप्तेष्वित्यस्य वैयर्थ्यात् । 'नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते । पात्राणां पूरणादीनि दैवेनैव हि कारयेत् ॥' इति इति पूर्ववचने सर्वत्रैव दैवधर्मप्राप्तेः पृथगुक्तिवैक-(१ फ) ल्याच्च ।

* श्राकौ. ५१९–५२०

[2]संपन्नमिति तृप्ताःस्थप्रश्नस्थाने विधीयते ।
सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥

(१) पार्वणे 'तृप्ताः स्थ' इति यः प्रश्नः तत्स्थाने संपन्नमिति वक्तव्यम् । प्रश्नानन्तरं सुसंपन्नमिति ब्राह्मणैः प्रोक्ते शेषमन्नमप्यस्तीति ब्राह्मणेभ्यो निवेदयेत् । तथा च कात्यायनः– 'संपन्नमिति तृप्तिप्रश्नः' ।

$ प्रकाश.

(२) तृप्तिप्रश्नोऽत्र कीदृश इत्याह– संपन्नमिति । पितृपक्षे एवायं प्रश्नः, न तु दैवे, 'तृप्ताःस्थस्थाने' इत्यभिधानात् । दैवे तु रुचितमेवेति ।

श्राकौ. ५२०

(३) पार्वणे 'तृप्ताः स्थ' इति यः प्रश्नः तत्स्थाने संपन्नमिति वाच्यम् । प्रश्नानन्तरं सुसंपन्नमिति ब्राह्मणैः प्रोक्ते 'शेषमन्नं क्व देयम्' इति पृच्छेत्, 'इष्टेभ्यो दीयताम्' इति प्रतिवचनम्, 'स तानाह पुनः (शेषं) क्व देयं चान्नमित्यपि । इष्टेभ्यो दीयतामेतदिति संप्रवदन्ति ते ॥' इति ब्रह्मपुराणात् ।

श्रात. ३१७

[3]प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत् ।
अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ॥

---

* मर. श्राकवत् ।

¶ श्राम. चश्रावत्

(१) कास्मृ. १।४१ ; अप. १।२४९ पृ. ५१९ यस्तत्र (यस्तस्य) तिलवद्यववत्तथा (तिलमान्यवमांस्तथा) ; श्राक. २७३ ; स्मृच. ५०१ तिलवद्यववत्तथा (तिलमान्यवमांस्तथा) ; चश्रा. १५४७ पूर्वार्धे (यस्तस्य विकिरोऽन्नस्य तिलवान्यववांस्तथा ।) ; मर. १७० प्रकरो (विकिरो) ; श्राकौ. ५१६ ; श्रात. ३०९–३१० ; श्रासौ. १२२ ; श्राम. ८९ पूर्वार्धे (यस्तत्र विकिरोऽन्नस्य तिलवान्यववांस्तथा ।) सोऽत्र (सोऽन्नं).

---

* शेषं प्रकाशवत् । श्रात. श्राकौवत् ।

$ श्राप्र. प्रकाशगतम् ।

(२) कास्मृ. १।४२ ; अप. १।२४९ पृ. ५१९ ; श्राक. २७३ ; स्मृच. ५०१ ; चश्रा. १५५४ ; मर. १७० ; गभा. ५१० ; श्राकौ. ५१६ ; श्रात. ३१० स्थ (स्थः) ; श्रासौ. १२२ ; श्राप्र. ३०४ ; सिन्धु. १७५१ ; संग. ८४ ; मञ्जरी. ८३ उत्त., सिन्धौ.

(३) कास्मृ. १।४३ निस्तिलाः (पात्रतः) ; अप. १।२४९ पृ. ५१९ ग्रेष्वथ (ग्रेषु तु) क्ष्वेति (क्ष्वेति) ; श्राक. २७३–२७४ ग्रेष्वथ (ग्रेषु च) ; स्मृच. ५०१ ग्रेष्वथ (ग्रेषु तु) निक्ष्वे (निङ्क्ष्वे) ; चश्रा. १५५६ श्राकवत् ; मर. १७० उत्तरार्धे (आपः क्षिपेन्मूले देशेऽवनेनिङ्क्ष्वेति पात्रतः ॥) ; श्राकौ. ४९५ श्राकवत्, पृ.

(१) आद्यः पङ्क्तिमूर्धन्यो विप्रः ।
अप. १।२४९ पृ. ५१९

(२) आद्यं पुरुषम् ।   श्राक. २७५

(३) आमन्त्र्य गोत्रनामभिः संबोध्य ।
चश्रा. १५५७

(४) आद्यं पितरम् अर्घ्यदान इव संबोधनान्तनामगोत्राभ्यां निर्दिश्य पूर्वाग्रेषु स्तरणकुशेषु मूलदेशे अवनेनिक्ष्वेति तिलरहिता अपः क्षिपेत् । अत्र च प्रागग्रता निस्तिलता च वसिष्ठोक्ताद्विशेषः ।   § प्रकाश.

(५) प्रागग्रेष्विति प्रागग्रत्वं च छन्दोगविषयम्, यजुर्वेदिनां तु उदङ्मुखानामध्वर्यूणामुत्तरोत्तरक्रमेणोत्तराग्रदर्भेषु पिण्डदानस्यौचित्यात्, अर्घ्येष्वपि तथा दृष्टत्वाच्च । आद्यमिति आद्यं पुरुषं पूर्ववत् गोत्रनामभिरामन्त्र्येत्यर्थः । निस्तिलाः किंतु सयवा अपो दर्भमूले क्षिपेत्, 'यवैस्तिलार्थः' इति वचनात् । यत्तु 'प्राङ्मुखेष्वथ दर्भेषु दद्यात्क्षीरावनेजनम् ।' इति ब्रह्मपुराणम्, तत् फलातिशयार्थम् । प्रागग्रत्वं निस्तिलत्वं च पार्वणाद्विशेषः ।   ‡ श्राकौ. ५२०

**[1]द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ।**
**मातामहप्रभृतींस्तु एतेषामेव वामतः ॥**

§ श्रात. प्रकाशगतम् ।

‡ श्राप्र. श्राकौगतम् ।

परिशिष्टम् : ५१६ श्राकवत्; श्रात. ३१० ; श्रासौ. १२२ : १२५ तृतीयपादमात्रम्; श्राप्र. ३०७ क्षिपेत् (क्षिपन्) शेषं श्राकवत्; संग. ७८ (=) : ८० निस्तिलाः (पात्रतः) : ८६ उत्त. ; संदी. ६२ परिशिष्टम्.

(१) कास्मृ. १।४४ ; अप. १।२४९ पृ. ५१९ द्वितीयं च तृतीयं च (द्वितीये च तृतीये च) ; श्राक. २७४ एतेषामेव (तेषामेव च) ; स्मृच. ५०१ ; चश्रा. १५५७ वामतः (वाग्यतः) ; मर. १७० देशयोः (भागयोः) ; श्राका. ५१६ महप्रभृतींस्तु ए तींस्तु ए (तीनामे) ; श्राकौ. ४९५ (=) : ५१६ ; श्रात. ३१० ; श्रासौ. १२२ ; श्राप्र. ३०७ : ३०८ उत्त. ;

(१) मातामहप्रभृतींस्तु एतेषामेव वामत इत्यस्यायमर्थः– एतेषां मातृवर्गार्थमवनेजनस्थानानामुत्तरतः कृतपितृवर्गार्थावनेजनस्थानानामुत्तरतो मातामहप्रभृतीनवनेजयेदित्यर्थः । एतदुक्तं भवति– पिण्डस्थाने संस्तीर्णेषु प्रागग्रेषु दर्भेषु मूलमध्याग्रदेशेषु प्रथमं मातृवर्गपिण्डदानार्थमपः क्षिपेत् । तत उत्तरतः पितृवर्गपिण्डदानार्थम्, तत उत्तरतो मातामहवर्गार्थमेवमपः क्षिपेदिति ।
स्मृच. ५०१–५०२

(२) द्वितीयं पितामहं च तृतीयं प्रपितामहम् ।
चश्रा. १५५७

(३) एतेषां पित्रादित्रयाणां वाम इत्यर्थः । तत्र पित्रादीनां मध्ये देयत्वेन संबोध्यत्वेन च स्वसंमुखत्वादक्षिणासंस्थत्वेन तेषां वामता । यत्त्वाशादित्येन पिण्डानामवयवाभावाद्वामतायां कर्तृगतोऽवयव इष्यत इत्युक्तम्, तदसंगतम्, 'एतेषामेव वामतः' इत्येतच्छब्देन पित्रादीनां परामृष्टत्वात्, कर्त्रवयवत्वे तु एतेषामिति बहुत्वविरोधाच्च । तस्माद्दक्षिणासंस्थत्वेनैव तद्वामतासंभवः ।
श्राका. ५१६

(४) द्वितीयं पितामहं तृतीयं प्रपितामहमाद्यवदामन्त्र्य स्तरणकुशानां मध्याग्रयोर्मूलवदपो विनिक्षिपेत् । एतेषामेव त्रयाणां वामतो दक्षिणस्यां दिशि, यथा दक्षिणोपचारो भवति तथा, आस्तीर्णकुशेषु प्रागग्रेषु मातामहादीनां मूलमध्याग्रदेशेषु पूर्ववदपो विनिक्षिपेत् ।
प्रकाश.

(५) एवमध्वर्यूणामपि उत्तराग्रमूलमध्याग्रेष्ववनेज्य प्रथमं मात्रादीनां पिण्डान् दत्वा तत्पूर्वदिशि कर्तुर्दक्षिणे पित्रादीनां तत्पूर्वदिशि मातामहादीनां प्रदक्षिणोपचारेण पिण्डा देयाः । एवमध्वर्युसामगयोर्यथायथमर्घ्यपात्रस्थापनपरिपाटी मन्तव्या ।   ¶ श्राकौ. ५२०

¶ शेषं प्रकाशवत् ।

संग. ७८ (=) : ८० : ८१ उत्त. ; संदी. ६२ एतेषामेव (तेषामेव हि) परिशिष्टम्.

(६) आद्यं पितरं पूर्ववत् गोत्रसंबन्धनामभिरामन्त्र्य द्वितीयं पितामहं तृतीयं प्रपितामहम्, मध्यदेशाग्रदेशयोः दर्भस्येति शेषः, एतेषां पिण्डस्थाने आवाहितानां पित्रादीनां वामतो दक्षिणस्यां दिशि, एवं चेत् कर्तुर्दक्षिणोपचारो भवति। एतेन कृत्यप्रदीपे दक्षिणस्थितप्रागग्रकुशमूलमध्याग्रेषु मात्रादिभ्यः, मध्यस्थितप्रागग्रकुशमूलमध्याग्रेषु पित्रादिभ्यः, तदुत्तरस्थितप्रागग्रकुशमूलमध्याग्रेषु मातामहादिभ्यः प्राङ्मुखेनावनेजनादि दातव्यमित्युक्तं निरस्तम्, मातृपक्षस्य पूर्वं दूषितत्वात्, आवाहितपित्रादीनां वामदेशे मातामहादीनामन्त्र्य जलदानानुपपत्तेश्च, कर्तुर्दक्षिणोपचारानुपपत्तेश्च।

श्रात. ३१७—३१८

(७) पूर्वाग्रेषु दर्भेषु दर्भमूले पितॄन्, दर्भमध्यभागे पितामहान्, दर्भाग्रदेशे प्रपितामहानित्यर्थः। अन्यत्र वृद्धिश्राद्धातिरिक्ते श्राद्धे यवराहित्यात्तिलसहितो विधिः, दक्षिणाप्रवणो देशः, दक्षिणाभिमुखो यजमानः, दक्षिणाग्राः कुशाः। वृद्धिश्राद्धे तु यवसहितो विधिः, प्राक्प्रवणादिर्देशः, प्राङ्मुख उदङ्मुखो वा यजमानः, प्रागग्राः कुशाः। 'मातामहप्रभृतींस्तु एतेषामेव वामतः।' इत्यत्र यजमानस्य प्राङ्मुखत्वे पितृपिण्डानां वामतो दक्षिणस्यां दिशि मातामहादिपिण्डाः। तेन प्रदक्षिणोपचारोऽनुगृहीतो भवति। यदोदङ्मुखो यजमानो ददाति तदा पितृपिण्डानां प्राग्दिशि मातामहादीनां पिण्डदानम्। तत्रापि पितृपिण्डानां प्राग्दिगेव वामो भागः। एवं सति तत्रापि प्रदक्षिणमुपचारोऽनुगृहीतो भवति। अत एव पिण्डदाने पितॄणां ध्यानप्रस्तावे— 'आत्माभिमुखमासीना ज्ञानमुद्रा निरायुधाः। वसवः पितरो ज्ञेया रुद्रास्तत्र पितामहाः। पितुः पितामहाः प्रोक्ता आदित्या बर्हिषि स्थिताः॥' इति वाक्यात्प्राङ्मुखस्यस्य कर्तुराभिमुख्येनोपविष्टानां पितॄणां दक्षिणादिगेव वामभागो भवति। एवमुदङ्मुखस्य कर्तुराभिमुख्येनोपविष्टानां पूर्वदिगेव वामभागो भवति। तेन पितृपिण्डेभ्यो दक्षिणदिश्येव मातामहपिण्डदानमिति।

श्राप्र. ३०८

(८) अत्र मात्रादिपिण्डानां दक्षिणे पित्रादिपिण्डा देयाः, तद्दक्षिणे मातामहादिपिण्डाः, 'प्रदक्षिणमुपचारः' इति कात्यायनसूत्रादेः प्रादक्षिण्येनैव पिण्डानां दानसिद्धेरिति केचित्। तन्न, 'प्रागग्रेष्वथ...वामतः॥' इति परिशिष्टे विशेषस्मृतेः तेषां पित्राद्यवनेजनस्थानानां वामत उत्तरतः मातामहाद्यवनेजनस्थाने सिद्धे 'यथाऽवनिक्तं पिण्डान् ददाति' इति वचनात् तत्रैव पिण्डदाने प्रवामत्वस्यैव सिद्धेः। एवं च मात्रादिपिण्डापेक्षया पितृपिण्डानामपि प्रवामतैव, 'एकत्र निर्णीते' इति न्यायात्। न च प्रत्यङ्मुखोपविष्टानां पितॄणां तद्ब्राह्मणानां वा वामत इत्येव परिशिष्टवचनार्थः, तेन प्रादक्षिण्यलाभ एवेति वाच्यम्। तेषामित्यनेन पूर्वप्रक्रान्तानामास्तरणकुशानामवनेजनस्थानानां वा प्रत्यवमर्शौचित्यात्। किंच प्रत्यङ्मुखतायां प्रमाणाभावात्, 'प्राङ्मुखेदघृङ्मुखो दद्यात्, उदङ्मुखेभ्यः प्राङ्मुखो वा' इत्येव श्रुतेरिति।

संदी. ६२—६३

[1]सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च।
संयोज्य यवकर्कन्धुदधिभिः प्राङ्मुखस्ततः॥

[2]अवनेजनवत्पिण्डान् दत्त्वा बिल्वप्रमाणकान्।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्॥

(१) कास्मृ. १।४५; अप. १।२४९ पृ. ५१९ न्य यव (व्याक्षत); श्राक. २७४ अपवत्; स्मृच. ५०१ ततः (तथा); चश्रा. १५५७; मर. १७० सिच्य च (सिच्य तम्); श्राका. ५१५; श्राकौ. ५०८ पू.: ५१६; श्रात. ३१० खस्ततः (खस्थितः); श्रासौ. १२१: १२२ अपवत्; श्राप्र. ३०५; संग. ८५; संदी. ६२ (=) कर्कन्धु (कर्कन्धू) ततः (तथा) उत्त.

(२) कास्मृ. १।४६; अप. १।२४९ पृ. ५१९; श्राक. २७४ दत्त्वा (कृत्वा); स्मृच. ५०१; चश्रा. १५५७ दत्त्वा (दद्यात्); मर. १७० श्राकवत्; श्राकौ.

( १ ) पिण्डान् दत्त्वेत्यत्र मातृभ्यः पितृभ्यो मातामहेभ्यश्चेति शेषः । स्मृच. ५०२

( २ ) कुशोपरि अवनेजनं पिण्डपात्रक्षालनजलेन प्रत्यवनेजनं च वाजसनेयिभिर्न कर्तव्यम् । इतरत्सर्वं वाजसनेयिभिरपि कर्तव्यम् । मर. १७१

( ३ ) तदनन्तरं च सर्वस्मात्प्रकृतादन्नादन्नं गृहीत्वा व्यञ्जनैर्मिश्रयित्वा यवबदरदधिभिः संयोज्य प्राङ्मुखो बिल्वमात्रान् षट् पिण्डान् कृत्वाऽवनेजनवत् दत्त्वा पिण्डपात्रक्षालनजलेन पुनरवनेजयेत् । अत्र स्वोक्तप्राङ्मुखत्वेन आश्वलायनोक्तम् 'आभ्युदयिके युग्मा ब्राह्मणाः, समूला दर्भाः, प्राङ्मुखेभ्य उदङ्मुखो दद्यात्' इत्युदङ्मुखत्वं बाध्यम् । प्रकाश.

( ४ ) यवादिसंयोजनं फलातिशयार्थम् । अवनेजनवत् अवनेजनक्रमेण पिण्डान् दत्त्वा पुनरवनेजयेदित्यन्वयः । ¶ श्राकौ. ५२१

( ५ ) कर्कन्धुः बदरम् । तत्पात्रक्षालनेन पिण्डपात्रक्षालनेन । अवनेजयेदिति श्रुतेरवनेनिक्ष्वेति ब्रूयात् । श्रात. ३१८

( ६ ) उपसेचनम् उपरि प्रक्षेपः । श्राप्र. ३०५

( ७ ) अत्र पक्षप्राप्तायाः प्राङ्मुखतायाः प्राङ्मुख इत्ययमनुवादः, न पुनरुदङ्मुखतायाः परिसंख्या । संग. ८५

**[१]उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तरः ।**
**भवेदधश्चाऽऽचरणादधोऽधः श्राद्धकर्मसु ॥**

¶ शेषं प्रकाशगतम् ।

५१६ श्राकवत्; श्रात. ३१०; श्रासौ. १२१ पू.: १२२; श्राप्र. ३०५ श्राकवत्.

( १ ) कास्मृ. १।४७ उत्तरार्धे ( भवेदधश्चाधराणामधरश्राद्धकर्मणि ॥ ); अप. १।२४९ पृ. ५१९ श्चाऽऽच ( श्च क ) धोऽधः ( धरः ); श्राक. २७४ दानेन ( दानेऽपि ) श्चा... श्राद्ध ( श्चाधराणामधरश्राद्ध ); स्मृच. ५०१ अपवत्; चश्रा. १५५७ अपवत्; मर. १७० श्चा... श्राद्ध ( श्चाधराणामधरः श्राद्ध ); श्राकौ. ५१७; श्रात. ३१०

मूलादिक्रमेण पिण्डदानं स्तौति– उत्तरोत्तरेति । पिण्डानां मूलादिक्रमेण उपर्युपरि दानेन दाता उपर्युपरि भवति ऊर्ध्वगतिभागी भवति इति स्तुतिः । विपरीतदानेन त्वधोगतिः श्राद्धकर्मसु भवति । ‡ प्रकाश.

**[१]तस्माच्छ्राद्धेषु सर्वेषु वृद्धिमत्स्वितरेषु च ।**
**मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्वपेत् ॥**

( १ ) इषत्सक्तान् ईषल्लग्नान् । § श्राक. २७५

( २ ) मात्रादिषु पित्रादिषु च प्रत्येकं द्वौ द्वौ पिण्डौ देयौ । तत्र प्रथमः पिण्डः समन्त्रकनामगोत्रेण देयः, द्वितीयस्तूष्णीमिति शेषः( ? विशेषः ) प्राचीनप्रकरणोक्तोऽनुसंधेयः । $ स्मृच. ५०२

( ३ ) तस्माद्वृद्धिश्राद्धेष्वन्येषु च पार्वणादिषु मूलादिक्रमेण ईषल्लग्नांश्च पिण्डान्निर्वपेदिति । ¶ प्रकाश.

**[१]गन्धादीन्निक्षिपेत्तूष्णीं तत आचामयेद्द्विजान् ॥**

‡ श्राकौ., श्रात., श्राप्र. प्रकाशवत् ।

§ श्राप्र. श्राकवत् ।

$ शेषं श्राकवत् ।

¶ श्रात. प्रकाशवत् ।

त्तरः ( त्तरम् ) व्याख्यानावसरे तु 'त्तरः' इत्येव पाठः स्वीकृतः; श्रासौ. १२२ धोऽधः ( धरः ); श्राप्र. ३०७ अपवत्.

( १ ) कास्मृ. १।४८ सक्तांश्च ( सिक्तांश्च ); अप. १।२४९ पृ ५१९ श्राद्धेषु सर्वेषु ( सर्वेषु श्राद्धेषु ); श्राक. २७४; स्मृच. ५०१ ईष ( हीष ); चश्रा. १५५७; मर. १७०; श्राका. ५१५ ( = ); श्राकौ. ५१७; श्रात. ३१०; श्रासौ. १२२; श्राप्र. ३०७.

( २ ) कास्मृ. १।४९ दीन्निक्षि ( दीनि क्षि ) आचाम ( आवाह ); अप. १।२४९ पृ. ५१९ दीन्निक्षि ( दीनि क्षि ); श्राक. २७४ आचाम ( आवाह ); स्मृच. ५०१; चश्रा. १५५७ तत आ ( ततश्चा ); मर. १७१; श्राकौ. ५१७; श्रात. ३१० न्निक्षि ( न्निःक्षि ); श्रासौ. १२२ अपवत्; श्राप्र. ३०७.

(१) पिण्डेष्वमन्त्रकं गन्धपुष्पादीनर्पयित्वा ब्राह्मणाचमनं कारयेत्। ¶ प्रकाश.

(२) आचामयेत् लेपघर्षणप्रक्षालनादिकं कारयेत्। § श्रात. ३१८

**[1]अथाग्रभूमिमासिञ्चेत्सुसंप्रोक्षितमस्त्विति।**
**शिवा आपः सन्त्विति च युग्मानेवोदकेन च॥**

(१) पिण्डार्चनानन्तरं कर्तव्यविशेषस्तस्मिन्नेव दर्शितः— तद्वदिति। स्मृच. ५०२

(२) आचमनानन्तरं ब्राह्मणाग्रभूमिं सुसंप्रोक्षितमस्त्विति प्रोक्षयेत्। शिवा आप इत्यादिना युग्मानेव, नैकैकम्, उदकेन हस्ते आसिञ्चेत्। † प्रकाश.

(३) अग्रभूमिम्, ब्राह्मणस्येति शेषः, प्रकृतत्वात्तस्य। न तु पिण्डाग्रभूमिमिति व्याख्यानं युक्तम्, 'एषोऽन्यत्र स्मृतो विधिः' इत्यनेन पिण्डकृत्यं समाप्य अथेत्यनेन कर्मान्तरविधानात्। $ श्राकौ. ५२१

**[2]सौमनस्यमस्त्विति च पुष्पदानमनन्तरम्।**
**अक्षतं चारिष्टं चास्त्वित्यक्षतान्प्रतिपादयेत्॥**

(१) सौमनस्येति हस्ते पुष्पदानं कुर्यात्। अनन्तरमक्षतमित्यादिना यवान् दद्यात्। प्रकाश.

(२) दापयेदिति प्रयोजकनिर्देशस्तु परोपदेशपक्षे, अन्यद्वाराऽपि पार्वणवत् वृद्धिश्राद्धं कर्तव्यमित्युपदेशाय वा। § श्रात. ३१८

**[1]अक्षय्यं च ततः कुर्याद्दैवपूर्वं विधानतः॥**
**[2]अक्षय्योदकदानं च अर्घ्यदानवदिष्यते।**
**षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन॥**

(१) अर्घ्यजलदानवत् ज्येष्ठोत्तरकरयुग्मब्राह्मणकरे प्रत्येकं कुर्यादित्यर्थः। किंतु तन्नामगोत्रान्तोच्चारितषष्ठ्यैव कुर्यात्, न कदाचिदपि चतुर्थ्येति। 'षष्ठ्यैव नित्यम्' इति गोत्रनामान्ते संबुद्धिस्थाने षष्ठीं विधत्ते, 'न चतुर्थ्या कदाचन' इति तस्मै ते स्वधेति चतुर्थी-

---

¶ श्राकौ., श्राप्र. प्रकाशवत्।

§ शेषं प्रकाशगतम्।

† श्रात. प्रकाशवत्।

$ शेषं प्रकाशवत्।

(१) कास्मृ. १।५१ प्रोक्षि (प्रोक्ष); अप. १।२४९ पृ. ५१९ सुसंप्रो (सम्यक्प्रो); श्राक. २७४; स्मृच. ५०२ अशुद्धिबहुलः पाठः, म्हैसूरमुद्रिते पुस्तके (पृ. ४४५) 'तद्वद्द्विर्भूमिमासिञ्चेत्सुष्ठुप्रोक्षितमस्त्विति।' इति पूर्वार्धपाठः; चश्रा. १५५९ सुसंप्रो (सुसुप्रो) युग्मानेवो (युग्मान्यवो); मर. १७१; श्राकौ. ५१७ सुसंप्रो (सुसुप्रो) केन च (केन तु); श्रात. ३१० सुसंप्रो (सुसुप्रो); श्रासौ. १२२–१२३ श्राकौवत्; श्राप्र. ३०६ ग्रभू (ग्रे भू) सुसंप्रो (सुसुप्रो).

(२) कास्मृ. १।५२ अक्षतं (अक्षितं) पादयेत् (दापयेत्); अप. १।२४९ पृ. ५१९; श्राक. २७४ मनन्तरम् (मतः परम्) चास्त्वित्यक्ष (चास्त्विति चाक्ष); स्मृच. ५०२ अशुद्धिबहुलः पाठः; चश्रा. १५५९ मनन्तरम् (मतः परम्); मर. १७१; श्राकौ. ५१७; श्रात. ३१० तान्प्रतिपाद (तानपि दाप); श्रासौ. १२३; श्राप्र. ३०६.

§ शेषं प्रकाशवत्।

(१) चश्रा. १५५९ दैव (दैव); श्राम. ३०७ चश्रावत्, अस्य उत्तरार्धत्वेन 'षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन।)' इति पठितम्, परंतु सर्वत्र 'अक्षय्योदकदानम्' इत्यस्योत्तरार्धत्वेन तस्योपलम्भात् तत् तथैवास्माभिः संगृहीतम्; संग. ८९ हेमाद्रौ.

(२) कास्मृ. १।५३ च अर्घ्य (तु अर्घ); अप. १।२४९ पृ. ५२०; श्राक. २७४ अर्घ्य (अर्घ); चश्रा. १५५८; मर. १७१ दानं च (दानं तु) पू.; श्राका. ५१७ कास्मृवत्; श्राकौ. ५१३, ५१७ मरवत्: ५१४ निर्देशमात्रम्; श्रात. ३१० मरवत्; यजुःश्रात. ४९९ (=) मरवत्, पू.; श्रासौ. १२३ कास्मृवत्; श्राप्र. ३०७ उत्त.: ३०८ श्राकवत्; श्राम. ९१ अर्घ्य (अर्घ) नित्यं तत् (नियतं); सिन्धु. १७५१ नित्यं तत् (नियतं); संग. ८९ कास्मृवत्.

निषेधकमित्यपुनरुक्तिः । अत्र गोभिलीयः— 'गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि । गोत्रस्तु तर्पणे प्रोक्तः कर्ता एवं न मुह्यति ॥ सर्वत्रैव पितः प्रोक्तः पिता तर्पण-कर्मणि । पितुरक्षय्यदाने तु अक्षयां तृप्तिमिच्छता ॥ '। तथा— 'शर्मन्नर्घ्यादिके कार्ये शर्मा तर्पणकर्मणि । शर्मणोऽक्षय्यदाने तु पितॄणां दत्तमक्षयम् ॥ ' ।

प्रकाश.

(२) सामगानां तु गोभिलेन विशेषानुक्तत्वात् पार्वणवत् षष्ठ्यन्तेनैवाक्षय्यदानम् । एतदेव विवृतं छन्दोगपरिशिष्टे— 'अक्षय्योदक... कदाचन ॥' । अर्घ्यदानवदिति सर्वेषां ब्राह्मणानां करोपरि पङ्क्तिश्रेष्ठस्य करं कृत्वा यथाऽर्घ्यं दीयते तथाऽक्षय्योदकमपि सर्वकरोपरि पङ्क्तिज्येष्ठकरे एव देयम्, न तु पार्वणवत् पृथक् पृथगिति । तन्त्रतानिवृत्तिस्तु 'अर्घ्येऽक्षय्योदके च' इति वचनादस्त्येवेति । षष्ठ्यैव इति गोत्रनामान्ते संबुद्धिस्थाने षष्ठीविधानम् । न चतुर्थ्या इति चतुर्थ्यन्ततच्छब्दनिषेधः । एतेन 'अमुकशर्मन्नक्षय्यमिदं तुभ्यमस्तु' इति वाक्यं निरस्य 'अमुकशर्मणः सर्वं दत्तमिदमन्नपानादिकमक्षय्यमस्तु' इति वाक्यं दर्शितम् । अत एव गोभिले— 'शर्मणोऽक्षय्यकाले तु' इत्युक्तम् । नित्यमिति न केवलं प्रकरणात् नान्दीमुखे, पार्वणेऽपीत्यर्थः । अक्षय्यप्रश्नत्वेन स्वधाशब्दनिषेधः । न च 'अमुकगोत्रस्य नान्दीमुखस्य पितुरमुकशर्मणो दत्तेनानेनान्नपानादिना नान्दीमुखाः पितरः प्रीयन्ताम्' इति सामगानां वाक्यं केषांचिदादरणीयम्, गोभिले परिशिष्टे च 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यश्रुतत्वात्, नित्यमित्यनेन पार्वणवत् नान्दीमुखेऽप्युक्तत्वाच्च । यत्तु— 'अथाक्षय्योदकस्थाने दद्यात् क्षीरयवोदकम् ।' इति ब्रह्मपुराणं तत् फलातिशयार्थम्, 'अक्षय्योदकदानं तु' इति परिशिष्टवचनात् । श्राकौ. ५१३–५१४

(३) अर्घ्यदानवदिति ज्येष्ठोत्तरकरत्वातिदेशार्थम्, न तु तन्त्रतानिवृत्तिरतिदिश्यते, 'अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने । तन्त्रस्य विनिवृत्तिः स्यात्स्वधावाचन एव च ॥' इत्यनेन विधानात् । षष्ठ्यैव नित्यमिति गोत्रनामान्ते संबुद्धिस्थाने षष्ठीं विधत्ते, न चतुर्थीं कदाचनेति 'तस्मै ते स्वधा' इति मन्त्रस्थाने चतुर्थीनिषेधकमित्यपुनरुक्तिः । तेन 'ये चात्र त्वा' इति मन्त्रो न पाठ्यः । उत्तरार्धमिदं पार्वणविषयकमपि ।

‡ श्रात. ३१८–३१९

(४) यत्तु वृद्धिश्राद्धं प्रकृत्य 'अक्षय्योदक... कदाचन ॥' इति छन्दोगपरिशिष्टे कात्यायनेनाक्षय्योदकदानं षष्ठ्या विहितं तच्छन्दोगविषयम् । संग. ८९

**[1]प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः । पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत् ॥**

(१) अनन्तरं च 'सुसंप्रोक्षितमस्तु' इत्याद्यासु पञ्चसु प्रार्थनासु ब्राह्मणैः 'अस्तु, सन्तु' इत्याद्युत्तरे प्रोक्ते स्वधावाचनस्थानेऽर्घ्यपात्रीयपवित्राच्छादितान् पिण्डान् 'नान्दीमुखेभ्यः पितृभ्यः प्रीयन्ताम्' इत्युक्त्वा सिञ्चेत् । अनन्तरं न्युब्जीकृतं पात्रमुत्तानं कृत्वा युग्मानेवेत्यादि वक्ष्यमाणं कुर्यात् । गोभिलभाष्यकृता तु — "सुसंप्रोक्षितमस्त्वित्यादि स्वधावाचनान्तं कृत्वा कृतोत्तानपात्रः तत्पवित्राणि पिण्डानामुपरि दत्त्वा पिण्डान् 'ऊर्जं वहन्तीः' इति सिञ्चेत्" इति व्याख्यातम् ।

प्रकाश.

(२) प्रार्थनास्विति । 'सुसुप्रोक्षितमस्तु' इत्यादिषु, प्रतिप्रोक्ते 'अस्तु, सन्तु' इत्यादिप्रतिवचने कृते, अर्घ्यसंबन्धिपवित्राच्छादितान् पिण्डान् कृत्वा 'ऊर्जं वहन्तीः' इत्यनेन सिञ्चेत् । पवित्रान्तर्हितानित्यनेन स्वधावाचनं सूचितम् । तच्च पार्वणे प्रागुक्तम् । अनन्तरमुत्तानपात्रकृत् स्यादित्यर्थः । ¶ श्राकौ. ५३१

---

‡ श्राप्र. श्रातगतम् ।

¶ श्रात., श्राप्र. श्राकौगतम् ।

(१) कास्मृ. १।५४; अप. १।२४९ पृ. ५२०; श्राक. २७४; चश्रा. १५५९; श्राकौ. ५१७; श्रात. ३१०; श्रासौ. १२३ पात्र (पाद); श्राप्र. ३०७.

[1]युग्मानेव स्वस्तिवाच्यानङ्गुष्ठग्रहणं सदा ।
कृत्वा धुर्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः ॥

(१) धुर्यः पङ्क्तिमूर्धन्यः ।

‡ अप. १।२४९ पृ. ५२०

(२) युग्मानेव, नैकम्, दक्षिणादानेन स्वस्ति वाच्य, धुर्यस्य पङ्क्तिमूर्धन्यस्य ब्राह्मणस्यानङ्गुष्ठपाणिग्रहणं कृत्वा प्रणम्य ततोऽनुगच्छेत् । अत्र च दक्षिणा द्राक्षामलकादि । तथा ब्रह्मपुराणम्– 'द्राक्षामलकमूलानि यवांश्चाथ निवेदयेत् । तान्येव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा ॥' । मूलम्मार्द्रकादि निवेदयेच्छ्राद्धेष्विति । वृद्धौ च गोभिलीयैर्मातृश्राद्धं न कर्तव्यम्, 'न योषिद्भ्यः पृथग्दद्यात्' इति वक्ष्यमाणवचनात् गोभिलेनानुक्तत्वाच्च । अन्यैस्तु कर्तव्यमेव । तथा च शातातपः– 'मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥ त्रिष्वप्येतेषु युग्मांस्तु भोजयेद्ब्राह्मणाञ्शुचिः । प्रदक्षिणं तु सव्येन प्रदद्याद्देवपूर्वकम् ॥' इति । अनेन च मातृश्राद्धस्यापि सदैवत्वाभिधानात् वृद्धौ मातृश्राद्धमदैवमिति यत् कैश्चिदुक्तं तन्निरस्तम् । यत्तु मार्कण्डेयपुराणम्– 'वैश्वदेवविहीनं तु केचिदिच्छन्ति मानवाः ।' इति, तच्छाखिविशेषव्यवस्थितम् । अत एव लघुहारीतः– 'मातृश्राद्धं तु युग्मैः स्यात्सदैवं प्राङ्मुखैः पृथक् ।' इति ।

§ प्रकाश.

(३) सदा पार्वणे नान्दीमुखे च ।

$ श्राकौ. ५२१

‡ चश्रा., श्राप्र. अपवत् ।

§ श्रात. प्रकाशगतम् ।

$ शेषं प्रकाशगतम् ।

(१) कास्मृ. १।५५ अशुद्धिबहुलः पाठः; अप. १।२४९ पृ. ५२० वाच्यान (वाच्य अ); श्राक. २७४ अपवत्; स्मृच. ५०२ निर्देशमात्रम्; चश्रा. १५५९ वाच्यान (वाच्यम); श्राकौ ५१७; श्रात. ३१० धुर्यस्य (धूर्यस्य); श्रासौ. १२३ ततः (तथा); श्राप्र. १०७.

[1]एष श्राद्धविधिः कृत्स्न उक्तः संक्षेपतो मया ।
ये विदन्ति न मुह्यन्ति श्राद्धकर्मसु ते क्वचित् ॥

उपसंहरति– एषः प्रकृतः श्राद्धविधिः अल्पग्रन्थेन मया कृत्स्न उक्तः । ये इमं श्राद्धविधिं जानन्ति (ते) श्राद्धक्रियाविषयेषु न भ्राम्यन्ति । प्रकाश.

कातीयादिश्राद्धकल्पस्तुतिः

इदं शास्त्रं च गृह्यं च परिसंख्यानमेव च ।
वसिष्ठोक्तं च यो वेद स श्राद्धं वेद नेतरः ॥

श्रोतृप्रोत्साहनार्थं स्वग्रन्थं स्तौति– इदम् अस्मदुक्तं शास्त्रम्, गृह्यं गोभिलोक्तम्, परिसंख्यानाख्यं च ग्रन्थं स्वनामप्रसिद्धम्, वसिष्ठोक्तं छान्दोग्यगृह्यनामकं यो जानाति स श्राद्धं जानीते, नान्य इति । प्रकाश.

असकृदनुष्ठेयकर्मणां प्रथमप्रयोगात्पूर्वं सकृदेव नान्दीश्राद्धस्य कर्तव्यता, प्रधानकर्मनियमश्च

[2]असकृद्यानि कर्माणि क्रियेरन् कर्मकारिभिः ।
प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च ॥

(१) कास्मृ. १।५६–५७.

(२) कास्मृ. १।५८; अप. १।२४९ पृ. ५१६ प्रतिप्रयोगं (अतिप्रयोगं); श्राक. २७५ नैताः (नैव) मातरः (मातरं); स्मृसा. १०६ (असकृद्यानि कर्माणि क्रियन्ते कर्मकारिणा । प्रतिप्रयोगं नो कुर्युर्मातॄणां श्राद्धमेव हि ॥); गभा. ५०९; निप्र. २०१ क्रियेरन् कर्मकारिभिः (क्रियन्ते कर्मकारिणा); श्राकौ. ५२३ कारिभिः (कारिणा) नैताः (नैव); श्रात. ३१९ श्राकौवत्; श्रासौ. १२५ श्राकौवत्; श्राप्र. ३१२ नैताः (नैव); मुक्ता. ७५५; संम. ५ कारिभिः (कारिणा); श्राम. ८८ कारिभिः (कारिणः); सिन्धु. १७३८ नैताः (नैव) श्राद्धमेव च (सगणाधिपाः); संकौ. २६ क्रियेरन् (क्रियन्ते); आन. १४४ मेव च (कर्म च) शेषं संकौवत्; बाल. १।२५० पृ. ५६८; संग. ७६ संकौवत्; संर. १०४५ संकौवत्; संदी. ५८ संकौवत्.

[१]आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥
[२]नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥

(१) 'असकृद्यानि कर्माणि' इत्यस्यैव विषयविशेषे नियममाह– 'आधाने होमयोश्चैव' इत्यादिना । तेन सोमयागादौ प्रतिप्रयोगं श्राद्धावृत्तिः । नवयज्ञः आग्रयणम् । * श्राक. २७६

(२) वैदिककर्मसु प्रतिप्रयोगं श्राद्धावृत्तिप्रसक्तावाह कात्यायनः– असकृद्यानीति । गभा. ५०९

(३) कर्मादिषु च सर्वेषु मातृपूजा श्राद्धं चेत्युक्तम् । तत्र केषुचित्कर्मसु विशेषमाह– असकृद्यानीति । यानि कर्माणि कर्मकर्त्रा पुनः पुनः प्रतिदिनं प्रतिमासं प्रतिवत्सरं च क्रियन्ते श्रावण्याग्रहायण्यादीनि वैश्वदेवबलिकर्मदर्शपौर्णमासादीनि च, तेषु प्रथमप्रयोगे एव श्राद्धं मातृपूजा च न द्वितीयादिप्रयोगेष्वपि ।

असकृत्क्रियमाणमध्ये होमादिनवयज्ञान्तेषु विशेषमाह– आधान इति । आधाने अग्न्याधाने । सायंप्रातर्होमादिनवयज्ञान्तेषु कर्मसु न केवलं प्रतिप्रयोगम्, प्रतिकर्मापि श्राद्धं न कर्तव्यम्, किंत्वाधानादौ कृते श्राद्धे सर्वेष्वेव कृतं भवेत् । एवं चान्येषु श्रावण्यादिषु प्रतिकर्म श्राद्धमित्युक्तं भवति । नवयज्ञः आग्रयणेष्टिः । शेषं सुगमम् । एवं ज्योतिष्टोमपशुयागादिकमपि ये प्रत्यब्दं कुर्वन्ति तैरपि प्रथमप्रयोगे एव प्रतिकर्मादौ श्राद्धं कर्तव्यम्, असकृदिति वचनात् । ‡ प्रकाश.

(४) चकारात् वसुधारादानं च । निरग्निना वैश्वदेवे कृते श्राद्धे बलिकर्मणि न कर्तव्यम्, तुल्यन्यायात् । * श्राकौ. ५२३

(५) होमयोरित्यनेनाऽऽधानसमभिव्याहारात् द्विवचनाच्च सायंप्रातरग्निहोत्रहोमावुक्तौ । मुक्ता. ७५५

(६) प्रधानावृत्त्या प्राप्तायाः नान्दीश्राद्धावृत्तेरपवादः कर्मप्रदीपे– असकृदिति । नवयज्ञः नवान्नेष्टिः । पूर्वश्लोकस्थकर्मशब्दस्य उत्तरश्लोकपरिगणितेषु कर्मसु उपसंहारः, तेनापरिगणितज्योतिष्टोमादिषु भवत्येव प्रतिप्रयोगं वृद्धिश्राद्धमिति तातचरणाः । होमादिनवयज्ञपर्यन्तेषु न पृथक् श्राद्धं किंत्वाधानादौ कृतमेव श्राद्धमुपकरोतीति केचित् । § संम. ५–६

(७) अत्र प्रथमश्लोकोऽपराभ्यामाधानादीनां केषांचिदेवावृत्तावपि नान्दीश्राद्धं नाऽऽवर्तेत इत्येतत्परतया व्यवस्थाप्यते । अत एवाऽऽपस्तम्बकल्पानुसारियाज्ञिकानां विच्छिन्नाधाने नान्दीश्राद्धाचारश्चिन्त्यः । † संकौ. २६

(८) आधानस्यासकृत्क्रियमाणत्वं प्रतिपुनराधाननिमित्तं कर्तव्यत्वादिति वेदितव्यम् । ¶आन. १४४

---

* निप्र., सिन्धु. श्राकवत् ।

(१) कास्मृ. १५९ ; अप. १२४९ पृ. ५१५ ; श्राक. २७५ ; स्मृसा. १०७ पूर्वार्धे (आधानहोमयोश्चैव विश्वेदेवास्तथैव च ।) ; निप्र. २०१ धाने हो (धानहो) ; श्राकौ. ५२३ निप्रवत् ; श्रात. ३१९ ; श्रासौ. १२५ ; श्राप्र. ३१२ ; मुक्ता. ७५५ ; श्राम. ८८ निप्रवत् ; संम. ५ मासे (मासां) शेषं निप्रवत् ; सिन्धु. १७३८ पौर्ण (पूर्ण) ; संकौ. २६ धाने होम (धानसोम) पौर्ण (पूर्ण) ; आन १४४ सिन्धुवत् ; संग. ७६ पू. ; संर. १०४५ धाने हो (धानहो) पौर्ण (पूर्ण).

(२) कास्मृ. १६० ; अप. १२४९ पृ. ५१५ एकमेव (एवमेव) ; श्राक. २७५ यज्ञज्ञा (यज्ञे च) ; स्मृसा. १०७ वं मनीषिणः (व महर्षयः) ; निप्र. २०१ यज्ञज्ञा (यज्ञाङ्गा) पू. ; श्राकौ. ५२३ यज्ञे च (यज्ञेषु) ; श्रात. ३१९ ; श्रासौ. १२५ ; श्राप्र. ३१२ ; मुक्ता. ७५५ यज्ञज्ञा (यज्ञादौ) न्त्येवं (न्त्येव) ; श्राम. ८८ ; संम. ६ ; सिन्धु. १७३८ ; संकौ. २६ न्त्येवं (न्त्येव) ; आन. १४४ ; संग. ७६ यज्ञे च (यज्ञेषु) ; संर. १०४५.

‡ श्रात. प्रकाशवत् ।

* शेषं प्रकाशवत् ।

§ श्राम. संमवत् ।

† संर. संकौवत् प्रकाशवच्च ।

¶ शेषं मुक्तावत् ।

(९) आधानभेदाः नित्यनैमित्तिककाम्यरूपाः ।
¶ संग. ७६

कर्मविशेषेषु नान्दीश्राद्धनिषेधः

**'नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।**
**न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥**

(१) प्रोषितागतकर्मसु । 'प्रोष्य एत्य गृहानुपतिष्ठते, पुत्रं दृष्ट्वा जपति' इत्यादिविहितम् । श्राक. २७६

(२) सत्यपि वैदिककर्मत्वेऽष्टकादिषु न श्राद्धं कर्तव्यमित्याह कात्यायनः— नाष्टकास्विति ।
गभा. ५०९

(३) छन्दोगपरिशिष्टे 'नाष्टकासु ...' इति प्रतिषेधोऽत्यन्ताप्राप्तविषयत्वान्नित्यानुवादः । अत एव यथाप्राप्तानुवादत्वाज्जातकर्मणि तिलपूर्णपात्रश्राद्धविधानादन्नश्राद्धप्रतिषेधात् तस्यानुवादः, 'इलामतितिष्ठया संतिष्ठते' इत्युक्ते 'अनूयाजान् यजन्ति' इत्यस्य नित्यानुवादत्ववत् । तथा— 'विवाहादिः कर्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते । विवाहादावेकमेवात्र कुर्याच्छ्राद्धं नाऽऽदौ कर्मणः कर्मणः स्यात् ॥' इति निषेधोऽपि नित्यानुवाद एव । निप्र. २००

(४) 'कर्मादिषु' इत्येतस्यापवादमाह— नाष्टकास्विति । अष्टकाकर्मसु त्रिषु श्राद्धं न भवेत् पार्वणादिश्राद्धे च । आसन्नप्रसवायाः सुखप्रसवार्थं विहिते सोष्यन्तीहोमे च 'या तिरश्ची' इत्यादिमन्त्रके सूत्रोक्ते, 'व्रीहियवौ पेषयेत्तयैवाऽऽवृता यथा शुङ्गाम् । दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याऽभिसंगृह्य कुमारस्य जिह्वां निमार्ष्टीयमाज्ञेदम्' इति सूत्रोक्तजातकर्मणि "विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत् 'अङ्गादङ्गात्संभवसि' इति । 'पशूनां त्वा हिङ्कारेणाभिजिघ्रामि' इत्यभिघ्राय यथार्थम् । एवमेवापरेषाम् । यथाज्येष्ठं यथोपलम्भं वा । स्त्रियास्तूष्णीं मूर्धन्यभिघ्राणम्" इति सूत्रोक्तप्रोषितागतपितृकर्तव्यकर्मसु श्राद्धं नेष्यते मुनिभिः ।
§ प्रकाश.

(४) श्राद्धे गृह्योक्तान्वष्टकादिश्राद्धे पिण्डपितृयज्ञश्राद्धे च । शोष्यन्तीहोमः । स च शोष्यन्तीं शूलायन्तीमासन्नप्रसवां ज्ञात्वा होमः । 'सु प्रसवे इत्यस्माद्धातोः' इति भट्टभाष्याद्दन्त्यादिः । अथ(? अत्र) जातकर्मणि श्राद्धनिषेधात् तत्र तद्विधायकं वचनं शाख्यन्तरीयम्, किंतु पुत्रजन्मनिमित्तकं पुत्रमुखदर्शनार्थं च श्राद्धं कर्तव्यम् । यथा मार्कण्डेयपुराणे— 'नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयार्थकम् । पुत्रजन्मनि तत् कार्यं जातकर्मसमं बुधैः ॥' । ¶ श्रात. ३२०

(५) अत्र च नान्दीश्राद्धस्य न जातकर्माङ्गत्वम्, 'नाष्टकासु... कर्मसु ॥' इत्यनेन जातकर्मणि तस्य पर्युदस्तत्वात् । किंतु 'नामकर्मणि बालानां चूडाकर्मादिके तथा । सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ॥' इत्यनेन विहितस्य मुखदर्शननिमित्तकस्य श्राद्धस्य कालार्थसंबन्धः । यत्तु 'जन्मन्यथोपनयने विवाहे पुत्रकस्य च । पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ॥' इति ब्रह्मपुराणे मुखदर्शनवत्पुत्रजन्मनोऽपि पृथक् नान्दीश्राद्धनिमित्तत्वं प्रतीयते तत् पुत्रमुखदर्शनपदस्य जन्मोपलक्षकत्वात्न श्राद्धान्तरविधायकमिति केचित् । छन्दोगपरिशिष्टटीकाकारस्तु पृथगेव जन्ममुखदर्शनयोर्निमित्तत्वमाह । अस्मिन्

---

¶ शेषं प्रकाशगतम् ।

(१) कास्मृ. ११६१ ; अप. ११२४९ पृ. ५१५ पू. ; श्राक. २७५ ; स्मृसा. १०७ पू. ; गभा. ५०९ ; निप्र. २०० ; श्राकौ ४८९ परिशिष्टम्, उत्त. : ५२३ ; श्रात. ३१९ ; श्रासौ. १२५ ; संप्र. १९१ (=) : ९९१ पू. ; श्राप्र. २९०, ३१३ ; मुक्ता. ७५५ नाष्टकासु (नाष्टकादौ) पू. ; श्राम. ८७ : ८८ निर्देशमात्रम् ; संम. ५ ; सिन्धु. १७३९ ; संकौ. २६ ; आन. १४४ मुक्तावत्, पू. ; संग. ७६–७७ ब्रह्मपुराणे ; कृभ. १७४० निर्देशमात्रम् ; संर. १०४६.

§ श्राकौ., श्राप्र., श्राम., संम. प्रकाशगतम् ।

¶ शेषं प्रकाशवत् ।

मते च तन्त्रेणैव श्राद्धद्वयानुष्ठानं बोध्यम्। तच्चाऽऽमेन कार्यम्। संप्र. १९१

(६) कात्यायनोक्तस्य श्राद्धस्य पाकप्राधान्यात्तस्य च 'जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि।' इति निषेधान्न जातकर्मणि नान्दीश्राद्धमित्याशार्कः। 'आमान्नेन वा कार्यम्' इत्यपि तेनैवोक्तम्। गौडास्तु– जातकर्मण्येव निषेधः। पुत्रजन्मनिमित्तकं तु कार्यमेव, 'जन्मन्यथोपनयने' इत्युक्तेः, 'नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम्। पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैः॥' इति मार्कण्डेयपुराणाच्चेत्याहुः। हारलतायां श्राद्धविवेके चैवम्। एतेन– जातकर्मणि कालान्तरे श्राद्धनिषेधः, न पुत्रजन्मदिने, इति वाचस्पतिमतं परास्तम्। ¶ सिन्धु. १७३९–१७४०

[आशार्कमतमाह– कात्यायनोक्तस्येति। एतन्मते कर्माङ्गं नान्दीश्राद्धम्। तथा च तल्लोपेऽपि न प्रधानलोपः। वृद्धिवदिति दृष्टान्तासामञ्जस्यं जातकर्मनिषेधवैयर्थ्यं चेत्यरुचिः। स्वमतमाह– गौडास्त्विति। नैमित्तिकमिति। अत्र नैमित्तिकजातकर्मपदाभ्यां पुत्रजन्मनिमित्तकमेव श्राद्धम्, न तु जातकर्माङ्गम्, 'न सोष्यन्तीजातकर्म' इति निषेधात्। कृभ.]

(७) अत्र द्वितीयः पादो हेतुवन्निगदतया प्रथमशेषः। प्रसवात्पूर्वं विहितं कर्म सोष्यन्तीकर्म। जातकर्माङ्गत्वेन निषेधस्तु छन्दोगमात्रविषयः, तत्परिशिष्टगतत्वादिति समयोद्योतः। तदाऽपि वृद्धिनिमित्तकं पुरुषार्थं ततः पूर्वं भवत्येव वृद्धिश्राद्धम्।

† संकौ. २६

(८) अष्टकामासिश्राद्धयोः संस्थात्वेन प्रथमारम्भे नान्द्यां प्राप्तायां स एव– 'नाष्टकादौ ... मिष्यते॥' इति। आन. १४४

---

¶ शेषं प्रकाशवत्।

† संर. संकौवत्।

विवाहात्प्रागनुष्ठितस्य नान्दीश्राद्धस्य विवाहादिगर्भाधानान्तकर्मगणोपकारकत्वम्

$ [1]विवाहादिः कर्मगणो य उक्तो
गर्भाधानं शुश्रुम यस्य चान्ते।
विवाहादावेकमेवात्र कुर्या-
च्छ्राद्धं नाऽऽदौ कर्मणः कर्मणः स्यात्॥

(१) कर्मगणः गृहप्रवेशचतुर्थीकर्मादिः।

श्राक. २७६

(२) निषेककर्मणि वृद्धिश्राद्धाभावः, विवाहादिरिति छन्दोगपरिशिष्टोक्तेः। वृद्धिश्राद्धाभावात् मातृपूजावसोर्धारायुष्यमन्त्रजपानामप्यभावः, तत्पूर्वापरभावस्य नियमात्। ननु राजगृहादिषु शिष्टैरपि वृद्धिश्राद्धं कुतः कार्यमिति चेत्। उच्यते– अस्मत्पितामहकृष्णबृहत्पण्डितमहापात्रैस्तु(? त्राणि तु) नीतिरत्नाकरे नान्दीमुखश्राद्धस्य गर्भाधाने विहितप्रतिषिद्धत्वाद्विकल्प इति तत्करणपक्षोऽपि संगच्छते इति समादधुः। वस्तुतस्तु वृद्धिश्राद्धाभावेऽपि 'निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च॥' इति विष्णुपुराणोक्तेः, तथा भविष्योक्तेश्च कर्माङ्गश्राद्धं तत्। (तत्र) 'कर्माङ्गं वृद्धिवत्कृतम्' इति पारस्करोक्तेर्वृद्धिश्राद्धेतिकर्तव्यता। अत एव हरिहरभाष्यपद्धतौ मातृपूजापूर्वकं स्वयमाभ्युदयिकं कृत्वेत्युक्तम्। शिष्टब्राह्मणानां च सोमादिष्वपि कर्माङ्गश्राद्धकर्मणः समाचाराभावान्नात्रापि तत्करणमिति सिद्धान्तः। गप. ४७४–४७५

---

$ अस्य श्राद्धक्रियाकौमुदीव्याख्यानं 'निषेककाले सोमे' इति भविष्यपुराणीयश्लोकव्याख्याने द्रष्टव्यम्।

(१) कास्मृ. १।६२ अशुद्धिबहुलः पाठः; अप. १।२४९ पृ. ५१५ शुश्रुम यस्य (यस्य शुश्रुम); श्राक. २७५ यस्य (यः स); निप. २२९ (=) (शुश्रुम यस्य०); गप. ४७४ कर्मणः कर्मणः (कर्मणः); निप्र. २०१; श्राकौ. ४८५ परिशिष्टम्: ५२४; उत. २३१; श्रात. ३१९–३२०; संत. ९०९ हादिः क (हादिक); श्रासौ. १२५ कर्मणः (कर्मणि); श्राप्र. ३१२ शुश्रुम (शुश्रुमो); सिन्धु. १७३९ श्राप्रवत्; कृभ. १७४० द्वितीयपादमात्रम्.

(३) विवाह आदिर्यस्य, 'दक्षिणेन पाणिना उपस्थमभिमृशेद्विष्णुर्योनिं कल्पयत्वित्येतयर्चा गर्भं धेहि सिनीवालीति च' इति सूत्रोक्तं गर्भाधानं चान्ते यस्य कर्मगणस्य चतुर्थीहोमसमशनीयचरुहोमगृहप्रवेशयानारोहणचतुष्पथामन्त्रणाक्षभङ्गसमाधानार्थहोमादिरूपस्य श्रुतवन्तः स, अत्र कर्मगणे विवाहादौ एकमेव श्राद्धं कुर्यात्, न प्रतिकर्मादौ। एकेनैव कृतेन श्राद्धेन सर्वाण्येतानि श्राद्धवन्ति भवन्तीति। ‡ प्रकाश.

(३) अन्तशब्दोऽत्र गणस्यावयवार्थः, दशान्तः पट इतिवत्। समीपार्थत्वे उपलक्षणं स्यात्। ततश्च विशेषणोपलक्षणसंदेहे विशेषणत्वेन ग्रहणम्, कार्यान्वितत्वात्। एतच्च छन्दोगपरम्। अत एव भवदेवभट्टेनापि गर्भाधाने आभ्युदयिकं न लिखितम्। अन्यवेदिभिस्तु 'निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च॥' इति भविष्यपुराणे निषेककाले गर्भार्थशुक्राधानदिने श्राद्धं कर्माङ्गमित्यनेन विहितमाभ्युदयिकं कर्तव्यमिति। तेषां श्राद्धानन्तरं निषेकविधानात् 'श्राद्धे नियुक्तः' इत्यादिविष्णुपुराणोक्तनिन्दा एतदितरश्राद्धपरा। ¶ श्रात. ३२१–३२२

**सकृदनुष्ठितनान्दीश्राद्धस्य गोनिष्कालप्रवेशयोरुपकारकत्वम्**

**'प्रदोषे श्राद्धमेकं स्याद्गोनिष्कालप्रवेशयोः।**
**न श्राद्धं युज्यते कर्तुं प्रथमे पुष्टिकर्मणि॥**

'गाः प्रकाल्यमाना अनुमन्त्रयेत इमा मे विश्वतो वीर्य इति। प्रत्यागता इमा मधुमतीर्मह्यम् (इति)' (गोगृ. ३।६।१,२) इति गोनिःसारणप्रवेशनयोः सूत्रोक्तयोः प्रवेशादौ प्रदोषे श्राद्धं तन्त्रेणैकं भवेत्, न च निष्कालनेऽपि पृथगिति। 'पुष्टिकामः प्रथमजातस्य वत्सस्य प्राङ्मातुः प्रलेहनाज्जिह्वया ललाटमुल्लिह्य निगिरेत् गवां श्लेष्मासीति। पुष्टिकाम एव संप्रजातासु निशायां गोष्ठेऽग्निमुपसमाधाय विलयनं जुहुयात् संग्रहण संगृहाणेति। पुष्टिकाम एव संप्रजातास्वौदुम्बरेणासिना वत्समिथुनयोर्लक्षणं करोति' (गोगृ. ३।६।३–५) इति पुष्टिकर्मत्रये सूत्रोक्ते प्रथमे पुष्टिकर्मणि श्राद्धं कर्तुं न युक्तम्। अपरपुष्टिकर्मद्वये श्राद्धं कर्तव्यं भवतीति। * प्रकाश.

**नान्दीश्राद्धस्य प्रतिप्रयोगमनुष्ठानाननुष्ठानयोर्व्यवस्था**

**'हलाभियोगादिषु तु षट्सु कुर्यात्पृथक् पृथक्।**
**प्रतिप्रयोगमन्येषामादावेकं तु कारयेत्॥**

'अथातो हलाभियोगः। पुण्ये नक्षत्रे स्थालीपाकं श्रपयित्वा एताभ्यो देवताभ्यो जुहुयादिन्द्राय मरुद्भ्यः पर्जन्यायाशन्यै भगाय। सीतामाशामरडामनघां च यजेत। एता एव देवताः सीतायज्ञखलयज्ञप्रवपणप्रलवनपर्ययणेषु' (गोगृ. ४।४।२६–२९) इति सूत्रोक्तेषु हलाभियोगादिषु षट्सु एकैककर्मादौ पृथक् पृथक्, एकैककर्मणः प्रतिप्रयोगं च श्राद्धं कुर्यात्। अन्येषां नवयज्ञश्रावणीकर्मादीनामादावेकं कारयेत्, न तु प्रतिप्रयोगम्। हलाभियोगः हलस्याऽऽभिमुख्येन योजनं कृष्यारम्भ इत्यर्थः। सीतायज्ञः पक्वेषु धान्येषु कृष्टक्षेत्रमध्ये। खलयज्ञः खले। प्रवपणं बीजवपनम्। प्रलवनं धान्यच्छेदनम्। पर्ययणं धान्यानां खलाद्गृहानयनम्। * प्रकाश.

---

‡ श्राकौ., उत., श्राप्र., सिन्धु. प्रकाशगतम्।

¶ शेषं प्रकाशगतम्। संत. श्रातवत्।

(१) कास्मृ. १।६३ निष्काल (निष्कान्त?) पुष्टि (तुष्टि?); श्राक. २७५ निष्काल (निष्कास); निप्र. २०१; श्राकौ. ५२४ निष्काल (निष्काम); श्रासौ. १२५ निष्काल (निष्काश); श्राप्र. ३१२–३१३ निष्काल (निष्कम).

* श्राकौ., श्राप्र., प्रकाशगतम्।

(१) कास्मृ. १।६४ मन्येषा (मप्येषा); श्राक. २७५ हलाभि (हलादि) षु तु (षु च) वेकं तु (वेकत्र); निप्र. २०१ षट्सु (षट्कं) पू.; श्राकौ. ५२५ तु षट्सु (षट्सु श्राद्धं) वेकं तु (वेकं च); श्रासौ. १२५ वेकं तु (वेकं च); श्राप्र. ३१३ कुर्यात् (कर्म).

कर्मविशेषेषु नान्दीश्राद्धस्य निषेधः

**'बृहत्पत्रक्षुद्रपशुस्वस्त्यर्थं परिविष्यतोः ।**
**सूर्येन्द्वोः कर्मणी ये तु तयोः श्राद्धं न विद्यते ॥**

(१) अनयोः (निष्क्रमणाङ्गभूतयोः) तु चन्द्र-सूर्यदर्शनयोराभ्युदयिकं श्राद्धं नास्ति । यथा– 'सूर्येन्द्वोः कर्मणी ये च तयोः श्राद्धं न विद्यते ।' इति छन्दोग-परिशिष्टे । * ब्रक. ९२

(२) अत्र 'सूर्येन्द्वोः कर्मणी ये च तयोः श्राद्धं न विद्यते ।' इति छन्दोगपरिशिष्टात् छन्दोगानां निष्क्रमणे वृद्धिश्राद्धं नास्तीति कल्पतरुः । $ गभा. १७२

(३) 'वृक्ष इवेति पञ्चर्चः' इति प्रकृते, 'द्विती-यया आदित्ये परिविश्यमानेऽक्षततण्डुलाञ् जुहुयाद्बृह-त्पत्रस्वस्त्ययनकामः । तृतीयया चन्द्रमसि तिलतण्डुलान् क्षुद्रपशुस्वस्त्ययनकामः' (गोगृ. ४।५।२९,३०) इति सूत्राभ्यां परिविशति सूर्ये हस्त्यश्वादिबृहद्वाहनस्वस्त्ययना-र्थम्, चन्द्रे परिविशति अजमेषादिक्षुद्रपशुस्वस्त्ययनार्थं होमाख्यकर्मद्वयमुक्तम् । तयोः श्राद्धं नास्तीति ।
¶ प्रकाश.

(४) न च 'बृहत्पत्रक्षुद्रपशुस्वस्त्यर्थं परिविश्यतोः । सूर्येन्द्वोः कर्मणी ये तु तयोः श्राद्धं न विद्यते ॥' इति छन्दोगपरिशिष्टाच्चान्द्रकर्मत्वेन श्राद्धपर्युदासः कल्पतरु-प्रभृतिभिरुक्तो युक्त इति वाच्यम्, पूर्वार्धानवलोकनात् ।
$ संत. ९२०

(५) यद्यपि 'सूर्येन्द्वोः कर्मणी ये च तयोः श्राद्धं न विद्यते ।' इति कातीयस्मरणान्नात्र नान्दीश्राद्धमिति कल्पतरुणोक्तं तथाप्याश्वलायनशाखिभिरिच्छयाऽनुष्ठेयम्, 'अन्यैः षोडशसंस्कारश्रावण्यादिष्वपीष्यते ।' इति कारिकोक्तेः । संकौ. १०७

**'न दशाग्रन्थिके नैव विषवद्दष्टकर्मणि ।**
**कृमिदष्टचिकित्सायां नैव शेषेषु विद्यते ॥**

(१) एष्वपि निषेधो नित्यानुवाद एव ।
निप्र. २०१

(२) अपरमपवादमाह– नेति । 'प्रतिभयेऽध्वनि वस्त्रदशानां ग्रन्थीन्बध्नीतोपेत्य वसनवतः स्वाहाकारा-न्ताभिः' (गोगृ. ४।९।६) इत्यनेन सूत्रेण वर्त्मनि तस्करादिभयेषु 'अन्नं वा एकच्छन्दस्यम्' (गोगृ. ४।९।२) इत्यादिऋक्त्रयेण प्रकृतेन स्वाहान्तेन दशासु ग्रन्थित्रय-बन्धनमुक्तम् । तथा, 'मा भैषीर्मा मरिष्यसीति विषवता दष्टमद्भिरभ्युक्षन् जपेत्' (गोगृ. ४।९।१२) 'हतस्ते अत्रिणा क्रिमिरिति क्रिमिमन्तं देशम् (अद्भिः) अभ्युक्षन् जपेत्' (गोगृ. ४।९।१४) इति सूत्राभ्यां विषचिकित्सा चोक्ता । तदेतेषु कर्मसु एतदनन्तरोक्तेषु अर्हणीयर्त्विगा-दीनां पाद्यार्घविष्टरमधुपर्कदानादिषु न श्राद्धमस्तीति ।
* प्रकाश.

---

* संप्र. ब्रह्मचारिकल्पतरोरनुवादः ।

$ सिन्धु., संग., संव. गभावत् ।

¶ श्राकौ. श्राप्र., प्रकाशगतम् ।

(१) कास्मृ. १।६५ ; ब्रक. ९२ तु (च) उत्त. ; श्राक. २७५ ; गभा. १७२ तु (च) उत्त. ; निप्र. २०० बृहत्प (बृहत्स) स्वस्त्यर्थं (पुष्ट्यर्थं) विष्य (विश्य) तु (च) ; श्राकौ. ५२५ ; संत. ९२० विष्य (विश्य) ; श्रासौ. १२५ विष्यतोः (वेशतोः) ; संप्र. २५६ तु (च) उत्त. ; श्राप्र. ३१३ ; सिन्धु. ९१२, १७२७ तु (च) उत्त ; संकौ. १०७ तु (च) उत्त. ; संग. ५७१ तु (च) उत्त. ; संव. ७३ तु (च) उत्त.

$ शेषं परिशिष्टप्रकाशानुवादः । पूर्वार्धोद्धारस्तु न युक्तः ।

* श्राकौ., श्राप्र. प्रकाशवत् ।

(१) कास्मृ. १।६७ ; श्राक. २७५ ; निप्र. २०१ ; श्राकौ. ५२५ कृमि (क्रिमि) ; श्रासौ. १२५ ; श्राप्र. ३१३.

सकृत्कृतस्य मातृकापूजनस्य नान्दीश्राद्धस्य च कर्मगणोपकारकत्वम्

**§[1]गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।**
**सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥**

नान्दीश्राद्धस्य मातृकापूजनव्याप्यत्वं तद्व्यापकत्वं च

**[2]यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः ॥**

जीवत्पितृकस्य श्राद्धानधिकारः, जीवन्तमतिक्रम्य श्राद्धदाननिषेधः

**[3]सपितुः पितृकृत्येषु अधिकारो न विद्यते ।**
**न जीवन्तमतिक्रम्य किंचिद्द्यादिति श्रुतिः ॥**

(१) पितृकृत्येषु श्राद्धेषु पितामहादिसंबन्धे(? न्धि)ष्वित्यर्थः । § स्मृच. ३३८

(२) अयं विशेषः आभ्युदयिकव्यतिरिक्तविषयः । एवं मातामहादौ बोद्धव्यम् । स्मृसा. ९७

(३) एतच्च वृद्धिश्राद्धं जीवत्पितृकेणापि कार्यमित्याह छन्दोगपरिशिष्टम्– सपितुरिति । पितृकृत्येषु पिण्डपितृयज्ञपार्वणादिषु जीवज्जनकस्याधिकारो नास्ति । हेतुमाह– न जीवन्तमिति । सपितुरित्यत्र पितृपदमधिकारि पितृपरम्, तेन पतिते प्रव्रजिते वा अचिकित्स्यरोगजरादिना अक्षमे वा पितरि जीवत्यपि पितृकृत्येऽधिकारोऽस्ति । अत एव तत्रैव परिशिष्टम्– 'ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते । व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥' । श्राकौ. ५५२

(४) 'जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाऽखिलम् ।' 'सपितुः पितृकृत्येषु अधिकारो न विद्यते ।' इत्यादिवचनैर्जीवत्पितृकस्य श्राद्धं निषिद्धमेव । एवं च जीवत्संन्यासिपतितपितृकयोरपि निषेधप्रवृत्तेः श्राद्धेऽनधिकारात्तत्र देवताविधानं नोपपद्येतेत्यतः सर्वेऽप्यमावास्यादिश्राद्धविधयः जीवदजीवत्पितृकसाधारणा एव स्वीकार्याः । तत्र जीवति पितरि दर्शश्राद्धादिकं पित्रादिपार्वणदेवताभावादभ्युदितेष्ट्यावुपांशुयाजवल्लुप्यते । एतस्यैव 'जीवत्पिता नैव कुर्यात्' इत्यादि 'सपितुः पितृकृत्येषु' इत्यादि चानुवादकम् । वैधदेवताप्राप्तौ पुनः प्रवर्तन्ते इति क्रमेण जीवदजीवत्पितृकसाधारण्यमिति । कृभ. १७६०–१७६१

पितामहमात्रजीवने प्रपितामहमात्रजीवने च श्राद्धदेवतानिर्णयः

**[1]पितामहे ध्रियमाणे पितुः प्रेतस्य निर्वपेत् ।**
**पितुस्तस्य च वृत्तस्य जीवेच्चेत्प्रपितामहः ॥**

(१) तस्य च वृद्धस्य इत्यनेन पितामहः परामृश्यते । श्राक. २३९

(२) मृतपितृकस्य तु जीवत्यपि पितामहादौ सर्वेषु पितृकृत्येष्वधिकारमाह– पितामह इति । ध्रियमाणे जीवति प्रेतस्य मृतस्य पितुरेव निर्वपेत्, न तु जीवन्तं पितामहमति प्रपितामहस्यापीति । यथा हारीतः– 'पितामहे सजीवे वै पितर्येव समापयेत् ।' । वृत्तस्य मृतस्य तस्य पितामहस्य पितुश्चोभयोरेव निर्वपेत् । श्राकौ. ५५२–५५३

---

$ अस्य अर्धत्रयस्य व्याख्यानादिकं मातृकापूजने (संका. पृ. १६९९–१७०१) द्रष्टव्यम् ।

§ प्रपा. स्मृचवत् ।

(१) कास्मृ. १।६६ शेषः स्थलादिनिर्देशः मातृकापूजनप्रकरणे द्रष्टव्यः ।

(२) कास्मृ. १।६८ शेषः स्थलादिनिर्देशः मातृकापूजनप्रकरणे द्रष्टव्यः ।

(३) कास्मृ. २।९३ ; श्राक. २३९ पितृ (पिण्ड) ; स्मृच. ३३८ इति श्रुतिः (श्रुतेरिति) ; स्मृसा ९७ (=) अधिकारो न विद्यते (नाधिकारः कथंचन) पू. ; प्रपा. २० सपितुः (स्वपितुः) ; श्राका. ५१६ (=) ; गप. ३३१ पू., विष्णुः ; श्राकौ. ५५२ कृत्येषु (कार्येषु) ; श्राप्र. १५ पू : १७ (=) (न जीवन्तमतिक्रम्य किंचिद्दद्यात्) एतावदेव ; सिन्धु. १७५६ पू. ; संकौ. २७ ; बाल. १।२५० पृ. ५७३ अधि (स्वधि) श्रुतिः (श्रुतेः) ; पुम. ३७८–३७९ ; कृभ. १७४४, १७६१ (=) पू.

(१) कास्मृ. २।९४ पितामहे ध्रियमाणे (पितामहो ध्रियते च) जीवेच्चेत् (जीवेच्च) ; श्राक. २३९ वृत्तस्य जीवेच्चेत् (वृद्धस्य जीवेच्च) ; श्राकौ. ५५२ ; सिन्धु. १७६२ ; बाल. १।२५० पृ. ५७६.

(३) यत्तु छन्दोगपरिशिष्टे 'पितामहे म्रियमाणे... प्रपितामहः ॥' इति एकपुरुषं द्विपुरुषं वा पार्वणमाह तत्तीर्थपितृयज्ञपरम् । वृद्धौ पूर्वोक्तमेव । एवं पूर्वयोर्मृतयोः प्रपितामहे जीवति पितृमात्रे मृते परयोर्जीवतोश्च वृद्धप्रपितामहादिभ्यो ज्ञेयम् । 'जीवन्तमपि दद्याद्वा प्रेतायान्नोदके द्विजः ।' इति कात्यायनोक्तेश्च ।

सिन्धु. १७६२

पित्रादीनां त्रयाणां मृतत्वे तेषां देवतात्वम्

**[१]पितुः पितुः पितुश्चैव तस्यापि पितुरेव च ।**
**कुर्यात्पिण्डत्रयं यस्य संस्थितः प्रपितामहः ॥**

(१) तस्यापि पितुः पितामहस्यापि पितुः प्रपितामहस्य । संस्थितः मृतः । श्राक. २३९

(२) पितुः जनकस्य, पितुः पितुः पितामहस्य, तस्यापि पितुः प्रपितामहस्येत्यर्थः । श्राकौ. ५५३

जीवन्तमतिक्रम्यापि श्राद्धदानविधिः

**[२]जीवन्तमति दद्याद्वा प्रेतायान्नोदके द्विजः ।**
**पितुः पितृभ्यो वा दद्यात्सपितेत्यपरा श्रुतिः ॥**

(१) पक्षान्तरमाह— जीवन्तमति दद्याद्वेति । हेतुमाह— सपिता पितुः पितृभ्यो दद्यादित्यपरा श्रुतिरस्ति । तथा च हारीतः— 'जीवे पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् । येषां वाऽपि पिता दद्यात्तेषामेके प्रचक्षते ॥'। नन्वेवं श्रुतिद्वयविरोधः कथं परिहरणीयः ? सत्यम्, पुत्रजन्मनामकरणादिनिमित्तकवृद्धिश्राद्धविषयं 'जीवन्तमति दद्याद्वा' इति वचनम्, 'न जीवन्तमतिक्रम्य' इति वचनं तदितरपितृकृत्यविषयम् । यद्वा पूर्ववचनं तर्पणपार्वणादिषु सकलपितृकृत्येषु नित्याधिकारनिषेधार्थम्, उत्तरवचनं तु उपकारातिशयादैच्छिकानुष्ठानार्थम् । कर्माङ्गश्राद्धं तु अवश्यमनुष्ठेयम्, अन्यथा कर्मवैगुण्यप्रसङ्ग इति भावः । श्राकौ. ५५३

(२) जीवन्तमित्यत्र निमित्तविशेषणत्वेन पुंस्त्वमविवक्षितम् । $ उत. १३६

(३) § छन्दोगानामपि नान्दीमुखविकल्पः, 'सपितुः' इति 'जीवन्तमपि ... श्रुतिः ॥' इति च कर्मप्रदीपे कात्यायनात् । वाऽवधारणे । पित्रा सहितः सपिता । अस्य पक्षद्वयस्य तुल्यश्रुतिमूलत्वाद्व्रीहियवादिवद्विकल्प एव । बाल. १।२५० पृ. ५७३

पितुः पित्रादीनां देवतात्वे निमित्तानि

**[१]ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।**
**व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥**

(१) गोब्राह्मणहतस्य पितुः सपिण्डीकरणसंभवे तमुल्लङ्घ्य पितामहादिभ्यः पार्वणविधानमनुपपन्नमिति सपिण्डीकरणाभावोऽवगम्यते । मिता. १।२५३–२५४

(२) सङ्गवर्जितः भिक्षुः । अप. १।२५२–२५३ पृ. ५३४

(३) ब्राह्मणादीत्यादिशब्दात् चण्डालादीनां ग्रहणम् । पतिते पितरि सङ्गवर्जिते प्रव्रजिते च जीवत्यपीत्यर्थः । व्युत्क्रमात् गलपाशादिनेत्यर्थः । श्राकौ. ५५२

(४) अत्र 'जीवे पितरि' इत्यादिवचनाज्जीवत्पितृकस्य श्राद्धविकल्पे प्राप्ते कचित्करणपक्षनियममाह— कात्यायनः— ब्राह्मणेति । अत्राऽऽदिपदेन चण्डालादि-

---

(१) कास्मृ. २।९५ यस्य (यः स्यात्); श्राक. २३९; श्राकौ. ५५२ यस्य (यत्र); बाल. १।२५० पृ. ५७६.

(२) कास्मृ. २।९६ मति (मपि) वा दद्यात् (वा देयात्); श्राक. २३९; श्राका. ५१६; श्राकौ. ५५२; उत. १३६ पू.; श्रात. ३१३ पू.; श्राप्र. १५ उत्त.; सिन्धु. १७४७, १७६२ मति (मपि) पू. : १७५६ उत्त.; बाल. १।२५० पृ. ५७३ मति (मपि) वा दद्यात् (निपृणेत्); संदी. ६७ उत्त.

$ श्रात. उतवत् ।

§ अयं ग्रन्थः पूर्वपक्षे स्मृतिरत्नावल्युक्तव्यवस्थान्तर्गतः ।

(१) कास्मृ. २।१०१; मिता. १।२५३–२५४; अप. १।२५२–२५३ पृ. ५३४ (=); श्राका. ५१९ (=); श्राकौ. ५५२ परिशिष्टम्; श्राप्र. १७; चम. १७३; लता. १४ हेमाद्रौ : १४९ (=); सिन्धु. १७५८; बाल. १।२५० पृ. ५७४ णादि (णाभि) पू., विष्णुः.

ग्रहणम् । पतिते जीवत्यपि । सङ्गवर्जिते प्रव्रजिते जीवति । अत्र पतितो महापातकी, ब्राह्मणादिहतानां पृथगुपादानात् । व्युत्क्रमः पितामहादौ जीवति पित्रादिमरणे । अयमर्थः– 'व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता ।' इति वचनेन व्युत्क्रममृतस्य सपिण्डीकरणनिषेधात्तस्य पितृत्वाप्राप्तेः स जीवत्पितृकतुल्यत्वाद्येभ्यः पितामहादिभ्यो ददाति तेभ्यो दद्यादिति । वस्तुततु– 'यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय' इत्यादिविष्णुवचने पितुरपि श्राद्धविधानान्नेदृशी व्याख्या युक्ता, किंतु ब्राह्मणहतादिसाहचर्यात् व्युत्क्रमात् शास्त्रमतिक्रम्योदरभेदादिनेति व्याख्येयम् । श्राप्र. १७

(५) नन्वेवं 'ब्राह्मणादिहते ...', तथा 'वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ।' इत्यादिवाक्यैः पतिते पितरि पितामहस्यैव श्राद्धं विहितम् । तद्यदि पतितस्यापि और्ध्वदेहिकं क्रियेत तर्हि तन्नोपपद्यते, तमुल्लङ्घ्य पितामहश्राद्धादिकरणे कारणाभावात्, इति चेत्सत्यम्, तद्यदि यथाश्रुतमेव गृह्येत तदाऽनेकवचनविरोधः स्यात् । तथा हि– ब्राह्मणादिहते पतिते च पितरि पितामहस्यैव श्राद्धं कार्यम्, न पितुरित्युच्यमाने 'ब्राह्मणादिहतानां च पतितानां तथैव च । ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम् ॥' इति वाक्येनौर्ध्वदेहिकादिविधानं नोपपद्येत । किंच पतिते पितरि 'माता म्लेच्छत्वमापन्ना पिता वाऽपि कथंचन ।' इत्युपक्रम्य 'पितरं विष्णुमुच्चार्य तदूर्ध्वं च पितामहम् ।' इत्यादिप्रथमस्तबकोदाहृतदेवलवचनेन तन्नामोच्चारणस्थाने विष्णुनामोच्चारणमात्रविधानादस्त्येव तस्यापि श्राद्धमिति यद्गम्यते तदसंगतं स्यात् । तथा संन्यस्त इत्यप्यसंगतं स्यात्, 'संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि ।' इत्यादिवचनविरोधात् । तथैव व्युत्क्रममृते इत्यपि, 'यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्' इति विष्णुवचनविरोधात् । एतेन जीवति मृते चैतत्समानमेवेति मूर्खप्रलपितमप्यपास्तम् ।

तस्मादेतदेवं व्याख्येयम्– ब्राह्मणादिहते पितरि संवत्सरानन्तरमौर्ध्वदेहिकविधानादन्तरा पितामहश्राद्धस्य तावत्कालं लोपप्रसङ्गात्पौत्रेण तदधिकारप्राप्तं स्वयं कर्तव्यमेवेत्यनेनोपदिश्यते, अन्यथा पूर्वोक्तानेकवचनविरोधः स्यात्, विकल्पस्य चाष्टदोषदुष्टत्वात् । तथा पतिते संन्यस्ते च जीवति तदधिकारप्राप्तं कार्यम्, मृते तु तस्यापि । व्युत्क्रममृत इति त्वेवं व्याख्येयम्– पितामहे जीवति पितरि च मृते प्रपितामहाय दद्यात्, 'येभ्य एव पिता दद्यात्' इति वचनेन मृतस्य पितुर्जीवत्पितृकत्वेन प्रपितामहस्यैव देवदत्तपितृकर्तृकश्राद्धे देवतात्वात् । तेन 'येभ्य एव' इत्यवैरूप्येण घटते । अन्ये तु पितृशब्दः क्वचित्स्वपितृपरः क्वचिच्च पितृपितृपर इत्याहुः । तन्न, वैरूप्यादेवेति । तदत्र 'व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता ।' इति वचनविहितसपिण्डीकरणाकरणपक्षमभिप्रेत्य प्रपितामहश्राद्धविधानमिति सर्वमनवद्यम् । एवं ब्राह्मणादिहतस्य संन्यस्तस्य व्युत्क्रममृतस्य च श्राद्धाद्यङ्गीकुर्वतां पतितमात्रस्यैव श्राद्धं प्रद्विषतां पूर्वोदाहृतवचननिचयविरोधं चापहरतां (? चापरिहरतां) कीदृशोऽयं धर्मशास्त्रज्ञानाभिमान इति न विद्मः ।

लता. १४९–१५१

(६) अयं च संन्यस्तपित्रादेरविशेषात्सर्वश्राद्धेऽधिकारः । एतत्त्रिदण्डिपरम् । एकादशाहपार्वणवार्षिकाद्यपि तस्यैव, 'अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ।' इत्युक्त्वा 'त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ।' इति उशनसा विशेषोक्तेः । 'ब्राह्मणादिहते' इत्यादिनिषेधस्त्वेकदण्डादिपरः । अतः परमहंसानां वार्षिकादिकमपि न कार्यमिति शूलपाणिश्राद्धतत्त्वादयो गौडग्रन्थाः । इदमेव तु युक्तम् । यत्तु हेमाद्रौ कौण्डिण्यः– 'दर्शश्राद्धं गयाश्राद्धं श्राद्धं चाऽऽपरपक्षिकम् । न जीवत्पितृकः कुर्यात्तिलैस्तर्पणमेव च ॥' इति, तत्संन्यस्तपित्राद्यतिरिक्तविषयम् । सिन्धु. १७५८

[ब्राह्मणादीति । दर्पादिना गोब्राह्मणाद्यभिभवार्थं प्रवृत्तस्तैर्हतः स आत्मघातित्वात्संवत्सरं यावदसंस्कार्यः तावत्तत्पुत्रस्य पुत्रजन्मतीर्थप्राप्त्यादौ । व्युत्क्रमादिति च

व्युत्क्रममृतसपिण्डनाभावपक्षे । श्राद्ध इति । एवं नित्यतर्पणादावपि । शूलपाण्यादिमतमाह– एतदिति । सङ्गवर्जिते इत्येतदित्यर्थः । ब्राह्मणादीति । 'ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते । व्युत्क्रमाच्च मृते नैव कार्यं श्राद्धादि किंचन ॥' इति निषेधस्तु इत्यर्थः । दर्शश्राद्धमिति । संन्यस्तपित्रादीति । वस्तुतस्तु प्रतिनिधीभूयैतानि न कुर्यादित्यर्थः, अन्यथाधिकाराभावेनाप्राप्तेर्निषेधे वैयर्थ्यापातात् । कुभ. ]

सुतसंस्कारकर्मसु श्राद्धदेवतानिर्णयः

**'स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।**
**पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् ॥**

(१) पिण्डानभ्युदयश्राद्धे । तेषां पुत्राणाम् । ओद्वाहनात् आ विवाहात् पिता स्वपितृभ्यो दद्यात् । तस्य पितुरभावे तत्क्रमात् । अत्र क्रमशब्देन पितुरनन्तरो भ्रात्रादिर्लक्ष्यते । पुत्रविवाहे पितुः श्राद्धाधिकारः 'कन्यापुत्रविवाहेषु' इत्यनेनोक्तः, वोढुरपि पृथगधिकारः 'नानिष्ट्वा तु पितॄन् श्राद्धे' इत्यनेनोक्तः, तेन पुत्रविवाहे पित्रा पुत्रेण च वृद्धिश्राद्धं पृथक्कार्यम् । पुत्रेण च 'येभ्य एव पिता दद्यात्तेभ्यो दद्यात्सुतोऽग्निमान् ।' इति विधिमाश्रित्य कर्तव्यम् । अत्र चाग्निमद्ग्रहणमधिकारिमात्रोपलक्षणार्थम् । अत एव समावर्तने ब्रह्मचारिणा जीवत्पितृकेण पितामहादिभ्यः श्राद्धं प्रदीयते ।

अप. १।२४९ पृ. ५१६

(२) अस्यायमर्थः– सुतसंस्कारकर्मसु जातकर्मादिषु तेषां सुतानाम् ओद्वहनात् विवाहपर्यन्तेषु पिता स्वपितृभ्यः पिण्डान् दद्यात् । वृद्धिश्राद्धं कुर्यादित्यर्थः । तस्याभावे तु पितुरभावे तु तत्क्रमात् तेषु जातकर्मादिकर्मसु– 'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।' इत्यादिवचनात् यो गम्यमानः कर्तृक्रमः तेन क्रमेण ज्येष्ठभ्रात्रादिः स्वपितृभ्यो दद्यादिति । समावर्तनस्यापि विवाहात्प्राचीनसुतसंस्कारत्वाज्जीवपितृकसमावर्तने पिता स्वपितृभ्यो दद्यात् । अजीवपितृकस्तु पूर्वसंस्कृतभ्रात्रसंभवे स्वयमेव पितृभ्यो दद्यात्, उपनयनेन कर्माधिकारस्य जातत्वात् । विवाहेऽप्येवमेव द्रष्टव्यम् ।

* स्मृच. ४९७

(३) इह तावदेतावत्सिद्धम्– यन्नामकरणचौलोपनयनविवाहादिषु यः कर्ता स नान्दीमुखविशेषणवद्भ्यो मनुष्यपितृभ्यः श्राद्धं कुर्यादिति । सन्ति च प्रकृतेषु कर्मसु कर्तृविकल्पाः । पृ. १०७

---

(१) कास्मृ. २।१५२ द्वाह (द्वह); अप. १।२४९ पृ. ५१६ कर्मसु (कारणात्); श्राक. २७६; स्मृच. ४९७; चश्रा. ११३ : १९१ द्वाह (द्वह); चका. ४५७; स्मृसा. १०६ कर्मसु (कर्मणि) पू., ब्रह्मपुराणम् : १०७ कर्मसु (कर्मणि) विष्णुपुराणम्; हभा. १८८ भावे तु (भावेऽपि) 'स्मरणम्' इत्युक्तम्; मपा. ६३५ द्वाह (द्वह) भावे तु (भावेऽपि); प्रपा. २०; निप. २४१ (=) द्वाह (द्वह); श्राका. ५१७ पू. : ५१८ द्वाह (द्वह) 'तस्याभावे सुतः क्रमात्' इत्यपि पाठः; गभा. ३२; श्राकौ. ४८८ (=) कर्मसु (कर्मणि) पू. : ४९३ पू. परिशिष्टम् : ४९६ मपावत्; संत. ८८४ द्वाह (द्वह) तस्याभावे तु (तदभावेऽपि); उत. १३२ कर्मसु (कर्मणि) शेषं मपावत् 'तस्याभावे तु' इति मैथिलपाठ इत्युक्तम्; श्रात. ३२२ संतवत्, 'तस्याभावे तु' इति मैथिलपाठ इत्युक्तम्; प्रर. १४ द्वाह (द्वह); श्रासौ. १२० कर्मसु (कर्मणि) पू. : १२५ कर्मसु (कर्मणि) भावे तु (भावेऽपि); संप्र. २५६ पू.; श्राप्र. २९१ : २९६ पू.; मुक्ता. ७५२; लता. १७; श्राम. ८९; संम. ६; सिन्धु. १७४३ द्वाह (द्वह); विपा. ३५ (भागः २) द्वाह (द्वह); संकौ. २९; आन. १४४ अशुद्धिबहुलः पाठः; प्रका. ३३ नोद्वाहनात् (नुद्वहनात्); बाल. १।२५० पृ. ५७० द्वाह (द्वह); संग. ८८ पू. उत्तरार्धस्य व्याख्यानकरणात् उत्तरार्धं गलितमिति भाति; पुम. ३७७; कुभ. ४३० (=); संदी. ६५ कर्मसु (कर्मणि) द्वाह (द्वह): ४ (भागः २) (=) (तस्याभावे तु तत्क्रमात्०).

* प्रपा., लता., सिन्धु. इत्येतेषु स्मृच., चश्रा. इत्येतयोरनुवादः । मुक्ता. स्मृचवत् ।

तदेवं कर्तृविकल्पे यदा पितृव्य( तिरिक्तः ) उपनयनादिकर्ता स्यात्तदा वृद्धिश्राद्धं केभ्यः पितृभ्यः कुर्यात् । किं स्वेभ्यः, उतोपनेयादिसंबन्धिभ्य इति । ननु पितैव तावत्स्वेभ्यः कुर्यान्नास्वेभ्य इति क्रमः, कस्मात् ? उच्यते— श्राद्धदेवताविधायकानां मातृपितृमातामहादिशब्दानां संबन्धिशब्दत्वात् संबन्ध्यपेक्षायां वृद्धिश्राद्धकर्तृत्वेनोपात्त एव संबन्धी गम्यत इति । कुतस्तर्हि संदेहः ? यदा हि पितृव्यतिरिक्त उपनयनाधिकारितां प्राप्तस्तदा 'प्रधानेऽधिकृत एवाङ्गेऽधिकृतः' इति न्यायात् स एव वृद्धिश्राद्धाधिकारितां गत इति पित्रादिपदार्थस्य संबन्धित्वेन विशेषको भवति । अतः सोऽपि स्वेभ्य एव दद्यादिति निश्चयात् । ननु अत्र पितैव मुख्योऽधिकारी, तदसंभवे त्वन्यः, देवताविधिस्तु मुख्येनैव निराकाङ्क्षीकृतो नासंभवोपस्थापितममुख्यं स्वीकरोति । मैवम्, अधिकारी हि विशेषकः, न पिता । 'नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् ।' इत्येवमुत्पन्ने वृद्धिश्राद्धमात्रेऽयं देवताविधिः संबद्धः । न च वृद्धिश्राद्धमात्रं पित्रेकसंबद्धम्, पुत्रसंस्कारव्यतिरिक्तेष्वपि कर्मसु तद्विधानात् । तस्माद्यो यदोपनयनादावधिकारं प्रतिपद्यते स तदा स्वपितृभ्यो वृद्धिश्राद्धं कुर्यादिति प्रतिपद्यामहे । अतो यदा पितृव्यतिरिक्तः कश्चित् भ्रात्रादिरुपनयनादिकं कुर्यात् तदा स्वपितृभ्य एव श्राद्धं दद्यादिति । ननूपनयनादौ उपनेयादिरेवाधिकारी, उपनेता तु कर्तैव ऋत्विगादिवत् । ननु यदि कर्मफलभागेवाधिकारी, तर्हि जातेष्टौ पुत्रस्यैवाधिकारः प्राप्त इति । न, पुत्रगतस्य पूतत्वादेः पित्रैव काम्यमानत्वात् पितुरेवाधिकारः, प्रकृते तु पितृव्यतिरिक्तानामुपनेयादिसमवेतफलकामनाऽयोगात् । मैवम्, उपनयनं नामोपनेयादन्यस्य व्यापारः, तत्र हि कर्मकारकीभूतस्योपनेयस्य कर्तृत्वानुपपत्तेः । कर्मकर्तुस्तु विवक्षितमेव कर्तृत्वम् । न चात्र तद्विवक्षाद्योतकं किमप्यस्ति पदजातम् । 'तमहमात्मानं पातयामि' इत्यादिषु पुनरस्मदात्मादिशब्दसमभिव्याहारात् कर्तृकर्मणोरभेदाध्यवसानमुपपद्यते । अतो नोपनेयादीनां स्वसंस्काराधिकारः । ननु नात्र प्रापणार्थो नयतिः, किंतूपसर्गसंनिधानात् मौञ्जीबन्धनादिरूपकर्मान्तरवचनः । मैवम्, उपसर्गयोगे ह्ययमाचार्यसमीपप्रापणार्थ एव भवति, न पुनरप्रसिद्धार्थान्तरवाचकः, अस्य चार्थस्याध्ययनापेक्षितगुरुशिष्यसंनिधिविशेषापादकत्वेन दृष्टार्थत्वात् । अतश्चोपनेयव्यतिरिक्तकर्तृकेऽस्मिन्नुपनयनरूपे व्यापारे विधिना नोपनेयः प्रवर्तयितुं शक्यः, 'स्वव्यापारे हि पुरुषाः कर्तृत्वेन नियुज्यन्ते' इति न्यायात् । यदि च कर्मफलभागित्वादुपनेयोऽधिकारी तदा गर्भोऽपि स्वसंस्कारकत्वेन स्वोपकारकपुंसवनाद्यधिकारी स्यात्, प्रमीतश्चौर्ध्वदेहिकादौ । अशक्तेनैवमिति चेत्, तुल्यमुपनयनेऽपि । ननु—उपनेय आचार्यादिप्रवर्तनेन शक्तः, यथा पुरोहितप्रवर्तनेन ऋत्विक्प्रवर्तनेन वा क्षत्रियवैश्यौ यागे । ननु—विधिना स्वयमप्रवर्तितः किमर्थमन्यं प्रवर्तयेत् ? क्षत्रियादयस्तु विधिना यागे प्रवर्तन्तः( ? प्रवर्तिताः ) एव पुरोहितादिकं याजने प्रवर्तयन्ति, अध्ययने च प्रवर्तितोऽध्यापने । न चात्रोपगच्छेदित्युपगमनं विहितम्, येन तत्र विधिना प्रवर्तितः सन्नाचार्यमुपनयने प्रवर्तयेत् । उपनयनविधिना अर्थादुपगमनं माणवकस्य विहितम्, परिणयनविधिना परिगमनं च कन्याया इति चेत्, मैवम्, अर्थप्राप्ते विधेरव्यापारात् । यच्चान्यस्याधिकारिणो विधीयमानं कर्म स्वसिद्ध्यर्थमन्यस्याधिकारिकर्त्रन्तरगतं कर्माऽऽक्षिपति, न तत्तस्याऽऽवश्यकम् । यथा यागविधिनाऽऽक्षिप्यमाणा याजकप्रवृत्तिः, यथा वा क्रयविधिनाऽऽक्षिप्यमाणो विक्रयः कस्यचित् । न च तस्याकरणे प्रत्यवायः । अतः किमर्थमुपनयनाक्षिप्तो गमनकर्तोपनेतारं प्रवर्तयेत् । किंतूपनेतैव स्वविहितक्रियासिद्ध्यर्थमुपनेयं प्रवर्तयेदिति ।

उच्यते । अस्ति ह्युपनयनाद्यभावे कर्मीभूतस्योपनेयादेरनर्थसंबन्धः । स च तत्प्रतिघातमपेक्षमाणस्तदुपाये मुख्योऽधिकारी । तदुपायश्चोपनयनादिरेव । यथा जले कर्दमे वा निमज्जन् कश्चित् स्वतः स्वोद्धरणे शक्तिरहितोऽपि स्वानर्थप्रतिघातमपेक्षमाणस्तदुपायेऽधिकारी भवन् 'मामुद्धर' इति पुलिनवर्तिबलवत्पुरुषान्तरप्रेरणयाऽधिकारं निर्वर्त्यानर्थं प्रतिहन्ति, तथाऽयमुपनेयादिरुपनयनादौ ।

यस्तु गर्भः प्रमीतो वा पित्रादिः पुंसवनादावौर्ध्वदेहिकादौ वा स्वानर्थप्रतिघातोपाये परप्रेरणयाऽप्यधिकारनिर्वर्तनासमर्थः स तु नाधिकारी । किंच यः स्वोपकारके यस्मिन् कर्मणि परप्रेरकत्वेनोक्तः स एव तत्राधिकारी । उक्तश्चायमष्टादिवर्षो ब्राह्मणादिः स्वोपनयने विशिष्टाचार्यप्रेरकत्वेन । तथा च स्मृतिमहार्णवे आह बुधः— 'गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनाययेत् । एकादशे क्षत्रियो ग्रीष्मे । द्वादशे वैश्यो वर्षासु ' इति । स्मृत्यन्तरे तु उपनेयव्यतिरिक्तानामप्यधिकारिणां स्वयमशक्तानामन्यप्रवर्तकत्वमुपलभ्यते । यथाऽऽह यमः — 'गर्भाष्टमेऽब्दे ब्राह्मणमुपनाययेत् । एकादशे तु राजन्यानुपनाययेत् । वैश्यांस्तु द्वादशे वर्षे उपनाययेत् ' इति । मनुशङ्खव्यासाः— 'गर्भाष्टमे वै कुर्वीत ब्राह्मणस्योपनायनम् । ' । एतच्च हेतुमण्णिजन्तमुपनायनशब्दं व्याचक्षाणैरपरार्कादिभिरुपपादितम् । तस्मादुपनयनादिषूपनेयादीनामस्त्यधिकार इति । अत एव सत्यकामो नाम जाबालो मातरमामन्त्र्याऽऽत्मानमुपनाययितुं गौतममाजगामेति छान्दोग्योपनिषदि श्रूयते । कन्यानां च स्वयमपि स्वविवाहकर्तृत्वं कारयितृत्वं च दृश्यते । अतस्तासामपि स्वानर्थप्रतिघातके स्वविवाहेऽस्त्यधिकारः । तदानीमन्येषां तदधिकारनिर्वर्तकत्वेनैव कर्तृत्वकारयितृत्वे । पितृमातृभ्रात्रादीनां त्वनन्यप्रेरितानां विधित एवाधिकारनिर्वर्तकत्वम्, अनिर्वर्तकत्वे दोषश्रवणात् । तदन्येषां विध्यभावात् कन्या प्रेरणसहकृतपाणीति( ? ) तत्र तानि वचनानि 'गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम् । ' इत्यादीनि याज्ञवल्क्याद्युक्तानि । अतो मातृमातुलादिभिः क्रियमाणेऽपि विवाहे कन्याया एव पित्रादिवर्गेभ्यो वृद्धिश्राद्धं कुर्यादिति । ननु मातृमातुलादीनामपि विवाहकर्तृत्वोपदेशादकरणे च दोषाभिधानात्तेषामपि अधिकारे तदीयपितृभ्योऽपि श्राद्धं देयमेव । नैतदेवम् , नहि प्रत्यधिकारमङ्गावृत्तिः , प्रधा(ने ? )नैक्यात् सत्र इव । तत्र हि प्रत्येकमधिकारभेदेऽपि प्रधानमेकमेव, समुच्चितानां कर्तृत्वविधेः । न चात्र वैपरीत्यं विकल्पो वाऽस्त्विति शङ्कनीयम्, फलभागित्वेन कन्यानामेव मुख्याधिकारित्वात् । न चैवं सति विवाहाख्यप्रधानैक्यात् कन्यादातृप्रतिग्रहीत्रोरप्येकमेव नान्दीमुखं श्राद्धं स्यात्, न पुनः पृथक् श्राद्धद्वयम् । द्वे एवैते प्रधाने य एष प्रतिग्रहो दानं च । 'कन्यापुत्रविवाहे च ' इति पृथग्विधानाच्च । अन्यथा विवाहे इत्येवोच्येत । तस्मात्कश्चिदाचार्यः परपुत्रमुपनयन्नुपनेयपितृभ्य एव नान्दीश्राद्धं कुर्यात् । मातृमातुलादिश्च कन्याविवाहं कुर्वन् कन्यापितृभ्य एवेति । अत एव संस्कार्यस्यैव पितृभ्यः श्राद्धकरणे प्राप्ते यदा पितुः संस्कारकत्वं तदा संस्कारकस्य पितृभ्य एव श्राद्धमित्याह कात्यायनः— 'स्वपितृभ्यः ... तत्क्रमात् ॥ ' इति । यदि पुनः सर्व एव कर्ता स्वपितृभ्यो दद्यात् तदैतन्न वक्तव्यं 'स्वपितृभ्यः पिता ' इति । ननु संस्कारकर्मसु पितृभ्यः पिण्डान् दद्यादित्येतावन्मात्रं विधीयते, अन्यदनूद्यते, इत्यतः पिता चेत् स्वपितृभ्यः इत्येष संबन्धो न विधीयते । मैवम् । गुणविधौ हि प्रधानानुवादस्तादर्थ्यादुपयुज्यते, न प्रधानविधौ गुणानुवादः । गुणानां चानुवादः प्रधानविधिना अर्थादुपस्थापितानां वक्तव्यः । स चायं विध्येकवाक्यतानुपपत्तेरयुक्तः । पर्यवसिते हि प्रधानविधायकव्यापारे गुणानां प्राप्तिः । तत्पर्यवसानं च स्वसहचरितपदार्थानुवादपूर्वकम् । अतः प्रधानोत्पत्तिवाक्यैर्गुणानुवादे परस्पराश्रयम्, अनेकवाक्यता, विरम्य - व्यापारः , एकस्मिन्नेव वाक्ये एकस्यैव विधित्वानुवादत्वे चेत्येते दोषाः प्रसज्येरन् । विध्यनुवादयुक्ते च वाक्ये पूर्वमानुवादिकं पश्चाद्विधिः । यतस्तत्रोद्दिश्य विधिर्भवति । ननु विध्यनुवादमन्तरेणैव तावत्पदानि स्वार्थाभिधानेनैकार्थपराणि सन्त्येकवाक्यतामनुभवन्ति, पश्चात् प्राप्ताप्राप्तविवेकेन शब्दप्राप्यार्थप्राप्यविवेकेन वा विध्यनुवादरूपताम् । मैवम्, विधित्वानुवादत्वप्रतीतिमन्तरेण वाक्यार्थस्यैवानवगमात् । प्राप्ताप्राप्तविवेकादिना यत्पश्चाद्विधेयविवेचनं क्रियते तदपि पूर्वप्रतीतविपरीतविध्यनुवादभावनिवृत्त्यर्थं संदेहनिवृत्त्यर्थं वा । अनिवर्तमाने हि तस्मिन्नन्यादृशं विध्यनुवादभावमाश्रित्यैव वाक्यार्थं प्रतिपादयन्ति । तस्यामवस्थायां तु विरोधमावहन्त्येव । अत एव

कर्मोत्पत्तिवाक्ये श्रूयमाणो गुणः सोमादिर्नानुवादः । अस्त्वत्र गुणविधिः, आ उद्वाहनादित्ययं तु गुणो विधीयताम् । (मैवम् ।) उद्वाहात्परेषु सुतसंस्कारेषु पितुरधिकाराभावात् तस्य तेषु वृद्धिश्राद्धाप्राप्तेस्तन्निवृत्त्यर्थो विधिरनर्थकः, (उद्वाहपर्यन्तेषु) प्राप्तार्थत्वाच्च विधित्वं जह्यात् । अतः 'पिता चेत् स्वपितृभ्यः' एष संबन्धो विधीयते, नान्य इति । अत एव 'तस्याभावे तु तत्क्रमात्' इत्येतदुपपद्यते । पितुरभावेऽन्योऽपि यः कश्चित् संस्कारं कुर्यात् स तत्क्रमात् तं पितरमारभ्य यः संस्कार्यस्य पितॄणां क्रमः तेन क्रमेण दद्यात्, न तु स्वकीयेभ्यः पितृभ्य इति । ननु नायमस्यार्थः, किंतु तत्क्रमात् अनन्तराधिकारिक्रमादिति । मैवम् । एवं हि सति तुशब्दापातितपूर्वविहितवैपरित्यावगतिपर्यालोचनया पूर्वं पितुः कर्तृत्वं विहितमिति मन्तव्यम् । तथा चाऽऽनर्थक्यम्, पितृकर्तृकेषु सुतसंस्कारेषु अन्यस्य श्राद्धकर्तृत्वाप्राप्तेः, 'प्रधानेऽधिकृतोऽङ्गेऽधिक्रियते' इति न्यायात् पितुः प्राप्तेश्च । तदनन्तराधिकारिक्रमादित्येवंविधे चार्थे गृह्यमाणे असंनिहितपरामर्शः प्रसज्येत । किंच अस्मिन् पक्षे वचनान्तरावगतः क्रमोऽनुसंधीयमानोऽनुवाद एव स्यात् । नन्विदं वचनं पितृव्यतिरिक्तैर्मातृमातुलादिभिर्विवाहादिसंस्कारं कुर्वाणैः स्वपितृभ्य एव श्राद्धं कर्तव्यमित्यमुमेवार्थं विधत्ते, कथम्? स्वपितृभ्य इत्यस्यानुषङ्गात् । भवेदेवं यदि तत्क्रमादित्यत्र कर्तृक्रम उच्यते, पितृतस्त्वेष इति व्याख्यातत्वात् । किंच यदि सर्वेऽपि कर्तारः स्वपितृभ्यो दद्युस्तदा स्वपितृभ्यः पितेति न वक्तव्यं स्यात् । तस्मादाचार्यमातृमातुलादयः संस्कार्यस्योपनेयादेरेव पितृभ्यः श्राद्धं दद्युः, न स्वपितृभ्य इति ।

अथात्र पारमार्थिकः पक्षोऽभिधीयते । यदा पिता पुत्रादेर्विवाहोपनयनादि कुर्यात् तदा स्वेभ्य एव पितृभ्यो नान्दीश्राद्धं कुर्यात्, 'स्वेभ्य एव दद्यात्' इति वचनात् । यदा चान्ये वचनलब्धाधिकाराः पितामहभ्रातृसकुल्यजनन्यादयस्तदाऽपि स्वपितृभ्यः, 'तस्याभावे तु तत्क्रमात्' इत्यत्र स्वेभ्य एवेत्यनुषङ्गात् प्रधानेऽधिकृत एवाङ्गेऽधिक्रियते । 'मातृपितृमातामहानां श्राद्धं कुर्यात्' इत्येवंविधश्च विधिर्मात्रादिशब्दानां संबन्धिशब्दत्वादधिकारिणमेव संबन्धिनमुपादाय पर्यवस्यतीति । ये पुनः केचनाऽऽहत्य वचनेनानुक्ताधिकारास्ते तदीयेभ्यः श्राद्धं कुर्युरिति । ¶ चश्रा. १०९–११५

(४) पितुरभावे ज्येष्ठभ्रात्रादिकर्तृक्रमेणेत्यर्थः । आ उद्वहनात् विवाहपर्यन्तम् । जीवति पितरि पुत्रः स्वीयद्वितीयविवाहस्य संस्कारकर्मत्वाभावात् पितुरावश्यकत्वाभावेन तादृशविवाहेषु स्वपुत्रजातकर्मादिषु वा नान्दीमुखश्राद्धकर्ता तदापि पितृमातृभ्यः पितृपितृभ्यः पितृमातामहेभ्य एव दद्यात्, 'येभ्य एव पिता दद्यात्तेभ्यो दद्यात्तु पुत्रकः ।' इति नियमात् । केचनैवं वर्णयन्ति– 'येभ्य एव पिता दद्यात्' इत्यस्यायमभिप्रायः– पिता स्वपित्रादिभ्यः स्वमातामहादिभ्यश्च यथा ददाति एवमसावपि स्वसंबन्धिनामेव दद्यादिति । एतदनुपपन्नम् । अत्र यच्छब्दनिर्देशो न स्वशब्दनिर्देशः, 'येभ्य एव' इत्यादिना पितृप्रतियोगिका एव गृह्यन्ते न स्वप्रतियोगिकाः । तस्मात् पितृसंबन्धिन एव मातामहादयो ग्राह्याः ।

मपा. ६३५–६३६

(५) वचनमिदं न श्राद्धविधायकम्, 'सर्वाण्येवान्वाहार्यवन्ति' इति गोभिलवचनात् सामान्यतः प्राप्तेः । किंतु संस्कारस्य पुत्रगोचरतया श्राद्धे तस्यैव पित्रादिमातामहादीनामौचित्यप्राप्तौ पितुरेव पित्रादिमातामहादीनां श्राद्धदेवतात्वं विदधाति । अत एव पुत्रमातामहादिव्यावर्तकः स्वशब्दो दत्तः । स्वपितृभ्य इत्यत्र पितृपदमजहत्स्वार्थलक्षणया जनकादिवृद्धिश्राद्धोद्देश्योपलक्षकम् । तेन पितुर्मातृगणलाभः । अथवा परिशिष्टकृता छन्दोगाभिप्रायेण भोक्तृत्वोपाधिना षट्सु पुरुषेषु पितृपदं प्रयुक्तम् । अध्वर्युरपि तुल्यन्यायात् स्वमातृभ्यो दद्यात् । 'सुतसंस्कारकर्मसु' इत्यनेन कन्यासंस्कारेषु श्राद्धं

---

¶ गभा., प्रर., श्राप्र. संक्षेपेण चश्रानुवादः । श्राकाव्याख्यानं 'युग्मानाशयेदत्र' इति पारस्करगृह्यसूत्रे (संका. पृ. १७४५–१७४६) द्रष्टव्यम् ।

नास्तीति सूचितम् । 'कन्यापुत्रविवाहेषु' इत्यादिविष्णुपुराणवचने कन्याविवाहे विशिष्य श्राद्धमुक्त्वा अन्येषु कन्यानामकरणादिसंस्कारेषु श्राद्धं नास्तीति स्फुटमेवोक्तम् । अन्यथा 'चूडाकर्मादिके' इत्यनेन विवाहस्यापि प्राप्तौ 'कन्यापुत्रविवाहेषु' इति व्यर्थं स्यात् । किंच गोभिलादिगृह्ये पुत्रजन्मोपक्रम्य जातकर्मादिसंस्कारविधानात् कन्यासंस्कारस्य गृह्योक्तत्वाभावात् कुतः श्राद्धप्राप्तिः ? कथं तर्हि कन्यायाः संस्कारप्राप्तिरिति चेत्, 'तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ।' इति याज्ञवल्क्यवचनात् । कन्याविवाहे तु श्राद्धं पितुः पितॄणामेव, 'नान्दीमुखं पितृगणमर्चयेत् प्रयतो गृही ।' इत्युक्तत्वात् । संस्काराश्चात्र नामकरणाद्या विवाहान्ताः, जातकर्मणि श्राद्धनिषेधात् । पुंसवनसीमन्तोन्नयनयोस्तु न पुत्रसंस्कारत्वम्, अनिश्चयात्, किंतु गर्भसंस्कारत्वमेव । अत एव 'सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स गर्भः शुद्धिमर्हति ॥' इति वचनात् गर्भसंस्कारद्वारा सर्वेषां गर्भस्थानामपि संस्कार उक्तः । यच्च– 'प्राप्ते तृतीयमासे स्फुरदिन्दुकलाकलापक्षे च । पुंसवनं पुत्रेच्छुर्गर्भे गर्भे प्रकुर्वीत ॥' इति राजमार्तण्डे प्रतिगर्भे पुंसवनमभिहितम्, तत् पुत्रकामस्यैव, पुत्रेच्छुरित्युपादानात्, गर्भसंस्कारस्य प्रथमेनैव जातत्वात् । तत्रापि तस्मादेव विष्णुपुराणात् पितुः पितॄणां श्राद्धलाभः । तर्हि कथं पुंसवनसीमन्तोन्नयनकन्याविवाहेषु 'तस्याभावेऽपि तत्क्रमात्' इति संगच्छते ? सत्यम्, पुत्रसंस्कारे तथादृष्टत्वेन 'एकत्र दृष्टार्थे'–न्यायात् 'तस्याभावेऽपि तत्क्रमात्' इत्यस्यैवौचित्यात् । आ उद्वहनात् इत्यभिविधावाङ्, न मर्यादार्थे, 'कन्यापुत्रविवाहेषु' इति विष्णुपुराणवचनात् । अस्मादेव विष्णुपुराणात् पिण्डानित्यस्य सविधिकश्राद्धोपलक्षकता । तर्हि पितुर्मरणेऽन्येन संस्कर्त्रा कथं श्राद्धं देयमित्याह– तेषामिति । तेषां पितुः पितॄणामित्यर्थः । तत्क्रमादिति नात्र तस्य पितुः क्रमस्तत्क्रमः, स एव वा पूर्वोक्तः क्रमस्तत्क्रम इति, 'तेषां तस्याभावेऽपि' इत्यनेनैव सिद्धेः तत्क्रमादित्यस्य वैयर्थ्यापत्तेर्लेपभागिनां श्राद्धनिषेधाच्च । किंतु तमारभ्य क्रमः, तत्प्रधानक्रम इति वा मध्यमपदलोपी समास एव । ततश्च 'तेषां तत्क्रमात्' इत्यनेन लेपभागिनं पितुः प्रपितामहं विहाय पितरमादाय तेषां पितुः पितॄणां दद्यादित्यर्थे सति पितुर्मातामहादीनां श्राद्धमायातम् । कन्याविवाहपुंसवनसीमन्तोन्नयनेषु संस्कार्यक्रमासंभवाच्च तत्पदेन प्राधान्यात् पितुरेव प्रत्यवमर्शस्य न्याय्यत्वाच्च । तस्मात् पितुर्मातामहपक्षः श्रीनारायणोपाध्यायसंमत एवोपादेयः । तथा च कृत्यचिन्तामणिलिखितं वचनम्– 'अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम् । पिता कुर्यादथान्योऽपि तस्याभावे तथैव च ॥' । अष्टौ गर्भाधानविवाहौ विना । तथैव पितुः प्रकारेण कुर्यादित्यर्थः । युज्यते हि पितृमरणेऽप्यन्यकर्तुरपि तत्प्रकारः । अत एव विदेशस्थे पितरि आवश्यकसंस्कारस्यान्यथानुपपत्त्या क्लृप्तेनान्येन संस्कर्त्रा प्रतिनिधिवत् पितुः पितृगणमातृगणमातामहगणानां श्राद्धं कर्तव्यम् । एवं च संस्कार्यमातृमरणे पित्रा यथा स्वमातृभ्य एव दीयते तथाऽन्येनापि पितृमरणे पितुर्मात्रादिभ्य एव देयम्, न तु संस्कार्यमात्रादिभ्य इति । यत्र तु पतितः प्रव्रजितो वा पिता मृतस्तत्र न पित्रादिक्रमेण श्राद्धम्, तत्क्रमादित्यत्र तत्पदेन पार्वणार्हपितृग्रहणात्, 'ब्राह्मणादिहते ताते' इति तस्य श्राद्धनिषेधात्, किंतु पितुः प्रपितामहस्य लेपभागित्वहेतुकश्राद्धनिषेध एव तत्क्रमादित्यस्य बीजम् । तद्बीजाभावे च तत्क्रमादिति विधेर्निवृत्तिरेव । अत एव जीवति पितरि तत्पुत्रेण स्वपुत्रसंस्कारे क्रियमाणे प्रेतीभूतपितामहं विहाय प्रपितामहदित्रिकस्य क्रियत इति ।

अत्र केचित्– तत्क्रमादित्यनेन संस्कार्यपित्रादिक्रमोपदेशात् संस्कार्यमातामहादीनां प्राप्तिः, 'पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।' इति वचनैर्यस्य पित्रादित्रिकं तस्यैव मातामहादीनां ग्रहणादित्याहुः । तन्न, तेषामिति वचनादपिशब्दाच्च पित्रा येभ्यो दत्तं पितुर्मरणेऽपि तेषां पितुः पितॄणामेव दानम् । केवलं तत्क्रमादित्यनेन तत्रैव पितरमनुप्रवेश्य लेपभागितया पितुः प्रपितामहो निषिध्यते । अन्यथा तेषामित्युपादानमनर्थकं

स्यात् बहुवचनानुपपत्तिश्चेति । अत एव– ' दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथा । ' इति विष्णुपुराणे दौहित्रतनयस्योत्तरक्रियायामधिकारकथनमप्युपपन्नम् । किंच गर्भसंस्कारयोः पुंसवनसीमन्तोन्नयनयोः संस्कार्यमातामहग्रहणं विदुषामुपहसनीयमेव । यच्च– ' तस्य संस्कार्यस्य क्रमस्तत्क्रमः, येन क्रमेण संस्कार्येण श्राद्धं कर्तव्यं तत्क्रमात् ' इति श्राद्धचिन्तामणावुक्तम्, तदप्यतीव मन्दम्, पूर्वोक्तसर्वदोषग्रस्तत्वात् । एवं च जीवति मृते वा पतिते प्रव्रजिते पितरि तत्पुत्रसंस्कारे तेभ्यः पितुर्माता-महादिभ्यो देयमिति सर्वं समञ्जसम् ।

श्राकौ. ४९६–५०१

( ६ ) अत्र विवाहान्तसंस्काराङ्गनान्दीमुखश्राद्धे पितुरधिकारमाह छन्दोगपरिशिष्टम्– स्वपितृभ्यः ... इति। सुतसंस्कारकर्मसु सुतसंस्कारजनककर्मसु । सुतसंस्कारग्रहणात् पुत्रविवाहान्तरे पित्रा नाऽऽभ्युदयिकं कार्यम्, आद्येन संस्कारसिद्धौ द्वितीयादेस्तदजनकत्वात् । तथा चाऽऽश्वलायनगृह्यपरिशिष्टम्– ' सीमन्तोन्नयनं प्रथमे गर्भे। सीमन्तोन्नयनसंस्कारो गार्भपात्रसंस्कार इति श्रुतिः ' इति । गर्भपात्रयोरयं गार्भपात्रः, गर्भस्योदरस्थस्य, पात्रस्य तदाधारस्य स्त्रिया इति कल्पतरुः । हारीतोऽपि– ' सकृत्तु कृतसंस्काराः सीमन्तेन कुलस्त्रियः । यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत् ।। ' । अत्र सकृत्संस्कृतपात्रजातानां सर्वेषां संस्काराभिधानेन प्रत्येककृतजातकर्मादिकसंस्काराणां सुतरां संस्कृतत्वम्, ' सकृत्कृते कृतः शास्त्रार्थः ' इति न्यायात् । पिण्डानिति श्राद्धपरम्, ' कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः । नामकर्मणि बालानां चूडाकर्मादिके तथा ।। सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने । नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही ।। ' इति विष्णुपुराणीयैकवाक्यत्वात् । तदेकवाक्यतया एकशेषात् सुतपदं कन्यापुत्रपरम् । आ उद्वहनादित्यत्राभिविधावाङ् । तस्याभावेऽपि संस्कार्यक्रमबाधकस्य पितुरभावे पुनरन्यः संस्कार्यः सपिण्डादिर्वेति । तत्क्रमादिति ' चित्रं कर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः । ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधिपूर्वकैः ।। ' इत्यङ्गिरसोक्तफलभागितया तस्य प्रधानस्य संस्कार्यस्य क्रमात् तेषां पितॄणां दद्यात् । ततश्च संस्कार्यपित्रादित्रयमातामहादित्रयेभ्यः‡ श्राद्धं कुर्यात् । न च संस्कार्यपितरमादाय तेषां पितुः संप्रदानभूतानां तत्क्रमादित्यनेन पितुः प्रवेशात् तत्प्रपितामहेतरपञ्चानामिति नारायणोपाध्यायमतं युक्तमिति वाच्यम्, पित्रनुप्रवेशेन संस्कार्यपितृपितामहप्रपितामहानां श्राद्धे तन्मातामहपक्षस्यैव ' पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् । ' इत्यनेन युक्तत्वात् । न वा तेषां संस्कर्तृपितॄणां संस्कार्यपितुः पितृगणमातामहानां वा ग्रहणम्, तत्क्रमादित्यनुपपत्तेः । तथा हि– आद्ये संस्कर्तुरनुपात्तत्वेन तच्छब्दादमुपस्थितेः, द्वितीये तेषामित्यनेनैव प्रक्रान्तत्वेन तथाविधानां प्राप्त्या तत्क्रमादित्यस्यानुवादकतापत्तेः । [ * अत एव कृत्यचिन्तामणिधृता स्मृतिः– ' अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम् । पिता कुर्यात्तदन्यो वा तदभावेऽपि तत्क्रमात् ।। ' तत्क्रमात् पितृक्रमात् । तेनान्यवेदिना क्रियमाणे पितृशाखोक्तमेव कर्म कर्तव्यम् । ] ' तस्याभावे तु ' इति मैथिलपाठे प्रक्रान्तव्यवच्छेदकतुशब्देन द्वितीयपक्षस्य सुतरां बाधितत्वमिति । ततस्तेषामिति निर्विशेषितपितृमात्रपरामर्शकमिति । एवं भ्रात्राऽपि संस्कार्यदेवदत्तपितुरित्यादि प्रयोज्यम् । $ श्रात. ३२२–३२४

( ७ ) अत्र पितामहादिः कन्याप्रदः स्वपितृभ्य एव दद्यात्, ' तस्याभावे तु तत्क्रमात् ' इत्यत्र स्वपितृभ्य इत्यस्यानुषङ्गात् इति हेमाद्रिः । तं पितरमारभ्य यः संस्कार्यस्य पितॄणां क्रमस्तेन क्रमेण दद्यात्, न तु स्वकीयेभ्यः पितृभ्य इति वाचस्पतिमिश्राद्याः । ये पुनराहत्य वचनेनानुक्ताधिकारास्ते तदीयेभ्य एव पितृभ्यो दद्युः ।

श्राम. ८९

---

‡ उद्भूतावयवभेदसमुदायविवक्षया बहुवचनस्य साधुत्वमिति, तत्तत्कर्तृनिरूपितपित्रादिमातामहादित्रितयानां बहुत्वमभिप्रेत्य बहुवचनोपपत्तिरिति वा ज्ञेयम् ।

* कंसस्थितग्रन्थस्य संगतिश्चिन्त्या । ग्रन्थोऽयमुद्धाहृतत्वे नास्ति ।

$ उत. श्रातवत् ।

(८) अत्र पितुरभावो ध्वंस एव, न त्वत्यन्ताभावः, तथात्वे प्रतिनिधित्वादेव तदीयेभ्य एव पित्रादिभ्यो दद्यात्येवेति वचनवैयर्थ्यं स्यात्। 'तं पितरमारभ्य संस्कार्यस्य पितॄणां यः क्रमस्तेन क्रमेण दद्यात्। तथा च तेषामिति तच्छब्देन स्वपितरः परामृश्यन्ते' इति व्याख्यानमयुक्तम्, तस्याभावे तेषां दद्यादित्यनेनैव नैराकाङ्क्ष्यात्तत्क्रमादित्यस्य वैयर्थ्यापत्तेः। ओद्वहनादित्यत्र विशेषः सायणीये- 'नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः। अत ऊर्ध्वं सुतः कुर्यात्स्वयमेव तु नान्दिकम्॥' इति। अत्र 'लक्षण्यां स्त्रियमुद्वहेत्' 'अरोगामुपयच्छेत' इत्यादौ साङ्गोद्वाहभावनायां वरस्य कर्तृत्वेन नान्दीश्राद्धेऽपि तत्कर्तृत्वं प्राप्तमपि 'पिण्डानोद्वाहनात्' इत्यनेनापोदितम् 'अत ऊर्ध्वम्' इत्यनेन प्रतिप्रसूयत इति विधिलाघवाय 'अत ऊर्ध्वम्' इत्येव विधीयते, न तु पिता कुर्यादित्यपि। तेन प्रथमोद्वाहे पितुरभावे वरः स्वयमेव कुर्यादित्युक्तम्।

¶ संम. ६-७

(९) "ओद्वाहनात् प्रथमविवाहमभिव्याप्य सुतसंस्कारकर्मसु पिता स्वपितृभ्यः पिण्डान् दद्यात् तदुपलक्षितं वृद्धिश्राद्धं कुर्यात्, तस्य पितुः प्रवासादिनाऽभावे तेष्वेव कर्मसु तन्निमित्तः पितृसंनिधिनिमित्तो योऽधिकारिक्रमः 'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः।' इति शास्त्रावगतः तेन क्रमेण तेषां पूर्वसंस्कृतानां मध्ये ज्येष्ठभ्रात्रादिः कुर्वन्स्वपितृभ्यो दद्यात्। समावर्तनस्यापि विवाहात्प्राचीनसुतसंस्कारत्वाज्जीवपितृकसमावर्तने पिता स्वपितृभ्यो दद्यात्। अजीवत्पितृकस्तु पूर्वसंस्कृतभ्रात्रसंभवे स्वयमेव स्वपितृभ्यो दद्यात्, उपनयनेन कर्माधिकारसत्त्वात्। विवाहेऽप्येवमेव द्रष्टव्यम्" इति पारिजाते व्याख्यातम्। अत्र च पितुर्जीवत्पितृकस्याजीवत्पितृकस्य च ज्येष्ठभ्रात्रादेश्च तथा द्विविधस्य शास्त्रान्तरे श्राद्धीयदेवतात्वेन येऽवगताः पित्रादयो मात्रादयो मातामहादयश्च तेषामेव स्वपितृभ्य इति निर्देशः, स्वेज्यत्वस्य षष्ठ्यर्थत्वात्, जीवत्पितृकेण स्वजनकाद्युद्देश्यकश्राद्धानुष्ठानस्य बाधितत्वात्। अत एव समावर्तनस्य माणवककर्तृकत्वेऽपि तदङ्गभूतनान्दीश्राद्धे पितुस्तदभावे ज्येष्ठभ्रात्रादेरप्राप्तकर्तृत्वप्रापणादिना वचनस्यार्थवत्त्वमित्याशयेन तदुपन्यास इति बोध्यम्। अजीवत्पितृक इति च जीवदसंनिहितपितृकस्याप्युपलक्षणम्। स्वपितृभ्य इति च पूर्ववत्। आद्यस्येज्या जनकादय एव, परस्य पितुर्जनकादय एव, न त्वाश्वलायनपरिशिष्टोक्तरीत्या पितृपार्वणत्यागेन मात्रादयः, समावर्तनस्याऽऽत्मसंस्कारत्वेन सुतसंस्कारत्वाभावात्। हेमाद्रिणा त्वक्षरारूढयप्राप्तविधिं दर्शयितुं व्याख्यान्तरमकारि- "पित्रभावे अन्यो यः कश्चित्संस्कारं कुर्यात्स तं कुमारपितरमारभ्य संस्कार्यस्य पितॄणां यः क्रमस्तेन क्रमेण दद्यात्, न तु स्वीयेभ्यः पितृभ्यः। तस्मात्पितृव्याचार्यमातुलादयः संस्कार्यस्योपनेयादेरेव पितृभ्यः श्राद्धं दद्युः, न स्वपितृभ्य इत्यत्र पारमार्थिकः पक्षो विधीयते, अन्यथा स्वपितृभ्य इत्यस्यानुषङ्गकल्पनाया अन्याय्यत्वात्, पितृव्यादीनामपि पितृवत्स्वपितृभ्यो दानाविशेषे 'स्वपितृभ्यः पिता दद्यात्' इत्यस्यानर्थक्यापत्तेः, पितुः पितृव्यादिषु वैलक्षण्यद्योतकतुशब्दानुपपत्तेः, उपनेयस्य प्रदेयकन्यायाश्च मुख्याधिकारित्वेन तदीयपित्रादीनामिज्यत्वौचित्याच्च। महार्णवोदाहृते- 'गर्भाष्टमे वर्षे ब्राह्मण आत्मानमुपनाययेत्' इत्यादिबुधस्मृत्यादिवाक्ये णिजन्तमुपनायनशब्दं व्याचक्षाणैरपरार्कादिभिरुपपादितं चोपनेयकन्ययोरेवोपनयनादौ मुख्याधिकारित्वम्" इति। अयमेवप्रकारः पितृव्यकर्तृकविवाहे बोध्यः। न च तत्र मानाभावः, पित्रभावे नामकरणे कर्त्रन्तरप्रापकशङ्खस्मृतौ 'अन्यो वा कुलवृद्धः' इत्यस्य नामकरणप्रभृतिसंस्कारविषयताया हेमाद्रिणैवोक्तत्वादिति। अत्रापि पित्रभावो द्वेधा, मरणेन प्रवासादिना वा। पितरमारभ्येत्यपि इज्यत्वेन इज्योपलक्षणत्वेन वा। संस्कार्यस्येति षष्ठी क्रमनिरूपितसंबन्धार्था। संस्कार्यं प्रति समावर्तनादौ इज्यदेवताक्रमो यो विहित इत्यर्थः। अत एवेज्यत्वमुपनेयादेरिति षष्ठ्यर्थः। ततश्चाजीवत्पितृकस्योपनयनं कुर्वन्मातुलादिः तदीयजनकादीनुद्दिश्यैव कुर्यात्, जीवत्पितृ-

---

¶ शेषं संक्षेपेण चश्चानुवादः।

कस्य तु जनकस्य जनकादीन्, न तु परिशिष्टानुसारेण केवलान् प्रमीतानपि संस्कार्यमात्रादीन्, संस्कार्ये प्रति स्वसंस्कारे समावर्तनादौ कर्तव्ये तासामुक्तरीत्येज्यत्वाप्राप्तेः । अत उपनयने समावर्तन इव संस्कार्यस्यैव यद्यधिकारः स्यात्तदा संस्कार्यस्य नान्दीश्राद्धदेवता या औचित्यायातास्ता एवोद्दिश्य मातुलादिर्नान्दीश्राद्धं कुर्यादिति तात्पर्यार्थः । संकौ. २९–३०

( १० ) जीवत्पिताऽपि द्वितीयविवाहाद्याधानयज्ञादिष्वपि पित्रा येभ्यो दीयते तेभ्यः स्वयमेव दद्यात् । पितुरनन्तरं स्वपितृभ्यः स्वमातामहेभ्यश्च दद्यात् । तस्य मातामहे जीवति तद्वर्गत्यागः । पितुरभावे ज्येष्ठभ्रात्रादिर्यः संस्कारकर्तृत्वेनोपतिष्ठते स एव कुर्यात् ।

* आन. १४४

( ११ ) अत्र पिण्डशब्दो लक्षणया श्राद्धपरः 'पिण्डदोंऽशहरश्चैषाम्' इत्यादिवत् । यद्यपि पितृशब्दस्य ससंबन्धिकत्वादेव स्वत्वलाभस्तथाऽपि तुर्यपादार्थप्रकाशनार्थं तद्व्यतिरेकार्थस्य स्पष्टप्रतिपादनार्थं स्वपदम् । पितृशब्दश्च तत्रत्यसंप्रदानमात्रपरः । बहुवचनेन सर्वेषां तत्त्वं सूचितम् । तथा च पितुः सपितुरपितुश्च तथा द्विविधज्येष्ठभ्रात्रादेश्च शास्त्रान्तरे श्राद्धीयदेवतात्वेन येऽवगताः पित्रादयो मात्रादयो मातामहादयश्च तेषामेव स्वपितृभ्य इति निर्देशः, स्वेत्यत्र स्वत्वस्य षष्ठ्यर्थत्वात्सपित्रा स्वपित्रादिश्राद्धानुष्ठानस्य बाधात् । यद्यपि सुतस्य संस्कारकर्मणी इति व्याख्याने बहुवचनासङ्गतिः, संस्काररूपकर्मणीति व्याख्यानेऽप्येवम्, कर्मपदानर्थक्यं च । एतेन 'तस्य संस्काररूपेषु कर्मसु' इति व्याख्यानमपि निरस्तम्, अन्यथाऽन्यपितृभ्यो दद्यादित्यनर्थापत्तेश्च, तयाऽपि सुतश्च संस्कारश्च कर्म चेति द्वन्द्वो बोध्यः । अत्र सुतशब्देन तज्जननं लक्ष्यते, 'पुत्रजनने' इति तत्रोक्तेः । अस्य पृथगुक्तिस्तु तत एव प्राधान्यख्यापनार्थम् । तेन तन्निरूपितं पितृत्वमित्यपि स्फुटतयाऽभिव्यक्तम् । एतदनुरोधेनैव तत्र पुत्रजनन इत्यन्येषामपि नान्दीमुखश्राद्धानामुपलक्षणम् । संस्कारशब्देन गर्भाधानादयः प्रसिद्धाः । कर्मशब्देनेष्टापूर्तव्रतादि । अत एव तदुक्तिरपि सफला, अन्यथा संस्कारशब्देन प्रसिद्धानामेव ग्रहणेनाव्याप्त्यापत्तेः । संस्कारपदानुक्तावप्येवम् । एवं च न कस्यापि वैयर्थ्यम्, नापि बहुवचनासंगतिः, 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इतिवत् । तथा च पिता सुतादिषु त्रिषु गर्भाधानादिषु इष्टापूर्तव्रतादिषु च स्वपितृभ्य आत्मपितृभ्य आत्मीयपितृपितृभ्यश्च पिण्डान् श्राद्धानि दद्यात् । संस्कारांशेऽनतिप्रसङ्गायाह— ओद्वहनादिति । आ उद्वहनादिति छेदः । आङभिविधौ, 'आङ्मर्यादा०' (पासू. २।१।१३) इति पाणिन्युक्तेः । विष्णुधर्मोत्तरपर्यालोचनया मर्यादायास्त्यागः । अत एव विवाहोऽप्याद्य एव, तस्यैव संस्कारत्वाच्च । तथा च तेषां संस्काराणां मध्ये आद्यं विवाहमभिव्याप्येत्यर्थः । एतेन तेषां सुतानामोद्वाहनादिति रत्नावल्युक्तमपास्तम्, उक्तयुक्तेः । द्वितीयविवाहो द्वेधा, अपत्नीकस्याऽऽद्येन संस्कृतत्वेन तदर्थत्वाभावेऽपि आश्रमधर्मार्थः, सपत्नीकस्य रतिपुत्रार्थ इति बोध्यम् । तेषामित्यस्य मध्यमणिन्यायेनाग्रेऽपि संबन्धः । तथा च तस्य पितुरभावे दिवं गतत्वेऽसांनिध्ये वा तत्क्रमात् पितृक्रमात् पितृपितामहादिक्रमेणैव पितृकर्तव्यश्राद्धीयदेवताक्रमेणैव वा यः कोऽपि दद्यादित्यर्थः । अत्राऽऽद्यो हेमाद्र्युक्तः । तथा पितृव्याचार्यमातुलादयः संस्कार्यस्योपनेयादेरेव पितृभ्यः श्राद्धं दद्युः, न स्वपितृभ्य इति अत्र विवेयं तत्त्वम्, अन्यथा स्वपितृभ्य इत्यस्यानुषङ्गकल्पनाया अन्याय्यत्वात्, पितृव्यादीनामपि पितृवत्स्वपितृभ्यो दानाविशेषे स्वपितृभ्य इत्यस्याऽऽनर्थक्यापत्तेः, पितुः पितृव्यादिषु वैलक्षण्यद्योतकतुशब्दानुपपत्तेः, उपनेयदेयकन्ययोर्मुख्याधिकारित्वेन तदीयपित्रादीनामिज्यत्वौचित्याच्च । महार्णवोदाहृते 'गर्भाष्टमे वर्षे ब्राह्मण आत्मानमुपनाययेत्' इत्यादिबुधस्मृत्यादिवाक्ये णिजन्तमुपनायशब्दं व्याचक्षाणैरपरार्कादिभिरुपपादितम् । आद्य एव विवाहे विशेषोक्तिः । अत एव तुः प्रयुक्तः । एवं च द्वितीयतदभावे आद्योद्वाह एवं तत्सत्त्वे तत्र स एव

* शेषं श्राकौगतम् ।

स्वपितृभ्यो दद्यादिति पर्यवसितम् । स च जीवत्पिताऽन्यो वेत्यन्यदेतत् । एतेनेदं वचनं जीवत्पितृकमात्रविषयमित्यपास्तम्, गमकाभावात् । तुर्यपादस्य प्रत्युत साधारण्ये गमकस्य सत्त्वाच्चेति दिक् ।

अन्ये तु पारिजातादयः— प्रवासादिना चोपनयनादिकर्तुरभाव उपनेयकन्ययोरेवोपनयनादौ मुख्याधिकारित्वम् । अयमेव प्रकारः पितृव्यकर्तृकविवाहे बोध्यः । न च तत्र मानाभावः, पित्रभावे नामकरणे कर्त्रन्तरप्रापकशङ्खे 'अन्यो वा कुलवृद्धः' इत्यस्य नामकरणादिसंस्कारविषयताया हेमाद्रिणैवोक्तत्वात् । अत्रापि पित्रभावो द्वेधा, मरणेन देशान्तरगमनेन वा । तत्र पितुरभावे तत्क्रमात् 'भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।' इति लघुहारीतोक्तेः 'असंस्कृतास्तु संस्कार्याः' (यास्मृ. २।१२४) इति मूलोक्तेश्च तेष्वेव कर्मसु तन्निमित्तः पित्रसंनिधिनिमित्तो योऽधिकारिक्रमस्तद्रूपभ्रात्रादिक्रमात्स्वपितृभ्यो दद्यात् । समावर्तनस्यापि विवाहपूर्वसुतसंस्कारत्वाज्जीवत्पितृकसमावर्तने पिता स्वपितृभ्यो दद्यात्, अजीवत्पितृकस्तु पूर्वसंस्कृतभ्रात्रसंभवे स्वपितृभ्यो दद्यात्, उपनयनेन कर्माधिकारात् । विवाहेऽप्येवमेव । अत एव समावर्तनस्य माणवककर्तृकत्वेऽपि तदङ्गभूतनान्दीश्राद्धे पितुस्तदभावे ज्येष्ठभ्रात्रादेरप्राप्तकर्तृत्वप्रापणादिना वचनमर्थवदिति तदाशयेन तदुपन्यासः । अजीवत्पितृक इति जीवदसंनिहितपितृकस्याप्युपलक्षणम् । स्वपितृभ्य इति पूर्ववत् । आद्यस्येज्या जनकादय एव, परस्य पितुर्जनकादय एव, न तु तत्परिशिष्टात्पितृपार्वणत्यागेन मात्रादयः, समावर्तनस्याऽऽत्मसंस्कारत्वेन सुतसंस्कारत्वाभावादित्याहुः । अस्य क्रमस्य वचनान्तरेण सिद्धत्वात्तु शब्दवैयर्थ्यापत्तेश्च नेदं युक्तम् । किंतु तदेवेति तत्त्वम् ।
बाल. १।२५० पृ. ५७०–५७१

(१२) जातकर्मनामकरणनिष्क्रमणान्नप्राशनचूडोपनयनव्रतचर्याध्ययनसमावर्तनगोदानविवाहाः संस्काराः । तत्र विवाहपर्यन्तसंस्कारेषु पितैव स्वपितृभ्यो दद्यात् । तस्याभावे तु 'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।' इत्यादिवचनाद्यः संस्कारकर्ता ज्येष्ठभ्रात्रादिः स संस्कार्यपित्रादिभ्यो दद्यात् । समावर्तनस्य विवाहप्राक्तनसंस्कारत्वादिति हेमाद्रिः । अत्राभावो नाश एव । देशान्तरगतत्वेनासांनिध्ये रोगेणाशक्तौ संन्यासेन पातित्येन वाऽनधिकारित्वे वाऽन्यः सकुल्यादिर्वचनलब्धाधिकारः करोति तदाऽपि संस्कार्यपितृभ्यो दद्यात् । यदा वचनोक्तसकुल्यादिर्नास्ति तदोपनयनात्पूर्वमृत्विगेव, उपनयनादूर्ध्वं संस्कार्यो वा स्वपितृभ्यो दद्यात् । अत एव— 'पितरो जनकस्येज्या यावद्व्रतमनाहितम् । समाहितव्रतः पश्चात् स्वान्यजेत पितामहान् ॥' इति यमनाम्ना नवीनोदाहृतवचनं संगच्छते । अधिकारिनिर्णये हेमाद्रिणा— पितुरभावे वचनेन लब्धाधिकारः सकुल्यादिरपि 'तस्याभावे तु तत्क्रमात्' इत्यत्र 'स्वपितृभ्यः' इत्यस्यानुषङ्गात् 'प्रधानेऽधिकृत एवाङ्गेऽधिकारी' इति (सकुल्यादिः ?) स्वेभ्य एव दद्यादित्युपसंहृतम्, तत् यदा सकुल्यादिः स्वेन द्रव्येण धर्मार्थं करोति तद्विषयमिति न तत्र वचनविरोध इति ज्ञेयम् । पितुरभावे ज्येष्ठभ्रात्रादिर्दद्यात्, तदभावे स्वयमेव स्वपितृभ्यो दद्यात्, उपनयनोत्तरमधिकारस्य जातत्वादिति प्रयोगपारिजातश्च विष्णुपुराणादिवचनमूलत्वाद्युक्ततर एव । एतेनोपनयनोत्तरं स्वयमेव वृद्धिश्राद्धं कार्यमिति धर्मप्रकाशाद्यर्वाचीनग्रन्था उपेक्ष्याः, विष्णुपुराणादिवचनविरोधात् । पुम. ३७७–३७८

(१३) सुतसंस्कारेति सुतासुतपदयोर्विग्रहीतयोः 'पुमान् स्त्रिया' इत्येकशेषेण प्रयोगः । अत्र तेषां संस्कार्यपितुः पितॄणाम्, तस्याभावे संस्कार्यपितुरभावे, तत्क्रमात् संस्कार्यपितरमादाय क्रमः तत्क्रमः तस्मात् । तथा च योऽन्यः संस्कारकर्ता स संस्कर्तव्यमाणवकादिपितृपितामहप्रपितामहानां तत्पितृमातामहादीनां च श्राद्धं कुर्यात् इति समुदायार्थः संपद्यते । पितुरधिकस्यानुप्रवेशे अर्थात् वृद्धप्रपितामहस्य त्याग इति संप्रदायः । अत एव 'पितृहीनस्य यो नामादिकर्ता स तदीयपितरमारभ्य आभ्युदयिकं कुर्यात्' इति तत्र तत्र व्याख्यातम् ।

नवीनास्तु— तस्य संस्कार्यपितुः अभावे तेषां संस्कार्यपितुः पितॄणामेव प्रकृततया प्रत्यवमर्शे तत्पितुः पितॄणाम्

अर्थे दाने प्राप्ते संस्कार्यपितृक्रमस्यार्थत एव लाभे तत्क्रमादित्यस्य वैयर्थ्यापत्त्या तत्पदेन प्रस्तुतस्य सुतस्य प्रत्यवमर्शे तत्क्रमादित्यस्य संस्कार्यक्रमादित्यर्थो लभ्यते। तेन संस्कारणीयो यथा करोति तथा पितुरभावे पित्रन्यः संस्कर्ता कुर्यादित्यर्थः। तथा च संस्करणीयपित्रादीनां तन्मातामहादीनां तन्मातृपितामह्यादीनां च श्राद्धं पित्रन्यः कुर्यादिति पर्यवसितोऽर्थः इत्याहुः। अत्र पूर्वमतमेव समीचीनम्– तथाहि– संस्करणीयपितुरन्तर्भावबलेन संस्करणीयवृद्धप्रपितामहस्य अर्थतस्त्यागात् सर्वनाम्नः प्रस्तुतप्रत्यवमर्शकतया तेषामित्यनेन पूर्वप्राप्तानां षण्णां मध्ये पञ्चानूद्य स्वपितृभ्य इत्यनेन अप्राप्तस्य संस्करणीयपितुः तत्क्रमादित्यनेन श्राद्धदेवतात्वं विधीयते इति युज्यते। न चैवं नवीनमते संभवति। संस्करणीयक्रमे पूर्वप्राप्तानां षण्णां मध्ये संस्करणीयपितामहप्रपितामहयोरेवानूद्यतया बहुवचनानुपपत्तेः। न च तेषामित्यनेन संस्कार्यपितॄणामेव परामर्शः, अप्रस्तुतत्वात्। तस्मात् तं संस्कार्यपितरमादाय क्रमस्तत्क्रम इति व्याख्यानमेव रमणीयम्। अन्यथा तत्पदेनोपसर्जनपरामर्शापत्तिः। पितृपरामर्शे तु न तथा। स्वपितृभ्यः पिता दद्यादित्यत्र पितुरनुपसर्जनत्वात्। न चानुवादापत्तिः, अप्राप्तसंस्करणीयपितृविधायकत्वात्। प्राप्तभागस्य तदुपकारकत्वेनोपदेशात्। 'भूतभव्यसमाहारे भूतं भव्यायोपदिश्यते' इति न्यायात्। किंच– तदभावे इत्यत्र पितुरेव परामर्श इत्यविवाद एव। एवं चाव्यवहितोच्चरिततत्पदेनापि स एव परामृश्यते अत्यन्तसंनिधेरिति। *संदी. ६५–६६

पितुः पित्रादीनां देवतात्वे निमित्तानि

**§[1]वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।**
**येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः॥**

(१) जीवत्पितृकस्तु पितुर्मात्रादिभ्यो वृद्धिश्राद्धं कुर्यात्, 'वृद्धौ तीर्थे च ...' (इति वचनात्)। एतत्साग्निकविषयकमित्येके। ¶ गभा. ३२

(२) पितरि जीवति स्वमातरि मातामहे च मृते पितुः पितृभ्य इव पितुरेव मातृमातामहयोर्दातव्यम्, 'येभ्य एव पिता ...' इत्यविशेषविधानादिति दाक्षिणात्याः। मदनरत्नादौ तु स्वमातृमातामहेभ्य एव दद्यादित्युक्तम्। तस्यायमाशयः– यत्र हि 'न जीवन्तमतिक्रम्य किंचिद्दद्यात्' इति वचनेन जीवदतिक्रमदोषात् श्राद्धलोपप्रसक्तिः तत्रैव 'येभ्य एव पिता दद्यात्' इत्यादिवचनैर्देवतान्तरं विधीयते। न च जीवत्पितृकेण स्वमातृमातामहादिश्राद्धकरणे जीवदतिक्रमोऽस्ति, येन पितुर्मात्रादीनां देवतात्वं विधीयेत। 'पितरो यत्र ...' इति कात्यायनवचनव्याख्याने, संस्कारकौस्तुभव्याख्यानं च 'तदिदमेके मातॄणां पृथक्कुर्वन्ति' इति आश्वलायनगृह्यपरिशिष्टव्याख्याने द्रष्टव्यम्।

¶ गप., प्रर. गभावत्।

* शेषं श्राकौगतम्।

§ अस्य मपाव्याख्यानं 'स्वपितृभ्यः पिता०' इति कात्यायनवचने, श्राद्धकल्पलताव्याख्यानं 'ब्राह्मणादिहते

(१) स्मृसा. ९७ (=) (येभ्यो वाऽपि पिता दद्यात्) एतावदेव; मपा. ६३६ (=) स्वयं सुतः (तु पुत्रकः) उत्त.; गभा. ३२ क्रमेण कात्यायनः : १०७ मैत्रायणीयपरिशिष्टम्; गप. ३३१ (=) (येभ्यो वाऽपि पिता दद्यात्तेभ्यो वाऽपि प्रदापयेत्॥) उत्त.; प्रर. १४ क्रमेण कात्यायनः : ११७ मैत्रायणीयपरिशिष्टम्; श्राप्र. १७ (=) उत्त. : १८ स्मृत्यन्तरम् : २९७ (=) द्यात्स्वयं सुतः (द्यात्तु तत्सुतः) उत्त.; लता. १४ द्यात्स्वयं सुतः (द्यात्तु वै सुतः) षट्त्रिंशन्मते : १४९; श्राम. २६; संम. ७; सिन्धु. १७४६ : १७५७ षट्त्रिंशन्मतम् : १७६० (=) निर्देशमात्रम्; विपा. ३५ (भागः २) मनुः : ८१६ (भागः २) द्वितीयपादे (पतिते तु विशेषतः) स्मृत्यन्तरम्; संको. २६ : २७ उत्त.; आन. ११४ (=) पूर्वार्धे (वृद्धौ पितरि संन्यस्ते यद्वा देशान्तरं गते।); प्रका. ३३ : ४७ (=) निर्देशमात्रम्; बाल. १।८९ पृ. २७१ संग्रहः : १।२५० पृ. ५७४ उत्त.; संग. ८८ संग्रहे; संव. ४१ : १७३ मैत्रायणीयपरिशिष्टम्; पुम. ३८० (=); संर. १०५५; संदी. ६७ संग्रहे : ६८ (=) उत्त.

पूज्यन्ते तत्र मातामहा ध्रुवम् ।' इति मातामहश्राद्ध-विधायकवृद्धयाज्ञवल्क्यवचनेन श्राद्धकर्तृमातामहानामेव श्राद्धविधानाच्च न पितुर्मातामहानां देवतात्वम् । एवं पितामहादिषु जीवत्स्वपि द्रष्टव्यम् । मृते पितरि जीवन्मातृकः पितामह्यादिभ्यो दद्यादिति स्मृतितत्त्वादयः प्राच्याः । दाक्षिणात्यास्तु– 'पितृवर्गे मातृवर्गे तथा मातामहस्य च । जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत् ॥' इति वचनात्तद्वर्गमेव त्यजेदित्याहुः ।

श्राप्र. १६–१७

(३) ताते सति इति वृद्धितीर्थसंन्यस्तपतितपदैः प्रत्येकं संबध्यते । तत्राप्याद्याभ्यां वैयधिकरण्येनोत्तराभ्यां सामानाधिकरण्येन । वृद्धौ तीर्थे च इत्यनेकनिमित्तसमावेशे वाक्यभेदापत्तेः 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इत्यन्तर्वेदिबहिर्वेदिपदे इव संधिदेशस्य, 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इति जातपुत्रादिपदानीव वयोविशेषस्य, वृद्धितीर्थपदे जीवत्पितृकाधिकारिकश्राद्धमात्रोपलक्षके । उक्तप्रकारेण तेष्वपि जीवत्पितृकस्याधिकारस्य समर्थितत्वात्तेषां देवताकाङ्क्षासद्भावात् । जीवत्संन्यस्तपतितपितृकस्य तु दर्शश्राद्धादावप्यधिकारः । उत्तरार्धेन पितृदेवता एवैनं प्रत्युपदिश्यन्ते । अत एव जीवत्पितृकस्य मातरि मातामहे च मृतेऽपि न स्वनिरूपितमातृमातामहपार्वणयोः प्राप्तिः । किं तु पितृनिरूपितयोरेव । पितामहेऽपि जीवति तन्निरूपिता एव देवताः । पौत्रस्य पितृनिरूपितत्वसंबन्धेनैतद्वचनादेव प्राप्तेः । 'अत्र ह्येवाऽऽवपन्ति' इतिवदेवकारेण शब्दतस्तासां परिसंख्यातत्वात् । सुमन्तुहारीतौ– 'जीवत्पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् । येभ्यो वाऽपि पिता दद्यात्तेभ्यो दानं प्रचक्षते ॥' इति 'पितुः पितृभ्यो वा दद्यात्सपितेत्यपरा श्रुतिः' ।

गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्माद्यपत्यसंस्कारेषु त्वाश्वलायनानां प्रतिप्रसूयन्ते प्रयोगपारिजात आश्वलायनगृह्यपरिशिष्टे– 'जीवत्पिता सुतसंस्कारेषु मातृमातामहयोस्तस्यां जीवन्त्यां मातामहस्य कुर्यात्' इति । अनयोरन्यतरजीवने तु पितृनिरूपितः स वर्ग इति, उभयोर्जीवने तु वर्गत्रयमपि पितृनिरूपितमेव । ये त्वेतद्वचसा स्वीयमातृमातामहपार्वणे एव भवतः, न पितृपार्वणमित्याहुः, तन्न, अग्निहोत्रे मान्त्रवर्णिकाग्निसूर्ययोः पृष्ठभावेन प्रजापतिविधाविव तयोः 'पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।' इति पितृप्राप्तेर्मातामहप्राप्तावुपजीव्यत्वेन तद्बाधायोगात् मानाभावाच्च ।

यत्तु कौण्डिन्यः– 'दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् । न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥' इति, तत् प्रतिनिधीभूयैतानि श्राद्धानि न कुर्यादित्यर्थः । एतेन 'अष्टकादिषु संक्रान्तौ मन्वादिषु युगादिषु । चन्द्रसूर्यग्रहे पाते स्वेच्छया पूज्ययोगतः । जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाऽखिलम् ॥' इति क्रतुवचोऽपि व्याख्यातम् । एतैर्वाक्यैर्जीवत्पितृकाधिकारिकविधिप्राप्तश्राद्धनिषेधे तु 'न तौ पशौ करोति' इतिवद्विकल्पापत्तिः । किंच जीवत्संन्यासिपतितपितृकयोरपि निषेधप्रवृत्तेः श्राद्धाधिकाराभावेन तत्र देवताविधेरनुपपत्तिः । ननु भवत्पक्षे तयोः कथं श्राद्धेऽधिकारः ? 'वृद्धौ तीर्थे च' इति कातीयेनैव देवताविशिष्टश्राद्धविधौ दार्शिकाद्यपेक्षया कर्मान्तरापत्तिः, एतौ प्रति विशिष्टविधिरितरजीवत्पितृकं प्रति विवाहादिश्राद्धे देवतामात्रविधिरिति वैरूप्यापत्तिश्चेति चेत्, शृणु, सर्वेऽप्यमावास्याष्टकादिश्राद्धविधयो जीवत्पितृकमृतपितृकसाधारण्येनैव प्रवर्तन्ते । तत्र जीवति पितरि दर्शश्राद्धप्रधानपित्रादिपार्वणदेवताभावादभ्युदितेष्टौ उपांशुयागवल्लुप्यते । एतस्यैवानुवादकम् 'सपितुः पितृकृत्येषु अधिकारो न विद्यते । न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिः ॥' इति कातीयम् । वैधदेवताप्राप्तौ तु पुनः प्रवर्तन्ते ।

पृ. २६–२७

स्त्रीणामपि पूर्तमहादानकन्योद्वाहादिप्रधानेऽधिकारात्तदङ्गे नान्दीश्राद्धेऽप्यसौ स्पष्ट एव । तत्र जीवद्भर्तृकायाः पूर्तव्रतमहादानादिषु तावत्पुरुषस्येव स्वीयमातृपितृमातामहपार्वणानीति । भर्तृसंनिधानेन तस्याः कन्योद्वाहे स्वीया भर्तुर्वा पार्वणत्रयदेवताः । अयं च विकल्पः 'स्वपितृभ्यः पिता दद्यात्' इति श्लोकव्याख्यानेन नान्दीश्राद्धप्रकरणे स्पष्टीभविता । विधवायास्तु पुत्राभावे

तद्वदेव श्राद्धाधिकारः, (तस्याः ?) 'अपुत्रा पुत्रवत्पत्नी पुत्रकर्म समाचरेत्।' इति वचनात्। पुत्रवदिति वतिना प्रकरणानुरोधाच्छ्राद्धक्रियातुल्यतोक्त्या पुत्रकर्तृकश्राद्धवदेव देवताः। उद्देश्यत्वं तु पित्रादीनां भर्तृत्वादिना, तन्मातामहानां पितृत्वादिना, यं प्रति येन रूपेण संबन्धिता तं प्रति तेनैव रूपेणोद्देश्यत्वात्। अत एव स्मृतिदर्पणे– 'स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च। विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता॥' इति। ¶ श्राम. २८

(४) संन्यस्ते जीवतीत्यर्थः। मृते तु संन्यस्ते तदाद्येव देयम्। मृतेऽपि परेभ्य एवेति गौडाः।

सिन्धु. १७५७–१७५८

[मृतेऽपीति। सतीत्यस्य वैयर्थ्यापत्तिररुचिः।

कृभ.]

(५) जीवत्पितृकस्य विशेषमाह मनुः– वृद्धौ तीर्थे चेति। अस्यार्थः– पितृकर्तृके कर्मणि वृद्ध्यादौ यदि पितृप्रतिनिधित्वेन पुत्रस्य कर्तृत्वं तदा पितृपित्रादय एव यष्टव्याः, न तु स्वमातृमातामहादय इति। स्वकर्तृके स्वपत्नीनिषेकादिकर्मणि तु पितरि जीवत्यपि स्वमातृमातामहादिभ्यो दद्यात्, 'पितरो जनकस्येज्या यावद् व्रतमनाहितम्। समाहितव्रतः पश्चात्स्वान् यजेत पितॄन् सदा॥' इति वृद्धयाज्ञवल्क्योक्तेः। पृ. ३५

स्वयमिति स्वाधिकारितोच्यते।

* विपा. ८१६ (भागः २)

पितुः स्वस्य च नान्दीश्राद्धाधिकारे व्यवस्था

**†नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः।**
**अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्॥**

¶ संम., कृभ., संदी. श्रामगतम्।

* 'मातामहाना ...' इति विष्णुस्मृतिम्याख्यानमपि द्रष्टव्यम्।

† लताव्याख्यानं 'उद्वाहे पुत्रजनने' इति मैत्रायणीयपरिशिष्टवचने, संमव्याख्यानं 'स्वपितृभ्यः पिता' इति कात्यायनवचने, संकौव्याख्यानं 'त्रिषु जीवत्सु' इत्याश्वलायनगृह्यपरिशिष्टवचने द्रष्टव्यम्।

(१) प्रपा. २० बुधः (पुनः) सायणीये : ३८६ (=)

(१) अत्र द्वितीयां परिग्रहीष्यन् जीवत्पितृकोऽपि वृद्धिश्राद्धप्रकरणोक्तरीत्या स्वयमेव नान्दीश्राद्धं कुर्यात्। तथा च तत्रत्यवचनम्– नान्दीश्राद्धमिति। तत्र पितृवर्गं विहाय मातृमातामहवर्गयोः कुर्यात्। मातरि जीवन्त्यां मातामहस्यैव कुर्यात्। तस्मिन्नपि जीवति द्वारलोपात्कर्मलोप एव। तान्प्रत्यक्षेण पूजयेदित्यन्ये। सोऽपि साग्निकश्चेत् स्वस्य पिता येभ्यो दद्यात्तेभ्यः स्वयमपि दद्यात्। 'येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः।' इति वसिष्ठवचनात्। स्वस्तिवाचनाङ्कुरार्पणग्रहयज्ञांश्च स्वयमेव कुर्यात्। प्रपा. ३८६

(२) द्वितीयपाणिग्रहादौ वर एव कुर्यादित्यर्थः।

गभा. ३२

(३) अन्यः असाग्निकोऽपि पितृदेवताभ्यो दद्यात्, न तु लोपः, 'वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति। येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः॥' इति मैत्रायणीयपरिशिष्टात्। ¶ प्रर. ११७

¶ शेषं प्रपावत्।

बुधः (पुनः); श्राका. ५१९ कुर्यात् (दद्यात्) प्रकुर्वीत (प्रकर्तव्यं) स्मृतिः; गभा. ३२ बुधः (पुनः) सायणीये : १०१, १०७ बुधः (पुनः) स्मृतिः; प्रर. १४ बुधः (पुनः) सायणीये : ११७ बुधः (पुनः) स्मृतिः; संप्र. ८७५ बुधः (सुतः); श्राप्र. १८ स्मृतिः; मुक्ता. ७५३ दाद्ये पाणिग्रहे बुधः (दाद्यपाणिग्रहावधि) सायणीये; लता. १५ (=): १७ बुधः (पुनः) सायणीये; संम. ७ बुधः (पुनः) प्रकुर्वीत (सुतः कुर्यात्) सायणीये; सिन्धु. ११३४ बुधः (पुनः) स्मृतिः : १७४४ स्मृतिः; विपा. ३५ (भागः २) सायणाचार्यः; संकौ. २७ (=); आन. १४३ सर्वं मुक्तावत्; प्रका. ३३ सायणीये; बाल. १।२५० पृ. ५७० बुधः (पुनः) विष्णुधर्मोत्तरे; संग. ८८ बुधः (पुनः) सायणीये : ३३३ (=) बुधः (पुनः); संव. १७२ बुधः (पुनः) स्मृतिः; कृभ. १०७४ (=) पृ.; संर. ५३७ (=) बुधः (पुनः) : ५३९ (=) बुधः (पुनः) पृ.; संदी. ६४ बुधः (पुनः) प्रयोगरत्ने.

(४) अत्र नान्दीश्राद्धादिकं वरेणैव कार्यम् । तच्च येभ्यः पिता दद्यात्तेभ्यः कार्यम् । तथा च स एव– 'येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ।' इति । साग्निक इति कर्तृमात्रोपलक्षणम् । अन्यथा निरग्निकस्य जीवत्पितृकस्य वृद्धिश्राद्धाभावप्रसङ्गात् । इष्टापत्तौ 'नानिष्ट्वा तु पितॄन् श्राद्धे वैदिकं किंचिदाचरेत् ।' इति वचनविरोधः । संप्र. ८७५–८७६

(५) यदि तु पिता देशान्तरं गतः मृतो वा पितामहादिश्च नास्ति तदा स्वयमेव नान्दीश्राद्धं कुर्यात्, उपनयनेन कर्माधिकारस्य जातत्वात् । अत्र पूर्वार्धोक्तं पितुर्नान्दीश्राद्धं न विधेयम्, वाक्यभेदापत्तेः । किंतु स्व( ? स्वयं )द्वितीयादिविवाहे नान्दीश्राद्धं कुर्यादित्येक एव विधिरिति । कृम. १७४४–१७४५

(६) पित्रभावे पितामहाद्यन्यतमः । सर्वेषाममावे स्वयमेवेति निबन्धकृतः । पृ. ५३७

'नान्दी... पुनः ।' इति वचनात् नान्दीश्राद्धमात्रं पितृकर्तृकम् । नान्दीश्राद्धशब्देन स्वस्तिवाचनमप्युपलक्ष्यत इति केचित् । संर. ५३९

मातृपूजापूर्वकत्वं नान्दीश्राद्धस्य, महामङ्गलोत्तरमृतुत्रये लघुमङ्गलनिषेधः

**[१]मातृयागक्रियापूर्वं कार्यं श्राद्धं तु मङ्गले ।**
**ऋतुत्रयेऽपि कर्तव्यं न चान्यल्लघुमङ्गलम् ॥**

यत्तु कात्यायनेनोक्तम्– 'मातृयाग ...' इति, तद्यथाकालं क्रियमाणसंस्कारविषयम् ।

मुक्ता. ७५३

नान्दीश्राद्धस्य नवदेवताकत्वम्

**[२]नवानां नवकं वृद्धौ तथैवान्वष्टके विदुः ।**
**कुर्याद्द्वादशदैवत्यं प्रेते तीर्थे गयासु च ॥**

यद्यपि श्राद्धकाशिकायां 'नवानां नवकं ...' इति कात्यायननाम्ना लिखितवचनं तदप्यन्यशाखाविषयम्, सूत्रस्मृत्योर्विरोधे सूत्रस्यैवासाधारणत्वेन बलीयस्त्वात्, स्मृतेस्तु सर्वशाखासाधारण्येना( न्य )त्रसावकाशत्वेन दुर्बलत्वात् । एतेन हलायुधश्राद्धकाशिकाकारादिभिः कात्यायनसूत्रानुसारिभिर्यद्वाजसनेयिनामाभ्युदयिकं नवदैवत्यमित्युक्तं तत् कात्यायसूत्रविरुद्धत्वात्कात्यायनप्रणीतच्छन्दोगपरिशिष्टादिवचनविरुद्धत्वाच्चोपेक्षणीयम् ।

संग. ८२

## भृगुः

अधिकमासे नान्दीश्राद्धनिषेधः

**[१]वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयम् ।**
**राजाभिषेकं काम्यं च न कुर्याद्भानुलङ्घिते* ॥**

## व्यासः

नान्दीश्राद्धनिमित्तानि

**[२]पुत्रोत्पत्तौ सदा श्राद्धमन्नप्राशनके तथा ।**
**चूडाकार्ये व्रते चैव नाम्नि पुंसवने तथा ॥**
**पाणिग्रहे प्रतिष्ठायां प्रवेशे नववेश्मनः ।**
**एतद्वृद्धिकरं श्राद्धं गृहस्थस्य विधीयते ॥**

नान्दीश्राद्धे विशेषधर्माः

**[३]पितॄणां रूपमास्थाय देवा अन्नमदन्ति हि ।**
**तस्मात्सव्येन दातव्यं वृद्धिश्राद्धेषु दातृभिः ॥**
**[४]दूर्वायवैः सबदरैर्मिश्रान् पिण्डान् मुदा युतः ।**
**नान्दीमुखेभ्यस्तीर्थेन दद्याद्दैवेन पार्थिव ॥**

श्राद्धेषु विश्वदेवसंज्ञाः

**[५]दक्षस्य दुहिता साध्वी विश्वा नाम प्रकीर्तिता ।**
**तस्याः पुत्राः महात्मानो विश्वेदेवा महाबलाः ॥**

---

(१) मुक्ता. ७५३ ; आन, १४४ पू.
(२) श्राका. ४३३ प्रेते तीर्थे ( प्रेततीर्थे ) ; संग. ८२.

* अधिकमासे इत्यर्थः ।
(१) स्मृच. ३७० ; चश्रा. २२४ ; चम. १२९.
(२) संसौ. ५१.
(३) विश्व. १।२४६ पू. ; श्राका. ५१३ हि ( ते ) श्राद्धेषु ( पूर्वेषु ) स्मृतिः ; संसौ. ५१ अन्नमदन्ति हि ( ह्यन्नं समश्नुते ).
(४) संसौ. ५१–५२. (५) मभा. १५।८.

क्रतुर्दक्षो वसुः सत्यः कालः काम्यः शुची रुचिः।
पुरूरवार्द्रवौ चेति विज्ञेयास्ते दशामराः ॥
इष्टिश्राद्धे क्रतुदक्षावष्टक्यां कालकाम्यकौ ।
नान्दीमुखे वसुसत्यौ काम्ये चापि शुची रुचिः ।
पुरूरवार्द्रवौ चैव पार्वणे तु प्रकीर्तितौ ।
आह्वयेन्नामतस्तेषां तत्र तत्र नियोगतः ॥

हेमश्राद्धनिमित्तानि

[1]द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥

(१) आमश्राद्धासमर्थं प्रति हेमश्राद्धमाह व्यासः– द्रव्येति । द्रव्यमत्र भोज्यं विवक्षितम्, द्विजश्च भोक्ता ।
$ अप. १।२२६–२२८ पृ. ४७१

(२) अत्राप्यामश्राद्धोक्तो विशेषो यथासंभवमनुसंधेयः । § स्मृच. ४९२

[2]जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ।
यस्माच्चान्द्रायणाच्छुद्धिस्तेषां भवति नान्यथा ॥

जननिमित्तकनान्दीश्राद्धस्य मलमासेऽपि कर्तव्यता

[3]जातकर्मणि यच्छ्राद्धं दर्शश्राद्धं तथैव च ।
मलमासेऽपि कर्तव्यं व्यासस्य वचनं यथा ॥

## देवलः

नान्दीश्राद्धस्य प्रातःकर्तव्यता

[4]पूर्वाह्णे दैविकं कर्म अपराह्णे तु पैतृकम् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥

$ मपा. अपगतम् ।

§ शेषं अपवत्, लता. स्मृचवत् ।

(१) अप. १।२२६–२२८ पृ. ४७१ ; स्मृच. १९, ४९२ ; चश्रा. १५३१ ; पमा. ४४० हेमश्राद्धं (हेम्ना श्राद्धं) ; मपा. ३५४ भावे (लाभे) ; प्रपा. १३१ द्रव्या (अन्ना) शेषं पमावत् ; संसौ. ५२ ; संप्र. १९१ ; चम. १३६ ; लता. ११४ ; संग. ४२७.

(२) प्रपा. १३१ ; गभा. १६० पू., पृथ्वीचन्द्रोदये ; आन. १४७ (=) पू. (३) चश्रा. २२७.

(४) मिता. १।२५२ ; लता. ३१ अप (त्वप) प्रचेतसपि द्रष्टव्यम्.

विश्वेदेवासनेषु विशेषः

[1]ये चात्र विश्वेदेवार्थं पूर्वं विप्रा निमन्त्रिताः ।
प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि च ॥

## प्रजापतिः

श्राद्धकालाः

[2]वृद्धौ क्षयेऽह्नि ग्रहणे युगादौ .......
...... श्राद्धस्य कालः स च सर्वदोक्तः ॥

नान्दीश्राद्धफलानि

वृद्धौ प्राप्ते च यः कुर्याच्छ्राद्धं नान्दीमुखं पुमान्।
तस्याऽऽरोग्यं यशः सौख्यं विवर्धन्ते धनप्रजाः ॥

नान्दीश्राद्धस्य पूर्वाह्णकर्तव्यता

पूर्वाह्णे कामिकं श्राद्धं कुर्यान्नान्दीमुखं तथा ।
माध्याह्निकं यदा कुर्यान्नित्यश्राद्धं तदा भवेत् ॥

श्राद्धेषु विश्वदेवसंज्ञाः

इष्टिश्राद्धे क्रतुदक्षौ काम्ये च धूरिलोचनौ ।
पुरूरवार्द्रवसंज्ञौ पार्वणे समुदाहृतौ ॥
सापिण्ड्ये कालकामौ तौ वृद्धौ सत्यवसू स्मृतौ ।
यज्ञे च बहवः सन्ति श्राद्धे श्राद्धे पृथक् पृथक् ॥

नान्दीश्राद्धस्य नवदैवतत्वम्

पार्वणं च क्षयाहे स्याद्वृद्धौ स्यान्नवदैवतम् ।
दर्शे षड्दैवतं श्राद्धं काम्ये त्रैपौरुषं भवेत् ॥

नान्दीश्राद्धे मातृश्राद्धस्य विश्वदेवराहित्यम्, पितृश्राद्धस्य सदैवतत्वं च

अन्वष्टक्ये पितृभ्यश्च तत्स्त्रीभ्यश्च सदैवतम् ।
ताभ्यस्त्वदैवतं वृद्धौ तेभ्यश्चापि सदैवतम् ॥

नान्दीश्राद्धे श्राद्धत्रयक्रमः

मातरः प्रथमं पूज्याः पितरश्च ततः परम् ।
मातामहाश्च तदनु वृद्धिश्राद्धे त्वयं क्रमः ॥

(१) श्रात. ३१५.

(२) प्रस्मृ. १७–१९, १७७, १७९–१८०, १८४, १९२–१९३.

## यमः

नान्दीश्राद्धस्य श्राद्धप्रकारत्वम्

**[1]नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धमथापरम् ।
पार्वणं चेति विज्ञेयं श्राद्धं पञ्चविधं बुधैः ॥**

जीवत्पितृकस्य श्राद्धानधिकारः, साग्निकस्य वैकल्पिकाधिकारः, तत्र देवताविधिश्च

**[2]पित्र्यं जीवत्पितुर्नोक्तमग्नौ होमोऽपि पाक्षिकः ।
येभ्यो वाऽपि पिता तेभ्यो दद्याद्वैतानकर्मणि ।
दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्च त्रितयं यदा ॥
[3]पितरो जनकस्येज्या यावद्व्रतमनाहितम् ।
समाहितव्रतः पश्चात्स्वान्यजेत पितामहान् ॥**

(१) पितामहानिति पित्राद्युपलक्षणम् ।

श्राका. ५१९

(२) समाहितव्रतः समाप्तब्रह्मचर्य इत्यर्थः ।

विपा. ३५ (भागः २)

## भरद्वाजः

नान्दीश्राद्धस्य पूर्वाह्णकर्तव्यता

**[4]पूर्वाह्ण एव नान्दी स्यादपराह्णे तु पैतृकम् ॥**

## संवर्तः

पुत्रजननिमित्तकं नान्दीश्राद्धं हेम्नैव कर्तव्यम्

**†[5]पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ।
न पक्वेन न चाऽऽमेन कल्याणान्यभिकामयन् ॥**

† अस्य संमव्याख्यानं स्त्रीशूद्र इति प्रचेतोवचनव्याख्याने संव्याख्यानं च बृहन्नारदीयपुराणवचनव्याख्याने द्रष्टव्यम् ।

(१) यमस्मृ. ८२.

(२) बाल. १।२५० पृ. ५७३ : ५७७ यदा (यदि) तृतीयार्धमात्रम्.

(३) श्राका. ५१९ स्मृतिः ; सिन्धु. १७४२, १७४५–१७४६ ; विपा. ३५ (भागः २) पितामहान् (पितॄन् सदा) वृद्धयाज्ञवल्क्यः ; पुम. ३७८.

(४) मुक्ता. ७५४.

(५) चश्रा. १५३१–१५३२ ; गभा. १६० ; श्राप्र. २८४ ; संम. १५ ; सिन्धु. ८४६ ; बाल. १।११–१२

## शातातपः

नान्दीश्राद्धस्य प्रातःकर्तव्यता विशेषधर्माश्च

**[1]आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यमे ।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥**

(१) अत्र प्रातःशब्दः सार्धप्रहरात्मककालवचनः । तदाह गार्ग्यः— 'ललाटसंमिते भानौ प्रथमः प्रहरः स्मृतः । स एव सा(?चा)र्धसंयुक्तः प्रातरित्यभिधीयते ॥' ।

गभा. ३३

(२) इदं च पुत्रजन्मातिरिक्तविषयम् । तदाहात्रिः— 'पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम् । पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥' इति ।

* सिन्धु. १७३०

(३) श्रौतस्मार्ताधानातिरिक्तविषयं च नान्दीश्राद्धं पूर्वाह्णे कार्यम्, 'पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ।' इति शातातपोक्तेः, 'पूर्वाह्णे वै भवेद्वृद्धिः' इत्यत्रिवचनाच्च ।

संकौ. ३०

**[2]पूर्वाह्णे दैविकं कार्यं श्राद्धमभ्युदयार्थिना ।
सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता ॥**

* शेषं गभावत् ।

पृ. १६ कामयन् (काङ्क्षयन्) ; संर. ८३१ ; संदी. २०३ (भागः २).

(१) अप. १।२२८ पृ. ४६८ मध्यमे (मध्यतः) ; स्मृच. ४९२ प्रथमपादमात्रम् ; चका. ५७५ अपवत्, शातातपहारीतौ ; गभा. ३३ चतुर्थः पादः ; चम. १६१ स्मृचवत् ; लता. ३१–३२ ; सिन्धु. १७३० उत्त. ; संकौ. ३० उत्त.

(२) श्राक. २७१ ; चश्रा. १५४५ पूर्वाह्णे दैविकं कार्यं (कर्तव्यं चाऽऽभ्युदयिकं) ; स्मृसा. १०८ उत्त. ; श्राकौ. ५०९ कार्यं श्राद्ध (श्राद्धं कार्यं) सव्येन (सर्वेण) दर्भैश्च (दर्भेण) ; श्रासौ. १२० कार्यं श्राद्ध (श्राद्धं कार्यं) दर्भैश्च (दर्भेण) ; श्राप्र. २९८ चश्रावत् ; संग. ७७ चश्रावत् ; संदी. ५९ पूर्वार्धे (कर्तव्यं चाऽऽभ्युदयिकश्राद्धमभ्युदयार्थिना ।).

(१) दैविकमत्राऽऽभ्युदयिकम्, पितॄणां नान्दीमुखानां देववदुपचारात्। श्राक. २७२

(२) अथास्मिन् वृद्धिश्राद्धेऽन्येऽपि धर्मविशेषाः प्रतिपाद्यन्ते। तत्राह शातातपः— कर्तव्यमिति।

चश्रा. १५४५

[1]पितॄणां रूपमास्थाय देवा अन्नं समश्नुते।
तस्मात्सव्येन दातव्यं वृद्धिश्राद्धे तु नित्यशः॥

समश्नुते समश्नुवते इत्यर्थः। श्राप्र. २९८

[2]अपसव्यं न कुर्वीत न कुर्यादप्रदक्षिणम्।
यथैवोपचरेद्देवांस्तथा वृद्धौ पितॄनपि॥

[3]अपसव्येन यो दद्याद्वृद्धौ किंचिदतिक्रमात्।
न तस्य देवास्तृप्यन्ति पितरश्च यथाविधि॥

[4]युग्मांस्तु भोजयेद्वृद्धौ ब्राह्मणान्नियतः शुचिः।
नान्दीमुखास्तु पितरस्तृप्यन्तामिति वाचयेत्॥

तृप्यन्तामिति वाचयेत्, अक्षय्यस्थाने इति शेषः।

श्राक. २७२

(१) श्राक. २७१ देवा अन्नं (देवताऽन्नं) श्राद्धे तु (श्राद्धेषु); चश्रा. १५४५; स्मृसा. १०८ देवा अन्नं (देवाश्चान्नं) श्राद्धे तु (श्राद्धेषु); श्रासौ. १२० अन्नं (ह्यन्नं); श्राप्र. २९८ श्रासौवत्; संग. ७७ मास्थाय (माख्याय) श्राद्धे (काले); संदी. ५९ नित्यशः (नित्यदा) शेषं संगवत्.

(२) श्राक. २७१; चश्रा. १५४५ उत्त.: १५४८ पू.; श्राप्र. २९८ उत्त.: २९९ पू.; संग. ७७ उत्त.; संदी ५९ उत्त.

(३) श्राक. २७१ पूर्वार्धे (अपसव्यं च यो दद्याद्वृद्धिश्राद्धमतिक्रमात्।) तृप्यन्ति (तुष्यन्ति); चश्रा. १५४८; श्रासौ. १२० पूर्वार्धे (अपसव्यं तु यो दद्याद्वृद्धिश्राद्धमिति क्रमात्।); श्राप्र. २९९.

(४) अप. १।२४९ पृ. ५१८ क्रमेण ब्रह्मपुराणम्; श्राक. २७१; चश्रा. १५४४ ब्रह्मपुराणे, पू.: १५५८ उत्त; श्रासौ. १२० मुखास्तु (मुखाश्च); श्राप्र. ३०७ उत्त.; श्राम. ९१ तृप्यन्ता (प्रीयन्ता) उत्त.

[1]पवित्रपाणिराचान्त उपविष्टः समाहितः।
प्रदद्यात्प्राङ्मुखः पिण्डान्वृद्धौ सव्येन वाग्यतः॥

[2]प्रागग्रेषु च दर्भेषु पिण्डान् दद्यात्तु वृद्धिषु।
पार्वणे दक्षिणाग्रेषु सपिण्डीकरणं तथा॥

नान्दीश्राद्धस्य श्राद्धत्रयात्मकत्वम्, तत्क्रमः तद्धर्माश्च

[3]मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम्।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥

(१) श्राक. २७१; श्रासौ. १२१ पिण्डान् वृद्धौ (पिण्डानेभ्यः) उत्त.

(२) श्राक. २७२; श्रासौ. १२१ षु च (ष्वथ) तु वृद्धिषु (यथाविधि) पू.; बाल. १।२५० पृ. ५६८ पू., भविष्यपुराणम्.

(३) मिता. १।२५० मातृश्राद्धं (मातुः श्राद्धं); अप. १।२४९ पृ. ५१५; श्राक. २७१ मितावत्; स्मृच. ४९८ मितावत्; चश्रा. १५४२; स्मृसा. १०८ पितॄणां तद (पितृश्राद्धम) वृद्धौ श्राद्ध (वृद्धिश्राद्ध); पमा. ७८३ प्रचेताः; प्रपा. १५ च (तु) प्रचेताः; मर. १६९ कूर्मपुराणशातातपयोः; श्राका. ५१२ (=) (मातृभ्यः प्रथमं दद्यात्पितृभ्यस्तदनन्तरम्। ततो मातामहेभ्यश्च वृद्धौ श्राद्धत्रयं स्मृतम्॥): ५१८ (=) पूर्वार्धे (मातृभ्यः प्रथमं दद्यात्पितृभ्यस्तदनन्तरम्।); गभा. ५०९ जाबालिः; श्राकौ. ४९२ मातृश्राद्धं तु पूर्वं स्यात् (मातॄणामग्रतः कृत्वा): ५०७ महानां च (महादीनां); श्रात. ३११ स्मृतम् (भवेत्); उत. १३५ श्राद्धत्रयं (श्राद्धे त्रयं); श्रासौ. १२०; वीमि. १।२५० पृ. ३१० महानां च (महादीनां): पृ. ३११ मितावत्; श्राप्र. २९५ उत्त., मात्स्ये; चम. १७८; मुक्ता. ७५३ मितावत्; लता. ११८, २५६ (=); सिन्धु. १७२९; विपा. ३० (भागः २) सर्वं प्रपावत्; आन. १४२: १४४ (=) निर्देशमात्रम्; बाल. १।५३ पृ. १९१ निर्देशमात्रम्: १।२५० पृ. ५६७ (मातृश्राद्धं तु पूर्वेद्युः कर्माहन्येव पैतृकम्। मातामहं चोत्तरेद्युर्वृद्धिश्राद्धत्रयं स्मृतम्॥); संग.

मातामहश्राद्धं पार्वणवत्सपत्नीकमेव, न तु मात्रादि-श्राद्धवन्मातामह्यादिश्राद्धं पृथक्कार्यमिति वक्तुं 'श्राद्ध-त्रयं स्मृतम्' इत्युक्तम् । न च मातृश्राद्धमित्यनेन मातुरेव श्राद्धं पृथग्विहितं न पितामहीप्रपितामह्योरिति वाच्यम्, मातृशब्दस्यात्र लक्षणया मात्रादिपरत्वात् । अत एवोक्तं तेनैव– 'पित्रादित्रयपत्नीनां भोज्या मातॄः प्रति द्विजाः । स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमिहोच्यते ॥' इति । * स्मृच. ४९८

[१]त्रिष्वप्येतेषु युग्मांस्तु ब्राह्मणान्नियतः शुचिः ।
प्रदक्षिणं तु सव्येन भोजयेद्देवपूर्वकम् ॥

(१) द्वौ दैवे ब्राह्मणौ, द्वौ मातृश्राद्धे, द्वौ पितृश्राद्धे, द्वौ सपत्नीकमातामहश्राद्धे । एवमष्टावरान् ब्राह्मणान्निमन्त्रणादि विसर्जनान्तं सर्वमुपचारजातं प्रदक्षिणं यथा भवति तथा कुर्वन् सव्येन सव्यांसगतेनैव यज्ञसूत्रेणोत्तरवाससा चान्वितः श्राद्धकर्ता भोजयेदित्यर्थः ।
§ स्मृच. ४९६

(२) मातृपितृमातामहश्राद्धे युग्मान् ब्राह्मणानाह वृद्धशातातपः– त्रिष्वपीति । अस्य च नान्दीश्राद्धस्य वैश्वदेविकपूर्वत्वमाह वृद्धशातातपः– प्रदक्षिणमिति । विश्वान्देवानुद्दिश्य क्रियमाणं श्राद्धं वैश्वदेविकम् । वृद्धिश्राद्धे च सत्यवसुसंज्ञकाः कर्माङ्गे च क्रतुदक्षसंज्ञका विश्वेदेवा इति पूर्वमेव देवताप्रकरणे प्रतिपादितम् । पितरस्त्वत्र नान्दीमुखसंज्ञकाः पूज्या इति तत्रैव दर्शितम् । चश्रा. १५४४–१५४५

मातृश्राद्धे द्विजानां भोज्यत्वं मातृश्राद्धशब्द-प्रवृत्तिनिमित्तं च

[१]पित्रादित्रयपत्नीनां भोज्या मातॄः प्रति द्विजाः ।
स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमिहोच्यते ॥

(१) मातॄः प्रति द्विजा भोज्याः, मातृपितामहीप्रपितामहीरुद्दिश्य भोज्या द्विजा इत्यर्थः । पित्रादित्रयपत्नीनां स्त्रीणामिह पृथगेवैतच्छ्राद्धं यस्मात्तस्मान्मातृश्राद्धमित्युच्यते इत्यन्वयः । स्मृच. ४३५ (मैसूर)

(२) मातृश्राद्धे ब्राह्मणसंख्यामाह शातातपः– पित्रादीति । मातॄः प्रतीति एकस्मिन् (? एकैकस्मिन्) स्त्रीवर्गे चतुरादियुग्मसंख्यका ब्राह्मणा भोजनीयाः । तथा च मातृवर्गे च चत्वारः, मातामहीवर्गे (च) चत्वार इत्येवमष्टौ संपद्यन्ते । अत एवोक्तं भविष्यत्पुराणे– 'भोजयेच्च द्विजानष्टौ मातृश्राद्धे खगेश्वर । नवमं सर्वदेवत्यं भोजयेद्द्विजमागतम् ॥' । सति संभवे चैतद्वेदितव्यम् । असंभवे त्वेकैकस्मिन् वर्गे द्वौ द्वावपि भोजनीयौ । चश्रा. १५४३

मातृश्राद्धधर्माः

[१]नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च ।
मातृश्राद्धं तु युग्मैः स्याद्दैवं प्राङ्मुखैः पृथक् ।
योजयेद्दैवपूर्वाणि श्राद्धान्यन्यानि यत्नतः ॥

---

* वीमि., मुक्ता. स्मृचगतम् ।

§ मुक्ता. स्मृचानुवादः । आन. स्मृचगतम् ।

७९ (मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकम् । मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम् ॥), गार्ग्यशातातपौ : ८१ (=) ; पुम. ३००.

(१) श्राक. १७१ ब्राह्मणान्नियतः (भोजयेद्ब्राह्मणान्) भोजयेत् (प्रदद्यात्) ; स्मृच. ४९६ वृद्धशातातपः ; चश्रा. १५४४ पू., वृद्धशातातपः : १५४५ उत्त., वृद्धशातातपः ; स्मृसा. १०८ युग्मांस्तु (युग्मान्वै:) शेषं श्राकवत् ; श्राका. ५१४ देव (दैव) शेषं श्राकवत्, स्मृतिः ; श्राकौ. ५०७ श्राकवत् ; श्रासौ. १२० सव्येन (मध्येन) देव (दैव) शेषं श्राकवत् ; श्राप्र. २९८ उत्त., वृद्धशातातपः ; मुक्ता. ७५५ भोजयेत् (पूजयेत्) व्याख्याने तु 'भोजयेत्' इत्येव, वृद्धशातातपः ; आन. १४३, १४५ भोजयेत् (पूजयेत्) वृद्धशातातपः.

(१) स्मृच. ४९८ अत्रत्यं वचनं गलितम्, व्याख्यानदर्शनात् ; चश्रा. १५४३.

(२) श्राक. १४१ ; चश्रा. १३७–१३८ ; श्राका. ५१४ तृतीयार्धं नास्ति ; सिन्धु. १७३३ मातृ (मातुः) द्वितीयार्धमात्रम् ; संकौ. २९ तृतीयार्धं नास्ति, श्राद्धहेमाद्रौ,

(१) तदेवमेतद्ब्रह्मवैवर्ताद्युक्तं विश्वेषां देवानां श्राद्धे देवतात्वं नित्यश्राद्धादावपोह्यते । आह शातातपः— नित्यश्राद्धमिति । मातृश्राद्धमत्राऽऽभ्युदयिकपूर्ववर्ति विवक्षितम्, ब्राह्मणयुग्मत्वप्राङ्मुखोपवेशनलिङ्गात् । तच्च यदाऽपि पित्रादिमातामहादिश्राद्धद्वयात्पृथग्भिन्नकालेऽनुष्ठीयते तदानीमदैवं वैश्वदेवरहितं कर्तव्यम् । यदा पुनरेकस्मिन्नेव काले श्राद्धत्रयं क्रियते तदा तन्त्रेणाऽऽवृत्त्या वा वैश्वदेविकानुष्ठानमिति 'श्राद्धत्रयं प्रकुर्वीत तन्त्रं वा वैश्वदेविकम् ।' इति वसिष्ठवचनादवन्तव्यम् । चश्रा. १३८

(२) वृद्धिश्राद्धमदैवतं स्यादुत सदैवतमिति, उभयथाऽपि स्मृतिदर्शनात् । तथाहि— 'त्रिष्वप्येतेषु युग्मांस्तु भोजयेद्ब्राह्मणाञ्छुचिः । प्रदक्षिणं तु सव्येन प्रदद्याद्दैवपूर्वकम् ॥' इति । मार्कण्डेयोऽपि— 'वैश्वदेवविहीनं तत् केचिदिच्छन्ति सूरयः ।' इति । तत् आभ्युदयिकम् । अत्रैके आहुः— यथाशाखं व्यवस्थेति । एवं च सति तत्रापि किं श्राद्धत्रयेऽप्यविशेषेण दैवतविकल्पः किंवा श्राद्धविशेषे इति संदेहः । अत्राविशेषेणैव श्राद्धत्रयेऽपीत्येके । तदहृद्यम्, श्राद्धविशेषे अदैव(त्व)स्य विकल्पितत्वात् । तथा च शातातपः— 'नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च । मातृश्राद्धं तु युग्मैः स्याददैवं प्राङ्मुखैः पृथक् ॥' । केवलमित्यर्थः । आचारतिलकेऽपि— 'पितरोऽन्वष्टकाश्राद्धं माता भुङ्क्ते सदैवतम् । वृद्धावदैवतं माता पितरश्च सदैवतम् ॥' इति । तस्मान्मातृश्राद्ध एवादैवतत्वविकल्प इति सिद्धम् । तथा च— 'आन्वष्टक्ये पितृभ्यश्च तत्स्त्रीभ्यश्च सदैवतम् । ताभ्यस्त्वदैवतं वृद्धौ तेभ्यश्चैव सदैवतम् ॥' इति । यत्तु 'त्रिष्वप्येतेषु०' इति वचनम्, तद्द्वादशदैवत्यापेक्षयाऽन्यनवदैवत्येऽप्युपपद्यते इत्यविरोधः । श्राका. ५१४

(३) जीवत्पितृमातामहेन यदा मातृपार्वणमात्रेण नान्दीश्राद्धसिद्धिरङ्गीक्रियते, न तत्र देवा अपि, श्राद्धहेमाद्रिसमुदाहृतेन 'नित्यश्राद्ध ...' इति वचनेन पूर्वाह्णादिकालभेदेन पार्वणत्रयानुष्ठानपक्षे पार्वणान्तरासाहित्येन क्रियमाणे मातृश्राद्ध इव उक्तविधमातृश्राद्धेऽपि तादृशेऽदैवत्वबोधनात् । संकौ. २९

मातृश्राद्धस्य पृथक्कर्तव्यतानिमित्तानि

**[१]अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा ।**
**अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह ॥**

कर्मादौ मातृपूजापूर्वकनान्दीश्राद्धविधिः

**[२]नानिष्ट्वा तु पितॄञ्श्राद्धे कर्म वैदिकमाचरेत् ।**
**तिस्रोऽपि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥**

---

(१) अप. १।२१७–२१८ पृ. ४३१ ; स्मृच. ३६९ वत्सरं (वत्सरे) स्मृत्यन्तरम् ; मर. १६९ निर्देशमात्रम् ; मुक्ता. ७१९ स्मृचवत्, चन्द्रिकायाम् ; श्राम. ३ (=) द्वितीयपादे (गयायां च क्षयेऽहनि) ; संकौ. २०५ ; संग. ८१ प्रथमपादमात्रम्, स्मृत्यन्तरम्.

(२) अप. १।२४९ पृ. ५१५ ; श्राक. २७२ वैदिक (दैविक) तिस्रोऽपि (तेभ्योऽपि) ; चश्रा. १०६ तिस्रोऽपि (तिस्रस्तु) उत्त. : १०९ (=) पितॄञ्श्राद्धे (पितृश्राद्धे) पू. ; चदा. १४० पूर्वार्धे (नानिष्ट्वा पितृयज्ञेन वैदिकं किंचिदाचरेत् ।) तिस्रोऽपि (तत्रापि) ; स्मृसा. १०१ (=) पू. : १०६ पू. : १०८ : १४६ (=) माचरेत् (मारभेत्) पू. ; प्रपा. १३ (अनिष्ट्वा तु पितॄञ्श्राद्धे वैदिकं कर्म नाऽऽचरेत् ।) स्मृतिः, पू. ; मर. १७१ तिस्रोऽपि (तेभ्योऽपि) ; गभा. ५०९ पूर्वार्धे (अनिष्ट्वा पितृयज्ञेन वैदिकं किंचिदाचरेत् ।) तिस्रोऽपि (तत्रापि) ; निप्र. १९९ कर्म वैदिकमा (वैदिकं किंचिदा) तिस्रोऽपि (तत्रापि) ; श्राकौ. ४८५ श्राद्धे (श्राद्धैः) माचरेत् (मारभेत्) पू. : ४८७ (=) निर्देशमात्रम् : ५०३, ५२७ (=) श्राद्धे (श्राद्धैः) माचरेत् (मारभेत्) पू. ; श्रात. ३१० श्राद्धे (श्राद्धैः) माचरेत् (मारभेत्) पू. ; श्रासौ. ११८ पू. : १२० ; संप्र. ८७६ (=) (नानिष्ट्वा तु पितॄञ्श्राद्धे वैदिकं किंचिदाचरेत् ।) पू. ; मुक्ता. ७५३ पू. ; श्राम. ८७ माचरेत् (मारभेत्) पू. ; संम. ५ श्रामवत् ; सिन्धु. १७३४ वैदिक (किंचित्स) पू. ; श्रान. १४२ पू. : १४३ (=) पू. ; बाल. १।२५० पृ. ५७३ कर्म वैदि-

(१) वैदिकं वेदप्रमाणमात्रगम्यम् । अनिष्ट्वा नाऽऽरभेत् इष्ट्वैवाऽऽरभेदित्यर्थः । यत्र गृह्योक्तेऽ( ? क्ताद्)न्यत्र वैदिकेऽग्निष्टोमादियज्ञदेवप्रतिष्ठादौ तत्तद्विशेषवचनात्कर्माङ्गतया श्राद्धं प्राप्तं तस्मिन्नेव वैदिके कर्मणि तच्छ्राद्धस्य प्राक्कर्तव्यतामात्रमनेन विधीयते, न तु वैदिकमात्रे गङ्गास्नानदानदुर्गोत्सवादौ श्राद्धमपि, उभयविधेर्गौरवात् । केचित् तु वचनमिदं गृह्योक्तवैदिककर्मणि श्राद्धविधायकमिति व्याचक्षते । तन्मन्दम्, यज्ञप्रतिष्ठादौ गृह्योक्तेतरस्मिन् श्राद्धस्य प्राक्कर्तव्यतानियमाभावात् परतः प्रसङ्गः स्यादिति । वैदिकविशेषणादवैदिके रागप्राप्ते गृहप्रवेशे श्राद्धस्य प्राक्कर्तव्यत्वनिरासः । तच्च नाङ्गम्, वैदिकस्य (तस्य) लौकिककर्माङ्गत्वानुपपत्तेः, किंतु नैमित्तिकमेव स्वतन्त्रम् । यद्यपि निमित्तत्वं प्राक्सिद्धस्य सत एव, प्रवेशक्रियायास्तु क्षणविनाशित्वात्तथात्वाभावः, तथाऽप्यगत्या बुद्धिस्थतया निमित्तत्वमुपचर्यते । निमित्तानन्तरं च नैमित्तिकम्, ततश्च तीर्थप्राप्त्यादिनिमित्तकश्राद्धवत् गृहप्रवेशानन्तरमेव श्राद्धं कार्यम् । न च रविसंक्रान्तिवत् भाविनोऽपि तस्य बुद्धिस्थतया निमित्तत्वमुपचर्य प्रागपि कथं न क्रियते इति वाच्यम् । यद्व्यतिरेकेण न कार्यनिष्पत्तिस्तस्य सत्त्वं प्राक्सिद्धत्वं चोभयं निमित्तताघटकम् । तत्र चागत्या बुद्धिस्थतया संस्कारद्वारा सत्त्वमुपचर्यते, अथवा अधिकरणसत्त्वेन सत्त्वमुपचर्यते, द्रव्यसत्त्वेनेव द्रव्यप्राप्त्यादेः; किंतु प्राक्सिद्धत्वोपचारे को हेतुः ? रविसंक्रान्तिस्थले तु वचनात् कुत्रापि तथा*, अन्यथा तीर्थद्रव्यप्राप्तिव्रीहिपाकादिनिमित्तकेषु श्राद्धेषु तथात्वप्रसङ्गः । किंच गृहप्रवेशश्राद्धस्य देशाकाङ्क्षायामुपस्थितत्वाद्गृहमेवाधिकरणम्, तीर्थप्राप्तिश्राद्धस्य तत्तीर्थवत्, तच्च प्रवेशं विना न घटत इति श्राद्धस्य प्रवेशानन्तरत्वं सिद्धमेव । मदनपारिजाते च वचनं लिखितम्– 'नवं गृहं प्रविश्यैव तन्मध्ये पूजयेच्छ्रियम् । वृद्धिश्राद्धं ततः कुर्याद्ब्राह्मणानपि तर्पयेत् ॥' विष्णुपुराणे– 'कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः । नामकर्मणि बालानां चूडाकर्मादिके तथा ॥ सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने । नान्दीमुखं पितृगणमर्चयेत् प्रयतो गृही ॥' । अत्र 'नानिष्ट्वा तु पितॄन्' इत्यत्र क्त्वाप्रत्ययात् समानकर्तृकत्वावगमेऽपि 'कन्यापुत्रविवाहेषु' इति वचनं विवाहाख्यसंस्काराङ्गभूते श्राद्धे पितुरधिकारमात्रं बोधयति, न तु पितृकर्तृकं श्राद्धान्तरमपि, गौरवात् । ततश्च कन्यापुत्रविवाहाङ्गश्राद्धस्य वचनाद्भिन्नकर्तृकत्वे सिद्धे 'नानिष्ट्वा' इति वचनात् 'कर्मादिषु च सर्वेषु' इति परिशिष्टवचनाच्च प्राक्कर्तव्यत्वमव्याहतमेव । इत्थं च बाधकस्य पितुरभावेऽपि पितृव्यादिसत्त्वेऽपि पुत्रस्यैव स्वविवाहे श्राद्धाधिकारः, सामान्यविधिबलात् । एवं पितरि विदेशस्थेऽपीति ध्येयम् ।

§ श्राकौ. ४८५–४८७

(२) यत्तु शातातपः– 'नानिष्ट्वा तु...' इति, तद्यत्र प्रातिस्विकवाक्यैर्नान्दीश्राद्धमुक्तं तत्रैवोपसंह्रियते । अथवा वाक्यान्तरप्राप्तकर्माङ्गत्वे एतत् पूर्वकालतामात्रमेव बोधयति, न कर्माङ्गतामपि । अतो न संध्यावन्दनादावतिप्रसङ्गः । पक्षद्वयेऽपि 'नाष्टकासु भवेच्छ्राद्धम्' इत्यादि पूर्वोक्तं कर्मप्रदीपवचो नित्यानुवादकमेव, न निषेधकम्, प्राप्त्यभावात् । $ श्राम. ८७–८८

(३) पितृपदं श्राद्धार्हपितृपरम्, न तु संबन्धिशब्दत्वेन स्वपितृपरम्, कर्त्रन्तरेण संस्कार्य(पितृ)पितामहादिश्राद्धाकरणप्रसङ्गात् । न चेष्टापत्तिः, सकलशिष्टाचारविरोधात्, 'तस्याभावे तु तत्क्रमात्' इति विधिविरोधाच्च । उक्तशातातपवाक्ये कर्मपदं यत्राऽऽभ्युदयिकं निषिद्धं तदतिरिक्तवैदिककर्मपरम् । संदी. ६४

* कुत्रापि कुत्रचित् तथा प्राक्सिद्धत्वोपचारः ।

कमा (वैदिकं किंचिदा) पू., मानवशातातपौ ; संग. ७३ वैदिकमाचरेत् (कुर्याच्च वैदिकम्) तिस्रोऽपि (तेभ्योऽपि) ; पुम. ३७८ (=) संप्रवत्; कृभ. ४२९ (=) वैदिकमाचरेत् (किंचित्समारभेत्) पू. ; संर. १०४५ सर्वं प्रपावत्; संदी. ५५–५६ संगवत् : ६४ श्रामवत्, पू.

§ श्रात. श्राकौगतम् ।

$ संम. श्रामअनुवादः ।

मातृश्राद्धस्य पृथक्कर्तव्यतानिमित्तानि

**[1]नान्दीमुखेऽष्टके श्राद्धे गयायां च मृतेऽहनि ।**
**पितामह्यादिभिः सार्धं मातुः श्राद्धं समाचरेत् ॥**

## वृद्धशातातपः

नान्दीश्राद्धे पूर्वाह्णादिकालिकानि त्रीणि श्राद्धानि,
तेषां पृथग्दिनेषु एकस्मिन्पूर्वदिने वा कर्तव्यता,
एकदिनकरणपक्षे वैश्वदेविकस्य तन्त्रता

**[2]पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा ।**
**ततो मातामहानां तु वृद्धौ श्राद्धत्रयं स्मृतम् ॥**
**[3]पृथग्दिनेष्वशक्तश्चेदेकस्मिन् पूर्ववासरे ।**
**श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम् ॥**

(१) एवं दिनत्रयश्राद्धपक्षो यदा दुष्करस्तदा त्वाह वृद्धशातातपः— पृथग्दिने इति । फलदेशकालद्रव्यदेवतासाधारण्यादत्र वैश्वदेविकं तन्त्रेणैव कार्यमित्यर्थः । ननु कथमत्र कालसाधारण्यम् ? 'पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा । ततो मातामहानां तु वृद्धौ श्राद्धत्रयं स्मृतम् ॥' इति शातातपेन मातृश्राद्धादिषु पूर्वाह्णादिकालभेदविधानात् । अतः कथमत्र तन्त्रता ? सत्यम् , शातातपवचनानुसारेणानुष्ठाने कालभेदान्न तन्त्रता, किंतु 'पूर्वाह्णे दैविकं कार्यमपराह्णे तु पैतृकम् । एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥' इति प्राचेतसवचनानुसारेणैकदिने प्रातःकाले यदा श्राद्धत्रयानुष्ठानं तदैव वैश्वदेविकं तन्त्रं स्यात् , कालैक्यात् । प्रातःशब्दोऽत्र न संगवाख्यकालनिवृत्तिपरः, 'पूर्वाह्णे वै भवेद् वृद्धिर्विना जन्मनिमित्तकम् । पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥' इत्यत्रिणाऽभिधानात् । लघुपक्षत्वाद्वैश्वदेविकतन्त्रपक्षेणैव संप्रत्यनुष्ठानम् ।

* स्मृच. ४९८

(२) एकस्मिन्नपि दिने क्रियमाणानां कालभेदेनानुष्ठानं कार्यमित्याह शातातपः— पूर्वाह्णे इति ।

चश्रा. १९२

(३) तान्त्रिकमित्येकदिने विशिष्टविधिः ।

श्राका. ५१२

(४) अत्र च 'तन्त्रं वा वैश्वदेविकम्' इति प्रकृतिभूते दर्शश्राद्धे वैश्वदेविकस्य तन्त्रत्वे विकल्पाभिधानात्तद्विकृतिभूते वृद्धिश्राद्धे तन्त्रविकल्पप्राप्तौ विकल्पनिरासेनात्र तन्त्रतैव नियम्यते 'वैश्वदेवं तु तान्त्रिकम्' इति ।

श्राप्र. २९२

(५) अत्र एकस्मिन्नित्यनेन प्रधानवाचिना कर्माहकरणपक्ष उक्तस्तथा च विकल्पः । अन्यथा तदनतिफलं स्पष्टमेव ।

बाल. १।२५० पृ. ५६८

वृद्धौ नान्दीश्राद्धस्यावश्यकर्तव्यता

**[1]वृद्धौ न तर्पिता यैर्वै पितरो गृहमेधिभिः ।**
**तद्दानमफलं सर्वमासुरो विधिरेव सः ॥**

---

(१) लता. १२१.

(२) अप. १।२४९ पृ. ५१६ तथा (स्मृतम्) शातातपः ; स्मृच. ४९८ शातातपः ; चश्रा. १९२ द्वितीयपादे (अपराह्णे च पैतृकम्) तु (च) शातातपः ; चका. ४५९ ; प्रपा. १५ ; श्राप्र. २९१ चश्रावत्, शातातपः ; मुक्ता. ७५४ शातातपः ; सिन्धु. १७३० तु (च) ; विपा. ३० (भागः २) ; संको. २६ तु (च) शातातपः ; बाल. १।२५० पृ. ५७७ तु (च) शातातपः ; संग. ८० तु (च) गार्ग्यशातातपौ ; संव. ४१ शातातपः ; पुम. ३७८ तु (वै).

(३) अप. १।२४९ पृ. ५१६ शक्त (शक्ता) एकस्मिन् पूर्व (एकस्मिन्नेव) प्रकुर्वीत... कम् (प्रकुर्वन्ति तन्त्रं वा वैश्वदेविकम्) ; स्मृच. ४९८ ष्वशक्त (त्वशक्त) प्रकु (तु कु) ; चश्रा. १९२ तु (च) ; चका. ४५८ प्रकु (तु कु) तु (च) ; मपा. ६३२ ष्वशक्त (त्वशक्त) ; प्रपा. १५ ; श्राका. ५१२ (=) ; श्राप्र. २९२ शातातपः ; चम. १७९ ; मुक्ता. ७५४ स्मृचवत्, शातातपः ; श्राम. ८९ दिनेष्व (दिनेऽप्य) ; सिन्धु. १७३० ; विपा. ३० (भागः २) ; बाल. १।२५० पृ. ५६७ ; पुम. ३७८ चकावत्.

* मुक्ता. स्मृचगतम् ।

(१) अप. १।२१७–२१८ पृ. ४२२ पितरो (देवता) ; स्मृच. ३३९ यैर्वै पितरो (या वै देवता) मफलं (मासुरं) ;

एतद्वृद्धिश्राद्धाकरणे प्रत्यवायमाह वृद्धशातातपः— वृद्धाविति। प्रपा. २०

गृहाद्बहिः पिण्डदानं तत्र प्राङ्मुखता च

[1]प्रदद्यात्प्राङ्मुखः पिण्डान् वृद्धौ नाम्ना स बाह्यतः॥

(१) पिण्डदानमन्त्रोच्छिष्टसमीपे न, किंतु भोजनशालाया बहिः कार्यम्, 'प्रदद्यात् ...' इति वृद्धशातातपस्मरणात्। † स्मृच. ४९९

(२) नामोच्चारणं च प्रथमपिण्डे एव, न द्वितीयें। ‡ पमा. ७८४

## बृहत्पराशरः

श्राद्धकालाः

[2]श्राद्धं वृद्धावचन्द्रेभच्छाया ... ...।
पुण्यः श्राद्धस्य कालोऽयमृषिभिः परिकीर्तितः॥

जीवत्पित्रादिकर्तृकश्राद्धे देवताः

पितामहस्तदन्यो वा यस्य(? यश्च) जीवन् भवेद्द्विजः।
प्रत्यक्षास्तेऽपि वै पूज्याः संस्थित्यर्थं यतश्च तत्॥

विद्यमानस्त्रयाणां स्यात् प्रत्यक्षः पूज्य एव सः।
गौतमस्य मतं ह्येतदिति वासिष्ठजोऽब्रवीत्॥
विद्यमाने तु पितरि श्राद्धं कर्तुमुपस्थितः।
पितृवत्पितृपित्रादेः कुर्याच्छ्राद्धमसंशयम्॥

पुत्रिकापुत्रकर्तृकश्राद्धे देवताः

पुत्रिकायाः सुतः श्राद्धं निर्वपेन्मातुरेव सः।
तत्पितुर्निर्वपत्यस्मात्तृतीयं तु पितुः पितुः॥

नान्दीश्राद्धस्य वृद्धिनिमित्तकत्वं पार्वणरूपत्वं च

काम्यमाभ्युदयं चैव द्विविधं पार्वणं स्मृतम्।
यथाकामं तु काम्यं स्याद्वृद्धाव(? वा)भ्युदये(? यं)स्मृतम्॥
वृद्धिमह्दिवसे कार्यं श्राद्धमाभ्युदिकं द्विजैः॥

नान्दीश्राद्धीयपात्राणां मृन्मयत्वं शौनकमतेन

वृद्धिश्राद्धेषु मन्यन्ते मृण्मयानि तु केचन।
शौनकस्य मतं ह्येतद्यथा कार्यं तु मृण्मयम्॥

नान्दीश्राद्धस्य विशिष्टदेशे विशिष्टभूतले च मातृश्राद्धपूर्वकं कर्तव्यता

पूर्वोत्तरप्लवे देशे श्राद्धं स्यान्मातृपूर्वकम्।
सितपीतादिपिष्टेन चर्चिते भूतले च तत्॥

नान्दीश्राद्धस्य कर्मणः प्राक् पूर्वाह्णे कर्तव्यता

उद्दिष्टकृत्यकालस्य तत्प्रागेव विधीयते।
आभ्युदयिकदैवानि पूर्वाह्णे स्युरिति स्मृतिः॥

नान्दीश्राद्धे विशेषधर्माः

तिलाक्षतोदकैर्युक्तान्यासनानि प्रदक्षिणात्।
परिह्लत्यादि पृष्ठेन कृत्वा च शान्तिपूर्वकम्॥
व्रीहयो यवगोधूमा अक्षताश्चाहताः स्मृताः।
अक्षतामलकैः पिण्डान्दधिकर्कन्धुमिश्रितैः॥
[1]नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणकुशासनम्।
पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्मृतिः॥

---

† चश्रा., मपा., प्रपा., श्राप्र., श्राम., संग., कुभ. स्मृचवत्।

‡ शेषं स्मृचगतम्।

प्रपा. २० पूर्वार्धे (वृद्धौ न तर्पिता येन पित्रर्थे गृहमेधिना।); श्राप्र. ३१५ यैवैं (ये वै); लता. १८ यैवैं पितरो (ये वै तर्पिता); सिन्धु. १७२९ यैवैं (ये वै) तृतीयपादे (तद्धीनमफलं ज्ञेयं) शातातपः.

(१) स्मृच. ४९९; चश्रा. १५५६; पमा. ७८४ स (न) शातातपः; मपा. ६३४; प्रपा. १९ पिण्डान् (पिण्डं); श्राप्र. ३०६ (=); श्राम. ९०; बाल. १।२५० पृ. ५६९ वृद्धौ नाम्ना स (तन्नाम्ना स हि) शातातपः; संग ८५; कुभ. १७५४ शातातपः.

(२) बृपसं. ७।१, २,५१–५४,५९,१०९,११९, १५३–१५६.

(१) बृपसं. ७।१५७; गभा. ३२ णकु (णं कु) पू. वृद्धपराशरः; प्रर. १३ सर्वं गभावत्; सिन्धु. १७३१–१७३२ वृद्धपराशरः; प्रका. ३१ वृद्धपराशरः; संग. ८७ सर्वं गभावत्; मञ्जरी. ८० स्मृतिः (स्थितिः) वृद्धपराशरः.

[1]कर्कन्धुभिर्यवैः पुष्पैः शमीपत्रैस्तिलैस्तथा ।
तेभ्यो ह्यर्घ्यः प्रदातव्यः पितृभ्यो दैवतैः सह ॥
मातामहानामप्येवं षड्दैवत्यं श्रिये द्विजः ।
माङ्गल्यपूर्वकं सर्वं गन्धाद्यपि च धारयेत् ॥
तृप्तिकृत्पितृमातॄणां धूपो देयश्च गुग्गुलः ।
घृताभिघारधूपो वा यथा स्यात्परिपूर्णता ॥
दीपाश्च बहवो देया विप्रं प्रति घृतेन च ।
तैलेन येन केनापि नवनीतेन चैव हि ॥
[2]मालत्याः शतपत्र्या वा मल्लिकाकुन्दयोरपि ।
केतक्याः पाटलाया वा स्रजो देया न लोहिताः ॥

श्राद्धे मालानिषेधस्यायमपवादः । सिन्धु. १७४८

[3]वासांसि च यथाशक्त्या दद्यात्तेभ्योऽपि निष्क्रयम् ।
परिपूर्णं यथा तत्स्यात्तथा कार्यं भवेदिति ॥

नान्दीश्राद्धे कृतमङ्गलोत्सवानां नराणां नारीणां चोपस्थितिः

[4]सुवेषभूषणैस्तत्र सालङ्कारैस्तथा नरैः ।
कुङ्कुमाद्यनुलिप्ताङ्गैर्भाव्यं तु ब्राह्मणैः सह ॥
[5]स्त्रियोऽपि स्युस्तथाभूता गीतनृत्यादिहर्षिताः ।
दुन्दुभीनादहृष्टाङ्गा मङ्गलध्वनिकारिकाः ॥

(१) बृपसं. ७।१५८–१६१.

(२) बृपसं. ७।१६२ ; श्राप्र. ३०० कुन्द (कुब्ज) स्रजो देया (देया माला) वृद्धपराशरः ; सिन्धु. १७४८ लोहिताः (लोहिता) शेषं सर्वं श्राप्रवत् ; संकौ. ३१ काकुन्दयोरपि (काङ्कुरया अपि) स्रजो देया (देया माला) चन्द्रोदये.

(३) बृपसं. ७।१६३.

(४) बृपसं. ७।१६४ ; श्राप्र. ३०० वृद्धपराशरः ; सिन्धु. १७४८ वृद्धपराशरः ; संकौ. ३१ चन्द्रोदये ; मञ्जरी. ८० पराशरः .

(५) बृपसं. ७।१६५ ; श्राप्र. ३०० पू., वृद्धपराशरः ; सिन्धु. १७४८ पू., वृद्धपराशरः ; मञ्जरी. ८० पू., पराशरः .

## अत्रिः

नान्दीश्राद्धस्य पूर्वाह्णकर्तव्यता, पुत्रजन्मनि तात्कालिता च

[1]पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम् ।
पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥

पुत्रजन्मानीत्यनियतनिमित्तोपलक्षणम् । तात्कालिकं पुत्रजन्मानन्तरम् । $ लता. ३२

## सुमन्तुः

जीवत्पितृकस्य साग्नेरेव नान्दीश्राद्धाधिकार इति मतम्, निरग्नेरप्यधिकार इति मतान्तरम्, जीवत्पितृकस्य जीवत्पितामहकस्य च श्राद्धकर्तृत्वे पितुः पित्रादीनां देवतात्वम्, पित्रादित्रयजीवने श्राद्धलोपः

[2]न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः ।
येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ॥

$ सिन्धु. लतागतम् ।

(१) अप. ११२४९ पृ. ५१८ ; स्मृच. ४९८ अशुद्धस्त्रुटितश्च ग्रन्थः (म्हैसूरमुद्रितपुस्तके पृ. ४३६) ; चका. ५८३–५८४ ; प्रपा. १५ पूर्वाह्णे वै (पूर्वाह्णे तु) ; श्राप्र. २९१ श्राद्धं (श्राद्धे) ; संप्र. १९२ ; मुक्ता. ७५४ उत्त., लौगाक्षिः ; लता. ३२ ; सिन्धु. १७३१ ; विपा. ३१ (भागः २) वै (तु) ; संकौ. ३० प्रथमः पादः ; आन. १४४ पू., स्मरणम् ; संर. १०४५.

(२) अप. ११२१७–२१८ पृ. ४१८ दद्यात्तेभ्यः कुर्वीत (कुर्यात्तेभ्य एव तु) ; स्मृच. ३३८ द्विजः (द्विज) ; प्रपा. २० जीवत्पितृकः (जीवतः पितुः) ; श्राका. ५१७ कुर्वीत (कुर्यात्तु) ; गप. ३३१ कुर्याच्छ्राद्धम् (श्राद्धं कुर्याद्) येभ्य एव (येभ्यो वाऽपि) भ्यः कुर्वीत (भ्यो दद्यात्तु) ; प्रर. ११७ (=) उत्त. ; श्राप्र. १८ ; सिन्धु. १७४१, १७६० ; विपा. ३६ (भागः २) जीवत्पितृकः (जीवतः पितुः) ; संकौ. २७ जीवत्पितृकः (जीवतः पितुः) दद्यात् (कुर्यात्) ; बाल. ११८९ पृ. २७० उत्त. : ११२५० पृ. ५७२ कुर्वीत (दद्यात्तु) : पृ. ५७५ निर्देशमात्रम् ;

[१]पितामहेऽप्येवमेव कुर्याज्जीवति साग्निकः ।
साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे ॥

( १ ) प्रपितामहग्रहणं पितृपितामहोपेतप्रपितामहप्रदर्शनार्थम् । $ स्मृच. ३३८

( २ ) यत्तु सुमन्तुनोक्तम्– ' न जीवत्पितृकः ... साग्निकः ॥ ' इति जीवत्पितृकस्य श्राद्धं नास्तीति तद् वृद्धिश्राद्धेतरविषयम्, ' अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि । येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम् ॥ ' इति हारीते तस्यापि वृद्धिश्राद्धोक्तेः । पार्वणं तद्धर्मकम् । जीवत्पितृक इति श्राद्धे देवतात्वेनाधिकारी जीवत्पिता यस्य स इत्यर्थः । तेन संन्यस्तपतितपितृकस्य निरग्नेरपि श्राद्धाधिकारसिद्धिः । श्राप्र. १८

( ३ ) अत्र केचित् जीवत्पितुः साग्नेरेव वृद्धिश्राद्धेऽधिकारः, न तु निरग्नेः, ' न जीवत्पितृकः ... प्रपितामहे ॥ ' इति चन्द्रिकायां सुमन्तूक्तेरित्याहुः । प्रयोगपारिजातेऽप्यनाहिताग्निर्न कुर्यादिति यद्व्याख्यातम्, तन्न, ' अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि । येभ्य एव पिता दद्यात्तानेवोद्दिश्य तर्पयेत् ॥ ' इति हारीतोक्तेः । सौमन्तवं तु वृद्धिश्राद्धभिन्नश्राद्धपरमित्युक्तं मदनरत्ने । श्राद्धपदं पिण्डपितृयज्ञपरमिति पृथ्वीचन्द्रोदयः । निर्णयामृते तु हारीतीयेऽनग्निकोऽनाहिताग्निरभिप्रेतः । पूर्ववचने तु साग्निकः श्रौताग्निः स्मार्ताग्निश्चोच्यते । तेनोभयाग्निहीनस्य नेत्युक्तम् । तन्न, पूर्वोक्तदिशा गतिसंभवेऽनग्निपदस्य स्मार्ताग्निपरत्वे मानाभावात्, वक्ष्यमाणनित्यानित्यसंयोगविरोधात्, ' पितरो जनकस्येज्या यावद्व्रतमनाहितम् । समाहितव्रतः पश्चात्स्वान्यजेत पितामहान् ॥ ' इति पृथ्वीचन्द्रोदये यमवचोविरोधाच्च । अपरार्कोऽपि समावर्तने ब्रह्मचारी स्वयमेव नान्दीश्राद्धं कुर्यात् इत्याह । अतः पूर्वमेव साधु । बोपदेवोऽप्येवमाह । § सिन्धु. १७४१–१७४२

## जाबालिः

नान्दीश्राद्धनिमित्तानि कर्माणि

[१]यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥

( १ ) वैदिकहोमाङ्गकेषु दर्शपूर्णमासादिषु अन्येषु च वचनविशेषितेषु कर्मसु वृद्धिश्राद्धमाचरणीयम् । तथा तुलापुरुषादीनामपि यागसंशब्दनात् लोकपालवाहनमन्त्रेषु च सर्वेषु ' ममाध्वरं पाहि, यज्ञं रक्ष ' इत्यादिशब्दप्रयोगात् सत्यपि दानरूपत्वे यागधर्मैराभवितव्यमिति तत्रापि वृद्धिश्राद्धं कर्तव्यम् । एवमेव सहोमकेषु धान्यपर्वतादिष्वप्यनुसंधेयम् । चदा. १४१

( २ ) अत्र महादानादौ यज्ञशब्दप्रयोगाद्वृद्धिश्राद्धमित्याहुः । निप्र. २००

[२]अच्छिन्ननाले कर्तव्यं श्राद्धं वै पुत्रजन्मनि ।
आशौचोपरमे कार्यमथवा नियतात्मभिः ॥

[३]जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ।
यस्माच्चान्द्रायणाच्छुद्धिस्तेषां भवति नान्यथा ॥

---

$ शेषं व्याख्यानं ' उद्वाहे पुत्रजनने ' इति मैत्रायणीयपरिशिष्टवचने द्रष्टव्यम् । प्रपा. स्मृचानुवादः ।

पुम. ३०१ दद्यात् (कुर्यात्) : ३८० ; कृभ. १७६३ (=) ' येभ्य एव पिता ' इति निर्देशमात्रम् ; संर. १०५५ विपावत्.

( १ ) स्मृच. ३३८ जीवति (निर्वर्ति ?) ; प्रपा. २० ; सिन्धु. १७४१ ; विपा. ३६ ( भागः २ ) ; संकौ. २७ ; बाल. १।२५० पृ. ५७२ ; पुम. ३०१, ३८०.

§ बाल. सिन्धुवत्तात्पर्यम् । सुमन्तुवचसो निर्मूलत्वमधिकं हेतूक्तम् ।

( १ ) चका. ४५७ ; चदा. १४१ ; चश्रा. १९०–१९१ ; गश्रा. ५०९ ; निप्र. २०० (=) ; श्राप्र. २८९ : २९० चतुर्थः पादो नास्ति ; श्राम. ८७ ; संग. ७५–७६ ; पुम. ३७७ समाचरेत् ( विधीयते ).

( २ ) प्रपा. १३१ नाले ( नाभौ ) ; संप्र. १९२ पू. ; संकौ. ५९ नाले ( नाभि ) पू.

( ३ ) संप्र. १९२ ; संग. ४४५.

## कार्ष्णाजिनिः

मातृश्राद्धस्य पृथक्कर्तव्यतानिमित्तानि

[1]अष्टकादिषु वृद्धौ च गयायां च मृतेऽहनि ।
मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ॥
[2]प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः ।
स्नात्वाऽनन्तरमात्मीयान् पितॄन् श्राद्धेन तर्पयेत् ॥

श्राद्धं चात्राऽऽभ्युदयिकमेव, न स्वतन्त्रम् ।

गभा. १६०

## प्रचेताः

नान्दीश्राद्धे विशेषधर्माः

[3]न जपेत्पैतृकं जप्यं न मांसं तत्र दापयेत् ॥
[4]प्राङ्मुखो देवतीर्थेन वृद्धौ परिचरेत्पितॄन् ।
सव्येनैवोपवीतेन क्षिप्रं देशविमार्जनम् ॥

(१) लता. १२१ ; आन. १४२ (=) अष्टकादिषु (अष्टकासु च) मृतेऽहनि (महालये) मातुः श्राद्धं (मातृश्राद्धं).

(२) श्राका. ५१७ ; गभा. १६० ; मुक्ता. ७५४ ; लता. ३२ ; संम. १४ पितॄन् श्रा (पितृश्रा) ; सिन्धु. ८४५ ; शूक. ९१ द्वितीयपादे (चन्द्रसूर्यग्रहे तथा) ; विपा. २६७ ; संर. ८३१.

(३) स्मृच. ४९६ ; चश्रा. १५४८ ; पमा. ७८३ ; प्रपा. १९ जप्यं (जाप्यं) ; श्राप्र. ३०४ जप्यं (जापं) ; मुक्ता. ७५५ ; श्राम. ९० ; आन. १४५ (=) ; बाल. १।२५० पृ. ५६८ प्रपावत्.

(४) स्मृच. ४९६ चश्राश्राप्रआनवर्जं सर्वत्र प्रथमचतुर्थपादौ ; चश्रा. १५४६ ; पमा. ७८३ ; प्रपा. १९ क्षिप्रं देशवि (भुक्तदेशनि) ; श्राका. ५१३ विमा (विस) ; श्राप्र. ३०९ देशविमा (विप्रविस) वस्तुतस्तु श्राद्धप्रकाशे पार्वणश्राद्धे पात्रमार्जनस्य सूर्यास्तोत्तरकर्तव्यताविधानात् तदुपलक्षितं देशविमार्जनमेव तदपवादेऽस्मिन् वचने प्रकाशकृतोऽभिप्रेतमिति प्रतीयते ; मुक्ता. ७५५ देव (दैव) ; श्राम. ९० विमा (निमा) ; आन. १४५ (=) प्रथमः पादः ; बाल. १।२५० पृ. ५६८.

(१) पैतृकं पितृलिङ्गकं जप्यं भोजनसमयादौ जप्यत्वेन विहितमत्र न प्रयोक्तव्यम् । जपस्यैवात्र निषेधात् पितृलिङ्गोऽपि करणमन्त्रः प्रयोक्तव्य एव । अत एव स्मृत्यन्तरम्– 'पितृलिङ्गेन मन्त्रेण यत्कर्म मुनिभिः स्मृतम् । तेनैव तद्विधातव्यममन्त्रमकृतं यतः ॥' इति । प्राङ्मुखः कर्ता देवतीर्थेन पैतृकमपि कर्मजातं कुर्यादिति तृतीयपादस्यार्थः । क्षिप्रं देशादिमार्जनं भुक्तवत्सु द्विजेषु तानि भोजनस्थानानि संमार्जनं कर्तुम् (?) । कर्तुः प्राङ्मुखत्वं भोक्तृषूदङ्मुखेषु सत्सु कथंचिद्विप्राभिमुख्यसंभवाद्युज्यते, न तु प्राङ्मुखेषु भोक्तृषु । तेन उदङ्मुखान् ब्राह्मणान् भोजयेदिति पक्षोऽस्माद्वचनाद्गम्यते इत्यवगन्तव्यम् । विष्णुपुराणोक्ते तु 'प्राङ्मुखान् ब्राह्मणान् भोजयेत्' इति पक्षे कथंचिद्विप्राभिमुख्यं कर्तुरुदङ्मुखत्वे सति युज्यते, न तु प्राङ्मुखत्वे इति कर्तुरुदङ्मुखत्वपक्षस्तद्वचनाद्गम्यते इति बोद्धव्यम् । एवं च यदा प्राङ्मुखा विप्रास्तदा कर्तोदङ्मुख आवाहनादिकं कुर्यात्, यदा तु विप्रा उदङ्मुखाः तदा कर्ता प्राङ्मुख इत्यवगन्तव्यम् । अत एवाऽऽश्वलायनगृह्यपरिशिष्टम्– 'आभ्युदयिके युग्मा ब्राह्मणाः । अमूला दर्भाः । प्राङ्मुखेभ्य उदङ्मुखो दद्यात् । उदङ्मुखेभ्यः प्राङ्मुखः । द्वौ दर्भौ पवित्रे' इति । § स्मृच. ४९६

(२) उच्छिष्टस्य मार्जनं क्षिप्रमेव कार्यम्, न तु पार्वणवत्कदाचिदासायं प्रतीक्षेदित्यर्थः ।

$ चश्रा. १५४६

(३) प्राङ्मुखः । पिण्डदानादिकं कुर्यादित्यध्याहारः ।

पमा. ७८३

[1]अपसव्यं न कुर्वीत न कुर्यादप्रदक्षिणम् ।
यथा चोपचरेद्देवान् तथा वृद्धौ पितॄनपि ।
प्रदद्यात्प्राङ्मुखः पिण्डान्वृद्धौ सव्येन वाग्यतः ॥

§ श्राप्र. स्मृचगतं चश्रावच्च ।

$ शेषं स्मृचगतम् ।

(१) पमा. ७८३ ; श्राका. ५१३ यथा चोप (यथैवोप) तृतीयार्धं नास्ति.

नान्दीश्राद्धस्य प्रातःकर्तव्यता

**[1]पूर्वाह्णे दैविकं कार्यमपराह्णे च पैतृकम् ।**
**एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥**

(१) प्रातःशब्दोऽत्र न संगवाख्यकालनिवृत्तिपरः, 'पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम् । पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥' इत्यत्रिणाऽभिधानात् । ‡ स्मृच. ४९८

(२) प्रातरिति सति संभवे, अन्यथा रात्र्यादौ पुत्रजन्मनि जातकर्माङ्गभूतनान्दीमुखश्राद्धानुपपत्तेः । मपा. ६३२

(३) दैविकं द्वादश्यादिषु वैष्णवम् । तथा च विश्वामित्रः— 'देवानुद्दिश्य क्रियते यत्तु दैविकमुच्यते । तन्नित्यश्राद्धवत्कुर्याद्द्वादश्यादिषु यत्नतः ॥' इति । ननु च प्रातर्वृद्धिनिमित्तकमित्यनेन प्रातरेवास्य विहितत्वात् कथं पूर्वाह्ण इति । उच्यते— प्रातःशब्देन पूर्वाह्णस्यैवोक्तत्वात् इति वक्ष्यमाणत्वात् । श्राका. ५१३

जातकर्मनिमित्तकं नान्दीश्राद्धमामेन कर्तव्यम्

**[2]स्त्री शूद्रः स्वपचश्चैव जातकर्मणि चाप्यथ ।**
**आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन तु ॥**

(१) स्वयं पचतीति स्वपचः । ¶ स्मृच. ४९२

(२) अत्र च वृद्धिश्राद्धमामेन कार्यमित्याह प्रचेताः— स्त्री शूद्र इति । स्वपचः स्वयंपचः । हेमाद्रौ संवर्तस्तु हेम्नैवाऽऽह— 'पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् । न पक्वेन न चाऽऽमेन कल्याणान्यभिकामयन् ॥' इति । अत्र नैमित्तिककाम्यभेदेन आमहेमव्यवस्था द्रष्टव्या । संम. १५

## बृहत्प्रचेताः

नान्दीश्राद्धस्योपाकर्मणि कर्तव्यता

**[1]भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु ।**
**ब्राह्मणान् भोजयेत्तत्र पितॄनुद्दिश्य देवताः ॥**

## व्याघ्रः

श्राद्धप्रकाराः

**[2]नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथाऽपरम् ।**
**पार्वणं चेति विज्ञेयं श्राद्धं पञ्चविधं स्मृतम् ॥**

(१) वृद्धिश्राद्धं नान्दीमुखम् । मभा. १५।१

(२) विवाहादिवृद्धिकर्मसु पूर्वेद्युः कर्तव्यं वृद्धिश्राद्धं 'तस्मात् पितृभ्यः पूर्वेद्युः क्रियते' इतिब्राह्मणमूलम् । तत्र युग्मा ब्राह्मणाः । यवास्तिलार्थाः । अन्यत् पार्वणवत् । गौमि. १५।१

नान्दीश्राद्धे मातृश्राद्धस्य प्राथम्योपपादनम्

**[3]यथा मनुष्यास्तुष्यन्ति दृष्ट्वा पत्नीः सुपूजिताः ।**
**पूजितास्विह पत्नीषु तुष्यन्ति पितरस्तथा ॥**

---

‡ मुक्ता. स्मृचवत् ।

(१) स्मृच. ४९८ ; चश्रा. २८८ कार्यं (श्राद्ध) च पैतृकम् (च पार्वणम्) मनुः ; चका. ५७५ च (तु) मनुः : ५८१ (=) चतुर्थः पादः ; मपा. ६३२ च (तु) शातातपः ; श्राका. ५१३ कार्यं (श्राद्ध) च (तु); मुक्ता. ७५४ दैविकं (देविकं) ; आन. १४४ (=) चतुर्थः पादः , देवलेऽपि एतत्सदृशं वचनं द्रष्टव्यम् ।

(२) स्मृच. १९ चाप्यथ (वाऽप्यथ) : ४९२ सदा (तथा) ; मपा. ३५४ स्वपच (श्वपच) ; संसौ. ५२ सदा कुर्याद्वि (प्रकुर्वीत वि) ; संप्र. १९१ स्त्री शूद्रः स्व (शूद्रश्च स्व) तु (च) ; मुक्ता. ७९ चाप्यथ (वाऽप्यथ) सदा (तथा) ; संम. १५ ; संग. ४३७ ; कुभ. ८४३ चाप्यथ (वाऽथवा).

¶ मुक्ता., संग., कुभ. स्मृचवत् ।

(१) चका. ४०१ ; मपा. ८७ ; प्रपा. २५० ; पुम. २८७ ; संर. ११४४.

(२) मभा. १५।१ ; गौमि. १५।१ (=) श्राद्धं तथा (श्राद्धमथा) स्मृतम् (बुधैः).

(३) चश्रा. १५४३ ; बाल. १।२५० पृ. ५७० स्विह (स्त्विह) व्याघ्रपात्.

अत्र मातामह्यादिश्राद्धविधेरर्थवादो व्याघ्रेण दर्शितः— यथेति । चश्रा. १५४३

## व्याघ्रपात्

पुत्रिकापुत्रकर्तृकनान्दीश्राद्धान्तर्गतमातामहश्राद्धे मातृपूर्वकत्वापवादः

[1]कुर्यान्मातामहश्राद्धं सर्वदा मातृपूर्वकम् ।
विधिज्ञो विधिमास्थाय वृद्धौ मातामहादिति (? दि तु) ॥

यत्तु पुत्रिकापुत्रस्य मातामहश्राद्धे मातृपूर्वकत्वमुक्तं तस्य वृद्धावपवादमाह व्याघ्रपात्— कुर्यादिति । चश्रा. १२६

## गार्ग्यः

नान्दीश्राद्धस्य निमित्तानि कर्माणि

[2]पुत्रोत्पत्तिप्रतिष्ठासु तन्मौञ्जीत्यागबन्धयोः ।
चूडायां च विवाहे च वृद्धिश्राद्धं विधीयते ॥

नान्दीश्राद्धान्तर्गतश्राद्धत्रयं तत्कालश्च

[3]मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकम् ।
मातामह्यं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम् ॥

(१) चश्रा. १२६.

(२) श्राका. ५१२ बन्धयोः (बन्धने) विवाहे च (विवाहेषु) वृद्धगार्ग्यः ; श्राप्र. २८९ बन्धयोः (बन्धने) ; मुक्ता. ७५५ विधीयते (समाचरेत्) कात्यायनः .

(३) स्मृच. ४९८ हनि तु (हन्येव) ; मपा. ६३१–६३२ मातृश्राद्धं (मातुः श्राद्धं) हनि तु (हनि च) मातामह्यं (मातामहं) ; श्राका. ५१२ हनि तु (हन्येव) स्मृतम् (भवेत्) स्मृतिः ; मुक्ता. ७५४ स्मृचवत् ; सिन्धु. १७२९ मातामह्यं (मातामहं) ; संकौ. २६ सिन्धुवत् ; बाल. १।२५० पृ. ५६७ (तत्राऽऽद्ये मातृकं कर्म द्वितीयेऽहनि पैतृकम् । उत्तरेद्युर्भवेच्छ्रेयम्) एतावदेव ; संग. ७९ सिन्धुवत् , गार्ग्यशातातपौ.

## वृद्धगार्ग्यः

नान्दीश्राद्धनिमित्तानि कर्माणि

[1]अग्न्याधानाभिषेकादाविष्टापूर्ते स्त्रिया ऋतौ ।
वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा ॥

(१) आदिशब्दः पुत्रजन्मविवाहाद्यर्थः । श्राका. ५१२

(२) ऋतावाद्य एव । श्राप्र. २८९

(३) इष्टशब्देन विवाहादि पूर्त( ? आपूर्त )शब्देन वाप्यादि । संग. ७६

## सत्यव्रतः

नान्दीश्राद्धे वारतिथिदोषाभावः

[2]नान्दीमुखे पितृश्राद्धे संक्रान्त्यां ग्रहणद्वये ।
युगाद्यादिनिमित्तेषु न वारतिथिदूषणम् ॥

[3]पुत्रजन्मन्या नाभिकर्तनात् पुण्यं तदहः ।
कृतजातकर्माऽऽमश्राद्धं कुर्यात् ॥

## आश्वलायनः

नान्दीश्राद्धस्य पूर्वेद्युःकर्तव्यता प्रदक्षिणक्रियत्वं देवताश्च

[4]तत्कर्तुमिच्छन् पूर्वेद्युर्नान्दीश्राद्धं यथाविधि ।
कुर्वन् पार्वणमार्गेण क्रियाः कुर्यात् प्रदक्षिणाः ॥

[5]माता पितामही चैव संपूज्या प्रपितामही ।
पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः ।
एते नवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः ॥

(१) पमा. ७८५ ; श्राका. ५१२ ; श्राप्र. २८९ ; मुक्ता. ७५५ ; श्राम. ८७ ; संम. ४ दाविष्टा (दिष्विष्टा) ; संग. ७६.

(२) संत. ९४३.

(३) स्मृच. १९ ; मुक्ता. ८० तदहः । कृतजातकर्माऽऽम (दानं कृतं जातकर्म).

(४) आश्वस्मृ. ७।३ कुर्वन् (कुर्यात्) कुर्यात् (कृत्वा) ; प्रपा. १७–१८.

(५) आश्वस्मृ. ७।४–५ यश्चैव (यश्चैते) ; प्रपा. १४ ; गभा. ३१ ; प्रर. १३ ; श्राप्र. २९६, ३१० ; चम.

(१) यत्तु वृद्धवसिष्ठवचनम्— 'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् । नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥' इति, स्मृत्यर्थसारेऽपि— 'वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते ।' इति तदेतच्छाखान्तरविषयम् । बह्वृचानां तु तच्छाखाप्रवर्तकाश्वलायनाचार्येणाऽऽनुलोम्येन मात्रादिक्रमस्यैवोक्तत्वादयमेव पक्षः स्वीकार्यः । ‡ प्रपा. १४

(२) यच्च वृद्धवसिष्ठेनोक्तम्— 'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् । नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥' इति, स्मृत्यर्थसारे च 'वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते ।' इति तच्छाखान्तरविषयम्, कात्यायने तु— 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाः' इत्युक्तेः, 'पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः' इति बह्वृचपरिशिष्टोक्तेराश्वलायनादीनामानुलोम्येनैव विधानादनुलोमक्रम एव । ननु आश्वलायनव्यतिरिक्तानां सर्वेषामनुलोमक्रम एव, आश्वलायनानामेव केवलं प्रातिलोम्यक्रमः, 'नान्दीमुखे विवाहे च' इति वाक्यात् । इदं हि वृद्धवसिष्ठवाक्यमाश्वलायनविषयकमेव, 'वासिष्ठं बह्वृचैरेव' इति होलाकाधिकरणे वार्तिककारैरुक्तत्वात् । 'माता पितामही चैव' इत्याश्वलायनवचनं तु न क्रमपरम्, किंतु पदार्थमात्रपरम् । न च वासिष्ठे प्रपितामहपूर्वकालोक्त्या तत्त्रिदेवत्यमात्रे प्रातिलोम्यविधानमस्तु, न मात्रादित्रिके, न वा मातामहादित्रिके इति वाच्यम्, तस्योपलक्षणत्वेन वर्गत्रयेऽपि प्रातिलोम्यविधानस्योचितत्वात् । तस्मात् सिद्धं नान्दीमुखे विवाहे च आश्वलायनानां प्रतिलोमक्रम इति चेत्, 'माता पितामही ... द्विजैः ॥' इत्याश्वलायनाचार्यवचने, तथा 'नान्दीमुखाः पितर इदं वोऽर्घ्यम्, पितामहाः प्रपितामहा इति यथालिङ्गमर्घ्यदानम्, पितरः प्रीयन्तामित्यपां प्रतिग्रहणं विसर्जनं च, एवमुत्तरयोः पितामहप्रपितामहयोः' इत्याश्वलायनगृह्यपरिशिष्टे, शौनकीयेऽपि— 'तत्रेदं तेऽर्घ्यमित्येष पितृनामपदादिकः । पितामहार्थविप्रेभ्यो दत्त्वाऽर्घं च यथा पुरा ॥ प्रपितामहशब्दादिमिदं तेऽर्घ्यमितीरयेत् ॥' इत्याश्वलायनशाखाप्रवर्तकाश्वलायनादिवाक्येषु प्रतीतो योऽनुलोमक्रमस्तस्यैवाऽऽश्वलायनैरन्तरङ्गत्वेनाङ्गीकार्यत्वात्, न वासिष्ठोक्तस्य, तस्य बहिरङ्गत्वात् । अतश्चाऽऽथर्वणानां शाखाविशेषे प्रातिलोम्यक्रमस्य प्रत्यक्षपठितत्वात् तद्विषयो वासिष्ठोक्तः क्रम इति ध्येयम् ।

यच्चोक्तं 'वासिष्ठं बह्वृचैरेव' इति होलाकाधिकरणे वार्तिककारेणोक्तमिति, तदपि तत्रत्यपूर्वपक्षमूलकम्, न सिद्धान्तमूलकम् । तथा च पूर्वपक्षे वार्तिकम्— "तद्यथा गौतमीयगोभिलीये छन्दोगैरेव च परिगृहीते, वासिष्ठं बह्वृचैरेव, शङ्खलिखितोक्तं वाजसनेयिभिः, आपस्तम्बबौधायनीये तैत्तिरीयैरेव प्रतिपन्ने इति । एवं तत्र तत्र गृह्यग्रन्थव्यवस्थाभ्युपगमादिदर्शनात् विचारयितव्यम्— किं तानि तेषामेव प्रमाणानि, उत सर्वाणि सर्वेषाम् ? इति । 'किं तावत्प्रतिपत्तव्यं व्यवस्थैवेति पाठतः । न ह्यन्यत्र स्थितालिङ्गाल्लिङ्ग्यन्यत्रानुमीयते ॥" । 'अनुमानाद्व्यवस्था' (? अनुमानव्यवस्थानात्) इति पूर्वपक्षसूत्रे अनुमानं लिङ्गम् । '(तत्र ग्रन्थात्मकात्) आचारात्मकात् (वा) लिङ्गाल्लिङ्गिनौ विधिप्रतिषेधौ अनुमीयमानौ तद्विषयावेवानुमातव्यौ ।' इत्यादिना पूर्वपक्षमुक्त्वा 'अपि वा सर्वधर्मः स्यात्' इत्यनेन शक्तमात्राधिकारित्वात् 'राजा राजसूयेन' 'वैश्यो वैश्यस्तोमेन' इत्यादिवत्कर्तृव्यावर्तकविशेषणाभावात् तत्तदाचाराणामनुवृत्तव्यक्त्याकृतिप्राच्यत्वदाक्षिणात्यत्वादिजातिवचनत्वाभावाच्च गृह्यधर्मसूत्रनिबद्धधर्माणामपि सर्वधर्मत्वमिति हि सिद्धान्ते वार्तिकम् । तेन 'वासिष्ठं बह्वृचैरेव' इति पठितवार्तिको नेदं वक्तुं क्षमते ।

‡ प्रर., संम., संकौ. प्रपावत् । १७९; लता. २५४; संम. ६; विपा. २९ (भागः २); संकौ. २६ संपूज्या (तथैव); प्रका. ३१-३२ पित्रादयस्त्रयः (पित्रादयस्तथा); बाल. १।२५० पृ. ५६७; संग. ८५ संकौवत्; कृभ. १७३० (=) संपूज्या (सा पूज्या) पित्रादयस्त्रयः (पित्रादयस्तथा): १७३४ मात्स्ये (?).

यच्चोक्तं 'माता पितामही चैव' इत्यत्र न क्रमविधिः, किंतु पदार्थमात्रम्, तदपि न साधु, पाठस्यापि क्रमनियामकत्वमुक्तं 'क्रमेण वा नियम्येत' इत्यत्राधिकरणे। 'समिधो यजति' 'तनूनपातं यजति' इति क्रमेण पठितानां यागानामनियमेनानुष्ठानमुत पाठक्रमेणेति श्रुत्यर्थयोरभावात् पाठक्रमस्याविधायकत्वात् विधीनां च पदार्थमात्रपर्यवसानादनियम इति पूर्वपक्षयित्वा राद्धान्तितम्— 'यथापाठमनुष्ठानं तथैव प्रतिपत्तितः। स्मृतिप्रयोगवेलायां वाक्यैरेव च कर्मणाम्॥' इति। यथापाठं क्रियमाणं स्मरणं विहितक्रमं भवतीति पाठक्रमस्य बलवत्त्वम्। न च प्रतिलोमक्रम औपदेशिक इति वाच्यम्, 'एते नवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः।' इत्याभ्युदयिकपुरस्कारेणानुलोमक्रमस्याप्यौपदेशिकत्वात्। न हीतोऽधिकमप्यस्ति शृङ्गान्तरमुपदेशस्य। एवं सति यदा पित्रादित्रिके प्रातिलोम्यक्रमो निरस्तस्तदा कैव कथाऽपरस्मिन्वर्गद्वये। अत एव प्रयोगपारिजातकारेणानुलोमक्रमाश्रयणं कृतम्। यच्च 'नान्दीमुखे विवाहे च' इति विवाहेऽपि प्रातिलोम्यविधानम्, तत्तु 'वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं च वसिष्ठगोत्रोद्भवाय अमुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय' इत्यादिपरिशिष्टोक्तेर्भवत्याश्वलायनपरमिति सिद्धो विवाहे प्रतिलोमक्रम इति। न च 'पुत्रायास्य च पौत्राय नप्त्रेऽस्यामुकगोत्रिणे।' इति कारिकोक्तानुलोमक्रमेण स बाधित इति वाच्यम्, परिशिष्टस्याऽऽर्षत्वेनाऽऽधुनिककृतकारिकया बाधायोगात्। श्राप्र. ३१०-३१२

(३) अथ प्रागुक्तेऽपि नान्दीश्राद्धे ग्रन्थान्ते मङ्गलार्थं पुनः किंचिद्विचार्यते—बह्वृचानां नान्दीश्राद्धे मात्रादीनामानुलोम्येन क्रमः, उत प्रातिलोम्येन? इति। तत्राऽऽनुलोम्येनेति प्राप्तम्, चोदकानुग्रहात्, 'माता पितामही ... द्विजैः॥' इत्याश्वलायनवचनाच्च। न च मात्रादिस्वरूपविधिपरेऽस्मिन्वाक्येऽवर्जनीयतया क्रमोक्तिः, उभयपरत्वे वाक्यभेदादिति वाच्यम्, प्राप्तत्वेन स्वरूपविधानानभ्युपगमात्। न च परिशिष्टकारिकाशौनकादिप्रयोगेषु त्रिदैवत्यत्वोक्तेः 'मातृपूर्वान् पितॄन्पूज्य ततो मातामहानपि। मातामहीस्ततः केचिद्युग्मा भोज्या द्विजातयः॥' इति चतुर्विंशतिमते द्वादशदैवत्यत्वोक्तेश्च तत्परिसंख्यार्थमेवेदमिति वाच्यम्, तस्यास्त्रिदोषत्वात्। न च पाठक्रमो न विधेयः, नापि वाक्यार्थः, अपदार्थत्वादिति वाच्यम्, तस्य 'शौचाचारांश्च शिक्षयेत्' इत्यादिस्मार्तस्वाध्यायविधिविहितत्वात्। अत एव कात्यायनीये प्रयोगवचने— 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्ताम्' इति, तथा शौनकीयेऽपि— 'तत्रेदं तेऽर्घ्यमित्येष पितृनामपदादिकः। पितामहार्थविप्रेभ्यो दत्त्वाऽर्घ्यं च यथा पुरा। प्रपितामहशब्दादिमिदं तेऽर्घ्यमितीरयेत्॥' इत्यादीन्यानुलोम्यविधिलिङ्गान्यपि संगच्छन्ते। एतदेवाभिप्रेत्य भगवान् प्रयोगपारिजातोऽप्येवमाह— 'तस्मादानुलोम्येन क्रमः' इति।

अत्रोच्यते— न तावदत्रातिदेशेनाऽऽनुलोम्यक्रमसिद्धिः, तस्योपदेशेन बाधितत्वात्। तथा हि— 'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्। नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम्॥' इति वृद्धवसिष्ठेन, तथा 'वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते।' इति स्मृत्यर्थसारेण, तथा 'प्रपितामह्यादि मात्रन्तं तथा वर्गद्वयेऽपि च। नान्दीश्राद्धेषु सर्वत्र केचिदाहुर्मनीषिणः॥' इति प्रयोगसाराश्वलायनसर्वस्वकृत्यरत्नाकरप्रभृतिभिश्च प्रातिलोम्यक्रमस्यैवोक्तत्वात्स एव शास्त्रार्थः। न च वासिष्ठं शाखान्तरविषयमिति वाच्यम्, 'वासिष्ठं बह्वृचैरेव' इति होलाकाधिकरणे वार्तिककारैरुक्तत्वेन तदयोगात्। अथाऽऽश्वलायनवाक्येन तत्सिद्धिरिति मतम्, तत्रापि तस्य पाठमात्रदर्शनेन पाठक्रमस्य च क्लेशकल्प्यत्वेन तत्परत्वायोगात्, तथात्वेऽपि वा तस्य साक्षाद्वसिष्ठस्मृत्युक्तश्रौतक्रमविरोधे क्रमकोपाधिकरणन्यायेन बाध्यत्वात्। यथा— 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' 'आश्विनं गृह्णाति' इति पाठक्रमः 'आश्विनो दशमो गृह्यते' इति श्रौतक्रमेण बाध्यत इति। किंच पाठमात्रस्य क्रमकल्पकत्वे 'मातरः प्रथमं पूज्याः पितरस्तद-

नन्तरम् । ततो मातामहाः पूज्या विश्वेदेवास्तथैव च ॥' इति मात्स्यवचने विश्वेषां देवानामन्ते पाठादन्ते एव पूजा स्यात् । तस्मादाश्वलायनवाक्यं नवसंख्यामात्रविधिपरमेव, न क्रमपरम् । तथा सति च 'तदिदमेके मातॄणां पृथक्कुर्वन्त्यथ पितॄणां ततो मातामहानामिति त्रयमिच्छन्ति', तथा 'मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदन्तरम् । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥' इत्यादिपरिशिष्टादिवाक्यैः सह एकमूलकल्पनालाघवमपि । यद्वा परिशिष्टादिवाक्यैकमूलकल्पनालाघवादेव मात्रादिश्राद्धत्रयस्य क्रमविधायकमस्तु । न च वसिष्ठवाक्यं प्रपितामहपूर्वकत्वोक्त्या त्रिदैवत्यमात्रे प्रातिलोम्यविधायकमिति वाच्यम्, नवदैवत्येऽपि 'प्रपितामह्यादिमात्रन्तम्' इति वाक्येन प्रातिलोम्यस्योक्तत्वेन तस्योपलक्षणपरत्वात्, अन्यथा शौनककारिकादिभिस्त्रिदैवत्ये आनुलोम्यक्रमस्यैवोक्तत्वेन तैः सहाष्टदोषदुष्टविकल्पापत्तेः, मूलान्तरकल्पनाक्लेशापत्तेश्च । एतेन शौनककारिकादिविरोधोऽपि प्रत्युक्तः, तेषां त्रिदेवता-(? त)त्वपक्षे तथा क्रमविधायकत्वात् । यत्तु कात्यायनीये प्रयोगवचने तथा क्रमविधानम्, तद्वाजसनेयिविषयमिति । यच्च भगवता प्रयोगपारिजातेनाऽऽनुलोम्यमाश्रितं तदभ्युपगमाभावादेव(न ?)शिष्यबुद्धिपरीक्षार्थम्, न वस्तुतः । अत एव वसिष्ठवाक्यस्य विवाहप्रकरणे पित्रादीनां प्रातिलोम्याश्रयणेन स्वशाखाविषयत्वमाविष्कृतम् । तस्य शाखान्तरविषयत्वे तदसंगतं स्यात् । न च 'वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय' इत्यादिपरिशिष्टादेव तत्र प्रातिलोम्यसिद्धिः, न वसिष्ठवाक्यादिति वाच्यम्, उभयोः स्वातन्त्र्येण विधायकत्वादेकार्थस्मृतिद्वयवाक्यवत्तद्विधाने विनिगमकाभावात् । न चैवं 'पुत्रायास्य प्रपौत्राय (? च पौत्राय) नप्त्रेऽस्यामुकगोत्रिणे । असा अमुकगोत्राऽऽस्य पुत्री पौत्र्यस्य नप्त्रिका ॥' इत्यादिकारिकाविरोध इति वाच्यम्, आर्षपरिशिष्टविरोधे पौरुषेय्यास्तस्या दुर्बलत्वात्, परिशिष्टस्य श्रुतिमूलकत्वेन स्मृतिमूलिकायास्ततः प्राबल्याच्च । न च 'नान्दीमुखे विवाहे वा (? च)' इत्यनेन नान्दीमुखशब्देन महालयाङ्गं नान्दीमुखमेवोच्यते, तेन तत्रैव तादृशक्रमविधानमिति वाच्यम्, वासिष्ठस्य तत्परत्वेऽपि तस्य वृद्धिश्राद्धशब्दावाच्यत्वेन स्मृत्यर्थसारीयस्य तत्परत्वासंभवात्, उक्तरीत्या वाक्यान्तरवशादुपलक्षणतया नवदैवत्ये तादृशक्रमविधानेन त्रिदैवत्ये तस्मिन् तादृशक्रमविधानसंभवाच्च । किंच उभयपरतयाऽस्पष्टस्य सामान्यस्य नान्दीमुखशब्दस्यैकमात्रपरतया स्पष्टेन विशेषेण वृद्धिश्राद्धशब्देनोपसंहारात् । अत एव वासिष्ठस्य तत्परत्वेन स्मृत्यर्थसारीयस्य चाऽऽभ्युदयिकपरत्वेन व्यवस्थेत्यपि न शङ्कनीयम् । न चैतानि वचनानि निर्मूलान्येवेति वाच्यम्, तेषां समूले (? समूलत्वे) हेमाद्रिप्रयोगपारिजातस्मृत्यर्थसारप्रयोगसाराश्वलायनसर्वस्वकृत्यरत्नाकरहरनाथसंस्कारचन्द्रिकाप्रभृतीनां निबन्धानां प्रतिभूत्वेनासद्भावापनयनात् । तदेवं जाग्रन्मूलायां सर्वदेशीयाश्वलायनानामनादिशिष्टाचारपरम्परायां यदाधुनिकानामसत्पथप्रवर्तनं तद्धर्ममर्मनिकर्तनेनाऽऽत्मकृतित्वख्यापनमेवेत्युपेक्षणीयम् । तस्मात्सिद्धो बह्वृचानां नान्दीश्राद्धे मात्रादीनां प्रातिलोम्येन तत्क्रम इत्यलमतिप्रपञ्चेन । लता. २५४—२५७

(४) यत्तु वृद्धवसिष्ठः— 'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् । नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥' इति, स्मृत्यर्थसारश्च— 'वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते ।' इति, तच्छाखान्तरविषयकम् । आश्वलायनानां त्वानुलोम्येन मात्रादिक्रमेणैव, आश्वलायनाचार्यवचनादिति दीक्षिताः । वस्तुतस्तु तद्वदन्येषामपि [* उक्तशातातपवाक्येन, 'मातृश्राद्धं तु पूर्वेद्युः कर्माहन्येव पैतृकम् । मातामहं चोत्तरेद्युर्वृद्धिश्राद्धत्रयं स्मृतम् ॥' इति तद्वाक्यात्, 'तत्राऽऽद्ये मातृकं कर्म द्वितीयेऽहनि पैतृकम् । उत्तरेद्युर्भवेच्छेषम्' इति गार्ग्यात् वक्ष्यमाणवसिष्ठवाक्याच्च ।] तथैव । स्मृत्यर्थसारस्य

* कंसगतो ग्रन्थोऽत्र न संगच्छते ।

विषयो वक्ष्यते ¶ । वृद्धवसिष्ठस्य तु विवाहसाहचर्यात् नान्दीमुखे इत्युक्तेश्च मङ्गलारम्भे मङ्गलाचरणादौ तथा कुर्यात्, अन्यत्र व्यवहारे ऋणादौ तथा कुर्यादित्यर्थः, न तु तस्य श्राद्धविषयता । अत एवं नान्दीश्राद्धे इति नोक्तम् । एतेन प्रपितामह( पितामह )-पितर इत्येत्रं तत्रोल्लेखं कुर्वन्तो वदन्तश्च परास्ताः । अत एव 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्ताम्' इति कात्यायनगृह्यपरिशिष्टं संगच्छते, 'नान्दीमुखाः पितर इदं वोऽर्ध्यम्' इत्याश्वलायनसूत्रं च, 'प्रपितामहसंयुक्तं मन्त्रमुक्त्वा तमेव तु । तदर्थमुपविष्टेभ्यस्तृतीयं सकृदेव तत् ॥' इति तत्कारिका च, 'उक्त्वा पितरिदं तेऽर्ध्यमिति पित्रेऽर्ध्यमानयेत् ।' इत्युक्त्वा 'एवमेवार्घ्यदानं तु कुर्यादुत्तरयोर्द्वयोः ।' इति शौनकोक्तिश्च, एवमेव जयन्तोक्तिश्च, 'एवं पित्रर्थविप्रेभ्यः प्रदायार्घ्यं यथाविधि । पितामहार्थविप्रेभ्यो दत्त्वाऽर्घ्यं च यथा पुरा । प्रपितामहशब्दादिमिदं तेऽर्ध्यमितीरयेत् ॥' इति पारिजातोदाहृतभागवतस्मृतिश्चेति बोध्यम् । 　बाल. १।२५० पृ. ५६७

नान्दीश्राद्धविशेषधर्माः

[1]द्वौ द्वौ निमन्त्र्य चैकैकं संभोज्या ब्राह्मणाः शुभाः ।
द्वौ द्वावेकैकशः पिण्डौ दद्यादष्टादशापि च ॥

[2]प्राङ्मुखाश्चोपवेश्याः स्युर्विप्रा दैवादिकास्ततः ।
क्रिया यज्ञोपवीत्येव कुर्यादाऽन्तात्तदीरिताः ॥

[3]श्रावयित्वा च पृष्ट्वा च देवानां विकिरं चरेत् ॥

---

¶ 'स्मृत्यर्थसारस्तु प्रौष्ठपदीविषयकः, वृद्धब्राह्मणमुख्यत्वप्रतिपादको वेति बोध्यम् ।' 　बाल. पृ. ५६९

(१) आश्वस्मृ. ७१५-६ ; प्रपा. १८ चैकैकं ( चैकैके ).

(२) आश्वस्मृ. ७१६-७ ; प्रपा. १८ दैवादि (देवादि) उत्तरार्धं ( क्रिया यज्ञोपवीती च कुर्याद्दाता तदीरिताः ॥ ).

(३) मञ्जरी. ८३.

नान्दीश्राद्धस्य कर्मादौ पुण्याहवाचनात्पूर्वं च कर्तव्यता

[1]कार्यमभ्युदयश्राद्धं श्रौते स्मार्ते च कर्मणि ॥
वैदिके तान्त्रिके चाऽऽदौ ततः पुण्याहमिष्यते ॥

नान्दीश्राद्धस्य वधूवरगृहयोः पृथक्कर्तव्यता

[2]वृत्वैवमिष्यते पश्चात्तयोः पुण्याहवाचनम् ।
अपश्यतोः पृथग्गेहे पृथगभ्युदयं पुरा ॥

## लघ्वाश्वलायनः

नान्दीश्राद्धस्य पुण्याहवाचनपूर्वकत्वम्, तत्र जीवत्पितृकस्याप्यधिकारः

[3]नान्दीश्राद्धं द्विजः कुर्यात्स्वस्तिवाचनपूर्वकम् ।
गृहप्रवेशमारभ्य पितर्यपि च जीवति ॥

जीवत्पितृककर्तृकनान्दीश्राद्धे पितुः पितृणां देवतात्वम्

स जीवत्पितृको नान्दीश्राद्धं चेत्कुरुते द्विजः ।
पितुश्चैव पितृणां तु प्रवदन्ति महर्षयः ॥

प्रथमोद्वाहपर्यन्तसुतसंस्कारेषु पितुर्नान्दीश्राद्धकर्तृत्वम्

प्रथमोद्वाहपर्यन्तं पुत्रस्यैव क्रियासु च ।
नान्दीश्राद्धं पिता कुर्यादत ऊर्ध्वं सुतः स्वयम् ॥

नान्दीश्राद्धे ब्राह्मणसंख्या

चत्वारो ब्राह्मणा दैवे पित्र्ये चाष्टादश स्मृताः ।
नान्दीश्राद्धं( ? द्धे ) वदन्त्येके मुनयः पञ्च वाऽपि च ॥

नान्दीश्राद्धस्य निमित्तानि कर्माणि

[4]अथ नान्दीश्राद्धपूर्वककर्माण्याह-
आधाने पुंसि सीमन्ते जात( ? ते )नामनि निष्क्रमे ।
अन्नप्राशनके चौले तथा चैवोपनायने ॥

---

(१) आश्वस्मृ. ७१७-८ ; प्रपा. १३, २५० पृ. ; संर. १०४५ पृ. 'वैदिके तान्त्रिके' इति वचनस्य अन्ये स्थलादिनिर्देशाः पुण्याहवाचनप्रकरणे ( संका. पृ. १६८३ ) द्रष्टव्याः. (२) आश्वस्मृ. ११।३३९-३४०.

(३) लघ्वाश्वस्मृ. १५।६७-७०.

(४) लघ्वाश्वस्मृ. १८।१-६.

ततश्चैव महानाम्नि तथैव च महाव्रते ।
अथोपनिषद्गोदाने(? दान )समावर्तनकेषु च ॥
विवाहे नियतं नान्दीश्राद्धमेतेषु शस्यते ।
प्रवेशे च नवोढायाः स्वस्तिवाचनपूर्वकम् ॥
अथान्यत्र वदन्त्येके नान्दीश्राद्धं महर्षयः ।
यागे च प्रथमे वेदस्वीकारे च महामखे ॥

नान्दीश्राद्धदेवताः

मातृवर्गादितः(? मातृवर्गादि तत्) कुर्यात् पितुर्मातामहस्य च ।
नवैते पितरो वृद्धिश्राद्धे सद्भिरुदीरितम् ॥

प्रपितामहादिः प्रतिलोमदेवताक्रमः

कन्यादाने च वृद्धौ च प्रपितामहपूर्वकम् ।
नाम संकीर्तयेद्विद्वांस्तच्चावरोहणक्रमात् ॥
[1]जाते सुते पिता स्नायान्नान्दीश्राद्धं विधानतः ।
जातकर्म ततः कुर्यादैहिकामुष्मिकप्रदम् ॥

## जातूकर्ण्यः

ब्राह्मणनिमन्त्रणाद्युपवेशनान्तपदार्थक्रमः

[2]पूर्वेद्युस्तद्दिने वाऽथ दैवपूर्वं निमन्त्रणम् ।
कृत्वा विप्रान्समाहूय पूर्वाह्णे नियतः शुचिः ॥
कृत्वा मण्डलकं तेषां क्षालयेच्चरणांस्ततः ।
आचान्तान्कृतसत्कारानासनेषूपवेशयेत् ॥

अस्यार्थः— पूर्वेद्युस्तदहर्वा निमन्त्रितान्विप्रान् प्रातरेव पूर्वाह्णे एव आहूय चरणक्षालनानन्तरमृजुदर्भोपकल्पितासने उपवेशयेत् । श्राप्र. २९९

[3]पितृलिङ्गेन मन्त्रेण यत्कर्म मुनिभिः स्मृतम् ।
तेनैव तद्विधातव्यममन्त्रमकृतं यतः ॥

(१) लघ्वाश्वस्मृ. ५।१.
(२) चश्रा. १५४८ ; श्राप्र. २९९.
(३) चश्रा. १५४८ ; श्राप्र. ३०४ ; संग. ८२.

## विश्वामित्रः

श्राद्धप्रकाराः

[1]नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥
[2]कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥

## छागलेयः

नान्दीश्राद्धे ब्राह्मणसंख्या

[3]एकैकस्य तु वर्गस्य द्वौ द्वौ विप्रौ समर्चयेत् ।
वैश्वदेवे तथा द्वौ च न प्रसज्येत विस्तरे ॥

(१) युग्मसंख्यासु तत्संख्याविशेषादरार्थमाह छागलेयः— 'एकैकस्य ...' इति । एवं चात्राष्टौ ब्राह्मणाः संपद्यन्ते । भविष्यत्पुराणे तु नवमोऽप्युक्तः— 'पूर्वाह्णे भोजयेद्विप्रानष्टौ सर्वे प्रदक्षिणम् । तथा च नवमं विप्रं चतुरस्रे खगोत्तम ॥' । $ चश्रा. १५४४
(२) वर्गस्येत्यस्य वर्गस्यस्येत्यर्थात् । कृभ. १७४८

$ श्राप्र. चश्रावत् ।
(१) श्राक. ६ ; स्मृच. ३३४ सपिण्डनम् ( सपिण्डकम् ) गोष्ठ्यां शु ( गोष्ठीशु ) ; स्मृसा. ८१ ; पमा. ६४९ ; मपा. ४७५ ; मर. १२१ ; श्रासौ. ३ ; मच. २।१८९ मष्टमम् ( मष्टकम् ) ; श्राप्र. ३३१ ; लता. ६.
(२) श्राक. ६ ; स्मृच. ३३४ दैविकं ( देविकं ) यात्रास्वेका ( यात्राथैका ) ; स्मृसा. ८१ : १०१ ( = ) प्रथमः पादः ; पमा. ६४९ द्वादशं स्मृतम् ( द्वादशं मतम् ) ; मपा. ४७५ ; मर. १२१ ; श्रासौ. ३ दैविकं दशमं ( दशमं दैविकं ) यात्रास्वेका ( यात्राथेका ) ; मच. २।१८९ पू. ; श्राप्र. २३ (कर्माङ्गं नवमे प्रोक्तं) एतावदेव : ३३१ ; लता. ६.
(३) चश्रा. १५४४ ; श्राप्र. २९८ विस्तरे (विस्तरः) ; श्राम. ८९ वैश्व (विश्व) ; संकौ. २५ ; कृभ. १७४९ प्रसज्येत ( प्रसृज्येत ).

ब्राह्मणानां प्राङ्मुखत्वम्

[1]सर्वानेव तु तान्विप्रान् प्राङ्मुखानुपवेशयेत् ॥

(१) अथवा सर्वेऽपि प्राङ्मुखा उपवेश्याः। तथा च छागलेयः— सर्वानेवेति। चश्रा. १५४९

(२) 'सर्वानेव तु...' इति हेमाद्रौ छागलेयोक्तेः दैवे पित्र्ये च ये विप्रास्ते सर्वेऽपि प्राङ्मुखा उदङ्मुखा वोपवेशनीया इत्ययमपि पक्षोऽस्ति। तथाऽपि छन्दोगपरिशिष्टे कात्यायनेन प्रकृतिप्राप्तस्यापि ब्राह्मणोपवेशनस्य पुनर्विधानात् प्रकृत्यनुग्रहाच्च पूर्वोदाहृतपक्ष एव कात्यायनादिसंमत इति वाजसनेयिभिः स एवाऽऽश्रयणीयः। परन्त्वेतावान् विशेषः— अत्र प्रदक्षिणोपचारताविधानात्तदनुग्रहाय ब्राह्मणपङ्क्तिनिवेशः प्रागुपक्रमः पश्चादपवर्ग एव विधेय इति। संग. ७८

नान्दीश्राद्धे मातृश्राद्धस्य प्राथम्यम्

[2]क्षयाहे केवलाः कार्या वृद्धावादौ प्रकीर्तिताः।
सर्वत्रैव हि मध्यस्था नान्द्याः कार्यास्तु मातरः ॥

सर्वत्र महालयेऽन्वष्टकासु गयाश्राद्धे च मध्य एव निवेशः। चश्रा. १६९०

## लौगाक्षिः

नान्दीश्राद्धनिमित्तानि कर्माणि नान्दीश्राद्धकालश्च

[3]नामान्नचौलगोदानसीमोपनयपुंसवे।
स्नानाधानविवाहेषु नान्दीश्राद्धं विधीयते ॥

(१) चश्रा. १५४९ ; श्राप्र. ३०० ; संग. ७८.

(२) चश्रा. १६९० ; श्राप्र. ३१७ हि (तु) ; लता. १०० (=) क्षयाहे केवलाः (केवलास्तु क्षये) सर्वत्रैव हि (अन्वष्टकासु).

(३) पमा. ७८४ पूर्वार्धे (नवान्नचौलगोदाने सोमोपायनपुंसवे।) ; श्राका. ५१२ सीमोप (सोमैप) स्नानाधान (स्नानदान) ; मुक्ता. ७५४ सीमोपयन (सोपानयन) ; श्राम. ८७ ; संम. ४.

[1]नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकम्।
तेषामनियतत्वे तु तदानन्तर्यमिष्यते ॥

(१) नियतकालसीमन्तान्नप्राशनचौलोपनयनादिनिमित्तं 'ब्राह्मणभोजनमुपनयनवत्' 'ब्राह्मणान्भोजयित्वा' इत्यादिना कर्मादिषु विहितं श्राद्धं तस्मिन्नेव दिने पूर्वाह्णे अनुष्ठेयम्। विवाहादावन्ते विहितमभ्युदयश्राद्धं पूर्वाह्णे विवाहादौ सति तस्मिन्नेव दिने पूर्वाह्णे कर्तव्यम्। रात्रौ विवाहादौ सति श्वः प्रातः कर्तव्यम्। अनियतनिमित्तं पुत्रजन्मग्रहणादिश्राद्धं निमित्तानन्तरं कुर्यात्। यदाह लोकाक्षिः— 'नियतेषु ...' इति। मुक्ता. ७५४

(२) नान्दीश्राद्धनिमित्तान्याह लौगाक्षिः— नामान्नेति। संम. ४

मातॄणामनेकत्वे अर्घ्यदानस्य पृथक्त्वं पिण्डस्यैकत्वं च

[2]अनेका मातरो यस्य वृद्धिश्राद्धे महालये।
अर्घ्यदानं पृथक्कुर्यात्पिण्डमेकं तु निर्वपेत् ॥

बहुमातृकस्यापि पिण्डमेकमेव, 'अनेका मातरो यस्य...' इति लौगाक्षिवचनात्। विपा. ३४ (भागः २)

## पारस्करः

नान्दीश्राद्धस्य पारिभाषिककर्माङ्गरूपता तन्निमित्तानि च

[3]निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥

(१) संप्र. १९२ ; मुक्ता. ७५४ ; लता. ३२ ; सिन्धु. १७३१ ; संकौ. ३०.

(२) विपा. ३४ (भागः २).

(३) अप. १।२४९ पृ. ५१५ भास्करः ; स्मृच. ३३४ : ४४३ तथा (सदा) ; चका. ४५९ ; चश्रा. १०७, १४४ (=) : १९३, १५८१ ; पमा. ६५१, ७३१ ; श्राका. ५१२ ; श्राप्र. २९० ; चम. १४९ ; मुक्ता. ७५५ ; श्राम. ८९ (=) ; सिन्धु. १७४७ वत्कृतम् (वच्च तत्) ; संकौ. २५ (=) ; कृभ. १७२ (=) चतुर्थः पादः : १७३१ (=) ; संर. ९९७ (=) ;

( १ ) 'निषेककाले...' इति कर्माङ्गश्राद्धलक्षणमभिदधता पारस्करेणैव वृद्धिवत्कृतमित्यभिधानात्कर्माङ्गश्राद्धं वृद्धिश्राद्धादन्यदिति दर्शितम् ।

स्मृच. ४४३

( २ ) अत्र कर्माङ्गमिति परिभाष्यते । वृद्धिवदिति नान्दीमुखदैवतत्वं स्वाहाशब्दप्रयोगो दधिबदरादिमिश्रपिण्डवत्त्वादयो वृद्धिश्राद्धधर्मा अतिदिश्यन्ते ।

¶ पृ. १४४

निषेककालः षोडशरात्रात्मको भार्याया ऋतुकालः । तत्र पुण्यनक्षत्रान्विते गर्भाधानाख्यकर्माङ्गश्राद्धं कार्यम् । सोमशब्दोऽत्र अग्निहोत्रादिकर्मणामुपलक्षणार्थः ।

§ चश्रा. १९३

( ३ ) अत्र कर्माङ्गमिति वचनमकरणे कर्मवैगुण्यज्ञापनार्थम् ।

$ पमा. ६५१

## गालवः

आधाननिमित्तकनान्दीश्राद्धस्यापराह्णे कर्तव्यता

[1]आमश्राद्धं तु पूर्वाह्णे सिद्धान्नेन तु मध्यतः ।
पार्वणं चापराह्णे स्याद्वृद्धिश्राद्धं तथाऽऽग्निकम् ॥

( १ ) अग्न्याधानाभ्युदयिके तु गालवः— 'पार्वणं...' इति । अग्न्याधाननिमित्तमपराह्णे इत्यर्थः ।

* श्राका. ५१३

( २ ) आधानाङ्गं त्वपराह्णे, 'आमश्राद्धं...' इति गालववचनात् । इदं चाऽऽधानपूर्वदिने बौधायनोक्तनान्दीश्राद्धविषयम्, आपस्तम्बसूत्रानुसारिणां तु यत् संभारस्पर्शोत्तरं भाष्यकारादिभिरुक्तं तत् पूर्वोत्तरपदार्थैर्निबद्धक्रमत्वान्न पृथक्कालमपेक्षते इति न तद्विषयम् ।

संकौ. ३०

( ३ ) आग्निकमिति । आधाननिमित्तमित्यर्थः । अग्निसंबन्धिश्राद्धानामुपलक्षणं च भवति । तदपराह्णे कर्तव्यमित्यर्थः ।

आन. १४५

नान्दीश्राद्धस्य नैमित्तिकत्वम्

[1]प्रेतश्राद्धं सपिण्डयन्तं संक्रान्तिग्रहणेषु च ।
संवत्सरोदकुम्भं च वृद्धिश्राद्धं निमित्ततः ॥

अथ वृद्धिश्राद्धम् । तच्च नैमित्तिकम्, 'प्रेतश्राद्धं...' इति गालवस्मरणात् ।

मुक्ता. ७५२

## कृष्णात्रेयः

नान्दीश्राद्धे मांसदाननिषेधः

[2]अत्र श्राद्धेषु दातव्यं न मांसं पितृपूजने ॥

## ईश्वरः

नान्दीश्राद्धे विशेषधर्माः

[3]कुर्यात्स्वाहा स्वधास्थाने वाचने प्रीयतामिति ।
वृद्धिश्राद्धेषु सर्वत्र नमो मे वृद्धिरिष्यते ॥
[4]अपसव्यं पित्र्यमन्त्रा वामजानुनिपातनम् ।
न्युब्जपात्रं न कर्तव्यं वृद्धिश्राद्धेषु सर्वदा ॥

अत्रैके वृद्धिश्राद्धे पित्रर्घपात्रं न्युब्जमित्याहुस्तद्विशेषवचनानवलोकननिबन्धनमित्युपेक्षणीयम् । तथा चेश्वरः— 'अपसव्यं पित्र्य ... सर्वदा ॥' ।

श्राका. ५१४

---

¶ चम., सिन्धु. स्मृचवत् ।

§ मुक्ता. चश्रागतम् ।

$ शेषं स्मृचवत् ।

* गभा., आप्र., लता., मुक्ता., सिन्धु. श्राकावत् । मञ्जरी. ७९ उत्तरार्धे ( ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमुच्यते । ) श्राद्धचन्द्रिकायाम्.

( १ ) श्राका. ५१३ ह्णे स्यात् ( ह्णे तु ) उत्त.; गभा. ३३ स्यात् ( तु ) उत्त.; आप्र. २९१ गभावत्, उत्त.; मुक्ता. ७५४ स्यात् ( तु ); लता. ३२ मध्यतः ( मध्यमे ) स्यात् ( तु ); सिन्धु. १७३१ स्यात् ( तु ); संकौ. ३०; आन. १४४–१४५ (=) स्यात् ( तु ).

( १ ) मुक्ता. ७५२.

( २ ) श्राका. ५१८.

( ३ ) श्राका. ५१४.

( ४ ) श्राका. ५१४; संग. ८३.

## धर्मः

नान्दीश्राद्धस्य नवदेवताकत्वम्

[1]महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
नवदैवत्यमत्र स्याच्छेषं षाट्पौरुषं विदुः ॥

शेषं षोडशश्राद्धादिव्यतिरिक्तं श्राद्धम् ।

चश्रा. १६८९

## धौम्यः

जातश्राद्धभोजने प्रायश्चित्तम्

*[2]जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥

## स्मृत्यन्तरम्

मातृश्राद्धस्य पृथक्करणनिमित्तानि

[3]अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा ।
महालये गयायां च सपिण्डीकरणात्पुरा ।
मातृश्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ॥

[4]अन्वष्टकासु वृद्धौ च गयायां च महालये ।
चन्द्रसूर्योपरागे च व्यतीपाते मृतेऽहनि ।
मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ॥

अन्वष्टकादौ मातृपितामहीप्रपितामह्यः पृथक् तत्र विहितदेवताभिः सहोद्देश्याः । मातृश्राद्धे तु ता एवोद्देश्याः । अष्टका( ? अन्वष्टका )वृद्धिगयामहालयोपरागव्यतीपात( मृताह )व्यतिरिक्तेषु पतिभोजनेन तासां सह तृप्तिरित्यर्थः ।

मुक्ता. ७१९

नान्दीश्राद्धे उपनेयपित्रादीनां कन्यापित्रादीनां च देवतात्वम्

[1]असगोत्रः सगोत्रो वा य आचार्य उपायने ।
तदोपनेयपित्रादीनुद्दिश्याभ्युदयं चरेत् ॥

[2]कन्योद्वाहेऽप्ययं मार्गो मुनिभिः परिकीर्तितः ॥

नान्दीश्राद्धे आचार्यपित्रादीनां देवतात्वम्

[3]उपनीतस्तु( ? उपनेयस्य ) पित्रादेरभावेऽन्यं नियोजयेत् ।
आचार्यपितरस्तत्र वृद्धिश्राद्धे तु देवताः ॥

नान्दीश्राद्धस्य मातृपूजनपूर्वकत्वम्

[4]संपूज्या मातरः पूर्वं ......... ॥

सकृदनुष्ठितानां नान्दीश्राद्धादीनां कर्मगणोपकारकत्वम्

[5]एकदा क्रियमाणानामनेकशुभकर्मणाम् ।
वृद्ध्यङ्कुरप्रतिसरान् सकृदेव समाचरेत् ॥

[6]गणशः क्रियमाणानां युगपन्मातृपूजनम् ।
नान्दीश्राद्धं भवेदेकं होममन्त्राः पृथक्पृथक् ॥

बहुमातृदेशेनैकपिण्डदानम्

[7]बहुमातृकपुत्रो यः श्राद्धेष्वन्वष्टकादिषु ।
सर्वासां नाम संकीर्त्य पिण्डमेकं स निर्वपेत् ॥

---

* अस्य व्याख्यानानि सीमन्तोन्नयनप्रकरणे ' मझौंदने ' इति वचने द्रष्टव्यानि, अस्य तदुत्तरार्धत्वात् ।

( १ ) चश्रा. १६८९ ; श्राप्र. ३१७ दैवत्यमत्र स्यात् ( देवत्यमत्रेष्टं ) पौरुषं ( पुरुषं ) ; लता. ९९ च्छेषं षाट्पौरुषं ( दन्यत् षट्पुरुषं ) मात्स्ये ; संम. ४ दैवत्यमत्र स्यात् ( दैवतमत्रेष्टं ) हेमाद्रौ.

( २ ) अस्य स्थलादिनिर्देशः सीमन्तोन्नयनप्रकरणे द्रष्टव्यः ।

( ३ ) मुक्ता. ७१९ संवत्सरं ( संवत्सरे ) मातृश्राद्धं ( एवु मातुः ), पारिजाते ; लता. १०२ ; पुम. ३८४ ( = ) संवत्सरं ( संवत्सरे ) मातृ ( मातुः ).

( ४ ) मुक्ता. ७१९.

( १ ) मुक्ता. ७५२ ( = ) ; संर. १८३.

( २ ) मुक्ता. ७५२ ( = ) कन्योद्वाहेऽप्ययं ( कन्यकानामयं ) ; संर. १८३.

( ३ ) मुक्ता. ७५२ ( = ) अस्य श्लोकस्य कुत्रचिदपि स्मृत्यन्तरत्वेन निर्देशाभावेऽपि ' असगोत्रः ' इत्यादिस्मृत्यन्तरक्रमपठितत्वात् अर्थतस्तत्संबद्धत्वाच्च अयमत्र संगृहीतः ।

( ४ ) चश्रा. १०६.

( ५ ) मुक्ता. ७५३ ; आन. १४३.

( ६ ) धप्र. ५३ ; प्रका १३० ( गणशः क्रियमाणानामेकं स्यान्मातृपूजनम् । वृद्धिश्राद्धं च तन्त्रं स्याद्धोमास्तु स्युः पृथक्पृथक् ॥ ).

( ७ ) श्राका ५१५.

पितृपिण्डदेशदक्षिणतो मातॄणामुदकहरणम्

[1]श्राद्धे सदैव वामाङ्गे पत्नीनामुदकं हरेत् ।
वृद्धिश्राद्धेषु नारीणां दक्षिणाङ्गे सदा भवेत् ॥

'श्राद्धे सदैव वामाङ्गे' इत्येतदापस्तम्बादिविषयम्, तेषां पित्रादिपिण्डपश्चिमत एव पत्नीपिण्डविधानात् । तथा चाऽऽपस्तम्बगृह्यम्— 'द्विधाभूतं भवति तथा स दक्षिणाग्रान्दर्भान् लिखितदेशे संस्तीर्य तत्र पूर्वभागे पित्रादिवर्गार्थं स्तरणं पश्चाद्भागे तु मात्रादिवर्गार्थम्' इति । 'स्त्रीभ्यश्च पिण्डा इह पश्चिमाः स्युः' इति तद्गृह्यभाष्यार्थसंग्रहकारः । 'वृद्धिश्राद्धेषु नारीणां दक्षिणाङ्गे सदा भवेत् ।' इति तु सर्वविषयम् । तस्माद्रेखापिण्डदानादिकं प्राङ्मुखकर्तुर्दक्षिणासंस्थमेव वृद्धिश्राद्धेषु सर्वत्र कर्तव्यम् । श्राका. ५१६

निमित्तविशेषे नान्दीश्राद्धस्य पूर्वेद्युःकर्तव्यता

[2]पुंसवने च सीमन्ते तथा चौलोपनायने ।
गोदाने स्नान उद्वाहे नान्दीश्राद्धं पुरोदिने ॥

[3]पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ।
यद्वाऽऽमान्नेन कुर्वीत पक्वान्नेन कदा च न ॥

## वायुपुराणम्

नान्दीश्राद्धस्य सपिण्डकत्वम्, मातृश्राद्धस्य पृथक्त्वं प्राथम्यं च

[4]श्राद्धं सपिण्डकं कुर्यात्स्वसूत्रोक्तविधानतः ।
अन्वष्टकासु वृद्धौ च गयायां च क्षयाहनि ॥
मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ।
वृद्धिश्राद्धे च मात्रादि गयायां पितृपूर्वकम् ॥

येन केनापि मातुः सापिण्ड्येऽपि यत्रान्वष्टकादिषु¶ मातृश्राद्धं पृथग्विहितम्— 'अन्वष्टकासु... पतिना सह ॥' इति, तत्र पितामह्यादिभिरेव पार्वणश्राद्धं कर्तव्यम् । * मिता. १।२५४

## ब्रह्माण्डपुराणम्

नान्दीश्राद्धे विशेषधर्माः

[1]स्वाहाशब्दं प्रयुञ्जीत स्वधास्थाने च बुद्धिमान् ।
वृद्धिश्राद्धे सदा सव्यं यज्ञसूत्रं च कारयेत् ।
कुशस्थाने च दूर्वाः स्युर्मङ्गलस्याभिवृद्धये ॥

(१) पित्र्यधर्मान्तरस्थाने धर्मान्तरप्रयोगस्तूक्तो ब्रह्माण्डपुराणे— स्वाहेति । चश्रा. १५४६

(२) कुशा अपि वक्ष्यन्ते । सिन्धु. १७४८

[2]प्राङ्मुखो देवतीर्थेन वृद्धौ परिचरेत्पितॄन् ।
सव्येनैवोपवीतेन क्षिप्रं देशविमार्जनम् ॥

पार्वणवदासायं न प्रतीक्ष्यमुच्छिष्टदेशमार्जनमित्यर्थः । $ श्राम. ९०

[3]मङ्गल्यं भक्ष्यभोज्यादि दद्यादन्नं पृथग्विधम् ।
गुडमिश्रं खगश्रेष्ठ साज्यं चैवौदनं परम् ।
रसालान्मोदकांश्चैव न चाऽऽम्लकटुकादिकम् ॥

---

(१) श्राका. ५१६.

(२) श्राका. ५१२ (=) तथा चौलो (अन्नचौलो) पुरोदिने (पुरोदितम्); धप्र. ३६-३७; बाल. १।१० पृ. १३ (=); संग. ९१ स्मृत्यर्थसारे.

(३) विपा. २६८.

(४) मिता. १।२५४ (=) क्षयाहनि (क्षयेऽहनि) द्वितीयतृतीयार्धे; उव. १३५; श्रात. ३१३ श्राद्धे च (श्राद्धे तु); श्राप्र. ९ मितावत्, द्वितीयतृतीयार्धे, शातातपः; मुक्ता. ७१९ अन्वष्टकासु (अष्टकासु च) क्षयाहनि (मृतेऽहनि) मातुः श्राद्धं (मातृश्राद्धं), द्वितीयतृतीयार्धे, विज्ञानेश्वरः; संग. ८१ 'अन्वष्टकासु वृद्धौ च' एतावन्मात्रम्, स्मृत्यन्तरम्.

¶ मुक्ताफले मितानुवादे अत्र 'अष्टकादिषु' इति पठित्वा मूलवचनेऽपि 'अष्टकासु च' इति पठितम् ।

* मुक्ता. मितानुवादः ।

$ कृभ. श्रामवत् ।

(१) चश्रा. १५४६; श्राप्र. २९९ स्थाने च (स्थाने तु) द्वितीयार्धं नास्ति; श्राम. ८९; सिन्धु. १७४८ तृतीयार्धमात्रम्; संकौ. २५; कृभ. १७५१.

(२) श्राम. ८९; कृभ. १७५१.

(३) चश्रा. १५५२ चैवौ (चैवो); श्राप्र. ३०३.

आदिशब्देनात्रोद्वेजकतिक्तादिरससंग्रहः क्रियते ।

$ चश्रा. १५५३

## मार्कण्डेयपुराणम्

नान्दीश्राद्धस्य पुत्रजन्मनिमित्तकत्वम्, न जातकर्माङ्गत्वम्

**[1]नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम् ।**
**पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैः ॥**

(१) अत्र जातकर्मसमकालविधानादच्छिन्ननाड्यां कर्तव्यम् । तथा च विष्णुधर्मोत्तरम्– 'अच्छिन्ननाड्यां कर्तव्यं श्राद्धं वै पुत्रजन्मनि । अशौचापगमे कार्यमथवाऽपि नराधिप ॥' । न चास्य पूर्वपक्षोत्तरभावेन व्यवस्था हारलतोक्ता युक्ता, पूर्वार्धवैयर्थ्यापत्तेः जातकर्मसमकालविधानविरोधाच्च । तस्माद्विकल्प एव शक्ताशक्तभेदेनोक्तः । तावत्कालं स्तन्यादाने पुत्रनाशप्रसङ्गात् साङ्गं वृद्धिश्राद्धं कर्तुं न शक्यते चेदङ्गविकलमेव भविष्यतीति श्राद्धविवेकः । श्रात. ३२०–३२१

(२) नैमित्तिकजातकर्मपदाभ्यां पुत्रजन्मनिमित्तकमेव श्राद्धम्, न तु जातकर्माङ्गमित्युच्यते । अत एव कर्मप्रदीपे– 'नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते । न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥' । सुखप्रसवार्थं सोष्यन्तीकर्म । प्रोषितागते च पुत्रे पितुः कर्म छन्दोगसूत्रे प्रसिद्धम् । यत्तु हेमाद्रौ– 'वृद्धिश्राद्धं तु कर्तव्यं जातकर्मादिकेषु वै ।' इति, तत्राप्यतद्गुणसंविज्ञानो बहुव्रीहिः । अतः पुत्रजनने केवलनैमित्तिकमेव श्राद्धम्, न जातकर्माङ्गम् । अन्येषु तु कर्मस्वङ्गम् ।

‡ श्राम. ८७

(३) पुत्रजन्मादौ नैमित्तिकम्, 'नैमित्तिक ....' इति मार्कण्डेयपुराणवचनात् । एतच्चोपलक्षणम्, पुत्रविवाहादावपि तन्नैमित्तिकमेव, निमित्तसप्तमीश्रवणात् । नवगृहप्रवेशादौ च, 'नालौकिकं लौकिककर्माङ्गम्' इति न्यायात् । एवं च पितरि देशान्तरस्थे जीवति मृते वा आभ्युदयिकं विना पुत्रविवाहे नाङ्गवैगुण्यम्, न वा पितुर्नैमित्तिकाकरणेन प्रत्यवायः, निमित्ताज्ञानेनानधिकारात् । संदी. ६४

नान्दीश्राद्धे विशेषधर्माः

**[1]नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम् ।**
**प्राजापत्येन तीर्थेन यच्च किंचित्प्रजापतेः ॥**
**[2]उदङ्मुखः प्राङ्मुखो वा यजमानः समाहितः ।**
**वृद्धिश्राद्धं प्रकुर्वीत नान्यवक्त्रः कदाचन ॥**
**[3]वैश्वदेवविहीनं तत्केचिदिच्छन्ति मानवाः ।**
**युग्मास्तत्र द्विजाः कार्यास्ते पूज्याश्च प्रदक्षिणम् ॥**

(१) पृथगनुष्ठीयमानमातृश्राद्धव्यतिरिक्तान्याभ्युदयिकनिमित्तकानि श्राद्धानि विकल्पेन वैश्वदेवविहीनानि

---

$ श्राप्र. चश्रावत् ।

‡ संम. श्रामगतम् ।

(१) श्राकौ. ५०१ ; श्रात. ३२० त्मकम् (र्थकम्) नरैः (बुधैः) ; संत. ९९५ त्मकम् (र्थकम्) ; श्राम. ८७ ; संम. ५ ; सिन्धु. १७४० ; संदी. ६४.

(१) अप. १।१९ ; अर्क. ५५ ; चदा. १४२ प्रजापतेः (प्रजायते) ; चश्रा. १५५६ चदावत्, ब्रह्मपुराणे ; चव्र. ३४ कुर्वीत प्राज्ञः (कुर्वन्ति प्राज्ञाः) क्रियाम् (क्रियाः) शेषं चदावत् ; श्राका. ५१५ प्रजापतेः (प्रदीयते) ; निप. ६४ ; श्राकौ. ५१० ; श्रासौ. १२१–१२२ यच्च (यत्तु) ; पम्र. ७७ ; श्राम. ९१ ; संग. ८६ ; कृभ. १७५४ चदावत्.

(२) चश्रा. १५४६ ; श्राप्र. २९९ ; संग. ७८.

(३) अप. १।२४९ पृ. ५१५ पुराणम् ; श्राक. २७२ हीनं तत् (हीने तु) पू. ; चश्रा. १३८ वैश्व (विश्व) तत् (तु) स्तत्र (श्चात्र) : १५४४ स्तत्र (श्चात्र) उत्त. ; स्मृसा. १०८ तत् (तु) मानवाः (सत्तमाः) पू., हारीतः ; श्राका. ५१४ मानवाः (सूरयः) पू. ; श्राकौ. ४९४ तत् (तु) मानवाः (सत्तमाः) पू. ; श्रासौ. १२१ सर्वं श्राकौवत् ; श्राप्र. २९८ तत् (तु) पू. ; सिन्धु. १७३३ वैश्व (विश्वे) तत् (तु) पू. ; संकौ. २९ "श्च

कार्याणि । तथा चाऽऽभ्युदयिकं प्रकृत्य मार्कण्डेयपुराणे उक्तम्— विश्वदेवेति । केचिद्ग्रहणादत्र विकल्पो गम्यते ।

¶ चश्रा. १३८

(२) तत् आभ्युदयिकम् । श्राका. ५१४

(३) वृद्धिश्राद्धे च सत्यवसुसंज्ञका विश्वदेवाः । अत्र कल्पतरुकरेणाभिहितमाभ्युदयिकप्रस्तावे मार्कण्डेयपुराणे— वैश्वदेवेति । हलायुधस्तु मातृश्राद्धं देवरहितमेव च कार्यमित्याह इति शूलपाणौ । श्राप्र. २९८

**[1]पितरश्चात्र संपूज्याः ख्याता नान्दीमुखास्तु ये ॥**

**[2]पिण्डांश्च दधिसंमिश्रान्दद्याद्यवसुमिश्रितान् ॥**

## मत्स्यपुराणम्

नान्दीश्राद्धस्य वृद्धिनिमित्तकत्वं श्राद्धत्रयक्रमश्च

**[3]तृतीयमाभ्युदयिकं वृद्धिश्राद्धं तदुच्यते ।**
**उत्सवानन्दसंताने यज्ञोद्वाहादिमङ्गले ॥**
**[4]मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ।**
**ततो मातामहा राजन्विश्वेदेवास्तथैव च ॥**

(१) अत्र बहुवचनान्तेन मातृशब्देन मातृपितामहीप्रपितामह्यस्तिस्र उच्यन्ते । अत एव शातातपस्मृतौ— 'तिस्रस्तु मातरः पूर्वं पूजनीयाः प्रयत्नतः ।' इति । पितृशब्देन च पितृपितामहप्रपितामहाः, मातामहशब्देन च मातामहप्रमातामहवृद्धप्रमातामहाः । अत एव पुलस्त्यः— 'मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।' इति । ¶ चश्रा. १०६

(२) उत्सवे पुत्रजन्मनि । आनन्दसंताने गर्भाधानपुंसवनसीमन्तोन्नयनेषु । यज्ञे ग्रहयज्ञाग्निष्टोमादौ । उद्वाहादीत्यादिशब्दान्नामकरणनिष्क्रमणान्नप्राशनचूडोपनयनानां ग्रहणम् । विश्वेदेवानां पश्चात्पाठो मात्रादिषु त्रिषु गणेषु विश्वदेवज्ञापनार्थः । श्राकौ. ४८८

(३) उत्सवः पुत्रजन्म । आनन्दः पुंसवनादिः । यज्ञः ज्योतिष्टोमादिः । मातरः प्रथममिति मातॄणां पित्रादिश्राद्धात्पूर्वं कर्तव्यता । विश्वेदेवा इति न क्रमपरम् । इदं चोपलक्षणं वैदिककर्ममात्रस्य । अत एवोक्तं तत्रैव— 'नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् ।' इति । उपलक्षणत्वेऽपि च पूर्वोक्तगार्ग्यवचने पुत्रोत्पत्तीति ग्रहणात्पुत्रोत्पत्तिरेव निमित्तम्, न तु जातकर्म, तत्र 'नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते । न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥' इति छन्दोगपरिशिष्टे तन्निषेधात् । अतश्च ग्रहणवन्नैमित्तिकं श्राद्धं पुत्रजन्मन्यपि भवत्येव, न तु कर्माङ्गम् । अत एव 'निषेककाले सोमे च सीमन्तोन्नयने तथा ।

---

¶ सिन्धु. चश्रागतम् ।

(विश्वे) तत् (तु) स्तत्र (श्चात्र); बाल. ११२५० पृ. ५६८ सिन्धुवत्, पू.

(१) चश्रा. १०५.

(२) चश्रा. १५५४.

(३) मत्स्य. १७।६५ संताने (संभारे); अप. ११२४९ पृ. ५१५; श्राक. २६८ संताने य (संतानय); चश्रा. १०६; स्मृसा. ९६ संताने (संधाने) : १०६ निर्देशमात्रम् : १०७ श्राकवत् : १४६ (=) निर्देशमात्रम्; मपा. ६३१ श्राकवत्; प्रपा. १४ मङ्गले (कर्मसु); श्राकौ. ४८८; संत. ९४३ श्राकवत्; श्रासौ. ११९, श्राप्र. २९० ; श्राम. ८८ ; विपा. २९ (भागः १२७; २); कृभ. १७३० अपरार्कादि सर्वेष्वपि निबन्धग्रन्थेषु उत्तरार्धमात्रं विद्यते.

(४) मत्स्य. १७।६६; अप. ११२४९ पृ. ५१५ महा राजन् (महाः पूज्या); श्राक. २६८ महा राजन् (महाश्चैव); चश्रा. १०६, १५४२ अपवत्; स्मृसा. ९६ महा राजन् (महादीनां) : १०७ उत्तरार्धे (ततो मातमहाश्चैव वैश्वदेवांस्तथैव च ॥); मपा. ६३१ महा राजन् (महानां च); प्रपा. १४ अपवत्; श्राकौ. ४८८; संत. ९४३ मपावत्; श्रासौ. ११९ देवास्तथैव च (देवांस्ततः परम्); श्राप्र. २९० : २९५ पू.; लता. २५६ अपवत्; श्राम. ८८ अपवत्; विपा. २९ (भागः २) अपवत्; कृभ. १७३० अपवत्.

¶ प्रपा. चश्रावत् ।

ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥' इति पारस्करवचने कर्माङ्गश्राद्धविषयत्वेन जातकर्म नोपात्तम्, किंतु वृद्धिवदिति पुत्रजन्मनिमित्तं श्राद्धं दृष्टान्तत्वेन पृथगेवोपात्तम्। अत एव 'यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः। पुत्रजन्मवृषोत्सर्गे' इति जाबालिवचनेऽपि पुत्रजन्मैव गृहीतम्। श्राप्र. २९०

(४) उत्सवः प्रागुक्तः (ग्रहशान्तिविनायककल्पनादिः)। आनन्दो यज्ञादिः †। संतानोऽपत्यसंस्कारः। बहुवचनेन तदाद्यत्रयाणां ग्रहः। मात्रादयश्च मनुष्यपितरः प्राधान्येनोद्देश्याः। 'ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः।' इति नान्दीमुखा दिव्यपितरस्तु अभेदेनोद्देश्यस्वरूपे बोध्याः। कर्माङ्गाभ्युदयिकेऽप्येत एव देवताः, 'निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥' इति वचनेन गर्भाधानादिकर्माङ्गश्राद्धे वृद्धिश्राद्धदेवताद्यनिर्देशात् (? देवताद्यतिदेशात्)। कृभ. १७३०-१७३१

नान्दीश्राद्धे विशेषधर्माः

**[1]प्रदक्षिणोपचारेण दध्यक्षतफलोदकैः।**
**प्राङ्मुखो निर्वपेत्पिण्डान् दूर्वया च कुशैर्युतान् ॥**

**[2]संपन्नमित्यभ्युदये दद्यादर्घ्यं द्वयोर्द्वयोः।**
**युग्मा द्विजातयः पूज्या वस्त्रकार्तस्वरादिभिः ॥**

अर्घ्यग्रहणं पाद्यादेरपि प्रदर्शनार्थम्। स्मृच. ४९९

**[3]तिलार्थस्तु यवैः कार्यो नान्दीशब्दानुपूर्वकः।**
**माङ्गल्यानि च सर्वाणि वाचयेद्द्विजपुङ्गवैः ॥**

नान्दीश्राद्धे शूद्रस्याप्यधिकारः शूद्रश्राद्धे विशेषधर्माश्च

**[1]एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं च सर्वदा।**
**नमस्कारेण मन्त्रेण कुर्यादामान्नवत्सदा ॥**

सामान्यं यत्किंचित्कर्म दाशाहिकपिण्डदानदेवतानैवेद्यादिकम्। वृद्धिश्राद्धपदेन सकलश्राद्धमुपलक्ष्यते, अन्यथा वृद्धिश्राद्धेन (? वृद्धिश्राद्धत्वेन) नमस्कारप्राप्तौ नमस्कारेणेति व्यर्थं स्यात्। सर्वदा आपद्यनापदीत्यर्थः। अत एव 'शूद्रेण तु सदैव हि' इति प्रचेतोवचनम्। श्राकौ. ३२

नान्दीश्राद्धनिमित्तानि

**[2]अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके।**
**पुंसवे च निषेके च नववेश्मप्रवेशने ॥**

**[3]देववृक्षजलादीनां प्रतिष्ठायां विशेषतः।**
**तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितम् ॥**

(१) अत्र प्रतिष्ठादीनां गृह्योक्तत्वाभावेऽपि वचनाच्छ्राद्धम्। श्राकौ. ४९०

(२) अत्र भूतनिमित्तानां वृद्धित्वम्, भाविनिमित्तानामङ्गत्वम्। वृद्धिशब्दस्तद्धर्मातिदेशार्थः इति गौडाः। अन्ये तु निषेकादौ कर्माङ्गवृद्धिश्राद्धयोः समुच्चयमाहुः। नान्दीश्राद्धसंज्ञा तूभयानुगता। सिन्धु. १७४८

---

† इदं चिन्त्यम्, यज्ञस्य पृथगुपादानात्।

(१) मत्स्य. १७।६७.

(२) मत्स्य. १७।६८; स्मृच. ४९९ (दद्यादर्घ्यं द्वयोर्द्वयोः। युग्मा द्विजातयः पूज्या नान्दीशब्दानुपूर्वकम् ॥) एतावदेव.

(३) मत्स्य. १७।६९.

(१) मत्स्य. १७।७० सामान्यं वृद्धिश्राद्धं च (सामान्यवृद्धिश्राद्धेऽपि) न्नवत्सदा (न्नतः सदा); श्राकौ. २८, ३२ वत्सदा (वद्बुधः); शूक. ५५.

(२) श्राकौ. ४९० पुंसवे च (पुंसवने) कूर्मपुराणम्; श्रात. ३१४ पुंसवे च (पुंसवने); संत. ९२२ उत्तरार्धे (पुंसवने निषेके च प्रवेशे नववेश्मनः ॥); सिन्धु. १७२९, १७४८.

(३) श्राकौ. ४९० देव (सेतु) प्रतिष्ठायां (प्रतिष्ठासु) प्रकीर्तितम् (विधीयते) कूर्मपुराणम्; श्रात. ३२४; संत. ९२२ प्रतिष्ठायां (प्रतिष्ठासु); सिन्धु. १७२९; १७४८ वृक्षज (व्रते ज) विशेषतः (तथैव च).

कर्मादौ नान्दीश्राद्धकर्तव्यता

**[1]नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् ॥**

## विष्णुपुराणम्

नान्दीश्राद्धस्य कर्तव्यता

**[2]जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।**
**पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ॥**

(१) पुत्रजन्मनिमित्तकं तु श्राद्धं पित्रा स्वयमेव कार्यम्, नान्येन, तस्यैव पुत्रजननादन्यं प्रति तस्य निमित्तत्वाभावात् । तथा च विष्णुपुराणे– 'जातस्य...' । संस्कारस्त्वन्येनापि कार्यः, आवश्यकत्वात् पूर्ववचनाच्च । अभ्युदयात्मकं पुत्रजन्मनिमित्तकश्राद्धमित्यर्थः ।

श्राकौ. ५०१

(२) जातकर्मादिक्रियाकाण्डमपत्यसंस्काराः । पुत्रस्येति पुंस्त्वमविवक्षितम्, अनुवाद्यगतत्वात् । अतः कन्याया अपि भवति । तच्च समन्त्रकमेव, मन्त्रबाधे मानाभावात् । यत्तु पुंजातकर्मादिसंस्कारानुक्त्वा याज्ञवल्क्यः– 'तूष्णीमेताः क्रियाः स्त्रीणाम्' (यास्मृ. १।१३) इति तत् प्रधानाङ्गमन्त्रबाधार्थम् * । यदि हि 'अप्स्ववभृथेन चरन्ति' इतिवत्तृतीयान्तेन साङ्गभावनामुक्त्वा तस्यां तूष्णींत्वं विधीयेत ततः स्यादङ्गमन्त्रबाधः । इह तु 'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः' इत्यत्रेष्टीनामिव क्रियाणां प्रथमान्तपदोपात्तत्वात् प्रधान एव तूष्णींत्वविधिः, नाङ्गेऽपि । तेन कन्याजातकर्मादौ वृद्धिश्राद्धं समन्त्रकमेव भवतीति दिक् । * श्राम. ८७

नान्दीश्राद्धे विशेषधर्माः

**[1]युग्मांस्तु प्राङ्मुखान्विप्रान्भोजयेन्मनुजेश्वर ।**
**यथावृत्ति तथा कुर्याद्दैवं पित्र्यं द्विजन्मनाम् ॥**
**[2]दध्ना यवैः सबदरैर्मिश्रान्पिण्डान्मुदा युतः ।**
**नान्दीमुखेभ्यस्तीर्थेन दद्याद्दैवेन पार्थिव ॥**

**प्राजापत्येन वा सर्वमुपचारं प्रदक्षिणम् ।**
**कुर्वीत तत्तथाऽशेषवृद्धिकालेषु भूपते ॥**
**[3]सचैलस्य पितुः स्नानं जाते पुत्रे विधीयते ।**
**जातकर्म ततः कुर्याच्छ्राद्धमभ्युदये तथा ॥**

नान्दीश्राद्धस्य निमित्तानि कर्तव्यता च

**[4]कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।**
**नामकर्मणि बालानां चूडाकर्मादिके तथा ॥**

---

* प्रधानस्याङ्गभूता मन्त्रा इत्यर्थः, न तु 'प्रधानस्याङ्गस्य' इति सामानाधिकरण्यमितरेतरयोगो वा, उत्तरग्रन्थविरोधात् ।

(१) श्राप्र. २९० ; सिन्धु. १७२७ (=) निर्देशमात्रम् ; संग. ७५ ; कुभ. १७२७.

(२) विष्णु. ३।१०।४ ; स्मृच. ४९७ ; चश्रा. १९१ ; चका. ४५७ ; श्राकौ. ५०१ ; श्रासौ. १२७ त्मकम् (दिकम्) ; श्राप्र. २९० ; संप्र. २५६ ; मुक्ता. ७५२ ; श्राम. ८७ वृद्धगार्ग्यः ; संम. ४ ; सिन्धु. १७४१ तृतीयपादे (पिता पुत्रस्य कुर्वीत) ; बाल. १।२५० पृ. ५७० त्मकम् (र्थकम्) ; पुम. ३७७.

* संम., कुभ. श्रामानुवादः ।

(१) विष्णु. ३।१०।५ ; अप. १।२४९ पृ. ५१५ पू. ; श्राक. २६८ पू. ; स्मृच. ४९६ पू. ; चश्रा. १५४४ पू. ; श्रासौ. ११८ पू.

(२) विष्णु. ३।१०।६, ७.

(३) स्मृसा. २.

(४) विष्णु. ३।१३।५ ; अप. १।२४९ पृ. ५१५ वेश्मनः (वेश्मनि) ; श्राक. २६८ ; स्मृच. ५०३ (=) नां चूडाकर्मादिके तथा (नामान्नप्राशनकर्मणि) ; चश्रा. १९१ ; चदा. १४१ नाम (शुभ) ; चका. ४५८ ; स्मृसा. १०६ ; पमा. ७८५ कार्ष्णाजिनिः ; प्रपा. १३ ; श्राका. ५१९ (=) ; गभा. ५०९ चदावत् ; निप्र. १९९ ; श्राकौ. ४८७ : ४९६, ४९८ प्रथमः पादः ; उत. १०६, १३३ प्रथमः पादः ; श्रात. ३२३ ; संत. ८८४ ; संसौ. ५१, व्यासः ; श्रासौ. ११८ : १२७ प्रथमपादः ; श्राप्र. २८९ ; मुक्ता. ७५५ कार्ष्णाजिनिः ; श्राम. ८७ ; संम. ४ कर्मादिके (कर्मणिके) ; सिन्धु

'सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही ॥
'नानिष्ट्वा पितृयज्ञेन वैदिकं कर्म चाऽऽचरेत् ॥

(१) पुत्रादिमुखदर्शने पुत्रजन्मनीत्यर्थः ।

* चश्रा. १९१

(२) 'चूडाकर्मादिके' इत्यादिपदादुपनयनपरिग्रहः। न त्वादिशब्दः प्रकारवाची येन निष्क्रमणान्नप्राशनयोरपि परिग्रहः स्यात्, नामकर्मणीति पृथक्(? पृथगुक्तेः) वैयर्थ्यापत्तेः । एवं च 'स्वपितृभ्यः पिता दद्यात्सुत-संस्कारकर्मणि ।' इति ब्रह्मपुराणीयम् 'उद्वाहादिकर्मणि' इति मत्स्यपुराणीयं संकोचनीयम् । 'नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् ।' इति शातातपवचनं च 'उत्सवानन्दसंताने' इति मत्स्यपुराणीयमनिष्टाभ्यु-दयिकवैदिकोत्सवानन्दपरम्(?), एकमूलत्वलाघवेन विष्णुपुराणीयकथितमात्रपरम् । निषेधवाक्यानि पर्युदास-पराणि । तथा च छन्दोगपरिशिष्टम्— 'असकृद्यानि कर्माणि क्रियन्ते कर्मकारिणा । प्रतिप्रयोगं नो कुर्युर्मातॄणां श्राद्धमेव हि ॥ आधानहोमयोश्चैव विश्वेदेवास्तथैव च । बलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥ नवयज्ञे च यज्ञज्ञा वदन्त्येवं महर्षयः । एकमेव भवेच्छ्राद्धमेतेषु न पृथक्पृथक् ॥ नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्ध-मिष्यते ।' । एवमादिपर्युदासवाक्यानि तथा विष्णु-पुराणीयविशेषवाक्यानि सामान्यवाक्यस्योपसंहारकार-काणि । यदि चोत्सवानन्दसंदोहवाक्यमेकं वेदमूलम्, लाघवात्, कन्यापुत्रविवाहादिप्रदर्शनमात्रम्, तदा विशेषतया तेषां कीर्तनं व्यर्थमेव स्यात् । वेदमूलतया निष्क्रमणान्नप्राशननिवृत्त्या च संभवात् सार्थकत्वाच्च तदेत-न्निष्क्रमणान्नप्राशनव्यतिरिक्तसंस्कारगणानां निमित्ततानु-सारं विष्णुपुराणवाक्यं तदुभयोपग्राहकसामान्यवाक्येन सममेकमूलं न भवितुमर्हति । अतो भिन्नमेव मूलम्, कार्यानुरूपत्वात्कारणस्य । एवं च वृषोत्सर्गेऽप्याभ्युदयि-कम्, पर्युदासाभावात् वैदिकपरत्वाच्चेति निरस्तम्, सर्व-शाखान्यायेन समन्वयस्योचितत्वात् । नञ्युक्तवाक्यानां पर्युदासपरत्वात् । स्मृसा. १०६–१०७

(३) अत्र 'चूडाकर्मादिके' इत्यत्राऽऽदिशब्दात्स-र्वार्द्धिकर्मसु । प्रपा. १३

(४) 'चूडाकर्मादिके' इत्याद्यविवाहपर्यन्तं वेदि-तव्यम् । तदूर्ध्वं तु द्वितीयविवाहादावपि सर्वत्र जीव-त्पितृकः पितृपितृभ्यः, मृतपितृकः स्वपितृभ्य इति विवेकः । श्राका. ५१९

(५) 'चूडाकर्मादिके' इत्यादिशब्दः संस्कारमा-त्रोपलक्षणः । तेन बहिर्निष्क्रमणान्नप्राशनचूडादिकेष्वपि च श्राद्धम् । तथा 'यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः । पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥'। अत्र महा-

---

* संग. चश्रावत् । श्राप्र. चश्रागतं निप्रगतं च । १७२७ उत्त. ; विपा. २६ (भागः २) ; बाल. १।२५० पृ. ५७३ ; संग. ७५ नामकर्मणि (शुभकर्मसु) ; संदी. ५७–५८ चदावत्.

(१) विष्णु. ३।१३।६ ; अप. १।२४९ पृ. ५१५ ; श्राक. २६८ ; स्मृच. ५०३ (=) ; चश्रा. १०५ उत्त. : १९१ ; चदा. १४१ उत्तरार्धे (नान्दीमुखान् पितॄनादौ तर्पयेत् प्रयतो गृही ॥) ; चका. ४५८ ; स्मृसा. १०६ प्रयतो (यत्नतो) ; पमा. ७८५ मुखं पितृगणं (मुखान् पितृगणान्) कार्ष्णाजिनिः ; प्रपा. १३ चदावत् ; श्राका. ५१९ (=) ; गभा. ३२ चदावत्, उत्त. : ५०९ चदावत् ; निप्र. २०० ; श्राकौ. ४८७ णं पूजयेत् (णमर्च-येत्) : ४९७ (=) णं पूजयेत् (णमर्चयेत्) उत्त. ; श्रात. ३०८ तृतीय पादः, ३२३ ; संत. ८८४, ९१५ ; प्रर. १३ चदावत्, उत्त. ; संसौ. ५१ पमावत्, व्यासः ; श्रासौ. ११८ मुखं (मुखे) ; श्राप्र. २८९ पमावत् : २९६ उत्त. ; मुक्ता. ७५५ पमावत्, कार्ष्णाजिनिः ; श्राम. ८७ श्राकौवत् ; संम. ४ श्राकौवत् ; विपा. २६ (भागः २) चदावत् ; संकौ. २६ पमावत्, कार्ष्णाजिनिः ; प्रका. ११ चदावत्, उत्त. ; बाल. १।२५० पृ. ५७३ ; संग. ७५ चदावत् ; कृभ. १७२८ पू. ; संदी. ५८ चदावत्.

(२) प्रपा. १३ ; विपा. २६ (भागः २) कर्म चाऽऽ (किंचिद्वा).

दानादौ यज्ञशब्दप्रयोगाद्वृद्धिश्राद्धमित्याहुः । यद्यपि शातातपेन वैदिककर्ममात्रे वृद्धिश्राद्धमुक्तं तथाऽपि विष्णुपुराणीयवाक्योपात्तवैदिककर्मपरं वैदिकपदम्, 'पुरोडाशं चतुर्धा करोति' इति 'आग्नेयं चतुर्धा करोति' इत्येतेनोपसंहारवत् । निप्र. २००

( ६ ) अत्र 'नानिष्ट्वा तु पितॄन्' इत्यत्र क्त्वाप्रत्ययात्समानकर्तृकत्वावगमेऽपि 'कन्यापुत्रविवाहेषु' इति वचनं विवाहाख्यसंस्काराङ्गभूते श्राद्धे पितुरधिकारमात्रं बोधयति, न तु पितृकर्तृकं श्राद्धान्तरमपि, गौरवात् । ततश्च कन्यापुत्रविवाहाङ्गश्राद्धस्य वचनात् भिन्नकर्तृकत्वे सिद्धे 'नानिष्ट्वा' इति वचनात् 'कर्मादिषु च सर्वेषु' इति परिशिष्टवचनाच्च प्राक्कर्तव्यत्वमव्याहतमेव । इत्थं च बाधकस्य पितुरभावेऽपि पितृव्यादिसत्त्वेऽपि पुत्रस्यैव स्वविवाहे श्राद्धाधिकारः, सामान्यविधिबलात् । एवं पितरि विदेशस्थेऽपीति ध्येयम् । अयं च पितुरधिकारः पुत्रस्य प्रथमविवाह एव, 'स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मणि ।' इति वचनात् । संस्कारत्वं च प्रथमविवाहस्य । द्वितीयविवाहे तु स्वयं कार्यम्, 'नानिष्ट्वा' इति वचने क्त्वाप्रत्ययात् समानकर्तृकत्वावगमात् । न च तत्र श्राद्धमेव नास्तीति वाच्यम्, गृह्योक्ततया श्राद्धप्राप्तेः, 'उत्सवानन्दसंताने यज्ञोद्वाहादिमङ्गले । मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् । ततो मातामहा राजन् विश्वेदेवास्तथैव च ॥' इति मत्स्यपुराणे उद्वाहमात्रग्रहणाच्च ।

चूडाकर्मादिक इति प्रकरणादादिशब्देन निष्क्रमणान्नप्राशनोपनयनवेदारम्भसमावर्तनानि गृह्यन्ते । अत्र केचित् 'नामकर्मणि' इति पृथगभिधानान्नामकरणचूडाकरणमध्यभूतयोर्निष्क्रमणान्नप्राशनयोः श्राद्धं नास्तीत्याहुः । तन्मन्दम्, 'सर्वाण्येवान्वाहार्यवन्ति' इति गृह्योक्तकर्ममात्रे श्राद्धविधानात् । अत एव परिशिष्टकृता— 'न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ।' इत्यादिना गृह्योक्तसोष्यन्त्यादिकर्मसु श्राद्धं निषिध्यान्येषु गृह्योक्तेषु श्राद्धमावश्यकमिति दर्शितम् । ननु अन्नप्राशनस्य गोभिलगृह्यानुक्तत्वात्तत्र छन्दोगानां श्राद्धं मा भवत्विति चेत्, कथं तर्हि छन्दोगानामन्नप्राशनलाभः ? अथ पारस्करोक्तत्वेन, 'परोक्तमविरोधि च' इति वचनात्, तथा 'अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः । षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् । एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥' इति याज्ञवल्क्येन संस्कारमध्यपाठाच्च छन्दोगानामपि तल्लाभ इति चेत्, तर्हि गृह्योक्तत्वेन संस्कारत्वेन च कर्माङ्गश्राद्धलाभे को विरोधः ? अत एव गोभिलभाष्यकृता यशोधरेण शौनकवचनं लिखितम्— 'कृत्वाऽऽभ्युदयिकं श्राद्धं दधिमध्वाज्यसंयुतम् । अन्नं च प्राशयेदन्नपत इत्यादिमन्त्रतः ॥' इति । एतेन 'भोजनस्य रागप्राप्तत्वेन लौकिकत्वात् गृहप्रवेशवत् परत एव श्राद्धम्' इति यत्कैश्चिदुक्तं तदप्यपास्तम्, 'पिताऽन्नं प्राशयेत्' इति णिजर्थस्य वैदिकत्वात् । तथा राजमार्तण्डे भोजराजः— 'पुत्रोत्पत्तौ भवेच्छ्राद्धमन्नप्राशे च निष्क्रमे । चूडाकार्ये महादाने नाम्नि पुंसवने व्रते ॥ पाणिग्राह( ? ग्रह )प्रतिष्ठायां प्रवेशे नववेश्मनः । एतद्वृद्धिकरं नाम गृहस्थस्य विधीयते ॥' । निर्णयामृतेऽपि कूर्मपुराणवचनं लिखितम्— 'अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके । पुंसवने निषेके च नववेश्मप्रवेशने ॥ सेतुवृक्षजलादीनां प्रतिष्ठासु विशेषतः । तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं विधीयते ॥' । अत्र प्रतिष्ठादीनां गृह्योक्तत्वाभावेऽपि वचनाच्छ्राद्धम् । एवं च विष्णुपुराणे नामकर्मणीति पृथगुपादानमुपलक्षणसूचनपरमेवेति प्रतीमः । 'सीमन्तोन्नयने च' इति चकारात् पुंसवनगर्भाधानयोरुपसंग्रहः । 'पुत्रादिमुखदर्शने' इति पुत्रस्य प्रथममुखदर्शन इत्यर्थः ।

अत्र केचित्— 'पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः । मुखसंदर्शनेनास्य तदुत्पत्तौ यतेत सः ॥' इति बृहस्पतिवचनेनापि रागप्राप्तस्य पुत्रमुखदर्शनस्य नरकनिस्तारकारणतयोपन्यासात् नियमकर्तव्यत्वात् वैदिकत्वम्, रागतो नियमासंभवात् गर्भाधानवत् । ततश्च पुत्रमुखदर्शनात्प्राक् श्राद्धमित्याहुः । तदयुक्तम् । मन्वादिवचनैः पुत्रजन्ममात्रस्य पुन्नामनरकनिस्तारकत्वाभिधानात् तद्विरोधात् बृहस्पतिवचने मुखसंदर्शनपदेन मुखं संदर्शयतीति

व्युत्पत्त्या जन्मोच्यते । यथा मनुः– 'ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः । पितॄणामनृणश्चैव स तस्माल्लब्धुमर्हति ॥' । जातमात्रेण पुत्रीभवति पुन्नामनरकात्त्रातो भवतीत्यर्थः । तथा हरिवंशे पृथूपाख्याने मृतस्य वेनस्य दक्षिणभुजमथनाज्जातेन पृथुना वेनस्त्रातः । यथा– 'समुत्पन्नेन कौरव्य सत्पुत्रेण महात्मना । त्रातः स पुरुषव्याघ्रः पुन्नाम्नो नरकात्तदा ॥' । विष्णुपुराणे– 'सत्पुत्रेण च जातेन वेनोऽपि त्रिदिवं ययौ । पुन्नाम्नो नरकात्त्रातः स तेन सुमहात्मना ॥' । एवं च नियमविधित्वाभावात् पुत्रमुखदर्शनस्य लौकिकत्वे गृहप्रवेशवत्तन्निमित्तकश्राद्धं पश्चादेवेति । यदा तु पुत्रमुखदर्शनपुत्रजन्मनिमित्तकश्राद्धयोर्यौगपद्यं स्यात् तदा तन्त्रेण सकृदेवानुष्ठानम्, अन्यथा पृथगेवेति ।

'नान्दीमुखं पितृगणम्' इत्यनेन नान्दीमुखविशेषणवतः पित्रादेरत्र देवतात्वम्, तस्य च नान्दीमुखपदस्य संबन्धिवाचकपित्रादिपदात् प्राक्प्रयोगनियम इत्यपि दर्शितम् । तथा च कात्यायनः– 'नान्दीमुखान् पितॄनावाहयिष्ये इति पृच्छति' 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यादि । मातृमातामहादीनामपि तथात्वमाह ब्रह्मपुराणम्– 'प्रपितामहसंज्ञाश्च नान्दीमुख्यश्च मातरः । मातामहेभ्यश्च तथा नान्दीवक्त्रेभ्य एव च ॥' । अत्र च मातृश्राद्धमपि दर्शितम् । शातातपः– 'मातॄणामग्रतः कृत्वा पितॄणां तदनन्तरम् । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥' ।

एषु च मत्स्यपुराणकात्यायनशातातपविष्णुपुराणवचनेषु स्वमातृमातामहादीनामिव स्वजनकादीनां देवतात्वप्रतीतेस्तेभ्य एव श्राद्धं देयम् । तेन 'पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ॥ तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखेधिताः । ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥ कर्मण्यथाऽऽभ्युदयिके मङ्गल्यवति शोभने । जन्मन्यथोपनयने विवाहे पुत्रकस्य च । पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ॥' इति ब्रह्मपुराणवचनाद्वृद्धप्रपितामहादीनामेव वृद्धिश्राद्धमिति यत्कैश्चिदुक्तं तन्निरस्तम्, 'स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।' इति 'षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ।' इत्यादिपरिशिष्टवचनाच्च । ब्रह्मपुराणवचनं तु पित्रादित्रिकस्य पतितप्रव्रजितत्वे वृद्धप्रपितामहादीनां श्राद्धविषयकम् । अत एव श्राद्धानर्हत्वात् पित्रादीनामश्रुमुखत्वम्, तत्परेषां श्राद्धार्हत्वेन प्रसन्नमुखत्वान्नान्दीमुखता दर्शिता । इति श्राद्धविवेकः । कल्पतरौ तु जीवत्पित्रादित्रिकविषयमित्युक्तम् । हलायुधेन तु शाखिविशेषव्यवस्थितमित्युक्तम् । श्राकौ. ४८७–४९३

(७) 'नामकर्मणि ... तथा' इत्युक्तेर्निष्क्रमणान्नप्राशनयोर्न श्राद्धमिति मैथिलाः । तन्न, पूर्वोक्तविरोधात् 'नानिष्ट्वा' इति निषेधात् । सिन्धु. १७२७

(८) अत्र पुत्रादीत्यादिशब्दात् पौत्रस्यापि संग्रह इति निर्णयामृते । संकौ. २६

(९) अत्र कन्यापुत्रेत्युक्त्या स्वविवाहो न निमित्तम्, उद्वाहपदमप्येवंपरम्, एकमूलकल्पनालाघवादिति केचित् । तत एव वैपरीत्यमिति अन्ये । अत एव तत्र बहुवचनम् । मुखेति तज्जन्मोपलक्षणम्, न स्वतन्त्रं तत एव, तदावृत्तावावृत्तिप्रसङ्गात्, कथंचिददर्शने श्रवणतः श्राद्धाकरणप्रसङ्गाच्च । आदिना कन्यापरिग्रहः । एतेन– पुत्रस्याऽऽद्ये मुखदर्शने इत्यर्थः, न तु तेन पौत्रादेर्ग्रहणमिति शूलोक्तमपास्तम्, द्वितीयादिपुत्रोत्पत्तौ श्राद्धाप्रसङ्गात् । यद्यपि जातस्यैव निमित्तत्वं तथाऽपि 'नानिष्ट्वा' इत्युक्त्या अत्र तद्भाविनोऽपि तत्त्वं बोध्यम् । बाल. १।२५० पृ. ५७४

### नान्दीश्राद्धनिमित्तानि

**[1]यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।**
**पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥**

वृषोत्सर्गः काम्यः, न तु प्रेतत्वनिवृत्त्यर्थः, तस्य श्राद्धत्वात् । कृभ. १७२३

---

(१) सिन्धु. १७२६–१७२७ पुत्रजन्मवृ (पुत्रोत्पत्तौ वृ); संग. ७३; संदी. ५६.

नान्दीश्राद्धे विशेषधर्माः

§[1]दध्यक्षतैः सबदरैः प्राङ्मुखोदङ्मुखोऽपि वा ।
देवतीर्थेन वै पिण्डान्दद्यात्कायेन वा नृप ॥

(१) पिण्डप्रदानं चात्र वैकल्पिकम् । तथा च विष्णुपुराणे— दध्यक्षतैरिति । कामेन इच्छया । इच्छाभावे तु न दद्यात् । †चश्रा १५५५

(२) पुनश्चिन्त्यन्ते— पिण्डदानमपि किं देवतीर्थेन, आहोस्वित्प्राजापत्येन ? इति । तत्रैके आहुः— 'दध्यक्षतैः ...' इत्यनेनोभयतीर्थस्य विहितत्वाद्विकल्प एवेति । अन्ये त्वाहुः— छन्दोगा देवतीर्थेन, वाजसनेयिप्रभृतयः प्राजापत्येनेति । तथा च मार्कण्डेयः— 'नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम् । प्राजापत्येन तीर्थेन यच्च किंचित्प्रदीयते ॥' इति । अत्रानूनानाः प्रमाणम् । पिण्डोदकव्यतिरिक्तं देवतीर्थेन, पिण्डोदकं प्राजापत्येनेति व्यवस्था वा । श्राका. ५१५

---

§ अस्य श्राकौव्याख्यानं 'नात्रापसव्यकरणम्' इति कात्यायनश्लोकव्याख्याने, यजुःश्राद्धतत्त्वव्याख्यानं च 'प्रदक्षिणमुपचारः' इति पारस्करगृह्यपरिशिष्टश्राद्धसूत्रवचनव्याख्याने द्रष्टव्यम् ।

† श्राप्र. चश्रानुवादः ।

(१) विष्णु. ३।१३।३ ; चश्रा. १५५५ कायेन वा (कामेन वै) ; स्मृसा. १०८ वै (वा) उत्त. ; श्राका. ५१३ पू., प्रचेताः : ५१५ (=) द्वितीयपादे (प्राङ्मुखो वाऽप्युदङ्मुखः) वै (वा) ; श्राकौ. ५१० देव (दैव) पिण्डान् (पिण्डं) नृप (पुनः) ; यजुःश्रात. ४९९ देव (दैव) पिण्डान् (पिण्डं) ; श्रासौ. १२१ देव (दैव) वै (वा) पिण्डान् (पिण्डं) ; श्राप्र. ३०६ पिण्डान् दद्यात् (दद्यात् पिण्डान्) शेषं चश्रावत् ; संग. ८७ देव (दैव) शेषं चश्रावत्.

## विष्णुधर्मोत्तरपुराणम्

जीवत्पित्रादिकर्तृकनान्दीश्राद्धे देवतानिर्णयः, श्राद्धस्य मन्त्रहीनत्वं च

**वज्र उवाच—**

[1]यस्य जीवेत्पिता श्राद्धं कस्यासौ कर्तुमर्हति ।
त्वमेव संशयच्छेत्ता संशयं छिन्धि मे द्विज ॥

**मार्कण्डेय उवाच—**

[2]येषां श्राद्धं पिता कुर्यात्तेषामेव स कारयेत् ।
मन्त्रहीनं प्रकर्तव्यं तेन श्राद्धं यथाविधि ॥

तत्र पितामहाद्यूहमाह विष्णुधर्मोत्तरम्— येषां श्राद्धमिति । सः जीवत्पितृकः । प्रतिनिधिना तु 'अमुकपितुः' इत्याद्यभिलापे प्रयोज्यम् । 'आ यन्तु नः पितरः' इत्यादौ तु न तथा, 'यां वै कांचन यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव तामाशासत इति होवाच' इति श्रुतेः । उत. १३७

[3]मातामहानां श्राद्धं तु मन्त्रहीनं च कारयेत् ।
श्राद्धं च सुहृदां कुर्यात्स्त्रीणां चाक्षयवाचकम् ॥

**वज्र उवाच—**

[4]पिता पितामहश्चैव जीवेतां यस्य देहिनः ।
तेन श्राद्धं कथं कार्यं तन्ममाऽऽचक्ष्व पृच्छतः ॥

**मार्कण्डेय उवाच—**

येषां पितामहः कुर्यात्तेषां श्राद्धं नराधिप ।
तेन कार्यं महाप्राज्ञ यथावदनुपूर्वशः ॥

---

(१) विध. १।१४०।५२–५३ ; बाल. १।२५० पृ. ५७५ त्वमेव (त्वमेकः).

(२) विध. १।१४०।५३ ; उत. १३७ उत्तरार्धे (मन्त्रोहेण तु कर्तव्यं तेषां श्राद्धं नराधिप ॥) ; बाल. १।२५० पृ. ५७५ प्रक (च क).

(३) विध. १।१४०।५४ ; बाल. १।२५० पृ. ५७५ तु (च).

(४) विध. १।१४०।५५–५६.

वज्र उवाच–

[1]पिता पितामहश्चैव तथैव प्रपितामहः ।
यस्य जीवन्ति कर्तव्यं तेन श्राद्धं कथं द्विज ॥

मार्कण्डेय उवाच–

[2]तेन श्राद्धं न कर्तव्यं विधिलोपं च यादव ।
पूजनीयाश्च पितरः पितामहपितुः स्वयम् ॥

वज्र उवाच–

[3]जीवेत्पितामहो यस्य पितुश्चैव पितामहः ।
पिता प्रेतस्तथा यस्य तस्य श्राद्धविधिं वद ॥

मार्कण्डेय उवाच–

पिण्डनिर्वपणं कृत्वा स पितुर्मनुजेश्वर ।
पितुः पितामहादूर्ध्वं द्वाभ्यां पिण्डं निवेदयेत् ॥

वज्र उवाच–

पितापितामहौ प्रेतौ यस्य स्यातां द्विजोत्तम ।
पितुः पितामहो जीवेत्तस्य श्राद्धविधिं वद ॥

मार्कण्डेय उवाच–

पित्रे सपित्रे कृत्वा तु पिण्डनिर्वपणं ततः ।
पिण्डनिर्वपणं कुर्यात् पितामहपितामहे ॥

वज्र उवाच–

प्रेतः पिता भवेद्यस्य पितुश्चैव पितामहः ।
तेन कार्यं कथं श्राद्धं तन्ममाऽऽचक्ष्व पृच्छतः ॥

मार्कण्डेय उवाच–

[4]स तु दत्वा पितुः पिण्डं तत ऊर्ध्वं पितामहात् ।
द्वाभ्यां दद्यात्सदा पिण्डं त्वेवमाहुर्मनीषिणः ॥

---

(१) विध. १।१४०।५७ ; बाल. १।२५० पृ. ५७५

(२) विध. १।१४०।५८ लोपं च (लोपं तु) ; बाल. १।२५० पृ. ५७५, ५७७.

(३) विध. १।१४०।५९–६३ ; बाल. १।२५० पृ. ५७५.

(४) विध. १।१४०–६४ ; बाल. १।२५० पृ. ५७५ तु दत्वा (दत्वा तु) पिण्डं त्वे (पिण्डमे).

वज्र उवाच–

[1]प्रेतः पितामहो यस्य पिता जीवेद्द्विजोत्तम ।
पितुः पितामहो जीवेत्तस्य श्राद्धविधिं वद ॥

मार्कण्डेय उवाच–

[2]दत्त्वा पितामहे पिण्डं स तूर्ध्वं प्रपितामहात् ।
पिण्डनिर्वपणं कुर्याद्द्वाभ्यां नित्यमतन्द्रितः ॥

पुत्रजन्मनिमित्तकनान्दीश्राद्धस्य कालः

[3]अच्छिन्ननाभ्यां कर्तव्यं श्राद्धं वै पुत्रजन्मनि ।
आशौचोपरमे कार्यमथवा नियतात्मभिः ॥

(१) यत्तु विष्णुधर्मोत्तरेऽपि– 'अच्छिन्ननाभ्यां...' इति, तत् द्रव्यविप्रकर्त्राद्यभावे वेदितव्यम् । * स्मृच. १९

(२) तच्च श्राद्धं हेम्ना कार्यम् । पमा. ४४०

(३) पुत्रपदेन कन्याऽपि गृह्यते । † सिन्धु. ८४५

(४) इदं च रात्रौ संध्यायां ग्रहणे जाताशौचान्तरमध्येऽपि कार्यम् । मृताशौचेऽपि तदैव आशौचान्ते वा । तदुक्तं विष्णुधर्मोत्तरे– 'अशौचोपरमे कार्यमथवा नियतात्मभिः ।' इति । बाल. १।१२ पृ. १७

---

* मुक्ता., मपा. स्मृचवत् ।

† संर. सिन्धुवत् ।

(१) विध. १।१४०।६५ ; बाल. १।२५० पृ. ५७५.

(२) विध. १।१४०।६६ ; बाल. १।२५० पृ. ५७६ तूर्ध्वं (ऊर्ध्वं).

(३) स्मृच. १९ ; चका. ५८३ नाभ्यां (नाड्यां) ; पमा. ४४० नाभ्यां (नाड्यां) आशौ (अशौ) ; मपा. ३५३ आशौ (अशौ) ; श्रात. ३२० नाभ्यां (नाड्यां) आशौचोपरमे (अशौचापगमे) नियतात्मभिः (ऽपि नराधिप) ; संप्र. २०० ; मुक्ता. ७९ व्यासः ; सिन्धु. ८४५ नाभ्यां (नाभि) पू. ; बाल. १।१२ पृ. १६ सिन्धुवत्, पू. : पृ. १७ आशौ (अशौ) उत्त. ; पुम. ४३३ नाभ्यां (नाले) ; संर. ८३१ पुमवत्.

नान्दीश्राद्धस्य कर्तव्यता, औपदेशिकधर्मातिरेकेण पार्वणधर्मातिदेशः

[1]वृद्धौ श्राद्धं नरः कुर्वन्नित्यं वृद्धिमवाप्नुयात् ॥

[2]वृद्धौ समर्चयेद्विद्वान्नित्यं नान्दीमुखान्पितॄन् ।
संपादितो विशेषस्तु शेषं पार्वणवद्भवेत् ॥

वृद्धौ पुत्रजन्मविवाहाद्यभिवृद्धिरूपनिमित्ते प्रस्तुते इत्यर्थः, 'पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम् ।' इति वसिष्ठस्मरणात् । नरोऽत्र पिता विवक्षितः । अत एव विष्णुपुराणे– 'जातस्य जातकर्मादिक्रियाकाण्डमशेषतः । पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ॥' । कात्यायनोऽपि– 'स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु । पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् ॥' ।

'वृद्धौ समर्चयेद्विद्वान्नित्यं नान्दीमुखान्पितॄन् ।' इत्यादिविष्णुधर्मोत्तरवचनशेषस्यायमर्थः– वृद्धौ वृद्धिश्राद्धे नान्दीमुखसंज्ञकान् पितॄन् समर्चयेत् । संपादितो विशेषस्तु नान्दीमुखसंज्ञारूपो वैशेषिको धर्मः संपादितः प्रतिपादितः । शेषं पार्वणवद्भवेत् । प्रतिपादितनान्दीमुखसंज्ञारूपवैशेषिकधर्मादन्यद्धर्मजातं पार्वणवदिहाप्यवगन्तव्यमिति । न चैवं पुरूरवार्द्रवसंज्ञकरूपो धर्मः पार्वणवत् विश्वेषां देवानामत्र स्यादिति वाच्यम्, विष्णुधर्मोत्तरे नान्दीमुखसंज्ञारूपवैशेषिकधर्माभिधानस्य स्मृत्यन्तरोक्तवैशेषिकधर्मप्रदर्शनार्थत्वात् । तस्मात् 'सत्यो नान्दीमुखे वसुः' इत्यादयः स्मृत्यन्तरोक्ताः विशेषा वृद्धिश्राद्धे ग्राह्याः ।
* स्मृच. ४९७–४९८

नान्दीश्राद्धे विशेषधर्माः

[3]वृद्धिश्राद्धेषु कर्तव्यास्तिलस्थाने यवास्तथा ॥
[1]कर्कन्धुदधिसंमिश्रांस्तथा पिण्डांश्च निर्वपेत् ॥

## गरुडपुराणम्

मातृश्राद्धस्य पृथक्त्वम्

[2]अन्वष्टकासु यच्छ्राद्धं यच्छ्राद्धं वृद्धिहेतुकम् ।
पितुः पृथक्प्रदातव्यं स्त्रीषु पिण्डं सपिण्डता(?) ॥

मातामहपार्वणाभिलापः

[3]वृद्धप्रमातामहप्रमातामहमातामहानां सपत्नीकानाम् ॥

इदं च मातृपितृमातामहादिक्रमेण नवदैवत्यं कार्यम् । तत्र मातामहाः सपत्नीकाः, 'वृद्धप्रमाता ... सपत्नीकानाम्' इति पृथ्वीचन्द्रोदये गारुडे गद्यरूपेण पाठात् ।
सिन्धु. १७३१

## पद्मपुराणम्

नान्दीश्राद्धे विशेषधर्माः

[4]युग्मा द्विजातयः पूज्या वस्त्रकार्तस्वरादिभिः ॥

(१) पित्रादिवर्गेऽपि चतुरादिसंख्यका एव ब्राह्मणा भोजनीयाः । तथा च पद्मपुराणे– 'युग्मा ...' । कार्तस्वरं सुवर्णम् ।　चश्रा. १५४४

(२) असंभवे त्वेकैकस्मिन्वर्गे द्वौ द्वावपि भोजनीयौ । तथा च पद्मपुराणे– 'युग्मा ...' । कार्तस्वरं सुवर्णम् ।　श्राप्र. २९७–२९८

[5]तिलार्थस्तु यवैः कार्यः सव्येनैवानुपूर्वशः ।
मङ्गलानि च सर्वाणि वाचयेद्द्विजपुङ्गवान् ॥
[6]प्रदक्षिणोपचारेण दध्यक्षतफलोदकैः ।
प्राङ्मुखोदङ्मुखो वाऽपि प्रदद्याद्बदरैर्युतान् ॥

---

* चश्रा., पमा., मुक्ता. स्मृचवत् ।

(१) स्मृच. ४९७.

(२) स्मृच. ४९७ विद्वान् (विप्रान्); चश्रा. १५६० ; पमा. ७८२ ; मुक्ता. ७५४ चन्द्रिकायाम्.

(३) चश्रा. १५४६ ; श्राप्र. २९८.

---

(१) चश्रा. १५५४ ; श्राप्र. ३०५ कर्कन्धुदधि (दधिकर्कन्धु).

(२) लता. १२१.　(३) सिन्धु. १७३१.

(४) चश्रा. १५४४ ; श्राप्र. २९७.

(५) चश्रा. १५४५–१५४६ ; श्राम. ८९ पू. ; कृभ. १७५० पू.

(६) चश्रा. १५५५ ; संग. ८५.

पिण्डानिति शेषः । संग. ८५

[1]संपन्नमित्यभ्युदये दद्यादर्घ्यं द्वयोर्द्वयोः ॥

तृप्तिप्रश्नस्थाने संपन्नमिति पृच्छेत् । अर्घ्यं च द्वयोर्द्वयोर्विप्रयोर्हस्तौ मेलयित्वा दद्यादित्यर्थः ।

चश्रा. १५५०

नमस्कारमन्त्रसाध्यनान्दीश्राद्धे शूद्रस्याप्यधिकारः

[2]एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं तु सर्वदा ।
नमस्कारेण मन्त्रेण कुर्याद्दानादि वै बुधः ॥

## ब्रह्मपुराणम्

जातश्राद्धे पक्वान्ननिषेधः, पूर्वेद्युर्नान्दीश्राद्धकर्तव्यता

[3]जातश्राद्धे न दद्याच्च पक्वान्नं ब्राह्मणेष्वपि ॥
[4]पूर्वेद्युः स्वस्तिवाचनं नान्दीश्राद्धसमन्वितम् ॥

नान्दीश्राद्धस्य प्रातःकर्तव्यता

[5]पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥

(१) 'अपराह्णे तु पैतृकम्' इति कृष्णपक्षे बोद्धव्यम्, 'शुक्लपक्षस्य पूर्वाह्णे' इति विशेषविधानात् । मातृश्राद्धं तु वृद्धिव्यतिरिक्ताष्टकाश्राद्धमत्र बोद्धव्यम् ।

स्मृसा. ९८

(२) शुक्लपक्षे पूर्वाह्णे पार्वणश्राद्धमुक्तं वायुपुराणे * – 'पूर्वाह्णे मातृकं ...' । दीक. १।१२६

सकृदनुष्ठितमातृकापूजननान्दीश्राद्धयोः कर्मगणोपकारकत्वम्

†गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥

जीवत्पित्रादिकर्तृकनान्दीश्राद्धे देवतानिर्णयः

मुनय ऊचुः–

[1]पिता जीवति यस्याथ मृतौ द्वौ पितरौ पितुः ।
कथं श्राद्धं हि कर्तव्यमेतद्विस्तरशो वद ॥

व्यास उवाच–

यस्मै दद्यात् पिता श्राद्धं तस्मै दद्यात्सुतः स्वयम् ।
एवं न हीयते धर्मो लौकिको वैदिकस्तथा ॥

मुनय ऊचुः–

मृतः पिता जीवति च यस्य ब्रह्मन् पितामहः ।
स हि श्राद्धं कथं कुर्यादेतत्त्वं वक्तुमर्हसि ॥

व्यास उवाच–

पितुः पिण्डं प्रदद्याच्च भोजयेच्च पितामहम् ।
प्रपितामहस्य पिण्डं वै ह्ययं शास्त्रेषु निर्णयः ॥

---

(१) चश्रा. १५५०.

(२) चश्रा. १५६० ; श्राम. ९१ दानादि (देवादि) ; कृभ. १७५५ तु (च) र्याद्दानादि वै (र्याद्देवाऽऽदितो).

(३) अप. १।११–१३ पृ. २६ न दद्या (प्रदद्या) ; ग्रक. ८६ जातश्राद्धे (जाते श्राद्धे).

(४) प्रपा. ३४९; संप्र. ८१९ वाचनं ना (वचनना) मन्वितम् (मन्वितः) ; विपा. ३७ (भागः २) (पूर्वेद्युः स्वस्तिवाचनं नान्दीश्राद्धं समाचरेत् ।).

(५) स्मृसा. ९८ ; दीक. १।१२६ वायुपुराणे.

*प्रकृतवचने पार्वणशुक्लपक्षयोः संबन्धानभिधानात् पैतृकवृद्धिनिमित्तकयोः पार्वणरूपयोः पूर्वाह्णसंबन्धाभावाच्च नात्रावतरणार्थानुगमोऽस्ति । अतोऽत्र 'शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः । कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत् ॥' इति स्मृतिसारधृतं वायुपुराणीयं वचनमुच्छिन्नमिति भाति । तथा च दीपकलिकाभिप्रायेण प्रकृतवचनस्य वायुपुराणीयत्वं संदिग्धम् ।

† अस्य श्लोकस्य व्याख्यानं पाठभेदादि च मातृकापूजने (सं. का. पृ. १७०३) द्रष्टव्यम् ।

(१) ब्रह्म. २२०।२०५–२०९.

**मृतेषु पिण्डं दातव्यं जीवन्तं चापि भोजयेत् ॥**

जीवत्पित्रादित्रयकस्य कर्तृत्वे प्रपितामहपित्रादीनां देवतात्वं व्याख्यात्रभिप्रायेण

**[१]ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्विह।**
**प्रसन्नमुखसंज्ञाः स्युर्मङ्गलीया यतस्तु ते ॥**
**¶[२]पिता पितामहश्चैव तथैव प्रपितामहः।**
**त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः ॥**
**[३]तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिताः।**
**ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥**

(१) अत्र च 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाः' इत्यदिकात्यायनवाक्यदर्शनात् पित्रादय एव नान्दीमुखविशेषणवन्तो देवताः। यत्तु ब्रह्मपुराणे पित्रादित्रिकस्याश्रुमुखत्वमुक्त्वा ततः परेषां नान्दीमुखत्वेन वृद्धिश्राद्धदेवतात्वाभिधानम्, तज्जीवत्पित्रादित्रयस्य श्राद्धकर्तुर्वृद्धिश्राद्धे देवताभावार्थम्। ततश्च तस्याप्यवश्यं कर्तव्यमिदमिति। यत्तु पार्वणादिश्राद्धं तत्तेन न कर्तव्यम्, विष्णुस्मृतौ 'पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्' इति निषेधात्। * श्राक. २७०

(२) ये तु ब्रह्मपुराणाभिहिताः— 'ये स्युः ... नान्दीमुखा इति ॥' (इति), ते प्रौष्ठपदे पौर्णमासीनिमित्त एव श्राद्धे देवताः, न पुत्रजन्मादिकालिके नान्दीमुखान्तरे इति प्रकीर्णकालप्रकरणे वक्ष्यामः। पृ. १०७

---

¶ अस्य श्लोकद्वयस्य श्राद्धक्रियाकौमुदीव्याख्यानं 'कन्यापुत्रविवाहेषु' इति विष्णुपुराणश्लोकव्याख्याने द्रष्टव्यम्।

(१) चश्रा. १०७ स्त्विह (स्त्विति) यतस्तु (मतास्तु) : २७८ स्त्विह (स्त्रयः) संज्ञाः स्युः (संज्ञास्तु); प्रपा. १५ ; श्राका. ५१६ मुखास्त्विह (मुखा अपि) उत्तरार्धे (प्रसन्नमुखसंसर्गान्मङ्गलीयास्ततस्तु ते ॥) अत्र पूर्वार्धस्य मार्कण्डेयवचनत्वेनोल्लेखः कृतः ; श्रासौ. ११९ स्त्विह (स्त्विति) पू. ; चम. १७९ पू. ; सिन्धु. १७३३ ते स्युः (ते तु) मुखास्त्विह (मुखाः स्मृताः) पू., मार्कण्डेयपुराणे ; विपा. ३१ (भागः २) संज्ञाः स्युः (संज्ञास्तु) उत्त. ; बाल. १।२५० पृ. ५६९ स्त्विह (स्त्विति) ; पुम. २९९ ; चश्रा. २७८ वत्.

(२) श्राक. २६८ संप्रकी (परिकी) ; चश्रा. १०७, २७८ ; स्मृसा. १०७–१०८ ह्येते (एते) संप्रकी (परिकी) ; मपा. ६३३ श्राकवत् ; प्रपा. १५ त्रयो ह्य (त्रयोऽप्य) ; श्राका. ५१६ स्मृसावत् ; गभा. ३२ ; श्राकौ. ४९३ श्राकवत् ; प्रर. १३ ; श्रासौ. ११९ ; श्राप्र. २९५ ; चम. १७९ (=) त्रयो ह्य (त्रयस्त्व) ; श्राम. ८९ ; संम. ६ ह्येते (एते) ; सिन्धु. १७३२ श्राकवत् ; विपा. ३१ (भागः २) श्राकवत् ; प्रका. ३१ संमवत् ; बाल. १।२५० पृ. ५६९ चमवत् ; संग. ८८ ; पुम. २९९ : ३७९ (=).

(३) श्राक. २६८ ; चश्रा. १०७ (तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखा इति।) एतावदेव : २७८ (तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः।) एतावदेव ; स्मृसा. १०८ तेभ्यः (एभ्यः) सुखैधिताः (सुखोचिताः) कथ्यते (कल्प्यते) ; मपा. ६३३ ; प्रपा. १५ (तेभ्यः पूर्वे त्रयो ये स्युस्ते तु नान्दीमुखाः स्मृताः।) एतावदेव ; श्राका. ५१६ सुखैधिताः (सुखैषिणः) ; गभा. ३२ सर्वं चश्रा. २७८ वत् ; श्राकौ. ४९३ सुखैधिताः (सुखैषिताः) ; उत. १४५ (नान्दी समृद्धिरिति कथ्यते) एतावदेव; संत. ८९१ उतवत् ; प्रर. १३ (तेभ्यः पूर्वे त्रयो ये च ते तु नान्दीमुखाः स्मृताः।) एतावदेव ; श्रासौ. ११९ ; श्राप्र. २९५ उत्तरार्धे (ते तु नान्दीमुखा नाम पितरः परिकीर्तिताः ॥) ; चम. १७९ (=) गभावत् ; श्राम. ८९ गभावत् ; संम. ६ गभावत् ; सिन्धु. १७३३ ; विपा. ३१ (भागः २) पूर्वार्धे (तेभ्यः पूर्वतराः पञ्च प्रजावन्तः सुखैषिणः।) ; प्रका. ३१ गभावत् ; बाल. १।२५० पृ. ५६९ गभावत्, अस्मदादर्शपाठस्तु पाठान्तरत्वेन निर्दिष्टः ; संग. ८८ गभावत् ; पुम. २९९, ३०० गभावत् : ३७९ (=).

* सिन्धु. श्राद्धकल्पतरुमदनपारिजातचतुर्वर्गचिन्तामणिमतानां संक्षेपतोऽनुवादः।

अत्र ('ये स्युः ...' इति श्लोके) पितामहशब्देन प्रपितामहो लक्षणीयः । यदुक्तं ब्रह्मपुराणे— 'पिता पितामह ...स्मृताः ॥' इति, अस्य नान्दीमुखवचनस्यैतत्पौर्णमासीनिमित्तकश्राद्धविधिनैकवाक्यतापन्नत्वात् श्राद्धान्तरे नान्दीमुखशब्देन प्रपितामहात्परे त्रयो न ग्राह्याः । अथैतेषां नान्दीमुखसंज्ञा किमर्था ? अथ यथा 'वसवः पितरो ज्ञेयाः' इत्यादौ वस्वादिशब्दो वस्वाद्यभेददृष्टिविधानार्थः, तथाऽत्र वाराहकल्पीयपितृगणाभेदप्रकरणोक्तनान्दीमुखाख्यपितृगणाभेददृष्टिविधानार्थं उच्यते। तन्न, यतोऽत्र प्रसन्नमुख इत्यादिना नन्दनमुख(त्व)योगान्नान्दीमुखशब्दनिष्पत्तिरभिप्रेतेति दर्शितम् । अतो नामेददृष्ट्युपदेशार्थः । अथ यथा कौण्डपायिनीये मासहोमेऽग्निहोत्रमिति परशब्दः परत्र प्रयुज्यमानः परसारूप्यभावं गमयन्(? सारूप्यमवगमयन्) नैयमिकाग्निहोत्रधर्मातिदेशार्थः, तथाऽत्र नान्दीमुखशब्दोऽपि पुत्रजन्मादिकालविहितप्रसिद्धनान्दीमुखधर्मातिदेशार्थं इति । तन्न, उक्तोत्तरत्वात्। न ह्ययं परशब्दः परसारूप्यविवक्षया प्रयुक्तः, किंतु नन्दनमुखत्वयोगादिति। अतोऽस्य प्रशंसैव प्रयोजनं मन्यामहे । § चश्रा. २७८

(३) पित्रादीनां त्रयाणामपि विद्यमानत्वात् चतुर्थादयः प्रजावन्तः, चतुर्थादिसंनिहितत्वेन पित्रादित्रयाणां तद्विषयदुःखभाक्त्वेन संनिहितमरणधर्मकत्वात् ह्यश्रुमुखत्वमिति । * मपा. ६३३–६३४

(४) अत्र केचित्— नान्दीमुखानां पितॄणां देवतात्वाभिधानाद्येषां नान्दीमुखसंज्ञा विहिताऽस्ति ब्रह्मपुराणे तेषामेव देवतात्वम् । तथा च ब्रह्मपुराणम्— 'पिता पितामह... परिकीर्तिताः ॥' । अत्र पित्रादीनां त्रयाणामश्रुमुखा इति संज्ञा, प्रपितामहपित्रादीनां त्रयाणां नान्दीमुखा इति संज्ञा । तस्माद्वृद्धिश्राद्धे वृद्धप्रपितामहादय एव नान्दीमुखाः, ते एव च देवता इत्याहुः । तन्न, 'स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।' इति छन्दोगपरिशिष्टवचनात्, 'पूर्वेद्युर्मातृकं श्राद्धं कर्मादौ पैतृकं स्मृतम् ।' इति वसिष्ठोक्तत्वात्, 'एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान् पितॄन् । यजेत ...' इति याज्ञवल्क्यवचनात्, 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च' इति कात्यायनवचनात्, 'नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यश्च' इति गोभिलवचनात्, 'नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही ।' इति विष्णुपुराणात्, 'तस्मात्पितृभ्यः पूर्वेद्युः करोति पितृभ्य एव तद्यज्ञम्' इति पूर्वोदाहृतब्राह्मणाच्च पित्रादित्रिकस्यैव देवतात्वप्रतीतेः । नान्दीमुखसंज्ञा परं तेषामपि वाचनिकी । तेन पित्रादीनां त्रयाणामेव वृद्धौ देवतात्वं नान्दीमुखत्वं चेति । अत्र च पित्रादीनां देवतानां नान्दीमुखत्वस्य गुणत्वात्तद्विशिष्टानामेवोल्लेखः । यथा 'अग्नये दात्र इन्द्राय प्रदात्रे विष्णवे शिपिविष्टाय' इत्यत्राग्न्यादीनां देवतानां दात्रादिगुणविशिष्टानामेवोल्लेख इति । प्रपितामहपित्रादीनां तु नान्दीमुखत्वस्य गुणत्वाभावान्नोल्लेख इत्यग्रे स्फुटम् । किंच 'माता पितामही चैव संपूज्या प्रपितामही । पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः । एते नवार्चनीयाः स्यु पितरोऽभ्युदये द्विजैः ॥' इत्याश्वलायनवचने स्पष्टमेव मात्रादीनां पितृपितामहप्रपितामहानां मातामहादीनां नवानामभ्युदये देवतात्वाभिधानात्, तथा 'मातृपूर्वान् पितॄन्पूज्य ततो मातामहानपि ।' इति चतुर्विंशतिमते, तथा 'नान्दीमुखाः पितरः' इति कात्यायनवचनेऽपि । इति कः प्रसङ्ग उत्तरत्रिकस्य ? किंच 'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् । नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥' इति वृद्धवसिष्ठवचने पितृपितामहप्रपितामहानामेव देवतात्वे प्रातिलोम्यक्रमो घटते। वृद्धौ प्रपितामहपितामहपितर इति व्युत्क्रमः, अमावास्यादौ तु पितृपूर्वकं पितृपितामहप्रपितामहा इति क्रमः। उत्तरत्रिकस्य तु देवतात्वे प्रपितामहपदं प्रपितामहप्रपितामहपरं स्यात् पितृपदं च वृद्धप्रपितामहपरं स्यादिति। किंच पितृपितामहप्रपितामहानामेव देवतात्वे भवति जीवत्पितृकस्या-

---

§ प्रपा., गभा., चम., संम., संग. संक्षेपतः चश्रानुवादः ।

* शेषं आकवत् ।

प्यधिकारः । तथा हि– 'येभ्य एव पिता दद्यात्तेभ्यो दद्यात्तु तत्सुतः ।' इत्यनेनाधिकारे सिद्धे विष्णूक्तः 'पितरि जीवति यः श्राद्धं कुर्याद्येषां पिता कुर्यात्' इत्युक्त्वा 'त्रिषु जीवत्सु नैव कुर्यात्' इति निषेधोऽनर्थक एव, त्रयाणां देवतात्वपक्षे तेषां जीवित्वे भवत्यर्थवान्निषेधः । यदा तूत्तरेषां देवतात्वं तदा त्रयाणां जीवनेऽजीवने वा उत्तरेषामेव प्राप्तत्वादयं निषेधोऽनर्थक एव । किंच विष्णूक्तः प्रयोगनियमोऽपि पूर्वेषां देवतात्वे घटते, नोत्तरेषाम् । यथा– 'यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात्' इत्यत्र पित्रे प्रपितामहाय च पिण्डदानं तयोर्देवतात्वे संगच्छते, नान्यथेति किं भूयो विस्तरेण ? वृद्धप्रपितामहादीनां संज्ञाकरणं तु प्रौष्ठपदीश्राद्ध एव देवतात्वार्थम्, तेषामन्यत्र देवतात्वे प्रमाणाभावात् । उक्तं च तत्रैव– 'नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ । पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ॥' इति ।

* श्राप्र. २९५–२९७

(५) $ तत्र पित्रादीनामेवोपादानमिति हेमाद्रिप्रयोगपारिजातकृद्दीक्षितादयः । बहवोऽत्रानाश्वस्ता इति गुरुचरणाः । अत एव प्रागुक्तस्मृत्यर्थसार†संगतिः । तेषामयं भावः– उक्तब्राह्मेण नान्दीमुखसंज्ञां कृत्वा तदनुवादेनानुपदमेव 'कर्मण्यथाऽऽभ्युदयिके मङ्गल्यवति शोभने । जन्मन्यथोपनयने विवाहे पुत्रकस्य च । पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ॥' इत्युक्तम् । अत एव पुनस्तेनैव तद्विषये 'ये स्युः ...' इत्याद्युक्तम्, अन्यथा तदनर्थकमेव स्यादिति । वस्तुतस्तु– आद्यमेव युक्तम्, अन्यथा वैरूप्यापत्तेः, मातृमातामहवर्गयोस्तादृशयोस्तद्वत्तत्वानुक्तेः । मूलविष्णुब्राह्मादितस्तु तयोरिव तद्वर्गस्याप्यविशिष्टं तत्त्वम् । अत एव प्रौष्ठपद्यामेकवर्गानुष्ठानम्, अन्यत्र वर्गत्रयानुष्ठानम् । एकस्य द्विरूपत्वं तु यमवत् । स्मृत्यर्थसारस्तु प्रौष्ठपदीविषयकः वृद्धब्राह्मणमुख्यत्वप्रतिपादको वेति बोध्यम् । एतेन– "प्रमीतपित्रादित्रिकस्य स्वीया एव ते, 'नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्ताम्' इति कात्यायनादिसूत्रात् । सपित्रादिकस्य तु ब्राह्मोक्तमेव" इति कल्पतरूक्तमपास्तम् । 'सर्वथाऽत्र नवदैवत्यत्वमिष्टम्, तद्यथा संपद्यते तथा कार्यम् । वर्गत्रयान्यतमसत्त्वेऽन्यवर्गसंबन्ध्येव, सर्वसत्त्वे नैव' इति मतमपास्तम् । एवं "जीवत्पित्रादित्रयस्यापि वृद्धौ श्राद्धदेवतात्वसिद्ध्यर्थं ब्राह्मम्, अन्यथा मात्स्यविरोधो दुष्परिहरः । एवं च विद्यमानपित्रादित्रयस्यापि वृद्धौ नान्दीश्राद्धावश्यकत्वप्रतीतिः, न पार्वणादिश्राद्धस्य, तत्र 'जीवति नैव कुर्यात्' इति विष्णुना निषेधात् । एवं मात्रादिषु मातामहादिषु ज्ञेयम्, न्यायसाम्यात् । एवं च 'पितृवर्गे सति न तन्नान्दीश्राद्धम् । एवं मात्रादिष्वपि' इति कथं न ब्राह्माज्ञाननिबन्धनमुपेक्ष्यम्" इति मदनोक्तमप्यपास्तम् ।

बाल. १।२५० पृ. ५६९–५७०

नान्दीश्राद्धस्य कर्तव्यता, निमित्तानि, कालश्च

**[1]वृद्धिश्राद्धं च कर्तव्यं जातकर्मादिके बुधैः ॥**

**[2]नान्दीमुखेभ्यः श्राद्धं तु पितृभ्यः कार्यमृद्धये ।**
**ततो विवाहः कर्तव्यः शुद्धः शुद्धसुतप्रदः ॥**

मरणादिना पितुरनधिकारे द्वितीयादिविवाहे वा विवाहाधिकारिणा स्वयमवश्यं स्वपितृभ्यः श्राद्धं कर्तव्यम्, 'नान्दीमुखेभ्यः...' इति ब्रह्मपुराणे श्राद्धेन विवाहस्य शुद्धत्वाभिधानेन तदभावादशुद्धत्वप्रतीतेः । अङ्गत्वादेव जीवत्पितृकेणापि जीवन्तं विहायापरमादायावश्यं वृद्धिश्राद्धं कार्यम्, 'जीवे पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् । येषां वाऽपि पिता दद्यात्तेषामेके प्रचक्षते ॥' इति हारीतवचनोत्तरार्धेन प्रधानसाङ्गताद्यर्थं श्राद्धविधानात् ।

उत. १३७

---

* विपा. श्राप्रवक्तात्पर्यम् ।

$ इतः पूर्वं श्राप्रवक्तात्पर्यको ग्रन्थः । तत्र नान्दीश्राद्धे ।

† 'वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते ।' इति ।

(१) चश्रा. २६०.

(२) उत. १३७ शुद्धसुत (शुभसुत); लता. १५.

**[१]कर्मण्यथाऽऽभ्युदयिके मङ्गल्यवति शोभने ।**
**[*]जन्मन्यथोपनयने विवाहे पुत्रकस्य च ।**
**पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ॥**

( १ ) आभ्युदयिके अभ्युदयसाधने ग्रहयागादौ, मङ्गल्यवति पुंसवनादावित्यर्थः । श्राकौ. ४९३

( २ ) आभ्युदयिकं स्वाभ्युदयार्थकर्म राज्याभिषेकनवग्रहमखमहादानादि । माङ्गल्यं गर्भाधानसीमन्तोन्नयनादि । अतिशोभने इति माङ्गल्यविशेषणम्, तेन 'ब्राह्मण्यश्च वृद्धा जीवत्पत्यो जीवत्प्रजा यद्यदुपदिशेयुस्तत्तत्कुर्युः', 'अथ खल्वूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात्' इत्याश्वलायनसूत्रानुमतस्याऽऽचारप्राप्तस्य फलवस्त्रादिभिर्गर्भिणीपूजनोत्सवादेर्विवाहाङ्गहरिद्राचन्दनादेश्च व्यावृत्तिः । श्राप्र. २९०

( ३ ) जन्मनीति । पुत्रजन्मनिमित्तकं मुख्यम्, कर्माङ्गं तु गौणम् । तच्च नान्दीश्राद्धम् । तदुभयमपि तदिति केचित्, 'कर्माङ्गं वृद्धिवत्कृतम्' इति वृद्ध्यतिदेशात् तत् तदुभयमनुक्रामति जन्मनीति । उपनयने इति तदन्तापत्यसंस्काराणामुपलक्षणम्, वेदव्रतस्नानविवाहानामभिधानात् । [*] कृभ. १७२५–१७२६

**[१]वेदव्रतेषु चाऽऽधानयज्ञपुंसवनेषु च ।**
**नवान्नभोजने स्नाने चोढायाः प्रथमार्तवे ॥**
**[२]देवारामतडागादिप्रतिष्ठासूत्सवेषु च ।**
**राजाभिषेके बालान्नभोजने वृद्धिसंज्ञकान् ।**
**नान्दीमुखान्पूज्यतमांस्तथा मातृगणानपि ॥**

( १ ) स्नाने समावर्तने ।

विपा. २६ ( भागः २ )

( २ ) आधानयज्ञेति श्रौतकर्मणाम् ( उपलक्षणम् ), पुंसवेत्यादि सौत्राणां स्त्रीसंस्काराणाम्, देवारामेत्यादि पौराणानां महादानतडागाद्युत्सर्गव्रतदेवादिप्रतिष्ठानाम् । वेदव्रतानि महानाम्न्यादीनि । नवान्नभोजने प्रथमाग्रयणे । स्नानं समावर्तनम् । उत्सवेष्विति ग्रहशान्तिविनायकस्नपनादीनां मनुयाज्ञवल्क्यादिस्मृत्युक्तानाम् ( उपलक्षणम् ) ।

न च—मात्स्ये— 'नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् । ', कर्मप्रदीपे— 'अनिष्ट्वा तु पितॄन् श्राद्धे न कुर्यात् कर्म वैदिकम् ।' इत्यादिसामान्यवचनैर्विवाहादिषु श्राद्धसिद्धेस्तेषां पुनर्वचनमुपसंहारार्थम्, तेन विशेषवाक्योपात्तेतरकर्मसु न वृद्धिश्राद्धमुचितमिति वाच्यम्, तथा सति सामान्यवाक्यवैयर्थ्यापत्तेः । यत्र हि शाखान्तरगतत्वेन वा द्वारविशेषसंबन्धप्रमाणेन वा सामान्यवाक्यमपि सार्थकं भवति तत्रैवोपसंहारः, यथा 'पुरोडाशं चतुर्धा करोति' 'आग्नेयं चतुर्धा करोति' इत्यादौ, अनारभ्याधीतसासदृश्यवाक्यादौ च । नत्विह, स्मृतिपुराणादीनां सर्वान् प्रति प्रभागत्वेन (? समानत्वेन)

---

[*] संप्रव्याख्यानं 'नाष्टकासु भवेच्छ्राद्धम्' इति कात्यायनवचने द्रष्टव्यम् ।

( १ ) अप. १।२४९ पृ. ५१५ ; श्राक. २६८–२६९ ; स्मृच. ५०३ प्रथमार्धमात्रम्, [ म्हैसूरपुस्तके ( पृ. ४४९ ) (=) मङ्गल्यवति ( माङ्गल्यवति ) पुत्रकस्य च ( पुत्रकन्ययोः ) इति पाठभेदः ] ; चश्रा. १०५–१०६ प्रथमार्धं नास्ति : १९१ मङ्गल्यवति शो ( मङ्गल्ये चातिशो ) ; चका. ४५८ मङ्गल्यवति शो ( माङ्गल्ये चातिशो ) ; प्रपा. १३ प्रथमार्धं नास्ति ; गभा. ३२ तृतीयार्धमात्रम् ; श्राकौ. ४९३ ; प्रर. १३ तृतीयार्धमात्रम् ; श्रासौ. ११९ द्वितीयार्धं नास्ति ; संप्र. १९१ प्रपावत् ; श्राप्र. २८९–२९० नाम (नेवं) शेषं चकावत् ; मुक्ता. ७५३ प्रपावत्, वसिष्ठः ; सिन्धु. १७२५–१७२६ प्रपावत् ; विपा. २६ ( भागः २ ) प्रपावत् ; बाल. १।२५० पृ. ५६९ ; पुम. २९९–३०० चकावत् : ३७९ ( = ) मङ्गल्यवति शो ( मङ्गले चातिशो ) तर्पयेत ( पूजयेत ) ; कृभ. १७२६ चकावत्, प्रथमार्धमात्रम्, ब्रह्माण्डे.

[*] शेषं श्राप्रवत् ।

( १ ) प्रपा. १३ ; सिन्धु. १७२६ चोढायाः ( ऊढायाः ) ; विपा. २६ (भागः २) चोढायाः (भार्यायाः).

( २ ) प्रपा. १३ तडागा ( तटाका ) सूत्सवे ( धुत्सवे ) के बाला ( कबाला ) ; सिन्धु. १७२६ तृतीयार्धं नास्ति ; विपा. २६ ( भागः २ ).

शाखान्तरन्यायाभावात् साक्षात्कर्माङ्गत्वेन तस्य चोभयत्रापि नाल्पीयत्वेन(?) साप्तदश्यन्यायाभावाच्च । तस्मात् केषुचित् पुनर्वचनं सामान्यवाक्यस्य प्रपञ्चमात्रं तेष्वत्यावश्यकत्वार्थं वा । अत एवाग्निहोत्रहोमवैश्वदेवादिषु केषांचिद्वृद्धिश्राद्धाचरणं केषांचित्तु नेति ।

कुभ. १७२६–१७२७

[1]**वनस्थाद्याश्रमं गच्छन्पूर्वेद्युः सद्य एव वा ।**
**पितॄन् पूर्वोक्तविधिना तर्पयेत्कर्मसिद्धये ॥**

आदिपदात् संन्यासः ।   सिन्धु. १७२६

नान्दीश्राद्धे पदार्थक्रमः

[2]**नान्दीमुखानां कर्तव्यं पितृकार्यार्थसिद्धये ।**
**सयवैश्च तथर्जुभिर्दर्भैः पूर्वामुखस्थितः ॥**

[3]**पठेत्तु शक्रसूक्तं तु स्वस्तिसूक्तं शुभं तथा ।**
**युक्तामश्रुमुखानां तु न पठेत्पितृसंहिताम् ॥**

शक्रसूक्तम् 'आशुः शिशानः' इत्यादिकं सूक्तम् । स्वस्तियुक्तं स्वस्तिशब्दयुक्तं यत्किञ्चित्सूक्तम् । शुभम् अन्यदपि पठेत्, शुभतराशीःप्रधानं किंचिदृग्यजुःप्रभृतिकं तदपि पठेत् ।   $ चश्रा. १५५३

[4]**पठेच्छकुनिसूक्तं तु स्वस्तिसूक्तं शुभं तथा ॥**

शकुनिसूक्तं 'कनिक्रदज्जनुषम्' इत्यादिकम् ।

श्राप्र. ३०४

[1]**नान्दीमुखान् पितॄन्भक्त्या साञ्जलिश्च समाह्वयेत् ।**
**पठेत्पवित्रं मन्त्रं तु विश्वे देवास आ गत ॥**

यद्यपि नान्दीमुखान् पितॄनित्युक्तेः पित्राद्यावाहन एवायं विशेषः, न देवावाहन इति प्रतिभाति, तथाऽपि 'पठेत्पवित्रं....' इत्युत्तरार्धे वैश्वदेविकावाहने विनियुक्तमन्त्रपाठविधानादुभयसाधारण्यमस्य बोध्यम् ।

संग. ८७–८८

[2]**विप्रान्प्रदक्षिणावर्तं प्राङ्मुखानुपवेशयेत् ।**
**शक्राग्नियमयात्वम्भोनिलचन्द्रशिवांशकान् ॥**

यातुः रक्षोधिपः ।   श्राप्र. ३००

[3]**समान्प्रशस्तान्सुभगान्पुष्पमालाविभूषितान् ।**
**दद्याद्दर्भासनं देवान्पितॄनुद्दिश्य तेषु च ॥**
[4]**प्रशस्ताञ्शाद्वलान्दर्भानास्तीर्य प्राङ्मुखांस्तथा ॥**
[5]**रक्षोघ्नीर्जुहुयादग्नौ समिदर्थे महौषधीः ।**
**तिलार्थं तत्र विकिरेत्प्रशस्तांश्च तथा यवान् ॥**

( १ ) रक्षोघ्नीः पलाशशङ्खिनीविष्णुक्रान्ताद्याः ।

चश्रा. १५५२

( २ ) अत्र तिलकार्ये यवविधानवत्समित्कार्ये औषधीविधानम् 'घृताक्ताः समिधो हुत्वा दक्षिणाग्राः समन्त्रकाः ।' इत्यनेन प्रकृतिश्राद्धे विहितो यः समित्साधनको होमस्तत्र रक्षोघ्न्यौषधीनां साधनत्वं विधीयत इति । रक्षोघ्न्यश्च पलाशशङ्खिनीविष्णुक्रान्ताद्याः ।

श्राप्र. ३०२–३०३

---

$ श्राप्र. चश्रानुवादः ।

( १ ) प्रपा. १३ ; सिन्धु. १७२६ ; विपा. २६ ( भागः २ ) वा ( च ).

( २ ) श्राकौ. ५०८ ; श्रासौ. १२१ पूर्वा ( पूर्व ) मत्स्यपुराणम्.

( ३ ) चश्रा. १५५३ स्वस्तिसूक्तं ( स्वस्तियुक्तं ) ; श्राप्र. ३०३ शक्र ( शाक्र ) युक्ता ( युक्त ).

( ४ ) श्राक. २६९ ; श्राकौ. ५०५ निसूक्तं तु ( नसूक्तं च ) ; श्राप्र. ३०४ प्रथमः पादः ; सिन्धु. १७५१ ; संकौ. ३०.

( १ ) श्राक. २६९ पठेत् ( पठन् ) ; चश्रा. १५५१ ; श्राप्र. ३०१ ; श्राम. ९० ; सिन्धु. १७५१ पू. ; संग. ८७ ; कुभ. १७५१ उत्त.

( २ ) चश्रा. १५४९ वर्तं ( वर्ते ) यात्वम्भो ( भान्वम्भो ) ; श्राप्र. ३०० ; सिन्धु. १७५० पू.

( ३ ) चश्रा. १५४९–१५५० माला ( माल्य ) ; श्राप्र. ३००.

( ४ ) श्राक. २६९.

( ५ ) श्राक. २६९ ; चश्रा. १५५२ पू. ; श्रासौ. १२४ पू. ; श्राप्र. ३०२ दग्नौ ( द्वहौ ).

¹सर्वं यज्ञोपवीतेन न कुर्यादपसव्यकम् ।
अन्नं दद्याच्च दैवेन तीर्थेन च जपन्स्वधाम् ॥

²कच्चित्संपन्नमेतन्मे तान्पृच्छेच्च प्रहर्षितान् ।
सुसंपन्नं च ते ब्रूयुः सर्वं सिद्धं ततः क्षिपेत् ॥

सर्वजातीयसिद्धमन्नमेकपात्रे समुद्धृत्य विकिरं कुर्यादित्यर्थः । $ चश्रा. १५५४

³स तानाह पुनः शेषं क्व देयं चान्नमित्यपि ।
इष्टेभ्यो दीयतां चैतदिति संप्रवदन्ति ते ॥

⁴प्राङ्मुखेष्वथ दर्भेषु दद्यात्क्षीरावनेजनम् ॥

( १ ) इदमवनेजनं विप्रहस्ते जलस्थाने क्षीरदानमात्रमिति । क्षीरं फलातिशयार्थमिति शूलपाणिः । श्राप्र. ३०७

( २ ) अत्र क्षीरेणावनेजनं कर्तव्यमिति श्राद्धकाशिकाकृत् । तन्न, 'अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ।' इति छन्दोगपरिशिष्टे कात्यायनेनाद्भिरेव विहितत्वात् । यत्तु क्षीरावनेजनं तच्छाखान्तरविषयम् । छन्दोगपरिशिष्टे कात्यायनेन पुनरवनेजनं पिण्डपात्रप्रक्षालनोदकेनैवाभिहितं तच्छन्दोगविषयम्, वाजसनेयिनां तु 'अथोदपात्रमादायावनेजयति' इति शतपथश्रुत्या पुनरवनेजनस्योदपात्रेणैव विहितत्वात् । संग. ८६

¹दत्त्वा नान्दीमुखेभ्यश्च प्राचीं गच्छन्
दिशं क्रमात् ॥

²शाल्यन्नं दधि मध्वक्तं बदराणि यवांस्तथा ।
मिश्रीकृत्य तु चत्वारि पिण्डाञ्छ्रीफल-
संनिभान् ।
दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो विधिपूर्वकम् ॥

( १ ) ब्रह्मपुराणे तु– 'मिश्रीकृत्वा... संनिभान् ।' इति या चतुःसंख्या सा षट्पिण्डोपलक्षणार्था । मपा. ६३४–६३५

( २ ) मध्वक्तं मधुमिश्रं दधीति मिलितमेकं तेन चत्वारीति । श्राकौ. ५२२

---

$ श्राप्र. चश्रावत् ।

( १ ) श्राक. २६९ ; चश्रा. १५५३ उत्त. ; श्रासौ. १२४ तीर्थेन च ( तीर्थेनैव ) उत्त. ; श्राप्र. ३०३ जपन् ( जपेत् ) उत्त.

( २ ) श्राक. २६९ प्रहर्षितान् ( प्रहर्षयन् ) सर्वं सिद्धं ( सर्वसिद्धिं ) ; चश्रा. १५५४ ; श्रासौ. १२४ कच्चित् ( कचित् ) पृच्छेच्च ( पृच्छेत्तु ) ; श्राप्र. ३०५ कच्चित् ( कचित् ) ; संग. ८४ सर्वं सिद्धं ततः ( सर्वसिद्धान्नतः ) उत्त.

( ३ ) श्राक. २१३ इष्टेभ्यो ( शिष्टेभ्यो ) संप्रव ( तं प्रव ) ; श्रात. ३१७ तां चैत ( तामेत ).

( ४ ) श्राक. २६९ खेष्वथ दर्भेषु (खांस्त्वथ दर्भांस्तु); चश्रा. १५५६ श्राकवत् ; श्राका. ५१५ खेष्वथ ( खस्त्वथ ) ; श्राकौ. ५२० ; श्रासौ. १२४ श्राकवत् ; श्राप्र. ३०७ खेष्वथ दर्भेषु ( खांस्त्वथ वै दर्भान् ) ; श्राम. ९० श्राकवत् ; संग. ८६ खेष्वथ दर्भेषु ( खास्त्वथ दर्भा वै ) ; कृभ. १५७४ ( प्राङ्मुखांस्त्वथ दर्भांस्तु दद्यात्क्षीरावसेचनम् । ) क्रमेण शतातपः .

( १ ) श्राक. २६९ ; श्रासौ. १२४ गच्छन् (गच्छेत्).

( २ ) श्राक. २६९ ; चश्रा. १५५४ ; मपा. ६३४ कृत्य तु चत्वारि ( कृत्वा तु चतुरः ) द्वितीयार्धमात्रम्, मूलपुस्तकपाठस्तु 'चत्वारि' इत्येव ; श्राका. ५१५ प्रथमार्धे ( शाल्यन्नं मधुसंयुक्तं बदराणि यवास्तथा । ) मिश्रीकृत्य तु ( मिश्राणि कृत्वा ) संनिभान् ( संमितान् ) तृतीयार्धं नास्ति, अङ्गिराः ; श्राकौ. ५०६ प्रथमार्धमात्रम् : ५२२ संनिभान् ( संमितान् ) विधि ( दधि ? ) ; यजुःश्रात. ५०१ तृतीयार्धमात्रम् ; श्रात. ३१४ तु ( च ) तृतीयार्धं नास्ति ; श्रासौ. १२३ प्रथमार्धमात्रम् : १२४–१२५ कृत्य तु ( कृत्वा तु ) ; श्राप्र. ३०५ कृत्य तु ( कृत्वा तु ) ; सिन्धु. १७५१ कृत्य तु चत्वारि (कृत्वा तु चतुरः) ; संकौ. ३० प्रथमार्धमात्रम्, स्मृत्यन्तरम् ; मञ्जरी. ८३ सिन्धुवत्, तृतीयार्धं नास्ति.

[1]अर्घं पुष्पं च धूपं च प्रशस्तमनुलेपनम् ।
वासश्चाप्यहतं शुद्धं देयं च सदशं समम् ॥

( १ ) समं साधारणमेकमेव, ( न ) प्रतिपिण्डं भिन्नमित्यर्थः । श्राक. २७०

( २ ) वासः वासःसूत्रमित्यर्थः । आहतवस्त्रदानं तु फलातिशयार्थम् । सममिति प्रतिपिण्डेषु तुल्यमेव वस्त्रं देयम्, न तु विषमं कार्यम् । श्राकौ. ५२२

( ३ ) अत्र दीपमित्यपि वक्तव्यम्, 'गन्धमाल्यपुष्पधूपदीपाच्छादनानां प्रदानम्' इत्याश्वलायनसूत्रितत्वात् । इदं च गन्धादिकमेकैकस्य हस्ते द्विर्द्विर्देयम्, तथा चाऽऽश्वलायनगृह्यपरिशिष्टे– 'प्रदक्षिणमुपचारो यवैस्तिलार्थः सर्वे द्विर्द्विः' इति । अत्र च सर्वे द्विर्द्विरिति वचनाद्गन्धादिपञ्चकस्यापि द्विर्द्विर्दानमित्येव प्रतीयते, 'द्विर्भुङ्क्ते' इत्यत्रेव द्विर्द्विरिति सुचः क्रियाया आवृत्तौ विहितत्वात् द्रव्यावृत्तिं विना तु क्रियावृत्तेरनुपपन्नत्वात् । तेन गन्धादिवद्वासोद्वयमपि देयम् । सममिति वस्त्रविशेषणादपि द्वित्वप्रतीतिरिति केचित् ।

श्राप्र. ३०२

[2]द्राक्षामलकमूलानि यवांश्चाथ निवेदयेत् ।
तान्येव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा ॥

( १ ) श्राक. २६९ शुद्धं ( शुग्मं ) ; चश्रा. १५५७ अर्घं ( अर्घ्यं ) वासश्चाप्य ( वासः साध्व ) सदेशं ( सदृशं ) ; श्राकौ. ५२२ अर्घं ( अर्घ्यं ) प्यहतं शुद्धं ( प्याहतं वस्त्रं ) सदशं ( सदृशं ) ; श्रासौ. १२५ उत्तरार्धे ( वासश्चाप्याहतं तत्र वस्त्रं देयं दशं समम् ॥ ) ; श्राप्र. ३०२ सदशं ( सदृशं ) ; श्राम. ९१ वासश्चाप्य ( वासः साध्व ) ; कृभ. १७५४ अर्घ ( अर्घ्यं ) शेषं श्रामवत्.

( २ ) श्राक. २६९ तान्येव (तथैव) ; चश्रा. १५५७ ; श्राका. ५१८ यवांश्चाथ ( यवान् वाऽथ ) तान्येव (तानेव) ; श्राकौ. ५२२ ; यजुःश्रात. ५०१-५०२ ; श्रात. ३१९ र्थे तु (र्थस्तु) ; श्रासौ. १२५ ; श्राप्र. ३०३ पू. : ३०९ ; श्राम. ९१ ; सिन्धु. १७५१-१७५२ श्चाथ निवेदयेत् ( श्च विनियोजयेत् ) ; संकौ. ३० सिन्धुवत्, स्मृत्यन्तरम् ; संग. ९० णार्थे तु ( णां चैव ) ; मञ्जरी. ८४ सिन्धुवत्.

( १ ) मूलम् आर्द्रकादि । श्राक. २७०

( २ ) मूलम् आर्द्रकादि निवेदयेत् श्राद्धे इत्यर्थः । तान्येवेत्यनेन द्राक्षामलकमूलानां ग्रहणम्, न तु यवस्य, पृथग्विभक्तिनिर्देशात् तानीति नपुंसकलिङ्गाच्च § । अत्र द्राक्षादीनां द्वन्द्वसमासात् समुदितानामेव दक्षिणात्वम्, न त्वेकैकस्येति । एवकारो रजतादिदक्षिणान्तरव्यावृत्त्यर्थः । द्राक्षादिदक्षिणा तु पितृपक्ष एव, पूर्ववचनान्नान्दीमुखेभ्यः पितृभ्य इत्यनुषङ्गात् । दैवे तु काञ्चनदक्षिणा स्थितैवेति । विप्रेषु सर्वदेति यदुक्तं तद्बोधयति– द्विजाभावे श्राद्धीयद्रव्यस्य जलादिप्रक्षेपपक्षेऽपि ब्राह्मणायैव दक्षिणा ( देया ), न तु जलादौ प्रक्षेप्तव्येति ।

* श्राकौ. ५२२

( ३ ) मूलमार्द्रकादि । निवेदयेत् भोजनाय दद्यात् । तानि द्राक्षामलकमूलानि । संभवे समुच्चयः, असंभवे प्रत्येकमपि दक्षिणा । श्रात. ३१९

( ४ ) अत्र यवानां तिलार्थेऽपि दानं ( ? तिलार्थे निवेदनं ) भक्षणार्थे दक्षिणार्थेऽपि ( दानं ? ) प्रसक्तम्, तद्यथायोगं भृष्टरूपेण स्वरूपेणैव वा विधेयम् । 'दधिबदराक्षतमिश्राः पिण्डाः' इत्यत्रापि अक्षता यवाः, 'अक्षताश्च यवाः प्रोक्ता भृष्टा धाना भवन्ति ते ।' इति वाक्यात् । तान्येव दक्षिणार्थमित्यत्र द्राक्षामलकादीनां दक्षिणार्थे विधानादनयौपदेशिक्या दक्षिणयाऽऽतिदेशिक्या दक्षिणाया निवृत्तिः । श्राप्र. ३०९

[1]अथाक्षय्योदकस्थाने दत्त्वा क्षीरयवोदकम् ॥

§ वस्तुतस्तु अत्र प्रमाणान्तरं मृग्यम्, छन्दोरचनानुरोधिपृथग्विभक्तिनिर्देशस्याप्रयोजकत्वात् यवानामपि परामर्शेऽपि 'नपुंसकमनपुंसकेन०' इति सूत्रेण नपुंसकत्वस्यैव साधुत्वाच्च ।

* यजुःश्रात. देवपितृपक्षयोर्दक्षिणाव्यवस्था श्राकौवत् ।

( १ ) श्राक. २६९ ; चश्रा. १५५७ यवोदकम् ( यवादिकम् ) ; श्राका. ५१५ अथा ( तथाऽ ) दत्त्वा ( दद्यात् ) : ५१७ (=) अथा ( तथाऽ ) दत्त्वा ( दद्यात् ) ; श्राकौ. ५१४ दत्त्वा ( दद्यात् ) ; श्रासौ. १२५ ; श्राम.

[1]नान्दीमुखेभ्यश्चाक्षय्यमिदमस्त्विति संजपेत् ॥
[2]प्रपितामहसंज्ञाश्च नान्दीमुख्यश्च मातरः ।
मातामह्यः पितामह्यः प्रपितामह्य एव हि ॥
[3]मातामहेभ्यश्च तथा नान्दीवक्त्रेभ्य एव च ।
प्रमातामहसंज्ञेभ्यो भवद्भिश्च स्वधोच्यताम् ॥
[4]अस्तु स्वधेति ते तं च जल्पन्ति प्रहसाः शुभम् ॥

प्रहसाः प्रकृष्टहासाः । श्राक. २७०

[5]विश्वेदेवाश्च प्रीयन्तामिति दाता ब्रवीति तान् ।
प्रीता भवन्तु ते तं च वदन्ति मधुराक्षरम् ॥

९१ चश्रावत्; संग. ९० श्राकावत्; कृभ. १७५४ चश्रावत्; मञ्जरी. ८४ क्षीर (क्षीरं).

(१) श्राक. २६९; चश्रा. १५५७; श्रासौ. १२४ जपेत् (जपन्); श्राम. ९१; कृभ. १७५४.

(२) श्राक. २६९ संज्ञाश्च (संज्ञेभ्यो) मातामह्यः पि (मातामहीपि); चश्रा. १५४३ महसंज्ञाश्च (महीपर्यन्ता) प्रपितामह्य (प्रमातामह्य): १५५८ कात्यायनः; श्राकौ. ४९२ पू.; श्रासौ. ११९ पू.: १२५ संज्ञाश्च (सर्गाश्च) एव हि (एव च); श्राप्र. ३०८ प्रपितामह्य (प्रमातामह्य) एव हि (एव च) कात्यायनः; श्राम. ९१ एव हि (एव च) कात्यायनः; पुम. ३०० महसंज्ञाश्च (महीपर्यन्ता) पू.

(३) श्राक २६९; चश्रा. १५५८ कात्यायनः; श्राका. ५१७ पू.; श्रात. ३०८ वक्त्रेभ्य (मुखेभ्य) पू.; श्रासौ. १२५; श्राप्र. ३०८ एव च (एव हि) कात्यायनः; श्राम. ९१.

(४) श्राक २७०; चश्रा. १५५८ प्रहसाः शुभम् (प्रहसन्ति च); श्रासौ. १२५ जल्पन्ति (जपन्ति); श्राप्र. ३०८ चश्रावत्, कात्यायनः; श्राम. ९१ चश्रावत्, कात्यायनः.

(५) श्राक. २७०; चश्रा. १५५८ दाता ब्रवीति तान् (दाताऽब्रवीदिमान्); श्रासौ. १२५ ब्रवीति तान् (ब्रवीति च) च वदन्ति (तु जपन्ति); श्राप्र. ३०८ कात्यायनः; श्राम. ९१ वदन्ति (वदन्तु) शेषं चश्रावत्; कृभ. १७५४ (=) वदन्ति (वदेयुः) शेषं चश्रावत्.

[1]नान्दीमुखास्तु पितरः प्रीयन्तामिति वाचयेत् ।
त्यमू षु वाजिनमिति पठंस्तांश्च विसर्जयेत् ॥
[2]अथ नान्दीमुखीभ्यश्च मातृभ्यः श्राद्धमुत्तमम् ।
अनेन विधिना कार्यं सीमन्तोन्नयनादिषु ॥

साग्निककर्तृकनान्दीश्राद्धे पिण्डदानावश्यकत्वम्

[3]योऽग्नौ तु विद्यमानेऽपि वृद्धौ पिण्डान्न निर्वपेत् ।
पतन्ति पितरस्तस्य नरके स च पच्यते ॥

अत्र निन्दयाऽऽवश्यकत्वद्योतनेन तस्य काम्यकर्माङ्ग-वृद्धिश्राद्धविषयत्वम्, तत्रैव सकलाङ्गोपसंहारनियमात्, अन्यथा फलानुत्पत्तेश्च । बाल. १।२५० पृ. ५६९

नान्दीश्राद्धस्य तीर्थयात्राङ्गत्वेन आदावन्ते च कर्तव्यता

[4]यो यः कश्चित्तीर्थयात्रां तु गच्छेत्
सुसंयतः स च पूर्वं स्वगेहे ।
कृतोपवासः शुचिरप्रमत्तः
संपूजयेद्भक्तिनम्रो गणेशम् ॥

(१) श्राक. २७० त्यमू षु (तमू षु) उत्त.; चश्रा. १५५८ त्यमू षु (चमू षु); यजुःश्रात. ५०० (तु०) पू.; श्रासौ. १२५; श्राप्र. ३०८ कात्यायनः; श्राम. ९१; सिन्धु. १७५४ पठंस्तांश्च (विप्रांश्च) कात्यायनः; कृभ. १७५४ (=) मुखास्तु (मुखाश्च) पू.; मञ्जरी. ८४ पठंस्तांश्च (विप्रांश्चैव) कात्यायनः.

(२) श्राक. २७०; चश्रा. १५५९; श्राका. ५१७ पू.; पुम. ३०० पू.

(३) चश्रा. १५५६ च (तु); श्राका. ५१५ (=) मानेऽपि (माने हि) च (तु); श्राप्र. ३०६; श्राम. ९० च (तु); सिन्धु. १७५३; बाल. १।२५० पृ. ५६९ च (तु) स्मृत्यन्तरम्; मञ्जरी. ८० योऽग्नौ (अग्नौ) मानेऽपि (माने यो) च (तु).

(४) निप्र. ५३४ (भागः २); श्रात. ३२४ स्वगेहे (गृहे स्वे).

[1]देवान्पितॄन्ब्राह्मणांश्चैव साधून्
धीमान्पितॄन्वित्तशक्त्या प्रयत्नात्।
प्रत्यागतश्चापि पुनस्तथैव
देवान्पितॄन्ब्राह्मणान्पूजयेच्च ॥

[2]एवं कुर्वतस्तस्य तीर्थाद्यदुक्तं
फलं तत्स्यान्नात्र संदेह एव ॥

(१) अत्र उक्तफलकामनया तीर्थयात्रां संकल्प्य स्वगृहे कृतोपवासो गणेशं पूजयेत्। ततोऽभीष्टदेवं पूजयित्वा श्राद्धं( ? श्राद्धे ) ब्राह्मणानां पूजनम्। 'पितॄन्वित्तशक्त्या' इत्यनेन धनवता बहुव्ययेन श्राद्धं कार्यमित्युक्तम्। प्रत्यागत्य पुनर्देवब्राह्मणपूजनं श्राद्धं च। एतावत्तीर्थयात्राङ्गं नित्यम्। यस्य तु प्रत्यागमनं नास्ति, ततः प्रभृति तीर्थ एव वासः, तस्य प्रत्यागतदेवपूजाद्यभावः। निप्र. ५३५ ( भागः २ )

(२) एवं सुसंयतः पूर्वदिने कृतैकभक्तादिनियमस्तदुत्तरदिने कृतोपवासस्तदुत्तरदिने गणेशं ग्रहानिष्टदेवतां च संपूज्य वृद्धिश्राद्धं कृत्वा ब्राह्मणान् भोजयेत्। ततः शुभलग्ने यात्रां कुर्यादिति। 'तीर्थयात्रां तु गच्छेत्' इति उपक्रम्य( ? उपक्रमात् ) उपवासदिने मुण्डनमपि, 'प्रयागे तीर्थयात्रायां पितृमातृवियोगतः। कचानां वपनं कुर्याद्वृथा न विकचो भवेत् ॥' इति विष्णुपुराणात्। प्रवेशेऽपि श्राद्धकरणे तीर्थयात्रायामिति वक्तव्यम्, 'गच्छन् देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा। यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः ॥' इति भविष्यपुराणादिति गङ्गावाक्यावली। वस्तुतस्तु तीर्थप्रत्यागमनोत्तरस्वगृहप्रवेशो इत्येव वक्तव्यम्, यात्राप्रत्यागमनोत्तरस्वगृहप्रवेशयोर्भेदात्। तीर्थप्रत्यागमनोत्तरलाभस्तु 'प्रत्यागतश्चापि' इति प्रागुक्तेः। ततः 'प्रवेशे च' इति चकारेण श्राद्धमात्रं सूचितम्, न तु तस्य यात्रार्थत्वमपीति। श्रात. ३२४

(१) निप्र. ५३५ ( भागः २ ) श्चापि ( श्चाथ ) स्तथैव ( स्तथास्तु ) येच्च ( येतु ); श्रात. ३२४ पितॄन्वित्त ( प्रीणयन् वित्त ). (२) श्रात. ३२४.

पितृप्रकारः

[1]अमूर्ता मूर्तिमन्तश्च पितरो द्विविधाः स्मृताः।
नान्दीमुखास्त्वमूर्तास्तु मूर्तिमन्तोऽथ पार्वणाः ॥

## वराहपुराणम्

नान्दीश्राद्धदेवतानां नान्दीमुखसंज्ञा

[2]ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः।
वृद्धिश्राद्धेषु सततं पूज्याः श्रुतिविधानतः ॥

(१) एते दिव्यपितरः। मात्रादयश्च मनुष्यपितरः प्राधान्येनोद्देश्याः, नान्दीमुखाश्च तदभेददृष्टिविषया उद्देश्यस्वरूपेऽन्तर्भावनीयाः इति पूर्वमेव पूर्वोत्तरपक्षप्रपञ्चनेन निर्णीतम्। अत्र 'नान्दीमुखानां पितॄणामिदमासनम्' 'नान्दीमुखान् पितॄनावाहयिष्ये' इत्येवमादिभिर्वाक्यैः प्रयोगो विधेयः। एवमेव च कात्यायनीयं प्रयोगवचनम्— 'नान्दीमुखान् पितॄनावाहयिष्ये इति पृच्छति। नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने। नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च' इति। 'निषेककर्माङ्गाभ्युदयिकेऽप्येत एव पितरो देवताः, काले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥' इति वचनेन वृद्धिश्राद्धधर्मातिदेशात्। तदेवमत्र मातृपितामहीप्रपितामहीनां पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्धप्रमातामहानां च वृद्धिश्राद्धदेवतात्वे स्थिते 'वृद्धौ नान्दीमुखान् पितॄन् यजेत...' इत्यादिषु त एव नान्दीमुखशब्दाभिधेयत्वेन विवक्षिताः। $ चश्रा. १०६–१०७

(२) विश्वेदेवादयोऽत्र नान्दीमुखा इति विशेषणीया इत्युक्तं हेमाद्रौ— 'ऊर्ध्ववक्त्रा... संज्ञकाः।' इति। विपा. ३१ ( भागः २ )

$ प्रपा. चश्रानुवादः। श्राम., कुभ., मञ्जरी. चश्रागतम्।

(१) चश्रा. ४५.

(२) चश्रा. ५८ : ७१ संज्ञिताः ( संज्ञिकाः ) : १०६ (=) पू.; प्रपा. ३५ संज्ञिताः ( संज्ञकाः ) पू., हेमाद्रौ; श्राम. ८८ (=) पू.; विपा. ३१ (भागः २) प्रपावत्, पू., हेमाद्रौ; पुम. ३०० पू.; कुभ. १७३० (=) पू.; मञ्जरी. ८१ पू., हेमाद्रौ.

## कूर्मपुराणम्

नान्दीश्राद्धस्य तीर्थयात्राङ्गत्वेनाऽऽदावन्ते च कर्तव्यता

**[1]तीर्थयात्रासमारम्भे तीर्थात्प्रत्यागमेऽपि च ।
वृद्धिश्राद्धं प्रकुर्वीत बहुसर्पिःसमन्वितम् ॥**

नान्दीश्राद्धे श्राद्धत्रयक्रमः

**[2]मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥**

नान्दीश्राद्धे विशेषधर्माः

**[3]दैववत्सर्वमेव स्यान्न वै कार्यास्तिलैः क्रियाः ।
दर्भाश्च ऋजवः कार्या युग्मान्वै भोजयेद्द्विजान् ।
दैवपूर्वं प्रदद्याद्धि न कुर्यादप्रदक्षिणम् ॥**

## भविष्यपुराणम्

वृद्धिनिमित्तकस्य वृद्धिश्राद्धसंज्ञा

**[4]वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ।
सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिना ॥**

वृद्धिः पुत्रजन्मादिः । $ श्राक. ७

नान्दीश्राद्धस्य पारिभाषिकं कर्माङ्गत्वम्

**[5]निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ॥**

---

$ मपा., मर., श्राप्र., लता., श्राकवत् ।

(१) श्रात. ३२४.

(२) मर. १६९ कूर्मपुराणशातातपयोः.

(३) चश्रा. १५४७.

(४) श्राक. ६ ; चश्रा. १५४६ ह्णे तूप (ह्ण उप) उत्त. ; मपा. ४७६ तूप (चोप) ; मर. १२१ ; श्रासौ. ४ (=) चश्रावत् ; श्राप्र. २४ पू. ; लता. ७ ; संकौ. २५ चश्रावत्, उत्त.

(५) श्राक. ७ ; स्मृसा. ९४, १०७ (=) ज्ञेयं (इष्टौ) मेव च (मिष्यते) ; मपा. ४७६–४७७ ; मर. १२२ ; गप. ४७५ ; श्राकौ. ४८४ सोमे (होमे) मेव च (मिष्यते) : ५२४ (=) प्रथमः पादः ; श्रात. ३२१ ; संत. ९०९ ; श्राप्र. २३ ; लता. ७ ; आन. १४५ उत्तरार्धे (ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥) ; संदी. ६४ स्मृसावत्.

(१) 'निषेककाले सोमे च' इत्यादि श्रौतस्मार्तकर्मोपलक्षणम् । श्राक. ८

(२) 'निषेककाले......' इति वाक्याद्विवाहाङ्गता नास्त्येवाऽऽभ्युदयिकस्य, अनधिकारे च नैमित्तिकाकरणे विहिताकरणदोषोऽपि नास्ति ।

स्मृसा. ९४

(३) 'निषेककाले' इत्यादि श्रौतस्मार्तकर्मोपलक्षणम् । एतच्च वृद्धिश्राद्धवत्कर्तव्यम्, 'कर्माङ्गं वृद्धिवत्कृतम्' इति पारस्करेणाभिधानात् । कर्माङ्गसंज्ञाकरणमकरणे कर्मवैगुण्यद्योतनार्थम् । ¶ मपा. ४७८

(४) निषेककाले गर्भाधानदिने । होमे चेति चकारादग्निष्टोमादिसकलयज्ञानां ग्रहणम्, तथा च मत्स्यपुराणे– 'यज्ञोद्वाहादिमङ्गले' इति । पुंसवने चेति चकारात् गृह्योक्तसकलकर्मणां ग्रहणम् । अत्र केचित्– निषेककाले इति सामगेतरपरम्, 'विवाहादिः कर्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते । विवाहादावेकमेवात्र कुर्याच्छ्राद्धं नाऽऽदौ कर्मणः कर्मणः स्यात् ॥' इति परिशिष्टवचने अन्तशब्दस्यावयवार्थत्वेन विवाहादिषु गर्भाधाना(न्ता)वयवेषु कर्मसु एकमेव विवाहकाले श्राद्धम्, न प्रतिकर्मादाविति निषेधस्य सामगमात्रपरत्वोपसंहारात्, अन्यथा वचनद्वयविरोधात् । ततश्च सामगानां गर्भाधाने श्राद्धं नास्तीत्याहुः । तन्मन्दम्, 'निषेककाले' इति वचनस्य सामगेतरपरतया संकोचे प्रमाणाभावात्, परिशिष्टवचने 'दशाहान्ते पुनः क्रिया' इतिवदन्तशब्दस्य समीपार्थतयैवोपपत्तेः । अन्यथा परिशिष्टवचनस्य सामगमात्रपरत्वे विवाहगर्भाधानयोर्मध्यपठितेषु चतुर्थीहोमादिषु सामगेतरेषां श्राद्धनिषेधः कुतो लभ्यत इति । तस्मात्सर्वशाखिभिरेव गर्भाधाने श्राद्धं कार्यम् । श्राद्धचिन्तामणिमतमप्येतत्, श्राद्धविवेककरसोऽप्यत्रेति । एतच्च कर्माङ्गश्राद्धं कर्मादौ कार्यम्, 'यच्छ्राद्धं कर्मणामादौ' इति गृह्यपरिशिष्टवचनात्,

---

¶ मर. मपागतम् ।

'श्राद्धं नाऽऽदौ कर्मणः कर्मणः स्यात्' इति प्रागुक्त-परिशिष्टवचनाच्च । श्राकौ. ४८४–४८५

(५) निषेककाले गर्भार्थशुक्राधानदिने ।

श्रात. ३२१

(६) अत्र सोमशब्दः आधानाग्निहोत्रादिकर्मणा-मुपलक्षणार्थः । अत एव आधानाग्निहोत्रप्रथमारम्भे दर्श-पूर्णमासपशुचातुर्मास्यादीनां नित्यानां (च) प्रथमारम्भे नान्दी कार्येत्यवगम्यते । आन. १४५

(७) इदं च श्राद्धं क्वचिदङ्गम् । तदुक्तं भविष्य-पुराणे– निषेककाले इति । संदी. ६४

नान्दीश्राद्धफलम्

[1]तस्य पुष्टिरथैश्वर्यमायुः संततिरेव च ।
यदि विभ्राजते लक्ष्म्या मोक्षं च लभते क्रमात् ॥

नान्दीश्राद्धधर्माः

[2]ऋजवः कुतपा देया न भङ्क्त्वा विधिवत्खग ॥
[3]कृत्वा यवैस्तिलार्थं तु दद्यादर्घ्यं तथैव च ।
गन्धधूपादिकं सर्वं कुर्याद्वीर प्रदक्षिणम् ॥
[4]पूर्वाग्रांस्तु कुशान्दद्यात्सव्येनैव हि बुद्धिमान् ॥

कुतपा दर्भाः । सव्यं सव्यस्कन्धस्थितं यज्ञोपवीतम् ।
पृ. १५४७

एतच्च गन्धादिकमेकैकस्य हस्ते द्विर्द्विः प्रदेयम् । तथा चाऽऽश्वलायनगृह्यपरिशिष्टे– 'प्रदक्षिणमुपचारो यवैस्तिलार्थः सर्वं द्विर्द्विः' इति । चश्रा. १५५२

नान्दीश्राद्धे पदार्थक्रमः

[5]पूर्वाह्णे भोजयेद्विप्रानष्टौ सर्वं प्रदक्षिणम् ।
तथा च नवमं विप्रं चतुरस्रे खगोत्तम ॥

(१) भविष्यत्पुराणे तु नवमोऽप्युक्तः पूर्वाह्णे इति । चतुरस्रे मण्डले चरणक्षालने क्रियमाणे यः कश्चि-दतिथिरागच्छेत् स नवमोऽपि तत्र भोजनीय इत्यर्थः ।
$ चश्रा. १५४४

(२) विप्राणां चरणक्षालनार्थं गोमयेन क्रियमाणे चतुरस्रे मण्डले तत्काले यः कश्चिदतिथिरागच्छेत् स नवमोऽपि भोजनीय इत्यर्थः । श्राप्र. २९८

(३) चरणक्षालनकाले समागतातिथिं क्षालनचतु-रस्रदेशे भोजयेदित्येतदर्थमेतदिति हेमाद्रिः । संकौ. २५

[1]भोजयेच्च द्विजानष्टौ मातृश्राद्धे खगेश्वर ।
नवमं सर्वदेवत्यं भोजयेद्द्विजमागतम् ॥

सति संभवे चैतद्देदितव्यम् । असंभवे त्वेकैकस्मिन् वर्गे द्वौ द्वावपि भोजनीयौ । ‡ चश्रा. १५४३

[2]सर्वादौ दक्षिणे देवा मातॄणां च तदुत्तरे ।
पित्रादीनामुदक्तस्मात्ततो मातामहद्विजाः ॥

अत्र दक्षिणशब्दो दक्षिणदिग्वाचकः, उदक्शब्द-सांनिध्यात् । श्राकौ. ५०९

[3]प्राङ्मुखांश्चतुरश्चैव चतुरश्च उदङ्मुखान् ।
निवेश्य ऋजुभिर्दर्भैर्दद्यादासनमादरात् ॥
[4]नान्दीमुखान्समुद्दिश्य पितॄन्पश्च द्विजोत्तमान् ।
भोजयेद्विधिवत्प्राज्ञो वृद्धिश्राद्धे प्रदक्षिणम् ॥

(१) पक्षान्तरमप्युक्तं तत्रैव– नान्दीमुखानिति ।
चश्रा. १५४५

(२) अशक्तं प्रति पक्षान्तरं तत्रैव– नान्दीमुखा-निति । अष्टानां स्थाने चत्वारः, एकोऽतिथिः पूर्ववदधिक इत्यर्थः । संकौ. २५

---

(१) चश्रा. १५४६. (२) चश्रा. १५४७.
(३) चश्रा. १५४७ कृत्वा य (कुर्याध) : १५५१ तथैव च (विधानतः) ; श्राप्र. ३०१ र्घ्यं तथैव च (र्घं विधानतः) धूपा (पुष्पा). (४) चश्रा. १५४७.
(५) चश्रा. १५४४ ; श्राप्र. २९८ तथा च (तथैव) ; श्राम. ८९ खगोत्तम (खगेश्वर) ; संकौ. २५ ; कृभ. १७४९ श्रामवत्.

$ श्राम., कृभ. चश्रागतम् ।
‡ श्राप्र. चश्रावत् ।
(१) चश्रा. १५४३ ; श्राप्र. २९७ पू.
(२) श्राकौ. ५०९.
(३) चश्रा. १५४९ ; श्राप्र. २९९ ; श्राम. ९० पू. ; संग. ७८ ; कृभ. १७५० पू.
(४) चश्रा. १५४५ ; श्राप्र. ३१५ ; श्राम. ८९ प्राज्ञो (प्राज्ञ) ; संकौ. २५ प्राज्ञो (प्राज्ञ) चतुर्थपादो नास्ति.

[1]कृत्वा मण्डलकं वीर चतुरस्रं प्रदक्षिणम् ।
पूर्वाग्रांस्तु कुशान्कृत्वा पुष्पाणां प्रकरं तथा ।
भोजयेद्वो द्विजान्वीर गन्धपुष्पविभूषितान् ॥

[2]पृषदाज्येन संयुक्तं दद्यादोदनमादितः ।
पायसं च तथा भव्यं मोदकादिरसोत्तरम् ॥

[3]मधुरं भोजनं दद्यान्न चाम्लं परिवेषयेत् ॥

(१) कृते चाग्नौकरणे द्विजपात्रेषु परिवेषणं कर्तव्यम् । तत्र परिवेषणीयमन्नमुक्तं भविष्यत्पुराणे पृषदाज्येनेति । चश्रा. १५५२

(२) दधिमिश्रमाज्यं पृषदाज्यम् । श्राम. ९०

[4]रक्तपुष्पं तिलांश्चैव ह्यपसव्यं च वर्जयेत् ॥

पार्वणे जलोद्भवानि रक्तपुष्पाणि विहितानि, तदितररक्तपुष्पाणि प्रतिषिद्धानि । इह जलोद्भवरक्तपुष्पस्यापि प्रतिषेधार्थं रक्तपुष्पग्रहणम् । केन तर्हि तिलकार्यं कर्तव्यमित्यपेक्षिते कात्यायनः— 'यवैस्तिलार्थः' इति । * स्मृच. ४९९

[5]ब्राह्मणेभ्यस्ततो दद्याद्भोजनं मधुरं खग ।
गुडमिश्रं सितायुक्तं जवं चोदनो(? साज्यं चैवोदनो )त्तरम् ।
सरसान्मोदकांश्चैव न चाम्लकटुकांस्तथा ॥

* चश्रा., बाल. स्मृचवत् ।

(१) चश्रा. १५४९.

(२) चश्रा. १५५२; श्राप्र. ३०३ दद्या (दध्या) तथा (यथा); श्राम. ९०; कृभ. १७५३ भव्यं (मध्यं).

(३) स्मृच. ४९९; चश्रा. १५५२; प्रपा. १९ चाम्लं (चान्नं); श्राप्र. ३०३; श्राम. ९०; बाल. १।२५० पृ. ५६८; कृभ. १७५३.

(४) स्मृच. ४९९ पुष्पं ति (पुष्पति); चश्रा. १५४८ ह्यप (अप); प्रपा. १९ तिलांश्चैव (तिलाश्चैव) ह्यप (अप); श्राप्र. ३०२ ह्यप (अप) शेषं स्मृचवत्; बाल. १।२५० पृ. ५६८ ह्यप (अप) च वर्जे (विसर्जे).

(५) श्राका. ५१८.

[1]एवं भुक्तेषु विप्रेषु दद्यात्पिण्डान्समाहितः ।
दध्यक्षतैर्विमिश्रांस्तु बदरैश्च खगाधिप ॥

. अक्षता यवाः, 'अक्षताश्च यवाः' इति कोशात् । श्राप्र. ३०५

[2]सव्येन पाणिना वीर विधिवत्खगसत्तम ।
मात्रे प्रमात्रे तन्मात्रे निर्वपेत्पूर्वतोमुखम् ॥

[3]पितृमात्रे तु तन्मात्रे निर्वपेद्विधिवत्खग ।
वृद्धायै प्रपितामह्यै तथाऽन्ते निर्वपेत्खग ।
एवमुद्दिश्य वै मातृः श्राद्धपिण्डांश्च निर्वपेत् ॥

[4]दधिबदराक्षताद्यांश्च पिण्डान्सव्येन भारत ।
निर्वपेन्मण्डले वीर चतुरस्रे विचक्षणः ॥

पिण्डार्थं गोमयादिना चतुरस्रं मण्डलं कर्तव्यमिति भविष्यत्पुराणे— 'निर्वपेत् ......' । श्राप्र. ३०६

[5]पवित्रपाणिराचान्त उपविष्टः समाहितः ।
प्रदद्यात्प्राङ्मुखः पिण्डान् वृद्धौ सव्येन वाग्यतः ॥

[6]पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप ।
वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु ॥

(१) चश्रा. १५५४; श्राप्र. ३०५.

(२) चश्रा. १५४२.

(३) चश्रा. १५४३.

(४) चश्रा. १५५५; श्राप्र. ३०६ उत्त.

(५) चश्रा. १५५५; श्राप्र. ३०६ पू.

(६) अप. १।२४९ पृ. ५२० चतुर्थपादे (लोके धर्ममपेक्ष्यते); स्मृच. ५००; चश्रा. १५५५ न्न वा (न्नैव) धर्मान (धर्मम) तु (वै); पमा. ७८४; मपा. ६३६ नवेक्ष्य (घपेक्ष्य)); प्रपा. १९ निर्वप (निर्वाप) वेक्ष्य (पेक्ष्य); मर. १७१ निर्वप (निर्वाप); श्राका. ५१५ पू.; गभा. ३२; श्रात. ३२१ (पिण्डनिर्वापणं कुर्यान्न वा कुर्याद्विचक्षणः । वृद्धिश्राद्धे कुलाचाराद्देशकालाद्यपेक्षया ॥); प्रर. १३; श्राप्र. ३०६ तु (वै); मुक्ता. ७५६ मरवत्; श्राम. ९० बाहो (राज) धर्मान (धर्मम) तु (वै); संम. ६; सिन्धु. १७५२ नराधिप (द्विचक्षणः);

**[१]अग्नौकरणमर्घ्यं चाऽऽवाहनं चावनेजनम् ।**
**पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्जयेत् ॥**

(१) भविष्यपुराणे तु पिण्डदानमत्र वैकल्पिकमित्युक्तम्— पिण्डेति । कुलधर्मानवेक्ष्येत्यभिधानाद्येषां कुले पिण्डदानादिविप्रविसर्जनान्तस्य कर्मकलापस्यानुष्ठानं तेषां विप्रभोजनान्तमेव वृद्धिश्राद्धं कार्यम् । विप्रविसर्जनान्तपक्षेऽपि पितृभ्यो वरयाचनमन्त्रात् 'दातारः' इत्यादेः पूर्वं मातृभ्यो वरयाचनमन्त्रोऽत्र प्रयोज्यः । एतदपि तत्रैवोक्तम्— 'माता पितामही चैव तथैव प्रपितामही । एता भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम् ॥' इति । स्मृच. ५००

(२) पिण्डदानकरणाकरणयोर्व्यवस्थोक्ता भविष्यपुराणे—पिण्डेति । अनेन येषां कुले वृद्धपरम्परया वृद्धिश्राद्धे पिण्डदानमनुष्ठीयते तैः कर्तव्यम्, येषां तु कुले नानुष्ठीयते तैर्न कर्तव्यमिति व्यवस्था दर्शिता । इयं च व्यवस्था निरग्निकानामेव च । साग्निकैस्तु सर्वदा कर्तव्यमेवेत्युक्तमाद्ये ब्रह्मपुराणे— 'योऽग्नौ तु विद्यमानेऽपि वृद्धौ पिण्डान्न निर्वपेत् । पतन्ति पितरस्तस्य नरके स तु पच्यते ॥' । † चश्रा. १५५५–१५५६

(३) पिण्डनिर्वपणमित्युपलक्षणम् । अतो यत्कुले यावतीतिकर्तव्यता वृद्धिश्राद्धे तावत्येव कर्तव्या, नाधिकेत्यर्थः । मपा. ६३६

(४) पिण्डदाने कुलदेशाचारतो व्यवस्था । गभा. ३२

(५) अत्र साग्निकनिरग्निककृतो विकल्पः ।...... यद्वा कुलधर्मापेक्षया उभयोरप्यैच्छिको विकल्प इति स्मृतिरत्नावली । बाल. १।२५० पृ. ५६९

(६) वृद्धिश्राद्धे विकल्पेन पिण्डदाने मिताक्षरायाम् ('वृद्धिश्राद्धे विकल्पेन पिण्डदानं बुधैः स्मृतम् ।') अभिहितं वचनं तदन्यशाखाविषयम् । वाजसनेयिनां सर्वेषां सपिण्डकमेवाऽऽभ्युदयिकं श्राद्धं भवति स्वसूत्रानुरूपम् । पृ. ८७

'सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदम् । पञ्चैतान्विस्तरो हन्ति तस्मान्नेतत्सविस्तरम् ॥' इत्यादिवाक्यदर्शनात्पूर्वाह्णादिषु मुहूर्तकर्तव्येऽनल्पकर्मकलापादि(? कर्मलोपादि)भयादासन्नफलमूलादिभिर्यथालाभं संक्षिप्तमपि श्राद्धमाचार्या मन्यन्ते । तच्च पिण्डादिवर्जितं कर्तव्यम् । यथा भविष्यपुराणे— 'पिण्डनिर्वपणं ...' इति । अतश्च अग्नौकरणादीनामपि निषेधः । $ संग. ९०

**[१]माता पितामही चैव तथैव प्रपितामही ।**
**एता भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम् ॥**

**[२]पिता पितामहश्चैव तथैव प्रपितामहः ।**
**मातामहस्तत्पिता च प्रमातामहकादयः ।**
**एते भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम् ॥**

---

† श्राप्र. चश्रावत् ।

विपा. ३४ (भागः २) पू.; संकौ. ३०; आन. १४५ मरवत्, पू.; प्रका. ३३; बाल. १।२५० पृ. ५६९ न्नराधिप (द्विचक्षणः) धर्मान (धर्मम) तु (च): ५७९; संग. ७५, ९० न्नराधिप (द्विचक्षणः) उत्तरार्धे (वृद्धिश्राद्धे कुलाचारदेशकालाद्यवेक्ष्य हि ॥): ८७ धर्मान (धर्मम) तु (वै); संव. ४५; संदी. ६३ संग. पृ. ७५ वत्, मार्कण्डेयपुराणे.

(१) श्रात. ३२१; सिन्धु. १७५२ चाऽऽवा (वाऽऽवा) विवर्जयेत् (विवर्तते), छागलेयः; संग. ९० (वाऽऽवा) विवर्जयेत् (निवर्तते); संदी. ६४ चाऽऽवाहनं चाव (च आवाहनाव) मार्कण्डेयपुराणे.

$ शेषं चश्रागतम् ।

(१) स्मृच. ५००; चश्रा. १५५९; प्रपा. १९ पू., चन्द्रिकायाम्; श्राम. ९१; प्रका. ४७ पू.; बाल. १।२५० पृ. ५७० भविष्यत्पुराणे सुमन्तुः; कुभ. १७५४ पू.; मञ्जरी. ९३ (=) पू.

(२) प्रपा. १९ चन्द्रिकायाम्; श्राम. ९१ कादयः (कस्तथा); प्रका. ४७; कुभ. १७५४–१७५५; मञ्जरी. ९३ (=) मे प्रीताः (सुप्रीताः).

(१) अत्र 'दातारः' इत्यादिप्रार्थनाश्लोकान् पूर्वं प्रयोज्य श्लोकान्तरमुक्तं भविष्यत्पुराणे— मातेति।

चश्रा. १५५९

(२) 'दातारः' इति प्रार्थनातः पूर्वप्रयोज्यं श्लोकान्तरमुक्तं भविष्यत्पुराणे— मातेति।

* श्राम. ९१

जीवत्पितृककर्तृकनान्दीश्राद्धे द्वयोर्देवतात्वम्

[1]जीवमाने न देयं स्याद्यस्माद्द्विजसत्तम।
तस्माज्जीवत्पिता कुर्याद्द्वाभ्यामेव न संशयः॥

'जीवमाने...' इति भविष्यत्पुराणं पित्रादीनां त्रयाणां मध्ये पितुः सत्त्वात् तत्त्रिकान्तर्गताभ्यां द्वाभ्यामेव देयम्, न पितुरपीत्येवंपरम्, नाधिकव्यवच्छेदकम्।

बाल. १।२५० पृ. ५७६

## भविष्योत्तरपुराणम्

नान्दीश्राद्धे विशेषधर्माः

[2]वृद्धिश्राद्धं दैविकं च कार्यं यज्ञोपवीतिना।
प्रदक्षिणं प्राङ्मुखेषु युग्मेषु च यवैस्तथा॥

नान्दीश्राद्धस्योपाकर्मणि कर्तव्यता

[3]कुर्वीत ब्राह्मणः श्राद्धं वेदानुद्दिश्य शक्तितः॥

अन्नाद्यसंभवे हेम्ना नान्दीश्राद्धम्

[4]अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं संग्रहे च तथा स्त्रीशूद्रयोरपि॥

## बृहन्नारदीयपुराणम्

पुत्रजन्मनिमित्तकनान्दीश्राद्धस्यान्नातिरिक्तहविषा कर्तव्यता

[1]जाते पुत्रे पिता स्नात्वा सचैलं जातकर्म तु।
कुर्याच्च नान्दीश्राद्धं वै स्वस्तिवाचनपूर्वकम्॥
हेम्नाऽथवा तु धान्यैर्वा नान्दीश्राद्धं प्रकल्पयेत्।
अन्नेन कारयेद्यस्तु स चाण्डालसमो भवेत्॥

हेमाद्रौ संवर्तस्तु हेम्नैवाऽऽह— 'पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान्। न पक्वेन न चाऽऽमेन कल्याणान्यभिकामयन्॥' इति। पुरुषार्थे जातश्राद्धे आमहेम्नोर्विकल्पः। जातकर्माङ्गश्राद्धे(? द्धं) तु हेम्नैवेत्यविरोधः।

संर. ८३१

नान्दीश्राद्धे तिलतर्पणनिषेधः

[2]वृद्धिश्राद्धे सपिण्डे च प्रेतश्राद्धे च मासिके।
संवत्सरविमोके च न कुर्यात्तिलतर्पणम्॥

## देवीपुराणम्

नान्दीश्राद्धस्य नित्यत्वम्

[3]अष्टकामाघ्यभ्युदयास्तीर्थयात्रोपपत्तयः।
पितॄणामतिरेकोऽयं मासिकान्नाद्ध्रुवः स्मृतः॥

आभ्युदयिकं नित्यं काम्यं च, दर्शपौर्णमासवत्। देवीपुराणम्— अष्टकेति। मासिकान्नादमावास्याश्राद्धादतिरेकोऽष्टकादिश्राद्धगणो ध्रुव आवश्यकः। विष्णुः— 'आदित्यसंक्रमणं विषुवद्वयं विशेषेणायनद्वयं व्यतीपातो जन्मर्क्षमभ्युदयः। एतांस्तु श्राद्धकालान्वै काम्यानाह प्रजापतिः। श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते॥'। एतच्च संयोगपृथक्त्वन्यायादविरुद्धम्।

श्रात. ३१९

---

* क्रम. श्रामवत्।

(१) लता. १५-१६; सिन्धु. १७५६ उत्त.; विपा. ८१७ (भागः २); संकौ. २८; बाल. १।२५० पृ. ५७६.

(२) चश्रा. १५४७.

(३) चका. ४०२; मपा. ८७; प्रपा. २५०; विपा. ५१५ वेदा (देवा); पुम. २८७ ब्राह्मणः श्राद्धं (ब्राह्मणैः सार्धं) पुमपाठे एतद्वचनं न नान्दीश्राद्धविषयम्.

(४) चश्रा. १५३१.

(१) संर. ८३१.

(२) श्राप्र. ३१५; लता. १३२ श्राद्धे च मा (श्राद्धेऽनुमा); सिन्धु. १७१६-१७१७ सपिण्डे (सपिण्ड्यां) शेषं लतावत्; संर. १०५५ लतावत्.

(३) श्रात. ३१९.

## आदित्यपुराणम्

जातश्राद्धे पक्वान्नदाननिषेधः

[१]आमद्रव्येण हेम्ना वा पितॄणां श्राद्धमाचरेत् ॥
[२]जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ।
यस्माच्चान्द्रायणाच्छुद्धिस्तेषां भवति नान्यथा ॥

## पुराणसमुच्चये

नान्दीश्राद्धे विशेषधर्माः

[३]न स्वधा शर्म वर्मेति पितृनाम न चोच्चरेत् ।
न कर्म पितृतीर्थेन न कुशा द्विगुणीकृताः ॥
[४]न तिलैर्नापसव्येन पित्र्यमन्त्रविवर्जितम् ।
असच्छब्दं न कुर्वीत श्राद्धे नान्दीमुखे क्वचित् ॥

( १ ) अतश्च नान्दीमुख पितः अमुकगोत्र इत्यादिप्रयोगः । अन्ये तु पार्वणवत् नामशर्मादिकमपि प्रयुञ्जते तन्निषेधदर्शनात् कथमिति वाच्यम्, पार्वणवदित्यतिदेशाद्वा तद्विधिः । श्राका. ५१८

( २ ) अत्र 'पितृनाम न चोच्चरेत्' 'असच्छब्दं न कुर्वीत' इति शाखान्तरविषयम् । संग. ८४

( ३ ) अत्र 'पितृनाम न चोच्चरेत्' 'असच्छब्दं न कुर्वीत' इति शाखान्तरविषयम्, स्वशाखायाम् 'न स्वधां प्रयुञ्जीत' इति स्वधाशब्दमात्रनिषेधस्योपलम्भात्, 'गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत् ।' इति नान्दीश्राद्धे गोत्रनामोच्चारणस्य छन्दोगपरिशिष्टे कात्यायनेन स्पष्टं विधानाच्च । गोत्रादिनिषेधानामन्यशाखीयविषयत्वादेव संबन्धनिषेधोऽपि तद्विषय एव । तस्मात्कात्यायनमतानुसारिणां नान्दीश्राद्धे संबन्धादिकथनं भवत्येवेति गदाधरादयः । अत एव मदनरत्ने दानखण्डे टोडरमिश्रपद्धतौ चाऽऽभ्युदयिकश्राद्धे सर्वत्र गोत्रशर्मशब्दनाम्नामुच्चारणं लिखितम् । संदी. ६१

[५]शस्तं नान्दीमुखश्राद्धं पिण्डैर्द्वादशभिस्तदा ॥
[६]अपि दूर्वाक्षतयवैर्बदरेण विमिश्रिताः ।
पिण्डा नान्दीमुखे देया मातृपूर्वाश्च द्वादश ॥

## अनिर्दिष्टकर्तृकवचनानि

नान्दीश्राद्धनिमित्तानि

[१]गर्भाधाने विवाहे च सुवने जातकर्मणि ।
नामोपाकर्मस्नानेषु व्रतेषु च समापने ।
ब्राह्मणान्भोजयेदादौ ...... ॥
[२]सीमन्तोन्नयने चैव अन्नप्राशनचौलयोः ।
उपायने च गोदाने चाऽऽदावेव समाचरेत् ॥

नान्दीश्राद्धस्य पारिभाषिककर्माङ्गत्वम्

[३]यज्ञे पुंसवने चैव सीमन्तोन्नयने तथा ।
एतेष्वेव प्रधानेषु श्राद्धं कर्माङ्गमिष्यते ॥

तथा 'निषेककाले सोमे च सीमन्तोन्नयने तथा । इष्टौ पुंसवने चैव श्राद्धं कर्माङ्गमिष्यते ॥' । अन्यत्र नैमित्तिकमित्यर्थः । स्मृसा. १०७

मातृश्राद्धस्य पृथक्त्वम्

[४]अन्वष्टकायां यच्छ्राद्धं यच्छ्राद्धं वृद्धिहेतुकम् ।
पित्रादीनां पृथग्दानं स्त्रीणां पिण्डः पृथक्पृथक् ॥

---

( १ ) विपा. २६८ द्रव्येण ( श्राद्धेन ); संर. ८३१.
( २ ) स्मृच. १९; पमा. ४४०; संप्र. १९२; मुक्ता. ७९ आदिपुराणम्; सिन्धु. ८४६ न दद्यात्तु पक्वान्नं (तु पक्वान्नं न दद्याद्) पू.; विपा. २६८ पू.; संर. ८३१ दद्यात्तु (दातव्यं) पू.
( ३ ) श्राका. ५१८; संग. ८४; संदी. ६१.
( ४ ) श्राका. ५१४ उत्त.: ५१८; संग. ८४; संदी. ६१.
( ५ ) श्राका. ५१८.
( ६ ) श्राका. ५१४ अशुद्धिबहुलम् : ५१८.

( १ ) श्राका. ५१८.
( २ ) श्राका. ५१४ अशुद्धिबहुलम् : ५१८.
( ३ ) मुक्ता. ७५५.
( ४ ) मुक्ता. ७५५ 'तत्रैव' इत्युक्तम्.
( ५ ) स्मृसा. ९४, १०७.
( ६ ) श्राका. ५१८.

प्रथमविवाहे पितुरेव नान्दीश्राद्धाधिकारः, द्वितीयादिविवाहेषु पुत्रस्यैव

[1]नान्दीश्राद्धं पिता कुर्यात् पुत्रीपुत्रविवाहयोः।
उत्तरेषु विवाहेषु स्वयं कुर्यात्तु नान्दिकम्॥
[2]पित्रोस्तु जीवतोः पुत्रः कुरुते दारसंग्रहम्।
पितुर्नान्दीमुखं प्रोक्तं न पुत्रस्य कथंचन॥

नान्दीश्राद्धस्य द्वादशदेवताकत्वम्

[3]महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च।
ज्ञेयं द्वादशदैवत्यं तीर्थे प्रोष्ठपदासु च॥

नान्दीश्राद्धस्य नवदेवताकत्वम्

[4]देवतानवकं वृद्धौ तथैवान्वष्टकासु च।
ज्ञेयं द्वादशदैवत्यं तीर्थे प्रोष्ठे गयासु च॥

नान्दीश्राद्धे देवतानां प्रतिलोमक्रमः

[5]प्रपितामह्यादि मात्रन्तं तथा वर्गद्वयेऽपि च।
नान्दीश्राद्धेषु सर्वत्र केचिदाहुर्मनीषिणः॥

नान्दीश्राद्धे मातृश्राद्धस्य विश्वदेवहीनत्वम्

[6]आन्वष्टक्ये पितृभ्यश्च तत्स्त्रीभ्यश्च सदैवतम्।
ताभ्यस्त्वदैवतं वृद्धौ तेभ्यश्चैव सदैवतम्॥

वर्गाद्यजीवने तद्वर्गपरित्यागः

[7]पितृवर्गे मातृवर्गे तथा मातामहस्य च।
जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत्॥
[8]पित्र्यं जीवत्पितुर्नोक्तमग्नौ होमोऽपि पाक्षिकः।
न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिः॥

(१) मुक्ता. ७५३. (२) श्राका. ५१९.

(३) संम. ४; कृभ. १७३६ प्रोष्ठपदासु (प्रोष्ठे मघासु).

(४) लता. ९९. (५) लता. २५५.

(६) श्राका. ५१४.

(७) श्राका. ५१६ जीवेत्तु यदि वर्गाद्यस्तं (जीवेद्यदि च वर्गादिस्तं); श्राप्र. १७; सिन्धु. १७४७ उत्त.: १७५७; विपा. ३४ (भागः २) जीवेत्तु (जीवेत्स) स्तं वर्गं (स्तद्वर्गं); संकौ. २७; पुम. ३७९ उत्त.; कृभ. १७४७ पू.; मञ्जरी. ८५ उत्त.; संदी. ६८ वर्गं तु (तु वर्गं): ६९ निर्देशमात्रम्.

(८) श्राका. ५१६-५१७.

वर्गाद्यजीवनेऽपि तदुत्तरेषां देवतात्वमुपलक्षणन्यायेन

[1]जनन्यां विद्यमानायां यजेद्यस्तु पितामहीम्।
मातृघ्नः स च विज्ञेयो वृद्धिश्राद्धादृते क्वचित्॥

नान्दीश्राद्धे मातृश्राद्धस्य प्राथम्यम्

[2]वृद्धौ तु मातृपूर्वं तु श्राद्धं कुर्वीत बुद्धिमान्।
अन्वष्टकासु सर्वासु पितृपूर्वं समाचरेत्॥

नान्दीश्राद्धसंकल्पे प्रथमाविभक्तिः

[3]शुभाय प्रथमान्तेन वृद्धौ संकल्पमाचरेत्।
न षष्ठ्या न चतुर्थ्या वा संबुद्ध्या वा कदाचन॥

पुत्रजन्मनिमित्तकनान्दीश्राद्धे पक्वान्नदाननिषेधः

[4]जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि॥

नान्दीश्राद्धे विशेषधर्माः

[5]गुडधूपं प्रयत्नेन पुष्पाण्येवोत्तमानि च॥
अपसव्यं जानुपातमम्लं मांसं च वारिजम्।
रक्तं विवर्जयेत् (दर्भान्) समूलांश्च तिलानपि॥

[6]नान्दीश्राद्धे कृते चैव द्वादश्यामपि सर्वदा।
विप्राणां क्षालयेत्पादौ प्राङ्मुखस्तूपविश्य च॥

## षट्त्रिंशन्मतम्

कर्तुरनाहिताग्नित्वे उत्सन्नाग्नित्वे च पिण्डदाननिषेधः

[7]अनग्निको यदा विप्र उत्सन्नाग्निस्तथैव च।
तदा वृद्धिषु सर्वासु संकल्प्य श्राद्धमाचरेत्॥

(१) श्राका. ५१६. (२) लता. १००, ११८.

(३) संदी. ६२.

(४) स्मृसा. ९५ (जातश्राद्धेषु दद्यान्न ब्राह्मणेषु) एतावदेव; सिन्धु. १७३९.

(५) श्राका. ५१४. (६) धप्र. ५८.

(७) चश्रा. १५३३; श्राका. ५१५ (=) अनग्निको यदा विप्र (यावच्च नाग्निसंबन्ध) तदा (तावत्) संकल्प्य श्रा (संकल्पश्रा).

(१) साग्निकस्तु संकल्पविधिना बदरादिमिश्रपिण्ड-प्रदानयुक्तं वा वृद्धिश्राद्धं कुर्यादित्यर्थादिह गम्यते । चश्रा. १५३३–१५३४

(२) संकल्पश्राद्धम् अपिण्डकम् । श्राका. ५१५

जातश्राद्धं हेम्ना कार्यम्

**[1]अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत वर्जयित्वा क्षयेऽहनि ॥**

## चतुर्विंशतिमतम्

नान्दीश्राद्धे पदार्थक्रमः

**[2]नान्दीमुखान् पितॄन् पूज्य पितृकार्ये विधानवत् ।
आसनं च ततो दद्यात्कुर्यादावाहनादिकम् ॥**

आवाहनार्घ्यादिकं पार्वणोक्तं पदार्थजातं तदुक्तेनैव क्रमेण कुर्यादित्यर्थः । चश्रा. १५५१

नान्दीश्राद्धस्य कर्तव्यता, मात्रादिश्राद्धक्रमः, मातामह्यादीनामपि देवतात्वम्

**[3]पूजयेच्च ततः पश्चात्तत्र नान्दीमुखान् पितॄन् ॥
[4]मातृपूर्वान् पितॄन् पूज्य ततो मातामहानपि ।
मातामहीस्ततः केचियुग्मा भोज्या द्विजातयः ॥**

(१) अत्र केचिन्मातामह्यादित्रिदैवत्यं चतुर्थमपि श्राद्धमाचक्षते । तथा च चतुर्विंशतिमते मातृपूजां प्रतिपाद्योक्तम्– पूजयेच्चेति । चश्रा. १५४२

(२) ततो मातामहपार्वणानन्तरम् । श्राम. ८८

(३) अत्र द्वादशदैवतस्य देशाचाराद्व्यवस्था । सिन्धु. १७३७

---

(१) चश्रा. १५३१.

(२) चश्रा. १५५१ ; संग. ८४ कार्ये (कार्यं) पू.

(३) चश्रा. १५४२ ; श्राप्र. २९७.

(४) अप. १।२४९ पृ. ५१७ ; स्मृच. ५०२ (मातृपूर्वं पितॄन्पूज्यानतो मातामहानपि । मातामही ततः केचिदुभौ भोज्या द्विजातयः ॥) ; चश्रा. १५४२ ; श्राका. ५१८ (मातृपूर्वान् पितॄन्पूज्य ततो मातामहीस्तथा ॥ मातामहं ततः केचिदेव...स्तु भोजयेत् ॥) ; श्राप्र. २९६ पू. : २९७ ; श्राम. ८८ उत्त. ; सिन्धु. १७३७ ; विपा. २८ (भागः २) महीस्ततः (महीमतः).



नान्दीश्राद्धे विशेषधर्माः

**[1]द्वौ द्वौ चाऽऽभ्युदये पिण्डावेकैकस्मै विनिक्षिपेत् ।
एकं नाम्नाऽपरं तूष्णीं दद्यात्पिण्डान् पृथक्पृथक् ॥**

(१) पृथक्पृथक् एकैकस्मिन् द्वौ द्वौ पिण्डौ दद्यात् । तत्र प्रथमपिण्डं नाम्ना गोत्रमन्त्रसहितेन दद्यात्, द्वितीयं तूष्णीं दद्यादित्यर्थः । ¶ स्मृच. ५००

(२) अत्र कश्चिदाह– 'द्वौ द्वौ ...' इति चतुर्विंशतिमतादेकैकस्मै पिण्डद्वयं देयमिति । तन्न, सूत्रकृता भगवताऽस्य विशेषस्यानुपदिष्टत्वात् । प्रकृतित एकैकस्मै एकैकपिण्डदानप्राप्तेश्च । अत एवोक्तं ब्रह्मपुराणे– 'उक्तमादाय पिण्डं तु कृत्वा बिल्वप्रमाणकम् । दद्यात् पितामहादिभ्यो दर्भमूले यथाक्रमम् ॥' इति । पिण्डद्वयमेकैकस्मै देयमिति (यत्) उक्तं तच्छाखान्तरविषयं कुलधर्मविषयं वा । संग. ८६–८७

**[2]प्रीयन्तामिति च ब्रूयात्पिण्डान्स्वाहेति च क्षिपेत् ॥**

---

¶ पमा., मपा., श्राप्र. स्मृचवत् ।

(१) स्मृच. ५०० म्नाऽपरं (म्ना परं) उत्त. ; चश्रा. १५५६ ; पमा. ७८४ स्मृचवत्, उत्त. ; मपा. ६३५ स्मृचवत्, उत्त. ; प्रपा. १९ म्नाऽपरं (म्ना परं) पिण्डान् (पिण्डं) उत्त. ; मर. १७१ उत्त. ; गभा. ३२ पिण्डान् पृथक्पृथक् (पिण्डद्वयं बुधः) उत्त. ; प्रर. १३–१४ गभावत्, उत्त. ; श्राप्र. ३०६ ; मुक्ता. ७५६ उत्त. ; श्राम. ९० विनिक्षिपेत् (च निर्वपेत्) ; संम. ६ दद्यात्पिण्डान्पृथक्पृथक् (तथा पिण्डद्वयं बुधः) उत्त. ; सिन्धु. १७५२ स्मृचवत् ; प्रका. ३३ गभावत्, उत्त. ; संग. ८६ स्मै विनिक्षिपेत् (स्य पृथक्पृथक्) म्नाऽपरं (म्ना परं) शेषं गभावत् ; मञ्जरी. ८३ स्मृचवत्.

(२) चश्रा. १५५८ च क्षिपेत् (निक्षिपेत्) ; श्राम. ९१.

[1]विकिरं च तथा पिण्डान् दद्याच्च नियमं विना।
ब्रूयात्तृप्तेषु संपन्नं वृद्धिश्राद्धे समाहितः॥
[2]संभोज्यैव द्विजान् धीरस्ततः पिण्डांस्तु
निर्वपेत्॥
*[3]शेषमन्नमनुज्ञाप्य वैश्वदेवक्रियां ततः॥
श्राद्धाहि श्राद्धशेषेण वैश्वदेवं समाचरेत्॥

वैश्वदेवग्रहणमन्नसाध्यानां देवपित्र्यमानुषभौतिककर्मणामुपलक्षणार्थम्। चश्रा. १५६०

## संग्रहकारः ( स्मृतिसंग्रहः )

नान्दीश्राद्धे विशेषधर्माः

[4]शुभार्थी प्रथमान्तेन वृद्धौ संकल्पमाचरेत्।
न षष्ठ्या यदि वा कुर्यान्महादोषोऽभिजायते॥
[5]अनस्मद्वृद्धशब्दानामरूपाणामगोत्रिणाम्।
अनाम्नां चातिलाद्यैश्च नान्दीश्राद्धं च सव्य-
वत्॥

( १ ) अत्र सांकल्पविषये विशेषो दर्शितः संग्रहे– 'शुभार्थी ...' इति। प्रपा. १९

( २ ) अन्योऽपि विशेषः संग्रहे– शुभायेत्यादि। बह्वृचकारिका च– 'संबन्धनामरूपाणि वर्जयेदत्र कर्मणि।' इति। अत्र च यद्यपि नामगोत्राणां वर्जनमुक्तम्, तत्तु 'गोत्रनामभिरामन्त्र्य पितॄनर्घं प्रदापयेत्।' इति कात्यायनवचनेन विरुद्धम्, तथाऽपि शाखाभेदव्यवस्थितं सदविरुद्धमेवेति। प्रयोगपारिजाते तु 'शुभाय ... माचरेत्' इत्युपक्रम्य 'अनस्मच्छब्दवृद्धानाम्' इत्युक्तेर्गोत्रनामादिनिषेधः संकल्पश्राद्धे, सपिण्डके तु तन्निषेधो नास्तीत्युक्तम्। श्राप्र. ३०९–३१०

( ३ ) यत्तु केचित् वृद्धिपदं( ? वृद्धपदं ) पित्रादिषु प्रयुञ्जते, तन्न, 'अनस्मद्वृद्ध ... सव्यवत्॥' इति पृथ्वीचन्द्रोदये संग्रहोक्तेः। न च निषेधादेव विधिः कल्प्यते इति वाच्यम्, प्रौष्ठपदीश्राद्धे प्रपितामहात्परेषां वृद्धपित्रादीनां देवतात्वात् नान्दीश्राद्धत्वसामान्येनेहापि तत्प्राप्तौ निषेधात्। गोत्रनामादिनिषेधस्तु 'शुभार्थी ... माचरेत्।' इत्युपक्रम्य 'अनस्मद्वृद्धशब्दानाम्' इत्युक्तेः संकल्पश्राद्धपरः, सपिण्डके तु सर्वं भवति इति प्रयोगपारिजातात्, 'गोत्रनामभिरामन्त्र्य पितृभ्योऽर्घ्यं प्रदापयेत्।' इति छन्दोगपरिशिष्टे तद्विधानात्। सिन्धु. १७३२

( ४ ) 'नान्दीमुखाः पितरः' इति मन्त्रे पितृशब्दस्य प्रथमान्तप्रयोगविधानादेव संकल्पवाक्यमपि प्रथमान्तमेवात्र प्रयोज्यम्। तदुक्तं रुद्रकल्पद्रुमे संग्रहे–शुभायेति। प्रकृतिप्राप्तषष्ठ्या अपवादोऽयम्। संग. ८९

( ५ ) अयं नियमः संकल्प एव। आसनादौ तु दर्शश्राद्धवत्तत्तद्विभक्त्योल्लेखः। मञ्जरी. ८१

नान्दीश्राद्धे वैश्वदेवस्याऽऽदौ कर्तव्यता

[1]वृद्धावादौ क्षयाहेऽन्ते दर्शे मध्ये महालये।
आचान्तेषु च कर्तव्यं वैश्वदेवं चतुर्विधम्॥

---

* 'वृद्धावादौ क्षयाहे ...' इति संग्रहकारवचने श्राप्रव्याख्यानं द्रष्टव्यम्।

( १ ) चश्रा. १५५३ ; संग. ८४ विकिरं ( विकरं ).

( २ ) चश्रा. १५५५.

( ३ ) चश्रा. १५६० ; श्राप्र. ३१५ ; श्राम. ९१ ; सिन्धु. १७५५ ; संकौ. ३१ वैश्वदेवं ( सकलं तु ).

( ४ ) प्रपा. १९ ; गभा. ३२ शुभार्थी ( शुभाय ) ( वृद्धौ० ) महा ( महान् ) ; प्रर. १३ शुभार्थी (शुभाय) ; श्राप्र. ३०९ प्ररवत् ; संम. ६ प्ररवत्, प्रयोगरत्नसंग्रहे ; सिन्धु. १७३२ पू. : १७५२ संकल्प ( सांकल्प ) ; संकौ. ३१ प्ररवत्, पू. ; प्रका. ३२–३३ प्ररवत् ; संग. ८४, ८९ प्ररवत् ; मञ्जरी. ८१ निर्णयसिन्धौ.

( ५ ) प्रपा. १९ ; गभा. ३२ अनाम्नां चा ( अनाम्नाम ) ; प्रर. १३ ; श्राप्र. ३०९ सद्वृद्धशब्दाना ( सच्छब्दवृद्धाना ) च सव्य ( न सव्य ) ; संम. ६ प्रयोगरत्नसंग्रहे ; सिन्धु. १७३२ च सव्य ( तु सव्य ) शेषं गभावत् ; प्रका. ३३.

( १ ) श्राप्र. ३१४ क्षयाहेऽन्ते ( क्षये चान्ते ) ; लता. १२९.

अत्र साग्निरनग्निर्वा वैश्वदेवमादौ कुर्यात्। उक्तं च स्मृतिसंग्रहे– 'वृद्धावादौ... चतुर्विधम् ॥' इति वचनात्, 'ये वा भद्रं दूषयन्ति स्वधाभिः' इति कथंचिल्लिङ्गदर्शनादपि वृद्धिश्राद्धोत्तरं वैश्वदेवनिषेधात्, शिष्टा अपि बहवो वैश्वदेवं (चतुर्विधमिति वचनात् ?) कृत्वाऽऽभ्युदयिकमनुतिष्ठन्तीति तदाचारदर्शनाच्छ्राद्धात्पूर्वमेव कर्तव्यमिति। हेमाद्रौ तु– 'शेषमन्नमनुज्ञाप्य वैश्वदेवक्रियां ततः। श्राद्धाह्नि श्राद्धशेषेण वैश्वदेवं समाचरेत् ॥' इति वृद्धिश्राद्धप्रयोगलिखितचतुर्विंशतिवचनाच्छ्राद्धान्ते कर्तव्यता यद्यपि प्रतीयते, तथाऽप्यत्र वाक्ये श्राद्धाह्नीति सामान्येन श्राद्धग्रहणात् प्रकृतिभूते एव श्राद्धे वैश्वदेवस्यान्ते कर्तव्यता, न वृद्ध्यादौ। ननु वृद्धिश्राद्धेऽपि विकृतिरूपत्वेन प्राकृतेतिकर्तव्यतातिदेशात् (अपि ?) वैश्वदेवस्यान्ते कर्तव्यताप्राप्तिरपि पुनः पृष्ठलग्नैवेति चेत्, सत्यम्, यद्यत्र 'वृद्धावादौ' इति वचनं न स्यात्। तनोपदेशप्राबल्यादप्यादावेव स इति। अत्रार्थे शिष्टाचारोऽप्यनुसंधेय इति। 　　श्राप्र. ३१४–३१५

## मिताक्षरायाम्

नान्दीश्राद्धे पिण्डदानस्य विकल्पः

[१]वृद्धिश्राद्धे विकल्पेन पिण्डदानं बुधैः स्मृतम् ॥

## स्मृत्यर्थसारः

नान्दीश्राद्धस्य निमित्तानि, आदौ कर्तव्यता, देवताः, सकृदनुष्ठितस्य कर्मगणोपकारकत्वं च

[२]गर्भाधानादिसंस्कारेष्विष्टापूर्तकृषिष्वपि।
वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम् ॥
$वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते ॥
[३]गणशः क्रियमाणानामेकं स्यान्मातृपूजनम्।
वृद्धिश्राद्धं च तन्त्रं स्याद्धोमास्तु स्युः पृथक्पृथक् ॥

अनेकसंस्कार्यविषयानेकसंस्काराणां सहानुष्ठानं यत्र न निषिद्धम्, तदङ्गनान्दीश्राद्धीयदेवतानाममेदश्च, तत्र 'गणशः ... पृथक् ॥' इति स्मृत्यर्थसारवचनानुसारि तन्त्रानुष्ठानं बोद्धव्यम्। 　　¶ संकौ. २१४

नान्दीश्राद्धे वैश्वदेवस्याऽऽदौ कर्तव्यता

[१]वृद्धावादौ क्षयाहेऽन्ते दर्शे मध्ये महालये।
आचान्तेषु च कर्तव्यो वैश्वदेवश्चतुर्विधः ॥

नान्दीश्राद्धे विशेषधर्माः

[२]अथ वृद्धिश्राद्धम्– तत्र सत्यवसू विश्वे देवाः। वैश्वदेवार्थं मात्राद्यर्थं पित्राद्यर्थं सपत्नीकमातामहाद्यर्थं च द्वौ द्वौ विप्रौ युग्मा वा शक्तितो योज्याः। अमूला दर्भाः। यज्ञोपवीती प्राङ्मुख उदङ्मुखेभ्यो दद्यात्। प्राङ्मुखेभ्यो वोदङ्मुखः। सर्वथा दक्षिणामुखो न दद्यात्। तिलार्थे यवाः। नान्दीदेवानां नान्दीश्राद्धे क्षणः क्रियताम्। ओं तथा प्राप्नुतां भवन्तौ प्राप्नवावेत्यादि। क्षणे पित्र्येऽपि द्विकुशकूर्चं पवित्रकम्। पित्र्ये नान्दीमुखपूर्वकं युग्मत्वम् (?)। यवोऽसि सोमदेवत्य इति यवावापः। स्वधास्थाने पुष्ट्या। स्वधानमःस्थाने स्वाहानमःशब्दः। स्वाहाऽर्घ्य इत्यर्घ्यनिवेदनम्। नान्दीमुखाः

---

$ अस्य वचनस्य व्याख्यानं 'नान्दीमुखे विवाहे च' इति वृद्धवसिष्ठवचने द्रष्टव्यम्।

(१) श्राका. ५१५ (=) वृद्धिश्राद्धे (यच्च वृद्धौ ?); संग. ८७.

(२) स्मृसार. १७.

(३) स्मृसार. १७; प्रपा. १४; गभा. ३१; प्रर. १३; श्राप्र. ३१०; लता. २५५; संम. ६; सिन्धु. १७३२; संकौ. २६ मुख्यास्तु (मुख्याश्च); प्रका. ३१ संकौवत्; बाल. १।२५० पृ. ५७५.

¶ संव. संकौवत्।

(१) स्मृसार. १७; संकौ. २१४ होमास्तु स्युः (होमस्तु स्यात्); संव. १५५ संकौवत्.

(२) स्मृसार. ४९.

(३) स्मृसार. ५६; प्रपा. १९ (राक्षोघ्नानैन्द्रान्मन्त्रांश्च श्रावयेत्) एतावदेव.

पितरः प्रीयन्तामिति द्विर्द्विर्गन्धादि देयम् । प्रदक्षिणमुपचारा उदगपवर्गम् । अग्नौ पाणौ वा होमः । 'अग्नये कव्यवाहनाय स्वाहा' 'सोमाय पितृमते स्वाहा' इति व्युत्क्रमेण होमः । होमवन्मेक्षणप्रक्षेपः । रक्षोघ्नैन्द्रशान्तिमन्त्राञ्श्रावयेत् । 'मधु वाताः' इति तृचस्थाने 'उपास्मै गायता नरः' इति पञ्चर्चः(? र्चं) श्रावयेदन्यमधुमन्त्रान्वा । 'अक्षन्नमीमदन्त' इत्यन्ते श्रावयेत् । आचान्तेषु भुक्त्याश्रयान् गोमयेनोपलिप्य प्रागग्रान् दर्भानास्तीर्य दैवं पृषदाज्य(? दैवपृषदाज्य)दधिबदरि(? बदर) मिश्र-भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात् । आज्ये दधिप्रक्षेपो दैवं पृषदाज्यम् । शेषं पार्वणवत् । अत्र पिण्डमात्रस्य लोपो वा पिण्डादिकस्य लोपो वा ॥

प्रथमविवाहान्तसुतसंस्कारेषु पितुः स्वपित्राद्युद्देशेन नान्दीश्राद्धकर्तृत्वम् , ततः परं जीवत्पितृकस्य पितुः पित्राद्युद्देशेन नान्दीश्राद्धकर्तृत्वम्

[1]स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।
यावद्विवाहः पुत्रस्य तावदेव हि तत्सुतः ॥

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः ।
अत ऊर्ध्वं सुतः कुर्यात्पितॄणां तद्धि वै पितुः ॥

नान्दीमुखे कर्मणि संप्रवृत्ते
पितर्यथौ(? पितर्यथो) जीवति यस्य(? तस्य) पुंसः ।
एषां(? येषां) च कुर्यात्स्वपिता स्वयं च
तेषां हि कुर्यादिति शास्त्रसिद्धम् ॥

यदा जीवत्पिता नान्दीश्राद्धं कुर्याद्विधानतः ।
पितुर्मातामहादीनामेष धर्मः सनातनः ॥

(१) धप्र. ५७–५८.

नान्दीश्राद्धात्मकश्राद्धत्रयस्य क्रमः कालश्च

मातुः श्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् ।
ततो मातामहादीनां वृद्धौ श्राद्धत्रयं स्मृतम् ॥
एकैकस्मिन्दिने श्राद्धमेकैकं वृद्धिसंज्ञितम् ।
शुभार्थी विधिवत्कुर्यादेकस्मिन्नपि वा दिने ॥
[1]जाते पुत्रे पिता स्नात्वा रात्रौ संध्ययोर्ग्रहणे वा वृद्धिश्राद्धं हिरण्येन कृत्वा ... ॥

## हेमाद्रौ

निमित्तसद्भावे नान्दीश्राद्धस्य कर्तव्यता

[2]वृद्धिश्राद्धं तु कर्तव्यं जातकर्मादिकेषु वै ॥
[3]जाते सुतेऽवगाह्यापः श्राद्धं कृत्वा विधानतः ॥

## कामधेनौ

कर्मविशेषेषु नान्दीश्राद्धस्य निषेधः

[4]जलाशयप्रतिष्ठायां वृषोत्सर्गादिकर्मसु ।
वत्सराभ्यन्तरे पित्रोर्वृषस्योत्सर्गकर्मणि ।
वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समाचरेत् ॥

यत्तु कामधेनौ– 'जलाशय ... समाचरेत् ॥' इति, तत्र जलाशये वृद्धिश्राद्धस्य निषेधः , न तु कर्माङ्गस्येति केचित् । अन्ये त्वस्य निर्मूलतामाहुः ।

सिन्धु. १७२८–१७२९

(२) जलाशयेति । प्रतिष्ठापदं प्रतितिष्ठतीति व्युत्पत्त्या स्थैर्यविशेषार्थकम् । कृभ. १७२९

## आचारतिलके

नान्दीश्राद्धे मातृश्राद्धस्य विश्वदेवरहितत्वम्

[5]पितरोऽन्वष्टकाश्राद्धं माता भुङ्क्ते सदैवतम् ।
वृद्धावदैवतं माता पितरश्च सदैवतम् ॥

(१) स्मृसार. ३ ; मुक्ता. ८० (हिरण्येन०) ; आन. १४७ (रात्रौ संध्ययोर्ग्रहणे वा०) (हिरण्येन०).
(२) श्राम. ८७ ; संम. ५ ; कृभ. १७२८.
(३) धप्र. ३७ ; संग. ४४४ धर्मप्रवृत्तौ.
(४) सिन्धु. १७२९.
(५) आका. ५१४.

## राजमार्तण्डे

नान्दीश्राद्धनिमित्तानि

**[1]पुत्रोत्पत्तौ भवेच्छ्राद्धमन्नप्राशे च निष्क्रमे ।**
**चूडाकार्ये महादाने नाम्नि पुंसवने व्रते ॥**
**[2]पाणिग्रहे प्रतिष्ठायां प्रवेशे नववेश्मनः ।**
**एतद्वृद्धिकरं नाम गृहस्थस्य विधीयते ॥**

## कालादर्शः

नान्दीश्राद्धनिमित्तानि

**[3]सीमन्तव्रतचौलनामकरणान्नप्राशनोपायन-**
**स्नानाधानविवाहयज्ञतनयोत्पत्ति-**
**प्रतिष्ठासु च ।**
**पुंसूत्यावसथप्रवेशनसुताद्यास्याव-**
**लोकाश्रम-**
**स्वीकारक्षितिपाभिषेकदयिताद्यर्तौ**
**च नान्दीमुखम् ॥**

(१) व्रतानि प्राजापत्यादीनि । उपायनम् उपनयनम् । स्नानं समावर्तनम् । प्रतिष्ठा देवताप्रतिष्ठा वापीकूपतटाकादिप्रतिष्ठा च । पुंसूतिः पुंसवनम् । आवसथप्रवेशनं गृहप्रवेशनम् । सुताद्यास्यावलोकः सुतस्य सुतायाश्च आद्यः प्रथमः आस्यावलोकः मुखप्रेक्षणम् । दयितायाः भार्यायाः आद्यर्तुः प्रथमरजःप्रादुर्भावः । एतेषु निमित्तेषु नान्दीमुखं कार्यमित्यर्थः । मुक्ता. ७५४

(२) सीमन्तं सीमन्तोन्नयनम् । चौलं चूडाकरणम् । (नामकरणं) सुतस्य नामनिर्देशः । अन्नप्राशनं सुतस्य प्रथमान्नभोजनम् । आधानम् अग्न्याधानम् । विवाहः सुतस्य सुतायाश्च । यज्ञः दर्शपौर्णमासज्योतिष्टोमादिः । तनयोत्पत्तिः पुत्रोत्पत्तिः । सुतस्याऽऽ(द्या)स्यावलोकः प्रथमं मुखप्रेक्षणम् । आश्रमस्वीकारः वानप्रस्थाद्याश्रमस्वीकारः । क्षितिपाभिषेकः राज्याभिषेकः ।

¶ लता. ११७

(३) पुंसूतिः पुंसवनम्, तनयोत्पत्तेः पृथगभिधानात् । सुताद्यास्यावलोकेति । 'सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।' इति विष्णुपुराणात् । परंतु अत्र तद्योग्यतासंपादकं जन्म ग्राह्यम् । सुताद्यास्यावलोकेति च प्रवासाद्यागतेन पित्रादिना जातकर्म चेत्क्रियते तदा जन्मनिमित्तकं श्राद्धमपि कार्यमित्येतद्वक्तुम् । आस्यावलोकेति निमित्तान्तरं प्रदर्शितमित्येतावन्मात्रम् । अत्र पुत्रजनने केवलं नैमित्तिकम्, 'जन्मनि' इत्याद्युक्तेस्तत्र कर्माङ्गनिषेधात् । एवं च तत्रैकमेव श्राद्धम्, 'कर्माङ्गं वृद्धिवत् कृतम्' इति जातकर्माङ्गश्राद्धमनुक्त्वैव जन्मनिमित्तकश्राद्धदृष्टान्ताभिधानात् । 'वृद्धिश्राद्धं तु कर्तव्यं जातकर्मादिकेषु वै ।' इति हेमाद्रिस्थवचनेऽतद्गुणसंविज्ञानो बहुव्रीहिर्वा, निमित्तकर्मणोः पदादिभ्यां समाहारो वा, कर्तव्येष्विति पदाध्याहारो वा बोध्यः ।

कृभ. १७२८

## धर्मप्रदीपे

नान्दीश्राद्धे कर्तृनियमाभावः

**[1]आमे हैमे तथा नित्ये नान्दीश्राद्धे तथैव च ।**
**व्यतीपातादिके श्राद्धे नियमान् परिवर्जयेत् ॥**

अत्र कर्तुर्भोक्तुश्च ब्रह्मचर्यादिनियमा न सन्ति । तदुक्तं धर्मप्रदीपे– आमे हैम इति । मञ्जरी. ८४

नान्दीश्राद्धे विकिराभावः

**[2]आमश्राद्धे च वृद्धौ च प्रेतश्राद्धे तथैव च ।**
**विकिरं नैव कुर्वीत मुनिः कात्यायनोऽब्रवीत् ॥**

---

(१) श्राकौ. ४९० ; सिन्धु. १७२७ (सुतोत्पत्तौ तथा श्राद्धमन्नप्राशनिके तथा ।) पू.

(२) श्राकौ. ४९० ग्रहे (ग्राह) आदर्शपाठस्तु राजमार्तण्डमनुरुध्य गृहीतः ।

(३) मुक्ता. ७५४ ; लता. ११७ संग्रहकारः ; सिन्धु. १७२८ बोपदेवकालादर्शौ ; आन. १४३.

¶ शेषं मुक्तावत् ।

(१) लता. ११४ ; मञ्जरी. ८४.

(२) लता. ११४ ; संग. ८४ विकिरं (विकरं) ; मञ्जरी. ८३ (=).

(१) केचित्तु विकिरो वृद्धिश्राद्धे न कार्यः, 'आमश्राद्धे... ऽब्रवीत् ॥' इति धर्मप्रदीपादित्याहुः। तन्न, 'नान्दीमुखान् पितॄन् पूज्य पितृकार्ये विधानवत्।' इति प्रकृत्य 'विकिरं च तथा पिण्डान् दद्याच्च नियमं विना। ब्रूयात्तृप्तेषु संपन्नं वृद्धिश्राद्धे समाहितः ॥' इति हेमाद्रौ चतुर्विंशतिमतोक्तेः, सर्वजातीयसिद्धमन्नमेकपात्रे समुद्धृत्य विकिरं कुर्यादिति सार्थकात् (? इत्यर्थकात्) 'सुसंपन्नं च ते ब्रूयुः सर्वसिद्धान्नतः क्षिपेत्।' इति हेमाद्रौ ब्रह्मपुराणाच्च। वस्तुतस्तु धर्मप्रदीपवचने 'कात्यायनोऽब्रवीत्' इत्युक्तेः कात्यायनसूत्रपरिशिष्टादिविरुद्धत्वात्तन्निर्मूलम्। संग. ८४

(२) यत्तु 'आमश्राद्धे... ब्रवीत्।' इति वचनं तच्छाखान्तरविषयम्। मञ्जरी. ८३

## श्राद्धचन्द्रिकायाम्

नान्दीश्राद्धे विशेषधर्माः

[1]एकैको मन्त्रवत्पिण्डो देयस्तूष्णीमथापरः।
सर्वमन्त्रेषु कर्तव्यं नान्दीमुखविशेषणम् ॥

अस्मिन्नान्दीश्राद्धे सर्वत्र देवशब्देषु तत्तद्विभक्त्या नान्दीमुखपूर्वकोल्लेखः कर्तव्यः 'नान्दीमुखाः सत्यवसुसंज्ञका विश्वेदेवाः' इत्यादि। अथवा देवशब्दोत्तरं नान्दीमुखशब्दः प्रयोक्तव्यः 'सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखाः' इत्यादि। एवमेव पितृशब्देषु च। तदुक्तं श्राद्धचन्द्रिकायाम्— एकैक इति। मञ्जरी ८०

## संप्रदायभाष्ये

उपाकर्माङ्गत्वेन नान्दीश्राद्धविधिः

[2]सह नश्चोभां पठित्वा श्राद्धमार्षं चरेद्बुधः ॥

## अनन्तभट्टीये

उपाकर्माङ्गनान्दीश्राद्धस्याऽऽचार्यकर्तृकत्वं प्रथमप्रयोगमात्रकर्तव्यता च

[3]गुरुसंस्कार एवायं न शिष्याणामुदीरितः।
अतोऽत्र गुरुणा कार्यं नान्दीश्राद्धं सपूजनम् ॥

तत्र प्रथमप्रयोगे आचार्येण मातृपूजापूर्वकं नान्दीश्राद्धं कार्यम्। तथा चानन्तभट्टीये— 'गुरुसंस्कार... सपूजनम् ॥'। संग. ८८२

[1]नान्दीश्राद्धादिकं कार्यमध्यायोपाकृतेरिदम्।
अनुष्ठानेऽग्रिमे न स्यादितरेष्विति निश्चितम् ॥

## शाकलकारिकाः

नान्दीश्राद्धस्य संस्कारादौ पुण्याहवाचनपूर्वकमनुष्ठानम्

[2]नान्दीश्राद्धं पिता कुर्यात्स्वस्तिवाचनपूर्वकम्।
आदौ चैव शुभार्थं तु सर्वसंस्कारकर्मणाम् ॥

सकृदनुष्ठितस्य नान्दीश्राद्धस्य कर्मगणोपकारकत्वम्

बहूनां क्रियमाणानां संस्कारस्य च कर्मणाम्।
नान्दीश्राद्धं भवेदेकं तत्तत्कर्म पृथक्पृथक् ॥

मण्डपपूजनात्प्राक् नान्दीश्राद्धस्य कर्तव्यता

व्रतबन्धे विवाहे च कृत्वाऽऽभ्युदयिकं ततः।
पूजनं मण्डपादि(? देः) स्यादिति यज्ञविदो विदुः ॥

कर्मविशेषेषु नान्दीश्राद्धाभावः

दुष्टग्रहार्थशान्त्यादौ प्रारम्भे चैव सर्वदा।
व्रतस्योद्यापने चैव नान्दीश्राद्धं विवर्जयेत् ॥

पितृप्रतिनिधिकर्तृकनान्दीश्राद्धे संस्कार्यपितुः पित्रादेर्दैवतात्वम्

[3]अन्यो यः कश्चन कर्ता पितृस्थाने भवेद्यदि।
शिशोः पितृपितृभ्यस्तु दत्त्वा कर्म समाचरेत् ॥

सकृदनुष्ठितस्य नान्दीश्राद्धस्य कर्मगणोपकारकत्वम्

एक एव तु कर्ता स्यादेकस्यैव क्रियासु च (? चेत्)।
नान्दीश्राद्धं भवेदेकं स्वस्तिवाचनपूर्वकम् ॥

अग्नौकरणे विशेषः

[4]स्वाहाकारेण वै वृद्धौ सव्येनाग्नय इत्यथ।
सोमायेत्याहुतिं पश्चाद्विधिरेष उदाहृतः ॥

(१) मञ्जरी. ८०. (२) संग. ९०२.
(३) संग. ८८२–८८३.

(१) संग. ८८३. (२) शाका. ३–६ पृ. १.
(३) शाका. १०–११ पृ. १–२.
(४) शाका. ४३४ पृ. ५२–५३.

नान्दीश्राद्धस्य नवदेवताकत्वम्

**[1]पित्रादयस्तथा मात्रादयो मातामहास्त्रयः ।**
**अष्टकादौ च वृद्धौ च नव प्रत्याब्दिके त्रयः ॥**

## शौनककारिकाः

कर्मादौ पुण्याहवाचनपूर्वकनान्दीश्राद्धस्य कर्तव्यता

**[2]पुण्ये मुहूर्ते कुर्वीत विवाहं विधिवद्द्विजः ।**
**तत्राऽऽभ्युदयिकं श्राद्धं कुर्यात् स्वस्ति च वाचयेत् ॥**

(१) कन्यापिता विवाहात्पूर्वदिने गणपतिपूजनादि-नान्दीश्राद्धान्तं कुर्यात् । एवं वरपिताऽपि स्वगृहे कुर्यात् । तथा च शौनकः— पुण्य इति । विवाहात् पूर्वमिति शेषः । संग. २२३

(२) 'आभ्युदयिकं श्राद्धं कुर्यात्' 'स्वस्ति वाचयेत्' इत्यत्रान्तर्भावितो णिच्(? णिजर्थो) ज्ञेयः, अन्यथा 'नान्दीश्राद्धं पिता कुर्यात्' इत्यनेन विरोधापत्तेः । 'नान्दीश्राद्धं पिता कुर्यात्' इत्यत्र नान्दीश्राद्धग्रहणं स्वस्तिवाचनादेरुपलक्षणम्, तथैव शिष्टसमाचारात् । नान्दीश्राद्धमात्रं पितृकर्तृकम्, स्वस्तिवाचनं तु वरकर्तृकमेवेत्यस्मिन्मते 'आभ्युदयिकं श्राद्धं कुर्यात्' इत्येकत्रैव णिच्(? णिजर्थो) ज्ञेयः । संर. ५३३

**[3]अथाऽऽभ्युदयिकं श्राद्धमहं वक्ष्यामि शौनकः ।**
**भवेदभ्युदयश्राद्धं वृद्धिपूर्तेषु कर्मसु ॥**

नान्दीश्राद्धे पदार्थक्रमः

**[4]शुचिर्भूत्वाऽन्तिकं गत्वा पूर्वेद्युश्चाग्रजन्मनाम् ।**
**स्वयमेव द्विजाग्र्याणां तेषां कुर्यान्निमन्त्रणम् ॥**

(१) शाका. ४९० पृ. ६०.

(२) शौका. १ पृ. ५७; प्रपा. ३१८ पू.: ३४९ चतुर्थपादे (पूर्वेद्युर्वाऽपरेऽहनि); संप्र. ८१९; विपा. ३६ (भागः २); संकौ. २१२ उत्त.; संग. २२३ तत्राऽऽ (तदाऽऽ) स्वस्ति (स्वस्तिं); संर. ५३३.

(३) शौका. १ पृ. १३० पूर्तेषु (पूर्वेषु); प्रपा. १३; प्रका. ३२ अथाऽऽभ्युदयिकं (अथातोऽभ्युदय).

(४) शौका. २ पृ. १३० चाग्र (चाग्र्य); प्रपा. १८.

**[1]निमन्त्रयेत पूर्वं द्वौ विश्वेदेवार्थमाहितः ।**
**पितृभ्यस्तु यथाशक्ति युग्मान्गुणवतो द्विजान् ॥**

**[2]अपरेद्युः समानीय ब्राह्मणांस्तान्निमन्त्रितान् ।**
**स्नानद्रव्यैः कृतस्नानानक्रोधान्वेदमूर्तिकान् ॥**

**[3]तैलेनाभ्यक्तसर्वाङ्गान्कुर्याद्देवपुरःसरम् ।**
**ततः स्नात्वा समायातानुपवेश्य यथापुरम् ॥**

**[4]पादान् प्रक्षाल्य सर्वेषां प्राङ्मुखानुपवेश्य च ।**
**तेभ्योऽपि दद्यादप्पूर्वमासनार्थमृजून्कुशान् ॥**

**[5]तेषु तेषूदगग्रेषु निषीदेयुरथो पुनः ।**
**तेषां हस्तेष्वपो दद्यादथार्घ्यमुपकल्पयेत् ॥**

**[6]देवेभ्योऽपि पृथग्दद्यादिहार्घ्यं स्मृतिचोदनात् ।**
**पुरो निधाय पात्रे द्वे विश्वेदेवार्थविप्रयोः ॥**

**[7]अन्तर्धाय ततो दर्भान्निषिच्य च जलं तयोः ।**
**यवोऽसीत्यादियुक्तेन मन्त्रेण प्रतिभाजनम् ॥**

**[8]यवान् विकीर्य विप्रेभ्यः स्वाहाशब्दैर्निवेदयेत् ।**
**विश्वेदेवा इदं वोऽर्घ्यमिति मन्त्रमुदीरयेत् ॥**
**दत्त्वाऽर्घ्यमाभ्यां पित्रर्थमथार्घ्यमुपकल्पयेत् ।**
**त्रिषु पित्रादिपात्रेषु कुशानन्तर्निधाय च ॥**

(१) शौका. ३ पृ. १३० माहितः (मादितः); प्रपा. १८.

(२) शौका. ४ पृ. १३० वेदमूर्तिकान् (देवपूजकान्); प्रपा. १८.

(३) शौका. ५ पृ. १३० र्याद्देव (र्यादेवं); प्रपा. १८.

(४) शौका. ६ पृ. १३० (ऽपि०); प्रपा. १८.

(५) शौका. ७ पृ. १३०; प्रपा. १८.

(६) शौका. ८ पृ. १३०; प्रपा. १८; मञ्जरी. ८२ पू.

(७) शौका. ९ पृ. १३० युक्तेन (सूक्तेन); प्रपा. १८.

(८) शौका. १०-१२ पृ. १३०; प्रपा. १८.

क्रमेणैव तु पात्रेषु निषिच्यापोऽथ ता अपः ।
मन्त्रेण शं नो देवीरित्याद्यर्चा चानुमन्त्र्य च ॥
[१]यवोऽसीत्यादियुक्तेन मन्त्रेण प्रतिभाजनम् ।
यवान् क्षिप्त्वाऽथ पित्रर्थद्विजन्मभ्यो निवेदयेत् ॥
[२]अपः प्रथमपात्रस्थाः स्वाहाऽर्घ्या इति मन्त्रतः ।
तेषामाद्यस्य विप्रस्य हस्तेऽन्यज्जलमाहितः ॥
[३]सिक्त्वाऽथार्घ्यं समादाय जलं दक्षिणपाणिना ।
द्वितीयपात्रतः किंचिज्जलमादाय पूर्ववत् ॥
[४]तत्रेदं तेऽर्घ्यमित्येष पितृनामपदादिकः ।
मन्त्रो विभज्यतेऽत्रान्यत्तन्त्रं पूर्ववदाचरेत् ॥
[५]एवं पित्रर्थविप्रेभ्यः प्रदायार्घ्यं यथाविधि ।
पितामहार्थविप्रेभ्यो दत्त्वाऽर्घ्यं च यथा पुरा ॥
[६]प्रपितामहशब्दादिमिदं तेऽर्घ्यमितीरयेत् ।
मन्त्रमत्र यथापूर्वं तन्त्रमन्यत्समाचरेत् ॥
[७]पित्रादित्रितयस्यार्थे यथावत्तरुणौ द्विजौ ।
द्वौ वृणीत तदा तन्त्रं तयोरेवार्घ्यकल्पनम् ॥
भोजनं चेति विद्वांसो वदन्ति बहुवेदिनः ।
आसिञ्चेत्प्रथमे पात्रे जलमुत्तरयोर्द्वयोः ॥

[१]ताभिर्मुखं समञ्जीत पुत्रं यद्यभिवाञ्छति ।
पात्रं तच्च तृतीयेन पात्रेणैव पिधाय तु ॥
[२]यथावस्थितमा श्राद्धसमाप्तेस्तत्तु नोद्धरेत् ।
अत्र गाथाद्वयं गीतमाचार्येणापि तद्यथा ॥
[३]नोद्धरेत्प्रथमं पात्रं पितॄणामर्घ्यपातितम् ।
आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ॥
[४]उद्धरेद्यदि चेत्पात्रं विवृतं वा यदा भवेत् ।
तदाऽऽसुरं भवेच्छ्राद्धं क्रुद्धैः पितृगणैर्गतैः ॥
[५]एतस्मिन्नेव काले तु गन्धमाल्यादिभिर्द्विजान् ।
अभ्यर्च्य सर्वं श्राद्धाङ्गं वसनाभरणादिकम् ॥
[६]तेभ्यः प्रदद्यात्सश्रद्धो विश्वेदेवपुरःसरम् ।
भोजनार्थमथाऽऽनीताद्दायाऽऽदाय किंचन ॥
[७]सर्पिषाऽङ्क्त्वाऽवदायाथ मेक्षणेन यथाविधि ।
तदंशीकृत्य मन्त्राभ्यां जुहुयाद्द्विजपाणिषु ॥
यथाविधीत्यवदानधर्मेणेत्यर्थः । प्रपा. १८
[८]अत्र स्वधानमःशब्दस्थाने स्वाहेत्युदीरयेत् ।
हुत्वा प्रागग्नये कव्यवाहनायेति मन्त्रतः ॥
[९]सोमायेत्यादिना पश्चान्मन्त्रेण जुहुयादिह ।
तत्र भुक्तवतो विप्रान् यथेष्टं भोजयेत्ततः ॥

---

(१) शौका. १३ पृ. १३० युक्तेन (सूक्तेन); प्रपा. १८.

(२) शौका. १४ पृ. १३० ऽन्यज्जल (ऽन्यं जल); प्रपा. १८; श्राप्र. ३०१ मन्त्रतः (मन्त्रिताः) पू., प्रयोगपारिजातकारः.

(३) शौका. १५ पृ. १३०; प्रपा. १८.

(४) शौका. १६ पृ. १३१ दिकः (दिकम्) तेऽत्रान्य (तेनान्य); प्रपा. १८ दिकः (दिकम्); श्राप्र. ३१० पू.

(५) शौका. १७ पृ. १३१; प्रपा. १८; श्राप्र. ३१० ऽर्घ्यं (ऽर्घं) उत्त.; संकौ. २६; बाल. १।२५० पृ. ५६७.

(६) शौका. १८ पृ. १३१; प्रपा. १८; श्राप्र. ३१० पू.; संकौ. २६ पू.; बाल. १।२५० पृ. ५६७ शब्दादेमिदं (शब्दादिदं) पू.

(७) शौका. १९-२० पृ. १३१; प्रपा. १८.

(१) शौका. २१ पृ. १३१; प्रपा. १८ संमञ्जीत (समृञ्जीत).

(२) शौका. २२ पृ. १३१; प्रपा. १८.

(३) शौका. २३ पृ. १३१; प्रपा. १८; श्राकौ. ५१८ उत्त.

(४) शौका. २३ (अ) पृ. १३१; प्रपा. १८.

(५) शौका. २४ पृ. १३१ तु (तान्); प्रपा. १८.

(६) शौका. २५ पृ. १३१ सश्रद्धो विश्वे (तच्छ्राद्धं वैश्व); प्रपा. १८.

(७) शौका. २६ पृ. १३१ तदंशीकृत्य (इदं प्रकृत्य); प्रपा. १८.

(८) शौका. २७ पृ. १३१; प्रपा. १८; मञ्जरी. ८२ पू.

(९) शौका. २८ पृ. १३१; प्रपा. १८.

[१]तृप्तानथ द्विजान् ज्ञात्वा मधु वाता ऋतायते ।
इत्यादिकतृचस्थान उपास्मै गायता नरः ॥
[२]पञ्चर्चमक्षन्नित्याद्यामेकां चर्चं यथाक्रमम् ।
श्रावयित्वाऽपि संपन्नमिति पृच्छेद्द्विजानथ ॥
[३]तेऽपि संपन्नमेवेति ब्रूयुस्तृप्तिसमन्विताः ।
अन्नशेषेण किं कार्यमिति पृच्छेद्द्विजांस्ततः ॥
[४]त इष्टैः सह भोक्तव्यमिति प्रत्युक्तिपूर्वकम् ।
प्रदद्युः सकलं तस्मै स्वीकरोति यथाविधि ।
नोद्वासयेच्च विप्राणामुच्छिष्टान्या दिनक्षयात् ॥
[५]प्रकीर्यान्नं च तेष्वग्रे विप्रानाचामयेत्ततः ।
आचम्याऽऽसनसंस्थेभ्यः प्रदद्याद्भुक्ति-
दक्षिणाम् ॥

एतन्मते वृद्धिश्राद्धे पिण्डदानात्पूर्वमेव प्रकिरणम् । यत्तु– 'आमश्राद्धे च वृद्धौ च प्रेतश्राद्धे तथैव च । विकिरं नैव कुर्वीत मुनिः कात्यायनोऽब्रवीत् ॥' इति वचनम् , तच्छाखान्तरविषयम् । मञ्जरी. ८३

[६]सर्वांश्चाभ्यर्च्य गन्धाद्यैः पितृपूर्वं विसर्जयेत् ।
तेषां विसर्जनारम्भे पात्रं विवृणुयात् पितुः ॥
ब्राह्मणांस्तांस्तु पिण्डान्ते गमयेदों
स्वधोच्यताम् ।
इत्युच्चार्य ततस्ते तु स्वधेत्युक्त्वा गृहाद्बहिः ॥
गच्छेयुरथवा तांस्तु प्रत्युच्चार्य स्वधोच्यताम् ।
इत्येवं गमयेत्तेऽपि तथैवोक्त्वा व्रजन्त्यथ ॥

(१) शौका. २९ पृ. १३१ दिकतृचस्थान (दिका- मृचामथे); प्रपा. १८ दिकतृचस्थान (दिकं तृचमथो); मञ्जरी. ८२.

(२) शौका. ३० पृ. १३१ ; प्रपा. १८ ; मञ्जरी. ८२ त्याद्यामेकां चर्चं (त्येकामृचं चेति) त्वाऽपि (त्वा तु).

(३) शौका. ३१ पृ. १३१ ; प्रपा. १८ ; मञ्जरी. ८३ मेवेति (मित्येवं) पू.

(४) शौका. ३२ पृ. १३१ ; प्रपा १८–१९.

(५) शौका ३३ पृ. १३२ ; प्रपा. १९ ; मञ्जरी. ८३ च (तु) पू.

(६) शौका. ३४–३९ पृ. १३२ ; प्रपा. १९.

विश्वेदेवा इति वचः पूर्वमुक्त्वा ततः परम् ।
प्रीयन्तामिति निर्दिश्य विश्वेदेवान्
समुत्सृजेत् ॥
नान्दीपितरः प्रथमं प्रीयन्तामिति पश्चिमम् ।
विश्वेदेवा इत्युदीर्य निर्गच्छेयुर्गृहाद्बहिः ॥

कर्मादौ नान्दीश्राद्धस्य कर्तव्यता

एवमिच्छन्ति पूर्वेद्युः पूर्तेष्वृदयकर्मसु ।
नान्दीश्राद्धाभिधानं तु नित्यं श्रुतिनिबन्धनम् ॥

## कुमारिलकारिकाः

नान्दीश्राद्धनिमित्तानि

[१]जाते सुते पिता कुर्यान्नान्दीश्राद्धं विधानतः ॥
[२]स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु ।
स्यात्पुंसवनसीमन्तचौलोपनयनेष्विह ॥
[३]विवाहे चानलाधानप्रभृतिश्रौतकर्मसु ।
इदं श्राद्धं प्रकुर्वीत द्विजो वृद्धिनिमित्तकम् ॥
[४]अन्यैः षोडशसंस्कारश्रावण्यादिष्वपीष्यते ।
वाप्याद्युद्यापनादौ तु कुर्युः पूर्तिनिमित्तकम् ॥

(१) कुका. १।८।१ ; प्रपा. १३१.

(२) कुका. २।१५।१ ; प्रपा. १३ स्यात्पुंसवन (पुंसः सवन) ; सिन्धु. १७२८ प्रपावत् ; विपा. २५–२६ (भागः २) स्यात्पुंसवन (पुंसः सावन) ; संकौ. २५ स्यात्पुंसवन (गर्भपुंसव) ; संर. १०४४ प्रपावत् , पारिजाते.

(३) कुका. २।१५।२ धान (धेय) ; प्रपा. १३ प्रकुर्वीत द्विजो (प्रकुर्वन्ति द्विजा) ; सिन्धु. १७२८ धान (धेय) शेषं प्रपावत् ; विपा. २६ (भागः २) प्रपावत् ; संकौ. २५ श्रौत (श्राद्ध) शेषं सिन्धुवत् ; संर. १०४४ सिन्धुवत् , पारिजाते.

(४) कुका. २।१५।३ ; प्रपा. १३ अन्यैः (अन्ये) पूर्ति (पूर्ते) ; सिन्धु. १७२८ पूर्ति (पूर्ते) ; विपा. २६ (भागः २) सिन्धुवत् ; संकौ. २५ संस्कार (संस्कारे) : १०७ पू. ; संर. १०४४ ण्यादिष्व (ण्यादाव) पारिजाते.

अन्यैरित्युक्तसंस्कारेभ्योऽन्येषु जातकर्मादिषु श्रवणाकर्मादिषु च तदनावश्यकमिति ज्ञापनार्थम् ।

¶ संकौ. २५

नान्दीश्राद्धे विशेषधर्माः

[1]प्राङ्मुखोऽत्रोपवीती स्यादुपचाराः प्रदक्षिणम् ।
तिलकार्ये यवैः कुर्याद्युग्मान्विप्रान्निमन्त्र्य तु ॥
[2]ऋजुदर्भानमूलांस्तु दत्त्वैषामासनेष्वथ ।
प्राक्संस्थेष्वप आसिच्य पूर्ववच्चानुमन्त्र्य ताः ॥

पूर्ववत् पितृयज्ञवत् शं नो देव्यृचाऽनुमन्त्रणं कुर्यात् । प्रपा. १६

[3]तिलोऽसीति पदस्थाने यवोऽसीति पदं वदेत् ।
स्वधयेति पदस्थाने पुष्ट्याशब्दं वदेदिह ॥
[4]पितॄनिति पदात्पूर्वं वदेन्नान्दीमुखानिति ।
स्वधानमःपदस्थाने स्वाहाशब्दं वदेदिह ॥

[5]संबन्धनामरूपाणि वर्जयेदत्र कर्मणि ।
अतोऽन्यत्तु यथापाठमुक्त्वाऽर्घ्येष्वावपेद्यवान् ॥
[6]निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ॥

नान्दीश्राद्धे पदार्थक्रमः

[1]नान्दीमुखास्तु पितरः प्रीयन्तामिति मन्त्रतः ।
पित्रर्थमुपविष्टेभ्यः सकृदर्घ्यं निवेदयेत् ॥
[2]इममेव वदेन्मन्त्रं पितामहपदान्वितम् ।
तदर्थमुपविष्टेभ्यः सकृदर्घ्यं निवेदयेत् ॥
[3]प्रपितामहसंयुक्तं मन्त्रमुक्त्वैवमेव तु ।
तदर्थमुपविष्टेभ्यस्तृतीयं सकृदेव तत् ॥
[4]नान्दीमुखास्तु पितर इदं वोऽर्घ्यमिति त्वथ ।
दत्त्वाऽर्घ्यस्यैकदेशं स्यादर्घ्यदानं प्रतिद्विजम् ॥
[5]आवृत्तिरपि मन्त्रस्य प्रतिब्राह्मणमिष्यते ।
प्रतिद्विजं पृथक्कुर्यान्निवीत्यर्घ्यानुमन्त्रणम् ॥

---

¶ संर. संस्कारकौस्तुभानुवादः ।

(१) कुका. २।१५।४ चाराः (चारः); प्रपा. १६ विप्रान्निमन्त्र्य तु (अत्र निमन्त्रयेत्); विपा. ३२ (भागः २) चाराः (चारः) विप्रान् (अत्र).

(२) कुका. २।१५।५ उत्तरार्धे (प्राक्संस्थपात्रेष्वासिच्य प्राग्वच्चापो निमन्त्र्य तु ॥); प्रपा. १६ ऋजुदर्भान (ऋजून्दर्भान्स) नेष्वथ (नेषु तु) मन्त्र्य ताः (मन्त्र्य तान्); श्राप्र. ३०० ऋजुद (ऋजून्द) पू.; विपा. ३२ (भागः २) नेष्वथ (नेषु तु).

(३) कुका. २।१५।६; प्रपा. १६; यजुःश्रात. ५०१ उत्त.; श्रात. ३०९ उत्त.; श्राप्र. ३०१ आश्वलायनकारिका; विपा. ३२ (भागः २) पुष्ट्या (तुष्ट्या) दिह (तथा); संग. ८३ रुद्रकल्पद्रुमे; संदी. ६० आश्वलायनः.

(४) कुका. २।१५।७; प्रपा. १६ चतुर्थपादे (वदेत्स्वाहानमःपदम्); यजुःश्रात. ५०१ पू.; श्रात. ३०९ पू.; विपा. ३२ (भागः २) प्रपावत्; संग. ८३ पू., रुद्रकल्पद्रुमे; संदी. ६० पू., आश्वलायनः.

(१) कुका. २।१५।८; प्रपा. १६ अतोऽन्य (अथान्य) ऽर्घ्ये (ऽर्घे); गभा. ३२ पू.; प्रर. १३ पू.; श्राप्र. ३०९ पू.; संम. ६ पू.; विपा. ३२ (भागः २) अतोऽन्य (अथान्य); संकौ. ३१ रूपाणि (गोत्राणि) पू.; प्रका. ३३ पू.; बाल. १।२५० पृ. ५७८ पू.; संग. ८८ (=) पू.; संव. ४३ पू.

(२) विपा. ३२ (भागः २) कात्यायनेऽपि द्रष्टव्यम्.

(३) कुका. २।१५।९; प्रपा. १६; विपा. ३२ (भागः २); पुम. ३८० पू.

(४) कुका. २।१५।१०; प्रपा. १६; पुम. ३८० पू.

(५) कुका. २।१५।११; प्रपा. १६ मुक्त्वैव (मुक्त्वा त) तत् (तु); संकौ. २६ प्रपावत्; बाल. १।२५० पृ. ५६७ मुक्त्वैव (मुक्त्वा त).

(६) कुका. २।१५।१२; प्रपा. १६ वोऽर्घ्यमिति त्वथ (वो अर्घ्यमित्यथ) तृतीयपादे (दत्तार्घ्यस्यैकदेशात्स्यात्); सिन्धु. १७५० तृतीयपादे (दत्तार्घ्यादिकदेशः स्यात्) उत्त.

(७) कुका. २।१५।१३; प्रपा. १६–१७; सिन्धु. १७५०.

[1]यवोऽसीत्यूहमन्त्रः स्यादर्घ्ये इत्यपरे जगुः।
द्विर्द्विर्गन्धादि दातव्यं पाणिहोमो भवेदिह ॥

[2]अग्नये कव्यवाहादिमन्त्रेण प्रथमाहुतिः।
सोमायेति द्वितीया स्यात्तथाऽन्येषां च पाणिषु ॥

[3]आभ्यामेव तु मन्त्राभ्यां द्वे द्वे हुत्वाऽऽहुती इह।
एकैकामाहुतिं केचिद्द्विगृह्यैव प्रजुह्वति ॥

[4]स्वधानमःपदस्थाने स्वाहाकारो भवेदिह।
अथ तृप्तिपरिज्ञानपर्यन्तं पूर्ववद्भवेत् ॥

[5]मधु वाता ऋचां स्थाने उपास्मै गायता नरः।
पञ्चर्चः श्रावयित्वाऽक्षन्निति च श्रावयेदथ ॥

[6]संपन्नवचनादि स्यादाचान्तेषु द्विजन्मसु।
अथ भुक्ताशयान्सम्यग्गोमयेनोपलेपयेत् ॥

[7]तत्र प्रागग्रकान्दर्भानास्तृणाति ततः परम्।
पृषदाज्यं च कुर्वीत दध्यानयति सर्पिषि ॥

आदिशब्देन प्रकिरणं गृह्यते। एतस्मिन्नेव काले द्विजोच्छिष्टापनयनविधानात्प्रकिरणस्योच्छिष्टसंबन्धादत्रैव प्रकिरणं युक्तमिति सिद्धम्। 'श्रावयित्वा च पृष्ट्वा च देवानां विकिरं चरेत्।' इत्याश्वलायनस्मृतिवचनाच्च। द्विजोच्छिष्टस्थानं गोमयनोपलिप्य तत्रैव पिण्डदानं कार्यमिति कारिकाकारस्याऽऽशयः, वृत्तिकृतोऽपि तथैव। भोजनशालाया बहिः पिण्डदानम्, न तूच्छिष्टसमीपे इति मयूखे उक्तं तच्छाखान्तरीयाणामेव। मञ्जरी. ८३

[1]पृषदाज्येन संमिश्रं भुक्तशेषोद्धृतं भवेत्।
एकैकस्योक्तमन्त्रेण द्वौ द्वौ पिण्डौ तु निर्वपेत् ॥

एकैकस्मै मन्त्रावृत्त्या द्वौ द्वौ पिण्डाविति वृत्तिकृत्। मन्त्रस्तु प्राकृत एव, 'नान्दीमुखेभ्यः पितृभ्यः स्वाहा' इति वा। मञ्जरी. ८३

[2]अथानुमन्त्रणादि स्यात्तु नेच्छन्ति केचन।
अथो संपन्नमन्त्रेण विप्राणां स्याद्विसर्जनम् ॥

## कपर्दिकारिकाः

जातश्राद्धं हेम्नैव कर्तव्यम्

[3]अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं प्रकुर्वीत चन्द्रसूर्यग्रहे तथा ॥

## त्रिकाण्डमण्डनः

मलमासे नान्दीश्राद्धनिषेधः

*[4]न स्यादभ्युदयश्राद्धं विना जन्मनिमित्तकम् ॥

अथाऽऽभ्युदयिकश्राद्धनिषेधव्यापारेणैतत्प्रयोजकानि कर्माणि न कार्याणीति लाघवार्थमाह— न स्यादिति। निषेधस्य प्राप्तिपूर्वकत्वाद्यानि माङ्गल्यकार्याणि गृहप्रवेशविवाहादीनि तत्प्रापकाणि, तानि न स्युरिति भावः। अगतिकनैमित्तिकं तु भवतीत्याह— विनेति।

---

(१) कुका. २।१५।१४; प्रपा. १७ सीत्यूह (सीत्युक्त) जगुः (विदुः); विपा. ३२ (भागः २) तृतीयः पादः.

(२) कुका. २।१५।१५; प्रपा. १७ वाहादि (वाहेति) स्यात्तथा (स्यादथा); मञ्जरी. ८२.

(३) कुका. २।१५।१६; प्रपा. १७; मञ्जरी. ८२.

(४) कुका. २।१५।१७; प्रपा. १७; विपा. ३३ (भागः २) अथ (अत्र) उत्त.

(५) कुका. २।१५।१८ ऋचां (इति); प्रपा. १७ पञ्चर्चः (पञ्चर्च) न्निति च (न्नमीति) दथ (दृचम्); विपा. ३३ (भागः २) वाता ऋचां (वातेत्यृचः) दथ (दृचम्).

(६) कुका. २।१५।१९ जन्मसु (जस्य तु) शयान् (शयात्); प्रपा. १७ अथ भुक्ताशयान् (द्विजभुक्ताशयं); विपा. ३३ (भागः २) प्रपावत्; मञ्जरी. ८३.

(७) कुका. २।१५।२०; प्रपा. १७; विपा. ३३ (भागः २) तत्र (अत्र) सर्पिषि (सर्पिषा); मञ्जरी. ८३.

* 'मलमासे' इति प्रकृतम्।

(१) कुका. २।१५।२१; प्रपा. १७; विपा. ३३ (भागः २) शेषोद्धृतं (शेषं घृतं); मञ्जरी. ८३.

(२) कुका. २।१५।२२; प्रपा. १७ अथो संपन्नमन्त्रेण (अथ संपन्नवचनं) स्याद्वि (तु वि); विपा. ३३ (भागः २) प्रपावत्; मञ्जरी. ८३ पू.

(३) कका. ६।३. (४) त्रिम. १।१७९.

जन्मनिमित्तं पुत्रजन्म( प्र )युक्तं प्रधानरूपम्, तद्वर्जयित्वा, न तु जातकर्माङ्गम्, 'न सोष्यन्तीजातकर्म' इत्यादिना कात्यायनेन निषेधात्। अगतिकतया प्राप्तानां गर्भाधानादिसंस्काराणामङ्गत्वेन प्राप्तं च श्राद्धं नैव बाधितुमिष्टम्, अबाधेनोपपत्तौ बाधायोगात्, 'प्रधानं नीयमानमङ्गान्यपकर्षति' इति न्यायाच्च।

पदप्र.

जीवत्पितृकाद्यविवाहनिमित्तकनान्दीश्राद्धे पितुः कर्तृत्वमिति, द्वितीयादिविवाहेषु जीवत्पितृककर्तृकनान्दीश्राद्धे पितुः पित्रादीनां देवतात्वमिति वा

**§[1]पित्रोस्तु जीवतोः कुर्यात्पुनः पाणिग्रहं तदा।**
**पितुर्नान्दीमुखं श्राद्धं न तु स्वस्य मनीषिभिः॥**

§ अत्र बोद्धृभेदेन द्विधा तात्पर्यभेदः प्रतीयते। स यथा– निर्णयसिन्धुगदाधरभाष्ययोरेतद्वचनस्य 'प्रथमविवाहे पितुर्नान्दीश्राद्धकर्तृत्वम्, द्वितीयादिविवाहेषु तु स्वस्यैव' इत्यर्थपरत्वमभिप्रेतमिति प्रतीयते, तद्विषयपूर्वोत्तरवचनसंदष्टत्वादस्य वचनस्य। अस्मिन्पक्षे विशेषार्थकं पुनःपदं 'श्राद्धं पुनः' इति भिन्नक्रमम्। 'पितुः, तस्य' इति षष्ठ्यर्थस्य कर्तृकार्यभावसंबन्धस्य श्राद्धपदार्थेऽन्वयः, अध्याहृतकर्तव्यपदार्थैकदेशे क्रियायां वा 'कृत्यानां कर्तरि वा' इत्यनुशासनबलात् कर्तृत्वरूपषष्ठ्यर्थस्य निरूपकत्वेनान्वयः। तथा च 'पित्रोर्जीवतोः सतोर्यदा विवक्षया आद्यं पाणिग्रहं कुर्यात् तदा नान्दीमुखश्राद्धं तु पितृकर्तृकं मनीषिभिरुक्तम्, न स्वकर्तृकम्' इत्यर्थः संपन्नः। पदप्रकाशिकायां तु 'पितुर्नान्दीमुखं नान्दीमुखदेवताकं पुनः श्राद्धं कुर्यात्' इति वाक्यस्य, पितुरिति षष्ठ्यन्तस्य पितृकर्तृकत्वपरत्वे 'पितृकर्तृकं नान्दीमुखश्राद्धं कुर्यात्' इत्यसंगतार्थकत्वापत्तेः 'पाणिग्रहपदमात्मसंस्कारोपलक्षणम्' इत्यादिग्रन्थस्वारस्यभङ्गापत्तेश्च 'द्वितीयादिविवाहेषु जीवत्पितृकेण बोढ्रा नान्दीमुखसंज्ञकान्

(१) स्मिम. (प्रकीर्णककाण्डम्) ४; गभा. १०१ तदा (यदा) न तु स्वस्य (नोक्तं तस्य); सिन्धु. १७३४ मुखं श्राद्धं (मुखश्राद्धं) शेषं गभावत्.

पित्रोर्जीवतोः पाणिग्रहं यदा कुर्यात्तदा स्वस्य पितुर्नान्दीमुखं नान्दीमुखदेवताकं पुनः श्राद्धं कुर्यात्, न तु स्वस्य इति मनीषिभिः प्रोक्तमिति शेषः, 'नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः। अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्॥' इति वचनात्। पाणिग्रहपदमात्मसंस्कारोपलक्षणम्, जीवत्पितुः सुतसंस्कारेषु तत्तद्वर्गपरित्यागेनोचितत्वाभिधानात्, जीवद्वर्गत्रयस्य तु लोपस्यैवाभिहितत्वाच्च। अत्र बहु वक्तव्यमस्ति विस्तरभियोपरम्यते। पदप्र.

## यज्ञपार्श्वकारिकाः

पित्रादीनामन्यतमस्य द्वयोर्वा जीवने श्राद्धदेवतानिर्णयः

**[1]होमान्तः पितृयज्ञः स्याज्जीवे पितरि जानतः।**
**पितरं भोजयित्वा वा पिण्डौ निपृणुयात्परौ॥**
**[2]येभ्यः पिण्डान् पिता दद्यात्तेभ्यः पुत्रोऽपि दापयेत्।**
**जीवे पितरि नो दद्यादित्येषा नैगमी श्रुतिः॥**

पितुः पितॄनुद्दिश्य श्राद्धं कर्तव्यम्, न स्वस्य नान्दीमुखपितॄन्' इति देवताविधिपरत्वमभिप्रेतमित्यवगम्यते। अस्मिन्पक्षे आवृत्त्यर्थकपुनःपदं पाणिग्रहपदार्थान्वयि। द्वितीयादिविवाहमित्यर्थः। 'पितुः, स्वस्य' इति पूज्यपूजकभावलक्षणसंबन्धाभिधायिन्योः षष्ठ्योः श्राद्धपदसमानाधिकरणनान्दीमुखपदार्थविशेषणीभूते नान्दीमुखसंज्ञकपितृरूपेऽर्थेऽन्वयः।

(१) यका. १३५ पृ. २० जीवे पि (जीवपि); अप. १।२५३ पृ. ५३८; श्राकौ. ५५४ वा (तु) उत्त; श्राप्र. १६ सर्वं श्राकौवत्; सिन्धु. १७५५; कुभ. १७५६ उत्त., परिशिष्टम्.

(२) यका. १३६–१३७ पृ २० जीवे पितरि नो (न जीवति मति ?); अप. १।२५३ पृ ५३८ पिण्डान् (पिण्डं); कुभ. १७५६ दापयेत् (वा ददेत्) पू., परिशिष्टम्.

[१]जीवेत्पितामहो यस्य पिता चान्तरितो भवेत् ।
पितुरेकस्य दातव्यमेवमाहुर्मनीषिणः ॥

[२]त्रीन्वा पिण्डान् समारोप्य मध्यमं तेन भोजयेत् ।
द्वौ पिण्डौ ब्राह्मणे दद्यादग्नावम्भसि वा क्षिपेत् ॥

यच्च– 'जीवेत्... क्षिपेत् ॥' इति यज्ञपार्श्वपरिशिष्टवचनं तस्यायमर्थः– पितृप्रपितामहवत् जीवत्पितामहस्यापि तदुद्देशेन ब्राह्मणरहितं श्राद्धं कृत्वा श्राद्धद्वये ब्राह्मणान्तरवत् पितामहमपि तेन श्राद्धीयद्रव्येण भोजयेत् । अथवाऽग्नौ जले वा श्राद्धीयद्रव्यं क्षिपेत् । न तु साक्षात्पितामहे श्राद्धं करणीयम् । एतत्तु शाख्यन्तरीयमेव, बहूनामननुमतत्वात् । श्राकौ. ५५४–५५५

[३]उभौ यस्य व्यतीतौ तु जीवेच्च प्रपितामहः ।
पिण्डौ निपृणुयात्पूर्वौ भोजयेत्प्रपितामहम् ॥

## रेणुकारिकाः

नालच्छेदनात्प्राक् जातश्राद्धम्, तदामेन तदभावे हिरण्येन कार्यम्, आमं पक्वान्नात् द्विगुणं हिरण्यं चतुर्गुणं देयम्

[४]अच्छिन्ननाड्यां कर्तव्यं श्राद्धं स्नानादनन्तरम् ॥
आमद्रव्येण तत्कार्यं वचनात्तु प्रजापतेः ।
हिरण्येन भवेच्छ्राद्धमामद्रव्यं गृहे न चेत् ॥

[१]इति व्यासवचः प्रोक्तं पक्वान्नं स निषेधति ।
अत्राऽऽमं द्विगुणं भोज्यं हिरण्यं च चतुर्गुणम् ॥

सकृदनुष्ठितस्य नान्दीश्राद्धस्य कर्मगणोपकारकत्वम्

[२]गणशः क्रियमाणेषु मातृणां पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धं होममन्त्राः पृथक्पृथक् ॥

व्यक्तिभेदेन श्राद्धभेदः

[३]इह श्राद्धादिकं सर्वं व्यक्तिभेदे भवेत्पृथक् ॥

नान्दीश्राद्धस्य उत्सर्जनोपाकर्माङ्गता, तत्र विशेषश्च

[४]ततो नान्दीमुखं श्राद्धं मातृपूजनपूर्वकम् ।
गुरोस्तदात्मसंस्काराच्च शिष्याणां परार्थतः ॥

[५]उपाकर्मक्रियारम्भनिमित्ताङ्गमिनोदये ।
दैवपूर्वं भवेच्छ्राद्धं सुतसंस्कारकर्मसु ।
तदेव मातृपूर्वं स्यादात्मसंस्कारकर्मसु ॥

[६]उत्सर्गे विधिवत्कुर्याज्जलान्ते छन्दसां बहिः ।
नाङ्गानां मातृपूजादि श्राद्धं कृत्वा गुरुः सह ॥

विवाहनिमित्तकनान्दीश्राद्धस्य विवाहदेशे कर्तव्यता

[७]उक्ते काले विवाहाङ्गं कुर्यान्नान्दीमुखं पिता ।
देशान्तरे विवाहश्चेत्तत्र गत्वा भवेदिदम् ॥

---

(१) यका. १३७–१३८ पृ. २० ; अप. १।२५३ पृ. ५३८ ; श्राकौ. ५५४ ; सिन्धु. १७६४.

(२) यका. १३८–१३९ पृ. २० समारोप्य (समादाय) ; श्राकौ. ५५४.

(३) यका. १३९–१४० पृ. २० ; अप. १।२५३ पृ. ५३८ प्रथमपादे (यस्य प्रमीतौ द्वौ स्याताम्).

(४) रेका. ५–६ पृ. ९–१० ; गभा. १६१ ; संग. ४४५.

(१) रेका. ७ पृ. १० ; गभा १६१ च चतु (तु चतु) ; संग. ४४५ अत्राऽमं (आमान्नं) भोज्यं (प्रोक्तं).

(२) रेका. ४३–४४ पृ. १९.

(३) रेका. ४४ पृ १९.

(४) रेका. १८ पृ. ३४ ; संग. ८८२ (=) पू. : ८८३ रान्न (रो न) उत्त.

(५) रेका. १९ पृ. ३४–३५ ; संग. ८८३ प्रथमार्धं नास्ति.

(६) रेका. २ पृ. ३८.

(७) रेका. ८९ पृ. ५४ तत्र गत्वा (तत्राऽऽगत्य) ; गभा. १०१ ; सिन्धु. ११३४ उक्ते काले (उक्तकाले) ; संग. २२५ उत्त. ; संर. ५३७.

'ग्रामान्तरे विवाहश्चेत्' इत्यपि क्वचित्पाठः। नान्दीमुखमिति स्वस्तिवाचनमण्डपदेवतास्थापनाद्युपलक्षणम्। गृहप्रवेशस्थालीपाकादिकं तु स्वगृहं गत्वैव। इदानीं तु तत्रैव कुर्वन्ति, तच्छिथिलम्। संर. ५३८

विवाहादौ नान्दीश्राद्धस्य कर्तव्यता

[1]इत्थं वधूपिता कृत्वोद्वाहारम्भनिमित्तकम्।
नान्दीश्राद्धत्रयं कुर्यात्तस्मिन्नहनि संयतः।
न मण्डपादिकं कर्म वरस्य श्राद्धमन्तरा॥

(१) रेका. १०३–१०४ पृ. ५५; गमा. १०१ श्राद्धत्रयं (श्राद्धं त्रयं) कारिकायाम्.

प्रथमविवाहे वोढुः पितुर्नान्दीश्राद्धकर्तृत्वम्, द्वितीयादौ स्वस्यैव

[1]पित्रोस्तु जीवतोः पुत्रः कुरुते दारसंग्रहम्।
पितुरेव भवेच्छ्राद्धं न पुत्रस्य कदाचन॥

सुतस्य प्रथमोद्वाहे पिता कुर्यात्तु नान्दिकम्।
द्वितीयादिविवाहेषु ततो जीवत्यपि स्वयम्॥

(१) रेका. १०५–१०६ पृ. ५५.

# कौतुकबन्धनम्

## कात्यायनः

विनायकपूजनम्, संकल्पः, कांस्यपात्रे ताम्बूलभस्म-सौवर्णादिसूत्राभिषेकः, संस्कार्याभिषेकः, संस्कार्याय आशीर्दानं ललाटे भूतिदानं च, पुंसो दक्षिण-करे स्त्रिया वामकरे सूत्रबन्धनम्

[1]विनायकं नमस्कृत्य गिरिपुत्रीं च मूर्धनि ।
कात्यायनमनुप्रोक्तो रक्षाबन्धो विधीयते ॥

विनायकं तु संपूज्य गुडैर्गन्धाक्षतादिभिः ।
प्राणायामत्रयं कृत्वा संकल्प्य च यथाविधि ॥

प्रक्षाल्य कांस्यपात्रं तु कुशभस्मजलेन च ।
ताम्बूलं तत्र विन्यस्य भस्मना सहितं तथा ॥

सौवर्णं राजतं वाऽपि क्षौमं कार्पासमेव वा ।
तन्तुत्रयं तथा पुंसां स्त्रीणां तु द्विगुणीकृतम् ॥

पावमानेन मन्त्रेण सूत्रं चैवाभिषेचयेत् ।
आपो हि ष्ठेति मन्त्रेण संस्कार्यस्याभिषेचनम् ॥

सूत्रं गन्धेन संलिम्पेदंशुना तेति मन्त्रतः ।
दीर्घायुस्तेति मन्त्रेण आशिषा योजयेद्वटुम् ॥

त्रियम्बकेन मन्त्रेण भूतिं दत्त्वा ललाटके ।
तूष्णीं ततो द्विवारं च भस्म दद्यात्तथैव च ॥

यदाबध्नेति मन्त्रेण पुंसो वै दक्षिणे करे ।
बध्नीयात्सूत्रकं चैव स्त्रियाश्चेद्वामके करे ।
त्रीणि त आहुर्मन्त्रेण इति कात्यायनोदितम् ॥

(१) विपा. २४-२५ (भागः २).

## शौनककारिकाः

दिवा वा रात्रौ वा कर्तव्यम्, स्थण्डिले कांस्यपात्रोद-कुम्भयोर्निधानम्, समन्त्रकसूत्रप्रोक्षणम्, स्त्रीपुंस-योर्वामदक्षिणकरयोः सूत्रबन्धनम्, भसना रक्षाकरणम्, आचार्यादिभ्यो दक्षिणा-दानम्, पुण्याहवाचनात्पूर्वमूर्ध्वं वा कर्तव्यम्, कर्मान्ते सूत्रविसर्जनम्

[1]अथ कौतुकबन्धस्य प्रयोगोऽत्र निगद्यते ।
विवाहादिशुभे कार्ये रात्र्यां वाऽपि दिवा तथा ॥

[2]साङ्कुरे पालिकायुक्ते स्थण्डिले व्रीहिपूरिते ।
सहाक्षतेन कांस्येन सोदकुम्भं निधाय च ॥

[3]कार्पासोद्भवसूत्रं तु त्रिगुणीकृत्य पञ्च वा ।
निधाय तण्डुलान् पात्रे कूर्चं कुम्भं निधाय च ॥

[4]कुशैः कुम्भोदकैर्मन्त्रैः प्रोक्ष्य विप्रैः सुपावनैः ।
ओं भूर्भुवः स्वः सावित्र्या ऋग्भिर्वेदादिभि-
स्तथा ॥

(१) शौका. १ पृ. २८ दिवा तथा (दिवाऽपि वा); प्रपा. २१ दिशुभे (दौ शुभे) वाऽपि दिवा (वाऽह्नि कृते); प्रर. १६; विपा. १५ (भागः २) रात्र्यां (रात्रौ) शेषं प्रपावत्.

(२) शौका. २ पृ. २८; प्रपा. २१ स्थण्डिले व्रीहि (स्थले दुन्दुभि); प्रर. १६; विपा. १६ (भागः २) स्थण्डिले व्रीहिपूरिते (स्थले दुन्दुभिनादिते).

(३) शौका. ३ पृ. २८ कार्पासोद्भवसूत्रं तु (कार्पास-संभवं सूत्रं) वा (च) पात्रे (कांस्ये); प्रपा. २१; विपा. १६ (भागः २).

(४) शौका. ४ पृ. २८ र्भ्या ऋग्भिर्वे (र्भ्याऽग्निर्वे); प्रपा. २१ विप्रैः सुपावनैः (विप्रे सुखासने); विपा. १६ (भागः २) विप्रैः सुपावनैः (विप्रः सुखासने) (ओं०).

[1]आपो हि ष्ठाभिरब्लिङ्गैः शुद्धवत्यघमर्षणैः ।
शर्धवत्या स्वस्तिमत्या पावमानैस्तथैव च ॥
[2]रक्षोहणं च रात्री च कृणुष्वेति तथैव च ।
तरत्स मन्दी पुरुषं विष्णुसूक्तं तथैव च ॥
[3]अतो देवा अवन्त्विति परो मात्रा तथैव च ।
श्रीसूक्तं शिवसंकल्पं वायुसूक्तं तथैव च ॥
[4]मुञ्चामि त्वेति सूक्तं वा( ? चा )ऽथ स्योना पृथिवीति च ।
द्रविणोदाः सवितेति नवो विद्युन्न येति च ॥
[5]उलूकया पिशङ्गेति ऋग्भिरेताभिरन्वितैः ।
जातवेदस इत्यृचा सूत्रमादाय लेपयेत् ॥
[6]गन्धेन दक्षिणे हस्ते बद्ध्वा पुंसस्तु तन्तुना ।
विश्वेत्ता ते सवनेति स्त्रीणां सव्ये करे तथा ॥

( १ ) शौका. ५ पृ. २८ मानैस्त ( मान्यैस्त ) ; प्रपा. २१ ( आपो हि ष्ठादिकाब्लिङ्गैः शुद्धिमत्यघमर्षणैः । श्रद्धावत्यः स्वस्तिमत्यः पावमान्यस्तथैव च ।। ) ; विपा. १६ ( भागः २ ) भिरब्लिङ्गैः ( दिकाब्लिङ्गैः ) शर्धवत्या ( शुद्धवत्या ).

( २ ) शौका. ६ पृ. २८ रात्री च ( रात्रिश्च ) ; प्रपा. २१ ; विपा. १६ ( भागः २ ) रात्री ( रात्रिं ).

( ३ ) शौका. ७ पृ. २८ ; प्रपा. २१–२२ मात्रा ( मात्रं ) ; विपा. १६ ( भाग : २ ).

( ४ ) शौका. ८ पृ. २८ ; प्रपा. २२ वाऽथ स्योना पृथिवीति ( च स्योना पृथिवि भवेति ) ; विपा. १६ ( भागः २ ) प्रपावत्.

( ५ ) शौका. ९ पृ. २८ द्वितीयपादे ( ऋग्भिराभिस्तु वै द्विजः ) इत्यृचा ( इत्येतत् ) ; प्रपा. २२ ; विपा. १६–१७ ( भागः २ ) रन्वितैः ( रार्त्विजैः ).

( ६ ) शौका. १० पृ. २८ ; प्रपा. २२ ; विपा. १७ ( भागः २ ) सव्ये करे ( सव्यकरे ).

[1]श्रिये जात ऋचैकयाऽप्यध्वर्युश्च समाहितः ।
शतं जीवेति द्वाभ्यां च बृहत्सामेत्यृचैकया ॥
[2]ये यज्ञेनेति चाष्टाभिस्त्र्यम्बकं चेत्यृचैकया ।
भसना वाऽक्षतैर्वाऽपि रक्षां कृत्वा समापयेत् ॥
[3]दद्यादाचार्ये हेमादि ऋत्विग्भ्यः पूज्य शक्तितः ।
हरिमेव स्मरेन्नित्यं कर्मपूर्वापरेषु च ॥
[4]विद्वान् सर्वप्रयत्नेन कुर्यात् कौतुकबन्धनम् ।
पुण्याहवाचनादूर्ध्वं वा स्यात् कौतुकबन्धनम् ॥

विवाहादौ शुभकर्मणि साङ्कुरे पालिकायुक्ते स्थले मङ्गलतूर्यनादे कृते सति कौतुकबन्धं कुर्यात् । तत्रायं क्रमः – आचार्यो दर्भमये कूर्चे उदकुम्भं निधाय साक्षतकांस्यपात्रे पञ्चगुणितं त्रिगुणितं वा कार्पाससूत्रं निधाय च तत्समीपे यजमानमुपवेश्य कुशहस्तैर्ऋत्विग्भिः सह कुम्भोदकेन तत्सूत्रमभिषिञ्चेत् । तत्र मन्त्राः– *व्याहृतिपूर्वा गायत्री, ' अग्निमीळे ' , ' इषे त्वोर्जे त्वा ' , ' अग्न आ याहि ' , ' शं नो देवीः ' , ' आपो हि ष्ठा ' इति नवर्चम् ,

* प्रपा. प्र. व्याहृतयो न सन्ति ।

( १ ) शौका. ११ पृ. २८ ( ऋचैकया श्रिये जातोऽप्यध्वर्युश्च समाहितः । शतं जीवेति च द्वाभ्यां बृहत्सामैकयेत्यृचा ।। ) ; प्रपा. २२ ; विपा. १७ ( भागः २ ).

( २ ) शौका. १२ पृ. २८ नेति चा ( नेत्यृचा ) वाऽक्ष ( चाक्ष ) समाप ( समर्प ) ; प्रपा. २२ द्वितीयपादे ( त्रियम्बकमृचैकया ) ; विपा. १७ ( भाग : २ ) नेति चा ( न तथा ) वाऽक्ष ( चाक्ष ) शेषं प्रपावत्.

( ३ ) शौका. १३ पृ. २८ दि ऋत्विग्भ्यः ( दीनृत्विजं ); प्रपा. २२ ( दद्यादाचार्याय हेम ऋत्विग्भ्यः पूज्य शक्तितः । हरिते प्रस्तुते नित्यं कर्म पूर्वापरेऽपि वा ।। ) ; विपा. १७ ( भागः २ ) पू. .

( ४ ) शौका. १४ पृ. २८ ; प्रपा. २२ पू. ; विपा. १७ ( भागः २ ) पू.

'* एतो न्विन्द्रम्', '‡ ऋतं च' इति मन्त्रद्वयम्। '$ प्रशर्धाय' इति मन्त्रः, '¶ स्वस्ति नो मिमीताम्' इति मन्त्रत्रयम्, 'स्वादिष्ठया' इति दशर्चं सूक्तम्, 'रक्षोहणम्' इति पञ्चविंशर्चं सूक्तम्, 'रात्री व्यख्यत्' इत्यष्टर्चं सूक्तम्, 'कृणुष्व' इति पञ्चदशर्चं सूक्तम्, 'तरत् स मन्दी' इति ऋक्चतुष्टयम्, 'सहस्रशीर्षा' इति षोडशर्चं सूक्तम्, 'विष्णोर्नु कम्' इति षडृचं सूक्तम्, 'अतो देवाः' इति षडृचं सूक्तम्, 'परो मात्रया' इति सप्तर्चं सूक्तम्, 'हिरण्यवर्णाम्' इति पञ्चदशर्चं सूक्तम्, 'यज्जाग्रतः' इति षडृचं सूक्तम्, '§ वीतिहोत्रा' इति पञ्चर्चं वायुसूक्तम्, 'मुञ्चामि' इति पञ्चर्चं सूक्तम्, 'स्योना पृथिवि', 'द्रविणोदाः', 'सविता पश्चातात्', 'नवो नवो भवति', 'विद्युन्न या पतन्ती', 'उलूकयातुम्', 'पिशङ्गभृष्टिम्' एताः सप्त ऋचः। एतैर्व्याहृत्यादिपिशङ्गभृष्टिमित्यन्तैर्मन्त्रैः कूर्चेन कलशोदकेन सूत्रमभिषिच्य 'जातवेदसे' इति मन्त्रेण गन्धेन सूत्रं लेपयित्वा 'विश्वेत्ता ते' इति मन्त्रेण आचार्यः पुंसो दक्षिणहस्ते सूत्रं बध्नीयात्। स्त्रियास्तु 'श्रिये जातः' इति मन्त्रेण वामहस्ते बध्नीयात्। ततः ऋत्विजोऽक्षतैर्यजमानस्य समन्त्रं रक्षां कुर्युः। तत्र मन्त्राः— 'शतं जीव' इति द्वयम्, '* ये यज्ञेन' इत्यष्टर्चम्, 'त्र्यम्बकं यजामहे' इति च। ततो यजमानः कर्मसाद्गुण्यार्थमाचार्यादिभ्यो यथाशक्ति दक्षिणां दद्यात्।

त्रिपा. १७–२४

[1]कर्मादौ बन्धनं प्रोक्तं कर्मान्ते तद्विसर्जनम्॥

---

* प्रपा. ऋष्याद्यनुक्रमे 'तृचस्य' इत्युक्तम्, मन्त्रस्तु एक एव पठितः। प्रर. तृचम्।

‡ अत्र त्रयमिति वक्तव्ये द्वयमिति प्रामादिकम्। प्रपा. प्रर. तृचम्।

$ प्रपा. पञ्चदशर्चं सूक्तम्।

¶ प्रर. एको मन्त्रः। प्रपा. 'स्वस्ति न इन्द्रो०' इत्येको मन्त्रः।

§ 'वीतिहोत्रा' इति प्रामादिकम्, तस्य सूक्तारम्भत्वाभावात् वायुदेवताकत्वाभावाच्च। प्रपा. प्रर. इत्येतयोः 'विहि होत्रा' इति पञ्चर्चं वायुदेवताकं सूक्तम्।

* इतः प्राक् 'बृहत्सामेत्यृचैकया' इति मूलोक्ता ऋक् प्रयोगपारिजाते अस्ति, प्रयोगरत्ने नास्ति। मूले 'ये यज्ञेनेति चाष्टाभिः' इत्यष्टत्वोक्तावपि प्रयोगपारिजाते एकादशर्चं सकलं सूक्तं गृहीतम्।

(१) विपा. २४ (भागः २) क्रमेण शौनकः.

# मण्डपदेवतादिपूजनं देवकस्थापनं च

## अनिर्दिष्टकर्तृकवचनानि

मण्डपदेवतापूजनम्

[1]मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा ।
अविघ्नो विघ्नहर्ता च षडेतेऽविघ्नमातरः ॥
जयन्ती विजया नाम पिङ्गला च सुशोभना ।
भद्रकाली प्रपूज्यन्ते पञ्चैता द्वारमातृकाः ॥
जया च विजया चैव भद्रकाली च पिङ्गला ।
सुभगा चैव विज्ञेया द्वारमातॄः प्रपूजयेत् ॥
मत्सी कूर्मी च वाराही कुर्कुटी दुर्दुरी तथा ।
जलूकी सोमपा चैव सप्तैता जलमातरः ॥

## चूडारत्ने

देशान्तरे प्रधानानुष्ठानेऽपि स्वगृहे देवकस्थापनम्

[2]देशान्तरे विवाहश्चेन्मध्येऽद्रिर्वा महानदी ।
गव्यूतित्रयपर्यन्तं स्वगृहे देवतार्चनम् ॥

## रेणुकारिकाः

मण्डपदेवतास्थापनपूजने

[3]मण्डपस्थापनं कुर्यात् स्वस्तिवाचनपूर्वकम् ।
चतुरो ब्राह्मणांस्तत्र पूजयेद्दक्षिणादिभिः ॥
नन्दिनी नलिनी मैत्रा उमा च पशुवर्धिनी ।
मण्डपस्थापने योज्याः स्तम्भे मात्रा(?) प्रकीर्तिताः ॥

[4]कुलानुक्रमाद्वेश्मनो देवतानां
हरिद्रारजोभिर्लिखित्वा सुवस्त्रे ।
प्रतीचीमुखाः स्थापयित्वा सुकुड्ये
स ताः प्राङ्मुखः पूजयेत् पुष्पधूपैः ॥

(१) संग. १०२–१०३. (२) संग. २२५.
(३) रेका. ९५–९६ पृ. ५४–५५; संदी. २६ (भागः २). (४) रेका. १०१ पृ. ५५.

यस्मिन्कर्मणि मण्डपकरणं तत्र मण्डपसंबन्धिदेवताः स्थापयेत् । तद्यथा– अथाविघ्नमातृपूजा । तण्डुलपूर्णहरिद्राखण्डक्रमुकफलयुक्ते न्युब्जशरावपिहिते हरिद्रादिमण्डिते शरावे सूत्रवेष्टिते सूक्ष्मकलशे अविघ्नसंज्ञं गणपतिमावाह्य पूजयेत् । 'मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा । अविघ्नो विघ्नहर्ता च षडेतेऽविघ्नमातरः ॥' । 'मनो जूतिः' इति मन्त्रेण प्रतिष्ठाप्य षोडशोपचारैः पञ्चोपचारैर्वा पूजयेत् । आदिशब्दादुद्वर्तनोष्णोदकैरभ्यङ्गस्नानादिना ।

ततो मण्डपमातरः पूज्याः । दूर्वाशमीपल्लवकुशदेववृक्षपल्लवानाम्रादिप्रशस्तपत्रवेष्टितान् सूत्रेण षोढा वेष्टयेत् । तत्रैकत्र मुसलं एकत्र छुरिकां शस्त्रं वा । सर्वाणि वंशपात्रे निधाय तन्मध्ये उदक्संस्थेषु चतुर्षु क्रमेण नन्दिनीं नलिनीं मैत्रामुमां च तदुत्तरे मुसलगर्भे पशुवर्धिनीं तदुत्तरशस्त्रगर्भे भगवतीम्( ? आवाहयेत् ) । आग्नेयकोणस्तम्भात्प्रादक्षिण्येन आग्नेयकोणस्तम्भोपरि नन्दिनीनामकं वेष्टितं 'मनो जूतिः' इति प्रतिष्ठाप्य, 'स्थिरो भव' इति तत्र नन्दिनीं पूजयेत् । 'निकामे निकामे नः' इति मन्त्रेण प्रोक्ष्य पूर्ववद्गन्धादिना पूजयेत् । स्तम्भमालभ्य 'ऊर्ध्व ऊषुणः' इति जपः । एवं सर्वेषु स्तम्भेषु ज्ञेयम् । ततो नैर्ऋत्यस्तम्भे नलिनीम्, वायव्यस्तम्भे मैत्राम्, ईशानस्तम्भे उमां मण्डपमध्ये पशुवर्धिनीं भगवतीं च उक्तवत्स्थापयित्वा पूजयेत् ।

केचित्तु शूर्पे एव कुङ्कुमादिना षोडशमातॄः सप्तमातॄः अविघ्नमातॄः षट् लिखित्वा पूजयन्ति । ततो वंशपात्रेण सह गौर्यादिमातृकास्थापनम् । वंशपात्रं च स्वयं गृहीत्वा अविघ्नकलशं च पत्न्या ग्राहयित्वा सब्राह्मणः 'आ नो भद्राः' 'स्वस्ति न इन्द्रः' सुमङ्गलसूक्तानि पठन् मङ्गलवाद्यघोषेण गृहद्वारसमीपे गत्वा तत्र द्वारमातृकाः पूजयेत् । 'जयन्ती विजया नाम पिङ्गला च

सुशोभना । भद्रकाली प्रपूज्यन्ते पञ्चैता द्वारमातृकाः ॥ '। अथवा– 'जया च विजया चैव भद्रकाली च पिङ्गला । सुभगा चैव विज्ञेया द्वारमातॄः प्रपूजयेत् ॥ '। 'मनो जूतिः' इति प्रतिष्ठाप्य पूर्ववत्पूजयेत् । ततो वसोर्धाराकरणं शान्तिसूक्तपाठं च कुर्यात् ।

ततो जलमातृकापूजनम् । ताश्च– 'मत्सी कूर्मी च वाराही कुर्कुटी दुर्दुरी तथा । जलूकी सोमपा चैव सप्तैता जलमातरः ॥ '। पूर्ववत्प्रतिष्ठाप्य पूजयेत् ¶ ।

संग. १०२–१०३

¶ 'मातृपूजने यथाकुलदेशाचारं क्रम आदरणीयः, क्रमभेदस्य प्रत्यक्षदर्शनात् इत्यादर्शपुस्तके टिप्पणी ।

# लौकिकदेशकुलधर्माणां कर्तव्यता

## आश्वलायनगृह्यसूत्रम्

'अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात् ॥

(१) अथशब्दोऽधिकारार्थः। इत उत्तरं यद्वक्ष्यामः तत् सर्वेषां वेदितव्यम्। खलुशब्दोऽपार्थकः। उच्चावचा इति नानाप्रकाराः, बहव इत्यर्थः। अथ खलु जनपदधर्मा इति वक्तव्ये उच्चावचग्रहणमपार्थकम्। नेत्युच्यते। उच्चावचग्रहणेऽक्रियमाणे सर्वे धर्मा ग्रामेषु जनपदेषु च ये शक्याः तेषां सर्वेषां समुच्चयः प्राप्नोति। स चानिष्टः। तेनोच्चावचा नानाप्रकारा एव क्रियेरन्निति। अत उच्चावचग्रहणम्। जनपदा इति च अङ्गा वङ्गा मगधाः कुरवो विदेहाः पाञ्चालाः शूरसेनाः इत्येवमादयः, एतेषु च ये ग्रामाः, तेषु जनपदेषु ग्रामेषु च ये धर्माः तान् विवाहे धर्मान् प्रतीयात्, जानीयादित्यर्थः। कुर्यादित्येतदुक्तं भवति। तानिति शक्यमकर्तुम्। कस्मात्? अधिकृतत्वात् तेषाम्। नेत्युच्यते। '(जनपदधर्माः) ग्रामधर्माश्च विवाहे प्रतीयात्' इत्येवमुच्यमाने न जनपदधर्माणां ग्रामधर्माणां च विधानं स्यादिति। कथं विधानार्थेन लिङ्गा(? लिङ्ग) संबन्धो मा भूदिति। अतस्तानित्युच्यते। किं सिद्धं भवति? अन्येऽपि धर्माः तानित्यनेन आकृष्यन्ते। के पुनस्ते धर्माः? कुलधर्माश्च। तान् विवाहे प्रतीयादिति सिद्धं भवति। तेन (जनपदधर्मान्) ग्रामधर्माः(? र्मान्) कुलधर्माश्च(? र्मांश्च) विवाहे प्रतीयादित्यर्थः साधितो भवति। विवाहे स्युः। कथं वा (अ?)कृत्स्ने विवाहे स्युः? (अन्यथा) उपयमनादुत्तरकाले विहितत्वात् उपयमने न स्युः, इत्यतो विवाहग्रहणं क्रियते। अथवा विवाहग्रहणं कुर्वन् तज्ज्ञापयति प्राक् चौलादीनामधिकारोऽनुवर्तते इति। किं पुनरधिकारानुवृत्तौ प्रयोजनमिति? 'कुलमग्रे परीक्षेत' इति योऽयं विशेष उक्तः तस्य सर्वार्थता हविः(?)कल्पिता भवति। तेन यस्य चौलं करिष्यन् भवति तस्य कुलमग्रे परीक्षेतेत्येतत् साधितं भवति। एवमुत्तरेषां साधारण्ये तत्प्रयोजनार्थं (?) विवाहग्रहणम्। देभा.

(२) अथशब्दोऽधिकारार्थः। यद्वक्ष्यते तद्विवाहे वेदितव्यमिति। खलुरनर्थकः। उच्चावचग्रहणं कथम्? एते जनपदधर्मादयो नानाप्रकाराः क्रियेरन्, नैकेन कर्त्रा समुच्चेरन्निति। जनपदधर्माः देशधर्माः। ग्रामशब्देन नगरमुच्यते। धर्मशब्दादेव द्वितीयानिर्देशे सति अन्वये सिद्धे तानिति वचनं कुलधर्मा अपि कार्याः इत्येवमर्थम्। तान् तादृशानित्यर्थः। विवाहाधिकारे पुनः विवाहग्रहणं कृत्स्ने विवाहे यथा स्युरित्येवमर्थम्। इतरथोपयमनकालादुत्तरकालं विहितत्वादुपयमने न स्युः। उपयमनं नाम कन्यायाः स्वीकरणम्। प्रतीयादिति कुर्यादित्यर्थः। *गानावृ.

(३) अथ खल्विति वाक्योपन्यासे। उच्चावचाः अनियताः, नैकरूपा इत्यर्थः। प्रतीयात् जानीयात्। ज्ञानेन चात्र तत्पूर्वकं करणं लक्ष्यते। § अना.

(४) प्रयोगपरिजाते तु गृह्यपरिशिष्टानुसारेण कन्यादानतत्प्रतिग्रहजवनिकापूर्वकमन्त्रवन्निरीक्षणाक्षतारोपणदास्यादिदानपुरोधःकर्तृकाभिषेकपरस्परक्षीरघृततिलककरणमालारोपणपूर्वसंपादितकौतुकसूत्रबन्धनगणपतिपूजनक्रमुकबन्धनादीत्ययमनुष्ठानक्रम उक्तः। स च देशाचारवशेनानुसर्तव्यः, 'अथ खलूच्चावचा जनपदधर्मा

---

(१) आगृ. १।७।१; प्रपा. ३५३; प्रर. १११; धप्र. ४७ वचा जन (वचजन); संप्र. ८२५; श्राप्र. २९०; संकौ. २०४ (अथ खलूच्चावचा०) : २२० (तान् विवाहे प्रतीयात्) एतावदेव; संग. २८८; कृभ. १७२६; संर. ५३९; संदी. ९ (भागः २) (=).

* प्रपा. वृत्तेरनुवादः।

§ शेषं गानावृवत्।

ग्रामधर्मांश्च तान् विवाहे प्रतीयात् ' इति सूत्रतः पदार्थस्वरूप इव तत्क्रमेऽपि समत्वाद्देशाचारप्रामाण्यस्य ।

प्र. १११

( ५ ) ' * तान् विवाहे प्रतीयात् ' इति गृह्यविरुद्धकुलधर्माणामपि संग्रहार्थमिति वृत्तिकृतोक्तत्वात् तदनुसारिकुलधर्माणां सुतरां संग्राह्यत्वात् । संकौ. २२०

( ६ ) स्वकुलदेशविरुद्धेन सापिण्ड्यसंकोचेन विवाहे दोषो भवत्येव, ' अथ खलूच्चावचा जनपदधर्मा ग्रामधर्मांश्च तान् विवाहे प्रतीयात् ', ' येनास्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यति ॥ ' इत्यादिवाक्यैः स्वकुलदेशाचाराविरुद्धस्यैव शास्त्रस्य विवाहेऽनुसर्तव्यत्वात् ।

संदी. ९ ( भागः २ )

**[1]यत्तु समानं तद्वक्ष्यामः ॥**

( १ ) यद्वक्ष्यामः तत्सर्वं समानं वेदितव्यम् । समानं तुल्यम् अविसंवादि । तदिदमनारभ्यम्, सिद्धत्वात् । यथाऽन्यानि कर्माणि उपदेशादेव सर्वत्र समानानि भवन्ति एव(मिदमपि) सर्वत्र समानं भविष्यति । ब्रवीति— नियमार्थमिदमारभ्यते, नान्यदिति । किं पुनः तदन्यदिति ? जनपदधर्मत्वेन च यो धर्मः प्राप्नोति यश्च वक्ष्यमाणस्तयोर्विकल्पः स्यात्, स मा भूदिति कृत्वा निश्चयः क्रियते । न च भविष्यति विकल्पः, वक्ष्यमाण एव धर्मो भविष्यति । किं कारणम् ? शास्त्रविहितत्वात् । नेत्युच्यते । जनपदधर्मा अपि शास्त्रविहिताः । तेन विकल्प उपपद्यते । तस्मान्नियमार्थमारब्धव्यम् । कः पुनरसौ धर्मो योऽनभिप्रेतो निवर्त्यते ? यस्मात्तत्र लौकिकेषु सद्य एव व्यवायो दृष्टः । शास्त्रेषु त्रिरात्रादिब्रह्मचर्यं चोपपाद्यते । तत् कथं ब्रह्मचर्य एव नियमः स्यात्, न व्यवाये ? इत्येतदिदं सूत्रमारभ्यते । अथवा यत्तु समानं तद्वक्ष्याम इत्यारभ्यते । अष्टौ विवाहा विहिताः । सर्वैरेतैः कर्मविशेषैः भवितव्यमिति प्राप्तम् । एवं हि उपपन्ना संख्या भवति । एवं प्राप्ते वक्ष्यमाणं तु कर्म सर्वेषु समानमेव भवति । अथ संख्या किमर्था ? दानोपायमात्रे संग्रहा( ? संख्यानु)ग्रहो द्रष्टव्यः । फलं चैतद्वा (?) प्रयोजनम् । देभा.

( २ ) किमर्थमिदम् ? यथा अन्यान्युपदेशादेव सर्वत्र भवन्ति पार्वणादीनि तथेदमपि स्यात् । नियमार्थं तर्हि, जनपदादिधर्माणां वक्ष्यमाणधर्माणां च विरोधे सति वक्ष्यमाणमेव धर्मं कुर्यात्, न जनपदादिधर्ममिति । यद्वक्ष्यामस्तत्सर्वत्र समानमेवेत्यर्थः । वैदेहेषु सद्य एव व्यवायो दृष्टः । गृह्ये तु ' ब्रह्मचारिणौ त्रिरात्रम् ' इति ब्रह्मचर्यं विहितम् । तत्र गृह्योक्तमेव कुर्यात्, न देशधर्ममिति सिद्धम् ।

$ गानावृ.

## आश्वलायनगृह्यपरिशिष्टम्

**[1]पुरन्ध्र्यः कन्यायै कल्याणान् कुलधर्माचारान् कुर्युः ॥**

## कौषीतकिगृह्यसूत्रम्

**[2]तासामप्रतिकूलः स्यादन्यत्राभक्ष्यपातकेभ्यः ॥**

( १ ) ताश्चाभक्ष्यपातकानि मुक्त्वा यत् प्रेरयन्ति तत्कर्तव्यम्, यद्भाषयन्ति तद्भणितव्यम् । कौगृस.

( २ ) तासां स्त्रीणामप्रतिकूलः अनुकूलः वरः स्यात्, ता यद्यत्कारयन्ति कुलाचारमर्थादविरुद्धं तत्तु कुर्यात् । सर्वमेवोक्तं कुर्यादिति न, अभक्ष्यपातकेभ्योऽन्यत्र । अभक्ष्यभक्षणं येन च पातकं भवति तन्न कुर्यात् । काश्चन

---

* हेतुमानत्रानल्पाक्षरत्वात्प्रकृतसूत्रार्थबोधनेऽनाकाङ्क्षितत्वाच्च न संगृहीतः । एवमन्यत्रापि द्रष्टव्यम् । इदं वृत्त्यभिप्रायवर्णनं नारायणवृत्तिविरुद्धत्वात् कां वृत्तिमभिप्रेत्येति चिन्तनीयम् ।

( १ ) आगृ. १।७।१ ; प्रपा. ३५३ ; संप्र. ८२५ ; संग. २८८.

$ अना. गानावृवत् ।

( १ ) आगृप. १।२१ ; प्रपा. ३४५ धर्माचा ( धर्मोपचा ) ; विपा. ७६१.

( २ ) कौगृ. १।१२।२ ; संर. ५४०.

स्त्रियोऽस्मिन्नवसरे कार्मणादिकं कुर्वन्ति तद्व्यतिरिक्तं यद्यत्कारयन्ति तद्विधेयमिति तद्भाष्यम् ।

संर. ५४०

## आपस्तम्बगृह्यसूत्रम्

[1]**तथा मङ्गलानि ॥**

( १ ) 'ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा' इत्येवमादीनि स्वशास्त्रप्रसिद्धानि मङ्गलानि । स्नातोऽहतवासा गन्धानुलिप्तः स्रग्वी भुक्तवानित्येवमादीनि नापितकर्माङ्कुरार्पणादीनि लोकप्रसिद्धानि । तान्येतानि सर्वाणि प्रत्येतव्यानि । अनाकुला.

( २ ) शङ्खदुन्दुभिवीणातूणववादित्रसंप्रवादनानि कुलस्त्रीगीतानि केशश्मश्रुवादिप्रकल्पनाहतधौताच्छिद्रविचित्रवासोधारणगन्धानुलेपनसुगन्धस्रग्धारणापदातिगमनच्छत्रध्वजादीनि शिष्टाचारप्रसिद्धानि मङ्गलानि विवाहे उपसंहर्तव्यानि । ‡ताद.

[2]**आवृतश्चाऽऽस्त्रीभ्यः प्रतीयेरन् ॥**

( १ ) मन्त्ररहिताः क्रियाः आवृत इत्युच्यन्ते । यस्मिन् जनपदे ग्रामे कुले वा या आवृतः प्रसिद्धाः तास्तथैव व्यवस्थिताः यथा प्रतीयेरन् , न सर्वत्रैवमर्थम् ।

अनाकुला.

(२) आवृतः क्रियाः वैवाहिक्यः, अविशेषात्समन्त्रका अमन्त्रकाश्च । ताः सर्वा आ स्त्रीभ्यः सर्ववर्णेभ्यः सकाशादवगम्य प्रतीयेरन् कुर्वीरन् विवोढारः । तत्र समन्त्रका ग्रहपूजाङ्कुरारोपणप्रतिसरबन्धाद्याः आचारसिद्धाः । अमन्त्रकाः नाकबलियक्षबलीन्द्राणीपूजादयः । ताश्च यथाजनपदं यथावर्णं यथाकुलं यथास्त्रीपुंसं व्यवस्थिता एव, न तु सर्वाः सर्वत्र समुच्चिताः । ‡ताद.

## काठकगृह्यसूत्रम्

[3]**आचारिकाणि ॥**

( १ ) आचारिकाणि आचारादागतानि देशजातिकुलधर्मतया प्रसिद्धानि कर्माणि कारयेदित्यर्थः । *देव.

( २ ) आचारिकाणि कर्माणि कुर्यात् । देशजातिकुलव्यवस्थया स्थितानि । अशास्त्रार्थमिति न प्रतिबध्नीयात् । आवि.

## पारस्करगृह्यसूत्रम्

[1]**ग्रामवचनं च कुर्युः ॥**

**'विवाहश्मशानयोर्ग्रामं प्रविशतात्' इति वचनात् ॥**

**'तस्मात् तयोर्ग्रामः प्रमाणम्' इति श्रुतेः ॥**

( १ ) तयोः विवाहश्मशानयोः । श्रुतिग्रहणं च ग्रामवचनप्रामाण्यज्ञापनार्थम् । ग्रामशब्देन किमभिधीयते ? इति चेत् , ग्रामं प्रविशतादिति वचनात् स्त्रियो ग्रामशब्देनाभिधीयन्ते । ताश्च यत्स्मरन्ति तदपि कर्तव्यमिति ।

$ कभा.

( २ ) ग्रामवचनं च कुर्युः अत्र विवाहे ग्रामशब्दवाच्यानां स्वकुलवृद्धानां स्त्रीणां श्मशाने च वाक्यं कुर्युः अङ्कुरार्पणहरिद्राक्षतचन्दनादिधर्मप्रतिपादकम् । कस्मात् ? 'विवाहश्मशानयोर्ग्रामं प्राविशतादिति वचनात् , तस्मात्तयोर्ग्रामः प्रमाणमिति श्रुतेः' । विवाहे च श्मशाने च ग्रामं स्वकुलवृद्धाः स्त्रियः प्राविशतात् शास्त्रातिरिक्तं कर्तव्यमाचारं पृच्छेदिति वचनात् इति स्मृतेः । न केवलं स्मृतेः , श्रुतेश्चापि । का सा श्रुतिः ? 'तस्मात्तयोर्ग्रामः प्रमाणम्' इति । यतः स्वकुलवृद्धाः स्त्रियः पूर्वपुरुषानुष्ठीयमानं सदाचारं स्मरन्ति तस्मात्तयोर्विवाहश्मशानयोर्ग्रामः प्रमाणं सदाचारबोधकमित्यर्थः । हभा.

---

‡ संर. तात्पर्यदर्शनानुवादः ।

( १ ) आपगृ. २।१४ ; संर. ५४०.

( २ ) आपगृ. २।१५ ; संर. ५३९.

( ३ ) कागृ. २५।७.

* ब्राह्म. देववत् ।

$ जभा. , विभा, कभावत् ।

( १ ) पागृ. १।८।११-१३ ; हभा. प्रविश (प्राविश) ; स्मृकौ. ३५ ( ग्रामवचनं च कुर्युः ) एतावदेव ; ज्योनि. १०५ स्मृकौवत् , गृह्यसूत्रे ; संग. २८४ हभावत् ; संदी. ३८ ( भागः २ ).

## नारदः

[1]विवाहर्क्षेषु यः प्रोक्तो मयाऽङ्घ्रिक्षालनोत्सवः।
कन्याया वरणात्पूर्वं देशाचारः स केवलम् ॥

## शाकलकारिका:

[2]देशधर्मानुसारेण विवाहः कार्य एव हि।
शिष्टाचारोऽपि तद्वत्स्यात्सूत्रकारवचो यथा ॥

## शौनककारिका:

[3]नानाविधा जानपदा ग्राम्याश्चोद्वाहकर्मणि।
क्रियन्ते लौकिका धर्मास्तेषु स्वकुलपूरुषैः ॥
[4]पूर्वैरनुष्ठितान् कृत्वा कुर्याद्दारपरिग्रहम्।
सर्वसाधारणं कर्म यत्तु तावदिहोच्यते ॥

(१) ज्योनि. १४९.

(२) शाका. १२३ पृ. १३.

(३) शौका. १ पृ. ५८ जान (जन); प्रपा. ३५५; संप्र. ८२६; विपा. ३८ (भागः २); संग. २८८ जान (जन) स्वकुल (तत्कुल).

(४) शौका. २ पृ. ५८; प्रपा. ३५५; संप्र. ८२६ दार (वर); विपा. ३८ (भागः २) यत्तु (तत्तु); संग. २८८ पू.

(३) ग्रामशब्देन तत्स्था लोका लक्ष्यन्ते। अतः स्वकुलवृद्धानां वचनमङ्कुरार्पणहरिद्राकृतचन्दनादिधर्मप्रतिपादकं कुर्युरित्यर्थः। स्मृकौ. ३५

(४) विवाहे श्मशाने च वृद्धानां स्त्रीणां वचनं वाक्यं कुर्युः, सूत्रे अनुपनिबद्धमपि वधूवरयोर्मङ्गलसूत्रं गले मालाधारणमुभयोर्वस्त्रान्ते ग्रन्थिकरणं करग्रहणे न्यग्रोधपुटिकाधारणं वरागमने नासिकाधारणं वरहृदये दध्यादिलापनादि ताश्च यत्स्मरन्ति तदपि कर्तव्यमित्यर्थः। चशब्दाद्देशाचारोऽपि। ग्रामशब्देन स्वकुलवृद्धा स्त्रियोऽभिधीयन्ते। ता हि पूर्वपुरुषैरनुष्ठीयमानं सदाचारं स्मरन्ति। ग्रामवचनं लोकवचनमिति भर्तृयज्ञः। वृद्धानां स्त्रीणां वचनं कार्यमिति कुतः? इत्यत आह– ग्रामं... मिति श्रुतेः। ग्रामं वृद्धानां स्त्रीणामाचारम्, प्रविशतादिति स्मृतिवचनात्। ननु 'ग्रामं प्रविशतात्' इति स्मृतिवचनाद्धरिद्रालापनादौ अस्तु प्रामाण्यम्, यत्र तु 'अथैनामश्मानमारोहयति' इत्येतदनन्तरं तूष्णीं वरस्य पाषाणावरोहणं कारयित्वा कुमार्या भ्राता वराङ्गुष्ठोपरि उपलं निधाय वराद्रूप्यादि गृह्णाति (इति) ताः स्मरन्ति तदप्रमाणम्, लोभमूलत्वेन वैसर्जनीयवस्त्रवदित्यत आह– तयोर्विवाहश्मशानयोर्ग्रामः प्रमाणमिति श्रुतिवचनात्ताभिर्यत्स्मर्यते रूप्यग्रहणादि तदपि प्रमाणमिति, प्रत्यक्षश्रुतिमूलत्वात्। † गभा.

† संग., संदी. गभावत्।

# ¶कन्यावरणम्

## बौधायनगृह्यसूत्रम्

वरितृप्रेषणं तदपवादश्च

[1]विवाहं व्याख्यास्यामः ॥

उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे युग्मान् ब्राह्मणान् वरान् प्रहिणोति—'प्रसुग्मन्ता धियसानस्य सक्षणि वरेभिर्वराꣳ अभिषुप्रसीदत। अस्माकमिन्द्र उभयं जुजोषति यत्सौम्यस्यान्धसो बुबोधति ॥' इति ॥

यतोऽनुमन्त्रयते— 'अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम्। समर्यमा संभगो नो निनीयात्संजास्पत्यं सुयममस्तु देवाः ॥' इति ॥

[2]अथ यदि दक्षिणाभिः सह दत्ता स्यान्नात्र वरान् प्रहिणुयात् ॥

## आश्वलायनगृह्यपरिशिष्टम्

वरितृप्रेषणं वरणप्रयोगश्च

[3]अथ कन्यावरणम्। कन्यां परिणेष्यमाणो द्वौ चतुरोऽष्टौ वा वरान् पितुराप्तान् प्रशस्ताकारकर्मणः 'अनृक्षरा ऋजवः सन्तु पन्थाः' इति प्रहिणुयात्। ते तावतीभिः पुरन्ध्रीभिः सहिता मङ्गलगीततूर्याभ्यां कन्यागृहमेत्य शुभे पीठासने प्राङ्मुखासीनाया दातृज्ञातिबान्धवोपेतायाः कन्यायाः पाणौ फलं प्रदाय कन्यावरणकाले वृणीरन्। आसीनाः प्रत्यङ्मुखाः 'वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्ने वराय वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां भार्यात्वाय वृणीमहे' इति ब्रूयुः। अथ दाता भार्याज्ञातिबन्धुसमेतो यथोक्तमनूद्य 'वृणीध्वम्' इति ब्रूयात्। एवं त्रिः प्रयुज्य दाता 'प्रदास्यामि' इति चोच्चैस्त्रिर्ब्रूयात्। अथ ब्राह्मणा उक्तस्वस्त्ययनाः 'शिवा आपः सन्तु, सौमनस्यमस्तु, अक्षतं चारिष्टं चास्तु, दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु' इत्युक्त्वा 'एतद्वः सत्यमस्तु' इत्यनूद्य 'समानीव आकूतिः, प्र सुग्मन्ता धियसानस्य सक्षणि' इत्येवं पठेयुः। पुरन्ध्र्यः कन्यायै कल्याणान् कुलधर्माचारान् कुर्युः ॥

(१) अथ कन्यावरणप्रकारः। एवमुक्तविवाहभेदेषु ब्राह्मविवाहस्य मुख्यत्वं हृदि निधाय तद्विधिं वक्तुमादौ वाग्दानरूपकन्यापरिग्रहणविधिमाह गृह्यकारः परिशिष्टरूपेण— कन्यां परिणेष्यमाण इति। प्रपा. ३४५

---

¶ अत्रैव वरवरणं वाग्दानं शचीपूजनं चान्तर्भूतम्। शचीपूजनं प्रयोगकारैः वाग्दाने गौरीहरपूजायां कन्यादानोत्तरं चोक्तम्।

(१) बौगृ. १।१।१३–१५.

(२) बौगृ. १।१।१६; संर. ४७७ (नात्र वरान् प्रहिणुयात्०).

(३) आगृप. १।२१ चतुरोऽष्टौ वा वरान् (चत्वारोऽष्टौ वर) सक्षणि' इत्येवं (सक्षणि' इत्येताः); प्रपा. ३४५ (अथ कन्यावरणम्०) (अष्टौ०) प्रशस्ताकार (प्रशस्ताचार) तूर्याभ्यां (तूर्यघोषाभ्यां) प्राङ्मुखा (प्राङ्मुखमा) कन्यावरणकाले (कल्याणे काले) वृणीरन् (कन्यां वृणीरन्) प्रत्यङ्मुखाः + (च) अथ दाता भार्या (अथवा दाता सभार्यो) प्रयुज्य दाता (प्रयुज्य) मायुः श्रेयः (मायुरस्तु) मस्तु' इत्यनूद्य (मस्त्विति त्रिरनूद्य) सक्षणि इत्येवं (सक्षणिरित्येवं) धर्माचारान् (धर्मोपचारान्); विपा. ७६०–७६१ (अथ कन्यावरणम्०) वरान् (वर) ते ताव (ते च ताव) तूर्याभ्यां + (सुशकुनपूर्वकं) कन्यावरणकाले (कल्याणे काले) वत्वा 'एतद्वः (क्ते तद्वः) मस्तु' इत्यनूद्य (मस्त्विति त्रिरनूच्य) सक्षणि' इत्येवं (सक्षणीत्येताः).

(२) अथेदानीमुक्तविवाहेषु ब्राह्मविवाहाङ्गभूतं वाग्दानविधानं प्रस्तूयते। तदुक्तमाश्वलायनगृह्यपरिशिष्टे— कन्यां परिणेष्यमाण इति। विपा. ७६०

## कौषीतकिगृह्यसूत्रम्

### वरितृप्रेषणं वरणप्रयोगश्च

[1]जायामुपग्रहीष्यमाणः 'अनृक्षराः' इति वरकान् गच्छतोऽनुमन्त्रयते॥

अभिगमने पुष्पफलयवानादायोदकुम्भं च॥

'अयमहं भो ३ः' इति त्रिः प्रोच्य॥

उदिते प्राङ्मुखा गृह्याः प्रत्यङ्मुखा आवहमाना गोत्रनामान्यनुकीर्तयन्तः कन्यां वरयन्ति॥

उभयतो रुचिते पूर्णपात्रीमभिमृशन्ति पुष्पाक्षतफलयवहिरण्यमिश्राम्— 'अनाधृष्टमस्यनाधृष्यं(? ष्यं) देवानामोजोऽनभिशस्त्यभिशस्तिपाः। अनभिशस्तेऽन्यमञ्जसा सत्यमुपगेषं सुविते मा धाः॥' इति॥

'आ नः प्रजाम्' इति कन्याया आचार्य उत्थाय मूर्धनि करोति— 'प्रजां त्वयि दधामि पशूंस्त्वयि दधामि तेजो ब्रह्मवर्चसं त्वयि दधामि' इति॥

कन्यावरणं वक्ष्यामः। कन्यामस्पृश्यमैथुनामसमानार्षेयां लक्षणोपेतां परिणयीत। 'अनृक्षरा ऋजवः सन्तु पन्थाः' इत्यनेन मन्त्रेण वरकामानागन्तु(? वरकान् गन्तु)कामान् परिणेता अनुमन्त्रयते। एवं गमने गमने तावदनुमन्त्रणं कर्तव्यं यावदङ्गीक्रियते। ततः पुष्पफलयवानुदकुम्भं गृहीत्वा 'देवदत्तोऽहं भोः' इत्येवं स्वं नाम त्रिरुच्चार्य आचार्यः सर्वे वा ततः प्राङ्मुखा गृह्याः प्रत्यङ्मुखा वरवित्तका भवन्ति। मध्ये चोदकुम्भः। ततो वरवित्तकाः 'अमुकगोत्रो वरवित्तकः अमुकनामानोऽस्य पूर्वजाः' इति पितृतो मातृतश्च त्रिपुरुषं कथयित्वा कन्यां प्रार्थयन्ते। ततः कन्यावित्तकेन प्रतिपन्ने 'यथार्हलग्नोपस्थायिने अविकलेन्द्रियाय दास्यामि' इति, ततो द्वावपि 'अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यनभिशस्तिपाः। अनभिशस्तेऽन्यमञ्जसा सत्यमुपगेषं सुविते मा धाः॥' इत्यनेन मन्त्रेणोदकुम्भस्थां पूर्णपात्रीं पुष्पाक्षतफलयवहिरण्यमिश्रामभिस्पृशतः। ततो वरवित्तसक्त आचार्यः 'आ नः प्रजां जनयतु प्रजापतिः' इत्यनेन मन्त्रेण तां पात्रीं कन्याया मूर्धनि करोति। ततः 'प्रजां त्वयि दधामि पशूंस्त्वयि दधामि तेजो ब्रह्मवर्चसं त्वयि दधामि' इत्यनेन मन्त्रेण कन्यामनुमन्त्रयेत्। अपरे त्वेवं व्याचक्षते— 'आ नः प्रजाम्' इति ऋक्, 'प्रजां त्वयि दधामि' इति त्रीणि यजूंषि एक एवायं मन्त्रः। अनेन पात्रीमेव मूर्धनि करोति। अनुमन्त्रणं न कर्तव्यम्।

कौगृसं. ६–७

## आपस्तम्बगृह्यसूत्रम्

### वरितृप्रेषणं वरणप्रयोगश्च

[1]सुहृदः समवेतान् मन्त्रवतो वरान् प्रहिणुयात्॥

(१) अथ कन्यावरणविधिः। 'इन्वकाभिः प्रसृज्यन्ते' (आपगृ. २।१६) इत्युक्तम्। तस्मिन्नन्यस्मिन् वा पुण्यनक्षत्रे ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा, सुहृदः बन्धून् समवेतान् संगतान् मन्त्रवतः श्रुताध्ययनसंपन्नान् वरान् कन्यावरयितॄन् प्रहिणुयात् प्रस्थापयेत्— 'यूयममुष्मात् कुलात् मह्यं कन्यां वृणीध्वम्' इति। यद्यप्येवंविधे कार्ये सुहृदामेव संभावना, तथाऽपि सुहृद इत्युच्यते मन्त्रवतामसंभवे सुहृत्त्वमात्रपरिग्रहार्थम्। मन्त्रवत इति ब्राह्मणानामेव ग्रहणम्। तेन क्षत्रियवैश्ययोरपि ब्राह्मणा एव वराः। अनाकुला.

(२) पूर्वत्र 'इन्वकाभिः प्रसृज्यन्ते' (आपगृ. २।१६) इति विवाहोपयोगिनो वरप्रेषणस्य कालोऽभिहितः। इदानीं तस्य विधिमाह— सुहृदः आत्मनो मित्राणि। समवेतान् आत्मानं प्रत्येककार्यान्। मन्त्रवतः मन्त्रब्राह्मणवतः, 'शुचीन् मन्त्रवतः' (आध. २।१५।११) इतिवन्मन्त्रग्रहणस्य प्रदर्शनार्थत्वात्।

---

(१) कौगृ. १।६।१–६.

(१) आपगृ. ४।१; गृर. ५४, सुहृदः (सुहृदा).

वरान् वरयितॄन्। वरः प्रहिणुयात् प्रेषयेत्। एते युग्मा ब्राह्मणाश्चेति केचित्। ताद.

[1]तानादितो द्वाभ्यामभिमन्त्रयेत॥

(१) गच्छतस्तान् वरान् अनन्तरमाम्नातस्य मन्त्रसमाम्नायस्याऽऽदितो द्वाभ्यामृग्भ्याम् 'प्रसुग्मन्ता' इत्येताभ्यामभिमन्त्रयेत। अभिलक्ष्य मन्त्रोच्चारणं अभिमन्त्रणम्। ततस्ते कन्याकुलं गत्वा 'एवंगोत्रायामुष्मै सहत्वकर्मभ्यो युष्मदीयां कन्यां वृणीमहे' इति ब्रूयुः। ततस्ते प्रतिब्रूयुः— 'शोभनं तथा दास्यामः' इति। तत्र ब्राह्मे विवाहे दैवे चार्थलोपात् वरणलोपः, कल्पान्तरदर्शनाच्च 'नात्र वरान् प्रहिणुयात्' इति। तथा गान्धर्वराक्षसयोश्च। अनाकुला.

(२) तान् प्रस्थितान् मन्त्रसमाम्नायस्याऽऽदितः 'प्रसुग्मन्ता' इति द्वाभ्यामृग्भ्याम् अभिमन्त्रयेत। अभिमन्त्रणम् आभिमुख्येन मन्त्रस्योच्चारणम्। अनुमन्त्रणमप्येवम्, अनुमन्त्रयितव्यद्रव्यगतचित्तेनेति तु भेदः।

अथ सूत्रस्यापूर्णत्वात् क्रम उच्यते— कृतप्राणायामः 'वरान् प्रेषयिष्ये' इति संकल्प्य 'प्रसुग्मन्ता' इति द्वाभ्यां वरानभिमन्त्र्य 'यूयममुष्मात् कुलात् मह्यं कन्यां वृणीध्वम्' इति प्रेषयेत्। ततस्ते दुहितृमतो गृहं गत्वा, कन्यां दत्तसगोत्रत्वादिदोषरहितां बन्ध्वादिगुणसंपन्नां च यत्नतोऽवधार्य, दुहितृमन्तं पित्रादिकं 'गौतमगोत्राय विष्णुशर्मणे वराय भवदीयां कन्यां प्रजासहत्वकर्मभ्यो वृणीमहे' इति ब्रूयुः। ततः स पित्रादिः 'दास्यामि' इति प्रतिब्रूयात्। ततस्ते प्रत्येत्य 'सिद्धार्था वयम्' इति वराय वेदयेयुः। एतच्च वरप्रेषणाद्यासुरार्षयोरेव, नान्येषु, अर्थलोपात्।

अथ यस्मिन्नहनि विवाहः ततः पूर्वमेव पञ्चमे तृतीये वाऽहनि यथाशिष्टाचारमङ्कुरारोपणं कुर्यात्। तथा श्वो विवाहः इति, अद्य विवाहः इति च। 'तथा मङ्गलानि' 'आवृतश्चाऽऽस्त्रीभ्यः प्रतीयेरन्' (आपगृ. २।१४,१५) इत्युक्तानि कर्माणि वरो वधूश्च यथाकालं यथायोग्यं कुरुतः। केचित्— पूर्वेद्युर्नान्दीश्राद्धं कल्पान्तरादिति।

ततः पित्रादिर्वधूकुलं प्राप्ताय वराय कन्यामुदकपूर्वं दद्यात्— 'इमां वत्सगोत्रजां लक्ष्मीदार्थीं गौतमगोत्राय विष्णुशर्मणे तुभ्यं प्रजासहत्वकर्मभ्यः प्रतिपादयामि' इति। गान्धर्वराक्षसयोस्तु न प्रतिपादनम्, दातृव्यापारानपेक्षत्वात्। ततस्तां वरः प्रतिगृह्य विवाहस्थाने 'यत्र क्वचाग्निम्' (आध. २।१।१३) इत्यादिविधिनाऽग्निं प्रतिष्ठाप्य, तत्रैव यस्यां शालायां कन्याऽऽस्ते तां गत्वा मधुपर्कं प्रतिगृह्णाति यथार्हं यथाविधि। एवमेव वरापचितोऽपि। ताद.

## वाराहगृह्यसूत्रम्

### वरितृप्रेषणं वरणप्रयोगश्च

[1]'**अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम्। समर्यमा सं भगो नो निनीयात् सं जास्पत्यं सुयममस्तु देवाः॥' इति वरकान् व्रजतोऽनुमन्त्रयते॥**

**तेजनीष्वासजत्। जन्यान् कौमारिकांश्च। पूर्वे जन्याः स्युः। अपरे कौमारिकाः। चतुरो गोमयपिण्डान् कृत्वा द्वावन्येभ्यस्तथाऽन्येभ्य इति प्रयच्छेत्। 'धनं न' इति ब्रूयुः 'पुत्रपशवो न' इति। 'जन्यां ददामि' इति। 'प्रतिगृह्णामि' इति प्रतिगृह्य त्रिर्ब्रह्मदेया निकृतेनासं न विसंकसेयुः। त्रिरानन्दं मागधो ह्वयेत्॥**

## आग्निवेश्यगृह्यसूत्रम्

### वरितृप्रेषणं वधूयाचनं च

[2]**अथ दूतान् प्रहिणोति— 'अनृक्षरा ऋजवः' इति। वधूमन्तं याचयति— 'अमुष्मै अमुकगोत्राय अमूममुकगोत्रीं धर्मप्रजार्थं वधूं ददातु' इति। तथेत्युक्ते वधूम्॥**

(१) आपगृ. ४।२.

(१) वागृ. १० पृ. ११, १२.

(२) आग्निगृ. १।६।१.

## जैमिनिगृह्यसूत्रम्

दूतानुमन्त्रणम्

**[1]दूतमनुमन्त्रयते– 'अनृक्षरा ऋजवः सन्तु पन्था एभिः सखायो यन्ति नो वरेयम्। समर्यमा सं भगो नोऽनुनीयात्सं जास्पत्यं सुयममस्तु देवाः॥' इति॥**

दूतं दुहितृमति प्रदाननिर्णयाय प्रस्थास्यमानं गणपतिसंकल्पस्य सत्यं कुरु (?)। नान्दीप्रतिसरानन्तरकृत्यमेतत्। अनृक्षराः अशर्कराः ऋजवः पन्थाः पन्थानः सन्तु। एभिः पथिभिः नः सखायः वरेयं कन्यागृहं यन्ति प्राप्नुवन्ति। अर्यमा च नः समनुनीयात्, भगश्च नः समनुनीयात्, हे देवाः, जास्पत्यं जायापत्यं सं सम्यक् सुयममस्तु सुकरमस्तु। श्रीऽया.

## वैखानसगृह्यसूत्रम्

वरणोत्तरभोजनम्

**[2]मातुरसपिण्डां पितुरसमानऋषिगोत्रजातां लक्षणसंपन्नां नग्निकां कन्यां वरयित्वा पश्चाद्धेतु कुलस्य परिशुद्ध्यै सपिण्डैः श्रोत्रियैः सह भूतं भुञ्जीत। यस्मात्स पूतो भवतीति विज्ञायते॥**

## बौधायनः

वधूवरयोर्दिङ्नियमः

***[3]प्राङ्मुखं तं वरं कुर्याद्वरुणाभिमुखीं वधूम्।**
**कन्यावरणकाले तु दानकाले विपर्ययः॥**

* अनयोर्बौधायनवचनयोः व्याख्यानगतसंग्रहशाकलवचनयोः अन्येषु च केषुचिद्वचनेषु वरणकाले वधूवरयोरुभयोः संनिधानं स्वरससिद्धमिति प्रतिपद्यामहे। कुमारिलकारिकासु निरीक्षण–कन्यादानयोर्मध्ये वरणमुक्तम्। तमेव क्रममाश्रित्यैतानि वचनानि स्युरिति भाति।

(१) जैगृ. १।२०.
(२) वैगृ. ३।२.
(३) प्रपा. ३५३.

**प्राङ्मुखः प्रतिगृह्णीयात् प्राङ्मुखं वरयेद्वरम्।**
**वृणुयाद्गोत्रनामाद्यैर्वरुणाभिमुखं स्थिताम्॥**

संग्रहे– 'कन्यावरणकाले तु प्राङ्मुखीं वरयेद्वधूम्। पश्चिमास्यं वरं स्थाप्य द्रोणमाने तु तण्डुले॥' इति। शाकलोऽपि– 'प्राङ्मुखीं वृणुयात्कन्यां गोत्रसंबन्धपूर्वकम्। प्रत्यङ्मुखं वरं कृत्वा वृणुयाद्वधुपूर्वकम्॥'। शातातपीये बोधायनः – 'प्राङ्मुखं तं.... स्थिताम्॥'। इत्यादिवचनद्वैविध्यसमबलत्वाच्च स्वगृह्यविच्छिष्टाचारे एव प्रामाण्यम्। प्रपा. ३५२–३५३

## नारदः

वरणस्य संस्कारत्वं पाणिग्रहणात्प्राक्कर्तव्यता दाम्पत्यानियामकत्वं च

**[1]स्त्रीपुंसयोस्तु संबन्धाद्वरणं प्राग्विधीयते।**
**वरणाद्ग्रहणं पाणेः संस्कारोऽथ द्विलक्षणः॥**
**[2]तयोरनियतं प्रोक्तं वरणं दोषदर्शनात्॥**

(१) नासं. १३।२; नास्मृ. १५।२ बन्धाद् (बन्धे); अप. १।६५ पृ. ९४ तु (च) संस्कारोऽथ द्वि (संबन्धोऽयं त्रि); गृक. ६४ संस्कारोऽथ (संबन्धो हि): ६७ संस्कारोऽथ (स विवाहो) उत्त.; स्मृच. ८२ संबन्धात् (संबन्धे) द्विल (विल); गृर. ५४ तु (च) संस्कारोऽथ (संबन्धो हि); मपा. १५०–१५१ संस्कारोऽथ द्वि (संबन्धोऽयं त्रि) केषांचिन्मते 'संस्कारो ह्यग्निलक्षणः' इति चतुर्थपादे पाठान्तरम्; मर. २० तु (च) उत्तरार्धे (वरणं ग्रहणं पाणेः स विवाहो द्विलक्षणः॥); चम. ८८ संस्कारोऽथ द्विलक्षणः (संस्कारोऽपि विचक्षणैः); मुक्ता. १३८ रोऽथ (रो हि) शेषं स्मृचवत्, वसिष्ठः; संम. ६७ संस्कारोऽथ द्विलक्षणः (स संस्कारो विलक्षणः); बाल. १।६५ पृ. २०४ संमवत्; नाभा. संबन्धात् (संयोगात्) इति वा पाठः; कुभ. ११२९ संमवत्; संर. ५०३ संस्कारोऽथ द्वि (संबन्धोऽयं त्रि): ५०४ 'संस्कारो ह्यग्निलक्षणः' इत्यपि पाठः.

(२) नासं. १३।३; नास्मृ. १५।३; अप. १।६५ पृ. ९४ वरणं (वरणात्); गृक. ६४; स्मृच. ८२;

( १ ) वरणं पाणिग्रहणमुपभोगश्चेति त्रिविधः संबन्धः। तयोः कन्यावरयोः अनियतम् अनियमः, वृताऽपि न परिणीयते वाग्दत्ताऽपि न प्रदीयते इत्येवंरूपः। तस्य कालं कारणं च वक्तुमुक्तम्– वरणाद्दोषदर्शनादिति। वरणादूर्ध्वं कन्यावरयोरन्योन्यदोषदर्शनादनियमो भवति। वरणादिति सावधारणं वचनम्। वरणादेवोर्ध्वम्, न विवाहादित्यर्थः। अत्र हेतुः– 'पाणिग्रहणिका मन्त्राः ०' इति।

* अप. १।६५

( २ ) संबन्धात् पाणिग्रहणलक्षणात्। वरणं 'सुहृदः समवेतान् मन्त्रवतो वरान् प्रहिणुयात्' (आपगृ. ४।१) इत्यापस्तम्बगृह्योक्तम्। द्विलक्षणः द्विप्रकारः। अनियतं तयोः भार्यात्वनियमा(ना)पादकम्। दोषदर्शनात् क्लीबादिदोषाणां कन्याप्रत्यावृत्तिहेतूनां शास्त्रे दर्शनात्।

$ गृक. ६४–६५

( ३ ) तयोः वरणपाणिग्रहणयोः मध्ये वरणमेव दोषदर्शनादनियतम्, न पाणिग्रहणम्, तयोर्वाग्दान(? तस्माद्वाग्दान)मात्रेण पतित्वानुपपत्तेरिति भावः।

स्मृच. ८२

( ४ ) तयोः संबन्धयोः वरणमनियतं भार्यात्वजनने। दोषदर्शनात् क्लीबादिषु वरणे कन्याप्रत्यावृत्तिहेतोः शास्त्रे दर्शनात्।

† गृर. ५४

( ५ ) गान्धर्वादिषु नायं क्रमः। केचन अस्मिन्वचने पाठान्तरं व्याख्यान्तरं च कुर्वते। तद्यथा– 'वरणाद्ग्रहणं पाणेः संस्कारो ह्यग्निलक्षणः। तयोरनियतं प्रोक्तं वरणाद्दोषदर्शनात्॥'। पाणिग्रहणे यः सोऽग्निलक्षणः संस्कारः अग्निचिह्नितो होमादिनिष्पाद्यः संस्कारः। तयोः वरणदानपाणिग्रहणयोर्मध्ये वरणमेव दोषदर्शनादनियतम्, न पाणिग्रहणम्। तस्मादर्वाक् पतित्वानुत्पत्तिरिति।

* मपा. १५१–१५२

( ६ ) स्त्रीपुंसयोः संसर्गात्प्राक् त्रितयं क्रियते। वरणम्, पाणिग्रहणम्, सप्तपदीप्रक्रमश्चेति। तत्र वरणं नाम वरस्य संप्रदानत्वाय कन्याया दात्रा प्रार्थनम्। तदेव च वाग्दानम्। एवंस्थिते तयोः पाणिग्रहणसप्तपदप्रक्रमणयोः पूर्वभावि यद्वरणं तदनियतम् अनियामकमित्यर्थः। तयोरेव भार्यात्वोत्पादकत्वादिति भावः। तथा च मनुः– 'पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे॥' (मस्मृ. ८।२२७) इति। दोषदर्शनादिति वाक्यशेषस्यायमर्थः– वरणस्यानियामकत्वमपि पूर्ववरस्य दोषे सत्येवेति।

• चम. ८८

( ७ ) स्त्रीपुंससंबन्धे विवाहे पूर्वं वरणम्। तदनु तद्विलक्षणः पाणिग्रहणाख्यः संस्कारः।

¶ मुक्ता. १३८

( ८ ) 'संयोगाद्वरणं प्राक्' इति वा पाठः। परस्परसंबन्धात् पूर्वं वरणम्, तदनन्तरं पाणिग्रहणम्। एष एव संस्कारो द्विविधो वरणपाणिग्रहणलक्षणः। तयोर्लक्षणयोः वरणमनियतं दारलक्षणम्, न नियोगतस्तस्यैव दारा भवन्ति। दोषदर्शनात्, अन्योन्यानिच्छया च निवर्तते।

नाभा.

( ९ ) अत्र वरणमनियतमित्युपादानाद्यदि पाणिग्रहणसप्तपदीक्रमणान्तं क्रियते, तदा दुष्टोढाऽपि न परावर्तते इति सिद्धम्।

$ कृभ. ११२९

वाग्दानप्रयोगः शचीपूजनं च

**[१]भूषणैः पुष्पताम्बूलैः फलगन्धाक्षतादिभिः।**
**शुक्लाम्बरैर्गीतवाद्यैर्विप्राशीर्वचनैः सह॥**

---

गृर. ५४; मपा. १५१ अपवत्; मर. २०; चम. ८८; मुक्ता. १३८ प्रोक्तं (प्राहुः) वसिष्ठः; संम. ६७; बाल. १।६५ पृ. २०४; कृभ. ११२९; संर. ५०४ अपवत्, 'वरणम्' इत्यपि पाठः.

* संर. अपवत्।

$ संम., बाल. गृकवत्।

† शेषं गृकवत्।

* शेषं अपवत्।

¶ शेषं स्मृचवत्।

$ शेषं चमवत्।

(१) ज्योना. २७१२; प्रपा. ३४५ (भूषणैः फलताम्बूलगन्धपुष्पाक्षतादिभिः। शुक्लाम्बरो गीतवाद्यैर्विप्राशी-

[1]गच्छेच्च कन्यकागेहं वरः प्रणयपूर्वकम् ।
तदा कुर्यात् पिता तस्याः प्रदानं प्रीतिपूर्वकम् ॥
[2]कुलशीलवयोरूपवित्तविद्यायुताय च ।
वराय रूपसंपन्नां कन्यां दद्याद्यवीयसीम् ॥
* [3]संपूज्य प्रार्थयित्वा तां शचीं देवीं गुणाश्रयाम् ।
त्रैलोक्यसुन्दरीं दिव्यां गन्धमाल्याम्बरावृताम् ॥
[4]सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ।
अनर्घ्यमणिमालाभिर्भासयन्तीं दिगन्तरम् ॥

[1]विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ।
एवंविधां कुमारीं तां पूजान्ते प्रार्थयेदिति ॥
[2]देवीन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभाषिणि ।
विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे ॥
[3]धान्यं देहि धनं देहि पशून् देहीन्द्रभामिनि ।
यशो देहि सुखं देहि सर्वकार्यकरी भव ॥
[4]श्वेताम्बरं नारिकेलं भक्ष्याद्यफलमर्पयेत् ।
प्रदाने यद्दुकूलादि कर्णकण्ठादिभूषणम् ॥
[5]उभे वा युगपत्कार्ये तत्र तद्वस्त्रमण्डने ।
आदौ संपादयेत्पश्चाद्विन्यसेत्फलमञ्जलौ ॥

## आश्वलायनः

### वरणप्रयोगः

[6]विवाहे वरणा कार्या भ्र(? प्र)माणीकरणे कृते ।
(प्र)माणीकरणं नाम सत्यपूर्वं स्वदेशिकः ॥
स्नात्वा प्राङ्मुख आसीत गुरोर्दक्षिणतो वरः ।
गुरोरुत्तरतो ब्रह्मा तथाऽऽसीत च तद्दिने ॥

---

* इत आरभ्य त्रयः श्लोकाः कात्यायनस्यापि, ते च 'पाणिग्रहणाव्यवहितपूर्वकृत्यम्' इति प्रकरणे द्रष्टव्याः ।

वचनैः सह ॥); संप्र. ८१० पूर्वार्धे प्रपावत्; विपा. ७६१ पूर्वार्धे (भूषणैः फलताम्बूलैर्गन्धपुष्पाक्षतादिभिः ।); ज्योनि. १४९ पुष्पताम्बूलैः (फल[पुष्प]ताम्बूल); संग. २१९ पुष्प (वस्त्र).

(१) ज्योना. २७१३ गच्छेच्च (कारयेत्) गेहं (गेहे) प्रणय (प्रणव); प्रपा. ३४५; संप्र. ८१०; विपा. ७६२; ज्योनि. १४९ ज्योनावत्.

(२) ज्योना. २७१४; प्रपा. ३४५; संप्र. ८१० वित्त (वृत्त) संपन्नां (संयुक्तां); विपा. ७६२ संप्रवत्; ज्योनि. १४९ कन्यां दद्यात् (दद्यात्कन्यां).

(३) ज्योना. २७१५; प्रपा. ३४५ तां (च) सुन्दरीं (वल्लभां); संप्र. ८१० दिव्यां ग (दिव्यग) वृताम् (न्विताम्) शेषं प्रपावत्; विपा. ७६२ वृताम् (न्विताम्) शेषं प्रपावत्; ज्योनि. १४९ प्रार्थयित्वा (संप्रार्थ्य च) शचीं (शची) दिव्यां ग (दिव्यग) वृताम् (न्विताम्); संग. २२० माल्याम्बरावृताम् (माल्यवरान्विताम्) चूडारत्ने.

(४) ज्योना. २७१६ दिगन्तरम् (दिगन्तरान्); प्रपा. ३४५; संप्र. ८१०; ज्योनि. १४९ ज्योनावत्; संग. २२० दिगन्तरम् (दिगम्बराम्) चूडारत्ने.

(१) ज्योना. २७१७ सहस्रौघैः (सहस्राद्यैः); प्रपा. ३४५ विधां (विधा) तां (सा); संप्र. ८१० सहस्रौघैः (सहस्रोच्चैः); विपा. ७६२ तां (सा) दिति (दिदम्); ज्योनि. १४९ ज्योनावत्; संग. २२० चूडारत्ने.

(२) ज्योना. २७१८; प्रपा. ३४५ भाषिणि (भामिनि); संप्र. ८१० देवीन्द्राणि (देवेन्द्राणि) विवाहं भा (विवाहभा) शेषं प्रपावत्; विपा. ७६२ देवीन्द्राणि (देवेन्द्राणि) शेषं प्रपावत्; ज्योनि. १४९ संप्रवत्; संग. २२० विवाहं (विवाहे) शेषं प्रपावत्, चूडारत्ने.

(३) संग. २२० चूडारत्ने; नारदीयश्लोकैकवाक्यत्वात् अयं श्लोको नारदे निवेशितः.

(४) धप्र. ४५ (=) यद्दुकू (पट्टकू) उत्त.; ज्योनि. १४९; संग. २१९ भक्ष्याद्यफ (भक्षाद्यं फ) प्रदाने (प्रदानं).

(५) ज्योनि. १४९; संग. २१९ मण्डने (मण्डले).

(६) आश्वस्मृ. ११।३२२-३२९.

सूर्याप्रशंसिनौ प्राच्यां तेषामभिमुखावुभौ ।
समुपाविशतां ते स्युर्वस्त्रयुग्माः पवित्रिणः ॥
तेषां मध्ये प्रलिप्तायां भूम्यां स्वस्तिकमुत्तमम् ।
रचयित्वा क्षिपेत्तस्यां पुष्पकूर्चाक्षतान् गुरुः ॥
तन्मध्ये निक्षिपेत्पात्रममृन्मयमपार्थिवम् ।
अनायसमसीसं च कांस्यपात्रं महत्तथा ॥
वसूनावाह्य मध्याद्यैः(?) सकूर्चसिततण्डुलान् ।
पात्रे क्षिप्त्वा गुरुर्ब्रह्मा गृह्णीयात्तण्डुलं(? लान्) ततः ॥
कन्या वारिति मन्त्रेण दद्यातामभिमन्त्र्य तौ ।
सूर्याप्रशंसिनौ तौ च प्रस्वीत्यृचमनुत्तमम् ॥
अभिमन्त्र्य प्रदद्यातामाचार्यब्रह्मणोर्द्वयोः ।
एवं त्रिवारमावर्त्य सकृत्पुनरमन्त्रवत् ॥
वधूवस्त्रेण बध्नाति तण्डुलांस्तांश्च पात्रगान् ।
प्राणरूपा मनुष्याणां तण्डुला इति विश्रुताः ॥
प्राणविक्रयणं तावत् क्रियते ब्राह्मणैस्तयोः ।
पूर्वं वध्वै वरप्राणा व्रियन्ते तदनन्तरम् ॥
वराय च वधूप्राणा मन्त्राभ्यां ब्राह्मणैस्तदा ।
त्रिवारं प्रत्ययादीनि कार्याणि स्थैर्यसिद्धये ।
इति यस्मात्ततः कार्या त्रिवारं वरणा तयोः ॥
पतिना प्रतिपाद्यत्वाद्विवाहे सर्वकर्मणाम् ।
प्रत्यर्थमुपविष्टौ तौ गृहीत्वा क्षिपतः पुनः ॥
गुरुरेव प्रबध्नाति वधूवस्त्रेण तण्डुलान् ।
शरीरार्धत्वमायाति तेन साकमितो वधूः ॥
वरमाविशति प्रीत्या शक्रः सोमस्तथा वधूम् ।
विवाहे तौ तयोर्मूर्ती तथा मन्त्रावुदाहृतौ ॥
संदर्शनमयुक्तत्वात्तयोरन्योन्यमात्मनः ।
अग्नेरसंनिधौ कन्या वरणाय न चेष्यते (?) ॥
तावन्योन्यतनू दृष्ट्वा तद्दिने यदि तावुभौ ।
श्रिया विहीनौ भवतस्तस्मादग्नेर्न पश्यतः (?) ॥
सूर्याप्रशंसिनौ विप्रौ वधूपक्षं समाश्रितौ ।
गुरुर्ब्रह्मा च गदितौ वरपक्षौ तदुत्सवे ॥

## लघ्वाश्वलायनः

वरणप्रयोगः

[1]वरयेच्चतुरो विप्रान् कन्यकावरणाय च ।
कन्यासमीपमागत्य विप्रा गोत्रपुरःसरम् ॥
नाम ब्रूयुर्वरस्याथ प्रपितामहपूर्वकम् ।
प्रपौत्रपौत्रपुत्रेषु चतुर्थ्यन्तं वराय च ॥
गोत्रे चैवाथ संबन्धे षष्ठी स्याद्वरकन्ययोः ।
वरे चतुर्थी कन्यायां विभक्तिर्द्वितीयैव हि ॥
श्रावयेयुः प्रसुग्मन्तासूक्तं कन्यां कनिक्रदत् ॥

## कश्यपः

वरण—वाग्दान—शचीपूजनानि

[2]अथातः संप्रवक्ष्यामि कन्यावरणमुत्तमम् ।
सम्यक्तस्याः प्रदानं च पुत्रपौत्रप्रवर्धनम् ॥
... गन्धस्रक्तण्डुलफलादिभिः ।
सहवृद्धद्विजगणो वरयेत्कन्यकां सतीम् ।
तथेति तत्पिता कन्यावरणोक्तर्क्षवासरे ॥
कुर्यात्प्रदानं कन्यायाः स्वस्तिवाचनपूर्वकम् ।
कुलशीलगुणोपेतां सुरूपाय वराय वै ॥
ततस्तस्मै कन्यकां च शुक्लाम्बरविभूषणाम् ।
दद्यान्मङ्गलघोषैश्च विप्राशीर्वचनैः सह ॥
[3]आदौ कृत्वा शचीपूजां पश्चात्सर्वं समाचरेत् ।
सुवर्णां पद्मपत्राक्षीं दिव्यस्रग्वस्त्रशोभिताम् ॥
[4]सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ।
अनर्घ्यमणिमालाभिर्भासयन्तीं दिगन्तरम् ॥
[5]विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ।
ध्यात्वा प्रणम्य तां देवीं कुमारी प्रार्थयेत्ततः ॥

---

(१) लघ्वाश्वस्मृ. १५।१६–१९.

(२) संर. ५२९ कश्यपसंहितायाम्.

(३) संर. ५२९ कश्यपसंहितायाम् : ५३२ (=) उत्त.

(४) संर. ५३० कश्यपसंहितायाम् : ५३२ (=) नारदेऽपि.

(५) संर. ५३० कश्यपसंहितायाम् : ५३२ (=) पू., पूर्वार्धं नारदेऽपि.

[१]देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।
विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे ॥

ततो दाता विवाहसौभाग्याद्यभिवृद्ध्यर्थं शचीपूजनं कारयेत् । संकल्पमप्यत्रेच्छन्तीति केचित् । 'सुवर्णो ... हर्निशम् ॥' इतीन्द्राणीं ध्यात्वा सिततण्डुलपुञ्जे आवाहनाद्युपचारैः पूजनं वध्वा कारयेत् । ततः 'देवेन्द्राणि ... देहि मे ॥' इति प्रार्थनां कारयेत् । संर. ५३२

## स्मृत्यन्तरम्

वरणे तण्डुलराशौ स्थितिः दिङ्नियमश्च

[२]द्रोणप्रमाणे सिततण्डुलानां
चाऽऽरुह्य राशौ वरयेत्कुमारीम् ।
प्रत्यङ्मुखः पूर्वमुखीं सुलग्ने
वरो वरेण्यां वरयेद्यथोक्तम् ॥

## अनिर्दिष्टकर्तृकवचनानि

विवाहस्य पञ्चाङ्गानि

[३]वाग्दानं च प्रदानं च वरणं पाणिपीडनम् ।
सप्तपदीति पञ्चाङ्गो मुनिभिः परिकीर्तितः ॥

वाग्दान-प्रदान-वरणप्रयोगाः, वरणात्प्राग्वाग्दानप्रदाने

[४]कुर्याद्वैवाहिके मासि वाग्दानं द्विजसत्तम ।
कलशेन समायुक्तं संपूज्य गणनायकम् ॥
[५]संनिधौ द्विजदेवानां कन्या मे ते सुताय वै ।
त्वया स्वीक्रियतामद्य सुरूपा दीयते मया ॥
[६]कर्मणा मनसा वाचा संप्रीत्या धर्मवृद्धये ।
दारपुत्रसुहृद्वर्गैः समवेतेन निश्चितम् ॥

[१]कन्या ते मम पुत्राय स्वीकृतैव मयाऽद्य वै ।
एतेषां संनिधावेव कुलस्य मम वृद्धये ॥
[२]संबन्धगोत्रमुच्चार्य दद्याद्वै कन्यकापिता ।
हस्ते पितुर्वरस्याथ ताम्बूलं साक्षतं फलम् ॥
[३]दास्यामि तव पुत्राय सुरूपां मम कन्यकाम् ।
आसादय विवाहार्थं द्रव्यं माङ्गलिकानि च ॥
[४]स्वीकृता मम पुत्राय मयाऽद्य तव कन्यका ।
सफलं साक्षतं दद्याद्यथाचारं परस्परम् ॥
[५]कन्याया वरणात्पूर्वं प्रदानं चैव कारयेत् ।
संपूज्य कन्यकां दद्याद्वस्त्रालङ्कारभूषणम् ॥
प्रदाने पट्टकूलादि कर्णकण्ठादिभूषणम् ।
लब्ध्वाऽऽशिषोऽथ विप्रेभ्यस्तेभ्यो दद्यात्फलानि च ॥
गन्धाक्षतं च ताम्बूलं यथाशक्त्या च दक्षिणाम् ॥
प्रार्थयेद्वेदसंपन्नान्मधुपर्केण पूजितः ।
मदर्थं वृणीध्वं कन्यामिति दत्त्वा च दक्षिणाम् ॥
[६]गोत्रोद्भवस्य गोत्रस्य संबन्धस्यामुकस्य च ।
प्रपौत्रायाथ पौत्राय पुत्रायामुकशर्मणे ॥
[७]कन्याया अपि गोत्रस्य यथापूर्ववदुच्चरेत् ।
पौत्रीमथ च( ? प्रपौत्रीमथ ) पौत्रीं च पुत्रीं कन्यां यथाविधि ॥

---

(१) संर. ५३० कश्यपसंहितायाम् : ५३२, ५४५ (=) नारदेऽपि.

(२) प्रपा. ३५५.

(३) धप्र. ४५ ; संग. १६७ मुनिभिः ( विवाहः ).

(४) धप्र. ४५ सत्तम ( सत्तमः ); संग. २१७ धर्मप्रवृत्तौ.

(५) धप्र. ४५.

(६) धप्र. ४५ ; संग. २१८ दारपुत्र ( दायापत्य ) धर्मप्रवृत्तौ.

(१) धप्र. ४५.

(२) धप्र. ४५ ; संग. २१८ धर्मप्रवृत्तौ.

(३) धप्र. ४५.

(४) धप्र. ४५ साक्षतं ( चाक्षतं ) ; संग. २१८ स्वीकृता मम ( दासेऽहं तेऽद्य ) कन्यका ( पुत्रिका ) यथाचारं ( यथा च नः ) धर्मप्रवृत्तौ.

(५) धप्र. ४५.

(६) धप्र. ४५ ; संग. २६० उत्तरार्धे ( नप्त्रे पौत्राय पुत्राय ह्यमुकाय वराय वै ॥ ) गदाधरभाष्ये.

(७) धप्र. ४५ ; संग. २६० पौत्रीमथ ( नप्त्रीमथ ) गदाधरभाष्ये.

[१]कन्यासमीपमागत्य ब्राह्मणैः सह वै पिता ।
इत्युक्त्वा भो द्विजा यूयं वृणीध्वं कन्यकामिमाम् ॥

[२]प्रत्यूचुस्ते द्विजाः सर्वे एवं चेमां वृणीमहे ।
प्रसुग्मन्तेति सूक्तं वै जपेयुर्ब्राह्मणास्ततः ॥

[३]अष्टौ वाऽथ(? द्वावथ) चत्वारो ब्राह्मणा वेदपारगाः ।
कन्याया वरणे चैव योज्याः कर्मविदो हि ये ॥

तत्राऽऽदौ वाग्दानं 'कुर्याद्वैवाहिके' इत्यादि । अथ प्रदानं 'कन्याया वरणात्' इत्यादि । अथ वरणं 'प्रार्थयेत्' इत्यादि । धप्र. ४५

वाग्दानप्रयोगः

[४]शुभलग्नेऽग्निसांनिध्ये स्नातां पुण्यामरोगिणीम् ।
तत्कालोपस्थिते कन्यां पिता तुभ्यं प्रयच्छति ॥

यदि त्वं पतितो न स्या दशदोषविवर्जितः ।
तुभ्यं कन्यां प्रदास्यामि द्विजदेवाग्निसंनिधौ ॥

तुभ्यं कन्यार्थिने वाचा कन्यादानं प्रयच्छति ।
तन्निश्चयार्थं मद्दत्तं गृह्यतां साक्षतं फलम् ॥

निश्चये प्राङ्मुखायाऽऽदौ वरपित्रे ददाति च ।
फलं कन्यापिता दद्यात्ततो वरपिता तथा ॥

[५]अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते ।
इमां कन्यां प्रदास्यामि देवाग्निद्विजसंनिधौ ॥

(१) धप्र. ४५ ; संग. २१९ वै (वा) यूयं (ऊचुः) धर्मप्रवृत्तौ.

(२) धप्र. ४५ ; संग. २१९ एवं (वयं) पू., धर्मप्रवृत्तौ.

(३) धप्र. ४५ ; संग. २१९ अष्टौ वाऽथ (द्वावद्वावथ) पू., धर्मप्रवृत्तौ.

(४) ज्योनि. १४८.

(५) गभा. १०० ; संग. २१८ ; संर. ५०३ 'शिष्टैः स्मर्यते' इत्युक्तम्, ५३२.

[१]वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया ।
कन्यावलोकनविधौ निश्चितस्त्वं सुखी भव ॥

[२]वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया ।
वरावलोकनविधौ निश्चितस्त्वं सुखी भव ॥

(१) भ्रात्रादौ स्वीकर्तरि भ्रातृमित्रार्थमित्याद्यूहः कार्यः । ¶ गभा. १००

(२) अथवा वरार्थं स्वीकृतेत्येव सर्वत्र । $ संर. ५३२

वरणादिक्रमस्य देशाचारादिप्रमाणकत्वम्

[३]आदौ स्त्रीवरणं दानं तैलं वेदिश्च मण्डपः ।
वृद्धिः केलवणं लोणं गौरिण्याः पाणिपीडनम् ॥

[४]देशे देशे य आचारः स्थाने स्थाने च या स्थितिः ।
तथैव व्यवहर्तव्यं पारंपर्यवशादिभिः ॥

## संग्रहकारः (स्मृतिसंग्रहः)

तण्डुलेषु स्थितिः दिङ्नियमश्च

[५]कन्यावरणकाले तु प्राङ्मुखीं वरयेद्वधूम् ।
पश्चिमास्यं वरं स्थाप्य द्रोणमाने तु तण्डुले ॥

¶ संग. गभावत् ।

$ शेषं गभावत् ।

(१) गभा. १०० ; संग. २१८ पुत्रार्थं (पुत्रार्थे) ; संर. ५३२.

(२) गभा. १०० ; संग. २१८-२१९ ; संर. ५३२.

(३) ज्योनि. १५८ ; संग. २२३ (आदौ स्त्रीवरणं दानं तैलं वेदी च मण्डपम् । तस्माल्लग्नदिने सर्वं वरणाद्यं तु कारयेत् ॥) चूडारत्ने.

(४) ज्योनि. १५८.

(५) प्रपा. ३५२-३५३.

## वराहः

वरणप्रयोगः शचीपूजनं च

[1]द्राक्षाफलेक्षुकुसुमाक्षतपूर्णपाणि-
रश्रान्तशान्तहृदयो वरये-
त्कुमारीम् ॥

सुरभिकुसुमगन्धैरम्बरैः पूजयित्वा
शुभतिथिकरणर्क्षैर्दैववित्संप्रदिष्टे ।
उभयकुलविशुद्धे ज्ञानशीले सुरूपे
प्रथमवयसि दद्यात्कन्यकां
यौवनस्थे ॥

[2]गृहे स्थितां वै पुरुहूतपत्नीं
प्राङ्मध्यसंध्यास्तमयेषु कन्या ।
स्रग्गन्धधूपैः प्रतिपूजयेत्तु
पाणिग्रहे या समुपागतेति ॥

## व्यवहारचण्डेश्वरः

वरवरणे देयद्रव्याणि

[3]उपवीतं फलं पुष्पं वासांसि विविधानि च ।
देयं वराय वरणे कन्याभ्रात्रा द्विजेन वा ॥

(१) वरणे देयानि द्रव्याण्याह चन्द्रेश्वरः— उपवीतमित्यादि । गभा. १०१

(२) अथ वरस्य वरणं व्यवहारचण्डेश्वरे— उपवीतमिति । देशाचारविषयमेतत् । विसौ. ६

(३) वरस्यापि वरणं चण्डेश्वरेणोक्तम्— उपवीतमिति । * संप्र. ८१०

* सिन्धु., संर. संप्रवत् ।

(१) विसौ. ५.

(२) शूक. ११०; सस्मृ. ५५ गृहे (गृह).

(३) गभा. १०१ वा (च) चन्द्रेश्वरः; विसौ. ६; संप्र. ८१०–८११ वा (च); सिन्धु. ११२८; संग. २२० वा (च); संर. ५३० भ्रात्रा (पित्रा).

## चूडारत्ने

वरणे दिङ्नियमः

[1]प्रत्यङ्मुखः सन्वरयेत्कुमारीं
फलादिभिः प्राग्वदनां सुवेषाम् ॥

वरणोत्तरं शचीपूजनम्

[2]घटाकारमृदा देवी निर्मिता वसुधा शची ।
वरणानन्तरं पूज्या यावत्पाणिग्रहो भवेत् ॥

## मुहूर्तचिन्तामणिः

वरवरणे वरयितारः देयद्रव्याणि च

[3]धरणिदेवोऽथवा कन्यकासोदरः
शुभदिने गीतवाद्यादिभिः संयुतः ।
वरवृतिं वस्त्रयज्ञोपवीतादिना
ध्रुवयुतैर्वह्निपूर्वात्रयैराचरेत् ॥

अथ वरवरणमुहूर्तमाह— धरणिदेव इति । धरणिदेवः ब्राह्मणः पुरोहितादिः । शेषं स्पष्टार्थं पद्यम् । पीटी.

## शाकलकारिका:

वाग्दानप्रयोगः, प्रदानपदार्थः, वरणप्रयोगः, दिङ्नियमश्च

[4]समागतोऽस्मि कन्यार्थं गृहं ते स्वजनैः सह ।
त्वयाऽद्य दीयतां कन्या मह्यं वाचा मनोहरा ॥
कर्मणा मनसा वाचा संप्रीत्या धर्मवृद्धये ।
दारापत्यसुहृद्वर्गैः समवेतस्तु निश्चयेत् ॥
वैवाहिके शुभे चाह्नि संपूज्य गणनायकम् ।
दद्यात्सुपूजितां कन्यां वाचैवाथ वराय ताम् ॥
संनिधौ द्विजदेवानां कन्यामेनां सुताय वै ।
त्वया स्वीक्रियतामद्य सुरूपा दीयते मया ॥

(१) ज्योनि. १४९ (=) प्राग्वदनां (प्राग्वदनीं); संग. २१९ सुवेषाम् (सुवेशाम्); संर. ५३० सन् (तां) ज्योतिर्निबन्धे.

(२) ज्योनि. १५८ (=); संग. २१९ देवी (देवि) वसुधा (वसुमे) शची (शचि).

(३) मुचि. ६।११; संग. २२०.

(४) शाका. १०४–१११, ११५–१२० पृ. ११–१३.

कन्या ते मम पुत्राय स्वीकृतैव मयाऽद्य वै ।
एतेषां संनिधावेव मम वंशाभिवृद्धये ॥
कन्या चामुकगोत्रस्य तथा गोत्रभवाय च ।
वाचा दत्ता त्वया चेयं तथा चाङ्गीकृता मया ॥

ताम्बूलं सफलं चाद्य सुनिश्चित्य ददामि ते ।
गृहाण त्वं विवाहार्थं द्रव्याण्यासादयेति च ॥

माङ्गल्यद्रव्यसंयुक्तं कन्यामुद्दिश्य दीयते ।
फलपुष्पादिकं यच्च प्रदानं तत्प्रचक्षते ॥

पूजितस्तु स्वशाखोक्तमधुपर्केण यो वरः ।
प्रेषयेत्पूजितान् विप्रान् कन्याया वरणाय च ॥

मदर्थं वृणीध्वं कन्यामित्युक्तास्ते वृणीमहे ।
कन्यासमीपमागत्य कन्यापित्रा सहैव तु ॥

वरस्य पूर्वजान् गोत्रषष्ठ्यन्तांश्च प्रकाशयेत् ।
सर्वत्रैव चतुर्थी स्यात्प्रपौत्रादिषु तस्य तु ॥

कन्यायाः पूर्ववत्सर्वं गोत्रनामादिकं च यत् ।
द्वितीयादिविभक्तिः स्याच्चतुर्थीस्थान एव हि ॥

षष्ठीं गोत्रे च संबन्धे कन्यायाश्च वरस्य तु ।
कन्यायां तु द्वितीया स्याच्चतुर्थी च न एव हि ॥

प्रसुग्मन्तेति सूक्तेन वृत्वाऽथ वरमानयेत् ।
[1]प्राङ्मुखीं वृणुयात् कन्यां गोत्रसंबन्धपूर्वकम् ।
प्रत्यङ्मुखं वरं कृत्वा वृणुयाद्वधूपूर्वकम् ॥

## कुमारिलकारिकाः

परस्परसगुडजीरकक्षेपणपूर्वकं वरकर्तृकं कन्यावरणम्

[2]मुहूर्ते शोभने सम्यक् क्षिपेतां मुखयोर्मिथः ।
सगुडाञ् जीरकान् कन्यां वरयेदथ तां वरः ॥

(१) प्रपा. ३५३.

(२) कुका. १।२०।२ मुखयोः (उभयोः); प्रपा. ३५२ सगुडाञ् जीरकान् (सगुडं जीरकं) वरये (वृणुया); संप्र. ८२५ आश्वलायनकारिका; विपा. ४१ (भागः २) सगुडाञ् जीरकान् (सगुडां जीरकां) आश्वलायनकारिका; संग. २५७ विपावत्, आश्वलायनः.

[1]असावमुकगोत्रस्य पुत्रः पौत्रः प्रपौत्रकः ।
एतद्गोत्रामिमामस्य पुत्रीं पौत्रीं च नप्त्रिकाम् ॥
[2]वृणेऽहं कन्यकां साध्वीं श्रीरूपामित्यतः परम् ।
वरेणैवं वृतां कन्यां तत्पिता प्रददाति ताम् ॥

## कपर्दिकारिकाः

वरितृप्रेषणम्

[3]प्राणसंयमनं प्रथमं भवेत्
प्रेषणं सुहृदामभिमन्त्रणम् ॥

## रेणुकारिकाः

वरणप्रयोगः

[4]एवं निश्चीय पुण्याहे चतुर्भिर्ब्राह्मणैः सह ।
वरस्यैव पिता कन्यां वरणार्थं सुमङ्गलः ॥
प्रत्यङ्मुखः सन्विविधैः फलैस्ता-
मभ्रान्तचित्तः श्रुतिमन्त्रपाठैः ।
ऐन्द्रीदिगास्यां कृतचारुभूषा-
मातोद्यघोषैर्मनुवर्तवस्थः (?) ॥
द्राक्षेक्षुपुष्पाक्षतपूर्णपाणि-
र्निमित्तशुद्धां वरयेत्कुमारीम् ॥
एवं वृत्वा कुमारीं तां वरं तद्वद्वधूपिता ।
वरेण्यः पूजितः श्लोकं समयार्थं पठेदिमम् ॥
[5]अस्मिन् कालेऽग्निसांनिध्ये स्नातां स्नाते ह्यरोगिणि ।
अव्यङ्गेऽपतितेऽक्लीबे पिता कन्यां प्रदास्यति ॥

(१) कुका. १।२०।३; प्रपा. ३५३ पुत्रः (पुनः) नप्त्रिकाम् (नप्तृकाम्); संप्र. ८२५ असावमुक (अस्या० मुक) आश्वलायनकारिका.

(२) कुका. १।२०।४; प्रपा. ३५३; संप्र. ८२५ आश्वलायनकारिका; संकौ. २१९ वरेणैवं (वरेणैव) उत्त०

(३) कका. २।१.

(४) रेका. ५५–५८, ६० पृ. ५२.

(५) रेका. ६१ पृ. ५२ अस्मिन् कालेऽग्नि (तस्मिन् काले हि) कन्यां (तुभ्यं); संत. ८८१ (=) स्नातां (स्नातः).

अथ विवाहः । तत्र पूर्वं यदि वाग्दानं क्रियते तदा अद्येत्यादि अमुकगोत्रस्यारोगिणोऽव्यङ्गस्यापतितस्याक्लीबस्याविवाहा(म)मुकगोत्रामुकीं देवीं कन्यां दातुं तवाहं प्रतिजान इति पिता ब्रूयात् । 'अस्मिन् काले ... दास्यति ।' इति पितुरसंनिधाने भ्रात्रादिभिरेवं प्रतिज्ञा कर्तव्या । तत्संनिधाने तु पूर्वोक्तं वाक्यम् । पितुरभावे कर्त्रन्तरस्यापि । संत. ८८१

वरणस्य क्रमः संस्कारत्वम् अनियतत्वं च

[1]कन्यापुंसोस्तु संबन्धाद्वरणं प्राग्विधीयते ।
वरणाद्ग्रहणं पाणेः स संस्कारो द्विलक्षणः ॥

तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् ।
अवोचन्नारदः स्मृत्यां तथैवात्र यमोऽब्रवीत् ॥

(१) रेका. ६४–६५ पृ. ५३ प्रथममर्धत्रयं नारदेऽपि.

# वरगृहे प्रतिश्रुतकर्म

## कौषीतकिगृह्यसूत्रम्

प्रतिश्रुतकर्मणि प्रधानहोमः

[1]प्रतिश्रुते जुहोति ॥

¶ [2]अग्निर्जनिता स मेऽमूं जायां ददातु स्वाहा ॥ सोमो जनिमान्त्स माऽमुया जनिमन्तं करोतु स्वाहा ॥ पूषा ज्ञातिमान्त्स माऽमुष्यै पित्रा मात्रा भ्रातृभिर्ज्ञातिमन्तं करोतु स्वाहा ॥

¶ एताः प्रधानाहुतयः केवलमत्र संगृहीताः । यदत्र पूर्वोत्तरतन्त्रं सर्वहोमसाधारणमुक्तं तदग्निमुखप्रकरणे संगृहीतं तत एवावगन्तव्यम् । तत्र चक्षुषोः स्विष्टकृतश्च मध्यान्तरे एताः प्रधानाहुतयः ।

(१) कौगृ. १।७।१.

(२) कौगृ. १।९।९.

एवं प्रतिपन्ने वरवित्तके गृहमागत्य कथिते प्रतिश्रुत-कर्म भवति । पृ. ७

ततः 'अग्निर्जनिता स मे कल्याणश्रियं ... ॥, सोमो जनिता स मा कल्याणश्रिया .... ॥, पूषा ज्ञातिमान् स मा कल्याणश्रियै ... ॥' अनेन प्रकारेण वधूकाया नामग्रहणं कर्तव्यम् । एवमेतास्तिस्र आज्याहुतीर्हुत्वा ... । कौगृसं. ९

# विवाहपूर्वं कर्तव्यानि देवपत्नीयागवादननृत्यादीनि

## कौषीतकिगृह्यसूत्रम्

वधू–वर–गृहयोरिन्द्राणीकर्म नर्तनं च

**[1]अथैतां रात्रीं श्वस्तृतीयां वा कन्यां वक्ष्यन्तीति ॥**

**तस्यां रात्र्यामतीते निशाकाले सर्वौषधिफलोत्तमैः सुरभिमिश्रैः सशिरस्कां कन्यामाप्लाव्य ॥**

**रक्तमहतं वा वासः परिधाय ॥**

**पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां महाव्याहृतिभिर्हुत्वाऽऽज्याहुतीर्जुहोति– 'अग्नये सोमाय प्रजापतये मित्राय वरुणायेन्द्रायेन्द्राण्यै गन्धर्वाय भगाय पूष्णे त्वष्ट्रे बृहस्पतये राज्ञे प्रत्यानीकाय' इति ॥**

**चतस्रोऽष्टौ वाऽविधवाः शाकपिण्डीभिः सुरयाऽन्नेन च तर्पयित्वा चतुरा नर्तनं कुर्युः ॥**

**एता एव देवताः पुंसः ॥**

**वैश्रवणमीशानं च ॥**

**अतो ब्राह्मणभोजनम् ॥**

इन्द्राणीहोमकर्तव्यतां व्याख्यास्यामः। अत्र स्तरणाद्याघारान्ता भागाः पाक्षिकाः। उत्तरायणे शुक्लपक्षे विशिष्टव्यतीपातादिवर्जिते विवाहलग्नमन्वीक्ष्य तस्मिन्निरूपिते श्वो भाविनि विवाहे परश्वो भाविनि वाऽर्धरात्रेऽतीते अर्धरात्रे वा। अपरे तु व्याचक्षते-प्रहरशेषायां निशायाम्। अस्मिन्काले वाऽन्तिकोपविष्टा बन्धुस्त्रियः पतिपुत्रवत्यः सुभगा लौकिकानि गीतानि गायन्त्यः कन्यायाः स्नापनं कुर्वन्ति। चत्वारः कलशा उदकपूर्णाः सर्वौषधिपुष्पत्रिमिश्राः सुगन्धद्रव्यविमिश्राश्च कार्याः। यथालाभं मङ्गल्यानि क्षिप्त्वा तैः सशिरस्कां कन्यां स्नापयित्वा कुसुम्भरक्तं नवं वा वासः परिधापयेत्। तत उपलेपनोल्लेखनाद्याघाराज्यभागान्तं पूर्ववत् कृत्वा पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां महाव्याहृतयश्चतस्रः, ततः 'अग्नये, सोमाय, प्रजापतये, मित्राय, वरुणाय, इन्द्राय, इन्द्राण्यै, गन्धर्वाय, भगाय, पूष्णे, त्वष्ट्रे, बृहस्पतये' (इति) द्वादशमन्त्राः, 'राज्ञे प्रत्यनीकाय' इत्येको मन्त्रः, एवमेतैर्महाव्याहृतिप्रभृतिभिः (सह ?) सप्तदशभिर्मन्त्रैः स्वाहाकारान्तैराज्याहुतीर्हुत्वा ततश्चतस्रोऽष्टौ वाऽविधवाः शूद्राः शाकेन सुरया स्वादुना वाऽन्नेन तर्पयित्वा चतुष्प्रकारं नृत्यं कारयेत्। ततः पाक्षिकस्विष्टकृत्, ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं पूर्ववत् समापनीयम्। वरस्य च 'वैश्रवणाय स्वाहा, ईशानाय स्वाहा' इति द्वे आहुती अधिके। शेषं समानम्। ततः प्रभाते ब्राह्मणभोजनम्।

कौगृसं. ९–१०

(१) कौगृ. १।११।१–८.

## मानवगृह्यसूत्रम्

क्रीडास्थाने यागः, वाद्यवादनम्, देवपत्नीयागः

**[1]कुमार्याः प्रमदने भगमर्यमणं पूषणं त्वष्टारमिति यजति ॥**

**प्राक् स्विष्टकृतश्चतस्रो अविधवा नन्दीरुपवादयन्ति ॥**

**अभ्यन्तरे कौतुके देवपत्नीर्यजति ॥**

कुमार्याः प्रमदने। प्रमदनं क्रीडास्थानम्। यत्र क्रीडा यदा क्रीडा तदा। निमित्तसप्तमी। अन्यस्त्वाह तेन क्रीडायाः प्राग्यागो वरणं पश्चाद्विज्ञेयम्। तथा च कृत्तिका–स्वाति–पूर्वैर्वरणमुक्तम्। लोके च वरणं दृश्यते। तेन कः क्रमः ? पूर्वं वरणं ततो यागस्ततस्तैलाभ्यञ्जनादि। ततः पुण्ये लग्ने दानं विवाहे भगार्यमादयो देवाः प्रधानस्थाने याज्येन यजति।

(१) मागृ. १।९।२८–३०.

प्राक्स्विष्टकृतो नन्दीरिति वाद्यविशेषः । अङ्गसंयुक्तं गेयं वा अविधवाः कारयेत् ।

अभ्यन्तरे कौतुकं वस्त्राद्यलङ्कृतस्थानं रहःस्थानं वा । प्रधानस्थाने देवपत्नीभ्यः स्वाहेत्याहुतिः । सिनीवालीप्रभृतिकुहन्ता देवपत्नीर्यजतीत्यन्ये । अन्यस्तु— राकादयो देवपत्न्यो ज्ञेयाः । अन्यस्तु— कस्यास्मिन् यागेऽधिकारः ? दातुरुत प्रतिग्रहीतुः ? तत्र न प्रतिग्रहीतुरधिकारः । कुतः ? वधूसंस्कारार्थं तावत् कर्म यथा वैश्वानरेष्टिः पुत्रे जाते । एवं चेद्यथा पुत्रसंस्कार इष्टिर्जातकादि च यथा पिता करोति तथाऽयं यागो विवाहश्च वक्ष्यमाणो वधूसंस्काराय पिता कुर्यात् । यथाऽपि पुत्रस्यानुपयोक्ष्यमाणस्य दृष्टादृष्टकालसाधकस्य गत इष्ट्यादिसंस्कारस्य कर्तुर्यागादियोगे पाणिग्रहणादिदं यदि तु नानुतिष्ठन्ति केचिदिष्टिरियं च यागस्तत् किं कुर्मः ? कमुपलभेमहि ? शास्त्रार्थस्तावद्वर्णितोऽस्माभिरित्यलमतिप्रसङ्गेन ।

अष्टाभा.

## काठकगृह्यसूत्रम्

### वधूस्नपनं होमश्च

**[1]गौदानिकैर्मन्त्रैः कन्यामलङ्कृत्य चतुष्पादे भद्रपीठे प्रागासीनायाश्चतस्रोऽविधवा माता पिता च गुरुः सप्तमस्तां सहस्रच्छिद्रेण पवित्रेण स्नापयित्वाऽहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति – ' इन्द्राय स्वाहेन्द्राण्यै स्वाहा कामाय स्वाहा भगाय स्वाहा ह्रियै स्वाहा श्रियै स्वाहा लक्ष्म्यै स्वाहा पुष्ट्यै स्वाहा विश्वावसवे गन्धर्वराजाय स्वाहा ' इति ॥**

(१) अथ विवाहमाह— गौदानिकैरिति । पाठक्रमादर्थक्रमस्य बलीयस्त्वात्तदनुसारेण व्याख्या कर्तव्या, यथा— ' जातं जनिना जुहोति जातमतिप्राणिति ' इति, तथा ' अग्निहोत्रेण जुहोति, यवागूमधिश्रयति ' इति । तेनायमर्थः— पादचतुष्टययुक्ते भद्रपीठे शोभने आसने प्राङ्मुख्या उपविष्टायाश्चतसृषु दिक्षु चतस्रोऽविधवा भवन्ति, वामभागे माता, दक्षिणभागे पिता, अग्रे गुरुः संस्कारस्य कर्ता सप्तमः । तेषु यथासंनिवेशं स्थितेषु, गोदाने भवा गौदानिकाः, तन्मन्त्रैस्तां गुरुः कन्यां सहस्रच्छिद्रयुक्तेन पवित्रेण पावनेन वस्त्रविशेषेण सुप्रजस्त्वाय ( स्नापयित्वा ) गौदानिकैरेव मन्त्रैः कटककेयूरादिभिर्यथाविभवमलंकृत्याहतेनानुपभुक्तेन वाससा प्रच्छाद्य स्थालीपाकेन गुरुर्जुहोति । अत्र पल्लवचतुष्टयं वस्त्रस्य पवित्रस्य चतस्रोऽविधवा अवष्टभ्नन्ति । पितरौ जलमभिषिञ्चतः । गुरुर्मन्त्रपाठं करोति । स्नापनेऽलङ्करणे च गुरुरेव प्रयोजककर्ता, तेन होमेन समानकर्तृकत्वम् । ये त्वलङ्करणं विपरीतलक्षणया केशवपनं व्याचक्षते, अमाङ्गलिकास्ते । स्थालीपाकस्येत्युपादीयमानगतत्वादेकत्वं विवक्षितं पशुगतैकत्ववत् । जुहोतीत्येकवचनम् एक एव होमो नवस्वप्याहुतिषु इति प्रत्यभिज्ञानबलेन सूचयति । तेनैवाऽऽहुतीर्निगदति । ' विश्वावसवे गन्धर्वराजाय ' इत्येकैवाऽऽहुतिः , तेन नव भवन्ति । इन्द्रः परमेश्वरः । इन्द्राणी शची । कमनीयः कामः । भजनीयो भगः । ह्रीर्लज्जा । श्रीः श्रयणीया । लक्षणीया लक्ष्मीः । पोषः पुष्टिः । स्वाहा सुहुतमस्तु ।

अथ गौदानिकमन्त्रा व्याख्यायन्ते—

' या आपो दिव्याः पयसा संबभूवुर्या अन्तरिक्ष्या उत पार्थिवासः । तासां त्वा सर्वासां रुचाऽभिषिञ्चामि वर्चसा ॥ अभि त्वा वर्चसाऽसिचं यज्ञेन पयसा सह । यथाऽसो मित्रवर्धनस्तथा त्वा सविताऽकरत् ॥ इन्द्राय स्वाहा ॥ '

पूर्वा विराट् । उत्तराऽनुष्टुप् । या दिव्या, दिवि भवा आपः, याश्च अन्तरिक्ष्याः अन्तरिक्षे भवाः, याश्च पार्थिवासः पार्थिव्यः, पयसा संबभूवुः क्षीरेण यज्ञोपयोगिना संभूताः, तासां सर्वासां रुचा दीप्त्या वर्चसा च सारेण बलेन हे कन्ये, त्वामभिषिञ्चामि । त्वामहमभ्यसिचम् अभिषिञ्चामि यज्ञेन पयसा वर्चसा सह, यज्ञादियोग्यां च करोमीत्यर्थः । मित्रस्य मेहनस्य स्वर्गपशुपुत्रादेः यज्ञादेश्च वर्धनो

(१) कागृ. १७।१–३.

यथा असः भवसि, तथा सविता आदित्यः अकरत् तव करोतु हे कन्ये । इन्द्राय सुहुतमस्तु । देव.

( २ ) ब्रह्मदेयविधिना प्रत्तायां कन्यायां सौभाग्यविवृद्धये विवाहसंनिकृष्टेष्वहःसु गौदानिकमन्त्रस्नापनपूर्वमिन्द्राद्या नव देवताः स्थालीपाकेन यष्टव्याः । शुद्धपक्षस्य पुण्याहे इदं सर्वम् । आज्यभागान्तं हुत्वा हारकेयूराद्याभरणालङ्कृतां दक्षिणतोऽग्नेश्चतुष्पादे भद्रपीठे प्राङ्मुखीमुपवेश्य तस्या मूर्ध्नि सहस्रच्छिद्रं शुक्लोर्णोतं पवित्रं सव्येन पाणिना सप्त यथोक्ताः स्नापकाः स्वयं चालङ्कृताः प्रान्तैरवष्टभ्य सर्वगन्धकुङ्कुमकर्पूरजातीफलपूगफलमङ्गल्यफलादिदूर्वाक्षतनानाविधकुसुममङ्गल्यवृक्षपल्लवादिमिश्रितवारिपूर्णकलशैर्दक्षिणपाणिस्थैः 'या आपो दिव्याः' इति द्वाभ्याम् 'एना व्याघ्रम्' इति च स्नापयन्ति । ततोऽवरूढां गुरोर्दक्षिणतो मङ्गल्यमञ्चोपविष्टामहतेन वाससा प्रच्छाद्य 'इन्द्राय स्वाहा' इत्येवं नव यथोक्ताः प्रधानाहुतीः स्थालीपाकस्य मेक्षणेनावदाय जुहोति । 'विश्वावसवे गन्धर्वराजाय स्वाहा' इति नवमी । ब्राह्म.

( ३ ) इदानीं भर्तृसंयोगे सति मन्त्रवत्संस्काराधिकारान् पिता करोति । गौदानिकैर्मन्त्रैः कन्यां स्नापयित्वेति संबन्धः । कन्यामलङ्कृत्य कटककेयूरकुण्डलादिभिः । चतुष्पादे भद्रपीठे । त्रिपात् स्नानपीठं भवति । अत्र चतुष्पादग्रहणम् । प्राङासीनायाः चतस्रोऽविधवाः स्नापयन्ति । गौदानिकैर्मन्त्रैः 'या आपो दिव्याः' इत्यादिभिः । तथा सर्वसुरभिणाऽनुलिप्यमानाम् 'एना व्याघ्रं परिषस्वजानम्' इत्येतदभिप्रायं गौदानिकैर्मन्त्रैः स्नापयित्वेति । चतस्रोऽविधवाः सहस्रच्छिद्रं वस्त्रं पर्यन्तेषु गृहीत्वा शिरसि धारयन्ति । माता पिता गुरुश्च वासस उपरि 'या आपो दिव्याः' इत्यपोऽभिषिञ्चति । ततः स्थालीपाकस्य जुहोति— 'इद्राय स्वाहा' इति । ये तु गौदानिकैर्मन्त्रैर्जटाकर्ममन्त्रैः कन्यायाः क्षुरेणालङ्कृतिं व्याचक्षते तेषां केशवपनं प्रत्याख्यातम् । अस्तु( ? स्ति ) चेच्चूडाकरणमेव किं नातिदिष्टम् ? समाचारविरोधश्चामङ्गलम् । एतस्माद्यदेवास्माभिर्व्याख्यातं तदेव साधीयः । आवि.

वधू–तत्सखीनां वादनादिक्रीडा

**नाडीं तूणवं मृदङ्गं पणवं सर्वाणि च वादित्राणि गन्धोदकेन समुपलिप्य कन्या प्रवादयते— 'स्वनं वद दुन्दुभे सुप्रजास्त्वाय गोमुख । प्रक्रीडयन्तु कन्याः सुमनस्यमानाः सहेन्द्राण्या कृतमङ्गलाः ॥' इति ॥**

( १ ) नाड्यादीनि सर्वाणि वादित्राणि गन्धोदकेन सुगन्धिनोपलिप्य पूर्वं कन्यैव प्रवादयते । वाद्यमानेषु च गुरुर्मन्त्रं पठति । तत्र नाडी वंशः, तूणवः गोमुखो वाद्यविशेषः । मन्त्रार्थस्तु— हे दुन्दुभे पटह, स्वनं वायुं वद वादय शब्दं कारय । किमर्थम् ? सुप्रजस्त्वाय सत्प्रजार्थम् । एवं हे गोमुख, स्वनं वदेति पूर्ववत् । प्रक्रीडन्तु अन्योन्यं कन्याः सखिभूताः प्रक्रान्तविवाहया कन्यया सहिताः । ता अपि हि कन्या एव भवितुमर्हन्ति, समानशीलानां सखित्वस्यान्योन्यान्तरत्वात् । कीदृशाः कन्याः ? सुमनस्यमानाः सुमनस्काः, हृष्टा इत्यर्थः । इन्द्राण्या सह । इन्द्राण्यप्यत्रोत्सवे क्रीडितुमवतरत्वित्याशास्यते । सुमङ्गलाः मङ्गलप्रधानगीतघोषिण्यः । देव.

( २ ) प्रधानानन्तरं नाडीतूणवादि गन्धोदकेनोपलिप्तं 'शुनं वद दुन्दुभे' इत्यादिना 'कृतमङ्गलाः' इत्यन्तेन मन्त्रेण कन्या प्रवादयते । ततः ऋतुतिथियागादितन्त्रे समाप्ते स्वस्त्ययनं कृत्वा सर्पिष्मदन्नं ब्राह्मणान् भोजयेत् । ब्राह्म.

( ३ ) ततो नाड्यादीनि वादित्राणि गन्धोदकेन चन्दनकुङ्कुमादिकल्केन समुपलिप्य कन्या प्रथमं वादयते । नाडी वंशः । तूणवस्तत्प्रकारः मुखवायुपूरणः, नालवक इति प्रसिद्धः । आवि.

**प्रतिसखि प्रक्रीडयत्येकमहर्द्वे वाऽहोरात्रे ॥**

ततः प्रतिसखि क्रीडयति । सखीं सखीं नर्तयति गापयति च । एकमहः, द्वे वाऽहनी, अहोरात्रे वा द्वे । आवि.

अलक्ष्मीनिर्णोदनशाखाप्रदानम्

**'यज्ञियस्य वृक्षस्य प्रागायतां शाखां सकृदाच्छिन्नां सूत्रतन्तुना प्रच्छाद्य सावित्रेण कन्यायै प्रयच्छति ॥**

( १ ) यज्ञमर्हति इति यज्ञियः, 'यज्ञर्त्विग्भ्यां घखञौ' ( पासू. ५।१।७१ ) इति घः, यज्ञार्हाणां वृक्षाणां वटादीनामन्यतमस्य संबन्धिनीं शाखां ( सकृदाच्छिन्नां सूत्रतन्तुना ? ) प्राच्यां दिश्यायतां प्रसृतां सकृत् एकेनैव प्रहारेण छिन्नाम् एकसरेण सूत्रतन्तुना प्रच्छाद्य कन्यायै प्रयच्छति 'देवस्य त्वा' इत्यादिना 'प्रयच्छामि' इति कन्यायै प्रददाति गुरुः । देव.

( २ ) एकमहर्द्वे वाऽहोरात्रे सखीभिः सह गायननर्तनादनन्तरमश्वत्थोदुम्बरादियज्ञियवृक्षोद्भवां पूर्वदिक्प्रसृतां सकृदाच्छिन्नां लोहितसूत्रप्रच्छन्नां सावित्रेण कन्यायै शाखां प्रयच्छति । ब्राह्म.

( ३ ) (सावित्रेण) 'देवस्य त्वा' इत्यनेन 'शाखां प्रयच्छामि' इत्यन्तेन । आवि.

**'या तेऽलक्ष्मीर्मातृमयी पितृमयी संक्रामणी सहजा वाऽपि काचित् । तां तिष्येण सह देवतया निर्भजामि निर्णुदामि सा द्विषन्तं गच्छतु तिष्यबृहस्पतिभ्यां नमो नमः ॥' इति ॥**

( १ ) गृहीतशाखां कन्यामनुमन्त्रयते गुरुः— 'या ते' इत्यादिना ।

हे कन्ये, या ते तव काचिदलक्ष्मीः अलक्षणं मातृमयी पितृमयी वा मातुः पितुर्वा सकाशात्संक्रान्ता बीजादिदोषात् अन्यतो वा कुतश्चित् संक्रान्ता, तामहमनेन मन्त्रेण निर्भजामि त्वां प्रति निर्भागां करोमि । किमेककः ? नेत्याह— तिष्येण देवतया सहकृतः । तथा निर्णुदामि निःशेषेण नुदामि अपसारयामि । सा चापसारिता सती द्विषन्तं तव शत्रुं गच्छतु । अलक्षणापसारे चोद्यतस्य मम विघ्नापसारणाय तिष्यबृहस्पतिभ्यां नमस्कारोऽस्तु । अन्ये तु 'तिष्यबृहस्पतिभ्यां नमो नमः' इत्येतं यजुरेकदेशमाच्छिद्य शाखोत्सर्गेऽपि प्रयुञ्जते वक्ष्यमाणे । देव.

( २ ) 'या तेऽलक्ष्मीः' इति शाखाहस्तामनुमन्त्रयते । 'तिष्यबृहस्पतिभ्यां नमो नमः' इत्यन्तो मन्त्रः । ब्राह्म.

( ३ ) 'या तेऽलक्ष्मीः' इति गृहीतशाखां कन्यामनुमन्त्रयते नमस्कारान्तेन । अलक्ष्मीनिर्णोदनमेतच्छाखाप्रदानम् । आवि.

**तस्या उत्सर्गः स्थावरोदके शुचौ वा देवतायतने ॥**

( १ ) स्थावरोदकं कूपतडाकादि । तत्र तस्याः शाखाया उत्सर्गः प्रतिपत्तिकर्म । शुचौ देवगृहे । देवगृहं मद्योपहारशोणितादिनाऽपवित्रमपि संभाव्यते । तदर्थं शुचिग्रहणम् । देव.

( २ ) शाखाया यथोक्तस्थाने स्थापनम् । होमस्यानाम्ना न( ? नाम्नानान्न ) त्रिकादिभिर्जुहुयात् । ब्राह्म.

( ३ ) स्थावरोदके शुचौ वा देवतायतने । देवतायतनमशुच्यपि भवति मद्यरुधिरोपहारसंबन्धात् । अतो विशेषणं शुचाविति । अत्र होमशङ्का न कार्या । आवि.

स्नापन–होमात्मकं हविष्यपुण्याहाख्यं कर्म

**[1]अथातो हविष्यपुण्याहः ॥**

( १ ) इयमपि पारिभाषिकी संज्ञा । हविष्येण व्रीह्यादिना पुण्येऽहनि क्रियमाणता शब्दप्रवृत्तिनिमित्तम् । देव.

( २ ) अथातःशब्दो नैमित्तिक( त्व )व्युदासार्थः । हविष्यपुण्याह इति कर्मणो नामधेयम् । आवि.

**उदकान्तं गत्वा यथोपपत्ति वा पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः**

---

( १ ) कागृ. १८।१–३.

( १ ) कागृ. २०।१–२.

**सशिरस्कां स्नापयित्वाऽहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति– 'इन्द्राणी वरुणानी गन्धर्वाण्युदकान्यग्निर्जीवपुत्रः प्रजापतिर्महाराजः स्कन्दोऽर्यमा भगः प्रजानकः' इति ॥**

(१) उदकस्य समीपं गत्वा, अतिदूरतडागादिके तु ग्रामे यथोपपत्ति यत्रोपपद्यते स्थाने तत्र क्षीरे स्थालीपाकं कृत्वा माङ्गलिकबिल्वाक्षोटादिफलोपेताभिः सर्वौषध्यादिगन्धयोगिनीभिश्चाद्भिः(आमलकैः ?) कन्यां स्नापयेत्। सशिरस्कामित्यनेनान्यदा स्त्रीणामशिरस्कमपि स्नानं भवतीति सूचयति। स्नापनाहतवस्त्राच्छादनव्यवधानेन च स्थालीपाकेन होमः, स्नानाच्च पूर्वं स्थालीपाक इति विवक्षितः क्रमः। चतुर्थ्यां देवतापदपरिणामः स्वाहाकारश्च पूर्ववत्। जीवपुत्रोऽग्निरित्येकैव देवता। जीवः प्राणो वायुः पुत्रो रक्षकोऽस्येति बहुव्रीहिरन्यपदार्थप्रधानः, योग्यश्च संनिहितोऽग्निरेवान्यपदार्थः। महाराज इत्यत्र 'न पूजनात्' (पासू. ५।४।६९) इति प्रतिषेधो नास्ति, नियमाश्रयणात्, 'पूजायां स्वतिग्रहणं कर्तव्यम्' इति वचनात्। अन्यथा हि परमराज इत्यादावपि टचः प्रतिषेधः स्यात्। ये तु महाराजा इत्याकारान्तं पठन्ति, ते स्वतिनियमं नाऽऽद्रियन्ते। देव.

(२) 'इन्द्राण्यै वरुणान्यै गन्धर्वाण्यै उदकान्यै ... महाराजाय स्कन्दाय ... प्रजानकाय जुष्टं निर्वपामि' इति सावित्रादिना समनुद्रुत्यैकादशभ्यो देवताभ्यो निर्वपति। आज्यभागान्ते हुते सर्वगन्धैः फलोत्तरैः सशिरस्कां स्नापितां कन्यां नवेन शुक्लेन सदशेनानन्यधृतेन वाससाऽऽच्छाद्य 'इन्द्राण्यै स्वाहा, वरुणान्यै स्वाहा' इत्येवं पायसस्यावदायैकादश प्रधानाहुतयः। 'अग्नये जीवपुत्राय' इत्येकाहुतिः। ब्राह्म.

(३) महाराजेति समासान्तो न कृतः। तेन 'महाराज्ञे स्वाहा' इति प्रयोगः। ¶ आवि.

¶ शेषं देवगतम्।



वधूवरयोः स्नापनहोमात्मकं कर्म

**[१]यामेव द्वितीयां रात्रिं कन्यां विवाहयिष्यन्स्यात्तस्यां रात्र्यामतीते निशाकाले नवां स्थालीमाहृत्य पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कां स्नापयित्वाऽहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति – 'अग्नये सोमाय मित्राय वरुणायेन्द्रायोदकाय भगायार्यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतये' इति ॥**

(१) एका विवाहाहोरात्ररात्रिस्तस्याः पूर्वा या द्वितीया रात्रिर्यस्यां पिता कन्यां विवाहयिष्यन् भवेत् विवाहयिष्यामीत्यनेनाध्यवसायेन युक्तः, अथवा यां भविष्यन्तीं रात्रिमधिकृत्य पिता कन्यां विवाहयिष्यन्स्यात्तस्या या पूर्वा द्वितीया रात्रिस्तामाश्रित्येतिकर्तव्यताप्रवृत्तः सन् तस्यामेव रात्र्यामतीते मध्यमप्रहरद्वये महानिशाख्ये पूर्ववत्स्थालीपाकेन यागं कुर्यात् गुरुरग्न्यादिभ्यो देवताभ्यः। देव.

(२) अथ विवाहदिनस्य पूर्वेद्युररुणोदयवेलायां नवां स्थालीमाहृत्याग्न्यादिभ्यः प्रजापत्यन्ताभ्यो द्वादशभ्यो निरुप्य पयसि स्थालीपाकं श्रपयेत्। आज्यभागान्ते यथावत्स्नापयित्वाऽहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति– 'अग्नये स्वाहा' इत्यादि 'प्रजापतये स्वाहा' इति यावद्द्वादशेति। स्वाहान्ते होमः। ततः ऋतुतिथ्याद्याश्राविताान्तं तुल्यम्। ब्राह्म.

(३) यां रात्रिमवधिं कृत्वा द्वितीयां रात्रिं कन्यां विवाहयिष्यन्स्यात्तस्यामवधिभूतायामतीते निशाकाले महारात्रे इत्यर्थः, प्रहरार्धशेषमात्रे। नवां स्थालीमाहृत्येति नवग्रहणात्पुराणान्यन्यत्रापि भवन्ति। इह तु नियमः। पयसि स्थालीपाकमिति व्याख्यातम्। श्रपणार्थीये पयसीत्यर्थः। 'अग्नये, सोमाय' इति द्वादशाऽऽहुतीर्जुहोति। आवि.

**एता एव देवताः पुंसः कुम्भं वैश्रवणमीशानं च यजेत ॥**

(१) कागृ. २१।१-२.

(१) पुंसोऽपि तस्यां रात्र्यां संस्कारार्थमेतयैवेति-कर्तव्यतया एता एव देवता यजेत कुम्भाद्याश्च तिस्र इति। एतावानेव च विशेषः स्त्रियो द्वादशाऽऽहुतयः, पुंसः पञ्चदश। देव.

(२) वरोऽपि तस्मिन्नेवाह्नि एतस्मिन्नेव काले नवायां स्थाल्यां पयसि स्थालीपाकं श्रपयित्वाऽऽज्यभागान्ते तथैव स्नापयित्वाऽहतेन वाससा प्रच्छाद्यैताभ्यो देवताभ्यो हुत्वा कुम्भाय वैश्रवणाय ईशानाय तिस्र आहुतीर्यजेत। नि-र्वपणकालेऽप्येवं पञ्चदश देवताः। ब्राह्म.

(३) एता एव देवताः पुंसोऽतिदिश्यन्ते। अस्या-मेव रात्र्यामन्यदा वा। आवि.

वादनगायननर्तनहोमात्मकं कर्म

**'चतस्रोऽष्टौ वाऽविधवाः शाकपिण्डीभिः स्त्रियोऽन्नेन च ब्राह्मणान् भोजयित्वा वीणा-गायिभिः सह संगायेयुरपि वा चतुरो नर्तनं कुर्यात्। 'क्रीडं वः शर्धो मारुतमनर्वाणं रथे-शुभम्। कण्वा अभि प्र गायत॥' इति॥**

(१) अविधवाः जीवद्भर्तृकाः। शाकमिश्राः पिण्ड्यः शाकपिण्ड्यः। 'भक्ष्येण मिश्रीकरणम्' (पासू. २।१।३५) इति तत्पुरुषः। चतस्रोऽष्टाविति च प्रथ-मान्तस्त्रीपदसमानाधिकरणम्। चतस्रोऽष्टौ वेति यथासंभवं विकल्पः। समसंख्यानियमार्थमेतत्। चतुष्ट्वाष्टत्व-नियमार्थमिति तु केचित्। तेनायं समन्वयः— अन्यूना-श्चतसृभ्योऽविधवाः स्त्रियः समसंख्याः षट्कवर्जाः शाक-पिण्डीभिरन्यैश्च यथासंभवद्भिर्भोजनविशेषैर्ब्राह्मणान् भोज-यित्वा वीणया वाद्यमानया सह ये गायन्ति तच्छीलास्तैः सह संभूता भूत्वा मङ्गलगानं गायेयुः। ब्राह्मणभोजना-नन्तरं मङ्गलगानावसरोऽत्र विवक्षितः, न तु समानकर्तृ-त्वेऽतीवाऽऽदरः। तेन ते ब्राह्मणान् भोजयेयुरन्ये वा, सर्वथा ब्राह्मणभोजनानन्तरं मङ्गलगानं कर्तव्यम्। अपि वा चतुरो नर्तनं कुर्यात्। चतुरः नर्तनप्रवीणः नर्तनं कुर्यात् यदि सौशील्यादिगुणयुक्तो भवेत्, विपर्यये तु न ताभिः सह नर्तनं कुर्यादित्यनेनाभिप्रायेणापिवाशब्दः। अनुष्ठानं त्वार्यावर्ते यथा दृश्यते तथा ब्रूमः— कन्याया मातृप्रभृत-योऽष्टौ चतस्रो वाऽविधवाः यथाविभवं भोजयित्वा ब्राह्मणांश्चाविधवाभिः सह वीणागायिभिश्च गायन्ति नृत्यन्ति सोत्साहम्। तदनुसारेणायमर्थः— चतस्रोऽष्टौ वा स्त्रियः कर्मभूता ब्राह्मणांश्च शाकपिण्डीभिरन्येन च भोज्यप्रकारेण भोजयित्वा वीणागायिभिः सहाविधवाभिश्च संगायेयुः। के? अर्थात्कन्यामात्रादयः। अपिवेति समुच्चये। सकलो-ऽसौ स्त्रीगणश्चतुरः सोत्साहो भूत्वा नर्तनं कुर्यात्। 'क्रीडं वः' इत्यनया गायत्र्याऽनुमन्त्रयते। व्याख्याता चेयं कृच्छ्रेषु [हे प्रकृता मरुतः, वः युष्माकं संबन्धि शर्धः बलं क्रीडं क्रीडयत्वस्मान्। कणतिः शब्दकर्मा, कणन्तीति कण्वा वायवः यूयमेव मारुतं मरुतां संबन्धि शर्धः प्रगायत कथयत यादृशं तदिति। कीदृशं शर्धः? रथेशुभं रथविमानादीनामनुकूलं गमने, तथाऽनर्वाणं लिङ्गव्यत्ययः। अनर्वं अप्रच्युतमित्यर्थः। (८।६)] देव.

(२) पूर्वेद्युरेव विवाहाह्नः इदमपि कर्म। ...... पतिवत्यः स्त्रियो नृत्तगीतकुशलाः शाकपिण्डीभिः शर्करा-मरिचघृतक्षौद्रमध्वादिसाधिताभिर्भोजयेत्। अन्येनान्नेन च। ... ता अविधवास्ते च विप्रा वीणागायिभिः सह संगायेयुः, अपि वा तेषां मध्यादेक एव चतुरो गीतनृत्तज्ञः पुरुषः कश्चिन्नर्तनं कुर्यात्। 'क्रीडं वः' इति गायत ऋत्विगनुमन्त्रयते, मन्त्रलिङ्गात्। ब्राह्म.

(३) ...अविधवाः पतिव्रताः, पतिवत्य इत्यर्थः। ... अन्येन चौदनादिना ब्राह्मणांश्चान्येन च शाक-पिण्डीभिर्भोजयित्वा। अक्षोटतिललवणदध्यादिसंस्कृताः शाकपिण्ड्यः। उभयसमुच्चयार्थश्चशब्दः। वीणा-गायिभिः संहताः संगायेयुः। वीणया सह ये गायन्ति ते वीणागायिनः। अपि वा चतुरो नर्तनं कुर्यात्। चतुरः नृत्तकुशलः। तद्गेयं नृत्तं चानुमन्त्रयेत 'क्रीडं वः' इत्यनया। एतदाज्यभागान्तं कृत्वा कुर्यात्। आवि.

(१) कागृ. २२।१-३.

**अक्षतसक्तूनामग्निं पुष्टिपतिं प्रजापतिं च यजेत– 'अग्निना रयिमश्नवत्पोषमेव दिवेदिवे। यशसं वीरवत्तमम् ॥', 'प्रजापते न हि त्वदन्यः' इति च ॥**

(१) अक्षतानाम् अनवहतानां यवानां सक्तुभिरग्निं पुष्टिपतिं यजेत 'अग्निना रयिम्' इत्येतयर्चा, तथा प्रजापतिं 'प्रजापते' इत्यादिमन्त्रेण। एतावाज्यभागान्ते यागौ।

अग्निना इज्यमानेनाहं रयिं धनम् अश्नवत्, 'अशू व्याप्तौ', व्याप्नुयाम्। व्याप्तस्य च प्राप्तस्य पोषं पुष्टिं दिनेदिने अश्नुयाम्। कीदृशं रयिम्? यशसं यशस्करम्, वीरवत्तमं वीरपुरुषयुक्तम्, वीरैर्वा पुत्रैरतिशयेन युक्तम्। 'प्रजापते न हि' इति जातकर्मणि व्याख्यास्यते। देव.

(२) ततोऽक्षतसक्तूनां पाणिनाऽवदाय 'अग्निना रयिम्, प्रजापते न हि' इति प्रधानद्वयम्। ऋतु-तिथ्याद्याश्रावितान्तं तुल्यम्। ब्राह्म.

(३) ... हविषो यत्र यत्र षष्ठी 'स्थालीपाकस्य जुहोति, आज्यस्य जुहोति' इति, तत्राप्राणिनः षष्ठी पञ्चम्यर्थे वा द्वितीयार्थे वा संबन्धमात्रविवक्षया वा, 'अत्र चकार भगवतो नारायणस्य' इतिवत्, 'न माषाणामश्नीयात्' इत्यादिवच्च। आवि.

**सर्वत्रोद्वाहकर्मस्वनादिष्टदेवतेष्वग्निं पुष्टिपतिं प्रजापतिं च यजेत ॥**

(१) यत्र नाम्ना मन्त्रवर्णैर्वा देवताऽनिर्दिष्टा विवाह-प्रकरणोक्ते कर्मणि, तत्र अग्निं पुष्टिपतिं प्रजापतिं च यजेत प्रकृतत्वादक्षतसक्तुभिः। आज्यभागान्ते भविष्यत्सु प्रास्थानिकादिष्वेतद्बोद्धव्यम्। पूर्वोक्तेषु तु क्वचिन्नाम्ना क्वचिन्मन्त्रवर्णेभ्यो देवता सर्वेषु प्रतीता। देव.

(२) प्राग्विवाहेऽग्य होमान्त उद्वाहाः(?)। ते च सर्वे इत आरभ्यानादिष्टदेवताः। यथा इदं प्रास्थानिकं विवाहो न च सहयत्तेषु त्रिष्वनादिष्टदेवतेष्वग्निं पुष्टिपतिं प्रजापतिं च यजेत। आज्येनेति केचित् देवताग्रहणाद्द्रव्यं परिसंचष्टे इति वदन्तः। अन्यथा 'सर्वत्रोद्वाहकर्मस्वना-दिष्टदेवतेषु' इत्यवक्ष्यत्। नैवम्। एवमुच्यमाने शाक-पिण्डीभोजनं गायनं नर्तनं सर्वमतिदिष्टं स्यात्। अतो यागः सक्तुभिरेव। आवि.

सटोद्धरणम्

***[1]एतदेव कुमारीणां सटोद्धरणमत्रैवानु-लेपनम् ॥**

(१) अत्रैव काले वाग्दत्तानां कुमारीणां सटोद्धरणं कर्म कर्तव्यं केशरचनाविशेषात्मकम्। अनुलेपनं सर्वौषधि-कुङ्कुमप्रभृतिभिरनुलेपनं शोभाविशेषाधायि सीमन्तस्य। देव.

(२) एतदेव कुमारीणां सटोद्धरणं वेणीगूहनं मन्त्र-वत्कर्तव्यम्। अन्यत् तूष्णीम्। विशेषस्त्वत्रैवानवलोभ-नम् अस्मिन्नेव काले सीमन्तस्य विलोभनं मोहनम् अनु-पलब्धिं कुर्यात्। आवि.

होलाककर्म

**[2]राका होलाके ॥**

(१) होला कर्मविशेषः सौभाग्याय स्त्रीणां प्रात-रनुष्ठीयते। तत्र होलाके राका देवता, मन्त्रलिङ्गात् 'यास्ते राके सुमतयः' इत्यादेः। अन्ये तु व्याचक्षते– एतत् सौभाग्यार्थं कर्म क्वचिद्देशे राकाशब्देन प्रसिद्धं क्वचिद्धोलाक(?का)शब्देन। तथा देशविशेषे क्वचित् सुखकुमारी होलेत्युच्यते। अतः शब्दभेदादौपाधिकं भेदमाश्रित्य राका च होलाका च राकाहोलाके इति द्वन्द्वः। वक्ष्याम इत्यध्याहारः। राकाहोलाकापर्यायं

* कन्यादानप्रकरणे कागृ. १६।१ इति सूत्रगतं ब्राह्मण-बलव्याख्यानं द्रष्टव्यम्। ब्राह्मणबलेनास्मिन् सूत्रे 'अत्रैवान-वलोभनम्' इति पाठं स्वीकृत्य तावानेवांशोऽनवलोभन-संस्कारपरत्वेन व्याख्यात इति तदीयं व्याख्यानमनवलोभन-प्रकरणे संग्रहीष्यते।

(१) कागृ. ३११६; ब्राह्म. 'नुलेपनम् (नवलोभनम्); आदित्य. ब्राह्मवत्.

(२) कागृ. ७३।१–२.

कुमारीसुखार्थं यज्ञं विवाहोपक्रमप्रसिद्धानुष्ठानं वक्ष्याम इत्यर्थः । देव.

( २ ) होलाकः मध्यदेशे प्रसिद्धः यथा काश्मीरेष्वाश्वयुज्यां रात्रौ गृहद्वारोपान्तेष्वग्निप्रज्वालनम् । तत्राऽऽज्यभागान्तं हुत्वा 'यास्ते राके' इति चतुर्गृहीतेन प्रधानाहुतिः । ततस्तन्त्रसमाप्तिः । ब्राह्म.

इन्द्राणीयागः

* 'इन्द्राणीमासु नारीषु' इति कुमारीणां यज्ञं यजेत् ॥

( १ ) तमेवाऽऽह– कुमारीणां सुखार्थं प्रसाधनस्थाने आज्यभागान्ते यज्ञं यजेदृत्विक् चतुर्गृहीतेनाऽऽज्येन 'इन्द्राणीम्' इत्यादिमन्त्रेण । अत ऊर्ध्वमृतुतिथ्यादि समानम् । देव.

( २ ) 'इन्द्राणीमासु नारीषु' इति कन्यासंस्कारे पूर्तौ विधिः । ब्राह्म.

## वाराहगृह्यसूत्रम्

वादनहोमात्मकं प्रवदनकर्म

'अथ प्रवदने कन्यामुपवसितां स्नातां सुशिरस्कामहतानाच्छिन्नदशेन वाससा संवीतां संस्तीर्णस्य पुरस्ताद्विहितानि वादित्राणि विधिवदुपकल्प्य पुरस्तात् स्विष्टकृतः वाचे पथ्यायै पूष्णे पृथिव्यै अग्नये सेनायै धेनायै गायत्र्यै त्रिष्टुभे जगत्यै अनुष्टुभे पङ्क्त्यै विराजे राकायै सिनीवाल्यै कुह्वै त्वष्ट्रे आशायै संपत्यै भूत्यै निर्ऋत्यै अनुमत्यै पर्जन्याय अग्नये स्विष्टकृते च जुहुयात् । आज्यशेषेण पाणी प्रलिप्य कन्यामुखं संमार्ष्टि– 'प्रियां करोमि पतये देवराणां श्वशुराय च । रुच्यै त्वाऽग्निः संसृजतु रुचिष्या पतये भव । सौभाग्येन त्वा संसृज विला देवी घृतपदीन्द्राण्यग्नायी अश्विनी राड्वागिला द्यौररुन्धती ॥' इति । अथ सर्वाणि वादित्राण्यभिमन्त्रयते– 'या चतुर्धा प्रवदत्यग्नौ या वाते या बृहत्युत । पशूनां या ब्राह्मणे न्यदधुः शिवा सा प्रवदत्विह ॥' इति । सर्वाणि वा वादित्राण्यलङ्कृत्य कन्या प्रवादयते । 'शुभं वद दुन्दुभे सुप्रजास्त्वाय गोमुख । प्रक्रीडन्तु कन्याः सुमनस्यमानाः सहेन्द्राण्या सवयसः सनीडाः ॥ प्रजापतिर्यो वसति प्रजासु प्रजास्तन्वते सुमनस्यमानाः । स इमां प्रजां रमयतु प्रजात्यै स्वयं च नो रमतां संदधातन ॥' इति प्रवदन्ति कालिकानि । कन्यामुदकेनाभिषिञ्चेत् ॥

## पारस्करगृह्यसूत्रम्

वधूवरयोर्वासःपरिधापनं संमुखीकरणं च

'अथैनां वासः परिधापयति– 'जरां गच्छ परिधत्स्व वासो भवाऽऽकृष्टीनामभिशस्तिपावा । शतं च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वाऽऽयुष्मतीदं परिधत्स्व वासः ॥' इति ॥

अथोत्तरीयम्– 'या अकृन्तन्नवयं या अतन्वत । याश्च देवीस्तन्तूनभितो ततन्थ । तास्त्वा देवीर्जरसे संव्ययस्वाऽऽयुष्मतीदं परिधत्स्व वासः ॥ 'इति ॥

( १ ) अनेन मन्त्रेण । मन्त्रश्च कारितार्थे । परिधापयिता चात्र वर एव । अपरे त्वध्वर्युमत्र कर्तारमिच्छन्ति । परिभाषितं ह्येतत्– 'अध्वर्युः कर्मसु वेदयोगात्' इति । नैतदित्यपरे । नहि स्मार्तेष्वध्वर्योः कर्तृत्वम्, समाख्यया हि श्रौतेष्वध्वर्योः कर्तृत्वमिष्यते । न चात्र समाख्याऽस्ति, वेदयोगाभावात् । स्मरणादेव हि स्मृतीनां प्रामाण्यमुक्तम् । अतः समाख्याभावात् स्वयमेव कर्तृत्वम् । ननु च पाकयज्ञेषु दक्षिणा श्रूयते– 'पूर्णपात्रो दक्षिणा वरो वा' इति । दक्षिणाशब्दश्च परिक्रयार्थे द्रव्ये वर्तते । न च परिक्रेयमन्तरेण परिक्रयो

---

* 'एतदेव' इति पूर्वसूत्रगता टिप्पणी द्रष्टव्या ।

( १ ) वागृ. ११.

( १ ) पागृ. १।४।१२–१३ ; संग. १६५–१६६.

भवति । तस्मादन्यस्य कर्तृत्वमिति । नैतदेवम् । अस्ति ह्यत्रान्योऽपि ब्रह्माख्यः कर्ता परिक्रेतव्यः, तदर्थः परिक्रयोऽयमिति क्षीणाऽर्थापत्तिः । अपि च परकीये कर्मणि परो नैव प्रवर्तते वचनमन्तरेण । श्रौतेषु च समाख्ययाऽन्यस्य कर्तृत्वमिति । न चेह समाख्याऽस्तीत्युक्तम् । वेदमूलत्वेऽपि हि स्मृतीनां समाख्यापरिज्ञानादकर्तृनियमः । श्रौतेषु तु परिक्रयाम्नानादन्यस्य कर्तृत्वमिति तदुक्तम् । अपि च परकर्तृत्वे 'शा मामनुव्रता भव' इत्येवमादीनि मन्त्रलिङ्गानि विरुध्यन्ते । अथोत्तरीयम् । 'या अकृन्तन्नवयम्' इति । अनेन मन्त्रेण परिधापयतीत्यनुवर्तते । † कभा.

(२) अथ अग्निस्थापनानन्तरम् । अत्र वरोऽपि वाससी परिधत्ते 'परिधास्यै यशसा मा' इति मन्त्राभ्याम् । * हभा.

(३) भर्तृयज्ञमते तु आचार्यकर्तृकं परिधापनम् । अत्र आचारादहतं वासो ग्राह्यम् । अहतलक्षणं कश्यपेनोक्तम्– 'अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयंभुवा । शस्तं तन्मङ्गले नूनं तावत्कालं न सर्वदा ॥' इति । मन्त्रार्थः– हे कन्ये, त्वं जरां निर्दुष्टवृद्धत्वं मया सह गच्छ प्राप्नुहि, वासश्च मया संपादितं परिधेहि । आकृष्यन्ते कामादिभिरित्याकृष्टयः मनुष्याः, तेषां मध्ये अभिशस्तिः अभिशापः, शसु प्रमादे, तस्मात् पातीत्यभिशस्तिपावा भव । शतं च शरदः वर्षाणि जीव प्राणिहि । सुवर्चाः तेजस्विनी रयिं च धनं पुत्रांश्च अनु पश्चात् संव्ययस्व अतिसुसंवृणीष्व उत्पाद्य राशिं कुरु । हे आयुष्मति, इदं वासः परिधत्स्वेत्यनुवादः । मन्त्र एवात्र कारितार्थे । 'या अकृन्तन्' इत्यनेन मन्त्रेणोत्तरीयं परिधापयति वर एव । तदप्यहतमेव । अत्रापि कारितार्थे मन्त्रः । मन्त्रार्थः– या देवीः देव्यः इदं वासः अकृन्तन् कर्तितवत्यः, या अवयन् वीतवत्यः । वेञ् तन्तुसंताने । ओतवत्य इत्यर्थः । याः तन्तून् सूत्राणि अतन्वत प्रोतवत्यः, तिर्यक् तन्तुसंताने (? तनु विस्तारे, तिर्यक्) ओतवत्य इत्यर्थः । चकाराद्या ओतान् प्रोतांश्च तन्तूनभितः उभयपार्श्वयोरपि ततन्थ तेनुः तुरीवेमादिव्यापारेण ग्रथितवत्यः । ताः तत्तत्सामर्थ्यदात्र्यो देव्यः स्वकार्यरूपवदिदं वासः त्वा त्वां जरसे दीर्घकालनिर्दुष्टजीवनाय संव्ययस्व परिधापयन्तु । पुरुषादिव्यत्ययश्छान्दसः । अतः हेतोः आयुष्मति, इदम् एतादृशं वासः परिधत्स्व उत्तरीयत्वेन वृणीष्व । गभा.

(४) अत्रायमथशब्दः कौतुकागारप्रवेशाद्यानन्तर्यवाचकः । § विभा.

**[1]अथैनौ समञ्जयति– 'समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ ॥ सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥' इति ॥**

(१) अथैनौ समञ्जयति 'समञ्जन्तु विश्वेदेवाः' इत्यनेन मन्त्रेण । सत्यपि कारितार्थत्वे वरस्यैव मन्त्रपाठः, मन्त्रलिङ्गात् । कारयितृत्वं च संनिधानात् कन्यापितुः । संनिहितो ह्यसौ प्रदातृत्वात् । $ कभा.

(२) अथैनौ वधूवरौ कन्यापिता समञ्जयति परस्परं संमुखीकरोति 'समञ्जन्तु विश्वेदेवाः' इति मन्त्रेण । समञ्जनं च 'युवां परस्परं समञ्जेथाम्' इति प्रेषितयोः परस्परं संमुखीकरणम् । मन्त्रपाठश्च कन्यासंमुखमेव । * जभा.

(३) अथ वस्त्रपरिधानान्तरम् । अत्र विशेषमाह ऋष्यशृङ्गः– 'वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् । नाम संकीर्तयेद्विद्वान् कन्यायाश्चैवमेव हि ॥' ¶ । हभा.

---

† जभा. कभावत् ।

* शेषं कभावत् ।

§ शेषं कभागतम् ।

$ विभा. कभागतम् ।

* शेषं कभावत् ।

¶ कन्यादानविषयकमृष्यशृङ्गवचनमेतद्व्याख्यानानन्तरसंगृहीतकन्यादानप्रयोगादौ संगच्छते । अत्र तु संगत्यभावात् प्रमादपतितमिति भाति । हरिहरभाष्यानुवादिनि दीपकेऽपि इयमव्यवस्था तदवस्थैव । न च संमुखीकरणप्रैषे प्रपितामहाद्युच्चारणं केनाप्युक्तम् ।

(१) पागृ. १।४।१४ ; संग. १६६.

(४) कन्यापिता 'परस्परं समञ्जेथाम्' इति अध्येषणेनैनौ वधूवरौ समञ्जयति। समञ्जनं नाम संमुखीकरणम्, परस्परं गात्रविश्लेष इति भर्तृयज्ञः। परस्परानुलेपनमिति केचित्। सत्यपि कारितत्वे वरस्यैव मन्त्रः, मन्त्रलिङ्गात्। कारयितृत्वं च संनिधानात् कन्यापितुः, संनिहितो ह्यसौ प्रदातृत्वात्। उभयोर्मन्त्रपाठ इति भर्तृयज्ञः। मन्त्रार्थः— हे कन्यके, नौ आवयोः हृदयानि मनांसि तन्निष्ठव्यापारान् संकल्पविकल्पात्मकान् विश्वेदेवाः आपश्च समञ्जन्तु गुणातिशयाधानेन संस्कुर्वन्तु। तथा सम्यग्भूतो मातरिश्वा अनुकूलो वायुः, तथा अनुकूलः प्रजापतिः, देष्ट्री धर्मोपदेष्ट्री देवता, आवयोर्हृदयानि संदधातु। उ अप्यर्थे। $ गभा.

## गोभिलगृह्यसूत्रम्

### कन्याभिषेकरूपं ज्ञातिकर्म

**'क्लीतकैर्यवैर्माषैर्वाऽऽप्लुतां सुहृत्सुरोत्तमेन सशरीरां त्रिर्मूर्धन्यभिषिञ्चेत्— 'काम वेद ते नाम मदो नामासि' इति। 'समानयामुम्' इति पतिनाम गृह्णीयात्। स्वाहाकारान्ताभिः। उपस्थमुत्तराभ्यां प्लावयेत्॥**

अथेदानीमासन्नविवाहकालायाः कन्यायाः स्नपनमभिदधाति— क्लीतकैरिति। क्लीतकैः उदकक्लिन्नैः, चूर्णीकृत्य द्रवीकृतैरित्यर्थः। आप्लुतां कृतसर्वाङ्गोद्वर्तनाम्। सुहृत् स्निग्धहृदयः वयस्या मातृवर्गश्च। "सुरा उदकम्। कोशेऽपि 'वरुणासुराऽरविन्दानि' इत्युदकपर्यायेषु पठ्यते" इति म. म. मुरारिमिश्रादयः। तथा उत्तमोदकेन सशरीरां कन्यां मूर्धनि शिरसि त्रिः वारत्रयम् अभिषिञ्चेत्। अयमर्थः— मूर्धनि तथाऽभिषिञ्चेत् यथा सर्वमेव शरीरमभिषिक्तं भवतीति। तत्र करणमन्त्रमाह— कामेत्यादिम्। इति एवमादिभिस्तिसृभिर्ऋग्भिः स्वाहाकारान्ताभिः। ता यथा— 'काम वेद ते नाम मदो नामासि समानयामुं सुरा ते अभवत्। परमत्र जन्माग्ने तपसो निर्मितोऽसि स्वाहा॥ इमं त उपस्थं मधुना संसृजामि। प्रजापतेर्मुखमेतद्द्वितीयम्। तेन पुंसो अभिभवामि सर्वान् वशिन्यसि राज्ञी स्वाहा॥ अग्निं क्रव्यादमकृण्वन् गुहानाः स्त्रीणामुपस्थमृषयः पुराणाः। तेनाऽज्यमकृण्वँस्त्रैशृङ्गं त्वाष्ट्रं त्वयि तद्दधातु स्वाहा॥' इति।

आसामर्थः— हे काम, ते नाम सर्वोऽपि वेद जानाति। त्वं मदः मादको नाम प्रसिद्धः असि भवसि। अतः अमुं संभावितम् एतस्याः पतिं समानय संगमय। एतयेति शेषः। ते सहायभूता सुरा एषा स्नानार्थमेतस्या उपस्थिता अभवत् भवति। परं किंतु हे जन्माग्ने जन्महेतुभूताग्निस्वरूप, अत्र अस्याम्, निमित्ते सप्तमी, एतदर्थमेव। तपसः प्रतिविशिष्टात् कर्मणः त्वं प्रजापतिना निर्मितोऽसि। तस्मै तुभ्यं जन्माग्निरूपाय स्वाहा सुहुतमस्तु।

इमं प्रत्यक्षभूतं ते त्वदर्थमुपकल्पितम् उपस्थं गुह्याङ्गं मधुना प्रियद्रव्येण उद्वर्तनभूतयवादिना संसृजामि संसर्गयामि। एतत् उपस्थं प्रजापतेः लोकस्रष्टुः द्वितीयं मुखम्। पूर्वमसौ एकस्मान्मुखत एव संकल्पाभिलापकवचनेनासृजत्प्रजाः, पश्चात्ततो यथाभिमतां वृद्धिमनालोक्य स्त्रीयोनितः प्रजाः स्रष्टुमेतत् द्वितीयं मुखं ससर्जेति पौराणिकी गाथाऽत्रानुसंधेया। तेन अनेन अवशान् अजितेन्द्रियान् कामिनः सर्वानेव पुंसः पुरुषान् अभिभवामि संमोहयामि वशे स्थापयामि। एवं काममुक्त्वा कन्यामाह— हे कन्ये, त्वं वशिनी वशंकरी, अत एव राज्ञी राजमाना सर्वश्रेष्ठा असि भवसि। तस्मै कामाय स्वाहा सुहुतमस्तु।

पुराणाः प्राग्भवीया ऋषयः गुहानाः रहस्यमेतमर्थं संवृण्वानाः स्त्रीणामुपस्थं गुह्याङ्गं क्रव्यादम् आममांसादं पुरुषादम् अग्निं तत्तुल्यम् अकृण्वन् अकुर्वन्। तेन हेतुना त्रैशृङ्गं त्रिशृङ्गात् उपस्थेन्द्रियात् उत्पन्नं रेतोरूपम् आज्यं घृतं त्वाष्ट्रं त्वष्टुः विश्वकर्मणः सर्वस्रष्टुः प्रजापतेरुपकारकम् अकृण्वन् अकुर्वन्। हे कन्ये त्वयि विषये

$ शेषं जभावत्।

(१) गोगृ. २।१।१०–११.

तत् आज्यभूतं रेतः दधातु स्थापयतु । कः ? योऽसावदसा निर्दिष्टोऽमुमिति ।

तस्मादेकैकामृचमुच्चार्यैकैकोऽभिषेकः कर्तव्यः । तत्रोत्तराभ्यामृग्भ्याम् 'इमं त उपस्थम्, अग्निं क्रव्यादम्' इत्येताभ्याम् उपस्थं योनिप्रदेशं प्लावयेत् । एतदुक्तं भवति— तिसृभिरपि आभिः तथाऽभिषेकः कर्तव्यो यथा सर्वं शरीरमभिषिक्तं भवति । परमुत्तराभ्यां तथाऽभिषेक्तव्यं यथोपस्थप्रदेशो विशेषतः प्लावितो भवतीति । अथेदानीं मन्त्रे विशेषमाह— 'समानयामुम्' इत्युक्तमन्त्रघटकवाक्ये अमुमित्यस्य स्थाने पत्युः वरस्य नाम गृह्णीयात् । तदिदं सूत्रमुत्सृज्य पाठक्रममनुसृत्यार्थक्रमं व्याख्यातम् । मृदुला.

**ज्ञातिकर्मैतत् ॥**

अथ सुहृत्पदार्थमभिव्यनक्ति— ज्ञातीति । आसन्ने विवाहसमये कन्यादौर्भाग्यापनोदकः शाखान्तरीयेणापि कर्तव्यो विरोधाभावादिति । मृदुला.

## खादिरगृह्यसूत्रम्

### कन्याप्लवनम्

**[1]'तयोराप्लवनं पूर्वम् ॥**

जायापत्योर्विवाहात्पूर्वमाप्लवनं कर्तव्यम् । तत् पुरुषस्य मन्त्रक्रमानुसारेण परस्ताद्वक्ष्यते 'आप्लवने पुरस्तात्' (३।१।१) इत्यारभ्य । रुद्रभा.

**मन्त्राभिवादात्तु पाणिग्रहणस्य पूर्वं व्याख्यातम् ॥**

स्त्रियास्त्वाह— मन्त्राभिवादादिति । वध्वाः पाणिर्गृह्यतेऽस्मिन्निति पाणिग्रहणं विवाहः । विवाहस्य काले वध्वा आप्लवनं मन्त्रलिङ्गानुसारेण कर्तव्यमिति सूत्रार्थः । तुशब्दो विशेषणार्थः । यद्यप्याप्लवनं स्नानं प्रसिद्धम्, तथाऽपीह वध्वा उपस्थाप्लवनमात्रे आप्लवनशब्दः, मन्त्राभिवादादिति । पूर्वमिति यत् पूर्वमाप्लवनं पूर्वमन्त्रद्योतितसुरासाधनकं तदेवोत्तरमन्त्राभ्यामपि कर्तव्यमित्येवमर्थम् । अत एव मध्वाज्यशब्दाभ्यामपि सुरैव लक्षणयोच्यते । सुरेति चात्र पिष्टसंयुक्तमुदकं लक्षणया पैष्टीसुरासादृश्यादुच्यते, मुख्यसुराया अस्पृश्यत्वात् अनाचाराच्च । वीति विविक्तवाचि । विविक्तकर्तृकं पाणिग्राहकज्ञातिकर्तृकमिदमाप्लवनमित्यर्थः । अमुमिति मन्त्रे च पत्युः परोक्षवन्निर्देशादप्ययमर्थो विज्ञायते । अध्याहारात् सिद्धे आख्यातमिति यदपि वृद्धैरन्यदाख्यातं तदपि कर्तव्यमिति । किं तत् ? नान्दीमुखम्, कौतुकबन्धनम्, संकल्पः इत्येवमादि । एवं प्रयोगः— विवाहदिवसात्पूर्वेद्युः पूर्वाह्णे नान्दीमुखश्राद्धं कुर्यात् । तत आप्लवनम् । 'काम वेद ते' इत्यादिभिर्मन्त्रैः स्वाहाकारान्तैः पिष्टसंयुक्तेनोदकेन पत्युर्ज्ञातयः शिथिलीकृतवस्त्राया वध्वा उपस्थमाप्लावयन्ति । प्रतिमन्त्रम् 'अमुम्' इत्यत्र पतिनाम ब्रूयुः 'विष्णुशर्माणम्' इतिवत् । ततः पुण्याहवाचनम् । रुद्रभा.

## कौशिकगृह्यसूत्रम्

### कन्याप्लवनम्

**[1]'सत्येनोत्तभिता' 'पूर्वापरम्' इत्युपदधीत ॥**

**पतिवेदनं च ॥**

**'युवं भगम्' इति संभलं सानुचरं प्रहिणोति ॥**

**'ब्रह्मणस्पते' इति ब्रह्माणम् ॥**

**तद्विवृहाच्छङ्कमानो निशि कुमारीकुलाद्वलीकान्यादीप्य ॥**

**'देवा अग्रे' इति पञ्चभिः सकृत्पूल्यान्यावापयति ॥**

**'अनृक्षराः' इति कुमारीपालं प्रहिणोति ॥**

**उदाहारस्य प्रतिहितेषुरग्रतो जघनतो ब्रह्मा ॥**

**'यो अनिध्मः' इत्यप्सु लोगं प्रविध्यति ॥**

**'इदमहम्' इत्यपोह्य ॥**

**'यो भद्रः' इत्यन्वीपमुदच्य ॥**

**'आस्यै ब्राह्मणाः' इति प्रयच्छति ॥**

**आव्रजतामग्रतो ब्रह्मा जघनतोऽधिज्यधन्वा ॥**

---

(१) खागृ. १।३।१-४.

(१) कौसू. ७५।६-२७, ७६।१-९.

बाह्यतः प्लक्षोदुम्बरस्योत्तरतोऽग्नेः शाखाया-मासजति ॥

तेनोदकार्थान् कुर्वन्ति ॥

ततश्चान्वासेचनमन्येन ॥

अन्तरुपातीत्य 'अर्यमणम्' इति जुहोति ॥

'प्र त्वा मुञ्चामि' इति वेष्टं विचृतति ॥

'उशतीः' इत्येतया त्रिराधापयति ॥

सप्तभिरुष्णाः संपातवतीः करोति ॥

'यदासन्याम्' इति पूर्वयोरुत्तरस्यां स्रक्त्यां तिष्ठन्तीमाप्लावयति ॥

'यच्च वर्चो यथा सिन्धुः' इत्युत्क्रान्तामन्येनावसिञ्चति ॥

'यद्दुष्कृतम्' इति वाससाऽङ्गानि प्रमृज्य कुमारीपालाय प्रयच्छति ॥

तुम्बरदण्डेन प्रतिपाद्य निर्व्रजेत् ॥

तद्वन आसजति ॥

'या अकृन्तंस्त्वष्टा वासः' इत्यहतेनाऽऽच्छादयति ॥

'कृत्रिमः' इति शतदतैषीकेण कङ्कतेन सकृत् प्रलिख्य ॥

'कृतयामम्' इत्यवसृजति ॥

'आशासाना' 'सं त्वा नह्यामि' इत्युभयतःपाशेन योक्त्रेण संनह्यति ॥

'इयं वीरुत्' इति मदुघमणिं लाक्षारक्तेन सूत्रेण विग्रथ्यानामिकायां बध्नाति ॥

अन्ततो ह मणिर्भवति बाह्यो ग्रन्थिः ॥ ‡

## आश्वलायनः

वधूवरयोर्वस्त्रपरिधानम्

[१]विवाहे तु विशेषेण दम्पत्योः सुचिरायुषे ।
वरोऽभिमन्त्र्य वासांसि तस्यै दद्यात् स्वयं वसेत् ॥

‡ संका. पृ. ७८ इत्यत्र सायणभाष्यं द्रष्टव्यम् ।

(१) आश्वस्मृ. ११।३४२-३४४.

सा च स्वस्त्ययनस्यान्ते वाससी वरमन्त्रिते ।
वसित्वा सम्यगाचम्य संप्रदानोन्मुखी भवेत् ॥

## श्रीमद्भागवतपुराणम्

वधूरक्षार्थहोमदानानि

[१]चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः ।
पुरोहितोऽथर्वविद्वै जुहाव ग्रहशान्तये ॥
हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् ।
प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ॥

'भाविनोऽर्था भवन्त्येव हठेनानिच्छतोऽपि हि ॥' इति मत्स्यपुराणोक्तावश्यम्भाविशुभाशुभेषु ग्रहादिदोषशान्त्यर्थं होमहिरण्यादिदानं विवाहात् प्राक् कर्तव्यम्, भगवत्या रुक्मिण्या भविष्यद्विवाहे तथा दर्शनात् । यथा भागवते —चक्रुरित्यादि । उत. १२५

## अनिर्दिष्टकर्तृकवचनानि

वध्वाः शिरसि तैलधारणम्

[२]रजनिजनितरागा मालिनी पूर्ववक्त्रा
प्रथमरजनियामेऽलङ्कृताभ्योऽङ्गनाभ्यः ।
शिरसि विमलतैलं धारयेत्तत्कुमारी
निशि सुललितगीतैर्नागवल्लीदलेन ॥

## स्मृतिसंग्रहः

गौरीहरपूजनम्

[३]लग्नाहे मातृकाः पूज्याः पूज्या गौरी हरान्विता ।
पीठे वा तदलाभे तु सवस्त्रे तण्डुलान्विते ॥

(१) संत. ८९२; उत. १२५ (भाग. १०।५३।१२, १३).

(२) ज्योनि. ६५८.

(३) संकौ. २१४; संर. ५३४ वा (वै) सवस्त्रे (सुश्लक्ष्णे).

[1]पङ्कजं कारयित्वा तु तत्र गौरीहरौ यजेत् ।
कलशैः कलशैः कार्याः पिधानोत्तरपङ्क्तिकाः ॥
[2]दिशां चतुर्षु कोणेषु स्थापयेत्तन्दुलोपरि ।
प्रतिमां पलहेम्ना तु कुर्याद्गौरीहरौ यतः ॥

यतः यस्यां प्रतिमायामुभौ मीलिताविल्याशयः । संकौ. २१४

[3]पलद्वयेन रौप्येण कुर्यान्नन्दिनमग्रतः ।
अशक्तस्तु तदर्धेन पादेन शक्तितोऽथवा ॥
[4]अलाभे कुङ्कुमाद्यैस्तु लेखयित्वा प्रपूयेजत् ।
ध्यात्वा मन्त्रेण देवौ द्वौ भक्त्या संपूजयेत् सुधीः ॥
[5]सिंहासनस्थां देवेशीं सर्वालङ्कारसंयुताम् ।
पीताम्बरधरं देवं रुद्रं चन्द्रार्धशेखरम् ॥
[6]करेणाधः सुधापूर्णं कलशं दक्षिणेन तु ।
वरदं चाभयं वामेनाऽऽश्लिष्य च तनुप्रियाम् ॥
[7]एवं ध्यात्वाऽऽपूज्य गौरीं पुण्यभाजस्तथा स्त्रियः ।
कन्यां समुद्वहेत् पश्चाद्यथोक्तविधिना ध्रुवम् ॥
[8]गौरीहरौ महेशानौ सर्वमङ्गलदायकौ ।
पूजां गृहीतां देवेशौ मङ्गलं कुरुतां सदा ॥

(१) संकौ. २१४ कार्याः (कार्या) पङ्क्तिकाः (श्रेणिका); संर. ५३४.

(२) संकौ. २१४; संर. ५३४ तन्दुलो (तण्डुलो) यतः (ततः).

(३) संकौ. २१४–२१५; संर. ५३४.

(४) संकौ. २१५; संर. ५३४.

(५) संकौ. २१५; संर. ५३४ रुद्रं चन्द्रार्ध (चन्द्रार्धकृत) : ५४४ (=) रुद्रं चन्द्रार्ध (चन्द्रार्धकृत).

(६) संकौ. २१५; संर. ५३४ : ५४४ (=).

(७) संकौ. २१५ चतुर्थपादो नास्ति; संर. ५३४.

(८) संकौ. २१५ (गौरीहर महेशान सर्वमङ्गलदायक । पूजां गृहाण देवेश सर्वदा मङ्गलं कुरु ॥); संर. ५३४ : ५४४ (=).

[1]कन्यादेहप्रमाणेन सप्तविंशतितन्तुभिः ।
वर्तिकां दीपयेत् पश्चाद्व्रतसंपत्तिहेतवे ॥
[2]भोजनीया ब्राह्मणाश्च सुवासिन्यः सुपूजिताः ।
दशाष्टौ पञ्च युग्मं वा हिरण्येनाथ तोषयेत् ॥
[3]व्रतान्ते मण्डपे स्थाप्य मञ्चकं सोपधानकम् ।
चतुष्कोणेषु मञ्चस्य स्थाप्या भाण्डप्रभा ततः ॥

अतो लग्नदिने कन्यापिता उक्तगौरीहरमूर्तिं कात्यायनीमहालक्ष्मीशचीप्रतिमाभिः सहाग्न्युत्तारणेन संस्कृत्य कोणचतुष्टयस्थापितकलशश्रेणीनां मध्ये उपलयुक्तदषदि सूत्रितायां पीठे वस्त्रे वा तण्डुलैः पङ्कजं कारयित्वा तत्र गौरीहरौ उक्तध्यानपूर्वकमुक्तमन्त्रेण पूजयित्वा प्रतिमात्रये देवतात्रयं यथाविभवं संपूज्य कन्यया सह प्रणम्य दीपं प्रज्वालयित्वा ब्राह्मणसुवासिनीश्च भोजयेत् दक्षिणां च दद्यादिति । संकौ. २१५

## चूडारत्ने

वध्वा तैलधारणम्, वरेण वधूच्छिष्टतैलस्य धारणम्, शचीपूजनम्

[4]व्रते देवप्रतिष्ठायां विवाहे पुरुषस्त्रियोः ।
तैलं तन्मन्त्रतो धार्यं विमलं प्राङ्मुखस्वकैः ॥
[5]रजकी तैलमादाय कन्यकामभिषिञ्चति ।
निशायाः प्रथमे यामे नागवल्लीदलेन तु ॥
[6]शचीं संपूज्य विधिवत्ततस्तैलाभिषेचनम् ।
कन्यायाश्च तदुच्छिष्टतैलेनापि वरस्य च ॥

(१) संकौ. २१५; संर. ५३४.

(२) संकौ. २१५ दशाष्टौ (दशाष्ट); संर. ५३४.

(३) संकौ. २१५ क्रमेण संग्रहे.

(४) ज्योनि १५८ (=); संग. २२३ स्वकैः (स्वयोः).

(५) ज्योनि. ५१८ (=); संकौ. २१२ याने (भागे) ज्योतिर्निबन्धोक्तम्; संग. २२३.

(६) ज्योनि. १५८ (=); संग. २२३ नापि (नाभि).

## रेणुकारिकाः

वध्वाः वासःपरिधापनं वधूवरयोः संमुखीकरणं च

[1]परिधाप्याहतं वासो जरां गच्छेति मन्त्रतः ।
उत्तरीयं च तां कन्यां या अकृन्तन् समुच्चरेत् ॥

(१) रेका. १७५-१७९ पृ. ६०-६१.

अमन्त्रवद्भवेत्कर्म शूद्रां चेदुपयच्छति ॥
संनिधानात् पिता तस्या अध्येषयति दम्पती ।
परस्परं समञ्जेथां तौ समं गच्छतस्ततः ।
समञ्जन्त्वितिमन्त्रेण धातुरज्जू गतौ भवेत् ॥
विवाहे यो विधिः प्रोक्तो मन्त्रा दाम्पत्य-
वाचकाः ।
वरस्तु तान् जपेत्सर्वान्नृत्विग्राजन्यवैश्ययोः ॥

# *वरप्रस्थानम्

## बौधायनगृह्यसूत्रम्

प्रस्थानस्य पुण्याहवाचनपूर्वकत्वम्, वरस्य स्नातत्वम्
अहतवासस्त्वम् गन्धानुलिप्तत्वं स्रग्वित्वं भुक्तवत्त्वं
प्रतोदपाणित्वम् अपदातित्वं च

[1] 'अद्य विवाहः' इति ब्राह्मणानन्नेन परिविष्य 'पुण्याहम्, स्वस्ति, ऋद्धिम्' इत्योङ्कारपूर्वं त्रिस्त्रिरेकैकामाशिषो वाचयित्वा स्नातोऽहतवासो(? सा) गन्धानुलिप्तः स्रग्वी भुक्तवान् प्रतोदपाणिरपदातिर्गत्वा ॥

## आश्वलायनगृह्यपरिशिष्टम्

स्वस्तिवाचनम्, मङ्गलवाद्यघोषः, वरस्य स्नातत्वम्
अलंकृतत्वं ब्राह्मण-बान्धवादिसाहित्यम्
अपदातित्वं च

[2]सुस्नातोऽलङ्कृतो वरः स्वस्ति वाचयित्वा सहितः स्वर्चितैर्ब्राह्मणैः पुरन्ध्रीभिर्ज्ञातिबान्धवैरपदातिर्मङ्गलगीततूर्यघोषाभ्यां संबन्धिनो गृहमेत्य ॥

अथ विवाहदिने तत्पूर्वदिने वा स्वस्तिवाचनादि। तत्र परिशिष्टे— 'सुस्नातालङ्कृतो वरः स्वस्ति वाचयित्वा' इत्युपक्रम्य वधूगृहं प्रति वरस्य गमनमुक्तम्। इदमेव शास्त्रमवलम्ब्य पारिजाते— मम देवपित्रर्णापाकरणहेतुभूतधर्मप्रजोत्पादनद्वारा श्रीपरमेश्वरप्रीत्यर्थं कन्याप्रतिग्रहणं कर्तुं तदङ्गभूतं स्वस्तिवाचनं करिष्ये इति संकल्पपूर्वकं वरकर्तृकं स्वस्तिवाचनमुक्त्वा ततो विधिवत् पित्रा नान्दीश्राद्धं कारयेदित्युक्तम्। अन्ये तु— वधूगृहगमनारम्भे स्वस्तिवाचनान्तरं परिशिष्टे विधीयते, भगवता तथैव स्मरणात्। विवाहं प्रकृत्य तेन ह्युक्तम्— 'तत्राऽऽभ्युदयिकं श्राद्धं कुर्यात् स्वस्ति च वाचयेत्। अपरेद्युः कृतस्नानो धृतधौताम्बरद्वयः ॥ भूषितो गन्धमाल्याद्यैर्वन्दिताभीष्टदेवतः। ब्राह्मणान् भोजयित्वा तैः कृतपुण्याहवाचनः। यानार्हं यानमारुह्य यायाच्चैव वधूगृहम् ॥ ॥' इति। अतः प्रथमस्वस्तिवाचनं पित्रादिकर्तृकमेव। संकौ. २१२

## हिरण्यकेशिगृह्यसूत्रम्

प्रस्थानयानानि

※ [1]आनयन्त्यस्मै रथमश्वं हस्तिनं वा ॥

(१) आनयन्त्यस्मै स्नातकाय ज्ञातयो ग्रामप्रवेशार्थं रथं वा (अश्वं वा) हस्तिनं वा। मातृद.

(२) अथ वरयानानि। तत्र हिरण्यकेशी— आनयन्त्यस्मा इति आनयन्ति कन्यापित्रादयः। $संप्र. ८२०

रथारोहणमन्त्रः

[2] 'रथन्तरमसि वामदेव्यमसि बृहदसि' 'अङ्कौ न्यङ्कावभितः' इत्येषा, 'अयं वा-

---

* कौषीतकिगृह्ये वरप्रस्थानं नोक्तम्। टीकाकृता तु कौतुकगृहप्रवेशात्पूर्वमभिहितम्। आपस्तम्बगृह्यटीकायां जैगृटीकायां च वरप्रस्थानमुक्तम्।

(१) बौगृ. १।११।२४ ; प्रपा. ३४९ (स्रग्वी भुक्तवान् प्रतोदपाणिरपदातिर्गत्वा) एतावदेव ; संप्र. ८२० प्रपावत् ; विपा. ३७ (भागः २) प्रपावत् ; संग. २२५ प्रपावत्.

(२) आगृप. १।२२ स्वस्ति (स्वस्तिं) अपदातिः (पदातिभिः) ; प्रपा. ३४८-३४९ स्नातोऽल (स्नाताल) सहितः (समाहितः) ; संकौ. २१२ (सुस्नातालङ्कृतो वरः स्वस्ति वाचयित्वा) एतावदेव.

※ वस्तुतस्तु गुरुगृहात् समावृत्तस्य स्नातकस्य ग्रामप्रवेशार्थं स्नातकज्ञातिकर्तृकमिदं यानानयनमिति प्रकरणान्निर्णीयते। मातृदत्तेनापि एवमेव व्याख्यातम्। प्रकाशानुरोधेन तु अस्माभिरत्र संगृहीतम्।

$ संग. संप्रवत्।

(१) हिगृ. १९।४।१ ; संप्र. ८२० ; संग. २२४.

(२) हिगृ. १९।४।२-६.

**मश्विना रथो मा दुःखे मा सुखे रिषत्। अरिष्टः स्वस्ति गच्छतु विविघ्नन्नभिदासतः॥' 'इह धृतिरिह विधृतिरिह रम इह रमताम्' इति रथमातिष्ठते, यदि रथेन प्रविशति॥**

'रथन्तरम्' इति यजुरेकम्। 'अङ्कौ न्यङ्काव-भितः' इत्येषा ऋक् अन्ता(? आऽन्ता)दनुवाकस्य। 'अयम्' इति च ऋक्। 'इह धृतिः' इति यजुः। एतैश्चतुर्भिर्मन्त्रै रथमातिष्ठते आरोहति स्नातको यदि रथेन ग्रामं प्रविशति। मातृद.

अश्वारोहणमन्त्रः

**'अश्वोऽसि हयोऽसि मयोऽसि' इत्येकादशभिरश्वनामभिरश्वम्, यद्यश्वेन॥**

'अश्वोऽसि' इत्येतैरेकादशभिरश्वमारोहति यद्यश्वेन ग्रामं प्रविशति। तैत्तिरीयाणां 'मयोऽसि' इत्येतत्तृतीयं नाम पठितं नास्ति। वाजसनेयिनां चतुर्थमेतत् पठितम्। येषां तृतीयमस्त्याम्नातं यथा तेषां पाठस्तथा ग्राह्यः। केचित् 'अश्वोऽसि हयोऽस्यत्योऽसि नरोऽसि' इत्येवं 'यजुर्नामाऽसि' इत्येतदन्तानि यथा तैत्तिरीयाणां पाठस्तथा गृह्णन्ति। मातृद.

गजारोहणमन्त्रः

**'इन्द्रस्य त्वा वज्रेणाभ्युपविशामि वह कालं वह श्रियं माऽभिवह हस्त्यसि हस्तियशसमसि हस्तिवर्चसमसि हस्तियशसि(? सी) हस्तिवर्चसी भूयासम्' इति हस्तिनम्, यदि तेन तद्गच्छति यत्रास्मा अपचितिं करिष्यन्तो भवन्ति॥**

'इन्द्रस्य त्वा' इत्यनेन हस्तिनमारोहति, यदि तेन हस्तिना ग्रामं प्रविशति। तद्गच्छति तत्र गच्छति यस्मिन् देशेऽस्मा अपचितिं करिष्यन्तो भवन्ति।

मातृद.

दिगुपस्थानम्

**'संस्रवन्तु दिशो मयि समागच्छन्तु सूनृताः। सर्वे कामा अभियन्तु नः प्रिया अभिस्रवन्तु नः प्रियाः॥' इति दिश उपतिष्ठते॥**

'संस्रवन्तु' इति सकृन्मन्त्रमुक्त्वा दिश उपतिष्ठते आरोहणानन्तरमेव। केचित् गच्छतीत्युक्त्वा वचनाद्गच्छन्नेवोपतिष्ठते इत्याहुः। मातृद.

वरेण अभिमुखागतसत्कारकर्तुः समन्त्रकसमीक्षणम्

**'यशोऽसि यशोऽहं त्वयि भूयासम्' इति योऽस्यापचितिं करिष्यन् भवति तमभ्यागच्छन् समीक्षते॥**

योऽस्य स्नातकस्यापचितिं पूजां करिष्यन् भवति तमाभिमुख्येन समीपं गच्छन्नभिगच्छन्तं वा स्वयमागच्छन् 'यशोऽसि' इत्यनेन मन्त्रेण सम्यगीक्षते। अवरुद्धैतत् कार्यमित्येके। अनवरुद्धेत्यपरे। मातृद.

## काठकगृह्यसूत्रम्

प्रास्थानिकं कर्म

**[1]अथ प्रास्थानिकम्॥**

(१) प्रस्थाननिमित्तं प्रास्थानिकं कर्म अनन्तरं वक्ष्यते इत्यर्थः। प्रस्थानं च वरस्य श्वशुरगृहप्राप्तये विवाहं कर्तुम्। देव.

(२) इदं प्रास्थानिकं कर्म वरस्य विवाहार्थं श्वशुरगृहागमनसमये कर्तव्यम्। ब्राह्म.

(३) अथशब्दः कन्योद्वाहत्वव्यावृत्त्यर्थः। पुंस एवेदमिति भावः। प्रस्थाननिमित्तं कर्म प्रास्थानिकम्। आवि.

**तस्मिन् यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चाद्भगिनी सिचं गृह्णाति शस्त्रं गृहीत्वा॥**

(१) तस्मिन् प्रास्थानिके कर्मणि यथोक्तमुपसमाधाय। अग्नेः पूर्वं कर्तव्यमुद्धतस्य चावोक्षितस्य च परिसंवाहनपर्युक्षणपरिस्तरणपूर्वकमाज्याहुतिपञ्चकेन संतनीहोमैश्चैकादशभिः संस्करणमुपसमाधानमुच्यते। तत्र जयप्रभृतिभिर्मन्त्रैर्होमं कुर्यात् जयाभिधानान् वा होमान् कुर्यात्, 'आकूतं चाऽऽकूतिश्च' 'बृहस्पतिपुरोहिताः'

(१) काग. २३।१-४.

'ऋताषाट्' इत्यादिभिर्मन्त्रैर्जुहुयादित्यर्थः। एते हि मन्त्रास्तत्साध्या वा होमा जयाभ्यातानराष्ट्रभृदाज्यभागादिशब्दसाध्यतया प्रसिद्धाः। आज्यभागान्ते चाग्निं पुष्टिपतिं प्रजापतिं च यजेत, 'सर्वत्रोद्वाहकर्मस्वनादिष्टदैवतेषु' इत्यादिसूत्रवचनप्रामाण्यादिति केचित्। अन्ये त्वाहुः– सूत्रकारप्रामाण्यादेव जयशब्दोऽत्राग्निप्रजापतिदेवतयोर्होमयोः परिभाष्यते, आज्यभागान्तं चोपसमाधानमिति। कश्चित्त्वाह– विवाहप्रकरणेऽन्तराऽन्तरा चोदितत्वात् आज्यभागान्तानि कर्माणि कृत्वा पुष्ट्यर्थमग्नये पुष्टिपतये चाक्षतसक्तुभिर्होमः कर्तव्यः सूत्रकारवचनसंप्रत्ययार्थमिति। अन्यथा हि नाम्ना मन्त्रवर्णैर्वा सर्वत्र देवतावगमान्नानादिष्टदैवतं किंचिदुद्वाहकर्मसु कर्म विद्यत इति सूत्रार्थसंप्रत्ययाभावः स्यात्। एवं जयहोमेषु कृतेषु आज्यभागान्ते वरस्य पश्चात् स्थिता सती भगिनी मुख्या उपचरिता वा यथासंभवं खड्गक्षुरिकादीनामन्यतमं शस्त्रविशेषं हस्ते तूष्णीं गृहीत्वा, तूष्णीं सिचमुपरि परिधानीयस्य वाससो भ्रातुः संबन्धिनोऽञ्चलं गृह्णाति, परिधानदशां हस्तेन स्पृशतीत्यर्थः। अञ्चलग्रहणमदृष्टसंस्कारार्थं शस्त्रग्रहणमपि। तथा च प्रायस्तदेव शस्त्रमुत्तरकालेऽपि रक्षार्थं शयनादिसंनिधौ स्थाप्यमानमार्यावर्ते लक्ष्यते। देव.

(२) अत्राप्यक्षतसक्तव एव हविः। आज्यभागान्ते व्रजतो महाराजस्य भगिनी पश्चाद्वस्त्रान्तमादत्ते छुरिकादिकं शस्त्रमादाय जन्यैः सह 'पूषा मा' इति गृहान्निष्क्रम्य स्वसा सिचान्तहस्तेव सह जलसमीपं गच्छति। ब्राह्म.

(३) तस्मिन्प्रास्थानिके कर्मणि यथोक्तमुपसमाधाय उद्धतावोक्षितेऽग्निसादनं परिसमूह्य पर्युक्ष्य परिस्तीर्याऽऽज्यसंस्कारान्तं जयप्रभृतिभिर्मन्त्रैराज्यभागान्तैर्हुत्वा। प्रभृतिशब्दोऽवमग्राहकः। तेनाऽऽघाराद्यपि भवति। एवं च जयप्रभृतिभिर्हुत्वेतिवचनमाज्यभागान्तं तन्त्रमुपलक्षयति। सर्वत्र प्रभृतिशब्दस्यावमग्राहकत्वं सर्वतन्त्रेषु प्रसिद्धम्। द्वादशरात्रप्रभृतीनि सत्राणीत्युक्त्वा एकादशरात्रादीनि विदधाति। एवमाज्यभागान्तं हुत्वा पश्चाद्भगिनी वरस्य सिचं वस्त्रैकदेशं गृह्णाति। कथम्? पूर्वं शस्त्रं शासनसमर्थं शरादि, भगिन्येव। आवि.

**'पूषा मा' इति यान्ति यत्रोदकम्॥**

(१) 'पूषा मा प्रपथे पातु' इत्यादिना मन्त्रेणोदकसंमुखा व्रजन्तीत्यर्थः।

'पूषा मा प्रपथे पातु पूषा मा पशुपाः पातु पूषा माऽधिपतिः पातु॥'

पुष्णाति वर्धयतीति पूषा पृथिवी अन्तरिक्षं द्यौश्च। तथा च ब्राह्मणम्– 'इयं वै पूषा प्रपथेऽन्तरिक्षं पशुपा द्यौरधिपतिः' इति। एतद्धि इयमित्यपरोक्षनिर्देशेन प्रयुक्तस्य पूषशब्दस्य मन्त्रे पृथिव्यर्थतां दर्शयति। 'अन्तरिक्षं पूषा' इत्यनेनापि मध्यवर्तिना मन्त्रेण पूषशब्दस्यान्तरिक्षवृत्तित्वं दर्शयति। यथैव हि भूतानि पुष्णातीति पृथ्वी पूषा, तथैव पशूनवकाशदानेन पाति पुष्णातीति कृत्वा अन्तरिक्षं पूषा। एवं द्यौरपि पूषा, सा हि सर्वलोकाधिपतिः, यतोऽसौ सर्वलोकान् वृष्ट्यादिद्वारेण पुष्णाति। तेनायं मन्त्रार्थः– पूषा पृथिवी प्रपथे गन्तुं प्रस्तुते पथि मार्गे मां पातु, तथा पशुपा यः पूषा अन्तरिक्षलक्षणः, सोऽपि मां पातु रक्षतु। तथा अधिपतिर्यः पूषा द्युलक्षणः, सोऽपि मां पालयतु पथि गच्छन्तम्। देव.

(२) 'पूषा मा' इति गच्छन्ति जन्या वरश्च। आवि.

**'शं नो देवीः' इत्युपस्पृश्य 'प्राची दिक्' इति यान्ति यथादिशम्॥**

(१) उदकान्तं प्राप्य उदकोपस्पर्शनं शिरसि प्रक्षेपणमाचमनं कृत्वा 'प्राची दिगग्निर्देवता' इत्यादिना मन्त्रेण यथादिशं या दिग्येषां गन्तव्या तदभिधायिना मन्त्रेण यथालिङ्गमभिधाय वरप्रभृतयो गच्छन्ति। अत्र विवाहस्य कारयिता यो गुरुः स एव पिता वा वरस्य मन्त्रपाठे कर्ता।

'शं नो देवीः' इत्यादयो व्याख्याताः ।

'प्राची दिगग्निर्देवताऽग्निं स ऋच्छतु यो मैतस्या दिशोऽभिदासति, दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु०, प्रतीची दिक् सोमो देवता सोमं स ऋच्छतु०, उदीची दिङ् मित्रावरुणौ देवता मित्रावरुणौ स ऋच्छतु०, ऊर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋच्छतु०, इयं दिगदितिर्देवताऽदितिं स ऋच्छतु यो मैतस्या दिशोऽभिदासति ॥'

या प्राची दिक्, तस्या अग्निर्देवता । अत एव तस्या दिशः संबन्धी कश्चित् यो मामभिदासति, 'दसु उपक्षये', उपक्षेप्तुमिच्छत्याभिमुख्येन, सोऽग्निमृच्छतु अग्निमभ्यृच्छतु अग्निं लक्षणीकृत्येन्द्रियप्रलयमनुभवतु, अग्निस्तस्याक्ष्यादिनिग्रहं करोत्वित्यर्थः । एषैव सर्वत्र योजना तुल्या । पर्वतारोहणावरोहणमूर्ध्वमधश्च गमनमस्तीति तत्परत्वमपि मन्त्रस्य युक्तम् । केचिदाहुः– यदभिमुखं गमनम्, तल्लिङ्गक एव मन्त्रैकदेशः प्रयोक्तव्य इति । तदयुक्तम्, यत उपद्रवनिवारणायैष मन्त्रः, अन्यतमदिगभिमुखगमनप्रवृत्तस्य सर्वदिक्केभ्योऽपि संभाव्यते विप्लवः सर्पाशनिप्रभृतिभ्योऽधस्तनोपरितनेभ्यः । एवं पार्श्वादिप्रभवेभ्योऽपीति । सर्वप्रस्थानेषु चैषेतिकर्तव्यता बोद्धव्या । देव.

(२) तत्र 'शं नो देवीः' इत्युपस्पृश्य 'प्राची दिगग्निर्देवता' इति यान्ति यथादिशम् । उदकान्तात्कल्याणं वदन्ती स्वसा प्रत्येति । ततो होमकर्ताऽग्निं पुष्टिपतिं प्रजापतिं च सक्तुभिरिष्ट्वा ऋतुतिथ्यादि संस्थापयेत् । ब्राह्म.

(३) भगिनी यत्र स्थाने उदकं तत्र 'शं नो देवीः' इत्यपः स्पृष्ट्वा हस्तार्धसेकमात्रं 'प्राची दिक्' इति यान्ति गच्छन्ति यथादिशं दिगुपलक्षणेन मन्त्रेणेत्यर्थः । ततोऽक्षतसक्तूनामग्निं पुष्टिपतिं प्रजापतिं च यजेत । ततस्तन्त्रसमाप्तिः । आवि.

## आग्निवेश्यगृह्यसूत्रम्

वरस्य कौतुकबन्धनं स्वस्त्ययनं पदातित्वं च

[1]आपूर्यमाणपक्षे पुण्ये नक्षत्रे शोभनान्यगाराणि कल्पयित्वा बद्धकौतुकः कृतमङ्गलस्वस्त्ययनः पदातिर्वधूगृहं गत्वा ॥

## वैखानसगृह्यसूत्रम्

प्रस्थानमन्त्राः

[2]कनिक्रदादिना कन्यागृहं गत्वा ॥

## व्यासः

प्रस्थानात्पूर्वं वरभोजनम्

[3]भुक्त्वा समुद्वहेत् कन्यां सावित्रीग्रहणं तथा । उपोषितः सुतां दद्यादर्चिताय द्विजाय तु ॥

(१) भुक्तोद्वाहस्मरणमधर्मविवाहविषयम् । तदाह व्यासः– 'गान्धर्वासुरयोरेव भुक्त्वा तु परिणीयते । ब्राह्मादिषु विवाहेषु भोजनं नेति काश्यपः ॥' । * मुक्ता. १४९

(२) कन्या भुक्तवताऽपि प्रतिग्राह्येत्याह व्यासः– भुक्त्वा समुद्वहेदिति । संम. ७२

(३) भुक्त्वेति मधुपर्के वैधभोजनपरम् । ¶ सिन्धु. ११३५

[ मधुपर्के वैधेति । भोजनान्तरकल्पने मानाभावात् । वस्तुतस्तु भुक्त्वाऽपीत्यर्थः । तेन लौकिकभोजनस्याभोजनस्य च लाभः । एतेन प्रतिग्रहान्तरस्य मध्याह्नस्नानात् प्राक्कालीनत्वं नियतमिति सूचितम् । कृभ. ११३५]

---

* आन. मुक्तावत् ।

¶ बाल., संर. सिन्धुवत्, विस्तरस्तु मधुपर्कप्रकरणे आश्वलायनगृह्यसूत्रे द्रष्टव्यः ।

(१) आग्निगृ. १।६।१. (२) वैगृ. ३।२.

(३) प्रपा. ३४९ सुतां (तु तां) द्विजाय तु (द्विजातये); संप्र. ८२० ; मुक्ता. १४९ भुक्त्वा (भुक्तां) सुतां (स वै) द्विजाय तु (द्विजातयः) संग्रहकारः ; संम. ७२ ; सिन्धु. ११३५ ; विपा. ३७ (भागः २) द्विजाय तु

## लघ्वाश्वलायनः

प्रस्थानमन्त्राः

[१]श्रावयेयुः प्रसुग्मन्तासूक्तं कन्यां कनिक्रदत् ।
देवीमृचं पठन्तश्च नयेयुस्ते हि वै वरम् ॥

## ब्रह्मपुराणम्

प्रस्थाने वरस्य स्नाततवम् अहतवस्त्रत्वं भुक्तत्वं सवाद्यत्वं स्त्रीपुरःसरालंकृतजनसहितत्वं च

[२]अपरेद्युः कृतस्नानोऽहतवस्त्रधरो वरः ॥
[३]भुक्त्वा निश्यह्नि पूर्वाह्णे उद्वहेन्निशि सर्वदा ॥
[४]भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणे तथा ।
उपोषितस्तु तां दद्यादर्चिताय वराय च ।
क्षीरान्नं सात्त्विकाहारं भुक्त्वा कन्यां समुद्वहेत् ॥

[५]भूषणैः फलताम्बूलैर्गन्धपुष्पाक्षतादिभिः ।
शुक्लाम्बरधरैर्वाद्यैर्विप्राशीर्वचनैः सह ।
गच्छेच्च कन्यकागेहं वरश्च स्त्रीपुरःसरम् ॥

## अनिर्दिष्टकर्तृकवचनानि

वरभोजनविचारः, अप्रियपक्षिशब्दश्रवणे मन्त्राः

[६]कन्यादानं निशीथे चेद्दिवा भोजनमाचरेत् ।
उपोषितः सुतां दद्याद् ब्राह्मादिषु चतुर्ष्वपि ॥

[१]कन्यादानं निशीथे चेद्वरायोपोषिताय च ।
उपोषितः सुतां दद्याद् ब्राह्मादिषु चतुर्ष्वपि ॥
भुक्त्वा समुद्वहेत् कन्यां सावित्रीग्रहणं तथा ।
गान्धर्वासुरयोरेव विधिरेष उदाहृतः ॥
[२]गच्छञ्छृणोति वाक्यानि पक्षिणामप्रियाणि च ।
जपेत्कनिक्रदत्सूक्तं देवीं वाचमृचं तथा ॥

## चूडामणौ

वरभोजनम्

[३]भुक्तायैव सुतामुपोषितनरो दद्याच्च सावित्रिकाम् ॥

## शाकलकारिकाः

प्रस्थानमन्त्राः

[४]प्रसुग्मन्तेतिसूक्तेन वृत्वाऽथ वरमानयेत् ।
कनिक्रदज्जपेत् सूक्तं देवीं वाचमृचं ततः ॥

## शौनककारिकाः

वरधर्माः स्नानं वस्त्रयुगधारणं भूषणानि इष्टदेवतावन्दनं ब्राह्मणभोजनं पुण्याहवाचनं कौतुकसूत्रबन्धनं मित्रबान्धवसाहित्यं च

[५]*अपरेद्युः कृतस्नानो धृतधौताम्बरद्वयः ।
भूषितो गन्धमाल्याद्यैर्वन्दिताभीष्टदेवतः ॥
[६]ब्राह्मणान् भोजयित्वा तैः कृतपुण्याहवाचनः ।
कृतकौतुकबन्धश्च मित्रबान्धवसंयुतः ॥

---

(द्विजातये); आन. १८० (=) मुक्त्वा (भुक्तां) प्रथमपादेन निर्देशः; बाल. १।१४ पृ. ४८ द्विजाय तु (द्विजन्मने): १।१५६ पृ. ४१५ : पृ. ४१७, ४१८ निर्देशमात्रम्; संग. २२५; संर. ५४९.

(१) लघ्वाश्वस्मृ. १५।१९.

(२) प्रपा. ३४९; संप्र. ८१९.

(३) प्रपा. ३४९; संप्र. ८२०; विपा. ३७ (भागः २).

(४) प्रपा. ३४९ प्रथमं श्लोकार्धद्वयं व्यासेऽपि.

(५) प्रपा. ३४९; संप्र. ८२०.

(६) संग. २२५.

* संकौव्याख्यानं आगृपवाक्ये द्रष्टव्यम् ।

(१) धप्र. ४८. (२) धप्र. ४५.

(३) संग. २२५. (४) शाका. १२० पृ. १३.

(५) शौका. २ पृ. ५७ देवतः (दैवतः); प्रपा. ३४९; संप्र. ८१९; विपा. ३७ (भागः २) चतुर्थपादे (शकुनेन समन्वितः); संकौ. २१२; संग. २२४ माल्याद्यैः (मालाद्यैः) शेषं विपावत्, विधानपारिजातके; संर. ५३३ म्बरद्वयः (म्बरो वरः) शेषं विपावत्.

(६) शौका. ३ पृ. ५७; प्रपा. ३४९; संप्र. ८१९; विपा. ३७ (भागः २) त्वा तैः (त्वाऽन्ते); संकौ. २१२ पृ.; संग. २२४ बन्धश्च (वेशश्च) उत्त., विधान-

कृतपुण्याहवाचन इति वचनात् वधूगृहगमनकाले वरेण पञ्चवाक्यैः पुण्याहवाचनं कार्यमिति केचित् । अनुवादोऽयमित्यन्ये । संर. ५३३

यानेन गमनम्, वनिताभ्युद्गतस्य वरस्य गृहप्रवेशः

[1]यानं यथार्हमारुह्य यातव्यं च वधूगृहम् ।
तस्य द्वाराद्बहिः स्थित्वा प्राङ्मुखोऽभिमुखागतैः ॥

[2]प्रदीपपूर्णकुम्भादिपाणिभिर्वनिताजनैः ।
कृताभ्युद्गमनो गेहं प्रविशेत् सह बन्धुभिः ॥

तस्य वधूगृहस्य । संर. ५३३

---

पारिजातके; संर. ५३३ त्वा तैः (त्वाऽन्ते) बान्धव (बन्ध्वादि).

(१) शौका. ४ पृ. ५७ ; प्रपा. ३४९ ; संप्र. ८१९ ; विपा. ३७ (भागः २) ; संकौ. २१२ (यानार्हं यानमारुह्य यायाच्चैव वधूगृहम् ।) पू. ; संग. २२४ पू., २२५ उत्त. विधानपारिजातके ; संर. ५३३ यातव्यं (गन्तव्यं).

(२) शौका. ५ पृ. ५७ प्रदीप (प्रदीप्त) ; प्रपा. ३४९ ; संप्र. ८१९ ; विपा. ३७ (भागः २) ; प्रदीप

## कुमारिलकारिकाः

प्रस्थाने वरधर्माः स्नानम् अहतवस्त्रधारणम् अलंकृतत्वं सितच्छत्रधारणं यानारूढत्वं बान्धवसहितत्वं च

[1]अपरेद्युः कृतस्नानोऽहतवस्त्रधृतो वरः ।
स्वलङ्कृतः सितच्छत्रोऽपदातिर्ज्ञातिबान्धवैः ॥
वृतो वधूगृहं गत्वा मधुपर्केण पूजितः ॥

## रेणुकारिकाः

प्रस्थाने वरधर्माः कौतुकबन्धः स्नानादि स्वस्तिवाचनमातृकापूजने वाद्यघोषसहितत्वं च

[2]कृतकौतुकमङ्गलचारुवपुः
कृतवाचनमातृयजिः पुरतः ।
श्रुतिघोषविनोदित एति वरो
मुदितः स वधूपितुरावसथम् ॥

---

(गृहीत) ; संग. २२५ विपावत्, विधानपारिजातके ; संर. ५३३ विपावत्.

(१) कुका. १।१९।२–३ ; प्रपा. ३४८ धृतो (धरो) स्वलङ्कृतः (अलङ्कृतः) बान्धवैः (बन्धुभिः) ; धप्र. ४६ वरः (नरः).

(२) रेका. ११० पृ. ५५–५६.

# मधुपर्कः

## बौधायनश्रौतसूत्रम्

आचार्यकर्तृकस्य स्नातकमधुपर्कार्हणस्य प्रयोगः

'अथास्मा आचार्यः कूर्चमाहारयति । तं प्रदक्षिणं पर्यस्योदगावृत्त उपविशति पुरस्ताद्वैनं प्रत्यञ्चमुपोहते– 'राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम्' इति । अथास्मा उदकमाहारयति । तेनास्य पादौ प्रक्षालयति । अवनेक्तुः पाणी संमृशति– 'मयि महो मयि भगो मयि भर्गो मयि यशः' इति । अप उपस्पृश्य 'मयीन्द्रियं वीर्यम्' इत्युरः प्रत्यात्मानं प्रत्यभिमृशते । अथास्मा अन्यदाहारयति । तत्प्रतिगृह्णाति 'आ म आगाद्वर्चसा यशसा सꣳसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्' इति ब्राह्मणः । 'प्रियं पशूनां कुर्वधिपतिं प्रजानाम्' इति राजन्यः । तदुपस्पृश्य 'प्राक् सेक्तवै' इत्याह । मधुपर्कं प्रोक्तमभिमन्त्रयते– 'स माऽवतु स मा पातु स मा जुषताम्' इति । उभाभ्यां हस्ताभ्यां प्रतिगृह्णाति– ॥

'आ म आगाद्वर्चसा यशसा सꣳसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्' इति ब्राह्मणः । 'प्रियं पशूनां कुर्वधिपतिं प्रजानाम्' इति राजन्यः । तस्मिंश्चेत्किंचिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्येमां दिशं निरस्यति– 'नेष्टाविद्धं कृन्तामि या ते घोरा तनूस्तया तमाविश योऽस्मान्द्वेष्टि यं च वयं द्विष्मः' इति । अथाप उपस्पृश्य समुदायुत्य त्रिः प्राश्नाति– 'प्राण इदं ते बलिꣳ हरामि श्रेष्ठं माऽधिपतिं कुरु' इति । 'सोमोऽसि सोमपं मा कुरु' इति द्वितीयम् । 'अन्नमस्यन्नादं मा कुरु' इति तृतीयम् । त्रिः पीत्वोच्छिष्टं ददाति । यमात्मनः श्रेयांसमिच्छेत्तस्मै शेषं दद्यात् । उपनीतां गामनुमन्त्रयते– 'जहि मे पाप्मानमुपनेतुश्च' इति । तां कुर्वन्ति वोत्सृजन्ति वा । स यदि करिष्यन्भवति 'कुरुत' इत्याह । अथ यद्युत्स्रक्ष्यन्भवति तामनुमन्त्रयते– 'गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनाꣳ स्वसाऽऽदित्यानाममृतस्य नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ पिबतूदकं तृणान्यत्त्वोमुत्सृजत' इति । अथास्मा ओदनमाहारयति । तमश्नाति– 'ब्रह्म त्वाऽश्नातु ब्रह्म त्वाऽश्नातु' इति । तच्चतुष्टयोऽर्घ्यो दधि मधु घृतमाप इति । पञ्चतय इत्येके दधि पयो मधु घृतमाप इति ॥

(१) बौश्रौ. १७।४३–४४.

## शाङ्खायनश्रौतसूत्रम्

अर्घ्यगणना

'षडर्घ्या भवन्त्याचार्य ऋत्विक् श्वशुरो राजा स्नातकः प्रिय इति ॥

शाखापश्वनुकल्पसंबन्धेनेदमुच्यते । अतो यद्यपि 'आचार्यायाऽऽग्नेयः' इत्येवमादयः शाखापशवो गृह्योक्तास्तथाऽपि तेषामिह पाठाद्वैकल्पिकमनुष्ठानम् । मधुपर्कस्तु नियमतस्त्रैवर्णिकानामाचार्यादीनां परिसंवत्सराद्गृहमागतानामवश्यं कर्तव्यः । तेनेहाभिधीयते । 'ऋत्विजो वृणीते' (५।१।१) इत्यनेनापि वक्ष्यमाणेन यादृशस्तादृशो वाऽस्य संबन्धो नास्ति । तेनेहोपदिश्यते । आचार्यादयश्चत्वारः प्रसिद्धाः । स्नातकश्चात्र समावृत्तमात्रो गृह्यते । प्रियश्च दुहितुः परिणयनार्थमागतो वरः । एते अर्घ्याः भवन्ति । अर्घ्य इति विशिष्टेतिकर्तव्यताको मान्य इत्युच्यते । प्रियशब्दो विशेषणं मा विज्ञायीति षड्ग्रहणम् । आभा.

(१) शाश्रौ. ४।२१।१–२५.

विष्टरपाद्यार्घ्याचमनीयग्रहणम्

**उदङ्मुखः प्राङ्मुखो वा 'अहं वर्ष्म सदृशानां विद्युतामिव सूर्यः। इदं तमधि तिष्ठामि यो अस्माँ अभि दासति ॥' इति कूर्चमध्यास्तेऽधितिष्ठति वा ॥**

अहं वर्ष्मेत्येवमादिना मन्त्रेणाऽऽचार्यादिरर्घ्यः उदङ्मुखः प्राङ्मुखो वा विष्टरमधिष्ठायाऽऽस्ते तं वाऽधितिष्ठति । वक्ष्यति— 'कूर्चः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरिति वेदयेत' (४।२१।२५) इति । अतश्चार्घप्रदात्रा पूर्वमावेदितोऽध्यासनाधिष्ठानयोर्विकल्पः । आभा.

**'विराजो दोहोऽसि विराजो दोहमशीय मयि पद्यायै विराजो दोहः' इति पाद्यं प्रतिगृह्य ॥**

विष्टरं कूर्चं वोपादाय अर्घदात्राऽऽवेदितं पाद्यं प्रतिगृह्णाति । 'विराजो दोहः' इत्येवमादिना मन्त्रेण पादप्रक्षालनार्थमुदकं प्रतिगृह्णीयात् । आभा.

**अर्घ्यमित्युक्तोऽपः प्रतिगृह्य ॥**

अर्घ्यमित्युक्तोऽर्घदात्राऽनन्तरमपः प्रतिगृह्णीयात् । आभा.

**आचमनीयमित्युक्त आपोहिष्ठीयाभिस्तिसृभिरेकैकयाऽऽचम्य ॥**

आचमनीयमिति प्रचोदितोऽर्घदात्राऽनन्तरम् 'आपो हि ष्ठा मयोभुवः' इत्येवमाद्याभिस्तिसृभिः प्रत्येकं त्रिराचामेत् । आभा.

मधुपर्कपात्रप्रेक्षणम्

**मधुपर्क इत्युक्तो यथा प्राशित्रं तथा प्रतीक्ष्य ॥**

मधुपर्क इत्युक्तोऽर्घदात्रा, पात्रसंपुटं सदधिमधु यथा प्राशित्रं ब्रह्मा ईक्षते तथेक्षणं कुर्यात् । कथं च तत्? 'मित्रस्य त्वा चक्षुषा प्रतीक्षे' इत्यनेन मन्त्रेण । आभा.

मधुपर्कग्रहणम्

**तथा प्रतिगृह्णाति । यशसे ब्रह्मवर्चसायेति विकारः ॥**

ततोऽनन्तरं तथैव प्रतिगृह्णाति यथा ब्रह्मा । कथं च तत्? 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि'। तत्रैतावान्मन्त्रः, अत्र तु 'यशसे ब्रह्मवर्चसाय' इति मन्त्रोपजनः । आभा.

मधुपर्केण पात्रलेपनम्

**प्रतिगृह्य सव्ये पाणौ कृत्वाऽङ्गुष्ठेनोपकनिष्ठिकया च पूर्वार्धादुपहत्य पूर्वार्धे कांस्यस्य निलिम्पति— 'वसवस्त्वाऽग्निराजानो भक्षयन्तु' इति ॥**

तत्पात्रं कांस्यमकांस्यं वा कांस्यशब्देनोच्यते । तत्प्रतिगृह्य सव्ये पाणौ निधाय तस्मान्मधुपर्कं गृहीत्वाऽङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या पूर्वार्धादुपहत्य पूर्वार्धे कांस्याख्यस्य पात्रस्य निलिम्पेत् वसवस्त्वेत्येवमादिना मन्त्रेणैकवारम्, द्वौ वारावमन्त्रकम् । आभा.

**'पितरस्त्वा यमराजानो भक्षयन्तु' इति दक्षिणार्धाद्दक्षिणार्धे ॥**

पितरस्त्वेत्येवमादिना मन्त्रेण दक्षिणार्धादुपहत्य दक्षिणार्धे निलिम्पति । अमन्त्रकं द्विः । कांस्यस्येत्येतदनुवर्तत एव । आभा.

**'आदित्यास्त्वा वरुणराजानो भक्षयन्तु' इति पश्चार्धात्पश्चार्धे ॥**

आदित्यास्त्वेत्येवमादिना मन्त्रेण निलिम्पनमादानं च पूर्ववत् । पश्चार्ध इति विशेषः । आभा.

**'रुद्रास्त्वेन्द्रराजानो भक्षयन्तु' इत्युत्तरार्धादुत्तरार्धे ॥**

रुद्रास्त्वेत्येवमादिना मन्त्रेणोत्तरार्धे निलिम्पेत् पूर्ववत् । आभा.

**'विश्वे त्वा देवाः प्रजापतिराजानो भक्षयन्तु' इति मध्यादूर्ध्वम् ॥**

पात्रमध्यान्मधुपर्कमङ्गुष्ठोपकनिष्ठिकाभ्यामादाय 'विश्वे त्वा देवाः' इत्येवमादिना मन्त्रेणोर्ध्वं क्षिपेत्सकृन्मन्त्रेण द्विस्तूष्णीम् । आभा.

**सकृत्सकृन्मन्त्रेण द्विर्द्विस्तूष्णीम् ॥**

उक्तार्थमेतत् । आभा.

मधुपर्कप्राशनं शेषप्रतिपत्तिश्च

**महाव्याहृतिभिस्तिसृभिरेकैकया प्राश्य ॥**

तं मधुपर्कं महाव्याहृतिभिर्मन्त्रैस्तिसृभिर्भूर्भुवः स्वरिति प्रत्येकं प्राश्नीयात् । आभा.

**अनुपाय चतुर्थम् ॥**

महाव्याहृतिभिस्तिसृभिरित्यनुवर्तते । समस्ताभिस्तिसृभिर्महाव्याहृतिभिश्चतुर्थं पिबेत् । आभा.

**ब्राह्मणायोच्छिष्टदानम् ॥**

प्राशनत्रयस्य पश्चान्मधुपर्कशेषस्य कियतोऽपि पानं कृत्वा ततः मधुपर्कोच्छिष्टं ब्राह्मणाय प्रदद्यात् । लिङ्गमत्राविवक्षितम् । आभा.

**सर्वपानं वा ॥**

सर्वं वा मधुपर्कं पिबेत् । आभा.

**अपो वाऽभ्यवहरणम् ॥**

अप्सु वा प्रक्षिपेदिति शेषप्रतिपत्तिपक्षत्रयम् । आभा.

**शं नो देवीयाभिश्चतसृभिरुरोऽभिमृश्य ॥**

'शं नो देवीरभिष्टये' इत्यादिकाभिश्चतसृभिर्ऋग्भिरुरःस्थलमभिमृशेत् । आभा.

प्राणाभिमर्शनमुखविमार्जने

**समानं प्राणसंमर्शनम् ॥**

समानं तुल्यमित्यर्थः । ब्रह्मत्वविहितेन वा याजमानविहितेन वा प्राणसंमर्शनमविशेषात् । अत एव च समानमुरोभिमर्शनादीति नोक्तम् । साहचर्याद्याजमानेनैव नियमो मा भूत् । आभा.

**मुखविमार्जनं च ॥**

समानं चशब्दाद्याजमानविहितेन । अन्यथाऽसंभवात् । आभा.

गोनिवेदनम्, करणोत्सर्जनयोर्विकल्पः

**आ गोः प्रवदनात्तूष्णीम् ॥**

अनन्तरमर्घदात्रा गौरित्येव वक्तव्यम् । यद्यपि गोच्छागस्थालीपाकानां विकल्पितानामन्यतमस्योपादानं कृतं तथाऽपि गौर्गौरित्येवं वक्तव्यम् । अतः प्रागेतस्माद्गोप्रवदनात्तूष्णीमर्घ्यं आसीत । आभा.

**गौरित्युक्ते 'ओं कुरुत' ॥**

इयं गौस्त्वदर्थमस्माभिर्हन्तव्येत्यनेनाभिप्रायेण गौरिति (अर्घ्यः ?) इममर्थं बोधितः अर्घ्यः प्रतिब्रूयात् ओं कुरुतेति । यथाभिलषितं संपादयतेत्यर्थः । ओमित्येतस्य प्लुतिरभ्यादानार्थत्वात् । आभा.

**'माता रुद्राणाम्' इति जपित्वा 'ओमुत्सृजत, तृणान्यत्तु' इति वा ॥**

'माता रुद्राणां दुहिता वसूनाम्' इत्येवमादिकामृचं जपित्वा ततः 'ओमुत्सृजत, तृणान्यत्तु' एवं वा ब्रूयात् । आभा.

**कूर्चः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरिति वेदयेत ॥**

कूर्चादीनि यथाकालमर्घप्रदो वेदयेत । त्रिस्त्रिर्वेदयेतेति तन्त्रान्तरात् । आभा.

## लाट्यायनश्रौतसूत्रम्

मधुपर्कप्राशनविधिः शेषप्रतिपत्तिश्च

**[1]पृथक्सावित्रीपादैर्मधुपर्कस्य पिबेत् ॥**

पृथक् नानेत्यर्थः । सावित्रीपादैः सविता देवता यस्याः सेयं सावित्री, तस्याः पादैः पिबेत् । मधुना पृक्तं दधि पयः कृतान्नं वा मधुपर्कः । 'दधनि पयसि वाऽथ चाकृतान्ने(? वा कृतान्ने) मधु दध्यान्मधुपर्कमेतदाहुः । दधिमधुसलिलेषु सक्तवः पृथगेवेति विहितास्त्रयस्तु मन्थाः ॥' । तस्य मधुपर्कस्य पिबेत् । अस्येति (? मधुपर्कस्येति) अवयवलक्षणा षष्ठी । कथं पिबेत् ? यथा शेषः स्यादिति । ननु सावित्रीपादैरिति सिद्धे किं पृथग्ग्रहणम् ? इति । उच्यते— उक्तं सवितृदेवता सावित्रीति । एवं सर्वासां सवितृदेवतानां प्रसङ्गः प्राप्तः । अत आचार्यः पृथग्ग्रहणं करोति । यस्या ऋक्समाम्नाये पृथगाम्नानं तयेति । ननु यद्येवमर्थं न तस्मान्मुख्याम् 'अद्य नो वेद (? देव)' इत्येतां सावित्रीमुत्सृज्य गौणीं गृह्णीयात् ।

---

(१) लाश्रौ. १।२।१–६, १०–१३.

तत्र, इयमेव मुख्या । कथं मुख्येति चेत्, उच्यते— 'अथोपसीदत्यधीहि भोः सावित्रीं मे भवाननुब्रवीतु' इत्यस्मिन्नेतस्या एवानुवचनम् । तस्या उत्तरा ऋक्समाम्नायाभिव्यक्तेश्च 'सावित्री चतुर्थी भवति' इत्येतस्या एव श्रुतौ विधानम् । तथा शाखान्तरीयायामथावशिष्टायां श्रुतौ एतामेव प्रतिजानते । तस्मात् पृथग्ग्रहणं नानार्थत्वादेवमुक्तम् । अग्निभा.

**तत्रैतदाहरन्ति विष्टरं पादप्रक्षालनमर्घ्यमाचमनीयं मधुपर्कमिति ॥**

तत्र तस्मिन् मधुपर्कविधौ एतदानयन्ति । विष्टराद्याहरणकर्मकर्तृष्वनियमार्थं बहुवचनम् । दर्भासनं विष्टरः । पादप्रक्षालनार्थमुदकं पादप्रक्षालनम् । अर्घार्थमुदकमर्घ्यम् । आचमनार्थमुदकमाचमनीयम् । मधुपर्क उक्तलक्षणः । अथ तत्रग्रहणं किमर्थमिति चेत्, उच्यते— मधुमन्थोदमन्थयोः( ? मधुमन्थदधिमन्थोदमन्थेषु ) मधुपर्ककल्पार्थम् । ते च वक्ष्यन्ते । तत्र तत्रैतदाहरन्ति विष्टरादि । अग्निभा.

**तस्य पिबेत् ॥**

तस्य मधुपर्कस्य पिबेत् । अग्निभा.

**'इदमन्नमयं रस इमा गावः सह श्रिया' इति तु पुरस्तादेकैकस्य ॥**

कथम् ?— इदमन्नमिति । सावित्रीपादस्येति शेषः । तुशब्दो विशेषणार्थः । अग्निभा.

**'वाग्बहु बहु मे भूयात्' इति प्रथमस्योपरिष्टात्, 'प्राणो वै वाचो भूयान् बहुर्मे भूयो भूयात्' इति द्वितीयस्य, 'मनो वाव सर्वं सर्वं मे भूयात्' इति तृतीयस्य ॥**

सावित्रीपादस्योपरिष्टादिति वर्तते । प्रथमद्वितीयतृतीयग्रहणं चतुर्थनिषेधार्थं 'तूर्णीं चतुर्थम्' इति प्राप्ते । अग्निभा.

**सर्वे स्वाहाकारान्ताः ॥**

सर्वे भक्षमन्त्राः स्वाहाकारान्ताः । स्वाहाकारान्ता इति बहुवचनात्सिद्धे किमर्थं सर्वग्रहणमिति चेत्, उच्यते— मधुमन्थादीनामपि भक्षमन्त्राः स्वाहाकारान्ताः स्युरित्येवमर्थं सर्वग्रहणम् । अग्निभा.

**शेषं ब्राह्मणाय दद्यात् ॥**

उक्तं मधुपर्कस्येत्यवयवलक्षणा षष्ठी क्रियते । तत्र पानमुक्तम् । अथ शेषे का प्रतिपत्तिरिति । उच्यते— शेषं ब्राह्मणाय दद्यात्, पुत्रादेः । अग्निभा.

**तदभावेऽद्भिः संप्रोक्ष्याब्राह्मणाय ॥**

शूद्रवर्जम् । उच्छिष्टयोग्यपुत्रशिष्याभावेऽद्भिः संप्रोक्ष्य क्षत्रियवैश्ययोः । अग्निभा.

गोः करणोत्सर्जनयोर्विकल्पः

**'कुरुत' इति गवि प्रोक्तायां ब्रूयात् ॥**

उक्तम् 'आचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात्' । एवं गवि प्रोक्तायां कुरुतेति ब्रूयात् । अग्निभा.

**'उत्सृजत गाम्, तृणानि गौरत्तु' इति वा ॥**

कुरुतेति ब्रूयादेवं वा । अग्निभा.

## बौधायनगृह्यसूत्रम्

ऋत्विगुपवेशनम्

**[1]आवेद्यार्घ्यं कुर्यात् ॥**

**मध्येऽगारस्योदीचीनप्रतिषेवणा एरका उपस्तृणाति ॥**

**तास्वहतानि बहुगुणान्युत्तरदशानि वासांस्यास्तीर्य तेष्वृत्विजः प्राङ्मुखा उपविशन्ति ॥**

संभारसंभरणम्

**उत्तरपूर्वे देशेऽगारस्य प्राक्कूलान् दर्भान् संस्तीर्य तेष्वर्घ्यद्रव्याणि संसादयति ॥**

**यावन्त ऋत्विजस्तावन्ति कांस्यानि पात्राणि सापिधानानि तावतः कूर्चान् ॥**

**द्वावन्यौ परिग्रहणीयौ कूर्चौ ॥**

**दधि मधु घृतमापः पयो वस्त्रयुगानि कुण्डलयुगानि ॥**

**यस्यै गोः पयश्चमसः स्रगलङ्करणीयं चेति ॥**

(१) बौगृ. १।२।१–४४.

चतुर्विधो मधुपर्कः

पवित्रे कृत्वा तूष्णीं संस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा प्रोक्ष्य कूर्चे कांस्यं निधाय तिरःपवित्रं मध्वानयति ॥

दधि पयो वा द्वितीयं स द्विवृत् ॥

घृतं तृतीयं स त्रिवृत् ॥

यद्द्वितीयं तच्चतुर्थं स चतुर्वृत् ॥

आपः पञ्चमीः स पाङ्क्तः ॥

वर्षीयसा तेजोमयेनापिधाय नानापुरुषा अर्घ्यद्रव्याण्याददते अन्वगनुसंव्रजताः ॥

कूर्चस्य निवेदनं प्रतिग्रहणं च

'कूर्चः' इति कूर्चं प्राह ॥

तत् 'सुकूर्चः' इतीतरः प्रतिगृह्णाति ॥

तं प्रदक्षिणं पर्यस्योदगावृत्त उपविशति ॥

पुरस्ताद्वैनं प्रत्यञ्चमुपोहते– 'राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम्' इति ॥

पाद्यस्य निवेदनं प्रतिग्रहश्च

अथास्मा उदपात्रमादाय कूर्चाभ्यां परिगृह्य पाद्या आप इति प्राह ॥

ता अभिमन्त्रयते– 'आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे । अस्मिन्कुले ब्रह्मवर्चस्यसानि' इति ॥

दक्षिणं पादं पूर्वं ब्राह्मणाय प्रसारयति । सव्यं शूद्राय ॥

स्त्री प्रक्षालयति, पुमानभिषिञ्चति । विपरीतमित्येके ॥

नियमात्पत्नीयजमानौ जङ्घे धावयतः ॥

अवनेक्तुः पाणी संमृशति– 'मयि महो मयि भगो मयि भर्गो मयि यशः' इति ॥

अथाप उपस्पृश्य 'मयीन्द्रियं वीर्यम्' इत्युरः प्रत्यात्मानं प्रत्यभिमृशते ॥

अर्घ्यस्य निवेदनं प्रतिग्रहश्च

अपो व्रीहिभिर्यवैर्वा समुदायुत्य तथैव कूर्चाभ्यां परिगृह्यार्हणीया आप इति प्राह ॥

ता अभिमन्त्रयते– 'आ म आगाद्वर्चसा यशसा संसृज पयसा तेजसा च । तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम् ॥' इति ॥

एकदेशमञ्जलावानीयमानमनुमन्त्रयते – 'विराजोऽसि विराजो दोहमशीय । मम पद्याय विराजा' इति ॥

अतिशिष्टाः पराचीर्निनीयमाना अनुमन्त्रयते –'समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपि गच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः ॥' इति ॥

उपस्तरणाचमने

अथ तथैव कूर्चाभ्यां परिगृह्योपस्तरणीया आप इति प्राह ॥

ताः पिबति– 'अमृतोपस्तरणमसि' इति ॥

त्रिराचामेत्, त्रिः परिमृजेत् । द्विरित्येके ॥

मधुपर्कस्य निवेदन–प्रतिग्रह–भक्षणानि

आचान्तायापावृत्ताय तथैव कूर्चाभ्यां परिगृह्यार्घ्य इति प्राह मधुपर्क इति वा ॥

मधुपर्कं प्रोक्तमनुमन्त्रयते– 'त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि । तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम् ॥' इति ॥

तमुभाभ्यां हस्ताभ्यां प्रतिगृह्णाति– 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि' इति ॥

तस्मिंश्चित्(? श्चेत्) किंचिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्येमां दिशं निरस्यति– 'नेष्टावृद्धिं* कृन्तामि या ते घोरा

* 'नेष्टाविद्धिम्' 'नेष्टा विद्धम्' इत्यपि पाठः समुपलभ्यते ।

तनूः । तया तमाविश योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥' इति ॥

अथाप उपस्पृश्य सर्वाभिरङ्गुलीभिः समुदायुत्य प्राश्नाति– 'यन्मधुनो मधव्यं परममन्नाद्यं वीर्यम् । तेनाहं मधुनो मधव्येन परमेणान्नाद्येन वीर्येण परमोऽन्नादो मधव्योऽसानि ॥' इति ॥

त्रिः प्राश्य त्रिरनुपिबेच्छेषं च कुर्यात् ॥

शेषप्रतिपत्तिः

य आत्मनः श्रेयांसमिच्छेत्तस्मै शेषं दद्यादिति॥

अपिधानाचमने

आचान्तायापावृत्ताय तथैव कूर्चाभ्यां परिगृह्यापिधानीया आप इति प्राह ॥

ताः पिबति– 'अमृतापिधानमसि' इति ॥

त्रिराचामेत्, त्रिः परिमृजेत् । द्विरित्येके ॥

गोर्निवेदनं प्रतिग्रहश्च, करणोत्सर्जनयोर्विकल्पः

आचान्तायापावृत्ताय गौरिति गां प्राह ॥

तामनुमन्त्रयते– 'गौरस्यपहतपाप्माऽप पाप्मानं नुद मम चामुष्य च' इत्युपवेत्तुर्नाम गृह्णाति ॥

[१]नाना महर्त्विग्भ्यो गाः प्राह ॥

[२]एकां होतृकेभ्यः ॥

[३]सर्वेभ्यो वैकामविभवत्वात् ॥

[४]यः प्राह तस्मा उपाकरोत्येकदेशं वपायै जुहोति– 'अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः ॥' इति ॥

एकदेशमुपहरति, तत्प्राश्नाति– 'अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । अरिष्टमस्माकं कृणोत्वसौ ब्राह्मणो ब्राह्मणेषु ॥' इति ॥

(१) बौगृ. १।२।४५ ; संर. ३८४.

(२) बौगृ. १।२।४६ ; संर. ३८४ होतृ (होत्र).

(३) बौगृ. १।२।४७ ; संर. ३८४ वैकामविभवत्वात् (वैकां विभवात्). (४) बौगृ. १।२।४८–५०.

अथ यदुत्स्रक्ष्यन् भवति तामनुमन्त्रयते 'गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । पिबतूदकं तृणान्यत्तु । ओमुत्सृजत ॥' इति ॥

उत्सर्जनपक्षे मांसान्तरं तत्प्रतिनिधिश्च

[१]तस्यामुत्सृष्टायां मेषमजं वाऽऽलभते ॥

आरण्येन वा मांसेन ॥

न त्वेवामांसोऽर्घ्यः स्यात् ॥

[२]अशक्तौ पिष्टान्नं संसिध्येत् ॥

अन्ननिवेदनं भोजनं च

[३]सिद्धे 'भूतम्' इति प्राह ॥

तत् 'सुभूतम्' इतीतरः प्रत्याह ॥

तदभिमन्त्रयते– 'भूतं सुभूतं सा विराट् तन्मा क्षायि तन्मेऽशीय तन्म ऊर्जं धा ओं कल्पयत' इति ॥

चतुरो नानागोत्रान् ब्राह्मणान् भोजयतेत्येव ब्रूयात् ॥

[४]तेषु भुक्तवत्स्वन्नमस्मा उपहरति ॥

[५]तत्प्राश्नाति– 'विराडसि विराडन्नं विराड् विराजो मयि धेहि' इति ॥

वस्त्रादिदानम्

[६]भुक्तवद्भ्यो वस्त्रयुगानि कुण्डलयुगानि यस्यै गोः पयश्चमसः स्रगलङ्करणीयमिति च दद्यात् । एकधनं पष्ठौहीं दम्यावित्येके ॥

(१) बौगृ. १।२।५१–५३ ; संर. ३८४.

(२) बौगृ. १।२।५४ ; संर. ३८४ पिष्टान्नं (माषान्नं) (संसिध्येत्०).

(३) बौगृ. १।२।५५–५८.

(४) बौगृ. १।२।५९ ; बाल. १।१५६ पृ. ४१६ (तेषु भुक्तवत्सु०).

(५) बौगृ. १।२।६० ; बाल. १।१५६ पृ. ४१६.

(६) बौगृ. १।२।६१–६२.

प्राङ्मधुपर्कादलङ्करणमेके समामनन्ति ॥

मधुपर्कफलम्

[1]महयेदृत्विजमाचार्यं च । आत्मानं वा एष महयति यः स्वमृत्विजमाचार्यं च महयति । एवमेवंव्रता वा आत्यन्तिकाः स्युः । पतितोऽननूचान इति निमित्तानि ॥

[2]वरणेऽग्न्याधेयप्रभृतिषु चैषामृत्विजं( ? जां ) स्मरेत् ॥

अर्घ्यगणना

[3]तथैते अर्घ्या ऋत्विक् श्वशुरः पितृव्यो मातुल आचार्यो राजा वा स्नातकः प्रियो वरोऽतिथिरिति ॥

अर्हणपुनःकरणावधिः

[4]संवत्सरपर्यागतेभ्य एतेभ्य एवं कुर्याद्विवाहे वराय ॥

[5]अथर्त्विग्भ्यः कर्मणि कर्मणि ददाति ॥

अर्घ्याः अर्घ्यार्हाः( ? घर्हाः ) मधुपर्कपूजार्हा इति यावत् । विवाह्यस्य तु केवलं मधुपर्क एव, न तु गौरधिका । संर. ३८३–३८४

## बौधायनगृह्यपरिभाषासूत्रम्

आचार्यकर्तृकस्य स्नातकमधुपर्कार्हणस्य प्रयोगः

[6]अथाप उपस्पृश्य हृदयमभिमृशति– 'मयीन्द्रियं वीर्यम्' इति ॥

अपो व्रीहिभिर्यवैर्वा समुदायुत्य शिष्याय प्रयच्छति ॥

(१) बौगृ. १।२।६३ ; स्वमृत्विज (समृत्विज) संर. ३८४ (एवमेवंव्रता... निमित्तानि॰).

(२) बौगृ. १।२।६४.

(३) बौगृ. १।२।६५ ; संर. ३८३ ( अथैतेऽर्घ्या ऋत्विक् श्वशुरपितृव्यमातुलाचार्या राजा स्नातकः प्रियागतो ऽतिथिरिति).

(४) बौगृ. १।२।६६ ; संर. ३८३ संवत्सर (संवत्सरं) एवं (एव).

(५) बौगृ. १।२।६७ ; संर. ३८३.

(६) बौगृप. १।१४।७–२२.

* तत्प्रतिगृह्णाति– 'आ म आगाद्वर्चसा यशसा' इति ॥

ब्राह्मणः– 'आ म आगाद्वर्चसा यशसा संसृज प्रियः पशूनामधिपतिः प्रजानाम्' इति तदुपस्पृश्य वदेत् ॥

प्राक्सिक्तं तज्जलं पुरस्तात्सिञ्चति ॥

अथ दधिमध्वाज्योदकमिश्रं वा दधिमध्वाज्योदकक्षीरमिश्रं वा 'अर्घ्यम्' इति निवेदयेत् ॥

शिष्योऽर्घ्यमभिमन्त्रयते– 'स माऽवतु स माऽवन्तु( ? मा पातु ) स मा जुषताम्' इति ॥

अथ द्वाभ्यां हस्ताभ्यां प्रतिगृह्णाति– 'आ म आगाद्वर्चसा' इति ॥

तस्मिंश्चित्( ? श्चेत् ) किंचिदापतितं स्यात्तदङ्गुष्ठेन च महानाम्न्या च संगृह्येमां दिशं निरस्यति– 'नेष्टा विद्धिम्' इति ॥

अथाप उपस्पृश्य सर्वाभिरङ्गुलीभिः समुदायुत्य प्राश्नाति– 'इदं ते बलं हरामि' इति प्रथमम् । 'श्रेष्ठं माऽधिपतिं कुरु' इति द्वितीयम् । 'सोमोऽसि सोमपं मा कुरु' इति तृतीयम् । 'अन्नमस्यन्नं मा कुरु' इति चतुर्थम् ॥

एवं चतुष्कृत्वः प्राश्य त्रिरनुपिबेन्न सर्वं न तृप्तिं गच्छेत् ॥

यमात्मनः श्रेयांसमिच्छेत्तस्मै शेषं दद्यादिति ॥

अथ कर्णे दाम्ना बद्धां गामनुमन्त्रयते– 'जहि मे पाप्मानमुपवेत्तुः' इति ॥

अथ गामुत्सृजेत्– 'गौर्धेनुर्भव्या' इति ॥

* ग्रन्थोऽयं व्याकुलः । श्रौतसूत्रानुसारेण "तत्प्रतिगृह्णाति– 'आ म आगाद्वर्चसा यशसा सꣳसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्' इति ब्राह्मणः । 'आ म आगाद्वर्चसा... .. प्रियं पशूनां कुर्वधिपतिं प्रजानाम्' इति राजन्यः । तदुपस्पृश्य वदेत्– 'प्राक्सेक्तवै' इति ।" इति भवितुं युक्तः ।

**अथौदनमाहृतं प्राश्नाति– 'ब्रह्मन् त्वाऽश्नामि' इति ॥**

**अथोदकमिश्रं सक्तुमाहृतमश्नाति– 'ब्रह्मन् त्वाऽश्नामि' इति ॥**

अर्घ्यगणना

**[१]आचार्य ऋत्विक् पिता मातुलः श्वशुरो वेदविद्ब्राह्मणः क्षत्रियोऽभिषिक्तः सहस्रप्रदो वैश्यो राजपुरोहितश्चेत्यर्घ्यार्हा भवन्ति ॥**

## आश्वलायनगृह्यसूत्रम्

अर्घ्यगणना

**[२]ऋत्विजो वृत्वा मधुपर्कमाहरेत् ॥**

( १ ) आहरतिर्दानकर्मा । दद्यादित्येतदुक्तं भवति । † देभा.

( २ ) दद्यात् । वृत्वेति वचनाद्वरणानन्तरमेव ऋत्विजां मधुपर्कः, न प्रत्यहम् । * अना.

**[३]स्नातकायोपस्थिताय ॥**

( १ ) स्नातकायोपस्थिताय गृहमभ्यागताय मधुपर्को देयः । देभा.

( २ ) उपस्थिताय कृतसमावर्तनाय तस्मिन्नहनि गृहानभ्यागताय विवाहार्थिने च । $ गानावृ.

( ३ ) स्नातकः कृतसमावर्तनः । तस्मै उपस्थिताय गुरुकुलादागताय मधुपर्कमाहरेत् । तत्र मनुः– 'तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः । स्रग्विणं तल्प आसीनमर्हयेत् प्रथमं गवा ॥' ( मस्मृ. ३।३ ) इति । अना.

**[१]राज्ञे च ॥**

( १ ) राज्ञे च गृहमभ्यागताय देयः । § देभा.

( २ ) मधुपर्कमाहरेदित्येव । अविशेषवचनात् प्रत्यागमनं राज्ञे मधुपर्कः । अना.

**[२]आचार्यश्वशुरपितृव्यमातुलानां च ॥**

( १ ) एतेषां च मधुपर्को देयः । अथ पूर्वयोः पृथगुपदेशः कस्मात् क्रियते इति । समासेनैव पाठः कर्तव्यः यथा उत्तरेषाम् । उच्यते– अतुल्यत्वात्पृथगुपदेशः । कथमतुल्यत्वमिति । स्नातकाय तदहरेव । कथं गम्यते ? उपस्थितवचनात् 'यत्रैनं पूजयिष्यन्तो भवन्ति' इति वचनाच्च मधुपर्कोऽस्य दातव्य इत्येतद्वेदितं भवति । राज्ञे पुनरहरहरुपस्थिताय देयः । आचार्यादीनां प्रतिसंवत्सरोषितानां देय इति । कथं पुनरेतद्गम्यते यथैते विशेषा भवन्तीति । स्नातकाय तावद्गम्यते यथा तस्मिन्नहनि आगताय देय इति । तथा आचार्यादीनां प्रतिसंवत्सरं च, शास्त्रान्तरदर्शनात् । § देभा.

( २ ) अत्र चोपस्थितग्रहणात्स्नातकादयो गृहमागता एवार्हणीया इति गम्यते । अप. १।११० पृ. ७७

( ३ ) चतुर्थ्यर्थे षष्ठी । एतेभ्यः प्रतिसंवत्सरमुपतिष्ठद्भ्यो देयः । यथाऽऽहाऽऽपस्तम्बः– 'आचार्याय-

---

† गानावृ. तात्पर्यं देभावत् ।

* प्रपा. अनागतम् ।

$ प्रपा. गानावृवत् ।

( १ ) बौगृप. २।५।१६.

( २ ) आगृ. १।२४।१ ; मिता. १।११० ; अप. १।५१ पृ. ७७ स्मरणम् : १।११० शौनकः ; प्रपा. ३४९ ; धप्र. ४६ ; संप्र. ८२१ ; संम. ७२ ; श्राम. ३ ; विपा. ३८ ( भागः २ ) ; संग. १५५.

( ३ ) आगृ. १।२४।२ ; मिता. १।११० ; अप. १।५१ पृ. ७७ स्मरणम् : १।११० शौनकः ; प्रपा. ३४९ ; धप्र. ४६ ; संप्र. ८२१ ; संम. ७२ ; विपा. ३८ ( भागः २ ) ; संग. १५५.

§ गानावृ., प्रपा. देभागतम् ।

( १ ) आगृ. १।२४।३ ; मिता. १।११० ; अप. १।५१ पृ. ७७ स्मरणम् : १।११० शौनकः ; प्रपा. ३४९ ; धप्र. ४६ ; संप्र. ८२१ ; संग. १५५.

( २ ) आगृ. १।२४।४ ; मिता. १।११० आचार्यश्व ( आचार्याय च श्व ) ; अप. १।११० शौनकः ; प्रपा. ३४९ मितावत् ; धप्र. ४६ ; संप्र. ८२१ आचार्यश्व ( आचार्याय श्व ) ; संग. १५५ संप्रवत्.

र्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्य एतत् कार्यम्, सकृत्प्रवक्त्रे चित्राय ' इति । अना.

मधुपर्कस्वरूपम्

[1]**दधनि मध्वानीय ॥**

तत्राप्रतीतपदार्थत्वात् मधुपर्को लोके (? लोके मधुपर्कं) स्वयमेव विदधाति— दधनीति । दध्नि मधु आनयति । तत्राऽऽसेचनकर्मा आनयतिः । निषिञ्चतीत्येतदुक्तं भवति । * देभा.

[2]**सर्पिर्वा मध्वलाभे ॥**

(१) सर्पिर्वा निषिञ्चति । मधु वेति सिद्धम् । मध्वलाभवचनमपार्थकम् । अलाभवचनं क्रियते कथमलाभे वाचनिकः प्रतिनिधिः स्यादिति । इतरथा हि सामान्यात् प्रतिनिधिरिति कृत्वाऽन्यत् किंचित्प्रतिनिधीयते । तन्निवृत्त्यर्थं वचनमिदमारभ्यते । देभा.

(२) इदं वचनं मध्वलाभे अयमेव प्रतिनिधिर्भवति, नान्यस्तैलादिरित्येवमर्थम् । § गानावृ.

विष्टरादिनिवेदनम्

[3]**विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते ॥**

(१) तत्र मधुपर्कस्य दानं वक्तव्यम्, प्रतिग्रहश्च । तत्र दानं प्रथमं विधीयते । कस्मात् ? अल्पत्वात्तस्य । तत्र विष्टर इत्यासनमुच्यते । पाद्यमिति । पादार्थमुदकं पाद्यमिति । तथाऽर्घार्थमुदकमर्घ्यम् । आचमनार्थमुदकमाचमनीयमिति । मधुपर्क उक्तः प्राक् । गौरिति पशुद्रव्यं किंचिन्निर्दिश्यते । एतेषां विष्टरादीनां द्रव्याणामेकैकस्य त्रिस्त्रिर्निवेदनं भवति । तत्र एतेषामिति न वक्तव्यम् । कस्मात् ? अधिकृतत्वात् । उच्यते— नियमार्थमिदमारभ्यते । इतरथा विष्टरादीनां निवेदनं स्यात् । तत्र भोजनस्यापि निवेदनं प्राप्नोति । तन्निवृत्त्यर्थो नियम उच्यते । अस्ति भोजनमिति ? अस्तीति ब्रूमः । उत्तरत्र वक्ष्यामः । देभा.

(२) ऋत्विजां मधुपर्कदाने द्वे गती संभवतः पदार्थानुसमयः काण्डानुसमय इति । तत्र पदार्थानुसमयो नाम सर्वेषां वरणक्रमेण विष्टरं दत्त्वा ततः पाद्यं ततोऽर्घ्यमिति । काण्डानुसमयो नाम एकस्यैव विष्टरादिगोनिवेदनान्तं समाप्य ततोऽन्यस्य सर्वं ततोऽन्यस्येति । § गानावृ.

(३) गौः स्त्रीगवी, आपस्तम्बगृह्ये दर्शनात् 'गौरिति गां प्राह, तां स उत्तरेण यजुषा ' इति, ' गौर्धेनुभव्या ' इति च मन्त्रे स्त्रीलिङ्गदर्शनात् । एतेषां द्रव्याणां मध्ये एकैकं द्रव्यं मधुपर्कार्थं त्रिस्त्रिर्निवेदयन्ते । के ? दातारस्तत्परिचारका वा । तेषां च निवेदनं तत्रावसरे क्रमेण । एतेषामिति वचनमेवंजातीयानां गन्धादीनां मा भूदिति । * अना.

उपवेशनम्

[1]**'अहं वर्ष्म सजातानां विद्युतामिव सूर्यः । इदं तमधितिष्ठामि यो मा कश्चाभिदासति ॥ ' इत्युदगग्रे विष्टर उपविशेत् । आक्रम्य वा ॥**

(१) अथ ग्रहीतुः कर्माऽऽह—अहमिति । ' अहं वर्ष्म सजातानाम् ' इत्यनेन मन्त्रेण उदगग्रे विष्टरे उपविशति । आक्रमणं वा पादाभ्यां करोति । तेनाऽऽक्रमणस्य च विकल्पः । ¶ देभा.

(२) एवं दातुः कर्तव्यमुक्तम्, मधुपर्क्यस्य कर्तव्यमाह— अहमिति । विष्टरो विष्टरो विष्टर इति त्रिरुक्त्वा उदगग्रं विष्टरं निदधाति दाता । स च दर्भमयं कूर्चम् ।

---

* गानावृ., अना., प्रपा. देभागतम् ।

§ प्रपा. गानावृवत् ।

(१) आगृ. १।२४।५ ; प्रपा. ३४९ दधनि (एकस्मिन् पात्रे दधनि); संप्र. ८२२.

(२) आगृ. १।२४।६ ; प्रपा. ३४९ ; संप्र. ८२२.

(३) आगृ. १।२४।७ ; प्रपा. ३४९ ; संप्र. ८२१.

§ शेषं देभावत्, प्रपा. गानावृवत् ।

* शेषं देभागतम् ।

¶ गानावृ. देभागतम् । प्रपा. देभावत् ।

(१) आगृ. १।२४।८ ; प्रपा. ३४९–३५० उदगग्रे (उदग्रे).

तस्मिन्नुपविशेत् प्रतिग्रहीता अहं वर्ष्मेति मन्त्रेण ।

अना.

पादप्रक्षालनम्

[1]**पादौ प्रक्षालापयीत । दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् ॥**

(१) पादयोः प्रक्षालनं विधीयते । कथं पुनस्तत्कर्तव्यमिति ? तत्राऽऽह– दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् । यदा ब्राह्मणः प्रक्षालयिता तदा दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् ।

* देभा.

(२) पश्चात्सव्यम् । कुतः ? अग्रेवचनात् ।

गानावृ.

(३) अथवा नोपविशेत् । पादाभ्यां विष्टरमाक्रम्य पादयोः प्रक्षालनं कारयेत् । प्रक्षालापयीत इति रूपसिद्धिश्चिन्त्या ।

अना.

(४) अग्रे प्रथमम् । एवं च क्षत्रियवैश्ययोरनियमः । ब्राह्मणग्रहणं द्विजोपलक्षणमिति केचित् ।

संम. ७२

[2]**सव्यं शूद्राय ॥**

(१) यदा शूद्रस्तदा सव्यमग्रे प्रयच्छति । तत्र संशयः– किं प्रक्षालयिता नियम्यते ? आहोस्वित्क्रमनियमः ? इति । किंचातः ? यदि तावत् प्रक्षालयितुर्नियमः, क्षत्रियवैश्ययोरप्रसङ्गः । अथ पुनः पादयोः क्रमो नियम्यते ब्राह्मणशूद्रयोः (प्रवृत्तिः ?), तेन क्षत्रियवैश्ययोः प्रवृत्तिरनियमश्च । किं पुनरत्र नियमः स्यात् ? उच्यते– क्रमो नियम्यते, अत्र( ? अग्रे–) वचनात् । अग्रे प्रयच्छेदित्युक्ते स नियम्यते यदा पश्चात्सव्य इति पादयोः क्रम इत्येतत् सिद्धं भवति ।

देभा.

(२) अग्रे प्रयच्छेत् । पश्चाद्दक्षिणम् । क्षत्रियवैश्यौ यदा प्रक्षालयितारौ तदा सव्यं वा पूर्वं दक्षिणं वा, नास्ति नियमः ।

* गानावृ.

अर्घ्यग्रहणम्

[1]**प्रक्षालितपादोऽर्घ्यमञ्जलिना प्रतिगृह्य ॥**

(१) पादौ प्रक्षाल्य अर्घ्यमञ्जलिना प्रतिगृह्णाति ।

देभा.

(२) प्रक्षालितपादग्रहणमानन्तर्यार्थम् । प्रक्षालनानन्तरमर्घ्यमेव गृह्णीयादिति । गन्धमाल्यादिसंयुक्तमुदकमर्घ्यमित्युच्यते ।

$ गानावृ.

(३) उपदेशक्रमादेव सिद्धे प्रक्षालितपादग्रहणमानन्तर्यार्थम् । तेन गन्धमाल्यादीनामर्हणाद्रव्याणां पश्चात्प्रवृत्तिः । अर्घ्यमञ्जलिना प्रतिगृह्य एतावानर्घ्योपयोगः । केचिन्मुखप्रक्षालनमिच्छन्ति ।

अना.

उपस्तरणम्

**अथाऽऽचमनीयेनान्वाचामति– 'अमृतोपस्तरणमसि' इति ॥**

(१) अथाऽऽचमनीयेनाऽऽचामति 'अमृतोपस्तरणमसि' इत्यनेन मन्त्रेण । तत्र प्रक्षालितपादग्रहणं न कर्तव्यम् । कल्पितक्रमादेव सिद्धम् । तत्क्रियतेऽनन्तरार्थम् । कथं प्रक्षालनादनन्तरमर्घ्यप्रतिग्रहमेव कुर्यात्, नान्यत् । किं पुनरन्यत् प्राप्नोति ? अन्यान्यप्यर्हणीयानि यानि द्रव्याणि गन्धमाल्यादीनि प्राप्नुवन्ति, तन्निवृत्त्यर्थमारभ्यते । अथशब्दश्च तदर्थ एव । कथमर्घ्यप्रतिग्रहादनन्तरमाचमनीयं स्यात् । तस्मादुभयत्रापि गन्धमाल्यादीनां प्रतिषेधः । तानि उपरते कर्मणि दातव्यानि । आचमनीयेनाऽऽचामतीति । आचमनादनन्तरमेवेदमिति । तत्रान्यच्छौचार्थमाचमनं नेच्छन्ति । कस्मात् ? निदर्शनात् 'सोमे च प्राणाहुतिषु च मधुपर्के च नोच्छिष्टा भवन्ति' इति । इह च दर्शनाद्यत्र यत्राऽऽचमनमभिप्रेतं तत्र तत्र वि-

---

* प्रपा. देभागतम् ।

(१) आगृ. १।२४।९ ; प्रपा. ३५० ; संप्र. ८२१ (=) (दक्षिणमग्रे ब्राह्मणायायच्छत्) एतावदेव ; संम. ७२ (पादौ प्रक्षालापयीत०) ; कुभ. ११३५ संमवत्.

(२) आगृ. १।२४।१० ; प्रपा. ३५० ; संप्र. ८२१ (=) ; संम. ७२ ; कुभ. ११३५.

* अना., प्रपा. गानावृगतम् ।

$ प्रपा. गानावृवत् ।

(१) आगृ. १।२४।११–१२ ; प्रपा. ३५०.

दधाति– आचान्तोदकायेति । तदेतन्नोपपद्यते । कस्मात् ? सोमे नोच्छिष्टविधानात् मन्यामहे यत्राऽऽचमनं न प्रतिषेधति तत्र शौचार्थमाचमनं प्रसज्येत इति । ननु चैवं सत्याचान्तोदकस्य( ? काय ) वचनमपार्थकम् । नेत्युच्यते । अन्यार्थं च तत् । ¶ देभा.

( २ ) अथशब्दात् गन्धादीनामुत्कर्षः । आचमनीयेनाऽऽचामति आचमनीयमुदकं सकृत् पिबति 'अमृतोपस्तरणमसि' इति मन्त्रेण । तत्रान्यच्छौचार्थं विधिवदाचमनं प्रवर्तते । नेत्यन्ये, यथा भोजनोपक्रमे न भवति एवमन्यत्रापीति । ज्ञापकं चात्र वक्ष्यामः । अना.

मधुपर्कसंस्कारः

**[१]'मधुपर्कमाह्रियमाणमीक्षेत– 'मित्रस्य त्वा चक्षुषा प्रतीक्षे' इति ॥**

(१) मधुपर्कमाह्रियमाणमीक्षेत 'मित्रस्य त्वा' इत्यनेन मन्त्रेण । आह्रियमाणम् आनीयमानमित्यर्थः । ईक्षेत पश्येत् इत्यर्थः । ¶ देभा.

( २ ) मधुपर्कमाहरति दाता । तमाह्रियमाणमीक्षते प्रतिग्रहीता 'मित्रस्य त्वा' इत्यनेन । अना.

**[२]'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि' इति तदञ्जलिना प्रतिगृह्य 'मधु वाता ऋतायते' इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य 'वसवस्त्वा गायत्रेण च्छन्दसा भक्षयन्तु' इति पुरस्तान्निमार्ष्टि ॥**

'देवस्य त्वा' इत्यनेन मन्त्रेणाञ्जलिना प्रतिगृह्णाति । मधुपर्कमाहृतमानीतं प्रतिगृह्य 'मधु वाताः' इत्यनेन तृचेन अवेक्षति । अवलोकयतीत्यर्थः । अवलोक्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोडयति । तत्रानामिकायां विवदन्ति । केचिदुपकनिष्ठिकां मन्यन्ते, केचिन्मध्यमाम् । ननु चोभयोरपि नामास्तीति । तत्राप्येके मध्यमामनामिकां मन्यन्ते । देशेनास्या व्यपदेशः । तेन सा अनामिकेति । अन्ये पुनरुपकनिष्ठिकां व्यपदिशन्तीति । तस्मात्सा अनामिकेति । आगमस्य विशेषः । आलोड्य 'वसवस्त्वा ०' इत्यनेन मन्त्रेण पुरस्तान्निमार्ष्टि । लेपमपनयतीत्यर्थः । ‡ देभा.

**'रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा भक्षयन्तु' इति दक्षिणतः । 'आदित्यास्त्वा जागतेन च्छन्दसा भक्षयन्तु' इति पश्चात् । 'विश्वे त्वा देवा आनुष्टुभेन च्छन्दसा भक्षयन्तु' इत्युत्तरतः । 'भूतेभ्यस्त्वा' इति मध्यात्त्रिरुद्गृह्य ॥**

एवमुत्तरैः प्रतिदिशं लेपमपनयति इति । 'भूतेभ्यस्त्वा' इति मध्यात् त्रिरुद्गृह्णाति । ऊर्ध्वमुत्क्षिपतीत्यर्थः । ‡ देभा.

मधुपर्कप्राशनं शेषप्रतिप्रतिश्च

**'विराजो दोहोऽसि' इति प्रथमं प्राश्नीयात् । 'विराजो दोहमशीय' इति द्वितीयम् । 'मयि दोहः पद्यायै विराजः' इति तृतीयम् ॥**

( १ ) ततो भूमौ निधाय पात्रं 'विराजो दोहोऽसि' इति प्रथमं प्राश्नीयात् । प्रथमग्रहणमपार्थकम् । तस्मात् पूर्वमेव पक्षं दृष्ट्वा अन्यथा वर्णयन्ति– त्रिः उद्गृह्य प्रथममुद्ग्राहं प्राश्नीयादिति । अथ द्वितीयमुद्ग्राहं 'विराजो दोहमशीय' इति प्राश्नीयात् । एवमेके । एतस्मिन्नपि पक्षे तृतीयग्रहणमपार्थकम् । तस्मात् पूर्व एव पक्षः । मन्त्राश्च प्राशनं चोक्तम् । देभा.

(२) ततो भूमौ निधाय पात्रं विराज इति । संख्यावचनानि तु सर्वप्राशनपक्षे त्रिभिरेव मन्त्रैर्यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थानि । एवं

¶ गानावृ., प्रपा. देभागतम् ।

( १ ) आगृ. १।२४।१३ ; प्रपा. ३५० इति + ( मित्रस्य त्वा चक्षुषा समीक्षे मित्रस्य त्वा चक्षुषाऽनुवीक्ष इति ) अयं पाठभेदश्चिन्त्यः ।

( २ ) आगृ. १।२४।१४–१८ ; प्रपा. ३५०.

‡ गानावृ., अना., प्रपा. देभागतम् ।

भाष्यकारः । अन्ये त्वन्यथा व्याचख्युः । भूतेभ्यस्त्वेति मध्यात्त्रिरुद्गृह्य विराजो दोहोऽसीति प्रथममुद्ग्राहं प्राश्नीयात् । विराजो दोहमशीयेति द्वितीयमुद्ग्राहम् । मयि दोह इति तृतीयमुद्ग्राहम् । तृतीयवचनं सर्वप्राशनपक्षे तृतीयेन प्राशनेन यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थम् । पद्यायै विराज इत्यत्र विराज इति षष्ठी । कुतः ? पूर्वयोस्तथा दृष्टत्वात् । पद्यायै इत्यपि चतुर्थी षष्ठ्यर्थे । तेन तत्सामानाधिकरण्ये सत्यपि षष्ठ्येव युक्ता कल्पयितुम् । गानावृ.

( ३ ) उद्गृह्य विराजो दोहोऽसीति मन्त्रेण प्रथमं प्राश्नीयात् । प्रथमोपदेशादेव सिद्धे प्रथमवचनमाचार्यप्रवृत्तिकृतम् । एषा प्रवृत्तिराचार्यस्यैवंविधे विषये । तद्यथा 'आयुषे त्वा प्राश्नामीति प्रथमम्, अन्नाद्याय त्वेत्युत्तरम्' इति । मध्ये शौचार्थमाचमनं न भवति । स्मर्यते च— 'सोमे प्राणाहुतिषु मधुपर्के च नोच्छिष्टा भवन्ति' इति । * अना.

( ४ ) ततो भूमौ निधाय पात्रं 'विराजो दोहोऽसि' इति मन्त्रेण मधुपर्कैकदेशमादाय प्राश्य लौकिकेनोदकेनाऽऽचम्य । अत्र शुद्ध्यर्थमाचमनम् । पुनः पूर्ववत् गृहीत्वा 'विराजो दोहमशीय' इति मन्त्रेण प्राश्य पूर्ववदाचम्य पुनः पूर्ववद्गृहीत्वा 'मयि दोहः' इति तृतीयमुद्ग्राहं प्राशयेत् । * प्रपा. ३५१

**न सर्वम् ॥**

न सर्वं मधुपर्कं प्राश्नीयात् । § देभा.

**न तृप्तिं गच्छेत् ॥**

न च तृप्तिं गच्छेत् । § देभा.

**[1]ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेत् । अलाभेऽप्सु ॥**

( १ ) दद्यादित्यर्थः । ब्राह्मणालाभे अप्सु निषिञ्चेत् । देभा.

( २ ) ब्राह्मणाय उच्छिष्टम् उद्धृतादवशिष्टम् उदङ्मुखो मधुपर्कं प्रयच्छेत् । ब्राह्मणालाभे अप्सु निषिञ्चेत् । ‡ गानावृ.

**[1]सर्वं वा ॥**

( १ ) सर्वं वा प्राश्नीयात् । ¶ देभा.

( २ ) प्राश्नीयादित्येव । अलाभ इति च । ब्राह्मणस्यालाभे सर्वं वा प्राश्नीयात् । अना.

अपिधानम्

**अथाऽऽचमनीयेनान्वाचामति— 'अमृतापिधानमसि' इति ॥**

( १ ) अथ आचमनीयेनान्वाचामति 'अमृतापिधानमसि' इत्यनेन मन्त्रेण । देभा.

( २ ) यत्तत्पूर्वमाचमनीयं निवेदितं तेनान्वाचामति मन्त्रेण । $ गानावृ.

( ३ ) यत्तत्पूर्वमाचमनीयं निवेदितं तदेकदेशम् 'अमृतापिधानमसि' इति पीत्वा पुनः कर्माङ्गमाचमनं लौकिकेन जलेन । † प्रपा. ३५१

**'सत्यं यशः श्रीर्मयि श्रीः श्रयताम्' इति द्वितीयम् ॥**

( १ ) 'सत्यं यशः' इत्यनेन द्वितीयमन्वाचामति । * देभा.

( २ ) द्वितीयग्रहणमाचमनीयप्राप्त्यर्थम् । इतरथा मन्त्रस्योत्तरेण संबन्धः स्यात् । गानावृ.

---

* शेषं गानावृवत् ।

§ गानावृ., अना., प्रपा. देभागतम् ।

( १ ) आगृ. १।२४।१९ ; प्रपा. ३५० योदङ्ङु (योदग्गु).

‡ अना., प्रपा. गानावृगतम् ।

¶ गानावृ., प्रपा. देभागतम् ।

$ अना. गानावृवत् ।

† शेषं गानावृवत् ।

* अना. देभागतम् ।

( १ ) आगृ. १।२४।२०–२२ ; प्रपा. ३५०.

(३) पुनरपि तदेवाऽऽचमनीयमेकदेशतो गृहीत्वा 'सत्यं यशः' इति मन्त्रेण पीत्वा पुनः शुद्धयर्थमाचमनं कुर्यात्। प्रपा. ३५१

आचमनं गोनिवेदनं च

[१]**आचान्तोदकाय गां वेदयन्ते ॥**

(१) तत्राऽऽचान्तोदकवचनमपार्थकम्। कस्मात्? आचमनस्य प्राप्तत्वात्। उच्यते— नेदं शौचार्थमाचमनं चोद्यते। किमर्थं तर्हि? कर्माङ्गमाचमनं चोद्यते दर्शपूर्णमासवत्। अथोदकवचनमपार्थकम्। कस्मात्? आचमनं हि उदकेनैव भवति। उच्यते— उदकं क्रियते आचमनीयनिवृत्त्यर्थम्। गां वेदयन्ते। * देभा.

(२) अथ शौचार्थं विधिवदाचामति। तस्मै आचान्तोदकाय। एतदेव ज्ञापकं पूर्वत्र मध्ये शौचार्थं नाऽऽचमनमिति। उदकग्रहणेनाऽऽचमने उदकमेव प्राप्तं दर्शयति। तेन नालिकेराम्ब्वादिभिराचमनं न भवति। तस्मै गां वेदयन्ते गौर्गौर्गौरिति। अना.

(३) अथ गोलक्षणम्। तत्र हिरण्यकेशी '... गौर्धेनुभव्या' इति। अनेन 'आचान्तो ....' इत्याश्वलायनादिसूत्रस्थमपि गोपदं धेनुपरतया व्याख्यातम्, स्त्रीत्वस्य 'तस्याः' इत्युदाहृतसूत्रात् 'माता रुद्राणाम्' इत्यादिमन्त्रलिङ्गाच्च स्वत एव सिद्धत्वात्।

‡ संप्र. ८२३

करणपक्षे प्रतिवचनम्

[२]**'हतो मे पाप्मा पाप्मा मे हतः' इति जपित्वों कुरुतेति कारयिष्यन् ॥**

(१) 'हतो मे पाप्मा पाप्मा मे हतः' इति जपित्वा ओं कुरुतेति कारयिष्यन् मारयिष्यन् चेद्भवति। मारयिष्यन् यदि भवतीत्यर्थः। देभा.

(२) इमं मन्त्रं जपित्वा ओं कुरुतेति ब्रूयाद्यदि कारयिष्यन् मारयिष्यन् भवति। तदा च दाता आलभेत। तत्र देवताः प्रागुक्ताः। $ गानावृ.

(३) ब्रूयादिति शेषः। क्रियासामान्यवाचिना करोतिना वधो लक्ष्यते। यो वधं गोरनुजानाति स कारयिष्यन् भवति। सः 'हतो मे पाप्मा' इत्यादि जपित्वा ओं कुरुतेति ब्रूयात्। ओं हतेत्युक्तं भवति। अना.

उत्सर्जनपक्षे प्रतिवचनम्

[१]**'माता रुद्राणां दुहिता वसूनाम्' इति जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन् ॥**

'माता रुद्राणाम्' इति जपित्वा ओमुत्सृजत इति उत्स्रक्ष्यन् यदि भवति। इहाऽऽगत्य स्मृतम्। मयि दोहः पद्यायै विराज इति चतुर्थी षष्ठी वा इति। कुतः संशयः? तुल्यत्वात्। तत्र चतुर्थीमि(? र्थी इ)त्येके। कस्मात्? पूर्ववदेव चतुर्थीदर्शनात् पद्यायै इति। अन्ये पुनः षष्ठीं मन्यन्ते। कस्मात्? अपूर्वात् पयोश्च दर्शनात्(?)। कः पुनरत्र निर्णयः? षष्ठीति। येऽपि चतुर्थीमुपदिशन्ति ते षष्ठीमेव विपरिणमन्ति। तेनोभयथाऽपि शक्यते कल्पयितुम्। * देभा.

समांसभोजनम्

[२]**नामांसो मधुपर्को भवति ॥**

(१) तत्रोच्यते— मधुपर्के किं मांसं देयमिति। नेत्युच्यते। इदं मधुपर्कभोजनममांसं न भवतीत्ययमर्थः। तस्मादनेनाभ्युपायेन भोजनमनुयोजितं भवति नामांसो मधुपर्को भवति इति। ¶ देभा.

---

* गानावृ., प्रपा. देभागतम्।

‡ संग. संप्रानुवादः।

(१) आगृ. १।२४।२३; अप. १।१०९ गृह्यकृच्छौनकः; प्रपा. ३५०; संप्र. ८२३; संग. १६३.

(२) आगृ. १।२४।२४; अप. १।१०९ गृह्यकृच्छौनकः; प्रपा. ३५०.

$ प्रपा. गानावृवत्।

* गानावृ., अना., प्रपा. देभागतम्।

¶ अना. देभागतम्।

(१) आगृ. १।२४।२५; अप. १।१०९ गृह्यकृच्छौनकः; प्रपा. ३५०.

(२) आगृ. १।२४।२६; अप. १।१०९ गृह्यकृच्छौनकः; प्रपा. ३५०; संम. ७२; संकौ. २१६; बाल. १।१५६ पृ. ४१५, ४१८.

( २ ) मधुपर्काङ्गं भोजनममांसं न भवतीत्यर्थः। कुतः ? मांसस्य भोजनाङ्गत्वेन लोके प्रसिद्धत्वात्। अनेनाभ्युपायेन भोजनमप्यत्र विहितं भवति। पशुकरणपक्षे तन्मांसेन भोजनम्। उत्सर्जनपक्षे मांसान्तरेण।

‡ गानावृ.

( ३ ) अत्रैव प्रसङ्गान्मधुपर्कभोजनविचारः क्रियते। तत्र तत्प्रतिपादकवाक्यानि। तत्राऽऽदौ व्यासः— 'भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा। उपोषितः सुतां दद्यादर्चिताय द्विजाय तु ॥' इति। आश्वलायनः — 'नामांसो मधुपर्को भवति' इति। भरद्वाजः— 'अथास्मा अन्नं मांसेन घृतेन वोपहरति तत्प्राश्नाति' इति। तत्रैव परिशिष्टम् — 'समांसं मधुपर्काङ्गभोजनं तत्कलेः पुरा। कलावमांसं साज्यं तदभावे शार्करादिकम् ॥' इति। इदमपि प्रागुक्तवस्तुतस्त्रिति मते साधकं बोध्यम्। सत्याषाढः— 'अथ सूपापूपादिभिरन्नमस्मा उपहरति तत्प्राश्नाति' इति। सुदर्शनेन तु 'अन्नं प्रोक्तमुपांशूत्तरैरभिमन्त्र्यों कल्पयतेत्युच्चैः' इत्यापस्तम्बसूत्रगतान्नकल्पनस्य दृष्टार्थतायाः संभवात्कल्पान्तराच्च स्फुटं भोजनमित्युक्तम्। मातृदत्तेन भरद्वाजसूत्रव्याख्यावसरे उक्तपरिशिष्टमुदाहृत्य भोजनमुक्तम्। सत्याषाढेनापि स्पष्टं भोजनमुक्तम्। तथा बौधायनः— 'अन्नमस्मा उपहरति तत्प्राश्नाति विराडसि विराडन्नं विराड् विराजो मयि धेहीति' ( बौगृ. १।२।५९–६० )। इदं सर्वं मनसि निधायैव सुदर्शनाचार्यैर्गोवधपक्षे वपाहोमोत्तरमवशिष्टैरवदानैः सहान्नं भोजयेदित्युक्तम्। तत्रान्नशब्दो रूढो यौगिको वा ग्राह्य इति केचित्। आद्य एव तु युक्तः। सुदर्शनः— "अन्नं यजमानेन जातमिति प्रोक्तं सदुपांशूत्तरैर्मन्त्रैः 'भूतं सा विराड्' इत्यादिपञ्चभिरभिमन्त्र्य 'ओं कल्पयत' निवेदयतेत्युच्चैर्वरो ब्रूयात्" ( इति )। अत्रान्नपदमौषधविशेषे रूढम्, अन्नप्राशनमित्याचार्यप्रसिद्धियोगात्। 'अद्यतेऽत्ति च भूतानि' इति सत्यामपि श्रौतव्युत्पत्तौ 'प्रजापतिः प्रजा असृजत। ता अस्मात्सृष्टाः पराचीरायन्। स एतं प्रजापतिरोदनमपश्यत्। सोऽन्नं भूतोऽतिष्ठत्।' ( तैब्रा. २।७।९।१ ), तथा च 'एतत्खलु वै साक्षादन्नं यदेष चरुः' इत्यादिभी रूढिरेव प्रतीयते, न योगः। योगरूढ्योः समानविषयत्वे रूढिबलीयस्त्वं रथकाराधिकरणे( जैसू. ६।१।१२ ) उक्तं च। एवं चान्नमौषधमेव। भूतमिति पदं नपुंसकम्, तत्परामर्शकस्य तच्छब्दस्याक्लीबत्वेऽपि विधेयविराट्पदसामानाधिकरण्येन तल्लिङ्गत्वं युज्यते। यथा 'सा वैश्वदेवी' इति। 'तन्मा क्षायि' इत्यत्रापि तत्पदं भूतपरामर्शकमित्यविरोध इति। एवं बौधायनमन्त्रेऽपि 'विराडसि विराट्छन्दोऽसि' ( ? विराडन्नम्' इति )। प्रागुक्तमन्त्रे 'सा विराड्' इति सामानाधिकरण्यात्तस्यैव विराडन्नमिति व्याख्यानम्। उत्तमप्रयाजार्थवादे 'विराजैवान्नाद्यमवरुन्धे' इति प्रसिद्धम्। विराजः अन्नानि मयि धेहि। अत्र 'तस्य तेऽशीय( ? तन्मेऽशीय )' इति तुर्यमन्त्रेऽशनप्रकाशनसामर्थ्यात्तद्विधिः कल्प्यते। तदुद्देशेन 'नामांसः' इत्यनेन मांसं विधीयते। तच्च होमानुनिष्पन्नमेवाभ्यनुज्ञायते। तदभावे त्वन्नेन भोजनं भविष्यतीति। एतेन मांसातिरिक्तान्नेन स्फुटमेव भोजनम्। अण्डविलाकारब्रह्मविद्यातीर्थादिभिरपि भोजनं लिखितम्। वल्लभाचार्यैरपि स्वकृतसोमप्रयोगे वरणोत्तरम् 'अत्र भोजनान्तो मधुपर्कः कर्तव्यः' इत्युक्तम्। तथा चैतैर्भुक्तस्य प्रतिग्रहनिषेधस्यात्र प्रतिप्रसवः क्रियते। उत्तरार्धेन अत एव 'उपवासवता कार्ये सायंसंध्याहुती विना।' इति, 'जलस्यापि नरश्रेष्ठ प्राशनाद्वेषजाद्दते। नित्यक्रिया निवर्तेत काम्यनैमित्तिकैः सह ॥' इति लिङ्गपुराणं च संगतमिति।

अत्र केचिदाक्षिपन्ति— निवेदनस्य दृष्टार्थत्वेऽपि तदनन्तरं भोजने न मानम्, भोजनोत्तरं प्रतिग्रहनिषेधादुद्वाहोत्तरमेव भोजनप्रसङ्गौचित्यात्, अन्यथा निषेधासामञ्जस्यापत्तेः। व्यासवाक्यं तु कल्पान्तरवाक्यैकवाक्यतापन्नं नाऽऽपस्तम्बपरम्। मानाभावेन शाखान्तराधिकरणन्यायेन चैकवाक्यत्वाभावे तु सामान्यविशेषा-

‡ प्रपा. गानावृवत्।

भावेन पुरोडाशाग्नेयवदुपसंहाराभावेऽपि गृहमेधीयात् ' यावतीतिकर्तव्यता यत्र श्रूयते तच्छाखीयानां तत्र तावती ' इति व्यवस्थाकल्पने शाखान्तरानपेक्षमेवानुष्ठानं प्रयोगप्राशुभावश्च भविष्यतीति । तन्न, स्मृत्याचारव्यवस्थायाः स्मृतिचरणे निरस्तत्वात्, निबन्धकारैः सहस्रशो निबन्धान्तरसंवादकथनाच्च । अत एवोक्तम्— ' दृश्यते हि निबन्धानां मिथः संवादकथनम् ' इति । प्रयोगप्राशुभावविरहस्तु प्रामाणिको न दोषाय । एवं च प्रतिप्रसवसिद्ध्या व्यासवाक्यगतक्त्वाप्रत्ययबलेनोद्वाहोत्तरकालसिद्ध्यन्यथानुपपत्त्या मधुपर्कोत्तरमेव भोजनम् । एतेन अनारभ्याधीतयोर्व्यासवाक्यनिषेधयोस्तुल्यबलयोः समप्रकरणं निविशतोर्ग्रहणाग्रहणवद्विकल्पापादकयोः सतोः कथं नित्यवद्भोजनविधिनिषेधपक्षोत्थानमिति निरस्तम्, ' भुक्त्वा ' इति व्यासवाक्येन प्रतिग्रहविशेषे भोजनोत्तरकालविधानात् । स्यादेतत् । अनारभ्याधीतं साप्तदश्यं मित्रविन्दाप्रकरणगतेन साप्तदश्यवाक्येन तत्प्रकरणे यथा संनिवेश्यते, एवमनारभ्याधीतेन व्यासवाक्येनोद्वाहे विहितमपि भोजनोत्तरकालत्वं कल्पान्तरवाक्यैकवाक्यतापत्त्या तत्कल्पानुष्ठाने एवोपयोक्ष्यत इति । तन्न, साप्तदश्यवाक्ये हि अपौरुषेये, तत्र मित्रविन्दाप्रकरणगतेन वाक्येनाङ्गत्वनिर्वाहे अनारभ्याधीतसाप्तदश्यवाक्यानर्थक्यशङ्कापनोदायैकवाक्यत्वमिष्यते चाऽऽभ्युदयफलकत्वम् । एते च वाक्ये द्वे अपि पौरुषेये भिन्ननिबन्धगते परस्परानवगतभिन्नपुरुषतात्पर्यगोचरीभूतार्थके इतरेतरानर्थक्यशङ्कार्हे न स्तः । न हि लोके कविकृतीनामितरेतरानर्थक्यशङ्काऽपि । तस्मान्नोपसंहार इति दिक् ।

अन्ये तु— किमिदं भोजनं क्रत्वर्थम्, उत पुरुषार्थम् ? आद्येऽपि संनिपत्योपकारकत्वमारादुपकारकत्वं वा ? मधुपर्काङ्गमुद्वाहाङ्गं वेति यावत् । तत्राऽऽद्येऽपि फलिसंस्कारो न वा ? पुरुषार्थत्वेऽपि रागप्राप्तस्योद्वाहोत्तरकालविधिरुतान्यस्यैव कालनियमः ? इति । तत्र क्रतुसंदंशपातात्तदर्थत्वम्, रागतः प्राप्तस्यापि संयोगपृथक्त्वन्यायेनोभयार्थत्वम् । एतेन संदंशपातेऽपि रागतः प्राप्तस्य कथमङ्गत्वमिति निरस्तम् । यद्यपि नात्र खादिरतावत्संयोगपृथक्त्वमस्ति, तथाऽपि रागतः प्राप्तस्य क्रतुसंदंशपातेनान्यार्थत्वमस्त्येव । यथा ' चमसेनापः प्रणयेत्, गोदोहनेन पशुकामस्य ' इति पशुफलार्थत्वेन विहितस्य गोदोहनस्य प्रणयनावान्तरप्रकरणात्तदुपयोगित्वम् । यथा वा ' अक्षैर्दीव्यति ' इत्यनेन विदेवनादेः । स्यादेतत् । कथमत्राङ्गत्वम् ? न तावत्संनिपत्योपकारकतयाऽङ्गत्वम्, संनिपत्योपकारः प्रतिग्रहीतरि जायमानो दृष्टादृष्टजनकोऽप्यत्र दृष्टमेव जनयति, अदृष्टस्यान्याय्यत्वात् । तच्च तृप्तिरूपम् । तत्स्वरूपे (? तत्स्वरूपत्वे) आनर्थक्यप्राप्तिः, निवेदनरूपक्रियाफलसामानाधिकरण्याभावात् । न च तृप्तिविशिष्टस्योपयोग इति वाच्यम्, जातेष्टौ हि न पुत्रगतपूतत्वादिनाशे मानमस्ति, इह तु तृप्तिविनाशित्वस्य प्रत्यक्षोपलम्भात् । तृप्तेरपूर्वकल्पने तु ' तद्धेतोरेवास्तु तद्धेतुत्वम्, ( मध्ये ) किं तेन ?' इति न्यायेन सौत्रनिवेदनादेवापूर्वकल्पना स्यात्, किमन्तर्गडुना भोजनेनेति । उच्यते— तृप्तिनाशे मानाभावात्, न हि मधुपर्कोत्तरभोजनजन्यतृप्तेरुद्वाहसमये विनाशोऽस्ति, इति दृष्टसंनिपत्योपकारमाहुः ।

केचित्तु— ' भुक्त्वा समुद्वहेत्कन्याम् ' इत्येतद्वाक्योपात्तभोजनोत्तरकालतासिद्ध्यर्थं तत्कल्पनम् । अनुष्ठेयोऽप्युत्तरकालोऽर्थात्सिध्यतीत्याहुः ।

अन्ये तु— ' एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत ' इतिवत् ' भुक्त्वा समुद्वहेत् ' इत्यत्र भावनोपसर्जनभावान्तरविधाने भोजनस्य प्रतिग्रहीतृवरसंस्कारद्वारोद्वाहाङ्गत्वमूचुः ।

परे तु— निवेदितस्यान्नस्य प्रतिपत्त्याकाङ्क्षस्य दृष्टैव भोजनरूपा प्रतिपत्तिः कल्प्यत इति संनिपत्योपकारकत्वमाहुः ।

अपरे तु— न संनिपत्योपकारकत्वे मानमस्ति । आरादुपकारकत्वं तु कल्पनासौकर्यात् । संनिपत्योपकारकत्वे प्रयोगसमवेतार्थसंस्कारकत्वम् । तच्चोपयुक्तोपयोक्ष्यमाणभेदभिन्नम् । तत्र निवेदनान्ताङ्गकलापे वरस्योपयुक्तत्वात्तदुत्तरत्र चोपयोक्ष्यमाणत्वात्तत उपयोक्ष्यमाणस्य बलीयस्त्वात्तदर्थत्वकल्पनमेव युक्तम् । एवं च दृष्टोपकारासंभवाददृष्टमेव कल्प्यम्, आपस्तम्बसूत्रोक्तनिवेदनदृष्टा-

र्थताकल्पितभोजनस्वरूपानर्थक्यपरिहारकल्पिततृप्तावपि तत्तादवस्थ्यात् । ननु वरसंस्कारकतयाऽवगतस्य भोजनस्य कथमारादुपकारकत्वम् ? उच्यते— नास्य वरसंस्कारकत्वे मानमस्ति, तद्वाचकद्वितीयाद्यभावात् । न च वरकर्तृकभोजनस्य तत्संस्कारकत्वमेव युक्तमिति वाच्यम्, यत् यत्कर्तृकं तत् तत्संस्कारकमिति नियमाभावात्, जातेष्टौ व्यभिचारात् । जातेष्टिर्हि पितृकर्तृका पुत्रसंस्काराय भवति । नापीडाभक्षणवत्कर्तृनियमांशेन संनिपत्योपकारकत्वं शङ्क्यम्, तत्र 'यजमानपञ्चमा इडां भक्षयन्ति' इत्यन्योन्यनियमविधानात् । अत्र च विध्यभावान्न परस्परनियमः । आर्थिकनियम इति चेन्न, तावता वरकरवदनान्नसंयोगस्य भोजनसामग्रीत्वेन प्रतीयमानगुणप्रधानभावप्रतीतिर्भ्रान्तिरेवेत्यदृष्टद्वारकमारादुपकारकत्वमाहुः ।

अन्ये तु— 'भुक्त्वा समुद्वहेत् कन्याम्' इत्यनेन वाक्येन रागप्राप्तभोजनोत्तरकाले सेतिकर्तव्यताकोद्वाहो विधीयते । यथा 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्र सेतिकर्तव्यताकज्योतिष्टोमकरणकभावनाया दर्शपूर्णमासोत्तरकालसंबन्धः तथेहाप्युद्वाहप्रयोगबहिर्भूतभोजनोत्तरतायास्तदङ्गत्वम् । एवं च नैतन्मधुपर्कोत्तरभोजनविषयं वाक्यम् । कथं तर्हि मधुपर्के भोजनम् ? कल्पान्तरादिति गृहाणेत्याहुः ।

अपरे तु— रागतः प्राप्तस्यैव भोजनस्योद्वाहपूर्वकालनियमः, 'समानकर्तृकयोः पूर्वकाले क्त्वा' इत्यनुशासनात् । तत्र निवेदनस्य दृष्टार्थत्वाद्भोजनस्य च निवेदनाकाङ्क्षत्वात् परस्परं संबन्धं कल्पयन्तीत्याहुः ।

अन्ये तु— न भोजनं फलिसंस्कारः, परस्वत्वापादयितुर्विवाहजन्यफलभोक्तृत्वम्, भोजनस्य तु वरार्थत्वमिति क्रियाफलसामानाधिकरण्याभावात् । न च जातेष्टिन्यायेन तृप्तिविशिष्टस्य जामातुः फलत्वम्, वैषम्यात् । तथाहि— 'यस्मिन् जात एतामिष्टिं निर्वपति पूतस्तेजस्वीन्द्रियावी पशुमान्भवति' इत्यार्थवादिकफलसंबन्धवैयधिकरण्यापनोदाय पूतत्वादिविशिष्टपुत्रस्यैव फलत्वमाश्रीयते । अत्र तु न्यायबलेन निवेदनस्य भोजनार्थत्वम् । तस्य च दृष्टार्थत्वनिर्वाहाय तृप्त्यर्थत्वम् । तत्र तु वैयधिकरण्यमिति तत्समञ्जसतायै विशिष्टफलकल्पनमिति । भिन्नफलार्थत्वेऽपि निवेदनदृष्टार्थता न प्रकरणं विच्छिनत्ति । नापि मधुपर्कान्ताङ्गकलापस्य विश्वजिन्न्यायेन स्वर्गफलकल्पनम्, विशिष्टस्य प्रतिग्रहे उपयोगात् । तृप्तिविशिष्टस्योद्वाहसंबन्धे आनर्थक्यशङ्का तदवस्थैव, अवघातजन्यवितुषीभावस्य पुरोडाशोपयुक्तस्य यागनिर्वृत्तावुपयोग इति न तृप्तेः, तदभावेऽप्युद्वाहसंभवात् । अर्जुनफलस्य द्रव्यस्य क्रत्वर्थत्वेऽपि न तत्फलत्वहानिः । तद्वज्जातेष्टिन्यायेऽपीत्याहुः ।

अत्र वदन्ति— 'नामांसो मधुपर्को भवति' इत्यत्र मधुपर्कपदेन भोजनं लक्ष्यते । तदमांसं निषिध्यते । कलौ तु मांसनिषेधाद्भोजननिषेध इति । ननु— मधुपर्के एवं मांसविधिरमांसनिषेधो वाऽस्तु 'देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः ।' इति हिंसानिषेधादाहृतमांसेन मधुपर्को भविष्यति । अथवा मधुपर्के पशुवधनिषेधात्तदनुनिष्पन्नमांसाभावादमांसमधुपर्कस्य कलौ निषेध इति चेत्, 'नामांसो मधुपर्को भवति' इति हि निषेधोऽमांसो मधुपर्को भवतीति प्राप्तिमपेक्षते । तत्र अमांसो मधुपर्क इति समानाधिकरणं पदद्वयं विशिष्टमर्थं ब्रूते । यदमांसो भवति तन्नेति नञोऽन्वये कलौ मधुपर्कविच्छित्तिः स्यात् । एतेन— सूत्रकारेण दधिमधुसंसृष्टं द्रव्यं मधुपर्कशब्देनोक्तम्, तस्य प्राशनं चोक्तम्, तदमांसं न भवतीत्युच्यते इत्यपास्तम्, कलौ तद्विच्छेदापत्तेः । यन्मधुपर्को भवति तन्नेति निषेधेऽष्टदोषदुष्टविकल्पापत्तिः । पक्षद्वयेऽपि एकैकपदवैयर्थ्यापातश्च । विशिष्टनिषेधे कलौ न मधुपर्कप्राप्तिः, तथा च सूत्रविरोधः । यदि तु अमांसपदेन मांसादन्यल्लौकिकं भोजनं गृह्यते, तन्नञा निषिध्यते, मधुपर्कपदार्थः स एवेत्युच्यते, तर्हि मधुपर्को भिन्नः, भोजनं भिन्नम्, मांसं भिन्नम् । अत्र कस्य निषेधः क्रियते ? अमांसभोजनस्येति चेत्, प्राप्तौ सत्यां निषेधः, न चात्र प्राप्तिरिति बोध्यम् । वस्तुतस्तु यत्र मांसं तत्र निषेधः, तच्च भोजने प्राप्तमिति 'आनर्थक्यात् तदङ्गेषु' इति न्यायेन मधुपर्कपदे भोजनलक्षणा । यन्मधुपर्काङ्गं भोजनममांसं भवति

तन्नेति निषेधाद्विधिरुन्नीयते। अथ च सूत्रकारेण षट् पदार्था उक्ताः। भोजनं सप्तमः पदार्थः। तस्मिन् मांसविधिः मधुपर्काङ्गं भोजनं मांसेन भवतीति। तथा च यत्र प्राप्तिस्तत्र निषेध इति सिद्धम्। कलौ तु मधुपर्के हिंसानिषेधादनुनिष्पन्नमांसाभावादमांसं भोजनम्। तच्च लोकसिद्धमिति न बाध्यते इति लौकिकं तद्भवत्येव। एवं च मन्त्रलिङ्गमपि 'भूतं सा विराट् तन्मा क्षायि तस्य तेऽशीय( ? तन्मेऽशीय ) तन्म ऊर्जं धाः' इत्युपपन्नं भवति। तथा च सिद्धेऽङ्गाङ्गिभावे यत्र मधुपर्कस्तत्र भोजनसिद्धिरित्यलम्। यत्तु- 'भुक्त्वा' इति व्यासवाक्याद्विवाहात्पूर्वं यदाकदाचिद्भोक्तव्यमिति। तन्न, लिङ्गपुराणे यानि नित्यनैमित्तिककाम्यानि कर्माणि तानि भुक्तवता न कार्याणीति पूर्वं भोजननिषेधात्। कथं तर्हि अन्ननिवेदनस्य दृष्टार्थत्वादिति सुदर्शनोक्तमिति चेत्, दृष्टफलमत्र तृप्तिर्ग्राह्या। न चैवं क्षुद्बोधे सति भोक्तव्यम्, अन्यथा नेति प्राप्तमिति वाच्यम्, अजीर्णे सति कर्मानधिकारापत्तेः। तस्माद्भुक्त्वेति क्त्वाप्रत्ययान्मधुपर्कोत्तरमुद्वाहात्पूर्वं कालो नियम्यते। अत एव 'भुक्तवते कन्यां प्रयच्छेत्' इति मनुप्रसंगतिः। अत एव 'उपवासवता कार्यं सायंसंध्याहुती विना।' इत्यस्यात्राप्रसक्तिरित्याद्यन्यत्र विस्तर इति दिक्।

बाल, १।१५६ पृ. ४१५–४१९

## कौषीतकिगृह्यसूत्रम्

विवाहे द्विर्मधुपर्कपूजा

*** [1]विवाहे गामर्हयित्वा गृहेषु गां ते माधुपर्किक्यौ ॥**

अस्मिन्नवसरे ( मधूकबन्धनोत्तरं ) मधुपर्को भवति। तस्य च विधिः कल्पे पठितः, सोऽप्यत्रैव लिख्यते। कार्यासक्तः पिता भ्राता आचार्यो वा 'कूर्चः कूर्चः कूर्चः' इत्यनेन मन्त्रेण कुशमयं कूर्चं जामात्रे ददाति। ततो जामाता कूर्चं गृहीत्वा 'अहं वर्ष्म सदृशानां विद्युतामिव सूर्यः। इदं तमधि तिष्ठामि यो अस्माँ अभि दासति॥' इत्यनेन मन्त्रेण उदङ्मुखः (प्राङ्मुखो) वा कूर्चे उपविशत्यधितिष्ठतीति वा। ततः कन्यावित्तः 'पाद्यं पाद्यं पाद्यम्' इत्यनेन मन्त्रेण पादप्रक्षालनं ददाति। ततो जामाता 'विराजो दोहोऽसि विराजो दोहमशीय मयि पद्यायै विराजो दोहः' इत्यनेन मन्त्रेण पादोदकं गृह्णाति। ततः कन्यावित्तः 'अर्घ्यमर्घ्यमर्घ्यम्' इत्यनेन मन्त्रेणोदकं ददाति। ततो जामाता तूष्णीं प्रतिगृह्य पादयोरुपनिनयति। ततः कन्यावित्तः 'आचमनीयमाचमनीयमाचमनीयम्' इत्यनेन मन्त्रेण आचमनोदकं ददाति। ततो जामाता 'आपो हि ष्ठा मयोभुवः' इत्येताभिस्तिसृभिः प्रत्यृचं त्रिरुपस्पृशति। ततः कन्यावित्तः 'मधुपर्को मधुपर्को मधुपर्कः' इत्यनेन मन्त्रेण कांस्यभाजनसंपुटसंस्थं दधि घृतमधुभ्यां मिश्रं जामात्रे ददाति। ततो जामाता तस्यैव हस्तस्थितमुद्घाट्य 'मित्रस्य त्वा चक्षुषा प्रतीक्षे' इत्यनेन मन्त्रेण एकारान्तेन दृष्ट्वा 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि यशसे ब्रह्मवर्चसाय' इत्यनेन मन्त्रेण गृहीत्वा सव्ये पाणौ कृत्वा 'वसवस्त्वाऽग्निराजानो भक्षयन्तु' इत्यनेन मन्त्रेणानामिकाङ्गुष्ठाभ्यां पूर्वार्धाद्गृहीत्वा पूर्वार्धे कांस्यस्यैव निलिम्पति। पुनर्द्विस्तूष्णीम्। एवं सर्वासु दिक्षु। अपसव्यं कृत्वा 'पितरस्त्वा यमराजानो भक्षयन्तु' इत्यनेन मन्त्रेण दक्षिणार्धाद्गृहीत्वा दक्षिणार्धे निलिम्पति। ततो यज्ञोपवीती भूत्वोदकं स्पृष्ट्वा 'आदित्यास्त्वा वरुणराजानो भक्षयन्तु' इत्यनेन मन्त्रेण पश्चिमार्धाद्गृहीत्वा पश्चिमार्धे कांस्यस्य लिम्पति। 'रुद्रास्त्वेन्द्रराजानो भक्षयन्तु' इत्यनेन मन्त्रेणोत्तरार्धाद्गृहीत्वा उत्तरार्धे कांस्यस्य लिम्पति। उदकं स्पृष्ट्वा 'विश्वे त्वा देवाः प्रजापतिराजानो भक्षयन्तु' इत्यनेन मन्त्रेण मध्याद्गृहीत्वोर्ध्वमुत्क्षिप्य ततो महाव्याहृतिभिस्तिसृभिरेकैकया प्राश्य ततः समस्ताभिर्महाव्याहृतिभिः स्तोकं पीत्वा ब्राह्मणायोच्छिष्टं दद्यात्। सर्वं वा पिबेत्। उदके

* 'वराय वधूगृहगमनोत्तरं स्वगृहगमनोत्तरं चेति द्वे गावौ देये। ते च गावौ माधुपर्किक्यौ मधुपर्कसंबन्धिन्यौ। द्विर्मधुपर्कः कर्तव्य इत्यर्थः।' इत्यस्यार्थः।

( १ ) कौगृ. १।१२।१०.

वा क्षिपेत् । तत आचम्य 'शं नो देवीरभिष्टये' इत्येताभिश्चतसृभिरुरोऽभिमृश्योदकं स्पृष्ट्वा 'प्राणपा असि प्राणं मे पाहि' इत्यनेन मन्त्रेण नासिके मुखं च युगपत् स्पृशति । 'चक्षुष्पा असि चक्षुर्मे पाहि' इत्यनेन मन्त्रेण चक्षुषी स्पृशति । 'श्रोत्रपा असि श्रोत्रं मे पाहि' इत्यनेन मन्त्रेण श्रोत्रे स्पृष्ट्वा ततः 'अनु नो मार्ष्टु तन्वो यद्विलिष्टम्' इत्यनेन मन्त्रेण मुखं विमार्जयति । अथवा 'समिन्द्र णो मनसा नेषि गोभिः' इत्येका ऋक् 'सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन । त्वष्टा सुदत्रो वि दधातु रायः' इति च मन्त्राभ्यां घ्राणसंमर्शनं कुर्यात् । मुखविमार्जनं तु समानमेव । ततस्तावत्तिष्ठेद्यावत्कन्यावित्तकेन गौरिति त्रिरुक्तभूतो जामाता वधार्थमानीतायां गवि ओं कुरुतेति वधार्थमनुज्ञां ददाति । ततः कन्यावित्तकेन मित्रदैवत्यः शाखापशुः कर्तव्यः । तस्य च विधिमुपरिष्टाद्वक्ष्यामः । अथ 'माता रुद्राणां दुहिता वसूनाम्' इत्येतामृचं जपित्वा ततः 'उत्सृजत तृणान्यत्तु' इत्येवं ब्रूयात् । ततः कन्यावित्तकेन मैत्रः पशुर्न कर्तव्यः । कूर्चदानादिगोरुत्सर्जनान्तं सूत्रे पठितं कर्म कृत्वा ततः कन्यामुदकपूर्वं पिता भ्राता वा ददाति । अपरे त्वागतमात्रस्यैव जामातुर्मधुपर्कं कृत्वा कन्यां दत्त्वा ततः कौतुकगृहं प्रवेशयन्ति । अन्यतरेण पक्षेण यथोक्तं कर्म कृत्वा ततस्तां गां जामात्रे ददाति । पृ. ११–१३

गृहप्राप्तस्य (स्वगृहप्राप्तस्येत्यर्थः) वरस्याऽऽचार्येण पूर्ववन्मधुपर्कः कर्तव्यः । अत्र मैत्रः पशुः कर्तव्यः । तस्य विधिमुपरिष्टादेव प्रवक्ष्यामः । अथ गां व्यापाद्यमानां नेच्छति ततस्तामपि तस्मै दद्यादिति केचिदिच्छन्ति ।

कौगृसं. १६

मधुपर्के मांसभोजनस्य नित्यत्वम्, यज्ञविवाहयोर्गोकरणपक्षो नित्यः, अर्घ्यभेदेन पशुदेवताभेदः

[1]षण्णां चेदर्घ्याणामन्यतम आगच्छेद्द्रोपशुमजमन्नं वा यत्सामान्यतमं मन्येत तत्कुर्यात् ॥

नामांसोऽर्घः स्यात् ॥

अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात् ॥

आचार्यायाऽऽग्नेयः ॥

ऋत्विजे बार्हस्पत्यः ॥

वैवाह्याय प्राजापत्यः ॥

राज्ञ ऐन्द्रः ॥

प्रियाय मैत्रः ॥

स्नातकायैन्द्राग्नः ॥

यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्याः ॥

तदपि भवति ॥

[1]मधुपर्के च सोमे च पितृदैवतकर्मणि ।

अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥

अर्घ्याणामैन्द्रादयः शाखापशवः कर्तव्याः । तद्व्याख्यास्यामः । षडर्घ्या भवन्ति । उपनयनं कृत्वा कृत्स्नं सरहस्यं वेदमध्यापितो येन स आचार्यः प्रथमः, येन चाहोरात्रादिकं कर्म स ऋत्विक् द्वितीयः, गुरुस्तृतीयः (? श्वशुरस्तृतीयः), राजा सार्वभौमिकश्चतुर्थः, ब्रह्मचारी समावर्तने कृते तस्मिन्नेवाहनि स स्नातकः पञ्चमः, जामाता दुहितरं परिणेतुमायातः प्रियः षष्ठः । एतेषामन्यतमो यद्यागच्छेत्तस्मै गौः पशुर्वा कर्तव्यः । पशुकर्म चोपरिष्टाद्वक्ष्यामः । अभावे यत्किंचिदशनेन सुस्वादेन मांससदृशं तत्प्रतिनिधिं कुर्यात् । यदि पशुं करोति तदाऽऽचार्यायाऽऽगतायाऽऽग्नेयः कर्तव्यः, ऋत्विजे बार्हस्पत्यः, श्वशुराय प्राजापत्यः, राज्ञे ऐन्द्रः, जामात्रे मैत्रः, स्नातकायैन्द्राग्नः । एतेषामाचार्यादीनां संवत्सरस्योपरिष्टादन्यतमस्याऽऽगतस्य शाखापशुः कर्तव्यः । सोमविवाहयोरपूर्णेऽपि संवत्सरे यद्यागच्छेत्ततः शाखापशुः कर्तव्यः । कौगृसं. ४२–४३

## आपस्तम्बगृह्यसूत्रम्

वराचार्ययोर्गोमधुपर्कः

[2]विवाहे गौः ॥

(१) कौगृ. २।१५।१–११.

(१) कौगृ. २।१६।१.

(२) आपगृ. ३।६–९ ; संको. २१७.

( १ ) विवाहस्थाने गौरालब्धव्या दुहितृमता ।
अनाकुला.

( २ ) विवाहस्थाने गौः संनिधाप्या । * ताद.

**गृहेषु गौः ॥**

( १ ) गृहेषु च गौरालब्धव्या तेनैव दुहितृमता ।
अनाकुला.

( २ ) तथा गृहेषु शालायामन्या गौः संनिधाप्या ।
* ताद.

**तया वरमतिथिवदर्हयेत् ॥**

(१) तयोर्विनियोगः— तयेति । या विवाहे गौः तया वरमतिथिवत् पूजयेत् । अतिथिवदिति वचनात् मधुपर्केण च, 'गोमधुपर्कार्हो वेदाध्यायः' (आध. २।८। ५) इति वचनात् । अनाकुला.

( २ ) किमर्थमित्यत आह— तयेति । तया विवाहस्थाने संनिधापितया गवा, न त्वनन्तरोक्तया, वरमतिथिवत् अतिथिं यथा तथा अर्हयेत् पूजयेत् । तया हविरुत्पत्तिद्वारेणोत्सर्गद्वारेण वाऽङ्गभूतया युक्तेन मधुपर्केण वरम् अवेदाध्यायिनमपि पूजयेदित्यर्थः । $ ताद.

**योऽस्यापचितस्तमितरया ॥**

( १ ) योऽस्य वरस्यापचितः पूज्यः तेन सहाऽऽगत आचार्यस्तमितरया गृहेषु या गौरालभ्यते तया । किमिवेत्यपेक्षायामतिथिवदर्हयेदित्येव । विवाहे वराय तत्सहायेभ्यश्चान्यस्मिन्नग्नौ पृथगन्नसंस्कारो भवति । वपाहोमश्च तत्रैव । अपचिताय तत्सहायेभ्यश्च गृहेषु पृथगन्नसंस्कारः । गोश्च वपाश्रपणं होमश्चौपासने एवेत्यनुष्ठानप्रकारः ।
अनाकुला.

( २ ) योऽस्य वरस्य पित्राचार्यत्वादिना संबन्धी, लोके चापचितो विद्याभिजनादिसंपत्त्या । यद्वा वरस्यापचितः पूज्यः । तमितरया गृहेषु संनिधापितया अतिथिवदर्हयेदिति संबन्धः । एतन्मधुपर्कद्वयमपि विवाहाङ्गम्, प्रकरणात् । दातृपुरुषार्थत्वे तु 'आचार्यायर्त्विजे श्वशुराय राज्ञे वरायापचिताय च' इति ब्रूयात् । प्रत्युत 'अतिथिः पितरो विवाहश्च' (आपगृ. ३।१०) इति विवाहसंबन्धमेवाऽऽह । ननु— वरं चापचितं चातिथिवदर्हयेदिति वक्तव्ये 'विवाहे गौः' इत्यादि किमर्थम् ? उच्यते— उभयोः पूजयोर्भिन्नदेशत्वेन भिन्नतन्त्रत्वज्ञापनार्थम्, इतरथा संभवतां तन्त्रता स्यात् । 'सर्वेभ्यो वैकामविभवत्वात्' (बौगृ. १।२।४७) इति कल्पान्तरे सर्वेभ्य ऋत्विग्भ्यो विकल्पेन गवैकत्वदर्शनादिहापि वरापचितयोर्विकल्पेन प्रसक्तं गवैकत्वं मा भूदिति प्रतिषेधार्थं च । * ताद.

गवालम्भस्थाननियमः

**[1]एतावद्गोरालम्भस्थानमतिथिः पितरो विवाहश्च ॥**

( १ ) एतेष्वेव त्रिषु स्थानेषु गोरालम्भः, नान्यत्र पाकयज्ञेषु । अतिथिशब्देनाऽऽतिथ्यकर्म व्यपदिश्यते 'यत्रास्मा अपचितिं कुर्वन्ति' (आपगृ. १३।२) इत्येवमादि । पितृशब्देनाष्टकाकर्म 'श्वोभूते दर्भेण गाम्' (आपगृ. २२।३) इत्यादि । विवाहशब्देनानन्तरोक्तस्य ग्रहणम् । कल्पान्तरेष्वीशानयज्ञादावपि गोरालम्भ आम्नातः, तत्प्रतिषेधार्थो नियमः । एवं ब्रुवता कल्पान्तरे दृष्टा अन्ये विशेषा अभ्यनुज्ञाता भवन्ति ।
अनाकुला.

( २ ) अतिथिः वेदाध्याय्यागतः, पितरः अष्टकाकर्म, विवाहश्चेति यदेतत्त्रयं एतावत् गवालम्भाङ्गकर्मनिमित्तम् । एतदुक्तं भवति— यथाऽतिथिः पितरश्च गवालम्भाङ्गकर्मनिमित्तभूताः एवं विवाहोऽप्यस्मादेव वचनाद्विशेषणान्तरनिरपेक्ष इति । यद्येतत्सूत्रमेवं न व्याख्यायेत तदा 'गौरिति गां प्राह' (आपगृ. १३। १५), 'श्वोभूते दर्भेण गामुपाकरोति' (आपगृ. २२। ३), 'विवाहे गौः' (आपगृ. ३।६) इत्येतैरेव सिद्धत्वात् व्यर्थमेव स्यात् । तेन अवेदाध्यायिभ्यामपि

* संकौ. तादवत् ।
$ संकौ. तादगतम् ।

* संकौ. तादगतम् ।
( १ ) आपगृ. ३।१०.

वरापचिताभ्यां धर्मोक्तगोरहितो मधुपर्को देयः। वेदाध्यायिभ्यां तु तत्सहित इति।

केचित्— एतत्त्रयमेवास्माकं गोरालम्भस्थानम्, न पुनरन्येषामिव विकल्पेनापि ईशानबलिः शूलगवापरनामा। एवं वदन्नस्माकमपि कल्पान्तरोक्तानपि विशेषान् विकल्पेनानुजानातीति। ताद.

कूर्चे उपवेशनम्

**'यत्रास्मा अपचितिं कुर्वन्ति तत्कूर्च उपविशति यथापुरस्तात् ॥**

(१) उक्तयोरन्यतरेण स्नातको भवति। तस्यास्मिन् काले बन्धुभिरपचितिः कार्या, 'गोमधुपर्कार्हो वेदाध्यायः' इति वचनात्। 'आवेद्यार्घ्यं दद्यात्' (बौगृ. १।२।१) इति कल्पान्तरम्। 'साधु व्रतस्नातमर्घयिष्यामो भवन्तम्' इति निगदेनाऽऽवेदनं कौषीतकिनः समामनन्ति। 'विष्टर(१ रः) पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते' (आगृ. १।२४।५) इत्याश्वलायनः। तत्र यत्र देशेऽस्मै अपचितिं कुर्वन्ति बान्धवाः, तत्र तैर्दत्ते कूर्चे उपविशति यथापुरस्तादुपनयने आचार्यः। कूर्चं प्रत्तमुपादायोदगग्रं निधाय तस्मिन् 'राष्ट्रभृदसि' इत्यनेनोपविशतीत्यर्थः। अनाकुला.

(२) यत्र यस्मिन् स्वधर्मयुक्तस्य कुटुम्बिनो गृहे आतिथ्यार्थमागतायास्मै स्नातकायापचितिं पूजां मधुपर्काख्यां कुर्वते कुटुम्बिनः। बहुवचनं चानुपादेयगतत्वाद्विवक्षितम्। अत एवोत्तरत्र प्राहेत्येकवचनम्। तत् तत्र गृहे तैर्दत्ते कूर्चे उपविशति। † ताद.

**एवमुत्तराभ्यां यथालिङ्गं राजा स्थपतिश्च ॥**

(१) एवं राजा स्थपतिश्च यथा ब्राह्मणः स्नातकः कूर्च उपविशति। यथालिङ्गम् 'आचार्यासन्दी' इति। एवं राजा स्थपतिश्च पूज्यमानौ उत्तराभ्यां यजुर्भ्यां यथालिङ्गमुपविशतः। तत्र क्षत्रियो राष्ट्राधिपतिरभिषिक्तो राज्याय। साम्राज्यं तस्य लिङ्गम्। स एव जनाधिपतिः। स्थापत्यायाभिषिक्तः स्थपतिः। आधिपत्यं तस्य लिङ्गम्। उत्तराभ्यां राजा स्थपतिश्चेत्येव सिद्धे 'एवम्' 'यथालिङ्गम्' इत्युच्यते यथा प्रथमस्य मन्त्रस्य लिङ्गात् विनियोगः एवमुत्तरयोरपि प्रज्ञापनार्थम्। तेन प्रथमो मन्त्रो ब्राह्मणस्यैव भवति, 'आचार्यासन्दी' इति लिङ्गात्, ब्राह्मण आचार्यः स्मर्यत इति चोक्तत्वात्। तेन क्षत्रियवैश्ययोः तूष्णीमुपवेशनम्। तत्र 'आचार्यायर्त्विजे श्वशुराय राज्ञे' इति राज्ञोऽपचितिः। अधिपतेस्तु श्वशुरत्वेनापचितिः। अनाकुला.

(२) यथा ब्राह्मणः पूज्यो मन्त्रेणोपविष्टः, एवं राजा स्थपतिश्चोत्तराभ्यां यथालिङ्गम् 'राष्ट्रभृदसि सम्राडासन्दी' इति राजा 'राष्ट्रभृदस्याधिपत्यासन्दी' इति स्थपतिश्चोपविशेदित्यर्थः। राजा च क्षत्रिय एव, न तु प्रजापालनकर्ताऽन्यवर्णोऽपि। ननु क्षत्रिये राजशब्दप्रयोग आन्ध्राणाम्, आर्याणां तु प्रजापालनादिकर्तर्येव, तत्कथं बलवदार्यप्रयोगबाधेन राजा क्षत्रिय एवेति? मैवम्, आर्यवरस्य भगवतः पाणिनेः गणपाठे 'राजासे' इति विशेषस्मरणस्याऽऽन्ध्रप्रयोगमूलत्वमेव युक्तमिति अवेष्ट्यधिकरणे साधितत्वात्। स्थपतिश्च महदाधिपत्यं प्राप्तोऽन्यवर्णोऽपि। अन्ये वैश्यः स्थपतिरिति। केचित्तु क्षत्रिय एव राज्याभिषिक्त इति। ताद.

पाद्योपचारः

**'आपः पाद्याः' इति प्राह ॥**

(१) अथ मधुपर्कप्रदाता पादप्रक्षालनार्थमप उपसंगृह्य 'आपः पाद्याः' इति प्राह। अनाकुला.

(२) अथ अपचेता पादप्रक्षालनार्था अप उपसंगृह्य 'आपः पाद्याः' इति प्राह। एतच्च संवादवचनमनन्तरं यत्कर्तव्यं तत्कुर्वित्येवमर्थम्। एवमेव प्रयोजनम् 'अर्हणीया आपः' इत्यादिष्वपि। ताद.

**उत्तरयाऽभिमन्त्र्य दक्षिणं पादं पूर्वं ब्राह्मणाय प्रयच्छेत् सव्यं शूद्राय ॥**

(१) अथ पूज्यमानस्ता अपः उत्तरयर्चा 'आपः पादावनेजनीः' इत्येतयाऽभिमन्त्र्य प्रक्षालयित्रे ब्राह्मणाय

† शेषं अनाकुलागतम्।

(१) आपगृ. १३।२–१७.

दक्षिणं पादं पूर्वं प्रयच्छेत् प्रसारयेत् । सव्यं शूद्राय । क्षत्रियवैश्याभ्यामनियमः । पुंलिङ्गस्याविवक्षितत्वात् स्त्रीष्वप्येवम् । 'स्त्री प्रक्षालयति पुमानभिषिञ्चति । विपरीतमेके ' ( बौगृ. १।२।२२ ) इति कल्पान्तरम् । पत्नीयजमानौ जङ्घे धावत इति यज्ञे विशेषः । 'आपः पाद्याः ' इति प्रकरणादेव सिद्धे पादग्रहणमुत्तरत्र पादप्रत्ययो मा भूदित्येवमर्थम् । तेन प्रक्षालयित्रुपस्पर्शनं पादे न भवति । अनाकुला.

( २ ) अत्र ब्राह्मणशूद्रावेव प्रक्षालयितारौ, न तु राजन्यवैश्यौ, तयोरनभिधानात् । अन्ये तु— क्षत्रियवैश्याभ्यामनियमेन पूर्वं पादं प्रयच्छेदिति । * ताद.

**प्रक्षालयितारमुपस्पृश्योत्तरेण यजुषाऽऽत्मानं प्रत्यभिमृशेत् ॥**

( १ ) तथा स्वेन हस्तेन 'अवनेक्तुः पाणी संस्पृशेत् ' ( बौगृ. १।२।२४ ) इति कल्पान्तरम् । उत्तरेण यजुषा 'मयि महः ' इत्यनेन प्रतीचीनमभिमर्शनम् । तच्च हृदयदेशे भवति । आत्मनः स्थानं हि तत् । अनाकुला.

( २ ) प्रत्यभिमृशेत् प्रतिलोमेन पाणिना स्पृशेत् । ततः अपामुपस्पर्शनम् । * ताद.

अर्घ्योपचारः

**कूर्चाभ्यां परिगृह्य मृन्मयेन 'अर्हणीया आपः ' इति प्राह ॥**

ततः प्रदाता मृन्मये पात्रे उपनीता अपः कूर्चाभ्यामधस्तादुपरिष्टाच्च परिगृह्य 'अर्हणीया आपः ' इति प्राह निवेदयति । 'पुष्पाक्षतैः संयुक्ताः ' इति कल्पान्तरम् । ¶ अनाकुला.

**उत्तरयाऽभिमन्त्र्याञ्जलावेकदेश आनीयमान उत्तरं यजुर्जपेत् ॥**

अर्हणीया अपो निवेदिता उत्तरया 'आ मा गन् ' इत्येतयाऽभिमन्त्रयते पूज्यमानः । ततोऽञ्जलिं कृत्वा ( ? करोति ) हस्तेन । ततस्तस्याञ्जलौ एतासामेकदेशमानयति प्रदाता । तस्मिन्नानीयमान उत्तरं यजुः 'विराजो दोहोऽसि ' इत्येतज्जपेत् पूज्यमानः । † अनाकुला.

**शेषं पुरस्तान्निनीयमानमुत्तरयाऽनुमन्त्रयते ॥**

( १ ) अथ तासामपां शेषं पूर्वस्यां दिशि नयति प्रदाता । तत् निनीयमानमुत्तरयर्चा 'समुद्रं वः ' इत्येतयाऽभिमन्त्रयते पूज्यमानः । एतस्मिन्काले वस्त्रयुगलं कुण्डलयुगं गां स्रजं यच्चान्यदलङ्करणार्थं तत्सर्वं दद्यात् । भोजनान्त इत्यन्ये । तत्सर्वमपचितिशब्देन चोदितं द्रष्टव्यम् । अनाकुला.

( २ ) अथ तासां शेषं दात्रा नीयमानं पूज्यः 'समुद्रं वः ' इत्येतयाऽनुमन्त्रयते । केचित्— अस्मिन्काले भोजनान्ते वा पूज्याय वस्त्रकुण्डलयुगाद्यलङ्करणं दातव्यम्, अन्यथाऽयं पूजित एव न भवति, एतच्चापचितिशब्देनास्माकमपि चोदितमेवेति । ताद.

मधुपर्कोपचारः, मधुपर्कस्य स्वरूपं प्रकाराश्च, शेषप्रतिपत्तिः

**दधि मध्विति संसृज्य कांस्येन वर्षीयसा पिधाय कूर्चाभ्यां परिगृह्य 'मधुपर्कः ' इति प्राह ॥**

( १ ) वर्षीयसा बृहता कांस्येन पात्रेण मधुपर्कं प्राह । कांस्येन वर्षीयसा पिधायेत्येवमपि संबन्धः । तेनोभयोः पात्रयोः कांस्यनियमः सिद्धो भवति । इतिशब्दः प्रकारे, दधि मध्विति वा पयो मध्विति वेति । अनाकुला.

( २ ) दधि मध्वित्येतद्द्वयम्, नियमविधानात् । कस्मिंश्चित्पात्रे संसृज्य ततो वर्षीयसा बृहता कांस्येन पात्रेण पिधाय । शेषं व्यक्तम् । अन्ये तु— अपिधानं कांस्यं प्रदर्शनार्थम्, तेनेतरदपि कांस्यमेवेति । ताद.

**त्रिवृतमेके घृतं च ॥**

( १ ) त्रयाणां द्रव्याणां समुदायः त्रिवृत् । पूर्वोक्ते द्वे दधि मध्विति वा पयो मध्विति वा, घृतं च तृतीयम् । अनाकुला.

---

* शेषं अनाकुलागतम् ।

¶ ताद. अनाकुलावत् ।

† ताद. अनाकुलावत् ।

( २ ) त्रयाणां द्रव्याणां समाहारस्त्रिवृच्छब्देनोच्यते । तस्मिन्पक्षे पूर्वोक्ते दधिमधुनी, घृतं च संसर्जनीयानि ।

तात्.

**पाङ्क्तमेके धानाः सक्तूंश्च ॥**

( १ ) पञ्चानां द्रव्याणां समुदायः पाङ्क्तम् । दधि मधु घृतं धानाः सक्तव इति ।

अनाकुला.

( २ ) इहापि पञ्चानां समुदायः पाङ्क्तः । शेषं पूर्ववत् ।

तात्.

**उत्तराभ्यामभिमन्त्र्य यजुर्भ्यामप आचामति पुरस्तादुपरिष्टाच्चोत्तरया त्रिः प्राश्यानुकम्प्याय प्रयच्छेत् ॥**

(१) अथ तं मधुपर्कमुत्तराभ्यामृग्भ्यां 'त्रय्यै विद्यायै' 'आ मा गन्' इत्येताभ्यामभिमन्त्र्य पूज्यमानः प्रतिगृह्णाति । पाद्यादीनामभिमन्त्र्य प्रतिग्रहदर्शनात् मधुपर्कस्याभिमन्त्र्य प्रतिग्रहः, न प्रतिगृह्याभिमन्त्रणम् । ततस्तं 'यन्मधुनः' इत्येतया त्रिः प्राश्नाति । सकृन्मन्त्रेण द्विस्तूष्णीम् । ततः प्राशनस्य पुरस्तादुपरिष्टाच्च यजुर्भ्यामनन्तरपठिताभ्याम् 'अमृतोपस्तरणमसि' 'अमृतापिधानमसि' इत्येताभ्यां यथाक्रममप आचामति । तत्र प्रयोगः— अमृतोपस्तरणमसीत्युपस्तरणीया अप आचम्य मधुपर्कं मन्त्रेण प्राश्याऽऽचम्य एवं द्विस्तूष्णीं प्राश्यापिधानीया अप आचामति । पश्चात् शौचार्थमाचमनम् । शेषं मधुपर्कप्राशनशेषम् अनुकम्प्याय अनुग्राह्याय पुत्राय भ्रात्रे वा समावृत्तायैव प्रयच्छेत् । सोऽपि तं प्राश्नाति । सोमभक्षणे मधुपर्कप्राशने भोजने च मध्ये नोच्छिष्टतेति शिष्टाः स्मरन्ति ।

अनाकुला.

( २ ) अथ पूज्यस्तं मधुपर्कं प्रतिगृह्यापिधानपात्रमपनीय 'त्रय्यै विद्यायै' 'आ मा गन् यशसा' इति द्वाभ्यामभिमन्त्र्य 'अमृतोपस्तरणमसि' इति यजुषा पुरस्तात्प्राशनादपः पिबति । तत आचम्य 'यन्मधुनो मघव्यम्' इत्यनया त्रिः प्राश्नाति । द्विस्तूष्णीम् । ततः 'अमृतापिधानमसि' इति यजुषा उपरिष्टादप्यपः पिबेत् । अथाऽऽचम्य शेषमनुकम्प्याय अनुग्राह्याय पुत्रशिष्यादये समावृत्तायैव प्राशितुं प्रयच्छेत्, न तु ब्रह्मचारिणे, 'न चास्मै श्रुतिविप्रतिषिद्धमुच्छिष्टं दद्युः' (आध. १।४।५ ) इति निषेधात् ।

ननु इह मध्ये शुद्ध्यर्थमुपस्तरणानन्तरमाचमनं न कर्तव्यम्, अस्माकं वचनाभावात् । न्यायतोऽपि नैव, भोजनवदपिधानान्तमेककर्मत्वात् । अपरथा भोजनेऽपि प्रतिग्रासमाचमनं प्रसज्येत । अथ सर्वदेशकालकर्तृव्याप्ताचारबलात्तत्कर्तव्यमिति चेत्, न, अयमाचार उक्तलक्षणो न वेत्यर्वाचीनानां दुर्निश्चेयत्वात् ।

अत्रोच्यते— नायमाक्षेपः, बोधायनादिगृह्येषूपस्तरणानन्तरमाचमनविधिदर्शनेनास्माकमप्याचारः सर्वदेशादिव्यापीति निश्चेतुं सुशकत्वात् । उक्तं चैतत्— 'अथ कर्माण्याचाराद्यानि' (आपगृ. १।१ ) इत्यत्र गार्ह्याणीति स्वशब्दं विहाय आचारादित्युपलक्षणतो व्याख्येयगार्ह्यकर्मनिर्देशात् गृह्यान्तराद्युपदिष्टविषयोऽप्यस्मदीयानामाचारो वेदमूल एवेति । भोजने तु न प्रतिग्रासमाचमनप्रसक्तिः, क्वचिदपि वचनाभावात्, आचाराभावाच्च । सोमपाने पुनः 'न सोमेनोच्छिष्टा भवन्ति' इति वचनादन्तेऽपि नैवाऽऽचमनम् । अपि चैतदाचमनं शिखाबन्धनादिवत् कर्तुः संस्कारकम्, संनिपाति च अनुक्तमप्यपेक्षितमन्यतो ग्राह्यमिति न्यायविदः । तस्मादिहोपस्तरणानन्तरमाचमनं कार्यमेव ।

केचित्— बौधायनादिभिरुपस्तरणापिधानयोस्तदर्थानां चापां निवेदनस्य पृथगुपदेशादुपस्तरणादूर्ध्वमाचमनविधानाच्च उपस्तरणादेर्बहिरङ्गत्वेन कर्मान्तरत्वावगतेर्युक्तं तेषां प्राशनात्प्रागप्याचमनम्, अस्माकं तु तथाविधोपदेशाभावात् अन्तरङ्गत्वेन उपस्तरणाद्यपिधानान्तं भोजनवदेकं कर्मेति मध्ये शुद्ध्यर्थमाचमनं न युक्तमिति । नैवम्, यतोऽस्माकमपि 'यजुर्भ्यामप आचामति' इति शब्दान्तरेणाऽऽचमनयोः पृथगेवोपदेशः । अस्मादेव पृथगुपदेशात्तदर्थानामपामावेदनं चाऽऽक्षेप्यम् । अतोऽस्माकं तेषां चोपदेशे वैषम्याभावात्तुल्ययोगक्षेममेवाऽऽचमनम् ।

तात्.

**प्रतिगृह्यैव राजा स्थपतिर्वा पुरोहिताय ॥**

( १ ) एवकारात् प्राशनमकृत्वा पुरोहिताय प्रदानम् । स विधिवत् प्राश्नाति । अनाकुला.

( २ ) राजा स्थपतिश्च मधुपर्कं प्रतिगृह्यैव पुरोहिताय प्रयच्छेत् । एवकारादभिमन्त्रणमकृत्वा । अभिमन्त्रणादि तु प्राशनान्तं पुरोहितस्यैव । पुनश्चोत्तरं कर्म राजादेरेव । ताद.

गवोपचारः

**गौरिति गां प्राह ॥**

( १ ) अथाऽऽचम्योपविष्टाय गां निवेदयते गौरिति । स्त्री च गौर्भवति, गौर्धेनुभव्येति दर्शनात् । यद्वा, पुमानपि भवति । श्रूयते हि– 'तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन् वाऽर्हत्युक्षाणं वेहतं वा क्षदन्ते' (ऐब्रा. ३।४) इति । एवमर्थमेवात्र गामित्युक्तं गोजातिमात्रस्य निवेदनं यथा स्यात् । अन्यथा गौरिति प्राहेत्येतावता सिद्धं यथा पाद्यादिषु । अनाकुला.

( २ ) प्राशने कृते दाता 'गौः' इति गां प्राह कथयति । गौश्च स्त्री, 'गौर्धेनुभव्या' इति स्त्रीलिङ्गनिर्देशात् । एतच्च कथनं 'किमियं गौः संज्ञप्यतामुत्सृज्यतां वा' इति पूज्याभिप्रायनिश्चयार्थम् । स च स्वाभिप्रायं दातुर्ब्रूयात् । ताद.

**उत्तरयाऽभिमन्त्र्य तस्यै वपां श्रपयित्वोपस्तीर्णाभिघारितां मध्यमेनान्तमेन वा पलाशपर्णेनोत्तरया जुहोति ॥**

( १ ) अनुजानीयादित्यध्याहारः, कल्पान्तरे तथा दर्शनात्– 'ओं कुरुतेति कारयिष्यन्ननुजानीयात्' इति । प्रोक्तायां गवि तामुत्तरया 'गौरस्यपहतपाप्मा' इत्येतया पूज्यमानोऽभिमन्त्र्य, यद्यस्या आलम्भनमिच्छन्ननुजानीयात् । यद्यप्येक एवार्धर्चः समाम्नायते तथाऽपि स्त्रीलिङ्गनिर्देशादृगेवैषा गायत्री । तत्र अमुष्येत्यस्य स्थाने प्रदातुर्नामनिर्देशः– मम च यज्ञशर्मणश्चेति ।

ततः प्रदाता तेनाऽऽलम्भनेऽनुज्ञाते लौकिक्याऽऽवृता तस्या गोरालम्भं कृत्वा वपामुत्खिद्य वपाश्रपणीभ्यां परिगृह्य औपासने पचने वा श्रपयित्वा तामुपस्तीर्णाभिघारितां मध्यमेनान्तमेन वा पलाशपर्णेनोत्तरयर्चा 'अग्निः प्राश्नातु' इत्येतया तस्मिन्नेवाग्नौ जुहोति । उपस्तीर्णाभिघारितामिति उपस्तरणाभिघारणे कृत्वेत्यर्थः । हुत्वा ततो मांसं संस्कृत्यान्नेन सह तस्मा उपहरन्ति । 'अविकृतमातिथ्यम्' इति वचनात् उपस्तरणाभिघारणयोरप्रसङ्गे वचनम् । पलाशपर्णेनेत्येव सिद्धे मध्यमेनान्तमेनेति वचनं द्विपर्णस्य पलाशवृन्तस्य पर्णेन होमो मा भूदिति । अभावविकल्पार्थं वा पूर्वं मध्यमेन तदभावे अन्तमेनेति । अनाकुला.

( २ ) यदि प्रतिग्रहीता संज्ञपनमिच्छेत्तदा 'गौरस्यपहतपाप्मा' इत्येतयाऽनवसानया गामभिमन्त्रयते । अमुष्येत्यस्य स्थाने चार्हयितुर्नाम विष्णुशर्मण इति गृह्णाति । ततः सुखमासीत । दातुरेव वपाहोमान्तं कर्म । अभिमन्त्र्येति च क्त्वाप्रत्ययः क्रियाविधानमात्रार्थ एव, न तु समानकर्तृकत्वार्थः । तस्यै तस्याः संज्ञपनं कृत्वा वपामुत्खिद्य श्रपयित्वा मध्यमेनान्तमेन वा पलाशपर्णेन लौकिकेनाऽऽज्येनोपस्तीर्य कृत्स्नां वपां सकृदेवावदायाभिघार्य 'अग्निः प्राश्नातु' इत्येतया तेन पर्णेन स्वाग्नौ जुहोति । तत्र च मध्यमेनान्तमेन वेतिवचनं द्विपर्णप्रतिषेधार्थमभावविकल्पार्थं वा । शिष्टैश्चावदानैः संस्कृतैः सहान्नं भोजयेत् । अयं च संज्ञपनपक्षः कलियुगानाचारेषु पठितत्वादिदानीं त्याज्य एव । ताद.

**यद्युत्सृजेदुपांशूत्तरां जपित्वोमुत्सृजतेत्युच्चैः ॥**

( १ ) अथ यदि गामुत्सृजत्ययं पूज्यमानः स गौरिति प्रोक्ते मन्त्रानुत्तरांश्चतुरः 'यज्ञो वर्धताम्' इत्युपांशु जपति । जपित्वा 'ओमुत्सृजत' इत्युच्चैः प्रसौति । प्रदाता च तामुत्सृज्यान्यत् मांसं कल्पयति, 'नामांसो मधुपर्को भवति' ( आगृ. १।२४।२६ ) इति कल्पान्तरात् । तत्र पुंगवालम्भे 'गौर्धेनुभव्या' 'माता रुद्राणाम्' एतयोर्लोपः, लिङ्गविरोधात् । नेत्यन्ये । जपत्वादेव सिद्धे उपांशुवचनं नियमार्थम्– उत्तरे चत्वार एव मन्त्रा उपांशु वक्तव्याः, न प्रणव इति । शास्त्रान्तरदर्शनात् प्रसङ्गः, 'प्रणवाद्युच्चैः, ऊर्ध्वं वा प्रणवात्' इति । तेन ब्रह्मण एवैष विकल्पः सिद्धो भवति । इह प्रसव-

विधेरभावेऽपि उच्चैरिति वचनादेव प्रसौतिर्द्रष्टव्यः ।

अनाकुला.

( २ ) यदि पूज्यो गामुत्सृज्यमानामिच्छेत् । अयं च कामप्रवेदने लिङ् । तदोत्तरान् त्रीन् मन्त्रान् 'यज्ञो वर्धताम्' इत्यादिकानुपांशु जपित्वा 'ओमुत्सृजत' इत्युच्चैः, प्रब्रूयादिति शेषः । केचित्– 'यज्ञः' इत्यादिकाश्चत्वारो मन्त्रा इति । इयं च गौरुत्सर्जनपक्षेऽपि भोक्तुरेव ।

ताद.

भोजनदानम्

**[१]अन्नं प्रोक्तमुपांशूत्तरैरभिमन्त्र्यों कल्पयतेत्युच्चैः ॥**

( १ ) अथान्नं सामिषं समाहृत्य तस्मै प्राह 'भूतम्' इति । 'सिद्धेऽन्ने भूतमिति प्राह' (बौगृ. १।२।५५) इति कल्पान्तरम् । अस्माकं च वैश्वदेवे । तस्मात् भूतमित्येव निवेदनम् । तदन्नं प्रोक्तमुत्तरैः पञ्चभिर्मन्त्रैः 'भूतम्' इत्यादिभिर्भोक्तोपांश्वभिमन्त्र्य 'ओं कल्पयत' इत्युच्चैः प्रसौति । प्रसूताः परिवेष्टारः परिवेविषन्ति । 'चतुरो नानागोत्रान् ब्राह्मणान् भोजयतेति ब्रूयात्तेषु भुक्तवत्स्वन्नमस्मा उपहरति' ( बौगृ. १।२।५८–५९ ) इति कल्पान्तरम् ।

अनाकुला.

( २ ) एवं प्रोक्तमन्नं भोक्ता उत्तरैर्मन्त्रैः 'सुभूतम्' इत्यादिभिः पञ्चभिरभिमन्त्र्य, 'ओं कल्पयत' इत्युच्चैः । अत्राप्यनुजानीयादिति शेषः । ततो भोजनम्, अन्ननिवेदनस्य दृष्टार्थत्वात्, आचाराच्च ।

* ताद.

पुनःकरणावधिः

**[२]आचार्यर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्य एतत्कार्यम् ॥**

( १ ) आचार्यादयः प्रसिद्धाः । तेभ्यश्चतुर्भ्यः परिसंवत्सरं विप्रोष्योपतिष्ठद्भ्यः गृहमातिथ्येनाऽऽगतेभ्य एतत् अपचितिकर्म कूर्चादि भोजनान्तं कर्तव्यम्, केन ? गृहस्थेन । निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते, 'अग्निहोत्रमतिथयः' इति वचनात् । अत्र केचिदाहुः– 'आचार्यर्त्विजे श्वशुराय राज्ञ इत्येतत्कार्यम्' इत्येको योगः । अथ 'परिसंवत्सरादुपतिष्ठद्भ्यः' चायं कार्य इति । तेन विवाहादनन्तरमाचार्यश्वशुराभ्यां निमन्त्र्यापचितिः कर्तव्या, ऋत्विजे च कर्मणि, राज्ञे चाभिषेकानन्तरम् । अथ तेभ्य एव संवत्सरं विप्रोष्योपागतेभ्यश्च कर्तव्यमिति ।

अनाकुला.

( २ ) यदेतदर्हणं कूर्चादि भोजनान्तं गृहस्थेन स्नातकाय स्नानदिवस एवाऽऽगताय कर्तव्यमिति विहितम्, तदाचार्यादिभ्यः परिसंवत्सरात् संवत्सरादूर्ध्वं गृहमुपतिष्ठद्भ्य उपागतेभ्यः पुनः पुनः कार्यम्, न तु स्नातकवत्सकृत्, न चाप्यर्वाक्संवत्सरात् । अत्र चेतिशब्दश्चार्थः । ननु धर्मशास्त्रे 'गोमधुपर्कार्हो वेदाध्यायः । आचार्य ऋत्विक्स्नातको राजा वा धर्मयुक्तः । आचार्यर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च । दधि मधुसंसृष्टं मधुपर्कः, पयो वा मधुसंसृष्टम् । अभाव उदकम् ।' ( आध. २।८।५–९ ) इति स्नातकायाऽऽचार्यर्त्विज उपाध्यायाय श्वशुराय राज्ञे च दक्षिणार्थगवा सह मधुपर्को विहितः । किमर्थमिह पुनर्विधीयते ? उच्यते– इह विकल्पेन विहितस्य त्रिवृतः पाङ्क्तस्य च तस्मिन्गोमधुपर्के अवेदाध्यायाय श्वशुराय च दीयमाने च प्राप्त्यर्थम् । यत्तु तत्रैव 'गौर्मधुपर्कश्च' इति पुनर्वचनम्, तदाचार्यर्त्विग्वेदाध्यायश्वशुरराजभ्य एव परिसंवत्सरादुपतिष्ठद्भ्यः पुनः पुनः कार्यम्, स्नातकवेदाध्यायातिथिभ्यस्तु सकृदेवेत्येवमर्थम् ।

ताद.

प्रवक्तुः सकृदर्हणम्

**सकृत्प्रवक्त्रे चित्राय ॥**

( १ ) ¶ ( सकृत्, न प्रतिवत्सरम् । कलौ गोरालम्भस्य निषेधाद्गौरित्युक्त्वा 'यज्ञो वर्धताम्' इत्यादि

---

* शेषं अनाकुलागतम् ।

( १ ) आपगृ. १३।१८ ; बाल. १।१५६ पृ. ४१५.

( २ ) आपगृ. १३।१९–२०.

¶ कंसान्तर्गतः काचित्कः पाठः ।

जपेत्, मध्यमन्त्रलोपः।) प्रवक्त्रे वेदस्य वेदार्थस्य च। चित्राय प्रसिद्धाय, भिन्नसंशयायेत्यर्थः। एवंभूतायोपस्थिताय सकृदेतदपचितिकर्म कर्तव्यम्, न प्रतिसंवत्सरमिति। अनाकुला.

(२) प्रवक्ता यः पदवाक्यप्रमाणाभ्यां(? माणैः) प्रकर्षेण वक्ति, साधुशब्दानामुच्चारयिता प्रमाणोपपन्नं व्याख्याता चेत्यर्थः। चित्रः प्रकाशः, लोके प्रसिद्ध इत्यर्थः। इदं प्रवक्तुरेव विशेषणम्। तस्मै सकृदेवैतत् गार्ह्यं गोरहितं कार्यम्। अयं च प्रवक्ता न वेदाध्यायः। स हि गोमधुपर्कार्हः। यः सषडङ्गं वेदमधीते, अर्थांश्च जानाति स वेदाध्यायः।

ननु– सामयाचारिके गोमधुपर्के धर्मा नोपदिष्टाः, स कथं कर्तव्यः? उच्यते– नामधेयं धर्मग्राहकमिति मीमांसकाः। तेन गृह्ये याज्ञिकप्रसिद्ध्या मधुपर्कसंज्ञि(?ज्ञ)के कर्मणि उपदिष्टा एव धर्माः 'गोमधुपर्कार्हः' इत्यत्र मधुपर्कनाम्ना अतिदिश्यन्ते, 'मासमग्निहोत्रं जुहोति' इतिवत्। 'दधिमन्थो मधुमन्थः' (आपश्रौ. ६।३१।५) इत्यत्र तु दक्षिणाद्रव्यस्य कर्मवद्धर्माकाङ्क्षाभावान्नातिदेशः। अत्र च वेदाध्यायातिथिपूजायामयं विशेषः– 'दधि (मधुसंसृष्टं) मधुपर्कः' इति प्रत्यक्षविधानादतिदेशप्राप्तं त्रिवृत्त्वं पाङ्क्तत्वं च बाध्यत इति।

अयमत्र निश्चितोऽर्थः– आचार्यर्त्विजे वेदाध्यायाय श्वशुराय राज्ञे च दक्षिणार्थाधिकगवा सह गार्ह्यः सामयाचारिको वा मधुपर्कः कार्यः। परिसंवत्सरादुपागतेभ्यः पुनः पुनः कार्यः। अवेदाध्यायाय श्वशुरायाधिकगवा विना गार्ह्यः, अतिथिवरापचितेभ्यो वेदाध्यायेभ्यः सह गवा धर्मोक्तः, अवेदाध्यायाभ्यां तु वरापचिताय स्नातकाय च स्नानदिन एवाऽऽगताय गवा विना गृह्योक्तो धर्मोक्तो वा, प्रकाशाय च प्रवक्त्रे विना गवा गार्ह्यः, आचार्यादिभ्यश्चतुर्भ्योऽन्येषां सकृदेवेति।

केचिदत्र योगविभागमाहुः। 'आचार्यादिभ्यः चतुर्भ्य एतत्कार्यम्' इत्येको योगः। तेन विवाहानन्तरमाचार्यश्वशुराभ्यां निमन्त्र्यापि पूजा कार्या। अन्यथा संवत्सरमपि प्रोषिताभ्यां सकृदपि न सिध्येत्। ऋत्विजे च कर्मणि कर्मणि पूजा कार्या। राज्ञे चाभिषिक्ताय नियमेनैव। तथा 'परिसंवत्सरादुपतिष्ठद्भ्यः पुनः पुनः' इत्यन्यो योगः। स्पष्टश्चायं सामयाचारिकेषु विभागः, 'गोमधुपर्कार्हः' इति पूर्वं विधाय पश्चात् 'आचार्याय' इत्यादिना पुनर्विधानात्। पूर्वयोगे च श्वशुरशब्दो निपातयितव्यः। न चात्रान्यतरविध्यारम्भो व्यर्थः, सामयाचारिकेषु सर्वाचरणार्थेन विहितायां पूजायां गार्ह्यस्यास्मदीयानां धर्मातिदेशार्थत्वात्। न च नाम्ना धर्मातिदेशः, गोमधुपर्कशब्दयोः 'मधुमन्थो मधुपर्कः' इतिवत् द्रव्याभिधायकत्वात्। अतोऽर्थभेदात् गृह्ये धर्मे च विध्यारम्भोऽर्थवान्। तथा वेदस्य वेदार्थस्य च प्रवक्त्रे चित्रायैतत्सकृत्कार्यमिति। तच्चिन्त्यम्। ताद.

## हिरण्यकेशिगृह्यसूत्रम्

### आवसथकल्पनम्, अर्घनिवेदनप्रतिवचने

**[1]अथास्मा आवसथं कल्पयित्वाऽर्घ इति प्राह। कुरुतेति प्रत्याह॥**

(१) अपचितेः कर्ता, एत्याऽऽवस(? एत्य वस)-त्यस्मिन्नित्यावसथः आवासदेशः शयनासनाशनादि, एतत्कल्पयित्वा उपकल्प्येत्यर्थः, अस्मै स्नातकाय अर्घ इति प्राह। अर्घः अर्हणं पूजेत्यनर्थान्तरम्। अथशब्दोऽधिकारार्थः। इत उत्तरं यद्वक्ष्यते एषोऽयं विधिरिति। तेनर्त्विगाचार्यादीनामथवा विवाह्यादीनामेतेन विधिना सिद्धं मधुपर्कदानम्। कुरुतेति तं स्नातकः प्रत्याह। मातृद्.

(२) आवसथः अर्चागृहम्। संप्र. ८२२

### मधुपर्कस्य स्वरूपं प्रकारौ च

**[2]कुर्वन्त्यस्मै त्रिवृतं पाङ्क्तं वा। दधि मधु घृतमिति त्रिवृत्। दधि मधु घृतमापः सक्तव इति पाङ्क्तः। कंसे दध्यानीय मध्वानयति॥**

---

(१) हिगृ. १९।४।७; संप्र. ८२२; संग. १५६.

(२) हिगृ. १९।४।८; संप्र. ८२२ कंसे ...... नयति (कांस्ये मध्वानीय दध्यानयति); संग. १५६–१५७ (कंसे ...... नयति०).

कुर्वन्त्यस्मै त्रिवृतं त्रिवृद्द्रव्यकं पाङ्क्तं पञ्चद्रव्यकं मधुपर्कम् । कुर्वन्तीति बहुवचनमनियतकर्तृकत्वाय । तेन परिकर्मिभिरासादयितव्यानि मधुपर्कद्रव्याणि । कस्तु त्रिवृत् कः पाङ्क्त इत्युच्यते– दधि मधु घृतमिति त्रीणि द्रव्याणि त्रिवृत् मधुपर्क इति । ( पाङ्क्तो ? ) दधि मधु घृतमापः सक्तवः इत्येतानि पञ्चद्रव्याणि पाङ्क्तो भवति । धर्मेषु तु 'दधि मधुसंसृष्टं मधुपर्के( ? कः ) पयो वा मधुसंस्पृष्टमभाव उदकम्' इत्युक्तम्, तदनेन विकल्पते । क्व कथं च तेषां द्रव्याणां संसर्ग इत्युच्यते– कांस्यपात्रे दध्यानीय मध्वानयति, ततो घृतम्, पारिशेष्यात् । त्रिवृत् त्रिवृतम् ( ? ) । पाङ्क्ते दध्यादीनां नास्ति क्रमः । घृतमन्ततः, अभिघारणरूपत्वात् ।

मातृद.

पञ्चोपचाराः

[1]**ह्रसीयस्यानीय वर्षीयसाऽपिधायानूचीनानि पृथगादापयति कूर्चं पाद्यमर्घ्यमाचमनीयं मधुपर्क इति ॥**

( १ ) ह्रसीयसि ह्रस्वतरे पात्रे एतानि द्रव्याण्यानीय वर्षीयसा वृद्धतरेण पात्रेण चापिधायानूचीनानि वक्ष्यमाणानि ओंपूर्वकाणि पृथगेकैकं प्रदाता स्नातकेनाऽऽदापयति कूर्चं पाद्यमर्घ्यमाचमनीयं मधुपर्क च । कूर्चः दर्भमयमासनम् । पादार्थमुदकं पाद्यमिति न्याय्यम्, तदर्थे पद्भावस्य प्रतिषेधात् । अर्घार्थमुदकम् अर्घ्यम् । आचम्यते येनोदकेन तदाचमनीयम् । मधुना संपृक्तो दध्यादिसमूहो मधुपर्कः । एतानि क्रमेण सादयित्वा पश्चादादापयति । ( यदि ) मधुपर्कस्यैव ह्रसीयस्यानीय वर्षीयसाऽपिधानं प्रच्छादनमिष्टम्, तत एवं वक्तव्यम्– 'कांस्ये दध्यानीय मध्वानयति वर्षीयसाऽपिधाय । ( ततः ) अनूचीनानि०' इति । गुरुनिर्देशस्य प्रयोजनं पाद्यादिपात्रत्रयाणामपि प्रच्छादनमिष्टम्, तेषां तु कांस्यनियमो नास्ति । उक्तक्रमादेव सिद्धे अनूचीनानि इति किमर्थम् ? सादनमपि तेनैव क्रमेण स्यात्, न यथोपपादमित्येतदर्थम् । पृथगिति वचनं पृथगिति वा शक्यत्वात् उत्तरत्रावचनाच्च सिद्धिरेतदर्थमेव ।

मातृद.

( २ ) ह्रसीयसि स्वल्पपरिमाणे । वर्षीयसा बृहत्परिमाणेन । अनूचीनानि कूर्चादीनि वस्त्वन्तराणि । आदापयति अन्यैर्ग्राहयति ।

संप्र. ८२२

कूर्चोपचारः

[1]**अन्वङ्ङनुसंव्रजिता सोऽनुपकिंचया वाचैकैकं प्राह कूर्च इति कूर्चम् ॥**

( १ ) अन्वङ् अनुगच्छन्, आदातुरभिप्रायानुकूलो भूत्वेत्यर्थः । अनुसंव्रजिता सह कूर्चादिना द्रव्येण तदग्रतः कृत्वा अनुगच्छन् । अनुसंवृजितेति प्रमादपाठः । सः प्रदाता अनुपकिंचया, न विद्यते उपघातिका वाग्यस्याः सेयमनुपकिंचा वाक् । पृषोदरादिको विकारो द्रष्टव्यः । वागन्तरेणानुपहतया उच्चैर्भूतया इत्यर्थः । वाचैकैकं प्राह कूर्चादिकं द्रव्यम् । केचित् अनुसंव्रजिनेति पाठान्तरं कृत्वा वाग्विशेषणमिच्छन्ति, यथा मृष्टाऽप्यवाक् संस्कृता वाक् हृद्या चेति । अपरे यथापाठमेवमर्थमिच्छन्ति । एकैकमिति यौगपद्यप्रतिषेधार्थमिति केचित् । पृथग्वचनादुत्तरत्र कूर्चादिना प्रत्येकं वचनाच्च सिध्यति । तथेदं प्रयोजनम् । द्रव्यस्यैकत्वं नियतम् । शब्दस्याभ्यावृत्तिर्वा स्यादिति तेन त्रिस्त्रिरथैकैकं प्राह । अथवैकैकमिति वचनमेकैकमसकृत्प्रवचनं द्विरिति । तेनाऽऽचमनीयस्य नास्ति द्वितीयं प्रवचनम् । कूर्च इति त्रिः पूजयिता पूज्याय कूर्चं नीत्वा प्राह । कूर्चादीनां प्रतिवचने परिभाषासिद्धेऽपि पुनर्वचनमुत्तर० विधिशास्त्रार्थमिष्टशब्दपरिग्रहणार्थं वा । दृष्टार्थत्वाच्छास्त्रा० न्तरदर्शनाद्वा विष्टरादिशब्दानामपि प्रसङ्ग इति ।

मातृद.

( २ ) अन्वङ्ङम् अङ्गानां कूर्चादीनाम् अनु पश्चात् अनुसंव्रजितासो गतान् गृहीतकूर्चादीन् पुरुषान् स्वयमनुगच्छेदित्यर्थः । अनुपकिंचया अनुपांशुकृतया वाचा । एकैकं कूर्चादि ।

संप्र. ८२२

---

( १ ) हिगृ. १९।४।९ ; संप्र. ८२२.

( १ ) हिगृ. १९।४।१० ; संप्र. ८२२ अन्वङ्ङनुसंव्रजितासो ( अन्वङ्गमनुसंवृजितासो ).

[1]'तस्मिन्प्राङ्मुख उपविशति– 'राष्ट्रभृदस्याचार्याऽऽसन्दी मा त्वद्योषम्' इति ॥

तस्मिन् कूर्चे 'राष्ट्रभृदसि' इत्यनेन मन्त्रेण पूज्यः प्राङ्मुख उपविशति । प्राङ्मुख इति उदङ्मुखत्वनिवृत्तये । उदङ्मुख इह कूर्चः स्यात्, बह्वृचानामुक्तत्वात् । मातृद.

पाद्योपचारः

[2]अथास्मै पाद्यमिति प्राह ॥

अनन्तरमस्मै पूज्याय पूजयिता पाद्यार्थ( ? पादार्थ )-मुदकं नीत्वा पाद्यमिति प्राह । एवं सर्वत्रेति न्याय्यत्वात् । मातृद.

तेनास्य शूद्रः शूद्रा वा पादौ प्रक्षालयति । सव्यमग्रे ब्राह्मणस्य । दक्षिणमितरयोः ॥

तेनोदकेनास्य पूज्यस्य शूद्रो दासः शूद्रा दासी वा पादौ प्रक्षालयति । कथम् ? सव्यमग्रे ब्राह्मणस्य प्रक्षालयति, दक्षिणमितरयोः राजन्यवैश्ययोः । मातृद.

[3]'विराजो दोहोऽसि मयि दोहः पद्यायै विराजः' इति योऽस्य पादौ प्रक्षालयति तस्य हस्तावभिमृश्य ॥

योऽस्य पादौ प्रक्षालयति तस्य हस्तौ 'विराजः' इत्यनेनाभिमृश्य । मातृद.

आत्मानं प्रत्यभिमृशति– 'मयि तेज इन्द्रियं वीर्यमायुः कीर्तिर्वर्चो यशो बलम्' इति ॥

'मयि' इत्यनेनाऽऽत्मानं प्रत्यभिमृशते । प्रक्षालयितुर्हस्तावित्येव सिद्धे 'योऽस्य पादौ' इत्येवमादिवचनं प्रक्षालयितुरनियमार्थम् । तेन ब्राह्मणस्य ब्राह्मणो वा प्रक्षालयेत् । तदुक्तं बह्वृचानाम्– 'दक्षिणमग्रे ब्राह्मणाय प्रयच्छति, सव्यं शूद्राय' इति । मातृद.

(१) हिगृ. १९।४।११ ; संप्र. ८२२ ( तस्मिन् प्राङ्मुख उपविशति ) एतावदेव.

(२) हिगृ. १९।४।१२–१३ ; संप्र. ८२२.

(३) हिगृ. १९।४।१४–२३.

अर्घ्योपचारः

अथास्मा अर्घ्यमिति प्राह ॥

अथ अनन्तरम् अर्घ्येणोदकेन गन्धमाल्यवस्त्रालङ्कारयुक्तेन सहाऽऽगत्यार्घ्य( ? र्घ्यम् ) इति प्राह । केचित् 'अर्घं प्राह' इति पाठं मन्यन्ते । पूर्वत्र 'अर्घ्यमाचमनीयम्' इत्युक्तत्वात्तन्न । अर्हत्यनेनेति पूजार्थस्य द्रव्यसमूहस्यार्घशब्देनाभिवदितत्वात्( ? ) अशक्यस्तदेकदेशे उदके । पूर्वत्रार्घ्यार्थत्वादर्घ्यशब्दप्रयोगस्योपपन्नत्वाच्च । मातृद.

तत्प्रतिगृह्णाति– 'आ मा गन् यशसा सꣳसृज तेजसा वर्चसा पयसा च । तं मा कुरु प्रियं प्रजानामधिपतिं पशूनाम्' इति ॥

अर्घ्यादिद्रव्यं प्रतिगृह्णाति 'आ मा गन्' इत्यनेन मन्त्रेण । मातृद.

'समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः ॥' इति शेषं निनीयमानमनुमन्त्रयते ॥

प्रतिगृह्य वस्त्रालङ्कारादिनाऽलङ्कृत्य शिष्टमुदकं प्रदात्रे प्रदाय तेन तदुदकं निनीयमानं 'समुद्रं वः' इत्यनेनाभिमन्त्रयते । मातृद.

आचमनीयोपचारः

अथास्मा आचमनीयमिति प्राह ॥

अथ अनन्तरमस्मा आचमनीयं नीत्वाऽऽचमनीयमिति प्राह । मातृद.

'अमृतोपस्तरणमसि' इत्यप आचामति ॥

तदुक्तम्– 'अमृतोपस्तरणमसीत्याचम्य पिबति' । *तदित्येकदेशे समुदायशब्दः, उत्तरत्राऽऽचम्यवचनात्( ? ) अर्धमेव गृहीत्वाऽवशिष्टं प्रदात्रे प्रदायाऽऽचामति । मातृद.

* इतो व्याख्यानात् "'अमृतोपस्तरणमसि' इति तदाचामति" इति पाठो मातृदत्तसंमत इति भाति ।

मधुपर्कोपचारः, शेषप्रतिपत्तिः

**अथास्मै मधुपर्क इति प्राह ॥**

अथ अनन्तरमस्मै मधुपर्कं नीत्वा मधुपर्क इति प्राह। मातृवृ.

**तं सावित्रेणोभाभ्यां हस्ताभ्यां प्रतिगृह्य 'पृथिव्यास्त्वा नाभौ सादयामीडायाः पदे' इति पृथिव्यां प्रतिष्ठाप्य 'यन्मधुनो मधव्यं परममन्नाद्यं रूपम्। तेनाहं मधुनो मधव्येन परमेण रूपेण परममधव्योऽन्नादो भूयासम्' इत्यङ्गुष्ठेनोपमध्यमया चाङ्गुल्या त्रिः प्रदक्षिणं संयुज्य 'तेजसे त्वा श्रियै यशसे बलायान्नाद्याय प्राश्नामि' इति त्रिः प्राश्य योऽस्य रातिर्भवति तस्मा उच्छिष्टं प्रयच्छति ॥**

तं मधुपर्कं 'देवस्य त्वा' इति सावित्रेण प्रतिगृह्णाति। अनेनोभाभ्यां हस्ताभ्यामाकाशाञ्जलिना प्रतिगृह्य 'पृथिव्यास्त्वा' इति पृथिव्यां प्रतिष्ठाप्य सम्यक्स्थापयित्वाऽङ्गुष्ठेन उपमध्यमया उपकनिष्ठिकया चाङ्गुल्या 'यन्मधुनः' इति सकृन्मन्त्रमुक्त्वा त्रिः प्रदक्षिणं संयुज्य आलोड्य 'तेजसे त्वा' इत्यनेनाऽऽवर्त्य मन्त्रं त्रिस्ताभ्यामेव प्राश्य योऽस्य पूज्यस्य रातिर्भवति तस्मा उच्छिष्टं प्रयच्छति। मातृवृ.

पिधानम्

**सर्वं वा प्राश्य 'अमृतापिधानमसि' इत्यप आचामति ॥**

सर्वं वा मधुपर्कं स्वयमेव प्राश्य। अभावे विकल्प एषः। रातेरभावे सर्वप्राशनं बह्वृचानामप्युक्तम्— 'ब्राह्मणायेदमु( ? योदङ्ङु )च्छिष्टं प्रयच्छेत् (अभावे सर्वप्रशानम् ?) अलाभे( ऽप्सु ) सर्वं वा' इति। 'अमृतापिधानमसि' इत्यप आचामति। तेनाऽऽचमनीयस्यावशिष्टा अप आचामति पिबति। न सर्वप्राशन एव, उच्छिष्टदानेऽपि स्यादपिधानार्थत्वात्, एतदर्थमेव प्राश्येति वर्तमाने पुनः प्राश्येति वचनम्। आचमनीयमित्युक्तत्वादस्यैवावशिष्टा इत्युक्तम्। यद्येवं पूर्वत्र नपुंसकलिङ्गेन निर्दिष्टत्वादिहोदकशब्देन निर्देष्टव्येऽप इति वचनं किमर्थम् ? लाघवार्थम्। भिन्नत्वख्यापनार्थं वोभयस्य। केचिदुपस्तरणीया आचामन्ति श्रौतार्थम्, बह्वृचानाम् 'आचान्तोदकाय' इति वचनस्यैव तदर्थत्वात्पूर्वत्रैवानाचमने कृतार्थत्वात्स्मृतेः। केचिदन्यथाऽपि प्रयोगं कुर्वन्तो दृश्यन्ते। तद्वयं न जानीमः। अपरे आचमनीयेनैवोदकेन स्मार्तमाचमनं तेनैव मन्त्रेण त्रिरभ्यावर्त्य कृत्वा यथोक्तं मधुपर्कप्राशनान्तमाचमनं पुनराचमनशेषेणैव स्मार्तमाचमनं मन्त्रेण त्रिरभ्यावृत्त्यैके कुर्वन्ति। एवं शास्त्रान्तरे दृष्टमिति तथाऽस्माकं तेषामुपस्तरणीयानामपिधानीयानां चापां भेदादिह नैकत्वाद्भिन्नदर्शमिति। मातृवृ.

गवोपचारः, करणोत्सर्जनपक्षौ

**[1]अथास्मै गौरिति प्राह ॥**

अथास्मै गामुक्षाणं वेहतं वाऽऽनीय गौरिति प्राह, 'यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वा अर्हत्युक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा एतत् क्षदन्ते यदग्निं मन्थन्ति, अग्निर्हि देवानां पशुः' ( ऐब्रा. ३।४ ) इत्यातिथ्यायामग्निमन्थनवाक्यशेषे नित्यानुवादवचना-( भावा ? )त् अस्माकं गोमात्रमेव, सा च स्त्र्येव, मन्त्रलिङ्गात् स्त्रीलिङ्गनिर्देशाच्चेत्येके। मातृवृ.

**तस्याः कर्मोत्सर्गो वा ॥**

तस्या गोः कर्म संज्ञपनक्रियायां सोऽर्थः स्यात्। उत्सर्गे( ? उत्सर्गो ) यथेष्टचर्यार्थम्। मातृवृ.

**[2]'गौर्धेनुर्भव्या माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः। प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥' 'पिबतूदकं तृणान्यत्तु। ओमुत्सृजत' इत्युत्सर्गे संशास्ति ॥**

---

(१) हिगृ. १९।४।२४–२५ ; संप्र. ८२३ ; संग. १६३.

(२) हिगृ. १९।४।२६ ; संप्र. ८२३ मन्त्रनिर्देशमात्रम् ; संग. १६३ संप्रवत्.

तत्रोत्सर्गे सति 'गौर्धेनुर्भव्या' इत्येकं मन्त्रमुक्त्वोत्सृजतेति संशास्ति। तस्मिन् मन्त्रे 'प्र णु वोचम्' इति यः पाठः स साधुः। अन्योऽपपाठः। केचित्सर्वेण मन्त्रेण संशासनमिच्छन्ति। तदयुक्तम्, प्रणवादेरेव संशासनत्वात्, 'भूतिकर्मस्वेतदादीन्येत्र वाक्यानि स्युः' (आध. १।१३।९) इति धर्मेषु वचनात्, बह्वृचानां पूर्वस्य जपवचनाच्च। मातृद्व.

[१] '**गौरस्यपहतपाप्माऽप पाप्मानं जहि। मम चामुष्य च हतं मे द्विषन्तं हतो मे द्विषन्॥' 'कुरुत' इति क्रियमाणायाम्॥**

क्रियमाणायां हिंस्यमानायां गवि 'गौरसि' इत्येतं जपित्वा कुरुतेति संशास्ति। तत्र मन्त्रे 'अमुष्य च' इति एतत्पूजयितुर्नाम षष्ठ्या गृह्णाति। तथा मम च देवदत्तस्य चेति। अत्राऽऽह– '.ओमुत्सृजतेति उत्सर्गे संशास्ति' 'कुरुतेति कारयिष्यन्(? क्रियमाणायाम्)' इत्येतावता सिद्धे 'तस्याः कर्मोत्सर्ग(? र्गो वा)' इत्यनर्थकम्। नानर्थकम्, क्रियावदुत्सर्गस्यापि सरूपत्वख्यापनार्थत्वात्। तेन नोत्सृष्टा स्वामिना दातव्या, इतरस्य स्वं स्यादर्हणार्थत्वात्। तस्यापि न स्वम्, तेनोत्सृष्टत्वात्, कस्यचित्स्वसत्त्वात्(? स्वस्वत्वात्) राष्ट्रादिवदित्यपरे। अन्ये– हिंसाप्रतिषेधार्थ उत्सर्गः, स्वामिन एव स्वत्वम्। अन्ये– स्त्रीत्वख्यापनार्थं 'तस्याः कर्मोत्सर्गो वा' इति वचनमिति। पुंस्त्वेऽपि गोजातिमात्रस्य विवक्षितत्वाच्छ्रुतित्वाच्च(? तत्वाच्च) 'धेनुर्भव्या' इत्यादिरनुवृत्तिरेव जपस्य। अथ किमर्थं 'कर्मोत्सर्ग (? र्गो वा)' इति पूर्वमुक्त्वा पश्चात् क्रमविपर्यासेनोत्सर्गस्य विधिः प्रथममुच्यते? दृष्टाभावात् हिंसाभविष्यायाम्(?) उत्सर्गकरणं बलीय इति ख्यापनार्थम्। मातृद्व.

समांसमुपादिभोजनदानम्, शेषप्रतिपत्तिः

**उत्सर्गेऽन्येन मांसेनान्नं संस्कृत्याथास्मै भूतमिति प्राह। 'तत्सुभूतं विराडन्नं तन्मा क्षायि तन्मेऽशीय तन्म ऊर्जं धास्तत्सुभूतम्' इत्युक्त्वाऽथाऽऽह 'ब्राह्मणान्भोजयत' इति॥**

तत्सुभूतमित्येतत्प्रतिवचनमुक्त्वाऽथाऽऽह एनान् ब्राह्मणान् भोजयतेति। मातृद्व.

**तेष्वस्मै भुक्तवत्स्वनुसंवृजिनमन्नमाहारयति॥**

तेषु अनेन पूज्येन सह गतेषु(? आगतेषु) ब्राह्मणेषु अन्येषु भुक्तवत्सु अनूचीनं च तत् संवृजिनं चानुसंवृजिनम्। अनुसंव्रजिनमित्यपपाठः। शेषभूत(? तं)-व्यञ्जनैः संगतमित्यर्थः। शिष्टं सव्यञ्जनमनुसंवृजिनमित्येके पाठान्तरं कृत्वा, अन्ये यथापाठ एवामुमर्थमिच्छन्ति। तदेवंप्रकारमन्नमस्मा आहरति(? आहारयति) पूजयिता। हेतुकर्तृत्वादन्यः संस्कारकर्ताऽऽहरति। मातृद्व.

**तत्प्रतिगृह्णाति– 'द्यौस्ते ददातु पृथिवी प्रतिगृह्णातु पृथवी ते ददातु प्राणः प्रतिगृह्णातु। प्राणस्त्वाऽश्नातु प्राणः पिबतु' इति॥**

'द्यौस्ते' इत्यनेन तदन्नं प्रतिगृह्णाति पूज्यः। मातृद्व.

**'इन्द्राग्नी मे वर्चः कृणुताम्' इति यावत्कामं प्राश्य योऽस्य रातिर्भवति तस्मा उच्छिष्टं प्रयच्छति॥**

'इन्द्राग्नी मे' इत्यनया सकृदुक्तया यावत्कामं प्राश्य भुक्त्वेत्यर्थः। योऽस्य पूज्यस्य रातिर्भवति तस्मा उच्छिष्टं प्रयच्छति। अन्नपानीय एवोच्छिष्टदानम्, न सुरादौ, आचारविरोधात्। नापि शूद्राय, ज्ञातित्वाभावात्। मातृद्व.

**यं कामयेत न विच्छिद्येतेति 'यस्मिन् भूतं च भव्यं च सर्वे लोका इह श्रिताः। तेन त्वाऽहं प्रतिगृह्णामि त्वामहं ब्रह्मणा त्वा मह्यं प्रतिगृह्णाम्यसौ॥' इत्याचम्य॥**

यं रातिं न विच्छिद्येत मदधीनः स्यादिति कामयेत। स्वयमाचम्य। मातृद्व.

(१) हिग्. १९।४।२७–३३.

**भुक्तवतो दक्षिणं हस्तं गृह्णीयात् ॥**

तस्य व्रतोच्छिष्टस्य भुक्तवत आचान्तस्य दक्षिणं हस्तं 'यस्मिन्भूतम्' इत्यनेन गृह्णीयात् । तत्र 'असौ' इति संबुद्ध्या रातेर्नाम गृह्णाति । आचम्येत्यनुवर्तमाने पूजयिता तस्य हस्तं गृह्णीयादिति तन्मा भूत्, अतः पूज्य एव रातेर्गृह्णीयादित्येतदर्थं हस्तग्रहणम् । इदमनित्यम्, काम्यत्वात् । मातृवृ.

[१]**अथ सूपापूपादिभिरन्नमसा उपहरति तत् प्राश्नाति ॥**

## मानवगृह्यसूत्रम्

### अर्घ्यगणना

[२]**षडर्घ्यार्हा भवन्त्यृत्विगाचार्यो विवाह्यो राजा स्नातकः प्रियश्चेति ॥**

इदानीं तस्यैव ब्राह्मशौल्कादेर्धर्मस्याङ्गभूतं मधुपर्कमाह— षडिति । षडर्घ्यार्हा भवन्ति । षडृत्विगादयः, नान्ये । विवाहप्रसङ्गेन तदङ्गऋत्विगादेरेव लाघवार्थं श्रूयते इत्याह— ऋत्विगाचार्यः । तत्र ऋत्विक् यागकर्तोच्यते । आचार्यः उपनीयाध्यापयति । विवाह्यो जामाता । राजा अभिषेकगुणयोगाद्यं कुर्वन्ति । स्नातकः 'एतेन धर्मेण'( मागृ. १।२।६ ) इत्युक्तः । प्रियः सुहृत् श्वशुरादिः । आचार्यस्य विशिष्टस्याभिधानात्पृथगुपादानम्, ऋत्विगादेर्यागादिना न संबन्धः । अर्घ्यौ राजस्नातकौ त्वसंबन्धौ तौ । अष्टाभा.

### पुनरर्हणावधिः

**अप्राकरणिकान्वा परिसंवत्सरादर्हयन्ति ॥**

अप्राकरणिकान्वा । आचार्यादयः पञ्च अप्राकरणिकाः, ते चार्घ्यतमाः सन्तः । पुनरागतानपरिसमाप्ते संवत्सरे नैवार्हयेत् । परिगते त्वागताननर्हयन् दोषभाजनः स्यात्, विहितातिक्रमात् । अष्टाभा.

**प्राकरणिकाः कर्तारः सदस्याश्च वृताः ॥**

प्राकरणिकाः कर्तारः सदस्याश्च वृताः । ऋत्विजः कर्तार इत्यर्थः । ननु दर्शपौर्णमासादौ प्रकरणत्वादर्हणं स्यात् । भवतु, को दोषः ? समर्थः करिष्यति, स्वल्पमूल्यं वा कथंचित् । इतरथा त्वन्वाहार्यमात्रेण ऋत्विजः कथमर्हयेयुः ? यद्वा पशुसौत्रामण्यादिषु प्रकरणेष्वेव कर्तॄनर्हयेत् । तेषु नित्येष्वपर्याप्तस्य प्रतिनिधिः संस्मर्यते, न तु तथा दर्शपौर्णमासादौ । अन्ये तु 'सोमेऽर्हणीयान्यत्र' इति स्मृतिमुदाहृत्य व्यवतिष्ठन्ते । सदस्याश्च वृताः । चकारात्कर्तृसंज्ञका भवन्ति । कर्तृत्वादर्हणीया इत्यर्थः । वृता इति आमन्त्रिताश्चेत् । स्वयमागतानां तु सदाऽर्हणेऽपि परिनियमः, न तु स्नातकत्वात्सदाऽर्हणा स्यात् । न ह्यस्नातकः सदाऽर्हः । सत्यमपरिसंवत्सरान्तं सदस्यव्रतग्रहणम् । अन्ये त्वस्यार्थं न बुध्यन्ते तदा सत्वान्न प्रदर्शते । अष्टाभा.

### जीवत्पितृकार्हणविकल्पः

**'न जीवत्पितृकोऽर्घ्यं प्रतिगृह्णीयात्' इति श्रुतिः । अथवा प्रतिगृह्णीयात् ॥**

श्रुतिग्रहणमादरार्थम् । प्रतिषेधनश्च विकल्पः( ? ) । अथवेति न नियमः । अष्टाभा.

**अथैनमर्हयन्ति ॥**

अथेति प्रसक्तव्यपदेशार्थम् । एनमिति प्रकृतानुसरणार्थम् । एवमेनं विवाह्य( ? ह्यमिति ) प्रकृतेर्गम्यते । अन्ये तस्मादर्हतीति केचित्पठन्ति । विवाह्यमधिकृत्य जीवत्पितृकस्यापि कस्य विकल्पः ? तत्र जीवत्पितृकोऽपि विवाहयोऽर्घं प्रतिगृह्णाति । यस्माद्विकल्पात्पक्षेऽधिकारस्तस्मात्कारणादर्हतीत्यर्थः । एतच्च पितुरनुमतेन ग्रहणम् । अत एव श्रौतेनासंग्रहणेन विकल्पः । अन्यथा श्रुतेर्बलीयस्त्वात्स्मृतेर्वाऽवश्यं सर्वत्र न पितुरनुमतेन मधुपर्कग्रहणेऽधिकारः । अष्टाभा.

### मधुपर्कस्वरूपम् आचमनं च

**कांस्ये चमसे वा दधि मधु चाऽऽनीय वर्षीयसा पिधायाऽऽचमनीयप्रथमैः प्रतिपद्यन्ते ॥**

कांस्ये चमसे वा दधि मधु चाऽऽनीय वर्षीयसाऽपिधाय मधुपर्कं कल्पयतीति शेषः । कांस्यपरिमाणं वक्ष्यते । पात्रस्यार्थगृहीतस्य नियमार्थं कांस्यचमसग्रहणम् । तेन

( १ ) बाल. १।१५६ पृ. ४१५.

( २ ) मागृ. १।९।१–२७.

स्पन्दयादौ(?) न भवति । चमसा याज्ञिकेषु प्रसिद्धाः । नैषते प्रोधादि सोमपानपात्रम् । विकल्पश्च संभवापेक्षः कामापेक्षो वा । सोमपाय वा व्याकुर्यात् । ब्रह्मवर्चसकामस्य वा । तथा च प्रणीताप्रणयने तत्कामस्य कांस्य उक्तः । दधि च मधु च ते आनीय मिश्रीकृत्य वर्षीयसा पात्रेण पिधानं कुर्यात् । अपि वा न पात्रेण नियमः । कथमर्हति ? आचमनीयप्रथमैः प्रतिपद्यन्तेऽर्हणीयम् । एवं चोपक्लृप्तिरेवात्र प्रतिपादनम्, न ह्युपकल्पनादृते द्रव्याणामारम्भः संभवति । आचमनीयप्रथमानां क्रियमाणानामन्यपदार्थानामाचमनीयप्रथमेभ्योऽतिरिक्तानामभावात् तस्मादाचमनीयप्रथमद्रव्यं न कर्मभिरिति ।

अष्टाभा.

विष्टरादिप्रतीक्षणम्

**'विराजो दोहोऽसि विराजो दोहमशीय मयि दोहः पद्यायै विराजः कल्पताम्' इत्येकैकमाह्रियमाणं प्रतीक्षते ॥**

विराजो दोहः । एकैकमुदकादिकमाह्रियमाणं दातुमुद्यतं प्रतीक्षते पश्यतीत्यर्थः ।

अष्टाभा.

विष्टरोपचारः

**सावित्रेण विष्टरं प्रतिगृह्य 'अहं वर्ष्म सदृशानामुद्यतामिव सूर्यः । इदं तमभितिष्ठामि यो मा कश्चाभिदासति ॥' इति जपति ॥**

सावित्रेण । सावित्रग्रहणादन्यत्र पाद्याचमनीयादीनां तूष्णीं प्रतिग्रहणम् । 'अहं वर्ष्म' जपेन्मन्त्रम् ।

अष्टाभा.

**'राष्ट्रभृदसि' इत्याचार्य आसन्दीमनुमन्त्रयते ॥**

'राष्ट्रभृदसि' इति आचार्य आसन्दीमनुमन्त्रयते । अनेन मन्त्रेणाऽऽसन्दीमासनार्थमुपकल्पितामाचार्योऽनुमन्त्रयते । आसन्दीग्रहणमुपलक्षणार्थमाचार्यग्रहणं च, तेन राज्ञे सिंहासनसदृशं प्रदीयते । अन्यस्तु–एतत्सूत्रं केचिन्न पठन्ति । यदाहुः पठ्यते तदाऽर्थप्राप्तत्वादासने स्थाता ।

अष्टाभा.

**'मा त्वा दोषः' इत्यधस्तात्पादयोर्विष्टरमुपकर्षति ॥**

पाद्यादेस्त्रिर्निवेदनम्, पाद्योपचारः

**विष्टर आसीनायैकैकं त्रिः प्राह ॥**

**नैव भो इत्याह नम आर्षेयायेति श्रुतिः स्पृशत्यर्घ्यम् ॥**

आचमनीयविष्टरौ सकृद्ब्रूयात्, न त्रिरिति, 'विष्टरा-(? र आ)सीनाय' इति वचनात् । नैव भो इत्याह नम आर्षेयायेति च । नैव भोशब्देन च पाणिना संस्पृशति, पश्चात्तद्गृह्णातीत्येव ।

अष्टाभा.

**पाद्येन पादौ प्रक्षाल्य सावित्रेण मधुपर्कं प्रतिगृह्य प्रतिष्ठाप्यावसाय्य 'नमो रुद्राय पात्रसदे नमो रुद्राय पात्रसदे' इति प्रादेशेनाध्यधि प्रतिदिशं प्रदक्षिणं सर्वतोऽभ्युद्दिशति ॥**

पाद्येन पादौ प्रक्षालयेत् । पाद्येन पादप्रक्षालनं चात्र क्रियमाणं प्रग्रहीता दक्षिणमग्रे प्रक्षालयेत् । तथा च स्मृत्यन्तरम्– 'दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत्सव्यं शूद्राय' (आगृ. १।२४।९,१०) इति । सावित्रेण । असमानकर्तृकाः क्रियाः । अवसाय्य ओद्घाट्य । अध्यधि पात्रस्योपरि । सर्वतोऽभ्युद्दिशति आभिमुख्येन पुरस्तादारभ्य प्रदक्षिणं प्रादेशेन ऊर्ध्वं दिशति मधुपर्कं देवतायै मन्त्रवर्णात् रुद्राख्यायै सृजति । उपरिष्टाच्च । अन्यस्तु 'ओं नमो रुद्राय पात्रसदे' इति प्रतिष्ठापने च । मन्त्रगुणभूतत्वाच्च मन्त्रस्याऽऽवृत्तिः । उद्देशनं तूष्णीं प्रतिदिशम् । तथा च स्मृत्यन्तरे नानादैवमन्त्रवर्णात् 'वसवस्त्वा गायत्रेण च्छन्दसा भक्षयन्तु' (आगृ. १।२४।१४) इत्यादिभिर्मन्त्रैः । इह तूष्णीं प्रतिदिशन्ति इति विशेषः ।

अष्टाभा.

उपस्तरण–मधुपर्कप्राशन–पिधानानि

**'मधु वाता ऋतायते' इति तिसृभिरङ्गुल्या प्रदक्षिणं प्रत्यृचं त्रिरायौति ॥**

**'अमृतोपस्तरणमसि' इत्युपस्तरति ॥**

**'सत्यं यशः श्रीर्मयि श्रीः श्रयताम्' इति मधुपर्कं त्रिः प्राश्नाति ॥**

**'अमृतापिधानमसि' इत्याचामति ॥**

'मधु वाता ऋतायते' इति आङ्वालयति (?)। उपस्तरणम् अपोशानम्। प्राशनाचमने प्रसिद्धे। कर्मत्रयं त्रिभिः सूत्रैः समन्त्रकमुक्तम्। अष्टाभा.

शेषप्रतिपत्तिः

**सुहृदेऽवशिष्टं प्रयच्छति ॥**

सुहृदेऽवशिष्टं प्रयच्छेत्, नावश्यमवशेषयन्। सुहृद-संनिधाने नावशेषणं स्यात्तदा सुहृत्प्रयुक्तं (स्यात् ?)। सुहृदवशिष्टं प्राश्नीयादिति वक्तव्ये प्रयच्छतिग्रहणं सहैव पात्रेण प्रदानार्थम्। अष्टाभा.

गवोपचारः, करणपक्षः, समांसब्राह्मणभोजनम्

**असिपाणिर्गां प्राह ॥**

**'हतो मे पाप्मा पाप्मानं मे हत ओं कुरुत' इति प्रेष्यति ॥**

असिपाणिरिति। खड्गहस्तः गौरिति त्रिराहेत्यर्थः। 'हतो मे पाप्मा पाप्मानं मे हत ओं कुरुत' इति प्रैषो यदि कारयेत्। अष्टाभा.

**चतुरो ब्राह्मणान्नानागोत्रान्भोजयते ॥**

चत्वारः नानागोत्राश्चत्वारोऽन्ये। ब्राह्मणान् भोज-यित्वाऽन्य आशनीयः पञ्चमः सुहृत्त्वाच्चावशिष्टा युक्तम्। अष्टाभा.

**पश्वङ्गं पायसं वा कारयेत्। 'नामांसो मधुपर्कः' इति श्रुतिः ॥**

पश्वङ्गं छागस्य कारयेत् श्रीणापयेदित्यर्थः। तथा मनूक्तम्– 'क्रीत्वा स्वयं वा' (मस्मृ. ५।३२) इत्यादि। पायसं कारयेच्च क्षीरिकां रन्धयेद्वेति द्विविकासानूबन्ध्यापय-स्यावन्न प्रतिनिधिः। नामांसः। यत एवंविधा श्रुतिरमांसो मधुपर्को न भवति, ततः पश्वङ्गं (पायसं) वा कारये-दित्युक्तमित्यभिप्रायः। अष्टाभा.

उत्सर्जनपक्षः

**यद्युत्सृजेत्– 'माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः। प्र नु वोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट ॥ भूर्भुवः स्वरोमुत्सृजतु। तृणान्यत्तु' ॥**

यद्युत्सृजेत्। यदिशब्दो भौतानुवादः, मन्त्रवर्णात् 'मा गामनागामदितिं वधिष्ट' इत्यस्मात्। तेन अष्ट-कादावुत्सर्गसिद्धिः। अन्यस्त्वाह– 'नावेदविद्भुञ्जीत' इति श्रुतिरिति तत्रोक्ता यदि गवा पशुना वा कुर्वीते-त्युक्तं तेन व्यवस्थितम्। किमुत्सर्गानुत्सर्गौ विकल्पितौ ? तौ च युगापेक्षया द्रष्टव्यौ। अष्टाभा.

अलंकरणादि

**अथालङ्करणम्– 'अलङ्करणमसि सर्वस्मा अलं मे भूयासम्' ॥**

'अलङ्करणमसि' इत्यनेनालङ्करणं प्रतिबध्नाति। अष्टाभा.

**'प्राणापानौ मे तर्पय समानव्यानौ मे तर्पय उदानरूपे मे तर्पय सुचक्षा अहमक्षिभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासम्' इति यथालिङ्गमङ्गानि संस्पृशति ॥**

'प्राणापानौ मे तर्पय' इति यथालिङ्गं गात्रस्पर्श(न)म्। अष्टाभा.

**अथ गन्धोत्सादने वाससी ॥**

**'परिधास्ये यशो धास्ये दीर्घायुत्वाय जरदष्टिरस्तु। शतं जीवेम शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती। यशो भगश्च मा रिषद्यशो मा प्रतिमुच्यताम् ॥' इत्यहतं वासः परिधत्ते ॥**

गन्धोत्सादने। गन्धः चन्दनादि। उत्सादनम् उद्वर्तनं पक्वतैलादिना। केचिदुत्सादनं पूर्वमिच्छन्ति। तेषामलङ्क-रणेनापि पूर्वं स्यात्। अन्यस्तु गन्धाच्छादने। गन्धो विज्ञेयः। आच्छादनं च परिधानम्। अत एवाऽऽह– 'अहतं वासः परिधत्ते' इति। तदुक्तं तस्य स्नानात्पूर्वं केचिन्मधुपर्कप्राशने कृते दानेऽधिकारः। 'परिधानस्य-(? परिधास्ये)' इत्यनेन परिधत्ते। एकवचनमतन्त्रम्, तेन द्वे वाससी भवतः। अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

अर्हणानुज्ञापनम् , मधुपर्कस्वरूपम् , उपचारक्रमः , आसनपाद्ययोरुपचरणम्

'अथार्घ्यम्। जिहीर्षन्नर्घ्यं वेदयते जिहीर्षामेति। कुरुतेत्याह। कंसे दध्यानीय मध्वानयति। ह्रसीयस्यानीय वर्षीयसाऽपिदधाति। पूर्वैः कूर्चैन प्रतिपद्यते। अन्वङ् पाद्येनान्वङ्ङर्घ्येणान्वङ्ङाचमनीयेनान्वङ् मधुपर्केणानुसंव्रजति। अथास्मा आसनमिति वेदयते। तत्प्रतिमन्त्रयते– 'राष्ट्रभृदस्याचार्याऽऽसन्दी मा त्वद्योषम्' इति राजा ब्राह्मणो वा। 'राष्ट्रभृदस्यधिपत्यासन्दी मा त्वद्योषम्' इति ग्रामणीः सेनानीर्वा। अथास्मै पाद्यमिति वेदयते। तत्प्रतिमन्त्रयते– 'आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे। अस्मिन्कुले ब्रह्मवर्चस्यसानि मयि महो मयि यशो मयीन्द्रियं वीर्यम्॥ आ मा गन्यशसा वर्चसा संसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्' इति। सव्यं पादं प्रतिगृह्य दक्षिणं प्रतिगृह्णीयात्। दक्षिणं राजा ग्रामणीः सेनानीर्वा॥

अर्घ्यादिगवान्तोपचाराः

अथास्मा अर्घ्यमिति वेदयते। तदेतेनैव प्रतिमन्त्र्य 'विराजो दोहोऽसि विराजो दोहमशीय मयि दोहः पद्यायै विराजः' इति प्रतिगृह्य निनयति– 'समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत। अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः॥' इति। अथास्मा आचमनीयमिति वेदयते। आचामति– 'अमृतोपस्तरणमसि' इति। आचान्तोदकायाथास्मै मधुपर्क इति वेदयते। तत्प्रतिमन्त्रयते– 'यन्मधुनो मधव्यं परममन्नाद्यं रूपं तेनाहं मधुनो मधव्येन परमेणान्नाद्येन रूपेण परमोऽन्नादो मधव्यो भूयासम्' इति। प्रतिगृह्य प्राश्नाति – 'त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्' इति। 'भूर्भुवः सुवः' इति त्रिराचम्याथ रातये प्रयच्छति स्वयं वा सर्वं प्राश्नाति। अथास्मा आचमनीयमिति वेदयते। आचामति– 'अमृतापिधानमसि' इति। आचान्तोदकायाथास्मै गौरिति वेदयते। तां प्रति मन्त्रयते– 'गौरस्यपहतपाप्माऽप पाप्मानं जहि पाप्मानं मम चामुष्य च जहि द्विषन्तं हनीथा मम द्विषं कुरुत' इति॥

भोजनदानम् , गवोत्सर्जनपक्षः

'अथास्मा अन्नं संस्कृत्य भूतमिति वेदयते। तत आह ब्राह्मणांश्चतुरो नानागोत्रान्भोजयतेति। तेषु भुक्तवत्स्वन्नमाहरन्ति। तदेतेनैव प्रतिमन्त्र्य प्रतिगृह्य प्रत्यवरुह्य प्राश्नाति यथा मधुपर्कम्। प्रत्यवरुह्यैवात ऊर्ध्वमन्नानि प्राश्नीयादित्येकम्। अथैतदपरम्। अर्घ्येष्वेवैष नियमः स्याद्यथाकामीतरेषु। अथ यदि गामुत्सृजेत्तामभिमन्त्रयते – 'गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः। प्र णु वोचं चिकितुषे जनाय मा गा(मनागा)मदितिं वधिष्ट॥ पिबतूदकं तृणान्यत्तु। ओमुत्सृजत' इति॥

उत्सर्जनपक्षे समांसभोजनदानम्

अथास्मा अन्नं मांसेन घृतेन वोपहरति तत् प्राश्नाति॥

## काठकगृह्यसूत्रम्

अर्हणीयगणना

'षडर्घ्यार्हा भवन्त्याचार्य ऋत्विग्राजा विवाह्यः प्रियः स्नातक इति॥

(१) भागृ. २।२३–२५. सं. का. २४५

(१) बाल. १।१५६ पृ. ४१५. (२) कागृ. २४।१–२१.

(१) विवाहात्पूर्वमेव पाद्यार्घमधुपर्कैर्विवाह्यः श्वशुरेण पूजनीयः । तुल्यं च पूजाविधानं षण्णामपीति षण्णामुद्देशः । अर्घ्यं पूजामर्हन्तीति अर्घ्यार्हाः षड् भवन्ति । आचार्यः उपनेताऽध्यापयिता च शिष्यस्य । ऋत्विग्याज्यस्य । तस्यापि प्राक् कर्मणः संमानः । राजा क्षत्रियः । स त्वभिषेकभावेन सदा जनपदस्य पूज्यः । विवहनमर्हतीति विवाह्यः । 'अर्हे कृत्यतृचश्च' (पासू. ३।३।१६९) इति कृत्यो ण्यत्प्रत्ययः । स कन्यायाः पितुरर्घ्यार्हः । तथा यो यस्य प्रियो गुणोत्कर्षेण स तस्य दानाद्यवसरेऽर्घ्यार्हः । स्नातकस्तु सद्यःस्नात आचार्यस्य ।

¶ देव.

(२) अनन्तरं श्वशुरगृहप्राप्तस्य मधुपर्केणार्हणं पूर्वं क्रियते । ब्रह्मदेयाविधानस्य सर्वोऽयमितिकर्तव्यताकलापः प्रस्थानान्तः । तेन शङ्का न कर्तव्या कन्याप्रदानादनन्तरं मधुपर्क इति, मधुपर्कादनन्तरं ब्रह्मदेयाविधानस्योपपन्नत्वात् पूजापूर्वकत्वाच्च दानस्य । केचित्– विवाहस्योपरिष्टात् मधुपर्कविधिः पठ्यत इति तत्रैव मधुपर्कं ददाति, तदेव कन्यादाने निवृत्तेऽसौ विवाह्य इति वदन्तः( ? न्ति ) । सर्वदेशसमाचारस्तु विवाहात्पूर्वं मधुपर्कदानम् । अतस्तदेव साधीयः । अतोऽत्रैव व्याख्यास्यामः । आदौ तावन्मधुपर्काणां विधिरुच्यते । षडर्घ्यार्हा भवन्ति । अर्घ्यं पूजामर्ह( य ? )न्ति ये ते अर्घ्यार्हाः । षडिति नियमः । आवि.

**अथैनमर्हयन्ति ॥**

अथशब्दो वक्ष्यमाणप्रकारस्वीकारार्थः, निपातानामनेकार्थत्वात् । एनमाचार्यादीनामन्यतमं वक्ष्यमाणप्रकारेणार्हयन्ति पूजयन्ति संमानयन्ति । † देव.

कर्मादौ कर्तव्यता

**आदौ च कर्मणः ॥**

(१) * विवाहोत्तरकालमर्हणं विहितमिति 'यथाचोदितमानुपूर्व्यम्' इति नयेन विवाहादूर्ध्वमेव मधुपर्का-

¶ ब्राह्म. देवगतम् ।

† आवि. देवगतम् ।

* ग्रन्थोऽयं विरोधाकुल इव भासते । तथाहि– अस्मदुपलब्धयोर्द्वयोरप्यादर्शपुस्तकयोरियं मधुपर्ककाण्डिका चतुर्विंशत्वेन, विवाहकाण्डिका च पञ्चविंशत्वेन पठिता । यदीममेव पाठक्रमं विवाहोत्तरमधुपर्कार्हणाभिमानिनः पूर्वपक्षिणोऽभ्युपागमिष्यन्, तदा विवाहकाण्डिकोत्तरं मधुपर्ककाण्डिकामपाकक्ष्यन् । विवाहकाण्डिकोत्तरमेव तु मधुपर्ककाण्डिकापाठमभ्युपगच्छतां तेषां कथमपकर्षस्य संभवः ? किंच, 'तन्निरासायेदम्' इत्यपि न मनोरमम् । अत्र केचिच्छब्दोपात्ताः पूर्वपक्षिणः काठकसूत्रानुयायिन एवेति निर्विवादम् । कथमेतत्सूत्रं पश्यन्तोऽपि ते विवाहादूर्ध्वं मधुपर्कार्हणं प्रतिपद्येरन् ? कथं वा एतत्सूत्रप्रतिपाद्यमनुष्ठानक्रममनादृत्य पाठक्रमं समाद्रियेरन् ? यदि एतत्सूत्रतात्पर्यविषयेऽपि तेषां विप्रतिपत्तिस्तदा कथं तन्निरासमपि फलत्वेतत्सूत्रम् ? तस्माद्व्याकुलोऽयं ग्रन्थो नालमर्थबोधनाय ।

किंच, इदमपि प्रसङ्गतोऽत्र सुधीभिर्विवेचनीयम्– मधुपर्ककाण्डिकाया आर्षः पाठो विवाहकाण्डिकातः पूर्वं वा ऊर्ध्वं वेति । तत्रेयमस्माकं प्रतिपत्तिः– 'विवाहोत्तरकालमर्हणं विहितम्' इत्येवमन्त्यः, '-अत्र भर्तृगृहगमनावसरे मधुपर्ककाण्डिका पठ्यते' इति विवाहकाण्डिकाव्याख्यानान्तिमश्च देवपालग्रन्थः, तथाऽत्रत्यप्रथमसूत्रे 'विवाहस्योपरिष्टान्मधुपर्कविधिः पठ्यते' इत्यादिस्वदर्शनग्रन्थश्च सिद्धान्तिना अनिरस्तत्वात्सिद्धानुवादः प्रतीयते । 'अतोऽत्रैव व्याख्यास्यामः' इत्यादिस्वदर्शनग्रन्थस्यापि विवाहोर्ध्वपाठे एव स्वारस्यं प्रतीमः । देवपालेन तु 'यथाचोदितमानुपूर्व्यम्' इति न्यायं विवाहोर्ध्वपाठाभिप्रायेण पूर्वपक्षे प्रवर्त्य विवाहपूर्वानुष्ठानरूपसिद्धान्ते न केवलं तस्य विरोधो न परिहृतः, प्रत्युत 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायान्तरेण तस्य बाधमभिदधानेन विवाहोर्ध्वपाठे स्वसंप्रतिपत्तिरपि स्फुटमवगमिता । ब्राह्मणबलस्तु विशिष्य पाठानुष्ठानक्रमचर्चायामुदासीनोऽपि विवाहपूर्वमेव मधुपर्कानुष्ठानमभिदधानो यद्यपि विवाहपूर्वपाठे स्वस्य प्रमाणभावं संभावयति,

दिदानं कर्तव्यमिति केचित्प्राहुः । अत एव च विवाहोत्तरकाले एवेदमपकृष्य व्याचक्षते । तन्निरासायेदम् । कर्मण आदावेव पूजनं कर्तव्यम्, पाठक्रमादर्थक्रमस्य बलीयस्त्वात् । संस्कारो ह्ययमुत्साहादिजननमुखेन ऋत्विक्प्रभृतीनां कर्मणि योग्यताविशेषाधानार्थः संवृत्ते यज्ञविवाहादिके कर्मणि ऋत्विक्प्रभृतीनां क्रियमाणो निष्फल एव स्यात् । स्मार्तोऽपि चायं संस्कारः । स्मृतिषु च प्रागेव कर्मणोऽभिहितः । किंच विवाह्य इत्यर्हे आवश्यके वा कृत्यः, विवहनमर्हतीति विवहति वाऽवश्यं कन्यामिति विवाह्यः, 'अर्हे कृत्यतृचश्च' 'आवश्यकाधमर्ण्ययोर्णिनिः' 'कृत्याश्च' (पासू. ३।३।१६९–१७१) इति स्मृतेः । न च विवाहादूर्ध्वं विवाहार्हो भवति । देव.

(२) चशब्दात्प्रतिसंवत्सरं च । तदुक्तम्– 'विवाहयज्ञयोरर्वाक्कर्मणः' तथा 'यज्ञं प्रत्यृत्विजः पुनः' इति । आवि.

अर्घ्यलक्षणम्

**अर्घ्यमुदकं सौषधं दर्भा इति ॥**

(१) अर्घ्यलक्षणमाह– अर्घ्यमिति । उदकम्, व्रीहियवयोश्चान्यतरत्, दर्भा एतत्त्रयमर्घ्यम् । देव.

(२) उदकं सौषधं सतण्डुलाक्षतबदरादि । * आवि.

मधुपर्कलक्षणम्

**कंसे चमसे वा दध्यासिच्य मधु च वर्षीयसा पिधाय विष्टराभ्यां परिगृह्य पाद्यप्रथमैः प्रतिपद्यन्ते ॥**

(१) मधुपर्कलक्षणपूर्विकां पूजयितुरनुपदेशां पूजाप्रतिपत्तिमाह– कंस इति । अत्र पूजयितारः इत्यर्थाल्लभ्यते । कांस्यपात्रे चमसे वा दारुपात्रविशेषे दध्यासिच्यते मधु च, (मधु ?) (सः) मधुपर्क उच्यते । तच्च मधुपर्कपात्रं बृहता पात्रेण पिधाय स्थगयित्वा विष्टराभ्यां गृहीत्वा पाद्यं प्रथमं येषां पाद्यार्घ्यमधुपर्काणां तैर्यथायोग्यमूर्ध्वमधो मध्ये च पूजां स्वयमेव प्रतिपद्यन्ते पूजयितारः, न तु तत्राप्युपदेशमपेक्षन्ते । देव.

(२) अर्घ्यार्थमागतं बुद्ध्वा प्रत्युत्थाय स्वागतमित्युक्त्वा स्वयमेव तस्य पादप्रक्षालनं विधाय तं हर्षयन् गृहं प्रवेशयेत् । ब्राह्म.

(३) विष्टराभ्यां दर्भसटाभ्यां परिगृह्याधस्तादुपरिष्टाच्च पाद्यप्रथमैर्द्रव्यैरुपक्रमन्ते । आवि.

पाद्याद्यनुमन्त्रणम्

**'मयि दोहोऽसि विराजो दोहः पाद्यायै विराजो दोहमशीय' इत्याह्रियमाणमनुमन्त्रयते ॥**

कन्यायाः दातरि विवाह्यस्य निकटीभूते सति ऋत्विक् पाद्यादिकं कन्यादातृसमीपमानाययति । तदानीयमानमनेन मन्त्रेण विवाह्योऽनुमन्त्रयते । अमन्त्रज्ञश्चेद्विवाह्यस्तदा ऋत्विगेवैनं पाठयति । एवं सर्वत्र ज्ञेयम् । अयं मन्त्रार्थः– 'दुह प्रपूरणे' । दोहः प्रपूरकः आप्यायकः । विराट् स्वर्गादौ प्रजातिः । पाद्यादिकमुच्यते– हे पाद्यादिक, यस्त्वं मयि मन्निमित्तो मदर्थो दोहः प्रपूरकः स विराजः प्रजापतेः दोहः पूरकः, जलादेः प्रजापतिना दिवो नियुक्तत्वात् । अतो मम पाद्यायै प्रतिपत्तये त्वं भव । विराजश्च प्रजापतेः संबन्धिनं दोहं पाद्यादिकमहमश्नीय व्याप्नुयां पश्येयमित्यर्थः । पाद्यस्य संस्कारार्थे दर्शनम् । $ देव.

विष्टरोपवेशनम्

**'विष्टरोऽसि मातरि सीद' इति विष्टरमास्तीर्य तस्मिन्नुपविशति ॥**

'विष्टरोऽसि' इत्यादिना मन्त्रेणाऽऽसनान्तरस्योपरि दर्भविष्टरमास्तीर्य विवाह्य उपविशति तूष्णीम् । हे

---

तथापि पूर्वोक्तप्रमाणापेक्षया स दुर्बलतां धत्ते । तस्मात् पूर्वोक्तैः प्रमाणैर्विरुद्धप्रबलप्रमाणोपलब्धिं यावत् मधुपर्ककाण्डिकाया विवाहकाण्डिकोर्ध्वपाठ एव आर्ष इति प्रतिपद्यामहे । अत एव अनुष्ठानक्रमानुरोधेन वा भाष्याद्यनुरोधेन वा मधुपर्ककाण्डिकाया विवाहकाण्डिकातः पूर्वं मुद्रणेऽपि पञ्चविंशत्वेनैव तस्याः संख्यानमुचितमिति भाति ।

* शेषं देवगतम् ।

$ ब्राह्म. देवगतम् ।

विष्टर, असि त्वं विष्टरः विष्टरो भवसि, अत आच्छादयाऽऽसनान्तरम् । आच्छादनार्थमेव मातरि आसनान्तरे सीद तिष्ठ । $ देव.

पाद्यादेस्त्रिर्निवेदनम्

**विष्टर आसीनायैकैकं त्रिः प्राह ॥**

विष्टरे दर्भाच्छादितासनविशेषे आसीनायोपविष्टाय विवाह्याय पाद्यादीनामेकैकं त्रिः प्राह कन्याया दाता— 'पाद्यं पाद्यं पाद्यम्, अर्घ्यमर्घ्यमर्घ्यम्, मधुपर्को मधुपर्को मधुपर्कः, आचमनीयमाचमनीयमाचमनीयम्' इति । आसीनायेति सप्तम्यर्थे चतुर्थी, विष्टरे आसीने विवाह्ये इत्यर्थः । ‡ देव.

भो- नामभ्यां संबोधननिषेधः

**नैव भो इत्याह न मार्षेति ॥**

( १ ) अभ्यर्हणीयस्याऽऽभिमुख्यापादनाय यत् भो इति पूजासंबोधनं प्राप्तम्, नामसंबोधनं च मार्ष ब्रह्मदत्त इत्यादि तन्निषेधयति । ‡ देव.

( २ ) भगवन्निति पूज्यसंमाननवचनमत्र ब्रूयात्, नैव भो इति, न मार्षेति । ब्राह्म.

पाद्योपचरणम्

**'शं नो देवीः' इत्यपोऽभिमन्त्र्य पाद्याभिः प्रक्षालयते— 'दक्षिणं पादमवनेनिज इदमहमस्मिन् कुले ब्रह्मवर्चसं दधामि । उत्तरं पादमवनेनिज इदमहं मां मयि तेजो वीर्यमन्नाद्यं प्रजां पशून् ब्रह्मवर्चसं दधामि' इति ॥**

( १ ) 'शं नो देवीः' इत्यादिमन्त्रैः पूर्वव्याख्यातैरपोऽभिमन्त्र्य विशेषेण पाद्याभिः पादयोर्धावनसमर्थाभिः पादौ प्रक्षालयतेऽभ्यर्हणीयस्य कन्याया दाता । पादयोः प्रक्षालने यथालिङ्गं मन्त्रौ दक्षिणमित्यादि, उत्तरमित्यादि । इदमित्यनेन सद्यःफलं दर्शयति कन्याप्रदानं विवाहान्तरसाधितं च तत्क्षणादेव कर्मानुष्ठानादिसंबन्धिरूपम् । अस्य विवाह्यस्य ब्रह्मवर्चससंपन्नम् । उत्तरं वामपादमवनेनिजे शोधयामि । इदमहं तेजो वीर्यमन्नाद्यं प्रजां पशून् ब्रह्मवर्चसं दधामि विवाह्यादिकेऽर्घ्यार्हे । मां मयि । यत्तु मां प्राप्तं तेजःप्रभृति तन्मय्येव चिरमस्त्वित्यर्थः । देव.

( २ ) 'भगवन्, पाद्यं पाद्यं पाद्यम्' इति पाद्ये निवेदिते पाद्यपात्रं दक्षिणेन पाणिनाऽऽदाय तत्सव्ये पाणौ निधाय 'शं नो देवीः' इत्यपोऽभिमन्त्र्य । ... ताभिर्यथालिङ्गं वर एव स्वयं पादाववनेनिज्यात् । * ब्राह्म.

अर्घ्य-मधुपर्कोपचरणम्, शेषप्रतिपत्तिः

**अपोहिष्ठीयाभिरर्घ्यं परिगृह्य सावित्रेण मधुपर्कं 'विष्टरोऽस्यन्तरिक्षमधिविश्रयस्व' इति विष्टरमवकृष्य 'उरु त्वा' इत्यपसार्य 'तच्चक्षुः' इति वीक्ष्य 'पृथिव्यास्त्वा' इति विष्टरे निधाय 'मधु वाता ऋतायते' इति तिसृभिः प्रदेशिन्या प्रदक्षिणमालोडयति ॥**

( १ ) 'आपो हि ष्ठा' इत्यादिभिर्व्याख्यातार्थाभिरर्घ्यं प्रतिगृह्णाति । 'देवस्य त्वा' इत्यादिना 'मधुपर्कं प्रतिगृह्णामि' इत्यध्याहारपूरितेन सवितृदेवताकेन मन्त्रेण मधुपर्कं प्रतिगृह्णाति । 'विष्टरोऽसि' इति मन्त्रेणोपरितनं विष्टरमपकर्षति । अपकृष्य चाऽऽक्षिप्य 'उरु त्वा' इति मन्त्रेणापसारयति । 'तच्चक्षुः' इत्यादिना मधुपर्कं वीक्ष्य 'पृथिव्यास्त्वा' इत्यादिना मन्त्रेणाधस्तने विष्टरे मधुपर्कपात्रं निदधाति । 'मधु वाता ऋतायते' इति तिसृभिरङ्गुष्ठसमीपवर्तिन्या प्रदेशिनीसंज्ञयाऽङ्गुल्या प्रदक्षिणं कृत्वा दधिमधुनी मिश्रयति । प्रदिशति तर्जयति तच्छीला प्रदेशिनी तर्जनी ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां मधुपर्कं प्रतिगृह्णामि ॥

देवस्य दानद्योतनादिगुणकस्य सवितुरादित्यस्य प्रसवेऽनुज्ञायां वर्तमानाः( ? वर्तमानयोः ) अश्विनोर्देवभिषजो-

---

$ ब्राह्म., आवि. देवगतम् ।

‡ आवि. देवगतम् ।

* आवि. ब्राह्मगतम् ।

बाहुभ्यां पूष्णश्च हस्ताभ्याम् , न तु स्वाभ्यां चर्ममयाभ्याम् , मधुपर्कं प्रतिगृह्णामि ।

विष्टरोऽस्यन्तरिक्षमधिविश्रयस्व ॥

असि त्वं विष्टरः मिथ्यैवाऽऽवारकः , अतोऽस्मादधस्तनविष्टरादपसर, अन्तरिक्षमाकाशमाश्रय ।

उरु त्वा वाताय ॥

हे विष्टर, त्वामहं पृथिव्यां प्रक्षिपामि, अतः उरु दूरं गच्छ । किमर्थम् ? वाताय वाय्वर्थम् ।

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥

तदेतच्चक्षुः शस्तं यद्देवहितं सत्पुरस्तादुच्चरति, तदेव कृतकरणीयं चक्षुः देवार्थं हविरादिवीक्षण( ? वीक्षणेन)यागदानहोमादिषु साधनभावं भजत इत्यर्थः । कीदृशम् ? शुक्रं शुक्लम् । अत आशास्महे वयं यागादिसाधनानि वर्षशतं पश्येम, तदर्थमेव संवत्सरशतं जीवेम ।

पृथिव्यास्त्वा नाभौ साधयामि ॥

हे मधुपर्क, त्वामहं पात्रस्थमपि सन्तं नाभावधस्तने दर्भविष्टरे साधयामि । धान्यानि हवींषि वेदिप्रस्तरे साध्यन्ते । पृथिव्या हि सारमोषधयः , तासामपि दर्भाः, इति नाभित्वं दर्भविष्टरस्य ।

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥

मधु नक्तमुतोषसा मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता ॥

मधुमान्नो वनस्पतिमधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥

वाता वायवः मधु सन्तु मधुरसपर्यवसायिनो भवन्तु । कस्मै ? ऋतायते ऋतं सत्यं यज्ञं वा य इच्छति, तस्मै । सिन्धवो नद्यः मधु क्षरन्ति क्षरन्तु स्रवन्तु । तथा ओषधयः फलपाकान्ताः व्रीह्यादयो मधुमत्योऽस्माकं सन्तु । नक्तं रात्रिप्रथमभागः मधुमान्नो भवतु , उत अपि च उषसा रात्रिपश्चिमभागेन सह । मधुमत्पार्थिवं रजः । रजो भूमिलोक उच्यते धूलिर्वा । द्यौर्द्युलोकः मध्वस्तु मधुरसस्यन्दिनी वृष्ट्यादिद्वारेण भवतु । कीदृशी द्यौः ? पिता पालयित्री । वनस्पतिः फली मधुमानस्माकं भवतु । एवमस्माकं सूर्यो मधुमान् भवतु । अनेन कर्मणा गावश्च मधुमत्यो नः सन्तु, क्षीरादिदानद्वारेण मधुरसाः ।

देव.

( २ ) 'भगवन्नर्घ्यमर्घ्यमर्घ्यम्' इति त्रिरुक्ते पाद्यपात्रवदर्घ्यपात्रमादाय 'आपो हि ष्ठा' इति तिसृभिः शिरसि कुशपवित्रेणापः क्षिपेत् । 'भगवन्मधुपर्को मधुपर्को मधुपर्कः' इति त्रिराह दाता । 'देवस्य त्वा' इति मन्त्रेण 'मधुपर्कं प्रतिगृह्णामि' इत्यञ्जलिना प्रतिगृह्य सव्ये पाणौ निदधाति । † ब्राह्म.

**'वसवस्त्वाऽग्निराजानो भक्षयन्तु' 'पितरस्त्वा यमराजानो भक्षयन्तु' 'रुद्रास्त्वा सोमराजानो भक्षयन्तु' 'आदित्यास्त्वा वरुणराजानो भक्षयन्तु' 'विश्वे त्वा देवा बृहस्पतिराजानो भक्षयन्तु' इति प्रदक्षिणं प्रतिदिशं प्रतिमन्त्रं पात्रस्यान्तेषु लेपान्निमार्ष्टि ॥**

( १ ) प्राच्या आरभ्य प्रदक्षिणं कृत्वा भक्षयन्त्वन्तैर्मन्त्रैर्मधुपर्कपात्रप्रान्तेषु अङ्गुलिलेपान्निमार्ष्टि । प्रतिदिशं प्रतिमन्त्रमिति वचनात् पञ्चमेन मन्त्रेणार्थात्पूर्वोक्तदिक्कोणे निमार्जनमापतति । मन्त्रार्थस्तु— हे लेप, प्राच्यां दिशि वर्तमाना वसवो देवताविशेषाः त्वां भक्षयन्तु, वसवस्त्वया तृप्ता भवन्त्वित्यर्थः । कीदृशा वसवः ? अग्निराजानः अग्निर्येषां राजा । तत्पुरुषे हि समासान्तः स्यात् । एषा योजना सर्वमन्त्रेषु तुल्या । देव.

( २ ) 'विश्वे त्वा देवाः' इत्युत्तरार्धं एव ।

ब्राह्म.

( ३ ) 'वसवस्त्वा' इति पात्रान्ते प्राच्या आरभ्य दक्षिणाङ्गुलेर्लेपान्निमार्ष्टि शोधयति । पञ्चमेनोत्तरत एवान्तरतः , अवरेकात् । आवि.

**'यन्मधुनो मधव्यस्य परमस्यान्नाद्यस्य परममन्नाद्यं रूपं तेनाहं मधुनो मधव्यस्य**

† शेषं देवगतम् , आवि. ब्राह्मगतम् ।

**परमस्यान्नाद्यस्य परमोऽन्नादो मधव्यो भूयासं त्रय्यै विद्यायै यशोऽसि श्रियै यशोऽसि यशसे ब्रह्मणो दीप्तिरसि सत्यश्रीर्यशःश्रीर्मयि श्रीः श्रीः श्रयताम्' इति मधुपर्कस्य चतुष्प्राश्नात्यङ्गुष्ठद्वितीयाभिः। कनिष्ठया प्रथमम्। एवमनुपूर्वं सर्वाभिः। तदवशिष्टं सुहृदे प्रयच्छति ॥**

(१) 'यन्मधुनः' इत्यादिमन्त्रेण मधुपर्कस्य संबन्धिनो भागानङ्गुष्ठसहितया एकैकयाऽङ्गुल्या गृहीत्वा चतुरो वारानश्नाति। अङ्गुष्ठसहितया कनिष्ठया प्रथमम्, ततोऽनामिकया मध्यमया प्रदेशिन्या प्रत्येकमङ्गुष्ठसहितया। अवदानचतुष्टये गृहीते यच्छिष्यते तत्सुहृदे कनीयसे भ्रातृप्रभृतये प्रयच्छति। मन्त्रार्थस्तु— पृथिव्यादीनि भूतानि मध्विवामृतमिव, मधव्यं मधुसारः अमृतसारः सारसार इत्यर्थः। यन्मधुनोऽमृतस्य संबन्धि मधव्यं सारसारः पृथिवीति, 'इयं पृथिवी सर्वेषां भूतानां मधु' इत्यादिना बृहदारण्यके पृथिव्या भूतसारत्वेन प्रतिपादनात्। तस्य मधव्यस्य पृथिवीलक्षणस्य सारसारस्य यत्परममुत्कृष्टतमं रूपमन्नादिलक्षणम्, तेन भुक्तेनाहं मधव्यस्य सर्वामृतसारस्य मधुनोऽमृतस्य नित्यानन्दरूपस्य परमस्य परमात्मतादात्म्यवृत्तेरन्नाद्यस्यादनीयस्य सुसंवेदनभोग्यस्य परमोऽन्नादः परमात्मस्वरूपः, तत्र लयात्, भूयासम्, ब्रह्मभूयमहं गच्छेयमिति यावत्। किञ्च, हे मधुपर्क, असि त्वं त्रय्यै विद्यायै वेदत्रयस्य यशः प्रकाशः, तथा श्रियै संपदो यशः प्रकाशोऽसि, अतो यशसे त्वामश्नामि। किञ्च ब्रह्मणः परमात्मनः दीप्तिः प्रकाशस्त्वम्, सत्यस्य वेदार्थस्य श्रीः संपदसि, यशसश्च श्रीः, अतो मयि श्रीः श्रीः श्रयतां भूयो भूयो मयि श्रीस्तिष्ठत्वित्यर्थः। * देव.

(२) 'यन्मधुनः' इति चतुर्वारान्प्राश्नाति। कथम्? अङ्गुष्ठद्वितीयाभिरङ्गुलिभिः। अङ्गुष्ठो द्वितीयो यासां ता अङ्गुष्ठद्वितीयाः। एवमानुपूर्व्येण। सर्वाभिरित्यस्यातिरिच्यमानत्वात्पञ्चमं प्राशनमिच्छन्ति। तच्च शब्दे(न) विना न लभ्यते, अतोऽनुपपन्नम्। तदवशिष्टं सुहृदे प्रयच्छति। शिष्टमिति वक्तव्ये तदवशिष्टग्रहणं स्वयं वा प्राश्नीयादित्येवमर्थम्। गृह्यान्तरेषु च दृश्यत एव प्राशनम्। आवि.

उपस्तरणम्

**आचामति— 'अमृतोपस्तरणमसि' इति ॥**

अनेन मन्त्रेणाऽऽचामति। हे आचमनोदक, अमृतस्य मधुपर्कस्य उपस्तरणमाच्छादकमसि। देव.

गवोपचरणम्, करणपक्षः

**तस्मा असिपाणिर्गां प्राह ॥**

अर्हयिता दत्तमधुपर्कः सन् खड्गपाणिर्भूत्वा तस्मै अर्हणीयाय भक्षितमधुपर्काय गामाह 'गां करिष्ये' इत्यनुज्ञां प्रार्थयते अन्यार्थेनेत्यर्थः। गोश्च करणं निपातनम्। * देव.

**तां शास्ति— 'मम चामुष्य च पाप्मानं जहि हतो मे पाप्मा पाप्मानं मे हत, ओं कुरुत' इति ॥**

(१) तां गां शास्ति 'ओं कुरुष्व' इत्यनुज्ञामर्हणीयो ददातीत्यर्थः। अर्हयिताऽमुं मन्त्रमाह— मम चेति। हे गौः, मम चाग्निशर्मणः, अमुष्य च विष्णुशर्मणः पूज्यस्य यदुद्देशेन वैदिकविधिपरवशीकृतोऽहमिदमकर्तव्यं करोमि तस्य पाप्मानं जहि नाशयेति यावत्। अथवा हतो मे पाप्मा, नास्त्यतः कर्मणो मम पापम्, विधिचोदितत्वादित्यर्थः। हे विशसितारः, मम पाप्मानं हत नाशयत। ओं कुरुतेतीति। गौः क्रियतामित्यनुजानातीत्यर्थः। देव.

(२) 'मम चामुष्य च' इत्यादिना 'ओं कुरुत' इत्यन्तेन मन्त्रेण वरानुज्ञातस्तामसिना शास्ति। अमुष्येति षष्ठ्यन्तं दातुर्नामोदीरणम्। ब्राह्म.

(३) तां गामनुशास्ति अर्होऽनुमन्यते चेत्। अनुशासनं प्रेषणं क्रियायोगः। अमुष्येत्यत्रार्हयितुः षष्ठ्यन्तं

* ब्राह्म. देवगतम्।

* ब्राह्म., आवि. देवगतम्।

नाम । यथा 'मम देवदत्तस्य च पाप्मानं जहि' इति । आवि.

ब्राह्मणभोजनम्

**चतुरो नानागोत्रान्ब्राह्मणान् भोजयेत् ॥**

(१) नानागोत्रान्नानाप्रवरांश्चाऽऽदौ चतुरो ब्राह्मणान् भोजयेत् । पश्चात् सबान्धवमर्हणीयम् । देव.

(२) तया चतुरः पृथग्गोत्रान्विप्रानाशयेत् । ब्राह्म.

(३) तया गवा प्रकृतया पूर्वं चतुरो नानागोत्रान् ब्राह्मणान् भोजयेत् । आवि.

**एष आद्य उपायः ॥**

(१) एष आद्यो ब्राह्मणायोपायो गोकरणादिक उपदिष्टः । तेन नात्र विचिकित्सा कर्तव्येत्यर्थः । देव.

(२) एष प्रथमः कल्पः कलौ तु निषिद्धः । ब्राह्म.

उत्सर्जनपक्षः, मांसान्तरं प्रतिनिधिः

**यद्युत्सृजेत् 'माता रुद्राणाम्' इति जपेत् । 'माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये विश्वदानी पिब शुद्धमुदकमाचरन्ती ॥' 'ओमुत्सृजत । तृणान्यत्तु' इत्युक्त्वा तामुत्सृष्टां पशुमङ्गं वा ॥**

(१) निश्चितेऽपि यदिशब्दो दृष्टः, 'यदि वेदाः प्रमाणम्' इति यथा । उक्तामितिकर्तव्यतां विधाय गामुत्सृजेत्, न हन्यादित्यर्थः । 'माता रुद्राणाम्' इत्यादि च पठेत् । इयं गौः रुद्राणामन्तरिक्षचारिणां देवताविशेषाणां माता परिपोषिका पयःप्रभवाहुतिद्वारकवृ( ? पु )-ष्ट्यादिद्वारेण, वसूनां वासयितॄणामोषधीनां भूमिजानां दुहिता पोषणीया, आदित्यानां स्वसा भगिनी अदितितनया । अतोऽहं 'प्र नु वोचं चिकितुषे जनाय' । नुशब्दो निश्चये । निश्चयं कृत्वा प्रवदामि चिकितुषे चैतन्यातिशयवते जनाय । किं वदामि ? हे विशसितारः गां मा वधिष्ट । कीदृशीम् ? अनागाम् अपापाम्, अदितिम् अखण्डितां दैन्यशून्यां वा । कुतः ? यस्मादियं शोभनं यवसं घासमत्तीति सूयवसात् । किञ्च हे गौः, भगो धनं पयो यशश्च विद्यते यस्याः सा भगवती पयस्विनी त्वं भूयाः, तथा वयमपि त्वत्प्रसादात् भगवन्तो धनयुक्ताः यशस्विनश्च स्याम । हे अघ्न्ये अनुपहिंसिते तृणमद्धि भुङ्क्ष्व । यतस्त्वं विश्वदानी सर्वस्य दात्री पयोद्वारेण । पिब शुद्धमुदकमा समन्तात् चरन्ती विहरन्ती । अर्हयिताऽऽह ओमित्यविचारितसिद्धं कृत्वा— हे विशसितारः, यूयं गामुत्सृजत । उत्सृष्टा सती स्वाच्छन्द्येन तृणान्यत्तु भक्षयतु । इत्युक्त्वा तामुत्सृष्टां दृष्ट्वा पशुं छागं पश्वङ्गं वा मांसखण्डं प्रतिनिदधीत । देव.

(२) यद्युत्सृजेत्, 'भगवन् गां प्रकरिष्ये' इति यथोक्तमुक्तेऽर्घ्यार्हः 'मा प्रकार्षीः' इत्युक्त्वा 'माता रुद्राणाम्' इत्यृग्द्वयं जप्त्वा( ? जपित्वा ) 'ओमुत्सृजत, तृणान्यत्तु' इत्याह । तस्यामुत्सृष्टायां महाजं तदङ्गं वा क्रीत्वा यथाविभवं प्रतिनिदध्यात् । ब्राह्म.

मधुपर्के मांसनियमः

**नामांसो मधुपर्कः स्यादिति ह विज्ञायते ॥**

(१) नामांसो मांसविहीनो मधुपर्कः स्यादिति ह श्रुतितो विज्ञायते । हशब्द इतिहासे । देव.

(२) हशब्दः आगमसूचनार्थः । स चायमागमः— 'श्रोत्रियायाऽऽगताय महोक्षं वा महाजं वा पचेत्' इति । आवि.

मांसप्रतिनिधिः

**अपि वा घृतौदन एव स्यात् ॥**

(१) अपि वा घृतमिश्रित ओदन एव कर्तव्यो मांसद्वेषिणे तादृशा वा । देव.

(२) गोसंनिकृष्टं हि घृतम् । आवि.

## वाराहगृह्यसूत्रम्

अर्हणीयगणना, पुनरर्हणावधिः, जीवत्पितृकस्य निषेधः

'षडर्घ्यार्हा भवन्ति-- ऋत्विगाचार्यो विवाह्यो राजा स्नातकः प्रियश्चेति। अप्राकरणिकानां परिसंवत्सरादर्हयन्ति। अन्यत्र याज्यात्कर्मणो विवाहाच्च न जीवत्पितृकोऽर्घ्यं प्रतिगृह्णीयात् ॥

मधुपर्कस्वरूपम्, उपचारप्रतीक्षणम्

कांस्ये चमसे वा सदध्नि मध्वासिच्य वर्षीयसा पिधायाऽऽचमनीयप्रथमैः प्रतिपद्यन्ते। 'विराजो दोहोऽसि विराजो दोहमशीय मयि दोहः पद्यायै विराजः कल्पयताम्' इत्येकैकमाह्रियमाणं प्रतीक्षते ॥

विष्टराद्युपचरणम्, मधुपर्कशेषप्रतिपत्तिः

सावित्रेण विष्टरं प्रतिगृह्य 'अहं वर्ष्म सदृशानामुद्यतामिव सूर्यः। इदमहं तमधरं करोमि यो मा कश्चिदासति॥' इत्येकस्मिन्नुपविशति। 'राष्ट्रभृदसि' इत्याचार्य आसन्दीमनुमन्त्रयते। 'मा त्वा जोषम्' इत्यन्यतरमधस्तात्पादयोर्विष्टरमुपकर्षति। विष्टरमासीनायैकं त्रिः प्राह। नैव भो इत्याह। नम *आर्षेयाय इति श्रुतिः। स्पृशत्यर्घ्यम्। पाद्येन पादौ प्रक्षाल्य सावित्रेणोभयतो विष्टरं मधुपर्कं प्रतिगृह्य 'अदित्यास्त्वा पृष्ठे सादयामि' इति प्रतिष्ठाप्यावसाद्य 'सुपर्णस्य त्वा गरुत्मतश्चक्षुषाऽवेक्षे' इत्यवेक्ष्य 'नमो रुद्राय पात्रसदे' इति प्रादेशेन प्रतिदिशं व्युदिश्याङ्गुष्ठेनोपमध्यमया च 'मधु वाता ऋतायते' इति तिसृभिः संसृजति। 'अमृतोपस्तरणमसि' इत्युपस्तरति। 'सत्यं यशः श्रीर्मयि श्रीः श्रयताम्' इति मधुपर्कं त्रिः प्राश्नाति भूयिष्ठम्। सुहृदेऽवशिष्टं प्रयच्छति। 'अमृतापिधानमसि' इत्याचामति ॥

गवोपचरणम्, करणोत्सर्जनपक्षौ, गोमांसप्रतिनिधिः, ब्राह्मणभोजनम्

असिपाणिर्गां प्राह। 'हतो मे पाप्मा पाप्मानं मे हत। यां त्वा देवा वसवोऽन्वजीविषुरादित्यानां स्वसारं रुद्रमातरम्। देवीं गामदितिं जनानामारभन्तामर्हणाय॥ ओं कुरुत' इति संप्रेष्यति। चतुरवरान् ब्राह्मणाञ्ज्ञानागोत्रानित्येकैकं पञ्चवङ्गं पायसं वा भोजयेत्। यद्युत्सृजेत्-- 'माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानामृतस्य नाभिः। प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट॥ ओं भूर्भुवः स्वरोमित्युत्सृजत, तृणान्यत्तु, उदकं पिबतु'॥

अलङ्करणविधिः

अथालङ्करणम्। 'अलङ्करणमसि सर्वस्मादलं मे भूयासम्। प्राणापानौ मे तर्पयामि समानव्यानौ मे तर्पयामि उदानरूपे मे तर्पयामि सुचक्षुरहमक्षिभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासम्' इति यथालिङ्गमङ्गानि संस्पृशति। अथ गन्धाच्छादने वाससी। 'परिधास्ये यशो धास्ये दीर्घायुत्वाय जरदष्टिरस्तु। शतं जीवेम शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये॥' इत्यहतं वासः परिधत्ते। यदि पशुमालभते 'शं नो मित्रः' इति पाणी प्रक्षाल्य यथार्थमालभनमित्येके ॥

## आग्निवेश्यगृह्यसूत्रम्

आचार्यकर्तृकस्नातकार्हणप्रयोगः

'अथास्माया(चा)र्योपवेशनमाहार्योदकमाहारयति। तत् प्रतीक्षते-- 'आ मा गात्तेजसा

* अत्र काठकगृह्यसूत्रं तद्व्याख्यानं चानुसंधेयम्।

(१) वागृ. १२.

(१) आग्निगृ. १।४।१.

वर्चसा यशसा संसृज पयसा च' इति। तदुपस्पृश्य 'प्राक् सेक्तवै' इत्याह। तस्मादन्यदाहारयति। तेनास्य पादौ प्रक्षाल्याथास्मै मध्वाहारयति। तत् प्रतीक्षते— 'यन्मधुनो मधव्यं प्रियं परममन्नादो रूपं तेनाहं मधुनो मधव्येन प्रियेण परेणान्नादोऽसानि' इति। प्रतिगृह्णाति 'प्रियः प्रजानामधिपतिः पशूनाम्' इति ब्राह्मणम्(? णः)। 'प्रियः पशूनाधिपतिः प्रजानाम्' इति राजन्यम्(? न्यः)। तदश्नाति— 'ब्रह्म त्वाऽश्नातु ब्रह्म त्वाऽश्नातु' इति। अथास्मै दध्याहारयति। तदश्नाति— 'ब्रह्म त्वाऽश्नातु ब्रह्म त्वाऽश्नातु' इति। (अथ) अस्मा ओदनमाहारयति। तदश्नाति— 'ब्रह्म त्वाऽश्नातु ब्रह्म त्वाऽश्नातु' इति। अथास्मै मन्थमाहारयति। तदश्नाति— 'ब्रह्म त्वाऽश्नातु ब्रह्म त्वाऽश्नातु' इति। अथास्मै गामुपाकरोति। तामुद्वा सृजत कुरुतेति वा॥

संभाराणामासादनं संस्कारः अर्हणीयगणना च

[1]अथ मधुपर्कं व्याख्यास्यामः। चत्वारि पात्राणि कांस्यतुर्याणि दधि मधु घृतं कूर्चत्रयं च वाससी कुण्डलयुग्मं च दर्भेषु सादयित्वा दर्भैरपिदधाति। तिरःपवित्रं प्रोक्षणीः संस्कृत्येमानि प्रोक्ष्य पवित्रान्तर्हिते पात्रेऽप आनीयोत्पूय अर्हणीयार्थान्निधायैवमेव पाद्यमेवमेवाऽऽचमनीयकं कंसे तिरःपवित्रं दधि मधु घृतमानीय पुनराहारं त्रिरुत्पूय मधुपर्कार्थान्निधायाऽऽचार्यश्वशुरपितृव्यमातुलस्नातकातिथिराजभ्यो दद्यात्। विवाहे वराय। अथार्त्विग्भ्यः(? अथर्त्विग्भ्यः) कर्मणि च दद्यात्॥

कूर्चाद्युपचरणम्, गवोत्सर्जनपक्षे मांसान्तरस्य प्रतिनिधानम्, मांसप्रतिनिधिः

'अयं कूर्चः' इति कूर्चम्। तस्मिन् प्राङ्मुख उपविशति— 'राष्ट्रभृदस्याचार्याऽऽसन्दी मा त्वद्योषम्' इति। अथास्मै कूर्चाभ्यां परिगृह्यार्हणीयं दद्यात्— 'अर्हणीयमुदकम्' इति। तदभिमन्त्रयते— 'आ मा गात्तेजसा वर्चसा यशसा संसृज पयसा च' इति। तदञ्जलिनोपसंगृह्य 'प्राक्सेक्तवै' इत्युक्त्वा प्राञ्चं विसृजति। एवमेव पाद्यं दद्यात्— 'पाद्यमुदकम्' इति। तदभिमन्त्रयते— 'यशोऽसि यशो मयि धेहि राष्ट्रमसि राष्ट्रं मयि धेहि' इति। तेनास्य पादावन्यः प्रक्षालयति। अवनेक्तुः पाणिं संमृशति— 'मयि महो मयि भर्गो मयि यशः' इति। उपस्पृश्य 'मयीन्द्रियं वीर्यम्' इत्यात्मानं प्रत्यभिमृशति। 'आचमनीयमुदकम्' इति। तेनाऽऽचामति— 'अमृतोपस्तरणमसि' इति। आचम्य अथास्मै मधुपर्कं दद्यात्— 'अयं मधुपर्कः' इति। तदभिमन्त्रयते— 'स माऽवतु स मा पातु स मा जुषताम्' इति। वाससी कुण्डले च दद्यात्। 'स्वामा तनूराविश' इत्यहतं वासः परिधायैवमासङ्ग्यं कुण्डले च गृह्य यज्ञोपवीतं कृत्वाऽप आचम्य मधुपर्कं गृह्णाति— 'श्रीरस्येहि मयि श्रयस्व' इति। तदङ्गुष्ठेन महानाम्न्या चोपसंगृह्यावजिघ्रति— 'प्राणेमं ते बलिं हरामि श्रैष्ठ्यं म आधिपत्यं गमय' इति। अप उपस्पृश्याङ्गुलीभिः समुदायुत्याऽऽचामति— 'प्रियतमो नामासि देवयादुर्मह्यं त्वा श्रियै यशसे गृह्णामि' इति। 'सोमोऽसि सोमपं मा कुरु' इति द्वितीयम्। 'अन्नमस्यन्नादं मा कुरु' इति तृतीयम्। पीत्वोच्छिष्टं निधाय 'अमृतापिधानमसि' इत्याचमनीयेनाऽऽचम्य उपवीतं गामभिमन्त्रयते— 'जहि मे पाप्मानमुपवेत्तुश्च' इति। तामुद्वा सृजत कुरुतेति वा ब्रूयात्। यद्युत्सृजति तामभिमन्त्रयते— 'गौर्धेनुर्भव्या' इति द्वाभ्याम्। तस्यामुत्सृष्टायां मेषमजं वाऽऽलभते। आरण्येन वा

(१) आग्निगृ. २।६।६.

मांसेन । न त्वेवामांसोऽर्घ्यः स्यात् । अशक्तौ वा यवसक्तुमिश्रमोदनं यथालाभं दद्यात् ॥

## पारस्करगृह्यसूत्रम्

### अर्हणीयगणना

[1]'षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति ॥

(१) आवसथ्याधानं दारकाले इत्युक्तम् । दाराहरणमेव कथं क्रियत इति तदभिधीयते । तत्र च वैवाहिकस्यार्घदानं स्मर्यते । तत्प्रसङ्गेन यावन्तोऽर्घ्यास्ते सर्व एवाभिधीयन्ते— षडर्घ्या भवन्तीति । षट् अर्घार्हा भवन्तीत्यर्थः । तानाह— आचार्य इति । प्रियस्नातकयोः पृथक्त्वज्ञापनार्थं षड्ग्रहणम् । उपनयनपूर्वकं यो वेदमध्यापयति स आचार्यः । ऋत्विक् प्रसिद्धः । वैवाह्यो जामाता । राजा च प्रियश्च प्रसिद्धौ । वेदमधीत्य यः स्नातस्तस्याऽऽचार्योऽर्घदानं करोति । एवं हि स्मरन्ति— 'तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः । स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा ॥' (मस्मृ. ३।३) इति । आचार्यस्यायमुपदेशः ।　　* कभा.

(२) ऋत्विक् श्रौतस्मार्तकर्मार्थं वृतो ब्रह्मादिः । वैवाह्यो वरः । राजा अभिषेकादिगुणवान् प्रजापालनेऽधिकृतः क्षत्रियः । प्रियः उत्कृष्टजातिः समानजातिर्वा सखा ।　　$ हभा.

(३) 'षडर्घ्या भवन्ति' अर्ह पूजायामिति धातोर्भावे घञ् प्रत्ययः । न्यङ्क्वादित्वात्कुत्वम् । ततः 'दण्डादिभ्यो यत्' इति यत्प्रत्ययः । अर्घमर्हन्तीत्यर्घ्याः । षट्पुरुषा अर्घार्हा भवन्तीत्यर्थः ।　　¶ गभा.

(४) आचार्यत्वादयः षट्संख्याका उपाधयः सन्ति, तैरवच्छिन्नाः सर्वेऽपि अर्घ्याः अर्घयोग्या भवन्तीत्यर्थः । ननु आचार्यत्वादयो धर्मा जातय एव किं न स्युः ? न स्युः, जातिसंकरप्रसङ्गात् । तथाहि— आचार्यत्वपरिहारेणान्यत्र ऋत्विक्त्वम् । ऋत्विक्त्वपरिहारेणान्यत्राऽऽचार्यत्वम् । एकत्रोभयं संकीर्णम् । तस्मादुपाधय एते । उपधेयाः के इत्यपेक्षायामाह— आचार्य ऋत्विग्विवाह्यो राजा प्रियः स्नातक इति । उपनयनपूर्वकवेदाध्यापकत्वं आचार्यत्वम्, तस्य आधारः आचार्यः । एवं श्रौतस्मार्तादिक्रियोद्देशेन वृतत्वम् ऋत्विक्त्वम्, तदाश्रयः ऋत्विक् । कूकुदकर्तृककन्याप्रदानसंप्रदानत्वं वैवाह्यत्वम्, तदाश्रयो वरः । राजसूयान्तर्गताभिषेकाभिषक्तत्वे सति प्रजापालनाधिकृतत्वाश्रयो राजा । मैत्र्याश्रयः प्रियः स्वानपकृष्टजात्यवच्छिन्नः । विद्याव्रतोभयस्नातकत्वाद्यन्यतमोपाध्यवच्छिन्नः स्नातकः । इतिशब्दः षडुपाध्युपधेयसमाप्तिद्योतकः ।　　विभा.

### पुनरर्हणकालावधिः

[1]प्रतिसंवत्सरानर्हयेयुः ॥

(१) आचार्यादीनपि । न त्वर्वाक् संवत्सरादागतान् ।　　* कभा.

(२) प्रतिरत्राप्यर्थः । अतिसंवत्सरानित्यर्थः । तेन संवत्सरोपर्यागतानाचार्यादीनप्यर्हयेयुः अर्घदानेन पूजयेयुः, न त्वर्वाक्संवत्सरादागतान् ।　　जभा.

(३) कस्मिन्काले इत्यपेक्षायामाह— प्रतीति । निमित्तमन्तरा समागतानिति शेषः । संवत्सरं संवत्सरं प्रत्यागताः प्रतिसंवत्सराः, तानाचार्यादीनर्हयेयुः मधुपर्केण पूजयेयुः ।　　विभा.

---

* जभा. कभावत् ।

$ शेषं कभागतम् ।

¶ शेषं हभागतं कभागतं च ।

(१) पागृ. १।३।१ ; चदा. १४२ चार्य ऋत्विग्वैवाह्यो (चार्या ऋत्विग्वैवाह्या) ; निप्र. २०३ ; संप्र. ८२१ ; विपा. ३८ (भागः २) ; संग. १५३ ; संदी. १६–१७ (भागः २).

* हभा., गभा. कभावत् ।

(१) पागृ. १।३।२ ; चदा. १४२ ; निप्र. २०३ नर्हयेयुः (नर्हेयुः) ; संप्र. ८२१ ; संग. १५३ ; संदी. १७ (भागः २).

[१]यक्ष्यमाणास्त्वृत्विजः ॥

( १ ) ऋत्विजः पुनर्यक्ष्यमाणा एवार्घ्या न ततोऽन्यत्र । कभा.

( २ ) यक्ष्यमाणास्तु यागं करिष्यन्त एवर्त्विजोऽर्हयेयुः , संवत्सरोपर्यागतानपि न ततोऽन्यत्रेत्यर्थः ।

¶ जभा.

( ३ )प्रतिसंवत्सरानर्हयेयुरित्यविशेषेणोक्तत्वादृत्विजोऽपि संवत्सरान्तेऽर्हयितव्या इति प्राप्ते आह– यक्ष्यमाणा इति । * गभा.

( ४ ) अर्चकानामृत्विगर्चने विशेषमाह– यक्ष्यमाणा इति । यज्ञारम्भं करिष्यन्तः । तुशब्दः प्रतिसंवत्सरानित्यादिनोक्तं व्यवच्छिनत्ति । ऋत्विजः याजकानर्चयेयुरित्यर्थः । एतेन कृत्वारम्भप्रवृत्तेनैवाऽऽरम्भकाल ऋत्विगर्चनं विधेयम् , नान्यदेत्यर्थः । तथा च ऋत्विक्त्वप्रयोज्यं नान्यदाऽर्चनमिति ध्येयम् । विभा.

अर्हणावेदनम्

[२]आसनमाहार्याऽऽह– ' साधु भवानास्ताम् , अर्चयिष्यामो भवन्तम् ' इति ॥

( १ ) अर्घ्ये प्रत्यध्येषणमेतत् । आहार्येत्यानाय्येत्युच्यते । कभा.

( २ ) कथमित्यपेक्षायामाह– आसनमिति । आसनं पीठादि आहार्य स्वपुरुषैरानाय्य आहार्घयिता– ' साधु भवानास्ताम् ' इति । अर्घ्ये प्रत्यध्येषणमेतत् । जभा.

( ३ ) आसनं वारणादिदारुमयं पीठादि आहार्य अनुचरैरानाय्य आह ब्रवीति अर्चकः । किमिति ? एवम् । कथम् ? ' भवान्पूज्यः साधु सुखं यथा भवति तथा आस्तां तिष्ठतु , अर्चयिष्यामः पूजयिष्यामः भवन्तमर्चनीयं यावत् ' । अर्चयिष्याम इति बहुवचनं भार्यापुत्रादिसर्वगृह्यापेक्षम् । तथा च श्रुतिः– ' यत्र वा अर्हन्नागच्छति सर्वगृह्या इव वै तत्र चेष्टयन्ति ' इति ।

§ हभा.

( ४ ) आसनं यज्ञियदारुनिर्मितं पीठादि आहार्य आनाय्य आह ब्रवीति । अर्चक इति शेषः । किमित्यत उक्तम्– साधु भवानित्यादि भवन्तमित्यन्तम् । विवाहे तु वरसमानशाखाध्यायिनाऽऽचार्येण प्राङ्मुखोपविष्टेन मध्ये-चतुरिकमुपलिप्त उद्धतावोक्षितेऽग्नावाहिते ' साधु भवानास्ताम् ' इत्याद्यर्चकः श्वशुरादिर्ब्रूयादिति विशेषमाहुः । ' अग्निमुपसमाधाय ' इत्यादि ' कुमार्याः पाणिं गृह्णीयात् ' इत्यन्तसूत्रे साङ्गपाणिग्रहणविधेरग्निस्थापनोत्तरकालीनत्वस्य क्त्वाप्रत्ययबललभ्यत्वेन मधुपर्ककरणकार्चनस्यापि विवाहाङ्गत्वादग्निस्थापनोत्तरकालतेत्याशयादेवमाहुः । विभा.

उपचारगणना, मधुपर्कस्वरूपम्

[३]आहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधि मधु घृतमपिहितं कांस्ये कांस्येन ॥

( १ ) विष्टरः उपवेशनार्थं विष्टरिका । पद्यं च विष्टरम् । पादार्थमुदकं सुखोष्णम् । अर्घम् । अर्घशब्देन च उदपात्रमेवोच्यते । तथा च लिङ्गम्– ' यथा राज्ञ आगतायोदकमाहरेदेवमेतत् ' इति । सोमस्योदपात्रनिनयनं विधायैतदुक्तम् । आचमनीयमुदकमेव । तथा मधुपर्के दधिमधुघृतं कांस्यपात्रे स्थितं कांस्येनैवापिहितम् ।

¶ हभा. जभागतम् ।

* शेषं कभावत् ।

(१) पागृ. १।३।३ ; चदा. १४२ (तु० ) ; निप्र. २०३ ; संप्र. ८२१ ; संग. १५३ ; संदी. १७ ( भागः २ ).

(२) पागृ. १।३।४ ; चदा. १४२ ; निप्र. २०३ ; संग. १५३ ; संदी. १७ ( भागः २ ).

§ गभा. हभागतम् ।

(३) पागृ. १।३।५ ; चदा. १४२ पद्यं ( पाद्यं ); पादार्थं ( पादार्घ्यं ) ; निप्र. २०३ पद्यं ( पाद्यं ) मर्घं ( मर्घ्यं ) कांस्ये ( कांस्यं ) कांस्येन + ( इति ) ; संत. ८७८ ( मधुपर्कं दधि मधु घृतं पिहितं कांस्यस्थं कांस्येन ) एतावदेव, गोभिलः ; संप्र. ८२१ ( आहरन्ति० ) ; संग. १५३ ; संदी. १८ ( भागः २ ).

एतान्याहरन्ति, बहुवचननिर्देशादर्घयितुः संबन्धिनः पुरुषाः। उच्चारणार्थं वा बहुवचनम्। कभा.

(२) आहरन्ति अर्घयितृसंबन्धिपुरुषाभिप्रायेण बहुवचनम्। विष्टरः अच्छिन्नाग्रपञ्चविंशतिकुशपत्रकृतः। तथा च परिशिष्टे— 'कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरो मतः। पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टरः॥ ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः। दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः॥'। प्रथमो विष्टर उपवेशनार्थम्। पाद्यमिति पादार्थं द्वितीयं विष्टरम्।

¶ चदा. १४३–१४४

(३) स्वपुरुषा एव विष्टरम् उपवेशनार्थं पञ्चविंशच्छलाकारचितं कुशपुलकं पद्यं च विष्टरमेव तादृशम्।

§ जभा.

(४) आहरन्ति आनयन्ति यजमानपुरुषाः विष्टरादिमधुपर्कपर्यन्ताभ्यर्हणोपकरणानि। तत्र विष्टरं पञ्चविंशतिदर्भतरुणमयं कूर्चम्, 'पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता। विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्तितम्॥' 'विष्टरास्त्रिवृतो दर्भकूर्चदाः' इति। पद्यं पद्भ्यामाक्रमणीयमुक्तलक्षणं द्वितीयं विष्टरम्। पादार्थमुदकं पादप्रक्षालनार्थं ताम्रादिपात्रस्थं जलं सुखोष्णम्। अर्घं गन्धपुष्पाक्षतकुशतिलशुभ्रसर्षपदधिदूर्वान्वितं सुवर्णादिपात्रस्थमुदकम्। आचमनीयम् आचमनार्थं कमण्डलुसंभृतं जलम्। मधुपर्कं कांस्यपात्रस्थं दधिमधुघृतं कांस्यपात्रेणाऽऽच्छादितम्। हभा.

(५) बहुवचनादर्घयितुः पुरुषाः विष्टरादीनि आहरन्ति। तत्र विष्टरस्त्रिवृदरत्निमात्रः कौशो रज्जुविशेष इति भर्तृयज्ञः। 'प्रादेशमात्रं त्रिवृतं कौशं वा काशनिर्मितम्।' इति रेणुकः। पञ्चविंशतिदर्भतरुणमयं कूर्चमिति हरिहरः, 'पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टरः।' इति परिशिष्टात्। 'पादयोरन्यम्' इति वचनात् द्वयोराहरणमिति भर्तृयज्ञः। पद्यं पादयोरधस्तान्निधानार्थं विष्टरम्। भर्तृयज्ञमते तु पादप्रक्षालनार्थमुदकं पद्यशब्देन (उच्यते)। पादार्थमुदकं सुखोष्णम्। अर्घशब्देनोदपात्रमेवोच्यते, 'तद्वैक उदपात्रमुपनिनयन्ति यथा राज्ञ आगतायोदकमाहरेदेवं तत्' इति लिङ्गात्। उदकगन्धपुष्पाण्यक्षतबदराणीति भर्तृयज्ञः। गन्धपुष्पाक्षतकुशतिलशुभ्रसर्षपदूर्वादध्यन्वितं सुवर्णादिपात्रस्थमुदकमिति हरिहरः। आचमनीयम् आचमनार्थमुदकमेव। दधिमधुघृतमेकस्मिन् कांस्यपात्रे कृतमपरेण कांस्यपात्रेणापिहितं मधुपर्कशब्देनोच्यते। मधुपर्के दध्यलाभे पयो जलं वा प्रतिनिधिः। 'मध्वलाभे घृतं गुडो वा' इत्याश्वलायनः। गभा.

(६) आहरन्ति अर्चकपुरुषाः। विष्टरौ, पादार्थमुदकम्, अष्टाङ्गमर्घम्, आचमनीयपात्रम्। मधुपर्कमित्यस्यैव विवरणं दधिमधुघृतम्, कांस्येनापिहितम्। पुनः कीदृशम्? कांस्ये स्थितम्। विभा.

उपचाराणां त्रिस्त्रिर्निवेदनम्

**[1]अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि॥**

(१) अर्घयितुर्व्यतिरिक्तः अन्यः विष्टरादीनि त्रिस्त्रिः प्राह 'विष्टरो विष्टरो विष्टरः प्रतिगृह्यताम्' इत्येवम्। $ कभा.

(२) विष्टरादीनि विष्टरप्रभृतीन्पद्यपादार्थोदकार्घाचमनीयमधुपर्कान्। * हभा.

(३) प्रयोगश्चैवम्— विष्टराविति वारत्रयमाहान्यः। प्रतिगृह्यतामित्याहार्चकः। प्रतिगृह्णामीत्यर्च्यः प्रतिगृह्णातीत्यर्थः। * विभा.

विष्टरोपचरणम्

**[2]विष्टरं प्रतिगृह्णाति॥**

---

¶ शेषं कभागतम्।

§ शेषं कभावत्।

$ चदा., जभा., गभा. कभावत्।

* शेषं कभागतम्।

(१) पागृ. १।३।६; चदा १४२; निप्र. २०३ दीनि (दीन्); संप्र. ८२१ (विष्टरादीनि०); संग. १५३; संदी. १८ (भागः २).

(२) पागृ. १।३।७; चदा. १४२; निप्र. २०३; संग. १५३; संदी. १८ (भागः २).

( १ ) तूष्णीमेव । कभा.

( २ ) ततोऽर्घयित्राऽर्पितमुभाभ्यां हस्ताभ्यामर्घ्यो गृह्णाति तूष्णीम् , ग्रहणमात्रोपदेशात् । जभा.

( ३ ) प्रत्यङ्मुखेन यजमानेन तिष्ठता दत्तमासनात्पश्चिमे प्राङ्मुखस्तिष्ठन्नर्घ्यः पूर्वोक्तलक्षणं विष्टरं तूष्णीं पाणिभ्यामुदगग्रमादत्ते । हभा.

( ४ ) ततोऽर्घ्योऽर्घयितुः सकाशाद्विष्टरं तूष्णीमेव प्रतिगृह्य तं विष्टरमासने निधाय 'वर्ष्मोऽस्मि' इति मन्त्रेणोपविशति । पाणिभ्यां विष्टरप्रतिग्रह इति हरिहरः । तदतीव मन्दम् , प्रमाणाभावात् । गभा.

**'वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमं तमभितिष्ठामि यो मा कश्चाभिदासति ॥' इत्येनमभ्युपविशति ॥**

( १ ) वर्ष्मोऽस्मि समानानाम् ' इत्यनेन मन्त्रेण विष्टरे एवाभ्युपविशति । ग्रहणोपवेशनयोर्मध्ये मन्त्रः पठितः स लिङ्गादुपवेशने विनियुज्यते । लिङ्गं हि भवति ' इमं तमभितिष्ठामि ' इति । $ कभा.

( २ ) मन्त्रस्यायमर्थः— अर्घ्यः आत्मानं स्तौति अर्घ्यत्वाय । कुलज्ञानाचारवपुर्वयोगुणैरहं समानानां सजातीयानां मध्ये वर्ष्मः श्रेष्ठः ज्येष्ठः अस्मि भवामि उद्यताम् उदयं प्रकाशं कुर्वतां ग्रहनक्षत्रादीनां मध्ये सूर्य इव । किंच इमं विष्टरं तं पुरुषमुद्दिश्य विष्टरवत् बद्धमभिलक्ष्यीकृत्य तिष्ठामि अधः कृत्वोपर्युपविशामि । यः कश्चन मा माम् अभिदासति उपक्षीणं कर्तुमिच्छति । दसु उपक्षये । गभा.

**'पादयोरन्यं विष्टर आसीनाय ॥**

( १ ) पादयोरन्यं द्वितीयं विष्टरं ददातीति वाक्यशेषः । स चायमुपदेशः । प्रक्षाल्य हि पादौ विष्टरे क्रियेते, तस्मात्पाद्योत्तरकालं द्वितीयं विष्टरं ददातीति पाठोऽर्थेन बाध्यते । तथा चोत्तरं सूत्रम्— ' विष्टर आ ... ... प्रक्षालयति ' इति । एकस्मिन्नेव विष्टरे आसीनस्य पादप्रक्षालनम् । ततो द्वितीयो विष्टर इति । § कभा.

( २ ) अर्घ्यश्च पूर्ववत्तूष्णीं प्रतिगृह्य पुनः वर्ष्मोऽस्मीति मन्त्रेण निदधाति प्रक्षालितपादयोरधस्तात् । ‡ जभा.

( ३ ) विष्टरे आसीनायोपविष्टायार्घ्याय पादयोरधस्तान्निधानार्थमन्यं विष्टरं ददाति । एतच्च पादप्रक्षालनोत्तरं द्रष्टव्यम् । तथा सति दृष्टार्थता स्यात् । प्रक्षाल्य हि पादौ विष्टरे क्रियेते इति । तेनात्रार्थेन पाठबाधः । तदुक्तम्— ' विरोधेऽर्थस्तत्परत्वात् ' इति । गभा.

( ४ ) पादयोरन्यमिति । अन्यं द्वितीयं पादयोरधः विष्टरं स्थापयेदर्घ्य इत्यर्थः । कथंभूतः ? विष्टर आसीनः । चतुर्थ्यत्र न विवक्षितेत्याहुः । केचित्तु चतुर्थीबलात्क्रमिकं दानमाहुः । विभा.

पाद्योपचरणम्

**'सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ॥**

( १ ) प्रक्षालनं चाञ्जलिना ' विराजो दोहोऽसि ' इति मन्त्रेण स्वयमेव । जभा.

( २ ) ततोऽन्येन पाद्यमिति त्रिरुक्ते यजमानार्पितं पाद्योदकमादाय वामं चरणं प्रक्षाल्य इतरं प्रक्षालयति क्षत्रियादिरर्घ्यः । $ हभा.

---

$ जभा., हभा. कभागतम् ।

( १ ) पागृ. १।३।८ ; चदा. १४२ ; निप्र. २०३ इत्येन ( पन ) ; संग. १५३ ; संदी. १८ ( भागः २ ).

( २ ) पागृ. १।३।९ ; चदा. १४२ ; निप्र. २०३ सीनाय ( सनाय ) ; संग. १५३ ; संदी. १८ ( भागः २ ).

§ चदा. कभावत् ।

‡ शेषं कभावत् । हभा. उद्धृतजभावत् ।

$ गभा., विभा. हभावत् ।

( २ ) पागृ. १।३।१० ; चदा. १४२ ; निप्र. २०३ दक्षिणं ( दक्षिणपादं ) ; वीमि. १।१८ ; संप्र. ८२२ ( प्रक्षाल्य दक्षिणं० ) ; संग. १५३ ; संदी. १९ ( भागः २ ).

[१]ब्राह्मणश्चेद्दक्षिणं प्रथमम् ॥

[२]'**विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः' इति ॥**

( १ ) यदि ब्राह्मणोऽर्घ्यस्तदा दक्षिणं प्रथमं प्रक्षालयेत् 'विराजो दोहोऽसि' इत्यनेन मन्त्रेण । पादार्थमुदकं गृहीत्वा प्रक्षालयत्यर्घ्य एव । † कभा.

( २ ) यदि ब्राह्मणोऽर्घ्यस्तदा दक्षिणं प्रथमं प्रक्षालयेत्, नान्यः । अनेन मन्त्रावृत्तिरवगम्यते । तत्र मन्त्रः— 'विराजो दोहोऽसि' इति । ¶ जभा.

( ३ ) ब्राह्मणोऽर्घ्यः स्यात्तदा दक्षिणं पादं प्रथमं प्रक्षाल्य ततः सव्यं प्रक्षालयति । मन्त्रार्थः— प्राणधारणादिगुणैः सकलसौहित्येन विविधतया राजते इति विराट् अन्नं तस्य विराजो दोहः परिमाणसारो रसः स त्वमसि भवसि । हे उदक, तं त्वां विराजो दोहमशीय अश्नुवै व्याप्नुयाम् । किंच मयि विषये या पाद्या पादयोः साध्वी सपर्या तस्यै तदर्थं विराजो दोहः मन्त्रसंस्कृतं जलं भवेति शेषः । गभा.

अर्घ्योपचरणम्

**अर्घं प्रतिगृह्णाति-'आपः स्थ युष्माभिः सर्वान्कामानवाप्नवानि' इति ॥**

( १ ) अर्घं प्रतिगृह्णाति 'आपः स्थ०' इत्यनेन मन्त्रेणार्घ्य एव । लिङ्गादेवावगम्यते आप एवार्घ इति । कभा.

( २ ) 'अर्घोऽर्घोऽर्घः प्रतिगृह्यताम्' इत्यन्येनोक्ते अर्घ्योऽर्घं प्रतिगृह्णाति 'आपः स्थ' इति मन्त्रेण । अर्घ्यतेऽनेनेत्यर्घः आप एव, मन्त्रलिङ्गात् । * जभा.

( ३ ) अर्घ्यः समर्पितमर्घं प्रतिगृह्णाति 'आपः स्थ युष्माभिः' इति मन्त्रेण । मन्त्रार्थः— हे आपः, यूयं आपः स्थ आप्तिहेतवो भवथ । युष्माभिः कृत्वा सर्वान् कामान् अभीष्टार्थान् अवाप्नवानि लभेयम् । गभा.

[१]**निनयन्नभिमन्त्रयते-'समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टा अस्माकं वीरा मा परासेचि मत्पयः ॥' इति ॥**

( १ ) निनयन्नभिमन्त्रयते 'समुद्रं वः प्रहिणोमि' इति, न मन्त्रान्ते निनयनम् । कभा.

( २ ) ततोऽर्घ्योऽर्घं गृहीत्वा उपमौल्मिानीय निनयन् नामयन् अभिमन्त्रयते 'समुद्रः वः' इति मन्त्रेण, न तु मन्त्रान्ते । ‡ जभा.

( ३ ) निनयन् भूमौ प्रवाहयन् । ¶ हभा.

( ४ ) तमर्घं भूमौ निनयन् प्रापयन् अभिमन्त्रयते 'समुद्रं वः' इति मन्त्रेण, न तु मन्त्रान्ते । अर्घं शिरसाऽभिवन्द्य प्रागुदग्वा निनयनमिति वासुदेवः । मन्त्रार्थः— हे आपः, वः युष्मान् समुद्रं प्रहिणोमि गमयामि । अतः स्वां योनिं स्वकारणभूतं समुद्रमभिलक्ष्यीकृत्य गच्छत व्रजत । किंच युष्मत्प्रसादाच्चास्माकं वीराः पुत्राः भ्रातरः अरिष्टाः अनुपहताः सन्तु । मत् मत्तः पयः अर्घादिमङ्गलं जलं मा परासेचि अपगतं माऽस्तु सदैवाहमर्घ्यो भवानीत्यर्थः । गभा.

आचमनीयोपचरणम्

[२]**आचामति-'आ माऽगन् यशसा संसृज वर्चसा । तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम् ॥' इति ॥**

† विभा. कभागतम् ।

¶ हभा. जभावत् ।

* हभा., विभा. जभागतम् ।

( १ ) पागृ. १।३।११ ; चदा. १४२ ; निप्र. २०३ ; वीमि. १।१८ ; संप्र. ८२२ ( प्रथमम् ० ) ; संग. १५३ ; संदी. १९ ( भागः २ ).

( २ ) पागृ. १।३।१२–१३ ; चदा. १४२ ; निप्र. २०३ ; संग. १५३–१५४ ; संदी. १९ ( भागः २ ).

‡ विभा. जभागतम् ।

¶ शेषं जभागतम् ।

( १ ) पागृ. १।३।१४ ; चदा. १४२ ; निप्र. २०३ ष्टा अस्माकं ( ष्टास्माकं ) ; संग. १५४ ; संदी. १९ ( भागः २ ) निप्रवत् .

( २ ) पागृ. १।३।१५ ; चदा. १४२–१४३ यशसा संसृज ( यसा समीयसा सृज ) इति अशुद्धं पठितम्, मा

( १ ) आचामति 'आ माऽगन्यशसा' इत्यनेन मन्त्रेण । कभा.

( २ ) ततोऽर्घ्य आचामति 'आ माऽगन् यशसा' इति मन्त्रेण सकृत् । द्विस्तूष्णीम् । ‡ जभा.

( ३ ) ततः आचमनीयमिति त्रिरन्योक्ते यजमानदत्तमाचमनीयं प्रतिगृह्य 'आ माऽगन्यशसा' इत्यनेन मन्त्रेणाऽऽचामति सकृत्प्राश्नाति जलम् । ततः स्मार्तमाचमनं करोति । एवं सर्वत्र । हभा.

( ४ ) ततो दत्तमाचमनीयं प्रतिगृह्य 'आ माऽगन्' इत्याचामति सकृद्वक्ष्यति । ततः स्मार्ताचमनम् । मन्त्रार्थः – हे वरुण जलेश, तम् एवंरूपेण त्वामाश्रितं मा मां यशसा सहभावं सामीप्यं वा अगन् आगमय । आङुपसर्ग अगन्निति क्रियापदेन संबध्यते । तथा वर्चसा ब्रह्मवर्चसेन संसृज संसृष्टं कुरु । किंच प्रजानां पुत्रपौत्रादीनां प्रियं पशूनां गवाश्वादीनाम् अधिपतिं स्वामिनं च तथा तनूनां देहावयवानां शरीराणां वा अरिष्टिम् अहिंसकं कुरु । हिंसाऽत्र 'अनभ्यासेन वेदानामाचारस्य च लङ्घनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥' इत्यादिदर्शिता । गभा.

मधुपर्कोपचरणम्

[१] **'मित्रस्य त्वा' इति मधुपर्कं प्रतीक्षते ॥**

( १ ) 'मित्रस्य त्वा' इति मधुपर्कं प्रतीक्षते अर्घ्यः । सर्वेषु चैतेषु त्रिस्त्रिरेतानि द्रव्याण्यभिधाय प्रतिगृह्यतामित्यर्घ्यमाहान्यः । § कभा.

( २ ) तत्र ('मित्रस्य त्वा' इति मन्त्रे) प्रजापतिः पङ्क्तिर्मित्रो दर्शने । * जभा.

( ३ ) ततो मधुपर्क इति त्रिरन्येनोक्ते यजमानहस्तगतमुद्घाटितं मधुपर्कं 'मित्रस्य त्वा' इति मन्त्रेणार्घ्यः प्रतीक्षते पश्यति । ¶ हभा.

[१] **'देवस्य त्वा' इति प्रतिगृह्णाति ॥**

( १ ) 'देवस्य त्वा' इति प्रतिगृह्णाति मधुपर्कम् । कभा.

( २ ) 'देवस्य त्वा' इति मन्त्रेणार्घ्यः प्रतिगृह्णाति मधुपर्कम् । अस्य परमेष्ठी गायत्री सूर्यो ग्रहणे । * जभा.

( ३ ) 'देवस्य त्वा' इति मन्त्रेण यजमानदत्तं मधुपर्कं दक्षिणहस्तेन प्रतिगृह्णाति । हभा.

[२] **सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति– 'नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामि' इति ॥**

( १ ) अनेन मन्त्रेण सव्ये पाणौ स्थितं तमेव मधुपर्कं दक्षिणस्यानामिकया त्रिः प्रयौति । कभा.

( २ ) सव्ये पाणौ स्थितं मधुपर्कं दक्षिणहस्तस्यानामिकया त्रिः प्रयौति प्रदक्षिणमालोडयति 'नमः श्यावास्याय' इति मन्त्रेण । जभा.

( ३ ) तं मधुपर्कं वामहस्ते निधाय दक्षिणस्य पाणेरनामिकयाऽङ्गुल्या त्रिवारमालोडयति 'नमः श्यावास्याय' इति मन्त्रेण । $ हभा.

( ४ ) अत्र–सव्यहस्तस्थितस्यैव दक्षिणस्यानामिकया त्रिरालोडनं यथा स्यादित्येतदर्थं दक्षिणग्रहणम् ।

---

‡ विभा. जभागतम् ।

§ चदा. कभावत् ।

* शेषं कभागतम् ।

(मां); निप्र. २०३–२०४ रिष्टिं (रिष्टं); संग. १५४; संदी. १९ (भागः २).

(१) पागृ. १।३।१६ ; चदा. १४३ ; निप्र. २०४ ; संग. १५४ ; संदी. २० (भागः २).

¶ गभा. हभावत् । विभा. हभागतम् ।

* विभा., गभा. जभागतम् ।

$ विभा. हभागतम् ।

(१) पागृ. १।३।१७ ; चदा. १४३ गृह्णाति + (तम्); निप्र. २०४ ; संग. १५४ ; संदी. २० (भागः २).

(२) पागृ. १।३।१८ ; चदा. १४३ ; निप्र. २०४ प्रयौति (प्रचालयति) (इति०); संग. १५४ ; संदी. २० (भागः २).

मन्त्रार्थः— हे अग्ने ते तुभ्यं नमः । किंभूताय श्यावास्याय कपिशमुखाय । ते तव अन्नशने अन्नाशने अद्यते इत्यन्नं तस्याशने अदनीये मधुपर्के । ह्रस्वश्छान्दसः । यद्द्रव्यमाविद्धं संश्लिष्टमनदनीयं तं निष्कृन्तामि निरस्यामि । † गभा.

[१]अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति ॥

( १ ) दक्षिणस्यैव, चशब्दात्प्रयौति च । अतश्च प्रतिप्रयवणं निरुक्षणम् । एवं च त्रिर्निरुक्षणव्यवधानात् प्रतिप्रयवणं मन्त्राभ्यासः । कभा.

( २ ) अनामिकाङ्गुष्ठेन च तूष्णीं त्रिर्निरुक्षयति निषिञ्चतीत्यर्थः । ‡ चदा. १४५

( ३ ) निरुक्षयति अपसारयति । ‡ जभा.

( ४ ) अनामिका च अङ्गुष्ठश्च अनयोः समाहारः अनामिकाङ्गुष्ठं तेन त्रिवारं निरुक्षयति पात्राद्बहिर्निर्गमयति । चकारात्प्रतिसंयवनं निरुक्षणम् । * हभा.

[२]तस्य त्रिः प्राश्नाति— ' यन्मधुनो मधव्यं परमं रूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि ॥ ' इति ॥

[३]मधुमतीभिर्वा प्रत्यृचम् ॥

( १ ) तस्य त्रिः प्राश्नाति ' यन्मधुनो मधव्यम् ' इत्यनेन मन्त्रेण । मधुमतीभिर्वा प्रत्यृचं प्राश्नाति । उच्छिष्टस्यैव मन्त्रोच्चारणम् । एवं हि स्मरन्ति— ' मधुपर्के च सोमे च नोच्छिष्टो भवति ' इति । * कभा.

( २ ) तस्येत्यवयवलक्षणा षष्ठी । त्रिशब्दानुवृत्तौ पुनस्त्रिर्ग्रहणं एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनशङ्काव्युदासार्थम् । मधुमतीभिर्वा मधु वाता इति तिसृभिर्ऋग्भिर्वा प्रत्यृचं प्राश्नात्यनामिकाङ्गुष्ठाभ्यामेव । उच्छिष्टस्यैवापरं वारद्वयं मन्त्रोच्चारणम्, ' मधुपर्के च सोमे च नोच्छिष्टो भवति द्विजः । ' इति स्मरणात् । $ जभा.

( ३ ) मन्त्रार्थः— हे देवाः, मधुनो मकरन्दस्य यन्मधव्यं मधुनि साधु परम् उत्कृष्टं रूपयति प्रकाशयति देहसंघातमिति रूपम् । अन्नाद्यं व्रीह्यादिवत्प्राणधारकमन्नोपादानकं च तेन सर्वरूपोपपन्नेन रसेनोक्तविशेषणविशिष्टेनाहं परमः सर्वेभ्यो गुणाधिकः मधव्यो मधुपर्कार्हः अन्नादः सदन्नभोक्ता च असानि भवानि । ¶ गभा.

सर्वप्राशनविकल्पः, शेषप्रतिपत्तिः

[१]पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात् ॥

[२]सर्वं वा प्राश्नीयात् ॥

[३]प्राग्वाऽसंचरे निनयेत् ॥

---

† शेषं जभावत् ।

‡ शेषं कभावत् ।

* गभा., विभा. हभावत् ।

( १ ) पागृ. १।३।१९ ; चदा. १४३ ; निप्र. २०४ ( अनामिकयाऽङ्गुष्ठेन त्रिर्निक्षिपति ) ; संग. १५४ ; संदी. २० ( भागः २ ).

( २ ) पागृ. १।३।२० ; चदा. १४३ परमं + ( ओं ) ; निप्र. २०४ सानि ( शानि ) ; संग. १५४ ; संदी. २० ( भागः २ ).

( ३ ) पागृ. १।३।२१ ; चदा. १४३ ; निप्र. २०४ ; संग. १५४ ; संदी. २१ ( भागः २ ).

* चदा. कभावत् ।

$ हभा., विभा. जभावत् ।

¶ शेषं जभावत् ।

( १ ) पागृ. १।३।२२ ; चदा. १४३ ; निप्र. २०४ वोत्तरत ( चोत्तरत ) ; संग. १५४ ; संदी. २१ ( भागः २ ).

( २ ) पागृ. १।३।२३ ; चदा. १४३ ; निप्र. २०४ ( सर्वं प्राश्नीयाद्वा ) ; संग. १५४ ; संदी. २१ ( भागः २ ).

( ३ ) पागृ. १।३।२४ ; चदा. १४३ वाऽसंच ( वा संच ) ; निप्र. २०४ ( संचरे निनये वा ) ; संग. १५४ ; संदी. २१ ( भागः २ ).

( १ ) पुत्रायोच्छिष्टं दद्यात् यदवशिष्टं मधुपर्कस्य, सर्वं वा प्राश्नीयात्, प्राग्वाऽसंचरे निनयेत् इति विकल्पः। कभा.

( २ ) मधुपर्कशेषप्रतिपत्तिमाह— पुत्रायेति । सुताय उत्तरत आसीनाय उपविष्टाय अन्तेवासिने शिष्याय वोच्छिष्टं दद्यात् स्वयं वा सर्वं प्राश्नीयादिति व्यवस्थाविकल्पः । व्यवस्था च ( अ )नियमितस्य नियमनम्। तेन आचार्यः शिष्याय, ऋत्विक्प्रियौ पुत्राय, वरस्नातौ सर्वं प्राश्नीयाताम्, राजा असंचरे जनसंचाररहिते देशे पूर्वस्यां दिशि निनयेदित्यपरे । सर्वेषां वा सर्वे पक्षा इत्यन्ये । * जभा.

( ३ ) मधुपर्कस्य शेषप्रतिपत्तिमाह— पुत्राय सूनवे अन्तेवासिने उपनयनप्रभृतिविद्यार्थित्वेन आचार्यकुलवासिने शिष्याय वा । कथंभूताय ? उत्तरत आसीनाय । उच्छिष्टं प्राशितशेषं मधुपर्कं प्रयच्छेत् । अथवा सर्वं भक्षयेत् । यद्वा प्राक् पूर्वस्यां दिशि असंचरे जनसंचारवर्जितदेशे त्यजेत् । अत्र पूर्वपूर्वासंभवे उत्तरोत्तरां प्रतिपत्तिं कुर्यात् । § हभा.

प्राणसंमर्शनम्

**[1]आचम्य प्राणान्त्संमृशति– 'वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह' इति ॥**

( १ ) आचम्य प्राणान् संमृशति 'वाङ्म आस्ये' इत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् । अनाचान्तस्यैव प्राणायतनसंमर्शनं मा भूदित्याचम्येति ग्रहणम् । साकाङ्क्षत्वादस्त्वित्यध्याहारः । मे इत्यस्य च सर्वत्रानुषङ्गः । 'अरिष्टानि मेऽङ्गानि तनूः' इत्यत्र सन्त्वित्यध्याहारः । * कभा.

( २ ) आचम्य प्राणान् इन्द्रियस्थानानि संमृशति 'वाङ्म आस्ये' इत्येवमादिभिर्मन्त्रैर्यथालिङ्गम् । संमर्शनं जलेन स्पर्शनम् । ¶ जभा.

( ३ ) आचम्य प्राणान् संमृशति 'वाङ्मे' इत्यादिभिर्मन्त्रैः । तद्यथा— आचमनं सकृन्मन्त्रेण । ततस्त्रिराचम्य(?) । एवं सर्वत्र स्मार्तमाचमनं कृत्वा प्राणानिन्द्रियाणि संमृशति सजलमालभते । तद्यथा— 'वाङ्म आस्येऽस्तु' इति मुखं कराग्रेण, 'नसोर्मे प्राणोऽस्तु' इति तर्जन्यङ्गुष्ठाभ्यां युगपद्दक्षिणादिनासारन्ध्रे, 'अक्ष्णोर्मे चक्षुरस्तु' इति अनामिकाङ्गुष्ठाभ्यां युगपच्चक्षुषी, 'कर्णयोर्मे श्रोत्रमस्तु' इति मन्त्रावृत्त्या दक्षिणोत्तरौ कर्णौ, 'बाह्वोर्मे बलमस्तु' इति कर्णवद्बाहू, 'ऊर्वोर्मे ओजोऽस्तु' इति युगपद्धस्तेनोरू, 'अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु' इति शिरःप्रभृतीनि पादान्तानि सर्वाण्यङ्गान्युभाभ्यां हस्ताभ्यामालभते । § हभा.

( ४ ) नन्वध्याहारानुषङ्गयोः को विशेषः ? उच्यते। अनुषङ्गः श्रुतपदानयनम् । अध्याहारः अश्रुतपदस्य लौकिकस्याऽऽनयनं वाक्यनैराकाङ्क्ष्यार्थम् । प्रयोजनं चाध्याहृतपदस्य संहितावत्प्रयोगो न भवति । सावसानं प्रयोग इत्यर्थः । अयमर्थः कर्कोपाध्यायैरपि पशुसमञ्जनप्रकरणे प्रदर्शितः । हरिहरेण प्राणायतनस्पर्शः सजलहस्तेन कर्तव्य इत्युक्तं तदतीव मन्दम् । न ह्यत्र सूत्रे जलग्रहणमस्ति । सर्वाङ्गालम्भे उभाभ्यां हस्ताभ्यामालम्भ उक्तः सोऽपि न युक्तः । आचम्येति ग्रहणमाचान्तोदकायेति वक्ष्यमाणत्वादनाचान्तस्यैव प्राणायतनसंमर्शनं मा भूदित्येतदर्थम् । मन्त्रार्थः— मे मम वागिन्द्रियम् आस्ये अस्तु । नसोः नासिकयोः प्राणः प्राणवायुः । अक्ष्णोः

* गभा. जभागतम् ।

§ विभा. हभागतम् ।

( १ ) पागृ. १।३।२५ ; चदा. १४३ ; निप्र. २०४ संमृशति ( संस्पृशति ) जोऽरिष्टानि ( जो मेऽरिष्टानि ) ; श्लंग. १५४ ; संदी. २१ ( भागः २ ).

* चदा. कभागतम् ।

¶ शेषं कभावत् ।

§ विभा. हभागतम् ।

नेत्रगोलकयोरिति यावत्, चक्षुः चक्षुरिन्द्रियम्। श्रोत्रं श्रवणेन्द्रियम्। बलं शक्तिः। ओजः तेजः। मे मम तनूः देहः तन्वा देहस्याङ्गानि च सह युगपत् अरिष्टानि अनुपहतानि सन्तु। ¶ गभा.

गवोपचरणम्, करणोत्सर्जनविकल्पः

**[1]आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह ॥**

(१) आचान्तोदकग्रहणात्पुनराचमनमिति केचित्। अपरे त्वाहुः— आचान्तमुदकं येनासौ आचान्तोदकः, तदर्थं शासादानमिति। तादर्थ्ये च पश्वालम्भनस्य तदर्थत्वात्। गौरिति त्रिः प्राहार्घयिता। ‡ कभा.

(२) आचान्तमुदकं येन स आचान्तोदकः तस्मै अर्घ्याय शासं खड्गं गृहीत्वा यजमानः गौर्गौर्गौरालभ्यतामिति प्राह ब्रवीति। § हभा.

**[2]प्रत्याह 'माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः। प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ मम चामुष्य च पाप्मानं हनोमि ॥' इति यद्यालभेत ॥**

**[3]अथ यद्युत्सिसृक्षेत् 'मम चामुष्य च पाप्मा हत ओमुत्सृजत तृणान्यत्तु' इति ब्रूयात् ॥**

¶ शेषं कभावत् अङ्गुलिविशेषोपदेशवर्जं संमर्शनं हभावच्च।

‡ चदा. कभावत्, जभा. कभागतम्।

§ गभा. कभागतं हभागतं च, विभा. हभागतम्।

(१) पागृ. १।३।२६; चदा. १४३; निप्र. २०४ शास (गां स); संग. १५४; संदी. २१ (भागः २).

(२) पागृ. १।३।२७; चदा. १४३ वधिष्ट + (इति) व्याख्याने 'हनोमि' इति स्थाने 'घातयामि' इति पाठः; निप्र. २०४ वधिष्ट + (इति) पाप्मानं हनोमि (पाप्मानि हतोऽसि); संग. १५४; संदी. २१ (भागः २).

(३) पागृ. १।३।२८; चदा. १४३; निप्र. २०४ (अथ०) त्सिसृक्षेत् (त्सृजेत); संग. १५४; संदी. २२ (भागः २).

(१) प्रत्याहार्घ्यः 'माता रुद्राणाम्' इत्यमुं मन्त्रम्। तदन्ते च 'मम चामुष्य च पाप्मानं हनोमि' इति प्रयोगः। अमुष्येति चार्घयितुर्नामग्रहणम्। यद्यालभेत 'पाप्मानं हनोमि' इति प्रयोगः। अथेति। अत्राप्यमुष्येत्यर्घयितुर्नामादेशः। 'ओमुत्सृजत, तृणान्यत्तु' इत्येतदुच्चैर्ब्रूयात् निगदो ह्ययमिति। शेषमुपांश्वेव। ¶ कभा.

(२) अथेति पक्षान्तरे। उत्सर्गपक्षे तु 'मम चामुष्य च पाप्मानं हत ओमुत्सृजत तृणान्यत्तु' इति ब्रूयादुच्चैः। मन्त्रपाठादिशेषमुपांश्वेव। † जभा.

(३) ओमित्यन्तमुपांशु पठित्वा 'उत्सृजत, तृणान्यत्तु' इति ब्रूयात् (इत्यन्तम् ?) उच्चैः पठेत्। † हभा.

(४) मन्त्रार्थः— अमृतस्य क्षीरस्य नाभिः आश्रयः। नु वितर्के 'छन्दसि व्यवहिताश्च' इत्युक्तेरुपसर्गस्य वोचमित्यत्रान्वयः। प्रवोचं ब्रवीमि चिकितुषे चेतनावते जनाय यूयम् इमां गां मा वधिष्ट मा घ्नत किंतु गोपशुं विधातुं घ्नतेति तात्पर्यार्थः। किंभूताम् ? अनागाम् अनपराधाम्, अदितिं देवमातरं पयोदानात्। अहं मम अमुष्य अर्घयितुश्च पाप्मानं गोस्थाने हनोमि हन्मीति। ‡ गभा.

(५) तमर्चकं प्रत्याहार्च्यः। किमित्यत आह— माता रुद्राणामिति। वधिष्टेत्यन्तं मन्त्रमुच्चार्याऽऽत्मनोऽर्चकस्य च षष्ठ्यन्ते नामनी गृहीत्वोभयोः 'पाप्मा हत ओमुत्सृजत तृणान्यत्तु' इत्युत्सर्गपक्षे। आलम्भपक्षे तु पूर्ववन्नामनी गृहीत्वोभयोः 'पाप्मानं हनोमि' इत्युक्त्वा 'ओं कुरुत' इति ब्रूयादित्यर्थः। उत्सर्गपक्षे गवे तृणदानम्। आलम्भपक्षे तु 'पालाशीं शाखां निखाय द्विगुणरशनया' इत्यारभ्य 'प्रजापतये जुष्टं नियुनज्मि' इति शाखायां नियोजनं मारणान्तम्। तस्मिन् पक्षे

¶ चदा. कभावत्।

† शेषं कभागतम्

‡ शेषं कभावत्।

मांसेनार्घदानम् । कर्तव्यताविशेषं गोयज्ञे वक्ष्यति । विभा.

अमांसमधुपर्कनिषेधः, यज्ञविवाहयोर्गोकरणनियमः

**'न त्वेवामांसोऽर्घः स्यात् ॥**

**'अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात् ॥**

(१) यज्ञमधिकृत्य विवाहं चाधिकृत्य कुरुतेत्येवं वक्तव्यम् 'पाप्मानं हनोमि, कुरुत' इत्येवम् । यस्मात् 'यज्ञविवाहयोरमांसोऽर्घो न भवति' इति स्मरणम् । यज्ञविवाहवर्जमन्यत्र पशोरालम्भविकल्पः । कभा.

(२) यस्मात् 'यज्ञविवाहयोरमांसोऽर्घो न भवति' इति स्मरणं तस्माद्यज्ञमधिकृत्य विवाहं चाधिकृत्य च 'पाप्मानं हनोमि' इत्येव वक्तव्यम् । यज्ञविवाहवर्जमन्यत्र पश्वालम्भविकल्प इति कर्काचार्याः । अपरे त्वाहुः— यज्ञविवाहयोरेवाऽऽलम्भस्याऽऽवश्यकत्वेन विधानात्कलौ च गवालम्भस्यैव प्रतिषेधाद्गोप्रतिनिधित्वेन पश्वन्तरं स्मार्तपशुः पायसं वा भवतीति । जभा.

(३) तुशब्दः पक्षव्यावृत्तौ । अर्घः अमांसः पश्वालम्भवर्जितो नैव भवेत् । अत्र 'यद्यालमेत' 'यद्युत्सिसृक्षेत्' इत्यनेन सूत्रेण गवालम्भस्य विकल्पं विधाय 'न त्वेवामांसः' इत्यनेन गवालम्भनमर्घमात्रे नियमेन विधत्ते । तथा च सति द्वयोः स्मृत्योर्विरोधेन अप्रामाण्ये प्राप्ते व्यवस्थामाह— अधियज्ञमिति । अधियज्ञं यज्ञे । अधिविवाहं विवाहे । कुरुत विदधत गवालम्भम् । 'पाप्मानं हनोमि' इत्यस्यान्ते इत्येवं वदेत् । अन्यत्र 'पाप्मा हतः' इति 'पाप्मानं हनोमि' इति वा विकल्प इति भावः । यद्यप्येवं मधुपर्के गवालम्भ आचार्येणोक्तः तथापि अस्वर्ग्यत्वाल्लोकविद्विष्टत्वाच्च कलौ न विधेयः, 'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ।' इति याज्ञवल्क्यादिस्मृतिषु निषेधदर्शनात् । हभा.

(४) एवं गवालम्भस्य सर्वत्र विकल्पे प्राप्ते क्वचिन्नियममाह— नत्विति । यज्ञविवाहयोरमांसोऽर्घो न भवति । यज्ञमधिकृत्य विवाहमधिकृत्य कुरुतेत्येवं प्रयोगः । अतश्चाऽऽलम्भनियमो यज्ञविवाहयोः । गोरालम्भश्च कलिवर्जिते काले भवति, 'यज्ञाधानं गवालम्भं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥' इति पराशरस्मृतेः । अतश्च गवालम्भस्य कलौ निषिद्धत्वादुत्सर्गस्य च यज्ञविवाहयोरप्राप्तत्वाद्गौरित्युच्चारणादि यज्ञविवाहयोः कलौ न प्रवर्तते । यज्ञविवाहयोरन्यत्र तूत्सर्गपक्ष एव कलौ । कलौ गोपशोर्निषेधात्तत्स्थाने अजालम्भः पायसं वेति जयरामः । गभा.

(५) तुशब्दः पक्षव्यावृत्तौ । अमांसः मांसवर्जितः अर्घो नैव भवेत् । पूर्वं षोडशीग्रहणवद्विकल्पमभिधायाद्यार्थकत्वेन चानुष्ठानपक्षं संस्तूयेदानीं विवाहे क्रतौ च तस्याऽऽवश्यकतामाह— अधियज्ञमिति । क्रतौ विवाहे च कुरुतेत्येव ब्रूयात् । प्रयोगस्तु प्राग्दर्शितः । आलम्भस्तु कलौ निषिद्धत्वान्नाऽऽदरणीयः । विभा.

ऋत्विजां प्रतियज्ञमर्हणनियमः

**'यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः ॥**

(१) परिगतसंवत्सरा अर्घ्या भवन्ति इत्युक्तम्, तदपवादोऽयम् । अत एवावगम्यते सोमेन यक्ष्यमाणा एवर्त्विजोऽर्घ्याः, नेतरैर्यागैरिति । $ कभा.

(२) ननु 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्येकस्मिन्संवत्सरे एक एव सोमयागः प्राप्तः, तत्कथमुच्यते 'असकृत्संवत्सरस्य सोमेन यजेत' इति । सत्यम्,

(१) पागृ. १।३।२९ ; चदा. १४३ ; निप्र. २०४ त्वेवा (चैवा) ऽर्घः (ऽर्घ्यः) ; संग. १५४ ; संदी. २२ (भागः २).

(२) पागृ. १।३।३० चदा. १४३ ; निप्र. २०४ ; संग. १५४ ; संदी. २२ (भागः २).

$ जभा., हभा. कभावत् ।

(१) पागृ. १।३।३१ ; विश्व. १।१०९ (=) यद्यप्य (यद्य) ; चदा. १४३ ; निप्र. २०४ यद्यप्य (यद्य) ; संग. १५४ ; संदी. २३ (भागः २) कृतार्घ्या (कृतार्घा).

उच्यते— यद्यपि नित्यः सोमयागः सकृदेवानुष्ठातव्यः तथापि कामनायां चोदितायां पुनः पुनरनुष्ठानं संभवत्येव द्वादशाहादीनाम् । यद्वा नित्यो वाजपेयः, तस्यानुष्ठाने तदङ्गभूतानां परियज्ञानामनुष्ठानं भवति । तस्मात्साधूक्तमसकृत्संवत्सरस्य सोमेन यजेतेति । वरशाखया मधुपर्कदानं गृह्यपरिशिष्टे— ' वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः । मधुपर्कः प्रदातव्यो ना( ? ह्य )न्यशाखेऽपि दातरि ॥ ' इति । अत्र ऋत्विगाद्युपलक्षणार्थे वरदातृशब्दौ । तदुक्तमर्च्यशाखया मधुपर्क इति । याज्ञिकास्तु— अर्च्यस्य यच्छाखीयं कर्म तच्छाखीयो मधुपर्क इति वदन्ति । तथा जगन्नाथकारिकायाम्— 'तत्तद्गृह्योक्तविधिना विष्टराद्यर्हणं ततः । ' इति । सर्वत्र यजमानशाखयैव मधुपर्क इति जयन्तः । तत्तु कैरपि नाऽऽदृतम् । ¶ गभा.

( ३ ) असकृत् पुनः पुनः संवत्सरस्य संवत्सरसंबन्धिना सोमेन यजेत, यद्वा संवत्सरस्य मध्ये असकृत् पुनः पुनः सोमेन यजेत तदा कृतार्घ्या एवैनं यजमानं याजयेयुः नाकृतमधुपर्का इत्यर्थः । श्रुतिप्रमाणं तु सोमादन्यत्र मधुपर्कस्यानावश्यकताप्रदर्शनार्थम् । अपरे तु सोम एव ऋत्विजां मधुपर्कमाहुः । विभा.

## गोभिलगृह्यसूत्रम्

### गवोपस्थानम्

**[१]'उत्तरतो गां बद्ध्वोपतिष्ठेरन्— 'अर्हणा पुत्रवाससा ' इति ॥**

( १ ) अर्हणीयदेशस्योत्तरस्यां दिशि गां स्त्रीगवीम्, ' पुत्रवाससा ' इति 'माता रुद्राणाम्' इति मन्त्रलिङ्गात् । बद्ध्वा उपस्थानं कुर्यात् तस्या एव गोः, अन्यस्या अश्रवणात्, ' अर्हणा पुत्रवाससा ' इति मन्त्रेण ।

संत. ८८६

( २ ) अथ क्रमप्राप्तानामर्हणामन्त्राणां विनियोगं वक्तुमुपक्रमते— उत्तरत इति । उत्तरतः उत्तरस्यां दिशि । सार्वविभक्तिकस्तसिः । अर्थात् अर्हणप्रदेशस्य, 'यत्रैनमर्हयिष्यन्तः स्युः ' इत्युत्तरसूत्रात् । गां स्त्रीगवीम्, धेनुरित्यादिमन्त्रलिङ्गात् । उपतिष्ठेरन् आराधयेयुः, उपात्तिष्ठतेर्देवपूजायामात्मनेपदविधानात् । अत्र देवेत्युपलक्षणं पूज्यमात्रस्येति गामेव । के ? येऽर्हयिष्यन्तः स्युः । तथा च सर्वैरेव गृहस्थितैरर्हणीयार्हणार्थमप्रमत्तैर्भवितव्यमिति तात्पर्यार्थः । मुरारिमिश्रास्तु— अर्हणीयपरित्राणार्थमुपतिष्ठेरन्नित्युक्त्वा वाजसनेयश्रुतिं दर्शयांबभूवुः— ' यत्र चार्हन्नागच्छति सर्वे गृह्या इतरे तत्र तथेह परित्रातो भवति ' इति । गृह्या यजमानदायादाः । उपस्थानं चेदमूर्ध्वस्थितेनैव कार्यम्, आचारात्, न्याय्या( ? या )च्च । न ह्यर्हणीये ऊर्ध्वस्थिते स्वयमुपविश्यते इति युज्यते । इति । उपस्थानमन्त्रमाह— अर्हणेति । यथा— ' अर्हणा पुत्रवाससा धेनुरभवद्य मे । सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥ ' इति । अस्यार्थः— य या इयं अर्हणा पूजासाधनभूता पुत्रवाससा पुत्रवासानुगामिनी, मे मम धेनुः सर्वार्थसाधिनी अभवत् भवति, सा पयस्वती प्रशस्तपयाः नः अस्माकम् । मनोरथानिति शेषः । उत्तरामुत्तरां समाम् उत्तरोत्तरवर्षे व्याप्य दुहां दुग्धामिति । मृदुला.

### अर्हणीयकर्तृकजपः

**[१]' इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामि ' इति प्रतितिष्ठमानो जपेत् ॥**

**[२]यत्रैनमर्हयिष्यन्तः स्युः ॥**

**[३]यदा वाऽर्हयेयुः ॥**

( १ ) अर्हणीयानामुपवेशने मन्त्रमाह स एव— इदमहमिति । इदमहमिति प्रतिष्ठमान ऊर्ध्वस्तिष्ठन् जपेत् जामाता । यत्र देशे एनं जामात्रादिकमर्हयन्तः पूजयन्तः

---

¶ शेषं कभावत् ।

( १ ) गोगृ. ४।१०।१ ; संत. ८८६ बद्ध्वोपतिष्ठेरन् ( बद्ध्वाऽवतिष्ठेत् ).

( १ ) गोगृ. ४।१०।२ ; संत. ८८६ प्रतितिष्ठ ( प्रतिष्ठ ).

( २ ) गोगृ. ४।१०।३ ; संत. ८८६ ( यत्रैनमर्हयन्तः स्युः ).

( ३ ) गोगृ. ४।१०।४.

संप्रदात्रादिकाः स्युः । तेन इदमहमिति मन्त्रं तिष्ठन् पठित्वा जामाता आसने उपविशति ।

संत. ८८६–८८७

( २ ) एवमर्हणीयेषूपतिष्ठमानेषु स खल्वयमर्हणीयः प्रतितिष्ठमानः ऊर्ध्वस्तिष्ठन् 'इदमहम्' इति मन्त्रं जपेत् । अर्थाज्जपानन्तरमासने उपविशेत् । अर्हणीय इत्यर्थात् । समस्तमन्त्राम्नानं स्वनामाध्याहारप्रतिषेधार्थम् । मन्त्रार्थस्तु– अर्हणीयो वदति अहमिदमासनम् । इमां च पद्यां पादार्हाम् । कथंभूताम् ? विराजं विराजमानाम् । क्विबन्तमेतत् । अन्नं च तदाद्यमदनीयं चेति कर्मधारयः । यद्वा अन्नाद्याय अन्नादौ भवाय सुखाय । अधितिष्ठामि आक्रामामि । कुत्र प्रतितिष्ठमानो जपेदित्यपेक्षायामाह– यत्रैनमिति । यत्र यस्मिन्प्रदेशे । एनमर्हणीयम् । अर्हयिष्यन्तः अर्हयितुमिच्छन्तः अर्हणकर्तारः उपस्थिताः स्युर्भवेयुः , तत्रेत्यर्थः । यदा यस्मिन् काले अर्हयेयुः अर्हणं कर्तुमारभेरन्नित्यर्थः । अत्र वाकारः समुच्चये इति मुरारिमिश्राः ।

मृदुला.

विष्टरादीनां त्रिस्त्रिर्निवेदनम्

**'विष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिर्वेदयेरन् ॥**

( १ ) अर्हणप्रकारमाह स एव– विष्टरेति । विष्टरस्तु सार्धद्वितयवामावर्तवलिताधोमुखाग्रा असंख्यातदर्भाः । तथा च गृह्यासंग्रहः– ' ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः । दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः ॥ ' इति । छन्दोगपरिशिष्टम्– ' दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि । ' । एवं च 'पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टरः । ' इति यदि समूलं तदा शाख्यन्तरीयम् । एतेन विष्टरे पञ्चविंशतिसंख्या भवदेवभट्टोक्ता निरस्ता । एवं विष्टरग्रहणं हस्ताभ्यामपि यदुक्तं तदपि निरस्तम्, ' यत्रोपदिश्यते कर्म कर्तुरङ्गं न चोच्यते । दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ ' इति छन्दोगपरिशिष्टात् । पाद्यं पादक्षालनार्थमुदकम् । तथा चामरः– ' पाद्यं पादाय वारिणि ' । अर्घ्यं दध्यक्षतसुमनोयुक्तं जलम् , ' साक्षतं सुमनोयुक्तमुदकं दधिमिश्रितम् । अर्घ्यं दधिमधुभ्यां च मधुपर्को विधीयते ॥ ' इति भट्टभाष्यधृतवचनात् । आचमनीयम् आचमनार्थमुदकम् । दधिमधुमात्रेण मधुपर्काभिधानं घृतासंभवपरम् । तत्संभवे गोभिलः– ' मधुपर्के दधिमधुघृतं पिहितं कांस्यस्थं कांस्येन' इति । पूर्ववचने पात्रानुपदेशात् कांस्यपात्रं विनाऽपि मधुपर्को दीयते । तान् पञ्च विष्टरादीन् द्रव्यविशेषान् एकैकशः प्रत्येकं त्रिस्त्रिः प्रतिपादनकालेऽर्हणकर्तारो निवेदयेरन् ज्ञापयेयुः । विष्टरादीनि निवेदनीयानि त्रिरुक्त्वा प्रतिगृह्यतामिति सकृत्सर्वत्र वाक्यशेषं कुर्यात् । पाद्या इति अप्संबन्धात् स्त्रीबहुवचनमिति सरला । तन्न, वीक्षणविधौ तन्मन्त्रे च अप इति श्रुत्यां ग्रहणे तथा कल्पनानुपपत्तेः , ' पादार्थमुदकं पाद्यं केवलं तोयमेव तत् । तत्तैजसेन पात्रेण शङ्खेनापि निवेदयेत् ॥ ' इति कालिकापुराणात् ' पाद्यं पादाय वारिणि ' इत्युक्तेश्च । अत एव भट्टभाष्ये पाद्यं पाद्यं पाद्यमित्युक्तम् । विवाहानन्तरमर्हणमुक्त्वा ' आगतेष्वित्येके ' ( गोगृ. २।२। १७ ) इति वक्ष्यमाणसूत्रेण गोभिलोऽप्यागमनमात्रे एव वरार्हणमुक्तवान् । तत्रैके इत्यनेन बहुवादिसंमतत्वात् तत्काले वरार्हणं व्यवह्रियते ।

संत. ८८७–८८८

( २ ) अथेदानीमर्हणाविधिविवक्षयेदमाह– विष्टरेति । विष्टरः पूर्वोक्तः ' वृक्षासनयोर्विष्टरः' ( पासू . ८।३।९३) इत्यासनार्थे निपातितः । पाद्यं पादार्थमुदकम् । एवमर्घ्यम् । ' पादार्घाभ्यां च ' ( पासू . ५।४।२५ ) इति तादर्थ्ये यत्प्रत्ययः । तदेतद्दधितण्डुलपुष्पयुक्तमुदकम् । तथा च गृह्यासंग्रहे कात्यायनः– 'दध्यक्षतं सुमनस आप एतच्चतुष्टयम् । अर्घ्यमेतत्प्रदातव्यं गृहेऽर्घ्यार्हाः स्मृतास्तु ये ॥ ' इति । अत्र तेभ्य इति शेषः । एतच्च न पात्रान्तरस्थितम् , न चैकेन पाणिना गृह्णीयात् , ' कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ । ' इति कात्यायनवचनात् । आचमनीयमाचमनार्थमुदकम् । ' वृद्धाच्छः ' (पासू . ४।२।११४) इति छः , तस्येयादेशः (पासू . ७। १।२ ) । मधुपर्कश्च ' साक्षतं सुमनोयुक्तमुदकं दधि-

( १ ) गोगृ. ४।१०।५ ; संत. ८८७.

संयुतम्। अर्घ्ये दधिमधुभ्यां च मधुपर्को विधीयते ॥' इति छन्दोगपरिशिष्टोक्तः। तत्र चकारो वस्त्वन्तरसमुच्चायकः। तथा च दधिमधुयुक्तमुदकम्, दधिमधुघृतं वा दधिमधुदुग्धं वा मधुपर्कः। स्मृतिः– 'सर्पिषा मधुना दध्ना चार्घ्यार्हानर्हयेत्सदा। दधिक्षौद्रपयोभिर्वा मधुदध्युदकेन वा ॥' इति। ऐच्छिकोऽत्र विकल्पः, व्यवस्थापकाभावात्। गृह्यासंग्रहे– 'कांस्ये त्रितयमादाय कांस्येन परिबृंहितम्। परिग्रहेषु देयं स्यान्मधुपर्क इति ध्रुवम् ॥' इति। परिबृंहितं संवृतमाच्छादितमिति यावत्। ऋष्यशृङ्गः– 'कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत्।' इति। पिधानपात्रमत्राऽऽधारपात्रापेक्षया बृहत् कार्यम्, 'वर्षीयसा पात्रेण पिहितम्' इत्याश्वलायनगृह्यात्*। दध्यादिकं च तुल्यपरिमाणं ग्राह्यम्, 'समं स्यादश्रुतत्वात्' (जैसू. १०।३।५३) इति न्यायात्। केचित्तु 'आज्यमेकपलं ग्राह्यं दध्नस्त्रिपलमेव च। मधुनः पलमेकं तु मधुपर्कः स उच्यते ॥' इति मैत्रावरुणीयशाखापरिशिष्टोक्तं परिमाणमत्रापि ग्राह्यमित्याहुः। तानेतान् विष्टरादीन् मधुपर्कान्तान् पञ्च द्रव्यविशेषान् एकैकशः प्रत्येकं त्रिः त्रिरुच्चार्य वेदयेरन्, ज्ञापयेयुरर्हयितुरात्मीयाः। ततश्चार्हयिता द्रव्यमुक्त्वा 'प्रतिगृह्यताम्' इति सर्वत्र सकृद्वाक्यशेषं कुर्यादित्यर्थः। मृदुला.

विष्टरोपचरणम्

**[1]'या ओषधीः' इत्युदञ्चं विष्टरमास्तीर्याध्युपविशेत् ॥**

(१) 'या ओषधीः' इत्यनया ऋचा उदञ्चम् उदगग्रं विष्टरमास्तीर्य उपविशति। संत. ८८८

(२) 'या ओषधीः' इत्यनया ऋचा उदञ्चम् उत्तराग्रम् अर्हयित्रा प्रदत्तं विष्टरमास्तीर्य। आस्तरणं चाऽऽसनेऽधः, 'ता मह्यमस्मिन्नासने' इति मन्त्रलिङ्गात्। अधि तदुपरि उपविशेत्, अर्थादर्हणीयः। अत्रोपवेशनस्य पूर्वत एव सिद्धत्वादधःकरणरूपे विष्टरस्याऽऽस्तरणेऽयं मन्त्रो विनियुक्त इति व्याख्यातारः। मृदुला.

**[2]द्वौ चेत्पृथगृग्भ्याम् ॥**

आस्तीर्याध्युपविशेदित्यनुवर्तते। चेत् यदि द्वौ विष्टरावर्हयित्रा प्रदत्तौ स्यातां तदा पृथक् नाना ऋग्भ्याम् 'या ओषधीः' इत्येताभ्याम्। अत्र चेदिति वचनान्नातीव द्वयोरावश्यकत्वमिति प्रतीयते। तथा च ऋचौ– 'या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः। ता मह्यमस्मिन्नासने अच्छिद्राः शर्म यच्छत ॥ या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु। ता मह्यमस्मिन्पादयोरच्छिद्राः शर्म यच्छत ॥' इति। अनयोरर्थः –हे ओषधीः ओषध्यः, याः यूयं सोमराज्ञीः सोमराज्ञ्यः सोमः चन्द्रः राजा यासां ताः। बह्वीः बहुप्रकाराः, शतविचक्षणाः, शतं विचक्षणानि मुखानि यासां ताः शतविचक्षणाः शतमुख्यः, ताः यूयं मह्यम् अस्मिन्नासने, उपविष्टायेति शेषः। शर्म सुखं यच्छत दत्त। किंभूताः? अच्छिद्राः निरन्तराः।

हे ओषधीः ओषध्यः, याः यूयं सोमराज्ञीः सोमराज्ञ्यः। उक्तवदर्थः। पृथिवीमनु पृथिव्यां विष्ठिताः विशेषेण स्थिताः। ता यूयं मह्यम् अस्मिन् द्वितीयविष्टरे। पादयोः अधस्तान्निहिते इति शेषः। अच्छिद्रा निरन्तराः सत्यः शर्म सुखं यच्छत दत्त इति। मृदुला.

**[3]पादयोरन्यम् ॥**

(१) पादयोरन्यमध आस्तीर्य उपरि पादौ तूष्णीं कुर्यादिति सरलाभट्टभाष्ये। ततः पादोपवेशने भवदेवमन्त्रलिखनं प्रमाणशून्यम्। संत. ८८८

(२) तत्किं द्वितीयमपि विष्टरमासने एव देयमित्यपेक्षायामाह– पादयोरिति। अत्र अधस्तादिति शेषः। अन्यमपरम्, द्वितीयं विष्टरम्। मृदुला.

---

* इदं वचनमाश्वलायनगृह्ये अन्यत्र वा कुत्रचिन्नोपलभ्यते।

[1] (१) गोगृ. ४।१०।६; संत. ८८८ यार्ध्युपविशेत (यार्ध्युपविशति).

[2] (१) गोगृ. ४।१०।७.

[3] (२) गोगृ. ४।१०।८; संत. ८८८.

पाद्योपचरणम्

[१] 'यतो देवीः' इत्यपः प्रेक्षते ॥

(१) ततः पाद्यजलप्रेक्षणमाह स एव– यत इति। यतो देवीरिति मन्त्रेणापः पादप्रक्षालनमुदकं प्रेक्षेत। संत. ८८८

(२) प्रकृतत्वादर्हणीयः। अपः पादप्रक्षालनार्थं भाजनस्थमुदकम्। मन्त्रस्तु– 'यतो देवीः प्रतिपश्याम्याप-स्ततो मा राद्धिरागच्छतु' इति। अस्यार्थः– हे आपः वृष्ट्युपगताः, अहं यतः यस्मात्सूर्यात्प्रतिप्रसूता युष्मान् देवीः तद्रूपाः प्रतिपश्यामि आलोचयामि, ततः तस्मात्सूर्यात् मा मां प्रति राद्धिः संसिद्धिः आगच्छतु भवतु। इति। मृदुला.

[२] 'सव्यं पादमवनेनिजे' इति सव्यं पादं प्रक्षालयेत्। 'दक्षिणं पादमवनेनिजे' इति दक्षिणं पादं प्रक्षालयेत् ॥

(१) तत्र जलाञ्जलिनिक्षेपं कुर्यात्। एवं दक्षिणेऽपि। संत. ८८८

(२) ततस्ताभ्योऽञ्जलिं गृहीत्वाऽर्हणीयः सव्यं वामम्। 'वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणम्।' इत्यमरः। प्रक्षालयेदिति क्रियाभ्यासः निर्देशक्रमेणैव पाद-प्रक्षालनार्थः। यथा चान्यत्रापि स्मर्यते– 'पादं प्रक्षालये-द्विप्रो दक्षिणं प्रथमं सदा। शूद्रस्तु वामं प्रथमं सामवेदी तथा वधूः ॥' इति, 'सामगः क्षालयेत्सव्यं पादमन्यश्च दक्षिणम्।' इति चैवमादि। पूर्वत्र विप्र इति क्षत्रियवैश्ययो-रप्युपलक्षणम्। एवमपरत्रान्य इति। तेनोदकेनेति शेषः। मन्त्रौ यथा– 'सव्यं पादमवनेनिजेऽस्मिन्राष्ट्रे श्रियं दधे' इति, 'दक्षिणं पादमवनेनिजेऽस्मिन्राष्ट्रे श्रियमा-वेशयामि' इति च। अनयोरर्थः– अहं सव्यं वामं पादं चरणम् अवनेनिजे शोधयामि, अस्मिन् राष्ट्रे देशे श्रियं लक्ष्मीं दधे स्थापयामि। इति। आवेशयामि आदधामि। इति। मृदुला.

'पूर्वमन्यमपरमन्यम्' इत्युभौ शेषेण ॥

(१) 'पूर्वमन्यमपरमन्यमुभौ' इति मन्त्रेण पूर्वप्रक्षा-लनावशिष्टजलाञ्जलिकृतेन उभयपादप्रक्षालनं कुर्यात्। संत. ८८८

(२) ततः पुनरुदकाञ्जलिं गृहीत्वा शेषेण अवशिष्टो-दकेन उभौ पादौ संहतीकृत्य 'पूर्वमन्यम्' इति मन्त्रेण। प्रक्षालयेदित्यनुवर्तते। अर्हणीय एव। मन्त्रस्तु– 'पूर्व-मन्यमपरमन्यमुभौ पादाववनेनिजे। राष्ट्रस्यास्याद्धर्या अभयस्यावरुद्ध्यै ॥' इति। अस्यार्थः– अहं पूर्वं प्रथमम् अन्यं सव्यम्, अपरं पश्चात् अन्यं दक्षिणम्, एवमेतौ उभौ पादौ अवनेनिजे प्रक्षालयामि। अस्य राष्ट्रस्य देशस्य ऋद्ध्यै वृद्ध्यर्थम्। अभयस्य भयाभावस्य अव-रुद्ध्यै परिग्रहाय इति। मृदुला.

अर्घ्योपचरणम्

'अन्नस्य राष्ट्रिरसि' इत्यर्घ्यं प्रतिगृह्णीयात् ॥

(१) कांस्यपात्रेण दध्यक्षतादियुक्तं जलरूपमर्घ्यम् 'अन्नस्य राष्ट्रिरसि' इति मन्त्रेणाञ्जलौ गृहीत्वा शिरसि दध्यात्। तथा च भट्टभाष्ये शूलपाणिधृतवचनम्– 'कांस्येन वाऽऽर्हणीयस्य निनयेदर्घ्यमञ्जलौ।'। संत. ८८८

(२) अर्घ्यं यथोक्तलक्षणम् 'अन्नस्य राष्ट्रिरसि' इति मन्त्रेण प्रतिगृह्णीयादिति। यजमानहस्तादर्घ्यमादाय स्तोकं जलं शिरसि निदध्यादित्यर्थः। वीरपद्धतिरप्येवम्। मन्त्रो यथा– 'अन्नस्य राष्ट्रिरसि राष्ट्रिस्ते भूयासम्' इति। अस्यार्थः– हे अर्घ्य जलरूप, त्वम् अन्नस्य व्रीह्यादेः राष्ट्रिः दीप्तिः असि भवसि। अहमपि ते तव प्रसादात् राष्ट्रिः दीप्तिमान् भूयासं भवेयम्। इत्याशंसायां लिङ्। इति। मृदुला.

आचमनीयोपचरणम्

'यशोऽसि' इत्याचमनीयमाचामेत् ॥

(१) 'यशोऽसि' इति मन्त्रमुच्चार्य आचमनीयं जलमाचामेत्। तच्च सकृन्मन्त्रेण ब्राह्मतीर्थेन भक्षयित्वा

---

(१) गोगृ. ४।१०।९; संत. ८८८ प्रेक्षते (प्रेक्षेत).

(२) गोगृ. ४।१०।१०–१३; संत. ८८८ दक्षिणं पादं (दक्षिणं).

द्विस्तूष्णीं भक्षयेत् । तत इन्द्रियाण्युपस्पृशेत् ।

संत. ८८८

( २ ) आचमनीयम् आचमनार्थमुपकल्पितमुदकं गोकर्णाकृतिदक्षिणहस्तेन 'अशब्दमनवस्रावम्' इति यथोक्तेन विधिना 'यशोऽसि' इति मन्त्रेणाऽऽचामेदर्हणीयः । मन्त्रो यथा–'यशोऽसि यशो मयि धेहि' इति । अस्यार्थः– हे आचमनीय, यतस्त्वं यशोऽसि कीर्तिरूपं भवसि, अतः मयि विषये यशो धेहि मां यशस्विनं कुर्विति । तदेतदाचमनं सकृन्मन्त्रेण द्विस्तूष्णीमेवेति त्रिः, 'एकक्रियायामावृत्तौ सकृन्मन्त्रान्वयः' इति वचनात् । ततः इन्द्रियाण्युपस्पृशेत्, 'त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम् । खानि चैव स्पृशेदद्भिः' इत्येवं मनुनाऽऽचमनविधानात् । खानि इन्द्रियाणि, 'खमिन्द्रिये खमाकाशे' इत्यभिधानात् ।

मृदुला.

मधुपर्कोपचरणम्, शेषप्रतिपत्तिः

[१] **'यशसो यशोऽसि' इति मधुपर्कं प्रतिगृह्णीयात् ॥**

मधुपर्कम् उक्तलक्षणम् 'यशसो यशोऽसि' इति मन्त्रेण प्रतिगृह्णीयात् । प्रतिगृह्य वामहस्ततले तत्पात्रं स्थापयेत्, अग्रे क्रियोपदेशात् । मन्त्रार्थस्तु– हे मधुपर्क, यतस्त्वं यशोऽसि कीर्तिरिव मधुरोऽसि, अतस्त्वद्योगादहमपि यशसः कीर्तिमान्, भवेयमिति शेषः । इति ।

मृदुला.

[२] **'यशसो भक्षोऽसि महसो भक्षोऽसि श्रीर्भक्षोऽसि श्रियं मयि धेहि' इति त्रिः पिबेत् ॥**

( १ ) मन्त्रं प्रतिपानं पठित्वा वारत्रयं पिबेत् ।

संत. ८८९

( २ ) तस्य खल्वस्य मधुपर्कस्य त्रिः त्रिवारम् । क्रियाऽभ्यावृत्तिगणनेऽत्रासुच्प्रत्ययः ( पासू . ५।४।१८ ) । 'यशसो भक्षोऽसि' इति समस्तेन मन्त्रेणार्हणीयः पिबेत् । मन्त्रो यथा– 'यशसो भक्षोऽसि महसो भक्षोऽसि * श्रीर्भक्षोऽसि श्रियं मयि धेहि' इति । अस्यार्थः– हे मधुपर्क, यतस्त्वं यशसः यशसे यशोर्थे भक्षः भक्षणीयः असि भवसि । तथा महसः महसे तेजोर्थे भक्षः भक्षणीयः असि भवसि । तथा श्रीः भक्षोऽसि । तेन त्वद्भक्षणात्कीर्तिस्तेजो लक्ष्मीश्च भवति । अतस्त्वं श्रियं त्रितयस्यापि संपदं मयि विषये धेहि अर्पय । मह्यं देहीति यावत् । इति ।

अत्र मन्त्रेण त्रिर्भक्षणोपदेशात्पानं चेदं भक्षणरूपमेव । द्रवद्रव्यसंयोगाच्च पिबतिशब्दप्रयोगः । मुरारिमिश्रास्तु 'अत्र मधुसंयोगाद्द्रवश्चेन्मधुपर्कः स्यात्तदा पात्रेण पातव्यः, अथ दध्नः काठिन्यात्पानानुपपत्तिस्तदा हस्तेन भक्षणीय इति । तेन मन्त्रे भक्षशब्दस्य सूत्रे पिबतिशब्दस्य च श्रुतिरुपपद्यते । इति द्रष्टव्यम्' इति । पानं चेदम् 'अनामिकाङ्गुष्ठाभ्यां भक्षयेत्' इति वीरपद्धतिदर्शनतस्तथैवावगन्तव्यम् । तत्र प्रतिप्राशनं मन्त्रपाठः, 'चतुर्थं तूष्णीम्' इत्यग्रिमसूत्रात् । यत्तु होरिलपद्धतौ 'प्रथमं कनिष्ठाङ्गुष्ठयोगेन मधुपर्कप्राशनम्' इति लिखितं तत् शाखान्तरविषयमित्यनुपदं स्फुटीभविष्यति । समस्तमन्त्राम्नानं च, सूत्रात् त्रिः पानविधानम्, मन्त्रे च स्थानत्रये भक्षशब्दसत्त्वात्तदन्तेनैव मधुपर्कप्राशनं मा भूत्, किंतु मन्त्रान्तेनेति ज्ञापनार्थम् । येषां तु 'श्रियो भक्षोऽसि' इति मन्त्रपाठः तेषां मन्त्रावयवैरेव पानं स्यात् । तथा च छन्दोगगृह्यान्तरम् – 'मधुपर्कं त्रिष्पिबेत् यशसो महसः श्रिय इति तूष्णीं चतुर्थम्' इति । तदत्र मन्त्रप्रतीकोपादान( ? नात् )प्रतीकैरेव पानमवगम्यते । 'श्रीर्भक्षोऽसि' इति खल्वस्मच्छाखायां मन्त्रपाठः । अतस्तत्रैव होरिलपद्धतेरुक्ति-

---

( १ ) गोगृ. ४।१०।१४; संत. ८८८–८८९ प्रतिगृह्णीयात् ( गृह्णीयात् ).

( २ ) गोगृ. ४।१०।१५; संत. ८८९ भक्षोऽसि ( भक्ष्योऽसि ).

* 'श्रीभक्षोऽसि' ( २।८।१२ ) इति छान्दोग्यमन्त्रब्राह्मणे पाठः ।

योजनीया । तत्र प्रमाणं च– 'यशसो यशोऽसीति त्रिस्तूष्णीं बहु चतुर्थकम् । कनिष्ठादिभिरङ्गुष्ठयोगेन तिसृभिः क्रमात् । मधुपर्कप्रयोगे तु प्राशने विधिरिष्यते ॥' इति परिशिष्टान्तरवचनमिति बोध्यम् । मृदुला.

[1]**'तूष्णीं चतुर्थम् ॥**

(१) चतुर्थममन्त्रकं पिबेत् । इदानीं पानव्यवहाराभावात् जिघ्रति । संत. ८८९

(२) मधुपर्कस्य पिबेत् । मृदुला.

[2]**'भूय एवाभिपाय शेषं ब्राह्मणाय दद्यात् ॥**

भूयः पुनरपि । एवकारकरणात्तूष्णीमेव । अभिपाय आभिमुख्येन पीत्वा शेषम् अवशिष्टम् । ब्राह्मणायेति ब्राह्मणपदं पुत्रादिपरम् । 'नोच्छिष्टं कस्यचिद्दद्यादन्यत्र जायापुत्रशिष्येभ्यः' इति स्मरणात्, 'उच्छिष्टमगुरोरभोज्यम्' इति वसिष्ठवचनाच्च । तदभावे पुनरब्राह्मणायापि दद्यात् । तच्चाद्भिः प्रोक्ष्येति विशेषः । तथा च द्राह्यायणसूत्रम्– 'तदभावेऽद्भिः संप्रोक्ष्याब्राह्मणाय' (१।२।२१) इति । लाट्यायनोऽप्येवमेव । सर्वाभावे 'प्राग्वाऽसंचरे निनयेत्' इति पारस्करीयैव गतिरन्यशाखीयाऽप्यविरोधिनीति । वीरपद्धतिरप्येवमेव– 'मधुपर्कशेषमसंचरदेशे धारयेत्' इति । मृदुला.

गवोपचरणम्, यज्ञादन्यत्रोत्सर्जनम्

[3]**'आचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात् ॥**

(१) तत आचम्य गोर्मोक्षणं कारयेत् । तथा च गोभिलः– आचान्तोदकायेति । आचान्तोदकाय कृताचमनाय प्रकृतत्वाद्वराय । सप्तम्यर्थे चतुर्थी । तेन वरे आचान्ते नापितः प्रकृतायाः गोः समीपेऽवस्थितो गौरिति ब्रूयात् । संत. ८८९

(२) अत्र सप्तम्यर्थे चतुर्थी । अर्हणीये कृताचमने सति । यद्वा तादर्थ्ये चतुर्थी । यथा स शृणोति तथेति । अनेनोच्चैस्त्वं वचनस्य व्यनक्ति । क्रियाग्रहणाद्वा चतुर्थी । मधुपर्कभक्षणेनोच्छिष्टतापहत्या आचमनं विधीयते । न चानेन भोजनेन भुक्त्वाकर्माचरणदोष इत्युक्तमधस्तात् । मृदुला.

[1]**'मुञ्च गां वरुणपाशाद्द्विषन्तं मेऽभिधेहीति । तं जह्यमुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदकम् ॥' इति ब्रूयात् ॥**

(१) एवं नापितेनोक्ते तं श्रावयति वरः 'मुञ्च गाम्' इत्यादि । अत्र मेऽभिधेहीति शब्दप्रक्षेपात् 'मेऽभिधेहीति' इत्येव प्रयोगः, न तु निराकाङ्क्षीकरणाय 'मोचय बन्धुः' इति । अमुष्य इत्यनेन कन्यादातुर्नामनिर्देश इति भट्टभाष्यम् । ततश्च भवदेवभट्टेन यदभिधेहीत्यत्र इतिपदं न लिखितम्, अमुष्येत्यनूहेन लिखितम्, कन्यादानानन्तरं च गौरित्यादि गवामन्त्रणपर्यन्तं लिखितम्, तद्धेयम्, भट्टभाष्यादिविरोधात् प्रमाणाभावाच्च, अर्हणादित्वेन कन्यादानात्पूर्वमेव गोमोचनस्य युक्तत्वात्, मनुवचने 'अर्हयित्वा' इत्यनेन अर्हणानन्तरमेव कन्यादानविरोधाच्च । संत. ८८९

(२) नापितेन त्रिः गौरित्युक्ते खल्वयमर्हणीयस्तमेव नापितमुद्दिश्य 'मुञ्च गाम्' इति मन्त्रं ब्रूयात् । मन्त्रार्थस्तु– अर्हणीयो नापितं वदति– एतां गां वरुणपाशात् विशिष्टबन्धनात् मुञ्च मोक्षय, ततश्च उत्सृज विसर्जय । सेयं विसृष्टा सति तृणानि घासान् अत्तु भक्षयतु, उदकं च पिबतु । एवं नापितमुक्त्वाऽर्हणीयामाह– हे अर्हणीये, एवं मोचिता त्वं मे मम अर्चनीयस्य अमुष्य अर्हयितुश्च, उभयोः द्विषन्तं द्वेष्टारं तं तवाऽऽनेतारम् अभिधेहि बधान जहि विनाशय च । इति ।

अत्र अमुष्येतिपदस्थाने प्रकृतत्वादर्हयितुर्यजमानस्य नाम गृह्णीयात्, अदःपदस्थाने नामादेशस्याऽऽचार्यसंमतेः कर्मप्रदीपे कात्यायनेनोक्तत्वात् । तथा च छन्दोगगृह्यान्तरमपि– 'संचोदितामनुमन्त्रयते मुञ्च गामित्यमुष्य चेत्यर्हयितुर्नाम ब्रूयात्' इति चन्द्रकान्तः । समस्तमन्त्राम्नानं च 'तं जह्यमुष्य' इति पदयोर्मध्ये 'मम देवदत्तस्य च'

(१) गोगृ. ४।१०।१६ ; संत. ८८९.

(२) गोगृ. ४।१०।१७.

(३) गोगृ. ४।१०।१८ ; संत. ८८९.

(१) गोगृ. ४।१०।१९ ; संत. ८८९ दकमिति (दकं).

एवमध्याहारशङ्कानिवृत्त्यर्थम् । मन्त्रमध्ये इतिकारकरणं पूर्वपदानां यथावस्थितानामेव पाठार्थम् । इति मुरारिमिश्राः । 'अत एव तमिति पदे नोहः, तस्येतिकारात्प्राक्तनेन द्विषन्तमित्यनेन संबन्धात्' इति च चन्द्रकान्तः । मृदुला.

[१] 'माता रुद्राणाम्' इत्यनुमन्त्रयेत् ॥

गामित्यनुवर्तते । अनुमन्त्रणमिहाऽऽलोचनम् । तथा च गृह्यासंग्रहः— 'स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि । आमन्त्रणीये सर्वत्र सदैवमनुमन्त्रयेत् ॥' इति । मन्त्रो यथा— 'माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥' इति । अस्यार्थः— येयमर्हणार्थं गौरानीता सा रुद्राणां माता मातृवन्मान्या, वसूनां देवविशेषाणां दुहिता दुहितृवत्पाल्या, आदित्यानां स्वसा स्वसृवदनुकम्प्या, अमृतस्य दुग्धदध्यादेः नाभिः उत्पत्तिस्थानम् । अतः एतां गाम् अनागां सर्वथाऽऽनपराधिनीम्, अत एव अदितिम् अनवखण्डनीयां देवमातरं वा, हे यजमानपरिचारकाः, यूयं मा वधिष्ट मा घ्नत । अहमेव नु भोः चिकितुषे ज्ञानसंपन्नाय जनाय अस्मै यजमानाय प्रवोचं प्रोक्तवानस्मि अनागां गां मा वधिष्टेति । मृदुला.

[२] अन्यत्र यज्ञात् ॥

अत्र विशेषमाह— अन्यत्रेति । यज्ञः ज्योतिष्टोमादिः । ततोऽन्यत्रैवं कुर्यात् । मृदुला.

यज्ञे गोकरणनियमः

कुरुतेत्यधियज्ञम् ॥

यज्ञे हि किं कुर्यादित्युच्यते— कुरुतेति । अधियज्ञं यज्ञे पुनर्नापितेन गौरित्युच्चैस्त्रिरुक्ते खल्वयमर्हणीयः कुरुत आलम्भध्वमित्यग्निस्वामिप्रभृतयः । तथा च लाट्यायनश्रौतसूत्रं 'कुरुतेति गवि प्रोक्तायां ब्रूयात्' (लाश्रौ. १।२।१२) इति । अस्याऽऽलम्भनादि श्रपणान्तं कर्म कुरुतेति व्याख्यानं द्राह्यायणीये श्रौतसूत्रभाष्ये धन्वी प्राह । तदेतत्कलिवर्ज्यप्रकरणे पाराशरीये स्मर्यते— 'यज्ञाधानं गवालम्भं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ॥' इति । यज्ञाधानमग्निहोत्रम् । अत्र 'अश्वालम्भम्' इति केचित्पठन्ति । पलपैतृकं मांसेन पितृश्राद्धम् । विवाहादिगृह्यकर्मणि मधुपर्के तु आचार्येणापि यथोक्तं गोर्मोक्षणमनुमन्त्रणं चेति द्वयमप्यभिहितम् । मृदुला.

अर्हणीयगणना

षडर्घ्या भवन्ति ॥

अर्घं पूजाविधिमर्हन्तीत्यर्घ्याः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । 'दण्डादिभ्यो यत्' (पासू. ५।१।६६) इति यत्प्रत्ययः । ते खल्विमे षड् भवन्ति । मृदुला.

आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति ॥

ते खल्विमे षडर्हणीया नामतो निर्दिश्यन्ते— आचार्य इति । तत्राऽऽचार्यो मनुनोक्तः— 'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥' (मस्मृ. २।१४०) इति । यो ब्राह्मणः शिष्यमुपनीय कल्परहस्यसहितां वेदशाखां सर्वामध्यापयति तमाचार्यं पूर्वे मुनयो वदन्ति । कल्पः यज्ञविद्या श्रौतगृह्यभेदभिन्नः । रहस्यम् उपनिषत् । वेदत्वेऽप्युपनिषदां प्राधान्यविवक्षया पृथङ्निर्देशो गोबलीवर्दन्यायेन बोध्यः । ऋत्विगपि तेनैवाभिहितः— 'अग्न्याधेयं पाकयज्ञमग्निष्टोमादिकान् मखान् । यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥' इति । आहवनीयाद्यग्न्युत्पादनम् अग्न्याधेयम्, अष्टकादीन् पाकयज्ञान्, अग्निष्टोमादीन् यज्ञान् कृतवरणो यो यस्य करोति स तस्य ऋत्विक् इह शास्त्रेऽभिधीयते । वेदमधीत्य यः स्नाति स स्नातः । स्नात एव स्नातकः । ते च स्नातकादयो व्याख्याताः पारस्करेण— 'समाप्य वेदमसमाप्य व्रतं यः स्नाति स विद्यास्नातकः । समाप्य व्रतमसमाप्य वेदं यः स्नाति स व्रतस्नातकः । उभयं समाप्य यः स्नाति स विद्याव्रतस्नातकः' इति । राजा अभिषेकादिगुणगणयुक्तः जने-

(१) गोगृ. ४।१०।२०; संत. ८८९ (इति०).
(२) गोगृ. ४।१०।२१–२६.

श्वरः । विवाह्यः विवाहयितव्यो वरः । प्रियः विद्यातपः-प्रभृतिभिर्गुणैः प्रीतिविषयः । अतिथिः यथोक्तलक्षणः । मनुः– 'एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ ' (मस्मृ. ३।१०२) इति । प्रियश्चायं वृत्तस्वाध्यायगुणयोगाद्भवतीत्याह– 'विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु । निस्तारयति दुर्गाच्च महतश्चैव किल्बिषात् ॥ ' (मस्मृ. ३।९८) इति । प्रिय इति विशेषणाद्विद्यादिगुणवानेवातिथिरर्घ्येणार्हणीयः , न पुनर्यः कश्चिदिति दर्शयति ।

मृदुला.

पुनरर्हणावधिः

**परिसंवत्सरानर्हयेयुः ॥**

किमेतानाचार्यादीन् सकृदेवार्हयेत् ? नेत्याह– परिसंवत्सरान् , परिगतः संवत्सरः येषां तान् इमानाचार्यादीनर्हयेयुः । पुनरिति परतस्तनं काकाक्षिगोलकन्यायेनोभयत्रापि संबध्यते । तेन वत्सरात्पूर्वमेतानागतान् पुनः पुनरर्हयेयुरित्यर्थः ।

मृदुला.

**पुनर्यज्ञविवाहयोश्च ॥**

यज्ञविवाहौ व्याख्यातौ । तयोर्निमित्तभूतयोः संवत्सरमध्येऽप्यागतानाचार्यादीन् पुनरर्हयेयुरित्यर्थः । चकारः परिसंवत्सरकालं समुच्चिनोति ।

मृदुला.

## खादिरगृह्यसूत्रम्

अर्घ्यकर्तृकजपः

**[1]मधुपर्के प्रतिग्रहीष्यन् ' इदमहमिमाम् ' इति प्रतितिष्ठन् जपेत् ॥**

दातुः परिचारकैराहृतेषु विष्टरादिषु मधुपर्कार्थे गां ध्यायन् ' अर्हणा ' इति जपेत् , मन्त्रलिङ्गात् । तत उदगग्रेषु दर्भेषु तिष्ठन् ' इदमहमिमाम् ' इति जपेत् ।

रुद्रभा.

**अर्हयत्सु वा ॥**

मधुपर्कदानकाले वा ।

रुद्रभा.

उपचारगणना, त्रिर्निवेदनम्

**विष्टरपाद्यार्घ्याचमनीयमधुपर्काणामेकैकं त्रिर्वेदयन्ते ॥**

पञ्चविंशतिदर्भमयौ कूर्चौ विष्टरौ । पादप्रक्षालनार्थमुदकं पाद्यम् । पुष्पसंयुक्तमुदकम् अर्घ्यम् । आचमनार्थमुदकम् आचमनीयम् । दधिमधुघृतसंयुक्तो मधुपर्कः । तेषामेकैकमादाय तस्य तस्य प्रदानकाले त्रिस्त्रिर्ब्रूयाद्दाता। विष्टरौ युगपत् । विष्टरौ, पाद्यम् , अर्घ्यम् , आचमनीयम् , मधुपर्क इति वक्तव्ये मधुपर्काणामिति बहुवचनं पूजार्थम्। दातुरभ्युदयसूचनमेव पूजा ।

रुद्रभा.

**गां च ॥**

गोदानकाले गामालभ्य गौर्गौर्गौरिति त्रिर्ब्रूयात् । पृथक्सूत्रकरणं गोस्तत्कालाहरणार्थम् ।

रुद्रभा.

विष्टरोपचरणम्

**उदञ्चं विष्टरमास्तीर्य ' या ओषधीः ' इत्यध्यासीत ॥**

विष्टराविति त्रिरुक्ते तावादाय एकमुदगग्रमास्तीर्य तस्मिन् ' या ओषधीः ' इति पूर्वेणाऽऽसीत ।

रुद्रभा.

**पादयोर्द्वितीयया द्वौ चेत् ॥**

वक्ष्यमाणैर्मन्त्रैः पादौ प्रक्षाल्य द्वितीयं विष्टरमुदगग्रमधस्तात्पादयोः ' या ओषधीः ' इति द्वितीयया स्तृणुयात् । चेच्छब्ददात्पादयोरनित्यो विष्टरः । तदा विष्टर इति त्रिर्वचनम् ।

रुद्रभा.

पाद्योपचरणम्

**अपः पश्येत्– ' यतो देवीः ' इति ॥**

पाद्यमिति त्रिरुक्ते तूष्णीमादाय मन्त्रेण पश्येत् ।

रुद्रभा.

**सव्यं पादमवसिञ्चेत्– ' सव्यम् ' इति । दक्षिणं ' दक्षिणम् ' इति ॥**

स्पष्टे ।

रुद्रभा.

**उभौ शेषेण ॥**

' पूर्वमन्यम् ' इति मन्त्रेणोभौ पादाववसिञ्चेत् ।

रुद्रभा.

(१) खागृ. ४।४।५–२६.

अर्घ्याचमनीयोपचरणम्

**'अन्नस्य राष्ट्रिरसि' इत्यर्घ्यं प्रतिगृह्णीयात् ॥**

अर्घ्यमिति त्रिरुक्ते मन्त्रेण प्रतिगृह्य तूष्णीमात्मानमभ्युक्षेत् । रुद्रभा.

**'यशोऽसि' इत्याचमनीयम् ॥**

आचमनीयमित्युक्ते 'यशोऽसि' इति प्रतिगृह्य तूष्णीं पीत्वाऽऽचामेत् । रुद्रभा.

मधुपर्कोपचरणम्, शेषप्रतिपत्तिः

**'यशसो यशोऽसि' इति मधुपर्कम् ॥**

मधुपर्क इति त्रिरुक्ते मन्त्रेण प्रतिगृह्य । रुद्रभा.

**त्रिः पिबेत्— 'यशसो महसः श्रियाः' इति ॥**

'यशसो भक्षोऽसि यशो मयि धेहि स्वाहा, महसो भक्षोऽसि महो मयि धेहि स्वाहा, *श्रीर्भक्षोऽसि श्रियं मयि धेहि स्वाहा'। स्वाहाकारान्तता सूत्रवचनात् ।

रुद्रभा.

**तूष्णीं चतुर्थम् ॥**

पानम् । रुद्रभा.

**भूयोऽपिपाय ब्राह्मणायोच्छिष्टं दद्यात् ॥**

अन्ते सकृदाचमनम् । वाक्यशेषात्सिद्धे दद्यादिति ब्राह्मणालाभे अद्भिः संप्रोक्ष्यान्यस्मै दानार्थम् । रुद्रभा.

गवोपचरणम्, करणोत्सर्जनव्यवस्था

**गां वेदितामनुमन्त्रयेत— 'मुञ्च गाम्' इति । अमुष्य चेत्यर्हयितुर्नाम ब्रूयात् ॥**

'विष्णुशर्मणश्चोभयोः' इतिवद्दातुर्नाम ब्रूयात् ।

रुद्रभा.

**एवमयज्ञे ॥**

यज्ञव्यतिरिक्तेषु मधुपर्कप्रतिग्रह एवमुक्त एव प्रकारः ।

रुद्रभा.

**कुरुतेति यज्ञे ॥**

यज्ञवेलायां तु गवि निवेदितायां 'कुरुत' इति यजमानामात्यान् ब्रूयात् । रुद्रभा.

अर्हणीयगणना

**आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रिय इति षडर्घ्याः ॥**

आचार्यः शिष्यस्य । ऋत्विग्यजमानस्य । स्नातकः आप्लवनान्ते आचार्यस्य । विवाह्यः कन्यादातुः विवाहकाले । अन्यदा श्वशुरः कन्याप्रतिग्रहीतुः । राजाऽभिषिक्तः सर्वेषाम् । प्रियः प्रियस्य । रुद्रभा.

पुनरर्हणावधिः

**प्रतिसंवत्सरानर्हयेत् ॥**

संवत्सरमतीत्याऽऽगतान् । रुद्रभा.

**पुनर्यज्ञविवाहयोश्च ॥**

अर्वागपि संवत्सरादागतानर्हयेत् । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

प्राङ्मुखासीनाय मधुपर्काहरणम्

**[1]तस्मै प्राङ्मुखायाऽऽसीनाय मधुपर्कमाहरेत् ॥**

आचार्यस्तत्कल्पो वेति शेषः । श्रीव्या.

उपचारक्रमः

**विष्टरपाद्यार्घ्याचमनीयान्येकैकमनुपूर्वेण ॥**

विष्टरम् आसनकूर्चं दद्यादिति शेषः । श्रीव्या.

विष्टराद्युपचरणम्

**विष्टरमध्यास्ते ॥**

**पाद्येन पादौ प्रक्षालयते— 'मयि श्रीः श्रयताम्' इति ॥**

**सव्यं पादमग्रे शूद्रा चेत्— 'मयि पद्या विराट्' इति ॥**

शूद्रा चेदस्य पादं प्रक्षालयेत । श्रीव्या.

**अथ दक्षिणम् ॥**

***'मयि वर्चः' इत्यर्घ्यं प्रतिगृह्णीयात् ॥**

* पाठोऽयं सूत्रविरुद्धः । ब्लूम्फील्डमहोदयेनापि स्वीयमन्त्रकोशे 'श्रिया भक्षोऽसि' इत्येव पाठः खादिरसूत्रीयत्वेन निर्दिष्टः ।

* 'मयि वर्चः' इत्ययं मन्त्र एवंरूपः— 'मयि वर्चो अथो भगमथो यज्ञस्य यत्पयः । परमेष्ठी प्रजापतिर्दिवि द्यामिव दृंहतु ॥' (जैमिनीयसंहिता २।१।४) ।

(१) जैगृ. १।१९.

परमेष्ठी प्रजापतिः मयि वर्चश्च गन्धश्च अथो अथ यशस्य यत्पयः यो रसः तत्सर्वं दिवि आकाशे द्यां सूर्यमिव दृंहतु दृढीकरोतु । श्रीव्या.

**आचमनीयाभिराचामेत् ॥**

मधुपर्कोपचरणम् , मधुपर्कप्रकाराः , शेषप्रतिपत्तिः

**पात्रचमसं विष्टरोपहितमधस्तात् ॥**

यस्मिन्नद्यते तच्चमसम् । पात्रचमसं चमसपात्रं भक्षणपात्रमित्यर्थः । अधस्ताद्विष्टरेण तृणकूर्चेन उपहितं संसक्तं भवति । श्रीव्या.

**विष्टरौ संहिताग्रौ भवतः ॥**

प्रागेव तौ द्वौ विष्टरौ संहिताग्रौ संबद्धाग्रौ भवतः, यश्चमसस्याधस्तान्निहितो यश्चोपरि निधास्यते । श्रीव्या.

**एकविष्टर उत्तरतः ॥**

उत्तरतः चमसस्योपरि निधातव्यः । श्रीव्या.

**तयोर्मध्ये दधि मधु संनिहिते भवतः ॥**

दधि च मधु च तयोर्विष्टरयोर्मध्ये यथा भवेतां तथा तौ विष्टरौ कृत्वा संनिहिते अन्तश्चमससिक्ते भवतः । इदमितरयोर्मधुपर्कयोरुपलक्षणम् । श्रीव्या.

**दध्ना चेद्दधिमन्थः ॥**

दध्ना चेन्मधु संनिहितं स दधिमन्थनामा मधुपर्कः । श्रीव्या.

**अद्भिश्चेदुदमन्थः ॥**

**पयसा चेत्पयस्यः ॥**

**तं प्रतिगृह्णीयात्-- ' देवस्य त्वा ' इति ॥**

**तं प्रतिगृह्य भूमौ प्रतिष्ठाप्यावघृष्याङ्गुष्ठेनोपकनिष्ठिकया च ' मह्यं त्वा यशसे श्रियेऽन्नाद्याय ब्रह्मवर्चसाय ' इति त्रिः प्राश्नीयात् ॥**

**शेषमुत्तरतः प्रतिगृह्य ब्राह्मणाय दद्यात् ॥**

**अभ्युक्ष्य वाऽब्राह्मणाय । गर्ते वा निखनेत् ॥**

गवोपचरणम् , करणोत्सर्जनविकल्पः , अर्घ्यगणना

**परः स्वधितिपाणिर्गां दृष्ट्वाऽऽह गौर्गौरिति ॥**

परः अन्यः स्वधितिपाणिः खड्गपाणिर्भूत्वा गां तस्मै स्नातकाय दृष्ट्वा दर्शयित्वाऽऽह । श्रीव्या.

**तामभिमन्त्रयते-- ' गौर्धेनुः ' इति ॥**

गौर्धेनुरित्यादिमन्त्रेण तामभिमन्त्र्य । श्रीव्या.

**ओमुत्सृजतेति ब्रूयात् ॥**

**कर्तव्या चेत्कुरुतेति ब्रूयात् ॥**

कर्तव्या भोजनार्थं संस्कर्तव्या चेत् कुरुतेति संस्कुरुतेति ब्रूयात्, न त्वभिमन्त्रयेत । श्रीव्या.

**' गौर्धेनुर्हव्या माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ पिबतूदकं तृणान्यत्तु ' इति ॥**

इति मन्त्रः । गौः धेनुः पातव्याक्षीरा(?पातव्यक्षीरा)। हव्या हविर्योग्या । श्रीव्या.

**अथ षडर्घ्यार्हा भवन्त्यृत्विगाचार्यः स्नातको राजाऽभिषिक्तः प्रियः सखा श्रोत्रियश्चेति ॥**

विष्टरादिगवान्तमिहार्घ्यशब्देनोच्यते । श्रीव्या.

**तेभ्य आतिथ्यं गां कुर्यात् ॥**

आतिथ्यम् अतिथिभोजनभूतां गाम् । अर्घ्यादेरप्युपलक्षणम् । कुर्यात् संस्कुर्यात् अनुत्सर्गे सति । श्रीव्या.

**ताम् ' अतिथये ' इति प्रोक्षेत् ॥**

तां संस्करिष्यमाणां गाम् 'अतिथये त्वा जुष्टं प्रोक्षामि' इत्यन्तेन सावित्रेण प्रोक्षेत् । श्रीव्या.

## कौशिकगृह्यसूत्रम्

विष्टरकरणं विष्टरातिसर्जनं च

**[1]मधुपर्कमाहारयिष्यन्दर्भानाहारयति ॥**

**अथ विष्टरान् कारयति ॥**

**स खल्वेकशाखमेव प्रथमं पाद्यं द्विशाखमासनं त्रिशाखं मधुपर्काय ॥**

**स यावतो मन्येत तावत उपादाय विविच्य संपर्याप्य मूलानि च प्रान्तानि च यथा विस्तीर्ण इव स्यादित्युपोत्कृष्य मध्यदेशेऽभिसंनह्यति ॥**

**' ऋतेन त्वा सत्येन त्वा तपसा त्वा कर्मणा त्वा ' इति संनह्यति ॥**

---

(१) कौसू. ९०।१-२६.

अथ ह सृजति-- 'अतिसृष्टो द्वेष्टा योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' ॥

'अस्य च दातुः' इति दातारमीक्षते ॥

पाद्योपचरणम्

अथोदकमाहारयति-- 'पाद्यं भोः' इति ॥

हिरण्यवर्णाभिः प्रतिमन्त्र्य दक्षिणं पादं प्रथमं प्रकर्षति--'मयि ब्रह्म च तपश्च धारयाणि' इति ॥

दक्षिणे प्रक्षालिते सव्यं प्रकर्षति-- 'मयि क्षत्रं च विशश्च धारयाणि' इति ॥

प्रक्षालितावनुमन्त्रयते-- 'इमौ पादाववनिक्तौ ब्राह्मणं यशसाऽवताम् । आपः पादावनेजनी-द्विषन्तं निर्दहन्तु मे ॥' ॥

'अस्य च दातुः' इति दातारमीक्षते ॥

विष्टरोपचरणम्

अथाऽऽसनमाहारयति-- 'सविष्टरमासनं भोः' इति ॥

तस्मिन् प्रत्यङ्मुख उपविशति ॥

'विमृग्वरीं पृथिवीम्' इत्येतया विष्टरे पादौ प्रतिष्ठाप्याधिष्ठितः 'द्वेष्टा योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' ॥

'अस्य च दातुः' इति दातारमीक्षते ॥

अर्घ्याचमनीयोपचरणम्

अथोदकमाहारयति-- 'अर्घ्यं भोः' इति ॥

तत्प्रतिमन्त्रयते-- 'अन्नानां मुखमसि मुखमहं श्रेष्ठः समानानां भूयासम् । आपोऽमृतं स्थामृतं मा कृणुत दासास्माकं बहवो भवन्त्वश्वावद्गोमन्मय्यस्तु पुष्टमों भूर्भुवः स्वर्जनदोम्' इति ॥

तूष्णीमध्यात्मं निनयति ॥

'तेजोऽस्यमृतमसि' इति ललाटमालभते ॥

अथोदकमाहारयति-- 'आचमनीयं भोः' इति ॥

जीवाभिराचम्य ॥

मधुपर्कोपचरणम्

अथास्मै मधुपर्कं वेदयन्ते द्व्यनुचरो (? वेदयते ह्यनुचरो) 'मधुपर्को भोः' इति ॥

द्वाभ्यां शाखाभ्यामधस्तादेकयोपरिष्टात्सापिधानम् ॥

'मधु वाता ऋतायते' इत्येताभिरेवाभिमन्त्रणम् ॥

तथा प्रतिमन्त्रणम् ॥

[1] 'मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्गावो भवन्तु नः ॥ मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः । माध्वीर्नः सन्त्वोषधीः ॥ मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः । मधु द्यौरस्तु नः पिता ॥' ॥

'तत्सूर्यस्य त्वा चक्षुषा प्रतीक्षे' इति प्रतीक्षते ॥

'अयुतोऽहं देवस्य त्वा सवितुः' इति प्रतिगृह्य पुरोमुखं प्राग्दण्डं निदधाति ॥

'पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे' इति भूमौ प्रतिष्ठाप्य ॥

द्वाभ्यामङ्गुलिभ्यां प्रदक्षिणमाचाल्यानामिकयाऽङ्गुल्याऽङ्गुष्ठेन च संगृह्य प्राश्नाति ॥

'ओं भूस्तत्सवितुर्वरेण्यं भूः स्वाहा' इति प्रथमम् ॥

'भर्गो देवस्य धीमहि भुवः स्वाहा' इति द्वितीयम् ॥

'धियो यो नः प्रचोदयात्स्वः स्वाहा' इति तृतीयम् ॥

'वयं देवस्य धीमहि जनत्स्वाहा' इति चतुर्थम् ॥

'तुरं देवस्य भोजनं वृधत्स्वाहा' इति पञ्चमम् ॥

---

(१) कौसू. ९१।१-२०.

'करत्स्वाहा' इति षष्ठम् ॥
'रुहत्स्वाहा' इति सप्तमम् ॥
'महत्स्वाहा' इत्यष्टमम् ॥
'तत्स्वाहा' इति नवमम् ॥
'शं स्वाहा' इति दशमम् ॥
'ओम्' इत्येकादशम् ॥
तूष्णीं द्वादशम् ॥

शेषप्रतिपत्तिः

तस्य भूयोमात्रमिव भुक्त्वा ब्राह्मणाय श्रोत्रियाय प्रयच्छेत् ॥

श्रोत्रियालाभे वृषलाय प्रयच्छेत् ॥

अथाप्ययं निगमो भवति–'सोममेतत् पिबत यत्किं चाश्नीत ब्राह्मणाः । मा ब्राह्मणायोच्छिष्टं दात मा सोमं पात्वसोमप ॥' इति ॥

मधुपर्कस्य नवविधत्वम्

[1]दधि च मधु च ब्राह्मो मधुपर्कः ॥
पायस ऐन्द्रो मधुपर्कः ॥
मधु चाऽऽज्यं च सौम्यो मधुपर्कः ॥
मन्थश्चाऽऽज्यं च पौष्णो मधुपर्कः ॥
क्षीरं चाऽऽज्यं च सारस्वतो मधुपर्कः ॥
सुरा चाऽऽज्यं च मौसलो मधुपर्कः ॥

स खल्वेष द्वये भवति सौत्रामण्यां च राजसूये च ॥

उदकं चाऽऽज्यं च वारुणो मधुपर्कः ॥
तैलं चाऽऽज्यं च श्रावणो मधुपर्कः ॥
तैलश्च पिण्डश्च पारिव्राजको मधुपर्कः ॥

इति खल्वेष नवविधो मधुपर्को भवति ॥

गवोपचरणम्

अथास्मै गां वेदयन्ते 'गौर्भोः' इति ॥

तान्(? तां) प्रतिमन्त्रयते–'भूतमसि भवदस्यन्नं प्राणो बहुर्भव । ज्येष्ठं यन्नाम नामत ओं भूर्भुवः स्वर्जनदोम् ॥' इति ॥

(१) कौसू. ९२।१-३२.

अतिसृजति– 'माताऽऽदित्यानां दुहिता वसूनां स्वसा रुद्राणाममृतस्य नाभिः । प्र णो वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ ओं तृणानि गौरत्तु' इत्याह ॥

'सूयवसात्' इति प्रतिष्ठमानामनुमन्त्रयते ॥

नालोहितो मधुपर्को भवति ॥

नानुज्ञानमधीमह इति 'कुरुत' इत्येव ब्रूयात् ॥

'स्वधिते मैनं हिंसीः' इति शस्त्रं प्रयच्छति ॥

'पाप्मानं मेऽप जहि' इति कर्तारमनुमन्त्रयते ॥

आग्नेयीं वपां कुर्युः ॥

अपि वा ब्राह्मण एव प्राश्नीयात्तद्देवतं हि तद्धविर्भवति ॥

अलंकरणदानम्

अथास्मै स्नानमनुलेपनं मालाऽभ्यञ्जनमिति ॥

यदत्रोपसमाहार्यं भवति तदुपसमाहृत्य ॥

'अथोपासकाः प्राप्य 'उपासकाः स्मो भोः' इति वेदयन्ते ॥

तान् प्रतिमन्त्रयते– 'भूयांसो भूयास्म ये च नो भूयसः कार्ष्टाऽपि च नोऽन्ये भूयांसो जायन्ताम्' ॥

'अस्य च दातुः' इति दातारमीक्षते ॥

अन्नाहरणम्

अथान्नाहाराः प्राप्य 'अन्नाहाराः स्मो भोः' इति वेदयन्ते ॥

तान् प्रतिमन्त्रयते– 'अन्नादा भूयास्म ये च नोऽन्नादान्कार्ष्टाऽपि च नोऽन्येऽन्नादा भूयांसो जायन्ताम्' ॥

'अस्य च दातुः' इति दातारमीक्षते ॥

आहृतेऽन्ने जुहोति– 'यत्काम कामयमानाः' इत्येतया ॥

'यत्काम कामयमाना इदं कृण्मसि ते हविः। तन्नः सर्वं समृध्यतामथैतस्य हविषो वीहि स्वाहा ॥' इति ॥

अर्हणीयगणना

एष आचार्यकल्प एष ऋत्विक्कल्प एष संयुक्तकल्प एष विवाहकल्प एषोऽतिथिकल्पः ॥

## वैखानसगृह्यसूत्रम्

वरमधुपर्कप्रयोगः

[1]अभ्यागतमुत्तमं कन्याप्रदः 'संस्रवन्तु' इति निरीक्ष्य 'यशोऽसि' इत्यावसथे विष्टरं कूर्चं पाद्यमर्घ्यमाचमनीयं मधुपर्कं च संकल्पयति ॥

तत्रोपवेश्य 'राष्ट्रभृदसि' इति कूर्चं दत्त्वा 'आपः पादौ' इति पादौ सव्यादि प्रक्षालयति। स धौतपादो 'विराजः' इति स्वहस्तेन तद्धस्तं परिमृश्य तेनाऽऽत्मनो हृदयमभिमृशति। ततो 'मयि तेजः' इत्यर्घ्यमाचमनीयं चाऽऽददीत। 'आ मा गन् यशसा' इति मधुपर्कं दद्यात्। 'देवस्य त्वा' इति प्रतिगृह्य 'यन्मधुनो मधव्यम्' इति प्राश्नीयात्। 'योगे योगे' इत्याचम्याऽऽचमेत्– 'अमृतापिधानमसि' इति। धेनुं बद्ध्वा 'गौर्धेनुः' इति तृणमुष्टिं प्रदाय 'गौरस्यपहत' इति संस्पृश्य 'तत्सुभूतम्' इति विसर्जयति। 'विराजः' इति पाद्यदानम्, 'आ मा गन् यशसा' इत्याचमनम्, 'अमृतो-'पस्तरणमसि' इति मधुपर्कदानम्, 'पृथिवी' इति तस्यान्नसंकल्पनम्, 'अमृतापिधानमसि' इति मुखवासदानमिति विशेष इत्येके ॥

'द्यौस्त्वा ददातु' इति ब्राह्मणान्भोजयित्वा 'इन्द्राग्नी मे वर्चः' इत्येषां प्रणामं कुर्यात् ॥

(१) वैगृ. २।१५–१७.

## गृह्यपरिशिष्टम्

मधुपर्कलक्षणम्

[1]कांस्येन कांस्येऽपिहितं दधिमध्वाज्यसंयुतम्।
मधुपर्कमिति प्राहुर्याज्ञिका यज्ञकर्मणि ॥

मधुपर्कस्य वरशाखया कर्तव्यता

[2]वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः।
मधुपर्कः प्रदातव्यो ह्यन्यशाखेऽपि दातरि ॥

(१) अत्र ऋत्विगाद्युपलक्षणार्थं वरदातृशब्दौ। तदुक्तम्– 'अर्च्यशाखया मधुपर्कः' इति। याज्ञिकास्तु– अर्च्यस्य यच्छाखीयं कर्म तच्छाखीयो मधुपर्क इति वदन्ति। तथा जगन्नाथकारिकायाम्– 'तत्तद्गृह्योक्तविधिना विष्टराद्यर्हणं ततः।' इति। 'सर्वत्र यजमानशाखयैव मधुपर्कः' इति जयन्तः। तत्तु कैरपि नाऽऽदृतम्। * गभा. ५६

(२) वर इत्यर्हणीयमात्रोपलक्षणम्, मधुपर्काम्नानात्। स चर्त्विजो यच्छाखीयमार्त्विज्यं तच्छाखीयगृह्यानुसारेण कार्यः, आर्त्विज्यशाखीयमधुपर्कसंस्कृतस्यैव तत्तदार्त्विज्याधिकारात्। तत्तच्छाखीयोपनयनसंस्कृतस्यैव तत्तच्छाखाध्ययनाधिकारवत्। संप्र. ८२३–८२४

(३) अयं चार्च्यशाखया कार्यः। तदुक्तं परिशिष्टे– 'अर्च्यस्य यस्य या ...' इति। याज्ञिकास्तु ज्योतिष्टोमादावन्यशाखीयोऽपि यच्छाखीयमार्त्विज्यं करोति तच्छाखया कुर्वन्ति, तत्संप्रदायमात्रम्। संम. ७२

* संग. गभावत् संप्रवच्च। सिन्धु. गभावत्।

(१) संप्र. ८२२ परिशिष्टम्.

(२) प्रपा. ३४९ या भवेत् (यस्य या) कारिका : ३५२ या भवेत् (यस्य या); गभा. ५६ ह्यन्य (नान्य); प्रर. १०४; संप्र. ८२३ व्यो ह्यन्य (व्योऽप्यन्य); संम. ७२ वरस्य (अर्च्यस्य) शेषं प्रपावत् संप्रवच्च, परिशिष्टम्; सिन्धु. ११३५; विपा. ३८ (भागः २) संप्रवत्, क्रमेण कात्यायनगृह्यम्; संकौ. २१५ परिशिष्टम्; संग. १६४ संप्रवत्; संर. ५४२.

(४) वर इत्यर्घ्यस्योपलक्षणम् । जयन्तेन तु यजमानशाखयैव मधुपर्क उक्तः । वस्तुतस्तु सत्याषाढसूत्रानुसारिभिः (स्व)सूत्रोक्त एव मधुपर्कः कार्य इति युक्तं प्रतिभाति । संर. ५४२

समांसभोजनस्य कलौ वर्ज्यत्वं प्रतिकल्पश्च

**[१]समांसं मधुपर्काङ्गभोजनं तत्कलेः पुरा ।**
**कलावमांसं साज्यं तदभावे शार्करादिकम् ॥**

## गौतमः

अर्हणीयगणना

**[२]ऋत्विगाचार्यश्वशुरपितृव्यमातुलानामुपस्थाने मधुपर्कः ॥**

ऋत्विगादीनां तु गृहागमने सति मधुपर्केण पूजा कर्तव्या प्रथमम्, उपस्थानग्रहणान्न द्वितीयादौ । मधुपर्कविधिश्च गृह्ये द्रष्टव्यः । * मभा.

पुनरर्हणावधिः

**[३]संवत्सरे पुनः ॥**

पूजितास्ते यदि संवत्सरात्पुनरागच्छेयुस्तदा पुनरपि मधुपर्को देयः, नार्वाक् । * मभा.

**[४]यज्ञविवाहयोरर्वाक् ॥**

अर्वागपि संवत्सराद्यज्ञे विवाहे चाऽऽगतानां मधुपर्को देयः । यज्ञे ऋत्विजां श्रुतित एव मधुपर्कदानस्य सिद्धत्वात् श्वशुराद्यर्थ आरम्भः । * मभा.

अर्हणीयविशेषप्रयुक्तोऽर्हणे विशेषः

**[१]राज्ञश्च श्रोत्रियस्य ॥**

राज्ञश्चोपस्थाने मधुपर्को देयः श्रोत्रियश्चेत् । पृथग्ग्रहणादर्वागपि संवत्सरात् । चकाराद्यज्ञे च । ¶ मभा.

**[२]अश्रोत्रियस्याऽऽसनोदके ॥**

यदि राजा अश्रोत्रियो भवति तस्याऽऽसनोदकमात्रेणैव पूजा कर्तव्या । * मभा.

**[३]श्रोत्रियस्य तु पाद्यमर्घ्यमन्नविशेषांश्च प्रकारयेत् ॥**

(१) ब्राह्मणस्य श्रोत्रियस्य । कुत एतत्? पुनः श्रोत्रियग्रहणात् । वैश्यार्थं चेत्, न, 'वैश्यो मधुपर्केण न मान्यः, तस्मात्तं भोजयेदेव' इति स्मृत्यन्तरदर्शनात् । तुशब्दो विशेषार्थः । स यदि वृत्तसंपन्नो भवति तस्योपस्थाने पादप्रक्षालनार्थं पूजार्थं चोदकं देयम्, पाद्यमर्घ्यमिति विसमासात् मधुपर्कश्च । अन्नविशेषाः मुद्गोदनादिभेदभिन्नाः । चकारादुपदंशादिविशेषाश्च । प्रोपसर्गाद्घृतबहुलम् । तथा च श्रुतिः— 'ब्राह्मणायाभ्यागताय सर्पिष्मदन्नं पचति' इति । मभा.

(२) तुशब्दो नब्राह्मणं व्यावर्तयति, श्रोत्रियस्य ब्राह्मणस्यातिथेः । पाद्यं पादोदकम् । अर्घ्यं फलोपहारताम्बूलादि । अन्नविशेषाः पायसापूपादयः तांश्च प्रकर्षेण कारयेत्समर्थः । गौमि.

**नित्यं वा संस्कारविशिष्टम् ॥**

(१) असामर्थ्ये तु सति— नित्यमिति । यदेवास्य गृहे नित्यमन्नं तदेवोपदंशेन बहुलेन विशिष्टं साधारणात् । मभा.

---

* गौमि. मभागतम् ।

(१) बाल. १।१५६ पृ. ४१५ परिशिष्टम्.

(२) गौध. ५।२८; मेधा. ३।११०; मभा.; गौमि. ५।२५; ममु. ३।१२० मातुलाना (मातुलादीना); मच. ३।१२० (ऋत्विक्श्वशुरपितृमातुलानामुपस्थाने मधुपर्कः).

(३) गौध. ५।२९; मभा.; गौमि. ५।२६; ममु. ३।१२०; मच. ३।१२०.

(४) गौध. ५।३०; विश्व. १।१०९; मेधा. ३।११०; मभा.; गौमि. ५।२७; ममु. ३।१२०; मच. ३।१२०.

¶ गौमि. मभागतम् ।

* गौमि. मभावत् ।

(१) गौध. ५।३१; मभा.; गौमि. ५।२८; ममु. ३।१२० (राज्ञः श्रोत्रियस्य च); मच. ३।१२० ममुवत्.

(२) गौध. ५।३२; मिता. १।१०९ स्याऽऽसनोदके (स्योदकासने); मभा.; गौमि. ५।२९.

(३) गौध. ५।३३–३५; मभा.; गौमि. ५।३०–३२.

(२) असमर्थस्तु– नित्यमिति । यदस्य गृहे नित्यं विद्यमानं तदेव मरीचजीरकादिसंस्कारविशिष्टं साधयेत् । गौमि.

**मध्यतोऽन्नदानमवैद्ये साधुवृत्ते ॥**

यस्त्वश्रोत्रियो ब्राह्मणः साधुवृत्तो भवति वृत्तवान्भवति तस्मिन्नुपस्थिते मध्यमेन संस्कारेणान्वितं देयमन्नम् । अन्नग्रहणं नियमार्थम्, अन्नमेव देयं न पाद्यादीनि । अश्रोत्रियत्वादेव संस्कारवियोगो मा भूदित्येवमर्थं दान-ग्रहणम् । * मभा.

[१]**विपरीते तु तृणोदकभूमि ॥**

(१) तुशब्दात् उभयविपरीते । ततश्च यदि विद्वान् असाधुवृत्तो भवति तस्यापि 'नित्यं वा संस्कारविशिष्टम्' इत्येवं द्रष्टव्यम् । न तृणोदकभूमिमात्रमेव देयम् ।

मभा.

(२) विपरीतः विद्यायुक्तोऽपि न साधुवृत्तः । तस्मिन् 'इहाऽऽस्यताम्' इति भूमिं तृणमासनमुदकं च दद्यात् । गौमि.

[२]**स्वागतमन्ततः ॥**

(१) स्वागतं सूनृतां वाचमित्यर्थः । अन्ततः आपदि तृणोदकादीनामसंभवे सति सूनृतां वाचमुच्चारयेदित्यर्थः ।

मभा.

(२) स्वागतमन्ततः अनन्तरं स्वागतं च प्रयुञ्जीत । गौमि.

**पूजाऽनत्याशश्च ॥**

(१) सूनृतवचनादुत्तरकालं पूजा कर्तव्या । अनवज्ञाकरणमेव पूजा । ततश्चावज्ञा न कर्तव्येत्यर्थः । अनत्याशश्च ग्रासमात्रमप्यभोजयित्वा स्वयमन्ततः आपदि न भोक्तव्यमित्यर्थः । मभा.

‡ गौमि. मभागतम् ।

(१) गौध. ५।३६ ; मभा. ; गौमि. ५।३२ 'विपरीते तु' इत्यस्य स्थाने 'विपरीतेषु' इति मुद्रितपाठः, व्याख्यानं तु 'विपरीते' इति पाठानुसारि.

(२) गौध. ५।३७–३८ ; मभा. ; गौमि. ५।३३.

(२) संभाषणेन पूजा कर्तव्या । अनत्याशश्च । अत्याशः पायसापूपादिविशिष्टक्रमस्तदन्यो मध्यमरीत्या कर्तव्यः । आशः अशनमिति यावत् । गौमि.

[१]**शय्यासनावसथानुव्रज्योपासनानि सदृक्छ्रेयसोः समानि ॥**

आत्मना तुल्यस्य चाधिकस्य चातिथेः शय्यादीन्यात्मतुल्यानि कर्तव्यानि । शय्या खट्वादि, आसनं फलकादि, आवसथमपवरकादि, अनुव्रज्या अनुगमनम्, उपासनं नमस्कारादि । अनुव्रज्योपासनयोरात्मतुल्यत्वासंभवादात्मनस्तुल्यस्य चाधिकस्य चानुव्रज्योपासनं च कर्तव्यमित्येवमर्थं उपदेशः । शय्यासनादि स्वात्मनः साम्येन कर्तव्यम् । आत्मन एव साम्यं न परस्परयोः, उत्तमस्य संभावनीयत्वात् । तथा च वक्ष्यति– 'समासमाभ्यां विषमसमे पूजातः । अनर्चितं च' इति । ततश्च सदृक्श्रेयसोरात्मापेक्षया तुल्यानि, परस्परापेक्षयाऽतुल्यानीति द्रष्टव्यम् । ‡ मभा.

[२]**अल्पशोऽपि हीने ॥**

(१) ईषद्धीनेऽपि समानि कर्तव्यानि । मभा.

(२) आत्मना किंचिदूनेऽपि अतिथावागते समान्येव शय्यादीनि देयानीत्येके । वयं तु ब्रूमः– हीनेऽतिथावागतेऽल्पशोऽपि शय्यादीनि देयानि, न तु हीन इति कृत्वाऽत्यन्तलोपः कर्तव्यः । गौमि.

## बौधायनः

### अर्हणीयगणना

[३]**ऋषिविद्वन्नृपवरमातुलश्वशुरर्त्विजः ।**
**एतेऽर्घ्याः शास्त्रविहिताः स्मृताः कालविभागशः ॥**

‡ गौमि. मभागतम् ।

(१) गौध. ५।३९ ; मभा. ; गौमि. ५।३४ समानि (समानानि).

(२) गौध. ५।४० ; मभा. ; गौमि. ५।३५.

(३) बौध. २।६।३६–३७.

ऋषिः मन्त्रार्थज्ञः । विद्वान् साङ्गस्य सेतिहासस्य वेदस्य प्रवक्ता । नृपोऽभिषिक्तः क्षत्रियः । वरो वोढा दुहितुः । इतरे प्रसिद्धाः । अर्घ्याः मधुपर्कार्हाः इति शास्त्रेण वेदेन चोदिताः स्मृताश्च स्मृतिकर्तृभिर्मन्वादिभिरप्यनुमोदिताः । यद्वा कालविभागेन स्मृताः ।

बौवि.

पुनरर्हणावधिः

**ऋषिविद्वन्नृपाः प्राप्ताः क्रियारम्भे वरर्त्विजौ ।**
**मातुलश्वशुरौ पूज्यौ संवत्सरगतागतौ ॥**
**इति ॥**

कोऽसौ कालविभाग इत्याह— ऋषीति । प्राप्ताः प्रवासादभ्यागताः । क्रियारम्भः पुंसवन( ? )सोमयागादीनामारम्भः । संवत्सरपर्यागतौ( ? ) संवत्सरमुषित्वाऽऽगतौ ।

बौवि.

## आपस्तम्बः हिरण्यकेशिधर्मसूत्रं च

त्रयाणां स्नातकानामर्हणं समानम्, अर्हयितॄणां फलेषु तारतम्यम्

**[1]तेषु सर्वेषु स्नातकवद्वृत्तिः ॥**

विद्यास्नातको व्रतस्नातक उभयस्नातक इति त्रयः स्नातका उक्ताः । तेषु सर्वेषु स्नातकवत्, 'तदर्हति' इति वतिः, स्नातकार्हा वृत्तिः पूजा 'यत्रास्मा अपचितिम्' इत्यादिः कार्या, न तु व्रतस्नातके न्यूना उभयस्नातकेऽधिकेति ।

उ.

**[2]समाधिविशेषाच्छ्रुतिविशेषाच्च पूजायां फलविशेषः ॥**

यद्यप्येवं तथाऽपि पूजयितुः फलविशेषोऽस्तीत्याह— समाधीति । कर्तव्येषु कर्मस्ववधानं समाधिः । श्रुतिः श्रुतम् ।

उ.

(१) आध. १।३०।४ ; हिध. २६।८।४ ; ब्रक. २७७.

(२) आध. १।३०।५ ; हिध. २६।८।५.

अर्हणीयानां गणना योग्यता च

**† [1]गोमधुपर्कार्हो वेदाध्यायः ॥**

(१) साङ्गस्य वेदस्याध्येता वेदाध्यायः सोऽतिथिर्मधुपर्कमर्हति, गां च दक्षिणाम् ।

उ.

(२) मधुपर्को द्विविधः, गोसहितस्तद्रहितश्च । तत्र गोसहितो वेदाध्याय्याचार्यादीनाम् । तत्रेदं धर्मसूत्रम्— 'गोमधुपर्कार्हो...... धर्मयुक्तः' इति । गौश्च मधुपर्कश्च गोमधुपर्कौ, ताभ्यामर्हो योग्य इत्यर्थः । एतादृशे समासे मधुपर्कान्तर्गतगोरपेक्षयाऽधिका गौर्देया भवति । वेदाध्यायीत्याचार्यादिविशेषणम् । यद्याचार्यादयः कृत्स्नवेदाध्यायिनस्तदैव मधुपर्कादधिका गौर्देया, नान्यदेति । एतेन ज्ञायते वेदैकदेशाध्यायिनोऽप्याचार्यादयः स्युस्तेऽपि केवलेन मधुपर्केण पूज्या एवेति । अथवा गवा युक्तो मधुपर्को गोमधुपर्क इत्येवं समासः । मधुपर्कश्चात्र मुख्यवृत्त्या मधुपर्कप्रदानान्तः । अस्मिन् पक्षे मधुपर्कान्तर्गतगोरप्यभावः, अधिकगोदानाभावस्तु सुतराम् ।

संर. ३८३

**[2]आचार्य ऋत्विक् स्नातको राजा वा धर्मयुक्तः ॥**

अवेदाध्यायाः अप्याचार्यादयो गोमधुपर्कार्हाः । अत एव ज्ञायते एकदेशाध्यायिनावप्यृत्विगाचार्यौ भवत इति । धर्मयुक्त इति राज्ञो विशेषणम् । वाशब्दः समुच्चये ।

उ.

† हिरण्यकेशिधर्मसूत्रे 'समुदेतः' इत्यधिकम्, 'कुलशीलसंपन्नः' इति च तस्य व्याख्यानम् ।

(१) आध. २।८।५ ; हिध. २७।१।१०७ ध्यायः + ( समुदेतः ) ; संकौ. ११८, २१७ ; संर. १८२, ३८३ ध्यायः ( ध्यायी ).

(२) आध. २।८।६ ; हिध. २७।१।१०८ स्नातको ( स्नातकः श्वशुरो ) ; संकौ. ११८ (वा० ) युक्तः + ( च ) ; संर. १८२ युक्तः + ( च ) शेषं हिधवत् ; ३८३ हिधवत् .

पुनरर्हणावधिः

[१]आचार्यर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च ॥

( १ ) एतद्गृह्ये व्याख्यातम् । गौरत्र दक्षिणाऽधिका विधीयते । उ.

( २ ) पूर्वोक्तविशेषणविशिष्टानामाचार्यादीनां संवत्सरोत्तरं प्राप्तानामेतेषां गोयुक्तमधुपर्केण पूजा कार्येत्यर्थः । अनेन सूत्रेणावधिप्रदर्शनं क्रियते । विद्यास्नातकविद्याव्रतस्नातकाभ्यामेव गौर्देया, न केवलव्रतस्नातकाय । उत्तरसूत्रादिदं ज्ञायते– पूर्वसूत्रे धर्मोपदेष्टृत्वादिधर्मसंपत्तिप्रयुक्तो मधुपर्क इति । तत्र धर्मोपदेष्टुर्मधुपर्कः उपनयनोत्तरम्, ऋत्विजो वरणोत्तरम्, स्नातकस्य समावर्तनान्ते, श्वशुरस्य देवकोत्थापनान्ते, राज्ञोऽभिषेकान्ते इति द्रष्टव्यम् । 'प्रतिनिमित्तं नैमित्तिकम्' इति न्यायात् 'ऋत्विजो वृत्वा मधुपर्कमाहरेत्' इत्याश्वलायनसूत्रात् 'पुनः पुनर्यज्ञे' इति छन्दोगसूत्राच्च प्रतियज्ञं संवत्सरोत्तरं देवभूतपितृभूतानामृत्विजां कर्मव्यतिरिक्तकाले उपस्थितिः संभवति, न मनुष्यभूतानाम्, कर्मव्यतिरिक्तकाले एतेषामृत्विक्त्वासंभवात् ।

संर. ३८३

मधुपर्कलक्षणम्

[२]दधि मधुसंसृष्टं मधुपर्कः पयो वा मधुसंसृष्टम् ॥

कोऽसौ मधुपर्क इत्यत आह– दधीति । गृह्योक्तस्यानुवादोऽयमुत्तरविवक्षया । उ.

[३]अभाव उदकम् ॥

दधिपयसोरलाभे उदकमपि देयं मधुसंसृष्टमित्येके । नेत्यन्ये, पूर्वत्र पुनर्मधुसंसृष्टग्रहणात् । उ.

( १ ) आध. २।८।७ ; हिध. २७।१।१०९ श्वशुराय ( स्नातकाय ) ; संर. ३८३ र्त्विजे + ( स्नातकाय ).

( २ ) आध. २।८।८ ; हिध. २७।१।११० ; संकौ. २१५ ( दधि ...... पर्कः० ) धर्मप्रश्नः .

( ३ ) आध. २।८।९ ; हिध. २७।१।१११ ; संकौ. २१५ धर्मप्रश्नः .

## वसिष्ठः

मधुपर्के पशुहिंसानुमतिः

[१]मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।
अत्रैव च पशुं हिंस्यान्नान्यथेत्यब्रवीन्मनुः ॥

अर्हणीयगणना

[२]षडर्घ्या भवन्ति ऋत्विग्विवाह्यराजा( ? ज )-पितृव्यस्नातकमातुलाश्च ॥

मधुपर्के उच्छिष्टतादोषाभावः

[३]प्राणाहुतिषु सोमे च मधुपर्के तथैव च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥

सर्पिष्मदन्नदानम्

[४]अथाप्युदाहरन्ति– क्षत्रियायाभ्यागताय सर्पिष्मदन्नं पचति ॥

## मनुः

स्नातकस्य मधुपर्कार्हणीयता

[५]तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।
स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा ॥

( १ ) तं ब्रह्मदायहरं प्रथमं गवाऽर्हयेत् । ब्रह्म च दायश्च ते उभे हरति स्वीकरोतीति ब्रह्मदायहरः । दीयत इति दायः धनम्, ब्रह्म वेदः, हरणम् अधिगमः । गृहीतवेदः पित्रा कृतविभागो गार्हस्थ्यं प्रतिपद्यते, निर्धनस्यानधिकारात् । यदि तु पिता निर्धनस्तदा सान्ता-

( १ ) वस्मृ. ४।६. ( २ ) वस्मृ. ११।१.

( ३ ) स्मृच. १०१ सोमे च ( होमेषु ) ; मुक्ता. २३९.

( ४ ) अप. १।१०९.

( ५ ) मस्मृ. ३।३ ; कभा. ४८ 'स्मरन्ति' इत्युक्तम् ; अप. १।५१ पृ. ७६ ; गृक. ५ ; मवि. ब्रह्मदाय ( ब्रह्म दाय ) ; गृर. ६ मर्हयेत् ( मर्हेत ) ; जभा. ४९ ( = ) ; हभा. ५१ मर्हये ( मर्चये ) ; गभा. ५३ ( = ) हभावत् ; संग. १५५ तल्प आ ( तल्पमा ) ; भाच. संगवत् ; संदी. १७ ( भागः २ ) हभावत् .

निकतया धनमर्जयित्वा विवाहयेत् । अन्ये तु ब्रह्मैव दायः ब्रह्मदाय इति पूर्वोक्तविध्यनुवादं मन्यन्ते । पितुरिति । ननु चाऽऽचार्यस्य माणवकाध्यापनेऽधिकार उक्तः, किमिदमुच्यते पितुर्ब्रह्मदायहरमिति ? उच्यते— यस्य पिता विद्यते तस्य स एवाऽऽचार्यः । अभावे पितुरशक्तौ वाऽन्यस्याधिकारः । आचार्यान्तरोपादानेन पितुरधिकारो निवर्तत एव । स्वयं वाऽध्यापयत्वन्योपादानेन वेति न विशेषः । यदप्याहुः— 'वरो दक्षिणा' इत्युपनयने नित्यवद्दक्षिणाम्नानात्परकर्तृकत्वमेवेति, तदसत् । उपनयने ह्ययं विधिः 'वरो दक्षिणा' इति । उपनेता च पिता वाऽऽचार्यो वा, तौ द्वावपि स्वाधिकारप्रवृत्तौ नानत्यन्तरमपेक्षेते । आनमनार्थं हि दक्षिणादानम् । न चाधिकारान्तरतः प्रवृत्तस्याऽऽनतिरुपयुज्यते । तेनायं दक्षिणाशब्दः आनमनार्थाभावादर्थाद्धिरण्यदानवददृष्टार्थदानोपलक्षणार्थो विज्ञेयः । पित्रैव चासौ तावता धनेन स्वामी कर्तव्यो येन वरदानमस्य संपद्यते ।

अथायमाग्रहः— नाऽऽनत्यर्थाद्दानादृते दक्षिणाशब्दस्योपपत्तिः । न वा मुख्ये सति लक्षणा न्याय्येति, एवं तर्हि यस्य पिता न, तत्स्थानीयो नाऽऽचार्यः, स यदाऽऽत्मानमुपनयेत् सत्यकामवत्तद्विषयो दक्षिणाविधिर्भविष्यति । तस्यापि चेषदपेतशैशवस्याऽऽत्मसंस्कारायाल्येवाधिकार इति प्रतिपादितम् । तस्मादुभयथा पितुरधिकारः, स्वयमुपनयमानस्यान्यमाचार्यमुपाददानस्य वा । प्रतीतम् अभिमुखीभूतं गृहाश्रमप्रतिपत्तौ, न तु नैष्ठिकं समाप्ताध्ययनविध्यर्थमपि ग्रामप्रतिपत्तौ । स्रग्विणम् । यावन्तः केचन गृह्यकारैर्मधुपर्ककर्मणि धर्मा आम्नातास्तेषां प्रदर्शनार्थमेतत् । तल्प आसीनं महार्हपर्यङ्कशयनोपविष्टम् । पूजाधिकारार्हं शयानम्( ? शयनम् ) । गवा मधुपर्केण । मधुपर्केऽसौ विधिः पाक्षिक आम्नातः । अतो गोशब्देन तत्साधनकर्मविशेषो लक्ष्यते । अर्हयेत् पूजयेत् । अधिकारात् पिता आचार्यो वा । प्रथमं पूर्वं विवाहात् । प्रतीतं स्वधर्मेणेत्यनुवादः । स्वधर्मेण ब्रह्मदायहरं स्वधर्मेण चार्हयेदिति संबन्धे न विशेषः ।

† मेधा.

( २ ) तं कृतब्रह्मचर्यं ब्रह्मचर्यावस्थानोदितधर्मानुष्ठानानुशयेन प्रतिख्यातं 'तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः' इति श्रुत्या पितुः प्राथमकल्पिकत्वात् पितुः सकाशात्तदभाव आचार्ये अधीतवेदं कृतमाल्याद्यलङ्कारं परार्ध्यशयनोपविष्टं पिता तदभाव आचार्यादिर्गृह्योक्तस्वरूपगोसाधनकमधुपर्काख्यकर्मणा गार्हस्थ्यप्रतिपत्तेः प्राक् पूजयेत् । दीयते इति दायः, ब्रह्मैव दायः ब्रह्मदायः, तं हरतीति ब्रह्मदायहरः ।

$ गोरा.

( ३ ) स्वधर्मेण दाक्षिण्यादिना । ‡ गृक. ५

( ४ ) ब्रह्म वेदं प्रतीतं प्राप्तवन्तम् अधिगतवन्तमिति यावत् । दायहरं वित्तहरं पितुः पितृऋक्थग्रहणार्हम् । अनैष्ठिकमिति यावत् । प्रथमं यस्य गृहेऽसावुपस्थितः सान्तानिकत्वेनार्थार्थितया स गवाऽर्हयेदिति गोशब्दस्तत्सहचरितमधुपर्कपरः । स्रग्विणं तल्प आसीनमिति माल्यासनविशेषाभ्यामर्चाऽभिप्रेता । तल्पे तूलिकादिमति शय्यारूप आसने । मवि.

( ५ ) स्वधर्मेण दक्षिणादानादिना ब्रह्मदायहरम्, ब्रह्मैव वेद एव दायो धनं ब्रह्मदायः । ‡ गृर. ६

( ६ ) पितुः सकाशाद्ब्रह्मदायहरम्, ब्रह्म वेदः, तदर्थे दायः दानं दक्षिणा ब्रह्मदायः, तं हरतीति ब्रह्मदायहरं पितुः सकाशाद्गुरुदक्षिणां गृहीत्वा गुरवे दत्तवन्तमित्यर्थः । प्रतीतं प्रतिगतं ब्रह्मचर्यान्निवृत्तमिति यावत् । स्रक्शब्दः सर्वालङ्काराणामुपलक्षणम् । गोशब्दोऽश्वादीनाम् । अर्हयेत् कन्याप्रदो गृही वा । नन्द.

( ७ ) तं प्रथमं पूजयेत् । कीदृशम् ( गुरुम् ? ) ? स्वधर्मेण ख्यातम् । पुनः कीदृशम् ? ब्रह्मदायहरम् । ब्रह्मैव

† अप. मेधागतम् ।

$ मसु गोरागतम् । मच. गोरागतं मविगतं च ।

‡ शेषं गोरागतम् ।

वेद एव धनं ( यस्य ? ) तस्य दायः अंशः , तस्य हरं हरति स्वीकरोति तम् । पुनः कीदृशम् ? स्रग्विणम् । पुनः कीदृशम् ? तल्प आसीनम् आसनस्थम् । भाच.

अर्हणीयगणना पुनरर्हणावधिश्च

[1]राजर्त्विक्स्नातकगुरून् प्रियश्वशुरमातुलान् ।
अर्हयेन्मधुपर्केण परिसं( ? परि सं )वत्सरात् पुनः ॥

(१) अतिथिपूजाप्रसङ्गेनान्येषामपि केषांचित् पूज्यानां गृहागतानां पूजाविशेषो विधीयते । राजाऽभिषिक्तः , न क्षत्रियमात्रम् । अतिमहती ह्येषा पूजा, न तां सर्वः क्षत्रियोऽर्हति । न हि स्नातकगुरुभ्यां तस्य सहोपदेशो युक्तः । पूजासाम्यं गुरुणा न तस्य युक्तम् । लिङ्गदर्शनाच्च । ' तद्यथैवादो मनुष्यराज आगते ' इत्यातिथ्येष्टिब्राह्मणम् । गोवधो मधुपर्कविधावुक्तः , ' गोघ्नोऽतिथिः ' इति पुरुषराजविषयं दर्शयति । तेन क्षत्रियेऽक्षत्रिये वा जनपदेश्वरे पूजेयं प्रयोक्तव्या । शूद्रे तु नास्ति मन्त्रवत्त्वम् । ननु च शूद्रस्य मन्त्रोच्चारणं निषिद्धम् । न पुनः शूद्रसंप्रदानके कर्मणि ब्राह्मणादीनाम् । नैषः , अर्घ्याणामपि ' भूतेभ्यस्त्वा ' इत्यादिमन्त्रोच्चारणमस्ति । ननु च महाभारते शूद्रकर्तृकमपि मधुपर्ककर्म श्रूयते— ' तदर्हमासनं चैव यथावत्प्रत्यवेदयत् । मधुपर्कं च गां चैव तस्मै भगवते स्वयम् ॥ ' । भगवते वासुदेवाय विदुर इति । तत्साधने दधनि भक्त्या मधुपर्कशब्दः प्रयुक्तः । तादर्थ्यात्तच्छब्दो भवति ' आयुर्वै घृतम् ' इतिवत् । राजशब्दस्तावज्जनपदेश्वरवचनो न क्षत्रियमात्रे वर्तते । प्रियो जामातेत्याहुः । स्नातको विद्याव्रताभ्यामुभाभ्याम् । अन्यथर्त्विग्गुरवः सर्वे स्नातका एव । आश्रमान्तरस्थानां भैक्षचर्या विहिता, न त्वथितिधर्मेण भोजनम् । अथवाऽचिरनिर्वृत्तवेदाध्ययनः स्नातको गृह्यते । एतानर्हयेत् पूजयेत् । मधुपर्कशब्दः कर्मनामधेयम् । गृह्यात्तस्य स्वरूपावगमः । परिसंवत्सरानिति राजादिपूज्यविशेषणम् । परिगतोऽतिक्रान्तः संवत्सरो येषां तान् । यदि संवत्सरेऽतीते आगच्छन्ति तदा मधुपर्कार्हाः , अर्वाक् न । केचिदेवं व्याचक्षते— यदि संवत्सरादर्वागागच्छन्ति तदाऽनतीतेऽपि संवत्सरे प्रथमपूजायाः पुनर्लभन्ते पूजाम् । अन्ये त्वाहुः— सांवत्सरिकी तेषां पूजा, न यावदागमनम् । अस्मिन् पक्षेऽर्वागागमनं न पूजाप्रतिबन्धकम् । पाठान्तरं ' परिसंवत्सरात् ' इति । यावदेव संवत्सरं तावत्परिसंवत्सरात् , तत ऊर्ध्वं पुनः पूज्या इत्यर्थः । मेधा.

( २ ) अतिथिपूजाप्रसङ्गेनायं राजादीनां पूजाविशेष उच्यते— राजर्त्विगिति । जनपदाभिषिक्तं क्षत्रियं गृहागतम् , याजक ऋत्विजम् , यः कश्चिद् गृहस्थो द्विजातिर्विद्याव्रतस्नातकम् , शिष्यो गुरुम् , श्वशुरो जामातरम् , जामाता श्वशुरम् , भागिनेयो मातुलं मधुपर्काख्येन गृह्योक्तरूपेण कर्मणा पूजयेत् । परिमितात् संवत्सरात् , संवत्सरेऽतीते पुनर्गृहागतानेतान् पूजयेत् । ये तु स्नातकमाचार्यः पूजयेत् , ' तं प्रतीतम् ' इत्युक्तत्वादित्याहुः , तेषां परिसंवत्सरान्( ? परिसंवत्सरात् ) इति स्नातकविशेषणं कथं स्यात् । गोरा.

( ३ ) गुरुराचार्यः उपाध्यायो वा । प्रियो मित्रम् । परिसंवत्सरात् संवत्सरं विहायातिवाह्य संवत्सरादूर्ध्वम् । $ मवि.

( ४ ) ऋत्विक् यज्ञे येन यस्याऽऽर्त्विज्यं कृतम् । परिसंवत्सरादिति संवत्सरं वर्जयित्वा तदूर्ध्वं गृहागतान् पुनर्मधुपर्केण पूजयेत् । ' पञ्चम्यपाङ्परिभिः ' इति सूत्रेण वर्जनार्थपरियोगेनेयं पञ्चमी । अत एवैतत्सूत्रव्याख्याने जयादित्येनोक्तम्— ' अपेन साहचर्यात् परेर्वर्जनार्थस्य ग्रहणम् ' इति । मेधातिथिस्तु— ' परिसंवत्सरानिति पठित्वा परिगतो निष्क्रान्तः संवत्सरो येषां

---

(१) मस्मृ. ३।११९ ; मेधा. परिसंवत्सरात् ( परिसंवत्सरान् ) ' परिसंवत्सरात् ' इत्यपि पाठः ; गोरा. गुरून् प्रिय ( गुरुप्रिय ) ; नन्द. रात् पुनः ( रागतान् ) ; भाच. परि ( प्रति ).

$ शेषं गोरागतम् ।

तान् पूजयेत्' इति व्याख्यातवान्। उभयत्रापि पाठे संवत्सरमभ्यागमने न मधुपर्कार्हता। $ ममु.

(५) स्नातको नवोढापतिः। प्रियो जामाता।

$ मच.

(६) अथ मधुपर्कार्हानाह— राजर्त्विगिति। स्नातको गृहस्थः। प्रियः सखा। परिगतः संवत्सरो येषां ते परिसंवत्सराः, परिसंवत्सराश्च ते आगताश्चेति परिसंवत्सरागताः। नन्द.

(७) प्रियः जामाता। स्नातको विद्यास्नातकः व्रतस्नातको वा। तान् (राजादीन्) प्रति संवत्सरात्पुनः पुनर्मधुपर्केणार्हयेत्। परिसंवत्सरेति पाठे परिशब्दो वर्जनार्थ इति। भाच.

राजश्रोत्रिययोर्यज्ञे एवार्हणम्

**[1]राजा च श्रोत्रियश्चैव यज्ञकर्मण्युपस्थितौ।**
**मधुपर्केण संपूज्यौ न त्वयज्ञ इति स्थितिः॥**

(१) यज्ञे निमित्तेऽर्वागपि संवत्सरात्प्राप्त्यर्थोऽयमिति केचित्। अन्ये तु पूर्वस्यैव राजश्रोत्रिययोरुपसंहारमाहुः। अनुपसंहारे हि 'न त्वयज्ञे' इति नोपपद्यते। अत्र श्रोत्रियो यः स्नातकः प्रागुक्तः। यदि वा ऋत्विग्गेव, तस्य हि यज्ञकर्मणि प्रारिप्समाने मधुपर्कदानं विहितम्— 'यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत, कृतार्घ्या एवैनं याजयेयुः' (इति)। एवं क्लृप्तमूलैषा स्मृतिर्भविष्यति। इतरथा कल्प्येत मूलम्। अन्ये तु सर्वानृत्विगादीन् श्रोत्रियशब्देन निर्दिष्टान् मन्यन्ते। तथा चाविशेषेण गौतमेन (५।२८।३०) पठितम्। 'ऋत्विगाचार्यश्वशुरपितृव्यमातुलानामुपस्थाने मधुपर्कः' इत्युक्त्वा 'यज्ञविवाहयोरर्वाक्' इति पठितवान्। अतश्च सर्वेषामेवार्घ्याणां यज्ञे निमित्तेऽर्वागपि संवत्सरादर्घार्हता स्यात्। 'न त्वयज्ञे' इति च प्रतिषेधः अर्वाक् संवत्सरात्, नोर्ध्वमित्येवं ज्ञेयः। इह द्वितीये पादेऽनेकधा पाठप्रतिपत्तिः। केचित्पठन्ति— 'तते यज्ञ उपस्थितौ' इति। तेषामयमर्थः— तते प्रारब्धे यज्ञे यदि प्राप्तौ भवतः निमन्त्र्याऽऽनीतौ, तदेयं मधुपर्कक्रिया तयोः, न पुनः प्रारभ्यमाणे। एष पक्षः कैश्चिद्दूष्यते। 'दीक्षितो न ददाति' इति दीक्षितस्य सर्वदानप्रतिषेधान्मधुपर्कदानमनुज्ञायमानं तद्विरुद्धं स्यात्। न च शक्यं वक्तुम्— दानमेतन्न भवति, 'अर्हयेत्' इति नोदनात् पूजैषा विधीयते (इति)। यतोऽस्ति मधुपर्के दधिदानं मांसभोजनादिदानं च। अथोच्यते— स्वयमेव तत् परकीयं भुज्यते इति। एवं सति स्तेयदोषः स्यात्। वचनान्न इति चेत्, अस्त्येव तर्हि ददात्यर्थः। चोदितं च ददातिः(? ददातिना) 'मधुपर्कं च दद्यात्' इति। तस्माद्विरुद्धम्। 'दीक्षितो न ददाति' इत्यनेन स्याद्विरोधः यदि यज्ञशब्दः सोमयागेष्वेव वर्तेत। दर्शपूर्णमासादयोऽपि यागाः, तद्विषयोऽयं विधिर्भविष्यति। नैतद्युक्तम्। एवं सति समाचारविरोधः। न हि शिष्टाः सोमयागेभ्योऽन्यत्र क्वचिदर्घ्याय मधुपर्कमाहरन्ति। आचारो वेदादरः। अतोऽयमेव पाठो युक्तः 'यज्ञकर्मण्युपस्थिते' इति। प्रारभ्यमाणयज्ञे आगतं शिष्टा मधुपर्केण पूजयन्ति, न प्रवृत्तयज्ञाः। अतश्चैतदपि न विचारयामः— सामान्यतः प्राप्तस्य दानस्य भवतु निवृत्तिः, न पुनस्तद्विषयतयैव श्रुतस्य। यज्ञश्चासौ कर्म च तद्यज्ञकर्म, तस्मिन्नुपस्थिते प्राप्ते।

मेधा.

(२) राजस्नातकयोः संकोचार्थमिदमाह— राजेति। राजस्नातकौ यज्ञकर्मण्येव संप्राप्तौ मधुपर्केण पूजनीयौ, न त्वयज्ञे संवत्सरादूर्ध्वमपीति शास्त्रमर्यादा। संवत्सरात् पुनरर्वाक् यज्ञेऽपि न पूज्यौ। पूर्ववाक्ये 'परिसंवत्सरात्' इत्युपादाने अत्र च 'न त्वयज्ञे' इत्युपादानात् राजस्नातकपूजासंकोचार्थत्वमस्य प्रतीयते। गोरा.

(३) अत्र राजाऽन्यदेशनृपतिः क्षत्रिय एव। श्रोत्रियो विद्यामात्रस्नातः। एतौ संवत्सरादूर्ध्वमपि

---

$ शेषं गोरागतम्।

(१) मस्मृ. ३।१२०; मेधा. स्थितौ (स्थिते) द्वितीयपादे 'तते यज्ञ उपस्थितौ' इति पाठान्तरम्; द्वीक. १।११०.

यज्ञकर्मण्येवोपस्थितौ मधुपर्कार्हौ, न त्वेवमेवेति( ? न त्वयज्ञ इति ) स्थितिर्नियमः । मवि.

( ४ ) राजस्नातकयोः पूजासंकोचार्थमाह— राजेति । राजस्नातकौ संवत्सरादूर्ध्वमपि यज्ञकर्मण्येव प्राप्तौ मधुपर्केण पूजनीयौ, न तु यज्ञव्यतिरेकेण । जामात्रादयस्तु संवत्सरादूर्ध्वे यज्ञं विनाऽपि मधुपर्कार्हाः । संवत्सरमध्ये तु सर्वेषां यज्ञविवाहयोरेव मधुपर्कः । तदाह गौतमः— ' ऋत्विगाचार्यश्वशुरपितृव्यमातुलादीनामुपस्थाने मधुपर्कः । संवत्सरे पुनः । यज्ञविवाहयोरर्वाक् । राज्ञः श्रोत्रियस्य च ' (गौध. ५।२८–३१)। ममु.

( ५ ) † तेष्वेव विशेषमाह— राजा चेति । अनयोर्यज्ञकर्मण्यागमने संवत्सरेऽपि मधुपर्कः । तथा च गौतमः- ' ऋत्विगाचार्य ... संवत्सरे पुनः, यज्ञविवाहयोरर्वाक् राज्ञः श्रोत्रियस्य च ' इति । अर्वाक् संवत्सरात् । श्रोत्रियोऽत्र पूर्वोक्तः स्नातकः । मच.

( ६ ) स्थितिः सिद्धान्तः । नन्द.

( ७ ) च पुनः राजा ग्रामादागतः सन् श्रोत्रियः यज्ञकर्मणि दर्शपौर्णमासस्यापि वा संवत्सरादूर्ध्वमुपस्थितौ प्राप्तौ मधुपर्केण संपूज्यौ भवतः । अयज्ञकालेऽनिमन्त्रितौ न पूज्यौ । इति स्थितिर्मर्यादा । भाच.

मधुपर्के पशुहिंसानुज्ञा पशुहिंसाफलं च

**'मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।**
**अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥**

† तेष्वेवेति । तेषां मध्ये राजस्नातकयोरेवेत्यर्थः । अन्यथा ' अनयोः ...' इत्याद्यग्रिमवाक्यविरोधः । अत्रोद्धृतगौतमधर्मसूत्रेषु 'यज्ञविवाहयोरर्वाक्' ' राज्ञश्च श्रोत्रियस्य ' इत्येतयोः पृथक्सूत्रता मस्करिहरदत्तादिसंमता । तेन ' यज्ञविवाहयोरर्वाक् ' इत्यस्य ऋत्विगाचार्यादिसाधारणता संपन्ना । प्रकृतटीकाकृतस्तु राजस्नातकमात्रविषयकत्वेन प्रमाणितत्वात् तयोरेकसूत्रताऽभिमतेत्यास्थेयम् , अन्यथा प्रमाणप्रामाणिकयोर्विरोध आपद्येत ।

( १ ) मस्मृ. ५।४१ ; अप. १।१०९ यज्ञे ( सोमे ); गृर. ३९१ अपवत् .

( १ ) यावत्यः काश्चित् शास्त्रचोदितहिंसास्ताः संक्षिप्य दर्शयति— मधुपर्के इति । मधुपर्को व्याख्यातः । तत्र गोवधो विहितः । यज्ञो ज्योतिष्टोमादिः , तत्र संस्थैकादशिन्यादि । पशुवधो निरूढपशुवधादिः स्वतन्त्र एव च । पितृदैवतं पितरो देवता यस्मिन्कर्मण्यष्टकादौ, न तु श्राद्धम् । तद्धि सिद्धेन मांसेन विहितम् । न च पशुवधश्चोदितः । न चेदमेव विधायकं युक्तम् , उत्पत्तौ श्राद्धस्य हिंसाया अचोदितत्वात् , अस्य च विस्पष्टविधानादष्टकापशुवधेनापि नेतुं शक्यत्वात् , विधित्वे चास्य मूलकल्पनाप्रसङ्गात् , विध्यन्तरशेषताया वक्ष्यमाणत्वात् । येषां( ? अन्येषां ) तु मतं पितॄणां देवतानां च कर्म महायज्ञादि । ' ब्राह्मणैर्वध्याः ... भृत्यानां चैव वृत्त्यर्थम् ' ( मस्मृ. ५।२२ ) ( इत्यादिषु ) आपदि पशुहिंसनमप्राप्तं प्राणात्ययेऽभ्यनुज्ञायते । * मेधा.

( २ ) 'राजर्त्विक्स्नातक' इत्येवमादिनोदिते गृह्योक्तस्वरूपे मधुपर्के यज्ञे च ज्योतिष्टोमादौ पित्र्ये दैवे च कर्मण्येव पशवो हिंसनीयाः , नान्यत्रेत्येवं मनुरुक्तवान् । गोरा.

( ३ ) उपसंहरति— मधुपर्के चेति । यज्ञे पशुबन्धसौत्रामणीसोमेषु । पितृकर्मणि अष्टकायाम् । दैवतकर्मणि आश्वलायनगृह्योक्तपशुकल्पे । अत्रैव ब्राह्मणेन हिंस्या इत्येवकारेण व्यवच्छिद्यापि नान्यत्रेति पुनर्वदन् ' अभ्यासे भूयांसमर्थं मन्यन्ते ' इति न्यायेन निमित्तान्तरेण पार्वणादावपि हिंसाया अतिशयितप्रत्यवायहेतुतां दर्शयति । मवि.

( ४ ) मधुपर्के चेति । ' नांमासो मधुपर्कः ' इति विधानान्मधुपर्के च, यज्ञे च ज्योतिष्टोमादौ, पित्र्ये दैवे च कर्मणि श्राद्धादौ पशवो हिंसनीयाः, नान्यत्रेति मनुरभिहितवान् । ममु.

( ५ ) त्रिष्वेव पशुवध इत्याह— मध्विति । पितृदैवत्यं कर्म श्राद्धम् । नन्द.

( ६ ) अत्र मधुपर्के पशुवधः सत्ययुगपरो ज्ञेयः । भाच.

* मच. मेधागतम् ।

[1]एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद्द्विजः ॥
आत्मानं च पशुं चैव गमयत्युत्तमां गतिम् ॥

(१) पारमार्थिकवेदार्थज्ञो द्विज एतेषु मधुपर्कादिषु पदार्थेषु पशून् हिंसन् आत्मानं तांश्च पशून् उत्तमां गतिं स्वर्गादौ विचित्रशरीरसंबन्धं प्रापयति । न चान्यत्र अन्यदीयकर्मणः कथमन्यस्य फलप्राप्तिरिति नोदनीयम् ; शब्दप्रमाणकोऽर्थो( ? शब्दप्रमाणकेऽर्थे ) यत् शब्दो बोधयति तत् तथैव प्रतिपादनीयम् । अन्यथा शब्दप्रमाणकधर्मार्थफललाभेऽपि क आश्वासः । पशुसंजवमन्त्रमध्ये( ? ) वेद आम्नायते– 'न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः' इति । पशुं किल होतैवमाह– न वै त्वं म्रियसे, नापि रिष्यसि हिंस्यसे, किं तर्हि ? सुगैः निकृष्टयोनिव्यवधानशून्यैः मार्गैः देवानेषि स्वर्गं प्राप्नोषीत्यर्थः । एवं चान्यत्र स्वपरोपकारभावात्( ? भावः ) । ¶ गोरा.

(२) वेदतत्त्वार्थविदिति वेदस्य तात्त्विकं तात्पर्यविषयमर्थं यदि जानाति, यदि तत्कर्म साङ्गं करोतीति यावत् , गमयत्युत्तमां गतिम् । अत उपकाराधिक्याददोष इत्यर्थः । मवि.

(३) एषु मधुपर्कादिषु पदार्थेषु पशून् हिंसन्नात्मानं पशुं चोत्तमां गतिं स्वर्गाद्युपभोगयोग्यविलक्षणदेहदेशादिसंबन्धं प्रापयति । वेदतत्त्वार्थविदिति विद्वदधिकारबोधनार्थम् । ननु अन्याधिकारिके कर्मणि कथमनधिकृतस्य पश्वादेरुत्तमगतिप्राप्तिः फलम् ? उच्यते, शास्त्रप्रमाणकत्वादस्यार्थस्य पित्रधिकारिकायां जातेष्टावनधिकारिणोऽपि पुत्रस्य फलप्राप्तिवदिहापि पश्वादिगतफलसंभवाद्यजमान एव कारुणिकतया पशुगतफलविशिष्टमेव फलं कामयिष्यति । अत एवाऽऽत्मानं च पशुं चैवेत्यभिधानाद्यजमानव्यापारादेव पशुगतफलसिद्धिरुक्ता । ममु.

---

¶ मच , भाच. गोरागतम् ।

(१) मस्मृ. ५।४२ ; गोरा. पशुं (पशून्) ; गुर. ३९१ गोरावत् ; मच. गोरावत् ; भाच. गोरावत् .



अर्हयितृअर्हणीययोर्धर्माः

[1]द्विराचम्य समासीनः कर्ता प्रत्यङ्मुखो वरम् ।
प्राङ्मुखं तु समासीनं मधुपर्केण पूजयेत् ॥

## याज्ञवल्क्यः

महोक्षमहाजयोर्विकल्पः , सत्क्रियाद्युपचाराः

[2]महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।
सत्क्रियाऽन्वासनं स्वादु भोजनं सूनृतं वचः ॥

(१) एवं सख्यादिभ्यो नित्यमेव सत्कारवद्भोजनं देयम् । श्रोत्रियागमने पुनः– महोक्षमिति । कार्यमिति शेषः । उपकल्पनवचनात् तदनुज्ञापेक्षो महोक्षादिवधः । सत्क्रियाम् अतिथिसपर्याम् । सेवनमुपासनम् । तच्च कुर्यात् । स्वादु च मृष्टं भोजनं दद्यात् । सूनृतं च प्रियं ब्रूयादिति । एतच्चातिथिविशेषापेक्षया व्यस्तसमस्तत्वेन योज्यम् । विश्व.

(२) महान्तमुक्षाणं धौरेयं महाजं वा श्रोत्रियायोक्तलक्षणायोपकल्पयेत् भवदर्थमयमस्माभिः परिकल्पित इति तत्प्रीत्यर्थम् , न तु दानाय व्यापादनाय वा, यथा 'सर्वमेतद्भवदीयम्' इति, प्रतिश्रोत्रियमुक्षासंभवात् , 'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ।' इति निषेधाच्च । तस्मात्सत्क्रियाद्येव कर्तव्यम् । सत्क्रिया स्वागतवचनासनपाद्यार्घ्याचमनादिदानम् । तस्मिन्नुपविष्टे पश्चादुपवेशनमन्वासनम् । स्वादु भोजनं मिष्टमशनम् । सूनृतं वचः 'धन्या वयमद्य भवदागमनात्' इत्येवमादि । अश्रोत्रिये पुनः 'अश्रोत्रियस्योदकासने' ( गौध. ५।३२ ) इति गौतमोक्तं वेदितव्यम् ।

* मिता.

---

* वीमि. मितागतम् , अपगतं च ।

(१) संग. १५७.

(२) यास्मृ. १।१०९ ; विश्व. १।१०८ 'याऽन्वासनं' इत्यस्य स्थाने 'या सेवनं' इति मुद्रितपाठः , व्याख्याने तु 'यां सेवनं' इति ; मिता. ; अप. ; दीक. 'सत्क्रियाम्' इति प्रतीकग्रहणात् विश्वव्याख्यानवत्पाठ इति गम्यते ; वीमि. ; पप्र. २७ पू. , स्मृतिः .

(३) महान्तमुक्षाणं बलीवर्दं तदलाभेऽजं श्रोत्रियाय मधुपर्कार्हाय गृहमागतायोपकल्पयेत् पचेत् संस्कुर्यादिति यावत् । तथा च श्रुतिः— 'अतिथिर्वा एष एतस्याऽऽगच्छति यः सोमः क्रीतस्तस्मादेतद्यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत्तदु ह मानुषम्' इति । तथा च बहूवृचब्राह्मणम्— 'यावन्तः खलु वै राजानमनुयन्ति तेभ्यः सर्वेभ्य आतिथ्यं क्रियतेऽग्निं मन्थन्ति सोमे राजन्यागते तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा एतत्क्षदन्ते यदग्निं मन्थन्त्यग्निर्हि देवानां पशुः' । ततश्च यः कश्चिदाह— श्रोत्रियायोपकल्पयेत् वाचा प्रतिपादयेत्, न तु हिंस्यादिति, तच्छ्रुतिविरुद्धम् । न 'न हिंस्यात्सर्वभूतानि' इति निषेधो मधुपर्काङ्गभूतां हिंसामुपसंक्रामति अग्नीषोमीयहिंसामिव । अत एव मनुः— 'मधुपर्के च सोमे च पितृदैवतकर्मणि । अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥' (५।४१) । तथा च गृह्यकृच्छौनकः— 'आचान्तोदकाय गां वेदयन्ते हतो मे पाप्मा पाप्मा मे हत इति जपित्वों कुरुतेति कारयिष्यन्माता रुद्राणां दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्सक्ष्यन्नामांसो मधुपर्को भवति' । अत्र महोक्षमहाजोपकल्पनमुखेन मधुपर्को विधीयते । तथा सत्क्रिया पूजा । अन्वासनं तस्मिन्नुपविष्टे उपवेशनम् । स्वादुभोजनं सर्पिष्मदन्नम् । तथा च वसिष्ठः— 'अथाप्युदाहरन्ति— क्षत्रियायाभ्यागताय सर्पिष्मदन्नं पचति' इति । सूनृतं वचः कल्याणी वाक् । इत्येतानि कर्तव्यानि ।

अप.

(४) उपकल्पयेत् व्यापादयेत् मारयेत् । वसिष्ठः— 'अपि ब्राह्मणाय राजन्याय वा महोक्षं महाजं वा पचेत् । एवमस्याऽऽतिथ्यं कुर्वन्ति' । एतद्गोवधेनाऽऽतिथ्यं न कलौ । यथा ब्रह्मपुराणम्— 'दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः । गोत्रान्मातृसपिण्डाद्वा विवाहो गोवधस्तथा । नराश्वमेधौ मद्यं च कलौ वर्ज्या द्विजातिभिः ॥' । सत्क्रियां पूजाम् । सूनृतं मधुरम् ।

दीक.

पुनरर्हणावधिः

[1]प्रतिसंवत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः ।
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥

(१) असंबन्धश्रोत्रियागमने उक्तम् । संबन्धे तु— प्रतिसंवत्सरमिति । स्नातकाचार्यशब्दौ संबन्धिवचनौ, अन्यथाऽतिप्रसङ्गात् । यो हि यस्योपनेता स तस्याऽऽचार्यः । यश्च यतः समावृत्तः स तस्य स्नातकः । पार्थिवोऽपि स्वदेशभोक्तेति न क्षत्रियः । प्रतिशब्दो वीप्सार्थः । तुशब्दोऽवधारणार्थः । अर्घ्या एव मधुपर्कादिभिः । प्रियो विवाह्यश्च तथा तत्तुल्यगुण इत्यर्थः । ऋत्विजस्तु यज्ञमेव प्रत्यर्घ्याः प्रागपि च संवत्सरात् । तथा च गौतमः— 'यज्ञविवाहयोरर्वाक्' (५।३०) इति । यज्ञशब्दश्च सोमयागे, 'यद्यसकृत्संवत्सरस्य सोमेन यजेत' (पागृ. १।३।३१) इति वचनात् ।

विश्व.

(२) स्नातकः विद्यास्नातकः व्रतस्नातकः विद्याव्रतस्नातक इति । समाप्य वेदमसमाप्य व्रतं यः समावर्तते स विद्यास्नातकः । समाप्य व्रतमसमाप्य वेदं यः समावर्तते स व्रतस्नातकः । उभयं समाप्य यः समावर्तते स विद्याव्रतस्नातकः । आचार्यः उक्तलक्षणः । पार्थिवः वक्ष्यमाणलक्षणः । प्रियः मित्रम् । विवाह्यो जामाता । चकाराच्छ्वशुरपितृव्यमातुलादीनां ग्रहणम्, 'ऋत्विजो वृत्वा मधुपर्कमाहरेत्स्नातकायोपस्थिताय राज्ञे चाऽऽचार्याय च श्वशुरपितृव्यमातुलानां च' इत्याश्वलायनस्मरणात् । एते स्नातकादयः प्रतिसंवत्सरं गृहमागताः अर्घ्याः मधुपर्केण संपूज्याः वन्दितव्याः । अर्घशब्दो मधुपर्कं लक्षयति । ऋत्विजश्चोक्तलक्षणाः संवत्सरादर्वागपि प्रतियज्ञं मधुपर्केण संपूज्याः ।

* मिता.

---

* वीमि., संप्र. मितागतम् ।

(१) यास्मृ. १।११० ; विश्व. १।१०९ ; मिता. ; अप. ; वीमि. ; संप्र. ८२१ विवाह्य (वैवाह्य) ; सिन्धु. ११३५ त्वर्घ्याः (त्वर्च्याः).

(३) प्रत्यब्दं स्नातकादयः अर्घ्याः मधुपर्केण पूज्याः। स्नातकः समावृत्तः। आचार्यः उक्तलक्षणः। पार्थिवः राजन्यः। प्रियः मनोज्ञः। विवाह्यः स्नुषाया जामातुश्च पिता। ऋत्विजः उक्तलक्षणाः। ते सांवत्सरिकमधुपर्कपूजिताः प्रतियज्ञं पुनरर्घ्याः। चकारः श्वशुरादिपरिग्रहार्थः। तथा च शौनकः— 'ऋत्विजो वृत्वा मधुपर्कमाहरेत्। स्नातकायोपस्थिताय। राज्ञे चाऽऽचार्यश्वशुरपितृव्यमातुलानां च' (आगृ. १।२४।१-४) इति। अत्र चोपस्थितग्रहणात्स्नातकादयो गृहमागता एवार्हणीया इति गम्यते। स्नातकपार्थिवादीनां श्रोत्रियत्वे सत्यर्हणम्, अन्यथा 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्।' इति विरोधः स्यात्। अप.

(४) अतिथिप्रसङ्गेन स्नातकादीनां पूजामाह— प्रतिसंवसरमिति। स्नातको विद्याव्रताभ्याम्। पार्थिवोऽभिषिक्तक्षत्रियः। विवाह्यो जामाता। एते संवत्सरमनतिक्रम्यैव गृहमागताः गृह्योक्तेन मधुपर्काख्येन कर्मणा अर्घ्याः पूज्याः। ऋत्विजः पुनर्यज्ञं प्रत्युपस्थिताः संवत्सरमध्येऽपि। राजस्नातकौ अब्दादूर्ध्वं यज्ञे। यथा मनुः— 'राजा च श्रोत्रियश्चैव यज्ञकर्मण्युपस्थितौ। मधुपर्केण संपूज्यौ न त्वयज्ञ इति स्थितिः॥' (मस्मृ. ३।१२०)। दीक.

## कात्यायनः

मधुपर्कलक्षणम्

[१]साक्षतं सुमनोयुक्तमुदकं दधिसंयुतम्।
अर्घ्यं दधिमधुभ्यां च मधुपर्कोऽभिधीयते॥

दधिमधुमात्रेण मधुपर्काभिधानं घृतासंभवपरम्।

संत. ८८७

कांस्येन मधुपर्कसंपुटीकरणम्

[२]कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ।
कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत्॥

(१) कास्मृ. ३।१६९; संत. ८८७ संयुतम् (मिश्रितम्) पर्कोऽभि (पर्को वि) भट्टभाष्यधृतवचनम्.

(२) कास्मृ. ३।१७०; संत. ८८८ नैवार्ह (न वाऽर्ह) पू., शूलपाणिधृतवचनम्.

## व्यासः

अर्हणीयगणना पुनरर्हणावधिश्च

[१]विवाह्यस्नातकक्ष्माभृदाचार्यसुहृदृत्विजः।
अर्घ्या भवन्ति धर्मेण प्रतिवर्षं गृहागताः॥

अर्कविवाहे मधुपर्कार्चनशाखानियमः

*[२]स्वशाखोक्तप्रकारेण मधुपर्कं समाचरेत्॥

मधुपर्कभक्षणे उच्छिष्टदोषाभावः

[३]मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे।
फलमूलेक्षुदण्डेषु न दोषं प्राह वै मनुः॥

मधुपर्काङ्ग(?)भोजनम्

‡भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा।
उपोषितः सुतां दद्यादर्चिताय द्विजाय तु॥

* इदं वचनमर्कविवाहविषयम्। अर्चितृशाखया मधुपर्कार्चनं कार्यमित्यस्य वचनस्य स्वारसिकोऽर्थः। व्याख्यातं च तथा संस्काररत्नमालायाम्। अत्रेदमवधेयम्— मधुपर्कार्चनविषये अर्च्यशाखया अर्चितृशाखया वेत्यस्ति पक्षद्वयम्। उभयत्रापि सन्ति मूलवचनान्यनुयायिनश्च। तत्र प्रथमपक्षपातिनः केचित् द्वितीयपक्षमप्रामाणिकमाहुः। अन्ये पुनराश्वलायनस्मृतिप्रामाण्यात् ब्राह्मादिविवाहेषु प्रथमः पक्षः, गान्धर्वादिषु च द्वितीय इति व्यवस्थां संगिरन्ते। अर्कविवाहस्तु ब्राह्मादिष्वन्तर्भाव्यो गान्धर्वादिषु वेति न केनापि निर्णीतम्। यदि ब्राह्मादिष्वन्तर्भावस्तदा प्रकृतवचने 'समाचरेत्' इत्यस्यान्तर्भावितण्यर्थतामाश्रित्य स्वशब्दस्यार्च्यपरत्वं स्वीकार्यम्, विशेषविधिना सामान्यबाधो वा स्वीकार्यः। यदि गान्धर्वादिष्वन्तर्भावस्तदा स्वारसिक एवार्थोऽनुगृहीतो भवति। यदि नोभयत्राप्यन्तर्भावस्तदापि स्वारसिकार्थत्यागे मानाभाव इति।

‡ व्याख्यानानि स्थलादिनिर्देशश्च वरप्रस्थानप्रकरणे (संका. पृ. १९१६) द्रष्टव्यानि।

(१) व्यास्मृ. ३।४४-४५.

(२) प्रपा. ३८७; गभा. १०७; प्रर. ११८; संप्र. ८७७; शाम. ५२; विपा. ६३ (भागः २) प्रकारेण (विधानेन); संव. १४९.

(३) मुक्ता. २३९.

## भरद्वाजः

वरशाखया मधुपर्कस्य कर्तव्यता

[1]कन्यादाता वरं सम्यङ् मधुपर्केण पूजयेत् ।
वरशाखानुसारेण ततः कन्यां प्रदापयेत् ॥

## संवर्तः

वरशाखया मधुपर्कार्हणम्

[2]आगताय वरायास्मै मधुपर्कं प्रकल्पयेत् ।
दाताऽर्हते विधानेन वरशाखोक्तमार्गतः ॥

## पराशरः

मधुपर्कभक्षणे उच्छिष्टदोषाभावः

[3]ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने ।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ॥

## अत्रिः

मधुपर्कभक्षणे उच्छिष्टदोषाभावः

[4]मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्य भवेद्दोषस्त्वत्रेश्च वचनं यथा ॥

(१) मधुपर्कादिषूच्छिष्टस्य मन्त्रोच्चारविषयमेतत् । आचमनं तु सोमादन्यत्र कार्यमेव । ' न सोमेनोच्छिष्टा भवन्ति ' इति श्रुतिस्तन्निवर्तिका ।

अप. १।१९५ पृ. २७७

(२) अप्सु इति प्राणाहुतिसाहचर्यप्राप्तापोशनविषयम्, आचमनमध्ये उदकपानविषयं वा, अन्यत्रोदकपाने ' पीत्वाऽपोऽध्येष्यमाणश्च ' इत्याचमनविधेः ।

ब्रक. १४३

(३) अप्सु ' अमृतापिधानमसि ' इत्यादिषूच्छिष्टस्य मन्त्रोच्चारणे दोषो नास्तीत्यर्थः । $ स्मृच. १०१

## जाबालः

अर्हणीयगणना

[1]वैवाह्यमृत्विजं चैव श्रोत्रियं गृहमागतम् ।
अर्हयेन्मधुपर्केण स्नातकं प्रियमेव च ॥

## अङ्गिराः

मधुपर्कभक्षणे उच्छिष्टदोषाभावः

[2]मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्तु भवेद्विप्रो यथाऽत्रेर्वचनं तथा ॥

## आश्वलायनः

ब्राह्मादिषु वरशाखया गान्धर्वादिषु दातृशाखया च स्नातकस्यार्हणीयत्वम्

[3]मधुपर्कविधिर्गृह्ये ऋत्विग्वरणकर्मणि ।
उक्तः पुरस्तान्मे यद्वत्तद्वत्स्नातकमर्चयेत् ॥
[4]ब्राह्मादिषु विवाहेषु वरशाखोक्तधर्मतः ।
मधुपर्केण संपूज्य कन्यादाता ततो वरम् ॥
गान्धर्वादिषु यत्नेन मधुपर्कं स्वशाखया ।
दाता कुर्याद्विधानेन स्नातकं विधिनाऽर्चयेत् ॥

## लघ्वाश्वलायनः

दातृशाखया मधुपर्कार्चनम्

[5]आचार्यः( ? र्य- ) स्नातकादीनां मधुपर्कार्चनं चरेत् ।
स्वगृह्योक्तविधानेन विवाहे च महामखे ॥

---

(१) प्रपा. ३५२.

(२) प्रपा. ३५२.

(३) ब्रक. १४३ ; गभा. ५५ ' स्मरन्ति ' इत्युक्तम् ; संग. १६० गदाधरभाष्ये ; संदी. २०-२१ ( भागः २ ) मुक्त ( मुक्ते ) स्मरणम् .

(४) अप. १।१९५ पृ. २७७ ; ब्रक. १४३ उत्तरार्धे ( नोच्छिष्टस्तु भवेद्विप्रो यथाऽत्रेर्वचनं तथा ॥ ) अत्र्यङ्गिरसौ ; स्मृच. १०१ त्रेश्च ( त्रेस्तु ) ; प्रपा. ३५० उत्तरार्धे ( नोच्छिष्टा भवन्ति ) एतावदेव, स्मृतिः ; मुक्ता. २३९ स्य भवेद्दोषस्त्वत्रेश्च ( दोषस्तु भवेदत्रेस्तु ).

$ मुक्ता. स्मृचवत् ।

(१) चदा. १४२ प्रियमेव च ( गृहमेव वा ) ; चव्र. ६९ वैवाह्य ( ब्राह्मण ) अर्हये ( अर्चये ) जाबालिः ; संप्र. ८२० ; संर. ३८३ वैवाह्य ( विवाह्य ) जाबालिः .

(२) ब्रक. १४३ अत्र्यङ्गिरसौ.

(३) आश्वस्मृ. ११।३१३.

(४) प्रपा. ३५२.

(५) लघ्वाश्वस्मृ. १५।४-१५.

मधुपर्कस्वरूपम्

मधुनाऽऽज्येन वा युक्तं मधुपर्काभिधं दधि ।
दध्यलाभे पयो ग्राह्यं मध्वलाभे तु वै गुडः ॥
निदध्यात्तं नवे कांस्ये तस्योपरि पिधाय च ।
वेष्टयेद्विष्टरेणैव मधुपर्कं तदुच्यते ॥

मधुपर्कार्चनप्रयोगः

प्राणानायम्य संकल्प्य विष्टराद्यर्चनं भवेत् ।
त्रिस्त्रिर्ब्रूयादहं वर्ष्म मन्त्रेणानेन विष्टरम् ॥
पाद्यमर्घ्यं तथा दत्त्वा दद्यादाचमनीयकम् ।
पिबेज्जलं चामृतोपस्तरणमसीति मन्त्रतः ॥
आचमेन्मधुपर्कोऽयं मित्रस्येति निरीक्षयेत् ।
देवस्य त्वेति तद्दद्यादञ्जलौ प्रतिगृह्य च ॥
तदवेक्ष्य करे सव्ये धृत्वा मन्त्रं जपेन्मधु ।
अङ्गुष्ठानामिकाभ्यां त्रिस्तद्देवाऽऽलोडयेद्वरः ॥
मधुपर्कं क्षिपेत्किंचिद्वसवस्त्वेति पूर्वतः ।
भूतेभ्यस्त्वोत्क्षिपेत्त्रिस्तं निदध्याद्भुवि भाजनम् ॥
कर्ताऽऽदाय सकृद्धस्ते मधुपर्कं वरस्य च ।
जपेदथ विराजोऽथ प्राशयेत्पुनराचमेत् ॥
पूर्ववच्च विधानं स्यान्मन्त्रोऽन्यः प्राशने भवेत् ।
उक्तं सूत्रे विजानीयात्तृतीये प्राशने तथा ॥
उत्तराचमनं पीत्वा सत्यमित्युदकं भवेत् ।
द्विराचम्योत्सृजन्माता रुद्राणां मन्त्रतो वरः ॥
ततः कर्ताऽर्चयेदेनं गन्धपुष्पाक्षतादिभिः ।
वराय वाससी दद्यादुपवीतादिकं च हि ॥

## विश्वामित्रः

ऋत्विगर्चनाभावे प्रत्यवायः

[1]संपूज्य मधुपर्केण ऋत्विजः कर्म कारयेत् ।
अपूज्य कारयन् कर्म किल्बिषेणैव युज्यते ॥

(१) ऋत्विज इति वैवाह्यादीनामुपलक्षणम् । संप्र. ८२०

(१) चद्रा. १४२ कारयन् (कारयेत्); चप्र. ६९; संप्र. ८२०; शाम. ३ पू.

(२) य ऋत्विक् यच्छाखीयं कर्म करोति तच्छाखोक्तेन प्रकारेण काण्डानुसमयेन मधुपर्कं कुर्वन्ति यायजूकाः केचित् । परे च यजमानशाखोक्तेन । यजमानेन स्वशाखीयाः, ऋत्विग्भिश्च स्वस्वशाखीयाः पदार्था अनेकेषु ऋत्विक्षु पदार्थानुसमयेनानुष्ठेयाः इति युक्तम्, तत्तच्छाखाध्ययनजन्यज्ञानस्याङ्गत्वादेकप्रयोगविधिपरिग्रहाच्च । शाम. ३-४

## स्मृत्यन्तरम्

मधुपर्कभक्षणे उच्छिष्टदोषाभावः

[1]मधुपर्के च सोमे च नोच्छिष्टो भवति द्विजः ॥

यज्ञविवाहयोर्मधुपर्के मांसनियमः

[2]यज्ञविवाहयोरमांसोऽर्घो न भवति ॥

## अनिर्दिष्टकर्तृकवचनानि

मधुपर्कार्चनेऽर्चितृशाखानियमः

[3]पूजयेन्मधुपर्केण स्वशाखाविधिना वरम् ॥

गन्धमाल्यादिभिरर्चनम्

$ [4]गन्धमाल्यवस्त्रयुगोपवीतयुगाभरणादिभिर्यथाविभवं पूजयेत् ॥

मधुपर्के पशुवधस्य कलिवर्ज्यता

‡ [5]देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः ॥

## देवस्वामी

मधुपर्कार्चनेऽर्चितृशाखानियमः

[6]स्वशाखाविधिनाऽभ्यर्च्य मधुपर्कादिना वरम् ॥

$ अस्य व्याख्यानं 'दाताऽथ' इति शौनकपद्यव्याख्याने द्रष्टव्यम् ।

‡ कलौ न कार्यमित्यर्थः ।

(१) कभा. ४८ (द्विजः ०); जभा. ५०.
(२) कभा. ४९; जभा. ५१.
(३) धप्र. ४८; संग. १६५ धर्मप्रवृत्तौ.
(४) संकौ. २१६ 'वृद्धा आहुः' इत्युक्तम्.
(५) बाल. १।१५६ पृ. ४१८.
(६) प्रपा. ३५२.

## स्मृत्यर्थसारः

मधुपर्कभक्षणे उच्छिष्टदोषाभावः

[1]मधुपर्के च सोमेषु प्राणाहुतिषु चाप्सु च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥

## विधानपारिजाते

मधुपर्के गोकरणोत्सर्जनपक्षौ

[2]मधुपर्के तु यां गां तु नोत्सृजन्ति मनीषिणः ।
तस्याश्च रुधिरं( ? सरुधिरं ) चर्म तेजनीं तां विनिर्दिशेत् ॥

## शाकलकारिकाः

विवाहे मधुपर्कविधिः, विष्टरादीनां त्रिस्त्रिरावेदनम्, गन्धमाल्यादिभिः पूजनम्, उपवीतधारणम्, शाखानियमः

[3]कुर्याद्वैवाहिके चाह्नि मधुपर्कं विधानतः ।
एकैकं विष्टरादीनां त्रिस्त्रिरुक्त्वाऽथ पूजयेत् ॥
गन्धमाल्याम्बराद्यैश्च भूषणैरुपचारकैः ।
धूपदीपार्तिकैश्चैव पूजयेत्क्रमतो वरम् ॥
प्रावृत्य परिधायाथ द्विराचम्याम्बरं वरः ।
मधुपर्केऽप्युपवीतं धारयेदिति केचन ॥
पूजितस्तु स्वशाखोक्तमधुपर्केण यो वरः ॥

## शौनककारिकाः

मधुपर्कस्वरूपम्

[4]मधुना सर्पिषा वाऽपि सुसंपृक्तं भवेद्दधि ।
मधुपर्क इति प्राज्ञैर्याज्ञिकैः सोऽभिधीयते ॥

विवाहे मधुपर्कविधिः, आसनोपचरणम्

मधुपर्कं ततो दद्याद्वरायास्मै वधूपिता ।
तत्राऽऽदावासनं दद्यात्कूर्चं दर्भैर्विनिर्मितम् ॥

[1]वराय विष्टर इति त्रिरुच्चार्य वरोऽप्यथ ।
अहं वर्ष्म सजातानामित्याद्यां खैलिकीमृचम् ॥
[2]उच्चार्योपविशेत्तस्मिन्नुदगग्रे तु कूर्चके ।
अथवाऽऽक्रम्य पादाभ्यां कूर्चमासीत पूर्ववत् ॥

पाद्योपचरणम्

निवेदिताभिस्त्रिभिः पाद्यमित्यद्भिर्मधुपर्कदः ।
प्रक्षालयेद्वरस्याङ्घ्रिं दक्षिणं प्रागथोत्तरम् ॥

आचमनीयोपचरणम्

[3]वरोऽथ लौकिकं तोयमाचम्य त्रिर्निवेदितम् ।
आदायाऽऽचमनीयांशं तस्मादुद्धृत्य किंचन ॥
[4]अमृतोपस्तरणमसीत्युच्चार्यैव तु तत्पिबेत् ।
पीत्वा शुद्ध्यर्थमाचम्य लौकिकं सलिलं ततः ॥

मधुपर्कोपचरणम्

[5]मधुपर्कमवेक्षेत पूर्ववत्त्रिर्निवेदितम् ।
आनीयमानं मार्गस्थं मित्रस्य त्वेति मन्त्रतः ॥
[6]देवस्य त्वेति यजुषाऽञ्जलिना प्रतिगृह्य तम् ।
मधु वाता ऋतायत इत्याद्यं तृचमीरयेत् ॥
[7]वीक्ष्याञ्जलिस्थमेवाथ तत्पुनर्दक्षिणेतरे ।
हस्ते निधाय त्वङ्गुष्ठानामिकाभ्यां प्रदक्षिणम् ॥
[8]त्रिरालोड्य ततो मन्त्रैर्वसवस्त्वादिकैश्च तम् ।
किंचित्क्षिप्त्वा प्रतिदिशं ततो मध्याच्च किंचन ॥

---

(१) स्मृसार. २३ ; मुक्ता. २३९ सोमेषु ( सोमे च ).
(२) संग. २६८.
(३) शाका. ११२–११५ पृ. १२.
(४) शौका. १, २ पृ. ५७ ; प्रपा. ३५१ ततो (तदा).

(१) शौका. ३ पृ. ५७ खैलिकी ( खैलिका ) ; प्रपा. ३५१.
(२) शौका. ४, ५ पृ. ५७ ; प्रपा. ३५१–३५२.
(३) शौका. ६ पृ. ५७ वरोऽथ ( वरोऽपि ) ; प्रपा. ३५२ यांशं ( याङ्गं ).
(४) शौका. ७ पृ. ५७ ; प्रपा. ३५२.
(५) शौका. ८ पृ. ५७ दितम् ( दयेत् ) ; प्रपा. ३५२.
(६) शौका. ९ पृ. ५७ त इत्याद्यं तृचमीरयेत् ( तेत्याद्यं तृचमुदीरयेत् ) ; प्रपा. ३५२.
(७) शौका. १० पृ. ५७–५८ णेतरे ( णोत्तरे ) ; प्रपा. ३५२ य त्वङ्गु ( याङ्गु ) भ्यां + (च).
(८) शौका. ११ पृ. ५८ ; प्रपा. ३५२ ; संको. २१६ चतुर्थपादमात्रम्.

[१]आदाय भूतेभ्यस्त्वेति मन्त्रमुक्त्वा त्रिरुत्क्षिपेत् ।
मन्त्रस्योत्क्षेपणस्यापि त्रिरभ्यासं समाचरेत् ॥
[२]ततो विराजो दोहोऽसीत्याद्यं मन्त्रत्रयं क्रमात् ।
उक्त्वाऽस्य मधुपर्कस्य किंचित्किंचित्पिबेदथ ॥
[३]प्रतिप्राशनमाचामेल्लौकिकं चापि शुद्धये ।
न सर्वं प्रपिबेत्तं तु न तृप्तिमपि भावयेत् ॥

शेषप्रतिपत्तिः, आचमनम्, शेषजलपानम्

[४]मधुपर्कं पीतशिष्टं विप्रायोदङ्मुखस्ततः ।
प्रदद्याद्ब्राह्मणालाभे प्रक्षिपेत्सलिलेऽपि वा ॥
[५]स्वयं पिबेद्वा निःशेषमाचामेच्च तथा पुनः ।
अपिधानमसीत्यन्तममृतेत्यादिकं यजुः ॥
[६]उच्चार्याऽऽचमनीयाम्भःशेषं किंचित्पिबेत् पुनः ।
आचामेच्च यथापूर्वं लौकिकं सलिलं ततः ॥
सत्यं यशः श्रीरित्याद्ययजुषाऽऽचमनोदकम् ।
पीत्वा निःशेषमाचामेद्विशुद्ध्यै लौकिकं जलम् ॥

गवोपचरणम्, करणोत्सर्जनपक्षौ, वर-तद्बन्धुपूजनम्

[७]अथाऽऽचान्तोदकायास्मै दाता त्रिर्गां निवेदयेत् ।
हत्वाऽनले पक्तुमिच्छेत्तां गां यदि वरः स्वयम् ॥

(१) शौका. १२ पृ. ५८ मन्त्रस्यो (मन्त्रः स्या); प्रपा. ३५२ शौकावत्; संकौ. २१६.

(२) शौका. १३ पृ. ५८; प्रपा. ३५२.

(३) शौका. १४ पृ. ५८ मपि भाव (मभिवाद); प्रपा. ३५२.

(४) शौका. १५ पृ. ५८ खस्ततः (खो भवन्); प्रपा. ३५२ वा (तत्).

(५) शौका. १६ पृ. ५८ तथा (यथा); प्रपा. ३५२.

(६) शौका. १७, १८ पृ. ५८ आचामेच्च (आचमेच्च); प्रपा. ३५२.

(७) शौका. १९ पृ. ५८; प्रपा. ३५२ त्रिर्गां नि (गां त्रिर्नि).

[१]ततो हतो मे पाप्मादियजुषा जपमाचरेत् ।
पश्चादों कुरुतेत्येवं ब्रूयाद्वाऽथ जिहासति ॥
[२]तदाऽपि माता रुद्राणां दुहितेत्यादिकामृचम् ।
जप्त्वोमुत्सृजतेत्येवं ब्रूयादोमुक्तिपूर्वकम् ॥
[३]दाताऽथ गन्धमाल्याद्यैर्विधितोऽभ्यर्चयेद्वरम् ।
पश्चात्तेन सहाऽऽयातांस्तद्बन्धूनपि पूजयेत् ॥

(१) आदि(? आद्य)शब्दाद्भूषणमपि देयम् ।

* संप्र. ८२३

(२) वृद्धा आहुः– 'गन्धमाल्यवस्त्रयुगोपवीतयुगाभरणादिभिर्यथाविभवं पूजयेत्' इति । विधित इति पदात्, आदिभिरिति बहुवचनाच्च भोजनात्पूर्वं धूपदीपौ, तदुत्तरं ताम्बूलदक्षिणे अपि दातुमुचिते ।

संकौ. २१६

## कुमारिलकारिकाः

विष्टरोपचरणम्

.................... [४]मधुपर्केण पूजितः ।
कन्याज्ञातिभिरत्रैव मधुपर्को मयोच्यते ॥
[५]विष्टराद्युपकल्प्यैनमुपवेश्याऽऽसने शुभे ।
तत्रोपकल्पितं पूर्वं विष्टरं त्रिर्निवेदयेत् ॥
[६]उत्तराग्रे त्वहं वर्ष्मेत्यस्मिन्नुपविशेद्वरः ।
एवमेवोत्तरेषां च पञ्चानां त्रिर्निवेदनम् ॥

* संग. संप्रवत् ।

(१) शौका. २० पृ. ५८; प्रपा. ३५२.

(२) शौका. २१ पृ. ५८ प्त्वोमुत्सृजतेत्ये (प्त्वा तामुत्सृजेत्ये); प्रपा. ३५२.

(३) शौका. २२ पृ. ५८; प्रपा. ३५२ विधितो (विधिना); संप्र. ८२३; संकौ. २१६; संग. १६४.

(४) कुका. १।१९।३; प्रपा. ४८ (मधुपर्केण पूजितः) एतावदेव : ३४९ ज्ञातिभिरत्रैव (दातृभिरत्रेष्टो) उक्त; धप्र. ४६ (मधुपर्केण पूजितः) एतावदेव.

(५) कुका. १।१९।४; प्रपा. ३४१ शुभे (शुचौ) तत्रो (अत्रो).

(६) कुका. १।१९।५; प्रपा. ३४९ वोत्तरे (वेतरे).

पाद्यार्घ्याचमनीयोपचरणम्

[1]निवेदितेन पाद्येन पादौ प्रक्षालयेद्वरः ।
प्रक्षालयित्रे विप्राय दक्षिणाङ्घ्रिं प्रयच्छति ॥

[2]पश्चात्सव्यं तु शूद्राय पूर्वं सव्यं प्रयच्छति ।
गन्धादियुक्तमर्घ्यं च प्रतिगृह्य निवेदितम् ॥

[3]वेदिताचमनीयापामेकदेशं ततो वरः ।
उक्त्वाऽमृतोपस्तरणमसिमन्त्रं पिबेदथ ॥

[4]शौचार्थाचमनं कार्यमेवेति प्राह वृत्तिकृत् ।
अवान्तरेण शौचार्थं सर्वमाचमनं त्विह ॥

मधुपर्कोपचरणम्

[5]आनीयमानमीक्षेत मित्रस्य त्वेति मन्त्रतः ॥
मधुपर्कमथाऽऽनीतं पूर्ववच्च निवेदितम् ॥

[6]देवस्य त्वेति मन्त्रेण गृह्णात्यञ्जलिना ततः ॥
मधु वातास्तृचेनैनं मधुपर्कमवेक्षते ॥

[7]निदधाति च तत्पात्रं सव्ये पाणावितः परम् ।
अङ्गुष्ठोपकनिष्ठाभ्यामालोड्य त्रिः प्रदक्षिणम् ॥

[8]वसवस्त्वादिभिर्मन्त्रैर्दिक्षु पूर्वादिषु क्रमात् ।
निमृज्याङ्गुलिलेपं तु भूतेभ्यस्त्वेति मन्त्रतः ॥

[1]त्रिरुद्गृह्य त्रिरुत्क्षिप्य भूमौ पात्रं निधाय च ।
प्राश्नात्यस्यैकदेशं तु विराजो दोह इत्यथ ॥

[2]आचम्य पूर्ववत्प्राश्य विराजो दोहमित्यथ ।
आचम्य तद्वत्प्राश्नीयान्मयि दोह इति त्वथ ॥

शेषप्रतिपत्तिः आचमनम् , शेषजलपानम् , गवोपचरणम् , गवोत्सर्जनम् , वरपूजनम्

[3]विनियोगं च कुर्वीत शिष्टस्यास्योक्तमार्गतः ।
आचम्याथामृतापीति पिबेदाचमनीयकम् ॥

[4]आचम्याऽऽचमनीयाम्बु पिबेत्सत्यं यशस्त्विति ।
आचान्तः पुनराचामेदथ गां त्रिर्निवेदयेत् ॥

[5]ततो वरो जपेन्माता रुद्राणां दुहितेत्यृचम् ।
अथोमुत्सृजतेत्याह प्रैषं गामुत्सृजन्ति च ।
गन्धमाल्याम्बरैस्तद्वद्भूषणैः पूजयेद्वरम् ॥

भूषणैः कुण्डलमुद्रिकादिभिः । यज्ञोपवीतमपि शिष्टाचाराद्देयम् । * संप्र. ८२३

---

(१) कुका. १।१९।६ ; प्रपा. ३४९.

(२) कुका. १।१९।७ ; प्रपा. ३४९ पूर्वं सव्यं ( सव्यं पूर्वं ).

(३) कुका. १।१९।८ ; प्रपा. ३४९ दथ ( दपः ).

(४) कुका. १।१९।९ ; प्रपा. ३४९ श्लोकार्धे व्यत्यासेन पठिते, अवान्त ( अनन्त ) सर्वं ( पूर्वं ).

(५) कुका. १।१९।१० ; प्रपा. ३४९ वच्च नि ( वत्रिर्नि ).

(६) कुका. १।१९।११ ; प्रपा. ३४९ तास्तृचेनैनं ( तातृचेनैव ).

(७) कुका. १।१९।१२ ; प्रपा. ३४९ वितः (वतः).

(८) कुका. १।१९।१३ ; प्रपा. ३४९ ; संकौ. २१६ ङ्गुलि ( ञ्जलि ) उत्त , अस्मात्पूर्वं ' भूमौ पात्रनिधानं च भूतेभ्यस्त्वेति मन्त्रतः । ' इत्यर्धं विद्यते, परन्त्वसङ्गतार्थत्वान्नास्माभिः संगृहीतम् । संस्कारवत्से ( पृ. १५७ ) अपि ' त्रिरुद्गृह्य ' इत्यर्धात्पूर्वमेतदर्धं विद्यते, तत्रापि अयमेवास्माकीनो निर्णयोऽनुसंधेयः ।

* संग. संप्रवत् ।

(१) कुका. १।१९।१४ ; प्रपा. ३४९ ; संकौ. २१६ पू. ; संव. १५७ पू.

(२) कुका. १।१९।१५ ; प्रपा. ३४९ मित्यथ (मशीय च ).

(३) कुका. १।१९।१६ ; प्रपा. ३४९.

(४) कुका. १।१९।१७ ; प्रपा. ३४९ वेदयेत् ( वेदिताम् ).

(५) कुका. १।१९।१८ ; प्रपा. ३४९ द्वितीयार्धे ( अथो ओमुत्सृजेत्याह प्रैषं गामुत्सृजेत च । ); संप्र. ८२३ तृतीयार्धमात्रम् , कारिका ; संग. १६४ सर्वं संप्रवत् .

## कपर्दिकारिकाः

आपस्तम्बगृह्यसूत्रधर्मसूत्रोक्तयोर्मधुपर्कयोः पूज्यभेदेन व्यवस्था

[1]स्थाप्यते च विवाहमहीतले
पावको विधिन्मधुपर्ककः ।
सोऽत्र गोसहितोऽसहितोऽपि वा
दीयते वरवृत्तसमीक्षया ॥

एवमेव वरापचिताय च............... ॥

*[2]आचार्यायर्त्विजे राज्ञे मधुपर्को गवा सह ।
गृह्योक्तो धर्म उक्तो वा पूर्णे संवत्सरे पुनः ॥
वेदाध्यायः श्वशुरश्चेत्तस्मै चापि तथा भवेत् ।
तस्मै त्ववेदाध्यायाय भवेद्वार्ह्यो गवा विना ॥
वेदाध्यायायातिथये धर्म उक्तो गवा सह ।
तथैव वेदाध्यायाय वरायापचिताय च ॥
ताभ्यामवेदाध्यायाभ्यां विना ह्यन्यतरो गवा ।
प्रवक्त्रे चापि चित्राय भवेद्वार्ह्यो गवा विना ॥
अतिथिः सषडङ्गं तु वेदं जानाति चार्थतः ।
वेदाध्यायः स तु प्रोक्तः प्रकाशश्चित्र उच्यते ॥
सूत्रे गोमधुपर्कार्ह इत्यस्मिन्दक्षिणा तु गौः ।
मध्ये तु मधुपर्कस्य साऽऽतिथ्या सर्वथैव तु ॥

स्नातकाय गुरुर्मधुपर्कको
गार्ह्यकः स्मृतिचोदित एव वा ।
स्नानमाचरिते दिन आगते
तस्य काममयावितरत्र न (?) ॥

---

* अशुद्धिबहुला इमाः कारिकाः । अत्रैतत्प्रकरणगते 'सकृत्प्रवक्त्रे चित्राय' इत्यापस्तम्बसूत्रे 'अयमत्र निश्चितोऽर्थः' इत्यादि तात्पर्यदर्शनमनुसंधेयम् । तदाश्रयेणात्र काश्चिच्छुद्धयः संपादिताः ।

(१) कका. २१२, ३.

(२) कका. ५१२-८.



## रेणुकारिकाः

वरमधुपर्कविधिः, संभारसंभरणम्

[1]वरं वरायाऽऽसनमाहरेत्स
वधूपिता भूषणभूषिताङ्गः ।
सिताम्बरायाथ तमर्हयेत्तद्-
विधानतोऽर्घ्याण्युपकल्पयित्वा ॥

कौशेयौ विष्टरौ द्वौ जलमथ चरण-
क्षालनार्थं सुखोष्णं
पात्रस्थं नीरमर्घ्यं प्रसवमलयजै-
र्दूर्वया युग्यवैश्च ।
अम्भोऽन्यद्भक्षणीयं विमलमगरुणा
वासितं वस्त्रपूतं
कांस्ये कृत्वाऽऽज्ययुक्तं दधिमधु पिहितं
कांस्यपात्रेण सम्यक् ॥

मधुपर्कमिमं वसनद्वितयं
सितचन्दनपुष्पमलङ्करणम् ।
अथ साधु भवानखिलं निगदं
स्थितमाह वरं स वधूजनकः ॥

अर्चयेति प्रतिप्रैषं प्राह तं प्राङ्मुखो वरः ।
कर्तुः संबन्धिनो ह्यर्घ्याण्याहरन्ति वरान्तिकम् ॥

विष्टराद्युपचरणम्, विष्टरस्वरूपम्

प्राहान्योऽर्चयिता त्रिस्त्रिर्विष्टरादीनि तं वरम् ।
विष्टरो विष्टरो विष्टरः सकृत्प्रतिगृह्यताम् ॥
[2]अर्घ्यार्थार्घयिता तस्मै विष्टरं तं प्रयच्छति ।
तूष्णीं स प्रतिगृह्णीयादुदगग्रं तमासने ॥
[3]निधायोपविशेत्तस्मिन्वर्ष्मोऽस्मीत्यादिमन्त्रतः ।
अन्तरा पठितो मन्त्र उपादानोपवेशने ॥

---

(१) रेका. ११३-११७ पृ. ५६.

(२) रेका. ११८ पृ. ५६ ; संग. १५७.

(३) रेका. ११९ पृ. ५६-५७ निधायो (विधायो) ; संग. १५७.

[१]अपि चेन्मन्त्रलिङ्गात्स नियोज्य उपवेशने ।
एवं पादार्थमुदकं त्रिः सकृत्प्रतिगृह्यताम् ॥

[२]विराज इति मन्त्रेण तद्गृहीत्वोदकं वरः ।
पादौ प्रक्षालयेत्तूष्णीं स तेन स्वयमात्मनः ॥

[३]प्रथमं दक्षिणं पादं ब्राह्मणोऽर्घ्यो भवेद्यदि ।
स्यातां क्षत्रियवैश्यौ चेदितरं प्रथमं तयोः ॥

द्वितीयं विष्टरं पाद्यं पूर्ववत्तं प्रयच्छति ।
गृहीत्वा पूर्ववद्भूमावुदगग्रं निधाय तु ॥

[४]स वर्ष्मोऽस्मीति मन्त्रेण तस्मिन् पादौ करोत्यथ ।
प्रादेशमात्रं त्रिवृतं कौशं वा काशनिर्मितम् ॥

[५]विष्टरं सूरयः प्राहुरभावे बल्वजादिभिः ।
यज्ञवास्तुनि मुष्टौ च स्तम्भे(? स्तम्बे) दर्भबटौ तथा ॥

[६]दर्भसंख्या न विहिता विष्टरास्तरणेषु च ।
त्रिराहार्घोऽर्घ इत्यन्य अर्घ्यायार्घयिता ततः ॥

[१]अमहीमयपात्रस्थमर्घं तस्मै प्रयच्छति ।
तं गृह्णाति स आपः स्थ युष्माभिरिति मन्त्रतः ॥

[२]मूर्ध्ना तमभिवन्द्याथ निनयन्नभिमन्त्रयेत् ।
प्रागुदग्वा समुद्रं वः प्रहिणोमीति मन्त्रतः ॥

[३]जलं तदर्घशब्देन लिङ्गादेवावगम्यते ।
त्रिराहाऽऽचमनीयं तत्पूर्ववत्स प्रयच्छति ॥

[४]स गृहीत्वाऽऽचमेन्मन्त्रेणाऽऽमाऽगन् यशसेति च ।
मित्रस्य त्वेति मन्त्रेण मधुपर्कं प्रतीक्षते ॥

कर्तुः करस्थितं कांस्ये दधिमध्वाज्यसंयुतम् ।
मधुपर्कं त्रिराहान्यः स प्रयच्छति पूर्ववत् ॥

देवस्य त्वेतिमन्त्रेण प्रतिगृह्णाति तं वरः ।
सव्ये कृत्वा करे स त्रिरुद्धारयति मन्त्रतः ॥

[५]नमः श्यावेति सव्यस्थं दक्षिणग्रहणाद्यतः ।
त्रिरेवानामिकाङ्गुष्ठेन तत्स्थस्य निरुक्षति ॥

[६]निरुक्षेत्प्रत्युत्पवनं चशब्दकरणादिह ।
मन्त्रावृत्तिर्भवेत्प्रत्युत्पवनं व्यवधानतः ॥

[७]निरुक्षणेन तस्य त्रिः प्राश्नात्यवयवं ततः ।
भूमौ निधाय तत्पात्रं स यन्मधुन इत्यतः ॥

---

(१) रेका. १२० पृ. ५७; संग. १५७ पृ.: १५८ उत्त.

(२) रेका. १२१ पृ. ५७ आदर्शपुस्तके एतच्छ्लोकस्थाने केनचित् 'दद्यादर्घयिता तूष्णीं तद्गृहीत्वोदकं वरः। विराज इति मन्त्रेण स्वं तेन स्वयमात्मनः ॥' इति श्लोकः शुद्धपाठत्वेन लिखितो विद्यते। तत्र हेतुश्च पारस्करगृह्यसूत्रे तट्टीकासु च 'विराजः' इति मन्त्रेण पादप्रक्षालनमेव विहितं न पाद्योदकग्रहणम्। आदर्शश्लोके च स मन्त्रः ग्रहणे विनियुक्तः तूष्णीं च पादप्रक्षालनं विहितम्, अतः सूत्रविरोधः। परन्तु असंगतत्वान्नास्माभिः स पाठः स्वीकृतः; संग. १५८.

(३) रेका. १२२, १२३ पृ. ५७.

(४) रेका. १२४ पृ. ५७; संग. १५६ उत्त.

(५) रेका. १२५ पृ. ५७; संग. १५६ दिभिः (दिकम्).

(६) रेका. १२६ पृ. ५७; संग. १५६ पृ.

(१) रेका. १२७ पृ. ५७; संग. १५८ (अभूमयार्घपात्रस्थमर्घं तस्मै प्रयच्छति। तं गृह्णाति स पश्चादापः स्थ युष्माभिमन्त्रतः ॥).

(२) रेका. १२८ पृ. ५७; संग. १५९ वन्द्याथ (वन्द्यार्घं).

(३) रेका. १२९ पृ. ५७; संग. १५९ पू.

(४) रेका. १३०–१३२ पृ. ५७–५८.

(५) रेका. १३३ पृ. ५८; संग. १६० रुक्षति (रुक्षयति) उत्त.

(६) रेका. १३४ पृ. ५८; संग. १६० त्युत्पवनं व्य (त्युच्चालनव्य).

(७) रेका. १३५ पृ. ५८; संग. १६० स यन्म (सर्वं म) उत्त.

[1]आवृत्तिः प्रतिभक्षं स्यान्मन्त्रस्य द्रव्यभेदतः ।
उच्छिष्टस्य भवेन्मन्त्रोच्चारणं मनुरब्रवीत् ।।
[2]यद्वा मधुमतीभिस्तत् प्रत्यृचं प्राशयेन्मधु ।
वाता ऋतायेति तिस्रो मधुमत्य उदाहृताः ।।

शेषप्रतिपत्तिः, प्राणसंस्पर्शनम्

[3]दद्यात्पुत्राय तच्छेषमस्ति चेत्स समीपतः ।
आसीनायोत्तरे यद्वा शिष्याय तदभावतः ।।
[4]सर्वं वा द्रव्यमश्नीयात्क्षिपेद्वा प्रागसञ्चरे ।
द्विराचामेत्स शुद्ध्यर्थं प्राणसंमर्शनं क्रमात् ।।
[5]स्याद्वाङ्म आस्य इत्याद्यैरत्रास्त्वध्याहृतिर्भवेत् ।
साकाङ्क्षत्वात्प्रयोगः स्यान्नसोर्मे प्राण अस्त्विति ।।
म इत्यत्रानुषङ्गः स्यादक्ष्णोर्मे चक्षुरित्यतः ।
कर्णयोः श्रोत्रमित्येवं ततो बाह्वोर्बलं तथा ।।
भेदेनैव प्रयोगः स्यादधिष्ठानद्वयादिह ।
ऊर्वोर्म ओजोऽस्त्वित्र दक्षिणेनैव पाणिना ।।
विनियोगो यथालिङ्गं मन्त्राणामनुपूर्वशः ।
अरिष्टानीति सन्त्वन्तमन्त्रेणाङ्गानि संस्पृशेत् ।।

आचमनम्, गवोपचरणम्, करणोत्सर्जनपक्षौ

आचान्तग्रहणात्केचिदिच्छन्त्याचमनक्रियाम् ।
आचार्या अपरे प्राहुरेतदर्घ्यविशेषणम् ।।
आचान्तमुदकं येन स आचान्तोदको भवेत् ।
तस्मादर्घयिता शासमादायाऽऽलम्भनाय गोः ।।
त्रिः कृत्वो गौरिति ब्रूयादालभेति सकृत्ततः ।
अर्घ्यः प्रत्याह तं माता रुद्राणामित्यमुं मनुम् ।।
मम चामुष्य चाऽऽरभ्य पाप्मानं हनोम्यतः ।
कुरुतेत्यन्तमालभ्यमानायां गवि सोषितम् ।।
अमुष्यार्घयितुर्नाम दिशत्यमुकशर्मणः ।
तस्यामुत्सृज्यमानायां मम पाप्मा हतः शनैः ।।
स ओमुत्सृजतेत्युच्चैर्निगदोऽयं यतो भवेत् ।।

यज्ञविवाहयोः करणपक्षनियमः, तस्य कलिवर्ज्यता

[1]आलम्भनं गोरधिकृत्य यज्ञ-
मावश्यकं स्याच्च तथा विवाहम् ।
न स्यादमांसोऽर्घ इति ब्रवीति
पारस्करो यज्ञविवाहकृत्ये ।।
[2]क्रतोर्विवाहादन्यत्राऽऽलम्भनं पाक्षिकं भवेत् ।
गोरालम्भनिषेधात्स्यात्सर्वत्रोत्सर्जनं कलौ ।।

पुनरर्हणावधिः, गोकरणपक्षे विशेषः

[3]अनेन विधिना विद्वानाचार्यादीन् समर्हयेत् ।
प्रतिसंवत्सरानेतान् स आवसथमागतान् ।।
[4]ऋत्विग्राजप्रियाचार्यवैवाह्यस्नातका इमे ।
षडेवार्घ्या इति प्रोक्तं प्रियस्नातकयोरपि ।।
षडिति ग्रहणं सूत्रे पृथक्त्वज्ञापनाय वै ।
ऋत्विजो यक्ष्यमाणास्तानर्हयेयुर्यथाविधि ।।
उद्वाह एव वैवाह्यं वियान्ते स्नातकं तथा ।
सोमेन यद्यप्यसकृदर्वाक् संवत्सराद्यजेत् ।।
कृतार्घ्या याजयन्त्येनं नाकृतार्घ्या इति श्रुतेः ।
स्याच्चेदालम्भनं तत्र पशुकर्मविधानतः ।।
वरणादिविमोकान्तं मांसभागं समर्पयेत् ।
अर्घ्यायेममनुप्राप्ता यजेति च वदेदिमम् ।।

मधुपर्कदेवताः, ऋत्विङ्मधुपर्के मांसनियमः, वरपूजनम्

तत्रैता देवता ज्ञेया आचार्याय बृहस्पतिः ।
ब्रह्मणे चन्द्रमा अग्निर्होत्रेऽध्वर्योरथाश्विनौ ।।

---

(१) रेका. १३६ पृ. ५८ ; संग. १६०.

(२) रेका. १३७ पृ. ५८.

(३) रेका. १३८ पृ. ५८ ; संग. १६१.

(४) रेका. १३९ पृ. ५८ ; संग. १६१ द्विराचामेत्स शु (द्विराचमेत्सम्).

(५) रेका. १४०–१४९ पृ. ५८–५९.

(१) रेका. १५० पृ. ५९ ; संग. १६३.

(२) रेका. १५१ पृ. ५९ ; गभा. १०२ उत्त., कारिका ; संग. १६३ निषेधात् (निषेधः) ; संदी. २१ (भागः २) उत्त., कारिका.

(३) रेका. १५२ पृ. ५९ ; संग. १६३ र्हयेत् (र्पयेत्) पू.

(४) रेका. १५३–१६० पृ. ५९.

उद्गात्रे चैव पर्जन्यो वैवाह्याय प्रजापतिः ।
इन्द्रो राज्ञे प्रियायैव मित्रो विश्वे च देवताः ॥
स्नातकायाथ चन्द्राग्नी(? वेन्द्राग्नी) नियोज्याः प्रोक्षणादिषु ।
समांसोऽर्घश्चतुर्णां स्याद्ब्रह्मादीनां महर्त्विजाम् ॥

[1]उत्सर्जनान्ते स वराय वाससी
दद्यात्सुगन्धं कुसुमानि वेष्टकौ ।
धत्ते स सर्वं विधिवत्क्रमाद्वरः ...॥

मधुपर्कमन्त्राणामृषिदैवतच्छन्दांसि

[2]विष्टरो देवता छन्दोऽनुष्टुबाथर्वणो मुनिः ।
वर्ष्मोऽस्मीत्यादिमन्त्रस्य विष्टरग्रहणे* युजिः ॥
अब्दैवते द्वे यजुषी विराजो दोह इत्यतः ।
आर्षं प्रजापतेरङ्घ्रिक्षालने ग्रहणे युजिः ॥
आपोऽस्य देवता छन्दोऽनुष्टुबाथर्वणो मुनिः ।
विनियोगः समुद्रं व इति स्यादभिमन्त्रणे ॥
आपोऽस्य देवता छन्दो बृहती परमेष्ठिनः ।
आर्षमाचमने योग आ माऽगन्यशसेति च ॥
मुनिर्बृहस्पतिर्मित्रस्य त्वेति यजुरीरितम् ।
देवता मधुपर्कस्तदीक्षणे विनियुज्यते ॥
देवस्य त्वेति सविता देव आर्षं प्रजापतेः ।
गायत्री छन्द इत्यस्य ग्रहणे विनियुज्यते ॥
युजिस्त्रिरुक्षणे देवः सविताऽऽर्षं प्रजापतेः ।
छन्दोहीनं नमः श्यावास्यायान्नित्यस्य मन्त्रतः ॥
ऋषिः कुत्सो यन्मधुन इत्यस्य मधु दैवतम् ।
जगती छन्द इत्यत्र(? त्युक्तं) मधुपर्काशने युजिः ॥

गौतमस्याऽऽर्षकं छन्दो गायत्री मधुमत्त्र्यृचम् ।
विश्वेदेवा देवताश्च युजिः स्यात्कछपाञ्जने (?) ॥
छन्दस्त्रिष्टुबृषिर्ब्रह्मा देवता गौरुदाहृता ।
युजिरुक्तौ भवेन्माता रुद्राणामिति मन्त्रतः ॥

## जगन्नाथकारिकाः

मधुपर्कार्चने शाखानियमः

[1]तत्तद्गृह्योक्तविधिना विष्टराद्यर्हणं ततः ॥

## गृह्यासंग्रहः

मधुपर्कपानोत्तरं हृदयस्पर्शनम्

[2]मधुपर्कं पिबेन्मन्थमन्ततो हृदयं स्पृशेत् ॥

मधुपर्कं वक्ष्यमाणलक्षणं पिबेत् । मन्थमपि वक्ष्यमाणलक्षणम्, दधिमन्थमधुमन्थोदमन्थभेदात् त्रिविधं पिबेत् । अन्ततः पानात्परं हृदयं स्पृशेत् ।

गृसंभा.

अर्घ्यस्वरूपम्

दध्यक्षतसुमनस आपश्चेति चतुष्टयम् ।
अर्घ्यं एष प्रदातव्यो गृह्ये ये अर्घ्यार्हाः स्मृताः ॥

अथेदानीं 'विष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिस्त्रिर्वेदयेरन्' (गोगृ. ४।१०।५) इति सूत्रोक्तमर्घ्यादिकं व्याकुरुते — दध्यक्षतेति । दधि, अक्षताः यवाः, सुमनसः पुष्पाणि, आपः उदकम् इत्येतच्चतुष्टयं मिलितमर्घ्यः । स खल्वेषोऽर्घ्यः प्रदातव्यः । कस्मै 'षडर्घ्यार्हा भवन्ति' (गोगृ. ४।१०।२३) इति सूत्रेण गृह्ये ये अर्घ्यार्हाः स्मृतास्तेभ्यः । गृसंभा.

दध्यक्षतः सुमनसो घृतं सिद्धार्थका यवाः ।
पानीयं चैव दर्भाश्च अष्टाङ्गो ह्यर्घ्य उच्यते ॥

अपरमर्घ्यमाह— दध्यक्षत इति । अक्षतस्तण्डुलः, यवानां पृथगुपदेशात् । सिद्धार्थकाः श्वेतसर्षपाः । पानीयमुदकम् । प्रसिद्धमन्यत् । अष्टावङ्गानि यस्य सोऽयमष्टाङ्गोऽर्घ्य उच्यते । गृसंभा.

---

* इदं कर्कादिसर्वभाष्यकारविरुद्धम् । तैस्तूष्णीं ग्रहणमुक्तम्, उपवेशने च युजिरुक्ता ।

(१) रेका. १६१ पृ. ५९–६० ; संग. १६४ गन्धं (गन्धः) वेष्टकौ (चेष्टकौ).

(२) रेका. २७८–२८७ पृ. ६७.

(१) गमा. ५६ ; संग. १६५.

(२) गृसं. २।६१–६८.

मधुपर्कस्वरूपम्

**सर्पिषा मधुना दध्ना अर्चयेदर्हयन् सदा।**
**ऋषिप्रोक्तेन विधिना मधुपर्केण याज्ञिकः ॥**

मधुपर्केणार्चनप्रकारमाह— सर्पिषेति। याज्ञिकः सदा 'परिसंवत्सरानर्हयेयुः' 'पुनर्यज्ञविवाहयोश्च' इति गृह्योक्तसर्वकाले मधुपर्केणार्हयन् पूजयन्, ऋषिप्रोक्तेन गोभिलोक्तेन विधिना, सर्पिषा मधुना दध्ना इत्येतत्त्रितयेनार्चयेत्। गृसंभा.

**कंसे त्रितयमासिच्य कंसेन परिसंवृतम्।**
**परिश्रितेषु देयः स्यान्मधुपर्क इति ध्रुवम् ॥**

कंसे कांस्यपात्रे, त्रितयं सर्पिर्मधु दधि चाऽऽसिच्य, कंसेन परि सर्वतोभावेन संवृतं सम्यगाच्छादितं कृत्वा, परिश्रितेषु अर्हणीयस्य सर्वतः समाश्रितेषु गृह्येषु इत्यर्थः। तथा च वाजसनेयके प्रवचने— 'यत्र चार्ह्य आगच्छति, सर्वे गृह्या इतरे तत्र वेष्टयन्ति' इति। अपर आह— 'कटादिना परितः श्रितेषु सर्वतो वेष्टितेषु स्थानेषु' इति। तदेवं मधुपर्को देयः स्यात् इति ध्रुवं निश्चयः। गृसंभा.

मधुपर्कभक्षणे उच्छिष्टदोषाभावः

**मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च।**
**अनुच्छिष्टो भवेद्विप्रो यथा वेदविदो विदुः ॥**

मधुपर्कभक्षणे, सोमभक्षणे, अप्सु उदके आस्येन होमे पूर्वोक्ते, जलपाने वा, प्राणाहुतीषु च उपनिषद्ब्राह्मणोक्तेषु प्राणव्यानापानसमानोदानरूपपञ्चाहुतिषु विप्रो नोच्छिष्टो भवति, यथा वेदविदो जानन्ति। गृसंभा.

**प्राणाहुतिषु सोमेषु मधुपर्के तथैव च।**
**आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥**

आस्यहोमेषु 'सर्पिरास्येन जुहुयात्' इत्यादिसूत्रोक्तेषु। 'सर्वेषु' इतिकरणादन्येष्वप्येवंविधेषु उपाकरणादावक्षतधानाभक्षणादिषु, द्विजो नोच्छिष्टो भवति। तदेतद्विशेषाभिधित्सया पुनरारम्भः। पूर्वं विप्रपदोपादानाद्राजन्यवैश्ययोरुच्छिष्टताशङ्काऽपि स्यात् कस्यचिदिति वा पुनरारम्भः, समादरार्थो वा। गृसंभा.

मधुपर्कप्रकाराः

**दधनि पयसि वाऽथवा कृतान्ने**
**मधु दद्यान्मधुपर्कमेतदाहुः।**
**दधिमधुसलिलेषु सक्तवः**
**पृथगेते विहितास्त्रयस्तु मन्थाः ॥**

अन्यमपि मधुपर्कमाह— दधनीति। दधनि, पयसि दुग्धे वा, कृतान्ने ओदनादौ वा, मधु दद्यात् क्षिपेत्। दध्यात् इति पाठे धारयेदित्यर्थः। एतन्मधुपर्कमाहुराचार्याः। दधिमधुसलिलेषु सक्तवो देयाः। त इमे त्रयो मन्था भवन्ति दधिमन्थः मधुमन्थः उदमन्थश्च इति। तदिदम् 'रसोऽसि वानस्पत्यो रसं मयि धेहीति मधुमन्थस्य पिबेदिति गौतमः, वानस्पत्य इति प्रवचनम्, तथा दधिमन्थोदमन्थयोः' इति द्राह्यायणादिकल्पसूत्रोक्तानां दधिमन्थमधुमन्थोदमन्थानां निर्वचनं प्रसङ्गागतमिति बोद्धव्यम्। कल्पसूत्रवृत्तिकारा अग्निस्वामिनोऽप्येवमेव श्लोकमिमं पठितवन्तः। दीक्षितस्त्वन्यथेमं श्लोकं पठति— 'दधनि पयसि वा कृतान्ने मधु निदध्यान्मधुपर्कमाहुः। दधिमधूदकं वाऽपि सक्ताविल्येते विहितास्त्रयस्तु मन्थाः ॥' इति। अत्रापि पाठे पूर्वोक्त एवार्थः। एवं तावत् छन्दोगानां स्वशाखापरिभाषितश्चतुर्विधो मधुपर्को भवति, दधिमधुघृतम्, दधनि मधु, पयसि मधु, कृतान्ने मधु चेति। एवं च सर्वत्रैव 'मधुपर्कः' इति समाख्याऽनुगृह्यते। तत्र प्रथमो मधुपर्कः कांस्यस्थः कांस्यापिधानश्च भवति। द्वितीयेऽप्यमुं विशेषं वक्ष्यामः। शिष्टयोरनियमः। कथं ज्ञायते? पूर्वस्मिन्नेव मधुपर्के तदभिधानात्, शिष्टयोरनभिधानाच्च। न चेदं वाक्यं घृतासंभवपरम्, प्रमाणाभावात्, आराच्चाभिधानात्। यदि हि घृतासंभव एव विधिरयं स्यात्, तदनुपदमेवैतदपि कुर्यात्। तस्माद्व्यवहितकरणादवगच्छामः— पृथगेवैते मधुपर्कप्रकाराः इति। अपि च, 'अथवा' 'वा' शब्दयोरुपादानादेकार्थत्वाच्च विकल्प एवामीषां युक्तो वर्णयितुम्। तथा चोक्तम्— 'एकार्थास्तु विकल्पेरन्' इति। 'पृथक्' इति वचनाच्चैवमवगच्छामः। तच्च

यद्यपि पराचीनम्, तथाप्यविशेषात् पूर्वत्राप्यनुषञ्जनीयम्। पयःकृतान्नाभ्यामपि मधुपर्काभिधानममुमर्थमुपोद्बलयति। 'घृतालाभे' इत्यकरणाच्च। तस्मादियमेवावधारणा— प्रथम एव मधुपर्कः कांस्यस्थः कांस्यापिधानश्च भवति, नान्तिमौ इति। 'कंसे त्रितयमासिच्य' इति ब्रुवन्नाचार्यपुत्रस्त्रितयस्यैव कंसे समासेचनं कंसेनापिधानं च, न द्वयोः इति दर्शयति। यथा खलु अभिक्रमणं प्रयाजमात्रस्यैवाङ्गम्, न पुनरनुयाजादीनां प्रकरणोपात्तानामिति तृतीयाध्याये सिद्धान्तितम्, तद्वदत्रापि स्यात्। अत एव 'साक्षतं सुमनोयुक्तमुदकं दधिमिश्रितम्। अर्घ्यं दधिमधुभ्यां च मधुपर्को विधीयते॥ कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ। कांस्यापिधानं कांस्यस्थं मधुपर्कं निवेदयेत्॥' इति कर्मप्रदीपेऽपि मधुपर्कपदं स्वोक्तमेव मधुपर्कमाह, नापरम्। व्यक्तिवचनं खल्वेतत् संनिहितामेव व्यक्तिं शक्नोति वदितुम्, नासंनिहिताम्, आग्नेयीन्यायात्। तदनेन दधिमधुभ्यां यो मधुपर्को विधीयते, सोऽपि कांस्यापिधानः कांस्यस्थश्चेति कात्यायनेनोक्तम्। तस्मादाद्यौ मधुपर्कौ कांस्यापिधानौ कांस्यस्थौ च भवतः, नापरौ इति सिद्धम्। यच्च 'दधनि मध्वानीय सर्पिर्वा मध्वलाभे' इति गृह्यान्तरम्, तदन्येषामेव, नास्माकम्। कस्मात्? अस्मच्छास्त्रे तदनुपदेशात्, विशेषस्योपदेशाच्च। रघुनन्दनस्तु छन्दोगोऽप्येतदनालोचयन् 'दधिमधुमात्रेण मधुपर्काभिधानं घृतासंभवपरम्' इति परिकल्प्य, 'तत्संभवे गोभिलः' इत्यभिधाय, 'मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन' इति पारस्करगृह्यसूत्रं 'पिहितं कांस्यस्थम्' इत्याकुलीकृत्य लिखित्वा 'पूर्ववचने पात्रानुपदेशात् कांस्यपात्रं विनाऽपि मधुपर्को दीयते' इति वर्णयाञ्चकार। तदसंगतम्, मधुपर्कान्तरे मधुपर्कान्तरोक्तविशेषस्य संश्लेषाभावात्। 'यद्धि यदुपक्रम्य श्रुतं तत्तत्रैवाङ्गम्, नान्यत्र' इति भवानेवाऽऽह। प्रथमयोर्हि मधुपर्कयोर्विशेषः श्रूयते, नापरत्र। स खल्वयं विशेष एवान्यत्र नास्ति। तत्कुत एव तत्र पात्रानुपदेशात् प्रथमावपि मधुपर्कौ कांस्यपात्रं विना देयौ स्याताम्? अपि च, मध्वभावे घृतेन मधुपर्कं गृह्यान्तरकाराः स्मरन्ति, भवान् पुनर्मन्यते— 'घृतासंभवे दधिमधुमात्रेण मधुपर्कः' इत्यहो प्रमादः। घृतासंभवे वचनस्य विषयत्वे खल्वशक्तविषयमेव वचनमिति कांस्यपात्रासंभवेऽपि शक्यं नेतुम्। तस्याशक्तविषयत्वस्य भवतोऽविवादात्। तत् कथमेतद्वचनावष्टम्भेन दधिमधुघृतवाक्ये श्रूयमाणस्यापि कांस्यपात्रस्योपलक्षणतां भङ्ग्यन्तरेणाभ्युपगच्छति? वाक्ययोरनयोः परस्परसंबन्धाभावात्। अपि च, भवान् खलु पारस्करीयं सूत्रं गोभिलीयमिति ब्रवीति, पारमर्षं च सूत्रमाकुलयति इति किमत्र ब्रूमः?

गसंभा.

## *निरीक्षणम्

### बौधायनगृह्यसूत्रम्

निरीक्ष्यमाणवधूधर्माः— स्नानम् अहतवस्त्रं
गन्धानुलेपः स्रक् भोजनम् इषुहस्तत्वम्
दत्तात्वं च, परस्परनिरीक्षणम्,
वध्वाः भ्रूमुखसंमार्जनम्

$ [1]वधूर्ज्ञातिभिरतिथिवदर्चितः स्नातामहतवाससां गन्धानुलिप्तां स्रग्विणीं भुक्तवतीमिषुहस्तां दत्तां वधूं समीक्षते— 'अभ्रातृघ्नीं वरुणापतिघ्नीं बृहस्पते । इन्द्रापुत्रघ्नीं लक्ष्म्यं तामस्मै सवितः सुव ॥' इति ॥

[2]तयेक्ष्यमाणो जपति— 'अघोरचक्षुरपतिघ्न्येधि शिवा पतिभ्यः सुमनाः सुवर्चाः । जीवसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥' इति ॥

अथैनामन्तरेण भ्रुमुखे दर्भेण संमार्ष्टि— 'इदमहं या त्वयि पतिघ्न्यलक्ष्मिस्तां निर्दिशामि' इति ॥

दर्भं निरस्याप उपस्पृश्य ॥

### आश्वलायनगृह्यपरिशिष्टम्

मङ्गलवाद्यघोषः, वधूवरयोस्तण्डुलराशिस्थितिः, मध्ये
तिरस्करिणीधारणम्, दिङ्नियमः, इष्टदेवता-
ध्यानम्, सूर्यासावित्रीसूक्तपाठः, मङ्गल-
पद्यगानम्, तिरस्करिणीसमुत्सारणे
परस्परयोर्गुडजीरकावकिरणपूर्वकं
परस्परनिरीक्षणम्,
अभिनन्दनम्

[2]अथानयोर्निरीक्षणं स्वलङ्कृते वेश्मनि मङ्गलगीततूर्यनिर्घोषे पूर्वापरावरत्न्युच्छ्रितौ हस्तान्तरालौ शुक्लतण्डुलराशी कृत्वा मध्ये स्वस्तिकां तिरस्करिणीं धारयेयुः । अथ पूर्वस्मिन् राशौ प्रत्यङ्मुखीं गुडजीरकपाणिं कन्यां स्थापयेयुः । अपरस्मिन् प्राङ्मुखं तथाभूतं वरम् । तौ मनसेष्टदेवतां ध्यायन्तौ समाहितौ तिष्ठेताम् । ब्राह्मणाः

---

* निरीक्षणकन्यादानयोः पौर्वापर्येऽस्ति सूत्रकारादिनां विप्रतिपत्तिः । तत्र आश्वलायनविषये प्रयोगपारिजातः— "अथ कन्यानिरीक्षणादिषु कारिकागृह्यपरिशिष्टयोः क्रमव्यत्यये सति सविशेषं गृह्यपरिशिष्टोक्तमेवानुसंधेयम्, आचार्येणोक्तत्वात्, 'तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत्।' इति वचनाच्च।" इति । प्रयोगरत्ने तु निरीक्षणपूर्वकं कन्यादानं स्वाभिप्रेतमुपनिबध्य 'प्रयोगपारिजाते तु गृह्यपरिशिष्टानुसारेण कन्यादानतत्प्रतिग्रहजवनिकापूर्वकमन्त्रवन्निरीक्षणाक्षतारोपणदास्यादिदानपुरोधःकर्तृकाभिषेकपरस्परक्षीरघृततिलककरणमालारोपणपूर्वसंपादितकौतुकसूत्रबन्धनगणपतिपूजनक्रमुकबन्धनादीत्ययमनुष्ठानक्रम उक्तः, स च देशाचारवशेनानुसर्तव्यः' इत्युक्तम् । अस्माभिरपि एतद्देशीयसांप्रदायिकशिष्टाचारवशेन निरीक्षणं पूर्वं संगृह्यते ।

$ इदमीक्षणं कन्यादानोत्तरभावीति 'दत्ताम्' इति पदात्स्पष्टम्, केवलमीक्षणत्वसाधर्म्यादत्र संगृहीतम् । एवमापस्तम्बादिसूत्रान्तरेष्वपि बोध्यम् ।

(१) बौगृ. १।१।२४ ; प्रपा. ३४९ वाससां (वाससं) दत्तां (प्रदत्तां) समीक्षते (समीक्षेत) ('अभ्रातृघ्नीं...... सुव' इति०) ; संप्र. ८२० वाससां (वाससं) ('अभ्रातृघ्नीं.....सुव' इति०) ; विपा. ३७ (भागः २) वधू (बन्धु) (दत्तां०) शेषं प्रपावत् ; संग. २२५ वधू (बन्धु) (दत्तां०) शेषं संप्रवत् .

(२) बौगृ. १।१।२५–२७.

(२) आगृप. १।२३ (समाहितौ०) तिष्ठेताम् (तिष्ठन्तौ) सूर्यासावित्रीसूक्तं (सूर्यसूक्तं) परस्परं गुडजीरकावकिरन्तौ (परस्परगुडजीरकानवकिरतः) तयेक्ष्यमाणः (तथेक्ष्यमाणः) ; प्रपा. ३५४ परावरत्न्यु (परावत्यु) स्वस्तिकां

सूर्यासावित्रीसूक्तं पठेयुः । पुरन्ध्र्यो मङ्गलगीतानि* कुर्युः । अथ ज्योतिर्विदादिष्टे काले प्रविष्टे सद्यस्तिरस्करिणीमुदगपसार्य कन्यावरौ परस्परं गुडजीरकाववकिरन्तौ परस्परं निरीक्षेयाताम् । 'अभ्रातृघ्नीम्' इति तामीक्षमाणो जपति । 'अघोरचक्षुरपतिघ्न्येधि' इति तयेक्ष्यमाणः । अथास्या भ्रुवोर्मध्यं दर्भाग्रेण परिमृज्य

* विवाहे उपनयने च अन्तःपटधारणसमये पठ्यमानानि मङ्गलगीतानि मङ्गलाष्टकसंज्ञया लोके व्यवह्रियन्ते । प्राक्तने काले मङ्गलपद्यानामष्टत्वसंख्याविशिष्टत्वनियमः स्यात्, तेन च संज्ञाया अन्वर्थत्वं स्यात् । इदानीं तु महाराष्ट्रे प्रतिपद्यं मङ्गलाष्टकशब्दप्रयोगो लोके रूढः । तत्र यानि पद्यानि गीतिविशिष्टानि पठ्यन्ते तानि शार्दूलविक्रीडितवृत्तान्येवेति नियमो गीतिप्रकारसाम्यं च सर्वत्र दरीदृश्यते । कानिचित् गीतिरहितान्यपि पठ्यन्ते । तानि च मङ्गलगीतानि संस्कृतानि प्राकृतानि च भवन्ति । तत्र संस्कृतानि कानिचिन्मङ्गलगीतानि उदाहरणार्थं याज्ञिकोपयोगार्थं च औरङ्गाबादस्थितव्यङ्कटरामसूनुहरिकृष्णज्योतिर्विदा विरचिते बृहज्ज्योतिषार्णवे षष्ठे मिश्रस्कन्धे चतुर्नवत्यधिकसप्तदशशतमितशालिवाहनशाकसमापितादन्यकर्तृकमङ्गलाष्टकसंकलनात्मकादनेकविधमङ्गलाष्टकनिरूपणनामकात्सप्तविंशाध्यायात् संस्काररत्नमालातश्चात्र संगृह्यन्ते ।
अथ गोपीनाथभट्टकृतं गणपतिमङ्गलषट्कम् –

'देवो विघ्नविनाशनो गणपतिर्ध्यातश्च चिन्तापहृत्
यन्नत्या हृतविघ्नका अपि सुरा जाता हराजादयः ।
योऽत्राविघ्नसुसंज्ञया च कलशे संस्थापितो मण्डपे
सिद्ध्याश्लेषणहर्षितः स उभयोः कुर्यात्सदा मङ्गलम् ॥

वात्सल्यात्पितरौ कपोलयुगुलं स्वस्याऽऽगतौ चुम्बितुं
दृष्ट्वाऽऽकुञ्चितमास्यपद्ममलं सेषत्स्मितं सत्वरम् ।
अन्योन्यं शिवयोस्ततः सुवदने युक्ते अभूतां तयो-
रित्थं येन विनोदितौ स भगवान्कुर्यात्सदा मङ्गलम् ॥

विघ्नेशो विबुधर्षिभिर्गणपतिर्दैतेयजोपद्रवाद्
भीतैः प्रार्थित ईश्वरोऽपि कुतुकाद्धृत्वा वपुः शैशवम् ।
पार्वत्योकसि शैशवानि चरितान्यत्युत्कटान्याचरन्
देवो हर्षयतीश्वरौ स भगवान्कुर्यात्सदा मङ्गलम् ॥

योऽपर्णाङ्कसुतल्पके स्थित उभौ पीत्वा स्तनौ सत्वरं
शुण्डाग्रेण मुखेन चाऽऽशु युगपद्बालो विभुर्विघ्नराट् ।
स्मेरास्यः कुतुकाद्धिमाचलसुतोत्सङ्गाद्धरोत्सङ्गके
गच्छन्नाशु हरन्मनः स शिवयोः कुर्यात्सदा मङ्गलम् ॥

तिर (स्वस्तिकाङ्किततिर) मगङ्लगीतानि (मङ्गलगीतीः) अभ्रातृघ्नीं + (वरुणापतिघ्नीं बृहस्पते । इन्द्रापुत्रघ्नीं लक्ष्म्यन्तामस्मै सवितुः सव) भ्रुवोर्मध्यं + (व्याहृतिभिः); संप्र. ८२८ परावरत्न्यु (परावत्यु) (शुक्लतण्डुल०) तिष्ठेताम् (तिष्ठन्तौ) सूर्यासावित्रीसूक्तं (सूर्यसूक्तं) मङ्गलगीतानि (मङ्गलगीतीः) ज्योतिर्वि.....प्रविष्टे (तद्विदा काले प्रदिष्टे) परस्परं गुडजीरकाववकिरन्तौ (परस्परस्मिन् गुडजीरकानवकिरतः) भ्रुवोर्मध्यं (भ्रुवोर्मध्ये व्याहृतिभिः); विपा. ४३ (भागः २) परावरत्न्यु (परावत्यु) वरम् + (च) सूर्यासावित्रीसूक्तं (सूर्यसूक्तं) मङ्गलगीतानि (मङ्गलगीतीः) परस्परं गुडजीरकाववं (परस्परस्मिन् गुडजीरकानव) तयेक्ष्यमाणः (तथेक्ष्यमाणः) भ्रुवोर्मध्यं + (इदमहमिति) उपस्पृशेत् + (ततो मिश्रोऽसीति वधूं दक्षिणहस्ते गृहीत्वा एकमिषे इति वेदिमुपनयेत् ।) पुरन्ध्र्यः + (च),

यो देवस्य शिवस्य ताण्डवविधौ हर्षान्मदायाऽऽगतैः
कूजद्भिर्भ्रमरैर्युतं कममलं स्वीयं धुनानो विभुः ।
कुर्वन्वल्गु सुभाषणं स्खलदथो हास्यं तनोतीश्वरो
नाटचं चैव मुदावहं स भगवान्कुर्यात्सदा मङ्गलम् ॥
यो विघ्नेऽपनायनाभिधविधौ दत्तेऽद्रिपुत्र्या शुभे
पात्रे भिक्षितुमाहृतेषु विबुधैर्ब्रह्मा†रवीन्द्रादिभिः ।
नानोपायनकेषु तत्र सुरराड्दर्पं व्यपास्य क्रमाद्
धर्मान्विर्णिन आचरत्यहरहः कुर्यात्सदा मङ्गलम् ॥' इति ।

अथ कालिदासकृतं मङ्गलाष्टकम्—
'श्रीमत्पङ्कजविष्टरो हरिहरौ वायुर्महेन्द्रोऽनल-
श्चन्द्रो भास्करवित्तपालवरुणप्रेताधिपा विग्रहाः ।
प्रद्युम्नो नलकूबरः सुरगजो चिन्तामणिः कौस्तुभः
स्वामी शक्तिधरश्च लाङ्गलधरः कुर्वन्तु वो मङ्गलम् ॥
गङ्गा गोमतिगोपती गणपतिर्गोविन्दगोवर्धनौ
गीता गोमयगोरजोगिरिसुता गङ्गाधरो गौतमः ।
गायत्री गरुडो गदाधरगया गम्भीरगोदावरी
गन्धर्वग्रहगोपगोकुलगणाः कुर्वन्तु वो मङ्गलम् ॥
नेत्राणां त्रितयं शिवं पशुपतेरग्नित्रयं पावनं
पुण्यं विष्णुपदत्रयं त्रिभुवनं ख्यातं च रामत्रयम् ।
गङ्गावाहपथत्रयं त्रिकमलं वेदत्रयं त्रिस्वरं
संध्यानां त्रितयं सदा गतभयं कुर्वन्तु वो मङ्गलम् ॥
गौरी श्रीकुलदेवता च सुभगा कद्रूर्महेन्द्रप्रिया
सावित्री च सरस्वती सुरनदी सत्यव्रताऽरुन्धती ।
सत्या जाम्बवती च रुक्मिभगिनी स्वाहा पितॄणां प्रिया
वेला चाम्बुनिधेः समीनमकरा कुर्वन्तु वो मङ्गलम् ॥
अश्वत्थो वटचन्दनौ सुरतरू मन्दारकल्पद्रुमौ
जम्बुप्लक्षकदम्बनिम्बसरला वृक्षाश्च ये क्षीरिणः ।
स्वर्गे ये खलु पारिजातकमुखा वैभ्राजके राजिते
रम्ये चैत्ररथे च नन्दनवने कुर्वन्तु वो मङ्गलम् ॥
वाल्मीकिश्च सनन्दनन्दनमुनि(?)र्व्यासो वसिष्ठो भृगु-
र्जाबालिर्जमदग्निरामजनको गर्गोऽङ्गिरा गौतमः ।
मान्धाता भरतो नृगश्च सगरो धन्यो दिलीपो नलः
पुण्यो धर्मसुतो ययातिनहुषौ कुर्वन्तु वो मङ्गलम् ॥
लक्ष्मीः कौस्तुभपारिजातकसुरा धन्वन्तरिश्चन्द्रमा
गावः कामदुघाः सुरेश्वरगजो रम्भादिदेवाङ्गनाः ।
अश्वः सप्तमुखो विषं हरिधनुः शङ्खोऽमृतं चाम्बुधे
रत्नानीति चतुर्दश प्रतिदिनं कुर्वन्तु वो मङ्गलम् ॥

† ब्रह्म च अश्चेत्यकारः प्रश्लेषणीयः । अः विष्णुः ।

गङ्गासिन्धु सरस्वती च यमुना गोदावरी नर्मदा
कावेरी सरयूमहेन्द्रतनयाचर्मण्वतीवेदिकाः ।
शिप्रा वेत्रवती महासुरनदी ख्याता च या गण्डकी
पूर्णाः पुण्यजलैः समुद्रसहिताः कुर्वन्तु वो मङ्गलम् ॥
इत्येवं वरमङ्गलाष्टकमिदं पापौघविध्वंसनं
पुण्यं संप्रति कालिदासकविना प्रातः प्रबोधे कृतम् ।
यः प्रातः शृणुयात्समाहितमना दत्त्वा महादक्षिणां
गङ्गासागरसंगमोद्भवफलं प्राप्नोति पुण्यं महत् ॥' इति ।

अथ कालिदासकृतं नवग्रहमङ्गलनवकम् –

भास्वान्काश्यपगोत्रजोऽरुणरुचिः सिंहाधिपोऽर्कः समित्
षट्त्रिस्थो दशमः शुभो गुरुशशिक्षोणीजमित्रः सदा ।
शुक्रार्की तु रिपू कलिङ्गविषयेशोऽग्नीश्वरौ दैवते
मध्ये वर्तुलपूर्वदिङ्मुख इनः कुर्यात्सदा मङ्गलम् ॥
चन्द्रः कर्कटराशिपः सितरुचिः स्वच्छोऽत्रिगोत्रोद्भवो
वह्न्याशा चतुरश्रवारुणमुखस्त्वापः शिवा दैवते ।
षट्सप्ताग्निदशाद्यगः शुभफलो नारिर्बुधार्कप्रियः
स्यातां यामुनदेशपर्णसमिधौ कुर्यात्सदा मङ्गलम् ॥
भौमो याम्यमुखस्त्रिकोणयमदिग्विन्ध्येश्वरः खादिर-
स्त्विध्मो वृश्चिकमेषपोऽस्य सुहृदः सूर्येन्दुजीवाः स्मृताः ।
ज्ञोऽरिः षट्त्रिखगः शुभोऽथ वसुधास्कन्दौ क्रमाद्दैवते
भारद्वाजकुलोद्भवः *क्षितिसुतः कुर्यात्सदा मङ्गलम् ॥
सौम्यः पीत उदङ्मुखः समिदपामार्गोऽत्रिगोत्रोद्भवो
बाणेशानदिशौ हितौ रविसितौ शत्रुः स्मृतः शीतगुः ।
कन्यायुग्मपतिर्दशाष्टगचतुःषण्नेत्रगः शोभनो
देवौ विष्णुभु( ? )पूरुषौ मगधपः कुर्यात्सदा मङ्गलम् ॥
जीवस्त्वाङ्गिरसः कुबेरवदनो दीर्घोत्तराशास्थितः
पीतोऽश्वत्थसमिच्च सिन्धुविषयः शक्रो विधिर्दैवते ।
सूर्येन्दुक्षितिजप्रियो बुधसितौ शत्रू धनुर्मीनपः
सप्ताङ्कद्विसुते हितः सुरगुरुः कुर्यात्सदा मङ्गलम् ॥
शुक्रो भार्गवगोत्रजः सितनिभः पूर्वामुखः‡ पञ्चको-
णेन्द्रस्थो धटगोपतिः खलु महाराष्ट्रेश औदुम्बरी ।
इन्द्राणी मघवा सुरौ बुधशनी मित्रे रवीन्दू अरी
षट्सप्ताभ्रकुवर्जितो भृगुसुतः कुर्यात्सदा मङ्गलम् ॥
मन्दः पाशिमुखः शमीसमिदभः‡ सौराष्ट्रपः काश्यपः
कुम्भो(? म्भी)[नक्रपतिर्हितौ बुधसितौ सूर्येन्दुभौमाः पराः ।

* 'क्षितिसुतः' इत्यत्र 'क्षतजरुक्' इति विपरिणामे पूर्वोत्तरश्लोकवदत्रापि ग्रहवर्णवर्णनं संपन्नं भवेत् । यथास्थितपाठे तन्न्यूनता ।

‡ अस्य विष्णोः भा इव भाः यस्य सः ।

स्थानं पश्चिमदिक्प्रजापतियमौ देवौ धनुष्यासनः
षट्त्रिस्थः शुभकृच्छमी रविसुतः कुर्यात्सदा मङ्गलम् ॥
राहुर्बर्बरदेशपस्तिमिरभो नैर्ऋत्यशूर्पासनो
यः पैठीनसिगोत्रजः खलु समिद्दूर्वा मुखं दक्षिणे ।
कालः प्रत्यधिदेवता त्वधिसुरः सर्पाः खचन्द्रस्थितः
षट्त्रिस्थः शुभदोऽर्घकाय उदितः कुर्यात्सदा मङ्गलम् ॥
केतुर्जैमिनिगोत्रजः कुशसमिद्वायव्यकोणे स्थित-
श्चित्राङ्क(? ङ्गो)ध्वजलाञ्छनो हि भगवान्यो दक्षिणाशामुखः ।
ब्रह्माऽधिस्त्रिदशालयः सुरपतिः सच्चित्रगुप्तः * खगः
षट्त्रिस्थश्च शुभः पलाशसदृशः कुर्यात्सदा मङ्गलम् ॥ ' इति ।

¶अथ साधारणमङ्गलपद्यानि—

' अविरलमदधाराधौतकुम्भः शरण्यः
फणिवरवृतगात्रः सिद्धसाध्यादिवन्द्यः ।
त्रिभुवनजनविघ्नध्वान्तविध्वंसदक्षो
वितरतु गजवक्त्रः संततं मङ्गलं वः ॥
विघ्नेशनो विघ्नविदूरकारी
निर्विघ्नकार्ये सकलार्थसिद्धिः ।
विघ्नेश्वरो विघ्ननरेशपूज्यो
वधूवराभ्यां शुभमाददातु ॥
सकलभुवनवृन्दानन्दसंदोहकन्दः
प्रतिदिनममृतौघप्रीणितः स्वर्गिवृन्दैः ।
परमपुरुषचित्तादुद्गतो रोहिणीशः
कुमुदकुलविकासी मङ्गलं वो ददातु ॥
दलितदनुजवृन्दो यस्य मन्त्रप्रभावात्
सुरपतिरपि भुङ्क्ते निर्भयो नाकराज्यम् ।
शमितसकलदोषं यस्य दृष्ट्या विलग्नं
स सुरगुरुरजस्रं मङ्गलं वो ददातु ॥
यन्मङ्गलं प्रवरशङ्खगदाधरस्य
रामस्य रावणजयाय समुद्यतस्य ।
जित्वा निशाचरपुरीं पुनरागतस्य
तन्मङ्गलं भवतु वो विजयाय नित्यम् ॥
यन्मङ्गलं त्रिदशमौलिकिरीटरत्न-
चन्द्रप्रभापटलधौतपदाम्बुजस्य ।
गौरीविवाहसमये शशिशेखरस्य
तन्मङ्गलं भवतु वो विजयाय नित्यम् ॥

* अशुद्धमिदम् । ' ब्रह्माऽधित्रिदशस्तथा प्रतिसुरः स्याच्चित्रगुप्तः ' इति पाठः संभवति । अधित्रिदशः अधिदेवः, प्रतिसुरः प्रत्यधिदेवः ।

¶ यथावसारं यथाभिलाषं च शार्दूलविक्रीडितपद्यानि गीत्वा तत इमानि पद्यानि पठ्यन्ते, ततोऽधःसंगृहीतेषु सावधानशब्देषु कतिपयान्पठित्वा सवाद्यघोषमन्तःपटो निःसार्यते ।

दर्भं निरस्याप उपस्पृशेत् । अथ ब्राह्मणा बान्धवाः पुरन्ध्र्यस्तावाशीर्भिरभिनन्दयेयुः ॥ *

## आपस्तम्बगृह्यसूत्रम्

दर्शनसमीक्षणे भ्रूमध्यसंमार्जनं च

**[1]स्वयं दृष्ट्वा तृतीयां जपेत् ॥**

(१) ततो विवाहे निश्चिते पूर्वेद्युर्नान्दीश्राद्धं कृत्वा परेद्युर्ब्राह्मणान् भोजयित्वाऽऽशिषो वाचयित्वा वरो वधूकुलं गच्छति । तस्मै कूर्चदानादि भोजनान्तं मधुपर्कं दत्त्वा कन्यां प्रतिपादयति— 'तुभ्यमिमां प्रजासहत्वकर्मभ्यः प्रतिपादयामि' इति । ततस्तां वरः स्वयं दृष्ट्वा तृतीयामृचं जपेत् 'अभ्रातृघ्नीम्' इत्येताम् । स्वयमित्यनुच्यमाने वरं(? वरान्) दृष्ट्वेत्यर्थः स्यात्, प्रकृतत्वात् । स्वयंग्रहणात्तु कन्यां दृष्ट्वेत्यर्थो भवति । तत्र ब्राह्मे विवाहे उदकपूर्वं प्रतिपादनम् । गान्धर्वराक्षसयोस्तु नैव प्रतिपादनम् । अनाकुला.

(२) अनन्तरं वरः किं कुर्यादित्याह— स्वयमिति । वरः स्वयं कन्यां दृष्ट्वा 'अभ्रातृघ्नीम्' इति तृतीयामृचं जपेत् । दृष्ट्वैव चक्षुषी उपसंहरति । जपश्च सर्वत्र चातुःस्वर्येण, न तु करणमन्त्रादिवदेकश्रुत्या, 'एकश्रुतिदूरात्संबुद्धौ । यज्ञकर्मण्यजपन्यूङ्खसामसु' (पासू. १।२।३३,३४) इति वचनात् । अत्र च स्वयमिति विशेषणं वरयितॄणां प्रकृतानामयं जपो मा भूदिति । केचित्— स्वयं वधूमेव दृष्ट्वा जपेत्, न तु वरानिति । स्वयं दृष्ट्वेत्यादि च सर्वविवाहानामविकृतम् । तात.

**चतुर्थ्या समीक्षेत ॥**

(१) अवयवश ईक्षणं समीक्षणम् । 'अघोरचक्षुः' इत्येषा चतुर्थी । अनाकुला.

(२) 'अघोरचक्षुः' इत्यनया समीक्षेत । वध्वा दृष्टौ स्वदृष्टिं निपातयति, 'अघोरचक्षुरपतिघ्न्येधि' इति मन्त्रलिङ्गात् । केचित्— समीक्षेत अवयवशो निरीक्षे-

---

सकलभुवनचञ्चद्ध्वान्तविध्वंसदीप-
स्त्रिदशपतिदिशो यः स्वर्णताटङ्कपत्रम् ।
सकलभुवनलक्ष्मीदायको नायकोऽह्नां
विबुधनिखिलमूर्तिर्मङ्गलं वो ददातु ॥

यन्मङ्गलं महेन्द्रस्य प्राप्ते देवसमागमे ।
ऋषिभिः स्तूयमानस्य तत्ते भवतु मङ्गलम् ॥

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥' इति ।

अथ सावधानशब्दाः—

'वधूवरयोः शुभं भवतु सावधान । सुलग्नं सावधान । सुमुहूर्तः सावधान । अन्तःपटः सावधान । वरमालिका सावधान । यजमानः सावधान । यजमानपत्नी सावधान । आचार्यः सावधान । वधूवरौ सावधान । जयघण्टादुन्दुभिमङ्गलवाद्यकर्तारः सावधान । मङ्गलसूत्रबन्धनं सावधान । हस्तमेलापकः सावधान । रघुनाथचिन्तनं सावधान । लक्ष्मीनारायणचरणचिन्तनं सावधान । ब्रह्मसावित्रीचिन्तनं सावधान । उमामहेश्वरचिन्तनं सावधान । अतिसंनिधसमयः सावधान । कुलदेवतास्मरणं सावधान । ग्रामदेवतास्मरणं सावधान । गुरुचरणचिन्तनं सावधान । इष्टदेवताचरणचिन्तनं सावधान । वीस विश्वे लग्नं प्रवर्तते ।' इति ।

* कन्यादानप्रकरणे ऋष्यशृङ्गवचने संप्रव्याख्यानं तत्रत्या टिप्पणी च द्रष्टव्या ।

† इदमीक्षणं कन्यादानोत्तरभावीत्यनाकुलायां स्पष्टम् । आपस्तम्बसूत्रानुसारिसंस्काररत्नमालाख्यप्रयोगग्रन्थेऽपि सौत्रमिदं निरीक्षणं कन्यादानोत्तरमेवोक्तम्, तथापि कन्यादानात्पूर्वमपि अन्तःपटनिःसारणपूर्वकमाश्वलायनगृह्यपरिशिष्टोक्तप्रकारं निरीक्षणमाचारप्रामाण्यात् कर्तव्यतयाऽभिहितम् ।

(१) आपगृ. ४।१–५.

तेति । अत्र वरो वधूश्च दर्भेष्वासीनौ दर्भान् धारयमाणौ कृतप्राणायामौ संकल्पयेते— आवाभ्यां कर्माणि कर्तव्यानि, प्रजाश्चोत्पादयितव्या इति ।   ताद.

**अङ्गुष्ठेनोपमध्यमया चाङ्गुल्या दर्भं संगृह्योत्तरेण यजुषा तस्या भ्रुवोरन्तरं संमृज्य प्रतीचीनं निरस्येत् ॥**

( १ ) मध्यमासमीपे वर्तते इत्युपमध्यमा तयाऽङ्गुल्या अनामिकयेत्यर्थः । भ्रुवोरन्तरं मध्यम् उत्तरेण यजुषा ' इदमहम् ' इत्यनेन । संमार्जनमन्त्रोऽयं न निरसनमन्त्रः । प्रतीचीनं प्रत्यग्गतम् । उपर्युपरि शिरो निरस्येत् । तत उदकोपस्पर्शनम् । अङ्गुष्ठसाहचर्यादुपमध्यमयेति विशेषणादेव सिद्धे अङ्गुल्येति विशेष्यनिर्देशो विस्पष्टार्थम् । यजुषेति विशेषणमुत्तरेणेति दिग्वाचिताशङ्का मा भूदिति ।   अनाकुला.

( २ ) उपमध्यमा उपकनिष्ठिका, न तु प्रदेशिनी, तस्या विसंसिकेति व्यपदेशात् । उत्तरेण यजुषा ' इदमहं या त्वयि ' इत्यनेन । शेषं व्यक्तम् । दर्भं निरस्याप उपस्पृशेत् ।   ताद.

## पारस्करगृह्यसूत्रम्

समन्त्रकं परस्परसमीक्षणम्

[१] * **अथैनौ समीक्षयति— ' अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर । यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्यै ॥ ' इति ॥**

( १ ) समीक्षणक्रियां कारयति । कारिते चाध्येषणा परस्परं समीक्षेथामिति । कारयितृत्वं कन्यादातुः, संनिधानात् । मन्त्रस्तु वरस्यैव, मन्त्रलिङ्गात् ।

* कभा.

( २ ) मन्त्रार्थः— हे कन्ये, त्वम् अघोरचक्षुः सौम्यदृष्टिरपापदृष्टिर्वा एधि भव । तथा अपतिघ्नी अकार्यकरणेन पत्यर्थघातिनी, तथा मा भव । तथा पशुभ्यः पशुवदाश्रितेभ्यः शिवा हितैषिणी च भव, सुमनाः प्रसन्नचित्ता, सुवर्चाः सुप्रभावयुक्ता, वीरसूः सत्पुत्रजननी, देवकामा देवानग्न्यादीन् कामयते, स्योना सुखवती, नः अस्माकं शं सुखहेतुः द्विपदे मनुष्यवर्गाय, चतुष्पदे पशुवर्गाय शं सुखहेतुर्भव ।

हे कन्ये, ते त्वां सोमश्चन्द्रः ते तव प्रथम आद्यः पतिः विविदे जन्मदिने लब्धवान् । विद्‌लृ लाभे । ततः सार्धवर्षद्वयानन्तरं गन्धर्वः सूर्यो विविदे उत्तरः तद्वत् द्वितीयोऽयं पतिः । ततोऽग्निरपि तावता कालेन विविदे । अतोऽयं तव तृतीयः पतिः । यथाऽऽहुः— ' पूर्वं स्त्रियः स्युर्भुक्ताश्च सोमगन्धर्ववह्निभिः । ' इति । तथा ते तव तुरीयश्चतुर्थः मनुष्यजाः मानुषः अहमेवेत्यर्थः । किमिदानीं चतुर्णामपीयं पत्नी ? नेत्याह— सोमश्चन्द्रस्त्रिंशन्मासान्भुक्त्वा, गन्धर्वः सूर्यः, तस्मै अददत् ददौ । सोऽपि तावत्कालं भुक्त्वा अग्नयेऽददत् । स चाग्निर्मह्यमिमामदात् दत्तवान् । न केवलमिमाम्, किंतु पुत्रान् सुतान् रयिं धनं च । चकाराद्धर्मादि च, अदादिति संबन्धः । या सर्वलोकसाक्षिणी पूषा देवता सा इमां शिवतमां कल्याणगुणशीलां कृत्वा नः अस्मान् प्रति ऐरय ईरयतु । आटो दर्शनं विभक्तेरदर्शनं च छान्दसम् । अस्मास्वनुरक्तां करोत्वित्यर्थः । सा चास्मत्तः सुखं पुत्रांश्च कामयमाना ऊरू सक्थिनी जानुनोरूर्ध्वभागदण्डौ विहर विवृणोतु प्रसारयत्वित्यर्थः । मध्यमपुरुषश्छान्दसः । प्रयोजनमाह— यस्यां स्त्रीयोनौ उशन्तः सुखमिच्छन्तः शेपं शिश्नं प्रहराम प्रवेशयाम वयम्, यस्यां कन्यायाम्, उ एवार्थे, यस्यामेव बहवः कामाः

---

* समीक्षणमिदं कन्यादानोत्तरं विहितम् ।

( १ ) पागृ. १।४।१६ ; संग. १६६.

* जभा., हभा., विमा. कभावत् ।

धर्मपुत्ररतिसुखरूपाः सन्तु वा । किमर्थम् ? निविष्टयै अग्निहोत्राद्युपासनयाऽन्तःकरणशुद्धिद्वारा सायुज्यमुक्तये ।

¶ गभा.

## वैखानसगृह्यसूत्रम्

वधूवरकर्तृकं परस्परेक्षणं समन्त्रकम्

[१] 'प्र सुग्मन्ता' इति तामीक्षित्वा 'अभ्रातृघ्नीम्' इति तयेक्ष्यमाणः ॥

## यमः

तण्डुलराशिमानं दिङ्नियमश्च

[२] आरुह्य तण्डुलप्रस्थमीक्षेत् प्रत्यङ्मुखो वधूम् ॥

## लघ्वाश्वलायनः

अन्तःपटधारणम्, ईक्षणे दिङ्नियमः, गाथापठनम्, अक्षतारोपणं तत्र दिङ्नियमश्च

[३] प्राङ्मुखी कन्यका तिष्ठेद्वरः प्रत्यङ्मुखस्तथा ।
वस्त्रान्तरं तयोः कृत्वा मध्ये तु वरकन्ययोः ॥
परस्परमुखं पश्यन् मुहूर्ते चाक्षतान् क्षिपेत् ।
वरमूर्ध्नीति कन्याऽऽदौ कन्यामूर्ध्नि वरस्तथा ॥
गाथामिमां पठेयुस्ते ब्राह्मणा ऋक् च वा इदम् ।
क्षिपेयुस्तेऽक्षतान् विप्राः शिरसोरुभयोरपि ॥
तिष्ठेत् प्रत्यङ्मुखी कन्या प्राङ्मुखः स्याद्वरस्तथा ।
मन्त्रेणानृक्षराश्चैव भवेत् स्थानविपर्ययः ॥
*अक्षतारोपणं कुर्यात् पूर्ववच्चैव कन्यका ।
श्रियो मे कन्यका ब्रूयात् प्रजायै स्याद्वरस्तथा ॥

त्रिवारमेवं कृत्वा तु ...... ॥

## शाकलकारिकाः

अन्तःपटधारणम्, ईक्षणे दिङ्नियमः मतभेदेन मुहूर्तसंबन्धश्च, गाथामन्त्रपठनम्, अक्षतारोपणम्

[१] प्रत्यङ्मुखो वरस्तिष्ठेत् प्राङ्मुखी कन्यका तथा ।
वस्त्रान्तरं तयोः कृत्वा देशधर्मानुसारतः ॥
ज्योतिःशास्त्रविदुक्ते तु दानमिच्छन्ति केचन ।
अक्षतारोपणं केचिदन्योन्यमवलोकयेत् ॥
देशधर्मानुसारेण विवाहः कार्य एव हि ।
शिष्टाचारोऽपि तद्वत् स्यात्सूत्रकारवचो यथा ॥
ऋक् च वा इति वै गाथाः पठेयुर्ब्राह्मणा ऋचः ।
अक्षतान् कुङ्कुमोपेतान् क्षिपेयुः शिरसोस्तयोः ॥
प्राङ्मुखोऽथ वरस्तिष्ठेन्मन्त्रेणानृक्षरा इति ।
प्रत्यङ्मुखी तथा कन्या दीपाक्षतसमन्विता ॥
अक्षतारोपणं कुर्यादादावेव तु कन्यका ।
त्रिस्त्रिर्वरस्यैव मूर्ध्नि कन्यामूर्ध्नि तथा वरः ॥
वधूरञ्जलिनाऽऽदाय क्षीराज्यं च वराञ्जलिम् ।
उपस्पृश्याक्षतान् पूर्वं स्वयं तद्वच्च धारयेत् ॥
कन्या तारयत्वित्यादीन् कन्यादाता समुच्चरेत् ।
अञ्जलौ निनयेत्तोयं सपत्नीक उदङ्मुखः ॥
श्रियो मे काम इत्येष कन्यामन्त्रोऽक्षतांश्च तान् ।
आरोपयेद्वरोऽनेन प्रजायै काम इत्यथ ॥

## शौनककारिकाः

अन्तःपटधारणम्, दिङ्नियमः, अक्षतारोपणं मुहूर्तसंबन्धश्च, गा [था]-मन्त्रपाठः, आशीर्वाचनम्, लौकिकाचाराः

[२] संतिष्ठेत् प्राङ्मुखी कन्या तिष्ठेत् प्रत्यङ्मुखो वरः ।
मुहूर्ते शोभने काले त्वन्तर्धायाम्बरं तयोः ॥

---

¶ शेषं कभावत् ।

* इदमक्षतारोपणं कन्यादानपूर्वभावि । कन्यादानोत्तरभावि तु यथास्थानमग्रे संग्रहीष्यते । एवं शाकलकारिकायामपि ।

(१) वैगृ. ३।२.

(२) प्रपा. ३५५; संप्र. ८३०; विपा. ४१ (भागः २); संग. २५७ मनुः; संर. ५४५ प्रत्यङ्मुखो (प्रत्यङ्मुखां).

(३) लघ्वाश्वस्मृ. १५।२०–२५.

(१) शाका. १२१–१२९ पृ. १३–१४.

(२) धप्र. ४७; संग. २५७ धर्मप्रवृत्तौ.

स्वक्षतान् सुमुहूर्ते तु क्षिपेतां शिरसोर्मिथः ।
क्षिपेत् कन्याऽक्षतान् पूर्वं पश्चाच्चैव क्षिपेद्वरः ॥
[1]ऋक् च वेत्यादिभिर्मन्त्रैः क्षिपेयुरक्षतान् द्विजाः ।
आशिषो वाचयित्वाऽथ यथाऽऽचारं तथा चरेत् ॥

## कुमारिलकारिकाः

परस्परेक्षणं सगुडजीरकावकिरणं च

[2]स्नातालंकृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः ।
ईक्षेत तण्डुलस्थाया वरस्तस्य मुखं च सा ॥
[3]मुहूर्ते शोभने सम्यक् क्षिपेतां मुखयोर्मिथः ।
सगुडाञ्जीरकान् कन्यां वरयेदथ तां वरः ॥

(१) धप्र. ४७.

(२) कुका. १।२०।१ ; प्रपा. ३५२ ; संप्र. ८२५ आश्वलायनकारिका ; विपा. ४१ ( भागः २ ) आश्वलायनकारिका ; संग. २५७ ईक्षेत ( ईक्षते ) आश्वलायनकारिका.

(३) कुका. १।२०।२ शेषः स्थलादिनिर्देशः कन्यावरणप्रकरणे ( संका. पृ. १८९६ ) द्रष्टव्यः ।

( १ ) एवं कृतमधुपर्काय वराय दातव्यकन्याविवाहविधिरभिधीयते । तत्र कारिका – स्नातेति ।

प्रपा. ३५२

( २ ) अथ पूर्वराशौ प्रत्यङ्मुखं वरं पश्चिमराशौ च प्राङ्मुखीं कन्यां तण्डुलगुडजीरकयुताञ्जली उभाववस्थाप्य द्विजाः ' स्वस्ति न इन्द्राग्नी ' इति सूक्तं पठेयुः । पुरन्ध्र्यो मङ्गलगीतिं कुर्युः । एतदुक्तं विधानपारिजाते आश्वलायनेन– स्नातालङ्कृतेति । संग. २५७

## रेणुकारिकाः

परस्परसमीक्षणम्

$ [1]संनिधानात्पिता तस्या अध्येषयति दम्पती ।
परस्परं समीक्षेथामिति वेदीसमीपतः ॥
अघोरचक्षुरित्याद्यैरन्योन्यं ते समीक्षतः ।
वरस्य मन्त्रपाठोऽयं निविष्टया इत्यवसानतः ॥

$ इदं दानोत्तरम् ।

( १ ) रेका. १९९–२०१ पृ. ६२.

# *कन्यादानम्

## बौधायनगृह्यसूत्रम्

देवविवाहे वरणरहितं सदक्षिणकन्यादानम्, प्रतिग्रहमन्त्राः

§ [1]अथ यदि दक्षिणाभिः सह दत्ता स्यान्नात्र वरान् प्रहिणुयात् ॥

तां प्रतिगृह्णीयात् 'प्रजापतिः स्त्रियां यशः' इत्येताभिः षड्भिरनुच्छन्दसम् ॥

अत्र प्रतिग्रहे मन्त्रविशेष उक्तो बौधायनेन— अथेति। दक्षिणाभिः सह दत्तेति वचनमपि कन्याप्रतिपादनस्य यागदक्षिणात्वं नेत्यत्र लिङ्गम्। अयं च प्रतिग्रहमन्त्रविशेषोऽस्माकमप्यविरुद्धः। न च 'तान्त्रीणां दक्षिणानां दर्शयति' इति सूत्रविरोध इति वाच्यम्, एतस्य प्रतिग्रहमन्त्रविशेषस्य दक्षिणाप्रतिग्रहप्रकरणे सूत्रकारेणापठितस्य 'तान्त्रीणां दक्षिणानां दर्शयति' इतिसूत्रविषयकत्वासंभवेन विरोधाभावात्। 'दीक्षितो न ददाति' इति निषेधो यज्ञतन्त्रे, कन्याप्रतिपादने न प्रवर्तते, विधानबलात्। प्रतिपादनं तु कृत्स्नेन कन्यादानोक्तविधिना कार्यम्। कन्याप्रतिपादनाङ्गभूतहिरण्यादिदानस्य तु ददातिविहितत्वान्निषेधोऽस्त्येव। पुण्याहवाचनादिकं कन्यावरणं वाग्दानं मधुपर्कश्च निवर्तन्ते। एतेषां षण्णां मन्त्राणां विश्वे देवा ऋषयः, प्रजापत्यादयो देवताः, आद्याः पञ्चानुष्टुभः, 'आपस्तत्सत्यमाभरन्' इति गायत्री, कन्याप्रतिग्रहे विनियोगः, इत्यृष्यादि द्रष्टव्यम्। संर. ४७७

ईक्षणात्प्राक्कन्यादानम्

[1]वधूर्ज्ञातिभिरतिथिवदर्चितः स्नातामहतवाससां गन्धानुलिप्तां स्रग्विणीं भुक्तवतीमिषुहस्तां दत्तां वधूं समीक्षते ॥

कन्यादानकाले कन्यायाः पतनेऽश्रुमोचने च प्रायश्चित्तम्

[2]अथ यदि कन्योपसाद्यमाना वोह्यमाना वा पतेत्तामुत्थापयेयुः— 'उदस्थाद्देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात्। इन्द्राय कृण्वती भागं मित्राय वरुणाय च ॥' इति ॥

[3]अथ यदि कन्योपसाद्यमाना वोह्यमाना वाऽश्रु कुर्यात्तामनुमन्त्रयते— 'जीवां रुदन्ति

---

* सत्याषाढसूत्रे कन्यादानं नास्ति। तत्र मातृदत्ताचार्य एवमाह— "श्रुतौ विवाहं स्तौति— 'यां कामयेत दुहितरं प्रिया स्यादिति (तां निष्ट्यायां दद्यात्)' इत्यादिना। षड् विवाहा धर्मेषु व्याख्यास्यन्ते। अष्टावेकेषाम्। तेषु ब्राह्मे उदकपूर्वकं दानमेकेषामुक्तम्। तत्र नास्ति प्रतिग्रहणमन्त्रः। दैवे दक्षिणाभिः सह दत्तायां 'मनवे तल्पम्' इति प्रतिग्रहः उक्तः। बौधायनेन तु 'अथ यदि दक्षिणाभिः सह दत्ता स्यात् तां प्रतिगृह्णीयात् प्रजापतिः स्त्रियामिति षड्भिरनुच्छन्दसम्' इत्युक्तम्। तत्र 'असौ मे कामः समृध्यताम्' इत्यत्र 'प्रजा मे कामः' इति स्यात्। केचित् (महा?)-ब्राह्मेऽपि एतैर्मन्त्रैः प्रतिगृह्णन्ति, तस्य प्रमाणं नास्ति। इतरेषु विवाहेषु नास्ति दानम्। ब्राह्मे चास्माकं नास्ति। 'बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजासहत्वकर्मभ्यः प्रतिपादयेत्' इति वचनात् 'दद्यात्' इति वचनं गौणं तत्र। तस्मात् 'धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयम्' इत्युक्त्वा प्रतिपादयितव्या। सोऽपि तथेत्युक्त्वा प्रतिगृह्णाति। ततो विवाहः।' (मातृवृ. १९।६।१)।

§ सूत्रे इमे दैवविवाहविषये।

(१) बौगृ. १।१।१६, १७; संर. ४७७ (नात्र वरान् प्रहिणुयात्०) (यशः०) इत्येताभिः (इति).

(१) बौगृ. १।१।२४; प्रपा. ३४९ वाससां (वाससं) दत्तां (प्रदत्तां) समीक्षते (समीक्षेत); संप्र. ८२० वाससां (वाससं); विपा. ३७ (भागः २) वधू (बन्धु) (दत्तां०) शेषं प्रपावत्; संग. २२५ वधू (बन्धु) वाससां (वाससं) (दत्तां०).

(२) बौगृ. ४।१।९; संर ५०० पयेयुः (पयेत्).

(३) बौगृ. ४।१।११.

विमयन्ते अध्वरे दीर्घामनुप्रसितिं दीधियुर्नरः। वामं पितृभ्यो य इदं समे रिरेमयः पतिभ्यो जनयः परिष्वजे ॥' इति ॥

उपसाद्यमाना दात्रा दीयमाना। संर. ५००

## आश्वलायनगृह्यसूत्रम्

ब्राह्मदैवविवाहयोः कन्यादानं तत्फलं च

[1]*अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः। तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः। ऋत्विजे वितते कर्मणि दद्यादलङ्कृत्य स दैवो दशावरान् दश परान् पुनात्युभयतः॥

## आश्वलायनगृह्यपरिशिष्टम्

कन्यादानप्रयोगः

[2]चतुष्पदे सोत्तरच्छदे हरितदर्भास्तीर्णे भद्रपीठे प्राङ्मुख उपविशेत्। तस्य पुरस्तात् प्रत्यङ्मुखीं भद्रपीठासीनां सुस्नातामलङ्कृतामहतवाससं स्रग्विणीं कन्यां पुरस्कृत्य दाता सामात्य उपविशेत्। वरं विधिवदभ्यर्चयेत्। अथ दक्षिणतः पुरोधा उदङ्मुख उपविश्य मध्ये प्रागग्रोदगग्रान् दर्भानास्तीर्य तैजसमपां पूर्णं कलशं निधाय व्रीहियवानोप्य गन्धादिभिरलङ्कृत्य दूर्वापल्लवैर्मुखमवस्तीर्याब्लिङ्गाभिर्ऋग्भिरभिमन्त्र्य ताभिरद्भिः प्रयोजयेत्। अथ दाता पुण्याहादीनि वाचयित्वा 'शिवा आपः सन्तु, सौमनस्यमस्तु, अक्षतं चारिष्टं चास्तु, दीर्घमायुरस्तु, शान्तिः पुष्टिस्तुष्टिश्चास्तु,

---

* व्याख्यानं 'विवाहप्रकाराः' इत्यस्मिन् प्रकरणे (संक्रा. पृ. ६६८, ६७५, ७१६) द्रष्टव्यम्।

(१) आगृ. १।६।१ शेषः स्थलादिनिर्देशः 'विवाहप्रकाराः' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

(२) आगृप. १।२२ प्राङ्मुख उपविशेत् (प्राङ्मुख उपवेश्य) अथ वरः (अथ शिरसि) सत्यं समृद्ध (सत्यसमृद्ध); प्रपा. ३५४ चतुष्पदे (चतुष्पादे) प्रत्यङ्मुखीं (प्राङ्मुखीं) अभ्यर्चयेत् (अभ्यर्हयेत्) कन्यां प्रतिगृह्य (कन्यां प्रगृह्य) अथ वरः (अथ शिरसि) सत्यं समृद्ध (सत्य); संत. ८९० (शिवदत्तप्रपौत्री ब्रह्मदत्तपौत्री विष्णुदत्तपुत्री यज्ञदत्ता कन्या शिवमित्रप्रपौत्राय राममित्रपौत्राय विष्णुमित्रपुत्राय रुद्रमित्राय तुभ्यं संप्रदत्ता) एतावदेव; उत. १४३ (शिवदत्तप्रपौत्री विष्णुदत्तपौत्री हरिदत्तपुत्री यज्ञदत्ता कन्या शिवमित्रप्रपौत्राय विष्णुमित्रपौत्राय राममित्रपुत्राय रुद्रमित्राय तुभ्यं संप्रदत्ता) एतावदेव; संप्र. ८२७-८२८ प्रत्यङ्मुखीं (प्राङ्मुखीं) पीठासीनां (पीठासनां) (अलङ्कृताम्०) (उदङ्मुखः०) तैजसमपां पूर्णं क (तैजसमयं पूर्णंक) कन्यां प्रतिगृह्य (कन्यां प्रगृह्य) गोत्रोत्पन्नाममुष्य (गोत्रोऽमुष्य) श्रुतशीलनाम्ने (सुशीलनाम्ने) हिरण्यमुपधाय (हिरण्यमवधाय) दातृवरौ प्रति (दातृवरौ पश्यन्) सत्यं समृद्धमस्तु (सत्यमृद्धिमदस्तु); श्राप्र. ३१२ (वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं च वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय) एतावदेव; विपा. ४१-४२ (भागः २) भद्रपीठे + (वरः) अभ्यर्चयेत् + (च) यवानोप्य + (तं) नक्षत्रसंपत् + (च) भार्यादिसमेतः + (संकल्पवाक्यमुच्चार्य) मनसा + (च) अथ वरः + (शिरसि) प्रतिगृह्णातु (परिगृह्णातु) तिस्रः + (ऋचो) सत्यं समृद्ध (सत्यसमृद्ध); संकौ. २११ (चतुष्पदे ...... उपविशेत् ०) दभ्यर्चयेत् (दभिषेचयेत्) तैजसमपां पूर्णं क (तैजसमयं पूर्णंक) पुण्याहादीनि (पुण्याहादीन्) प्रतिगृह्य (संप्रगृह्य) वत्सगोत्रोत्पन्ना (वत्सगोत्रोद्भवा) सुशीलानाम्नीमिमां कन्यां वसिष्ठ (सुशीलां लक्ष्मीनाम्नीं कन्यां वासिष्ठ) धारामासिञ्चेत् (धारामासिञ्चन्) दक्षिणेंऽसे (दक्षिणांसे) त्रिः प्रयुज्य (त्रिः प्रत्युक्ते) सत्यं समृद्धमस्तु (सत्यं समृद्धम्); कुभ. ११३७ (दक्षिणेंऽसे कन्यामभिमृश्य क इदं कस्मा अदात् धर्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णामीति ब्रूयात्। एवं त्रिः प्रयुज्य 'ऋतस्य हि शुरुधः' इति तिस्रो जपेत्) एतावदेव.

**तिथिकरणमुहूर्तनक्षत्रसंपदस्तु' इत्युक्त्वा भार्यादिसमेतः कन्यां प्रतिगृह्य 'वत्सगोत्रोत्पन्नाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय श्रुतशीलनाम्नेऽस्मै वराय संप्रददे, कन्यां प्रतिगृह्णातु भवान्' इति ब्रुवन् वरस्य पाणौ हिरण्यमुपधाय कलशोदकधारामासिञ्चेत्। मनसा 'प्रजापतिः प्रीयताम्' इति ब्रूयात्। अथ वरः पुण्याहाशिषो वाचयित्वा दक्षिणेंऽसे कन्यामभिमृश्य 'क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णातु' इति जपित्वा प्रजापतिमनुस्मृत्य 'धर्मप्रजासिद्ध्यर्थं कन्यां प्रतिगृह्णामि' इति ब्रूयात्। एवं त्रिः प्रयुज्य पुरोधा दातृवरौ प्रति 'ऋतस्य हि शुरुधः सन्ति पूर्वीः' इति तिस्रो जपित्वा 'एतद्वः सत्यं समृद्धमस्तु' इति ब्रूयात्॥**

संप्रदत्ता इत्यत्र दृष्टार्थत्वात् पुंवचसां क्तप्रत्ययार्थाविवक्षितत्वेन संप्रददे इत्येव प्रयोगः। * संत. ८९०

कन्यादाने दिङ्नियमः

[1]**'कन्यां वरयमाणानामेष धर्मो विधीयते।**
**प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः॥**

वरयन्ति गोत्रप्रवराभिधानपूर्वकं ददति, प्रतिगृह्णन्तीति श्रवणात्। * संत. ८९०

कन्यावरयोः पितृपक्षे मातृपक्षे च पुरुषत्रयकीर्तनं दात्रा प्रतिग्रहीत्रा च, दात्रैव वा मतभेदेन

[1]**'उभयस्यापि पक्षस्य पैतापुत्रमनुक्रमेत्।**
**कन्यां ददाति यस्तस्य पैतापुत्रं त्रिपूरुषम्॥**

उभयस्यापि पक्षस्य मातृपक्षस्य पितृपक्षस्य च। अनुक्रमेत् तृतीयपुरुषादारभ्य क्रमेण कीर्तयेत्। कन्यां ददतीति। न केवलं यः कन्याप्रार्थयिता स उभयपक्षस्य पितापुत्रीमनुक्रमेत्, किंतु येऽपि कन्यां ददति कन्यादातारस्तेऽपि तथैव उभयपक्षस्य पितापुत्रीमनुक्रमेरन्नित्यर्थः। गृक. ६९

(२) उभयस्यापि पक्षस्य तृतीयपुरुषादारभ्य पैतापुत्रीमनुक्रमात् कीर्तयेत्। अस्यैव विवरणं कन्यां ददातीति बोद्धव्यम्। तेन कन्यादात्रैव कुलद्वयोच्चारणं पुरुषत्रयपर्यन्तं कर्तव्यमिति लक्ष्यते। लक्ष्मीधरस्तु— 'मातृपक्षस्य पितृपक्षस्य च अनुक्रमेत् तृतीयपुरुषादारभ्य पैतापुत्रीमनुक्रमेण कीर्तयेत्। अस्यैव विवरणं कन्यां ददातीति। न केवलं यः कन्याप्रार्थयिता स तूभयपक्षस्य (पैता)पुत्रीमनुक्रमेत्, किंतु योऽपि कन्यां ददाति कन्यादाता सोऽपि उभयपक्षस्य पैतापुत्रीमनुक्रमेत्' इत्याह। तच्चिन्त्यम्। गृर. ५८

(३) उभयस्य मातृपितृपक्षयोरिति कल्पतरौ। निप. २८५

## मानवगृह्यसूत्रम्

आसनोपकल्पनम्, दिङ्नियमः, प्रयोगः

[2]**'पश्चादग्नेश्चत्वार्यासनान्युपकल्पयीत॥**

---

* उत. संतवत्।

(१) गृक. ६९ बह्वृचगृह्यपरिशिष्टम्; गृर. ५८ गृह्यपरिशिष्टम्; निप. २८५ (=) उत.; संत. ८९० गृह्यपरिशिष्टम्; उत. १४३ गृह्यपरिशिष्टम्; सिन्धु. ११३६ गृह्यपरिशिष्टम्.

(१) गृक. ६९ (उभयस्यापि पक्षस्य पितापुत्रीमनुक्रमेत्। कन्यां ददति ये तत्र पितापुत्रीं तथैव च॥) 'पितापुत्रीम्' 'कन्यां ददाति यः' इति गृहस्थरत्नाकरानूदित— कल्पतरुपाठः, बह्वृचगृह्यपरिशिष्टम्; गृर. ५८ पैतापुत्रं (पैतापुत्रीं) वचनं त्रुटितम्; निप. २८५ (=).

(२) मागृ. १।८।१-११.

इदानीं ब्राह्मधर्ममाह— पश्चादग्नेरिति । वृषीकादीनां च पलाशशृङ्गगोमयादिधर्मे उपकल्प्यते । वक्ष्यमाणे उपवेशने कस्य पुनरग्नेः पश्चात् ? कन्याया जातकर्माद्यभावादग्निर्नास्ति । नापि सर्वा काचित् प्रथमगर्भा कन्या, येन सीमन्तारणी स्याताम् । एवं तर्ह्यरणिनिर्मथितेऽग्नौ भगार्यमादियागः स्यात्, तस्याग्नेः पश्चात् । स हि लौकिकोऽप्यसंकीर्णत्वान्मध्यतरः । तस्माद्वेद्यां विवाहहोमार्थे स्थापयिष्यमाणस्याग्नेः पश्चादासनकल्पनमिति निष्कर्षः । अष्टाभा.

**तेषूपविशन्ति पुरस्तात् प्रत्यङ्मुखो दाता पश्चात् प्राङ्मुखः प्रतिग्रहीता दातुरुत्तरतः प्रत्यङ्मुखी कन्या दक्षिणत उदङ्मुखो मन्त्रकारः ॥**

तेषूपविशन्ति, मन्त्रकारोऽयं प्राप्तः कन्यावरयितुर्दूर एव स इत्यर्थः । प्रेष्यते स उच्यते । अन्ये तु दधिहोमीत्याचक्षते । अष्टाभा.

**तेषां मध्ये प्राक्तूलान् दर्भानास्तीर्य कांस्यमक्षतोदकेन पूरयित्वा अविधवाऽस्मै प्रयच्छति ॥**

तेषाम् उपविष्टानां मध्ये स्तरणं प्राक्तूलं कुर्यात् । दधिहोमी चेदुपविष्ट एव मध्यस्तरणं कुर्यात् । आस्तीर्य कांस्यमक्षतोदकेन पूरयित्वा अविधवाऽस्मै प्रयच्छति । सैव पात्रं पूरयत्यक्षतैः सहितेनोदकेन या प्रयच्छति, क्त्वाप्रत्ययात् । अस्मै दात्रे प्रयच्छति, प्राधान्यात् । पूरयित्वा मन्त्रकारोऽयं वा, आनन्तर्यात् । अष्टाभा.

**तत्र हिरण्यम् ॥**

**अष्टौ मङ्गल्यान्यावेदयति ॥**

तत्र हिरण्यमष्टौ मङ्गलान्यावेदयति आ( ? अभि )दध्यात् । मङ्गलाय हितानि मङ्गल्यान्यावेदयति । मङ्गल्यान्युक्त्वा । कः ? दाता प्रतिग्रहीता च, कुतः ? ददातिप्रतिगृह्णात्योः समानकर्तृकत्वेनावगतत्वात् । यद्वा पिता भ्राता वा, यत्संबन्धिनी तां( ? सा ) दद्यादित्यनेनैकवाक्यत्वात् । अष्टाभा.

**मङ्गल्यान्युक्त्वा 'ददामि, प्रतिगृह्णामि' इति त्रिर्ब्रह्मदेया, पिता भ्राता वा दद्यात् ॥**

त्रिर्ब्रह्मदेयेति वचनात् सकृत् शुल्कदेयेति गम्यते । अन्यथा ब्राह्म( ? ब्रह्म )विशेषणमपार्थकं स्यात् । पिता भ्राता वा । पितुरधिकारः । वाग्रहणं अन्यमातामहादीनामुपलक्षणार्थम् । तथा च स्मृत्यन्तरम्— 'पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥' ( यास्मृ. १।६३ ) । अन्यस्त्वाह— कथं स्मृत्यन्तरेणैकवाक्यता नाम ? एवमियम्, स्वयं स्मृतिकारेण नोक्तं चाप्रतिषिद्धं तत् स्मृत्यन्तरात् ग्राह्यम्, अविरोधात् । यस्मान्नहि सर्वं सर्वत्राऽऽम्नातम् । अत एव सर्वस्मृतिप्रत्ययेनैकं कर्म इत्युक्तं तद्विद्भिः । अष्टाभा.

**सहिरण्यानञ्जलीनावपति 'धनाय त्वा' इति दाता, 'पुत्रेभ्यस्त्वा' इति प्रतिग्रहीता तस्मै प्रत्यावपति ॥**

**चतुर्व्यतिहृत्य ददाति ॥**

अथ शुल्कदेयाधर्ममाह— सहिरण्यम( ? ण्यान )ञ्जलीनावपति 'धनाय त्वा' इति दाता, 'पुत्रेभ्यस्त्वा' इति प्रतिग्रहीता । तदेकमेव हिरण्यमष्टास्वप्यञ्जलिषु । व्यतिहृत्येति वचनात् स एवाञ्जलिरुच्यते । तथाऽन्योन्यस्याञ्जलिमावपेत् । अत एव चतुर्व्यतिहृत्य ददातीत्युक्तम् । परस्परयोरपि ददातीत्यर्थः । दानं तु 'ददामि प्रतिगृह्णामि' इति पूर्वोक्तमेव सकृत् । तेन वाचनान्ते दद्यादित्यर्थः । एवं च प्रतिग्रहणमुभयोरपि । अष्टाभा.

**सावित्रेण कन्यां प्रतिगृह्य 'प्रजापतये' इति च 'क इदं कस्मा अदात्' इति सर्वत्रानुषजति 'कामैतत्ते' इत्यन्तम् ॥**

सावित्रेण प्रतिगृह्णाति 'देवस्य त्वा' इत्यारभ्य 'प्रजापतये त्वा' इति । व्रीहियवं हस्तिनं पुरुषमित्युक्तत्वान्न वाच्यं शुल्कदानेऽपि यथा स्यादिति पुनर्वचनं साकाङ्क्षत्वार्थं च तयोः प्रतिग्राहितया किल न स्यादिति मन्दधीराशङ्केत कथमसौ वाचनिके प्रतिग्रहे तद्गुणमशङ्कमानः कः सुधीः स्यात् । एवं च नानुषङ्गनिवृत्त्यर्थं सावित्रग्रहणम् । अष्टाभा.

**'समाना वा आकूतानि' इति सह जपन्त्याऽन्तादनुवाकस्य ॥**

समाना वा आकूतानीति सह जपन्ति । आऽन्तादनुवाकः स्यादिति नोक्तं नापि तस्य ग्रहणमस्ति सह जपन्तीति । अन्यशाखा चेदधीत्य जपेत् । अष्टाभा.

**'खे रथस्य खेऽनसः खे युगस्य शतक्रतो । अपालामिन्द्रस्त्रिः पूर्त्यकृणोत् सूर्यत्वचम्॥' इति तेनोदकांस्येन कन्यामभिषिञ्चेत् ॥**

तेनैवोदकांस्येनाभिषिञ्चति । उदकांस्येनेति पूर्वपदार्थप्राधान्यम्, तत्पुरुषेऽपि वाक्यात् साक्षादुदकस्यैव साधकतमत्वात्, कांस्यस्य तु तदधिकरणतया विशेषणत्वम् । यद्येवं कांस्योद(के)नेति पूर्वपदार्थप्राधान्यं तत्पुरुषेऽपि स्यात् अभिषेचनं तन्मा भूदिति उदकांस्येनेत्युक्तम् । 'खे रथस्य' इत्येतयाऽभिषेचनम् । अष्टाभा.

## काठकगृह्यसूत्रम्

ब्रह्मदेयाया दाने दिङ्नियमः आचार्यकर्तृकं दानप्रतिग्रहवाचनं च

**'अथ ब्रह्मदेयायाः प्रदानविधिं वक्ष्यामः ॥**

(१) ब्राह्मेण विधिना या दीयते सा ब्राह्मदेया । तस्याः प्रकृष्टे दाने विधिम् इतिकर्तव्यतां वक्ष्यामः । अथेत्यधिकारार्थः । ब्राह्मो दैव आर्षः प्राजापत्य आसुरो गान्धर्वो राक्षसः पैशाच इत्यष्टौ विवाहाः । तत्र ब्राह्मासुरव्यतिरेकिणां षण्णां विधानं सुप्रथितं नेह वचनमर्हति । तेन ब्राह्मासुरयोरेवेतिकर्तव्यतोक्ता । तथाहि— प्रसह्यापहारात् राक्षसो विवाहः, तत्र किं प्रकाराभिधानेन ? न किंचिदित्यर्थः । एवमसंविज्ञातोपगमात् पैशाचोऽपि प्रकारवचनानर्होऽतिपापत्वात् । स्वयमिच्छन्त्या सहेच्छावतः संयोगो गान्धर्वः, तत्राप्यसाधारणेतिकर्तव्यता । सह धर्मश्चर्यताम्, सहापत्यमुत्पाद्यताम्, धर्मे चार्थे च कामे च न व्यभिचरितव्यमिति प्राजापत्यविधिः प्रथितः । अलङ्कृत्य कन्याऽन्तर्वेदि ऋत्विजे प्रदीयते इति दैवो विवाह उक्तः स्मृतिकारैः । 'गोमिथुनं कन्यावते दद्यात्' इत्यार्षस्य विधानम् । देव.

(२) अथशब्दो मङ्गलार्थः । ब्राह्मेण विवाहेन दीयते या सा ब्रह्मदेया । ब्रह्मशब्दो विवाहोपलक्षणार्थः । दैवस्याप्ययमेव विधिः । तत्प्रदानम्( ? नविधिम्) इतिकर्तव्यतां वक्ष्यामः । आवि.

**शुद्धपक्षस्य पुण्याहे पर्वणि वोदगग्रान् दर्भानास्तीर्य तेषूपविशतः, प्राङ्मुखः प्रतिग्रहीता सामात्यः प्रत्यङ्मुखः प्रदाता ॥**

(१) शुक्लपक्षस्य संबन्धिनि प्रशस्ते ज्योतिःशास्त्रविशुद्धे दिवसे पर्वणि वा पौर्णमासीरूपे, विष्टरविशेषे पवित्रार्थमुत्तरदिगग्रान् दर्भानास्तीर्य, तेषु तयोर्दातृप्रतिग्रहीत्रोरुपविशेत् प्राङ्मुखो भूत्वा । कः ? प्रतिग्रहीता । कीदृशः ? सामात्यः परिजनसहितः । प्रदाता पुनः प्रत्यङ्मुख उपविशेत्, तथैव सामात्यो दर्भानास्तीर्योदगग्रान् । देव.

(२) शुद्धपक्षस्य आपूर्यमाणपक्षस्य पुण्याहे पुण्येऽहनि शुद्धतिथिनक्षत्रग्रहकरणयोगयुक्ते विष्टिव्यतिपातगण्डान्तदुर्योगग्रहोपतापविवर्जिते ज्योतिःशास्त्रप्रसिद्धे, अथवा पर्वणि दर्शपूर्णमासयोः कन्यां दद्यात् प्रतिगृह्णीयाच्च । कथम् ? उदगग्रान् दर्भानास्तीर्य तेषु दर्भेषूपविशति । यतः प्राची दिक् ततो मुखमस्येति प्राङ्मुखः । कोऽसौ ? प्रतिग्रहीता । कन्यायाः पितृव्यमातुलादिभिरमात्यैः सह वर्तते यः स सामात्यः । तेषु दर्भेषु प्रदातोपविशति । सामात्य इत्युभयत्रापि संबध्यते । आवि.

**मध्ये प्रागग्रोदगग्रान् दर्भानास्तीर्य तेषूदकं संनिधाय व्रीहियवानोप्य दक्षिणत उदङ्ङासीन ऋत्विगुपयमनं कारयेत् ॥**

(१) तयोः दातृप्रतिग्रहीत्रोः दक्षिणदेशे उत्तराभिमुख उपविष्टः सन् ऋत्विग्विशेषः आचार्यः तयोः उपयमनं दातृप्रतिग्रहीतृसंबन्धं कारयेत् । किं कृत्वा ? दातृप्रतिग्रहीत्रोर्मध्ये प्रागग्रानुदगग्रांश्च दर्भानास्तीर्य, तेषु च दर्भेषु कांस्यपात्र्यामुदकं संनिधाय, तत्रोदकमध्ये

(१) कागृ. १५।१-५.

व्रीहियवस्याऽऽवपनं कृत्वा । अथ 'उदकं संनिधाय' इति सामान्यवचनात् कंसस्य कुतो लाभः? 'कंसे हिरण्यं समुप्य' (१६।५) इति दर्शनात् । देव.

(२) अत्र दातृप्रतिग्रहीत्रोः सहृद्बन्धुभृत्यैः सहोदगग्रेषु दर्भेषूपविष्टयोः ऋत्विक् मध्ये यथाचारं शालिचूर्णैर्मण्डलं कृत्वा स्वस्त्ययनं च कृत्वा तत्र प्रागग्रान् दर्भान् प्रथममास्तृणाति, तेषूपर्युदगग्रान् । तत्रोदकपूर्णं कंसं परिवर्तुलं मङ्गल्यपात्रं व्रीहियवगर्भं निदधाति । तत्र यथाचारं विवाहोद्वाहदेवता अभ्यर्च्य दक्षिणत उदङ्मुख उपयमनं वक्ष्यमाणविधिना करोति । ब्राह्म.

(३) मध्ये दातृप्रतिग्रहीत्रोः प्रागग्रानुदगग्रान् दर्भानास्तीर्य । प्रथमं प्रागग्राः । तेषु दर्भेषूदकपूर्णं कंसं निधाय, 'कंसे हिरण्यं समोप्य' इति दर्शनात् । उदकं वा संनिधायेति । तत्रोदके व्रीहियवान् प्रक्षिप्य ततो दक्षिणत उदङ्मुख उपविष्टः । कोऽसौ? ऋत्विक् । उपयमनं कुर्यात् । आवि.

**समेतेष्वाह 'ददानि' इति 'प्रतिगृह्णामि' इति त्रिरावेदयते ॥**

(१) समेतेषु संघटितेषु दातृप्रतिग्रहीतृबन्धुषु सत्सु ऋत्विग्ब्रूयात्, दातुस्तावदिदं ब्रूयात् 'कन्याऽस्मै प्रदीयताम्' इति, प्रतिग्रहीतुः 'कन्याऽस्मात्प्रतिगृह्यताम्' इति । ततो 'ददानि ते, ददानि ते, ददानि ते इति त्रिरुचारय' इति दातारं बोधयेत् । दाता च तथैव कुर्यात् । एवं 'प्रतिगृह्णामि' इत्यपि ऋत्विजाऽऽवेदितः प्रतिग्रहीता ब्रूयात् । 'त्रिः सत्या हि देवाः' इति श्रुतिः, 'त्रिरभिहितं न व्यभिचारि भवति, सकृदुक्तं व्यभिचारो भवति' इति त्रिरुच्चारणमिष्टम् । अत एव समेतेष्वाहेत्युक्तम् । बहुजनसंनिधौ दत्तां प्रतिगृहीतां च कश्चित् कदाचित् नापहर्तुं त्यक्तुं वा शक्ष्यतीति । देव.

(२) 'कन्यां ददात्वस्मै भवान्' इति दातारं प्रचोदयेत् । 'कन्यां प्रतिगृह्णात्वस्मात् भवान्' इति वरम् । एवं त्रिवारम् । उदकपूर्वं दत्तायां कन्यायां प्रणवोच्चारणपूर्वं 'भगवन् कन्यां प्रतिगृह्णामि' इति त्रिवारम् । नात्र सावित्रः प्रतिग्रहमन्त्रः, प्रत्याम्नानात् । ब्राह्म.

(३) समेतेषु संगतेषु ज्ञातिष्वाह । किम्? 'कन्यां ददात्वस्मै भवान्' इति प्रदातारं चोदयेत् । 'कन्यां प्रतिगृह्णात्वस्मात् भवान्' इति वरम् । ततो 'ददानि ते, प्रतिगृह्णामि' इति त्रीन् वारानावेदयते उच्चैर्भाषयते दातृप्रतिग्रहीतारौ । 'कन्यां ददानि ते' इति दातारं जल्पयते । 'कन्यां प्रतिगृह्णामि' इति वरम् । एवं त्रिरावेदनमुच्चैः सुव्यक्तं यथा भवति निबन्धनमेतदुपयमनमृत्विक् कारयेद्द्वयेनापि । आवि.

**'एतद्वः सत्यम्' इत्युक्त्वा 'समाना वः, सं वो मनांसि' इत्यृत्विगुभौ समीक्षमाणो जपति ॥**

(१) एतत् दानप्रतिग्रहकर्म युष्माकं सत्यम् अव्यभिचरितम् अस्त्विति लौकिकोक्त्या ऋत्विक् 'समानाः' इत्यादि ऋग्द्वयं जपति, उभौ दातृप्रतिग्रहीतारौ वीक्षमाणः ।

'समाना व आकूतानि समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ॥ सं वो मनांसि सं व्रता समु चित्तान्याऽकरम् । अमी ये विव्रताः स्थन तान्न सं नमयामसि ॥'

अनुष्टुभौ । हे दातृप्रतिग्रहीतारौ, वः युष्माकं संबन्धीनि आकूतानि अभिप्रायाः समानाः तुल्यानि एकरूपाणि $ असति सन्तु, कस्यचिदपि कन्यापहाराद्यभिप्रायो दुष्टो मा भूदित्यर्थः । एवं मनः समानमस्तु । अहं च वः युष्माकं तथा आ अकरं करोमि जपेन, यथा

---

$ अत्र संनिकृष्टास्तुपदमुपेक्ष्य व्यवहितस्य 'असति' इत्यस्यापकर्षश्चिन्त्यः । 'अस्तु' इत्यस्यैव बहुवचनान्तविपरिणामो न्याय्यः । किंच, 'असति' इत्यस्य स्वस्थाने वर्तमानार्थत्वमेकवचनान्तत्वं च स्वयमेव 'भवति' इति पर्यायेण व्याख्यातम् । युक्तं च तत्, 'यथा' इति यच्छब्दार्थस्यान्वयात् । तस्यैवापकृष्टस्यात्र विध्यर्थत्वबहुवचनान्तत्वाङ्गीकारो न युक्तः ।

सु सह असति सुष्ठु वः सहभावो भवति । तथा मनांसि समाकरम्, व्रतानि च संमिलितानि करोमीत्यर्थः । एवं चित्तानि चैतन्यानि समाकरमिति योज्यम् । ये च युष्माकं मध्ये विव्रता विरुद्धाचारा यूयमिति केचित्, अमी इति प्रत्यक्षं तानेव मुखविकारादिना दुराचारान् दर्शयति, स्थन भवथ, तान्न संनमयामसि । नेति वर्णोपजनः । तान् वयं संनयामः सम्यक् नतान् कुर्मः सदाचारान् संपादयाम इत्यर्थः । देव.

( २ ) प्रतिगृहीतायां कन्यायामृत्विक् 'एतद्वः सत्यम्' इति दातृवरौ पश्यन्नाह । 'एतन्नः सत्यम्' इति प्रतिवदतः । एवं त्रिर्व्यत्यासम् । ततो वरस्योत्तरत उपविष्टायां वध्वां 'समाना वः, सं वः' इत्यृत्विग्वधूवरावीक्षमाणो जपति । जपादूर्ध्वं वरस्योत्तरत उपवेशयेदित्यन्ये । ब्राह्म.

( ३ ) 'एतद्वः सत्यम्' इत्युक्त्वा ऋत्विक् । तेऽपि 'एतन्नः सत्यम्' इति प्रतिवचनं यथालिङ्गं वदन्ति । ततः 'समाना वः, सं वो मनांसि' इत्यृग्द्वयमृत्विगुभौ पक्षौ वधूवरयोः समीक्षमाणो जपति । पुनर्ऋत्विग्ग्रहणात् 'एतन्नः सत्यम्' इति प्रतिवचनं ज्ञायते । अत्र सावित्रः प्रत्याम्नातः । कन्यां तूष्णें करे वा गृहीत्वा 'कन्यां प्रतिगृह्णामि' इत्येष एव प्रतिग्रहः ।

आवि.

शुल्कदेयाया दाने हिरण्यस्य दानप्रतिग्रहयोर्व्यतिहारः अवमर्शश्च

**[१]अथ शुल्कदेयायाः ॥**

( १ ) आसुरविवाहविधिमाह— अथेति । प्रदानविधिः उच्यते इति शेषः । शुल्केन मूल्येन दीयते या सा शुल्कदेया । देव.

( २ ) शुल्कदेयाविधिः आसुरविवाहविषयः । ... कुमारीणां यदा केशाः वेणीबन्धनयोग्याः स्युस्तदा सीमन्तोन्नयनविधिना सटोद्धरणममन्त्रकं प्राग्वाक्प्रदानात् कर्तव्यम् । 'इन्द्राणीमासु नारीषु' इति यद्वक्ष्यति तद्वाचा दत्तायां कन्यायाम् । इन्द्राणीयाग आज्येन वाग्दानदिवसे भवेत् । तत्राऽऽज्यं हविः । 'आज्यं हविरनादेशे' इति हि परिभाषा । 'यज्ञं यजेत' इति वचनात् । इति तन्त्रं लक्ष्यते । तस्मादाज्यभागान्ते चतुर्गृहीतेन प्रधानम् । 'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः । संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥' । ब्राह्म.

( ३ ) मिथुनं शुल्कम् । तथा । आसुरे ज्ञातिभ्यो द्रविणं दत्त्वा । स च वैश्यस्य द्रविणवत्त्वात् । तेन शुल्केन या दीयते सा शुल्कदेया । तस्याः प्रदानविधिं वक्ष्याम इति शेषः । आवि.

**हिरण्यं व्यतिहरतः ॥**

( १ ) सुवर्णं विजिगीषया परस्परं ददतो दातृप्रतिग्रहीतारौ, असुरत्वात् । दस्युविजिगीषुप्रधानत्वाच्चासुराणां राजसत्त्वेनान्योन्योपचारं कुरुत इति शस्यते । कन्यामूल्यभूतं तु सुवर्णं व्यतिहरतः निश्चिनुतः द्वौ दातृप्रतिग्रहीतारौ संभूयेत्यर्थद्वयं तन्त्रेणावगम्यते । देव.

( २ ) हिरण्यं व्यतिहरतो दातृप्रतिग्रहीतारौ परस्परं समर्पयतः । आवि.

**'प्रजाभ्यस्त्वा' इति प्रददाति ॥**

**'रायस्पोषाय त्वा' इति प्रतिगृह्णाति ॥**

( १ ) तत्प्रकृतं हिरण्यं 'प्रजाभ्यस्त्वा' इत्यनेन ददाति वरः कन्यायाः पित्रे । हे हिरण्य, प्रजार्थं त्वामहं ददानि ।

कन्यायाः पिता— 'रायस्पोषाय त्वां प्रतिगृह्णामि' ।

'प्रजाभ्यस्त्वा ददानि' 'रायस्पोषाय त्वा प्रतिगृह्णामि' इत्येतावन्तावेव मन्त्रौ केचित्प्रयुञ्जते, वाक्यपरिसमाप्तेः, 'इषे त्वा' इत्यादिवत् । अन्यमते तु 'प्रजाभ्यस्त्वाऽनुप्राणन्तु त्वं च प्रजा अनुप्राणिहि' इति प्रथमस्य, 'सुप्रजार्थं च वीर्यार्थं च त्वामहं प्रतिगृह्णामि' इति द्वितीयस्य शेषः । देव.

( २ ) प्रददाति वरः । आवि.

**कंसे हिरण्यं समुप्य 'हिरण्यवर्णाः' इति चतसृभिः समवमृशन्ते ॥**

( १ ) तत्कन्यामूल्यभूतं हिरण्यं प्रतिगृहीतं कांस्यपात्रे निधाय जलयुक्तं 'हिरण्यवर्णाः' इति ऋग्भिश्चतसृभिः

---

( १ ) कागृ. १६।१–५.

समवमृशन्ते उपस्पृशन्ति घोरपापविशुद्धये । बहुवचनं सर्वबन्ध्वपेक्षं सर्वेषां पापभागित्वप्रदर्शनाय । 'हिरण्यवर्णाः' इत्याद्याः संमार्जनावसरे व्याख्याताः* । देव.

(२) कंसे हिरण्यं समोप्य प्रक्षिप्य प्रकृतं 'हिरण्यवर्णाः' इति चतसृभिः समवमृशन्ते । बहुवचनात् सर्वे ज्ञातयोऽपि । हिरण्यमन्यदेव, न मूल्यम् । मूल्यमन्यदपि भवति । आवि.

---

* "हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥' अब्दैवत्या । त्रिष्टुप् । हिरण्यस्येव शुद्धो निर्मलो वर्णो यासां ता हिरण्यवर्णाः । शुचयः पवित्रभूताः । अत एव पावकाः पवित्रताया आपादिकाः । यासु कश्यपप्रभृतय ऋषयो जाता इन्द्रप्रभृतयश्च देवाः । का गणनाऽन्येषाम् ? तथा च मनुः– 'अप एव ससर्जाऽऽदौ तासु वीर्यमथासृजत् । तदण्डमभवद्धैमं सहस्रार्कसमद्युति ॥' (मस्मृ. १।९) इत्यादि । याश्च विविधरूपा गगनसागरादिव्यवस्थिता अपि अग्निं वैद्युतवडवामुखादिकं गर्भं दधिरे । तथा च मन्त्रवर्णः– 'आपो ह यन्महतीर्विश्वमायन्गर्भं दधाना जनयन्तीरग्निम् ।' (कासं. ४०।७) इति । ता आपो नः अस्माकं शंस्योनाः सुखतमा भवन्तु । 'यासां देवा दिवि कृण्वन्ति भक्ष्यं या अन्तरिक्षे बहुधा भवन्ति । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥' यासामपां त्रैवर्णिकदत्तानां देवाः पितृप्रभृतयो दिवि स्वर्गे भक्षणं कुर्वन्ति । भक्षितेन बलेन हविष्यरूपेणापि परिणतानां देवोपयोगित्वं प्रतीयते । तथा च श्रुतिः– 'ततः प्रजनं देवा उपजीवन्ति' इति । तत एव मनुष्येभ्य एवोपजीवन्ति न तु विद्यमानमपि स्वयं गृह्णन्ति मेघादावित्यर्थः । याश्चान्तरिक्षे बहुप्रकारा हिमकरकपानीयरूपा भवन्ति । शेषं व्याख्यातम् । 'यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥' यासामपां मध्ये राजमानो वरुणो याति । किं कुर्वन् ? जनानां सत्यानृते धर्माधर्मौ पश्यन् । 'शिवेन मा चक्षुषा पश्यताऽऽपः शिवया तन्वोपस्पृशत त्वचं मे । मधुश्चुतः शुचयो याः पावकास्ता न आपः शंस्योना भवन्तु ॥' गतार्थम् । (देव. पृ. ३९-४१)" पूर्वमेवं व्याख्याताः ।

## वाराहगृह्यसूत्रम्

ब्रह्मदेयाया दाने दिङ्नियमः, हिरण्यदानप्रतिग्रहयोर्व्यतिहारः, मन्त्रजपः, कन्याभिषेकः

[१]'पश्चादग्नेश्चत्वार्यासनानि उपकल्पयीत । तेषूपविशन्ति– पुरस्तात् प्रत्यङ्मुखो दाता पश्चात् प्राङ्मुखः प्रतिग्रहीता । दातुरुत्तरतः प्रत्यङ्मुखी कन्या । दक्षिणत उदङ्मुखो मन्त्रकारः । तेषां मध्ये प्राङ्मूलान् दर्भानास्तीर्य कांस्यमक्षतोदकेन पूरयित्वा अविधवाऽस्मै प्रयच्छति । तत्र हिरण्यमष्टौ मङ्गलान्यावेदयति । मङ्गलान्युक्त्वा 'ददामि प्रतिगृह्णामि' इति त्रिर्ब्रह्मदेया पिता भ्राता वा दद्यात् । सहिरण्यानञ्जलीनावपति । 'धनाय त्वा' इति दाता । 'पुत्रेभ्यस्त्वा' इति प्रतिग्रहीता । तस्मै प्रत्यावपति । चतुर्व्यतिहृत्य ददाति । सावित्रेण कन्यां प्रतिगृह्य 'प्रजापतये' इति च 'क इदं कस्मा अदात्' इति सर्वत्रानुषजति 'कामैतत्ते' इत्यन्तम् । 'समाना वा आकूतानि' इति सह जपन्त्याऽन्तादनुवाकस्य । 'खे रथस्य खेऽनसः खे युगस्य शतक्रतो । अपालामिन्द्रस्त्रिः पूर्त्व्यकृणोत्सूर्यत्वचम् ॥' इति तेनोदकांस्येन कन्यामभिषिञ्चेत् ॥

## आग्निवेश्यगृह्यसूत्रम्

कन्यादानस्य वरकर्तृकमधुपर्कग्रहण- संभारसंभरण- परिधानान्ताग्निकृत्यपूर्वकत्वम्, कन्याविशेषणानि- बद्धकौतुका कृतपुण्याहवाचना यज्ञोपवीतिनी आचान्ता, दिङ्नियमः, प्रयोगः, स्त्रीधनग्रहणम्

[२]'गृहीतमधुपर्के उद्धननाद्यसंभारसंभरणान् कृत्वा लाजानश्मानमहतं वासश्च संभृत्य ब्रह्मप्रवेशनाद्यापरिधानान्तं करोति । एतस्मिन् काले

---

(१) वागृ. १३. (२) आग्निगृ. १।६।१.

वधूं बद्धकौतुकां कृतपुण्याहिनीं यज्ञोपवीतिनी-माचान्तामग्नेरुत्तरेण परेण च गत्वा दक्षिणतः प्राचीं तिष्ठन्तीम्, वरोऽग्नेरुत्तरेण पूर्वेण च गत्वा पुरस्तात् प्रत्यक् तिष्ठन् सपवित्रेण पाणिना व्याहृतिभिः 'प्रजापतिः स्त्रियाम्' इति षड्भि-रेनां दक्षिणत उदङ्मुखस्तिष्ठन् 'अमूममुक-गोत्रीममुष्मै अमुकगोत्राय तुभ्यं प्रजासहत्व-कर्मभ्यः प्रतिपादयामि' इति वधूमताऽद्भिर्दत्तां प्रतिगृह्णाति स्त्रीधनं च ॥

## पारस्करगृह्यसूत्रम्

कन्यादानानुवादः

*[1]पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति ॥

## वैखानसगृह्यसूत्रम्

ब्राह्मविवाहे कन्यादानविधिः तत्र पक्षान्तरं च

[2]गुरुणाऽग्निमुखे कृते कन्याप्रदो वरगोत्रनाम शर्मान्तं तथैतामस्य सहधर्मचारिणी भवतीति ब्राह्मे विवाहे 'धर्मप्रजासंपत्त्यर्थं यज्ञापत्त्यर्थं ब्रह्म-देवर्षिपितृतृप्त्यर्थं प्रजासहत्वकर्मभ्यो ददामि' इत्युदकेन तां दद्यात्। तां 'प्रजापतिः स्त्रियाम्' इत्युदकेन हरते। वस्त्रगन्धाभरणादीनि संभृत्य कनिक्रदादिना कन्यागृहं सह बान्धवैर्गत्वा 'तेज आयुः श्रियम्' इति वस्त्रादिनाऽलङ्कृत्य 'प्रजा-पतिः सोमम्' इति तथाऽऽभरणमारोप्याऽऽ-ददीतेत्येके ॥

## बौधायनः

कन्यादाने दिङ्नियमः

¶[3]प्राङ्मुखं तं वरं कुर्याद्गुरुणाभिमुखीं वधूम्। कन्यावरणकाले तु दानकाले विपर्ययः ॥

* व्याख्यानानि 'पाणिग्रहणाव्यवहितपूर्वकृत्यानि' इति प्रकरणे द्रष्टव्यानि।

¶ व्याख्यानं कन्यावरणप्रकरणे ( संका. पृ. १८८९ ) द्रष्टव्यम्।

( १ ) पागृ. १।४।१५ ; संप्र. ५८३ ; संग. १६६.
( २ ) वैगृ. ३।२. ( ३ ) प्रपा. ३५३.

## वासिष्ठः

कन्यादाने दिङ्नियमः

[1]प्राक्प्रत्यङ्मुखयोश्चैव दातृग्राहकयोः स्थितिः। उद्वाहे चैव गोदानादानयोरेवमेव हि ॥

कन्याप्रतिग्रहः। तत्र व्यासः— 'दद्यात् पूर्वमुखः कन्यां गृह्णीयादुत्तरामुखः।' इति। वसिष्ठस्तु विशेषमाह— 'प्राक्प्रत्यङ्मुखयोश्चैव दातृग्राहकयोः स्थितिः।' इति। अत्र विरोधे विकल्पो द्रष्टव्यः। आन. १८०

## वृद्धवसिष्ठः

वधूवरयोः प्रपितामहपूर्वकं नामगोत्रसहित-त्रिपुरुषीकीर्तनम्

[2]नामगोत्रे समुच्चार्य संप्रदानस्य चाऽऽत्मनः। संप्रदेयं प्रयच्छन्ति कन्यादाने तु पुंस्त्रयम् ॥

पुंस्त्रयकीर्तनं च प्रपितामहपूर्वकम्, 'नान्दीमुखे विवहे च प्रपितामहपूर्वकम्। नाम संकीर्तयेत्' इति-वचनात्। § संकौ. २१८

‡[3]नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्। नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥

## विष्णुः

रात्रौ कन्यादानानुमतिः

[4]विवाहव्रतसंक्रान्तिप्रतिष्ठाक्रतुजन्मसु। तथोपरागपातादौ स्नाने दाने निशा शुभा ॥

## शङ्खः

कन्यादाने दिङ्नियमः

[5]प्राङ्मुखायाभिरूपाय वराय शुचिसंनिधौ। दद्यात्प्रत्यङ्मुखः कन्यां क्षणे लक्षणसंयुते ॥

§ संव. संकौवत्।

‡ व्याख्यानानि नान्दीश्राद्धप्रकरणे ( संका. पृ. १७६०–१७६१ ) द्रष्टव्यानि।

( १ ) मुक्ता. १४९ ; आन. १८० पू.
( २ ) संकौ. २१८ ; संव. १५८.
( ३ ) अस्य स्थलादिनिर्देशः नान्दीश्राद्धप्रकरणे द्रष्टव्यः.
( ४ ) चश्रा. २३९.
( ५ ) संत. ८९० (=) ; उत. १४३.

## महाभारतम्

रात्रौ कन्यादानानुमतिः

[1]रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम्।
विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम् ॥

## मनुः

ब्राह्मणानां कन्यादाने उदकपूर्वकत्वनियमः,
इतरेषामनियमः

‡[2]अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते।
इतरेषां तु वर्णानामितरेतरकाम्यया ॥

## योगियाज्ञवल्क्यः

रात्रौ कन्यादानार्थस्नानानुमतिः

*[3]ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥

अथ कन्यादानार्थे रात्रावपि स्नानमाह वृद्धयाज्ञवल्क्यः— ग्रहणोद्वाहेति। $ संम. ७२

## बृहस्पतिः

कन्यादातुरुत्थितत्वनियमः

[4]चतुष्पादं गृहं कन्यां दासीं छत्रं रथं तरुम्।
तिष्ठन्नेतान् द्विजो दद्याद् भूम्यादीनुपविश्य च ॥

## व्यासः

दातुरुपवासः, प्रतिग्रहीतुः कन्यायाश्च भोजनम्

[1]भुक्त्वा समुद्वहेत् कन्यां सावित्रीग्रहणं तथा।
उपोषितः सुतां दद्यादर्चिताय द्विजाय तु ॥

(१) भुक्तोद्वाहस्मरणमधर्मविवाहविषयम्। तदाह व्यासः— 'गान्धर्वासुरयोरेव भुक्त्वा तु परिणीयते। ब्राह्मादिषु विवाहेषु भोजनं नेति काश्यपः ॥'। ¶ मुक्ता. १४९

(२) उपोषित इति। निशीथोत्तरं कन्यादाने तु दात्रा भोजनं कार्यम्, तस्य परदिनत्वात्। कृभ. ११३६

[2]गान्धर्वासुरयोरेव भुक्त्वा तु परिणीयते।
ब्राह्मादिषु विवाहेषु भोजनं नेति काश्यपः ॥

ब्राह्मादिषु कन्यादानस्य होमपूर्वकत्वम्, आसुरादिषु विपर्ययः, स्वगृह्यानुसारि पौर्वापर्यम्

[3]ब्राह्मादिषु विवाहेषु पूर्वं होमः प्रशस्यते।
कन्यास्वीकरणं पश्चाद्व्ययस्त्वासुरादिषु।
स्वगृह्योक्तविधानेन पौर्वापर्यव्यवस्थितिः ॥

दिङ्नियमः

[4]दद्यात्पूर्वमुखः कन्यां गृह्णीयादुत्तरामुखः।
दम्पत्योर्वर्धते चाऽऽयुर्दातुश्चैव विवर्धते ॥

वधूवरयोर्नामगोत्रसहितपुरुषत्रयकीर्तनम्

[5]आच्छाद्यालङ्कृतां कन्यां गृह्णन् वामकरेण तु।
गोत्रमादौ तु संकीर्त्य प्रपितामहपूर्वकम्।
प्रपितामहपूर्वाय फलमुद्दिश्य दापयेत् ॥

[6]नामगोत्रे समुच्चार्य प्रदद्याच्छ्रद्धयाऽन्वितः।
परितुष्टेन भावेन तुभ्यं संप्रददे इति ॥

---

‡ व्याख्यानानि ब्राह्मविवाहप्रकरणे (संका. पृ. ६७३) द्रष्टव्यानि।

* संकौव्याख्यानं 'राहुदर्शनसंक्रान्ति' इति देवलवचने द्रष्टव्यम्।

$ संर. संमवत्।

(१) संत. ८९१; उत. १४१.

(२) मस्मृ. ३।३५; धप्र. ४७ विशिष्यते (प्रशस्यते) शौनकः, अन्यस्थलादिनिर्देशः ब्राह्मविवाहप्रकरणे (संका. पृ. ६७३) द्रष्टव्यः.

(३) स्मृच. १२०; चश्रा. ८६०; मुक्ता. २७०; संम. ७२ वृद्धयाज्ञवल्क्यः; संकौ. १९७ यात्रार्ति (यात्रादौ) स्नानं (दानं) वृद्धवसिष्ठः; संव. १४४ सर्वं संकौवत्; संर. ५४८ च (वै) वृद्धयाज्ञवल्क्यः.

(४) विपा. ४० (भागः २); संग. २६२.

¶ आन. मुक्तावत्।

(१) अस्य स्थलादिनिर्देशः वरप्रस्थानप्रकरणे द्रष्टव्यः.

(२) मुक्ता. १४९; आन. १८० उत्त., स्मरणम्.

(३) मुक्ता. १४९.

(४) मुक्ता. १४९; आन. १८० पू.

(५) मुक्ता. १४९. (६) संत. ८९०; उत. १४३.

स्वगामिफले 'तुभ्यं संप्रददे' इति, परगामिफले तु *'अहमस्मै ददानीति एवमाभाष्य दीयते।' इति छन्दोगपरिशिष्टदर्शनात् ददानीति वाच्यम्, उभयपदिदाधातोः फलवत्कर्तर्यात्मनेपदम्, अफलवत्कर्तरि परस्मैपदं इति पाणिनिश्रुतेः। अत एव आत्मनेपदपरस्मैपदयोरात्मने परस्मै इति समाख्या संगच्छते। ददानीत्यस्य ददे इति वर्तमानार्थता। अत एव 'सकृदाह ददानि' इति मनुना (९।४७) अप्युक्तम्। अनुमतिग्रहणार्थप्रार्थनार्थत्वे तु सकृत्त्वाभिधानमप्रयोजकमिति। श्राद्धादौ फलभागिनां गोत्राद्युल्लेखदर्शनात् तदितरत्रापि तदुल्लेखाचारः। छन्दोगपरिशिष्टेऽहंपददर्शनादहंपदप्रयोगोऽपि। एवं श्राद्धे 'अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः।' इति ब्रह्मपुराणदर्शनात् देयविशेषणत्वेनैतच्छब्दप्रयोग इति।

संत. ८९०–८९१

दातृकर्तृका कन्याप्रार्थना

[1]**कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः।**
**कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम्॥**

---

* वस्तुतस्तु छन्दोगपरिशिष्टवाक्यं न दानाङ्गाभिलापविधायकम्, नापि फलस्य परगामित्वे परस्मैपदनियामकम्, अपि तु पूर्वोक्तमुख्यसंप्रदानस्य प्रतिग्रहवैमुख्यादिना संप्रदानत्वासंभवे अन्यस्मै दक्षिणादि दातुं तदनुमतिग्रहणार्थप्रार्थनाविधायकमेव, अन्यथा प्रकरणविरोधात्, 'नैतावपृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि।' इति वाक्यशेषविरोधाच्च। एवं चात्र लोडर्थस्य विवक्षितत्वान्न वर्तमानार्थता। मनुवचनेऽपि अनुमतिग्रहणार्थप्रार्थनात्वाभावेऽपि कामप्रवेदनार्थत्वान्न वर्तमानार्थता, नापि सकृत्त्वाभिधानस्याप्रयोजकता च। तस्मादिदं व्याख्यानं प्रकृतवचनस्य 'अहमस्मै ददानि' इत्याकारकदानाङ्गाभिलापविधायकत्वभ्रममूलकमिति भाति। अत एव अहंपदप्रयोगेऽप्यस्य वचनस्य प्रामाण्यं स्वीकृतं तत्त्वकृता। किंच, 'ददानि'

(१) प्रपा. ३५५ ऋष्यशृङ्गः; संप्र. ८३०–८३१ पार्श्वयोः (पृष्ठतः) पृष्ठतो (सर्वतो); विपा. ४६ (भागः १); प्रका. ३८१ (=).

## देवलः

रात्रौ कन्यादानानुमतिः

[1]**राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।**
**स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च॥**

(१) विवाहे रात्रौ दानान्तरमप्याह देवलः– राहुदर्शनेत्यादि। * संत. ८९१

(२) विवाहो दिवा कार्यः, रात्रावपि केचित् कुर्वन्ति, तत्र कारणं न विद्मः इति जयन्तः। हेमाद्रौ तु देवलः– 'राहुदर्शन... व्रतेषु च॥' इति, वृद्धवसिष्ठः– 'ग्रहणोद्वाहसंक्रान्तियात्रादौ प्रसवेषु च। दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते॥' इति रात्रावपि कन्यादानमुक्तम्। ¶ संकौ. १९७

## दक्षः

नामगोत्रसहितप्रपितामहादिकीर्तनम्

[2]**नामगोत्रे समुच्चार्य प्रपितामहपूर्वकम्॥**

## भारद्वाजः

मधुपर्कोत्तरं कन्यादानम्

[3]**कन्यादाता वरं सम्यङ्मधुपर्केण पूजयेत्।**
**वरशाखानुसारेण ततः कन्यां प्रदापयेत्॥**

---

इत्यत्र वर्तमानार्थत्वाभ्युपगमेऽपि परस्मैपदस्य तत्त्वकृता विवक्षितत्वात् 'ददे' इत्यात्मनेपदेन वर्तमानार्थत्वाभिनयोऽपि न संगच्छते।

* उत. संतवत्।

¶ संव संकौवत्।

(१) अप. १।१०० पृ. १३५; स्मृच. १२०, २२९ कुर्युः (कुर्यात्) : ३८२ (=) कुर्युः (कुर्यात्); चश्रा. २३९ गोभिलः, ८५९; संत. ८९१; उत. १४१; मुक्ता. २७० स्मृचवत्, मनुः; संकौ. १९७ संक्रान्ति (संक्रान्तौ); संव. ५७ त्यय (पत्य) षु च (ष्वपि) गोभिलः : १४४ संकौवत्.

(२) मुक्ता. १४९.

(३) प्रपा. ३५२.

## पराशरः

रात्रौ कन्यादानानुमतिः

[1]खलयज्ञे विवाहे च संक्रान्तौ ग्रहणे तथा ।
शर्वर्यां दानमस्त्येव नान्यत्रैवं विधीयते ॥

## अत्रिः

कन्यादाने रात्रि–पूर्वाह्ण– मध्याह्नानामुत्तरोत्तरस्य प्रशस्ततरत्वम् , अपराह्णनिषेधः

[2]मुख्यो विवाहः पूर्वाह्णे मध्याह्ने चोत्तमोत्तमः ।
निशायां मध्यमः प्रोक्तस्त्वपराह्णे तु गर्हितः ॥

विवाहेऽपि रात्रिमनुजानात्यत्रिः– मुख्य इति । विवाहश्च कन्यापितरं प्रति दानम् । वरं प्रति पाणिग्रहणादि ।
संम. ७२

[3]ग्रहणोद्वाहसंक्रान्तौ स्त्रीणां च प्रसवे तथा ।
दानं नैमित्तिकं ज्ञेयं रात्रौ चापि प्रशस्यते ॥

## सुमन्तुः

रात्रौ कन्यादानानुमतिः

[4]ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते ॥

## आश्वलायनः

कन्यादानाधिकारिणः , दिङ्नियमः , प्रयोगः

[5]केचि ... स्यान्ते दानमिच्छन्ति बह्वृचाः ।
तदुक्तं बाष्कलानां स्यान्नेतराणामिति स्थितिः ॥
नयेयुराज्यसंस्कारे कृते कन्यां समावृताः ।
अग्नेरुदग्दिशं विप्रा उच्चैः शाकुन्तशंसिनः ॥

पिता भ्राताऽथवा माता मातुलो वाऽथ बान्धवः ।
सर्वाभावे पितुर्ज्ञातिः कन्यादाने प्रभुर्मतः ॥

[1]वरस्योदक्स्थितां कन्यां प्राङ्मुखीं प्राङ्मुखाय ताम् ।
समभ्यर्च्य पिता दद्यात्तत्पाणौ मन्त्रवज्जलैः ॥
दद्यात्प्रत्यङ्मुखः स्थित्वा गृहीत्वा प्राङ्मुखो जलम् ॥

[2]ग्रहीतुराभिमुख्यत्वाद्वैदिकत्वाच्च कर्मणः ॥
जले निपतिते पाणौ काममन्त्रं जपन् वरः ।
स्पृशन् कन्यां दक्षबाहौ दक्षाङ्गुष्ठेन चाऽऽत्मनः ॥
काममन्त्रजपः शस्तो गृह्यानुक्तोऽपि बह्वृचाम् ।
विवाहे चापि सर्वेषां सर्वदैव प्रतिग्रहे ॥
देवस्य त्वेति संप्रोक्तः क इदं च वदन् द्विजः ।
यश्चेह प्रतिगृह्णाति तस्य धर्मं महद्भवेत् ॥

## लघ्वाश्वलायनः

प्रथमाक्षतारोपणोत्तरं कन्यादानम् , वधूवरयोर्गोत्रोच्चारणम् , वरप्रार्थना , मन्त्रपाठः

[3]त्रिवारमेवं कृत्वा तु कन्यां दद्यात्ततः पिता ।
शिष्टाचारानुसारेण वदन्त्येके महर्षयः ॥
[4]लक्ष्मीरूपामिमां कन्यां प्रददे विष्णुरूपिणे ।
तुभ्यं चोदकपूर्वां तां पितॄणां तारणाय च ॥
वरगोत्रं समुच्चार्य कन्यायाश्चैव पूर्ववत् ।
एषा धर्मार्थकामेषु न त्याज्या स्वीकृता ह्यतः ॥

---

(१) पस्मृ. १२।२२.

(२) विसौ. ५८ ; संम. ७२ ; कुभ. ११२६ प्रोक्तस्त्वप (प्रोक्तः अप).

(३) अत्रिसं. ३२७.

(४) संकौ. १९७ ; संव. ५७ : १४४ यात्रार्ति (यात्रादौ).

(५) आश्वस्मृ. ११।३४०–३४१, ३४४–३४६.

(१) आश्वस्मृ. ११।३४६–३४७ मुखाय ताम् । सम (मुखस्थितम् । तम) ; मुक्ता. १४९ वज्जलैः (वज्जले) मुखो जलम् (मुखोऽञ्जलिम्).

(२) आश्वस्मृ. ११।३४८–३५२.

(३) लघ्वाश्वस्मृ. १५।२५ ; कुभ. ११३७ पू. आश्वलायनः .

(४) लघ्वाश्वस्मृ. १५।२६, २७,

**[१]दाता वदेदिमं मन्त्रं कन्या तारयतु स्वयम् ॥**

**जमदग्निः**

दात्रा कन्याया वामकरधारणं प्रपितामहा-द्युच्चारणं च

**[२]कन्यां वामकरे धृत्वा प्रपितामहपूर्वकम् ॥**

**ऋष्यशृङ्गः**

वधूवरयोर्गोत्रस्य प्रपितामहादीनां च कीर्तनम्

**[३]वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् ।**
**नाम संकीर्तयेद्विद्वान् कन्यायाश्चैवमेव हि ॥**

(१) इदमिह दानवाक्यम्– 'ओम् अद्य अमुकसगोत्रस्य अमुकप्रवरस्य अमुकशर्मणः प्रपौत्राय, अमुकसगोत्रस्य अमुकप्रवरस्य अमुकशर्मणः पौत्राय, अमुकसगोत्रस्य अमुकप्रवरस्य अमुकशर्मणः पुत्राय, अमुकसगोत्राय अमुकप्रवराय अमुकशर्मणे वराय, अमुकसगोत्रस्य अमुकप्रवरस्य अमुकशर्मणः प्रपौत्रीम्, अमुकसगोत्रस्य अमुकप्रवरस्य अमुकशर्मणः पौत्रीम्, अमुकसगोत्रस्य अमुकप्रवरस्य अमुकशर्मणः पुत्रीम्, अमुकसगोत्राममुकप्रवराममुकाभिधानामिमां कन्यां सालङ्कारां प्रजापतिदैवताममुककामस्तुभ्यमहं संप्रददे' । 'एतत्कन्यादानप्रतिष्ठार्थं दक्षिणामिदं हिरण्यं संप्रददे न मम' इत्युच्चार्य दानमन्त्रं पठेत्, प्रतिग्रहीता तु प्रणवपूर्वं 'स्वस्ति' इत्युक्त्वा 'कोऽदात्' इति मन्त्रमुदाहरेत् ।

चदा. ६८६–६८७

(२) अत्र कन्यादानप्रयोगो लिख्यते । तद्यथा –'अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्राय, अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्राय, अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्राय' इति वरपक्षे । 'अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीम्, अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्रीम्, अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्रीम्' इति कन्यापक्षे । एवमेव पुनर्वारद्वयमुच्चार्य 'अमुकगोत्रायामुकप्रवरायामुकशर्मणे ब्राह्मणाय' इति ब्राह्मणवरपक्षे । इतरवरपक्षे 'वर्मणे अमुकगोत्रगुप्ताय अमुकदासाय' इति विशेषः । 'अमुकगोत्राममुकप्रवराममुकनाम्नीमिमां कन्यां प्रजापतिदैवतां यथाशक्त्यलङ्कृतां पुराणोक्तकन्यादानफलकामो भार्यात्वेन तुभ्यमहं संप्रददे' इति सकुशेन जलेन कन्याहस्तं वरस्य हस्ते दद्यात् । वरश्च 'द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु' इति मन्त्रेण प्रतिगृह्णीयात् । ततः 'कोऽदात्' इति कामस्तुतिं पठेत् । ततः कन्यापिता कृतैतत्कन्यादानप्रतिष्ठासिद्ध्यर्थं सुवर्णं गोमिथुनं च दक्षिणां दद्यात् । अत्राऽऽचारादन्यदपि यौतकत्वेन सुवर्णरजतताम्रगोमहिष्यश्वग्रामादि कन्यापिता यथासंभवं ददाति । अन्येऽपि बान्धवादयो यथासंभवं यौतकं प्रयच्छन्ति । केचन यौतकं होमान्ते प्रयच्छन्ति । अत्र देशाचारतो व्यवस्था ।

हभा. ६४–६५

(३) तत्र कन्यावरकुलयोः पाठक्रमात् ऋष्यशृङ्गोक्तशाब्दक्रमस्य बलवत्त्वात् वरकुलाभिधानानन्तरं कन्याकुलाभिधानसमाचारः । तथा च हेमाद्रिधृतमृष्यशृङ्गवचनम्– 'वरगोत्रं समुच्चार्य ...... हि ॥' इति ।

* संत. ८९१

(४) अथ तत्प्रयोगः– तत्र हेमाद्रिरित्थं दानवाक्यमुदाजहार– 'ओम् अद्यामुकसगोत्रस्य ....... तुभ्यमहं संप्रददे' इति । संमतं चेदृशदानवाक्यं मदनरत्नकृतोऽपि, वरप्रपितामहनामकीर्तनावसरे गोत्रप्रवरोच्चारणं प्रदर्शयता अनेन तथैव रीत्या पितामहादिनामोच्चारणावसरेऽपि तदुच्चारणकर्तव्यतासूचनात् । किमत्र मूलमिति चेत् ? उभाभ्यामुदाहृतमृष्यशृङ्गवाक्यम् 'वरगोत्रं समुच्चार्य ...... हि ॥' इति ।

---

(१) लघ्वाश्वस्मृ. १५।२८ ; कुभ. ११३७ वदेदिमं (पठेदिमं) आश्वलायनः.

(२) मुक्ता. १४९.

(३) चदा. ६८६ ; हभा. ६४ ; संत. ८९१ ; उत. १४५ ; संप्र. ८३० ; सिन्धु. ११३६ ; संकौ. २१८ ; प्रका. ३६५ ; संग. २६० ; संव. १५८ ; संर. ५४९ ; संदी. २९ (भागः २).

* उत. संतवत् ।

न चात्र वरविशेषणत्वेनैव गोत्रोच्चारणं विहितम्, न प्रपितामहादिविशेषणत्वेनेति शङ्क्यम्, दानसामान्यविषयेण वृद्धवसिष्ठवचनेनैव कन्यादानेऽपि तत्प्राप्तेः। अतः प्रपितामहपूर्वकनामोच्चारणे प्रत्येकं वरगोत्रोच्चारणमङ्गत्वेन विधीयते इति निबन्धकृतोरभिप्रेतम्। तथाऽन्योऽपि विशेषो मदनरत्न एवोक्तः— 'प्रजापतिदैवताम्' इति, अन्ते 'अक्षय्यब्रह्मलोककामस्तुभ्यमहं प्रतिपादयामि' इति वरहस्ते कुशाक्षतजलानि कन्याकरेण सह दत्त्वा 'कन्यां कनकसंपन्नाम्' इति मन्त्रं पठेदिति। ततो दक्षिणादानमुक्तम्। हेमाद्रिस्तु दक्षिणादानोत्तरं 'गौरीं कन्याम्' इति दानमन्त्रोच्चारणमाह। तत्र मूलमुदाहृतऋष्यशृङ्गवाक्यशेषः— 'मधुपर्कार्चितायैनां तस्मै दद्यात् सदक्षिणाम्। उदपात्रं ततो गृह्य मन्त्रेणानेन दापयेत्॥'। संकौ. २१८–२१९

(५) अथ वधूवरयोर्गोत्रप्रवरपूर्वकं प्रपितामहपितामहपितॄणां त्रिस्त्रिर्नामग्रहणं कार्यमिति वासुदेवहरिहरौ। सकृदिति गङ्गाधरः। स्पष्टप्रयोगः 'वसिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय सुशीलनाम्नेऽमुकस्मै वराय' कन्यापक्षे 'वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां संप्रददे'। ¶ संग. २६०–२६१

(६) सर्वत्र पितृपूर्वकत्वस्यैव दृष्टत्वात् प्रपितामहपूर्वकत्वविधानम्। एवमेवेत्यनेन गोत्रोच्चारादिकं कन्यायामप्यतिदिश्यते। संर. ५४९

दिङ्नियमः, मधुपर्कपूर्वकं सदक्षिणं कन्यादानम्

**[1]तिष्ठेत् पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत्।**
**मधुपर्कार्चितायैनां तस्मै दद्यात् सदक्षिणाम्॥**

(१) अत्र 'प्रत्यङ्मुखः प्राङ्मुखीं तां स्थितामात्मसमीपतः। कन्यकां प्रतिगृह्णीत दत्तां पित्रादिभिर्वरः॥' इति शौनकेन, 'ततः पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत्। ...॥' इति ऋष्यशृङ्गेण च वरस्य प्रत्यङ्मुखत्वमुक्तम्। परिशिष्टे तु '* प्रत्यङ्मुखीं गुडजीरकपाणिं कन्यां स्थापयेयुरपरस्मिन् प्राङ्मुखं तथाभूतं वरम्' इति वरस्य प्राङ्मुखत्वमुक्तम्, तयोर्विरोधे देशाचारतः कुलाचारतो वा व्यवस्थाऽवधेया। संप्र. ८२९

(२) प्राङ्मुखो दाता, उदङ्मुखः प्रतिग्रहीतेति दानपरिभाषाप्राप्तस्य बाधनार्थं तिष्ठेत् पूर्वमुख इत्यादिकम्। संर. ५४९

उदकदानं तन्मन्त्रश्च

**†[1]उदपात्रं ततो गृह्य मन्त्रेणानेन दापयेत्॥**
**[2]गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम्।**
**गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय॥**

गृह्येत्यत्र समासाभावेऽपि क्त्वो ल्यबादेशश्छान्दसः। दापयेदित्यत्र स्वार्थे णिच्। संर. ५४९

---

¶ हरिहरानुवादोऽपि।

(१) चदा. ६८६ चितायैनां तस्मै (चितां चैनां तस्मात्); संप्र. ८२९ तिष्ठेत् पूर्व (ततः पूर्व); सिन्धु. ११३६; संकौ. २१८ चितायैनां (हेणे कन्यां) अत्रैव पुनः आदर्शवत् उत्तरार्धमात्रम्; प्रका. ३६५–३६६ द्वितीयपादे (वरश्चोदङ्मुखो भवेत्); संव. १५८ पूर्वमुखो (उदङ्मुखो) चितायैनां (हेणे कन्यां); संर. ५४९.

* अस्य परिशिष्टवाक्यस्य निरीक्षणविषयत्वेन विरोधाभावात् 'भद्रपीठे प्राङ्मुख उपविशेत्। तस्य पुरस्तात् प्रत्यङ्मुखीं ...... कन्यां पुरस्कृत्य' इति दानप्रकरणगतं वाक्यमत्रोद्धर्तुं युक्तम्। अतोऽत्र वाक्यमिदं रभसधृतमिति भाति।

† संकौव्याख्यानं 'वरगोत्रं०' इति पूर्ववचने द्रष्टव्यम्।

(१) चदा. ६८६; सिन्धु. ११३६; संकौ. २१८–२१९; प्रका. ३६६; संर. ५४९ द्वितीयपादे (मन्त्रेणैनां प्रदापयेत्) व्याख्यानात्तु आदर्श इव पाठ इति भाति.

(२) चदा. ६८६ तुभ्यं (तस्मै) विप्र समाश्रय (विप्रसमाश्रयाम्); प्रपा ३५५; संप्र. ८३०; सिन्धु. ११३६; विपा. ४६ (भागः २); प्रका. ३८२ (=) निर्देशमात्रम्; संर. ५४९.

अनुदानानि

[1]भूमिं गां चैव दासीश्च वसनानि स्वशक्तितः ।
महिषीर्वाजिनश्चैव दद्यात् स्वर्णमणीनपि ॥

[2]ततः स्वगृह्यविधिना होमाद्यं कर्म कारयेत् ।
यथाचारं प्रदेयानि मङ्गलं करकाणि च ॥

मङ्गलं मङ्गलसूत्रम् । करकाणि मृन्मयपात्राणि । चकारात् सौभाग्यद्रव्याणि सुवासिनीभ्यो देयानीत्यर्थः ।
संर. ५४९

## स्मृत्यन्तरम्

रात्रौ कन्यादाने दातुर्दिवा भोजनं दानात्प्राक् स्नानं च, दिङ्नियमः, वधूवरयोः प्रपितामहादीनां नामगोत्रप्रवराणां च कीर्तनम्, दक्षिणा-दानम्, अनुदानानि

[3]कन्यादानं निशीथे चेद्दिवा भोजनमाचरेत् ।
पुनः स्नात्वा जपेद्देवीं पिता कन्यां प्रयच्छति ॥

[4]कन्यादानं निशीथे चेद्दिवा भोजनमिष्यते ।
काले स्नानं प्रकुर्वीत कन्यां दद्याद्वराय तु ॥

[1]तिष्ठेदुदङ्मुखो दाता प्राङ्मुखस्तु वरो भवेत् ॥
स्वार्षगोत्रे समुत्कीर्त्य वरस्यापि तथैव च ।
नाम संकीर्तयेद्विद्वान् प्रपितामहपूर्वकम् ॥

कन्यायाश्चैवमेवोक्त्वा मधुपर्कार्चिताय तु ।
स्वयं पूर्वमुखस्तिष्ठन् प्रत्यङ्मुखवराय तु ॥

कन्यां सदक्षिणां दद्याद्भूमिं वासांसि वाजिनः ।
महिषीं गां च दासीं च दद्यात्स्वर्णमणीनपि ॥

## वायुपुराणम्

कन्यादानमन्त्रौ

[2]कन्यां कनकसंपन्नां कनकाभरणैर्युताम् ।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥

[3]विश्वंभरः सर्वभूताः साक्षिण्यः सर्वदेवताः ।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥

अथ कन्यादानमन्त्रौ वायुपुराणे— कन्यां कनकसंपन्नामित्यादि । प्रपा. ३५५

## लिङ्गपुराणम्

अनुदानानि

[4]दासीदासासनाद्यं च भूषणानि गृहं ततः ।
क्षेत्राणि च धनं चापि तथाऽन्यानि प्रदापयेत् ॥

अथानुदानान्युच्यन्ते लिङ्गपुराणे— दासीदासेत्यादीनि । प्रपा. ३५५

---

(१) चदा. ६८७ गां चैव (गावश्च) वसनानि (वासांसि च) महिषीः (महिष्यो) क्रमेण ऋष्यशृङ्गः; प्रपा. ३५६ स्वर्ण (सर्व); संप्र. ८३१; सिन्धु. ११३६ दासीश्च वसनानि (दासीं च वासांसि च) महिषीः (महिषीं); प्रका. ३६५ गां चैव (गाश्चैव) शेषं सिन्धुवत्, क्रमेण ऋष्यशृङ्गः; संग. २६१ गां चैव (गाश्चैव); संर. ५४९ सिन्धुवत्.

(२) चदा. ६८७ उत्तरार्धे (यथाचारं विधेयानि मङ्गल्यकुतुकानि च ।।) क्रमेण ऋष्यशृङ्गः; प्रपा. ३५६ उत्तरार्धे (यथाचारं विधेयं हि माङ्गल्यं करकादि च ।।); संप्र. ८३१ उत्तरार्धे (यथाचारं विधेयं च मङ्गल्यं कौतुकानि च ।); सिन्धु. ११३६ उत्तरार्धे (यथाचारं विधेयानि माङ्गल्यकुतुकानि च ।।); संर. ५४९.

(३) धप्र. ४८ (=); संग. २२५.

(४) संर. ५४८.

(१) संर. ५५०.

(२) प्रपा. ३५५; गभा. १०२ (=); संप्र. ८३०; मुक्ता. ४५ कनक (लक्षण) स्मृतिरत्ने; विपा. ४५ (भागः २); प्रका. ३८१; संर. ५५१ (=).

(३) प्रपा. ३५५; गभा. १०३ (=); संप्र. ८३०; विपा. ४५ (भागः २); संर. ५५१ (=).

(४) प्रपा. ३५५; संप्र. ८३१ गृहं (गृहे); विपा. ४६ (भागः २) (=) ततः (तथा); संग. २६१.

## स्कन्दपुराणम्

दिङ्नियमः, नामगोत्रोच्चारणम्, जलदानम्

[1]नामगोत्रे समुच्चार्य प्राङ्मुखो वारिपूर्वकम्।
उदङ्मुखाय वै दद्यात् कन्यां चैव यवीयसीम्॥

## विष्णुधर्मोत्तरपुराणम्

कन्या-दास-दासीनां प्रजापतिर्देवता

[2]कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्तिताः॥

प्राजापत्याः प्रजापतिदेवताकाः। संत. ८९४

कन्यादीनां प्रतिग्रहकल्पः

[3]भूमेः प्रतिग्रहं कुर्याद् भूमेः कृत्वा प्रदक्षिणम्।
करे गृह्य तथा कन्यां दासीदासौ द्विजोत्तमाः॥
[4]करं तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहे॥

(१) करे गृह्य करं गृहीत्वा। संत. ८९४

(२) तत्राधःस्थकन्याहस्तं दाता वरहस्ते पश्चात् दद्यादित्यर्थः। कृभ. ११३७

अनुदानानां प्रतिग्रहे पृथङ्मन्त्रपाठनिषेधः

[5]कन्यादाने तु न पठेद्द्रव्याणां तु पृथक्पृथक्।
प्रतिग्रहं द्विजश्रेष्ठ तत्रैवान्तर्भवन्ति ते॥

सुवर्णादिद्रव्याणां द्विजस्य च संबन्धघटितं प्रतिग्रहमन्त्रं पृथक् न पठेदित्यर्थः। संकौ. २१८

## भविष्यपुराणम्

कन्यादाने प्रवरादिकीर्तनम्

[6]तुलापुरुषदाने च तथैव हाटकाचले।
कन्यादाने तथोत्सर्गे कीर्तयेत्प्रवरादिकम्॥

भवदेवीयसंबन्धविवेके प्रवराभिधानमाह भविष्यपुराणम्- तुलापुरुषेति। संत. ८९०

## अग्निपुराणम्

दिङ्नियमः, दानोत्तरमीक्षणम्

[1]दद्यात्तु प्राङ्मुखस्तस्मै वरः प्रत्यङ्मुखो वधूम्।
गृहीत्वा शोभने लग्ने ईक्षेदापादमस्तकम्॥

## देवीपुराणम्

वधूवरयोर्गोत्रनाम्नोः प्रपितामहादीनां च कीर्तनम्

[2]गोत्रं नाम तु संकीर्त्य कीर्तयेत्प्रपितामहम्।
पितामहं च पितरं कन्यामेवं वराय च॥

## दानधर्मोत्तरे

दिङ्नियमः

[3]सर्वत्र प्राङ्मुखो दाता ग्रहीता च ह्युदङ्मुखः।
एष एव विधिर्दाने कन्यादाने विपर्ययः॥

विपर्यय इति। प्रत्यङ्मुखः संप्रदाता, प्रतिग्रहीता प्राङ्मुखः। उत. १४३

## अनिर्दिष्टकर्तृकवचनानि

ब्राह्मादिषु चतुर्षु विवाहेषु कन्यादातुरुपवासः, रात्रौ दाने दिवा भोजनम्

[4]कन्यादानं निशीथे चेद्दिवा भोजनमाचरेत्।
उपोषितः सुतां दद्याद् ब्राह्मादिषु चतुर्ष्वपि॥

रात्रौ कन्यादानं चेत् भोजने निर्णयमाह- कन्यादानमित्यादि। संग. २२५

[5]कन्यादानं निशीथे चेद्दरायोपोषिताय च।
उपोषितः सुतां दद्याद् ब्राह्मादिषु चतुर्ष्वपि॥

---

(१) मुक्ता. १४९ स्कन्दः.

(२) संत. ८९४; संकौ. २१८ द्वितीयपादे (प्राजापत्या प्रकीर्तिता).

(३) संत. ८९४; कृभ. ११३७ (करे गृहीत्वा कन्यां तु दासदास्यो द्विजोत्तमः॥) उत्त.

(४) कृभ. ११३७.

(५) संकौ. २१८ क्रमेण विष्णुधर्मोत्तरम्.

(६) संत. ८९०; उत. १४३ तथैव (तथा च) मत्स्यपुराणम्.

(१) मुक्ता. १४९.

(२) मुक्ता. १४९.

(३) संत. ८६१ पू., ८९० (=) ह्युदङ् (उदङ्) चतुर्थपादे (विवाहे च व्यतिक्रमः); उत. १४३ ह्युदङ् (उदङ्) उत्तरार्धे (एष दानविधिर्दृष्टो विवाहे तु विपर्ययः॥); संग. २६० विधानपारिजाते.

(४) संग. २२५. (५) धप्र. ४८.

दातृवरयोः शाखाभेदे दातृशाखया प्रयोगः

[1]स्वशाखी चेद्वरो न स्यात् कस्मै देया तु कन्यका ।
स्वगृह्योक्तविधानेन दद्यात्तां परशाखिने ॥
पूजयेन्मधुपर्केण स्वशाखाविधिना वरम् ।
आकन्यादानपर्यन्तं पिता कुर्यात् स्वशाखतः ॥

नामगोत्रयोः प्रपितामहादीनां च कीर्तनम्,
दिङ्नियमः, कन्यादानमन्त्राः

[2]नाम गोत्रं तु संकीर्त्य प्रपितामहपूर्वकम् ।
संप्रदानं तु कुर्वन्ति कन्यादाने त्वयं विधिः ॥
[3]प्राक्प्रत्यगास्यतोद्वाहे दातृग्राहकयोः स्थितिः ॥
*[4]गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् ।
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥
कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः ।
कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥
मम वंशकुले जाता पालिता वत्सराष्टकम् ।
तुभ्यं विप्र मया दत्ता पुत्रपौत्रप्रवर्धिनी ॥

(१) न्यूनवयस्कायां 'पालिता वर्षसप्तकम्' इत्याद्यूहः कार्यः । गभा. १०३

(२) न्यूनवार्षिक्यां तु 'गौरीम्' इत्यस्य पदस्य लोपः, 'मया कन्यामिमां विप्र यथाशक्ति विभूषिताम् ।' इत्येव वा प्रयोगः । 'पालिता वर्षसप्तकम्' 'पालितेयं षडब्दकम्' इत्यूहश्च यथायथम् । नववार्षिक्यां तु 'गौरीम्' इति पदे 'रोहिणीम्' इत्यूहेत् 'रोहिणीं कन्यामिमां विप्र' इति, 'पालिता नववर्षकम्' इति च । दशवार्षिक्यां तु गौरीरोहिणीपदस्थाने 'कन्याम्' इत्यूहेत् 'कन्यां कन्यामिमां विप्र' इति, 'पालिता दशवर्षकम्' इति च । गौरीपदलोपः पूर्ववदत्रापि । अत्र वर्षं जन्मत एव । संर. ५५२-५५३

कन्यादानाङ्गभूतानुदानमन्त्राः— तत्र गोदानमन्त्रः

[1]यज्ञसाधनभूता या विश्वस्याघौघनाशिनी ।
विश्वरूपधरो देवः प्रीयतामनया गवा ॥

वृषदानमन्त्रः

[2]धर्मस्त्वं(? धर्म त्वं) वृषरूपेण जगदानन्दकारक ।
अष्टमूर्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥

महिषीदानमन्त्रः

[3]इन्द्रादिलोकपालानां या राज्यमहिषी शुभा ।
महिषासुरस्य जननी साऽस्तु मे सर्वकामदा ॥

अश्वदानमन्त्रः

[4]महार्णवसमुत्पन्न उच्चैःश्रवः सपुत्रक ।
मया त्वं विप्रमुख्याय दत्तः शान्तिं प्रयच्छ मे ॥

गजदानमन्त्रः

[5]सुप्रतीक गजेन्द्र त्वं सरस्वत्याऽभिषेचित ।
इद्रस्य वाहनं शश्वत् सर्वदेवैश्च पूजित ।
दानेनानेन दत्तेन मुहुः शान्तिं प्रयच्छ मे ॥

* क्रमेणेमौ श्लोकौ ऋष्यशृङ्गव्यासयोरपि ।

(१) धप्र. ४८.

(२) स्मृसा. १४.

(३) संकौ. २१८.

(४) गभा. १०३; संकौ. २२१; संर. ५५२.

(१) विपा. ४६ (भागः २) स्याघौघनाशिनी (स्याघप्रणाशिनी); संकौ. २२२; संग. २९८ विपावत्; संर. ५५३.

(२) संकौ. २२२.

(३) संकौ. २२२; संग २९८; संर. ५५३ शुभा (प्रिया).

(४) विपा. ४७ (भागः २) (विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः । चन्द्रार्कवाहनं नित्यमतः शान्तिं प्रयच्छ मे ॥); संकौ. २२२; संग. २९९ विपावत्; संर. ५४४ द्वितीयतृतीयपादयोः (उच्चैःश्रवसपुत्रक । सोपस्कारस्त्वं विप्राय).

(५) संकौ. २२२; संर. ५५४ षेचित (षेचितम्) च पूजित (सुपूजितम्) तृतीयार्धे (विप्र तुभ्यं ददामीमं तेन शान्तिं प्रयच्छ मे ॥).

भूमिदानमन्त्रः

[1]सर्वसस्याश्रया भूमिर्वराहेण समुद्धृता ।
अनन्तसस्यफलदा अतः शान्तिं प्रयच्छ मे ॥

गृहदानमन्त्रः

[2]इदं गृहं गृहाण त्वं सर्वोपस्करसंयुतम् ।
तव विप्र प्रसादेन ममास्त्वभिमतं फलम् ॥

शय्यादानमन्त्रः

[3]अशून्यं शयनं नित्यमनूनां श्रियमुन्नतिम् ।
सौभाग्यं देहि मे नित्यं शय्यादानेन केशव ॥

दासीदानमन्त्रः

[4]इयं दासी मया तुभ्यं श्रीवत्स प्रतिपादिता ।
सदा कर्मकरी भोग्या यथेष्टं भद्रमस्तु मे ॥

दासदानमन्त्रः

[5]अयं दासो मया तुभ्यं श्रीवत्स प्रतिपादितः ।
सदा कर्मकरो ह्यो मम शान्तिं प्रयच्छतु ॥

सुवर्णपात्रदानमन्त्रः

[6]जन्मान्तरसहस्रेषु यत्कृतं पातकं मया ।
स्वर्णपात्रप्रदानेन शान्तिस्तस्यास्तु मे सदा ॥

(१) विपा. ४६ (भागः २) सस्या (शस्या) सस्य (शस्य); संकौ. २२२; संग. २९८ सर्वसस्या (या सर्वस्या); संर. ५५४ अतः (मम) प्रयच्छ मे (प्रयच्छतु).

(२) विपा. ४७ (भागः २); संकौ. २२२; संग. २९८.

(३) विपा. ४७ (भागः २) नित्यम (यस्माद); संकौ. २२२; संग. २९८ अशून्यं (अशून्ये); संर. ५५४ अशून्यं (अनूनं).

(४) विपा. ४६ (भागः २) वत्स (विप्र) मे (ते); संकौ. २२२ मस्तु मे (मश्नुते); संग. २९८ वत्स प्रति (वत्सं प्रति) सदा (सर्व); संर. ५५४ भोग्या (हृद्या).

(५) संर. ५५४.

(६) संकौ. २२२ जन्मान्तर (जन्मजन्म); संर. ५५३ शान्तिस्तस्यास्तु (तानि नश्यन्तु).

रौप्यपात्रदानमन्त्रः

[1]अगम्यागमनं चैव परदाराभिमर्शनम् ।
रौप्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥

ताम्रपात्रदानमन्त्रः

[2]परापवादपैशुन्यादभक्ष्यस्य च भक्षणात् ।
उत्पन्नं पापं दानेन ताम्रपात्रस्य नश्यतु ॥

कांस्यपात्रदानमन्त्रः

[3]यानि पापान्यकामानि कामोत्थानि कृतानि च ।
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥

करकदानमन्त्रः

[4]पूरितं पूगपूगेन नागवल्लीदलान्वितम् ।
पूर्णेन चूर्णपात्रेण कर्पूरपिटकेन च ॥
सपूगखण्डनं दिव्यं गन्धर्वाप्सरसां प्रियम् ।
करक त्वं निरातङ्कं त्वत्प्रसादात् कुरुष्व माम् ॥

हिरण्यदानमन्त्रः

[5]हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ।
अनन्तपुण्यफलदं मम शान्तिं प्रयच्छतु ॥

रजतदानमन्त्रः

[6]रजतं सर्वभूतानां पितॄणां परमं हितम् ।
शिवनेत्रोद्भवं यस्मादतः शान्तिं प्रयच्छ मे ॥

वलयदानमन्त्रः

[7]काञ्चनं हस्तवलयं रूपकान्तिसुखप्रदम् ।
विभूषणं प्रदास्यामि विभूषयतु मां सदा ॥

(१) संकौ. २२२; संर. ५५३.

(२) संकौ. २२२; संग. २९८–२९९ पराप (पाखण्ड) उत्तरार्धे (उत्पन्नं ताम्रपात्रस्य दानेनैनो विनश्यतु ॥); संर. ५५३.

(३) संकौ. २२२ न्यकामानि (नि काम्यानि); संग. २९९; संर. ५५३ प्रथमपादे (यानि कानि च पापानि) च (तु). (४) संकौ. २२२. (५) संर. ५५४.

(६) संकौ. २२२; संर. ५५४ (असुरेषु समुद्भूतं रजतं पितृवल्लभम् । तस्मादस्य प्रदानेन रुद्रः संप्रीयतां मम ॥).

(७) संकौ. २२२; संर. ५५४ काञ्चनं (सौवर्ण).

अङ्गुलीयकदानमन्त्रः

[1]हिरण्यगर्भसंभूतं सौवर्णं चाङ्गुलीयकम् ।
सर्वप्रदं प्रयच्छामि प्रीणातु कमलापतिः ॥

कुण्डलदानमन्त्रः

[2]क्षीरोदमथने पूर्वमुत्थितं कुण्डलद्वयम् ।
श्रिया सह समुद्भूतं ददे श्रीः प्रीयतामिति ॥

पुस्तकदानमन्त्रः

[3]सर्वविद्याश्रयं ज्ञानकारणं ललिताक्षरम् ।
पुस्तकं संप्रयच्छामि प्रीता भवतु भारती ॥

## देवस्वामी

मधुपर्कपूर्वकं दातृशाखया कन्यादानम्

[4]स्वशाखाविधिनाऽभ्यर्च्य मधुपर्कादिना वरम् ।
ततः कन्यामलङ्कृत्य दाता तस्मै प्रदापयेत् ॥

## संबन्धविवेके

प्रपितामहादीनां कीर्तनम्

*[5]नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।
वाक्यमुच्चारयेद्विद्वानन्यत्र पितृपूर्वकम् ।
एतदेव त्रिरुच्चार्य कन्यां दद्याद्यथाविधि ॥
[6]विवाहे यो विधिः प्रोक्तो वरणे स विधिः स्मृतः ।
वाक्यं त्रैपुरुषिकं कार्यं त्रिरावृत्तिविवर्जिते ॥

* वृद्धवसिष्ठेऽपि ।

(१) विपा. ४७ (भागः २) यच्छामि (दास्यामि); संकौ. २२२; संग. २९८; संर. ५५४ प्रीणातु (प्रीतोऽस्तु).

(२) विपा. ४७ (भागः २); संकौ. २२२ मुत्थितं (मुद्धृतं); संग. २९८ संकौवत्; संर. ५५४ ने पूर्वमुत्थितं (नोद्भूतं शुभदं) तामिति (तां मम).

(३) संकौ. २२२. (४) प्रपा. ३५२.

(५) संत. ८९१ धनंजयकृतसंबन्धविवेकपरिशिष्टीयम्; उत. १४५ प्रथमार्धयोः अन्यः स्थलादिनिर्देशः नान्दीश्राद्धप्रकरणे वृद्धवसिष्ठे द्रष्टव्यः.

(६) उत. १४५.

त्रिरावृत्तिविवर्जिते प्रपितामहपूर्वकं वरणे । 'नान्दी समृद्धिरिति कथ्यते' इति ब्रह्मपुराणात् नान्दीमुखे पुत्रादिसमृद्धीनामादिकारणरूपे विवाहे । विवाहस्य विशेषणं तु विवाहादेव पुत्रादीनां लाभशापनाय । चकारस्त्वर्थः अन्यत्रप्राप्तपित्रादिक्रमव्यवच्छेदाय । नान्दीमुखपदस्य श्राद्धपरत्वेऽनेकवचनप्राप्तपितृपूर्वकाभिलापबाधापत्तेः, वाक्यभेदापत्तेश्च । एतदिति प्रपितामहपूर्वकं वाक्यम् । तच्च ऋष्यशृङ्गवचनात् कन्यानामान्तमिति, न तु संप्रददे ददानि वेत्यन्तम्, 'सकृदंशो निपतति सकृत्कन्या प्रदीयते । सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥' इति मनुवचनात्, 'वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम् । मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते ॥' इति बृहस्पत्युक्तेश्च ।

† उत. १४५

## ज्योतिःसारसमुच्चये

दिवा कन्यादाननिषेधः

[1]विवाहे तु दिवाभागे कन्या स्यात् पुत्रवर्जिता ।
विवाहानलदग्धा सा नियतं स्वामिघातिनी ॥

## धर्मप्रवृत्तौ

दिङ्नियमः

[2]प्रत्यङ्मुखीं प्राङ्मुखस्तां स्थितामात्मसमीपतः ॥

## ज्योतिर्निबन्धे

विवाहे रात्रौ स्नानदानानुमतिः

[3]राहुपर्वणि विवाहकर्मणि
स्थापने दिविषदां सुतोत्सवे ।
संक्रमे व्रतविधौ न निन्दिता
स्नानदानविषये विभावरी ॥

† संत. उतगतम् ।

(१) संत. ८९१; उत. १४१–१४२ ज्योतिःसारसंग्रहे.

(२) संग. २६०. (३) संग. २२६.

## सुप्रभेदे

गोत्रनामोच्चारणम् उदकदानं च

[1]तयोर्गोत्रं च नामं(? नाम च गोत्रं) च पूर्व-
मुच्चार्य बुद्धिमान् ।
दत्त्वोदकं तु तद्धस्ते पिता भ्राताऽथ मातुलः ।
दानमेतदिति प्रोक्तं विसंवादे तु पूर्ववत् ॥
* पुनस्तोयं तु दातव्यं प्रदातुश्च पुनः करे ।
एवं पुनर्जलादानं विवाहे शृणु सुव्रत ॥

## शाकलकारिकाः

कन्यादानाक्षतारोपणनिरीक्षणानां मतभेदेन

मुहूर्तसंबन्धः , कन्यादानप्रयोगः

[2]ज्योतिःशास्त्रविदुक्ते तु दानमिच्छन्ति
केचन ।
अक्षतारोपणं केचिदन्योन्यमवलोकयेत् ॥
ततश्चोपविशेत् कर्ता प्राणायामं समाचरेत् ।
अद्य ब्रह्मण आरभ्य सुसंकल्पं यथाविधि ॥
पितॄणामात्मनश्चैव सर्वपापनिवृत्तये ।
ब्रह्मलोकनिवासार्थं कन्यादानं विधीयते ॥
कन्यां कनकसंपन्नां यथाशक्त्या विभूषिताम् ।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥
विश्वंभरः सर्वभूतसाक्षिण्यः सर्वदेवताः ।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥
श्रीरूपैषा मया कन्या तुभ्यं श्रीधररूपिणे ।
इत्युक्त्वोदकपूर्वां तां दत्त्वा स्वस्तिपदं वदेत् ॥
उच्चरेत् पूर्ववन्नाम कन्यकागोत्रपूर्वकम् ।
नारायणस्वरूपाय कन्यां दद्यात् सुपूजिताम् ॥
धर्मे चार्थे च कामे च नातिचरितव्या त्वया ।
वरो नातिचरामीति त्रिवारं सुनिवारयेत्
(? समुदीरयेत्) ॥

---

* 'पुनस्तोयं तु' इति वचनान्तरेण व्यवधाय गृहीतम् ।

(१) सस्मृ. ५६.

(२) शाका. १२२ पृ. १३, १३०-१३६ पृ. १४-१५.

## शौनककारिकाः

कन्यादानप्रयोगः , अनुदानानि

[1]तत्र प्रदेशे कस्मिंश्चित्तद्वन्धुपरिकल्पिते ।
विष्टरे प्राङ्मुखः सम्यगासित्वा चरणौ
स्वयम् ॥

[2]प्रक्षाल्याऽऽचम्य च कृतप्राणायामः समाहितः ।
उपलिप्य तथोल्लिख्य स्थण्डिलेऽग्निं निधाय
च ॥

[3]पश्चादग्नेः प्रतिष्ठाप्य पेषणीमश्मनिर्मिताम् ।
प्रागुत्तरेऽग्नेः संस्थाप्य पूर्णकुम्भमथो वरः ॥

[4]उत्थाय प्राङ्मुखः स्थित्वा प्रत्यगुत्तरतोऽ-
नलात् ।
तदानीमात्मना दत्तं नूतनं वसनद्वयम् ॥

[5]वसित्वाऽऽचान्तसलिलां भूषितां कुसुमा-
दिभिः ।
प्रत्यङ्मुखः प्राङ्मुखीं तां स्थितामात्मसमी-
पतः ॥

---

(१) शौका. ३ पृ. ५९ ; प्रपा. ३५५ ; संप्र. ८२६ तद्वन्धुप (बन्धुभिः प) ; विपा. ३८ (भागः २).

(२) शौका. ४ पृ. ५९ ; प्रपा. ३५५ ; संप्र. ८२६ तथोल्लिख्य (ततोल्लिख्य) ; विपा. ३९ (भागः २) ; संकौ. २१९ उत्त.

(३) शौका. ५ पृ. ५९ तृतीयपादे (अग्नेः प्रागुत्तरे स्थाप्य) ; प्रपा. ३५५ पेषणी (पाषाणी) ; संप्र. ८२६ ; विपा. ३९ (भागः २) ; संकौ. २१९ द्वितीयपादे (पेषणी भस्मनिर्मिता).

(४) शौका. ६ पृ. ५९ ; प्रपा. ३५५ ; संप्र. ८२६; विपा. ३९ (भागः २) ; संकौ. २१९ ऽनलात् (जलात्).

(५) शौका. ७ पृ. ५९ न्तसलिलां (न्तः सलिलं) ; प्रपा. ३५५ सलिलां (सलिलो) ; संप्र. ८२६ : ८२९ उत्त. ; विपा. ३९ (भागः २) ; संकौ. २१९.

[1]कन्यकां प्रतिगृह्णीयाद्दत्तां पित्रादिभिर्वरः ।
कन्यादानप्रकारश्च पूर्वाचरित उच्यते ॥
[2]वरस्याभिमुखः स्थित्वा कन्यायाः प्रतिपादकः ।
चतुर्थ्यन्तं वरस्योक्त्वा नाम तद्गोत्रपूर्वकम् ॥
[3]ततः सहत्वकर्मभ्य इत्युच्चार्य ततः परम् ।
पादयामीति चोच्चार्य प्रतिपूर्वं ततः परम् ॥
[4]वरस्य हस्तेऽपो दद्याद्देवतीर्थेन शान्तधीः ।
तद्यथा गार्ग्यगोत्राय परमेश्वरशर्मणे ॥
[5]आत्रेयगोत्रप्रभवां पार्वतीं प्रददाम्यहम् ।
कन्यां सहत्वकर्मभ्यः करोति प्रतिपादिताम् ॥
[6]कन्यकादानकर्मैवमाचरन्ति मनीषिणः ।
विभवानुगुणं क्षेत्रं सुवर्णरजतादिकम् ॥
[7]सर्वं विहितमत्रैव कालेऽन्यत्तु सहोदकम् ॥

(१) शौका. ८ पृ. ५९ वरः (नरः); प्रपा. ३५५; संप्र. ८२६ गृह्णीयात् (गृह्णीत) : ८२९ गृह्णीयात् (गृह्णीत) पू.; विपा. ३९ (भागः २); संकौ. २१९ प्रतिगृह्णीयात् (अभिगृह्णाति).

(२) शौका. ९ पृ. ५९; प्रपा. ३५५; संप्र. ८२६; विपा. ३९ (भागः २) भिमुखः (भिमुखं).

(३) शौका. १० पृ. ५९; प्रपा. ३५५; संप्र. ८२६ पू.; विपा. ३९ (भागः २) यामीति (गामिति) प्रति (प्रीति).

(४) शौका. ११ पृ. ५९ हस्तेऽपो (हस्तेऽसौ); प्रपा. ३५५ शौकावत्; संप्र. ८२६; विपा. ३९ (भागः २) हस्तेऽपो (हस्ते यो); संकौ. २१९ उत्त.

(५) शौका. १२ पृ. ५९; प्रपा. ३५५; संप्र. ८२६; विपा. ३९ (भागः २) करोति (करोमि); संकौ. २१९ प्रतिपादिताम् (प्रतिपादनम्).

(६) शौका. १३ पृ. ५९; प्रपा. २५५ कन्यकादान (कन्यादाने च) सुवर्णर (सुवर्ण र); संप्र. ८२६; विपा. ३९–४० (भागः २).

(७) शौका. १४ पृ. ५९; प्रपा. ३५५; संप्र. ८२७ वचनं मध्ये त्रुटितम्; विपा. ४० (भागः २) कालेऽन्यत्तु (काले दद्यात्).

(१) अत्र कौतुकबन्धनाग्निप्रतिष्ठादौ तु गृह्यपरिशिष्टकारशौनकोक्तवाक्ययोर्विरोधे परिशिष्टोक्तमेवानुसंधेयम्, आचार्येणोक्तत्वात्। प्रपा. ३५५

(२) अत्राग्निप्रतिष्ठापनोत्तरमन्वाधानात् पूर्वं कन्यादानमिति प्रतीयते। जयन्तस्त्वाह– 'आज्यसंस्कारान्तं कृत्वा परिहितधौताभिनववासोयुगुलामाचान्तामलङ्कृतामभिहितस्वस्त्ययनां कुमारीमग्निसमीपमानयन्ति। ततो वरोऽप्युत्थाय प्राङ्मुखः स्थित्वोदकपूर्वां कन्यां प्रतिगृह्य तस्मिन्नेवाऽऽसने उपविशति। अथवा पूर्वमेवोदकपूर्वां कन्यां प्रतिगृह्य तामात्मनः समीपे कृत्वा दक्षिणत उपवेश्योपलेपनादि प्रक्रमते' इति। * संकौ. २१९

दिङ्नियमः

[1]ततश्चोदङ्मुखस्तिष्ठेत्सभार्यः कन्यकापिता ।
प्राङ्मुखाय स्थितायाथ कन्यां दद्याद्वराय वै ॥

## कुमारिलकारिकाः

पित्रादिक्रमेण पुरुषत्रयस्योच्चारणम्, कन्यादानप्रयोगः, कन्यावरविशेषणानि, अनुदानानि, दानमन्त्राः

[2]वरेणैवं वृतां कन्यां तत्पिता प्रददाति ताम् ॥
[3]पुत्रायास्य च पौत्राय नप्त्रेऽस्यामुकगोत्रिणे ।
असा अमुकगोत्रस्य पुत्री पौत्र्यस्य नप्त्रिका ॥

* शेषं प्रपावत्।

(१) धप्र. ४७; संग. ६० पू., धर्मप्रवृत्तौ.

(२) कुका. १।२०१४; प्रपा. ३५३; संप्र. ८२५ आश्वलायनकारिका; संकौ. २१९ णैवं (णैव).

(३) कुका. १।२०१५ नप्त्रेऽस्या (नप्त्रे चा) उत्तरार्धे (असा अमुकगोत्राय पुत्रीं पौत्रीं प्रपौत्रिकाम् ॥); प्रपा. ३५३ चतुर्थपादे (पुत्रीं पौत्रीं च नप्तृकाम्); संप्र. ८३०; आप्र. ३१२ पू.; लता. २५७ च पौत्राय (प्रपौत्राय) गोत्रस्य पुत्री (गोत्राय पुत्रा); संकौ. २१९ च पौत्राय (प्रपौत्राय) उत्तरार्धे (पुत्रस्यामुकगोत्रीयाऽस्य प्रपौत्र्यस्य नप्त्रिका ॥); संग. २६१ गोत्रिणे (शर्मणे) गोत्रस्य (गोत्राय) पौत्र्यस्य (पौत्र्यथ).

(१) यत्तु पुत्रायास्य इति कारिकायामानुलोम्यक्रमोऽभिहितः स पूर्वोक्तवृद्धवसिष्ठादिवाक्यविरुद्धत्वान्मूलानुपलब्धेश्च चिन्त्यः। $ संप्र. ८३०

(२) कारिकायास्तु पुरुषेयत्तायामेव तात्पर्यम्, न पित्रादिक्रमे, बहुग्रन्थविरोधात्। ¶ संकौ. २२०

[1]श्रीरूपैषा मया दत्ता तुभ्यं श्रीधररूपिणे।
इत्युक्त्वोदकपूर्वां तां दत्त्वा स्वस्तिपदं वदेत्।
वरोऽथ प्रतिगृह्णीयात् स्पृशेत् क इति मन्त्रतः॥
[2]अस्मिन्नहनि यत्किंचित् कन्यादाता ततः परम्।
गोभूहिरण्यदास्यादि तस्मै दद्यात् स्वशक्तितः॥

अथ गोभूहिरण्यादिना वरपरितोषमावहति करोतीति व्युत्पत्त्या आवहनी नाम पारितोषिकी क्रिया। आवहन्याम् अधि अध्यावहनीति विभक्त्यर्थेऽव्ययीभावः। प्रपा. ३५३

[3]* कन्यां कनकसंपन्नां कनकाभरणैर्युताम्।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया॥
विश्वंभरः सर्वभूताः साक्षिण्यः सर्वदेवताः।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च॥
गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम्।
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय॥
कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः।
कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम्॥
स्नातां नवाम्बरोपेतां कटकादिविभूषिताम्।
अवर-प्रत्त-वसन-परिधानां कुमारिकाम्॥
उक्तस्वस्त्ययनां दद्याज्जलपूर्वं वराय ताम्।
उक्तस्वस्त्ययनः स्थित्वा प्राङ्मुखं परिगृह्य ताम्॥

## कपर्दिकारिकाः

जलपूर्वकं दानम्

$[1]संगताय वराय समर्पिते (? र्प्यते)
स्वामिना तु वधूर्जलपूर्वकम्॥

## रेणुकारिकाः

कन्यादानप्रयोगः

[2]अधिकारी सपत्नीको दम्पत्योरुपविष्टयोः।
जलेशदिङ्मुखीं दद्यात् प्राङ्मुखाय प्रयोगतः॥

---

$ आप्र., लता., संग. संप्रवत् तात्पर्यम्।

¶ शेषं संप्रवत्तात्पर्यकम्।

* आदर्शपुस्तके 'स्नातालङ्कृतकन्यायाः' इत्यारभ्य 'त्वद्दानान्मोक्षमाप्नुयाम्' इत्यन्ताः निरीक्षणवरणकन्यादानाक्षतारोपणतिलककरणमाल्यारोपणहोमदेशगमनविषयकास्त्रयोविंशतिः श्लोकाः प्रक्षिप्तत्वेन, 'स्नातां नवाम्बरोपेताम्' इत्यादी श्लोकौ च कुमारिलोपज्ञत्वेन मुद्रिताः। सेयं क्षिप्तत्वाक्षिप्तत्वकल्पना प्रामादिकीत्यवगम्यते। तथाहि— प्रक्षिप्तत्वाभिमतश्लोकेषु एकोनविंशतिः श्लोकाः पारिजातादिप्राचीनमहानिबन्धधृतत्वात् कारिकाग्रन्थस्वरूपानुगुणप्रयोगप्रपञ्चवत्त्वाच्च न प्रक्षेपकल्पनामर्हन्ति। 'कन्यां कनक०' इत्यादयश्चत्वारः श्लोकमन्त्राः कन्यादानविषयकाः अक्षतारोपणादिप्रकरणैः कन्यादानप्रकरणाद्विच्छिन्नत्वात् पारिजातादिभिः कुमारिलकारिकाप्रघट्टके अधृतत्वाच्च प्रक्षिप्ता भवितुमर्हन्ति। तत्राऽऽद्यौ वायवीयौ तृतीय ऋष्यशृङ्गस्य, चतुर्थो व्यासस्य। 'स्नातां नवाम्बरोपेताम्' इत्यादि श्लोकद्वयमपि सकलप्रयोगानभिधानात् पारिजातादिभिरधृतत्वाच्च प्रक्षिप्तमेवेति युक्तं कल्पयितुम्। आनन्दाश्रमपुस्तकेऽप्यसदुक्तैव व्यवस्था तदादर्शपुस्तकेभ्यो निष्पन्नाऽङ्गीकृता।

$ इदं मधुपर्कात्पूर्वमापस्तम्बीयानाम्। हरदत्तस्तु मधुपर्कोत्तरमुक्तवान्।

(१) कुका. १।२०१६–७ प्रथमपादे (श्रीरूपां च मया दत्तां) दत्त्वा (दद्यात्); प्रपा. ३५३; संकौ. २१९ रूपैषा (रूपेयं) दत्त्वा (दद्यात्) वदेत् (पठन्); कृभ. ११३७ (=) तृतीयार्धमात्रम्.

(२) कुका. १।२०१७–८; प्रपा. ३५३ अस्मिन्नहनि (अध्यावहनि) दास्यादि (दास्यादीन्).

(३) कुका. १।२०।२०–१।२१।२.

(१) कका. २।१.

(२) रेका. १८५–१८७ पृ. ६१.

अन्यशाखासु वाक्येषु प्रतिकूलेषु सत्स्वपि ।
नित्यस्य श्रुतिमूलस्य शिष्टाचारस्य दर्शनात् ॥

स्रुग्व्यूहनश्रुतेरत्र पक्षे पक्ष्यात् परीत्य च ।
अभिप्रायान् विचार्यैवं विधिरेष स्फुटीकृतः ॥

[1]कांस्येऽविच्छिन्नया वारिधारया स्त्रीप्रदत्तया ।
वत्सगोत्रां त्रिप्रवरां प्रपौत्रीं विष्णुशर्मणः ॥

[2]मुरारिशर्मणः पौत्रीं पुत्रीं केशवशर्मणः ।
पराशरसगोत्राय प्रवरायेशशर्मणे ॥

(१) रेका. १८८ पृ. ६१; संग. २६० पू., विधानपारिजातके.

(२) रेका. १८९–१९१ पृ. ६१–६२.

प्रपौत्रायाथ पौत्राय पुत्रायामुकशर्मणे ।
यज्ञेशशर्मणे तुभ्यं गौरीं सालङ्कृतामिमाम् ॥
लक्ष्मीनाम्नीमहं संप्रददे पुष्पाक्षतैर्युताम् ।
वरहस्ते निषिञ्चेत्तु प्रदत्तं भार्यया जलम् ॥
[1]ध्यायेद्विश्वेश्वरं देवमीश्वरः प्रीयतामिति ।
ओं स्वस्तीति वरो ब्रूयाद्धर्मे चेति वधूपिता ॥
[2]धर्मे चार्थे च कामे च नातिचरितव्या त्वया ।
वरोऽपि बाढमित्युक्त्वा द्यौस्तेत्यभि
(? द्यौस्ते अभि )मृशेद्वधूम् ॥

(१) रेका. १९२ पृ. ६२; संग. २६० उत्त., विधानपारिजातके : २६१ (=) उत्त.

(२) रेका. १९३ पृ. ६२; संग. २६१ (=) पू.; संर. ४०७ (=).

# पाणिग्रहणाव्यवहितपूर्वकृत्यम्

## आश्वलायनगृह्यपरिशिष्टम्

अक्षतारोपणम् , अनुदानानि, अभिषेकः , तिलककरणम् , मालारोपणम् , कङ्कणबन्धनम् , पूगफलबन्धनम् , उत्तरीयान्तबन्धनम् , ज्ञातिकर्तृकमक्षतारोपणम्

[1]अथानयोरार्द्राक्षतारोपणम् । तैजसेन पात्रेण क्षीरमानीय घृतमासिच्यान्येनाऽऽर्द्राक्षततण्डुलानोप्य तथा स्थितयोर्वधूवरयोर्वर्धनकमेतत् कारयेयुः । अमृतं क्षीरमायुर्घृतमरिष्टमक्षता अप (? अथ) एतेषामारोपणमिष्यते । वरः प्रक्षालितपाणिर्वध्वाः प्रक्षालितेऽञ्जलौ क्षीरघृतं पाणिना द्विरुपस्तीर्य द्विस्तण्डुलानञ्जलिनाऽऽवपति यथा पूर्येत । ततो द्विरुपरिष्टादभिघारयति । एवं वराञ्जलावन्यस्तण्डुलापूरणं कुर्यात् । दाता तयोरञ्जल्योर्हिरण्यमवदधाति । अथ वरः कन्याञ्जलौ स्वाञ्जलिं धारयेत् । दाता 'कन्या तारयतु, दक्षिणाः पान्तु, बहु देयं चास्तु, पुण्यं वर्धताम्, शान्तिः पुष्टिस्तुष्टिश्चास्तु, तिथिकरणमुहूर्तनक्षत्रसंपदस्तु' इत्युक्त्वा कन्यामुत्क्षिप्य तदञ्जल्यक्षतान् वरमूर्ध्न्यारोपयेत् । वरोऽपि तन्मूर्ध्नि स्वाञ्जल्यक्षतानारोपयेत् । एवं त्रिर्वधूपूर्वम् । वराञ्जलौ वधूस्तण्डुलपूरणं कुर्यात् । तदञ्जलावन्यः । अथ समारोपणं कारयेत् । इदानीं दाता वराय गोभूमिदासीयानशयनमन्नादिकमनुदानं दद्यात् । अथ पुरोधाः कांस्ये पय आसिच्यौदुम्बर्याऽऽर्द्रया शाखया सपलाशया सहिरण्यपवित्रया सदूर्वापवित्रयाऽभिषिञ्चेदब्लिङ्गाभिर्ऋग्भिः । अथ वधूवरौ स्वशेखरपुष्पं क्षीरघृतेनाऽऽप्लाव्य परस्परतिलकं कुरुतः, कण्ठे स्रजं चाऽऽमुञ्चतः, कौतुकसूत्रं च करे बध्नीयाताम् । अथ पुरोधास्तयोरुत्तरीयान्तयोः पञ्च पूगफलानि विवाहव्रतरक्षिणं गणाधिपमनुस्मृत्य 'गणानां त्वा गणपतिं हवामहे' इति 'आ तू न इन्द्र क्षुमन्तम्' इति च वधूवरयोरुत्तरीयान्तौ च 'नीललोहितं भवति' इति बध्नीयात् । अथ दाता सभार्यो वृद्धाः पुरन्ध्र्यो ज्ञातिबान्धवाश्च क्रमादाशीर्भिरार्द्राक्षतारोपणं कुर्युः ॥

---

(१) आगृप. १।२४ तण्डुलानोप्य ( तण्डुलानथ ) बहु देयं ( बहुधेयं ) ; प्रपा. ३५४–३५५ मानीय ( मादाय ) सिच्यान्येना ( सिच्य पात्रान्तरेणा ) तण्डुलानोप्य ( तण्डुलानथ ) ष्टमक्षता ( ष्टाक्षता ) लापूरणं ( लपूरणं ) मुत्क्षिप्य ( मुद्धृत्य ) मूर्ध्नि ( मूर्धनि ) न्नादिकमनु ( न्नादीनामनु ) सदूर्वापवित्रया ( सदूर्वापल्लवया ) परस्परतिलकं ( परस्परं तिलकं ) सूत्रं ( सूत्रकं ) ; संप्र. ८२८–८२९ च्यान्येनाऽऽर्द्राक्ष ( च्याऽऽर्द्रानक्ष ) पूर्येत ( पूर्यते ) धारयति ( धारयेदिति ) लापूरणं ( लपूरणं ) दाता तयोरञ्जल्योः ( अथ दाताऽञ्जलौ ) धारयेत् + ( अथ ) त्रिर्वधूपूर्वम् ( त्रिर्वधूपूर्वकम् ) अथ समारोपणं ( अथ सप्तमं वधूपूर्वमारोपणं ) गोभूमि ( गोभू ) कांस्ये पय ( कांस्येऽप ) र्द्रया शाखया ( र्द्रशाखया ) पवित्रयाऽभि ( पल्लवया नि ) परस्परतिलकं ( परस्परस्य तिलकं ) पञ्च पूग ( पञ्चपञ्च पूगी ) च वधूवरयोरुत्त ( च बद्ध्वोत्त ) ; विपा. ४४–४५ ( भागः २ ) रोपणम् + ( ब्राह्मणाः ) मानीय ( मादाय ) आसिच्यान्येन ( आसिच्य पुरन्ध्र्यादिभिः ) लानोप्य तथा ( लानादाय तदारोपणरूपं तथा ) क्षता अप ( क्षतान्याप ) मिष्यते । + ( ततो ) दाता कन्या तार ( दाता च कन्यां धार ) वधूपूर्वम् । वराञ्जलौ वधूः ( वधूः पूर्वं वराञ्जलौ ततस्त्रिर्वरः वध्वञ्जलौ ) अथ समा ( अथ तत्समा ) शयनमन्नादि ( शयनान्नादि ) पय ( अप ) र्द्रया शाखया ( र्द्रशाखया ) दूर्वापवित्रया ( दूर्वाम्रपल्लवया ) सूत्रं च + ( परस्परं ) पञ्च + ( पञ्च ) भवति' इति + ( मन्त्रेण ) पुरन्ध्र्यो ( पुरन्ध्रयो ).

## कौषीतकिगृह्यसूत्रम्

कन्यायाः कौतुकगृहप्रवेशः, देशकुलधर्मानुष्ठानम्, वासोदानम्, समञ्जनम्, शलल्यादर्शदानम्, प्रतिसरबन्धनम्, मधूकबन्धनम्

[1]स्नातं कृतमङ्गलं वरमविधवाः सुभगा युवत्यः कुमार्यै वेश्म प्रपादयन्ति ॥

तासामप्रतिकूलः स्यादन्यत्राभक्ष्यपातकेभ्यः ॥

ताभिरनुज्ञातोऽथास्यै वासः प्रयच्छति –'रैभ्यासीत्' इति ॥

'चित्तिरा उपबर्हणम्' इत्याञ्जनकोशमादत्ते ॥

'समञ्जन्तु विश्वे देवाः' इति समञ्जनीया ॥

'यथेयं शचीं वावातां सुपुत्रां च यथाऽदितिम्। अविधवां चापालामेवं त्वामिह रक्षतादिमम् ॥' इति दक्षिणे पाणौ शलल्लीं त्रिवृतं ददाति ॥

'रूपं रूपम्' इत्यादर्शं सव्ये ॥

रक्तकृष्णमाविकं क्षौमं वा त्रिमणिं प्रतिसरं ज्ञातयोऽस्या बध्नन्ति– 'नीललोहितम्' इति ॥

'मधुमतीरोषधीः' इति मधूकानि बध्नाति ॥

वरः स्नातः कृतलौकिकमङ्गलः सितचन्दनानुलिप्तः सितमाल्याम्बरधरो धृतगोरोचनः कृतपुण्याहवाचनो भूत्वा स्वगृहात् श्वशुरगृहमागत्योपलेपनोल्लिखनाद्याघाराज्यभागान्तं निर्विकल्पं करोति। ततः अविधवाः सुभगाः सुरूपास्तरुण्यो याः कन्यासख्यस्ता वरं गृहीत्वा कुमार्यै दर्शनाय कौतुकसंज्ञं गृहं प्रवेशयन्ति। ताश्चाभक्ष्यपातकानि मुक्त्वा यत् प्रेरयन्ति तत् कर्तव्यम्, यद्भाषयन्ति तद्भणितव्यम्। ततस्ताभिरनुज्ञातः 'रैभ्यासीदनुदेया' इत्यनेन मन्त्रेण कन्यायै वासः प्रयच्छति। 'चित्तिरा उपबर्हणम्' इत्यनेन मन्त्रेणाञ्जनभाण्डं गृह्णाति। ततः 'समञ्जन्तु विश्वे देवाः' इत्यनेन मन्त्रेणाक्षीणि(?क्षिणी) अञ्जयति। प्रथमं दक्षिणं ततः सव्यम्। मन्त्रश्चाऽऽवर्तते। ततः 'यथेयं शचीं वावातां सुपुत्रां च यथाऽदितिम्। अविधवां चापालामेवं त्वामिह रक्षतादिमम् ॥' इत्यनेन मन्त्रेण दक्षिणे पाणौ त्रिःश्वेतां शलल्लीं ददाति। 'रूपं रूपं प्रतिरूपो बभूव' इत्यनेन मन्त्रेण सव्ये पाणावादर्शं ददाति। ततो 'नीललोहितं भवति' इत्यनेन मन्त्रेण ऊर्णामयमतसीमयं वा क्वचिद्रक्तं क्वचित् कृष्णं ग्रथितमणित्रयं ग्रीवासूत्रकं कन्याया ज्ञातयो भ्रातृपितृव्यादयो ग्रीवायां बध्नन्ति। अपरे व्याचक्षते। आजानु लम्बीकर्तव्यः। ततो 'मधुमतीरोषधीर्द्याव आपः' इत्यनेन मन्त्रेण मधुकुसुमानि ग्रीवायां त्वेवमेव बध्नाति। वासोदानादारभ्य ग्रीवासूत्रकं वर्जयित्वा शेषं जामाता करोति। पृ. १०, ११

†'अपरे त्वागतमात्रस्यैव जामातुर्मधुपर्कं कृत्वा कन्यां दत्त्वा ततः कौतुकगृहं प्रवेशयन्ति। अन्यतरेण पक्षेण यथोक्तं कर्म कृत्वा। कौगृसं. १३

(१) कौगृ. १।१२।१–९.

† गृह्यसंग्रहे वरस्य कौतुकगृहप्रवेशनम्, वासःप्रदानादिमधूकबन्धनान्तम्, मधुपर्कः, कन्यादानमित्येवं क्रमः पूर्वमुक्तः।

## आपस्तम्बगृह्यसूत्रम्

रोदननिमित्तको जपः, वधूस्नापनम्, परिधापनम्, योक्त्रबन्धनम्

[1]प्राप्ते निमित्त उत्तरां जपेत् ॥

(१) वध्वाः स्वबन्धूनां च रोदनं निमित्तम्, 'जीवां रुदन्ति' इति लिङ्गात्। उत्तरामृचं 'जीवां रुदन्ति' इत्येताम्। सर्वत्र समावेशनान्ते विवाहकर्मण्यस्मिन्निमित्तेऽयं जपो भवति। निमित्तावृत्तौ मन्त्र आवर्तते। अनाकुला.

(२) 'जीवां रुदन्ति' इति मन्त्रलिङ्गानुरूपे निमित्ते प्राप्ते मात्रादिभिः कन्यकया वा अन्योन्यवियोगचिन्तया रोदने कृत इमामृचं जपेत्। ताद.

(१) आपगृ. ४।६–८.

**युग्मान् समवेतान् मन्त्रवत उत्तरयाऽद्भ्यः प्रहिणुयात् ॥**

(१) वधूस्नापनार्थानामपामाहरणमुत्तरयर्चा 'व्युक्षत्क्रूरम्' इत्येतया। मन्त्रवतः श्रुतवतः प्रहिणुयात् प्रस्थापयेत्। 'तथा मङ्गलानि' इत्येव सिद्धे युग्मवचनं पञ्चभिर्मन्त्रैः स्नापनं वक्ष्यति, तत्र प्रतिमन्त्रं स्नापनावृत्तिः। तत्र च स्नापनस्यायुग्मत्वात् तदर्थानामुदकुम्भानामप्ययुग्मत्वं स्यात्। एवमाहर्तॄणां ब्राह्मणानामपि। अतो युग्मानित्युच्यते। तेन प्रतिमन्त्रं कुम्भभेदः प्रतिकुम्भं ब्राह्मणभेदश्च सिद्धो भवति। तत्र यदि चत्वारः कुम्भाः, चतुर्थेन कुम्भेन चतुर्थपञ्चमाभ्यां मन्त्राभ्यामभिषेकः। यदा त्वष्टौ तदा प्रतिमन्त्रं पञ्चभिः, तूष्णीमितरैः। समवेतवचनमुदकाहरणे सह प्रवृत्त्यर्थम्। मन्त्रवत इति ब्राह्मणानां ग्रहणम्, 'आस्यै ब्राह्मणाः' इति मन्त्रे दर्शनात्। अनाकुला.

(२) युग्मान् समसंख्याकान्। समवेतान् मन्त्रवत इति पूर्ववत्। उत्तरया 'व्युक्षत्क्रूरम्' इत्येतया प्रैषत्वादुच्चैः प्रयुक्तयाऽद्भ्यः प्रहिणुयात् वधूस्नापनार्था अप आहर्तुं प्रेषयेत्। एते च ब्राह्मणा एव, 'आस्यै ब्राह्मणाः' इति मन्त्रलिङ्गात्। ते च ब्राह्मणा यास्वप्सु पुरुषाः स्नानादिषु पूर्वे न मृताः ताभ्यस्तृणावकाद्यपनीयाप आनयन्ति, 'अवीरघ्नीः' इति मन्त्रलिङ्गात्। ताद.

**उत्तरेण यजुषा तस्याः शिरसि दर्भेण्वं निधाय तस्मिन्नुत्तरया दक्षिणं युगच्छिद्रं प्रतिष्ठाप्य छिद्रे सुवर्णमुत्तरयाऽन्तर्धायोत्तराभिः पञ्चभिः स्नापयित्वोत्तरयाऽहतेन वाससाऽऽच्छाद्योत्तरया योक्त्रेण संनह्यति ॥**

(१) ततस्तैरप्स्वाहृतासु तस्या वध्वाः शिरसि दर्भेण्वं दर्भैः परिकल्पितं मण्डलमुत्तरेण यजुषा 'अर्यम्णो अग्निम्' इत्यनेन निधाय, तस्मिन् इण्वे उत्तरया 'खेऽनसः' इत्यनया दक्षिणं युगच्छिद्रं दक्षिणस्या युगधुरो बाह्यच्छिद्रं प्रतिष्ठाप्य, तस्मिन् छिद्रे सुवर्णमुत्तरयर्चा 'शं ते हिरण्यम्' इत्येतयाऽन्तर्धाय, ताभिरद्भिस्तामुत्तराभिः पञ्चभिः 'हिरण्यवर्णाः' इत्येताभिः प्रतिमन्त्रं स्नापयति। कथं पुनश्छिद्रस्यान्तर्धानेन स्नापनं संभवति? तथाऽन्तर्धानं कुरुते यथोदकमवस्रवति। ततस्तामुत्तरयर्चा 'परि त्वा गिर्वणो गिरः' इत्येतयाऽहतेन वाससाऽऽच्छादयति स्वयमेव मन्त्रमुक्त्वा परिधापयति। आच्छाद्याऽऽचमय्य उत्तरयर्चा 'आशासाना' इत्येतया योक्त्रेण संनह्यति। 'ऊर्ध्वज्ञुमासीनाम्' (आपश्रौ. २।५।२) इत्यादिदार्शपौर्णमासिको विशेष इहेष्यते। अनाकुला.

(२) दर्भेण्वम्, दर्भैः परिकल्पितमिण्वं निगलाकृतिं परिमण्डलाकारमित्यर्थः। तदुत्तरेण यजुषा 'अर्यम्णो अग्निम्' इत्यनेन वध्वाः शिरसि निधाय, तस्मिन्निण्वे वर उत्तरया 'खेऽनसः' इत्येतया दक्षिणं युगच्छिद्रं युगस्य दक्षिणं छिद्रं दक्षिणस्या धुरो बाह्यच्छिद्रं प्रतिष्ठाप्य, छिद्रे सुवर्णमुत्तरया 'शं ते हिरण्यम्' इत्येतयाऽन्तर्धाय, उत्तराभिः 'हिरण्यवर्णाः शुचयः पावकाः, प्रचक्रमुर्हित्वा' इत्यादिभिः पञ्चभिः ऋग्भिः स्नापयति। एतच्च पञ्चानामन्ते सकृदेव, 'वचनादेकं कर्म बहुमन्त्रम्' (आपप. १।४७) इत्युक्तत्वात्। एवं सर्वत्र एवंविधेष्वन्नप्राशनादिषु। केचित् पञ्चभिरिति वचनात् प्रतिमन्त्रमिति। तन्न, तिसृभ्योऽवशिष्टयोर्विकल्पनिवृत्त्यर्थत्वादस्य। इतरथा क्रियाभ्यावृत्तिवाचकप्रत्ययाश्रुतेः गुणार्थं प्रधानस्नानाभ्यावृत्तिकल्पनापत्तिः, प्रयुक्तिगौरवं च। उत्तरया 'परि त्वा गिर्वणो गिरः' इत्येतया अहतेन अनिवसितेन वाससा परिधाप्य, द्विराचमय्य उत्तरया 'आशासाना सौमनसम्' इत्येतया योक्त्रेण संनह्यति। कृत्स्नविधानं चेदम्। केचित्— ऐष्टिकसंनहनविधिप्रदर्शनार्थमिति। ताद.

## भारद्वाजगृह्यसूत्रम्

वध्वाः स्नापनं वासःपरिधापनम् अभिमन्त्रणं च

**'तत आह स्नापयतैनामिति। स्नातायै वाससी प्रयच्छति— 'या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितोऽददन्त। तास्त्वा**

(१) भागृ. १।१३.

**देवीर्जरसे संव्ययन्त्वायुष्मतीदं परिधत्स्व वासः ॥' इति । अथैनां परिधापयति— 'परिधत्त धत्त वाससैनां शतायुर्षीं कृणुत दीर्घमायुः । बृहस्पतिः प्रयच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ ॥ जरां गच्छासि परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावती । शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्व ॥' इति । परिहितामभिमन्त्रयते— 'परीदं वासो अधिधाः स्वस्तयेऽभूरापीनामभिशस्तिपावती । शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवति ॥' इति ॥**

## काठकगृह्यसूत्रम्

उदकाहरणम्, वध्वाः स्नापनं वासःपरिधापनं योक्त्रसंनहनं च, देशकुलाचारानुष्ठानम्

**[१] 'अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम् । समर्यमा सं भगो नो निनीयात्सं जास्पत्यं सुयममस्तु देवाः ॥' इत्युदाहारं प्रहिणोति ॥**

(१) 'अनृक्षराः' इत्यादिमन्त्रेण गृहीतजलभाण्डमुदकस्य आहर्तारं प्रेषयति कन्यास्नानाद्युपयोगि जलमानेतुं पुरुषं प्रहिणोतीत्यर्थः । ऋगर्थस्तु— ब्रह्मण आर्षं सूर्यस्य वा । त्रिष्टुप् । पन्था इति व्यत्ययेनैकवचनम् । ऋक्षराः कण्टकादयः परुषास्तृणविशेषाः, न विद्यन्ते ऋक्षराः येषु ते अनृक्षराः पन्थानः सन्तु, ऋजवश्च अकुटिलाः । येभिः यैः नः अस्माकं संबन्धिनः (सखायः) सहायाः वरेयं वरणीयं गङ्गादिकं जलाहरणस्थानं यन्ति गच्छन्ति । सखायः इति व्यत्ययेन बहुवचनम् । किंच, अर्यमा आदित्यः भगश्च नः अस्माकं संबन्धिनं सखायं संनिनीयात् सम्यगुदकस्थानं प्रापयेत् । हे देवाः ऋत्विक्प्रभृतयः आदित्यप्रभृतयश्च, युष्मत्प्रसादात् जास्पत्यं जायायाः पत्युश्च समागमः सम्यक् सुयममस्तु सुसंयतं स्थिरतरं संपूर्णमस्तु । 'जायायास्पत्यौ वा च्छन्दसि' इति जास्पत्यशब्दश्छन्दसि निपातितः । देव.

(२) मधुपर्कप्रदानादनन्तरं सुमुहूर्ते पाणिग्रहणसंस्कारः । तत्र ऋत्विक् 'अनृक्षरा ऋजवः' इति कंचिन्मङ्गल्योदकानयनाय प्रेषयति । कश्मीरेषु श्वश्रूरविधवा चेदन्या वाऽप्यविधवैव तदाहरति । ब्राह्म.

(३) 'अनृक्षराः' इत्यनया त्रिष्टुभा उदाहारम् उदकाहरणार्थं सकुम्भं पुरुषं प्रेषयति । आवि.

**शमीशाखया सपलाशयाऽपिधायाऽऽहरेत् ॥**

(१) स प्रहितः उदाहारः उदककुम्भं शमीशाखया सपत्रया अपिधाय स्थगयित्वा उदकमानयेत् । देव.

(२) मङ्गल्यतर्वश्वत्थादिशाखया सपर्णया कुसुममालया शमीशाखया सकिसलयया वा सुवर्णं वा ताम्रभृङ्गारमयां( ? पां ) पूर्णं स्थगयित्वाऽऽहरेत्( ? ) । ब्राह्म.

(३) स च पुरुषः शमीशाखया सपर्णया कुम्भमपिधायाद्भिः पूरयित्वा आनयेत् । आवि.

**एतासामेवापामुदकार्थान् कुर्वीत ॥**

(१) एतासामेव आहारितानामपां संबन्धिनो भागानवदायावदायोदकसंपाद्यानर्थान् कन्यास्नानसुवर्णक्षारणाग्निपर्युक्षणादीन् कुर्यात्, नान्येन जलेन । देव.

(२) एतासामेवापामाहृतानां वक्ष्यमाणानुदकार्थान् कुर्वीत कन्यास्नापनादीन् । आवि.

**'शं न आपो धन्वन्याः शं नः सन्त्वनूप्याः । शं नः समुद्रिया आपः शमु नः सन्तु (कूप्याः) या इमाः' इत्यकेवलाभिरद्भिः स्नातां 'या अकृन्तन् या अवयन् या अतन्वत याश्च देवीरन्ताँ अभितोऽददन्त । तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मतीदं परिधत्स्व वासः ॥' इत्यहतं वासः परिधाप्य 'आशासाना' इत्यन्तरतो मौञ्जेन दार्भेण (वा) योक्त्रेण (वा ?) संनह्यति । 'आशासाना सौमनसं प्रजां सौभाग्यं रयिम् । अग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कम् ॥' ॥**

---
(१) कागृ. २५।१-७.

( १ ) 'शं न आपः' इत्यादिमन्त्रेणाकेवलाभिः सर्वौषध्यादिगन्धद्रव्ययुक्ताभिः फलविशेषसहिताभिश्चाद्भिः कन्यां स्नापयेत्। ततो 'या अकृन्तन्' इत्यादिना अहतम् अपूर्वपरिहितमत्यन्ताभिनवं वस्त्रं परिधापयेत्। ततश्च 'आशासाना' इत्यादिना मन्त्रेणान्तरे मध्ये गुप्तां कृत्वा यथा न दृश्यते तथा वा संनहनं कन्यायाः कुर्यात् मौञ्जेन दर्भनिर्मितेन वा योक्त्रेण।

शं न आप इत्यनुष्टुप् व्याख्याता §। या इमा उदाहारेणाऽऽहृताः, ताः शं सुखं नः सन्त्विति विशेषः।

या अकृन्तन्निति जगती। हे आयुष्मति कन्ये, इदं वासः परिधत्स्व परिवेहि। त्वां च सर्वास्ता देव्यो जरसा परिव्ययन्तु जरसा वेष्टयन्तु जराजर्जरितां सभर्तृकां सतीं त्वां देवताः संपादयन्तु, दीर्घमायुस्तव कुर्वन्त्वित्यर्थः। कास्ता देव्यः ? या इदं वासोऽकृन्तन् याभिः कर्तनेन संपादितमधिष्ठात्रीभिर्देवताभिः, या अवयन् याभिरुतं संपादितं वासः, या अतन्वत याभिः सूत्रमाततं दैर्घ्येण प्रसारितम्, याश्च देवीरन्ताँ अभितोऽततन्थ, उभयतो मूलपल्लवस्य चान्ताः प्रान्ता याभिरातानिता इत्यर्थः। ताश्च देवता मन्त्रान्तरे स्वनाम्नैवोपात्ताः 'रेवतीस्त्वा व्यक्ष्णन्' इति।

आशासाना इत्यनुष्टुप्। पृथिव्या आर्षम्। अहं संनह्ये वस्त्रं बध्नामि। किमर्थम् ? सुकृताय कर्मणे विवाहपूर्वयागदानहोमादिकर्मार्थम्। कमिति कामायेत्यर्थः। यथा 'चक्षुषे कं पूर्वमात्यजते' इत्यत्र चक्षुष्कामप्रतीतिः, एवं सुकृताय कमिति सुकृतकामप्रतीतिः। कीदृशी सती संनह्ये ? सौमनसं प्रसन्नमानसत्वं तथा सौभाग्यं भर्त्रानुकूल्यं रयिं च धनमाशासाना इच्छन्ती, तथा अग्नेरनुव्रता सती आहवनीयादिपरिचरणशीला सती संनह्ये। देव.

( २ ) ततः स्नानमण्डपं चतुष्पादे भद्रपीठे कन्यां नीत्वा 'शं न आपः ... या इमाः' इति सर्वौषध्यामलकयुक्ताभिरद्भिः स्नापयति। स्नातां 'या अकृन्तन्' इति वसनहस्तः परिधानार्थे प्रचोदयति। मन्त्रमृत्विगेवाऽऽह, न कन्या परिहिता। 'आशासाना' इति 'कम्' इत्यन्तेन स्वयमेव कन्या मुञ्जमयेन दर्भमयेन वा दाम्ना वासोऽन्तरतो बध्नाति। ब्राह्म.

( ३ ) स्नातां स्वयमेवाभिषिक्तम् ( ? क्ताम् ) ....। 'आशासाना' इत्यनयाऽनुष्टुभा योक्त्रेण तद्वासः संनह्यति स्वयमेव कन्या। अन्तरतः प्रच्छन्नेन। योक्त्रं त्रिगुणं दाम। तच्च मौञ्जं दर्भमयं वा। आवि.

**'प्रेतो मुञ्चातु मामुतः सुबद्धाममुतस्करत्। यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगाऽसति ॥ पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन। गृहान् गच्छ गृहपत्नी यथाऽसो वशिनी त्वं विदथे मा वदासि ॥ मा विदन् परिपन्थिनो य आसीदन्ति दम्पती। सुगेभिर्दुर्गमतीतामपद्रान्त्वरातयः॥' इत्युदानीय ॥**

**उक्तं वाससः कर्म ॥**

( १ ) 'प्रेतो मुञ्चातु' इत्यादिभिस्तिसृभिः उदानीय स्नानस्थानादुत्क्षिप्योत्सङ्गे कृत्वा स्थानान्तरे पिता ज्येष्ठो भ्राता वा यथोक्तं वासस उपरिभागाच्छादनस्याप्यधस्तनाच्छादनवत् 'या अकृन्तन्' इत्यादिना मन्त्रेण कर्म कुर्यादित्यर्थः।

प्रेतो मुञ्चात्विति सूर्यस्याऽऽर्षम्। प्रथमतृतीये अनुष्टुभौ, द्वितीया त्रिष्टुप्। हे कन्ये, इतः स्थानात् प्रमुञ्चातु प्रमुञ्चामि त्वां नयामि भवतीम्। मुञ्चात्विति तिङ्व्यत्ययः पुरुषव्यत्ययश्च। तथा च शाखान्तरे 'प्रेतो मुञ्चामि' इति मन्त्रः पठ्यते। पितृकुले भर्तृकुले च सुबद्धां सुश्लिष्टां सतीमेतां कन्याममुतः पितृकुलादमुतश्च भर्तृकुलात् मा

§ 'अब्दैवत्या, अनुष्टुप्, सोमपुत्रस्याध्वरस्याऽऽर्षम्। धन्वनि मरौ जङ्गले भवा धन्वन्याः। एवमनूपे जलस्राविणि देशे भवा अनूप्याः। तथा समुद्रे भवाः समुद्रियाः। कूपे भवाः कूप्याः। ताः सर्वाः नः अस्माकं सुखाय भवन्त्वित्यर्थः। 'शमु नः' इत्यत्रोकारो निपातः पादपूरणार्थः।' एवं पूर्वं ( काग्. १।३२ ) व्याख्याता।

करत् कश्चिन्मा कार्षीत्, कुलद्वये विगमं तस्या मा कार्षीत् कश्चिदपीत्यर्थः । हे इन्द्र परमेश्वर मीढ्वः सेक्तः, इयं कन्या सुपुत्रा सुभगा च यथा (असति) भवति तथा कुरु ।

हे कन्ये, इतः स्थानात् पूषा इन्द्रः त्वां नयतु । हस्तगृह्य हस्तेन गृहीत्वा । अश्विनौ च त्वां रथेन प्रवहताम् अभिमतं स्थानं प्रापयताम् । तथा क्रमेण त्वं गृहान् भर्तृवेश्मानि गच्छ । तत्र च गृहपत्नी गृहस्य पालयित्री प्रभुः यथा असः भवसि तथाऽस्तु । वशिनी जितकर्मकरजनादिका भव । विदथे च यज्ञे मा वदासि यज्ञप्रतिकूलं भर्तुर्मा वादीः, वैदिककर्मकलापानुकूला भवेत्यर्थः ।

ये परिपन्थिनः मार्गे प्रतिकूलाश्चौरप्रभृतयो दम्पती जायावरौ आसीदन्ति दुष्टबुद्ध्या समासीदन्ति, ते त्वां मा विदन् मा द्राक्षुः, सुगेभिः शोभनगमनैर्दुर्गं मार्गमतीताम् अतिक्रान्तां सर्वम् । किंच, अपद्रान्त्वरातयः शत्रवो दानहीनाश्च धनाभावाश्च दारिद्र्याभिधाना अपद्रान्तु भीताः पराङ्मुखाः सन्तः पलायमानाः कुत्सितां स्खलनरूपां गतिं लभन्तामित्यर्थः । देव.

(२) एवमधोवस्त्रपरिहितां संनद्धां च 'प्रेतो मुञ्चामि' इति तिसृभिः स्नानदेशादुदानीय ।

'या अकृन्तन्' इत्येतयैवोत्तरीयं च वासः परिधापयति । ब्राह्म.

(३) एवं स्नातां परिहितवाससं तस्मात्स्थानादुदानयति । उत्क्षिप्याऽऽनयति ऋत्विक् । 'प्रेतो मुञ्चामि' इति तिसृभिः त्रिष्टुम्मध्यमाभ्यामनुष्टुब्भ्याम् ।

उक्तं च वासः( ? वाससः )कर्म उत्तरीयस्य 'या अकृन्तन्' इति । आवि.

**आचारिकाणि ॥**

(१) अस्मिन्नवसरे आचारिकाणि आचारादागतानि देशजातिकुलधर्मतया प्रसिद्धानि कर्माणि कारयेदित्यर्थः । तद्यथा— आगमनप्रयोजनकथनं कन्याया नामग्रहणं कुलदेवतापूजनं सुमनोलताभिस्ताडनमित्यादीनि । देव.

(२) अस्मिन्नवसरे देशकालोचितानामाचारिकाणां मङ्गल्यानां कर्मणां कालः । यथा कश्मीरेषु श्वश्रूरन्या वाऽविधवा वधूवरयोः शिरसि मङ्गल्यमालामाबध्नाति । 'महेश्वरस्त्र्यम्बकश्च ईश्वरः शिव एव च । भवः शर्वश्च रुद्रश्च दक्षिणादिक्रमेण तु ॥' इति वरस्य पादजानुस्कन्धशिरःसु सप्तसु स्थानेषु श्वश्रूः पुष्पाणि निदध्यात् । 'गौरी चैव तु गायत्री सावित्री च सरस्वती । उमा कान्ता भवानी च वामावर्तेन पूजयेत् ॥' इति वध्वा वामावर्तक्रमेणैव पुष्पाणि निदध्यात् । 'पुष्पवतीः' इति ऋत्विक् पठेत् । 'आचारिकाणि द्रव्याणि वस्त्राण्याभरणानि च । मणिमुक्ताप्रवालानि यथाशक्ति प्रदीयते ॥ गोभूहिरण्यमश्वांश्च वस्त्राणि विविधानि च । अन्यानि चैव दानानि यथाविभवमर्पयेत् ॥' । अस्मिन्नवसरेऽलङ्करणस्वदायेषु परस्परं ग्राह्या चटोपचटिका । ब्राह्म.

(३) अस्मिन्नवसरे आचारिकाणि कर्माणि कुर्यात् देशजातिकुलव्यवस्थया स्थितानि । अशास्त्रार्थमिति न प्रतिबध्नीयात् । आवि.

## पारस्करगृह्यसूत्रम्

हस्तगृहीतभार्यया सह वरस्य गृहमध्याद्बहिरग्निसमीपे गमनम्

**'पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति— 'यदैषि मनसा दूरं दिशोऽनु पवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्विति असौ ॥' इति ॥**

(१) पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति 'यदैषि मनसा' इत्यनेन मन्त्रेण । आदाय गृहीत्वेति चोभयं न वक्तव्यम् । उच्यते च । किमर्थं तत् ? अप्रतिग्रहस्यापि प्रतिग्रहविधिना आदानं यथा स्यादिति । 'असौ' इति कन्यानामग्रहणं मन्त्रान्ते । कभा.

(२) अप्रतिग्रहश्च क्षत्रियादिः । * जभा.

---

* शेषं कभावत् ।

(१) पागृ. १।४।१५, १६ ; संप्र. ५८३ निर्देशमात्रम् ; संग. १६६.

( ३ ) पित्रा जनकेन प्रत्तां संकल्प्य दत्ताम् आदाय प्रतिग्रहविधिना प्रतिगृह्य, गृहीत्वा हस्ते धृत्वा निष्कामति गृहमध्यात् मण्डपाद्वा अग्निसमीपं गन्तुं 'यदैषि मनसा' इत्यादिना मन्त्रेण 'करोत्वमुकदेवि' इत्यन्तेन। अत्र पित्रेत्युपलक्षणम्, 'पिता पितामहो भ्राता सकुल्यो जननी तथा। कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥' इति याज्ञवल्क्येन अन्येषामपि कन्यादाने अधिकारस्मरणात्। $ हभा.

( ४ ) पित्रा दत्तां कन्यामादाय वरः प्रतिग्रहविधिना प्रतिगृह्य वस्त्रान्ते गृहीत्वा 'यदैषि मनसा दूरम्' इत्यनेन मन्त्रेण निष्क्रामति गृहमध्यात् बहिःशालायां स्थापितमग्निं प्रति गच्छति। 'असौ' इत्यत्र संबुद्ध्यन्तं कन्यानामग्रहणम्। अत्र कर्कभाष्यम्– 'आदाय गृहीत्वेति चोभयं न वक्तव्यम्। उच्यते च। तत्किमर्थम्? अप्रतिग्रहस्यापि प्रतिग्रहविधिनाऽऽदानं यथा स्यात्' इति। अयमर्थः– अप्रतिग्रहस्यापि कन्याद्रव्यस्य प्रतिग्रहविधिना आदानं प्रतिग्रहो यथा स्यादित्येतदर्थमुभयग्रहणम्। ननु 'कन्यां दद्यात्' 'कन्यां प्रतिगृह्य' इति स्मरणात् कथमप्रतिग्रहयोग्यं कन्याद्रव्यमित्युच्यते? सत्यम्। उच्यते– (स्व)स्वत्वत्यागपूर्वकं हि परस्वत्वापादनं दानम्। न च कन्या कथंचिदपि अस्वकन्या कर्तुं शक्यते, नापि परस्य कन्या भवति, विवाहोत्तरमपि ममेयं कन्येत्यभिधानात्। अत्र गौणो ददातिः। यत्तु स्मृतिषु पुत्रदानं चोद्यते, तत्रापि गौणो ददातिः। पितुरिव परस्यापि पिण्डदानं रिक्तभाक्त्वं च भवतीत्यर्थः। षष्ठाध्यायस्य सप्तमे पादे आद्याधिकरणे अयमर्थस्तन्त्ररत्ने। यद्वा, 'अप्रतिग्रहयोग्यस्य प्रतिग्रहविधानतः। क्षत्रियादेर्यथा दानं स्यादादायेति सूत्रितम् ॥' इति रेणुः।

मन्त्रार्थः– हे कन्यके, यत् एषि गच्छसि मनसा चित्तेन दूरं दूरदेशं दिशः ककुभः अनुलक्ष्यीकृत्य पवमान इव वायुवत्, चित्तस्य वायुवच्चञ्चलत्वात्। ततः पवमानो वायुः हिरण्यपर्णः सुवर्णपक्षः विकर्णापत्यं गरुत्मान् त्वां त्वा मन्मनसां मद्गतचित्तां करोतु, ममाऽऽयत्तां मय्यनुरागिणीं विदधातु। गभा.

( ५ ) तत्र विवाहशब्दो 'वह प्रापणे' इत्यस्माद्धातोर्भावे घञि कृते, वहनं वाहः, विशिष्टो वाहो विवाहः, इति व्युत्पत्त्या निष्पद्यते। वैशिष्ट्यं च प्रतिग्रहाद्यष्टविधोपायान्यतमोपायेन स्वीकृतायां होमादिसप्तमपदनयनान्तकर्मभिः संस्कृतत्वम्। तथा च विवाहपदार्थो द्विदलः सिध्यति, स्वत्वोत्पादनं संस्काराधानं चेति। तदेतत्स्पष्टीकृतं पारस्करेण 'पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति' इत्युपक्रम्य 'प्रदक्षिणमग्निं पर्याणीयैके' इत्यादिना 'आचार्याय वरं ददाति' इत्यन्तेन सूत्रेण। आदाय प्रतिगृह्य। गृहीत्वा हस्ते धृत्वा। संप्र. ५८३

समन्त्रकं परस्परसमीक्षणम्

*** अथैनौ समीक्षयति– 'अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः। वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये। रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर। यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्यै ॥' इति ॥**

कन्यादानात्प्राचीनानां वासःपरिधापनादीनां कन्यादानोत्तरमग्निसमीपेऽनुष्ठानं मतभेदेन

**[१]प्रदक्षिणमग्निं पर्याणीयैके ॥**

---

$ विभा. हभावत्।

* व्याख्यानानि निरीक्षणप्रकरणे ( संका. पृ. २०११–२०१२ ) द्रष्टव्यानि।

( १ ) पागृ. १।५।१ ; संप्र. ५८३,

(१) एके आचार्याः प्रदक्षिणमग्निमानीय कन्या-वासःपरिधानादि कुर्वन्ति। एवमपि हि स्मरणमिति। अतश्च विकल्पः। कभा.

(२) अग्निं प्रदक्षिणं कृत्वा आनीय कन्यां वासः-परिधापनादि कुर्वन्त्येके आचार्याः, एके नेति विकल्पः। * जभा.

## गोभिलगृह्यसूत्रम्

अग्न्युपसमाधानम्, उदकुम्भधारिणः गृहीतप्रतोदस्य चेति द्वयोर्जन्ययोरवस्थानम्, लाजदृषत्पुत्रयोरुपसादनम्, कन्याप्लवनम्, कन्यापरिधापनम्, गृहीतहस्ताया गृहमध्यादग्निसमीपे नयनम्

[1]**पाणिग्रहणे पुरस्ताच्छालाया अग्निरुपसमाहितो भवति ॥**

(१) अथ पाणिग्रहणम्। तत्र गोभिलः— पाणिग्रहण इति। पाणिग्रहणे कर्तव्ये गृहसमीपदेशे उपसमाहितः स्थण्डिले रेखादि विरूपाक्षजपान्तं कर्म कृत्वा प्रकृतकर्मार्थे योजकनाम्नाऽऽवाहनेन समाहितोऽग्निर्भवति। संत. ८९५

(२) अथेदानीं पाणिग्रहणमभिधीयते— पाणिग्रहण इति। पाणिग्रहणे कर्मणि प्रक्रान्ते पुरस्तादग्रतः शालाया गृहस्य प्राङ्गणे इत्यर्थः। अग्निः उप अग्रे वरस्य सम्यक् आहितः स्थापितो भवति पूर्वोक्तया आवृता। अनुपदेशात् कर्तुरनियमः। तेन यावद्वरो वधूमादाय गृहान्निष्क्रम्याऽऽगच्छति तावदन्य एव कश्चिदग्निं स्थापयति। आवृतमपि स एव करोति इति शब्दस्वरसादवगम्यते। अत एव सूत्रयिष्यति— 'बर्हिषोऽन्तं कटान्तं प्रापयेत्' (२।१।२२) इति। तदेतद्भट्टभाष्यसंमतं चन्द्रकान्तोऽप्यनुमन्यते स स्वभाष्ये। वस्तुतस्तु, वर एवात्र कर्तेति तत्सूत्रे (२।१।२२) एव व्यक्तीभविष्यति। अग्निस्थापनं च वेदिमध्ये कार्यम्। वेदिश्च चतुर्विंशाङ्गुलायता चतुरङ्गुलोच्छ्रिता च कार्येत्याह गृह्यासंग्रहः— 'उपलिप्ते महीपृष्ठे चतुर्विंशाङ्गुलायता। वेदी वैवाहिकी कार्या चतुरङ्गुलमुच्छ्रिता॥ तां शूद्रो नोपलिम्पेत न वन्ध्याविधवास्त्रियौ। पतिपुत्रवती या स्त्री सैव तामुपलेपयेत्॥' इति। यद्यप्यत्राऽऽचार्येण कन्यायाः प्रदानं प्रतिग्रहणं च न सूत्रितं तथापि 'अलङ्कृत्य कन्यामुदकपूर्वं दद्यात्' इत्येवमादिगृह्यान्तरदर्शनात्तदप्यादरणीयम्। तदेतत्सप्तदशसूत्रान्ते यथाप्रसक्तमुपवर्णयिष्यते। अत्र चन्द्रकान्तः— 'पाणिग्रहणे शिष्यजिज्ञासा समुत्कटेति तन्निरसिसिषया खल्वाचार्यस्तदेव सूत्रयांचकार, न कन्यादानमिति श्लिष्यते। प्रदानं चेदं कन्यादातुः कर्म, न प्रतिग्रहीतुः। प्रतिग्रहोऽपि दानाधीन एव' इति। मृदुला.

[1]**अथ जन्यानामेको ध्रुवाणामपां कलशं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते ॥**

(१) अग्निस्थापनानन्तरं वरस्य सहायानां मध्य एकोऽगाधजलेन घटं पूरयित्वा गृहीतकुम्भो वस्त्राच्छादितदेहः प्रदक्षिणेनाग्निं वेष्टयित्वाऽग्निब्रह्मणोर्दक्षिणस्यां दिशि उदङ्मुखोऽवतिष्ठते। अवपूर्वस्तिष्ठतिरनुपविष्टतां बोधयति। संत. ८९५

(२) अथ अग्निस्थापनानन्तरम्। 'जन्याः स्निग्धा वरस्य ये' इत्यमरः। नवोढाज्ञातयो वेति चन्द्रकान्तः। तेषामेकोऽन्यतमः कश्चित्, स च द्विज एव। तथा च गृह्यासंग्रहः— 'गन्धमाल्यैरलङ्कृत्य सकुम्भो वाग्यतः शुचिः। धारयेत् त्रिषु वर्णेषु प्रावृताङ्गो द्विजोत्तमः॥' इति। अत्र धारयेदित्यत्र विभक्तिविपरिणतं कुम्भमित्यनुषज्यते*। ब्राह्मणो वरदिश्यः कलशधारीति होरिल-

---

* हभा., गभा., विभा. जभावत्।

(१) गोगृ. २।१।१२; संत. ८९५ शालायाः + (उपलिप्ते).

* इदमनुपपन्नम्, अस्मिन् श्लोके पूर्वश्लोके वा केवलकुम्भपदाभावात्। 'सकुम्भः' इति तु समस्तं द्विजोत्तम-

(१) गोगृ. २।१।१३; संत. ८९५.

पद्धतिरपि । ध्रुवाणाम् अतिप्रखरतापेऽपि अशुष्कजलाशयोत्थितानामिति सत्यव्रतः । तदेतदज्ञानविजृम्भितम् । तथा च गृह्यासंग्रहे(ऽङ्गिराः ?)– 'महानदीषु या आपः कौप्यान्याश्च ह्रदेषु च । गन्धवर्णरसैर्युक्ता ध्रुवाः स्युरिति निश्चयः ॥' इति । कौप्यान्या अकूपसंबन्धिन्यः । तथा च महानद्यायसंभवे कूपोदकभिन्ना याः काश्चिदप्यापो गन्धादिगुणयुक्ता ग्राह्या इत्यर्थः । ध्रुवाणामपामिति षष्ठी तृतीयार्थे । सहोदकुम्भः उदकपूर्णकुम्भसहितः । प्रावृतः कृतोष्णीष इति भाष्यकारः । वस्त्राच्छादितशरीर इति पद्धतिः । दक्षिणतः प्रकृतत्वादग्नेर्ब्रह्मणश्च । अवतिष्ठते इति । ऊर्ध्वस्थितो भवेदित्यर्थः । अत्रापि वाग्यमनलोपे पूर्वोक्तमेव§ प्रायश्चित्तम्, कारणस्याविशेषादिति द्रष्टव्यम् । एवमन्यत्रापि ।

मृदुला.

[1]प्राजनेनान्यः ॥

(१) प्रतोदेन सह कुम्भधारिवदागत्य कुम्भधारिणः प्रागन्योऽवतिष्ठते । संत. ८९५

(२) अन्यः अपरः वरपक्ष्यः प्राजनेन प्रतोदेन गृहीतेनोपलक्षितस्तथैवावतिष्ठते । अत्रोपलक्षणे तृतीया (पासू. २।३।२१)। 'प्राजनं तोदनं तोत्रम्' इत्यमरः । एष समाचारोऽद्यत्वे नास्ति । मृदुला.

[2]शमीपलाशमिश्रांश्च लाजांश्चतुरञ्जलिमात्रान् सूर्पेणोपसादयन्ति पश्चादग्नेः ॥

(१) शमीवृक्षपत्रमिश्रितान् चतुरञ्जलिपरिमितान् लाजान् अग्नेः पश्चात् शूर्पस्थान् स्थापयन्ति । बहुवचनात् कर्तुरनियमः । संत. ८९५

(२) शमी प्रसिद्धा । तस्याः पलाशानि पत्राणि, तैर्मिश्रान् लाजान् 'अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते । भृष्टास्तु व्रीहयो लाजा घटः खाण्डिक उच्यते ॥' इति कर्मप्रदीपोक्तलक्षणान् । चतुरञ्जलिमात्रान् । चत्वारः अञ्जलयः प्रमाणमेषामिति तद्धितार्थे समासः (पासू. २।१।८१)। प्रमाणे च मात्रच्प्रत्ययः (पासू. ५।२।३७)। यावद्भिश्चत्वारोऽञ्जलयः पूर्यन्ते तावतः । अग्नेः पश्चात् शूर्पेणोपसादयन्ति शूर्पस्थान् कृत्वा समीपे स्थापयन्ति । मृदुला.

[3]दृषत्पुत्रं च ॥

(१) दृशत् शिला पेषणाधाररूपा, पुत्रः पेषणकरणरूपप्रस्तरः, तदुभयं पूर्ववदुपसादयन्ति इत्यर्थः । संत. ८९५

(२) दृषत्पुत्रं शिलापुत्रकं 'लोढा' इति प्रसिद्धम् । अग्नेः पश्चादुपसादयन्तीति पूर्वेणान्वितम् ।

मृदुला.

*[1]अथ यस्याः पाणिं ग्रहीष्यन् भवति सशिरस्का साऽऽप्लुता भवति ॥

(१) यस्याः कन्याया जामाता पाणिं ग्रहीष्यन् भवति पाणिग्रहणं करिष्यतीत्यर्थः । अथ तदारम्भदिने क्षारोद्वर्तनानन्तरमविधवाहृतमङ्गलोदकैः सा स्नाता भवति । संत. ८९५–८९६

(२) आप्लुता अविधवोपनीतमङ्गलोदकैः त्रिभिर्घटैः स्नाता । तथा च गृह्यासंग्रहः– 'स्नानं चतुर्भिः कलशैः प्लावनं तु त्रिभिर्घटैः ।' इति । एतद्विधानमुक्तमधस्तात् । मृदुला.

[2]अहतेन वसनेन पतिः परिदध्यात् 'या अकृन्तन्' इत्येतयर्चा । 'परिधत्त धत्त वाससा' इति च ॥

---

विशेषणम् । तस्मात् पूर्वश्लोकस्थे 'ध्रुवा आपः' इति पदे 'ध्रुवा अपः' इति विभक्तिविपरिणामेनानुषज्येते इति व्याख्यातुमुचितम् ।

§ वैष्णव्या ऋचो यजुषो वा जपः (गोगृ. १।६।१९)।

(१) गोगृ. २।१।१४ ; संत. ८९५.

(२) गोगृ. २।१।१५ ; संत. ८९५ मिश्रांश्च (मिश्रान्).

(३) गोगृ. २।१।१६ ; संत. ८९५.

* अतः परं कन्यादानं व्याख्यातृभिरत्सूत्रमुक्तम् ।

(१) गोगृ. २।१।१७ ; संत. ८९५.

(२) गोगृ. २।१।१८ ; संत. ८९६ (च०).

( १ ) अहतस्वरूपमाह— 'ईषद्धौतं नवं शुभ्रं सदशं यन्न धारितम्। अहतं तद्विजानीयात् सर्वकर्मसु पावनम् ॥'। ईषत् सूक्ष्मम्। न धारितं न परिहितम्। एवंभूतेन वस्त्रेण 'या अकृन्तन्' इति मन्त्रेण। परिधत्स्वेति श्रुतेः परिदध्यादित्यन्तर्भूतणिजर्थः। तेन परिधापयेदित्यर्थः। एवं च परिधापनानुरोधेन वध्वा उत्थितत्वं प्रतीयते। अत एव कटबर्हिषोर्मध्ये प्रापणानन्तरं वरदक्षिणे उपविशतीत्युक्तम्। एतदधरीयवस्त्रपरिधापने, उत्तरत्र प्रावृतमित्यनेनोत्तरीयलाभात्। स्त्रीपरिधाने शुक्लमित्यविवक्षितम्, 'धारयेदथ रक्तानि नारी चेत् पतिसंयुता। विधवा च न रक्तानि कुमारी शुक्लवाससी ॥' इति मत्स्यपुराणात्। परिधानप्रकारमाहतुः शङ्खलिखितौ— 'न नाभिं दर्शयेत्, कुलवधूरागुल्फाभ्यां वासः परिदध्यात्, न स्तनौ विवृतौ कुर्यात्' इति। वासोविन्यासविशेषस्तु तत्तद्देशाचारादवगन्तव्यः। रत्नाकरोऽप्येवम्। संत. ८९६

( २ ) अहतेनेति। अत्राहतलक्षणमुक्तं गृह्यासंग्रहे— 'सकृद्धौतं नवं श्वेतं सदशं यन्न धारितम्। अहतं तद्विजानीयात् सर्वकर्मसु पावनम् ॥' इति। अत्र श्वेतमित्युपलक्षणं नीलातिरिक्तस्य, तस्य विशिष्य शुभकर्मसु शास्त्रतो लोकतश्च निषिद्धत्वात्। तेनोक्तलक्षणलक्षितेन वसनेन वस्त्रेण पतिः यस्याः पाणिं ग्रहीष्यन् भवति तां परिदध्यात्, अन्तर्भावितण्यर्थतया परिधापयेत्। अधः उपरि च वेष्टनं गात्राणां कारयेदित्यर्थः। कुत एतत्? मन्त्रद्वयोपदेशात् 'परिधत्स्व' 'परिधत्त' इति मन्त्रलिङ्गदर्शनात् गृह्यान्तरे परिधापनोपदेशाच्च। तथा च गृह्यान्तरम् 'अथैनां वासः परिधापयति' इति 'अथोत्तरीयम्' ( पाग्. ४।१२ ) इति च। 'द्विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च। एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः ॥' इत्येकवाससो नग्नत्वस्मरणाचैतदवगन्तव्यम्। अत्र मन्त्रमाह— 'या अकृन्तन्' इति 'परिधत्त' इति च। 'उत्तरीयम्' इति शेषः। क्रियानुषङ्गार्थश्चकारः। ततः आचाराद्वरोऽपि कन्याप्रदोपनीतं वासोयुगं तूष्णीं परिदध्यात्। अथ द्वयोराचमनम्, 'वासो विपरिधाय च' इत्युक्तवचनात्। ततः 'समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ। सं मातरिश्वेति वरो दाता ग्रन्थिं तु पातयेत् ॥' इति परिशिष्टान्तरवचनादुत्तरीयाभ्यां वरपठितेनानेन मन्त्रेण कन्याप्रदकर्तृकं जन्मग्रन्थिबन्धनम्। अथात्र कन्यावरयोः परस्पराभिमुखीकरणम्। तत्र मन्त्रः— 'समञ्जन्तु' इत्याद्युक्तपूर्वो वीरेश्वरादिपद्धतौ व्यक्तो द्रष्टव्यः। ततो जन्मग्रन्थिबन्धनमिति क्रम उक्तपूर्वः। अत्र कन्यादानात्पुरस्तात् वरवध्वोर्दक्षिणवामकरमूले कङ्कणबन्धनमाजानिकाचारपरिप्राप्तमावश्यकमित्यग्रेऽनुपदं विवृतौ स्फुटीभविष्यति।

मृदुला.

**'प्रावृतां तां यज्ञोपवीतिनीमभ्युदानयञ्जपेत् — 'सोमोऽददद्गन्धर्वाय' इति ॥**

( १ ) प्रावृतां यज्ञोपवीतिनीं यज्ञोपवीतवत् कृतोत्तरीयपरिधानाम्। तथोक्तं विद्याकरवाजपेयिधृतवचनेन, यथा स्मृतिः— 'यथा यज्ञोपवीतं च धार्यते च द्विजोत्तमैः। तथा संधार्यते यत्नादुत्तराच्छादनं शुभम् ॥'। न तु यज्ञोपवीतिनीमित्यनेन स्त्रीणामपि कर्माङ्गत्वेन यज्ञोपवीतधारणमिति हरिशर्मोक्तं युक्तम्, स्त्रीणां यज्ञोपवीतधारणानुपपत्तेः। सरलाभट्टभाष्ययोरप्येवम्। ततो वधूर्दक्षिणश्रवणं स्पृशेत्, 'क्षुते निष्ठीविते वान्ते परिधानेऽश्रुमोचने। कर्मस्थ एषु नाऽऽचामेद्दक्षिणं श्रवणं स्पृशेत् ॥' इति स्मृतेः। अभ्युदानयन् अग्नेरभिमुखीमानयन् जपेत् 'सोमोऽददत्' इति मन्त्रं पतिः पठेत्। संत. ८९६

( २ ) प्रावृतां कृतोत्तरीयाम्। कथं प्रावृताम्? यज्ञोपवीतिनीम्। तामिवेत्यर्थः, स्त्रीणामुपवीतस्याभावात्। अभ्युदानयन् 'पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति' इति गृह्यान्तरदर्शनात् करेण करे गृहीत्वा गृहादग्नेरभिमुखीमानयन् जपेत् पठेत् पतिः 'सोमोऽददत्' इत्यादिमन्त्रम्।

मृदुला.

( १ ) गोगृ. २।१।१९ ; संत. ८९६ ( तां० ).

## खादिरगृह्यसूत्रम्

उदकुम्भधारिणोऽवस्थानम्

**[1]ब्राह्मणः सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं गत्वोदङ्मुखस्तिष्ठेत् ॥**

तत आह– ब्राह्मण इति। उत्तरवाससा सकर्णं प्रावृतशिरा उदकपूर्णकुम्भं शिरसा धारयन् उदकप्रदेशात् पूर्वेणाग्निं गत्वा ब्रह्मणः पुरस्तादुदगग्रेषु दर्भेषु उदङ्मुखस्तिष्ठेत्। आ मूर्ध्न्यवसेकाद्वाग्यतः। रुद्रभा.

वध्वाः स्नानम्, वासःपरिधापनम्, अग्निसमीपमानीयमानायां जपश्च

**स्नातामहतेनाऽऽच्छाद्य 'या अकृन्तन्' इत्यानीयमानायां पाणिग्राहो जपेत्– 'सोमोऽददत्' इति ॥**

पाणिग्राहो वधूदेशं गत्वा पूर्वमेव सहशिरस्कं स्नातां वधूं नववस्त्रद्वयेन 'या अकृन्तन्, परिधत्त' इत्याभ्यां स्वयमेवाऽऽच्छाद्य पुनरग्निदेशं गत्वा प्रदात्रा तं देशं वध्वां प्राप्यमाणायां तां वीक्ष्य पतिः 'सोमोऽददत्' इति जपेत्। 'या अकृन्तन्' इत्यधरवासोदानम्। 'परिधत्त' इत्युत्तरीयदानम्। रुद्रभा.

## जैमिनिगृह्यसूत्रम्

अग्न्युपसमाधानम्, उदकुम्भधारिणोऽवस्थानम्, मात्रा लाजशूर्पधारणम्, आस्तरणनिधानम्, वासःपरिधापनम्

**[2]पाणिग्रहणेऽग्निमाह्रियमाणमनुमन्त्रयते— 'अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् ॥' इति। प्रज्वलितमुपतिष्ठते – 'इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि प्रबुध्यतामियम् ॥' इति। पुरस्तादग्नेर्ब्राह्मणो वाग्यतः प्रत्यङ्मुख उदकुम्भं धारयंस्तिष्ठेत्। दक्षिणतोऽग्नेः शमीपलाशमिश्रान् लाजान् शूर्पे माता धारयेन्मातुरभावे तन्मात्री। प्रत्यगग्नेरेरकां तेजनीं वाऽन्यद्वैवंजातीयं संवेष्ट्य निदध्याद्यथा प्रसार्यमाणं पश्चार्धं बर्हिषः प्राप्नोति। अथास्यै वाससी प्रोक्ष्यानुमन्त्र्य ददाति– 'या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तामभितोऽददन्त। तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मतीदं परिधत्स्व वासः ॥' इति ॥¶**

पाणिग्रहणे इति। दूत्यकृत्यानुष्ठानस्वस्तिवाचनकन्यावेश्मगमनमधुपर्कग्रहणसंभारकल्पनानन्तरकृत्यमेतदनुमन्त्रणम्।

पुरस्तादग्नेरिति। पूर्णपात्रनिधानानन्तरकृत्यमेतत् प्रोक्षणाद्या कर्मसमाप्तेः। दक्षिणतोऽग्नेरिति। मातुरभावे अशक्तौ तन्मात्री तत्सदृशा धारयेत्, मातुः स्वसा मातामही वा।

प्रत्यगग्नेरिति। एवंजातीयम् एवंप्रकारमन्यद्वा आस्तरणं कशिपुकम्बलादि। यथा संवेशनकाले प्रसार्यमाणं परिस्तरणबर्हिषः पश्चार्धं प्राप्नोति स्पृशति।

अथास्या इति– अथ समुपनिहितं 'देवस्य त्वा' इति प्रोक्ष्यानन्तरमेवास्यै वाससी ददाति। प्रतिवासो मन्त्रावृत्तिः। श्रीव्या.

## कात्यायनः

शच्याः पूजनं प्रार्थना च

**'सवर्णायास्तथा पाणिं गृहीत्वा* विधिवद्वरः। $संपूज्य प्रार्थयित्वा तां शचीं देवीं गुणाश्रयाम् ॥**

---

¶ अतः परं कन्यादानं व्याख्यातृभिरुत्सूत्रमुक्तम्।

* अत्र पाणिग्रहणोत्तरं शचीपूजनमिति प्रतीयते। निबन्धकारैस्तु सर्वैः कन्यादानोत्तरं पाणिग्रहणात्प्रागेते श्लोकाः संगृहीताः। तदनुरोधेनास्माभिरप्यत्रैव गृहीताः।

$ इत आरभ्य त्रयः श्लोका नारदस्यापि, ते च 'कन्यावरणम्' इति प्रकरणे (संका. पृ. १८९१) द्रष्टव्याः।

(१) खागृ. १।३।५, ६. (२) जैगृ. १।२०.

(१) प्रपा. ३५६; विपा. ५० (भागः २); संग. २६३. संपूज्येत्यादित्रयः श्लोकाः कन्यावरणप्रकरणे नारदेऽपि.

[१]त्रैलोक्यवल्लभां दिव्यां गन्धमाल्याम्बरान्विताम् ।
सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ॥
[२]अनर्घ्यमणिमालाभिर्भासयन्तीं दिगन्तरम् ।
विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ॥
[३]एवंविधां कुमारीं च पूजान्ते प्रार्थयेत्ततः ।
कात्यायनीं पद्मजां च गौरीमेवं प्रपूजयेत् ॥

### लघ्वाश्वलायनः

अक्षतारोपणम्, कङ्कणबन्धनम्, वासोदानम्, वधूवरयोर्वासःप्रान्तबन्धनम्, मङ्गलसूत्रबन्धनम्, पुण्याहवाचनम्, गौरीनमस्कारः

[४]अक्षतारोपणं कार्यं मन्त्र उक्तो महर्षिभिः ।
इहापि पूर्ववत् कुर्यादक्षतारोपणं सकृत् ।
यज्ञो मे कन्यकामन्त्रः पशवो मे वरस्य च ॥
ईशानकोणतः सूत्रे वेष्टयेत् पञ्चधा तयोः ।
परि त्वेत्यादिभिर्मन्त्रैः कुर्यात्तच्च चतुर्गुणम् ॥
रक्षार्थं दक्षिणे हस्ते बध्नीयात् कङ्कणे तयोः ।
विश्वेत्ता साविकं पुंसः कन्यायास्तद्बवी (? स्तद्बृहत्) तथा ॥
कन्यायै वाससी दद्याद्युवमित्यनया वरः ।
तयोरुभे ते बध्नीयान्नीललोहितमित्यृचा ॥
बध्नीयात् कन्यकाकण्ठे सूत्रं मणिसमन्वितम् ।
माङ्गल्यतन्तुनाऽनेन मन्त्रेण स्यात् सदा सती ॥
पुण्याहं स्वस्ति वृद्धिं च त्रिस्त्रिर्ब्रूयाद्वरस्य च ।
अनाधृष्टमुभौ मन्त्रावापो ह्यानः प्रजां तथा ॥
नमस्कुर्यात्ततो गौरीं सदा मङ्गलदायिनीम् ।
तेन सा निर्मला लोके भवेत् सौभाग्यदायिनी ॥

### स्मृत्यन्तरम्

कङ्कणबन्धनम्

[१]रक्षार्थं दक्षिणे हस्ते बध्नीयात् कङ्कणे तयोः ।
बन्धनं कन्यकापूर्वं वरपूर्वं विमोचयेत् ॥
[२]सूत्रं चतुर्गुणं कृत्वा दम्पत्योर्वेष्टितं च यत् ।
रक्षार्थं करणं प्राहुराविकेन समन्वितम् ॥
[३]विश्वेत्ता ते ऋचा पुंसां बध्नीयाद्दक्षिणे करे ।
अथ वामकरे स्त्रीणां बृहत्सामेत्यृचैव तु ॥

इत्यनेन केचित् कन्याया वामकरे बध्नन्ति स केषांचित् देशाचारः । देशधर्मानुसारमिति व्यवस्था ज्ञातव्या । * धप्र. ४७

### मत्स्यपुराणम्

तिलकप्रकृतिद्रव्याणि, तिलककरणफलम्

[४]गोरोचनं सगोमूत्रं शुक्लगोशकृतं तथा ।
दधिचन्दनसंमिश्रं ललाटे तिलकं न्यसेत् ॥
सौभाग्यारोग्यकृद्यस्मात्सदा च ललिताप्रियम् ॥
ललिता परमेश्वरी । उत. १४२

## अनिर्दिष्टकर्तृकवचनानि

कङ्कणबन्धनम्, वस्त्रपरिधापनम्, मङ्गलसूत्रबन्धनम्

[५]कन्यकासूत्रकार्पासं पञ्चकेनैव निर्मितम् (?) ।
त्रिगुणं कुङ्कुमाक्तं च तन्मन्त्रेण निबन्धयेत् ॥

---

(१) प्रपा. ३५६; विपा. ५० (भागः २) दिव्यां गन्ध (दिव्यगन्ध); संग. २६४ रान्विताम् (राङ्किताम्) शेषं विपावत्.

(२) प्रपा. ३५६; विपा. ५० (भागः २) उत्त.; संग. २६४ उत्त.

(३) प्रपा. ३५६; विपा. ५० (भागः २) रीं च (रीं तु) पद्मजां (च पद्मां); संग. २६४ रीं च (री तु).

(४) लघ्वाश्वस्मृ. १५।२८–३५.

* संग. धप्रगतम्।

(१) धप्र. ४७ रक्षार्थं (रक्षणार्थं); ज्योनि. १५८ (=) कङ्कणे (कङ्कणं) मोचयेत् (मोचनम्); संग. २६३ रक्षार्थं दक्षिणे हस्ते (रक्षणार्थं दक्षहस्ते) शेषं ज्योनिवत्, शौनकः : ३२३ (=) उत्त., ज्योनिवत्.

(२) धप्र. ४७.

(३) धप्र. ४७; संग. २६३ मेत्यृचैव तु (मेति मन्त्रतः) शौनकः.

(४) उत. १४२.

(५) ज्योनि. १५८.

[1]रुद्राक्षदर्भसिद्धार्थशिखिपिच्छोरगत्वचः ।
कङ्कणौषधयश्चेति कौतुकाख्याः प्रकीर्तिताः ॥
[2]कन्यायै वाससी दत्त्वा बध्नीयाद्वाससी तयोः ।
बध्नीयान्मङ्गलं सूत्रं कुङ्कुमाक्तं तु शोभितम् ॥
इत्यादिकं प्रकुर्वीत देशधर्मानुसारतः ।
उभौ वेदिं व्रजेयातां होमस्तत्र विधीयते ॥

## संग्रहकारः ( स्मृतिसंग्रहे )

दम्पत्योरभिषेकः, कङ्कणबन्धनम्, अक्षतारोपणम्, तिलककरणम्, पुष्पमालार्पणम्, वस्त्रपरिधापनम्, मङ्गलसूत्रबन्धनम्, गणेशादिपूजनम्, वायनदानम्, व्रतारम्भः

[3]अब्लिङ्गाभिर्ऋग्भिरपो युतं( ? युता ) हेम्नाऽभिमन्त्र्य तत् ( ? ताः ) ।
ताभिरासीनोऽभिषेकं दम्पत्योर्द्विज आचरेत् ॥
आ नः प्रजामित्येताभिर्ऋग्भिश्चतसृभिस्ततः ।
समुद्रेति चतसृभिरापो हीति त्रिभिस्तथा ॥
दुग्धाक्तं श्वेतसूत्रं च कृत्वा द्विगुणमेव तत् ।
वरवध्वोः कण्ठदेशे कटिदेशे तथैव च ॥
प्रदक्षिणं पञ्चवारं चतुर्वारमथापि वा ।
ऐशानीं दिशमारभ्य अच्छिन्दन् वेष्टयेत्ततः ॥
यत्सूत्रं कण्ठदेशस्थमधो निष्काश( ? स )येत्तु तत् ।
रञ्जयित्वा कुङ्कुमेन कृष्णोर्णास्तुकया युतम् ॥
दृढं तु रजनीखण्डं बद्ध्वा सूत्रेण तेन तु ।
वधूवामप्रकोष्ठे तु बध्नीयात्सुदृढं वरः ॥
नीललोहितमन्त्रेण रक्षणार्थमिदं स्मृतम् ।
यत् सूत्रं कटिदेशस्थमूर्ध्वं निष्काश( ? स )येत्तु तत् ॥
रञ्जयित्वा कुङ्कुमेन कृष्णोर्णास्तुकया युतम् ।
दृढं तु रजनीखण्डं बद्ध्वा सूत्रेण तेन तु ॥
वरदक्षप्रकोष्ठे तु बध्नीयात्सुदृढं वधूः ।
प्रोक्तो मन्त्रः स एवात्र तूष्णीं वा बन्धनं स्मृतम् ॥
तैजसे पात्र आनीते क्षीरे गव्यं घृतं ततः ।
किंचिदासिच्यान्यपात्रे शुक्लानार्द्राक्षतान् क्षिपेत् ॥
तण्डुलाञ्शालिसंभूतांस्तत्र द्विः क्षीरमानयेत् ।
वध्वञ्जलिस्थाञ्जलिना द्विः क्षीरेण वरस्ततः ॥
उपस्तीर्याक्षतान् दुग्धाभ्यक्तान् द्विस्तत्र निक्षिपेत् ।
अथाभिघार्थं प्राग्वद्द्विः पयसेत्येवमेव तु ॥
दाताऽन्यो वा प्रकुर्वीताञ्जलावपि वरस्य तु ।
अञ्जल्योर्वरवध्वोस्तु निदध्यात् काञ्चनं द्विजः ॥
तदञ्जली युतौ कृत्वा वदेद्वाक्यचतुष्टयम् ।
कन्या पुण्यं तथा शान्तिस्तिथीति क्रमशः पठेत् ॥
[1]भगो यज्ञः श्रियो धर्मः प्रजा यश इति क्रमात् ।
मन्त्रैः शिरसि कुर्यातामक्षतारोपणं ततः ॥

अक्षतारोपणे मन्त्रानाह संग्रहकृत्– श्रिय इति । श्रिय इति वधूः । भग इति वरः । यश इति वधूः । यज्ञ इति वरः । धर्म इति वधूः । प्रजा इति वरः । समृध्यतामित्यन्तान् षण्मन्त्रान् पठेदित्यर्थः । * संप्र. ८३०

[2]आद्यो वध्वाः परः पत्युर्वध्वाः स्यात्तु तृतीयकः ।
तुर्यः पत्युः पञ्चमस्तु वध्वा अन्त्यो नुरेव तु ॥
एवं त्रिवारं कुर्वीत विपरीतमदः पुनः ।
तूष्णीं च सप्तमं ज्ञेयं वरपूर्वमिदं स्मृतम् ॥

---

( १ ) विसौ. ५९.

( २ ) धप्र. ४७.

( ३ ) संर. ५५५–५५६.

* संग. संप्रवत् ।

( १ ) संप्र. ८३० ( श्रियो भगो यशश्चैव यज्ञो धर्मः प्रजाश्च षट् । समृध्यतामिति वधूर्वरश्चैतान् क्रमाद्वदेत् ॥ ); संग. २६२ संप्रवत् ; संर. ५५६.

( २ ) संर. ५५६–५५७.

चतुर्वारमिदं कार्यमिति केचित्समूचिरे ।
भगो मे काम इत्यादीन् मन्त्रानिच्छन्ति केचन ॥
स्वशिरःस्थं ततः पुष्पं समादाय ततो वरः ।
क्षीर आज्ये च संप्लाव्य वरस्तेन ललाटके ॥
वध्वाः कुर्वीत तिलकमेवं कुर्याद्वधूस्ततः ।
निक्षिपेतां पुष्पमाले कण्ठयोस्तु परस्परम् ॥
वस्त्रद्वयं कञ्चुकं च सूत्रं मङ्गलसंज्ञकम् ।
अर्पयेयुः सुवासिन्यो वध्वै तां च वधूं वरः ॥
कृतवस्त्रपरीधानां संस्मरन्निष्टदेवताम् ।
सूत्रेण मङ्गलाख्येन कण्ठदेशे विभूषयेत् ॥
माङ्गल्यतन्तुनेत्येष मन्त्रोऽत्र कथितो बुधैः ।
इतरैर्भूषणैः पश्चात्तत्तदङ्गेषु भूषयेत् ॥
वधूवरौ प्रकुर्यातां गणेशस्य तु पूजनम् ।
सौभाग्याद्यभिवृद्ध्यर्थं महालक्ष्म्यास्तथैव च ॥
पार्वत्याश्च तथा शच्याः पूजनं तु समाचरेत् ।
सौभाग्यार्थं वायनानि प्रदद्यात् सुसमाहिता ।
दिनत्रयं प्रकुर्यातां व्रतस्याऽऽचरणं ततः ॥

## नृसिंहः

मङ्गलसूत्रबन्धनम्

[1]सौम्यांशे वरयेत्कन्यां लिङ्गाकारं सुवर्णकम् ।
कण्ठे संयोजयेदेव माङ्गल्येन सहाङ्गना ॥
विवाहसमये चैवं कृत्वा तत्पतिना व्रजेत् ॥

होमशेषं प्रतीति शेषः । प्रपा. ३५७

## श्रीधरीये

मङ्गलसूत्रबन्धनम्

[2]कन्यायाः करसंग्रहोक्तसमये चक्राङ्कुरालङ्कृतिः ॥

करसंग्रहो विवाहः तत्समये चक्राङ्कुरालङ्कृतिः स्वर्णमयलिङ्गाकृतिर्धार्या । प्रपा. ३५६

(१) प्रपा. ३५६.
(२) प्रपा. ३५६.

## शाकलकारिकाः

अक्षतारोपणम्, कङ्कणबन्धनम्, वस्त्रपरिधानम्, वधूवरयोर्वस्त्रप्रान्तबन्धनम्, शिखाबन्धः, मङ्गलसूत्रबन्धनम्, पुण्याहवाचनम्

[1]उच्चरेत् पूर्ववद्दाता कन्या तारयत्वित्यथ ।
मन्त्रोऽयं सकृदेव स्यादक्षतारोपणं सकृत् ॥
क्षीराज्यसंयुतं कुर्याद्यज्ञो मे काम इत्यथ ।
ततो वदेदाशिषो मे कामः समृध्यतामिति ॥
द्विगुणेनैव सूत्रेण पञ्चधा वेष्टनं तयोः ।
दम्पत्यो रक्षणार्थाय कुर्यादीशानकोणतः ॥
परि त्वेत्येकया चाथ तान् वो मह इत्येकया ।
दशावनिभ्य इत्यादि ब्रूयादृग्भिश्च तिसृभिः ॥
कन्या वरस्य बध्नीयात् कङ्कणं दक्षिणे करे ।
कन्यायाश्च वरस्तद्वद्बह्वृचानामयं विधिः ॥
बध्नीयाद्दक्षिणे हस्ते कङ्कणं तूभयोरपि ।
बृहत्सामेति कन्याया विश्वेत्ता ते वरस्य च ॥
प्रावृत्य परिधायाथ वधूश्चैवाम्बरे शुभे ।
बध्नीयादुभयोर्वस्त्रे नीललोहितमित्यृचा ॥
अत्र केचिच्छिखाबन्धमिच्छन्ति देशधर्मतः ।
वध्वा वरस्य बध्नीयादग्ने विश्वेभिरित्यृचा ॥
कुङ्कुमाक्तं चैव सूत्रं माङ्गल्यमणिपूरितम् ।
मन्त्रेणानेन बध्नीयाद्वध्वाः कण्ठे तु वै वरः ॥
[2]माङ्गल्यतन्तुनाऽनेन मम जीवनहेतुना ।
कण्ठे बध्नामि सुभगे सा जीव शरदः शतम् ॥
[3]पुण्याहवाचनं कुर्याद्वरो वध्वा सहैव तु ।
कर्मणोऽस्य च पुण्याहं भवन्तो ब्रुवन्त्वित्यथ ॥

(१) शाका. १३७–१४५ पृ. १५–१६.
(२) शाका. १४६ पृ. १६ ; विपा. ५० ( भागः २ ) मम जी ( भर्तृजी ) स्मृतिरत्ने ; संग. २६४ सा जीव ( संजीव ) शेषं विपावत्, विधानपारिजाते : २११ (=) सा ( त्वं ) शेषं विपावत्.
(३) शाका. १४७, १४८ पृ. १६.

ऋद्धिं च स्वस्ति चैकैकं त्रिस्त्रिर्ब्रूयात्तथैव ते ।
देशधर्मानुसारेण विवाहः कार्य एव तु ॥

## शौनककारिकाः

कङ्कणबन्धनम्, मङ्गलसूत्रबन्धनम्

[1]दम्पत्यो रक्षणार्थं हि बध्नीयात् कङ्कणं तयोः ।
एकमेकस्य करयोर्बध्नीयातां तु दम्पती ॥

अनादेशे दक्षिणं प्रतीयादिति भाष्यकारः । घप्र. ४७

[2]द्विगुणेनैव सूत्रेण पञ्चधा वेष्टनं तयोः ।
ततोऽप्यधोर्ध्वतोत्तार्य प्रकोष्ठे बन्धनं तयोः ॥

[3]ततो मङ्गलसूत्रं च ध्यायन्निष्टां च देवताम् ।
बद्ध्वा कण्ठप्रदेशेऽस्या भूषणानि च शक्तितः ॥

## कुमारिलकारिकाः

अक्षतारोपणम्, तिलककरणम्, परस्परमुखेक्षणम्, माल्यारोपणम्, कङ्कणबन्धनम्, वस्त्रप्रान्तबन्धनम्, दाक्षायणीनमस्कारः, गृहीतकरयोर्होमदेशगमनम्

[4]सघृतं क्षीरमादाय कराभ्यां कन्यकाञ्जलिम् ॥
[5]द्विरुन्मृज्य वरः सिक्ताञ्शुक्लाञ्शाल्यक्षतानथ ।
गृहीत्वाऽञ्जलिना तस्या अञ्जलौ द्विः क्षिपेत्ततः ॥

[1]आदायाञ्जलिमाधत्ते तदञ्जल्युपरि स्वयम् ।
कन्येत्याद्याशिषः पूर्वमुक्त्वा दाता ततः परम् ॥

[2]कन्यकां प्रतिगृह्णात्वित्यन्ते क इति मन्त्रतः ।
उपरिस्थाञ्जलौ पूर्णे हरेत् स्वर्णोदकं ततः ॥

[3]तमेव प्रतिगृह्णामीत्यन्तं मन्त्रमुदीरयेत् ।
अञ्जलिस्थाक्षतान् कन्यामूर्धनि प्रक्षिपेद्वरः ॥

[4]स्वाञ्जलिस्थाक्षतान् कन्या वरमूर्ध्नि विनिक्षिपेत् ।
मूर्ध्निक्षेपान्तमेवं स्यात् पुनरुन्मार्जनादिकम् ॥

[5]उन्मार्जनादिकं कुर्यात् पूर्ववत् कन्यका वरे ।
कन्येत्यादि पिता कुर्याद्वरतन्त्रं वरो वदेत् ॥

[6]कन्याशिरःस्थमाल्यस्य गृहीत्वा कौसुमं दलम् ।
सघृतं क्षीरसंमिश्रं कुर्यात्तिलकमुत्तमम् ॥

[7]वरः कन्याललाटे च कन्या वरशिरःस्रजः ।
पुष्पस्य दलमादाय क्षीराज्याक्तं वरस्य तु ॥

[8]ललाटे तिलकं कुर्यादीक्षेतैव मिथो मुखम् ।
कण्ठे मिथः शुभे माल्ये दम्पती प्रतिमुञ्चतः ॥

---

(१) घप्र. ४७.

(२) घप्र. ४७; संग. २६३ धा वेष्टनं (धाऽऽवेष्टितं).

(३) शौका. १४–१५ पृ. ५९ बद्ध्वा (वध्वाः) शेऽस्याः (शे स्यात्) च श (स्वश); प्रपा. ३५५ शौकावत्; संप्र. ८२७ बद्ध्वा (वध्वाः) शेऽस्याः (शे स्यात्); संकौ. २१९ विपा. ४० (भागः २) कण्ठ (कण्ठे); संग. २६४ संकौवत्, विधानपारिजाते. बद्ध्वा (वध्वाः);

(४) कुका. १।२०।८; प्रपा. ३५३ ञ्जलिम् (ञ्जलौ).

(५) कुका. १।२०।९; प्रपा. ३५३ ञ्शुक्लान् (ञ्शुभ्रान्) ततः (वरः).

(१) कुका. १।२०।१०; प्रपा. ३५३ माधत्ते (मादत्ते) दाता ततः परम् (कन्यापिता ततः).

(२) कुका. १।२०।११ कन्यकां (कन्यां त्वां) त्वन्ते (त्वन्ते); प्रपा. ३५३.

(३) कुका. १।२०।१२; प्रपा. ३५३ तमेव (तामेव).

(४) कुका. १।२०।१३; प्रपा. ३५३ मूर्ध्नि विनि (मूर्धनि नि).

(५) कुका. १।२०।१४; प्रपा. ३५३ दिकं कु (दि द्विः कु) पूर्ववत् (वरवत्).

(६) कुका. १।२०।१५; प्रपा. ३५३ संमिश्रं (संयुक्तं).

(७) कुका. १।२०।१६; प्रपा. ३५३ ललाटे च (ललाटेऽथ).

(८) कुका. १।२०।१७; प्रपा. ३५३ तैव (तैवं) शुभे माल्ये (शुभां मालां).

[1]क्षीराज्याक्तेन सूत्रेण शुक्लेनैतौ प्रदक्षिणम् ।
आवेष्ट्य पादादुद्धृत्य ऋक् च वा इति मन्त्रतः ॥
ऐशान्यादिकृतं सूत्रं पुनः पश्चानुवेष्टयेत् ।
हरिद्राक्षीरसंसिक्तं कन्याया दक्षिणे करे ॥
नह्येद्वरः पुनः कन्या वरहस्तेऽथ दक्षिणे ।
आशीर्भिर्वाचयित्वाऽथ त्रिंशद्रुद्रादिषु क्रमात् ॥
[2]नह्येद्वस्त्रान्तमुभयोः प्राङ्मुखौ च ततः परम् ।
देवीं दाक्षायणीं नत्वा सर्वसंपत्प्रदायिनीम् ॥
[3]होमदेशं व्रजेतां तौ परिगृह्य करौ मिथः ।
तदेतत् सूत्रकृद्वक्ति सूत्रेणोच्चावचा इति ॥

## कपर्दिकारिकाः

परस्परसमीक्षणम्, वधूवरयोरागुरणम्, रोदननिमित्तक-जपः, वस्त्रपरिधापनम्, मङ्गलसूत्रबन्धनम्

[4]भ्रातृमन्त्रजपोऽथ समीक्षणम् ।
अत्र चागुरणं* वरकन्ययो-
र्भुवोर(?र्भ्र्वो)न्तरं यजुषा परिमार्जयेत् ॥
कन्यका स्वजनो यदि वा स्वयं
यर्हि रोदिति बन्धुवियोगतः ।
तर्हि जीववतीं तु जपेदृचं
कन्यकावरणे परिवर्जयेत् ॥

परिधाप्याहतं वासो वरो मङ्गल्यसूत्रकम् ।
सुवर्णमणिसंयुक्तं बध्नीयात्कन्यकागले ॥
माङ्गल्यतन्तुनाऽनेन भर्तृजीवनहेतुना ।
कण्ठे बध्नामि सुभगे त्वं जीव शरदः शतम् ॥
स्नापनादि तु यद्बहुमन्त्रकं
कर्म तत्क्रियतेऽन्तत एव हि ॥

## रेणुकारिकाः

देशकुलाचारानुष्ठानम्, वधूं हस्ते गृहीत्वा होमदेश-गमनम्, उदकुम्भधारिणोऽवस्थानम्

[1]कारयन्ति स्त्रियो वृद्धा यत् कर्तव्यमिहैव तत् ।
प्रमाणं वचनं तासां वचनाच्च श्रुतेरिह ॥
[2]अन्यत्राभक्ष्यपापेभ्य इत्यवोचत् त्रिविक्रमः ।
वामहस्ते गृहीत्वा तां प्रत्तामेव वधूं वरः ॥
[3]यदेषि मनसेत्युक्त्वा निष्कामति गृहात्ततः ।
अप्रतिग्रहयोग्यस्य प्रतिग्रहविधानतः ॥
[4]क्षत्रियादेर्यथाऽऽदानं स्यादादायेति सूत्रितम् ।
लक्ष्मीनाम्नीत्यसौ स्थाने वधूनामाऽऽदिशेद्वरः ॥
[5]कृत्वांऽसे दक्षिणं कुम्भं प्रवालप्रसवार्चितम् ।
वारिपूर्णं द्विजोऽन्योऽपि निष्कामेदनु दम्पती ॥
[6]सोऽग्नेरुत्तरतो वाऽऽस्ते वाग्यतो दक्षिणेऽथ वा ।

---

* वरकन्ययोरिति पूर्वान्वयि । आगुरणं समयकरणम् 'आवाभ्यां कर्माणि कर्तव्यानि, प्रजाश्चोत्पादयितव्याः' इत्येवंरूपम् । तदेतत् तात्पर्यदर्शने (४।४) स्पष्टम् ।

(१) प्रपा. ३५३.

(२) कुका. १।२०।१८ नह्येत् (बद्ध्वा), प्रपा. ३५३.

(३) कुका. १।२०।१९ होमदेशं (होमदेशे) वक्ति सूत्रे (वृत्तिसूत्रे) वचा इति (वचोदितम्); प्रपा. ३५३ करौ (करे).

(४) ककां. २।३–७.

(१) रेका. १९४ पृ. ६२.

(२) रेका. १९५ पृ. ६२; संग. २६४ उत्त.

(३) रेका. १९६ पृ. ६२; गभा. ६९ उत्त; संग. २६४ पू.: २६५ उत्त.

(४) रेका. १९७ पृ. ६२; गभा. ६९ पू.; संग. २६५ नाम्नीत्यसौ (नाम्नीं त्वसौ).

(५) रेका. १९८ पृ. ६२; संग. २६५ प्रवालप्रसवार्चितम् (चूतस्य प्रवलान्वितम्).

(६) रेका. १९९ पृ. ६२; संग. २६५ पू.

संनिधानात् पिता तस्या अध्येषयति दम्पती ॥
'परस्परं समीक्षेथामिति वेदीसमीपतः ।
अघोरचक्षुरित्याद्यैरन्योन्यं ते समीक्षतः ।
वरस्य मन्त्रपाठोऽयं निविष्टया इत्यवसानतः ॥

## गृह्यासंग्रहः

### ध्रुवाणामपां लक्षणम्

'महानदीषु या आपः कौप्यान्याश्च ह्रदेषु च ।
गन्धवर्णरसैर्युक्ता ध्रुवास्ता इति निश्चयः ॥

'अथ जन्यानामेको ध्रुवाणामपां कलशं पूरयित्वा' इत्यादिसूत्रोक्ता ध्रुवा अपो व्याकुरुते– महानदीष्विति । महानदीषु गङ्गाद्यासु या आपः, याश्च कूपोद्भवाभ्योऽन्यास्तडागादिसंभवा आपः, ह्रदेषु अगाधजलेषु या आपः, ता इमाः शोभनगन्धवर्णरसैर्युक्ताः सर्वा अप्यापः ध्रुवाः– इत्ययमाचार्यस्य निश्चयः । अन्ये तु वर्णयन्ति– 'कूपे या आपः, अन्याश्च तडागादिषु या आपः' इति । तेषां 'कौप्यान्याः' इति विसर्गलोपे संधिरार्षः द्रष्टव्यः । गृसंभा.

### उदकुम्भधारिणोऽवस्थानम्

गन्धमाल्यैरलङ्कृत्य सकुम्भो वाग्यतः शुचिः ।
धारयेत् त्रिषु वर्णेषु प्रावृतांसो द्विजोत्तमः ॥

'अथ जन्यानामेको ध्रुवाणामपां कलशं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते' इति सूत्रोक्तमुदकुम्भधारिणोऽवस्थानं विशिनष्टि– गन्धेति । गन्धमाल्यैरुदकुम्भमलङ्कृत्य सकुम्भो नियमितवचनः शुचिः प्रावृतांसः प्रावृतौ अंसौ यस्य सोऽयं प्रावृतांसो वस्त्राच्छादितस्कन्धद्वय इत्येतत् । द्विजोत्तमः उत्तमो द्विजः त्रिषु वर्णेषु धारयेत्, ध्रुवा अपः इत्यर्थः । गृसंभा.

(१) रेका. २००–२०१ पृ. ६२.
(२) गृसं. २।२५–२६.

# पाणिग्रहणम्
## ( विवाहहोमादि )

### बौधायनगृह्यसूत्रम्

सप्तपदी

[1]अथैनां दक्षिणे हस्ते गृह्णाति-- 'मित्रोऽसि' इति ॥

अथैनां देवयजनमुदानयति-- 'एकमिषे विष्णुस्त्वाऽन्वेतु । द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु । त्रीणि व्रताय विष्णुस्त्वाऽन्वेतु । चत्वारि मायोभवाय विष्णुस्त्वाऽन्वेतु । पञ्च पशुभ्यो विष्णुस्त्वाऽन्वेतु । षड्रायस्पोषाय विष्णुस्त्वाऽन्वेतु । सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु' इति ॥

सप्तमं पदमुपसंगृह्य जपति-- 'सखायः सप्तपदा अभूम सख्यं ते गमेयं सख्यात्ते मा योषं सख्यान्मे मा योष्ठाः' इति* ॥

हृदयाभिमर्शः कर्णजपश्च

[2]अथास्या उपोत्थाय दक्षिणेन हस्तेन दक्षिणमंसं प्रतिबाहुमन्ववहृत्य हृदयदेशमभिमृशति -- 'मम हृदये हृदयं ते अस्तु मम चित्ते चित्तमस्तु ते । मम वाचमेकमनाः शृणु मामेवानुव्रता सहचर्या मया भव ॥' इति ॥

अथास्यै दक्षिणे कर्णे जपति--

'मां ते मनः प्रविशतु मां चक्षुर्मामु ते भगः । मयि सर्वाणि भूतानि मयि प्रज्ञानमस्तु ते ॥',

'मधुगे मध्वगाहे जिह्वा मे मधुवादिनी । मुखे मे सारघं मधु दत्सु संवननं कृतम् ॥',

'चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम् । यद्दित्तौ देवगन्धर्वौ तेन संवनिनौ स्वः ॥',

'स्पृशामि तेऽहमङ्गानि वायुरापश्च मा परः । मां चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः ॥',

'सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥',

'सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥',

'सरस्वति प्रेदमव सुभगे वाजिनीवति । तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः ॥' इति ॥

पाणिग्रहणम्

अथास्यै दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं साङ्गुष्ठमभीव लोमानि गृह्णाति-- 'गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥' इति ॥

उपयमनीहोमः

अथैनां प्रदक्षिणमग्निं पर्याणयति--'परि त्वाऽग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः ॥' इति ॥

अथ तथोपविश्यान्वारब्धायामुपयमनीर्जुहोति--

'अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु । सं जास्पत्यं सुयममाकृणुष्व शत्रूयतामभितिष्ठा महांसि स्वाहा ॥',

'सोमाय जनिविदे स्वाहा ॥',

'गन्धर्वाय जनिविदे स्वाहा ॥',

'अग्नये जनिविदे स्वाहा ॥',

'कन्यला पितृभ्यो यती पतिलोकमव दीक्षामदास्थ स्वाहा ॥',

---

* अतः परं मधुपर्कार्हणमग्निमुखहोमान्तमग्निमुखं चोक्तम्, तत् यथाक्रमं मधुपर्काग्निमुखप्रकरणयोर्द्रष्टव्यम् ।

(१) बौगृ. १।१।२७-२९.

(२) बौगृ. १।४।१-३१.

'प्रेतो मुञ्चाति नामुतः सुबद्धाममुतस्करत्। यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगा सती स्वाहा ॥',

'इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कुरु। दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि स्वाहा ॥',

'अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् स्वाहा ॥',

'इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि प्रबुध्यतामियं स्वाहा ॥',

'मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु। मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा ॥',

'अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाऽघम्। शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा ॥' इति ॥

लाजहोमः

अथैनामुत्थाप्योत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति– 'आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव। अभितिष्ठ पृतन्यतः सहस्व पृतनायतः ॥' इति ॥

अथास्या अञ्जलावुपस्तीर्य तस्याः सोदर्यो द्विर्लाजानावपति ॥

तानभिघार्य जुहोति– 'इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती। दीर्घायुरस्तु मे पतिर्जीवातु शरदः शतं स्वाहा ॥' ॥

अथैनां प्रदक्षिणमग्निं पर्याणयति– 'तुभ्यमग्ने पर्यवहन् सूर्यां वहतुना सह। पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥' इति ॥

तथाऽऽस्थापयति तथा जुहोति ॥

अथैनां पुनः प्रदक्षिणमग्निं पर्याणयति– 'पुनः पत्नीमग्निरदादायुषा सह वर्चसा। दीर्घायुरस्या यः पतिः स एतु शरदः शतम् ॥' इति ॥

तथैवाऽऽस्थापयति तथैव जुहोति ॥

अथैनां पुनरेव पर्याणयति– 'विश्वा उत त्वया वयं धारा उदन्या इव। अतिगाहेमहि द्विषः ॥' इति * ॥

विवाहहोमेऽग्निनियमः

[1]यस्मिन्नग्नावुपनयति तस्मिन् ...... पाणिग्रहणम् ... ॥

विवाहकाले कन्यायाः पतनेऽश्रुमोचने च प्रायश्चित्तम्

[2]अथ यदि कन्योपसाद्यमाना वोह्यमाना वा पतेत्तामुत्थापयेयुः– 'उदस्थाद्देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात्। इन्द्राय कृण्वती भागं मित्राय वरुणाय च ॥' इति ॥

[3]अथ यदि कन्योपसाद्यमाना वोह्यमाना वाऽश्रु कुर्यात्तामनुमन्त्रयते– 'जीवां रुदन्ति विमयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः। वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे ॥' इति ॥

उह्यमाना वरेण पाणिग्रहणेन। संर. ५००

## आश्वलायनगृह्यसूत्रम्

विवाहहोमे पञ्चाऽऽज्याहुतयः

[4]तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात् ॥

[5]'अग्न आयूंषि पवसे' इति तिसृभिः 'प्रजापते न त्वदेतान्यन्यः' इति च, व्याहृतिभिर्वा ॥

---

* अतः परं जयाभ्यातानाद्युत्तरतन्त्रं विहितम्, तत् अग्निमुखप्रकरणे द्रष्टव्यम्।

(१) बौगृ. २।६।१७; बौगृप. १।१६।४; मुका. ३५४.

(२) बौगृ. ४।१।९; संर. ५०० पयेयुः (पयेत्).

(३) बौगृ. ४।१।११.

(४) आगृ. १।४।३; अप. १।६१ पृ. ९० (=); संम. ६४; कृभ. ११३४ (=) तेषां (एषां); संर. ५४८.

(५) आगृ. १।४।४-७.

(१) चौलादीनां ग्रहणं स्वयमेव भविष्यति। तेषामेवाधिकारः। तस्मात् तेषामिति न वक्तव्यम्। अनन्तरो विवाहोऽधिकृतः। तन्निवृत्त्यर्थं तेषामित्युच्यते। तन्नोपपद्यते। दर्शयिष्यति यथा सर्वेषामेवैता आहुतयो भवन्तीति। 'विवाहे चतुर्थीम्' इति विवाहग्रहणं करोति। तेन सर्वत्रैता आहुतयो भवन्तीति सिद्धम्। तेषामिति न वक्तव्यम्। तत्रैके— तेषां पुरस्तादिति पुरस्ताद्धोमा एते भवन्तीति। एवं संप्रतिपन्नाः प्राच्याः। यद्येवम्, तेषांग्रहणमपार्थकमेव। पुरस्तादित्येव पुरस्ताद्धोमः सिद्धः। अपरे आहुः— तेषांग्रहणं पुरस्ताद्धोमनिवृत्त्यर्थम्। तेषामेव चौलकर्मादीनामेता आहुतयो भवन्ति, न पुरस्ताद्भवन्तीति। एतस्मिन् पक्षे पुरस्ताद्ग्रहणमपार्थकम्। नापार्थकम्। प्रयोजनमुपरिष्टाद्वक्ष्यामः।

तत्र 'चतस्र आज्याहुतीः' इति चतस्रग्रहणमपार्थकम्। चतस्र एवैता भविष्यन्ति— 'अग्न आयूंषि ... इति च'। तस्मादुपदेशादेव चतस्र आहुतयो भविष्यन्ति। 'स्वाहाकारान्तैर्मन्त्रैः' (आश्रौ. १।१।११) इति प्रत्यृचं मन्त्रसमाप्तिर्भविष्यति। एवं सिद्धे यच्चतस्रग्रहणं करोति तज्ज्ञापयति— अन्यत्र प्रत्यादेशं होमो भवति 'धाता ददातु दाशुष इति द्वाभ्याम्' (आगृ. १।१४।३) इत्येवमादिषु। "कथं पुनश्चैतद्गम्यते— 'प्रत्यादेशं होमो भवति' इति? येन क्वचिद्यत्नं करोति 'प्रत्यृचम्' इति। तेन यत्र यत्नो नास्ति तत्र प्रत्यादेशं होमो भवतीत्येतत्सिद्धम्" एवमेके। अन्ये पुनर्नैवमिति मन्यन्ते। कथं तर्हि? प्रत्यृचमेव होमः सर्वत्र। कस्मात्? 'स्वाहाकारान्तैर्मन्त्रैः' इति ऋगन्ते स्वाहाकारो भवतीति, स्वाहाकारस्य प्रदानार्थत्वात्। न च स्वाहाकारमतिक्रम्य द्वितीयो मन्त्रो वक्तव्य इति। एकस्यां च क्रियायामनेके मन्त्रा वक्तव्या इतीदं चायुक्तं विद्यमानायां गताविति। तस्मात् सर्वत्र प्रत्यृचमेव होमो भवति। ननु चतस्रग्रहणमपार्थकं प्रत्यृचग्रहणानि वा। उच्यते। * सर्वाणि प्रयोजनवन्ति भवन्ति। तत्र चतस्रग्रहणे प्रयोजनं चतस्र एव स्युः, न भूयस्य इति। कथं पुनर्भूयस्यः प्राप्नुवन्ति? 'समुच्चयमेके' इति वचनादष्टावाहुतयः प्राप्नुवन्ति। तत्रापि कथं चतस्र एव स्युरिति। एतदर्थं नियमः क्रियते। एवं सति समुच्चयो नोपपद्यत इति। मन्त्रेषु समुच्चयमुपपादयिष्यति। कथं प्रयोगः कर्तव्यः? ऋगन्ते व्याहृतिः, व्याहृत्यन्ते स्वाहाकार इति। मन्त्राणां समुच्चयो नोपपद्यते, आहुत्यधिकारात्। तेनाऽऽहुतीनामेव समुच्चयः कर्तव्यः, न मन्त्राणामिति। तेनाष्टावेवाऽऽहुतयो भवन्ति। ननु चैवं वर्ण्यमाने नियमोऽपार्थकः। अन्यदेव नियमप्रयोजनम्— चतस्र एव कथं स्युः, नाधिकाः स्युः। कथं वाऽधिकत्वं प्राप्नोति? आज्यभागयोर्विकल्पेन क्रिया प्राप्नोति। तत्र कथं पक्षेणापि तयोः क्रिया न स्यादित्यतो नियमः क्रियते। नियमे सति दोषः प्रसज्यते। स्विष्टकृदपि न प्राप्नोति। नैष दोषो भविष्यति स्विष्टकृतः। कस्मात्? पुरस्ताद्ग्रहणात्। पुरस्ताद्ग्रहणं ह्यत एव कृतम्— पुरस्तान्नियमः कथं स्यात्, उपरिष्टान्मा भूदिति। आज्यग्रहणं किमर्थम्? द्रव्यनिर्देशार्थमुच्यते। द्रव्यनिर्देशार्थं चेन्न वक्तव्यम्। अनादिष्टद्रव्यके ह्याज्यमेव दर्शयति— 'आज्यशेषेण वाऽनक्ति हृदये' इति। तेनाऽऽज्यं प्रतीयते सर्वहोमेषु। अन्यार्थमिहाऽऽज्यग्रहणम्। किमर्थं तर्हि? आज्यहोमधर्मप्राप्त्यर्थम्। आज्यहोमे सति कृताकृतमेतेषु परिस्तरणं यथा स्यादित्येतत्प्रयोजनम्।

व्याहृतिभिर्वा चतसृभिर्होमः कर्तव्यः। कुत एतत् यथा चतस्रो व्याहृतयो भवन्तीति? परिभाषासामर्थ्यात्। 'व्याहृतिभिश्च' (आश्रौ. १।१।११) इत्युक्त्वा पुनर्व्याहृतय उपदिश्यन्ते 'भूः स्वाहा' इत्येवमाद्याः। तत्र चतसृणामेव व्याहृतीनां प्रत्येकमुपदेशं करोति। एवं प्रत्यक्षोपदेशात् व्याहृतिग्रहणमपार्थकम्। तत्रेदं प्रयोजनम्। कथम्? यत्र यत्र व्याहृतीनामुपदेशः स्यात् तत्र तत्र चतस्रो गृह्येरन्निति। अविशिष्टेन व्याहृतिग्रहणेन चतस्रो गृह्यन्ते। तस्मादिह चतस्रो व्याहृतयः सिद्धा भवन्ति।

देभा.

* प्रत्यृचग्रहणप्रयोजनं गृहप्रवेशप्रकरणे गृहप्रवेशनीयहोमसूत्रव्याख्याने द्रष्टव्यम्।

( २ ) तेषांग्रहणं किमर्थम् ? विवाहस्यानन्तरत्वात् सर्वेषां प्राप्त्यर्थमिति चेत् , तन्न, दर्शनात् सर्वेषां स्युः , यदयं 'त्रिवाहे चतुर्थीम्' इत्याह । उच्यते— तेषां संबन्धिन्यः अन्तर्वर्तिन्यः एता आहुतयो भवन्ति, न तु तेभ्यः पूर्वं भवन्तीत्येवमर्थं तेषांग्रहणम् । तर्हि पुरस्ताद्ग्रहणमपार्थकम् । न । प्रयोजनमुपरिष्टाद्वक्ष्यामः । संख्यावचनं किमर्थम् ? तत्रैके ब्रुवते । यत्र परिमाणवचनं प्रत्यृचग्रहणं वा नास्ति "धाता ददातु दाशुषे' इति द्वाभ्याम्" (आगृ. १।१४।३) इत्यादौ, तत्र कथं प्रत्यादेशं होमः स्यादिति । तदसत्, 'एकमन्त्राणि कर्माणि' इति न्यायात् । अपि च 'स्वाहाकारान्तैर्मन्त्रैः' ( आश्रौ. १।१।११ ) इति प्रतिमन्त्रं स्वाहाकारः प्राप्तः , स च प्रदानार्थः । न च तमतिक्रम्य होतव्यमिति युक्तं वक्तुमस्य विद्यामानायां गतौ । तेन सर्वत्र प्रत्यृचमेव होम इति सिद्धम् । का पुनरस्य गतिः ? तत्रैके नियमार्थमिति प्राहुः । समुच्चयपक्षेऽपि कथं चतस्र एव स्युः , न बह्व्यः ? इति । कथं प्रयोगः ? एकैकस्या ऋचोऽन्ते एकैका व्याहृतिरिति । तदप्यसत् । प्राधान्येनाऽऽहुतिविधिप्रकरणत्वादाहुतिसमुच्चय एव, न मन्त्रसमुच्चयः । किमर्थं तर्हीदम् ? नियमार्थमेव चतस्र एव स्युरिति । तेनाऽऽज्यभागौ न भवतः । तर्हि स्विष्टकृदपि न स्यात् । न । पुरस्तान्नियमार्थं हि पुरस्ताद्ग्रहणं कृतम् । आघारौ तु स्त एव, अनाहुतित्वात् । आज्यग्रहणं परिस्तरणविकल्पार्थम् । ¶ गानावृ.

( ३ ) त्रिस्पष्टार्थं तेषांग्रहणम् । † अना.

**समुच्चयमेके ॥**

( १ ) एके आचार्याः व्याहृतीनां च पूर्वोक्तानां चाऽऽहुतीनां समुच्चयमिच्छन्ति । तत्राऽऽहुतीनां समुच्चयो भवतीत्युक्तं पुरस्तात् । देभा.

( २ ) एक आचार्याः ऋगाहुतीनां व्याहृत्याहुतीनां च समुच्चयमिच्छन्ति । तेनाष्टाऽऽहुतयः । * गानावृ.

¶ शेषं देभावत् ।

† शेषं गानावृवत् ।

* अना. गानावृवत् ।

**नैके कांचन ॥**

( १ ) एके आचार्या न कांचन आहुतिमिच्छन्ति । किमुक्तं भवति ? नैवाऽऽहुतयो भवन्तीति । एवं सति नैके इत्येव वक्तव्यम् । कांचनग्रहणं कस्मात् ? नैक इत्येवमुच्यमाने समुच्चयविकल्पः स्यात् , प्रतिषेधविकल्पो न स्यात् । अतः कांचनग्रहणं क्रियते । नैतदस्ति प्रयोजनम् , समुच्चयविकल्पस्य प्रागेव सिद्धत्वात् । तस्मान्नैके इत्येव वक्तव्यम् , न कांचन इति । नैतदस्ति । नैके इत्येवमुच्यमाने दोषः स्यात् । को दोषः ? होमविकल्पः स्यात् , न आहुतिविकल्पः । कः पुनर्विशेषो होमस्याऽऽहुतीनां च ? आहुतयो या इहोपदिष्टास्तासां प्रतिषेधः स्यात् । होमे तु प्रतिषिध्यमाने नैव होमकर्माऽऽरभ्यते । तेन कांचनग्रहणं क्रियते— कथमाहुतिप्रतिषेधः स्यात् , न होमप्रतिषेध इति । देभा.

(२) एके आचार्याः कामप्याहुतिं नेच्छन्ति । नैके इत्येव वक्तव्ये कांचनग्रहणमृगाहुतीनां व्याहृत्याहुतीनां चायं प्रतिषेधो यथा स्यात् , किंशब्दस्य सर्वनामत्वात् , सर्वनाम्नां च प्रकृतपरामर्शित्वात् , अन्यास्त्वाहुतयो होतव्या इत्येवमर्थम् । तेनानादेशाहुतयः सिद्धाः । * गानावृ.

**'त्वमर्यमा भवसि यत् कनीनाम्' इति विवाहे चतुर्थीम् ॥**

अनयर्चा विवाहे चतुर्थी आहुतिर्वेदितव्या । अत्र संशयः— किं पूर्वायाश्चतुर्थ्याः स्थाने एषा भवति, आहोस्वित् तस्या उत्कर्ष इति । तत्रैके चतुर्थीमित्युपदेशात् चतुर्थ्याः स्थाने भवतीति मन्यन्ते । कस्मात् ? समानजातित्वात् । अन्ये पुनः पूर्वोक्तायाश्चतुर्थ्या उत्कर्षमिच्छन्ति । किं कारणम् ? असमानजातित्वात् । न तत्र चतुर्थीति प्रत्यक्षं काचित् चोदनोच्यते । किंच, संख्यानिर्दिष्टश्चार्थः पूर्वोक्तं न बाधते । यत्र च संख्यानिर्देशे पूर्वस्य बाधनामिच्छन्ति तत्र यत्नान्तरमारभ्यते । यथा— 'तृतीयस्याह्नः स्थाने महाव्रतम्' ( आश्रौ. २।४।२) इति । यत्र पुनर्यत्नो नास्ति तत्र संख्याशब्द उपदिश्य-

* अना. गानावृवत् ।

मानो न बाधको भवति । यथा 'प्रतिप्रस्थाता वाजिने तृतीयः' (आश्रौ. १।२।१७) इति प्रतिप्रस्थाता चोद्यमान आग्नीध्रस्योत्कर्षाय भवति, नापनयाय । एवमिहाप्येषा चतुर्थी पूर्वोक्तायाश्चतुर्थ्या उत्कर्षाय भवति । तस्मात् पञ्चैता आहुयो भवन्ति एतस्मिन् पक्षे आग्नीध्रवत् । यथा तत्राऽऽग्नीध्रश्चतुर्थ एवमिहाप्याहुतिः (पूर्वोक्ता पञ्चमी) । §देभा.

दृषदश्मनोरुदकुम्भस्य च स्थापनम्, पाणिग्रहणम्, पुत्रकामेनाङ्गुष्ठमात्रग्रहणम्, कन्याकामेनाङ्गुलिमात्रग्रहणम्, उभयकामेनोभयग्रहणम्

¶[1]यत्तु समानं तद्वक्ष्यामः ॥

**[2]पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया 'गृभ्णामि ते सौभगत्वाय हस्तम्' इत्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति ॥**

(१) अग्नेः पश्चात् दृषदमश्मानं प्रतिष्ठापयति । तत्राश्मग्रहणेन कस्य ग्रहणं भवति ? अश्मग्रहणेन दृषत्पुत्रकस्यापि ग्रहणं भवति। तेन उभयोरपि प्रतिष्ठापनं कर्तव्यम् । एवमेके । अन्ये पुनरश्मग्रहणं विशेषार्थमुपदिशन्ति— अश्ममयीं दृषदमिति । अस्मिन् पक्षे दृषद एव प्रतिष्ठापनं प्राप्नोति । दृषत्पुत्रकस्यापि तत्र प्रतिष्ठापनं कर्तव्यम् । कस्मात् ? मङ्गलार्थत्वात् । यद्युभयोरपि पक्षयोर्दृषत्पुत्रस्य प्रतिष्ठापनमिष्यते, चिन्तायाः किं प्रयोजनम् ? यद्यश्मग्रहणेन दृषत्पुत्रो गृह्यते तत्र 'परिणीयाश्मानमारोहयति' इति दृषत्पुत्रेऽप्यारोहणं कर्तव्यम् । अथाश्ममयीं दृषदमिति ये वर्णयन्ति तेषां दृषद्येवाऽऽरोहणं भवति । एतस्मिन् पक्षे अश्मग्रहणमपार्थकम् । कस्मात् ? येनाश्ममय्येव दृषद्भवतीति । नेत्युच्यते । अनश्ममय्यपि दृषद् विद्यते । तन्निवृत्त्यर्थं विशेषग्रहणं क्रियते । उत्तरपुरस्तादुदकुम्भं प्रतिष्ठाप्याग्नेः । समन्वारब्धायां समन्वारब्धवत्यामित्यर्थः । हुत्वा तिष्ठन् प्रत्यङ्मुख इति तिष्ठद्ग्रहणं कुर्वन् ज्ञापयति— आसीनेन होमः कर्तव्य इति । प्रत्यङ्मुखवचनं प्राङ्मुखतानिवृत्त्यर्थम् । प्राङ्मुख्या आसीनायाः । प्राङ्मुख्या इति प्राङ्मुखीत्ववचनं (नियमार्थम् ?) 'तस्य नित्याः' (आश्रौ. १।१।१) इति कर्तृवि- (? कर्तृवि)हितत्वात् प्रत्यङ्मुखीत्वनिवृत्त्यर्थम् । आसीनाया इति कस्मात् ? कथमित उत्तरं कर्म तिष्ठन्त्याः स्यात् । तत्राङ्गुष्ठग्रहणं हस्तोपलक्षणार्थम् । साङ्गुष्ठं हस्तं गृह्णीयात् अनेन कामेन— यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति । अत्र पुमांसग्रहणमपार्थकम्, पुत्रशब्देनैव सिद्धत्वात् । नेत्युच्यते । पुत्रशब्दोऽयमुभयत्र दृष्टः पुंसि स्त्रियां च । लोके वक्तारो भवन्ति— 'एहि पुत्र' इति दुहितरम् । तथा च मेधातिथिनोक्तम् — 'दुहितरमङ्क उपवेश्य पुत्र क्वासौ जामाता' इति । तेनैवं दृष्टत्वात् विशेषणमुपपद्यते पुमांसः पुत्रा इति । देभा.

(२) अग्निप्रतिष्ठापनोत्तरकालं पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्य उत्तरपूर्वदेशे उदकुम्भं प्रतिष्ठापयेत् । तत आज्यस्य बर्हिषि सादनान्तं कृत्वा समन्वारब्धायां वध्वा-मिध्माभ्याधानान्तं कृत्वा ततः पूर्वोक्ता आज्याहुतीर्हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया अङ्गुष्ठमेव गृह्णीयात् 'गृभ्णामि' इत्युक्त्वा पुत्रकामश्चेत् । मन्त्रस्तूत्तरयोरपि हस्तग्रहणयोर्भवत्येवायम् । दृषत् प्रसिद्धा । अश्मा तत्पुत्रकः । तत्रोभयोः प्रतिष्ठापनं सिद्धम् । एवं चेद्दोषः । 'अश्मानमारोहयति' (आगृ. १।७।७) इत्यत्र पुत्रकारोहणं स्यात् । तर्हि अश्मग्रहणं तस्य विशेषणं स्यात् दृषदमश्मानमिति । अश्ममयीत्यर्थः ।

---

§ गानावृ., अना. देभावत् ।

¶ व्याख्यानं 'लौकिकदेशकुलधर्माणां कर्तव्यता' इत्यस्मिन्प्रकरणे (संका. पृ. १८८३) द्रष्टव्यम् ।

(१) आगृ. १।७।२ ; प्रपा. ३५३ ; संप्र. ८२५ ; संग. २८८.

(२) आगृ. १।७।३ ; प्रपा. ३५७ ; विपा. ४० (भागः २) (पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्य उत्तरपुरस्तादुदकुम्भं निधाय समन्वारब्धायां हुत्वा) एतावदेव.

मृण्मय्यपि हि लोके दृषद्विद्यते । तर्हि पुत्रकप्रतिष्ठापनं न स्यात् । न । स्यादेव, मङ्गलार्थत्वात् । दक्षिणतः पत्न्युपविशेदुत्तरतः पतिरिति शास्त्रान्तरे दृष्टम् । स्रुवेण होमः, साधनान्तरानुपदेशात् । ' एवंभूतो व्यक्तहोम० ' ( आश्रौ. १।१।११ ) इत्यनेनैवावस्थाने सिद्धे ' तिष्ठन् समिधमादध्यात् ' (आगृ. ३।८।१६) इत्यत्र तिष्ठद्ग्रहणं कथम् ? अन्यत्राऽऽसीनस्य कर्माणि स्युरित्येवमर्थम् । ततोऽत्राप्यासीनप्राप्तौ तन्निवृत्त्यर्थं तिष्ठद्ग्रहणम् । प्रत्यङ्मुख इति प्राङ्मुखत्वनिवृत्त्यर्थम् । ' तस्य नित्याः प्राञ्चश्चेष्टाः ' ( आश्रौ. १।१।१ ) इत्यनेन प्राङ्मुखत्वे सिद्धे ' प्राङ्मुख्या आसीनायाः ' इति वचनं प्रत्यङ्मुखाधिकारनिवृत्त्यर्थम् । आसीनाया इत्येतत्कथम् ? इत उत्तरं वध्वा विहितं कर्म तिष्ठन्त्याः स्यादित्येवमर्थम् । ' उत्तानेनोत्तानं पाणिं गृह्णीयान्नीचेन चोत्तानम् ' इति शास्त्रान्तरे दृष्टम् । पुत्रशब्दः पुंसि स्त्रियां च स्मृतौ दृष्टः— ' अकृता वा कृता वाऽपि यं विन्देत् सदृशात् सुतम् । पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनम् ॥ ' ( मस्मृ. ९।१३६ ) इति । दौहित्रेण मातामहः पौत्री भवतीत्यर्थः । लोके च दुहितरि पुत्रशब्दं प्रयुञ्जाना दृश्यन्ते ' एहि पुत्र ' इति । मन्त्रे च दृश्यते ' पुमांस्ते पुत्रो जायताम् ' इति । तस्मात् पुमांसः पुत्रा इति विशेषणम् । अथवा, ' पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ ' ( मस्मृ. ९।१३८ ) इत्येवंविधः स पुत्रो जायेत, न प्रथमप्रकृतिमात्रमित्येवमर्थमुभयोर्ग्रहणम् ।

¶ गानावृ.

(३) मृन्मय्या अपि दृषदः संभवादश्मग्रहणम् । अश्मनो यस्य कस्यचिद्ग्रहणाय दृषदमित्युक्तम् । यया पिष्यते सा दृषत् । उत्तरपुरस्तात् उत्तरस्याः पूर्वस्याश्च दिशोरन्तराले । समन्वारब्धायां समन्वारब्धवत्याम् । हुत्वा तिष्ठन्निति होमोत्तरकालं स्थानदर्शनादासीन एव जुहोतीति दर्शयति । सामान्यापेक्षं च दर्शनम् ' आसीनो दर्विहोमान् जुहोति ' इति । प्रत्यङ्मुख इति वचनं प्राक्चेष्टानिवृत्त्यर्थम् । प्राङ्मुख्या इति वचनं लज्जादिनाऽवाङ्मुखीत्वनिवृत्त्यर्थम् । इह आसीनाया इति वचनमुत्तरं कर्म तिष्ठन्त्याः स्यादिति । ' गृभ्णामि ते सौभगत्वाय हस्तम् ' इति हस्तं गृह्णीयादिति नित्यो विधिः । इतरे गुणकामाः । तथा चाङ्गुष्ठमेवाङ्गुलीरेवेत्येवकारः संगच्छते । 'दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं गृह्णीयात् ' इत्यापस्तम्बः । पुत्रशब्दस्य स्त्र्यपत्येऽपि दर्शनात् पुमांस इत्युक्तम् ।

अना.

**[1]अङ्गुलीरेव स्त्रीकामः ॥**

( १ ) अत्रापि अङ्गुलीषु हस्तं गृह्णीयात् स्त्रीकामश्चेत् भवति । हस्तग्रहणे प्रज्ञाप्यमाने तत्र मन्त्रस्याधिकारो भवतीति प्रज्ञापितं भवति ।

देभा.

( २ ) एवकारोऽङ्गुष्ठनिवृत्त्यर्थः । स्त्रीकामः दुहितृकाम इत्यर्थः ।

§ गानावृ.

**रोमान्ते हस्तं साङ्गुष्ठमुभयकामः ॥**

( १ ) पुत्रकामः स्त्रीकामश्च ।

देभा.

( २ ) उभयकामः पुत्रदुहितृकामः अङ्गुष्ठाङ्गुलीभिः सह हस्तं गृह्णीयात् ।

गानावृ.

( ३ ) रोमान्ते रोमवतः प्रदेशादुपरि । उभयकामः पुत्रकामः स्त्रीकामश्च ।

अना.

परिणयनम् , अश्मारोहणम् , लाजहोमः

**प्रदक्षिणमग्निमुदकुम्भं च त्रिः परिणयञ् जपति— 'अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं द्यौरहं पृथिवी त्वं सामाहमृक् त्वं तावेह विवहावहै । प्रजां प्रजनयावहै संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतम् ॥ ' इति ॥**

---

¶ प्रपा. १।७।३–२२ सूत्रेषु वृत्तेरनुवादः , अन्तिमे हरदत्तस्यापि ।

§ अना. गानावृवत् ।

( १ ) आगृ. १।७।४–७ ; प्रपा. ३५७.

(१) उदकुम्भग्रहणं शक्यमकर्तुम् । यथैवान्येषां यज्ञपात्राणां प्रादक्षिण्यं भवति, एवमुदकुम्भस्यापि । तस्मात् परिसंख्यार्थमिति वर्णयन्ति— उदकुम्भस्यैव प्रादक्षिण्यं भवति, नान्येषां यज्ञपात्राणाम् । तत्रैके एवमिच्छन्ति । अन्येषां तु प्रयोजनम्— विवाहं प्रति यद्विशिष्टमात्रं( ? पात्रं ) तस्य बहिःकरणं यथा स्यादिति । किं पुनस्तत् ? दृषत् । त्रिः परिणयन् जपतीत्येतत् विचारयिष्यामः— किं त्रिर्जपति परिणयन्निति, आहोस्वित् त्रिः परिणयन् जपतीति । किं चातः ? यदि तावत् त्रिर्जपति परिणयन्नित्येवं कल्प्यते, त्रिर्जपः, सकृत् परिणयनं प्राप्नोति । अथ चेत् त्रिः परिणयन् जपतीति, एवं त्रिः परिणयनम्, सकृन्मन्त्रः प्राप्नोति । उभयथा च दोषः । एवं तर्हि कथमस्तु ? त्रिः परिणयनं त्रिश्च जप इति । कथमेतत् गम्यते ? अनेकं तावत् परिणयनं दर्शयति— 'परिणीय परिणीय' इति । यावच्च परिणयनं तावच्च जप इति सिद्धं भवतीति । कथम् ? परिणयनाङ्गत्वाज्जपस्य । यथाऽन्यत्रापि यावत्कृत्वः पर्युक्षणं तावत्कृत्वो जपतीति । तेनात्रापि यावत् प्रदक्षिणं तावज्जपति । देभा.

(२) अग्निमुदकुम्भं च त्रिः प्रदक्षिणं वधूं स्त्रीं परिणयञ्जपति 'अमोऽहमस्मि' इति । उदकुम्भग्रहणमन्येषां यज्ञपात्राणां बहिःकरणार्थमित्येके । अन्ये तु विवाहे यदन्यत् दृष्टं पात्रमश्मा तस्यैव बहिःकरणार्थमिति । त्रिर्ग्रहणं परिणयनेन संबध्यते उत जपेन ? यदि पूर्वेण तर्हि सकृज्जपः स्यात् । अथ जपेन तर्हि सकृत् परिणीतिः । पूर्वेणेति ब्रूमः । कुतः ? 'परिणीय परिणीय' इति तस्य बहुत्वं दर्शितम् । जपश्च परिणयाङ्गमिति कृत्वा यावत्परिणयनमावर्तते । गानावृ.

(३) सर्वेषां यज्ञाङ्गानां प्रदक्षिणेऽभ्यन्तरीभावः । अन्यान्यपि यज्ञाङ्गान्युपयुक्तानि । 'न विहारेण व्यवेयात्' इति वचनात् उदकुम्भग्रहणं त्विह नियमार्थम्— हविर्व्यतिरिक्तं यद्विवाहे विशेषविहितं तत्रोदकुम्भमेवेति । तेनाश्मनो न भवति । लाजानां तु भवत्येव । * अना.

* शेषं गानावृवत् ।

**परिणीय परिणीयाश्मानमारोहयति— 'इममश्मानमारोहाश्मेव त्वं स्थिरा भव । सहस्व पृतनायतोऽभितिष्ठ पृतन्यतः ॥' इति ॥**

(१) परिणीयेति । एतेन मन्त्रेण यत्राऽऽरोहणं भवति तदुक्तं प्राक् । वीप्साग्रहणं यावत्परिणयनं तावदारोहणं कथं स्यादिति । * देभा.

(२) वीप्सावचनं सर्वपरिणयनेष्वश्मारोहणं कारयितव्यमित्येतदर्थम् । अथास्य कर्मणः कः कर्ता ? आचार्यः । कुतः ? वक्ष्यति— 'शिरसी उदकुम्भेनावसिच्य' ( आगृ. १।७।२० ) इति । स्वयंकर्तृत्वे सति अवसेचनं कर्तुं न शक्यते । तदसत् । आचार्येण ह्ययं विसृष्टो विवाहं करोति । उदकुम्भग्रहणं तु तत्रस्थमुदकं लक्षयति । गानावृ.

**'वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति ॥**

(२) वध्वाः अञ्जलिः वध्वञ्जलिः । वध्वञ्जलिरित्येवं प्राप्ते 'वध्वोऽञ्जलौ' इति पठ्यते । तत्रायमपपाठो द्रष्टव्यः । छान्दसो वा निर्देशः । 'वध्वाअञ्जलौ' इत्यलुक्समासेन वा पाठो द्रष्टव्यः । उभयथा च पठन्ति । अनया युक्त्या उभयथा चोपपद्यते । उपस्तीर्य अभिघार्येत्यर्थः । भ्रातेति सोदर्यस्य ग्रहणम् । भ्रातृस्थानो वेति । मातुलपुत्रः पितृव्यपुत्रो वा भ्रातृस्थान इत्युच्यते । भ्रातुरभावे भ्रातृस्थानो भवति । $ देभा.

(२) ततो वध्वञ्जलौ उपस्तीर्य वध्वा भ्रात्रादिर्द्विर्लाजानावपति । वरो जामदग्न्यश्चेत् त्रिः । ततः शेषं प्रत्यभिघार्य अवदानं च प्रत्यभिघारयति । एवमवदायावदाय त्रिभिर्मन्त्रैर्जुहोति । भ्रातृस्थानः पितृव्यपुत्रो मातुलपुत्रश्च । गानावृ.

* अना. देभावत् ।

$ अना. देभागतम् ।

(१) आगृ. १।७।८ ; प्रपा. ४७, ३५७ ; गभा. ८१ ( भ्राता भ्रातृस्थानो वा ) एतावदेव ; संकौ. २०३ ; संग. २७७ गभावत् ; संर. ४८५ स्थानो ( स्थानीयो ).

(३) इत्थमेव (प्रयोजककर्तृतामादायैव) हि 'वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति' इति सूत्रे *वृत्तिकृदादिभिस्तत् (समानकर्तृकत्वम्) उपपाद्यते 'विवाहहोमे उपस्तरणस्य वरकर्तृकत्वं लाजावापस्य भ्रात्रादिकर्तृकत्वम्, विच्छिन्नसंधानार्थे तु तस्मिन् लाजहोमस्यापि वरकर्तृकत्वम्' इति वदद्भिः।

¶ संको. २०३

[1]त्रिर्जामदग्न्यानाम् ॥

(१) यदि जामदग्न्यो वरो भवति तदा त्रिर्लाजानावपति। देभा.

(२) पञ्चावत्तिनामित्यर्थः। गानाव्रृ.

(३) जमदग्निशब्दो गर्गादिः। तत्र यञो लुकि जमदग्नीनामिति भवितव्यम्। 'जमदग्नीनां तु पञ्चावत्तम्' इत्यापस्तम्बश्च। तस्माच्छिवादिष्वप्ययं पठितव्यः। तथा च 'जामदग्ना वत्साः' इति प्रवरेषु पठितम्। प्रवरो जामदग्नो भवति। अना.

[1]प्रत्यभिघार्य हविः ॥

(१) तत्रायं हविःशब्दः क्व वर्तते? किमवदाने उत शेषे? इति। तत्र केचिदवदाने कल्पयन्ति, केचित् शेषे। तत्र शेषे उपपद्यते, नावदाने। कुतः? दर्शनात्। किं पुनस्तद्दर्शयति? स्विष्टकृति वक्ष्यति— 'नात्र हवींषि प्रत्यभिघारयति' (१।१०।२१) इति। तत्र हविःशब्दः शेषे वर्तते, नावदाने। नैतदुपपद्यते। कस्मात्? हविःशब्दस्य साधारणत्वात्। तत्रापि हविःशब्दः साधारण एव। तेन संशय एव। नेति ब्रूमः। अवदानस्यानभिघारणे दोष उपपद्यते। को दोषः? चतुरवत्तभेदः। तेन तत्र प्रत्यभिघारणप्रतिषेधः शेषस्यैव भवति, नावदानस्य। तेन शेषस्य प्रथममभिघारणं भवति, पश्चादवदानस्य।

¶ देभा.

(२) हविःशब्दः शेषे वर्तते। यथा 'नात्र हवींषि' (आगृ. १।१०।२१) इति। गानाव्रृ.

अवत्तं च ॥

(१) प्रत्यभिघार्य। अवत्तमवदानमित्युच्यते। ये पुनर्योगविभागं कुर्वन्ति 'प्रत्यभिघार्य' इति। एवं छिद्यमाने सूत्रे पूर्वमवदानस्य सिद्धं भवति प्रत्यभिघारणम्। 'हविश्च' इति हविषः पश्चात् प्रत्यभिघारणं प्राप्नोति। एवं चावत्तग्रहणमपार्थकं संपद्यते। तस्मान्नैवायं योगविभागः कर्तव्यः। $ देभा.

(२) अवदानमित्यर्थः। उपस्तरणाभिघारणे कः करोति? भ्राता। कुतः? समानकर्तृत्वनिर्देशात्। तद्युक्तम्। यदि ह्यत्र भ्राताऽभिप्रेतः स्यात् 'वध्वञ्जलौ भ्रातोपस्तीर्य' इत्येवावक्ष्यत्। तस्माद्वर एव करोति। यत्तूक्तं समानकर्तृत्वनिर्देशादिति, तत्र ब्रूमः। असमान-

* अन्यत्र नारायणवृत्तेरेव शब्दतोऽर्थतश्चानुवाददर्शनादत्रापि वृत्तिकृच्छब्देन नारायण एवोच्यते इति गम्यते। नारायणेन तु न प्रयोजककर्तृतामादाय समानकर्तृकत्वमुपपादितम्, अपि तु समानकर्तृकत्वं विनाऽपि पूर्वकालतामात्रेण क्त्वाप्रत्यय उपपादितः। अनाविलायामप्येवमेव। देवस्वामिनाऽपि पूर्वपक्षे समानकर्तृकत्वस्य हेतूकरणेऽपि सिद्धान्ते तदुपेक्षितम्। उच्छिन्नो वा तद्ग्रन्थः। अग्रे 'लाजहोमस्यापि' इति प्रामादिकम्, लाजहोमस्योभयत्रापि भार्याकर्तृकत्वात्। 'लाजावापस्यापि' इति युक्तम्। 'लाजहोमेऽस्यापि' इति वा पाठः। अस्यापि लाजावापस्यापि इति तदर्थः। एवं च अनेकोपपत्तिसंभवे उपस्तरणलाजावापयोर्भिन्नकर्तृकत्वोक्तिरेकस्यामेवोपपत्तौ प्रमाणभावमपि न भजते। 'विवाहहोमे' इत्यादिरर्थानुवादः, तादृशग्रन्थस्य वृत्त्यादावनुपलम्भात्। विच्छिन्नेत्यादिग्रन्थस्य प्रयोजनं तु न विद्मः।

¶ संर. कौस्तुभानुवादः।

(१) आगृ. १।७।९ 'त्रिर्जामदग्न्यानाम्' इत्यपि पाठः, प्रपा. ४७, ३५७.

¶ अना. देभागतम्।

$ अना. देभावत्।

(१) आगृ. १।७।१०–१२; प्रपा. ४७, ३५७.

कर्तृकत्वेऽपि हि क्त्वाप्रत्ययो दृश्यते । यथा ‘ आज्याहुतिं हुत्वा मुख्यं धनं दद्यात् ’ ( आश्रौ. १।३।१३ ) इति । होमे ब्रह्मा कर्ता, दाने यजमानः । इत्यादिषु पूर्वकालतामात्रमेव विवक्षितं तद्वदत्रापि । गानावृ.

**एषोऽवदानधर्मः ॥**

( १ ) तत्र अवदानधर्ममुपजीवन् आचार्य इमां परिभाषामतिसृष्टवान्— ‘ एषोऽवदानधर्मः ’ इति, अवदानचोदनायां सत्यां कथमयं धर्मः स्यादिति । क्व पुनरिष्यते ? यथा ‘ मध्यात्पूर्वार्धाच्च हविषोऽवद्यति ’ ( आगृ. १।१०।१८ ) तथा ‘ अवदानसंपदा जुहुयात् ’ ( आश्रौ. १।२।६ ) इत्येवमादिषु ।

अथाभिघारणप्रत्यभिघारणे कः करोति ? भ्राता करोति । कस्मात् ? अधिकृतत्वात् , समानकर्तृत्वनिर्देशाच्च । नेत्युच्यते । यदि हि भ्राता कर्ता स्यात् भ्रातरमधिकृत्योपस्तरणं चोदयेत् । यस्मादुत्तरकाले भ्राता चोद्यते तस्मादुपस्तरणस्य भ्राता न भवति कर्ता । एवं तर्हि आचार्यः कर्ता । असावपि नोपपद्यते कर्ता । कस्मात् ? आचार्येणासौ विसर्जितः । एवं तर्हि वर एव कर्ताऽस्तु । वरस्यापि कर्तृत्वं नोपपद्यते । यस्मादुपरिष्टादन्यं कर्तारं दर्शयति— ‘ उदकुम्भेनावसिच्य ’ ( आगृ. १।७।२० ) इति । स्वयंकर्तृकत्वे सति अवसेचनं न शक्यते कर्तुम् । नेत्युच्यते । तत्रोदकुम्भशब्दः कुम्भस्थे उदके वर्तते । तेन तत्रस्थेनोदकेनावसेचनं कर्तव्यम् । तस्माद्वर एव कर्ता भवतीत्येतत् सिद्धम् । * देभा.

( २ ) ‘ अवदानसंपदा जुहुयात् ’ इत्यादिष्ववदानचोदनास्वेव धर्मः प्रत्येतव्यः— उपस्तरणं द्विस्त्रिश्चावदानं हविरवदानयोश्च प्रत्यभिघारणमिति । उपस्तरणाभिघारणयोर्वर एव कर्ता लाजानां( ? लाजावापस्य ) भ्राता । क्त्वाप्रत्ययस्त्वसत्यपि समानकर्तृकत्वे पूर्वकालतामात्रेऽपि प्रायेण कल्पसूत्रेषु प्रयुज्यते । अना.

* गानावृ. देभागतम् ।

**[१] ‘ अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा ॥ वरुणं नु देवं कन्या अग्निमयक्षत । स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा ॥ पूषणं नु देवं कन्या अग्निमयक्षत । स इमां देवः पूषा प्रेतो मुञ्चातु नामुतः स्वाहा ॥ ’ इत्यविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् ॥**

( १ ) ‘ अर्यमणं नु देवम् ’ इत्येतैर्मन्त्रैः लाजान् जुहोति । कथं जुहोति ? अविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् । अथ को जुहोति ? वधूः । कथं गम्यते ? अविच्छिन्दतीति निर्देशात् । अथ मन्त्राः कस्य भवन्ति ? तत्रैके वध्वा एवेच्छन्ति । कस्मात् ? सा जुहोति । मन्त्रलिङ्गदर्शनाच्च— ‘कन्या अग्निमयक्षत’ इति । नेत्युच्यते । वध्वा मन्त्रा न भवन्ति । कुतः ? अनधिकारात् । न स्त्री मन्त्रेऽधिक्रियते । अधिक्रियते इति ब्रूमः । कथम् ? यथा पत्नीवाचनादिषु । तत्र वचनात् । इह तु संदिग्धत्वात् वरस्यैव मन्त्रा भवन्ति, प्राधान्याच्च । यच्चोक्तं लिङ्गदर्शनादिति, तत्र लिङ्गं नोपपद्यते । नासौ कन्याशब्द एतां कन्यामभिदधाति । अन्याः कन्या अभिधीयन्ते । तेन वरस्यैते मन्त्रा भवन्तीति । लिङ्गदर्शनाच्च पश्यामो यथा वरस्यैते मन्त्रा भवन्तीति । किं दर्शनम् ? परोक्षवन्मन्त्रनिर्देशः— ‘ स इमां देवः ’ इति । यदि वध्वा मन्त्राः स्युः , ‘ स इमां देवः ’ इति लिङ्गदर्शनं नोपपद्यते । तस्मात् वरस्यैते मन्त्रा भवन्तीत्येतत् सिद्धम् । देभा.

( २ ) यत्तूक्तं सा हि जुहोतीति, तत्र ब्रूमः । अन्यस्यापि मन्त्रो दृश्यते— अध्वर्युर्जुहोति, होता वषट्करोति । यत्तूक्तं मन्त्रलिङ्गादिति, तत्र ब्रूमः । न ह्यत्रेयं कन्याऽभिधीयते । अन्या एव तु कन्याः । यदीयमभि-

( १ ) आगृ. १।७।१३ ; प्रपा. ३५८ ; गभा. ८१ ( अविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् ) एतावदेव ; संग. २७६ गभावत् .

धीयते, बहुवचनं नोपपद्यते । तथाभूतश्च प्रत्ययः । तस्माद्वरस्येति सिद्धम् । * गानाद्.

( ३ ) स्रुचेव, यथा स्रुचा हूयते एवमञ्जलिना जुहोति । कथं स्रुचा हूयते ? द्रवेषु तावत् सर्वाणि द्रव्याणि स्रुङ्मुखेन जुहोति । अद्रवेषु तु ' अपिदधदिव प्रदक्षिणं हुत्वा ' इति कल्पान्तरम् । तस्मादिहाप्यपिदधदिव लाजान् जुहोति, न मुखेन । * अना.

[1]अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम् ॥

( १ ) ततः परिणयनमकृत्वेत्यर्थः । एवं चेदपरिणीयेति वचनमपार्थकम् । कस्मात् ? परिणयनस्याप्राप्तत्वात् । परिणयनं हि त्रिर्निर्दिष्टम् । तेनेह नैव भविष्यति । एवं सिद्धे यदपरिणीयेत्याह तज्ज्ञापयति— शूर्पपुटेन होमं कृत्वा परिणयनं चतुर्थममन्त्रकं भवतीति । एवं तावदेके प्रतिपन्नाः । नेत्येके । कः पुनरस्यार्थोऽपरिणीयेति ? अयमर्थः— पूर्वं होमात् परिणयनं कथं स्यादिति । कथं वा न प्राप्नोति ? त्रीणि परिणयनान्यनन्तराणि चोक्तानि यथा चोदितान्येव स्युः । तथा त्रयो होमा अनन्तरमाम्नाताः । तेषां च तथैव क्रिया प्राप्नोति । न चेष्यते । न च व्यवधानकारणमन्यदस्ति । तेन कथं परिणीय परिणीय होमः स्यादित्येतदर्थमप्राप्तं परिणयनं प्रतिषिध्यते । तेनापरिणीयेत्युच्यते । शूर्पपुटेनेति । पुटाकृतिर्यो देशः शूर्पस्य तेन होमः कर्तव्यः । सा चतुर्थी आहुतिः । अभ्यात्ममित्याभिमुख्येनेत्यर्थः । तूष्णींग्रहणं तूष्णींहोमधर्मप्राप्त्यर्थम् । चतुर्थमिति वचनं परिसंख्यानार्थम् । कथम् ? स्विष्टकृदेतस्य द्रव्यस्य न स्यादिति; सैव कर्त्री यथा स्यादिति च । देभा.

( २ ) अप्राप्तनिषेधः किमर्थः ? चतुर्थहोमं कृत्वा कथममन्त्रकं परिणयनं स्यादित्येवमर्थमित्येके । अन्ये तु त्रीणि परिणयनान्यानन्तर्येणोक्तानि । तत्र त्रयो होमाः । तत्र कथं पूर्वं पूर्वं परिणयनं कृत्वा पश्चात् होमः स्यादिति ज्ञापयितुमिति । शूर्पपुटः कोणः । तूष्णींवचनं प्रजापतिज्ञापनार्थम् । चतुर्थग्रहणं कथम् ? एतस्य द्रव्यस्य स्विष्टकृतं न स्यात्, स एव च कर्ता यथा स्यादिति । तेन वधूर्जुहोति । गानाद्.

( ३ ) ' त्रिः परिणयन् ' इति वचनाच्चतुर्थस्य परिणयनस्याप्राप्तिरेव । तथाऽप्यपरिणीयेत्युच्यते द्वितीयतृतीयावपि होमौ परिणीय कर्तव्याविति ज्ञापनार्थम् । अन्यथा त्रीणि परिणयनान्यश्मारोहणान्तानि निरन्तराणि कृत्वा होमा अपि त्रयो निरन्तराः क्रियेरन्, तथोपदिष्टत्वात् । ततश्च प्रथम एव होमः परिणीय कृतः स्यात्, नेतरौ । अनेन तु प्रतिषेधेन सर्वेषामेव होमानां चतुर्थव्यतिरिक्तानां परिणीय क्रिया ज्ञापिता भवति । शूर्पपुटेन शूर्पकोणेन । अभ्यात्ममिति प्राक्चेष्टानिवृत्त्यर्थम् । मन्त्रानुपदेशादेव सिद्धे तूष्णींवचनं ' प्रजापतिं मनसा ध्यायात् तूष्णींहोमेषु सर्वत्र ' इत्यस्य प्राप्त्यर्थम् । उपदेशक्रमादेव सिद्धे चतुर्थवचनं लाजानां स्विष्टकृन्मा भूदिति । वधूरेव कर्त्री चतुर्थवचनादेव । अना.

[1]ओप्योप्य हैके लाजान् परिणयन्ति तथोत्तमे आहुती न संनिपततः ॥

( १ ) एके आचार्या ओप्योप्य लाजान् परिणयनमिच्छन्ति । हकारोऽभिमतपक्षज्ञापनार्थः । अयमस्याभिमतः पक्ष आचार्यस्य । द्वितीयोपदेशात् दुर्बलत्वं मा भूत् । तुल्यबलत्वे विकल्पः सिद्धो भवति । तथा सत्यस्यां क्रियायामुत्तमयोराहुत्योः संनिपातो न भवति । यद्येवम्, वचनमपार्थकम् । नैवोत्तमयोराहुत्योः संनिपातोऽस्ति । तत्रैके प्रशंसामिमां मन्यन्ते । यस्मादुत्तमयोराहुत्योः संनिपातो न भवति तस्मादयं पक्षः कर्तव्य इति । अन्ये पुनर्निन्दामेनां मन्यन्ते । तेन नायं पक्षः कर्तव्य इति । तदिदमुभयं नोपपद्यते । किमर्थं तर्हीदमारभ्यते ? तथा कर्तव्यं परिणयनं यथोत्तमयोराहुत्योः संनिपातो न भवति । कथं वा प्राप्नोति ? इह प्रागुक्तमपरिणीयेति । तदन्यार्थं कृतं सत् इह दोषमुत्पादयति । तत् को

---

* शेषं देभावत् ।

( १ ) आगृ. १।७।१४ ; प्रपा. ३५८.

( १ ) आगृ. १।७।१५ ; प्रपा. ३५८ परिणयन्ति ( परिणयन् जपति ).

दोषः ? तृतीयं परिणयनमकृत्वा चतुर्थो होमः स्यात्, अपरिणीय चतुर्थमिति वचनात् । स मा भूदिति कृत्वेदं वचनमारभ्यते— उत्तमयोराहुत्योः संनिपातो न भवतीति । तेन तृतीयं परिणयनं कृत्वा चतुर्थो होमः कर्तव्यः ।

¶ देभा.

( २ ) अभिमतार्थज्ञापनार्थो हशब्दः । एके लाजानोप्योप्य पश्चात् परिणयन्ति । किमिति ? तथा सत्युत्तमे आहुती न संनिपतत इति कृत्वा । पूर्वस्मिंस्तु पक्ष उत्तमे आहुती संनिपततः । कोऽयं संनिपातो नाम ? यदि पूर्वाहुतिशिरसि प्रक्षेपः, न तर्हि क्वचिदप्यसाविष्यते, किं पुनः पूर्वस्मिन् पक्षे ? अथाऽऽनन्तर्यम् । न तर्ह्यसौ दोषः, पार्वणादौ दृष्टत्वात् । तस्मादयमर्थः— यथोत्तमे आहुती न संनिपततस्तथा कर्तव्यम् । उत्तमयोराहुत्योर्मध्ये परिणयनं कर्तव्यमित्यर्थः । कथं वा न स्यात् ? 'अपरिणीय शूर्पपुटेनाभ्यात्मम्' इति अन्यार्थं कृतमपीह मध्ये परिणयनं निवर्तयेत् । अथवा पूर्वस्मिन् पक्ष उत्तमे संनिपततः, अत्र तु न संनिपततः इति वदन् अपरिणीयवचनं चतुर्थपरिणयनार्थमित्यस्मिन्नपि पक्षे पूर्वं परिणयनं कृत्वा पश्चात् होमः, न चाऽऽनन्तर्येण होम इति ज्ञापयति । यदि त्वानन्तर्येण होमः स्यात् सर्वासामेव संनिपातादुत्तमयोराहुत्योः पूर्वस्मिन् पक्षे संनिपात इति नोपपद्यते । गानावृ.

शिखाविमोकः

[१]अथास्यै शिखे विमुञ्चति यदि कृते भवतः‡ ॥

( १ ) अथशब्दोऽनन्तरार्थः, एतस्मिन्नन्तराले स्विष्टकृन्मा भूदिति । अस्यै इति किमर्थम् ? 'अथ शिखे विमुञ्चति' इत्येवमुच्यमाने उभयोः शिखाविमोकः स्यादिति, स मा भूदिति अस्यै इत्युच्यते । यदि कृते भवतः । यदि जनपदधर्मत्वेन वा ग्रामधर्मत्वेन वा कुलधर्मत्वेन वा कृते भवतः । तेन यदीत्यनित्यार्थे ।

* देभा.

( २ ) अथशब्दः इदानीं स्विष्टकृन्निवृत्त्यर्थः । अस्यै इति वरस्य निवृत्त्यर्थः । यदीत्यनित्ये । देशधर्मादिना यदि कृते भवतः । गानावृ.

[१]ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः । 'प्र त्वा मुञ्चामि वरुणस्य पाशात्' इति ॥

( १ ) कीदृशे पुनः शिखे ? ऊर्णास्तुके इति । तयोर्विमोको भवति 'प्र त्वा मुञ्चामि' इत्येताभ्यामृग्भ्याम् । दक्षिणे पूर्वया । † देभा.

( २ ) एवंलक्षणे ते शिखे, ययोर्विमोक उपदिष्टः । उर्णास्तुके ऊर्णासूत्रे । केशपक्षयोः केशसंनिवेशस्य दक्षिणोत्तरयोः पार्श्वयोः । दक्षिणस्या ऊर्णास्तुकाया अयं मन्त्रः । अना.

उत्तरामुत्तरया ॥

( १ ) उत्तरे पक्षे उत्तरया । * देभा.

( २ ) 'प्रेतो मुञ्चामि' इत्युत्तरां शिखां विमुञ्चति । वरस्य तु शिखे तूष्णीं विमुञ्चति । गानावृ.

सप्तपदी, शिरोवसेचनम्

[२]अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयति 'इष एकपदी, ऊर्जे द्विपदी, रायस्पोषाय त्रिपदी, मायोभव्याय चतुष्पदी, प्रजाभ्यः पञ्चपदी, ऋतुभ्यः षट्पदी, सखा

---

¶ अना. देभागतम् ।

‡ अयं पाक्षिकः शिखाबन्धः प्रयोगरत्नादौ दक्षिणोत्तरकेशपक्षयोः 'अग्ने विश्वेभिः ०' इतिमन्त्रावृत्त्या वरकर्तृकः कौतुकबन्धोत्तरं कर्तव्यत्वेनोक्तः ।

( १ ) आगृ. १।७।१६ ; प्रपा. ३५८ ; प्रर. १०९ ( अथास्यै० ).

* अना. देभावत् ।

† गानावृ. देभावत् ।

( १ ) आगृ. १।७।१७ ; १८ प्रपा. ३५८.

( २ ) आगृ. १।७।१९ ; प्रपा. ३५८ ; संप्र. ८३५ ( अथैनामप......त्क्रामयति ) एतावदेव.

**सप्तपदी भव सा मामनुव्रता भव । पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टयः ॥ ' इति ॥**

( १ ) अथैनामपराजितायां दिशि सप्त पदान्यभ्युत्क्रामयति ' इष एकपदी' इत्येतैर्मन्त्रैः । अथशब्दः पूर्वेण व्याख्यातः । अथात्र संशयः— किमेतावानेवायं मन्त्रः, आहोस्वित् अन्योऽप्यस्ति ? इति । कुतः पुनः संशयः ? साकाङ्क्षत्वात् । ' इष एकपदी' इति साकाङ्क्षोऽयं मन्त्रः । एतावता तावद्भवितव्यम् । कस्मात् ? अशेषानुपदेशात् । नेत्युच्यते । य उपदिष्टः शेषः उत्तमे मन्त्रे स इहानुकृष्यते । तत्रोपदिष्टः कथमिहानुकृष्यते ? उच्यते । यथाऽग्निहोत्रे ' प्राश्नामि' ( आश्रौ. १।२।४ ) इति पुरस्तादुक्तमुपरिष्टात् भवति । तेन यथा तत्रानुकर्षो भवति एवमिहापि अनुकर्षो भविष्यति । तदेतन्नोपपद्यते । पुरस्तादुक्तमुपरिष्टाद्भवति । उपरिष्टात्तु विधीयमानं पुरस्तान्न भवति । नेत्युच्यते । शास्त्रान्तरेऽप्युपरिष्टादप्याम्नातः पुरस्ताद्भवति । यथा ' घृताची नाम्ना प्रियेण ( नाम्ना ) प्रिये सदसि सीद' (तैसं. १।१।११।२) इति ( यथा ? ) ध्रुवायां मन्त्रो दृष्टः जुह्वादिषु भवति । एवमुपरिष्टादाम्नातोऽयमिह पुरस्ताद्भवति । शास्त्रान्तर एतदुदाहरणम् । स्वशास्त्रेऽपि ज्ञापकं कर्तव्यम् । इदं तर्हि ज्ञापकम्— पुरस्तादाम्नात उपरिष्टाद्भवति, उपरिष्टादाम्नातः पुरस्ताद्भवतीति । रहस्ये वक्ष्यते( ? )। गायत्र्यादीनां छन्दसां दशानाम् ' † उदूहामि ' ( ऐआ. ५।१।४।३) इत्यस्य शब्दस्य प्रथमे छन्दसि पाठः क्रियते, सर्वेषां छन्दसामयं शब्दो भवति। एवं तावत्पुरस्तादाम्नातः । अथोपरिष्टात् । तत्र ' उल्लिखामि ' (ऐआ. ५।१।४।५) इति शब्द उत्तरत्राऽऽम्नातः पुरस्ताद्भवति प्राणादिषु । एवमिहापि दर्शनप्रसिद्धेः प्राप्नोति । नेत्युच्यते । याजुषाणां मन्त्राणामनुकर्षो दृष्टः । इमाश्च ऋचः । ' ( सखा सप्तपदी ? ) भव सा मा ' इत्येवमादिना मन्त्रेणानुकृष्यमाणेन तु ऋचोऽनुकर्षः कृतो भवति । अस्तु, को दोषः ? सर्वा एवैता ऋचः संपद्यन्तेऽनुष्टुभोऽनुकर्षे क्रियमाणे । तत्र समाप्त्यर्थत्वाद्वाक्यस्यानुकर्षः प्राप्नोति । ऋक्त्वादनुकर्षो न ऋचोऽनुकृष्यन्ते ।( ? ) एवमेतस्मिन् संदिग्धे ऐतरेयिणां वचनमारब्धम्— ' भवादि सर्वत्र समानम् ' इति । तेनेहाप्यनुकर्ष एवाध्यवसीयते । ऋगनुष्टुभां च तुल्यत्वात् । तस्मादस्माकमप्यनुकर्षो भवतीत्यवस्थितम् । असमानविभक्तित्वान्नानुकर्ष इत्येके । देभा.

( २ ) अथशब्दः पूर्वेण तुल्यः । एनां वधूम् । अपराजिता प्रागुदीची । तत्र सप्तपदान्यभ्युत्क्रामयति वधूं सप्तभिर्मन्त्रैः । वाक्यस्य साकाङ्क्षत्वात् भवादेश्च योग्यत्वात् संनिहितत्वाच्च प्रत्येकं संबध्यते। यथा रहस्ये ' उल्लिखामि ' इति शब्दः ' प्राणाय त्वाऽपानाय त्वा व्यानाय त्वोल्लिखामि ' इत्यन्त्ये वाक्ये पठितोऽपि पूर्वत्रापि संबध्यते तद्वदत्रापि । ऐतरेयिभिरप्युक्तं ' भवादि सर्वत्र समानम् ' इति । तेन ' इष एकपदी भव सा मामनुव्रता भव ' इति सर्वत्र संबन्धनीयम् । गानावृ.

( ३ ) पूर्वोत्तरा दिगपराजिता । अन्यपेक्षया च सा गृह्यते । तस्यां दिशि एनां वधूं सप्त पदान्यभ्युत्क्रामयति प्रस्थापयति गमयति स्वयं दक्षिणे पादे गृहीत्वा निधापयति । ¶ अना.

**[1]उभयोः संनिधाय शिरसी उदकुम्भेनावसिच्य ॥**

( १ ) उदकुम्भस्थेनोदकेनाऽऽसेचनं कर्तव्यम् । अवसेचनं कृत्वाऽनन्तरमेतस्मिन्काले स्विष्टकृद्भवति ।
* देभा.

( २ ) सप्तमे पदे अभ्युत्क्रामिते तत्रस्थ एवोभयोः शिरसी संनिधाय केनचिदुदकुम्भमानाय्य तत्रस्थेनोदकेन शिरसी अवसिञ्चति । अथाऽऽज्येन स्विष्टकृतं जुहोति । गानावृ.

---

† वस्तुतः ' छन्दसोदूहामि ' इति वक्तव्यम् , उभयोरपि शब्दयोरुत्तरत्रानुकर्षात् ।

¶ शेषं गानावृवत् ।

* अना. देभावत् ।

( १ ) आगृ. १।७।२० ; प्रपा. ३५८.

ब्राह्मणीगृहे निवासः

**[१]ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रिं वसेत् ॥**

( १ ) ब्राह्मणी या जीवपतिर्भवति, जीवप्रजा च या भवति, तस्या एवंलक्षणाया ब्राह्मण्या अगारे एताम् अनन्तरां रात्रिं प्रतिश्रयेत् । तत्र प्रतिश्रयणे सत्ययं विशेषः । किमुक्तं भवति ? देशान्तरे यदा विवाहः तदा प्रतिश्रयणविधिरयं भवति । यदा पुनरेकस्मिन् ग्रामे वा नगरे वा तदाऽर्थान्न प्रतिश्रयणम् । किमर्थं स्त्री विशेष्यते, न पुरुष इति ? पुरुषस्य बहुभार्यत्वात् तस्य काचिन्मृतप्रजा भविष्यति । तस्या अगारे मा भूदित्यतः स्त्रीविशेषणं क्रियते । ¶ देभा.

( २ ) ग्रामान्तरगमने यद्यन्तरा वसतिः स्यात्तदा एवंगुणयुक्ताया ब्राह्मण्या गृहेऽनन्तरां रात्रिं वसेत् । वसतिं कुर्यादित्यर्थः । स्वग्रामे विवाहश्चेन्नायं विधिः । गानावृ.

ध्रुवादिदर्शनं वाग्विसर्गश्च

**[२]ध्रुवमरुन्धतीं सप्त ऋषीनिति दृष्ट्वा वाचं विसृजेत ' जीवपत्नी प्रजां विन्देय ' इति ॥**

( १ ) ' जीवपत्नी ' इत्यनेन मन्त्रेण वाग्विसर्गविधानात् वाङ्नियमोऽस्ति । कस्य पुनरयं वाग्विसर्गो भवति ? वध्वाः । कुतः ? मन्त्रलिङ्गात् । देभा.

( २ ) समाप्ते होमे रात्रौ ध्रुवादीन् दृष्ट्वा वाचं विसृजेत ' जीवपत्नी ' इति मन्त्रेण । इदानीं वाग्विसर्जनविधानाद्धोमादारभ्य एतावन्तं कालं वाचो नियम इति गम्यते । कस्यायं वाग्विसर्गः ? वध्वाः । कुतः ? मन्त्रलिङ्गात् । तथा हि— जीवः पतिर्यस्याः सा जीवपत्नी । जीव इति कर्तरि पचाद्यच् । ' पत्युर्नो यज्ञसंयोगे, विभाषा सपूर्वस्य ' ( पासू. ४।१।३३,३४ ) इति ङीप्प्रत्ययो नश्चान्तादेशः । * गानावृ.

( ३ ) इतिशब्दः प्रकारे । तेनान्येषामपि शुक्रादीनां यथासंभवं दर्शनम् । ¶ अना.

¶ अना. देभावत् ।

(१) आगृ. १।७।२१ ; प्रपा. ३५८ जीवपत्न्या ( जीवपत्या ) ; संप्र. ८३७ ; संग. २९० प्रपावत् .

(२) आगृ. १।७।२२ ; प्रपा. ३५८ ; संप्र. ८३७ ; संग. २९० सृजेत ( सृजेत् ).

* संप्र, संग. गानावृवत् अनावच्च ।

¶ शेषं गानावृगतम् ।

## कौषीतकिगृह्यसूत्रम्

महाव्याहृतिहोमः , मूर्धहोमः , पाणिग्रहणम् , जपः , उदकुम्भदानम् , अश्मारोहणम् , परिणयनम् , वस्त्रदानम् , लाजहोमः , सप्तपदी , मार्जनाभिषेकौ , वरदानम् .

**$[१]पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां महाव्याहृतिभिस्तिस्रो जुहोति समस्ताभिश्चतुर्थीम् ॥**

$ अस्मदीये एकस्मिन्नादर्शपुस्तके सूत्रविभागो नास्ति, संहितापाठ एव मुद्रितः । अपरस्मिन्पुस्तके एतदादिसूत्रत्रयस्य '... तिस्रो जुहोति । समस्ताभिश्चतुर्थीं प्रतीयेतैतस्यां चोदनायाम् । एवमनादेशे सर्वेषु भूतिकर्मसु पुरस्ताच्चोपरिष्टाच्चैताभिरेव जुहुयात् । ' इति सूत्रविभागो मुद्रितः । सांख्यायनगृह्यसंग्रहे " ... महाव्याहृतिभिश्चतस्र आज्याहुतीर्जुहोति । अपरे तु ' महाव्याहृतिभिस्तिस्रो जुहोति ' इति पठन्ति " इत्युक्तम् । तस्य ' पठधातोः सूत्रपाठार्थकत्वं व्याख्यातृग्रन्थपाठार्थकत्वं वा ' इत्यादिबहुसंदेहाकुलत्वादक्षरपाठोऽपि ततो न निर्णीयते, सूत्रविभागस्तु नतराम् । अत उपलब्धपाठे एव सूत्रविभागश्चिन्त्यते । तत्रोपरिनिर्दिष्टसूत्रविभागे विशिष्य विवाहमुद्दिश्य व्यस्ताभिस्तिसृणामेवाऽऽहुतीनां विधानम् , समस्ताभिश्चतुर्थ्यास्तु विवाहेऽप्युत्तरसूत्ररूपपरिभाषातः प्राप्तिर्भवति । नैतद्युक्तं पश्यामः , ' व्याहृतिभिर्हुत्वा ' ( कौगृ. १।२२।३ ) इत्यादौ परिभाषाप्रवृत्तिगोचरे व्यस्ताहुतित्रित्वस्यापि बोधनीयत्वेन तस्यापि परिभाषया प्राप्तव्यत्वात् समस्ताभिश्चतुर्थ्या

(१) कौगृ. १।१२।११, १।१३।१–१७, १।१४।१–१७.

'सम्राज्ञी श्वशुरे भव' इति पिता भ्राता वाऽस्यग्रेण मूर्धनि जुहोति स्रुवेण वा तिष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखः ॥

'गृभ्णामि ते सौभगत्वाय हस्तम्' इति दक्षिणेन पाणिना दक्षिणं पाणिं गृह्णाति साङ्गुष्ठमुत्तानेनोत्तानं तिष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखः ॥

पञ्च चोत्तरा जपित्वा ॥

'अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं द्यौरहं पृथिवी त्वमृक्त्वमसि सामाहं सा मामनुव्रता भव। तावेह विवहावहै प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टयः ॥' इति ॥

उदकुम्भं नवं 'भूर्भुवः स्वः' इति पूरयित्वा ॥

पुंनाम्नो वृक्षस्य सक्षीरान् (स?)पलाशान् सकुशानोप्य ॥

हिरण्यमिति चैके ॥

तं ब्रह्मचारिणे वाग्यताय प्रदाय ॥

प्रागुदीच्यां दिशि ताः स्थेयाः प्रदक्षिणा भवन्ति ॥

अश्मानं चोत्तरत उपस्थाप्य ॥

'एहि सूनरि' इत्युत्थाप्य ॥

'एह्यश्मानमा तिष्ठाश्मेव त्वं स्थिरा भव। अभितिष्ठ पृतन्यतः सहस्व पृतनायतः ॥' इति दक्षिणेन प्रपदेनाश्मानमाक्रमय्य ॥

प्रदक्षिणमग्निं पर्याणीय ॥

तेनैव मन्त्रेण द्वितीयं वसनं प्रदाय ॥

लाजाञ्छमीपलाशमिश्रान् पिता भ्राता वा स्यादञ्जलावावपति ॥

उपस्तरणाभिघारणप्रत्यभिघारणं चाऽऽज्येन ॥

ताञ्जुहोति ॥

'इयं नार्युपब्रूते लाजानावपन्तिका। शिवा ज्ञातिभ्यो भूयासं चिरं जीवतु मे पतिः स्वाहा ॥' इति तिष्ठन्ती जुहोति पतिर्मन्त्रं जपति ॥

अश्मक्रमणाद्येवं द्वितीयम् ॥

एवं तृतीयम् ॥

तूर्ष्णीं कामेन चतुर्थम् ॥

प्रागुदीच्यां दिशि सप्त पदानि प्रक्रमयति ॥

'इष एकपदी, ऊर्जे द्विपदी, रायस्पोषाय त्रिपदी, आयोभव्याय चतुष्पदी, पशुभ्यः पञ्चपदी, ऋतुभ्यः षट्पदी, सखा सप्तपदी भव' इति ॥

तान्यद्भिः शमयति ॥

आपो हिष्ठीयाभिस्तिसृभिः स्थेयाभिरद्भिर्मार्जयित्वा ॥

मूर्धन्यभिषिच्य ॥

'गां ददानि' इत्याह ॥

ब्राह्मणेभ्यः किञ्चिद्दद्यात्सर्वत्र स्थालीपाकादिषु कर्मसु ॥

सूर्यां विदुषे वाधूयम् ॥

गौर्ब्राह्मणस्य वरः ॥

ग्रामो राजन्यस्य ॥

अश्वो वैश्यस्य ॥

अधिरथं शतं दुहितृमते ॥

याज्ञिकेभ्योऽश्वं ददाति ॥

इव व्यस्ताभिस्तिसृणामपि परिभाषाविषयत्वस्याऽऽवश्यकत्वात्, व्यस्तसमस्ताहुतीनां सर्वासामेवात्रोपदिष्टानामन्यत्रातिदेशस्य न्याय्यत्वाच्च। अन्यथा व्यस्ताहुतिविषयेऽतिदेशः समस्ताहुतिविषये चोपदेश इत्यर्धजरतीयमापद्येत। अतोऽस्माभिरन्यथा सूत्रविभागः कल्पितः। 'प्रतीयेत' इत्यादिसूत्रद्वयं कर्मपरिभाषाप्रकरणे संगृहीतम्।

ततः पश्चादग्नेः कन्यामुपवेश्योत्तरतो वरमुपवेशयेत्। ततोऽन्वारब्धायां वधूकायां महाव्याहृतिभिश्चतस्र आज्याहुतीर्जुहोति। अपरे तु 'महाव्याहृतिभिस्तिस्रो जुहोति' इति पठन्ति। ताश्च वराचार्याभ्यामन्यतरेण होतव्याः। ततो महाव्याहृतिहोमादनन्तरं 'सम्राज्ञी

श्वशुरे भव ' इत्यनेन मन्त्रेण स्वाहाकारान्तेन पिता भ्राता वा तिष्ठन् प्रत्यङ्मुख आसीनायाः प्राङ्मुख्याः खड्गाग्रेण स्रुवेण वा मूर्ध्नि घृतं जुहोति। ततो वरस्तिष्ठन् प्रत्यङ्मुख आसीनायाः प्राङ्मुख्याः ' गृभ्णामि ते सौभगत्वाय हस्तम् ' इत्यनेन मन्त्रेण दक्षिणहस्तेनोत्तानेन कन्याया दक्षिणं हस्तमुत्तानं साङ्गुष्ठं गृह्णाति। ततः ' सा नः पूषा शिवतमा मै( ? मे )रयस्व ' इत्यारभ्य पञ्च चोत्तरा जपित्वा ' अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं द्यौरहं पृथिवी त्वमृक्त्वमसि सामाहं सा मामनुव्रता भव। तावेहि त्रिवहावहै प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टयः ॥ ' इति च जपति। अस्मिन्नवसरे चत्वारो ब्राह्मणा युवानः सुरूपा दक्षिणत उदङ्मुखा उपविश्य ' संसृष्टं धनवत्युत्रयं(?धनमुभयं) समाकृतम् ' इत्यादि आरभ्य ' विश्वस्मदित्युत्तरः ' ( ? विश्वस्मादिन्द्र उत्तरः) इति यावच्छ्रावयेयुः, शिष्टाचारात्। तत आचार्यः ' भूर्भुवः स्वः ' इत्यनेन मन्त्रेणोदकुम्भं नवं पूरयित्वा पुंनाम्नः क्षीरिणो वृक्षस्याऽऽर्द्राणि पत्राणि सकुशानि तस्मिन्नुदकुम्भे क्षिपति। हिरण्यं च पाक्षिकम्। तं ब्रह्मचारिणे वाग्यताय प्रयच्छति। स ब्रह्मचारी अग्नेः प्रागुदीच्यां स्थापयित्वा दक्षिणहस्ते(ना)न्वारभ्याऽऽस्ते। तत आचार्यः अश्मानमुत्तरतोऽग्नेः स्थापयति। उदकुम्भपूरणादि अश्मस्थापनान्तं यावदाचार्यः करोति तावद्वरो गृहीतहस्तस्तिष्ठति। ततः ' एहि सूनरि ' इत्यनेन मन्त्रेण वरो वधूकामुत्थापयति। तत उदग्नीत्वा ' एह्यश्मानमा तिष्ठाश्मेव त्वं स्थिरा भव। अभितिष्ठ पृतन्यतः सहस्व पृतनायतः ॥ ' इत्यनेन मन्त्रेण अश्मानं दक्षिणपदाग्रेण आरोहति। ततो ब्रह्मचार्युदकुम्भाभ्यामन्तरेण चोदकुम्भं प्रदक्षिणं कृत्वाऽग्निं पर्याणीय ' रैभ्यासीदनुदेयी ' इत्यनेनैव मन्त्रेण द्वितीयं वासो दत्त्वा प्रत्यङ्मुखीकरोति। तत आचार्यो वधूकाया अञ्जलौ स्रुवेणाऽऽज्यमुपस्तृणाति। ततः पिता भ्राता वा लाजान् शमीपत्रमिश्रान् शूर्पात् गृहीत्वा द्विर्ददाति। त्रिः पञ्चार्षेयाणाम्। ततो हावक उपर्युपर्यभिघारयति गृहीतशेषं च प्रत्यभिघारयति। ' इयं नार्युपब्रूते लाजानावपन्तिका। शिवा ज्ञातिभ्यो भूयासं चिरं जीवतु मे पतिः स्वाहा ॥ ' इति पतिर्मन्त्रं जपति। वधूश्च तिष्ठन्ती गृहीतमञ्जलिना जुहोति। अश्मक्रमणादि वासोदानवर्जितमेवं द्वितीयं होममेवमेव तृतीयं कुर्यात्। कामं मनसा ध्यात्वा तूष्णीं चतुर्थम्। ततो जामाता वधूकाया हस्तं मुक्त्वा ' इष एकपदी भव, ऊर्जे द्विपदी भव, रायस्पोषाय त्रिपदी भव, आयोभव्याय चतुष्पदी भव, पशुभ्यः पञ्चपदी भव, ऋतुभ्यः षट्पदी भव, सखा सप्तपदी भव ' इत्येतैः सप्तभिर्मन्त्रैर्भवेत्यन्तैः आसनप्रदेशादारभ्य प्रागुदीच्यां दिशि सप्त पदानि क्रमयित्वा ' विष्णुस्त्वा नयतु ' इत्यनेन मन्त्रेण तानि अद्भिः प्रोक्षति। अपरे तु व्याचक्षते— सप्तपदाक्रमणं हावकः कारयति। ततो वरः ' आपो हि ष्ठा मयोभुवः ' इत्येताभिस्तिसृभिरुदकुम्भस्थाभिर्मार्जनं कृत्वा तत आत्मनो वधूकायाश्च मूर्धन्युदकस्य स्तोकंस्तोकं निषिच्य ' गां ददानि ' इत्येवमुक्त्वा हावकाय गां ददाति। ततः स्विष्टकृत्। अन्येभ्योऽपि प्राप्तब्राह्मणेभ्यो यथाशक्त्या किंचित् ददाति। विवाहकर्मप्रवीणा ये ब्राह्मणास्तेभ्यश्चाश्वं ददाति। ' अन्येभ्योऽपि ब्राह्मणेभ्यः किंचिद्दद्यात् ' इत्यारभ्य ' याज्ञिकेभ्योऽश्वं दद्यात् ' इति यावत् केचित् पठन्ति इति पाक्षिकमेतत्।

कौगृसं. १३–१५

## आपस्तम्बगृह्यसूत्रम्

अग्निसमीपे वध्वा आनयनम्, उपवेशनम्, होमपूर्वाङ्गानि, वध्वा अभिमन्त्रणम्

**'अथैनामुत्तरया दक्षिणे हस्ते गृहीत्वाऽग्निमभ्यानीयापरेणाग्निमुदगग्रं कटमास्तीर्य तस्मिन्नुपविशत उत्तरो वरः ॥**

( १ ) अथ संनहनानन्तरम्। ' यत्र क्व चाग्निम् ' इत्यादिकल्पेनाग्निं प्रसाधयति मथित्वा श्रोत्रियागाराद्वाऽऽहृत्य। ततो वधूमग्निमभ्यानयति उत्तरयर्चा ' पूषा त्वेतः ' इत्येतया। आनयनमन्त्रोऽयम्। हस्तग्रहणं

( १ ) आपगृ. ४।९–१६.

तु तूष्णीमेव। उदगग्रवचनं दक्षिणाग्रनिवृत्त्यर्थम्।

अनाकुला.

(२) अथशब्दः उक्तार्थः अर्थकृत्यप्रतिषेधार्थ इति। एनां वधूं दक्षिणे हस्ते गृहीत्वा, उत्तरया 'पूषा त्वेतो नयतु' इत्येतया अग्निमभ्यानीय अग्न्यभिमुखमानयति, नयत्विति मन्त्रलिङ्गात् व्यवहितेऽपि नयने विनियोगात्। अपरेणाग्निम् अग्नेरदूरेण पश्चादुदगग्रं कटमास्तीर्य, तस्मिन् कटे युगपदुपविशतः, यथोत्तरो वरो दक्षिणा वधूः।

ताद.

**अग्नेरुपसमाधानाद्याज्यभागान्तेऽथैनामादितो द्वाभ्यामभिमन्त्रयेत॥**

(१) अथैवमुपविश्याग्नेरुपसमाधानादि कर्म प्रतिपद्यते। 'अग्निमिद्ध्वा प्रागग्रैः' इत्यादि आज्यभागान्ते कर्मणि कृते अथ अनन्तरम् उपोत्थाय एनाम् आसीनां वधूं तृतीयस्यानुवाकस्याऽऽदितो द्वाभ्यामृग्भ्यां 'सोमः प्रथमः' इत्येताभ्यामभिमन्त्रयेत। अग्नेरुपसमाधानादिवचनं तन्त्रप्राप्त्यर्थम्। आज्यभागान्तग्रहणमभिमन्त्रणादेरुत्तरस्य कर्मणः कालोपदेशार्थम्। अथशब्दोऽवस्थान्तरप्रदर्शनार्थः, आज्यभागान्तमासीनः कृत्वा अथोत्थायाभिमन्त्रणादि प्रतिपद्यत इति। तथा च बोधायनः —'अथास्या उपोत्थाय हृदयदेशम्' (बौगृ. १।४।१) इति। आश्वलायनश्च— 'तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनायाः' (आगृ. १।७।३) इति। एनामित्युच्यते अग्नेरभिमन्त्रणं मा शङ्कीति। उत्तराभ्यामिति वक्तव्ये आदितो द्वाभ्याम् इत्युच्यते मन्त्रसमाम्नाये अनुवाकव्यवस्थाप्रदर्शनार्थम्। तेन 'शेषं समावेशने जपेत्' इत्यादावनुवाकशेषस्य ग्रहणम्।

अनाकुला.

(२) अयं तन्त्रोपदेशः क्रमार्थ इत्युक्तमेव। यदि तु लाजहोमास्तन्त्रशून्या आगन्तुकाः, तदा स क्रमतन्त्रविधानार्थः। अथेति पूर्ववत्। केचित्— कल्पान्तरसिद्धोपोत्थानानन्तर्यप्रदर्शनार्थमिति। एनां वधूं वरः आदितः अनुवाकस्य 'सोमः प्रथमः' इत्यस्य 'सोमः प्रथमः' इति द्वाभ्यामृग्भ्यामभिमन्त्रयेत।

ताद.

पाणिग्रहणम्

**अथास्यै दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं गृह्णीयात्॥**

(१) अथ तथैवावस्थितः अस्यै अस्याः तथैवाऽऽसीनाया दक्षिणमुत्तानं हस्तं गृह्णीयात् दक्षिणेन नीचा न्यग्भूतेन हस्तेन। इदं पाणिग्रहणं नाम कर्म। दक्षिणेनेति न वक्तव्यम्, एकपाणिसाध्येषु कर्मसु दक्षिणस्यैव प्रसिद्धत्वात्। अथाप्रसिद्धः, अन्यत्रानियमः प्राप्नोति। यथाऽत्रैव पुरस्तादुपनयने च। एवं तर्हि नात्र दक्षिणहस्तो विधीयते। किं तर्हि? न्यक्ताविधानार्थमनूद्यते— योऽयं दक्षिणो हस्तः सर्वकर्मसु प्रसिद्धः तेन नीचा पाणिग्रहणमिह कर्तव्यमिति। अस्मादेव चानुवादात् सर्वत्र दक्षिणपाणिरिति सिद्धम्।

अनाकुला.

(२) अनेन नित्यविधिना 'सोऽभीवाङ्गुष्ठम्' इत्येतावन्मात्रस्य व्यवहितस्यापि संबन्धः। इतरथा स इति न ब्रूयात्। अस्यै अस्या वध्वाः, षष्ठ्यर्थे चतुर्थी। उत्तानं दक्षिणं हस्तं वरः स्वेन नीचा न्यग्भूतेन दक्षिणहस्तेन अभीवाङ्गुष्ठम्। अभिरुपर्यर्थः। इवेत्यवधारकः। उपर्यङ्गुष्ठमेव गृह्णीयात्।

ताद.

**यदि कामयेत स्त्रीरेव जनयेयमित्यङ्गुलीरेव गृह्णीयात्॥**

(१) अङ्गुलीरेव, नाङ्गुष्ठम्, नापि पाणितलम्। पूर्वोक्तस्यैवायं कामसंयुक्तो विशेषविधिः। तेनेहापि दक्षिणेन नीचा हस्तेनेत्येवमादयो विशेषा भवन्ति।

अनाकुला.

(२) अथ काम्यं विधिद्वयमाह— यदीति। अङ्गुलीरेव, नाङ्गुष्ठम्। शेषं नित्यवत्।

ताद.

**यदि कामयेत पुंस एव जनयेयमित्यङ्गुष्ठमेव सोऽभीवाङ्गुष्ठमभीव लोमानि गृह्णाति॥**

(१) गृह्णीयादित्यनुवर्तते। यः पाणिग्रहणे कामं नेच्छति स पाणिमभीवाङ्गुष्ठमभीव लोमानि गृह्णीयादित्येव। अभिशब्दः उपरिभावे। इवशब्दः ईषदर्थे। यथा लोमानि हस्तजातानि ईषदभिस्पृष्टानि भवन्ति,

अङ्गुष्ठं च तथा गृह्णीयादित्यर्थः । 'लोमान्ते हस्तं साङ्गुष्ठमुभयकामः' (आगृ. १।७।५) इत्याश्वलायनः । अनाकुला.

(२) अभीव लोमानि, यथा वरस्याङ्गुष्ठलोमानि सर्वाण्येवोपरि भवन्ति तथा गृह्णाति । शेषं नित्यवदेव । अतो वध्वङ्गुष्ठमप्युत्तानम् । ताद.

**'गृभ्णामि ते' इत्येताभिश्चतसृभिः ॥**

पूर्वोक्तस्य नित्यस्य काम्ययोश्च मन्त्रानाह— गृभ्णामीति । गृह्णातीति संबन्धः । सर्वासामन्ते एव । ताद.

सप्तपदी

**अथैनामुत्तरेणाग्निं दक्षिणेन पदा प्राचीमुदीचीं वा दिशमभि प्रक्रमयति 'एकमिषे' इति ॥**

(१) अथेदानीमेनां वधूमुत्थाप्योत्तरेणाग्निं यो देशस्तस्मात् प्रक्रम्य प्राचीं वा दिशमभि उदीचीं वा दक्षिणेन पदा सप्त पदानि प्रक्रामयति 'एकमिषे' इत्येतैर्मन्त्रैः । प्राग्गतान्युदग्गतानि वा पदानि निधापयतीत्यर्थः । अत्र स्वयमेव पादं गृहीत्वा मन्त्रांश्चोक्त्वा निधापयति संभाराक्रमणवत् । दक्षिणेन पदेति मन्त्राणां दक्षिणसंबन्धार्थं पूर्वप्रवृत्त्यर्थं च । तस्मात्तूष्णीमितरस्य पश्चादनुप्रवृत्तिः ।

इह 'सोमाय जनिविदे स्वाहेत्येतैः प्रतिमन्त्रम्' इत्यत्र 'एतैः प्रतिमन्त्रम्' इति न वक्तव्यम् । यथा चैतत्तथा तत्रैव वक्ष्यामः । तस्मात्तयोरिहापकर्षेण संबन्धः— 'एकमिषे' इत्येतैः प्रतिमन्त्रमिति । इतरथा प्रतिपदं मन्त्रसंबन्धो न सिध्यति, पदानां च सप्तसंख्यानियमः । यथा 'उत्तराभिस्तिसृभिः प्रदक्षिणम्' (आपगृ. ५।३) इत्यत्र तिसृणामन्ते परिक्रमणारम्भः तद्वदिहापि स्यात् । 'विष्णुस्त्वाऽन्वेतु' इति सर्वत्रानुषजन् जपति, प्रथमोत्तमयोः पठितत्वात् । अनाकुला.

(२) अथाग्नेरदूरेणोत्तरत आरभ्यैनां दक्षिणेन पदा पादेन प्राचीमुदीचीं वा दिशमभि प्रागायतान्युदगायतानि वा सप्त पदानि प्रक्रमयति 'एकमिषे' इत्यादिभिः सप्तभिः 'विष्णुस्त्वाऽन्वेतु' इत्यनुषक्तैः प्रतिमन्त्रम् । ताद.

**सखेति सप्तमे पदे जपति ॥**

(१) उक्तं सप्तपदानि प्रतिमन्त्रं प्रक्रमयतीति । तत्र सप्तमे पदे निहिते पादमुपसंगृह्यैव 'सखा सप्तपदा' इत्यारभ्य जपति होममन्त्रेभ्यः प्राक् ये मन्त्राः तानित्यर्थः । तत्र कल्पान्तरे दृश्यते 'सप्तमं पदमुपसंगृह्य' इति । ¶ प्राग्घोमादित्युच्यते जपपरिमाणार्थम् । अनाकुला.

(२) स वरः सप्तमे पदे निहिते 'सखा सप्तपदा' इत्यादि 'सूनृते' इत्यन्तं जपति चातुःस्वर्येणैव । ताद.

प्रधानाहुतयः

**'प्राग्घोमात् प्रदक्षिणमग्निं कृत्वा यथास्थानमुपविश्यान्वारब्धायामुत्तरा आहुतीर्जुहोति 'सोमाय जनिविदे स्वाहा' इत्येतैः प्रतिमन्त्रम् ॥**

(१) समाप्य जपमथाग्निं प्रदक्षिणं करोति तया सह प्रदक्षिणं परिक्रामतीत्यर्थः । सर्वत्र दक्षिणे हस्ते गृहीत्वा परिक्रमणम् । ततो यथास्थानमुपविशतः । यस्य यत् स्थानमुपदिष्टम् 'उत्तरो वरः' इति तस्मिन्नित्यर्थः । उपविश्य वध्वामन्वारब्धायां अन्वारब्धवत्यां उत्तराः षोडश प्रधानाहुतीर्जुहोति 'सोमाय जनिविदे स्वाहा' इत्येतैः प्रतिमन्त्रम् । दर्वीहोमत्वादेवोपवेशने सिद्धे उपविश्येत्युच्यते नियमार्थम्— उत्तरा एव षोडशोपविश्य जुहोति, अन्याः स्थित्वैवेति । तेन लाजास्तिष्ठता होतव्याः । तथा च कल्पान्तरेषु बहुषु दृश्यते बोधायनानां बह्वृचानां छन्दोगानां वाजसनेयिनामाथर्वणिकानां च । उपहोमेषु तु यथाप्राप्तमासनमेव भवति । एतच्च वक्ष्यामः । अन्ये त्वासीनयोरेव होममिच्छन्ति । 'सोमाय जनिविदे' इति मन्त्रनिर्देशो होममन्त्राणामादिप्रत्ययनार्थः । तेन प्रागेव तस्मात् जपमन्त्राः । तदुक्तं पुरस्तात् 'प्राग्घोमात्' इति । 'उत्तरा आहुतीः' इत्येव प्रतिमन्त्रं होमः सिद्धः, यथाऽन्येषु होमेषु । 'एतैः प्रतिमन्त्रम्' इत्येतत्तु पुरस्ता-

¶ 'प्राग्घोमात्' इत्युत्तरसूत्रादिमं पदं हरदत्तमते एतत्सूत्रशेषः ।

(१) आपगृ. ५।१-१३.

दपकृष्यते इत्युक्तम् । तत्राऽऽदितश्चत्वारो मन्त्राः स्वाहाकारान्ताः पठिताः । ततो द्वादशर्चः । तास्वन्ते स्वाहाकारः, 'जुहोतिचोदनः स्वाहाकारप्रदानः' इति ।

अनाकुला.

( २ ) सखेति जपित्वा, प्राग्घोमात् होमात् प्राक् अग्निप्रदक्षिणमेव वध्वा सह कुर्यात् नान्यदर्थकृत्यमावश्यकमपि, 'प्राग्घोमात्' इत्यधिकग्रहणात् । ततो यथास्थानम् 'उत्तरो वरः' इत्युक्तस्थानानतिक्रमेण, न त्वनियमेन, उपविश्य वध्वामन्वारब्धायामुत्तरा उत्तरमन्त्रकरणिका आहुतीः होमान् जुहोति । के पुनस्त उत्तरे मन्त्राः ? कथं च जुहोति ? इत्यत आह– 'सोमाय जनिविदे' इत्यादयः षोडशमन्त्राः । तेषामादितश्चत्वारि यजूंषि, 'प्रेतो मुञ्चाति' इत्यादयो द्वादशर्चः । एतैः प्रतिमन्त्रं प्रतिस्वाहाकारं जुहोति, न पुनः 'यज्ञं स्वाहा वाचि स्वाहा वाते धाः स्वाहा' (तैसं. १।१।१३) इतिवत् । 'अवदीक्षामदास्थ स्वाहा' इत्येतेनैव स्वाहाकारेण होमः, पूर्वेषामहोमार्थता च । जुहोतिशब्दार्थश्च तद्धितेन चतुर्थ्या मन्त्रलिङ्गादिना वा प्रतिपन्नाश्चोदिता देवताश्चोदितेनैव चतुर्थ्यन्तशब्देनोद्दिश्य यजमानेन त्यक्तस्य हविषश्चोदिताधारे प्रक्षेपः । इह च मन्त्रलिङ्गात् सोमादयो देवताः । ताश्च न जनिवित्त्वादिविशेषणविशिष्टाः । होमविध्यनुपपत्त्या हि मन्त्रप्रतिपन्नानां देवतात्वं कल्प्यम्, सा च देवतामात्रकल्पनया शाम्यति, न पुनर्निर्बीजां गुर्वीं विशिष्टकल्पनां प्रयुक्तिगौरवापादिकामयुक्तामपेक्षते । न च ग्राहकमन्त्राम्नानयोरनुपपत्त्या विशिष्टानां देवतात्वकल्पना, विशेषणानां 'मूर्धा दिवः ककुत्' इत्यादिवत् स्तुत्या देवताधिष्ठानान्वयेऽपि तयोश्चरितार्थत्वात् । हविश्चाऽऽज्यम्, 'जुहोतीति चोद्यमाने सर्पिराज्यं प्रतीयात्' (आपप. २।१५) इति परिभाषावचनात् । विवाहादेरयज्ञत्वेऽपि यज्ञेष्वधिकरिष्यमाणपुरुषदेहयोग्यतापादकत्वेन तत्र यज्ञधर्मा युक्ता एव । अन्यथा आधानपवमानेष्ट्यादिष्वयज्ञेषु 'यज्ञोपवीती प्रदक्षिणम्' (आपप. २।१५) इत्यादयो न प्राप्नुयुः । होमाधारस्तूपसमाहितोऽग्निः स्थित एव ।

ताद.

अश्मारोहणम्, लाजहोमः, परिक्रमणम्

**अथैनामुत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति 'आ तिष्ठ' इति ॥**

पदप्रक्रमणं पदास्थापनम् । अश्मा दृषत्पुत्रः । स च प्रागेव पात्रैः सह प्रतिष्ठापितो भवति ।

अनाकुला.

**अथास्या अञ्जलावुपस्तीर्य द्विर्लाजानोप्याभिघारयति ॥**

**तस्याः सोदर्यो लाजानावपतीत्येके ॥**

( १ ) अथशब्दः स्थानसंबन्धार्थः । अथोत्थित एवास्याश्चोत्थिताया एवेति । तेनावदानप्रभृत्युत्थानमेव भवति । तत्र दार्शपौर्णमासिकोऽवदानकल्पः प्रदर्शितः, न कल्पान्तरम् । तदिहापि प्रत्यभिघारणं पञ्चावत्तं च पञ्चावत्तिनां भवति । लाजानां च लौकिकः संस्कारः, पात्रैश्च सह सादनप्रोक्षणे भवतः । अञ्जलेस्तु न सादनादि भवतीत्युक्तम् । सोदर्यो लाजानावपतीति वचनात् उपस्तरणाभिघारणे वरस्यैव भवतः । पक्षान्तरे तु तस्यैव सर्वम् ।

अनाकुला.

( २ ) एते अपि सूत्रे व्यक्तार्थे । आचाराल्लाजानां त्रिरावापो जमदग्नीनाम् । लाजहोमाश्चापूर्वाः, 'अस्या अञ्जलावुपस्तीर्य' इत्यादि कृत्स्नविधानात् पार्वणातिदेशाभावात् पाकयज्ञधर्माग्निमुखप्रत्यभिघारणस्विष्टकृल्लेपाञ्जनानामप्राप्तिरेव । केचित् कृत्स्नविधानादेव साधारणतन्त्रस्य प्राप्त्यभावात् लाजकिंशुकहोमेषु तन्त्रमध्यस्थं 'येन जुहोति' (आपगृ. २।१) इत्याद्यञ्जलिसंस्कारमपि नेच्छन्ति ।

ताद.

**जुहोति– 'इयं नारी' इति ॥**

( १ ) वरस्यैव जुहोतिक्रिया । पात्रस्थानीयो वध्वञ्जलिः ।

अनाकुला.

( २ ) वर एव 'इयं नारी' इत्यनया ऋचाऽभिन्नेन वध्वञ्जलिना दैवतीर्थेन लाजान् जुहोति । न पार्श्वेन, उपदेशातिदेशयोरभावात् । केचित्– 'प्रदक्षिणमग्निं कृत्वा यथास्थानमुपविश्य' इत्येष विधिरुत्तरतो वरोऽभ्यन्तरतो वधूरित्येवंरूपयथास्थाननियमार्थो न युज्यते । कुतः ?

यतो विवाहे वधूप्राधान्येन तस्या अभ्यन्तरीभावो न्यायसिद्धः । वधूप्राधान्यं च स्त्रीणामपुनर्विवाहादेव वेदितव्यमिति । एतच्च 'तस्मिन्नुपविशत उत्तरो वरः' (आपगृ. ४।९) इत्यत्र सूत्रे व्याख्यातम् । अतो यथास्थानानुवादेन परिभाषासिद्धोपवेशननियमार्थ एवायं विधिः । उत्तराः षोडशैवाऽऽहुतीरुपविश्य जुहोति, न लाजहोमानपि । ते त्वस्मादेव नियमात् बहुतरगृह्यान्तरानुरोधाच्च अविगीतास्मदीयाचारमुल्लङ्घ्यापि तिष्ठतैव होतव्या इति । तन्न, यत औपासनोत्पादनद्वारा देहसंस्कारोत्पादनद्वारा च जायापत्युभयसाध्ययशोपकारके विवाहे तयोः सममेव स्वामित्वलक्षणं प्राधान्यम् । अपि च चोदितसर्वकर्मसु पतिप्रयोगे यस्त्वया धर्मः कर्तव्यः सोऽनया वध्वा सहेति पत्न्याः सहत्ववचनात् प्रत्युत अप्राधान्यमेव स्त्रीणाम् । अपुनर्विवाहस्त्वासामप्राधान्येऽपि 'तस्मान्नैका द्वौ पती विन्दते' (तैसं. ६।६।४) इति निषेधबलादेवोपपद्यते । तस्मात् न्यायतोऽभ्यन्तरीभावस्यानियमे विपर्यये वा प्राप्ते, उपवेशनानुवादेन यथास्थानमुत्तर एव वर इत्येतन्नियमार्थ एवायं विधिः । तेन लाजहोमा अप्यासीनेनैव होतव्याः । तस्य 'आसीनो दर्वीहोमान् जुहोति' (आपप. ३।१०) इति सर्वदर्वीहोमानामविशेषेणास्माकं चोदितत्वात्, स्वसूत्रोक्तविषये बहुतराणामपि गृह्यान्तराणामनुपसंहार्यत्वाच्च । ताद.

**उत्तराभिस्तिसृभिः प्रदक्षिणमग्निं कृत्वाऽश्मानमास्थापयति यथा पुरस्तात् ॥**

(१) उत्तराभिस्तिसृभिः 'तुभ्यमग्रे पर्यवहन्' इत्यादिभिः अग्निं प्रदक्षिणं करोति । तां हस्ते गृहीत्वा तिसृणामन्ते परिक्रमणारम्भः, 'वचनादेकं कर्म बहुमन्त्रम्' इति । उत्तराभिरिति बहुवचनेनैव त्रित्वपरिग्रहसिद्धे तिसृभिरिति वचनं तिसृभिरेकमेव परिक्रमणं यथा स्यात्, प्रतिमन्त्रं क्रियाभ्यावृत्तिर्मा भूदिति ।

अनाकुला.

(२) उत्तराभिः 'तुभ्यमग्रे पर्यवहन्' इत्यादिभिस्तिसृभिः । यथा पुरस्तात् तथा 'आ तिष्ठेमम्' इत्यनया । ताद.

**होमश्चोत्तरया ॥**

(१) यथा पुरस्तादिति वर्तते । उत्तरया 'अर्यमणं नु देवम्' इत्येतया । अनाकुला.

(२) लाजहोमश्चोत्तरया 'अर्यमणं नु देवम्' इत्येतया । ताद.

**पुनः परिक्रमणम् ॥**

**आस्थापनम् ॥**

(१) पुनरपि परिक्रमणमग्नेः कर्तव्यम्, आस्थापनं चाश्मनः । पुनःशब्दः क्रियाभ्यावृत्तिद्योतनार्थः । तेनोत्तराभिस्तिसृभिरित्यादिर्भवति । अनाकुला.

(२) अग्निप्रदक्षिणम् । (आस्थापनम्) अश्मनः । ताद.

**होमश्चोत्तरया ॥**

उत्तरया 'त्वमर्यमा' इत्येतया ऋचा ।

* अनाकुला.

**पुनः परिक्रमणम् ॥**

(१) पुनःशब्दः पूर्ववत् । अनाकुला.

(२) 'होमश्चोत्तरया' इत्यादिषु पञ्चसु सूत्रेषु 'यथा पुरस्तात्' इत्यनुषङ्गः । कार्यः कार्यमिति च यथालिङ्गं वाक्यशेषः । ताद.

**जयादि प्रतिपद्यते ॥**

(१) पूर्वमग्नेरुपसमाधानादिवचनेन तन्त्रप्राप्तिर्दर्शिता । इदं तु वचनं कालोपदेशार्थं परिक्रमणादूर्ध्वं जयादयो यथा स्युरिति । इतरथा 'जयादीनुपजुहोति' इति वचनाल्लाजहोमानन्तरमुपहोमः स्यात्, ततस्तृतीयं परिक्रमणम् । अनाकुला.

(२) एतदुक्ताभिप्रायम्– यत्र वचनं तत्रैव जयादयः, नान्यत्र, अन्वारम्भश्चैषु नास्तीति । ताद.

**परिषेचनान्तं कृत्वोत्तराभ्यां योक्त्रं विमुच्य ....... ॥**

(१) परिषेचनान्तग्रहणं तन्त्रशेषोपलक्षणम् । तेन प्रणीताविमोकस्याप्यन्ते योक्त्रविमोकः । 'जयादि प्रतिपद्यते' इत्येव सिद्धे परिषेचनान्तग्रहणं तदनन्तरमेव

* ताद. अनाकुलावत् ।

योक्त्रविमोको यथा स्यात्, प्रस्थानकाले मा भूदिति । उत्तराभ्यां 'प्र त्वा मुञ्चामि' इत्येताभ्याम् । 'वचनादेकं कर्म बहुमन्त्रम्' इति द्विमन्त्रो विमोकः । अनाकुला.

(२) परिषेचनान्तं कृत्वा, सामर्थ्यात्तन्त्रशेषं समाप्येत्यर्थः । तेन शम्यापोहनप्रणीताविमोकब्राह्मणोद्वासनान्यपि करोति । उत्तराभ्यां 'प्र त्वा मुञ्चामि' इति द्वाभ्यामृग्भ्यां योक्त्रं विमुञ्चति । तात्पर्य.

## हिरण्यकेशिगृह्यसूत्रम्

अग्न्युपसमाधानम्, आनीयमानाया वध्वाः समीक्षणम्, प्रधानहोमः, अङ्गहोमाः

**'अग्निमुपसमाधाय परिधिपरिधानान्तं कृत्वा वधूमानीयमानां समीक्षते–'सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वाऽयाथास्तं विपरेतन ॥' इति । दक्षिणतः पतिं भार्योपविशत्याचान्तसमन्वारब्धायां परिषिञ्चति यथापुरस्तात् ॥**

ततो ‡विवाहः । तस्य विधिरुच्यते– अग्निमुपसमाधाय परिधिपरिधानान्तं कृत्वा वधूमात्मानं प्रति स्वैरानीयमानां समीक्षते 'सुमङ्गलीः' इत्यनया । दक्षिणतो जामातुर्भार्या वधूरुपविशति । पतिमित्यपपाठो व्यत्ययो वा । 'दक्षिणेन पतिम्' इति वा पठितव्यम् । पतिर्भार्येति भविष्यद्वृत्त्या निर्देशः । सम्यगन्वारब्धः समन्वारब्धः पतिर्यस्याः अस्ति सा समन्वारब्धा । अकारो मत्वर्थीयः । 'विभक्ता भ्रातरः' इति यथा । समन्वारब्धा भवतीत्यर्थः । आचान्ता चासौ समन्वारब्धा च आचान्तसमन्वारब्धा । कर्माङ्गमिदमाचमनं प्रयताया एव । आचान्तः( ? न्त )समन्वारब्धायां परिषिञ्चति वध्वाम् । यथापुरस्तादिति सिद्धानुवादः । मातृद.

**व्याहृतिपर्यन्तं कृत्वा जुहोति- 'अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् स्वाहा ॥ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता, पौत्रमानन्दमभिप्रबुध्यतामियं स्वाहा ॥ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज प्रजां पश्यन्ती सुमनस्यमानां स्वाहा ॥ द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनं धयतस्ते पुत्रान् सविताऽभिरक्षतु । आवाससः परिधानाद्बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु पश्चात् स्वाहा ॥ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाऽघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पापं स्वाहा ॥ देवकृतं ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः पिशाचान् । क्रव्यादो मृत्यूनधरान् पादयामि दीर्घमायुस्तव जीवन्तु पुत्राः स्वाहा ॥' ॥**

व्याहृतिपर्यन्तं कृत्वा 'अग्निरैतु' इति षट् प्रधानाहुतीर्जुहोति । मातृद.

**'इमं मे वरुण' 'तत्त्वा यामि' 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'त्वमग्ने अयासि' 'प्रजापते' इति ॥**

वारुण्यादीन् प्राजापत्यान्तान् हुत्वा । मातृद.

अश्मारोपणम्, पाणिग्रहणम्

**अश्मानमास्थापयति– 'आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुरस्यून् सहस्व पृतनायतः ॥' इति । अपरेणाग्निं द्वयान् दर्भान् पूर्वापरानुदगग्रान् संस्तीर्य तेषु पूर्वापरावतिष्ठेते ॥**

पूर्ववदश्मानं निधाय वधूमास्थापयति 'आतिष्ठ' इति । यथावर्णमिह मन्त्रः । अपरेणाग्निं द्वयान् द्वयान् दर्भान् पूर्वापरांश्च संस्तीर्य, द्वयोर्देशयोः स्तरणात् द्वयवयवत्वम् । तयपोऽयच्प्रत्ययः( ? ऽयजादेशः ) । तेषु दर्भेषु

‡ ततः पूर्वोक्तसूत्रबहिर्भूतकन्याप्रतिपादनानन्तरमित्यर्थः ।

(१) हिगृ. १।६।१९।१–१४.

पूर्वापरौ दंपती अवतिष्ठेते । एकत्र स्तीर्णे जाया, परत्र पतिः ।

मातृद्व.

**प्राङ्मुखः प्रत्यङ्मुख्या हस्तं गृह्णीयात्, प्रत्यङ्मुखः प्राङ्मुख्या वा ॥**

अपरेषु दर्भेषु अवस्थितः प्राङ्मुखः पतिः पूर्वेष्ववस्थितायाः प्रत्यङ्मुख्या भार्याया हस्तं गृह्णीयात्, प्रत्यङ्मुखो वा पूर्वेष्वस्थितोऽपरेष्ववस्थितायाः प्राङ्मुख्याः 'सरस्वति' 'गृह्णामि ते सुप्र' इत्येताभ्याम् ।

मातृद्व.

**यदि कामयेत पुंसो जनयेयमित्यङ्गुष्ठं गृह्णीयात् ॥**

यदि कामयेत पुंसः पुत्रान् जनयेयमिति अङ्गुष्ठं गृह्णीयात् ।

मातृद्व.

**यदि कामयेत स्त्रीरित्यङ्गुलीः ॥**

यदि कामयेत स्त्रीर्जनयेयमिति अङ्गुलीरेव गृह्णीयात् ।

मातृद्व.

**यदि कामयेतोभयं जनयेयमित्यभीव लोमान्यङ्गुष्ठं सहाङ्गुलिभिर्गृह्णीयात् । 'सरस्वति प्रेदमिव सुभगे वाजिनीवति । तां त्वा विश्वस्य भूतस्य प्रजायामस्यग्रतः ॥ गृह्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसत् । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥' इति ॥**

यदि कामयेतोभयं स्त्रीपुंसश्च( ? स्त्रीः पुंसश्च) जनयेयमिति अभीव लोमानि अपर्याप्तरोम्णामङ्गुष्ठमङ्गुलीभिः सह गृह्णीयात् । 'प्राङ्मुखः प्रत्यङ्मुख्याः प्रत्यङ्मुखः प्राङ्मुख्या वा । यदि कामयेत पुंसो जनयेयम्' इत्येवमादिना सिद्धे किमर्थं 'हस्तं गृह्णीयात्' इति ? उच्यते— कामाभावेऽपि हस्तग्रहणार्थम् । इतरथा हि सत्येव कामे अङ्गुष्ठादीनामेव ग्रहणं स्यात्, नासति कामे । अथ किमर्थं (त्रिः) गृह्णीयादित्युच्यते, न चतुर्णामपि सकृत् ? उच्यते । कथमेतावत्यसति अङ्गुष्ठं गृह्णीयादित्येवमादिभिरेव हस्तस्यायं संबन्धः स्यात् । हस्तग्रहणं च मन्त्रप्राप्त्यर्थमङ्गुष्ठाङ्गुलिपक्षे । तथा सति अकामसंयुक्तं ग्रहणं न स्यात् । द्वितीये त्वक्रियमाणे हस्तग्रहणादन्यत्साङ्गुष्ठग्रहणं स्यात् । तथा सति मन्त्राभावः प्रसज्येत, लिङ्गविरोधात् । तृतीये वचनमकामसंयोगेऽपीहैव ग्रहणं न स्यात्, यत्र क्व च हस्त इति । स्त्रीरित्यत्रापि वचने चतुर्णां तुल्यत्वं स्यात् । तत्राकामसंयुक्तग्रहणे यत्र क्वचन हस्तग्रहणं प्राप्नोति । अङ्गुष्ठादीनां ग्रहणं हस्तग्रहणवन्न स्यात् । तत्र मन्त्राभावः स्यात् ।

मातृद्व.

### वध्वा अभिमन्त्रणम्

**तामग्रेण दक्षिणमंसं प्रतीचीमभ्यावृत्याभिमन्त्रयते—'अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । जीवसूर्वीरसूः स्योना शं न एधि द्विपदे शं चतुष्पदे ॥ तां नः पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेपम् ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयोऽहं मनुष्यजाः ॥ सोमोऽददाद्गन्धर्वाय गन्धर्वोऽग्नयेऽददात् । पशूंश्च मह्यं पुत्रांश्चाग्निर्ददात्यथो त्वाम् ॥ अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वम् । सामाहमृक् त्वं तावेहि संभवाव सह रेतो दधावहै । पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कुरु । दशास्यां पुत्रानाधेहि पतिमेकादशं कुरु ॥' इति ॥**

तां भार्यामात्मनोऽग्रेण दक्षिणेन संस्थिता प्रत्यङ्मुखी च यथा भवति तथाऽभ्यावृत्याभिमन्त्रयते— अघोरचक्षुरिति, (तां नः ०,) सोमः प्र०, सोमोऽद०, अमूहमिति, इमामिति । एतैरभ्यावृत्येत्यपाठः । 'प्रत्यङ्मुखः प्राङ्मुख्या वा' इत्यस्मिन् पक्षे इदं विधानम्— तामात्मनोऽग्रेण दक्षिणमंसं प्रत्यङ्मुखीमवस्थाप्याभिमन्त्रयते । अथवा उत्तरेण तां गत्वा प्रसव्यमावृत्य प्राङ्मुखो यथाऽऽत्मनोऽग्रेण दक्षिणमंसं स्थिता भवति तथा स्थित्वा प्रदक्षिणां तां

प्रत्यङ्मुखीमावृत्याभिमन्त्रयते 'प्राङ्मुखः प्रत्यङ्मुख्याः' इत्येतस्मिन् पक्षे तामीषद्दक्षिणेन। मातृद्व.

लाजहोमः, स्विष्टकृद्धोमः

**तां यथायतनमुपवेश्याथास्या अञ्जलावाज्येनोपस्तीर्य लाजान् द्विरावपति- 'इमाँल्लाजानावपामि समृद्धिकरणान् मम। तुभ्यं च संवननं तदग्निरनुमन्यतामयम्॥' इत्यभिघार्य 'इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती। दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा॥' इति तस्या अञ्जलिना जुहोति॥**

तां भार्यां यथायतनमुपवेश्य तस्या अञ्जलावाज्येनोपस्तीर्य लाजान् द्विरावपति 'इमाँल्लाजान्' इति मन्त्रमावर्त्य। वर एव कर्ता, अन्यस्याश्रवणात्। अथग्रहणं परिभाषार्थं यत्राऽऽघारवत्यवदानं तत्रैवम्, यत्रावदानं चोद्यते तत्रापि। यथा 'औदुम्बर्यां दर्व्योपस्तीर्णाभिघारितं द्रव्यमुपस्तीर्यैतेषामेवान्नानां समवदाय' इत्यादौ। अन्ये आहुः- आवपने परकर्तृकत्वख्यापनार्थोऽथशब्द इति। स च यो भ्राता भ्रातृस्थानीयो वा। तस्मिन् शाल(? स्याल)शब्दः 'स्यात् शूर्पाल्लाजानावपति' (नि. ६।९।१) एतेन निमित्तेन प्रवृत्तमिति (? त्त इति)। शास्त्रान्तरे च तथा दृष्टम्- 'भ्राता भ्रातृस्थानीयो वा द्विर्लाजानावपति' इति। पूर्वस्मिन् पक्षे 'शाल(? स्याल) आसन्नः संयोगेनेति नैदानात् (? नैदानाः)' (नि. ६।९।१) इत्येतन्निर्वचनं द्रष्टव्यम्। द्विरिति च प्रदर्शनमात्रम्। त्रिः पञ्चावत्तिनां स्यात् आवपनं वैदिके। शास्त्रान्तरे च दर्शनात् 'त्रिर्जामदग्न्यानाम्' इति। अभिघार्येत्यादि। अभिघार्यावत्तानेव लाजान्। अवशिष्टानपीत्येके, शास्त्रान्तरे च दर्शनात् 'प्रत्यभिघार्य हविः' इति। तस्या अञ्जलिं पूरयित्वा स्रुक्स्थानीयेन वरो जुहोति। सेत्यवचनान्न सा कर्त्री, वर एव कर्ता। तस्मात्तस्या हस्तावालम्भ्य स्वयमेव मन्त्रमुक्त्वा जुहोति। मातृद्व.

**'उदायुषा' इत्युत्थाप्य 'विश्वा उत त्वया वयं धारा उदन्या इव। अतिगाहेमहि द्विषः॥' इति प्रदक्षिणं परिक्रम्य॥**

ताम् 'उदायुषा' इत्युक्त्वा पूर्ववदुत्थाप्य 'विश्वाः' इत्यनेन स्वयमेव मन्त्रमुक्त्वा तया सह प्रदक्षिणमेतमग्निं परिक्रम्य। मातृद्व.

**तथैव लाजानावपति द्वितीयं परिक्रम्य॥**

उत्थापनादिना परिक्रम्योपविश्य उपस्तरणादिना धर्मेण तथैव लाजानावपति जुहोति। द्वितीयग्रहणं (धर्म)प्राप्त्यर्थम्। मातृद्व.

**तथैव लाजानावपति तृतीयं परिक्रम्य सौविष्टकृतीं जुहोति॥**

उपविश्योपस्तरणादिना धर्मेण तथैव लाजानावपति जुहोति। उत्थापनादिना परिक्रम्य स्विष्टकृद्देवताकामाहुतिं 'यदस्य' इत्येतां जुहोति। कालविधानार्थमिदम्। तृतीयग्रहणस्यापि धर्मवत्ता प्रयोजनम्। आज्येनैव सौविष्टकृती, द्रव्यान्तरावचनात्। केचित्तु लाजाधिकारमनुवर्त्य लाजैरिच्छन्ति, 'लाजैरितरान् वा' इति बौधायनीये दर्शनात्। तदन्याय्यम्, तेषां प्रधानहोमानामाज्यद्रव्यकत्वादनामत्वाच्च। मातृद्व.

जयाद्युपहोमाः

**अत्रैके जयाभ्यातानान् राष्ट्रभृत इत्युपजुह्वति यथापुरस्तात्॥**

पुनर्वचनात् परिसंख्येत्याशङ्कानिवृत्त्यर्थमिदम्। मातृद्व.

सप्तपदी

**'तामपरेणाग्निं प्राचीमुदीचीं वा विष्णुक्रमान् क्रमयति॥**

तां भार्यामपरेणाग्निं प्राचीमुदीचीं वा विष्णुक्रमान् क्रमयति। दीर्घोऽपपाठः। प्राचीमुदीचीमित्येके मुखवादं मन्यन्ते। तेषामर्थाद्दिगपि भविष्यति। मातृद्व.

(१) हिगृ. १।१।६।१५; संप्र. ८३५ (ताम्०).

[1]**अथैनां संशास्ति-- ' दक्षिणेन प्रक्रम्य सव्येनानुप्रक्राम, मा सव्येन दक्षिणमतिक्रामीः ' इति ॥**

अथैनां भार्यां संशास्ति ' दक्षिणेन ' इत्यनेन । अथेति परिषेकविसर्गादिकर्मसमाप्त्यानन्तर्यार्थम् ।

मातृद्व.

[2]**' एकमिषे विष्णुस्त्वाऽन्वेतु, द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु, त्रीणि व्रताय विष्णुस्त्वाऽन्वेतु, चत्वारि मायोभवाय विष्णुस्त्वाऽन्वेतु, पञ्च पशुभ्यो विष्णुस्त्वाऽन्वेतु, षड्रायस्पोषाय विष्णुस्त्वाऽन्वेतु, सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु ' इति । सप्तमं पदमवस्थाप्य जपति-- ' सखायौ सप्तपदा बभूव सख्यं ते गमेयं सख्यात्ते मा योषं सख्यान्मे मा योष्ठाः ' इति ॥**

' एकमिषे ' इत्येतैः सप्तभिः सप्त विष्णुक्रमान् क्रमयति । वर एव मन्त्राणां वक्ता, त्वेति लिङ्गात् । परिगृह्यैव पादं क्रमयति, हेत्वेति ग्रहणात्† । संशा(स)नेन मन्त्रवचनेन हेतुत्वात् स्वयमेव क्रामतीत्येके । सा यथासंप्रैषं दक्षिणेन प्रक्रम्य सव्येनानुक्रामति । न सव्येन दक्षिणमतिक्रामति । सप्तमं पदमवस्थाप्य, सप्तमं विष्णुक्रमं क्रामयित्वेत्यर्थः । जपति 'सखायौ' इत्येतं मन्त्रं वर एव । सप्तमं पदमवस्थाप्येति वचनं जपस्य सप्तमाङ्गत्वाय । तेन सप्तमं प्रक्रम्य तथैवावस्थिते पादे जपः । मातृद्व.

हृदयाभिमर्शः

**अथास्या दक्षिणेन पादेन दक्षिणं पादमवक्रम्य दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यन्ववमृश्य हृदयदेशमभिमृशति यथापुरस्तात् । ' प्राणानां ग्रन्थिरसि समाविस्रसः ' इति नाभिदेशम् ॥**

† ग्रन्थोऽयमशुद्धः । ' हेतुव्यापारवाचकणिजन्तधातुग्रहणात् ' इत्यर्थिका शुद्धिः कल्पनीया । सूत्रस्थं ' क्रमयति ' इति ण्यन्तप्रयोगमभिप्रेत्येयं हेतूक्तिः ।

(१) हिगृ. १९।६।१६ ; संप्र. ८३५.

(२) हिगृ. १९।६।१७-१९.

जपादनन्तरमस्या दक्षिणं पादमात्मनो दक्षिणेन पादेनावक्रम्य दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यन्ववमृश्य हृदयदेशमृभिमशतीत्युक्तार्थम् । ' यथापुरस्तात् ' इति मन्त्रप्राप्तये । यद्येवं यथापुरस्तादित्येतेनैव सिद्धत्वाद्दक्षिणेन हस्तेनेत्याद्यनर्थकम् । नानर्थकम्, मन्त्रमात्रस्यातिदेश इत्याशङ्कानिवृत्त्यर्थत्वात् । प्राणा... देशमिति उक्तार्थम् ।

मातृद्व.

वधूप्रोक्षणं बीजाधिश्रयणं च

**तामपरेणाग्निं प्राचीमुपवेश्य तस्याः पुरस्तात् प्रत्यङ्तिष्ठन्नद्भिः प्रोक्षति– ' आपो हि ष्ठा मयोभुवः ' इति तिसृभिः, ' हिरण्यवर्णाः शुचयः पावकाः ' इति चतसृभिः, ' पवमानः सुवर्जनः ' इति चैतेनानुवाकेन ॥**

तां वधूमपरेणाग्निं प्राङ्मुखीमुपवेश्य तस्याः पुरस्तात् प्रत्यङ्तिष्ठन्नद्भिः प्रोक्षति ' आपो हि ष्ठा ' इति यथागृहीतम् । प्रतिमन्त्रं प्रोक्षणम्, एकमन्त्रत्वात् कर्मणाम्, एकादृष्टाभावाच्च कर्मबहुत्वम् । मातृद्व.

[1]**अत्र बीजान्यधिश्रयन्ति ॥**

अत्र अस्मिन् काले व्रीह्यादीनामोषधीनां बीजानि ज्ञातयो वपन्ति जायापत्योः शिरसि क्षिपन्ति । अत्रेति वचनमाचारत एव सिद्धस्य कर्मणः कालविधानार्थम् । तेनान्येषामपि ग्रामकुलजनपदधर्माणां पुरस्तादुपरिष्टाच्च कर्तव्यानां संग्रहः सिद्धो भवति । बह्वृचानामप्युक्तम्– ' अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात् ' ( आगृ. १।७।१ ) इति । मातृद्व.

## मानवगृह्यसूत्रम्

स्थण्डिलकरणादिपूर्वतन्त्रम्, वध्वा आनयनमभिषेकश्च, वाद्यवादनम्, वासःपरिधापनम्, प्रधानहोमः, जयहोमः

[1]**प्रागुदक्श्वं लक्षणमुद्धृत्यावोक्ष्य स्थण्डिलं गोमयोनोपलिप्य मण्डलं चतुरस्रं वाऽग्निं निर्मथ्याभिमुखं प्रणयेत् । तत्र ब्रह्मोपवेशनम् ॥**

(१) हिगृ. १९।६।२० ; संर. ५३९.

(२) मागृ. १।१०।१-१९.

प्राच्यः पञ्च यत्र लेखा उदीची चैका तत् प्रागुदञ्चं लक्षणं कर्तव्यम् । स्थण्डिलं गोमयेनोपलिप्य मण्डलं चतुरस्रं वा । स्थण्डिलमाहार्य मृदा कार्यम् । अन्यस्तु वेदेरुपलक्षणार्थम् । तथा चोक्तं 'षडङ्गुला' इत्यादौ । तेन वर्तुलं स्थण्डिलं ज्ञेयम् । गोमयग्रहणं केवलमृत्तिकानिवृत्त्यर्थं माहिषनिवृत्त्यर्थं च । किमाकारं लिम्पेत् स्थण्डिलमित्याह– मण्डलं चतुरस्रं चतुष्कोणम् । तुल्यो विकल्पः । अग्निं मथित्वाऽऽत्मनोऽभिमुखं प्रणयनम् । प्राङ्मुखस्य संभवान्न प्रत्यङ्मुखस्य, वचनात् । इह मन्थनदर्शनान्नावश्यं जन्माग्निर्धार्यते इति गम्यते । 'पुत्रे जाते वरं ददात्यरणिभ्यामग्निम्' ( माग्ट. १५।१–२ ) उपक्रम्य 'तस्मिन् भार्यामुद्वहेत्' इति पाक्षिकं पारिशेषिकत्वम् । अपरे तु मथित्वेति वक्तव्ये निर्मथ्यग्रहणमाहिताग्नेः पुनर्विवाहे निर्मथ्याग्निं प्रणयेत्, निर्मथ्यसंज्ञानार्थत्वान्निर्मथ्यग्रहणस्य । तदसत्, मथित्वानिर्मथ्यशब्दयोर्गुरुलाघवकृतविशेषाभावात् समानार्थतैव । प्रत्युत निर्मथ्यशब्दो मथित्वाशब्दाल्लघीयान् । न चाऽऽहिताग्नेः पुनर्विवाहेऽधिकारोऽस्ति, अधर्मत्वोद्माधानात्तत्कर्मसमवायाभि( ? )कर्मभिरवचनात् । तथा च स्मृतिः– 'धर्मप्रजासंपन्ने दारे नान्यां कुर्वीतान्यतरापाये अग्न्याधेयात्' ( आध. २।११।१२ ) इति । न च निर्मथ्यग्रहणं संज्ञानार्थम्, आहिताग्नेर्विवाहस्या( ? स्य) शालाग्निकरणे अग्निं निर्मथ्येत्यत्रापि प्रसङ्गात्ततश्चाऽऽहिताग्नेरेव शालाग्निकरणं स्यात् । निर्मथ्यशब्दात्तत्राग्निहोत्रारणिभ्यां निर्मथ्यासान्न कर्माधिकारः । तेन च यूपाहुतिदर्शनमुपपन्नं स्मार्तकर्मणः । यूपाहुतौ श्रौतत्वात् । आहवनीयेऽपि च प्रसङ्गात् । अपि च निर्मथ्याहवनीययोर्दीक्षितस्यैव सतोः विकल्पितत्वात् । यूपाहुतिदर्शनात् । न दीक्षितस्यैत्र निर्मथ्य विकल्पो नाग्निहोत्रिमात्रस्य । न हि दीक्षितस्याग्नौ जुहुति इति वचनात् । अष्टाभा.

**दर्भाणां पवित्रे मन्त्रवदुत्पाद्य 'इमं स्तोममर्हते' इत्यग्निं परिसमुह्य पर्युक्ष्य परिस्तीर्य पश्चादग्नेरेकवद्बर्हिः स्तृणाति ॥**

**उदक्प्राक्तूलान् दर्भान् प्रकृष्य दक्षिणांस्तथोत्तरानग्रेणाग्निं दक्षिणैरुत्तरानवस्तृणाति ॥**

दर्भाणां बर्हिः स्तृणाति । निगदसिद्धम् ।

अष्टाभा.

**दक्षिणतोऽग्नेर्ब्रह्मणे संस्तृणात्यपरं यजमानाय पश्चार्धे पत्न्यै अपरमपरं शाखोदकधारयोर्लाजाधार्याश्च पश्चाद्युगधारस्य च ॥**

दक्षिणतोऽस्यै दर्भमूलकमित्यर्थः । अपरं यजमानाय पश्चाद्दक्षिणतोऽग्नेरेव पश्चार्धे षष्ठयन्ताग्निशब्दादनुवृत्तेर्दक्षिणतोऽग्नेरित्यनुवर्त्य दक्षिणतः पश्चादपरमिति संबन्धनीयम् । अन्यस्तु एते सूत्रे स्तः शाखोदकधारयोर्ब्रह्मयजमानपत्नीनां दक्षिणतः शाखोदकधारयोरपरमपरं स्तृणाति । शाखाबहुपदेत्यादि गुणे कस्याधारणमात्रमुदकुम्भमार्जनार्थं च । लाजाधार्याश्च लाजा धारयतीति लाजाधारी स्त्री अविधवा च । तौ पश्चाद्युगधारस्य च युगं धारयतीति युगधारः । लाजाधारीग्रहणं पाक्षिकम्, यदैतस्मिन्नेव तन्त्रे लाजाः स्युस्तदा संस्तृणीयात् । अष्टाभा.

**'स्योना पृथिवि भव' इत्येतयाऽवस्थाप्य शमीमयीः शम्याः कृत्वाऽन्तर्गोष्ठेऽग्निमुपसमाधाय भर्ता भार्यामभ्युदानयति ॥**

स्योना पृथिवी । अनया अवस्थापनं सर्वेषां शाखादिधारिणां युगधारस्य च, आनन्तर्यात् । अवस्थापनं 'प्राङ्मुखोऽवतिष्ठते' इति प्रयोगदर्शनात् । शमीमयी वेतुः( ? ) पदमिति । यदि प्रथमकृता शमीमयी( : ) शम्याः स्युर्नान्याः कारयेत् । अन्तर्गोष्ठग्रहणम् अन्तर्गोष्ठ एवोद्वाहो यथा स्यात् । उपसमाधानं कृत्वेत्यर्थः । भर्तृग्रहणं विस्पष्टार्थम्, भार्यासंबन्धिलब्धत्वात् । पूर्वक्रिययोर्वाऽध्वर्युकर्तृकत्वार्थम् । अष्टाभा.

**वाससोऽन्ते गृहीत्वा 'अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥' इत्यभिपरिगृह्याभ्युदानयति ॥**

**उत्तरेण रथं वाऽनो वाऽनुपरिक्रम्यान्तरेण ज्वलनवहनावतिक्रम्य दक्षिणस्यां धुर्युत्तरस्य**

**युगतन्मनोऽधस्तात् कन्यामवस्थाप्य शम्यामुत्कृष्य हिरण्यमन्तर्धाय ‘हिरण्यवर्णाः शुचयः’ इति तिसृभिरद्भिरभिषिच्य अत्रैव ‘बाणशब्दं कुरुत’ इति प्रेष्यति ॥**

अभिपरिगृह्य बाहुभ्यामिति अभ्युदानयेत् उत्तरेण रथं वाऽनो वा । अनः शकटम् । तुल्यो विकल्पः । उत्तरेण देशेन तयोर्गत्वा इत्यर्थः । अन्तरेण मध्येन ज्वलनवहनावग्निशकटौ अतिक्रम्य दक्षिणामुखं गत्वेत्यर्थः । दक्षि । द्वयोस्तन्मनोर्मध्यं धूरुच्यते, द्वे च धुरौ भवतो युगस्य, तयोर्दक्षिणा या धूस्तस्या उत्तरं यत्तन्म छिद्रं शम्याप्रवेशेन( ? शनम् ), तस्याधस्तात्कन्यामवस्थाप्य । अवस्थानमुक्तम् । उत्कृष्य शम्यां तन्मनःसकाशात्, हिरण्यमन्तर्धाय ‘हिरण्यवर्णाः’ इत्यादिभिरभिषिञ्चेत् कन्यामित्यर्थः । तिसृभिरेकाभिषेकः प्रत्यृचं वा । अत्रैव बाणेति । अत्रैवावसरे इत्यर्थः । बाणः वाद्यविशेषः शङ्खादिः । अष्टाभा.

**अथास्यै वासः प्रयच्छति– ‘या अकृन्तन्या अतन्वनन्या आवन्या अवाहरन् । याश्चाग्ना देव्योऽन्तानभितोऽततनन्त । तास्त्वा देव्यो जरसे संव्ययन्त्वायुष्मतीदं परिधत्स्व वासः ॥’ इति । अहतं वासः परिधाप्यान्वारभ्याऽऽघारावाज्यभागौ हुत्वा ‘अग्नये जनविदे स्वाहा’ इत्युत्तरार्धे जुहोति, ‘सोमाय जनविदे स्वाहा’ दक्षिणार्धे, ‘गन्धर्वाय जनविदे स्वहा’ इति मध्ये ॥**

अथास्यै वाससोऽन्ते गृहीत्वेत्युक्तमि( ? क्तादि )दमन्यमद्वासो( न्तरं ? ) भर्ता प्रयच्छति ‘या अकृन्तन्’ इत्यनेन मन्त्रेणाहतं वासः । भर्ता भार्यैतिकत्वाप्रत्ययो भर्तैव कर्ता गम्यते । ‘अग्निर्मह्यमथो इमाम्’ इति च मन्त्रवर्णात् । आघाराज्यभागा उत्तरत्र वक्ष्यति । इध्मादि सर्वं तत एवावगन्तव्यम् । ‘अग्नये जनविदे स्वाहा’ इति उत्तरस्यां दिशि जुहुयात् । तथा ‘सोमाय’ इति दक्षिणायाम्, ‘गन्धर्वाय’ इति मध्ये । अष्टाभा.

**‘युक्तो वह’ ‘यदाकूतम्’ इति द्वाभ्यामग्निं योजयित्वा नक्षत्रमिष्ट्वा नक्षत्रदेवतां यजेत्तिथिं तिथिदेवतामृतुमृतुदेवतां च ॥**

‘युक्तो वह’ युक्तो वह जातवेद इति द्वे प्रकरणऋचत्वात् । यथा प्राङ्गासीनोऽन्तरेण जानुनी आघाराज्यभागावित्यत्र अन्तराजानुत्वं प्राङ्गासीनता च प्रकरणार्थौ एवं मन्त्रारम्भः । ‘युक्तो वह’ निगदव्याख्यातम् । अष्टाभा.

**‘सोमोऽददद्गन्धर्वाय गन्धर्वोऽदददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ अग्निरस्याः प्रथमो जातवेदाः सोऽस्याः प्रजां मुञ्चतु मृत्युपाशात् । तदिदं राजा वरुणोऽनुमन्यताम् । यथेदं स्त्रीपौत्रमगन्म रुद्रियाय स्वाहा ॥’ इति, ‘हिरण्यगर्भः’ इत्यष्टाभिः प्रत्यृचमाज्याहुतीर्जुहुयात् ॥**

‘सोमोऽददद्’ द्वाभ्यामृग्भ्यामेकाहुतिः, अन्ते स्वाहाकारात् । हिरण्य । निगदव्याख्यातम् । अष्टाभा.

**येन च कर्मणेच्छेत्तत्र च जयान् जुहुयात् । जयानां च श्रुतिस्तां यथोक्ताम् । ‘आकूत्यै त्वा स्वाहा, भूत्यै त्वा स्वाहा, प्रयुजे त्वा स्वाहा, नभसे त्वा स्वाहा, अर्यम्णे त्वा स्वाहा, समृद्ध्यै त्वा स्वाहा, जयायै त्वा स्वाहा, कामायै त्वा स्वाहा’ इति ऋचा स्तोमं प्रजापतय इति च ॥**

येन च । येन कर्मणाऽर्थसिद्धिमिच्छति तत्र जयान् जुहोति । सर्वत्रानेन वाक्येन जयानां विधानम् । जयानां यथोक्तग्रहणात् ‘आकूताय स्वाहा’ इति दर्शयति, न तु ‘आकूतं च स्वाहा’ इति यथा शाखान्तरेषु । अथवा जयानां श्रुतिरित्यनेनेति तदाह– भ्रातृव्यवानपि जुहुयादित्यर्थः । ‘आकूत्यै त्वा बृहद्रायत्रवर्तनिः स्वाहा’ इति श्रुतिः । एभिर्मन्त्रैरवरा आहुतीर्जुहुयादित्यर्थः । ‘प्रजापतये स्वाहा’ इति चतुर्थ्यन्तेन प्रजापतिशब्देन जुहुयात् । प्रजापतिरिति पाठे ‘प्रजापते न हि’ इत्यनया ऋचा स्वाहाकारान्तया । अष्टाभा.

वधूकर्तृकं वरसमीक्षणम्

**शुचिः प्रत्यङ्ङुपयन्ता तां ‘समीक्षस्व’ इत्याह ॥**

शुचिः पुरस्तात् प्रत्यङ्ङुपयन्ता तां समीक्षस्वेत्याह । उपयन्ता पुरस्तात् कन्यायाः शुचिः मनसो वैकार्यान्ममेयं कामोपभोगाय स्यादित्यतः प्रजापत्याहुतेर्मनसो अस्मिन्नवसरे चित्तस्खलनादशुचिः स्यादिति शुचिरित्युक्तम् । तथा यतेत यथा मनो न स्खलेदित्यर्थः । ब्रह्मचर्यात्कान्तासंनिधौ स्यादिन्द्रियात्मता, तस्मात् शुचित्ववचनं युक्तम् । प्रत्यङ्मुखः 'समीक्षस्व माम्' इति ब्रूयात्ताम् । अष्टाभा.

**तस्यां समीक्षमाणायां जपति— 'मम व्रते ते हृदयं दधातु मम चित्तमनुचित्तं तेऽस्तु । मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम् ॥' इति ॥**

एतस्यां तस्यां पश्यन्त्यां 'मम व्रते' इति । अष्टाभा.

पाणिग्रहणम्

**'का नामाऽसि' इत्याह ॥**

**नामधेये प्रोक्ते 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसौ' इति हस्तं गृह्णन्नाम गृह्णाति । प्राङ्मुख्याः प्रत्यङ्मुख ऊर्ध्वस्तिष्ठन्नासीनाया दक्षिणमुत्तानं दक्षिणेन नीचाऽरिक्तमरिक्तेन— 'यथेन्द्रो हस्तमग्रहीत् सविता वरुणो भगः ॥ गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसत् । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ याऽग्ने वाक् समवदत पुरा देवासुरेभ्यः । तामद्य गाथां गास्यामो या स्त्रीणामुत्तमं मनः ॥ सरस्वति प्रेदमव सुभगे वाजिनीवति । यां त्वा विश्वस्य भूतस्य भव्यस्य प्रगायाम्यस्याग्रतः ॥ अमोऽहमस्मि सा त्वं सा त्वमस्याप्यमोऽहम् । द्यौरहं पृथिवी त्वमृक् त्वमसि सामाहम् । रेतोऽहमस्मि रेतो धत्तम् ॥ ता एव विवहावहै पुंसे पुत्राय कर्तवै । श्रीये पुत्राय वेधवै । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥' इति ॥**

का नामाऽसीति नामधेयं पृच्छति । त्रिवर्तेऽपि नामधेये पुनः प्रश्नोऽप्रधाननामधेयार्थानां नामधेये हस्तं गृह्णन्नाम गृह्णाति । प्रोक्ते नामधेये 'देवस्य त्वा' इति हस्तं गृह्णाति । हस्तं गृह्णन्नाम गृह्णाति । असौ इति संबुद्ध्यन्तम्, प्रयोगात् युष्मदः । कथमित्याह— प्राङ्मुख्याः ... अरिक्तेन । निगदसिद्धम् । 'यथेन्द्रो हस्तम्' इत्यादि 'सुप्रजास्त्वाय (सुवीर्याय)' इत्यन्तं मन्त्रगणं जपतीति संबन्धः । अष्टाभा.

दम्पत्योरश्मारोपणम् अश्मावरोपणं च, परिणयनम्, ब्रह्मजपः

**अभिदक्षिणमानीयाग्नेः पश्चात् 'एतमश्मानमातिष्ठतमश्मेव युवां स्थिरौ भवतम् । कृण्वन्तु विश्वे देवा आयुर्वां शरदः शतम् ॥' इति दक्षिणाभ्यां पद्भ्यामश्मानमास्थापयति ॥**

अभिदक्षि । अग्नेः पश्चादात्मनो दक्षिणमेतामानीयेति । अथ कर्तृकाः पुनः । अन्यस्तु कश्चिदश्मानमग्नेः प्रदक्षिणमानीयाग्नेरेव पश्चात् स्थापयति । 'एतमश्मानम्' अनेन मन्त्रेण दक्षिणाभ्यां पद्भ्यां दम्पती अश्मानमास्थापयति । अश्मानमुपरि स्थापयन्ती( ? ती)त्यर्थः । अर्थाद्दम्पत्योरेव पादौ । अन्ये तु केचित् द्विवचनमास्थापयत इति पठन्ति । तच्च दम्पत्योर्विवक्षायां ज्ञेयम् । तदा चाऽऽक्रामत इत्यर्थः । अष्टाभा.

**'यथेन्द्रः सहेन्द्राण्या अवारुहद्गन्धमादनात् । एवं त्वमस्मादश्मनो अवरोह सह पत्या । आरोहस्व समे पादौ प्र पूर्व्यायुष्मती कन्ये पुत्रवती भव ॥' इत्येवं द्विरास्थापयति ॥**

यथेन्द्रः सहेन्द्राण्या— दम्पत्योरेव मन्त्रवर्णादवरोपयति द्विरास्थापयति तेन च मन्त्रेण । अवरोपयति चोत्तरेण । अष्टाभा.

**चतुः परिणयति ॥**

चतुः परिणयति अग्निं पर्येतीत्यर्थः । एतच्च परिणयनं लाजहोमेषु चतुर्षु, पुरा समाचारात् । अष्टाभा.

**'समितं संकल्पेथाम्' इति पर्यायेपर्याये ब्रह्मा ब्रह्मजपं जपेत् ॥**

'समितं संकल्पेथाम्' इति पर्यायेपर्याये ब्रह्मा ब्रह्मजपं जपेत्। पर्यायेपर्याये परिणयनेपरिणयने इत्यर्थः। एतस्मात् पूर्वं स्विष्टकृदन्ते सशाखमादधातीति केचित्पठन्ति। तस्यार्थे लाजहोमान्ते सकृत् स्विष्टकृद्भवतीत्यन्य आह। अष्टाभा.

लाजभर्जनादि, वासोदानम्, योक्त्रसंनहनम्, वधूवरयोरञ्जनम्, शलाकाप्रवेधः, लाजहोमः, जयादिहोमाः, स्विष्टकृद्धोमः

**[1]ततो यथार्थं कर्मसंनिपातो विज्ञेयः॥**

उक्तं च लाजाधार्यां आसनं लाजहोमान्ते सकृत् स्विष्टकृल्लाजहोमपक्ष एतस्मिन्नेवावसरेऽस्मात्(? ऽश्मा-)स्थापनानन्तरं लाजहोमः। स्यादिति वचनं क्रमार्थं ततो यथार्थं कर्मसंनिपातो विज्ञेयः। तत इति वीप्सायामन्यत्राप्युद्वाहादयं प्रवर्तत इति। ततस्ततो यथार्थं यस्य कर्मणो यत्रार्थः प्रयोजनं तस्य तत्र संनिपातोऽनुष्ठानं वेदितव्यम्। यथा लाजाधार्यै चाऽऽसनमेकतन्त्रेऽग्निप्रकटनानन्तरं द्विरास्थापनान्ते लाजनिर्वपणं तथाऽर्यम्णेऽग्नये इत्यत्र निर्वपणलिङ्गात् द्विरास्थापनानन्तरं लाजनिर्वपणं तन्त्रद्वयं च लक्ष्यते। तत्र द्वितीये तन्त्रे लाजाधार्यासनं प्रयोजनमतश्च पूर्वं तन्त्रं द्विरास्थापनान्तं परिसमाप्य पूर्णपात्रं दत्त्वा लाजनिर्वपणादि द्वितीयं तन्त्रं प्रारभेत। अन्यस्तु नायमर्थो न्याय्यमि(? य्य इ)ति। तथा चाऽऽलूनविशीर्णमिव प्रतिभाति। यत एकतन्त्रत्वमुक्त्वा पृथक्तन्त्रत्वमुक्तम्। तस्मादयमर्थो न्याय्य इति ब्रूमः। ततो यथार्थमिति अर्थमर्थं प्रति यथार्थं कर्मणां संनिपातो विज्ञेयः बोद्धव्यः। यथा संस्तरकाले लाजाधार्याः संस्तरणं तथाऽऽज्यनिर्वापकाले लाजनिर्वपणं तथा पात्राणां स्रुक्स्रुवादीनां प्रयोगकाले शूर्पाञ्जनेषीकादीनां प्रयोगः। एवंप्रकारः कर्मणां संनिपातो विज्ञेयः ज्ञातव्यः। यदप्यश्मास्थापनान्तं समाप्य पूर्णपात्रं तु ब्रूयात्। लाजानिर्वपणादिना द्वितीयं तन्त्रं तदप्ययुक्तम्। यस्मात् पूर्वकर्मणैव(? र्मं नैव) समाप्यते, न च तत्र दक्षिणा, किं तर्हि? वक्ष्यति 'वरो दक्षिणा' इति। तस्मादुमे एते कर्मणी समानतन्त्रे आज्यहोमे(? मो) लाजाहोमश्च। तथा च पूर्वतन्त्रं प्रागाज्यहोमानुक्रमपरं हि लाजहोमादनन्तरम्। अन्यच्च 'अथैनान्युपकल्पयति' इत्युपक्रम्य 'शूर्पे लाजा इषीकामश्मानमञ्जनम्' इति शूर्पादिभिः सहाश्मन उपकल्पनमुक्तम्। तदेकतन्त्रत्वे उपपद्यते न भिन्नतन्त्रत्वे। तस्मात् पूर्वापरमभिसमीक्ष्यैकतन्त्रत्वमाचार्यस्याभिप्रेतं बहुस(? श) इति मन्याम(हे)। तेन तत्र पूर्णपात्रस्य प्रकृतिवत्प्राप्तिरेव। तेन स्थालीपाकेष्वतिदेशात् अत्रापि प्रकृतिवत्प्राप्तिः। तथापि प्रत्यक्षशिष्टयावरया साध्यते। तस्मादलं बहुनोक्तेन, प्रकृतमभिधीयते। अष्टाभा.

**अर्यम्णेऽग्नये पूष्णेऽग्नये वरुणाय च व्रीहीन् यवान् वाऽभिनिरूप्य प्रोक्ष्य लाजा भृज्जति॥**

अर्यम्णे अग्नये। अर्यमादिदेवताभ्यः प्रतिपदमग्नय इत्यनुषजेत् एतस्यां सामगायेतिवत्। व्रीहीन् यवान् वेति तुल्यो विकल्पः। प्रोक्ष्य लाजा भृज्जतीति लाजाग्रहणमुपलक्षणं धानानां पक्षे यवानां प्रकृतत्वात्। अष्टाभा.

**मात्रे प्रयच्छति सजाताया अविधवायै॥**

मात्रे प्रयच्छति कन्यामात्रे, तस्या गृहे विवाहदर्शनात्। सजातायै मात्रे अविधवाया अपि प्रयच्छेत्। अन्यस्तु मातुरविधवायै सजातायै अन्यस्यै वा अविधवायै, यथा 'यदि सोमं न विन्देत् पूतिकामभिषुणुयात्' इति। यस्मादन्यस्यै अविधवायै, न मात्रे विधवायै प्रयच्छेत्। अष्टाभा.

**अथास्यै द्वितीयं वासः प्रयच्छति तेनैव मन्त्रेण॥**

अथास्यै द्वितीयं वासः प्रयच्छति तेनैव मन्त्रेण। लाजप्रदानान्तरमिदं द्वितीयवस्त्रदानं कन्याया उक्तं तेन परिधास्य(? प्य)मन्त्रेण। अष्टाभा.

**दर्भरज्ज्वाः 'इन्द्राण्याः संनहनम्' इत्यन्तौ समायम्य पुमांसं ग्रन्थिं बध्नाति॥**

(१) मागृ. १।११।१-२७.

दर्भरज्ज्वाः 'इन्द्राण्याः संनहनम्' इति मन्त्रेण दर्भरज्ज्वा अन्तौ प्रान्ते एकीकृत्य ग्रन्थिं बध्नात्याचार्यः ।

अष्टाभा.

**'सं त्वा नह्यामि पयसा पृथिव्याः सं त्वा नह्याम्यद्भिरोषधीभिः । सं त्वा नह्यामि प्रजया धनेन सा संनद्धा सुनुहि भागधेयम् ॥' इत्यन्तरतो वस्त्रस्य योक्त्रेण कन्यां संनह्यते ॥**

'सं त्वा नह्यामि' मन्त्रेण योक्त्रेण कन्यां संनह्यते वस्त्रस्य मध्ये वस्त्रसंप्रदाने दर्भरज्ज्वा संनहनम् ।

अष्टाभा.

**अथैनान्युपकल्पयते शूर्पं लाजा इषीका अश्मानमाञ्जनम् ॥**

**चतसृभिर्दर्भेषीकाभिः शरेषीकाभिर्वा समुञ्जाभिः सतूलाभिरित्येकैकया *त्रैककुभस्याञ्जनस्य संनिकृष्य 'वृत्रस्यासि कनीनिका' इति भर्तुर्दक्षिणमक्षि त्रिः प्रथममाङ्क्ते तथा परम् । तथा पत्न्याः शेषेण तूष्णीम् ॥**

**दिशि शलाकाः प्रविध्यति– 'यानि रक्षांस्यभितो व्रजन्त्यस्या वध्वा अग्निसकाशमागच्छन्त्याः । तेषामहं प्रतिविध्यामि चक्षुः स्वस्ति वध्वै भूतपतिर्दधातु ॥' इति ॥**

**लाजाः पश्चादग्नेरुपसाद्य शमीपर्णैः संयुज्य शूर्पे समं चतुर्धा विभज्याग्रेणाग्निं पर्याहृत्य लाजाधार्यै प्रयच्छति ॥**

शूर्पादीनामुपकल्पनं शूर्पलाजादेरिषीकास्तरणपर्यन्तस्य न आज्यावेक्षणमधिशृत्योपाधिशृत्य पश्चात् सादनमुत्पवनं यजमानावेक्षणं पश्चादग्नेर्लाजावसादनं शमीपत्रैः संसर्जनं चतुर्धा विभजनमग्रेण पर्याहरणं लाजाधार्यै प्रदानमिध्माधानमन्वारभ्याऽऽज्यभागादि प्रधानस्थाने लाजाहोमः । अन्यस्तु भिन्नतन्त्र एतदुक्तं च तत्कथं तस्मादयं मन्त्रक्रमः प्रथमं लक्षणं कृत्वाऽग्निप्रणयनं ततो दर्भपवित्रकरणं ततः परिसमूहनादिस्तरणान्तं ब्रह्मसंस्तरणादि तस्मिन्नेव काले लाजाधार्यास्तरणं ततस्तेषामवस्थापनं ततः स्रुक्स्रुवादिपात्रप्रयोगस्ततो लाजानिर्वपणप्रोक्षणभर्जनादयस्ततः शूर्पादीनामुपकल्पनं तत आज्यग्रहणादि समिदाधानान्तं ततोऽन्वारभ्याऽऽघाराज्यभागहोमादि 'ऋचा स्तोमम्' इत्यन्तं ततः शुचिरित्यादि हस्तग्रहणान्तं ततोऽश्मस्थापनम् । तच्च द्विः पुरस्तात् लाजाहोमादुपरिष्टाच्च द्विरिति वचनात् ततो द्वितीयवासःप्रदानं तेनैव मन्त्रेण दर्भरज्ज्वेन्द्राण्याः संनहनं दर्भग्रहणं मुञ्जादिनिवृत्त्यर्थं ततः । आञ्जनादिषीकापर्यसनान्तं ततो लाजाः पश्चादग्नेरुपसादनम् । एकोन(?) अर्थमुपकल्पनमुत्तरतोऽग्नेरुपसादनम् । ततोऽग्रेणाग्निं पर्याहृत्य लाजाधार्यै प्रदानं ततो लाजाहोमः अर्यमादीनां तिसृणां देवतानां यतः 'कामेन चतुर्थं स्विष्टकृतम्' इति वक्ष्यति निर्वपणं तिसृणामुक्तं ततोऽभ्यातानादिहोमः ततः कामाय स्विष्टकृतं चतुःपरिणयनं च चतुरितिवचनात् परिणीयपरिणीय लाजहोमः परिणयनेपरिणयने च ब्रह्मजपः । अत्र च हस्तग्रहणादूर्ध्वं यत्कर्म तत्स्वयं कर्तृत्वे ब्रह्मा कुर्यात् ततः स्विष्टकृतादूर्ध्वं वरदानान्तं कर्मसमापनम् । एवंविधश्च क्रमस्ततो यथार्थं कर्मसंनिपातो विज्ञेय इत्येतस्मात्सूत्राद्बोद्धव्यमित्यष्टावक्र उपस्तरो बहुवचनानामपि ।

अष्टाभा.

**लाजा भ्राता ब्रह्मचारी वाऽञ्जलिनाऽञ्जल्योरावपति ॥**

ब्रह्मचारी अब्रह्मचार्यपि भ्राताऽञ्जलिनाऽञ्जल्योरावपति यजमानपत्नीसंबन्धिनोर्द्वयोरञ्जल्योः संसक्तयोः ।

अष्टाभा.

**उपस्तरणाघारणैः संपातं ता अविच्छिन्नै(? अविच्छिन्दती)र्जुहुतः– 'अर्यमणं नु देवं कन्या अग्निमयक्षत । सोऽस्मान् देवोऽर्यमा**

* मानवश्रौतसूत्रे (२।१।१।३८) मानवगृह्यसूत्रानुवादप्राये वाराहगृह्यसूत्रे चैवमेव पाठ उपलभ्यते । त्रैककुभशब्दोऽञ्जनविशेषार्थे न कुत्रापि कोशादिषूपलभ्यते । त्रैककुदशब्दस्तु तन्नार्थे शब्रा. ३।१।३।१२, काश्रौ. ७।६२ इत्यादिषु बहुषु स्थलेषु प्रसिद्धः । 'त्रिककुदि पर्वतविशेषे भवम्' इति व्युत्पत्तिरपि तत्र स्पष्टीकृता ।

प्रेतो मुञ्चातु मामुतः स्वाहा ॥ तुभ्यमग्ने पर्यवहन् सूर्यां वहतुना सह । पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥ पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्तिका । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम ॥ ' इति ॥

एवं 'पूषणं नु देवम्, वरुणं नु देवम्' ॥

उपस्तरणाभिघारग्रहणात् मध्यात्पूर्ववदिति धर्मो भवति । द्विरभिघारणमुक्तम् । ता अविच्छिन्दतीस्ताः संतता जुहुत इत्यर्थः । परिणयनमुक्तम् । 'तुभ्यमग्ने' इति भर्ता जपेत्, लिङ्गात् । 'पुनः पत्नीम्' इत्यध्वर्युः । 'इयं नारी' इति पत्नी जपेत् । 'समितम्' इति ब्रह्मा । एवं 'पूषणं नु देवम्, वरुणं नु देवम्' इति पर्याये-पर्याये । अष्टाभा.

'येन द्यौरुग्रा' इत्यादय उद्वाहे होमाः । जयाभ्यातानाः संततिहोमा राष्ट्रभृतश्च ॥

'आकूताय स्वाहा' इति जयाः, 'प्राची दिग्वसन्त ऋतुः' इत्यभ्यातानाः, 'प्राणादपानं संतनु' इति संततिहोमाः, 'ऋताषाडृतधामा' इति द्वादश राष्ट्रभृतश्च ॥

'त्रातारमिन्द्रम्' 'विश्वादित्याः' इति मङ्गल्ये ॥ लाजाः कामेन चतुर्थं स्विष्टकृतमिति ॥

येन द्यौरुग्रेत्यादयः । आदिग्रहणं 'य इमे द्यावापृथिवी' इति प्रभृत्यर्थम् । उद्वाहग्रहणमर्थवादमात्रं दक्षिणाकालग्रहणवत् तदृत्विग्भ्यो दक्षिणां काले दद्यादितिवत् । जयाभ्यातानाः । चकार उद्वाह इत्यस्यानुकर्षणार्थः । जयादीनां मन्त्रप्रसिद्धत्वात् स्वरूपमाह 'आकूताय' इत्यादि । त्रातारमिं ( ? ) मङ्गल्य इति मन्त्रप्रशंसार्थम् । कामेन चतुर्थी लाजाहुतिः कामं नु देवमिति स्विष्टकृद्ग्रहण इति स्वात्मप्राप्त्यर्थम् । अष्टाभा.

सप्तपदी

अथैनां प्राचीं सप्तपदानि प्रक्रमयति 'एकमिषे द्वे ऊर्जे त्रीणि प्रजाभ्यश्चत्वारि रायस्पोषाय पञ्च भवाय षडृतुभ्यः सखा सप्तपदी भव सुमृडीका सरस्वती । मा ते व्योम संदृशी । विष्णुस्त्वामुन्नयतु ॥ ' इति सर्वत्रानुषजति ॥

अथैनां भर्ता, 'सखा सप्तपदी भव' इति लिङ्गात् । 'एकमिषे' इत्यादि । 'भव सुमृडीका' इति सर्वत्रानुषङ्गः । अष्टाभा.

योक्त्रस्य विमोकः वासोन्ते बन्धनं च

पश्चादग्ने रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य तेषु वधूमुपवेशयत्यपि वा दर्भेष्वेव ॥

'इमं विष्यामि वरुणस्य पाशं यज्जग्रन्थ सविता सत्यधर्मा । धातुश्च योनौ सुकृतस्य लोके रिष्टां मा सह पत्या दधातु ॥' इति योक्त्रपाशं विषाय वाससोऽन्ते बध्नाति ॥

पश्चादग्ने रोहिते चर्मणि दर्भेष्वेवेति नित्यं विकल्प्यते, पाठसामर्थ्यात् । अपि वा दर्भेष्वेवेति । एवकारः चर्मण्यावृत्तिं करोतीति केचित् । 'इमं विष्यामि' ( इति ) दर्भरज्जुं विषाय विमुच्य वाससोऽन्ते बध्नाति ( बध्नः ? ) । अष्टाभा.

अनुमत्यादिहोमाः, समिदाधानम्, दधिसक्तुहोमः, पुनः समिदाधानम्, उपस्थानम्, मार्जनम्, दक्षिणादानम्

अनुमतिभ्यां व्याहृतिभिश्च 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'अयाश्चाग्नेऽसि' इति च ॥

अनु । अनुमतिमित्यादि अयाश्चा जुहोतीत्यन्तं हुत्वा । अष्टाभा.

शमीमयीस्तिस्रोऽक्ताः समिधः 'समुद्रादूर्मिः' इत्येताभिस्तिसृभिः स्वाहाकारान्ताभिरादधाति ॥

शमी । शमीमयीश्चैव तिस्रः समिधोऽक्ता घृतेन 'समुद्रादूर्मिः' इत्येताभिर्जुहुयादित्यर्थः । अन्यस्तु स्वाहाकारग्रहणादत्रैव समिदाधाने स्वाहाकारो नान्यत्रेति केचित् । वयं तु ब्रूमः – अत्र स्वाहाकारग्रहणस्योपलक्षणार्थत्वात् सर्वत्र समिदाधाने स्वाहाकारः । अष्टाभा.

**अक्षतसक्तूनां दध्नश्च समवदाय 'इदं हविः प्रजननं मे' इति च हुत्वा 'वि ते मुञ्चामि रशनां वि रश्मीन्' इति च हुत्वा पवित्रेऽनुप्रहृत्याऽऽज्येनाभिजुहोति ॥**

अक्षता अनवहता यवाः, तेषां सक्तवो दधि च समवदाय। द्विर्द्विरवद्येत्, अवदायेति वचनात्। 'इदं हविः' इत्यादि 'रेतोऽस्मासु धेहि' इत्यन्तो मन्त्रः। पवित्रानुप्रहरणमाज्येनाभिहोमश्च 'वि ते मुञ्चामि' इत्यनेन मन्त्रेण मन्त्रान्तरैः साहचर्यादनुक्तोऽपि गम्यते। अष्टाभा.

**'एधोऽस्येधिषीमहि' इति समिधमादधाति। 'समिदसि समेधिषीमहि' इति द्वितीयाम् ॥ 'आपो अद्यान्वचारिषम्' इत्युपतिष्ठन्ते ॥**

एधो पत्नी वाऽऽदध्यात्। आपो( ऽअद्य ) वैतेनोपस्थापनम्। अष्टाभा.

**कुम्भादुदकेनाऽऽपोहिष्ठीयाभिर्मार्जयन्ते ॥**

आपोहिष्ठीयाभिर्मार्जनम्। उदकुम्भात् उदकुम्भधारहस्तादित्यर्थः। अष्टाभा.

**वरो दक्षिणा ॥**

वरो दक्षिणा। श्रेष्ठा गौर्देयात्। अत्राऽऽघारादि नक्षत्रदेवताहोमः अनुमतिभ्यां व्याहृतिभिरित्यादि मार्जनान्ताद्गम्यते। अन्यस्तूक्तमेकतन्त्रत्वम्। आ(ज्य)होमेषु च सर्वमाघारादि तन्त्रं भवति सीमन्तोन्नयनादौ। अष्टाभा.

प्रेक्षकानुमन्त्रणम्, सीमन्तकरणम्, केशाभ्यञ्जनम्, केशबन्धनम्

**[1] 'सुमङ्गुलीरियं वधूरिमां समेत पश्यत। सौभाग्यमस्यै दत्त्वायाथास्तं वि परेतन ॥' इति प्रेक्षकान् व्रजतोऽनुमन्त्रयते ॥**

सुमं—अनेन मन्त्रेण प्रेक्षकान् गच्छतोऽनुमन्त्रयते। अष्टाभा.

**अत्रैव सीमन्तं करोति त्रिश्येतया शलल्या समूलेन वा दर्भेण 'सेनाहनाम' इत्येतया ॥**

अत्रैव। तस्मिन्नेव पितृगृहे अस्मिन्नेव काले सीमन्तं कुर्यात्। त्रिश्येता शलली त्रिषु स्थानेषु या शुक्ला शलली उपेक्षा च शललीशब्दस्तु संबन्धात् समूलेन वा मूलसंयुक्तेन वा दर्भेण वेति विकल्पे 'सेनाहनाम' इत्यनेन। अष्टाभा.

**अथाभ्यनक्ति— 'अभ्यज्य केशान् सुमनस्यमानाः प्रजावरीर्यशसे बहुपुत्रा अघोराः। शिवा भर्तुः श्वशुरस्यावदायाऽऽयुष्मतीः श्वश्रूमतीश्चिरायुः ॥' इति ॥**

अथ ततोऽभ्यञ्जनम् 'अभ्यज्य केशान्' इत्यनेन मन्त्रेण। अष्टाभा.

**जीवोर्णयोपसमस्यति— 'समस्य केशानवृजिनानघोरान् शिवा सखीभ्यो भव सर्वाभ्यः। शिवा भव सुकुलोह्यमाना शिवा जनेषु सहवाहनेषु ॥' इति ॥**

जीवोर्ण—जीवतो मेषस्य या ऊर्णा तया संवेष्टय केशान् बध्नीयात्। तत्र संयमनं तेनैव सहोर्णया वेणीकरणम् 'समस्य केशान्' इत्यनेन। अष्टाभा.

दम्पत्योरेकपात्रे दधिमध्वादिप्राशनम्

**अथैनौ दधिमधु समश्नुतो यद्वा हविष्यं स्यात् ॥**

अथैनौ दधि। एनौ दम्पती सहाश्नीतः। दधि च मधु चेत्यर्थः। यद्वा दधिमधुभ्यां सह हविष्यस्य विकल्पः। अष्टाभा.

**तस्य स्वस्ति वाचयित्वा 'समाना वा आकूतानि' इति सह जपन्ति ॥**

तस्य समाना सह स्वस्तिवाचनाय ब्राह्मणायोदकपूर्वं दानं स्वस्ति ब्रूहि इति वचनप्रेषणम्। अष्टाभा.

**उभौ सह प्राश्नीतः ॥**

उभे (१ भौ) अपि दम्पती सह एकस्मिन् पात्रे युगपच्च प्राश्नीयातामित्यर्थः। अन्यप्राशननिवृत्त्यर्थं दधि-मधु-हविष्यवचनम्। पूर्वस्यपूर्वस्य स्वस्तीति वाचयित्वा। अष्टाभा.

---

(१) मानृ. १।१२।१-७.

## भारद्वाजगृह्यसूत्रम्

आज्यभागान्तं पूर्वतन्त्रम्, अन्नहोमाः
प्रधानहोमाश्च, गुरवे वरदानम्

'अथास्या अग्रेण ज्ञातिकुलमग्निमुपसमाधायाऽऽघारावाघार्याऽऽज्यभागौ जुहोति । 'अग्नये जनिविदे स्वाहा' इत्युत्तरार्धपूर्वार्धे । 'सोमाय जनिविदे स्वाहा' इति दक्षिणार्धपूर्वार्धे । तत एता आहुतीर्जुहोति– 'भूः स्वाहा, भुवः स्वाहा, सुवः स्वाहा, भूर्भुवः सुवः स्वाहा, या तिरश्ची याऽनूची, संराधन्यै, प्रसाधन्यै, सदसस्पतिम्, युक्तो वह जातवेदः' इति । जयाभ्यातानान् राष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति ॥

'अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात्स्वाहा ॥ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियं स्वाहा ॥ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा ॥ द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनं धयन्तं सविताऽभिरक्षतु । आ वाससः परिधानाद्बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात्स्वाहा ॥ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाऽघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा ॥' इति । 'पूर्णा पश्चात्, इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, अयाश्चाग्नेऽस्यनभिशस्तीश्च, यदस्य कर्मणोऽत्यरीरिचम्, प्रजापते' इति । उत्तमां हुत्वा गुरवे वरं ददाति ॥

(१) भागृ. १।१३–१८.

### पाणिग्रहणम्

अपरेणाग्निं द्वयान् दर्भान् पूर्वापरानुदगग्रान् स्तृणाति । तेषु पूर्वापरावुपतिष्ठेते । प्राङ्मुखः प्रत्यङ्मुख्या हस्तं गृह्णीयादित्येकम् । प्रत्यङ्मुखः प्राङ्मुख्या इत्यपरम् । अथैनयोः प्रैषकृदञ्जली उदकेन पूरयति । अथास्याञ्जलिनाऽञ्जलावुदकमानयति– 'शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥' इति । अथास्या दक्षिणेन हस्तेन दक्षिणं हस्तमभीवाङ्गुष्ठमभीव लोमानि गृह्णाति– 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ हस्तेन ते हस्तं गृह्णामि सौभगत्वाय मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिस्ते त्वा देवा अदुर्मह्यं पत्नीम् ॥ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः शंतमा प्रजायै । क्षुरपविर्जारेभ्यो जीवसूर्वीरसूः स्योना मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ तां नः पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेफम् ॥' ॥

'सोमः प्रथमो विविदे गन्धर्वस्ततोऽपरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ सोमो ददद्गन्धर्वाय गन्धर्वोऽग्नये ददत् । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ सरस्वति प्रेदमव सुभगे वाजिनीवति । तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः ॥' इति ॥

### दम्पत्योरभिमन्त्रणम्, अश्मारोपणम्, परिणयनम्, लाजहोमः

अथैनौ ब्रह्माऽभिमन्त्रयते– 'समितं संकल्पेथां सं वां सृजामि हृदये । संसृष्टं मनो अस्तु वां संसृष्टः प्राणो अस्तु वाम् ॥' इति । अथैनामश्मानमास्थापयति– 'आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुरस्यून्

सहस्व पृतनायतः ॥' इति । प्रदक्षिणमग्निं परिणयति– 'विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः ॥' इति । अथास्या भ्राताऽञ्जलिनाऽञ्जलावुपस्तीर्णाभिघारितान् लाजानावपति– 'इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम ॥ भगेन त्वा संसृजामि मासरेण सुरामिव ॥' इति । अथैनां वाचयति– 'इमान् लाजानावपामि समृद्धिकरणान् मम । तुभ्यं च संवननांस्तदग्निरनुमन्यतामियं स्वाहा ॥' इति । एवमेव त्रिरास्थापयति, त्रिः परिणयति, त्रिरावपति ॥

सप्तपदी, वधूमूर्धनि उदकावसेचनम्

अथैनां प्राचीं वोदीचीं वा ॥

सप्त पदानि प्रक्रमयति– 'एकमिषे विष्णुस्त्वाऽन्वेतु, द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु, त्रीणि व्रताय विष्णुस्त्वाऽन्वेतु, चत्वारि मायोभवाय विष्णुस्त्वाऽन्वेतु, पञ्च पशुभ्यो विष्णुस्त्वाऽन्वेतु, षड्रायस्पोषाय विष्णुस्त्वाऽन्वेतु, सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु' इति । सप्तमे पदे समीक्षमाणो जपति– 'सखा सप्तपदा भव सखायौ सप्तपदावभूव । सख्यं ते गमेयं सख्यात्ते मा योषं सख्यान्मे मा योष्ठाः ॥' इति । अथास्या दक्षिणमंसं प्रति बाहुमन्ववहृत्य हृदयदेशमभिमृशति– 'मम हृदये हृदयं ते अस्तु मम चित्ते चित्तमस्तु ते । मम वाचमेकमना शृणु मामेवानुव्रता भव सहचर्या मया भव ॥' इति । अथास्या दक्षिणं कर्णमाजपति– 'मां ते चित्तं प्रविशतु मां चक्षुर्मामु ते मनः । मयि सर्वाणि भूतानि मयि प्रज्ञानमस्तु ते ॥ मधु हे मध्वागाहे जिह्वा मे मधुवादिनी । मुखे मे सारघं मधु दत्सु संवननं कृतम् ॥ चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम् । यद्देवगन्धर्वो वित्तस्तेन संवनिनौ स्वः । मां चैव पश्य सूर्यं च माऽन्येषु मनः कृथाः ॥' इति ॥

अथास्याः स्वधितिं मूर्ध्नि धारयन् हिरण्यं वोदकुम्भेनावसिञ्चति– 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन ॥

## काठकगृह्यसूत्रम्

आज्यभागान्तं पूर्वतन्त्रम्, दम्पत्योः शकटयोजनम्, युगच्छिद्रात्कन्यामूर्धावसेकः

'तूष्णीं निर्मन्थ्यं भ्राष्ट्रात्सांतपनं यत्रदीप्यमानं वा बहिरग्निमुपसमाधाय परिसमूह्य पर्युक्ष्य परिषिच्य* परिस्तीर्याऽऽज्यं विलीनोत्पूतं कृत्वाऽऽघारादाज्यभागान्तं हुत्वाऽपरेणाग्निमनो रथं वाऽवस्थाप्य 'योगेयोगे' इति युनक्ति दक्षिणमितरमुत्तरामितराम् ॥

(१) 'एष औपसदोऽग्निर्वैवाहनो वा, तस्मिन् पाकयज्ञाः' (४७।१,२) इति वक्ष्यति । वैवाहनस्य विकल्प्यमानाश्चतस्रः प्रकृतयोऽत्रोच्यन्ते । सद्यः अरणिभ्यां निर्मथितो यस्तत्र निर्मन्थ्यशब्दो रूढः । तत्र निर्मन्थनसामान्यान्निर्मन्थनान्तरवन्मन्त्रे प्राप्ते तूष्णीमित्युक्तम् । एष एकः । भ्राष्ट्रात् द्वितीयः । सांतपनस्तृतीयः । यो बलेनाग्निना संतप्तादपसारिताग्निकाद्भूभागात् कार्पासगोमयचूर्णादिसंसर्गे कृत्वोत्पाद्यते, पाषाणं कंसमणिं वा तापयित्वा, सूर्यसंमुखं सूर्यकान्तमणिं वा स्थापयित्वा, सोऽभिमतः । यत्रदीप्यमानश्चतुर्थः । अत्राविशेषश्रुतावपि त्रेतावसथश्मशानपरिगृहीतसूतकपतिताद्यग्निवर्जमिति ज्ञेयम् । उपसमाधायेति प्रत्येकं संबन्धनीयम् । गार्हपत्य-

---

* इदं पदमेकस्मिन्पुस्तकेऽधिकम् । 'तेषामुक्तमुपसमाधानम्' (४७।३) इति सूत्रे ब्राह्मबलव्याख्याने पर्युक्षणात् पृथक् परिषेचनस्य प्रयोगं उक्तः ।

(१) कागृ. २५।८–४७.

वदुद्धतावोक्षिते जानुदघ्ने कुण्डे स्थापयित्वेत्यर्थः। गृहाद्बहिरेवेति नियमः। परिसमूहनं सजलेन करेण चतुर्दिक्संस्पर्शनम्। पर्युक्षणम् आसेचनम्। एवं चतुर्दिक्कमेव दर्भैः परिस्तरणं प्रथितम्। प्राग्दक्षिणोदक्ष्वेव स्तरणमित्यन्ये मन्यन्ते, 'त्रिभिः स्तरैः स्तृणाति' इति वैश्रवणीयदर्शनात्। आज्यस्य विलयनं विगलनम्, उत्पवनं पवित्रेण पावनम्। आघारादारभ्य आज्यभागान्तान् होमान् हुत्वा अग्नेः पश्चिमभागे स्थितयोः सतोः कन्यावरयोर्यथासंख्यं वामदक्षिणभागेनाग्नेरपरभागे अनः शकटम्, रथं स्यन्दनं वा सयुगमवस्थाप्य 'योगेयोगे' इत्यादिकयर्चा कन्यावरौ यूपे(? युगे) युनक्ति दक्षिणभागे वरमुत्तरभागे कन्यां योक्त्रेण संयोजयतीत्यर्थः।

'योगेयोगे तवस्तरं वाजेवाजे हवामहे। सखाय इन्द्रमूतये॥' — गायत्री, मैत्री, कश्यपस्याऽऽर्षम्। वयमिन्द्रं हवामहे आह्वयामः। कुत्र? योगेयोगे, दम्पत्योः सहभावेनावस्थितयोः परिकर्मसंबन्धे। तथा वाजेवाजे, वाजशब्दोऽन्नबलसंगमवचनः, इह त्वन्नवचनो गृह्यते, गार्हस्थ्यस्यान्नमूलत्वात्, वाजशब्देन चान्नसाधनं व(? ल)क्ष्यते। हविर्षिहविषि चाऽऽज्येष्टभागदानायेति प्रोत्साहना। किमर्थमाहयामः? ऊतये अवनाय। कीदृशा वयम्? सखायः समानख्यानाः। कीदृशमिन्द्रम्? तवस्तरम्, तवःशब्दो बलवचनः महत्त्ववचनो वा, बलवत्तरं महत्तरं वा। देव.

(२) ततोऽरणिभ्यामश्वत्थीशमीगर्भीत्यादियथोक्तजातिरूपाभ्यां तूष्णीं निर्मथितम्। भ्राष्ट्राद्वा। उखामङ्गारेषु निधाय मुञ्जतृणादिकमाधाय यो जन्यते। सूतकाग्निशवाग्निसंकराग्निपतिताग्निवर्जम्। तथा च— 'चण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित्। पतिताग्निः शवाग्निश्च ते नष्टग्रहणोचिताः॥' यत्रदीप्यमानं वा। तं बहिर्वेश्मनो गार्हपत्यसंमितोद्धतावोक्षिते न्युप्य तस्मिन्नुद्वाहविवाहहोमौ कुर्यात्। उद्वाहेऽक्षतसक्तवो हविः। विवाहे तु लाजाः। लाजानां निर्वपणं केचिन्नेच्छन्ति। तद्विचार्यम्। 'अग्नये पुष्टिपतये प्रजापतये जुष्टं निर्वपामि' इति सक्त्वर्थे यवान्निर्वपेत्। आज्यभागान्तं हुत्वा पश्चादग्नेः शकटं रथं वाऽवस्थाप्य तस्मिन् वधूवरौ प्राङ्मुखौ 'योगेयोगे तवस्तरम्' इति मन्त्रावृत्त्या युनक्ति। दक्षिणेन वरं तस्योत्तरतो वधूम्। ब्राह्म.

(३) ततो होमार्थं बहिरग्निमुपसमाधाय। तं विशिनष्टि। तूष्णीं निर्मथ्य। अरणिभ्यां निर्मथ्येत्यर्थः। 'अग्नेर्जनित्रम्' इत्यादि मा भूदिति तूष्णींग्रहणम्। भ्राष्ट्राद्वा। संतापजनितं वा। अश्मानमुखां वा संताप्य कंसमणिं वा परिमृज्याऽऽदित्याभिमुखं शुष्कगोमयादिना जन्यते यः स सांतापनः। यत्रदीप्यमानं वा। सत्यप्यविशेषे रथ्यासूतकसंकरपरिगृहीताग्निवर्जम्। एवमयं वैवाहनोऽग्निरुपशान्तः सर्वेभ्य एव योनिभ्यो यथायोन्याहृत्य तं प्राक्तने भस्मनि निक्षिपेत्, 'भस्मनाऽरणी संस्पृश्य मन्थेयुः' इति वचनात्, 'भस्मनाशेऽग्निनाशो भवति' इति श्रुतेश्च। प्रादुष्करणकाले चेत् गृह्य उपशान्तः श्रोत्रियगृहादानीय तूष्णीं गृह्यभस्मनि प्रक्षिप्याग्निहोत्रदेवताभ्यो हुत्वा गृही पत्नी वोपवसतीति भस्मन्येवाग्निप्रक्षेपस्य बह्वृचगृह्येऽपि दर्शनात्। एष वैवाहनोऽग्निर्दक्षिणाग्निप्रकृतिः। यस्तूदयकाले आह्रियते शुचिर्भूत इति स गार्हपत्यप्रकृतिः ....। बहिरग्निमुपसमाधाय। बहिरिति नियमः। गार्हपत्यलक्षणसदृशमुद्धत्यावोक्ष्य तत्राग्निमुपसमाधाय स्थापयित्वा सोदकेन पाणिना चतुर्दिशं समन्तात् समूह्य पर्युक्ष्य परिषिच्योदकेन समन्तात् परिस्तीर्य वैश्रवणीयवत्। तत आज्यं निरुप्य मन्त्रेण विलीनं कृत्वा 'ऊर्जे त्वा' इति उत्पूतं कृत्वा 'अग्नेर्जिह्वा' इत्यनेन। आघारादाज्यभागान्तं हुत्वाऽपरेणाग्निमग्नेरदूरे अनः शकटं रथं स्यन्दनं वा(ऽव)स्थाप्य तत्र युगधुरोर्दम्पती युनक्ति दक्षिणं वरमुत्तरां वधूम्। आवि.

**तूष्णीं विमुच्य 'खे रथस्य खेऽनसः खे युगस्य शतक्रतो। अपालामिन्द्रस्त्रिष्पूत्वा करोतु सूर्यवर्चसम्॥' इति हिरण्यं निष्टक्यं बद्ध्वाऽध्यधि मूर्धनि दक्षिणस्मिन् युगतर्द्मन्यद्भिरव-**

**क्षारयते—'शं ते हिरण्यं शमु सन्त्वापः शं ते मेथी भवतु शं युगस्य तर्म्म। शं त आपः शतपवित्रा भवन्त्वेना पत्या तन्वा संसृजस्व ॥' इति ॥**

(१) प्रकृतयोक्त्रयुक्ताविवात्रापि प्राप्तं मन्त्रं निषेधयति तूष्णीमिति। विमुच्य कशायोजितं योक्त्रं मोचयित्वा, 'खे रथस्य' इत्यादिकयर्चा हिरण्यं दर्भपवित्रेण बद्ध्वा युगस्य दक्षिणभागगते रन्ध्रे निदधाति। कथं बद्ध्वा? निष्टर्क्यं कृत्वा। यथा सुखमोचनं भवति तथेत्यर्थः। निष्टर्क्यं सुखविमोचनम्। तत्सुवर्णं बद्ध्वाऽनन्तरं दक्षिणभागे वरस्थाने कन्यामानीय ससुवर्णे दक्षिणस्मिन् युगस्य छिद्रे पूर्वोक्ताभिरद्भिरध्यधि क्षारयति। 'उपर्यध्यधसः सामीप्ये' (पासू. ८।१।७) इति वीप्सायां सामीप्ये अध्यधीति द्विर्वचनम्। युगच्छिद्रस्याधः समीपे कन्यां स्थापयित्वा मूर्धनि सुवर्णोदकं क्षारयतीत्यर्थः। अस्मिन्नवसरे कन्यावरयोः स्थानपरिवृत्तिः संपन्ना, पुनः स्थाने एव स्थितिर्भविष्यति। यद्वक्ष्यति— 'दक्षिणतः पुमान् भवति' इति।

खे रथस्येत्यैन्द्री, अनुष्टुप्। ब्रह्मण आर्षम्। अन्यत्राप्यु(? प्यनु)च्यमाने ब्रह्मण एवाऽऽर्षम्, 'अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः।' इति सर्ववेदानां सामान्येन तद्दृष्टत्वस्मृतेः। हे शतक्रतो अनन्तक्रिय, इन्द्रः तेजस्विनां मध्ये परमेश्वर आदित्यः एतां कन्यां सूर्यवर्चसम् आदित्यकल्पकान्तिं करोतु। किं कृत्वा? त्रिष्पूत्वा त्रीन् वारान् पवित्रयित्वा। कीदृशीम्? अपालां विवाहात् पूर्वं स्वच्छन्दचारिणीम् अत एव पावनयोग्याम्। क? रथस्य खे, तथा अनसः शकटस्य युगस्य च खे छिद्रे। अथवा अपालामिव इन्द्र इमां कन्यां पूतां कृत्वा सूर्यवर्चसं करोत्विति इवार्थगर्भं व्याख्यानम्। यथा किलापालेति नाम्ना अत्रेर्दुहिता कुष्ठव्याधिग्रस्ता शून्याश्रमे स्नानाद्यर्थापसृतमुनिके दृष्ट्वा यूपा(? युगा)दिच्छिद्रेषु सुवर्णोदकेनाभिषिच्येन्द्रेण व्यपगतरोगा सूर्यकान्तिः संपादिता, तद्वदेतामप्यपगतपापां कृत्वा सूर्यवर्चसं करोतु इन्द्रः। तथा चेतिहासः— 'अपालाऽत्रिसुता ह्यासीत्कन्या त्वग्दोषिणी पुरा। तामिन्द्रश्चकमे दृष्ट्वा विजने पितुराश्रमे ॥ रथच्छिद्रे तु तामिन्द्रो युगस्य शकटस्य च। प्रक्षिप्य निचकर्ष त्रिस्ततः सा सुत्वचाऽभवत् ॥' इति।

शं ते हिरण्यमिति जगती। हे कन्ये, ते तव हिरण्यं शं सुखमस्तु। शमु सन्त्वापः, उ इति निपातः समुच्चये, आपश्च ते सुखं सन्तु। मेथी रथावस्तम्भनं वरूथं शं सुखं तवास्तु। युगस्य तर्म छिद्रं तव सुखकरमस्तु। आपस्ते शतपवित्रा बहुपावन्यः सुखकारिण्यो भवन्तु। एना पत्या तन्वा संसृजस्व, एना अनेन भर्त्रा सह तन्वा शरीरेण संसृजस्व संबन्धयस्व। क्वचित्तु शाखायां पठ्यते— 'तन्वं संसृजस्व' इति, भर्त्रा सह संयोजय इति तत्रार्थः। देव.

(२) 'खे रथस्य' इति हिरण्यमूर्ध्वपाशेन ग्रन्थिना दर्भैर्बद्ध्वा वधूमन्तरा वराग्नी आनीय वरस्य दक्षिणत उपवेश्याध्यधि मूर्धनि (दक्षिणस्मिन् युगच्छिद्रे तद्धिरण्यं निष्टर्क्यं बद्ध्वा?) अप आसिञ्चति। ब्राह्म.

(३) तूर्ष्णीं विमुच्य योक्त्रपाशं हिरण्यम् अङ्गुलीयादि दर्भैर्निष्टर्क्यं निश्चर्त्यं सुखविमोचनीयम् ऊर्ध्वपाशेन ग्रन्थिनेत्यर्थः। दक्षिणस्मिन् युगच्छिद्रेऽवधाय तस्याधस्तात् कन्यामद्भिरवक्षालयते। 'शं ते हिरण्यम्' इत्यनया जगत्या हिरण्योदकेन शिरस्यवसिञ्चति। आवि.

होमाः कन्याया मूर्ध्नि संपातस्रवणं च

**दक्षिणतः पुमान् भवति ॥**

(१) कन्याया अभिषेकसंस्कारे कृते सति पुनरग्नेरपरभागे प्राङ्मुखः पुरुषो भवति दक्षिणेन, अर्थात् कन्या उत्तरेण भवतीति लभ्यते। अत्र दक्षिणभागमानीय संस्क्रियमाणत्वात् कन्या प्रधानमित्येके। स्वतन्त्रत्वात्, सदा दक्षिणभागे चावस्थानात् पुरुषः प्रधानं विवाह इत्यन्ये। देव.

(२) ततो वरस्योत्तरतो वधूमुपवेश्य दक्षिणतः पुमान् भवति। ततस्तां तथैव प्रत्यानीय वरस्योत्तरत उपवेशयति। ब्राह्म.

( ३ ) ततो दक्षिणतः पुमान् भवति। अन्तरङ्गा कन्या, संस्कार्यत्वात्। अनेन ज्ञायते दक्षिणयुगतर्मनि कन्या आसीत। आवि.

**अथ जुहोति-- 'अग्नये जनिविदे स्वाहा सोमाय जनिविदे स्वाहा गन्धर्वाय जनिविदे स्वाहा '॥**

( १ ) अथशब्दो मङ्गलार्थ इति माठरः। अन्तरालेऽक्षतसक्तुहोमद्योतनायाथशब्द इत्यादित्यदर्शनः। अवश्यं हि उक्तयुक्त्या ते होमान्तरालादावपि होतव्या इत्यत्रैवावसरे न क्षतिरिति। होमान् क्रमेणाऽऽह—अग्नय इत्यादि। 'पूर्वं देवैः स्त्रियो भुक्ताः सोमगन्धर्ववह्निभिः।' इति श्रूयते। तेन निष्क्रयाय तेषां होमः। यद्यपि च सोमः प्रथमस्तथाऽप्यग्रतो होमोऽत्राग्नये 'येन कर्मणेच्छेद- ( ? त्सेद )ग्निमुखं कुर्यात्' इत्यभिप्रायेण। अग्नये स्वाहा सुहुतमस्तु। कीदृशाय ? जनिविदे जनी वधूः जनीं वेत्ति विदन्ते वा जनिवित्, तस्मै। एवमन्यत्। देव.

( २ ) अथ जुहोति। होमं कुर्यात् ऋत्विक्। ब्राह्म.

( ३ ) अथ जुहोति। केचिदस्मिन्नवसरेऽक्षतसक्तून् जुह्वति, अथशब्दस्योदितत्वात्। का क्षतिः ? एषां होमानां पुरस्ताच्चोपरिष्टाच्चावश्यं होतव्यास्ते। अत्र चाथशब्दस्यार्थवत्ता भवति। अन्ये व्याचक्षते— 'विवाहे ( ? उद्वाहे होमाः ) जयप्रभृतयश्च ' ( २५।२६ ) इति यद्वक्ष्यति ते जयप्रभृतय इत्यादयो भवन्ति। आवि.

**'आयुषः प्राणम्' इति संतनीर्जुहोति॥**

( १ ) एकादश संतन्य एवमाद्याः। देव.

( २ ) 'आयुषः प्राणम्' इत्येकादश नाभेर्भौवनस्य। 'आयुषः प्राणं संतनु स्वाहा। ( इत्यादि ) दिवः स्वः संतनु' इत्यन्तम्। ब्राह्म.

( ३ ) 'आयुषः प्राणम्' इत्येकादश संतनीर्जुहोति। आवि.

**जयाभ्यातानान् राष्ट्रभृतश्च॥**

( १ ) जुहोति इत्यनुषङ्गः। जयांश्चाभ्यातानांश्च, तान् राष्ट्रभृतश्च जुहोतीत्यर्थः। देव.

( २ ) 'आकूतम्' इति त्रयोदशाऽऽहुतीः 'द्वादशगृहीतेन प्रतिमन्त्रं जयान् जुहुयात्' इति लौगाक्षिः। चतुर्गृहीतं जुहोत्यभ्यातानैः। 'ऋताषाड्' इति द्वादशभिर्वडन्तैर्हुत्वा 'स नो भुवनस्य' इति त्रयोदशीं रथमुखे। ब्राह्म.

**तानि यथोक्तम्॥**

( १ ) तानि त्रीणि जयादीनि कर्माण्युक्तानतिक्रमेण कर्तव्यानि। 'द्वादशगृहीतेन जयान् जुहुयात्' इति लौगाक्षिः। यथाधीतं मन्त्रमनुद्रुत्य ऋगन्तेन स्वाहाकारेण द्वादशप्रक्षेपा अपीति केचित्। अन्ये तु द्वादशावदानगृहीताज्यस्य सर्वमन्त्रानुद्रवणे सर्वान्ते स्वाहाकारेणैक एव प्रक्षेप इत्यनुतिष्ठन्ति, प्रतिमन्त्रं तु द्वादशावदानान्युद्धरन्ति। अभ्यातानहोमे तु चतुर्गृहीतं जुहोति। तत्र 'बृहस्पतिपुरोहिताः' 'देवहूत्याम्' इति आघातग्रहणम्। राष्ट्रभृतस्तु द्वादशगृहीतेन त्रयोदश होमाः। ऋताषाडिति द्वादशभिर्वडन्तैर्हुत्वा 'स नो भुवनस्य पते' इति रथमुखेऽप्यध्यग्निं ध्रियमाण इति यथोक्तता। पाकयज्ञेषु ह्येतत्त्रयं यथावद्व्यवस्थितम्, तत्रैव समन्त्रकं व्याख्यास्यामः। देव.

( २ ) तानि त्रीणि कर्माणि यजूंषि वा यथोक्तम् अर्थानतिक्रमेण जुहोति। 'द्वादशगृहीतेन जयान् जुहुयात्' इति लौगाक्षिः। द्वादशगृहीतं गृहीत्वा यथाधीतं मन्त्रमनुद्रुत्य ऋगन्तेनैक एव होमः। चतुर्गृहीतं जुहोत्यभ्यातानैः। राष्ट्रभृतो यथोक्तता— 'ऋताषाड्' इति द्वादशभिर्वडन्तैर्हुत्वा 'स नो भुवनस्य पते' इति रथमुखे त्रयोदशीं जुहोति। 'तानि यथोक्तमाधिपत्यानि जुहोति' इति ये व्याचक्षते तेषां तानीत्यतिरिच्यते, यथोक्तता चाऽऽधिपत्यलिङ्गानां मन्त्राणां न काचिदस्ति। पुंल्लिङ्गानां तानीति परामर्शः कर्मापेक्षया यजुरपेक्षया वा न विरुध्यते। आवि.

**आधिपत्यानि जुहोति॥**

(१) अधिपतिशब्दोपलक्षितलिङ्गादाधिपत्यान्युच्यन्ते। तानि सानुषङ्गान्येकविंशतिर्यजूंषि। 'अग्निर्भूतानामधिपतिः स माऽवतु तस्मै स्वाहा, यमः पृथिव्या

अधि०, वायुरन्तरिक्षस्याधि०, सूर्यो दिवोऽधि०, चन्द्रमा नक्षत्राणामधि०, विष्णुर्दिशामधि०, पूषा पथीनामधि०, त्वष्टा रूपाणामधि०, सविता प्रसवानामधि०, इन्द्रो ज्येष्ठानामधि०, मित्रः सत्यानामधि०, वरुणो धर्मणामधि०, रुद्रः पशूनामधि०, बृहस्पतिर्ब्रह्मणामधि०, ब्राह्मणो वाचामधि०, सोम ओषधीनामधि०, समुद्रः स्रवत्यानामधि०, अन्नं साम्राज्यानामधिपतिस्तन्माऽवतु तस्मै स्वाहा, गायत्री छन्दसामधिपत्नी सा माऽवतु तस्यै स्वाहा, मरुतो गणानामधिपतयस्ते माऽवन्तु तेभ्यः स्वाहा, पितरः पितामहाः परेऽवरेभ्यस्ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्मिन् क्षेत्रेऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां स्वाहा'।

भूतानां स्थावरजङ्गमानाम् अग्निः अधिपतिः नियन्ता स मा अवतु आगच्छतु हविर्ग्रहीतुं मां रक्षतु च, तस्मै स्वाहा सुहुतमस्तु च। यमः पृथिव्या नियन्ता स माऽवतु (तस्मै) स्वाहेत्यनुषङ्गः। एवमन्यत्र। विष्णुर्दिशामधिपतिः, व्यापकत्वात्। पूषा पथीनां पथिकानाम्। त्वष्टा रूपाणाम्, त्वष्टा प्रजापतिर्विश्वकर्मा, स रूपाणां सर्वाकृतीनामधिपतिः। सविता प्रसवानाम्, प्रसूयन्ते इति प्रसवाः अङ्कुरादयः। इन्द्रो ज्येष्ठानां प्राशस्त्यानाम्। मित्रः सत्यानामिति। तथा च श्रूयते— 'मित्राय सत्यपतये' इति। वरुणो धर्मणाम्, धर्माणो धर्तारः, तेषां वरुणोऽधिपतिः, 'वरुणोऽसि धृतव्रतो वरुणस्त्वोत्तुम्नातु' इति दर्शनात्, धर्तॄणां पृथिव्यादीनां सर्वेषां वरुणो धर्तेति वैशेषिकादिभिरप्युक्तम्। रुद्रः पशूनाम्, स ह्यभ्यर्थयते 'अहमेव पशूनामीशे' इति। बृहस्पतिर्ब्रह्मणां वेदानामधिपतिः। ब्राह्मणो वाचाम्, स एव हि दैवीनां मानुषीणां च वाचामुपदेष्टा, 'तस्माद्ब्राह्मण उभे वाचौ वदति दैवीं च मानुषीं च' इति श्रुतेः। सोमः चन्द्रः ग्राम्यारण्यानामोषधीनां फलपाकान्तानामधिपतिः। स्रवत्यानां नदीनां समुद्रः अन्तरिक्षाख्यः अधिपतिः, अपामाश्रयणीयं ह्यन्तरिक्षम्, सूक्ष्माणामन्यथावश्यायः कथम्? साम्राज्यम् ऐश्वर्यम्, तेषामन्नम्, पृथिव्याः सौरः रसोऽधिपतिः। मरुतो गणानाम्, सर्वेषामेवाग्न्यादिगणानां मरुतोऽधिपतयो व्याख्याताः। अवरेभ्यः निकटेभ्यः पितृपितामहादिभ्यो ये परे सर्गसमुद्भवा हिरण्यगर्भमनुप्रभृतयः पितरः, ते नः पान्तु पालयन्तु चेति प्रकृतमपेक्षणीयम्, अवतेः प्रकृतस्य गत्यर्थत्वात्। कावन्तु? अस्मिन् ब्रह्मणि एतेषु ब्राह्मणेषु ऋत्विक्षु दक्षिणया स्वीकृतेषु, अस्मिन् विवाहाख्ये कर्मणि, अस्मिन् क्षेत्रे पालने, अस्यां चाऽऽशिषि ऋत्विग्भिराधीयमानायां दम्पत्योः फलभूतायाम्। यद्यपि ऋत्विग्विशेषा मामवन्त्वित्युच्चारयन्ति, तथापि कर्मणो दक्षिणया तदीयस्य परिक्रीतत्वाद्यजमानस्यैव फलम्। पुरोधायां पौरोहित्यकर्मणि। देवहूत्याम्, देवानां हूतिः आह्वानं हविर्दानाय यत्र सा देवहूतिः विवाहभूमिरिह।

देव.

(२) एवं जयाभ्यातानान् राष्ट्रभृतश्च हुत्वा। 'अग्निर्भूतानाम्' इत्याहुत्येकविंशतिमाधिपत्यानि जुहोति।

ब्राह्म.

(३) तानि सानुषङ्गान्येकविंशतिः। आवि.

**'आकूत्यै' इति त्रिभिः 'त्वा' इत्यन्तैः॥**

**'हिरण्यगर्भः' इत्यष्टाभिः प्रत्यृचम्॥**

**'भूः स्वाहा' इति महाव्याहृतिभिश्चतसृभिः॥**

**'अग्न आयूंषि' इत्याग्निपावमानीभिश्च तिसृभिः॥**

(१) त्वेत्यन्तैरिति स्वाहाकारान्ततां निवर्तयतीति केचित्। अन्ये त्वाहुः— त्वान्तानामेव पाठात् त्वान्तत्वाव्यभिचारात् अन्यान्तत्वमप्यस्तीति स्वाहाकारान्ततांद्योतनाय त्वान्तग्रहणमिति। 'हिरण्यगर्भः' इत्यादिना सकलेनानुवाकेनैक एव होमो मा विज्ञायीति प्रत्यृचग्रहणम्। आग्निपावमानीभिरित्यग्निलिङ्गाभिः पवमानलिङ्गाभिश्च।

'आकूत्यै त्वा, कामाय त्वा, समृद्ध्यै त्वा॥'— आकवनम् आकूतिः अभिप्रायः, अभिप्रेतसिद्ध्ये हे आज्य, त्वां जुहोमीत्यर्थः। व्याख्यानाङ्गं जुहोतिरध्याह्रियते, न तु मन्त्रैकदेशः। अध्याह्रियमाणस्य मन्त्रैक-

देशत्वे ऋचामपि साकाङ्क्षत्वादध्याहारसहितानां यतिर्विनश्येत्, ततश्च गायत्र्यनुवाक्या त्रिष्टुबिति नावकल्पते। तस्मादर्थव्याख्यानाङ्गमेव अध्याहारः, न मन्त्रैकदेशः इत्याहुः। कामाय काम्यमानसिद्धये त्वां जुहोमि। समृद्धिः संपत्, तदर्थं त्वां जुहोमि।

'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥'— अष्टानामपि पुरुषस्य नारायणस्याऽऽर्षम्। हिरण्यगर्भः प्रजापतिः पुरुषो नारायणः प्राणो जगत्सूत्रं कः सम्राडिति पर्यायाः। हिरण्यगर्भः अग्रे सर्गादौ समवर्तत प्रादुर्बभूव। स च जातः प्रादुर्भूतः सन् एक एव भूतस्य समस्तस्य पृथिव्यादिभूतजातस्य अभिव्यङ्ग्यस्य वा महदादेः पतिः पालकः प्रभुरासीत्, व्यत्ययेनातीतविभक्तिः, प्रादुर्भवति जगदादौ हिरण्यगर्भः पतिश्च भवति सर्वस्येत्यर्थः। स हि इमां प्रत्यक्षां पृथिवीं क्षितिं दाधार धारयते, उत तथा द्यां स्वर्गं पृथिवीं च। पृथिवीशब्दः सामीप्यादन्तरिक्षे वर्तते। हिरण्यगर्भ एव हि सर्वं प्रोतं सूत्रे मणिगणा इव। तस्मै कस्मै प्रजापतये, देवाय दानादिगुणयुक्ताय, हविषा आज्येन विधेम परिचराम, तस्मै हविर्दद्म इति यावत्।

'यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव। ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै० ॥'— यः प्राणापानादिमतो निमेषादिमतश्च देवमानुषादेः राजा प्रभुः। पतिः पालयिता। प्राणेन अपानाद्युपलक्ष्यते, निमेषेण स्पर्शनादिकं बुद्धीन्द्रियकर्मेन्द्रियक्रियायोगित्वम्। प्राणनादिकं कुर्वतः निमिषतो जिघ्रतो विहरत इत्यादि ज्ञेयम्। विश्वस्य सर्वस्य जगतो जङ्गमस्य बभूव भवति। स हि ईशे ईष्टे प्रभवति द्विपदो देवमनुष्यादेः, चतुष्पदो गवादेः। तस्मै कस्मै देवायेति पूर्ववत्।

'य ओजोदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्य छायाऽमृतं यस्य मृत्युः कस्मै० ॥'— ओज उत्साहः, बलं सामर्थ्यम्, तद्ददातीत्योजोदा बलदाः। यस्य संबन्धिनं प्रशिषम् अनुशासनमनुज्ञां विश्वे सर्वे जना देवाश्चोपासते सेवन्ते अनुवर्तन्ते। यस्य संबन्धिनी छाया आश्रयः आराधनम् अमृतं मोक्षफलम्। यस्य च विपर्ययः अर्थादनाराधनं मृत्युः संसारकारी। तस्मै कस्मा इति समानम्।

'येन द्यौरुग्रा पृथिवी दृढा च येन स्वः स्तभितं येन नाकम्। यो अन्तरिक्षं विममे वरीयः कस्मै० ॥'— येन प्रजापतिना द्यौः अन्तरिक्षम् उग्रा उन्नता दृढा अवष्टब्धा, तथा पृथिवी व्याप्ता, तथा स्वः स्तभितं व्याप्तम् अवष्टब्धं प्रोतम्, स्वर्गोऽप्यवष्टब्ध इत्यर्थः। येन नाकम् आदित्यमण्डलमवष्टब्धम्। स्वरित्यस्य विशेषणं वा नाकमिति। कं सुखम्, न कम् अकं दुःखं न विद्यते यत्र तन्नाकम्। यश्चान्तरिक्षं विममे निर्ममे। कीदृशम्? वरीयः उरुतरम्। तुल्यमन्यत्।

'य इमे द्यावापृथिवी तस्तभाने अधारयद्रोधसी रेजमाने। यस्मिन्नधि विततः सूर एति कस्मै० ॥'— इमे प्रत्यक्षदृश्ये द्यावापृथिव्यौ रेजमाने वेपमाने सत्यौ योऽधारयत् धारयते। कीदृश्यौ? रोधसी रुन्धाने। कथं कृत्वा? तस्तभाने निःशल्ये कृत्वा। यस्मिन्नधि यस्योपरि सूरः आदित्यः एति गच्छति। कीदृशः? विततः विस्तीर्णः।

'यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाऽऽहुः। दिशो यस्य प्रदिशः पञ्च देवीः कस्मै० ॥'— यस्य हिरण्यगर्भस्य इमे प्रसिद्धा मेर्वादयो गिरयः महित्वा महिमानं माहात्म्यमाहुः, तथा पञ्च दिशः प्रागाद्या ऊर्ध्वया सह, विदिशश्च नाम्या सह पञ्च यस्य माहात्म्यमाहुः। देवीः दानादिधर्मिकाः इति दिशां विशेषणम्। *

'आपो ह यन्महतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम्। ततो देवानां निरवर्ततासुरेकः कस्मै०॥'— यस्मिन् काले सर्गादौ महत्यः आपः प्रथमं सृष्टाः सत्यो विश्वं सर्वमायन् व्याप्तवत्यः। किं कुर्वाणाः? गर्भं दधानाः तमेव हिरण्यगर्भं गर्भरूपेण दधानाः धारयन्त्यः। यथोक्तम्— 'अप एव ससर्जाऽऽदौ

---

* 'समुद्रं यस्य रसया सह' इति मन्त्रांशस्य व्याख्यानं त्रुटितम्।

तासु वीर्यमवासृजत् ।' (मस्मृ. १।८) इति । कीदृश्यः ? जनयन्तीरग्निम् । अग्निं तेजःपुञ्जरूपम्, अन्यच्च अण्डादिकं जनयन्त्यः । अथवा अग्निमिति गर्भविशेषणम्, तेजःपुञ्जरूपमित्यर्थः । ततो गर्भाधानानन्तरं देवानां द्योतमानानामिन्द्रियाणां प्राणिनां वा गत्यादियोगिनां सुरमानुषप्रभृतीनां य एक एवासुः प्राणः सर्वसूत्ररूपो निरवर्तत निर्वृत्तः, तस्मै हविषा विधेम ।

'आ नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥' — स व्यानरूपो हिरण्यगर्भः प्रजापतिः नः अस्माकं प्रजामाजनयतु, धाता विधाता च भूत्वा गर्भं दधातु नः सुमनस्यमानः प्रसन्नचित्तः । संवत्सररूपः सन् ऋतुभिश्चाक्लृपानः विवर्तमानः आर्तवैः पदार्थैर्विपरिणममानः । चाक्लृपान इति लिटः कानच् । उपलक्षणमेतत् प्रथमविवर्तस्य । जलस्य हिरण्यगर्भो विवर्तः, तस्योङ्कारः, तस्य वेदा इत्यादिरूपेण स एव विवर्तते । स हिरण्यगर्भो यतः पुष्टिपतिस्ततोऽस्माकं पुष्टिमादधातु । महाव्याहृतयो व्याख्याताः ।

'अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥' — तिस्रो गायत्र्यः । कूष्माण्डानामार्षम् । हे अग्ने, त्वम् आयूंषि पवसे पुनासि रोगजरादिमलैर्विहीनानि संपादयसि । नः अस्मभ्यम् ऊर्जं बलम् इषं च अन्नं आसुव जनय देहि । दुः शुनि परतस्तान्तादेशो प्रातिशाख्ये दुच्छुनामित्यन्वाख्यानात् शुनामिव दुष्टानां दुच्छुनां हिंस्राणां बाधस्व आरे दूरत एव । दुच्छुनामिति 'हिंसार्थानाम्' इति कर्मणि षष्ठी * ।

'अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥' — अग्निर्ऋषिः द्रष्टा पवमानः पुनानः, पञ्चजनाः मनुष्याश्चत्वारो वर्णा अनुलोमजवर्गः पञ्चमः, तेभ्यो हितः, पुरोहितः 'अग्निर्वै देवानां पुरोहितः', पुरः अग्रे परलोके वा हितः कर्मसंपादनद्वारेण, तं वयम् ईमहे याचामहे महागयं महागृहम् ।

'अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ॥' — हे अग्ने, अस्मे अस्मान् पवस्व पुनीहि । अप इति कर्मनाम, शोभनान्यपांसि यस्य स स्वपाः सुकर्मा अग्निः । किं कुर्वन् पुनीहि ? वर्चः तेजः शोभनं च वीर्यम्, तथा रयिं धनं पोषं च पुष्टिं दधत् विदधानः ददत् वाऽस्मभ्यम् । देव.

(२) ततः 'आकूत्यै त्वा स्वाहा । कामाय त्वा स्वाहा । समृधे त्वा स्वाहा' इति तिस्रः । ओं भूः स्वाहा । ओं भुवः स्वाहा । ओं स्वः स्वाहा । ओं भूर्भुवः स्वः स्वाहा । 'अग्न आयूंषि, अग्निर्ऋषिः, अग्ने पवस्व' इत्यग्निपावमान्यस्तिस्रः । ब्राह्म.

(३) त्वेत्यन्तैः । यतोऽत्वान्ता अपि सन्ति । प्रत्यृचग्रहणमनुवाकेन होमो मा भूत् । अनुवाकेनैकोऽपि होमः सावित्रवैश्वकर्मणादिषु । आवि.

**हुत्वा हुत्वा कन्यायाः मूर्धनि संपातानवनयेत्— 'या ते पतिघ्नी तनूरपतिघ्नीं ते तां करोमि स्वाहा ॥ या तेऽपुत्रिया तनूः पुत्रियां ते तां करोमि स्वाहा ॥ या तेऽपशव्या तनूः पशव्यां ते तां करोमि स्वाहा ॥' इति त्रिभिः ॥**

(१)* 'आकूत्यै त्वा' इत्यादिभिर्मन्त्रैराज्यं हुत्वा हुत्वा कन्यायाः मूर्धनि संपातान् हुताज्यशेषबिन्दून्

* चिन्त्यमिदं विधानम्, 'हिंसार्थानाम्' इत्याकारकस्य अन्याकारकस्य वा हिंसार्थकधातूनां कर्मणि षष्ठीविधायकस्य सूत्रादेरस्माभिरनुपलम्भात् । बाधतेर्हिंसार्थत्वाभावशङ्का तु धातूनामनेकार्थत्वमाश्रित्य यथाकथंचित् समाधेया । 'शेषत्वविवक्षया षष्ठी' इति तु सुवचम् ।

* अत्रेदमवधेयम्— देवपालभाष्यपुस्तके देवपालभाष्यमनुसृत्य 'आकूत्या इति त्रिभिस्त्वान्तैः' इत्यारभ्य 'संपातानवनयेत्' इत्यन्तमेकं सूत्रं मुद्रितम् । तेन 'आकूत्यै त्वा' इत्यादिष्वष्टादशस्वाहुतिषु प्रत्याहुत्यन्ते संपातावनयनं संपद्यते । 'या ते पतिघ्नी' इति सूत्रेऽपि 'हुत्वा हुत्वा' इत्यादिसूत्रांशस्यानुषङ्गो देवपालाभिमतः । तेन तैर्मन्त्रैस्तिस्र आहुतयः प्रत्याहुति तूष्णीं संपातावनयनं च संपद्यते ।

अवनयेत् स्रावयेत् । 'या ते' इत्यादिभिश्च त्रिभिर्मन्त्रैर्हुत्वा हुत्वा कन्याया मूर्ध्नि संपातानवनयेदित्यनुषङ्गेण समाप्तिः । मन्त्रत्रयार्थस्तु– हे कन्ये, या ते तव पतिघ्नी तनूस्तामपतिघ्नीं करोमि अनेन संपातावनयेन, तथा तव या अपुत्रिया पुत्रेभ्योऽहिता तनूस्तां पुत्रेभ्यो हितां पुत्रियां करोमि, या च अपशव्या पशुभ्योऽहिता तनूस्तां पशव्यां पशुभ्यो हितां करोमि । अत्रावसरे पूर्वनिदर्शितविधानेनाक्षतसक्तून् जुहुयात् । देव.

( २ ) तासाम् 'अग्न आयूंषि' इत्यग्नौ हुत्वा 'या ते पतिघ्नी' इत्याहुतिशेषं मूर्धन्यवनयेत् । 'अग्निर्ऋषिः' इत्यग्नौ हुत्वा 'या तेऽपुत्रिया' इति मूर्ध्नि । 'अग्ने पवस्व' इत्यग्नौ हुत्वा 'या तेऽपशव्या' इति मूर्धनि संपातानवनयेत् । प्राक् पाणिग्रहणात् 'अग्निना रयिम्' 'प्रजापते न हि त्वत्' इत्यक्षतसक्तुयागः ।

ब्राह्म.

( ३ ) पावमानीः( ? न्या प्रथमं ) हुत्वा 'या ते पतिघ्नी' इत्यवनयनम् । द्वितीयं हुत्वा ( 'या तेऽपुत्रिया तनूः' इति । तृतीयं हुत्वा ) 'या तेऽपशव्या तनूः' इति । केचिदेतैरेव होममेतैरेवावनयनं कुर्वन्ति, स्वाहापाठात्तत्र । नैषा सूत्रकारस्य शैली यत्पूर्वं विनियोगः पश्चान्मन्त्रविधानम् । तस्माद्यथाऽस्माभिर्व्याख्यातं तथा साधीयः । तत्र चाक्षतसक्तुहोमः । आवि.

### पाणिग्रहणम्

**उदगग्नेर्दर्भेषु प्राचीमवस्थाप्य शुचिः पुरस्तात् प्रत्यङ्ङुपयन्ता 'देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णामि' इति हस्तं गृह्णाति दक्षिणमुत्तानं साङ्गुष्ठं नीचाऽरिक्तमरिक्तेनैवं सव्यं सव्येन ॥**

अस्मिन्पक्षे 'हुत्वा हुत्वा' इत्यादौ श्रुते वाक्ये होममनूद्य संपातावनयनमात्रं विधेयम्, अनुषङ्गवाक्ये च होमविशिष्टमवनयनं विधेयम् । ब्राह्मणवलादित्यदर्शनवृत्त्योस्तु 'हुत्वा हुत्वा' इत्यनेन 'अग्न आयूंषि' इत्यादीस्तिस्र एवाऽऽहुतीरनूद्य प्रत्येकं तासामेवान्ते 'या ते पतिघ्नी' इत्यादिभिस्त्रिभिर्मन्त्रैर्यथासंख्यं संपातावनयनं विधेयमित्यर्थः स्पष्ट एव ।

( १ ) पाणिग्रहणमाह–उदगिति । अग्नेरुदीच्यां दिशि दर्भास्तीर्णे देशे प्राङ्मुखीं कन्यामवस्थाप्य गुरुः 'देवस्य ते' इत्यादिना मन्त्रेण कन्यायाः संबन्धिनं हस्तं ग्राहयतीत्यध्याहर्तव्यं समानकर्तृकत्वार्थम् । केन प्रयुज्य ग्राहयति ? इत्यपेक्षायामर्थाद्वरेणोपयन्त्रेति योज्यम् । स चोपयन्ता गुरुणाऽनुज्ञातस्तं गृह्णाति । कीदृशो वोढा गृह्णाति ? शुचिः करग्रहणेऽधिकृतः धर्मोपयोगिनी ममेयमिति शुद्धसंकल्पः, प्रत्यङ्मुखः कन्यायाः पुरस्तादग्रे स्थितः सन् । 'प्राङ्मुखः सर्वकर्माणि कुर्वीत' इत्यस्यापवादार्थं प्रत्यङ्मुख इति । दक्षिणं लोकप्रसिद्धम् । साङ्गुष्ठमङ्गुष्ठसहितम् । उत्तानं नीचा दक्षिणेन । नितान्तमञ्चति चेष्टासु प्रगल्भते न्यक् दक्षिणः, तेन । यथोक्तं धनुर्वेदे 'पूर्वं वामेन शिक्षेत पूर्वसिद्धो हि दक्षिणः ।' इति । न्यञ्चतीति न्यक्, तेन नीचा न्यग्भूतेनेत्यावृत्त्या योज्यम् । अरिक्तं साभरणम्, असंभवे सुवर्णकर्णिकादियुक्तम्, अतिदौर्गत्ये पुष्पफलादिसहितम् । अरिक्तेनेति तद्वत् । एवं सव्येन सव्यमिति समस्तस्य मन्त्रादेरतिदेशः । हे कन्ये, ते तव अहं हस्तं गृह्णामि देवस्य अन्तरात्मनः सवितुः वैदिककर्माणि चिकीर्षोः प्रसवे अनुज्ञायां वर्तमानः, आदित्यस्य वा सवितुः प्रसवेऽनुज्ञायां वर्तमानः, अश्विनोर्बाहुभ्याम्, न त्वात्मीयाभ्यां चर्ममयाभ्याम्, पूष्णो हस्ताभ्यां गृह्णामि । देव.

( २ ) तत उदगग्नेर्दर्भानास्तीर्य तेषु प्राङ्मुखीं वधूमवस्थाप्य तस्या वरः प्रत्यङ्मुखस्तिष्ठन्नेव हस्तौ गृह्णाति 'देवस्य त्वा' इति यथोक्तं सावित्रेण । सव्यं च गृहीत्वा । ब्राह्म.

( ३ ) प्राचीमवस्थाप्य कन्यां प्राङ्मुखीमित्यर्थः । तस्याः पुरस्तात् प्रत्यङ्मुख उपयन्ता वरः । उपयच्छतीत्युपयन्ता वोढा । शुचिः समाहितमनाः । 'देवस्य त्वा' इति कन्यायाः पाणिं गृह्णाति । तं विशिनष्टि –दक्षिणमुत्तानमङ्गुष्ठसहितम्, अरिक्तं साभरणम् । दक्षिणेन हस्तेन । किंभूतेन ? नीचा न्यग्भूतेन अरिक्तेन च । एवं सव्यं सव्येन । अनेनैव मन्त्रेणोत्तानं साङ्गुष्ठमरिक्तम् । आवि.

**'गृभ्णामि' इति चतस्रो वरं वाचयति । 'गृभ्णामि ते सुप्रजास्त्वाय हस्तौ मया पत्या जरदष्टिर्यथाऽसः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशति विश्रयाते यस्यामुशन्तः प्रहराम शेपम् ॥ सोमो ददद्गन्धर्वाय गन्धर्वो दददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयोऽहं मनुष्यजः ॥' इति ॥**

(१) (* 'गृह्णामि' इति चतस्रस्त्रिष्टुभावनुष्टुभौ जपति ।) सूर्याया आर्षम् । मान्त्रवर्णिकी देवता । हे पत्नि, अहं ते तव हस्तौ गृह्णामि । किमर्थम् ? सुप्रजास्त्वाय लोकयपुत्रसिद्धये । त्वं च मया पत्या भर्त्रा सता जरदष्टिर्यथा असः भवसि, तथा भूयाः जराजर्जरितदेहा भूयाः, असमये भर्त्रत्याः प्रमयो मा भूदित्यर्थः । अमुत्र पक्षे जरया दृष्टिः उपक्षयः यस्या सा जरदष्टिः । त्वा त्वां भगादयश्चत्वारो देवा अदुः दत्तवन्तः गार्हपत्याय गार्हपत्यार्थम् ।

हे पूषन् आदित्य, अस्याः प्रियायास्तां शिवतमां मतिम् आ ईरयस्व प्रेरयस्व तनुं वा । यस्यां सत्यामधिकरणभूतायां बीजं रेतः मनुष्या वपन्ति क्षिपन्ति । या नः अस्मान् उशती कामयमाना सती ऊरू विश्रयाते विविधं कृत्वा श्रयाते समर्पयति विततयति वाऽऽत्मीयावूरू । वयमपि यस्यामुशन्तः कामयमानाः सन्तः प्रहराम प्रक्षिपाम शेपं प्रजननम्, अन्योन्यमावयोः प्रीतिरस्त्वित्यर्थः । तथा ह्ययमुपकारो भवति— 'संप्रीतिर्यत्र दम्पत्योस्त्रिवर्गस्तत्र वर्धते ।'।

इयं कन्या पूर्वं सोमस्य संबन्धिन्यासीत् । स सोमो भुक्त्वेमां गन्धर्वायाददत् ददौ, गन्धर्वोऽग्नये । अग्निर्मह्यं संप्रति ददातु । न केवलमिमाम्, यावता रयिं धनं पुत्रांश्चाग्निर्मह्यं ददातु, अग्निरिमां कन्यां मह्यं दत्वा पुत्रधनसमृद्धां करोत्वित्यर्थः । एतमेवार्थं चतुर्थ्यर्चा प्रपञ्चयति ।

हे कन्ये, त्वां सोमः प्रथमो विविदे पतिस्तव बभूव प्रथमः । तत उत्तरो द्वितीयः गन्धर्वो विविदे । तृतीयोऽग्निस्ते पतिस्तव पतिर्बभूव । तुरीयः चतुर्थः अहं मनुष्यजः मानुष्यः संप्रति भवामि । देव.

(२) 'गृभ्णामि' इत्याद्याश्चतस्रो जपति । ब्राह्म.

(३) ततो जपति 'गृह्णामि' इति चतस्रः ।

आवि.

**ततो गाथा वाचयति 'सरस्वति प्रेदमव' इत्यनुवाकम् । उभावित्येके ॥**

(१) गीयन्ते इति गाथाः विशिष्टा एव ऋचः । अत एव कास्ता इत्यपेक्षायां 'सरस्वति प्रेदमव' इत्यनुवाकमाह । अत्रानुवाके याः स्थितास्ता एवेत्यर्थः । ह्यन्तरस्वरयुक्तासु च कासुचिदृक्षु गाथाशब्दो रूढः । यथोक्तम्— 'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै गाथिक उच्यते ॥' इति । अयं समुदायार्थः— ततः अनन्तरं सरस्वतीत्यनुवाकपरिच्छिन्ना गाथा गुरुः वरं वाचयति भाणयति । एके पुनर्मन्यन्ते— उभावपि कन्यावरौ गाथा गुरुर्वाचयति । किं सर्वदा ? नेत्याह— यदि पृथक्तन्त्रमिति । अत्रायमभिप्रायः — विवाहोद्वाहौ हि भिन्ने कर्मणी । कन्यासंस्कारो विवाहः । वरसंस्कार उद्वाहः । तत्र यदि देशकालकर्त्रैक्यात्तन्त्रेणेतिकर्तव्यता, तदा सकृत् एकं वरमेव भाणयति गाथाः स्वाध्यायिको गुरुः, यदि तु देशकालैक्येऽपि कन्यावरयोरेवाधिकृतत्वादृत्विजो दक्षिणया क्रीतत्वात् कर्तृभेदात्तन्त्रभेदस्तदोभावपि वाचयितव्यौ इति ।

'सरस्वति प्रेदमव सुभगे वाजिनीवति । यां त्वा विश्वस्य भूतस्य प्रागायाम्यस्याग्रतः ॥' — अत्रानुवाके ब्रह्मण आर्षम् । अनुष्टुप् छन्दः । गन्धर्वाप्सरोराजर्षिप्रभृतीनां चरितं ह्यन्तरेण स्वरेण याभिर्गीयते, ता गाथा

---

* कंसस्थितो ग्रन्थो देवपालभाष्यपुस्तके प्रकृतसूत्रस्थाने सूत्रत्वेन मुद्रितः । वस्तुतोऽयं भाष्यग्रन्थ एव, सूत्रं तुच्छिन्नमिति भाति ।

इत्युक्तम् । इह च सर्ववाक् सरस्वती, तद्रूपेण च वधूरुपचर्यते, मनोमेघप्रभृतिश्च गन्धर्वः, तद्रूपो वरः स्तुत्यर्थमुच्यते । सरस्वतीति । प्रेत्युपसर्गोऽवेत्याख्यातेन संबध्यते । हे सरस्वति, सा त्वमिदं कर्म प्राव, 'अव रक्षणे', गोपाय । सुभगे सर्वहितकारिणि । वाजिनीवति, वाजिन्यः फलपाकान्ता ओषधयः, तद्वति । स्तनयित्नुवाग्रूपा सरस्वती वृष्ट्यादिद्वारेण । सा का ? यां त्वामहं प्रागायामि शब्दयामि स्तौमि । कीदृशीम् ? अस्य विश्वस्य सर्वस्य भूतस्योत्पन्नस्य सर्गादावग्रे स्थिताम्, शब्दब्रह्मविवर्तत्वात् सर्वस्य, सरस्वत्याश्च शब्दरूपत्वात् ।

'याऽग्रे सर्वे समभवद्यस्यां विश्वमिदं जगत् । तामद्य वाचं गास्यामि या स्त्रीणामुत्तमं मनः ॥' — तां चाद्य अस्मिन्नहनि सरस्वतीं वाचं गास्यामि शब्दयिष्यामि । या स्त्रीणामुत्तमं मनः मानसं प्रकाशनम्, प्रकाशात्मिका हि वाक्, प्रकाशरूपं च हृदयं चेतः । या च अग्रे प्रथमं सर्गादौ समभवत् सर्वम्, विवर्तरूपा बभूव । यस्यां चेदं वर्तमानं विश्वं सर्वं जगदाश्रितम् ।

'य इह पूर्वे जना आसन् पूर्वे पूर्वतरेभ्यः । मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा देवेभ्य आतपत् ॥' — य इह पूर्वे जनाः, य इह जगति पूर्वे जना अभूवन्, तत्पूर्वतरेभ्योऽपि च पूर्वे, तेभ्योऽपि पुरा गन्धर्वो मूर्धन्वान्नाम्नाऽऽसीत् । किं बहुना ? देवेभ्योऽपि यः पुरा आतपत् प्रकाशितवान्, ब्रह्मरूप इत्यर्थः । गां सरस्वतीं धारयति वृणोति च गन्धर्वः । सरस्वती वागात्मिकेयमधिगीयमाना कन्या, प्रजापतिरूपो गन्धर्वो वर इति प्ररोचनार्थः ।

'य एति सर्वतः प्राग्भ्यो दिशोऽधिपवमानः । मूर्धन्वांस्तेभ्यो० ॥' — यो वायुरूपः सन् सर्वत एति आगच्छति अधिपवमानः आधिक्येन पवित्रीकुर्वन् । अतश्च प्रागादिभ्यो दिग्भ्यः आगच्छन्तः प्राच्यादिदेशभेदेन व्यपदेशभेदभिन्ना वायवो भवन्ति, तेभ्योऽपि देवेभ्यो वायुभ्यः पुरा पूर्वं मूर्धन्वानेव गन्धर्वः आतपत् । 'य एति सर्वतः प्राग्भ्यो दिशः' इति पञ्चम्याः स्थाने व्यत्ययेन प्रथमा । केचित् प्राग्भ्यो दिश इति पठन्ति, तत्र छान्दसो वर्णव्यत्ययः । पुराणतरच्छान्दसास्तु पठन्ति— 'प्राग्वादिभ्योऽधिपवमानः' इति । अर्थं च व्याचक्षते— प्राक् प्रथमं वाति वायते वा गच्छति प्राग्वा, सर्वाभ्यः सर्वतो दिग्भ्यः पवमान एतीति । 'विच्छिन्नसंप्रदायेषु शताध्ययनवर्तिषु । मन्त्रेष्वपौरुषेयेषु यथेच्छं परिकल्पनात् ॥ पाठानां गत्यभावेन यथादृष्टि प्रदर्शनम् । क्रियमाणं सतामग्र्यैर्नोपालभ्यं कथंचन ॥' ।

'स भगवो न मरिष्यस्यहं चेदस्मि भेषजम् । मूर्धन्वांस्तेभ्यो० ॥' — यः पूर्वोत्पन्नः सन् जीवात्मना सह प्राणाख्यो वायुः, हे भगवः भगवन् जीव, स त्वं मरणधर्माऽपि न मरिष्यसि यावदहमस्मि भवामि भेषजं तिष्ठामि इन्द्रियैः सह । तेभ्योऽपि देवेभ्यो द्योतनादिधर्मकेभ्यः प्राणेन्द्रियेभ्यः पुरा मूर्धन्वान् गन्धर्व आतपत् ।

'हिरण्यवर्णो वैरम्पः स त्वा मन्मनसं करोतु । यद्राजा याति समितिं समुद्रमिव सौभ्रवः ॥' — स प्रकृतो गन्धर्वः प्रजापतिः हे वधु, त्वां मन्मनसं करोतु इति वर आशास्ते, मदेकचित्तां पतिव्रतां करोत्वित्यर्थः । कीदृशः सः ? हिरण्यवर्णः भास्वरप्रकाशैकरूपः । वैरम्पः वीरस्य योगिनो मोहवैचित्र्यमोहनसमर्थस्य कर्म वैरम्, तत् पाति रक्षतीति वैरम्पः । यत् यः सौभ्रवः शोभनभ्रूमध्यसंयमात् प्रतीतो योगिनाम्, राजा राजमानः, समितिं संग्राममिव समुद्रमिमं संसारदुःखभारं याति तारयतीत्यर्थः ।

'न वातस्याभि वायते नोद्वातस्याभि धीयते । न वातस्या( ? स्य ) धुरं वहतो नोद्वातस्यापमीयते ॥' —वातस्याभि अग्रे न अन्येन केनापि देवेन वायते गम्यते । नोद्वातस्याभि धीयते न च वातस्याभिमुखेन केनापि धीयते आगन्तुं मन्यते । वातस्य धुरं वहतः पृथिव्यादिकं धारयतो विमानादिकं च प्रेरयतो नान्येन केनाप्यपमीयते सह गम्यते माहात्म्यमाचर्यते । उदिति निपातः सहार्थे । पुनः पुनर्वातशब्दोदीरणमतिशयार्थम्, अहो रमणीया अहो रमणीयेत्यादिवत् । केचित्तु पठन्ति— 'नेद्वातस्याद्ध धीयते' । न इत् वातस्य आत्

ह धीयते । उकारो वर्णागमः । ह्शब्द इतिहासे । अन्येनाधीयते सहायेनाऽऽगम्यते ।

'आ सत्यहरितो रथः सौभ्रवः सुहिरण्ययः । तं वात इद्भ्रजीयत्युद्वातो दृढया धुरा ॥' – आ इत्युपसर्गो भ्रजीयतीत्यनेनाऽऽख्यातेन संबध्यते । सत्यः सत्यप्रधानो हरितो हरितवर्ण आदित्यरथः । अथवा सत्यप्रधानाश्च ते हरयोऽश्वास्ते विद्यन्ते यस्य स सत्यहरित इति मत्वर्थीयस्तकारः । सौभ्रवः भ्रूसंयमेन तीक्ष्णदृष्टिभिरपि द्रष्टुमशक्यः । हिरण्ययः हिरण्मयः तैजसः । तमुद्वातः ऊर्ध्वगतिर्वातः आभ्रजीयति आभ्रजयति गमयतीति विवर्तस्य प्रजापतिरूपस्य वायोर्माहात्म्यवर्णनम् । कया आभ्रजीयति उद्वातः ? दृढया धुरा, ऊर्ध्वं उत्कृष्टो वात एव दृढा धूस्तया ।

'तवैव राजन् दुन्दुभयस्तव दुन्दुभिरानकः । तव वातोद्वाता अश्वौ तव चैत्ररथं वनम् ॥' – मूर्धन्वान् गन्धर्व उच्यते । हे मूर्धन्वन् राजन्, तवैव दुन्दुभयो जयोद्घोषणा वाद्यविशेषाः उत्कृष्टा वा शब्दादयः प्रकाशनपराः, तथा आनकः पटहाख्योऽपि दुन्दुभिविशेषः तवैव । वातस्तिर्यग्गतिः पवनः, उद्वातः ऊर्ध्वगतिर्वातोऽधःपतनाद्वा, तथा अश्वौ । अथवा देहगतः प्राणो वायुरुद्वातः, अपानो वातः, तौ वातोद्वातौ प्राणापानौ शरीरस्य रथस्य अश्वाविव सर्वप्राणिनाम् । चैत्ररथाख्यं वनं देवोद्यानं तवैव । सर्वविभवास्त्वत्स्वामिका इत्यर्थः ।

'ते शुक्रं शक्रस्याविन्दन् पराञ्चं निहितं गुहा । मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा जत्रुभ्य आतृदः ॥' – ते देवा वाय्वादयः शक्रस्य शक्तस्य सर्वकारणस्य प्रजापतेः शुक्रं सारम् अविन्दन् ज्ञातवन्तः । पराञ्चं परोक्षं गुहायां हृदये विदुषां निहितम् । अविद्याभेदप्रपञ्चो वा गुहा । यद्वा, शक्रस्य इन्द्रस्य शुक्रं प्रजननमुदकलक्षणं गुहायां रश्मिसंघाते निहितं परोक्षं ज्ञातवन्तः ते देवाः । तेभ्यो देवेभ्यः पुरा पूर्वं मूर्धन्वान् गन्धर्वोऽविन्दत् । किमवधि ज्ञातवान् ? जत्रुभ्य आतृदः आजत्रुभ्य आतृदः । जत्रूणि संश्लेषणानि सर्वाधिकरणानि । 'सृपितृदोः कसुन्' (पासू. ३।४।१७), तृदः तर्दनं विनाशः । आसृष्टेराप्रलयात् यदुत्पादनपालनप्रलयसंपादनसामर्थ्यं तन्मूर्धन्वानविन्दत् सकलमिच्छातः ।

'हिरण्यवर्णं सुभृतं शोभमानं कन्याया हस्तं परिगृह्य पुण्यम् । सा पुत्रकामा सुभगाय भर्त्रे भव वशीयान् गिरिवत् स्थिराय ॥' – एष कश्मीरेष्वेव संप्रति पठ्यते । वर आशास्ते– कन्याया हस्तं गृहीत्वा अहं वशीयान् भव भूयासम् । भवेति व्यत्ययेन मध्यमपुरुषः । अथवा अन्तरात्माऽभिधीयते– कन्याया हस्तं गृहीत्वा हे अन्तरात्मन्, वशीयान् भव गिरिवत् स्थिराय पर्वतवत् स्थैर्याय । हे वधु, त्वमपि या मयोह्यसे सा भर्त्रे भर्त्रर्थे पुत्रकामा भव । कामनं कामः, पुत्रार्थ एव कामः रतिः यस्याः सा पुत्रकामा । किमर्थम्? सुभगाय सौभाग्याय । पुत्रवती हि सती लोके श्लाघ्या भवति, न तु रत्येकफला । भर्तृविशेषणं वा सुभगायेति । हस्तं विशिनष्टि– हिरण्यवर्णं सुवर्णकान्तिम्, सुभृतं कङ्कणाद्याभरणैः सुपूर्णम्, अत एव शोभमानम्, मन्त्रवत्परिग्रहात् पुण्यं पवित्रम् ।

'वैरम्पे मुनिपर्वते गिरौ हरितसंकाशे । संकल्परमणेऽमरावुभौ सुमनसौ चरावः ॥' – वर आह– हे वधु, वैरम्पाख्ये मुनिजनसेविते हरितसंकाशे सुवर्णमये मेराविति यावत् । संकल्पमात्रेण सर्वाभिलषितसत्फलप्राप्तिर्यत्र तत्र संकल्परमणे । अमरौ अमरणधर्मकौ देवौ भूत्वा उभावपि सुमनसौ प्रसन्नचित्तौ चरावः संचरिष्यावः पुरुषायुषे पूर्णे ।

'आणी व रथवेष्टसि वने वारिवर्षण्ये । अप्सराः सूर्यवर्चसिनी वशिनी मन्मना भूयाः ॥' – आणी रथकाष्ठिका । हे वधु, त्वम् आणी व रथवेष्टसि रथव्यापिनी यथा रथाव्यभिचारिणी, तथा मयि भूयाः पवित्रा । वशब्द उपमायाम् । तथा वने वारिवर्षण्ये विद्युल्लता यथा अव्यभिचारिणी मेघं वनं विना न दृश्यते, तथा त्वं मयि भूयाः । वारि वर्षत् पतत् नयति अनुमापयतीति वारिवर्षण्या तडित् । अप्सराश्च सेत्याहुः । तथा सूर्यवर्चसिनी तेजस्विनी भूयाः । वशिनी च ईशाना मन्मनाश्च मयि दत्तचित्ता पतिव्रता भूया इत्यर्थः ।

'याऽसा उपरि तिष्ठति वने वारिवर्षण्ये। वसुगा सूर्यवर्चसिनी वशिनी मन्मना भूयाः॥'—अथवा याऽसौ तडिद्रूपधारिणी अप्सरा उपरि तिष्ठति, सैवेह त्वं रूपान्तरेणावतीर्णा अहं च मेघो वारिवर्षण्यः। अतश्च त्वं मयि दत्तचित्ता भूया इति समानं पूर्वेण। वसुगा धनवतीति विशेषः।

'अश्वत्थक उपरि श्येनो रमणीयतरो नाम। तस्मिन् ह रम्भा रमते शक्र इव परितक्म्यायाम्॥'—प्रशस्तो वटवृक्षोऽश्वत्थकः, तत्रोपरि श्येनः शंसनीयः रमणीयतरो नाम गन्धर्व आस्ते। तस्मिन्नप्सरा रम्भा नाम रमते क्रीडते। शक्र आदित्यः, स यथा परितक्म्यायां रात्रौ विश्राम्यति।

'आस्यन्दमाना सुभगे निर्गिरिभ्यः सरस्वति। मातेव दुहितृभ्यः कुल्याभ्यो विभजा वसु॥'—सरस्वतीं नदीं वाचं वा मध्यमामभ्यर्थयते—हे सरस्वति सुभगे, निर्गता गिरिभ्यः, स्यन्दमाना स्रवन्ती, कुल्याभ्यः अन्यनदीभ्यः वसु जलमाभज विभज मातेव दुहितृभ्यः। यथा माता दुहितृभ्यो धनं पैतृकं विभजते, तद्वत्। मध्यमवाक्पक्षे गिरयो देहाः, कुल्या गलबिलानि।

इदानीं 'वाग्वा अनुष्टुप् वाक्सरस्वती' इति श्रुत्याऽनुष्टुभः सरस्वतीरूपत्वप्रतिपादनादनुष्टुप्छन्दोरूपेण स्तोतुमाह—'मध्यं तच्छन्दस आहुर्यत्राऽऽदधुर्नाम परेति देवाः। अरुणपिशङ्गोऽश्वोऽस्य दक्षिणा यस्तद्वेद स इहाऽऽगन्तुमर्हति॥'—छन्दस इति व्यत्ययेनैकवचनम्। छन्दसां देवानामसुराणां च तदनुष्टुप्छन्दो मध्यं मध्यवर्ति देवा ऋत्विज आहुर्वदन्ति। यत्र छन्दसि परेति परागच्छति देवासुरच्छन्दसां मध्यमनुसरति अनुष्टुबित्यन( ? त्यन्व )र्थकं नाम देवा आदधुः विहितवन्तः। अत्रान्तरा मध्येऽनुष्टुप् व्यवस्थिता। तानि षोडशिनि ग्रहे विनियुक्तानि। तत्र च षोडशिनि ग्रहे अरुणपिशङ्गोऽश्वोऽस्य दक्षिणा मता। सा चेतरच्छन्दोमध्ये व्यवस्थितस्य राजप्रख्यस्यास्यैव छन्दसोऽनुष्टुब्लक्षणस्य भवतीति संभाव्यते। अत एवंभूतं तदनुष्टुप्छन्दो यो वेद वेत्ति, स इह पाणिग्रहणस्थान आगन्तुमर्हति ऋत्विग्जन्यप्रभृतिः, नातद्वित्। देवासुरच्छन्दसां तु मध्यवर्तित्वमनुष्टुभ इत्थम्—'गायत्र्युष्णिगनुष्टुभो बृहती-पङ्क्तित्रिष्टुभः। जगती चेति विज्ञेयाश्छन्दसां सप्त जातयः॥' तत्रैकैकाक्षरवृद्ध्या दैवान्येकाक्षरादीनि सप्ताक्षरान्तानि सप्त छन्दांसि भवन्ति। दैवी एकाक्षरा गायत्री। द्व्यक्षरा उष्णिक्। त्र्यक्षराऽनुष्टुप्। एवमादिक्रमेण दैवी जगती सप्ताक्षरा, आसुरी तु पञ्चदशाक्षरा। एकैकाक्षरहान्या च प्रातिलोम्येनान्यान्यासुराणि छन्दांसि भवन्ति। तत्र नवाक्षरा गायत्री भवति। एवं चैकाक्षरादारभ्य सप्तमाक्षरपर्यन्तान्यानुलोम्येन दैवानि छन्दांसि स्थितानि, पञ्चदशाक्षरादारभ्य प्रातिलोम्येन नवममक्षरं यावदासुराणि। अष्टमं त्वक्षरं वर्गद्वयस्य मध्ये भवति। तेनेयमष्टाक्षराऽनुष्टुप् मध्ये भवतीत्यलमतिवैतत्येन।

'इषीकवर्णे लेखभ्रूः सुभगे सुस्मिते। मूर्धन्वांस्त्वा गन्धर्वो मामभिनियच्छतु॥'—इषीकं शरकाण्डम्, सुवर्णमित्येके। हे सुवर्णवर्णे शरकाण्डगौराकारे वा, हे लेखभ्रूः, अञ्जनलेखावद्भ्रूवौ यस्याः सा संबोध्यते। हे सुभगे प्रियदर्शने, सुस्मिते चारुहासिनि, त्वां मूर्धन्वान् गन्धर्वो मामभि मां प्रति नियच्छतु नियतां मदेकाधीनां करोतु। स हि कन्यास्वामीत्युक्तम्।

'उभये त्वा देवगन्धर्वाः सध्र्यञ्चो विह्वयामहे। तेषां यतरान् कामयसे तानभ्येहि सरस्वति॥'—सोमक्रयिणी वाक् सरस्वतीत्युच्यते। हे सरस्वति, देवा गन्धर्वाश्चोभये सध्र्यञ्चः सहाञ्चमानाः सह भूत्वा त्वां विह्वयामहे तव विविधमाह्वानं कुर्मः। तेषामुभयेषां मध्ये यतरान् कामयसे देवान् गन्धर्वान् वा, तानभ्येहि आभिमुख्येन गच्छ।

'अभ्यावर्तेऽहं देवान् गायतः कामयामहे। गायन्तं स्त्रियः कामयन्ते न तथा ब्रह्मवादिनम्॥'—सरस्वत्याह—गायतो देवानेवाहमभ्यावर्ते आभिमुख्येन वर्ते, न तु वेदं पठतः सुरान्। यतोऽहं गायत एव कामयामहे। कामये इति वचनव्यत्ययः। तथाहि—गायन्तमेव हि स्त्रियः कामयन्ते, न तु ब्रह्मवादिनं वेदानां पाठकम्।

'या सा उपरि पर्वत आत्मना रममाणेव। क्षौम-मृद्वी ह वा असि त्वोत ओजसि शृणोमि॥'—या उपरि पर्वते गिरौ मेघे वा विद्युद्रूपेण मध्यमवाग्रूपेण वा आत्मना स्वेन रूपेण रममाणेव क्रीडन्तीव तिष्ठति सरस्वती, सा हे वधु, असि भवसि त्वम्, नास्ति नः संशयः। कीदृशी? क्षौममृद्वी दुकूल-वत्कोमला जलवृष्टिदानेनार्थाभिधानेन वा। ह वै इति निपातौ पादपूरणौ। एवं च सति वधूं वदति वरः—यतस्त्वं सरस्वती, तेन त्वया ऊतो रक्षितः सन्नहमोजसि सति शृणोमि आकर्णयामि सकलं कर्तव्यं श्रुतिस्मृति-विहितं कर्तव्यतया व्यवस्यामि सहधर्मचारिण्यास्तव लाभबलेनेत्यर्थः। केचित्तु शृणोत्विति पठन्ति। तत्रा-प्ययं मदात्मा शृणोत्वित्यर्थः। इति सारस्वतानुवाक-विवृतिः। 'ततो गाथा वाचयति सरस्वति प्रेदमवेत्यनु-वाकमुभाविल्येके यदि पृथक्तन्त्रम्' इति विवृतमियता। 'यदि पृथक्तन्त्रम्' इत्युत्तरसूत्रेणापि संबध्यते।

देव.

(२) तत ऋत्विक् 'सरस्वति प्रेदमव' इत्यनुवाकं गाथा वरं वाचयति। वधूवरौ इत्येके। ब्राह्म.

(३) ततो गाथा वाचयति ऋत्विक्। वरो वक्ति। गाथाग्रहणात्(?णम्) द्यन्तरस्वरप्रापणार्थम्। उभौ दम्पती वाचयतीत्येके। आवि.

विवाहोद्वाहयोस्तन्त्रप्रयोगपृथक्प्रयोगयोर्विशेषविषयः

**यदि पृथक्तन्त्रं प्रदक्षिणमग्निमानीय तत्रै-वोपवेश्य संस्थापयेत्॥**

(१) पृथक्तन्त्रपक्षेऽग्निप्रदक्षिणं कृत्वा वधूवरा-वानीय पुनस्तत्रैवोपवेश्य यत्र पाणिग्रहणं वृत्तम्, संस्था-पयेत् समापयेत् ऋतुतिथ्यादिकं भविष्यत्तन्त्रमुद्वाहसंबन्धि-तया, ततो विवाहसंबन्धितया भूय उद्वाहनतन्त्रं सकलं पूर्वं प्रदर्शितं विवाहसंबन्धितयोपक्रम्य वक्ष्यमाणं कुर्या-दित्यर्थः। देव.

(२) यद्युद्वाहविवाहयोः पृथक्तन्त्रं सरस्वतीवाचना-दनन्तरं वधूवरौ प्रदक्षिणमग्निमानीय यत्र पाणिग्रहणं कृतं तत्रैवोपवेश्य ऋतुतिथियागादितन्त्रं समापयेत्। पुनः परिसमूहनपरिस्तरणाद्युपक्रम्य 'इदमर्यम्णे गन्ध-र्वाय त्र्यम्बकाय' इति लाजांस्तस्मिन्नेवाग्नौ संस्कृतां-श्चतुरञ्जलिप्रमाणान् कल्पयेत्। ब्राह्म.

(३) इह द्वे कर्मणी प्रकृते विवाहश्चोद्वाहश्च। तत्रैकदेशकालकर्तृत्वात् तन्त्रेणानुष्ठानमावृत्त्या वा। तदर्थ-माह— यदि पृथक्तन्त्रं विवाहोद्वाहयोर्वाचनादूर्ध्वं प्रद-क्षिणमानीय वरौ तावेवोपविश्य (? वधूवरौ तत्रैवोपवेश्य) यत्र पाणिग्रहणं कृतं तत्र, उद्वाहमृतुतिथ्यादि संस्था-पयेत् समापयेदित्यर्थः। पुनरुपक्रम्याऽऽज्यभागान्तं यावत्। तत्र लाजा हविः। आवि.

**एककर्मणि तन्त्र उत्तरेणाग्निं प्रत्येत्य ततो विवाहः॥**

(१) कर्मशब्दः प्रयोगवचनः। तन्त्रमितिकर्तव्यता विध्यन्तः। सकृदनुष्ठीयमानेतिकर्तव्यतोपकारपक्ष उत्तरेणाग्निं प्रत्येत्य प्रदक्षिणमकृत्वा एव उत्तरभागेन एव कति-पयक्रमान् गत्वा प्रत्यागत्य ततो विवाहः विवाहाङ्गतया वक्ष्यमाणानामृतुतिथ्यादीनां प्रयोगः। तन्त्रेण चोद्वाहो-पकारोक्तानां वक्ष्यमाणानां च आवृत्याऽनुष्ठानमित्यर्थः। एककर्मणि तन्त्रे विवाहोद्वाहलक्षण इत्यपि केचित् पद-योजनां कुर्वन्ति। देव.

(२) एककर्मणि तन्त्र एव प्रयोग इत्यर्थः। गाथा वाचयित्वा उत्तरेणाग्निं प्रदक्षिणमकृत्वैव प्रत्येत्य ततो विवाहो भवति। आवि.

***'य इमे द्यावापृथिवी' इत्यादय उद्वाहे होमा जयप्रभृतयश्च नैककर्मणि तन्त्रे स्विष्टकृ-दाज्यभागौ च॥**

---

* इदमत्रावधेयम्— पूर्वम् 'अग्नये जनिविदे' इत्यादयः 'अग्न आयूंषि' इत्यन्ता दश आहुतिसंघाता उपदिष्टाः। तत्र सप्तदशे सूत्रे 'हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचम्' इति संहिता-पठितमन्त्रक्रमाभिप्रायेण संख्ययाष्टावाहुतय उपदिष्टाः। अयमष्टम आहुतिसंघातः। अत्र तमिममष्टममाहुतिसंघातं विभज्य 'य इमे' इति पञ्चमाहुतिमारभ्य होमा अनूदिताः।

(१) एत एव तन्त्रावृत्ती स्पष्टार्थमेकेनैव सूत्रेण विवरीतुमाह— य इमे इति। उद्वाहे होमा ये जयप्रभृतयः, 'य इमे द्यावापृथिवी' इत्यादयश्च, तथा स्विष्टकृत्, तथा आज्यभागौ। एते सर्वे न एककर्मणि तन्त्रे आवृत्त्या कर्तव्याः (पृथक्तन्त्रे तु आवृत्त्या कर्तव्याः *) इत्यर्थाज्ज्ञायते। तेन श्रुत्यर्थानां विधिनिषेधलक्षणमर्थद्वयं यथासंभवमनेन निर्दर्शितम्। स्विष्टकृच्छब्दः उपरितनस्य तन्त्रखण्डस्योपलक्षणार्थः, आज्यभागशब्दोऽप्यधस्तनस्य। देव.

भाष्येषु 'इत्यादयः' इति शब्देन अष्टमसंघातीयपञ्चमाहुतिमारभ्य दशमसंघातान्ता होमाः, 'जयप्रभृतयः' इति शब्देन च प्रथमसंघातादयः अष्टमसंघातीयचतुर्थाहुत्यन्ता होमाः संगृहीताः। अत्रेयमाशङ्का समुद्भवति—यद्येवं सर्वे उद्वाहहोमा अस्मिन् सूत्रे संग्राह्यास्तर्हि 'उद्वाहे होमाः' इत्येतावतैवालम्, किमर्थं यथाश्रुतं गौरवमाश्रितम्? किमर्थं च क्रमः परिवर्तितः? इति। तत्रेयमस्माकं प्रतिपत्तिः— यद्यपि सर्वे उद्वाहहोमा अत्र संग्राह्यास्तथापि पृथक्तन्त्रे य उद्वाहहोमानां विवाहसंबन्धितयाऽऽवृत्तिविधिरार्थिकोऽत्र भाष्यकारैः सूत्रतात्पर्यविषयत्वेन प्रतिपादितस्तत्र क्रमविपर्ययविधित्सयैवोद्वाहहोमा द्विधा विभज्य विपरीतक्रमेणानूदिताः। तेन पृथक्तन्त्रे विवाहे अष्टमसंघातीयपञ्चमाहुत्यादिदशमसंघातान्तहोमोत्तरं प्रथमसंघातादयोऽष्टमसंघातीयचतुर्थाहुत्यन्ता होमा अनुष्ठेया इति विपरीतः क्रमः संपद्यते। भाष्येष्वप्ययं क्रम उक्तो दृश्यते। 'नात्र सूत्रोपालम्भः कर्तव्यः' इत्यादित्यदर्शनग्रन्थस्याप्ययमेवाभिप्रायः। पूर्वोक्ताशङ्कारूपः सूत्रोपालम्भो न कर्तव्यः, अपि तु सूत्रप्रामाण्यात् क्रम एव परिवर्तितव्य इति तदर्थः।

* कंससंगृहीतार्थको ग्रन्थ इहाऽऽवश्यक इति भाति। तदभावे 'अर्थाज्ज्ञायते' इति ग्रन्थो न संगच्छेत, प्रकृतसूत्रसंगृहीतकर्मणामकरणस्य शाब्दत्वात्, पृथक्तन्त्रे आवृत्तिविधेरार्थिकत्वानुक्तौ 'विधिनिषेधलक्षणमर्थद्वयम्' इत्यग्रिमग्रन्थस्यासंगत्यापत्तेश्च। एतद्भाष्यं प्राय आदित्यदर्शनविवरणमनुसरतीति तदप्यत्रोपोद्बलकम्।

(२) (पृथक्तन्त्रे) आज्यभागान्तं हुत्वा 'य इमे द्यावापृथिवी' इत्यादिसंपातावनयनान्तं जुहोति, ततः 'अग्नये जनिविदे' इत्यादि 'येन द्यौरुग्रा' इत्यन्तम्। ब्राह्म.

(३) इदानीमेकेनैव सूत्रेणैकतन्त्रपृथक्तन्त्रयोः स्वरूपं दर्शयति। 'य इमे द्यावापृथिवी' इत्येवमादयो य उद्वाहे होमा वृत्ताः संपातावनयनान्ताः जयप्रभृतयश्च 'अग्नये जनिविदे स्वाहा' इत्यादयो वावत् (? यावत्) 'येन द्यौरुग्रा' इत्यनेन क्रमेण सर्वं उद्वाहहोमा उक्ताः, ते न त्वेककर्मणि तन्त्रे भवन्ति। एककर्मणि निषेधं कुर्वन्नर्थात्पृथक्तन्त्रे विदधाति। तथा स्विष्टकृदाज्यभागौ च। स्विष्टकृच्छब्देनोपरितनं तन्त्रखण्डमुपलक्ष्यते, आज्यभागशब्देनाधस्तनम्। एकतन्त्रे सर्वमेतत् प्रतिषेधति। सकृत्कृतस्य पुनः करणायोगादिति भावः। पृथक्तन्त्रे पुनर्विदधाति। तच्च सुहृद्भूत्वा संकुलत्वा(त्) जयादीनां पुनर्दर्शनाद्तुतिथ्यादीनामावापस्यामावृत्त्या शङ्कया(? मावापस्याप्यावृत्त्याशङ्कया)। अक्षतसक्तूनामप्रत्यक्षत्वात् सर्वं पृथक्तन्त्रे त्रिदधाति। नात्र सूत्रोपालम्भः कर्तव्यः। तेन एकतन्त्रे (? पृथक्तन्त्रे) गाथा वाचयित्वा प्रदक्षिणमग्निमानीय तत्रैवोपविश्य- (? वेश्य) ऋतुतिथ्यादितन्त्रखण्डं समाप्य पुनरुपक्रम्य लाजान् संस्कृत्याऽऽज्यभागान्तं हुत्वा 'य इमे द्यावा-थिवी' इत्यादि यावत् 'हिरण्यगर्भः' इति चतस्रः। आवि.

मन्त्रवाचनम्, अश्मारोपणम्, लाजहोमः, स्विष्टकृद्धोमः, दक्षिणादानम्, हस्तयोक्त्रयोर्विमोचनम्

**पश्चादग्नेर्दर्भेषु 'सा त्वमसि' इति वाचयति। 'सा त्वस्यमोऽहममोऽहमस्मि सा त्वम्। ता एहि विवहावहै पुंसे पुत्राय कर्तवे। रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय॥' इति॥**

(१) एककर्मणि तन्त्रे उत्तरेणाग्निं प्रत्येत्य प्रत्यानीयाग्नेः पश्चाद्दर्भेषु त्रिनिहितचरणौ वधूवरौ कृत्वा 'सा त्वमसि' इति वरं गुरुर्वाचयति।

सा नाम ऋगासीत् अमो नाम साम, सा च अमश्च साम ऋक् च गीतिश्चेत्यर्थः । एवं सामशब्दस्य व्युत्पत्तिः । ऋक्सामरूपावावामिति विभज्य वरः प्रदर्शयति— हे वधु, त्वं सा ऋक् असि भवसि, अमोऽहमस्मि अहममः साम भवामि । सा त्वं सा त्वं भवसि, अमोऽहममोऽहं भवामीति द्विरुक्त्या ऋक्सामरूपत्वं द्रढयति । ता एहि विवहावहै तौ द्वावावां हे वधु, एहि आगच्छ विवहावहै विवाहं कुर्वः । किमर्थम् ? पुंसे पुत्राय कर्तवे । कर्तवे इति तुमर्थे भावे तवेन्प्रत्ययः, पुंसे पुत्रायेति सुब्व्यत्ययः, पुमांसं पुत्रं कर्तुम् । तथा रायो धनस्य पोषाय पुष्टये, सुप्रजास्त्वाय शोभनप्रजालाभाय, सुवीर्याय, सुवीर्यं कर्मस्वोजस्विता, तदर्थम् ।

देव.

( २ ) तत उत्तरेणाग्निं वधूवरावानीय पश्चादग्नेर्दर्भेषूपवेश्य 'सा त्वमसि' इति वरं वाचयति । ब्राह्म.

**अग्निमभिदक्षिणमानीय 'एह्यश्मानम्' इति वरं दक्षिणेन पदाऽश्मानमास्थापयति । 'एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम् ॥' इति । 'आतिष्ठेमम्' इति वधूम् । 'आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुवस्यवः सहस्व पृतन्यतः ॥' इति ॥**

( १ ) अग्निमभिदक्षिणं वधूवरावानीय, अग्नेरुत्तरभागेऽश्मानं स्थापयित्वा 'दक्षिणेन चरणेनाऽऽस्थापयति गुरुः प्रयोजकः, वधूवरावातिष्ठतः आक्रामतः । यथामन्त्रलिङ्गमाद्येन वरोऽश्मानमाक्रामति, उत्तरेण वधूः ।

गुरुस्त्वाशास्ते तयोर्मन्त्रेणेष्टम्— हे वर, अश्मानमातिष्ठ, अश्मवत् स्थिरो भव । किंच ते तव विश्वेदेवाः शरदः शतम् आयुः कृण्वन्तु कुर्वन्तु । हे वधु, इममश्मानमातिष्ठ, त्वं चाश्मवत् स्थिरा भव । तथा दुवस्यवः दुवस्यून् उपतापमिच्छतः शत्रून् प्रमृणीहि जहि । तथा पृतन्यतः पृतनां सेनामिच्छतो युयुत्समानान् सहस्व प्रसहस्व अभिभव । 'दक्षिणेन पदा' इत्युत्तरमन्त्रेऽप्यनुषज्यते ।

देव.

( २ ) ततोऽग्निं प्रदक्षिणमुभावानीय प्राङ्मुखाववस्थाप्य 'एह्यश्मानम्' इति वरं दक्षिणेन पदाऽश्मानमास्थापयति । 'आतिष्ठेमम्' इति दक्षिणेनैव वधूम् ।

ब्राह्म.

( ३ ) ततोऽग्निमभिदक्षिणमानीय वधूवरौ 'एह्यश्मानमातिष्ठ' इति दक्षिणेन पदाऽश्मानं ग्रावाणमास्थापयति । आक्रामयत्यृत्विग्वरम् । 'आतिष्ठेमम्' इति वधूम् । दक्षिणेन पदा इत्यनुवर्तते । मन्त्रवर्णात् व्यवस्था ।

आवि.

**आज्यस्याञ्जलावुपस्तीर्य 'इदं हविः' इत्यभिमृश्याथास्यै शमीलाजानावपति भ्राता ब्रह्मचारी वा ॥**

( १ ) आज्येनाञ्जलावुपस्तृणाति चतुरवदानेन । तत 'इदं हविः' इत्यादिना मन्त्रेण शूर्पस्थान् शमीपर्णमिश्राँल्लाजानभिमृशति वरः । अनन्तरमञ्जलावस्या वध्वा भ्राता, ब्रह्मचारी वा भ्रातुरसंनिधाने, शमीपर्णमिश्राँल्लाजानावपति ।

'इदं हविः प्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये । आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि । अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ॥' — कोकिलस्य राजपुत्रस्याऽऽर्षम् । अनुष्टुप् छन्दः । इदं लाजाख्यं हविः मे मम प्रजननं दशपुत्रसंपादनं भवतु, तथा सर्वगणं सर्वेषां गणैः पुत्रप्रभृतीनां पशूनां( च ) गणैर्युक्तं स्वस्तये अविनाशाय चास्तु । आत्मसनि आत्मानं शरीरम् आत्मीयत्वात् सनति, 'षणु दाने' इत्यस्माद्धातोः, ददाति प्रज्ञापयतीति आत्मसनि । एवं प्रजासनि पशुसन्यभयसनि लोकसनि । सर्वत्रेह हविरन्यपदार्थः । अग्निर्मम पुत्रपौत्रादिकां भूयसीं प्रजां करोतु । अन्नादिकं चास्माकं धत्त स्थिरं कुरुत । बहुवचनादर्यमगन्धर्वत्र्यम्बका इज्यमाना एवं प्रार्थ्यन्तेऽपरार्धे ।

देव.

( २ ) ततो वध्वा अञ्जलौ ऋत्विगाज्यस्योपस्तृणाति । 'इदं हविः' इति लाजान् वरोऽभिमृशति । 'इदं हविः प्रजननम्' इति पूर्वम् । अथास्यै भ्राता

शमीपर्णमिश्राँल्लाजानञ्जलिना प्राजापत्येन तीर्थेनाञ्जलौ आवपति । भ्रातरि त्वसंनिहितेऽन्यो ब्रह्मचारी कश्चित् । भ्रातुः समावृत्तस्यापि न दोषः । ब्राह्म.

(३) आज्यस्य आज्येन अञ्जलावुपस्तृणाति । अपूर्वत्वात् चतुरवत्तं विदधाति । 'इदं हविः' इत्यभिमृश्य लाजान् । वरोऽभिमृशेल्लिङ्गात् । आवि.

**तानविच्छिन्दती जुहोति– 'अर्यमणं नु देवम्' इति । 'अर्यमणं नु देवं कन्या अग्निमयक्षत । सोऽस्मान् देवो अर्यमा प्रेतो मुञ्चातु माऽमुष्य गृहेभ्यः स्वाहा ॥' ॥**

(१) तान् लाजान् अविच्छिन्दती विच्छेदमकुर्वती एकेनैव प्रक्षेपेण जुहोति 'अर्यमणं नु देवम्' इत्यादिमन्त्रेण ।

ब्रह्मण आर्षम् । अर्यमगन्धर्वत्र्यम्बका देवताः । उपरिष्टात् बृहत्यो होममन्त्राः । इयं नारीत्यनुष्टुप् । कन्या अग्निं देवमयक्षत इष्टवत्यः । अर्यमणमित्यग्नेर्विशेषणम् । अरीन् यच्छतीत्यर्यमा अग्निः, तम् । अयक्षतेति तिङ्व्यत्ययः, यजन्ते । अन्ये त्वग्निमित्यपि द्वितीयां सप्तम्याः स्थाने वर्णयन्ति, अग्नावर्यमणं कन्या यजन्ते । अत्र पक्षेऽर्यमैव देवता । एवमनूद्य वधूर्यज्ञफलमाशंसति । अमुष्येति सामान्येन भर्तृनाम लक्ष्यते । सोऽर्यमा इष्टः सन् अमुष्य देवदत्तस्य इतो गृहेभ्योऽस्मान् मा प्रमुञ्चातु, मा इति निषेधार्थो निपातः, इतो भर्तृगृहेभ्योऽस्माकं च्यावं मा कार्षीदित्यर्थः । स्वाहा सुहुतमस्तु । देव.

(२) तान् ऋत्विगभिघारितान् वधूं संततम् 'अर्यमणं नु देवम्' इति वाचयित्वा हावयति । अमुष्येति वरस्य षष्ठ्यन्तं नाम गृह्णाति वधूः । ब्राह्म.

(३) तान् लाजान् अविच्छिन्दती अविकिरन्ती । एकेनैव प्रक्षेपेण जुहोति । अमुष्य गृहेभ्य इत्यत्र भर्तृनाम षष्ठ्यन्तम् 'प्रेतो मुञ्चतु मा देवशर्मणो गृहेभ्यः स्वाहा' इति । आवि.

**'अग्निर्मां जनिमान्' इति वाचयति । 'अग्निर्मां जनिमाननया जनिमन्तं करोतु जीवपत्निर्भूयासम्' ॥**

(१) वरं भाणयति गुरुः अग्निरित्यादिमन्त्रमित्यर्थः । जनी जाया । अग्निः यतो जायावानतो मामपि जायया अविच्छिन्नसंबन्धं करोतु । तत्प्रसादादहमपि जीवपत्निर्भूयासं जीवा पत्नी यस्य स जीवपत्निरहं स्याम् । देव.

(२) वाचयति वरम् । आवि.

**'इयं नारी' इति सर्वत्रानुषजति । 'इयं नार्युपब्रूते तोक्मान्यावपन्तिका । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम ॥' इति ॥**

(१) इयं नारीत्यस्य अनुष्टुभः त्रिष्वप्यनुषङ्गः कर्तव्यः । एषा नारी ब्रवीति । किम्? दीर्घायुरस्तु मे पतिर्ज्ञातयश्च मित्रादयो मम वर्धन्तामिति । किं कुर्वती ब्रवीति? तोक्मान्यावपन्ती लाजान् जुह्वतीत्यर्थः । देव.

(२) हुतेषु 'अग्निर्मां जनिमान्' 'इयं नारी' इति वरं वाचयति । ब्राह्म.

(३) 'इयं नारी' इत्यनुष्टुभं सर्वत्र त्रिष्वनुषजति । आवि.

**एवं द्विरुत्तरम् ॥**

(१) द्वौ वारौ द्विः । एवम् उत्तरं कर्म द्वौ वारौ कर्तव्यम् । देव.

(२) एवं द्विरुत्तरं कर्म । द्वौ वारौ । द्विरेव कुर्यात् । आवि.

**पर्ययणे पर्ययणे लाजहोमो याजमानं चाश्मानं चाऽऽस्थापयति ॥**

(१) तदेव स्फुटं दर्शयितुमाह– पर्ययण इति । पर्ययणम् अग्निपरिगमनम् । याजमानानु(? मानमनु)षञ्जनम् । तत्र च वरः कर्ता । ततोऽश्मनः स्थापनम् । तत्र परिस्तीर्य लाजानामावपनम् । देव.

(२) एतदेव स्फुटं दर्शयति– पर्ययण इति । पर्ययणम् अग्नेः परिगमनम् । ततोऽश्मास्थापनमिति । परिस्तीर्य लाजानामावपनम् । आवि.

**'गन्धर्वं पतिवेदनम्' इति । 'गन्धर्वं पतिवेदनं कन्या अग्निमयक्षत । सोऽस्मान् देवो गन्धर्वः प्रेतो मुञ्चातु माऽमुष्य गृहेभ्यः स्वाहा ॥'॥**

(१) गन्धर्वमित्यादिमन्त्रेणापि होमविशेषः । गां पृथ्वीं धारयतीति गन्धर्वः, तमग्निं पतिवेदनं पत्युर्लम्भयितारं कन्या अन्या यतोऽयक्षत इष्टवत्यः, अतोऽहमपि यजे इति नारी ब्रूते इत्यर्थः । स च देवोऽग्निरिष्टः सन् गन्धर्वोऽमुष्य भर्तुर्गृहेभ्योऽस्मान् मा प्रमुञ्चातु इति पूर्ववत् प्रतिषेधः । देव.

(२) गन्धर्वमिति वदन्ती वधूर्लाजान् जुहोति । ब्राह्म.

(३) इति होमविशेषः । आवि.

**'सोमो मा ज्ञातिमान्' इति वाचयति । 'सोमो मा ज्ञातिमाननया ज्ञातिमन्तं करोतु जीवपत्निर्भूयासम् ॥'॥**

(१) सोम इत्यादिमन्त्रं गुरुर्वाचयतीत्यर्थः । यतः सोमो ज्ञातिमान् अतो मामप्यनया नार्या ज्ञातिमन्तं करोतु । जीवपत्निर्भूयासमिति व्याख्यातम् । देव.

(२) 'सोमो मा ज्ञातिमान्' 'इयं नारी' इति वरं वाचयति । ब्राह्म.

**'त्र्यम्बकं यजामहे' इति । 'त्र्यम्बकं यजामहे सुगन्धिं पतिपोषणम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमुष्य गृहेभ्यः स्वाहा ॥'॥**

त्र्यम्बकमित्यादिना तृतीयो होमः । त्र्यम्बकं शंकरं यजामहे हविर्दानेन पूजयामः । सुगन्धिं सुयशसम्, गन्धशब्दो यशोभिधायी प्रसिद्धः । पतिपोषणं भर्तुः पोषयितारम् । अहं च त्र्यम्बकस्य पूजितस्य प्रसादात् मृत्योः सकाशात् मुक्षीय । कुतः किंवत् ? उर्वारुकमिव बन्धनात् उर्वारुकं कर्करी(? टी)फलम्, तद्यथा बन्धनात् वृन्तात् पक्वं सत् स्वत एव विमुच्यते वा अर्थिभिस्त्रोट्यते, तद्वदहं मृत्योः सकाशात् नित्यत्रिश्लिष्टा स्यामित्यर्थः । अमुष्य भर्तुर्गृहेभ्यः पुनर्मा कदाचन मुक्षीयेति निषेधः । देव.

**'पूषा मा पशुमान्' इति वाचयति । 'पूषा मा पशुमाननया पशुमन्तं करोतु जीवपत्निर्भूयासम्' ॥**

(१) अस्यापि वाचनमेव, न त्वनेन होमः । अनया पशुस्वामिनं मां पूषा करोतु इति विशेषः । देव.

(२) 'पूषा मा पशुमान्' 'इयं नारी' इति वरं वाचयति । तत ऋतुतिथियागादि 'येन रक्षसि दाशुषे' इत्यन्तम् । ब्राह्म.

**शिष्टान् स्विष्टकृते जुहोति शूर्पेण कर्ता ॥**

(१) लाजशब्दः उभयलिङ्गः सूत्रकृता दृष्टः । कन्यया ये हुतास्तेभ्यो ये शिष्टा लाजास्तान् स्विष्टकृते जुहोति शेषान्, 'स्विष्टकृते समवद्यति' इति वचनात् । कन्यया हि प्रधानहोमः कृतोऽञ्जलिना । तन्निवृत्तये शूर्पग्रहणं कर्तृग्रहणं च । विवाहकर्मणि यः कर्ता । देव.

(२) शिष्टाँल्लाजानुपस्तीर्णाभिघारितान् शूर्पेण कर्ता ऋत्विक् स्विष्टकृते जुहोति । ब्राह्म.

(३) शिष्टाँल्लाजान् स्विष्टकृते जुहोति । सक्तूनामवदानं शूर्पेणैव कर्ता जुहोति । अञ्जलिना कन्यया प्रधानहोमः कृतः । अतः शूर्पग्रहणं कर्तृग्रहणं च । आवि.

**वरो दक्षिणा ॥**

(१) अथ दक्षिणा केन देयेत्याह— वर इति । वर एव दक्षिणां विवाहकर्मकर्त्रे दद्यात् विद्वत्त्वात् धनस्वामिकत्वाच्च, न तु नारीत्यर्थः । ऋतुतिथ्यादि यावत् स्विष्टकृत् । देव.

(२) हुते वरो होमकर्त्रे वरं ददाति । 'वरे गां तु विजानीयाच्चतुर्वर्षामिति श्रुतिः ।' । ब्राह्म.

(३) वरो दक्षिणा । कर्त्रे स्विष्टकृदन्ते दक्षिणादानं स एव ददाति । आवि.

**तूष्णीं हस्तौ विमुच्य 'वि ते मुञ्चामि' इति संनहनम् ॥**

( १ ) सावित्रेण मन्त्रेण हस्तग्रहणं यथा, तथा विमोको मा भूदिति तूष्णींग्रहणम् । हस्तौ विमुच्य ततो 'वि ते मुञ्चामि' इति मन्त्रेण संनहनं योक्त्रं विमुञ्चति कर्ता, मन्त्रलिङ्गात्, न तु स्वयम् ।

'वि ते मुञ्चामि रशनां वि रश्मीन् वि योक्त्राणि परिचर्तनानि । दत्त्वायास्मभ्यं द्रविणेह भद्रं प्र मा ब्रूताद्भविर्दां देवताभ्यः ॥' – त्रिष्टुप् । यतीनामार्षम् । 'विमोक एवास्यैष ते' इति वचनादग्नेरेष विमोकोऽन्यत्रानेन प्रतीतः । बन्धनस्य च रशनारश्मियोक्त्रशब्दा अभिधायका उच्यन्ते । युज्यन्ते एभिरिति योक्त्राणि । कीदृशानि ? परिचर्तनानि समन्तात् चर्तनं नियन्त्रिततया येषां तानि परिचर्तनानि । मुक्तमग्निं यजमानो ब्रूते– विमुक्तः सन्नग्निरस्मभ्यं द्रविणानि यज्ञोपयोगीनि धनानि दत्त्वा भद्रं च कल्याणं दत्त्वा मां प्रब्रूयात् । कीदृशं माम् ? हविर्दां देवताभ्यः हविषो दातारम्, यज्ञानुष्ठाने मां विनियुक्तमिति( ? युङ्क्ष्वेति ) प्रार्थयते यजमान इत्यर्थः । इहापि परिक्रीतेनर्त्विजा अर्थ्यमानस्य यजमानार्थतया यजमानस्याऽऽशीर्भवति । रशनारश्मिशब्दौ च योक्त्रपर्यायौ । पर्यायप्रयोगोऽतिशयार्थः । अथवा योक्त्राणि विमुञ्चामि, न केवलं योक्त्राण्येव, रशनां च अविद्यामित्यर्थः, ( विरश्मीन् ? ) रश्मींश्चाविद्यामूलान् रागादीनित्यर्थः । दम्पत्योश्च योक्त्रविमोकेन विवाहभूमौ स्थितोऽग्निर्मुक्तो भवति, स्वातन्त्र्यसंचरणेन तस्य संकटपरिहारात् । अतो विमुक्तः पूर्ववदभ्यर्थ्यते ।

देव.

( २ ) 'मनो ज्योतिः' इति समान्ते हुते तूष्णीं वरो हस्तौ विमुञ्चति । 'वि ते मुञ्चामि' इति वध्वाः संनहनम् ।

ब्राह्म.

( ३ ) आश्रावितान्तं समाप्य तूष्णीं हस्तौ विमुच्य । मन्त्रेण गृहीतत्वान्मन्त्रेणैव विमोको मा भूत् । 'वि ते मुञ्चामि' इति संनहनं योक्त्रं कर्ता, न स्वयं विमुञ्चेत्, लिङ्गात् ।

आवि.

सप्तपदी

**उत्तरतोऽग्नेर्दर्भेषु प्राचीं प्रक्रामयति– 'एकमिषे, द्वे ऊर्जे, त्रीणि रायस्पोषाय, चत्वारि मयोभवाय, पञ्च प्रजाभ्यः, षडृतुभ्यः, दीर्घायुत्वाय सप्तमम्, सखा सप्तपदा भव सुमृडीका सरस्वति मा ते व्योम संदृशे विष्णुस्त्वाऽन्वेतु' इत्यनुषङ्गः ॥**

( १ ) अग्नेरुत्तरेणाऽऽस्तीर्णेषु दर्भेषु प्राङ्मुखीं वधूं प्रक्रामयति कर्ता सप्त पदानि सप्तभिर्मन्त्रैः । 'विष्णुस्त्वाऽन्वेतु' इति सर्वत्रानुषङ्गः । 'एकमिषे विष्णुस्त्वाऽन्वेतु', एकं पदम् इषे अन्नाय निधेहि, त्वां च गच्छन्तीं विष्णुरन्वेतु । 'द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु', द्वे पदे ऊर्जे बलाय निधेहि इति पूर्ववत् । 'त्रीणि रायस्पोषाय विष्णुस्त्वाऽन्वेतु', त्रीणि पदानि रायः धनस्य पुष्ट्यै निधेहि । 'चत्वारि मयोभवाय विष्णुस्त्वाऽन्वेतु', मयः सुखम्, तद्भवत्यस्मादिति मयोभूः, तस्येदं मयोभवम्, तदर्थं चत्वारि पदानि निधेहि, सुखभवनप्रार्थनायेत्यर्थः । 'पञ्च प्रजाभ्यो विष्णुस्त्वाऽन्वेतु', पुत्रपौत्रप्रजार्थं पञ्च पदानि निधेहि । 'षडृतुभ्यो विष्णुस्त्वाऽन्वेतु', षट् पदानि ऋतुसांमुख्याय निधेहि, ते च ऋतवः संमुखीभूताः फलैः संबध्नन्तु त्वामित्यर्थः । 'दीर्घायुत्वाय सप्तमं सखा सप्तपदा भव । सुमृडीका सरस्वति मा ते व्योम संदृशि । विष्णुस्त्वाऽन्वेतु ॥', दीर्घायुत्वाय आयुषे सप्तमं पदं निधेहि । एभिश्च सप्तभिः पद्भिर्भर्तुः सुखाय( ? सखा ) भव । सुमृडीका, 'मृड सुखने' सुसुखा । हे सरस्वति, मा ते तव व्योम आकाशस्थः कश्चित् सप्तमं पदं द्राक्षीत् पवनान्दोलितवाससो नग्नं वा कंचित्प्रदेशम् ।

देव.

( २ ) यथा 'एकमिषे सखा सप्तपदा भव सुमृडीका सरस्वति मा ते व्योम संदृशे विष्णुस्त्वाऽन्वेतु' ।

ब्राह्म.

( ३ ) 'एकमिषे' इत्येवमादिभिः सप्तभिः । 'सखा सप्तपदा' इत्यनुषङ्गः । केचित्तु 'विष्णुस्त्वाऽन्वेतु' इत्यनुषङ्गं कुर्वन्ति । 'दीर्घायुत्वाय सप्तमं सखा सप्तपदा भव' इत्यस्यैवैतच्छेषं मन्यन्ते । तदानीं 'मा ते व्योम संदृशे इति सप्तमम्' इत्येवं सूत्रमभविष्यत् । गृह्यान्तरेषु तूभयथा दृश्यते ।

आवि.

आदित्यस्याग्नेर्वोपस्थानम्

**'तच्चक्षुः' इत्यादित्यमुपस्थापयति ॥**

(१) तच्चक्षुरित्यादिना कर्ता कन्यामादित्यमुपस्थापयति । 'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥' – देवहितं देवविहितम्, देवेभ्यो वा हितं हितकारि । शुक्रं शुक्लम् । उच्चरत् ऊर्ध्वं चरत् गच्छत् उद्यत् । देव.

(२) सप्तमं पदं नीत्वा 'तच्चक्षुः' इति वाचयन्नादित्यमुपस्थापयति । ब्राह्म.

**अस्तमितेऽग्निम् ॥**

(१) विवाहे क्रियमाणे यदि रात्रिर्भवति रात्रौ वा विवाहः, तदा 'तच्चक्षुः' इत्यनया अग्निमुपस्थापयेत् । देव.

(२) अस्तमिते चानयैवाग्निमुपस्थापयति । आवि.

ध्रुवादिदर्शनमनुमन्त्रणं च

**जीवन्तीं ध्रुवं स्वस्त्यात्रेयं दर्शयत्यरुन्धतीं च । एतेषामेकैकं पश्यसीत्याह । पश्यामीति प्रत्याह ॥**

(१) जीवन्तीं कन्यामिच्छन् ध्रुवादिकं दर्शयेत् । अत्र केचिद्रात्रावित्यनुवर्तयन्ति, दिवा ध्रुवादिदर्शनाभावात् । अपरे नानुवर्तयन्ति, यतोऽग्रे पश्यसीति प्रश्ने अपश्यन्ती अपि पश्यामीति प्रतिवचनमाहेत्यर्थो लक्ष्यते । दर्शनमात्रविवक्षया हि पश्येः प्रैषः पश्यामि न वेत्यत्र चोत्तरं पश्येम(?) । पश्यसीत्येकैकस्य नाम गृहीत्वा पृच्छेद्गुरुः । साऽपि पृष्टा सती पश्यामीति प्रतिब्रूयात् । देव.

(२) ततो जीवन्त्यादीन् दर्शयति । जीवन्तीं पश्यसि ? पश्यामीति सर्वत्र वधूः प्रत्याह । ध्रुवम् । स्वस्त्यात्रेयम् । अरुन्धतीम् । जीवन्तीमिति वध्वा विशेषणमित्यन्ये । ब्राह्म.

(३) जीवन्तीं चेदाशास्यते(? शास्ते) जीवतीत्याशिषं(? जीवत्वित्याशास्ते) ध्रुवादीन् दर्शयति । केचिदस्तमिते इत्यनुवर्तयन्ति । न पुनस्ते दिवा न सन्ति । अपश्यन्त्यपि पश्यामीति प्रत्याह । तस्माद्दिवाऽपि । एतेषामेकैकं पश्यसीत्याह । पश्यामीत्येकैकं प्रत्याह । आवि.

**'सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥' इति वीक्षिताननुमन्त्रयते ॥**

(१) वीक्षितान् ध्रुवादीन् गुरुरनुमन्त्रयते । सुमङ्गलीरित्याद्याऽनुष्टुप् । इयं वधूः शोभनमङ्गलयुक्ता भवतु भवत्प्रसादात् । इमां समेत्य संभूय पश्यत । अस्यै च सौभाग्यं दत्त्वा पश्चादस्तं गच्छत । दत्त्वायेति 'क्त्वो यक्' (पासू. ७।१।४७) । तेन दिवाऽपि ज्ञेयमेतत् । ध्रुवादिदर्शनं हि जीवनद्योतनमाहुः । तदिहावसरेऽपश्यन्त्या अपि पश्यामीति प्रतिवचनमपमृत्युव्याघाताय स्मर्यते । अत एव ध्रुवादिकं यद्दर्शयेत् तत् स्वस्त्यविनाशमेव दर्शयेदित्यर्थः । देव.

(२) 'सुमङ्गलीः' इत्यनयाऽनुष्टुभा वीक्षिताननुमन्त्रयते ऋत्विक् । आवि.

**'उदुत्तमम्' इति प्रागुदीचीमावसथं यतीमनुमन्त्रयते यतो वा स्यात् । 'उदुत्तममारोहन्ती व्यस्यन्ती$ पृतन्यतः । मूर्धानं पत्युरारोह प्रजया च विराड् भव ॥ इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि ॥ सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव । ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥ स्नुषाणां श्वशुराणां च प्रजायाश्च धनस्य च । पतीनां देवराणां च सजातानां विराड् भव ॥' इति ॥**

(१) 'उदुत्तम्' इत्यादिना अनुष्टुप्चतुष्टयेनाऽऽवसथं गृहं यतीं गच्छन्तीं प्रागुदीचीम् उत्तरपूर्वदिगभिमुखीम् अनुमन्त्रयते । यत्र वा आवसथः स्यात्, तदभिमुखं गच्छेत् ।

$ 'व्यस्यन्तीव' इति देवपालसंमतः पाठश्छन्दोनुगुणः । आदर्शान्तरे आपस्तम्बमन्त्रपाठे च स्वरहितः पाठः ।

हे वधु, उत्तमम् उत्कृष्टं गृहं सुचरितं वा आरोहन्ती, पृतन्यतः पृतनां सेनामिच्छतः शत्रून् व्यस्यन्तीव क्षिपन्तीव, पत्युः भर्तुः मूर्धानमधिरोह तस्य स्वगुणगणेन मान्या भवेत्यर्थः, तथा प्रजया पुत्रपौत्रादिकया विशेषेण राजमाना भव।

हे इन्द्र, मीढ्वः 'मिह सेचने' सेक्तः, गर्भग्रहणाख्याया रेतःस्थितेरिन्द्रप्रसादायत्तत्वादेवं संबोधनम्, इमां वधूं सुपुत्रां सौभाग्ययुक्तां च कुरु। दशास्यां पुत्रानाधेहि विधेहि, एकादशं पतिं संपादय।

हे वधु, सम्राज्ञी श्वशुरे त्वं सम्राज्ञी माननीयतमा सम्यग्राजमाना भव, तथा श्वश्र्वां ननान्दरि च भर्तुर्भगिन्याम्, एवमधिदेवृषु देवरेषु।

सजाताः बान्धवपरिजनप्रभृतयः। देवॄणां 'छन्दस्युभयथा' (पासू. ६।४।५) इति ह्रस्वः, मध्यदेशे तु दीर्घः पठ्यते, देवराणाम्। सर्वं गृहगतं तवाऽऽयत्तमस्त्वित्यर्थः। अत ऊर्ध्वं 'त्वं नो अग्ने' इत्यादितन्त्रपरिसमाप्तिः। † अत्र भर्तृगृहगमनावसरे मधुपर्ककाण्डिका पठ्यते। सा च स्नातकप्रकरणे व्याख्यास्यते।

देव.

(२) 'उदुत्तमम्' इति चतसृभिर्वधूमैशानीं दिशं गृहं व्रजन्तीमनुमन्त्रयते यत्र वा स्यात्तस्मिन् पितृवेश्मनि। इति पृथक्तन्त्रविधिः। एककर्मणि तन्त्रे सक्तुसंस्कारकाले लाजांश्च संस्कुर्यात्। सरस्वतीवाचनानन्तरं यथोक्तमुद्वाहे होमतन्त्रं निर्वर्त्योत्तरेणाग्निं वधूवरावानीय पश्चादग्नेर्दर्भेषु 'सा त्वमसि' इति वाचनादि यथोक्तं संस्थापयेत्। नैककर्मणि तन्त्रे 'य इमे द्यावापृथिवी' इत्यादयो होमाः, न च 'अग्नये जनिविदे' इत्यादयो 'हिरण्यगर्भः' इति चतस्रः इत्यन्ताः। न चात्र पुनराज्यभागौ समवदाय शूर्पेणैव तु स्विष्टकृत्। तथा च—'पृथक्तन्त्रं यदि भवेद्गाथावाचनतः परम्। प्रदक्षिणाग्निमानीय आद्यं होमं समापयेत्॥ द्वितीयमाज्यभागान्तं हुत्वा चैकादशाऽऽहुतीः। य इमे द्यावापृथिवी इत्यादि जुहुयात्ततः॥ संपाताश्च यथोक्ताः स्युर्वध्वाः शिरसि ये स्मृताः। ततोऽग्ने(? ग्नये) जनिविद इत्याद्याश्च यथाक्रमम्॥ जुहुयात्सप्तपञ्चाशद्येय(? द्येन) द्यौरन्तमाहुतीः। पश्चात्तत्राग्नेर्दर्भेषु वाचयेत् सा त्वमित्यृचम्॥ हुत्वाऽऽग्निपावमानीभिः संपातानवनीय च। यागस्त्वक्षतसक्तूनां प्राक् पाणिग्रहणाद्भवेत्॥'।

ब्राह्म.

## * वाराहगृह्यसूत्रम्

स्थण्डिलकरणादिपरिस्तरणान्तविधिः, वध्वानयनम्, युगच्छिद्रतो वध्वभिषेकः, वासःपरिधापनम्, आधारावाज्यभागौ प्रधानहोमाश्च, वधूसमीक्षणम्

**[1]'प्रागुदक्प्रवणं लक्षणमुद्धृत्यावोक्ष्य स्थण्डिलं गोमयेनोपलिप्य मण्डलं चतुरश्रं वा अग्निं निर्मथ्याभिमुखं प्रणयेत्। तत्र ब्रह्मोपवेशनम्। दर्भाणां पवित्रे मन्त्रवदुत्पाद्य 'इमं स्तोममर्हते' इत्यग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य पश्चादग्नेरेकवद्बर्हिः**

† ग्रन्थोऽयं दुर्बोधः, तत्र तदनुषक्तार्थे च नानाविरोधप्रतिभानात्। तथाहि— अस्माभिरुपलब्धयोर्द्वयोरप्यादर्शपुस्तकयोरेतत्काण्डिकायाः प्राक् विवाहप्रकरणे एव मधुपर्ककाण्डिका चतुर्विंशत्वेन पठिता तत्रैव देवपालेन व्याख्याता च, न स्नातकप्रकरणे। विवाह्यस्यापि स्नातकत्वात्तदभिप्रायेण ग्रन्थयोजनाऽपि न श्लिष्यते, मधुपर्कप्रकरणे स्नातकविवाह्ययोः पृथक् संग्रहणात्। मधुपर्ककाण्डिकायाः पूर्वं व्याख्यातत्वात् समावर्तनरूपस्नातकप्रकरणस्यापि पूर्वमेव पठितत्वाच्च (का. ३) 'व्याख्यास्यते' इति भविष्यत्त्वापदेशोऽपि विरुद्धः। 'व्याख्यायते' इत्युपलभ्यमानं पाठान्तरमप्यनुपपन्नमेव। एतद्ग्रन्थान्मधुपर्ककाण्डिकास्थानविषयकः संदेहः समुत्तिष्ठति, तद्विषयको विचारः मधुपर्कप्रकरणे 'आदौ च कर्मणः' इति सूत्रव्याख्यानटिप्पण्यां (संका. पृ. १९५२–१९५३) द्रष्टव्यः।

* अशुद्धमुद्रणमिदं गृह्यसूत्रम्। मानवगृह्यसूत्रं प्रायस्तदनुवदतीति तदाश्रयेणात्र शुद्धयः सूचिताः।

(१) वागृ. १४–१६.

स्तृणाति । उदक् प्राक्कूलान् दर्भान् प्रकृष्य दक्षिणान् तथोत्तरानग्रेणाग्निं दक्षिणैरुत्तरानवस्तृणाति । अग्न्यायतनस्य मध्यमदक्षिणोत्तरप्रदेशेषु उदगग्रपूर्वाग्रान् परिधीन्परिदधाति । दक्षिणतोऽग्नेर्ब्रह्मणे संस्तृणाति । अपरं यजमानाय पश्चार्धे पत्न्या अपरपश्चर(? रं)शाखोदकधारयोर्लाजाधारायाश्च(? धार्याश्च) पश्चाद्युगधारस्य च । 'स्योना पृथिवि भव' इत्येतयाऽवस्थाप्य शमीमयीं शम्यां कृत्वाऽन्तर्गोष्ठेऽग्निमुपसमाधाय भर्ता भार्यामभ्युदानयति । वाससोऽन्ते गृहीत्वा 'अघोरचक्षुरपतिघ्न्येऽधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥' इत्यभिपरिगृह्याभ्युदानयति । उत्तरेण रथं वासो(? वाऽनो) वाऽनुपरिक्रम्यान्तरेण ज्वलनवहनावतिक्रम्य दक्षिणस्यां धुर्युत्तरस्य युगतस्तन्मना हस्तात् (? युगतन्मनोऽधस्तात्) कन्यामवस्थाप्य शम्यामुत्कृष्य हिरण्यमन्तर्धाय 'हिरण्यवर्णाः शुचयः' इति तिसृभिरभिषिच्यात्रैव बाणशब्दं कुरुते इति प्रेष्यति । अथास्यै वासः प्रयच्छति । 'या अकृन्तन् या अतन्वन्याऽवन्था वा हरन् । याश्चाग्न्या देव्योऽन्तानभितो ततन्थ । तास्त्वा देव्यो जरसे संव्ययन्त्वायुष्मतीदं परिधत्स्व वासः ॥' इत्यहतं वासः परिधाप्यान्वारभ्य आघारावाज्यभागौ हुत्वा 'अग्नये जनिविदे स्वाहा' इत्युत्तरार्धे जुहोति । 'सोमाय जनिविदे स्वाहा' इति दक्षिणार्धे । 'गन्धर्वाय जनिविदे स्वाहा' इति मध्ये । 'युनज्मि त्वा' इति जातवेदसं कामम्, 'युक्तो वह' इति जातवेदसं भिषजम्, 'विश्वाग्ने' इति चाग्निं नक्षत्रमिष्ट्वा नक्षत्रदेवताम्, अहः अहर्देवताम्, रात्रिं रात्रिदेवताम्, ऋतुम् ऋतुदेवतां यजेत् । तिथिं तिथिदेवतां विरूपाक्षं च । 'सोमो ददद्गन्धर्वाय गन्धर्वो ददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ अग्निरस्याः प्रथमो जातवेदाः सोऽस्याः प्रजां मुञ्चतु मृत्युपाशात् । तदिदं राजा वरुणोऽनुमन्यतां यथेदं स्त्री पौत्रमगन्म रुद्रियाय स्वाहा ॥' इति, 'हिरण्यगर्भः' इत्यष्टाभिः प्रत्यृचमाज्याहुतीर्जुहुयात् । येन च कर्मणेच्छेत्तत्र जयान् जुहुयात् । जयानां च श्रुतिस्थां यथोकाम् । 'आकूत्यै त्वा स्वाहा । भूत्यै त्वा स्वाहा । प्रयुजे त्वा स्वाहा । नभसे त्वा स्वाहा । अर्यम्णे त्वा स्वाहा । समृद्ध्यै त्वा स्वाहा । जयायै त्वा स्वाहा । कामायै त्वा स्वाहा ।' इति, 'ऋचा स्तोमम्, प्रजापतये' इति च । शुचिः प्रत्यङ्मुखस्तां समीक्षस्वेत्याह । तस्यां समीक्षमाणायां जपति– 'मम व्रते ते हृदयं दधातु मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकमना जुषस्व प्रजापतिस्त्वा नियुक्ति(? क्तु) मह्यम् ॥' इति ॥

### पाणिग्रहणम्, गाथागानम्, अश्मारोपणम्, अश्मनोऽवरोपणम्, ब्रह्मजपः

का नामाऽसीत्याह । नामधेये प्रोक्ते 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णामि असौ' इति हस्तं गृह्णन्नाम गृह्णाति । प्राङ्मुख्याः प्रत्यङ्मुख ऊर्ध्वस्तिष्ठन्नासीनायाः दक्षिणमुत्तानं दक्षिणेन नीचाऽरिक्तमरिक्तेन 'यथेन्द्रो हस्तमग्रहीत्सविता वरुणो भगः । गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसत् । भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ याऽग्रे वाक्समभवत् पुरा देवासुरेभ्यः । तामद्य गाथां गास्यामो या स्त्रीणामुत्तमं मनः ॥ सरस्वति प्रेदमिव(? मव) सुभगे वाजिनीवति । या(? यां) त्वा विश्वस्य भूतस्य भव्यस्य प्रगायाम्यस्या अग्रतः ॥ अमोऽहमस्मि सा त्वं सा त्वमस्या अप्यमोऽहम् । द्यौरहं पृथिवी त्वमृक् त्वमसि सामाहं रेतोऽहमस्मि रेतो धत्तम् ॥ तावेव

विवहावहै पुंसे पुत्राय कर्तवै। श्रियै पुत्राय वैधवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥' इति। अग्निदक्षिणमानीयाग्नेः पश्चात् 'एतमश्मानमातिष्ठतमश्मेव युवां स्थिरौ भवतम्। कृण्वन्तु विश्वे देवा आयुर्वां शरदः शतम् ॥' इति दक्षिणाभ्यां पद्भ्यामश्मानमास्थापयतः(? ति)। 'यथेन्द्रः सहेन्द्राण्या अवारुहद्गन्धमादनात्। एवं त्वमस्मादश्मनोऽव रोहस्व समे पादौ प्रपूर्यायुष्मती कन्ये पुत्रवती भव॥' इति। एवं द्विरास्थापयति। चतुः परिणयति। 'समितं संकल्पेथाम्' इति पर्यायेपर्याये ब्रह्मा ब्रह्मजपं जपेत् ॥

वासःप्रदानम्, योक्त्रसंनहनम्, अञ्जनम्, लाजहोमः, जयादिहोमाः

ततो यथार्थं कर्मसंनिपातो विज्ञेयः। अर्यम्णेऽग्नये पूष्णेऽग्नये वरुणाय च व्रीहीन् यवान् वा निरुप्य प्रोक्ष्य लाजाप्रभृति (? लाजा भृज्जति)। मात्रे प्रयच्छति सजाताया अविधवायाः(? यै)। अथास्यै द्वितीयं वासः प्रयच्छति तेनैव मन्त्रेण। दर्भरज्ज्वाः 'इन्द्राण्याः संनहनम्' इत्यन्तौ समायम्य पुमांसं ग्रन्थिं बध्नाति। '(सं त्वा नह्यामि पयसा पृथिव्याः) सं त्वा नह्यामि अद्भिरोषधीभिः। सं त्वा नह्यामि प्रजया धनेन सा संनद्धा सुनुहि भागधेयम्॥' इत्यन्तरतो वस्त्रस्य योक्त्रेण कन्यां संनह्यति। अथैनान्युपकल्पयते-- शूर्पं लाजा इषीका अश्मानमञ्जनं चतसृभिः (दर्भेषीकाभिः शरेषीकाभिः समुञ्जाभिः) सतूलाभिरित्येकैकपातै(? कैकया *त्रै)-ककुभस्याञ्जनस्य संनिकृष्य 'वृत्रस्यासि कनीनिका' इति भर्तुर्दक्षिणमक्षि त्रिः प्रथममाङ्क्ते तथा परम्। तथा पत्न्याः शेषेण तूष्णीम्। दिशि शलाकाः प्रविध्यति-- 'यानि रक्षांस्यभितो व्रजन्त्यस्या वध्वा अग्निसकाशमागच्छन्त्याः। तेषामहं प्रतिविध्यामि चक्षुः स्वस्ति वध्वै भूतपतिर्दधातु ॥' इति। लाजाः पश्चादुपसाद्य शमीपर्णैः संसृज्य शूर्पे समं चतुर्धा विभज्याग्रेणाग्निं पर्याहृत्य लाजाधार्यै प्रयच्छति। लाजा भ्राता ब्रह्मचारी वा अञ्जलिनाऽञ्जल्योरावपति। उपस्तरणाभिघारणैः संपातं तावच्छन्नती-(? ता अविच्छिन्दती)र्जुहुयात्-- 'अर्यमणं नु देवं कन्याऽ(? अ)ग्निमयक्षत। स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा॥ तुभ्यमग्ने पर्यवहन् सूर्यां वहतुना सह। पुनः पतिभ्यो जायां दा अग्ने प्रजया सह॥ पुनः पत्नीमग्निरदादायुषा सह वर्चसा। दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्॥ इयं नार्युपब्रूते लाजानावपन्तितौ(? का)। दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम॥' इति। एवं 'पूषणं नु देवम्, वरुणं नु देवम्, येन द्यौरुग्रा' इत्यादय उद्वाहे होमा जयाभ्यातानाः संततिहोमा राष्ट्रभृतश्च। 'आकूताय स्वाहा' इति जयाः। 'प्राची दिग्वसन्त ऋतुः' इत्यभ्यातानाः। 'प्राणादपानं संतनु' इति संततिहोमाः। 'ऋताषाडृतधामा' इति राष्ट्रभृतश्च। 'त्रातारमिन्द्रम्, विश्वादित्याः' इति माङ्गल्ये। लाजाः कामेन चतुर्थं स्विष्टकृतमिति ॥

सप्तपदी, योक्त्रस्य विमोचनं वाससोऽन्ते बन्धनं च, अनुमत्यादिहोमाः, समिदाधानम्, परिधिविमोकादिहोमाः, पुनः समिदाधानम्, उपस्थानम्, मार्जनम्, दक्षिणा

अथैनां प्राचीं सप्त पदानि प्रक्रमयति– 'एकमिषे, द्वे ऊर्जे, त्रीणि प्रजाभ्यः, चत्वारि रायस्पोषाय, पञ्च भवाय, षडृतुभ्यः, सखा सप्तपदी भव। सुमृडीका सरस्वती मा ते व्योम संदृशि। विष्णुस्त्वामुन्नयतु' इति सर्वत्रानुषजति।

* मागृ. १।११।८ (संका. पृ. २०८१) इत्यत्र टिप्पणी द्रष्टव्या।

पश्चादग्ने रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य तेषु वधूमुपवेशयति। अपि वा दर्भेष्वेव। 'इमं विष्यामि वरुणस्य पाशं यज्जग्रन्थ सविता सत्यधर्मा। धातुश्च योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधातु॥' इति योक्त्रपाशं विषाय वाससोऽन्ते बध्नाति। अनुमतिभ्यां व्याहृतिभिश्च 'त्वं नो अग्ने, मनो ज्योतिः, त्रयस्त्रिंशत्तन्तवः, अयाश्चाग्ने'। शमीमयीस्तिस्रोऽक्ताः समिधः 'समुद्रादूर्मिः' इत्येताभिस्तिसृभिः स्वाहाकारान्ताभिरादधाति। अक्षतसक्तूनां दध्नश्च समवदाय 'इदं हविः प्रजननं मे' इति च हुत्वा 'इमं स्तनं मधुमन्तं धयायां प्रपीनमग्ने सलिलस्य मध्ये। उत्सं जुषस्व मधुमन्तमूर्मिं समुद्र्यं सदनमाविवेश स्वाहा॥' इति परिधिविमोकमभिजुहोति। 'अन्नपते' इत्यन्नस्य जुहुयात्। 'वि ते मुञ्चामि रशनां वि रश्मीन्' इति च हुत्वा पवित्रेऽनुप्रहृत्य आज्येनाभिजुहोति। 'एधिषीमहि' इति समिधमादधाति। 'समिदसि समेधिषि' इति द्वितीयाम्। 'आपो अद्यान्वचारिषम्' इत्युपतिष्ठते। कुम्भादुदकेन 'पुनन्तु मा पितरः' इत्यनुवाकेन मार्जयन्ते। आपो हि ष्ठीयाभिरित्येके। वरो दक्षिणा॥

प्रेक्षकानुमन्त्रणम्, सीमन्तकरणम्, अभ्यञ्जनम्, केशबन्धनम्, सह दधिमधुहविष्यप्राशनम्

'सुमङ्गलीरियं वधूरिमां समेत पश्यत। सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन॥' इति प्रेक्षकान् व्रजतोऽनुमन्त्रयते। अत्रैव सीमन्तं करोति त्रिश्येतया शलल्या समूलेन वा दर्भेण 'सेनाहनाम' इत्येतया। अथाभ्यनक्ति– 'अभ्यज्य केशान् सुमनस्यमानाः प्रजावरीर्यशसे अघोराः। शिवा भव भर्तुः श्वशुरस्यावदा( याऽऽ )युष्मती श्वश्रूमती चिरायुः॥' इति। जीवोर्णयोपसमस्यति – 'समस्य केशान् वृजिनानघोरान् शिवा सखिभ्यो भव सर्वाभ्यः। शिवा भव सुकुलोह्यमाना शिवा जनेषु सह वा जनेषु(? सहवाहनेषु)॥' इति। अथैतौ दधि मधु समश्नुतः। यद्वा हविष्यं स्यात्तस्य स्वस्ति वाचयित्वा 'समाना वाऽऽकूतानि' इति सह दम्पत्युभौ(? जपन्ति। उभौ) सह प्राश्नीतः॥

## आग्निवेश्यगृह्यसूत्रम्

मार्जनम्, वासःपरिधापनम्, अग्निमुखम्

[१] 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन मार्जयित्वा यथाप्रपन्नमपरेणाग्निमुपवेश्याथैनामहतं वासः परिधापयति पूर्वं निधाय 'या अकृन्तन्नवयन्' इति तिसृभिः। 'परीदं वासः' इत्येतयाऽभिमन्त्रयते। अथैनामाचान्तां दक्षिणतः प्राचीमुपवेश्य तस्यामन्वारब्धायां गन्धादिनाऽग्निमलङ्कृत्य परिषिञ्चति– 'अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनम्, 'अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनम्, 'सरस्वतेऽनुमन्यस्व' इत्युत्तरतः प्राचीनम्, 'देव सवितः प्रसुव' इति सर्वतः प्रदक्षिणम्। परिषिच्य ऊर्ध्वे समिधावनूयाजार्थे चाऽऽदधाति। इध्मादेवोद्धृत्य दक्षिणं परिधिमग्निं चान्तरेण उत्तरं परिधिं चाग्निं चान्तरेण प्रणीताप्रणयनेऽनूयाजार्थे चाऽऽदधाति। 'अयं ते' (इति) इध्ममक्त्वाऽभ्यादधाति। अप उपस्पृश्य, इध्मस्य मूलमुपसंस्पृश्य दर्व्या जुहोति– 'प्रजापतये स्वाहा' इत्युदञ्चम्, 'इन्द्राय स्वाहा' इति प्राञ्चम्। आघारावाघार्याऽऽज्यभागौ जुहोति– 'अग्नये स्वाहा' इत्युत्तरतः, 'सोमाय स्वाहा' इति दक्षिणतः। मध्ये व्याहृतिभिर्हुत्वा 'या तिरश्ची निपद्यसेऽहम्' इति त्रयोदशाहुतीर्जुहोति॥

---

(१) आग्निगृ. १।६।१-३.

समृद्धिजयाभ्यातानराष्ट्रभृद्धोमाः, प्रधानाहुतयः, मार्जनम्

अथाष्टौ समृद्धिहोमाञ् जुहोति-- 'इष्टेभ्यः स्वाहा' इति। अथ जयाञ् जुहोति-- 'चित्तं च चित्तिश्च' इत्येवं वा जुहोति। नानास्रुवाहुतीः -- 'चित्ताय स्वाहा चित्तये स्वाहा' इत्येवम्। अथाभ्यातानाञ्जुहोति-- 'अग्निर्भूतानामधिपतिः स माऽवतु स्वाहा' इति। अथ प्राचीनावीतं कृत्वाऽधिवदते-- 'पितरः पितामहाः' इति। उपवीती भूयो भवति। स एवमेतान् सप्तदशाभ्यातानान् साधिवादाञ्जुहोति। अथ स्वाहाकृताः षड्राष्ट्रभृतो जुहोति 'ऋताषाडृतधामा' इति। 'अग्निरेतु प्रथमः' इति षट् प्रधानाहुतीर्जुहोति। 'शं नो देवीरभिष्टये' इत्युभौ मार्जयते॥

पाणिग्रहणम्, अश्मारोपणम्, परिक्रमणम्, लाजहोमः

अथास्य(? स्या) दक्षिणेन हस्तेन दक्षिणं हस्तं साङ्गुष्ठं गृह्णात्यभीव लोमानि 'देवस्य त्वा' इति। अथोपोत्थापयति 'भगो अर्यमा' इत्येताभिः पञ्चभिः। अत्रासौशब्द(? शब्दे)-प्रथमया नाम गृह्णीयात्। उत्तरेणोत्तरार्धपरिधिसंधिमश्मानं निधाय दक्षिणेन पादेन वधूमास्थापयति-- 'आतिष्ठेममश्मानम्' इति। 'विश्वा उत त्वया वयम्' इति प्रदक्षिणमग्निं परिक्रामतः। अथास्या अञ्जलावुपस्तीर्य द्विर्लाजानावपति। त्रिः पञ्चावत्तिनाम्। 'इमाँल्लाजानावपामि' इति। अभिघार्य दर्व्या संसृजति -- 'भगेन त्वा संसृजामि' इति। अथ जुहोति-- 'इयं नारी' इति॥

लाजहोमः, वारुण्यदिहोमाः

एवं द्वितीयमास्थाप्य परीत्य जुहोति। तथा तृतीयम्। यथायतनमुपवेश्य अनूयाजसमिधमादाय(? धाय) दर्व्या वारुण्यौ चाऽऽग्निवारुण्यौ भेषजवनस्पतिं प्राजापत्यं सौविष्टकृतं च हुत्वा पुरस्तात् स्विष्टकृतं प्रायश्चित्तं जुहोति-- 'यन्म आत्मनः' इति पञ्च, 'पाहि नो अग्न एनसः' इति चैषोऽनुवाकः। अत्र महाव्याहृतिभिर्हुत्वा 'भूरग्नये च पृथिव्यै च महते च स्वाहा' इति, अत्रैव प्रणवं जुहुयात् व्याहृतिभिः समस्ताभिश्च॥

परिध्यञ्जनादिपरिषेचनान्तमुत्तरतन्त्रम्

अथ मध्यमं परिधिमक्त्वा दक्षिणार्धं च, अप उपस्पृश्य उत्तरार्धं च परिस्तरणेभ्योऽर्धमर्धमादाय दर्व्यामग्रमनक्ति मध्यं च, आज्यस्थाल्यां मूलमनक्ति। पुनरपि दर्व्यामग्रं मध्यं च, आज्यस्थाल्यां मूलमनक्ति। पुनरपि आज्यस्थाल्यां मूलम्, मध्यं चाग्रं च दर्व्याम्। अथैकं तृणं निधायाप उपस्पृश्य शिष्टमग्नौ प्रहरेत्। 'नात्यग्रं प्रहरेन्नात्यग्रं प्रहरेत्' इति ब्राह्मणम्। त्रिरुद्यत्य तृणमप्यनुप्रहरेत्। अङ्गुलिं त्रिरुद्यम्य प्राणस्थानं चक्ष्वादि संमिश्य परिधीनादाय मध्यमं प्रथमं प्रहरेत्। युगपद्दक्षिणमुत्तरं च। ऊर्ध्वे समिधौ प्रहरति। उत्तरार्धमङ्गरेषूपोहति। संस्रावेणाभिजुहुयात्। अथ परिषिञ्चति यथा पुरस्तात्। 'अन्वमंस्थाः प्रासावीः' इति मन्त्रान्तान् संनमति॥

ब्रह्मणे दक्षिणादानम्, मार्जनम्, ब्रह्मण उपनिष्क्रामणम्, गुरवे दक्षिणादानम्

प्रणीताप्रणयनमादायाग्रेणाग्निं परिहृत्य दक्षिणेनाग्निं चापरेणाग्निं चाश्मनो देशे निधाय यथाशक्ति दक्षिणां ब्रह्मणे दत्त्वा प्रागादिप्रतिदिशं तूष्णीं मार्जयते। किंचिदवसिच्य हस्तेन मार्जयेत् -- 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः, 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिः, 'पवमानः सुवर्जनः' इत्येतेनानुवाकेन, 'कया नश्चित्र आभुवत्' इति तिसृभिः, 'प्राजापत्यं पवित्रम्' इति द्वाभ्याम्। एतस्मिन् काले ब्रह्मा यथाप्रपन्नमुपनिष्क्रामणमिति(? क्रामति)। प्रायश्चित्तादि आ ब्रह्मण उपनिष्क्रामणात् सर्वदर्वीहोमानामेष समानम्। अत्र गुरवे वरं ददाति॥

देवतोपस्थानम्, कर्णजपः, हृदयाभिमर्शः, सप्तपदी

अथ देवतामुपतिष्ठते 'अग्ने व्रतपते व्रतं चरिष्यामि' इत्येतैः। 'अमूहमस्मि' इत्यथास्या दक्षिणे कर्णे जपति। अथास्या दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यवमृश्य हृदयदेशमभिमृशति 'मम हृदये हृदयं ते अस्तु' इति द्वाभ्याम्। अथापरेणाग्निम् इदंविष्णुक्रमात्(? इयं विष्णुक्रमान्) प्रक्रामति 'एकमिषे विष्णुस्त्वाऽन्वेतु' इति। मनाग्दक्षिणं पूर्वं पादं प्रहरति। सव्येनानुनिष्क्रामति। अत्रैव सप्तमं पदं विक्रमते। नाग्निमति प्रच्यवते। 'सखायौ सप्तपदावभूव' इति सप्तमे पदे जपति॥

सप्तर्षि-ध्रुवोपस्थानम्, औपासनाग्नेः कुण्डे निधानम्, आशीर्वचनम्

अथापरेणाग्निमुदङ्मुखस्तिष्ठन् सप्तऋषीनुपतिष्ठते– 'सप्त ऋषयः प्रथमां कृत्तिकानाम्' इति। अथ ध्रुवमुपतिष्ठते– 'ध्रुवं नमस्यामि' इति। मुहूर्तमुपविश्य औपासनाग्निमाहवनीयाकारे कुण्डे निधायात्र सदस्या आशीर्वादं कुर्वन्ति॥

## पारस्करगृह्यसूत्रम्

विवाहादिकर्मणां मण्डपे कर्तव्यता, अग्निस्थापनम्, अग्निविशेषः

[1]पञ्चसु बहिःशालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति॥

[2]उपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय॥

[3]निर्मन्थ्यमेके विवाहे॥

(१) पागृ. १।४।२; उत. १४५ (बहिःशालायाम्) एतावदेव; संग. १६५.

(२) पागृ. १।४।३; उत. १४५ उपलिप्ते + (देशे) उद्धतावो (उद्भृतावे); संग. १६५.

(३) पागृ. १।४।४; संग. १६५.

(१) पञ्चसु बहिःशालायां कर्म भवति। एतेषु बहिःशाला कार्या। उपलेपनादि शक्यमेवावक्तुम्, परिसमूहनादेरुक्तत्वात्। अतः परिसमूहनव्युदासार्थमिति केचित्। अपरे तु–गृह्यस्थालीपाककर्मणि परिसमूहनाद्युक्तम्, अगृह्यार्थोऽयमारम्भः। विवाहादयश्चागृह्याग्निविषयाः, येनैवाऽऽहितोऽग्निस्तदीयमेव हि कर्म तत्रेष्यते, उपग्रहविशेषात्। तस्मादगृह्यार्थमुद्धतावोक्षितग्रहणमिति। तदेतदपि नोपपद्यते। 'यत्र क्वचिद्धोमः' इत्यनेनात्रापि प्राप्तत्वात्। कथं तर्ह्येतत्? अयमभिप्रायः सूत्रकारस्य– 'यत्र क्वचिद्धोमः' इत्यनेनाप्राप्तिः परिसमूहनादीनाम्, अग्न्यर्थत्वात्तेषाम्। 'यत्रयत्राग्नेः स्थापनं तत्रतत्रैते कर्तव्याः' इति स्मृतिः। तथा च लिङ्गम्– 'उद्धते अवोक्षितेऽग्निमादधाति'। 'एष एव विधिर्यत्र क्वचिद्धोमः' इत्यनेन स्थालीपाकादिषु परिसमूहनादेरप्राप्तिप्रज्ञप्त्यर्थमिदमुद्धतावोक्षितग्रहणम्। निर्मन्थ्यमेके इति। निर्मन्थ्यः अचिरनिर्मथित उच्यते। सर्व एव ह्यग्निर्मन्थनाज्जायते। यथा 'नवनीतेन भुङ्क्ते' इत्यचिरदग्धेनेति गम्यते। एके लौकिकमेवाग्निमिच्छन्ति। कभा.

(२) बहिःशालाशब्दसामर्थ्यादग्निरत्र लौकिक एव। निर्मन्थ्यमेक इति। एके लौकिकाग्निमेवात्रेच्छन्ति, अतो विकल्पः। $ जभा.

(३) पञ्चसु संस्कारकर्मसु बहिःशालायां गृहाद् बहिः शाला बहिःशाला मण्डप इति यावत्। तस्यां कर्म भवति। यथा विवाहे परिणयने चूडाकरणे क्षौरकर्मणि उपनयने मेखलाबन्धे केशान्ते गोदानकर्मणि सीमन्तोन्नयने गर्भसंस्कारे। एतेषु पञ्चसु बहिःशालायामनुष्ठानम्। अन्यत्र गृहाभ्यन्तरे मुख्यशालायामेव। उपलिप्ते गोमयोदकेन, उद्धते स्फ्येनोल्लिखिते(नेति?) तिसृभी रेखाभिः, अवोक्षिते उदकेनाभ्युक्षिते बहिःशालागृहयोः अन्यतरस्मिन् प्रदेशे अग्निमुपसमाधाय अग्निं लौकिकमावसथ्यं वा उपसमाधाय स्थापयित्वा। अयं

$ शेषं कभावत्।

च लेपनादिविधिर्नापूर्वः, अपि तु परिसमुह्येत्यादिपूर्वोक्तस्यैवानुवादः, ततश्चात्रानुक्तमपि परिसमूहनमुद्धरणं च सर्वत्र भवति, 'एष एव विधिर्यत्र क्वचिद्धोमः' इति वचनात्। निर्मन्थ्यमिति। एके आचार्या विवाहे पाणिग्रहे निर्मन्थ्यम् आरणेयम् अग्निं वैवाहिकहोमाधिकरणमिच्छन्ति। हभा.

(४) विवाहादिषु पञ्चसु कर्मसु गृहाद्बहिः शालायां कर्म भवति। अन्यत्रान्तःशालायां बहिःशालायां वा भवति। उपलिप्तेत्यादि। यत्राग्नेः स्थापनं तत्रोपलिप्ते उद्धते अवोक्षिते उदकेनाभ्युक्षिते देशेऽग्निस्थापनम्। अत्रानेन पञ्चाग्निसंस्कारा लक्ष्यन्ते। ननु परिसमूहनादेरुक्तत्वात् किमर्थमुपलेपनादिकमुच्यते। सत्यम्। उच्यते— 'यत्र क्वचिद्धोमः' इत्यनेनाप्राप्तिः परिसमूहनादेः, अग्न्यर्थत्वात्। यत्र यत्राग्नेः स्थापनं तत्र तत्रैते भवन्ति। तथा च लिङ्गम्— 'उद्धते वा अवोक्षितेऽग्निमादधाति' इति। 'एष एव विधिर्यत्र क्वचिद्धोमः' इत्यनेन च होमार्थमग्निस्थापने स्युः। अन्यत्र गृहान्तरे अग्निनिधाने अग्निगमने मथित्वाऽग्निस्थापने च न स्युः। किंच 'एष एव' इत्यनेन यत्र स्वस्थानस्थितेऽग्नौ स्थालीपाकादिकं क्रियते तत्रापि पञ्चैते स्युः, तन्मा भूदित्यनेन सूत्रेण ज्ञाप्यते। उपलिप्त उद्धतावोक्षिते देशेऽग्निमुपसमाधाय विवाहो भवति इति भर्तृयज्ञैः सूत्रं योजितम्। परिसमूहनपरिसंख्या च तेषां मते। निर्मन्थ्यमेके विवाहे। विवाह इति कर्मणो नामधेयम्। एके विवाहकर्मणि निर्मन्थ्यमग्निमिच्छन्ति, अन्ये लौकिकमिच्छन्ति। निर्मन्थ्यः अचिरनिर्मथितो ग्राह्यः। सर्व एव ह्यग्निर्मन्थनाज्जायते, यथा 'नवनीतेन भुङ्क्ते' इत्युक्ते अचिरदग्धेनेति ज्ञायते। अत्र या काचिदरणिर्ग्राह्या। गभा.

(५) अत्र च पारस्करेण 'बहिःशालायामुपलिप्ते देश उद्धृतावेक्षितेऽग्निमुपसमाधाय' इति सूत्रात् प्रधानगृहाङ्गणेऽग्निस्थापनानन्तरं 'कुमार्याः पाणिं गृह्णीयात् त्रिषु त्रिषूत्तरादिषु' इति सूत्रान्तरेण पाणिग्रहणविधानात् यजुर्वेदिनां सामगदेयकन्याग्रहणेऽपि दानात् पूर्वमग्निस्थापनम्। उत. १४५

(६) पञ्चसु संस्कारकर्मसु बहिःशालायां शालाया बहिः मण्डप इति यावत्। तथा च विवाहादिकर्मपञ्चकं मण्डपे भवतीत्यर्थः। पूर्वं परिभाषासूत्रे पञ्चसंस्कारा भुव उक्ताः। अधुना लौकिकाग्निसाध्ये विवाहादौ तेषामपवादमाह— उपलिप्त इति। लौकिकाग्निसाध्यं विवाहादिक्रियाकलापं कुर्यादिति शेषः। निर्मन्थ्यमिति। एके आचार्या विवाहे निर्मन्थ्यम् आरणेयम् अग्निमिच्छन्ति। एतच्च कृताधानस्य भार्यायां विद्यमानायां द्वितीयापरिणयनविषयम्। तदुक्तम्— 'भार्यायां विद्यमानायां द्वितीयामुद्वहेद्यदि। तदा वैवाहिकं कर्म कुर्यादावसथ्येऽग्निमान्॥' अन्ये तु विवाहमात्रविषयमेतदाहुः। विभा.

नित्याहुतयः, राष्ट्रभृज्जयाभ्यातानहोमाः, आहुतिपञ्चकम्

**'पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्योपविशति॥**

**अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यं स्विष्टकृच्च॥**

**एतन्नित्यं सर्वत्र॥**

**प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः॥**

**सर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्थानं विवाहे॥**

**राष्ट्रभृत इच्छञ्जयाभ्यातानांश्च जानन्॥**

**'येन कर्मणेर्च्छेत्'* इति वचनात्॥**

**'चित्तं च चित्तिश्चाऽऽकूतं चाऽऽकूतिश्च विज्ञातं च विज्ञातिश्च मनश्च शक्वरीश्च दर्शश्च**

* अस्मदीययोर्द्वयोरपि पुस्तकयोरेवमेव पाठः। अत्र शब्दसाधुत्वं चिन्त्यम्। कर्कजयरामगदाधरविश्वनाथानां 'कर्मणेर्त्सेत्' इति पाठोऽभिमतः। स एव साधुः सूत्रान्तरादिसंवादी च। 'कर्मणेच्छेत्' इत्यपि पाठः। हरिहरेणायमेवानुगृहीत इति भाति।

(१) पागृ. १।५।२–१२; संग. २६७–२६८ (प्राजापत्यं०) मेतदावाप (मेतदेवावाप) कर्मणेर्च्छेत् (कर्मणेर्त्सेत्).

पौर्णमासं च बृहच्च रथंतरं च । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इ हव्यो बभूव स्वाहा ॥' इति ॥

'अग्निर्भूतानामधिपतिः स माऽवत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपां समुद्रः स्रोत्यानामन्नं साम्राज्यानामधिपति तन्माऽवतु सोम ओषधीनां सविता प्रसवानां रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते माऽवन्तु पितरः पितामहाः परेऽवरे ततास्ततामहाः । इह माऽवन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां स्वाहा' इति सर्वत्रानुषजति ॥

'अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात्स्वाहा ॥ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियं स्वाहा ॥ स्वस्ति नो अग्ने दिव आ पृथिव्या विश्वानि धेह्ययथा यजत्र । यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रं स्वाहा ॥ सुगं नु* पन्थां प्रदिशन्न एहि ज्योतिष्मद्धेह्यजरं न आयुः । अपैतु मृत्युरमृतं न आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहा ॥' इति ॥

'परं मृत्यो' इति च । एके प्राशनान्ते ॥

(१) कटः प्रसिद्ध एव । तेजनी तृणपुलकः । तयोरन्यतरं दक्षिणपादेन परिक्रम्योपविशति । अत्रोपकल्पनीयानि—शमीपलाशमिश्रा लाजाः रोहितानडुहं चर्म दृषदुपलं च उदकुम्भः शूर्पं च । अन्वारब्ध इति । आघारौ पूर्व उत्तरश्च । उत्तराघारे प्रतिनिगद्य होमत्वम् । न ह्यत्र मन्त्रोऽस्ति । आज्यभागौ एक आग्नेयः अपरः सौम्यः । 'भूर्भुवः स्वः' इत्येता महाव्याहृतयः । 'त्वं नो अग्ने' इति चैवमादि सर्वप्रायश्चित्तम् । प्राजापत्यं प्रजापतिदेवत्यो होमः । स्विष्टकृत् 'अग्नये स्विष्टकृते स्वाहा' इति वक्ष्यत्युपरिष्टात् । एतच्चतुर्दशाहुतिकं नित्यं सर्वकर्मसु भवति यत्र यत्र होमोऽस्ति । यथा 'घृताक्तानि कुशेण्ड्वानि जुहुयात्' इति । यत्र पुनर्होम एव नास्ति, यथा स्रस्तरारोहणे लाङ्गलयोजने च, तत्रैतन्न भवति । प्राङ्महाव्याहृतिभ्य इति । यत्राऽऽज्यव्यतिरिक्तमन्यदपि हविर्भवति तत्र महाव्याहृतिहोमात् प्राक् स्विष्टकृद्धोमः, यथा पश्चादात्रिति । सर्वप्रायश्चित्तेति । आगन्तुकत्वादन्ते निवेशो मा भूदिति सूत्रमारब्धम् । राष्ट्रभृत इच्छन् विवाह एव जुहोति । जयाभ्यातानानिति । 'चित्तं च चित्तिश्च' इत्येवमादि 'प्रजापतिर्जयानिन्द्राय' इत्येवमन्ता जयाः, मन्त्रलिङ्गात् । शेषा अभ्याताना मन्त्राः । एतांश्च इच्छन्नेव जुहोति । जानञ्छन्दो विकल्पार्थः । चशब्दो राष्ट्रभृद्भिः संनियोगार्थः । 'चित्तं च चित्तिश्च' इत्यत्र केचिच्चतुर्थ्यन्तेन प्रयोगमिच्छन्ति । तदयुक्तम् । न ह्येतानि देवतापदानि । किं तर्हि ? मन्त्रा एव । मन्त्राणां च यथाम्नातानामेव प्रयोग इष्यत इति । जयाभ्यातानांश्चेच्छया जुहोतीति कुत एतत् ? 'येन कर्मणेर्त्सेत्' इति वचनात् । येन कर्मणा ऋद्धिमिच्छेत्तत्र जयान् जुहोति इति वचनं भवति । अतश्चान्यत्रापि ऋद्धिमिच्छता जयाहोमः कर्तव्य इति गम्यते । 'अग्निर्भूतानाम्' इत्येवमादिषु 'अधिपतिः स माऽवतु' इति सर्वत्रानुषङ्गः । एवमेव स्मर्यते इति । एवं च सति 'अन्नं साम्राज्यानाम्' 'मरुतो गणानाम्' इति च विशेषेणैव पाठः । 'पितरः पितामहाः' इत्येवमादि 'परं मृत्यो इति चैके' इति यावत्सूत्रम् । एतैश्च मन्त्रैर्होमः कर्तव्य इति । एके प्राशनान्ते 'परं मृत्यो' इति जुहुति । एवमपि हि स्मर्यते इति । कभा०

---

* अस्मत्पुस्तकयोः ब्लूमफील्डकोशे च एवमेव पाठः । भाष्यपञ्चकपुस्तके पादटिप्पण्यां 'सुगं नः' इति पाठभेदः प्रदर्शितः, स एव च जयरामगदाधराभ्यां व्याख्यातः ।

(२) अन्वारब्धः ब्रह्मणा संस्पृष्टः। चित्तं चेति। अत्र केचिच्चतुर्थ्यन्तेन प्रयोगमिच्छन्ति। तदयुक्तम्, न ह्येतानि देवतापदानि किं तु मन्त्रा एव। मन्त्राणां च यथाम्नातानामेव प्रयोग इष्यते इति। स्वाहाकारस्त्वन्ते भवत्येव, 'स्वाहाकारप्रदानाः' इति श्रुतेः। त्यागे तु भवत्येव चतुर्थ्यन्तम्, अमन्त्रत्वात् त्यागस्य।

¶ जभा.

(३) आघारसंज्ञके आज्याहुती। यथा मनसा 'प्रजापतये स्वाहा, इदं प्रजापतये'। मनसा त्यागमपि। 'इन्द्राय स्वाहा, इदमिन्द्राय'। आवापस्थानम्। आवापश्चान्यत्र विहितस्य होमजपादेः कर्मणः कर्मान्तरे प्रक्षेपः। जयाभ्यातानानिति। किं प्रमाणमिति चेत्— जानन् येनेति। येन कर्मणा अस्मिन् कर्मणि ओप्य तेन यत् फलं भवतीति जानन् विदन् तत्कर्मफलमिच्छंस्तस्मिन् कर्मणि तत्कर्म आवपेदिति वचनात्, श्रुतेरित्यर्थः। एके आचार्याः 'परं मृत्यो' इत्येतामाहुतिं प्राशनान्ते संस्रवप्राशनान्ते जुहुयादितीच्छन्ति। उदकस्पर्शः।

¶ हभा.

(४) अत्र पश्चादुपवेशनं वचनात्, वचनाभावे तु 'सर्वत्रोत्तरत उपचारो यज्ञे' इत्यनेन उपवेशनम्। स्मृत्यन्तराद्वरस्य दक्षिणतः कन्या उपविशति। तेजनीं कटमिति द्वितीयानिर्देशादेतयोः संस्कारः। ननु उपयुक्तमुपयोक्ष्यमाणं वा द्रव्यं संस्कार्यम्, न चानयोरन्यतरत् उपयुक्तमुपयोक्ष्यमाणं वा भवति, ततश्च कथं संस्कारः? सत्यम्। यद्यप्यत्र शब्देनोपयोगो नोक्तस्तथाप्यासने द्रव्याकाङ्क्षत्वादेतस्य च प्रयोजनाकाङ्क्षत्वादेवं कल्प्यते— उपवेशनार्थोऽयं संस्कार इति। तेन तेजन्युपरि कटस्योपरि वोपवेशनम्, एवं च दृष्टार्थतालाभः। आक्रमणं च तथा सह कर्तव्यमिति भर्तृयज्ञहरिहरौ। अन्वारब्ध इति। आघारौ आज्यभागौ च विधीयेते। आघारः पूर्व उत्तरश्च। तत्र तूष्णीं पूर्वः। हरिहरेण 'प्रजापतये स्वाहा' इति पूर्वाघारो दर्शितः, तदतीवाशुद्धम्। न ह्यत्र मन्त्रोऽस्ति। दर्शपूर्णमासयोः परिभाषातः प्राप्तः स्वाहाकारोऽपि प्रतिषिध्यते— 'न स्वाहेति च नानिरुक्तं हि मनो निरुक्तं ह्येतद्यस्तूष्णीम्' इति। ननु आघारादिपृष्ठभावेन वेद्यादिकं कुतो नाऽऽयाति? उच्यते— 'गृह्यस्थालीपाकानां कर्म' इत्युपक्रम्य 'एष एव विधिर्यत्र क्वचिद्धोमः' इत्यनेनैवं ज्ञायते —यावन्तोऽत्र पदार्था उक्तास्तावन्त एव भवन्ति, नान्ये। उत्तराघारे प्रतिनिगद्य होमत्वम्, न ह्यत्र मन्त्रोऽस्ति। एवमाज्यभागयोरपि। यजमानो ब्रह्मणा अन्वारब्ध आघारादिस्विष्टकृदन्तं करोति। अन्वारम्भश्च कुशेन, निगमपरिशिष्टात्।

जैमिनिस्तु जयादीनामनारभ्याधीतानां 'येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयात्' इत्यादिभिर्वाक्यैरेव सामान्यतो लौकिकवैदिककर्माङ्गत्वे प्राप्ते, जयादयस्तु वैदिकाः, तेन यत्राऽऽहवनीयोऽस्ति तत्रैते स्युरिति सिद्धान्तितवान्।

जयाहोमानां मन्त्रानाह—चित्तं चेत्यादि। मन्त्रार्थः— चित्तं चेति। प्रजापतिर्यथेन्द्राय जयान् प्रायच्छत् तथा चित्तादि च मह्यमपि प्रयच्छत्विति क्रियां विपरिणम्योत्तरत्र संबन्धः। तस्मै च सुहुतमस्तु। तत्र चित्तं ज्ञानाधारं हृदयम्, चित्तिस्तत्रत्या चेतना। आकूतं चाभिमतम्, आकूतिश्च अभिमानः। यद्वा चित्तं ज्ञानेन्द्रियम्। जातावेकवचनम्। चित्तिः तद्देवता। आकूतं कर्मेन्द्रियम्, आकूतिः तद्देवता। विज्ञातं शिल्पादिज्ञानमपरोक्षम्, विज्ञातिः तद्देवता। मनः प्रसिद्धम्। शक्वरीः शक्वर्यः तच्छक्तयः। दर्शपौर्णमासौ तद्देवते। बृहद्रथंतरे सामनी तद्देवते वा। सर्वत्र प्रथममन्त्रोक्तवाक्यार्थः संबध्यते। प्रजापतिः परमेश्वरः, जयन्ति शत्रूनिति जयाः, तान् जयान् मन्त्रान् इन्द्राय प्रायच्छत् ददौ। किमर्थम्? वृष्णे अभिमतार्थवर्षणाय। इन्द्रविशेषणं वा। ततः स इन्द्रः पृतनाजयेषु असुरसेनाविजयाख्यकर्मसु उग्रः प्रचण्डो बभूव। किंच, ततस्तस्मै इन्द्राय विशः प्रजाः समनमन्त सम्यङ्नेमुः। स इ, इश्चार्थे, स चेन्द्रः हव्यः हवनीय इज्यः बभूव। स्वाहा तस्मै सुहुतमस्तु। तथा च तैत्तिरीया श्रुतिः— 'देवासुराः संयत्ता आसन्। स इन्द्रः प्रजापतिमुपाधावत्। स तस्मा एताञ्जयान् प्रायच्छत्। तानजुहोत्। ततो देवा असुरानजयन्।

¶ शेषं कभावत्।

तज्जयानां जयात्वम् । ' इति । अत्र ' प्रजापतिर्जयान् ' इत्येकेनापि जयालिङ्गेन छत्रिन्यायेन त्रयोदश मन्त्रा जया इत्युच्यन्ते । इमानि शाखान्तरोपदिष्टानि देवतापदानि, एषां प्रयोगकाले संप्रदानलक्षणेन संप्रयोगः ' चित्ताय स्वाहा ' इत्यादि इति भर्तृयज्ञः, नेति कर्कादयः । न चेमानि देवतापदानि । किं तर्हि ? मन्त्राश्चैते । ते च यथाम्नाता एव प्रयोक्तव्याः ।

अभ्यातानसंज्ञकान् मन्त्रानाह— अग्निर्भूतानामिति । मन्त्रार्थः— अग्निः प्रजापतिः भूतानां स्थावरादीनामधिपतिः ईशः, स मा माम् अवतु पातु । क्व ? अस्मिन् ब्रह्मणि अस्मिन् ब्रह्मकर्मणि होमादौ, पुनरस्मिन् क्षत्रे क्षत्रकर्मणि प्रजापालनादौ, पुनरस्यामाशिषि ब्राह्मणैः संपादितेष्टाशंसने, पुत्रादिसुखकामनायां वा । कुत्र ? अस्यां कन्यायाम् । किंभूतायाम् ? पुरोधायां पुरः स्थितायाम् । अस्मिन् कर्मणि विवाहे, अस्यां देवहूत्यां देवताह्वाने देवतोद्देशेन होमे वा । स्वाहा सुहुतमस्तु । अयं च वाक्यार्थ उपरिष्टादपि सप्तदशसु संबध्यते । शेषं स्पष्टम् । एतेऽष्टादश मन्त्राः अभ्यातानाः । ' अग्निर्भूतानाम् ' इत्यादि ' सुगं नु पन्थाम् ' इत्यन्ता द्वाविंशतिरभ्यातानाः इति कर्ककारिकाकारौ । इति सर्वत्रानुषजति एतेषु मन्त्रेषु प्रतिमन्त्रं यथालिङ्गं यथावचनं ' स माऽवतु ' इत्यादि ' देवहूत्यां स्वाहा ' इत्यन्तं वाक्यैकदेशमनुवक्तव्यम् । तच्चास्माभिः प्रयोगलेखने प्रदर्शयितव्यम् ।

' अग्निरैतु प्रथमः ' इत्यादिचतुर्भिर्मन्त्रैश्चतस्र आज्याहुतीर्जुहोति । ' अग्निरैतु प्रथमः ' इति प्रथमा, ' इमामग्निः ' इति द्वितीया, ' स्वस्ति नः ' इति तृतीया, ' सुगं नु पन्थाम् ' इति चतुर्थी । मन्त्रार्थः— अग्निः ऐतु आगच्छतु । किंभूतः ? देवतानां यज्ञभुजां प्रथम आद्यः, प्रधानत्वात् । स चाग्निः असौ अस्याः कन्यायाः प्रजां भाविपुत्रादिरूपां मुञ्चतु मोचयतु । कुतः ? मृत्युपाशात् । यद्वा मृत्युपाशात् अग्निः अस्यै कन्यायै प्रजां मुञ्चतु ददातु । तच्च प्रजामोचनं राजा वरुणोऽनुमन्यताम् अनुजानातु । यथा येनानुज्ञानेन प्रकारेण वा इयं कन्या पौत्रं पुत्रभवम् अघं दुःखं न रोदात् शोकं प्राप्य न रोदिष्यति, कदाचिदपि अपत्यवियोगो मा भवत्वित्यर्थः ।

इमां कन्यां गार्हपत्योऽग्निः त्रायतां रक्षतु, गार्हपत्याभिधो माव्यग्निः पालयतु । इमां पत्नीम् अग्निहोत्रिणीं कृत्वा रक्षतु । अस्यै अस्याः प्रजां दीर्घमायुः निर्दुष्टबहुकालजीवनं नयतु प्रापयतु । इयं च अशून्योपस्था सफलप्रसवा, अवन्ध्यतयेति यावत् । यद्वा नित्यं भर्तृसंगतोत्सङ्गा अस्तु भवतु । जीवतामेव दीर्घायुषां माता चास्तु, जीवपुत्रा भवत्वित्यर्थः । किंच पौत्रं पुत्रसंबन्धजम् आनन्दं सुखम् अभि अधिगम्य आभिमुख्येन सर्वभावेन वा प्राप्य विविधं बुध्यतां जानातु, सर्वज्ञाऽस्त्वित्यर्थः । यद्वा पौत्रमानन्दं विशिष्टतया बुध्यतां निद्रासुखापेक्षां त्यक्त्वा जागर्त्विति ।

हे अग्ने, यजन्तं त्रायते इति यजत्रः, हे यजत्र, यस्मात् त्वं सर्वप्रत्यक् अतो नः अस्माकं विश्वानि सर्वाणि कर्माणि अयथा अन्यथा कृतानि कर्माणि स्वस्ति संपूर्णानि यथा स्यात्तथा धेहि अनुकूलानि कृत्वा स्थापय । किंच दिव आ स्वर्गं लोकमभिव्याप्य आ पृथिव्याः पृथिवीमभिव्याप्य च यत् महि महिमा तमस्मासु धेहि स्थापय । किंच अस्यां पृथिव्यां जातं यत् द्रविणं वसु, चित्रं नानारूपं स्वर्णरत्नादिभेदेन, प्रशस्तं प्रशस्यं श्रेष्ठम्, यच्च दिवि स्वर्गे जातम्, तदप्यस्मासु धेहि ।

हे अग्ने, नः अस्मान् एहि आगच्छ, अस्मद्गृहानागत्य नः अस्माकं सुगं सुखगम्यं पन्थां पन्थानम् अर्चिरादिमार्गं प्रदिशन् उपदिशन्, संपादयन्निति यावत्, आयुः निर्दुष्टं जीवनं धेहि देहि । किंभूतम् ? अजरं जरारोगादिपराभवरहितम् । अजरमित्यग्निविशेषणं वा त्रिभक्तिव्यत्ययेन । पुनः किंभूतम् ? ज्योतिष्मत् प्रकाशकम् । तत्प्रतिबन्धको मृत्युरपि नः अस्माकं भवत्प्रसादादपैतु अपगच्छतु । अमृतम् आनन्दं( ? आनन्दः ) च नः अस्मान् आगच्छतु । वैवस्वतो यमश्च नः अस्माकम् अभयं त्वत्संबन्धेन पापाभावात् दुःखहेतुभयाभावं कृणोतु । परं मृत्यो इति च । चकारादाहुतिं जुहोति ' परं मृत्यो ' इत्यनेन मन्त्रेण । मन्त्रस्य पित्र्यत्वादुदकस्पर्शः । एके

प्राशनान्ते । एके आचार्याः संस्रवप्राशनान्ते इमामाहुतिमिच्छन्ति । तस्मिन् पक्षे 'परं मृत्यो' इति होमान्ते पुनरेतस्य संस्रवप्राशनम् । † गभा.

(५) दक्षिणपादेन तेजनीं तृणपूलकं कटं वा प्रवृत्य परिवर्त्य, उल्लङ्घ्येत्यपरे, अग्नेः पश्चादुपविशति, वर इति शेषः । दक्षिणतः कन्या, वरादुत्तरत आचार्यः । अन्वारब्धेति 'दक्षिणतो ब्रह्मासनमास्तीर्य' इत्यारभ्य 'पर्युक्ष्य जुहुयात्' इत्यन्ते परिभाषाशास्त्रार्थे कृते कन्यावराभ्यामन्वारब्ध आचार्य आघारौ 'प्रजापतये स्वाहा, इन्द्राय स्वाहा' इत्याज्याहुती, आज्यभागौ 'अग्नये, सोमाय' इत्याज्याहुती, महाव्याहृतयः 'भूर्भुवः स्वः' तिस्रः महाव्याहृतयः, सर्वप्रायश्चित्तम्, 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'अयाश्चाग्ने' 'ये ते शतम्' 'उदुत्तमम्' इत्याहुतिपञ्चकस्य सर्वप्रायश्चित्तसंज्ञा, प्राजापत्यं 'प्रजापतये स्वाहा' इति प्रजापतिदेवताकं होमम्, स्विष्टकृच्च स्विष्टकृद्गुणविशिष्टाग्निदेवताको होमः, 'नित्यं सर्वत्र' सर्वस्मिन् होमे एतदाहुतिचतुर्दशकं नित्यं भवत्येवेर्थः । विशेषविधिं विनेति शेषः । तत् नित्यावसथ्यहोमादौ न भवतीति ध्येयम् । प्राङ्महाव्याहृतिभ्य इत्यादि । आज्याचेदितरदनुपहतं चर्वादि हविः स्यात्तदा महाव्याहृतिहोमात् प्राक् प्रधानहोमानन्तरमेव स्विष्टकृद्धोमो भवतीत्यर्थः । सर्वप्रायश्चित्तेत्यादि । एतत् सर्वप्रायश्चित्तहोमप्राजापत्यहोमयोर्मध्यं विवाहाख्ये कर्मणि आगन्तुकहोमस्थानमित्यर्थः । राष्ट्रभृत इति । राष्ट्रभृत्संज्ञकांश्चान्तराऽऽवपेदित्यर्थः ।

प्रयोगश्च— 'ऋताषाडृतधामाऽग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्' । 'इदमग्नये गन्धर्वाय' इति त्यागः । 'तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा' । 'इदमोषधिभ्योऽप्सरोभ्यः' । एवं सर्वत्र त्यागे विशेषः । 'इदं सूर्याय गन्धर्वाय । इदं मरीचिभ्योऽप्सरोभ्यः । इदं चन्द्रमसे गन्धर्वाय । इदं नक्षत्रेभ्योऽप्सरोभ्यः । इदं वाताय गन्धर्वाय । इदमद्भ्योऽप्सरोभ्यः । इदं यज्ञाय गन्धर्वाय । इदं दक्षिणाभ्योऽप्सरोभ्यः । इदं मनसे गन्धर्वाय । इदमृक्सामभ्योऽप्सरोभ्यः' । इच्छन् फलं कामयमानः आहुतीनामिति शेषः । जयाभ्यातानांश्च आवापं¶ कुर्यादिति शेषः । चकारः समुच्चयार्थः । न केवलं राष्ट्रभृतामेवाऽऽवापः, अपि तु जयाभ्यातानानामपीत्यर्थः । अत्र श्रुतिं प्रमाणयति— 'जानन् येन कर्मणेर्त्सेत् इति वचनात्' आवापे येन कर्मणा यत् फलं साधयेत् तत्फलकामः तस्मिन् कर्मणि तत्कर्म आवपेदित्यर्थः । अपरे तु जानन्नित्यमुं शब्दं विकल्पार्थमाहुः । ईर्त्सेदित्यस्यार्थम् ऋद्धिमिच्छेदिति । जयाहुतीनां देवताः प्राह— 'चित्तं च चित्तिश्चाऽऽकूतं चाऽऽकूतिश्च' इत्यादि 'स इ हव्यो बभूव स्वाहा' इत्यन्तं सूत्रम् । प्रयोगश्चैवम्— 'चित्ताय स्वाहा । इदं चित्ताय । चित्त्यै स्वाहा । इदं चित्त्यै ।' एवमन्यत्र । 'आकूताय स्वाहा । आकूत्यै स्वाहा । विज्ञाताय स्वाहा । विज्ञात्यै स्वाहा । मनसे स्वाहा । शक्वर्यै स्वाहा । दर्शाय स्वाहा । पौर्णमासाय स्वाहा । बृहते स्वाहा । रथंतराय स्वाहा । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इ हव्यो बभूव स्वाहा ॥' इति । 'इदं प्रजापतये' इति त्यागः । अथाभ्यातानाः— 'अग्निर्भूतानामधिपतिः स माऽवत्विन्द्रो ज्येष्ठानाम्' इत्यादि 'देवहूत्यां स्वाहा' इत्यन्तं सूत्रम् । एभिरष्टादशसंख्याकैर्मन्त्रैरभ्यातानसंज्ञका आहुतीर्जुहुयादित्यर्थः ।

सर्वत्रानुषजति, 'अग्निर्भूतानाम्' इत्यष्टादशमन्त्रेषु प्रतिमन्त्रं यथालिङ्गं 'स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां स्वाहा' इत्यनुषङ्गं करोतीत्यर्थः । प्रयोगश्चैवम्— 'अग्निर्भूतानाधिपतिः स माऽवत्वस्मिन् ब्रह्म ... देवहूत्यां स्वाहा । इदमग्नये भूतानामधिपतये' । एवमन्यत्र ।

† शेषं क्रमावत् ।

¶ आवापशब्दः कर्मसाधनो जयाभ्यातानशब्दसमानाधिकरणः, भावसाधनत्वे 'जयाभ्यातानान्' इति द्वितीयानन्वयापत्तेरिति सिद्धगतिचिन्तनम् ।

त्यागस्तु– ‘ इदमिन्द्राय ज्येष्ठानामधिपतये, इदं यमाय पृथिव्या अधिपतये, इदं वायवेऽन्तरिक्षस्याधिपतये, इदं सूर्याय दिवोऽधिपतये, इदं चन्द्रमसे नक्षत्राणामधिपतये, इदं बृहस्पतये ब्रह्मणोऽधिपतये, इदं मित्राय सत्यानामधिपतये, इदं वरुणायापामधिपतये, इदं समुद्राय स्रोत्यानामधिपतये ’ ‘ अन्नं साम्राज्यानाम् ’ अत्रानुषङ्गविशेषः– ‘ अधिपति तन्माऽवतु ’ इति । ‘ इदमन्नाय साम्राज्यानामधिपतये, इदं सोमायौषधीनामधिपतये, इदं सवित्रे प्रसवानामधिपतये, इदं रुद्राय पशूनामधिपतये, इदं त्वष्ट्रे रूपाणामधिपतये, इदं विष्णवे पर्वतानामधिपतये ’ ‘ मरुतो गणानाम् ’ अत्रापि विशेषः– ‘ गणानामधिपतयस्ते माऽवन्त्वस्मिन् ’ इति । ‘ इदं मरुद्भ्यो गणानामधिपतिभ्यः , इदं पितृभ्यः ’। इत्यभ्यातानहोमः । ‘ अग्निरैतु ’ इत्यारभ्य ‘ परं मृत्यविति चैके प्राशनान्ते ’ इत्यन्तं सूत्रम् । ‘ अग्निरैतु, इमामग्निः , स्वस्ति नो अग्ने, सुगं नु पन्थाः , परं मृत्यो ’ एभिः पञ्च(भिः)मन्त्रैः पञ्चाऽऽहुतीर्जुहुयादित्यर्थः । त्यागः– ‘ इदमग्नये, इदं वैवस्वताय, इदं मृत्यवे ’ । एके ‘ परं मृत्यो ’ इति पञ्चमीमाहुतिं प्राशनान्ते इच्छन्ति ।

विभा.

लाजहोमः , पाणिग्रहणम्

**‘कुमार्या भ्राता शमीपलाशमिश्राँल्लाजानञ्जलिनाऽञ्जलावावपति ॥**

**ताञ् जुहोति संहतेन तिष्ठती– ‘ अर्यमणं देवं कन्या अग्निमयक्षत । स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा ॥ इयं नार्युपब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥ इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव । मम तुभ्य च संवननं तदग्निरनुमन्यतामियं स्वाहा ॥ ’ इति ॥**

**अथास्यै दक्षिणं हस्तं गृह्णाति साङ्गुष्ठम् – ‘ गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथाऽऽसः । भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहम् । सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि विवहावहै सह रेतो दधावहै प्रजां प्रजानयावहै पुत्रान् विन्द्यावहै बहूंस्ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम् ॥ ’ इति ॥**

( १ ) पागृ. १।६।१–३ ; संग. २७५–२७६.

( १ ) संहतेनाञ्जलिना तिष्ठती प्रतिमन्त्रं लाजान् जुहोति ‘ अर्यमणं देवम् ’ इत्येवमादिभिर्मन्त्रैः । ‘ तान् जुहोति ’ इति वचनात् तुरीयायां( ? तृतीयायां ) वेलायां सर्वहोमः । अथास्यै इत्यादि । अनेन मन्त्रेण । अस्यै इति चतुर्थी षष्ठ्यर्था ।

कभा.

( २ ) कुमार्या भ्रातेति । स्वाञ्जलिना कुमार्या अञ्जलौ आवपति प्रक्षिपति । सा च संहतेन मिलितेनाञ्जलिना तिष्ठतीति तिष्ठन्ती तान् लाजान् चतुर्थांशमितान् जुहोति ‘अर्यमणं देवम् ’ इत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् । तान् जुहोतीति वचनात् तृतीयवेलायामञ्जलिस्थसर्वहोमः , ‘ चतुर्थे शूर्पकुष्ठया ’ इति शूर्पावशिष्टानां सर्वहोमस्य वक्ष्यमाणत्वात् । आवपनं तु सकृदेव, आवृत्तेरश्रवणात् । अत्रेदं मन्त्रत्रयं कन्यैव वरपाठिता पठति । अथास्यै अस्याः , षष्ठ्यर्थे चतुर्थी, हस्तं साङ्गुष्ठं ‘ गृभ्णामि ’ इति मन्त्रेण वरो गृह्णाति ।

जभा.

( ३ ) शमीपलाशमिश्रान् शमीपत्रयुक्तान् लाजान् भृष्टानि धान्यानि ‘ गृभ्णामि ते सौभगत्वाय ’ इत्यादि ‘ शृणुयाम शरदः शतम् ’ इत्यन्तं मन्त्रं पठति वरः ।

* हभा.

( ४ ) कुमार्याः कन्याया वध्वा भ्राता शमीपत्रैर्मिश्रितान् लाजानञ्जलिना कन्याया अञ्जलौ आवपति प्रक्षिपति, लाजशब्देन भृष्टव्रीहय उच्यन्ते । ततः कुमारी तिष्ठती ऊर्ध्वा तांल्लाजान् स्वाञ्जलौ स्थितान् संहतेन अविरलाङ्गुलिना ‘ अर्यमणम् ’ इत्यादित्रिभिर्मन्त्रैर्जुहोति । ‘ अविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् ’ त्याश्वलायनः । तत्रैकैकेन मन्त्रेण प्रक्षिप्तलाजानां तृतीयांशं

* शेषं कभावत् ।

तृतीयांशं जुहोति। एवं च होमत्रयं भवति। अत्र कारिकाकारः– 'तिष्ठन्त्यास्तिष्ठता पत्या गृहीताञ्जलिनैव सा। अञ्जलिस्थांस्त्रिधा सर्वान् प्राङ्मुखी प्रतिमन्त्रतः॥ प्राजापत्येन तीर्थेन दैवेनैवेति बह्वृचाः। अन्यो भ्रातुरभावे स्याद्बान्धवो जातिरेव च॥' इति। 'भ्राता भ्रातृस्थानो वा' इति आश्वलायनगृह्ये। 'भ्रातृस्थाने पितृव्यस्य मातुलस्य च यः सुतः। मातृष्वसुः सुतस्तद्वत्सुतस्तद्वत्पितृष्वसुः॥' इति बह्वृचकारिकायाम्। द्रव्यत्यागे तु वरस्य कर्तृत्वम्, 'प्रधानं स्वामी फलयोगात्' ( काश्रौ. १।१६७ ) इत्युक्तत्वात्।

मन्त्रार्थः– कन्याः पूर्वाः प्रथममर्यमणं सूर्यं देवं कान्तम् अग्निम् अग्निस्वरूपं वरलाभाय अयक्षत अयजन्। लिङि छान्दसं रूपम्। स चार्यमा देवस्ताभिरिष्टो यतः अतः नः अस्मान् इदानीं परिणीयमानाः कन्याः, इतः पितृकुलात् प्रमुञ्चतु प्रमोचयतु, मा पतेः पत्युः कुलात् सहचरित्वाद्वा मा प्रमोचयतु। यद्वा वरो ब्रूते– कन्याः यम् अर्यमणमग्निरूपेणायजन् सोऽर्यमा देवः पतेः पत्युः मत्तः सकाशादिमां नो प्रमुञ्चतु मा प्रमोचयतु इतः अस्याः कन्यायाः सकाशान्मा मां नो प्रमुञ्चतु। अत्रेदं मन्त्रत्रयं कन्यैव वरपाठिता पठति। इयं नारी वधूः उप पत्युः समीपे ब्रूते। किं कुर्वती? लाजान् भृष्टव्रीहीन् आवपन्तिका अग्नौ विभागशः प्रक्षिपन्ती। स्वार्थे कः। किं ब्रूते? तदाह– मे मम पतिः आयुष्मान् सकलदीर्घायुरस्तु भवतु, मम ज्ञातयः एधन्तां वर्धन्तामिति। किंच हे पते, इमानग्नौ आवपामि प्रक्षिपामि। किंभूतान्? तव समृद्धिकरणं समृद्धिहेतवे(? वः) । अतो मम कन्यायाः तुभ्य च तव च भर्तुः, मलोपश्छान्दसः, संवननं वशीकरणम् अन्योन्यमनुरागः तदयमग्निरर्यमा अनुमन्यताम् अनुमोदनं कुरुताम्। इयं च स्वाहा तत्पत्नी अनुमन्यताम्।

अथास्यै इत्यादि। अस्यै इति चतुर्थी षष्ठ्यर्थे। अस्याः कुमार्या दक्षिणं साङ्गुष्ठम् अङ्गुष्ठसहितं हस्तं गृह्णाति वरः स्वहस्तेनाऽऽदत्ते 'गृभ्णामि ते' इति मन्त्रेण। अथशब्दोऽत्र स्वस्थाने तिष्ठता कर्तव्यमिति द्योतनार्थः। मन्त्रार्थः– हे कन्ये, ते तव हस्तं करं गृभ्णामि गृह्णामि। 'हृग्रहोर्भश्छन्दसि' इति भत्वम्। यथा येन गृहीतहस्तेन मया पत्या भर्त्रा सह जरदष्टिः जरच्छरीरा बहुवर्षायुष्मती आसः भवसीत्यर्थे निपातः। ग्रहणमेव तावत्कृत्यं (?) तत्राऽऽह– भगादयस्त्रयो देवास्त्वा त्वां मह्यमदुः दत्तवन्तः। किमर्थम्? गार्हपत्याय गृहस्वामिनीत्वाय भाविगार्हपत्यं सेवितुं वा। किंच सौभगत्वाय, सुभगानां समूहः सौभगं तस्य भावः सौभगत्वम्, तस्मै तदर्थं निरतिशयानन्दावाप्तये इत्यर्थः। किंभूतां त्वाम्? पुरन्धिः पुरन्धिं द्वितीयार्थे प्रथमा। श्रेष्ठा सुरूपवती वा। तथा च श्रुतिः– 'पुरन्धिर्योषेति योषित्येव रूपं दधाति' (शब्रा. १३।१।९।६ ) इति। हे कन्ये, यतः अमः विष्णुरुद्रब्रह्मा अहमस्मि। अमति सर्वत्र गच्छति सर्वं जानाति वेति, न मिनोति हिनस्तीति वा अमः। तथा सौति सुवति सूते वा विश्वमिति सा लक्ष्मीस्त्वमसि। किंच सा देवीत्रयीरूपा त्वमसि, अमः देवत्रयरूपः अहमस्मि। किंच अहं सामास्मि, त्वम् ऋगसि, अहं द्यौरस्मि, त्वं पृथिव्यसि। तावेवाऽऽवां विवहावहै विवाहं करवावहै, सह संयुक्तौ भूत्वा रेतः पुत्रदेहरूपं दधावहै धारयाव, ततः प्रजां स्त्रीरूपां संततिं प्रजनयावहै उत्पादयाव, पुत्रान् पुत्रपौत्रादीन् बहून् विन्द्यावहै लभावहै। ते च पुत्रा जरदष्टयः शतायुषः सन्तु। आवामपि संप्रियौ सम्यक् प्रीतौ परस्परप्रेमशालिनौ, रोचिष्णू सुदीप्तौ शोभमानौ वा, सुमनस्यमानौ शोभनमनोवृत्तिं कुर्वाणौ। सुमनसो भावः सौमनस्यम्, तत्कुर्वाणावित्यर्थः। सन्त्विति क्रियां विपरिणमय्य योज्यम्। इन्द्रियपाटवमाशास्ते– वयं च पुत्रादिसहिताः शतं शरदो वत्सरान् पश्येम रूपग्रहणसमर्थाः स्याम। तथा शतं शरदो जीवेम निरुपद्रवं प्राणान् धारयाम। तथैव शरदः शतं शृणुयाम निर्दुष्टं शब्दग्रहणसमर्थमस्माकं श्रवणेन्द्रियं भवत्वित्यर्थः।

गभा.

( ५ ) 'उदगयने' इत्याद्युपक्रम्य 'कुमार्याः पाणिं गृह्णीयात्' इत्यत्र लिङा पाणिग्रहणस्यैव प्राधान्यख्यापनादिह च मन्त्रकरणकपाणिग्रहस्य विधानादयं पाणिग्रहः

ज्योतिःशास्त्रप्रतिपाद्ये समये कर्तव्यः। अन्यत् सर्वे सूक्ष्मसमयासाध्यत्वेन समयान्तरे स्थूले कर्तव्यम्। शेषं निगदव्याख्यातम्। ¶ विभा.

अश्मारोपणम्, गाथागानम्, परिक्रमणम्, प्राजापत्यहोमः

**'अथैनामश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपादेन— 'आरोहेममश्मानमश्मेव त्वं स्थिरा भव। अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः॥' इति॥**

**अथ गाथां गायति— 'सरस्वति प्रेदमव सुभगे वाजिनीवती। यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः॥ यस्यां भूतं समभवद्यस्यां विश्वमिदं जगत्। तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः॥' इति॥**

**अथ परिक्रामतः — 'तुभ्यमग्ने पर्यवहन् सूर्यां वहतु ना सह। पुनः पतिभ्यो जायां दाऽग्ने प्रजया सह॥' इति॥**

**एवं द्विरपरं लाजादि॥**

**चतुर्थं शूर्पकुष्ठया सर्वांल्लाजानावपति— 'भगाय स्वाहा' इति॥**

**त्रिः परिणीतां प्राजापत्यं हुत्वा॥**

(१) अथैनामिति। एनां वधूम् उत्तरतोऽग्नेर्व्यवस्थितमश्मानमारोहयति 'आरोहेममश्मानम्' इत्यनेन मन्त्रेण। प्रकृतं कर्तृत्वं चात्र वरस्य मन्त्रश्च। अथ गाथामित्यादि। वर एव। अथ परिक्रामतः 'तुभ्यमग्ने' इत्यनेन मन्त्रेण वरवध्वौ। मन्त्रश्च लिङ्गाद्वरस्यैव। एवं द्विरपरं लाजादि कर्म भवति। चतुर्थं शूर्पकुष्ठयेति। अग्रं शूर्पस्य कुष्ठा, तया शूर्पकुष्ठया सर्वान् लाजानावपति कुमार्याः पाणौ। 'भगाय स्वाहा' इत्यनेन मन्त्रेण तानेव जुहोति कुमारी। त्रिः परिणीतामिति। त्रिर्ग्रहणमितरथावृत्तिव्युदासार्थम्। उक्तं हि परिभाषायाम् — 'विवृत्याऽऽवृत्य वेतरथावृत्तिः' (काश्रौ. १।१९९) इति। कभा.

(२) गाथां गीयते स्तूयतेऽनयेति, गानं तिष्ठत्यस्यामिति वा गाथा। कुष्ठया कोणेन। परितोऽग्नेर्नीतां परिणीतामितिपदस्य प्राजापत्यं प्रजापतये हुत्वा उदीचीं प्रक्रामयतीत्यन्वयः। प्रक्रामयिता चात्र वर एव, प्रस्तुतत्वात्। $ जभा.

(३) शूर्पकुष्ठया शूर्पस्य कोणेन। ततः समाचारात्तूष्णीं चतुर्थं परिक्रमणं वधूवरौ कुरुतः, नेतरथावृत्तिम्, इतरथावृत्तेः कारणस्य व्यवायस्याभावात्। ब्रह्माग्न्योरन्तरागमनं हि इतरथावृत्तिकारणम्। कुतः? इति चेत् 'हविःपात्रस्वाम्यृत्विजां पूर्वपूर्वमन्तरमृत्विजां च यथापूर्वम्' (काश्रौ. १।२०६–२०८) इति परिभाषासूत्रात्। तेन परिक्रमणं कुर्वन्तौ वधूवरौ ब्रह्माग्न्योर्मध्ये न गच्छेताम्। त्रिरिति। पूर्ववदुपविश्य 'प्रजापतये स्वाहा' इति ब्रह्मान्वारब्धो हुत्वा 'इदं प्रजापतये' इति त्यागं विधाय। $ हभा.

(४) अथ घृतकर एव वर एनां वधूमुत्तरतोऽग्नेः स्थापितमश्मानं पाषाणं दक्षिणपादेन कृत्वा आरोहयति 'आरोहेममश्मानम्' इत्यनेन मन्त्रेण। मन्त्र एव कारितार्थे। वासुदेवेन 'कुमार्या दक्षिणपादं हस्तेन गृहीत्वा अश्मानमुपरि§ वरः करोति' इत्युक्तम्। कारिकायाम्— 'गत्वोभावुत्तरेणाग्निं तस्याः सव्येतरं करम्। सव्येनाऽऽदाय हस्तेन वधूपादं तु दक्षिणम्। शिलामारोहयेत्प्रागायतां दक्षिणपाणिना॥' इति। मन्त्रपाठश्च वरस्य, न कुमार्याः। मन्त्रार्थः— हे कन्ये, इमं पुरोवर्तिनम् अश्मानं प्रस्तरम् आरोह आक्रम, अधितिष्ठेति यावत्। आरोहणेन संस्कृता त्वमश्मेव पाषाणवत् स्थिरा दृढा भव। किंच अभि अधिकृत्य आक्रम्य तिष्ठ। कान्? पृतनां संग्राममिच्छन्ति पृत-

¶ शेषं हभावत्।

(१) पागृ. १।७।१–६; संग. २७९–२८०.

$ शेषं कभावत्।

§ इदमसाधु, 'अश्मन उपरि' इति साधु।

**त्रिरात्रमक्षारालवणाशिनौ स्यातामधः शयीयातां संवत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः ॥**

(१) अथेत्यादि। एभिर्मन्त्रैः प्रतिमन्त्रम्। 'विष्णुस्त्वा नयतु' इति च सर्वत्रानुषङ्गः, तुल्ययोगित्वात् साकाङ्क्षत्वाच्च पूर्वमन्त्राणाम्। निष्क्रमणेति। निष्क्रमणकालादारभ्योदकुम्भं स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतस्तिष्ठेदन्यः। उत्तरत एकेषामाचार्याणां मतम्। ततश्च विकल्पः। तत एनामिति। 'आपः शिवाः शिवतमाः' इत्यनेन मन्त्रेणैनां वधूं शिरस्यभिषिञ्चति। आपो हि ष्ठेति। चशब्दात् त्रिरभिषेकः। अथैनामिति। उदीक्षयतीति कारितत्वादध्येषणा सूर्यमुदीक्षस्वेति। 'तच्चक्षुः' इत्यनेन मन्त्रेणोदीक्षते। अथास्या इति। अस्या वध्वाः दक्षिणांसमधि बाहुं नीत्वा हृदयमालभते 'मम व्रते ते' इत्यनेन मन्त्रेण। अथैनामभीति। इति अनेन मन्त्रेण। तामिति। तामिति वधूम् उन्मथ्य उत्क्षिप्य प्राच्यां दिश्युदीच्यां वाऽनुगुप्तागारे देशे आनडुहे रोहिते चर्मणि उपवेशयति 'इह गावः' इत्यनेन मन्त्रेण। वरशब्दार्थज्ञापनायाऽऽह— गौर्ब्राह्मणस्येत्यादि। दुहितृमते इति। ददातीत्यनुवर्तते। दुहितृमांश्च यस्य दुहितर एव सन्ति, न पुत्राः, तस्मै रथाधिकं गवां शतं दत्त्वा दुहितरं तस्योद्वहेत्। प्रतिषिद्धा ह्यसौ, 'नाभ्रातृकामुपयच्छेत्' इति वचनात्। तत्परिक्रियायाधिरथदानम्। अस्तमित इति। इति अनेन मन्त्रेण। कारितार्थे चायं मन्त्रः। पश्यामीत्यत्रान्तर्भूतो णिच्। यदुक्तं भवति दर्शयामीति तदुक्तं भवति पश्यामीति। मन्त्रोऽप्येवमेव व्यवस्थितः। 'ध्रुवैधि... शतम्' इति कुमार्या वो(?वे)च्यते। सा यदीति। न तु न पश्यामीति। त्रिरात्रमिति। वरवध्वौ। अधः शयीयाताम्। खट्वाद्युदासार्थोऽयमधःशब्दः, नाऽऽस्तरणव्युदासार्थः। कभा.

(२) अथेति परिणयानन्तरम्। तत उदकुम्भाज्जलं गृहीत्वा एनां कन्यां मूर्धनि वरोऽभिषिञ्चति। दृढपुरुषः दृढाङ्गपुरुषोऽन्यो वरो वा। अनुगुप्ते वस्त्रादिनाऽऽच्छादिते। अस्तमित इति दिवाविवाहे। अस्तमिते सूर्ये 'ध्रुवमीक्षस्व' इति प्रैषेण वरो वधूं प्रेषयति। रात्रिविवाहे तु गोदानानन्तरमेव। सा 'ध्रुवमसि' इति मन्त्रस्य वरपठितस्यान्ते समीक्षते। कारितार्थे चायं मन्त्रः। कारयिता चात्र वर एव, मन्त्रलिङ्गात्। अन्ततः अत्र संवत्सरादौ त्रिरात्रपक्षो ह्यन्तिमः। संवत्सरादिविकल्पास्तु शक्त्यपेक्षया व्यवस्थिता ज्ञेयाः। संवत्सरादिपक्षाशक्तौ त्रिरात्रपक्षाश्रयेऽपि चतुर्थीकर्मानन्तरं पञ्चम्यादिरात्रावभिगमनम्। चतुर्थीकर्मणः प्राक् तस्या भार्यात्वमेव नोत्पन्नम्, विवाहैकदेशत्वाच्चतुर्थीकर्मणः।

* जभा.

(३) अथ प्राजापत्यहोमानन्तरम् एनां वधूम् उदीचीम् उदङ्मुखीं सप्त पदानि प्रक्रामयति सप्त प्रक्रमान् दक्षिणपादेन कारयति उत्तरोत्तरं वरः। कथंभूताम्? त्रिः परिणीतां त्रीन् वारानग्नेः प्रादक्षिण्येनाऽऽनीतामिति व्यवहितेन संबन्धः। कुतः? 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायात्। 'एकमिषे' इत्यादिभिः सप्तभिर्मन्त्रैः। तद्यथा— 'एकमिषे विष्णुस्त्वा नयतु' इति वरणोक्ते मन्त्रे वधूरेकं पदमुदग्ददाति। 'सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु' इत्युक्ते सप्तमम्। निष्क्रमणप्रभृति 'पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति' इत्यादित आरभ्य कश्चित् पुरुषो जलपूर्णं कलशं स्कन्धे निधाय वधूवरयोः पृष्ठत आगत्याग्नेर्दक्षिणस्यां दिशि मौनी स्थित आस्ते, केषांचित् पक्षे उत्तरतः। आचारादाम्रादिपल्लवसहितेन हस्तेन जलमादायैनां वधूं मूर्धनि शिरसि अभिषिञ्चति वरः। सा च वरप्रेषिता सती 'तच्चक्षुः' इति मन्त्रेण स्वयंपठितेन सूर्यं निरीक्षते दिवाविवाहपक्षे। अथ हृदयालम्भनानन्तरम् एनां वधूं वरोऽभिमन्त्रयते 'सुमङ्गलीः' इत्यादिना मन्त्रेण। अत्र शिष्टसमाचारात् 'उत्तरतआयतना हि स्त्री' इति श्रुतिलिङ्गाच्च वधूं वरस्य वामभागे उपवेशयति। आनडुहे आर्षभे, रोहिते लोहितवर्णे। तत आगत्य यथास्थानमुपविश्य ब्रह्मणाऽन्वारब्धः स्विष्टकृद्धोमं विधाय संस्रवं प्राश्य ब्रह्मणे पूर्णपात्रवरयोरन्यतरं दक्षिणात्वेन दत्त्वा आचार्याय वरं

* शेषं कभावत्।

ददाति वरः। पुत्रिकात्वदोषपरिहाराय च एकेन रथेन अधिकं गवां शतं तत्पित्रे दत्त्वा उद्वहेत्। 'ध्रुवमसि' इत्यादि 'संजीव शरदः शतम्' इत्यन्तं वरेण पाठितेन मन्त्रेण वधूर्ध्रुवमीक्षते। विवाहदिनमारभ्य त्रिरात्रं त्रीणि अहोरात्राणि अक्षारालवणाशिनौ, अक्षारं च अलवणं च अक्षारालवणम्, तदश्नीत इत्येवंशीलौ अक्षारालवणाशिनौ स्यातां भवेताम्। * हभा.

(४) अथ वर एनां कुमारीमग्नेरुत्तरत उदीचीम् उदङ्मुखीम् 'एकमिषे' इत्येतैः सप्तमन्त्रैः सप्तपदानि प्रक्रामयति प्रक्रमणं कारयति। कारितत्वात्सप्तपदानि प्रक्रमस्वेत्यध्येषणेति। कुमार्या दक्षिणपादं गृहीत्वा अग्रे अग्रे स्थापयतीत्यन्ये। 'विष्णुस्त्वा नयतु' इति सर्वत्र षट्सु मन्त्रेषु अनुषङ्गः, न तु सप्तमे मन्त्रे, तुल्ययोगित्वात्साकाङ्क्षत्वाच्च पूर्वमन्त्राणामिति कर्काचार्यः। अन्येषां भाष्यकाराणां पद्धतिकाराणां च मते सर्वमन्त्रेष्वनुषङ्गः। मन्त्रपाठो वरस्य। अत्रैवं प्रयोगः— 'एकमिषे विष्णुस्त्वा नयतु। द्वे ऊर्जे विष्णुस्त्वा नयतु। त्रीणि रायस्पोषाय वि०। चत्वारि मायोभवाय वि०। पञ्च पशुभ्यो वि०। षड्ऋतुभ्यो वि०'। सप्तमे प्रक्रमे 'सखे सप्तपदा भव सा मामनुव्रता भव' इति। प्रक्रमेषु सव्यपादस्य नातिक्रमणमिति रेणुदीक्षिताः। मन्त्रार्थः— इषे अन्नाय, ऊर्जे बलाय, रायस्पोषाय धनपुष्ट्यै, मायः सुखं तस्य भव उत्पत्तिः, पश्वादिभ्यः तत्तत्सुखाय। सखे इहामुत्रमित्र, सा त्वं सप्तपदा भूरादिसप्तलोकप्रख्याता भव, मामनुवर्तिनी च भव। निष्क्रमणेति। निष्क्रमणं 'पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति' इत्येतावदुच्यते। तदारभ्य कश्चित्पुरुषः उदकपूर्णं कुम्भं स्कन्धे गृहीत्वा विवाहाग्नेर्दक्षिणतो वाग्यतस्तूष्णीं तिष्ठेत्। एकेषामाचार्याणां मते अग्नेरुत्तरतस्तिष्ठति। अतश्च विकल्पः। तत इति। ततस्तस्मादुदकुम्भाद्धस्तेन जलमादाय एनां वधूं मूर्ध्नि शिरसि वर एव 'आपः शिवाः' इत्यनेन मन्त्रेणाभिषिञ्चति।

मन्त्रार्थः— या आपः शिवाः कल्याणहेतवः शिवतमाः अतिशयाभ्युदयकारिण्यः शान्ताः सुखकर्त्र्यः शान्ततमाः परमानन्ददात्र्यः, ता आपः ते तव भेषजम् आरोग्यं कृण्वन्तु। 'आपो हि ष्ठा' इति च तिसृभिः। चशब्दात्तस्मादुदकात् 'आपो हि ष्ठा' इति त्रिभिर्मन्त्रैरभिषेकः कार्यः। अथैनामिति। अथैनां वधूं वरः सूर्यमुदीक्षयति सूर्यविक्षणं कारयति। उदीक्षयतीतिकारितत्वात् अध्येषणा सूर्यमुदीक्षस्व इति। सा च वरेण प्रेरिता सूर्यं पश्यति 'तच्चक्षुः' इत्यनेन मन्त्रेण। दिवाविवाहपक्षे एतदिति रेणुदीक्षितहरिहरौ। अस्माभिस्तु सूर्यविक्षणान्यथाऽनुपपत्त्या 'अस्तमिते ध्रुवं दर्शयति' इत्यत्रास्तमितग्रहणाच्च एतद्गृह्यानुसारिणां दिवैव विवाह इत्युच्यते। अथास्या इति। अस्या इति चतुर्थी षष्ठ्यर्थे। अस्या वध्वा दक्षिणांसमधि दक्षिणस्य अंसस्य स्कन्धस्य अधि उपरि हस्तं नीत्वा 'मम व्रते ते' इत्यनेन मन्त्रेण तस्या हृदयमालभते वरः। हे कन्ये इत्यध्याहारः। मम व्रते शास्त्रविहितनियमादौ ते तव हृदयं मनः दधामि स्थापयामि। किंच मम चित्तमनु मम चित्तानुकूलं ते तव चित्तमस्तु। त्वं च मम वाचं वचनम् एकमनाः अव्यभिचारिमनोवृत्तिः जुषस्व हृष्टचित्ता आदरेण कुरुष्व। त्वा त्वां स च एव प्रजापतिर्मह्यं मदर्थम्, मां प्रसादयितुमित्यर्थः, नियुनक्तु नियोजयतु। अथैनामभीति। वर एनां वधूं 'सुमङ्गलीः' इत्यनेन मन्त्रेणाभिमन्त्रयते। अत्राऽऽचाराच्चतस्रः स्त्रियो मङ्गलं कुर्वन्ति। तथा च कारिकायाम्— 'पतिपुत्रान्विता भव्याश्चतस्रः सुभगा अपि। सौभाग्यमस्यै दद्युस्ता मङ्गलाचारपूर्वकम्॥' इति। मन्त्रार्थः— हे विवाहदेवताः, इयं वधूः सुमङ्गलीः शोभनमङ्गलरूपा। विसर्गश्छान्दसः। अत इमां कन्यां समेत संगच्छत, संगत्य च इमां पश्यत दृष्ट्या विलोकयत। किंचास्यै कन्यायै सौभाग्यं दत्त्वा अस्तं गृहं याथ यात इत्यर्थः। न विपरेत न विमुखतया परा इत अपगच्छत। पुनरपि पुत्रादिमङ्गलमाशास्य पुनरागमनाय व्रजत इत्यर्थः। यद्वा यद्यस्तं याथ तर्हि न विपरेत इति।

---

* शेषं अभावत्।

'अस्तं गृहा' इति श्रुतेः। तां दृढपुरुष इति। ततो वरः तां वधूमुन्मथ्य उत्क्षिप्य उत्थाप्य प्राक् प्राच्याम् उदक् उदीच्यां वा अनुगुप्ते आगारे परिवृते गृहे रोहिते रक्तवर्णे आनडुहे चर्मणि उपवेशयति 'इह गावः' इत्यनेन मन्त्रेण। चर्म च प्राग्ग्रीवमुत्तरलोमाऽऽस्तीर्णं भवति, 'चर्माण्युत्तरलोमानि प्राग्ग्रीवाणि' इति परिभाषितत्वात्। दृढपुरुषः कश्चिद्बलवान् पुरुष इति हरिहरः। दृढपुरुषो जितेन्द्रिय इति भर्तृयज्ञः। जामातैव दृढपुरुष इति रेणुकदीक्षितगङ्गाधरौ। अस्माकमपि मते वर एव। तस्य च दृढत्वं जितेन्द्रियत्वेन, अन्यथा वध्वा अनुगुप्तागारनयने मनसि उन्मादोत्पत्तेः, न ह्यद्यापि भार्यात्वमुत्पन्नमिति। मन्त्रार्थः— इह कन्यानिवेशने गावः अश्वाः पुरुषाश्च निषीदन्तु वसन्तु। इहपदावृत्तिः कर्तृभेदापेक्षया। किंच उ एवार्थे। इहैव सहस्रं गावो दक्षिणा यस्य स यज्ञः पूषा पुष्टिकरो निषीदतु, 'पूषा वै सहस्रदक्षिण आस' इति श्रुतेः। आचार्यायेति। ततो वर आचार्याय स्वकीयाय वरं ददाति। गौरिति। वरशब्दार्थव्याख्यानं करोति— ब्राह्मणश्चेत् परिणेता तदा गां वरं ददाति, क्षत्रियश्चेद्वरस्तदा ग्रामं वरं ददाति, वैश्यश्चेद्वरस्तदाऽश्वं वरं ददाति। एते वरा विवाह एव, प्रकरणात्। सर्वासु वरचोदनासु गवादयो वरशब्दवाच्या इति भर्तृयज्ञः। अधिरथमिति। ददातीत्यनुवर्तते। दुहितृमांश्च यस्य दुहितर एव, न पुत्राः, तस्मै दुहितृमते रथेन अधिकं गोशतं दत्त्वा तस्य कन्यामुद्वहेत्। प्रतिषेधत्यमूं मनुः— 'यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता। नोपयच्छेत तां कन्यां पुत्रिकाधर्मशङ्कया॥' (मस्मृ. ३।११) इति। तस्याः परिक्रयाय रथाधिकं गवां शतं ददाति। अस्तमित इति। अस्तमिते सूर्ये वधूं ध्रुवसंज्ञं नक्षत्रं दर्शयति 'ध्रुवमसि' इत्यनेन मन्त्रेण। नात्र ध्रुवमीक्षस्वेत्यध्येषणा। अयमेव मन्त्रः कारितार्थे। अत्र कर्कभाष्यम्— "अस्तमिते ध्रुवं दर्शयति 'ध्रुवमसि' इत्यनेन मन्त्रेण। कारितार्थे चायमेव मन्त्रः। पश्यामीत्यन्तर्भूतण्यर्थः। यदुक्तं भवति दर्शयामीति तदुक्तं भवति पश्यामि इति। मन्त्रोऽपि चैवं व्यवस्थितः। 'ध्रुवैधिपोष्ये ... शरदः शतम्' इति कुमार्यै(? र्यै)वोच्यते" इति। वध्वा मन्त्रपाठ इति भ्रान्तिमान् गङ्गाधरः। 'ध्रुवमीक्षस्व' इति प्रैष इति हरिहरगङ्गाधरौ।

मन्त्रार्थः— हे वधु, त्वं ध्रुवमसि ध्रुवा शाश्वती असि भवसि, यतः त्वा त्वां ध्रुवं तारकाविशेषं पश्यामि दर्शयामि। अत्रान्तर्भूतो णिच् ज्ञेयः। अतस्त्वमपि ध्रुवा शाश्वती पोष्या पोषणीया मत्प्रजापोष्टी वा एधि भव वर्धयेति वा। एतदर्थमेव बृहस्पतिर्ब्रह्मा त्वा त्वां मह्यमदात् दत्तवान्। अतो मया पत्या भर्त्रा सह प्रजावती पुत्रपौत्रादियुक्ता शतं शरदः वर्षाणि जीव प्राणिहि। सा यदीति। सा कन्या यदि ध्रुवसंज्ञकं सूक्ष्मं नक्षत्रं न पश्येत्तदा पश्यामीत्येव वक्तव्यं तया, न पश्यामीति वचनं न ब्रूयात्। त्रिरात्रमिति। लग्नदिनमारभ्य त्रिरात्रं यावत् वरवध्वौ अक्षारमलवणं चाश्नीत इत्येवंशीलौ स्याताम्। अधः शयीयाताम् अधः भूमौ स्वपेताम्। खट्वाव्युदासार्थोऽधःशब्दः, नाऽऽस्तरणव्युदासार्थः। संवत्सरमिति। विवाहदिनमारभ्य संवत्सरं यावत् न मिथुनमुपेयातां ब्रह्मचारिणौ स्याताम्, द्वादशरात्रं वा षड्रात्रं वा त्रिरात्रं वा। गभा.

(५) 'तत एनां मूर्धन्यभिषिञ्चति... आपो हि ष्ठा इति च तिसृभिः' इत्यन्तं सूत्रम्। आचार्य इति शेषः। अथैनां सूर्यमिति। 'सूर्यमुदीक्षस्व' इति प्रैष आचार्यस्य। चतुरिकायामीशान्यामनुगुप्ते आस्तीर्णे आनडुहे रोहिते चर्मणि वरो वा भ्राता वा यो बलवान् स कन्यामुपवेशयति 'इह गावः' इति मन्त्रेणेत्यर्थः। ततः स्वस्थाने उपविश्यान्वारब्ध आचार्यः 'अग्नये स्विष्टकृते स्वाहा' इति जुहोति। 'इदमग्नये स्विष्टकृते' इति त्यागः। संस्रवप्राशनम्, मार्जनम्, पवित्रप्रतिपत्तिः। आचार्याय वरं ददाति दीयमानवरसंप्रदानप्रतिपत्त्यर्थम्। आचार्यपदमुपलक्षणं वा। तेन ब्रह्मणे पूर्णपात्रदानम्, वधूवस्त्रं सूर्यापाठकेभ्यः। 'ध्रुवमीक्षस्व' इति प्रैष आचार्यस्य। बर्हिर्होमादिब्राह्मणभोजनान्तम्। क्षारं गुडादि। † विभा.

† शेषं गभागतम्।

## गोभिलगृह्यसूत्रम्

वरवध्वोः कटोपवेशनम्

**[1]पश्चादग्नेः संवेष्टितं कटमेवंजातीयं वाऽन्यत्पदा प्रवर्तयन्तीं वाचयेत्– 'प्र मे पति या नः पन्थाः कल्पताम्' इति ॥**

(१) अग्नेः पश्चाद्वीरणरचितं कटं तज्जातीयमन्यग्रथितं वा वस्त्राच्छादितं पादेन प्रेरयन्तीं वधूं 'प्र मे पति या नः' इति वाचयेत् पतिः। संत. ८९७

(२) संवेष्टितं सम्यग्वाससा अध उपरि च पार्श्वे च अहतेन वसनेनाऽऽच्छादितमित्यर्थः। कटं तृणग्रथितमासनम्। तदलाभे एवंजातीयं तृणसदृशम् अन्यत् तृणपुलकादि। पदा चरणेन प्रवर्तयन्तीं वह्निसंनिधानमुपवेशनार्थं नयन्तीं वधूं 'प्र मे' इत्यादिमन्त्रं पतिर्वाचयेत् पाठयेत्। अत्रानुवादाद्विधिरनुमीयते– वरवध्वोरुपवेशनार्थं कटः कर्तव्य इति। कर्तुश्चानियमः। मन्त्रो यथा– 'प्र मे पति या नः पन्थाः कल्पतां शिवा अरिष्टा पतिलोकं गमेयम्।' इति। अस्यार्थः– नः अस्माकं पति पतिः मे मदर्थे पन्थाः पन्थानं प्रकल्पतां प्रकल्पयतु। अन्तर्भावितण्यर्थः। करोतु। या येन पथाऽहं शिवा सुखावहा अरिष्टा अहिंसिता च सती पतिलोकं पतिगृहं गमेयं गम्यासम्।' मृदुला.

**[2]स्वयं जपेदजपन्त्यां 'प्रास्याः' इति ॥**

(१) 'प्र मे' इति मन्त्रं बाल्यात् लज्जया वा अजपन्त्यां वध्वां स्वयमेव पतिः पूर्वमेव मन्त्रम् 'प्र मे' इति स्थाने 'प्रास्याः' इत्यूहं कृत्वा जपति। संत. ८९७

(२) 'गमेयम्' इत्यत्र 'गम्याः' इति। अन्यथाऽनन्वयप्रसङ्ग इति द्रष्टव्यम्। एतच्चाग्निप्रदक्षिणानन्तरम्। तथा च गृह्यासंग्रहे – 'यदा निष्कामयेत्कन्यां वरः पाणिजिघृक्षया। अग्निप्रदक्षिणं कृत्वा कटं स्तीर्णमिदं जपेत्॥' इति। § मृदुला.

**[1]बर्हिषोऽन्तं कटान्तं प्रापयेत् ॥**

(१) अन्तःशब्दः समीपवचनः। तेन कटबर्हिषोः समीपदेशम् अन्तरालरूपं प्रापयेत्। संत. ८९७

(२) बर्हिःपदमत्र अग्निपरम्, 'बर्हिः शुष्मा' इति वह्निनामसु पाठात् तत्रापि तस्य शक्तत्वात्। एवं चाग्निकटयोर्मध्यं प्रापयेत् नयेत्। प्रकृतत्वात् कन्यामित्यर्थ इति मे प्रतिभाति। अत एवाग्निस्थापनम्, ततो ब्रह्मोपवेशनादिदृषत्पुत्रासादनपर्यन्ताग्निपरिचरणानन्तरं कन्यादानमिति पद्धतिक्रमः संगच्छते।

भाष्यकारस्तु– "कटं पदा प्रवर्तयन्तीम्' इति पूर्वमुक्तम्, तत् कियन्तं देशं प्रवर्तयेत्? इत्यपेक्षायामाह– बर्हिषोऽन्तमिति। कटपूर्वप्रान्तमास्तृतकुशपर्यन्तं नयेदित्यर्थः। एवं च कटप्रवर्तनात्पूर्वे कन्यादानाद्यवसरे एवाऽऽज्यसंस्कारान्तं कर्मान्यद्वारा कारयितव्यम्। अन्यथा पूर्वं बर्हिःस्तरणस्य वरेणाकरणाद्बर्हिषोऽन्तमिति नोपपद्येत" इत्युक्तम् (? इत्युक्तवान्)। 'तन्मन्दम्, अन्यद्वारा करणे प्रमाणान्तरस्याभावादस्य चान्यथा व्याख्याततत्वात्' इति शुभकर्मनिर्णये मुरारिमिश्राः प्राहुः। मृदुला.

**[2]पूर्वे कटान्ते दक्षिणतः पाणिग्राहस्योपविशति ॥**

पत्युर्दक्षिणतः कटस्य पूर्वभागे कन्या उपविशति। $ संत. ८९७

विवाहहोमः

**[3]दक्षिणेन पाणिना दक्षिणमंसमन्वारब्धायाः षडाज्याहुतीर्जुहोति 'अग्निरेतु प्रथमः' इत्येतत्प्रभृतिभिः ॥**

---

(१) गोगृ. २।१।२०; संत. ८९७ वाऽन्यत् (वाऽन्यं) प्रवर्तयन्तीं (प्रेरयन्तीं).

(२) गोगृ. २।१।२१; संत. ८९७.

§ शेषं संतवत्।

$ मृदुला. संतवत्।

(१) गोगृ. २।१।२२; संत. ८९७.

(२) गोगृ. २।१।२३; संत. ८९७ पूर्वे (पूर्व).

(३) गोगृ. २।१।२४; संत. ८९७ मंस (मंश).

(१) अन्वारब्धायाः इति कर्तरि क्तः। सप्तम्यर्थे षष्ठी। तेन पत्युर्दक्षिणस्कन्धं दक्षिणहस्तेनान्वारब्धायां संलग्नायां सत्याम् 'अग्निरेतु' इत्यादिषड्भिर्मन्त्रैः षडाज्याहुतीर्जुहोति वरः। संत. ८९७

(२) अन्वारब्धाया इति वर्तमाने कर्तरि निष्ठा (पासू. ३।४।७२)। षष्ठी चेयं संबन्धार्था। अन्वारम्भणं स्पर्शः। तथा चायमर्थः— पत्युर्दक्षिणांसं दक्षिणहस्तेन स्पृशन्त्यां वध्वाम् 'अग्निरेतु' इत्यादिषड्भिर्मन्त्रैः पतिः षडाज्याहुतीर्जुहुयादिति। मन्त्रो यथा— 'अग्निरेतु प्रथमो देवताभ्यः सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदास्वाहा॥'। अस्यार्थः— अस्मिन् प्रस्तुते कर्मणि पूज्यमानाभ्यो देवताभ्यः ता अपेक्ष्य प्रथमः मुख्यः अग्निः एतु आगच्छतु। आगत्य च सः अग्निः अस्यै अस्याः। षष्ठ्यर्थे चतुर्थी। प्रजां भाविनीं मृत्युपाशात् मुञ्चतु मोचयतु। तत् एतन्मृत्युपाशविमोचनमग्नेः अयं राजा अधिपतिरपां वरुणः तदाख्यो देवः अनुमन्यताम् अनुजानातु। यथा येनानुज्ञानेन प्रकारेण वा भगवतः शुभानुध्यानेन वा इयं स्त्री भूता सती पौत्रं पुत्रभवं तत्संबन्धि अघं दुःखं यमबन्धनात्। 'दुःखैनोघव्यसनेष्वघम्' इत्यमरः। प्राप्य इति शेषः। न रोदात् न रुद्यात्। ताभ्यामग्निवरुणां स्वाहा सुहुतमस्तु।

'इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै जरदष्टिं कृणोतु। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि विबुध्यतामियं स्वाहा॥'— गार्हपत्यः तदाख्यः अग्निः योऽसौ भाव्यः, इमां कन्याम् अग्निहोत्रिणीं कृत्वा त्रायतां पालयतु। किंच अस्यै अस्याः। पूर्ववच्चतुर्थी षष्ठ्यर्थे। प्रजां संततिं जरदष्टिं जराव्यापिनीं चिरस्थायिनीं कृणोतु करोतु। 'कृवि हिंसाकरणयोश्च' (भ्वा. प.) इत्यस्य लोटि रूपम्। किंच अशून्योपस्था नित्यं सुतपूर्णोत्सङ्गा भर्तुः संगता वा सती जीवतां दीर्घायुषां माता जनयित्री अस्तु भवतु। अतः इयं पौत्रं पुत्रसंबन्धिनम् आनन्दं सुखम् अभि अधिगत्य विबुध्यतां विविधं सुखमनुभवतु। तस्मै अग्नये स्वाहा सुहुतमस्तु।

'द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनंधयांस्ते† पुत्रान् सविताऽभिरक्षतु। आ वाससः परिधानाद् बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात् स्वाहा॥'— हे कन्ये द्यौः द्युलोकाभिमानी(? निनी) देवता सूर्यः ते तव पृष्ठं रक्षतु। वायुरश्विनौ च ऊरू रक्षन्त्विति वचनविपरिणामेनान्वयः। किंच स्तनंधयः स्तनाधारान् ते तव पुत्रान् सविता आदित्यः आ वाससः परिधानात् वासःपरिधानयोग्यावस्थातः प्राक् अभिरक्षतु, ततः पश्चात् बृहस्पतिर्विश्वे देवाश्च अभिरक्षन्तु, तेभ्यः स्वाहा सुहुतमस्तु।

'मा ते गृहेषु निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु। मा त्वं रुदत्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा॥'— हे कन्ये, ते तव गृहेषु निशि रात्रौ घोषः आक्रन्दरूपः शब्दः मा उत्थात् मोत्तिष्ठतु। किंच त्वदन्यत्र त्वद्भिन्नानां त्वत्सपत्नानां गृहेषु रुदत्यः स्त्रियः संविशन्तु स्वपन्तु। किंच त्वं रुदती रोदनं कुर्वाणा सती उरः वक्षःस्थलं माऽऽवधिष्ठाः, मा त्वमुरोघातं रोदिष्यसीत्यर्थः। तथा जीवपत्नी सभर्तृका त्वं सुमनस्यमानां सुप्रसन्नां प्रजां संततिं पश्यन्ती सती पतिलोके पतिगृहे विराज शोभस्व। इदमग्नये* स्वाहा सुहुतमस्तु।

'अप्रजस्यं पौत्रमर्त्यं पाप्मानमुत वा अघम्। शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा॥'

---

† अयं छान्दोग्यमन्त्रब्राह्मणपुस्तकपाठः। अयमेव च भाष्यकृता गुणविष्णुना सायणाचार्येण च स्वीकृतः। 'स्तनं धयतस्ते' इति हिरण्यकेशिगृह्यसूत्रपाठ एव साममन्त्रब्राह्मणीयत्वेन ब्लूमफील्डमहाशयेन संगृहीतः। 'स्तनंधयस्ते' इति मृदुलाभिमतः पाठः, 'अत्र शसः सुः' इति मृदुलाकृता टिप्पणीदानात्।

* पूर्वमन्त्रत्रयस्य या अग्न्यादयो देवतास्ताः सर्वा अस्य उत्तरस्य च मन्त्रस्य देवता इति सायणगुणविष्णुभ्यामुक्तत्वात् 'इदमग्न्यादिभ्यः' इति वक्तुमुचितम्। एवमुत्तरस्मिन्मन्त्रव्याख्यानेऽपि।

—हे कन्यके, त्वदीयम् अप्रजस्यम् अप्रजास्त्वं वन्ध्यात्वम्, पौत्रमर्त्यं पुत्रसंबन्धिमरणम्, पाप्मानं मरणं त्वदीयम्, उत वा अथवा अघं दुःखम्, एतत्सर्वं शीर्ष्णः मूर्ध्नः सकाशात् स्रजमिव मालामिव उन्मुच्य ऊर्ध्वं त्वत्तोऽपसार्य पृथक्कृत्य पाशं मृत्युपाशभूतमेतत्सर्वं ते द्विषद्भ्यः शत्रुभ्यः तानुद्दिश्य प्रतिमुञ्चामि तद्गलेषु स्थापयामि। इदमग्नये स्वाहा सुहुतमस्तु। अत्र 'सर्वे विधयश्छन्दसि विकल्पन्ते' इति नियमात् 'वा अघम्' इत्यत्र संध्यभाव आर्षः, अविवक्षया वा।

'परैतु मृत्युरमृतं म आगाद्वैवस्वतो नो अभयं कृणोतु। परं मृत्यो अनुपरेहि पन्थां यत्र नो अन्य इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् स्वाहा॥' — कन्यकैवाऽऽशास्ते — मृत्युः मरणम्। मत्तः परैतु दूरं गच्छतु। अमृतम् अमरणम्। मे मम आगात् आगच्छतु। तथा वैवस्वतः यमः नः अस्माकम् अभयं भयाभावं कृणोतु करोतु। एवं परोक्षमुक्त्वा। प्रत्यक्षीकृत्य मृत्युरेवाभ्यर्थ्यते— हे मृत्यो, मत्तः परम् अन्यं पन्थां पन्थानम् अनुपरेहि कमप्यनुगत्यापसर। यत्र नः अस्माकम् अन्यः परः शत्रुरस्ति। कोऽसौ पन्थाः? देवयानात् देवपथात् इतरः अन्यः पितृपथः, यत्र गत्वा पुनरावर्तते मृत्युवशमापन्नः। किंच चक्षुष्मते शृण्वते ते तुभ्यं ब्रवीमि प्रार्थये, यत् नः अस्माकं प्रजां संततिम्, उत अपि च वीरान् विक्रान्तान् पुरुषान् पतिपुत्रादीन् मा रीरिषः मा हिंसीः। तस्मै मृत्यवे स्वाहा सुहुतमस्तु। अत्र 'प्रकृत्याऽन्तः पादमव्यपरे' (पासू. ६।१।११५) इति 'नो' इत्यस्य प्रकृतिभावात् पूर्वरूपाभावः।
मृदुला.

**[1]महाव्याहृतिभिश्च पृथक्॥**

(१) महाव्याहृतिभिः 'भूर्भुवः स्वः' इति तिसृभिः प्रत्येकमाज्याहुतीर्जुहुयात्। संत. ८९७

(१) गोगृ. २।१।२५; संत. ८७६, ८९७, ९२४ (च०).

(२) महाव्याहृतिभिः भूरादिभिस्तिसृभिः। पृथक् प्रत्येकम्। क्रियानुषङ्गार्थश्चकारः। मृदुला.

**[1]समस्ताभिश्चतुर्थीम्॥**

(१) 'महाव्याहृतिभिः पृथक् समस्ताभिश्चतुर्थीम्' इति गोभिलसूत्रेण यथा पाणिग्रहणे चतस्रस्तथा चूडादिषु संस्काररूपेषु पूर्वं पश्चाच्चतस्रश्चतस्रः महाव्याहृत्याहुतयः स्युरिति। संत. ८७६

(२) 'भूर्भुवः स्वः स्वाहा' इति समस्ताभिः चतुर्थीमाहुतिं जुहुयात्। होमस्य खलु अस्य आज्यहविष्कतयाऽऽज्यतन्त्रविहितो महाव्याहृतिहोमः पुरस्तादपि भवति। आज्यभागौ स्विष्टकृच्च न भवन्ति। परं तास्तिस्र एवाऽऽज्यतन्त्रोपक्रमविहिताः पुरस्तात्, परस्तात् तु चतस्रः, इदानीमेव तथोपदेशादिति बोध्यम्।
मृदुला.

लाजहोमः, अश्मारोपणम्, परिणयनम्

**[2]हुत्वोपोत्तिष्ठतः॥**

(१) हवनानन्तरम् उपेत्याञ्जलिं बद्ध्वा वधूवरावुपति(? वुत्ति)ष्ठतः। अंशस्पर्शनात् कन्याया होमानुकूलचेष्टावत्त्वात् समानकर्तृकत्वेन क्त्वा। संत. ८९७

(२) उपेति संहतहस्तत्वमुच्यते। हुत्वा संहतहस्तौ दम्पती उत्तिष्ठतः। मुरारिमिश्रास्तु— 'उप अग्निसमीपे। होमानन्तरमेवाग्निसमीपे दम्पती उत्तिष्ठतः' इति व्याचख्यौ। अत्रानन्तरमेवेत्यनेनाऽऽनन्तर्यमात्रं क्त्वार्थः, न तु समानकर्तृकत्वमपीत्युच्यते। दृश्यते चासमानकर्तृकेऽपि कर्मणि क्त्वाश्रुतिः 'आज्याहुतिं हुत्वा मुख्यं धनं दद्यात्' इत्येवमादौ बहुलम्। अत्र खलु ऋत्विग्जुहोति, यजमानो ददाति। होमं कुर्वाणस्य पत्युः अंशमन्वारभमाणा वधूरपि कयाचिद्विवक्षया होमानुकूलचेष्टावती भवति इत्यस्ति समानकर्तृ(क)त्वमिति तत्त्वकारः। केचित्तु उपेत्याञ्जलिं बद्ध्वेत्याहुः। मृदुला.

(१) गोगृ. २।१।२६; संत. ८७६, ८९७, ९२४.

(२) गोगृ. २।२।१; संत. ८९७ (हुत्वोपेत्य अवतिष्ठतः).

( १ ) अन्वारब्धायाः इति कर्तरि क्तः । सप्तम्यर्थे षष्ठी । तेन पत्युर्दक्षिणस्कन्धं दक्षिणहस्तेनान्वारब्धायां संलग्नायां सत्याम् ' अग्निरेतु ' इत्यादिषड्भिर्मन्त्रैः षडाज्याहुतीर्जुहोति वरः । संत. ८९७

( २ ) अन्वारब्धाया इति वर्तमाने कर्तरि निष्ठा ( पासू. ३।४।७२ ) । षष्ठी चेयं संबन्धार्था । अन्वारम्भणं स्पर्शः । तथा चायमर्थः– पत्युर्दक्षिणांसं दक्षिणहस्तेन स्पृशन्त्यां वध्वाम् ' अग्निरेतु ' इत्यादिषड्भिर्मन्त्रैः पतिः षडाज्याहुतीर्जुहुयादिति । मन्त्रो यथा– ' अग्निरेतु प्रथमो देवताभ्यः सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् स्वाहा ॥ ' । अस्यार्थः– अस्मिन् प्रस्तुते कर्मणि पूज्यमानाभ्यो देवताभ्यः ता अपेक्ष्य प्रथमः मुख्यः अग्निः एतु आगच्छतु । आगत्य च सः अग्निः अस्यै अस्याः । षष्ठ्यर्थे चतुर्थी । प्रजां भाविनीं मृत्युपाशात् मुञ्चतु मोचयतु । तत् एतन्मृत्युपाशविमोचनमग्नेः अयं राजा अधिपतिरपां वरुणः तदाख्यो देवः अनुमन्यताम् अनुजानातु । यथा येनानुज्ञानेन प्रकारेण वा भगवतः शुभानुध्यानेन वा इयं स्त्री भूता सती पौत्रं पुत्रभवं तत्संबन्धि अघं दुःखं यमबन्धनात् । ' दुःखैघव्यसनेष्वघम् ' इत्यमरः । प्राप्य इति शेषः । न रोदात् न रुद्यात् । ताभ्यामग्निवरुणां स्वाहा सुहुतमस्तु ।

' इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै जरदष्टिं कृणोतु । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि विबुध्यतामियं स्वाहा ॥ '– गार्हपत्यः तदाख्यः अग्निः योऽसौ भाव्यः, इमां कन्याम् अग्निहोत्रिणीं कृत्वा त्रायतां पालयतु । किंच अस्यै अस्याः । पूर्ववच्चतुर्थी षष्ठ्यर्थे । प्रजां संततिं जरदष्टिं जराव्यापिनीं चिरस्थायिनीं कृणोतु करोतु । ' कृवि हिंसाकरणयोश्च ' ( भ्वा. प. ) इत्यस्य लोटि रूपम् । किंच अशून्योपस्था नित्यं सुतपूर्णोत्सङ्गा भर्तुः संगता वा सती जीवतां दीर्घायुषां माता जनयित्री अस्तु भवतु । अतः इयं पौत्रं पुत्रसंबन्धिनम् आनन्दं सुखम् अभि अधिगत्य विबुध्यतां विविधं सुखमनुभवतु । तस्मै अग्नये स्वाहा सुहुतमस्तु ।

' द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनंधयांस्ते † पुत्रान् सविताऽभिरक्षतु । आ वाससः परिधानाद् बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात् स्वाहा ॥ '– हे कन्ये द्यौः द्युलोकाभिमानी( ? निनी ) देवता सूर्यः ते तव पृष्ठं रक्षतु । वायुरश्विनौ च ऊरू रक्षन्त्विति वचनविपरिणामेनान्वयः । किंच स्तनंधयः स्तनाधारान् ते तव पुत्रान् सविता आदित्यः आ वाससः परिधानात् वासःपरिधानयोग्यावस्थातः प्राक् अभिरक्षतु, ततः पश्चात् बृहस्पतिर्विश्वे देवाश्च अभिरक्षन्तु, तेभ्यः स्वाहा सुहुतमस्तु ।

' मा ते गृहेषु निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं रुदत्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा ॥ '– हे कन्ये, ते तव गृहेषु निशि रात्रौ घोषः आक्रन्दरूपः शब्दः मा उत्थात् मोत्तिष्ठतु । किंच त्वदन्यत्र त्वद्भिन्नानां त्वत्सपत्नानां गृहेषु रुदत्यः स्त्रियः संविशन्तु स्वपन्तु । किंच त्वं रुदती रोदनं कुर्वाणा सती उरः वक्षःस्थलं माऽऽवधिष्ठाः, मा त्वमुरोघातं रोदिष्यसीत्यर्थः । तथा जीवपत्नी सभर्तृका त्वं सुमनस्यमानां सुप्रसन्नां प्रजां संततिं पश्यन्ती सती पतिलोके पतिगृहे विराज शोभस्व । इदमग्नये * स्वाहा सुहुतमस्तु ।

' अप्रजस्यं पौत्रमर्त्यं पाप्मानमुत वा अघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा ॥ '

† अयं छान्दोग्यमन्त्रब्राह्मणपुस्तकपाठः । अयमेव च भाष्यकृता गुणविष्णुना सायणाचार्येण च स्वीकृतः । ' स्तनंधयतस्ते ' इति हिरण्यकेशिगृह्यसूत्रपाठ एव साममन्त्रब्राह्मणीयत्वेन ब्लूमफील्डमहाशयेन संगृहीतः । ' स्तनंधयस्ते ' इति मृदुलाभिमतः पाठः, ' अत्र शसः सुः ' इति मृदुलाकृता टिप्पणीदानात् ।

* पूर्वमन्त्रत्रयस्य या अग्न्यादयो देवतास्ताः सर्वा अस्य उत्तरस्य च मन्त्रस्य देवता इति सायणगुणविष्णुभ्यामुक्तत्वात् ' इदमग्न्यादिभ्यः ' इति वक्तुमुचितम् । एवमुत्तरस्मिन्मन्त्रव्याख्यानेऽपि ।

–हे कन्यके, त्वदीयम् अप्रजस्यम् अप्रजास्त्वं वन्ध्यात्वम्, पौत्रमर्त्यं पुत्रसंबन्धिमरणम्, पाप्मानं मरणं त्वदीयम्, उत वा अथवा अघं दुःखम्, एतत्सर्वं शीर्ष्णः मूर्ध्नः सकाशात् स्रजमिव मालामिव उन्मुच्य ऊर्ध्वं त्वत्तोऽपसार्य पृथक्कृत्य पाशं मृत्युपाशभूतमेतत्सर्वं ते द्विषद्भ्यः शत्रुभ्यः तानुद्दिश्य प्रतिमुञ्चामि तद्गलेषु स्थापयामि। इदमग्नये स्वाहा सुहुतमस्तु। अत्र 'सर्वे विधयश्छन्दसि विकल्पन्ते' इति नियमात् 'वा अघम्' इत्यत्र संध्यभाव आर्षः, अविवक्षया वा।

'परैतु मृत्युरमृतं म आगाद्वैवस्वतो नो अभयं कृणोतु। परं मृत्यो अनुपरेहि पन्थां यत्र नो अन्य इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् स्वाहा॥'– कन्यकैवाऽऽशास्ते – मृत्युः मरणम्। मत्तः परैतु दूरं गच्छतु। अमृतम् अमरणम्। मे मम आगात् आगच्छतु। तथा वैवस्वतः यमः नः अस्माकम् अभयं भयाभावं कृणोतु करोतु। एवं परोक्षमुक्त्वा। प्रत्यक्षीकृत्य मृत्युरेवाभ्यर्थ्यते– हे मृत्यो, मत्तः परम् अन्यं पन्थां पन्थानम् अनुपरेहि कमप्यनुगत्यापसर। यत्र नः अस्माकम् अन्यः परः शत्रुरस्ति। कोऽसौ पन्थाः? देवयानात् देवपथात् इतरः अन्यः पितृपथः, यत्र गत्वा पुनरावर्तते मृत्युवशमापन्नः। किंच चक्षुष्मते शृण्वते ते तुभ्यं ब्रवीमि प्रार्थये, यत् नः अस्माकं प्रजां संततिम्, उत अपि च वीरान् विक्रान्तान् पुरुषान् पतिपुत्रादीन् मा रीरिषः मा हिंसीः। तस्मै मृत्यवे स्वाहा सुहुतमस्तु। अत्र 'प्रकृत्याऽन्तः पादमव्यपरे' (पासू. ६।१।११५) इति 'नो' इत्यस्य प्रकृतिभावात् पूर्वरूपाभावः। मृदुला.

**[1]महाव्याहृतिभिश्च पृथक्॥**

(१) महाव्याहृतिभिः 'भूर्भुवः स्वः' इति तिसृभिः प्रत्येकमाज्याहुतीर्जुहुयात्। संत. ८९७

(२) महाव्याहृतिभिः भूरादिभिस्तिसृभिः। पृथक् प्रत्येकम्। क्रियानुषङ्गार्थश्चकारः। मृदुला.

**[1]समस्ताभिश्चतुर्थीम्॥**

(१) 'महाव्याहृतिभिः पृथक् समस्ताभिश्चतुर्थीम्' इति गोभिलसूत्रेण यथा पाणिग्रहणे चतस्रस्तथा चूडादिषु संस्काररूपेषु पूर्वं पश्चाच्चतस्रश्चतस्रः महाव्याहृत्याहुतयः स्युरिति। संत. ८७६

(२) 'भूर्भुवः स्वः स्वाहा' इति समस्ताभिः चतुर्थीमाहुतिं जुहुयात्। होमस्य खलु अस्य आज्यहविष्कतयाऽऽज्यतन्त्रविहितो महाव्याहृतिहोमः पुरस्तादपि भवति। आज्यभागौ स्विष्टकृच्च न भवन्ति। परं तास्तिस्र एवाऽऽज्यतन्त्रोपक्रमविहिताः पुरस्तात्, परस्तात् तु चतस्रः, इदानीमेव तथोपदेशादिति बोध्यम्। मृदुला.

लाजहोमः, अश्मारोपणम्, परिणयनम्

**[2]हुत्वोपोत्तिष्ठतः॥**

(१) हवनानन्तरम् उपेत्याञ्जलिं बद्ध्वा वधूवरावुपति(? त्ति)ष्ठतः। अंशस्पर्शनात् कन्याया होमानुकूलचेष्टावत्त्वात् समानकर्तृकत्वेन क्त्वा। संत. ८९७

(२) उपेति संहतहस्तत्वमुच्यते। हुत्वा संहतहस्तौ दम्पती उत्तिष्ठतः। मुरारिमिश्रास्तु– 'उप अग्निसमीपे। होमानन्तरमेवाग्निसमीपे दम्पती उत्तिष्ठतः' इति व्याचख्यौ। अत्रानन्तरमेवेत्यनेनाऽऽनन्तर्यमात्रं क्त्वार्थः, न तु समानकर्तृकत्वमपीत्युच्यते। दृश्यते चासमानकर्तृकेऽपि कर्मणि क्त्वाश्रुतिः 'आज्याहुतिं हुत्वा मुख्यं धनं दद्यात्' इत्येवमादौ बहुलम्। अत्र खलु ऋत्विग्जुहोति, यजमानो ददाति। होमं कुर्वाणस्य पत्युः अंसमन्वारभमाणा वधूरपि कयाचिद्विवक्षया होमानुकूलचेष्टावती भवति इत्यस्ति समानकर्तृ(क)त्वमिति तत्त्वकारः। केचित्तु उपेत्याञ्जलिं बद्ध्वेत्याहुः। मृदुला.

---

(१) गोगृ. २।१।२५; संत. ८७६, ८९७, ९२४ (च०).

(१) गोगृ. २।१।२६; संत. ८७६, ८९७, ९२४.

(२) गोगृ. २।२।१; संत. ८९७ (हुत्वोपेत्य अवतिष्ठतः).

**[1]अनुपृष्ठं पतिः परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते वध्वञ्जलिं गृहीत्वा ॥**

( १ ) अनुपृष्ठं पृष्ठं लक्षीकृत्य परिक्रम्य गत्वा, तेन कन्यायाः पश्चाद्वर्त्मना तस्या दक्षिणं गत्वा वध्वञ्जलिं दक्षिणहस्तेन गृहीत्वा उदङ्मुखोऽवतिष्ठेत । एषोऽञ्जलिः ग्रहणपर्यन्तं स्थास्यति । एतेन कन्यायाः प्राङ्मुखत्वमायाति । ततश्चाञ्जल्यालभनानन्तरं पाणिग्रहणपर्यन्तं कन्यालभनं पतिर्न त्यजेत् । तथा च भट्टभाष्यधृतं गृह्यान्तरम् — 'हुत्वाऽऽज्यमथ जायाया अन्वारभ्याञ्जलिं पतिः । न विमुञ्चेदनापत्सु यावत् पाणिग्रहो जपः ॥' इति । ‡ संत. ८९७

( २ ) वध्वञ्जलिं गृहीत्वा इत्यत्र स्वेन अञ्जलिना इति भट्टनारायणादयो व्याचख्युः । रघुनन्दनस्तु वध्वञ्जलिं दक्षिणेन पाणिना गृहीत्वा इति व्याचख्यौ । * संदी. ३४ ( भागः २ )

**[2]पूर्वा माता लाजानादाय भ्राता वा वधूमाक्रामयेदश्मानं दक्षिणेन प्रपदेन ॥**

( १ ) पूर्वदेशस्था या वध्वा एव माता तथैव भ्राता अन्यो वा ब्राह्मणः प्रागासादितान् लाजान् सूर्पस्थान् गृहीत्वा वधूं दृशत्पुत्रं दक्षिणपदाग्रेण क्रामयेत् । संत. ८९८

( २ ) पूर्वा पूर्वदिगवस्थिता माता, प्रकृतत्वाद्वध्वाः, भ्राता वा तस्या एव पूर्वदिगवस्थित एव सव्यहस्तेन लाजानादाय लाजपूर्णं शूर्पं कृत्वा आदाय दक्षिणहस्तेन वधूं दक्षिणेन प्रपदेन पादाग्रेण अश्मानं शिलापुत्रकमाक्रामयेत् । केचित्तु पूर्वा बह्वीनां मातॄणां प्रथमेति व्याचक्षते, तन्न, मातृबहुत्वस्यासार्वत्रिकत्वात् । मृदुला.

**पाणिग्राहो जपति— 'इममश्मानमारोह' इति[1]।**

( १ ) तदाक्रमणकाले 'इममश्मानमारोह' इति वरो जपेत् । संत. ८९८

( २ ) स्पष्टार्थम् । मन्त्रस्तु— 'इममश्मानमारोहाश्मेव त्वं स्थिरा भव । द्विषन्तमपबाधस्व मा च त्वं द्विषतामधः ॥' इति । अस्यार्थः— हे कन्यके, त्वम् इमं पुरःस्थम् अश्मानं दृषत्पुत्रम् आरोह आक्राम । किंच अश्मेव पाषाणवत् त्वं स्थिरा भव । ततश्च द्विषन्तं शत्रुम् अपबाधस्व नितान्तं पीडय । त्वं च द्विषताम् अधः पादतले मा भूरिति शेषः । मृदुला.

**[1]सकृत्संगृहीतं लाजानामञ्जलिं भ्राता वध्वञ्जलावावपति ॥**

एकवारमविक्षेपेण सम्यग्गृहीतं लाजाञ्जलिं वध्वञ्जलौ । 'उपस्तीर्णाभिघारितम्' इति सिद्धये उपस्तरणाय वरो घृतस्रुवं वध्वञ्जलौ ददातीति । ततो वध्वा माता भ्राताऽन्यो वा ब्राह्मणो लाजान् ददाति । तदुपर्यभिघारणाय घृतस्रुवद्वयं ददाति वरः । इति चतुरावर्तपक्षे ( ? चतुरवत्तपक्षे ) । भृगुगोत्रो भार्गवप्रवरश्चेत्तदा पञ्चावर्ताय( ? पञ्चावत्तार्थे ) उपस्तरणे घृतस्रुवद्वयमिति विशेषः । * संत. ८९८

**[2]तं सोपस्तीर्णाभिघारितमग्नौ जुहोत्यविच्छिन्दत्यञ्जलिम्— 'इयं नार्युपब्रूते' इति ॥**

( १ ) एवमुपस्तीर्णाभिघारितं लाजाञ्जलिं भेदमकुर्वती वरेण इयमिति मन्त्रलिङ्गात् 'इयं नार्युपब्रूते' इति पठिते वधूः सुसमिद्धेऽग्नौ जुहुयात् । संत. ८९८

( २ ) तं लाजाञ्जलिम् । सा वधूः । उपस्तीर्णाभिघारितम् । अञ्जलावाज्यं सिक्त्वा लाजान् निःक्षिप्य पुनराज्येनाभिघारितमित्यर्थः । अविच्छिन्दत्यञ्जलिम् । वराञ्जलेर्विच्छेदमकुर्वती । होमप्रकारः शाखान्तरे पठ्यते— 'अङ्गुल्यग्रैर्न होतव्यं तथा चाञ्जलिभेदतः । अञ्जलीवामपार्श्वेन लाजहोमो विधीयते ॥' इति । अत्र होमे

---

‡ मृदुला. संतवत् ।

* शेषं संतगतम् ।

( १ ) गोगृ. २।२।२ ; संत. ८९७ ; संदी. ३३ ( भागः २ ).

( २ ) गोगृ. २।२।३-४ ; संत. ८९८.

(१) गोगृ. २।२।४ ; संत. ८९८ ; संदी. ३४ ( भागः २ ).

* मृदुला. संतगता ।

( १ ) गोगृ. २।२।५ ; संत. ८९८ लाजानाम् (लाजा).

( २ ) गोगृ. २।२।६-८ ; संत. ८९८.

मन्त्रमाह– इयमिति । अत्र भाष्यकारः– " अनेन वरपठितेन मन्त्रेणेत्यर्थः, ' इयम् ' इति मन्त्रलिङ्गात् । ' अर्धो ह वा एष आत्मनो यज्जाया नाम ' इति वाजसनेये ब्राह्मणे पठ्यते । अतः शरीरार्धेन चेत्क्रियते तर्हि स्वयमेव क्रियते " इत्येवमभिधाय ' विवाहे यो विधिः प्रोक्तो मन्त्रा दाम्पत्यवाचकाः । वरस्तु तान् जपेत्सर्वानृत्विग्राजन्यवैश्ययोः ॥ ' इति गृह्यासंग्रहवचनं प्रमाणयति । वस्तुतस्तु– सूत्राद्धोममन्त्रपाठयोर्लाघवेनौत्सर्गिकसमानकर्तृकत्वलाभात् ' इयं मद्रूपा नारी ' इत्यर्थकतया मन्त्रलिङ्गोपपत्तेश्च वधूकर्तृक एव मन्त्रपाठोऽपि । न च– स्मृतेः श्रुत्यबाधकत्वान्मन्त्रस्या-(? स्य ना)र्थान्तरकरणम्, किंतु सूत्रं ह्येकदेशकीर्तनम्, अतस्तत्रैव शेषादिपूरणमत्रश्यं कर्तव्यम्, मन्त्रलिङ्गादिति–वाच्यम् । वरपठनीयत्वेऽपि ' दीर्घायुरस्तु मे पतिः ' इत्यादिमन्त्रलिङ्गस्य परिहर्तुमशक्यत्वात् । न च तत्र वरस्यानुवादकत्वम्, वध्वाः( ? ध्वा ) पूर्वमनुक्तत्वादिति । एवं च सकलमैथिलाचारोऽपि संगच्छते । पद्धतिरप्येवम् । लिखितवाक्यं विशेषविध्यबोधितपरम्, अतो न विरोध इति मुरारिमिश्राः प्राहुः ।

मन्त्रो यथा– ' इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पतिः शतं वर्षाणि जीवत्वेधन्तां ज्ञातयो मम स्वाहा ॥ ' इति । अस्यार्थः– पतिर्ब्रवीति*– इयं नारी स्त्री उपेत्याग्निं ब्रूते प्रार्थयते । किं कुर्वती ? अग्नौ लाजान् भृष्टधान्यान्( ? न्यानि ) आवपन्ती मर्यादया क्षिपन्ती । किम् ? मे मम पतिः भर्ता दीर्घायुरस्तु । तदेव विवृणोति– शतं वर्षाणि जीवतु इति । किं च मम ज्ञातयः बान्धवाः एधन्तां वर्धन्तां धनधान्यपुत्रादिभिः । इदं चास्मा अग्नये स्वाहा सुहुतमस्तु । मृदुला.

**' अर्यमणं नु देवम्, पूषणम् ' इत्युत्तरयोः ॥**

( १ ) उत्तरयोः तथाविधयोर्लाजहोमयोः ' अर्यमणं नु देवम्, पूषणं नु देवम् ' इत्येतौ मन्त्रौ यथासंख्यं नियोक्तव्यौ । संत. ८९८

* इदं पूर्वकृतपराक्रमेण विरुद्धम्, ' वधूर्ब्रवीति ' इति तदनुगुणम् ।

( २ ) ' अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातु माऽमुतः स्वाहा ॥ ' इति । अस्यार्थः– नुशब्दोऽत्र चार्थे । कन्याः कन्य्यः अर्यमणं तदाख्यं देवम् अभिमतदानादिगुणयुक्तम्, अग्निं च अयक्षत इष्टवत्यः पूजितवत्यः । स च अर्यमा अग्निश्च इष्टः सन् इमां कन्यां परिणीयमानाम् इतः पितृकुलात् प्रमुञ्चातु प्रमुञ्चतु प्रमोचयतु । मा न अमुतः अमुष्मात् पतिकुलात् । तदेतत् ताभ्यां स्वाहा सुहुतमस्तु । अत्र ' पूर्वार्धेन ( सामान्योपक्रमः, उत्तरार्धेन ) विशेषोपसंहारः ' इति गुणविष्णुः । मुञ्चातु इति दीर्घश्छान्दसः । अन्तर्भावितण्यर्थश्च । एवमग्रेऽपि ।

' पूषणं नु देवं कन्या अग्निमयक्षत । स इमां देवः पूषा प्रेतो मुञ्चातु माऽमुतः† स्वाहा ॥ ' इति । अर्थः प्राग्वत् । अत्र ' पतेरिति पतिशब्दो न मुख्यार्थकः, लाजहोमकर्मण आ समाप्तेस्तथात्वाभावात् ' इति गुणविष्णुः । * मृदुला.

**हुते पतिर्यथेतं परिक्रम्य प्रदक्षिणमग्निं परिणयति मन्त्रवान् वा ब्राह्मणः ' कन्यला पितृभ्यः ' इति ॥**

( १ ) हुते लाजाञ्जलौ मन्त्रवान् ब्राह्मणः पतिर्यथा पूर्वम् इतं गतं तथैव परिक्रम्य वध्वाः पश्चिमेन प्रत्यावृत्य प्रदक्षिणं यथा स्यात्तथा, ' यती ' इति मन्त्रलिङ्गात् ' कन्यला पितृभ्यः ' इति मन्त्रं पठन् वधूमग्निं परिणयति परि सर्वतोभावेन नयेत्, प्रदक्षिणं कारयेदित्यर्थः । यत्तु सरलायां पत्युरशक्तौ अधीतवेदोऽन्यो वा परिणयतीत्युक्तं तन्मन्त्रलिङ्गविरोधाद्व्यवहारापरिगृहीतत्वाच्च हेयम् । अत्राग्निप्रदक्षिणे लाजादीनां प्रदक्षिणमाह भट्टभाष्यधृता स्मृतिः– ' लाजानाज्यं स्रुवं कुम्भं प्राजना-

† अयं मन्त्रब्राह्मणपाठः, ' मा पतेः ' इति मृदुलाभिमतः । ' सर्वं पूर्वेण समानम् ' एतावन्मात्रं गुणविष्णुभाष्यमस्मत्पुस्तके, न मृदुलानूदितम् ।

* शेषं संतवत् ।

श्मानमेव च । प्रदक्षिणानि कुर्यातां दम्पती न विनाऽग्नि-कम् ॥ ' । संत. ८९८

( २ ) मन्त्रो यथा— ' कन्यला पितृभ्यः पतिलोकं यतीयमप दीक्षामयष्ट । कन्या उत त्वया वयं धारा उदन्या इवातिगाहेमहि द्विषः ॥ ' इति । अस्यार्थः —इयं कन्यला कन्या पितृभ्यः पितृकुलात् पतिलोकं पतिगृहं यती गच्छन्ती अप दीक्षां दीक्षां वर्जयित्वा अयष्ट इष्टवती । दीक्षापदेनात्र वैवाहिकं व्रतमुच्यते । उत अपि च । कन्या हे कन्ये, त्वया सहिता वयं द्विषः शत्रून् कामादीन् अतिगाहेमहि अतिक्रामेमहि । अत्र दृष्टान्तः— धाराः जलस्य सुशीतलाः कर्म्यः , उदन्याः पिपासाः कर्मभूता इव । ता यथा ताः शमयन्ति तद्वत् ।

' यतीयम् ' इति मन्त्रलिङ्गात् मन्त्रं पठन् परिणयतीति गम्यते । सोऽयं पतिरञ्जलिमविमुञ्चन्नेव पत्नीं परिणयतीत्यवोचाम । कस्यांचिदापदि पत्युरसामर्थ्ये अन्यो वा मन्त्रवान् अधीतवेदो ब्राह्मणः परिणयति । वाशब्दाजघन्योऽयं पक्ष आपत्सु समाद्रियते । अस्मिन्नपि पक्षे पतिरेव मन्त्रं पठति, ' त्वया वयं द्विषोऽतिगाहेमहि ' इति मन्त्रलिङ्गात् । अत्र चाग्निप्रदक्षिणे लाजादीनामपि प्रदक्षिणमुक्तं गृह्यासंग्रहे— ' लाजानाज्यं स्रुवं कुम्भं प्राजनाश्मानमेव च । प्रदक्षिणानि कुर्यातां दम्पती न विनाऽग्निकम् ॥ प्राजग्राहमुदग्राहं तथा ब्रह्माणमृत्विजम् । एतानि बाह्यतः कृत्वा शेषाणां तु प्रदक्षिणम् ॥ दक्षिणां दिशमाश्रित्य यमो मृत्युश्च तिष्ठतः । तयोः संरक्षणार्थाय तस्माद् ब्रह्मा बहिर्भवेत् ॥ ' इति । लाजादीनां प्रदक्षिणं कार्यम् , प्राजग्राहादीनां न कार्यमित्यर्थः । एवं चाग्निप्रदक्षिणकाले कलशः स्कन्धदेशादवतार्य शुचौ देशे स्थाप्यः , तेन तस्य प्रदक्षिणान्तर्भावः तद्धारकस्य बहिर्भावश्चोपपद्यते इति ध्येयम् । एवमन्यत्र । ‡ मृदुला.

**[१]परिणीता तथैवावतिष्ठते, तथाऽऽक्रामति, तथा जपति, तथाऽऽवपति, तथा जुहोति ॥**

परिणीता वधूस्तथैव अनुपृष्ठगमनेन भर्त्रा गृहीताञ्जलिका प्राङ्मुखी अवतिष्ठते । तथैव यथापूर्वं तेनैव प्रकारेणाऽऽक्रामति अश्मानं दक्षिणप्रपदेन । तथा जपति पाणिग्राहः ' इममश्मानम् ' इति । तथाऽऽवपति वध्वञ्जलौ सकृद्गृहीतलाजानामञ्जलिम् । तथा जुहोति उपस्तीर्णाभिघारितम् अविच्छिन्दत्यञ्जलिम् । * संत. ८९९

**[१]एवं त्रिः ॥**

( १ ) एवम् अनेन प्रकारेण त्रिकृत्वः । प्रथमेन सह त्रित्वम् , उत्तरयोरित्यनेन द्वयोरेव मन्त्रोपदेशात् । संत. ८९९

( २ ) एवम् उक्तप्रकारेण अनन्तरोक्तं सर्वं त्रिः वारत्रयं कर्तव्यमित्यर्थः । एवं च ' इममश्मानम् ' इति ' कन्यला पितृभ्यः ' इति च मन्त्रावावर्तनीयौ । तत्रोत्तरयोर्मन्त्रविशेषावुक्तावेवेति । मृदुला.

सप्तपदी

**[२]शूर्पेण शेषमग्नावोप्य प्रागुदीचीमभ्युत्क्रामयन्ति ' एकमिषे ' इति ॥**

**दक्षिणेन प्रक्रम्य सव्येनानुक्रामेत् ॥**
**' मा सव्येन दक्षिणमतिक्राम ' इति ब्रूयात् ॥**

( १ ) एवं सप्तपदाक्रमणे पाणिग्राहस्तथैवावतिष्ठते इति । सूर्पस्योत्तरार्धे घृतस्रुवं दत्त्वा तदुपरि लाजशेषं निधाय तदुपरि घृतस्रुवद्वयमिति चतुरावर्तपक्षे( ? चतुरवत्तपक्षे ) । पञ्चावर्तपक्षे( ? पञ्चावत्तपक्षे ) तु स्रुवद्वयोपरि लाजशेषदानमिति विशेषः । ततश्च ' अग्नये स्विष्टकृते स्वाहा ' इति सूर्पेण जुहुयात् । एतदनन्तरं सरलोक्तं वामदेव्यगानं न युक्तम् , प्रमाणानुपदेशात् । लाजक्षेपानन्तरं प्रागुदीचीं दिशमाभिमुख्येन दक्षिण-

---

‡ शेषं संतगतम् ।

( १ ) गोगृ. २।२।९ ; संत. ८९९.

* मृदुला. संतवत् ।

( १ ) गोगृ. २।२।१० ; संत. ८९९.

( २ ) गोगृ. २।२।११-१३ ; संत. ८९९ ( सूर्पेण शेषमग्नावावाप्य प्रागुदीचीमत्युत्क्रामन्त्येकमिष इति दक्षिणेन प्रक्रम्य सव्येनानुक्रामन्ती तां चाऽऽक्रममाणां पतिर्मा सव्येन दक्षिणमाक्रमेति ब्रूयात् ).

पादपुरःसरेण गच्छ, मा वामपुरःसरेण इत्युक्त्वा 'एकमिषे' इत्यादिसप्तभिर्मन्त्रैर्यथाक्रमं सप्तसु स्थानेषु (उत्क्रामयन्ति) वधूर्दक्षिणपादेन गत्वा तद्देशे वामपादेन न गच्छेत् । एवं षट्सु (? सप्तसु) स्थानेषु नयेज्जामाता । एतदनन्तरं 'सखा सप्तपदी' इत्यनेन प्रार्थनं भवदेवभट्टोक्तम् । गुणविष्णुनाऽपि लिखितो मन्त्रो व्याख्यातश्च । संत. ८९९–९००

(२) चतुर्थ्यां वेलायां शूर्पेण शूर्पकुष्टेन शेषं लाजशेषम् अग्नौ समिद्धे ओप्य प्रक्षिप्य शेषहोमं कृत्वाऽवस्थितां वधूं प्रागुदीचीमैशानीं दिशम् अभिवराभिमुखीम् उत्क्रामयन्ति दक्षिणपादाङ्गुष्ठमुन्नाम्य वामं चानुगमयन्ति 'एकमिषे' इत्येवमादिभिः सप्तभिर्मन्त्रावयवैः । प्रतिमन्त्रमेकैकः पादन्यास इत्यर्थः । बहुवचनादनियतः कर्ता । मन्त्रो यथा– 'एकमिषे विष्णुस्त्वा नयतु, द्वे ऊर्जे वि०, त्रीणि व्रताय वि०, चत्वारि मायोभवाय वि०, पञ्च पशुभ्यो वि०, षड्रायस्पोषाय वि०, सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वा नयतु ॥' । अस्यार्थः– 'हे कन्ये, विष्णुः विश्वव्यापको नारायणः त्वा त्वाम् इषे अन्नाद्यर्थलाभाय एकं पदम् आनयतु । एवम् ऊर्जे बललाभाय, व्रताय यज्ञकर्मणे, मायोभवाय सुखप्राप्तये, पशुभ्यः पशुप्राप्तये, रायस्पोषाय धनपुष्ट्यै, सप्तभ्यो होत्राभ्यः अच्छावाकादिभ्यः' इति ।

दक्षिणेन पादेन प्रक्रम्य गत्वा अनु पश्चात् सव्येन वामेन क्रामेत् गच्छेत् । क्रममाणा सव्यं पादमग्रतो न कुर्यात् इत्यर्थः । तां च क्रामन्तीं पतिः– मेति । अत्र पतिः वधूमिति शेषः । सव्येन वामेन दक्षिणं पादं माऽतिक्राम अग्रतो वामपादं मा कार्षीरित्येवं ब्रूयात् । अत्र 'सखा सप्तपदी भव' इति मन्त्रस्याऽऽशंसने पद्धतिकृता विनियोग उक्तः, युक्तश्च, तथा मन्त्रलिङ्गात् इति मुरारिमिश्राः शुभकर्मनिर्णये प्राहुः ।

मन्त्रो यथा– 'सखा सप्तपदी भव सख्यं ते गमेयम् । सख्यं ते मा जोषाः सख्यं ते मायोष्ठयाः ॥' इति । अस्यार्थः –पतिः कन्यां प्रार्थयते – हे कन्ये, त्वं मम सखा सखी सती सप्तपदी सप्तपदाक्रान्तेष्वर्थेषु सहचारिणी भव । अहं ते तव सख्यं मैत्रीं गमेयम्, तव सखा भवेयमित्यर्थः । किंच ते तव मया सह यत् सख्यं तत् अन्याः योषाः स्त्रियः ते सपत्न्यः मा छिन्दन्तु इति शेषः । किंच मायोष्ठयाः सुखकारिण्यः स्त्रियः ते त्वया सह सख्यं कुर्वन्तु इति शेषः । मृदुला.

ईक्षकानुमन्त्रणम्

**[1]ईक्षकान् प्रतिमन्त्रयेत 'सुमङ्गलीरियं वधूः' इति ॥**

(१) विवाहं द्रष्टुमागतान् 'सुमङ्गलीः' इति मन्त्रेण जामाता प्रार्थयेत् । संत. ९००

(२) ईक्षकान् वधूं प्रेक्षितुमागतान् । प्रतिमन्त्रणम् अनुमन्त्रणमित्यनर्थान्तरम् । तच्चात्र ईक्षकानवलोकयता कर्तव्यम्, योग्यत्वात् । तदाह कर्मप्रदीपः– 'स्पृशन्नानामिकाग्रेण क्वचिदालोकयन्नपि । अनुमन्त्रणीयं सर्वत्र सर्वदैवानुमन्त्रयेत् ॥' इति । मन्त्रो यथा– 'सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥' इति । अस्यार्थः– हे प्रेक्षकाः, इयं वधूः सुमङ्गलीः प्रशस्तमङ्गलवती परिणीता यतोऽतो यूयं समेत समागच्छत । समागत्य च इमां पश्यत । अथ अनन्तरमस्यै वध्वै सौभाग्यं सुभगात्वं दत्त्वाय दत्त्वा यूयमस्तं स्वगृहं विपरेतन विपरेत गच्छत । यद्वा– दत्त्वा याथ यात, न विपरेत विमुखतया न परा इत नापगच्छत, किंतु पुत्रादिमङ्गलमाशास्य पुनरागमनाय व्रजत इत्यर्थः । मृदुला.

वधूवराभिषेकः

**[2]अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्धदेशेऽवसिञ्चति तथेतरां 'समञ्जन्तु' इत्येतयर्चा ॥**

(१) औदकः गृहीतोदककुम्भः पूर्वस्थापितः, सोऽग्नेः प्रादक्षिण्येन पश्चादागत्य 'समञ्जन्तु' एतयर्चा मन्त्रलिङ्गाद्वरेण जप्यमानया 'मन्त्रान्ते कर्मादिसंनिपातः'

---

(१) गोगृ. २।२।१४ ; संत. ९०० येत (यते).

(२) गोगृ. २।२।१५–१७; संत. ९००.

इति न्यायात् मन्त्रान्तरमभि(?न्तेऽभि)षिञ्चेत् तथा तेनैव प्रकारेण, भेदोपादानेन इतरां वरेतरां वधूं पृथगभिषिञ्चेत् । इतरथा समस्ताभिधानं स्यात् । तथा च गृह्यसूत्रम्– 'भेदे मन्त्रावृत्तिरसंनिपातत्वात्'। एवमेव भट्टभाष्यम् । एतेन 'करणमन्त्रत्वात् कुम्भधारिणोऽयं पाठ्यः, न सिच्यमानस्य । नाविति तु युवयोरित्यर्थे छान्दसो व्यत्ययः' इति सरलोक्तम्, 'मन्त्रलिङ्गाद्वर एवाभिषिञ्चति' इति वीरेश्वरोक्तं च नोपादेयम्, व्यवहारविरोधात् । संत. ९००

(२) अपरेणाग्निम् अग्नेः पश्चिमया दिशा औदकः उदककलशधारी पुरुषः अनुसंव्रज्य संवृतगतिरेत्य, 'सप्तपदीस्थानम्' इति भवदेवभट्टः । पूर्वावस्थितः पाणिग्राहं वरं मूर्धदेशे शिरसि अवसिञ्चति कलशस्थाभिर्भुवाभिरद्भिः । तथा तेनैव प्रकारेण इतरां वधूमप्यभिषिञ्चतीत्यर्थः । तत्र मन्त्रमाह– 'समञ्जन्तु' इत्येतयर्चा वरपठितया, मन्त्रलिङ्गात् । नहि 'नौ आवयोर्हृदयानि समञ्जन्तु एकीकुर्वन्तु' इत्येतन्मन्त्रलिङ्गमौदकपठनीयत्वे संगच्छते, इति कौमुदी–नारायण–शूलपाणिप्रभृतयः । पद्धतिकृतस्तु अवसेचनमपि वरकर्तृकमेव लिखन्ति । तेषामयमाशयः– क्रियाकरणयोः समानकर्तृकत्वे संभवति भिन्नकर्तृकत्वं न युज्यत इति अवसेचनमपि वरकर्तृकमेव । न च सूत्रविरोधः, सूत्रं हि दिगुन्नायकम्, अतस्तत्र शेषादिकल्पनेनापि सर्वसामञ्जस्यात् । तथाहि– औदको गत्वा तिष्ठति, स्वं पाणिग्राहोऽवसिञ्चति । यद्वा औदकोऽवसेचयति तदनुकूलक्रियायाः प्रयोजको भवति । अवसेचने स्वतन्त्रः कर्ता वर एव, प्रकरणान्मन्त्रलिङ्गाच्चेति । होरिलोऽप्येवम् ।

मन्त्रो यथा– 'समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ । सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥' इति । अस्यार्थः– हे कन्यके, विश्वे सर्वे देवाः । यद्वा 'विश्वेदेवा दश स्मृताः' इत्यभिधानात् गणदेवताभेदाः । नौ आवयोः हृदयानि हृदये मनसी समञ्जन्तु शोधयन्तु अकलुषीकुर्वन्तु । आपः जलानि तदधिष्ठात्र्यो देवताः सं समञ्जन्तु, 'उपसर्गवलाद्योग्यक्रियाध्याहारः' इति नियमात् । एवमग्रेऽपि । अत्रापि कर्म ते (हृदये) एव । एवं मातरिश्वा वायुः सं दधातु । तथा धाता प्रजापतिः सं दधातु देष्ट्री धर्माद्युपदेष्ट्री वाग्देवता सं दधातु सुस्थिते करोतु । अत्र नौ इति पुनःप्रयोग आदरार्थः । उः पादपूरणः । यद्वा पलोप एवार्षः (पासू. ३।१।८५) इति । ऋगेषा पुरस्तादपि (२।१।१८ सूत्रे) उपात्ता पद्धतिक्रमेण । स एष पुनरुपन्यासोऽस्या वरस्थानेन कन्याभिमुखीकरणाय, येन पश्चाद्वरो नानुतपेत् । अत एवात्रापि कन्यावरयोः संमुखीकरणं पद्धतिषूक्तम् । § मृदुला.

पाणिग्रहणम्

**अवसिक्तायाः सव्येन पाणिनाऽञ्जलिमुपोद्गृह्य दक्षिणेन पाणिना दक्षिणं पाणिं साङ्गुष्ठमुत्तानं गृहीत्वैताः षट् पाणिग्रहणीया जपति 'गृभ्णामि ते' इति ॥**

(१) कन्यावसेचनस्य प्राक् प्राप्तत्वेनावसिक्ताया इति पुनरुपादानमवसेचनस्थानस्थाया एव हस्तग्रहणार्थम् । उप उद्गृह्य, उप सामीप्ये, तेन मणिबन्धसमीपे ग्रहणम् । अर्थाद्वामेन *, उत्तरतः साङ्गुष्ठदक्षिणस्य दक्षिणेन ग्रहणाभिधानात् । उद्गृह्य, अञ्जलिसकाशाद्दक्षिणपाणिं विच्छिद्य वध्वा उत्तानं साङ्गुष्ठं दक्षिणं पाणिं दक्षिणेन पाणिना गृहीत्वा 'गृभ्णामि ते' इत्यादिषड्ऋचः पतिर्जपति । साङ्गुष्ठमित्यनेन तर्जन्यादीनां ग्रहणम्, उत्तानमित्यनेन करस्य पृष्ठग्रहणं प्रतीयते । संत. ९००

(२) 'गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥' – हे कन्ये, ते तव हस्तं साङ्गुष्ठं करमहं गृभ्णामि गृह्णामि । यथा येन हस्तग्रहणप्रकारेण पत्या मया सह त्वं जरदष्टिः जरच्छरीरा आसः

---

§ शेषं संतवत् ।

* अस्यार्थस्य सूत्रे 'सव्येन' इत्युक्तत्वात् शाब्दत्वेन अर्थापत्तिबोध्यत्वं न संगच्छते । तस्मादियं रभसोक्तिरिति भाति ।

भवेः । हस्तग्रहणे कुतस्तवाधिकार इत्याकाङ्क्षायामाह– भग इत्यादयः देवाः त्वा त्वां मह्यम् अदुः दत्तवन्तः । किमर्थम् ? गार्हपत्याय गृहस्वामित्वाय, भाविगार्हस्थ्यं सेवितुं वा, गार्हपत्याग्निसेवार्थं वा । किंच सौभगत्वाय, सुभगानां समूहः सौभगम्, तस्य भावः सौभगत्वम्, तस्मै तदर्थम्, निरतिशयानन्दावाप्तये इत्यर्थः । यद्वा– किमर्थं हस्तं ते गृह्णामि ? सौभगत्वाय सुभगात्वाय सौभाग्याय । मया गृहीतहस्तायास्ते सुभगात्वं सुवासिनीत्वं भविष्यतीति स्वार्थेऽत्राण्प्रत्ययः ।

'अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्जीवसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥', अस्यार्थः– हे कन्यके, त्वमघोरचक्षुः सौम्यदृष्टिः अपापदृष्टिर्वा, अपतिघ्नी जीवभर्तृका च एधि भव एतस्मात् संस्कारात् । एवं पशुभ्यः गवादिभ्योऽस्मदाश्रितेभ्यः शिवा हितैषिणी भव । सुमनाः सुप्रसन्नचित्ता, सुवर्चाः उज्ज्वलरूपा वस्त्रालङ्कारादिभिः, वीरसूः सुपुत्रजननी, जीवसूः अमृतप्रजा, देवकामा देवानग्न्यादीन् कामयते अभिलष्यति परिचरणाय सा तथाभूता, यद्वा देवनं देवः क्रीडा, तत्कामा, स्योना सुखकरी त्वं नः अस्माकं द्विपदे भृत्यादिपोष्यवर्गाय, तथा चतुष्पदे पशुवर्गाय शं सुखहेतुर्भव इति ।

'आ नः प्रजां जनयतु प्रजापतिरा जरसाय समनक्त्वर्यमा । अदुर्मङ्गलीः पतिलोकमाविश शं नो भव द्विपदे शं चतुष्पदे ॥', अस्यार्थः – प्रजापतिः स्रष्टा ब्रह्मा नः अस्माकं प्रजां पुत्रपौत्रादिरूपां आ जनयतु समन्तात् उत्पादयतु आ जरसाय जरापर्यन्तम् । अथ अर्यमा देवः समनक्तु प्रकटगुणां करोतु तामेव प्रजाम् । हे कन्यके, मङ्गलीः मङ्गल्यो मङ्गलवत्यो देवताः त्वा त्वां मह्यम् अदुः दत्तवत्यः । सायणस्तु– 'अदुर्मङ्गलीः दुर्मङ्गलरहिता सुमङ्गलीः त्वम्' इति व्याचख्यौ (ऋसा. १०। ८५।४३)। अतस्त्वं पतिलोकं पतिगृहम् आविश प्राप्नुहि । अथ च नः अस्माकं द्विपदे चतुष्पदे च शं भवेत्युक्तार्थकम् ।

'इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृधि । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि ॥', अस्यार्थः– हे इन्द्र, त्वं मीढ्वः सेचकः निषेक्ता, रसाधिष्ठातृत्वात्, इमां वधूं सुपुत्रां शोभनपुत्रवतीं सुभगां सौभाग्यवतीं च कृधि कुरु । किंच अस्यां वध्वां दश दशसंख्याकान् पुत्रान् आधेहि गर्भीकुरु । पतिं भर्तारं चास्या माम् एकादशम् एकादशानां संख्यानां पूरकं कृधि कुरु । इति प्रार्थ्यते ।

'सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव । ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥', अस्यार्थः– हे कन्ये, त्वं श्वशुरे पत्युर्मम पितृविषये सम्राज्ञी प्रधानसुवासिनी भव । एवं श्वश्र्वां श्वश्रूविषये सम्राज्ञी उक्तवर्धिका* भव । आदरार्थे पुनर्वचनम् । तथा ननान्दरि पत्युर्मम भगिन्यां सम्राज्ञी भव । एवं देवृषु देवरेषु अधि अधीश्वरी सती सम्राज्ञी भव ।

'मम व्रते ते हृदयं दधातु मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यम् ॥', अस्यार्थः– हे कन्यके, बृहस्पतिः सुरगुरुः मेधाधिपतिः मम पत्युः व्रते परिचरणकर्मणि ते तव हृदयं मनः दधातु स्थापयतु । मम चित्तमनु मच्चित्तानुकूलं ते तव चित्तं मनः अस्तु भवतु । एकमनाः अनन्यचित्ता त्वं मम वाचं जुषस्व सेवस्व, हृष्टचित्ताऽऽदरेण कुरु । त्वा त्वां स मह्यं मदर्थमिमां प्रसादयितुं नियुनक्तु नियोजयतु । अन्तर्भावितण्यर्थो युजिरत्र ।

¶ मृदुला.

**ब्राह्मणकुले वधूद्वहनम्, वाग्यमः, होमः, ध्रुवादिदर्शनम्, अनुमन्त्रणम्, गुर्वभिवादनम्, वाग्विसर्गः, त्रिरात्रव्रतम्**

**समातासूद्वहन्ति ॥**

(१) समस्तासु( ? मातासु) पाणिग्रहणक्रियासु सतीषु ऐशान्यां दिश्यवस्थितं विद्यातपःसंयुक्तं ब्राह्मणकुलं

---

* अर्थपदार्थस्यान्यपदार्थकन्यया सहान्वयो बाधितः ।

¶ शेषं संतगतम् ।

वधूमुत्थाप्य नयेयुः , तदभावे स्थानान्तरस्थितम् , तदभावे वेद्यवस्थितम् । तथा च गृह्यान्तरम्— ' अथोत्तरविवाहः प्रागुदीच्यामन्यत्र वा ब्राह्मणकुले मन्त्रवति वेद्यां वा ' इति । भट्टभाष्येऽप्येवम् । $इदानीं तु गोभिलोक्तब्राह्मणगृहगमनाभावात् भवदेवेन तथा न लिखितम् , किंतु वेदिस्थब्राह्मणसमीपस्यापि(? सामीप्यस्यापि) शास्त्रार्थत्वात् सुकरत्वाच्च तत् कर्तुं युज्यते ।

संत. ९०१

( २ ) समाप्तासु पाणिग्रहणक्रियासु वरसहाया वधूं विद्यादिसंपन्नं ब्राह्मणकुलं यत्र तत्र उद्वहन्ति उद्वहेयुः नयेयुरित्यर्थः । तथा च गृह्यासंग्रहे— ' यत्र विद्या च वृत्तं च सत्यं धर्मः शमो दमः । अभिरूपः स विज्ञेयः स्वाश्रमे यो व्यवस्थितः ॥ ' इति । " अभिरूपः ' इत्यस्य स्थाने ' अभिवादे ' इति पठित्वा अभिवादे प्रशस्तक्रियायाम्, उपग्राह्य इति शेषः " इति चन्द्रकान्तभाष्ये व्याख्यातम् । तदेतदुत्तरसूत्राननुगुणम्, यदेतदुत्तरसूत्रमेव स्पष्टयिष्यति । अत्र ' समाप्तासु ' इत्यभिधानादत्रैव पाणिग्रहणक्रियायाः परिसमाप्तिः, अत्रैव च तन्त्रसमापनम् । दक्षिणा च गौरेव, उत्तरविवाहान्ते तथाऽभिधानात् ।

मृदुला.

**[१] *प्रागुदीच्यां दिशि यद्ब्राह्मणकुलमभिरूपम् ॥**

प्रागुदीच्याम् ऐशान्याम् । ब्राह्मणकुलं ब्राह्मणगृहम् । ' कुलं जनपदे गोत्रे सजातीयगणेष्वपि । भवने च तनौ क्लीबम् ' इति मेदिनी । अस्योत्तरेण संबन्धः । तपःस्वाध्यायव्रतादिभिरभिरूपं रमणीयम् । ' अभिरूपो बुधे रम्ये ' इति मेदिनी । अत्राऽऽभिरूप्यं ब्राह्मणकुलं विशिषदस्य गुणो भवति । स चेदुपादीयमानः प्रधानमुपरुणद्धि, गुणत्वमस्य नावकल्पते । गुणो हि प्रधानमुपकर्तुं व्याप्रियते, नैतदुपरोद्धुम् । अत एव वेद्यामेवान्ततः कर्म कर्तव्यम् , कर्मणः प्रधानत्वात् । तथा च गृह्यान्तरम्— ' अथोत्तरविवाहः प्रागुदीच्यामन्यत्र वा ब्राह्मणकुले मन्त्रवति वेद्यां वा ' इति । अस्मादप्यवगम्यते इतःप्रभृति उत्तरविवाहसमाख्यं कर्म इति ।

मृदुला.

**[१] अत्राग्निरुपसमाहितो भवति ॥**

( १ ) लक्षणं कृत्वा तत्र ब्राह्मणगृहे अग्न्यन्तरः स्थापितो( ? अग्न्यन्तरं स्थापितं ) भवति । तत्रैव वक्ष्यमाणं कर्म कुर्यात् । इदानीं तु तथाविधानाचरणात् वेद्यामेव पूर्वस्थापिताग्नेः पश्चात् कर्म कर्तव्यम्, न त्वग्न्यन्तरस्थापनम् । तथा च भट्टभाष्ये— वेद्यामेव चेत्तन्त्रेण स्यात् । ततश्च ' गणेष्वेकं परिसमूहनम् ' इति वचनात् प्रधानमेव तत् कुर्यादित्युक्तम् । संत. ९०१

( २ ) एवं च वेद्यां करणपक्षे एतस्यापि कर्मणोऽनन्तरमेव तन्त्रसमापनम् , न तु पाणिग्रहणकर्मणः परत एवेति बोध्यम् । ¶ मृदुला.

**[२] अपरेणाग्निमानडुहं रोहितं चर्म प्राग्ग्रीवमुत्तरलोमाऽऽस्तीर्णं भवति ॥**

( १ ) अग्नेः पश्चाद्दिशि रक्तं प्राग्ग्रीवं पूर्वशिरस्कं उपरिलोम वृषचर्म उपवेशनार्थमास्तृतं भवति । 'लोहिताभावेऽन्यवर्णमपि, चर्मणः प्राधान्यात् तस्य गुणत्वात् ' इति भट्टभाष्यम् । इदानीं तु ' यत्राधर्मश्चतुष्पादः स्याद्धर्मः पादविग्रहः । कामिनस्तमसाऽऽच्छन्ना जायन्ते यत्र मानवाः ॥ अहङ्कारगृहीताश्च प्रक्षीणस्नेहबान्धवाः । विप्राः शूद्रसमाचाराः सन्ति सर्वे कलौ युगे ॥ ' इति

$ अयं ग्रन्थो न संगच्छते । ' भवदेवेन ... , किंतु इदानीं ... वेदिस्थ ... ' इति ग्रन्थक्रमः सुयोजः ।

* संतव्याख्यानं पूर्वसूत्रव्याख्याने समाविष्टम् ।

( १ ) गोगृ. २।३।१ ; संत. ९००-९०१ ( यत् ० ).

¶ शेषं संतवत् ।

( १ ) गोगृ. २।३।२ ; संत. ९०१ अत्र ( तत्र ). पूर्वं संगृहीतसूत्रेषु ' अत्र ' इत्यस्य स्थाने ' तत्र ' इति पाठः , तथाऽन्यस्मिन् पुस्तकेऽपि । पूर्वस्मिन् सूत्रे ' यद्ब्राह्मणकुलम् ' इति यच्छब्दप्रयोगात् तेन चास्यैकवाक्यत्वात् यत्तदोर्नित्यसंबन्धात् ' तत्र ' इत्येव पाठः श्रेयान् ।

( २ ) गोगृ. २।३।३ ; संत. ९०१ रोहितं ( लोहितं ).

मत्स्यपुराणोक्तकलियुगस्वभावेन सम्यग्धर्माचरणरहितेनापि चर्मोपवेशनाद्यङ्गाभावेऽपि कर्मणः प्राधान्यादाज्यहोमादिकं क्रियते । संत. ९०१

(२) चर्म शुष्कम् । कर्तुरनियमः । *मृदुला.

¹तस्मिन्नेनां वाग्यतामुपवेशयन्ति ॥

तस्मिन् चर्मणि एनां वधूं वाग्यतां नियमितवचनां कृतमौनाम् उपवेशयन्ति य एव केचित्कन्यापक्षीयाः । मृदुला.

²सा खल्वास्त एवाऽऽनक्षत्रदर्शनात् ॥

सा वधूः नक्षत्रदर्शनं यावदुपविष्टैव तत्र तिष्ठेत् । अन्यत्राऽऽत्ययिकादित्यर्थः । एवशब्दादधुनाऽपीत्यर्थ इति भाष्यकारः । दिवाविवाहविषयमेतद्वचनम् । मृदुला.

³प्रोक्ते नक्षत्रे षडाज्याहुतीर्जुहोति 'रेखासंधिषु' एतत्प्रभृतिभिः ॥

प्रोक्त इति । केनापि नक्षत्रमुदितमित्युक्ते इत्यर्थः । अत्राऽऽज्यतन्त्रविहितो महाव्याहृतिहोमः पुरस्ताच्चोपरिष्टाच्च भवति । आज्यभागौ स्विष्टकृच्च न भवन्तीत्यवगन्तव्यम् । मन्त्रा यथा– 'रेखासंधिषु पक्ष्मस्वावर्तेषु च यानि ते । तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहं स्वाहा ॥ केशेषु यच्च पापकमीक्षिते रुदिते च यत् । तानि ते० ॥ शीले यच्च पापकं भाषिते हसिते च यत् । तानि ते० ॥ आरोकेषु च दन्तेषु हस्तयोः पादयोश्च यत् । तानि ते० ॥ ऊर्वोरुपस्थे जङ्घयोः संधानेषु च यानि ते । तानि ते० ॥ यानि कानि च घोराणि सर्वाङ्गेषु तवाभवन् । पूर्णाहुतिभिराज्यस्य सर्वाणि तान्यशीशमं स्वाहा ॥' ।

एषामर्थः– हे कन्यके, ते तव रेखासंधिषु, हस्तादिरेखासंधिस्थानेषु, पक्ष्मसु नेत्रपिधानस्थानेषु, आवर्तेषु ककुदावर्ताद्यभिधेषु लोमसंनिवेशविशेषेषु ककुन्दरादिद्वारेषु वा । चकारः समुच्चयार्थः । एवमनेकधा यानि अलक्षणानि ते तव सन्ति । तानि सर्वाणि अशेषाणि अहं पाणिग्राहः शमयामि शान्तिं गमयामि । तदेतत् स्वाहा सुहुतमस्तु । हे कन्ये, यत् ते तव केशेषु चिकुरेषु ईक्षिते दर्शने च यत् रुदिते अश्रुविमोचने यत् किंचित् पातकम् अलक्षणम् अस्ति, तानि सर्वाण्यपि ते तव संबन्धीनि । पूर्णाहुत्येत्यादि गतार्थम् । हे कन्यके, यत् ते तव शीले वृत्ते चरित्रे, चकारादाभिरूप्ये, भाषिते वचने, हसिते हसने, चकाराद्गमने, यत्पापकमलक्षणमस्ति । तानि सर्वाणीत्यादि गतार्थम् । हे कन्यके, यत् ते तव आ समन्तात् रोकेषु दन्तच्छिद्रेषु । 'छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रम्' इत्यमरः । दन्तेषु, यच्च हस्तयोः पादयोः, चकाराद् गुल्फयोः, पापकम् अलक्षणमस्ति । तानि सर्वाणीत्यादि गतार्थम् । एवं संधानेषु रेखासंधिव्यतिरिक्तेषु संधिस्थानेषु, चकारान्मुखे । यान्यलक्षणानीत्यादि गतार्थम् । यानि प्रकृतान्यप्रकृतानि च कानि च कानिचित् घोराणि क्रूराणि लक्षणानि तव सर्वाङ्गेषु अभवन् , तानि सर्वाणि आज्यस्य पूर्णाहुतिभिः अहम् अशीशमम् अनाशयम् । तदेतत् स्वाहा सुहुतमस्तु । मृदुला.

¹आहुतेराहुतेस्तु संपातं मूर्धनि वध्वा अवनयेत् ॥

(१) आहुतेराहुतेः हुतायाः । स्रुवात् संलग्नः पततीति संपातः अत्र घृतबिन्दुः । तं प्रतिवारं वध्वाः शिरसि निदध्यात् । संत. ९०२

(२) तुशब्दो व्याहृतिहोमशेषनिपातननिषेधार्थः । $ मृदुला.

²हुत्वोपोत्थायोपनिष्क्रम्य ध्रुवं दर्शयति ॥

---

¶ शेषं संतवत् ।

(१) गोगृ. २।३।४ ; संत. ९०१.

(२) गोगृ. २।३।५ ; संत. ९०१ ( सा खल्वस्तु एवमा नक्षत्रदर्शनात् ).

(३) गोगृ. २।३।६ ; संत. ९०१ रेखा ( लेखा ).

¶ शेषं संतगतम् ।

(१) गोगृ. २।३।७ ; संत. ९०१–९०२ मूर्धनि ( मूर्ध्नि ).

(२) गोगृ. २।३।८ ; संत. ९०२ हुत्वोपो ( हुत्वो ).

[१] 'ध्रुवमसि ध्रुवाऽहं पतिकुले भूयासममुष्यासौ' इति पतिनाम गृह्णीयादात्मनश्च ॥

(१) प्रकृतहोमानन्तरं परिवृताद्बहिर्वधूं नीत्वा 'ध्रुवमसि' इति मन्त्रं पाठयन् ध्रुवं नक्षत्रविशेषं दर्शयति पतिः। 'अमुष्यासौ' इत्यत्र षष्ठ्यन्तप्रथमान्तत्वेन पत्युरात्म( नश्च )नामोच्चारयेत्। संत. ९०२

(२) हुत्वा यथोक्ताज्यहोमानन्तरमेव, न तु तन्त्रसमापनादपि परमित्यर्थः। उपेति सामीप्ये। वध्वाः समीप एवोत्थानम्, न व्यवधान इत्ययमर्थः। निष्क्रम्य आवृताद्बहिर्गत्वा। दर्शयति वधूम्। प्रकृतत्वाद्वरः। 'ध्रुवं पश्य' इति प्रैषोऽर्थादवगम्यते। अत्र वधूपठनीयं मन्त्रमाह 'ध्रुवमसि' इत्यादिम्। अत्र अमुष्येति सर्वनाम्नि षष्ठ्यन्तं पतिनाम, असावित्यत्र प्रथमान्तमात्मीयं नाम गृह्णीयादित्यर्थः। ननु वाग्यताया मन्त्रपाठो विरुध्यते इति चेन्न, अस्यार्थस्य वाचनिकत्वात्। मनसैव वा मन्त्रं पठिष्यति, प्रतिषिद्धेऽपि वाग्व्यापारे मनसो व्यापारस्याप्रतिषिद्धत्वात्। मृदुला.

अरुन्धतीं च ॥

[२] * 'रुद्धाऽहमस्मि' इत्येवमेव ॥

(१) एवं च सप्तर्षिनिकटवर्तिनीं सूक्ष्मां तारां 'रुद्धाऽहमस्मि' इतिमात्रमन्त्रेण पश्येत्, न तु प्रागुक्तवदूहितेन। संत. ९०२

(२) अरुन्धतीं सप्तर्षिसमीपवर्तिनीं कांचित् सूक्ष्मतमां तारां च दर्शयेत् वरः। 'अरुन्धतीं पश्य' इति प्रैषः। वधूश्चारुन्धतीं दृष्ट्वा जपति— अरुन्धत्यसीति। एवमेव पूर्ववदेव सनामग्राहमात्मनः पत्युश्च। अयमत्र विशेषः— पतिनाम तृतीयान्तं ग्राह्यमन्वयबलात्। प्रयोगस्तु— 'अरुन्धत्यसि रुद्धाऽहमस्मि यशोदा देवदत्तेन' इति चन्द्रकान्तभाष्यम्। मृदुला.

[१] अथैनामनुमन्त्रयते 'ध्रुवा द्यौः' इत्येतयर्चा ॥

(१) अरुन्धतीदर्शनानन्तरं 'ध्रुवा द्यौः' इति पत्नीं बोधयेत् पतिः। संत. ९०२

(२) अथ अनन्तरमेव एनां वधूं प्रकरणाद्वरः। अनुमन्त्रणोक्तेः अनामिकाग्रेण स्पृशन्निति गम्यते, उक्त( २।२।१४ सूत्रे )वचनात्। मन्त्रो यथा— 'ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्। ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुले इयम्॥' इति। अस्यार्थः— अत्र यथातथेत्यध्याहार्यमर्थसांगत्यार्थम्। यथा द्यौः अन्तरिक्षं ध्रुवा स्थिरा, पृथिवी च ध्रुवा स्थिरा, विश्वं सर्वम् इदं जगत् सचराचरं ध्रुवं सद्रूपेणावस्थितम्, यथा च इमे पर्वताः ध्रुवासः ध्रुवाः, तथा इयं स्त्री पतिकुले पतिगृहे ध्रुवा स्थिरा भवत्विति शेषः। मृदुला.

[२] अनुमन्त्रिता गुरुं गोत्रेणाभिवादयते ॥

(१) गुरुं पतिम्, 'पतिरेको गुरुः स्त्रीणाम्' इति वचनात्। गोत्रेण पतिगोत्रेण, 'स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे। पतिगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया॥' इति वचनात्। एतेन पितृगोत्रेण भर्तुरभिवादनं सरलाभवदेवभट्टाभ्यामुक्तं हेयम्। अभिवादयेत् मनूक्तप्रकारेणाभिवादनं कुर्यात्। अभिवादने प्रत्यभिवादनस्याऽऽवश्यकत्वात् तदुक्तं प्रत्यभिवादनमपि क्रियते। तथा च मनुः— 'अभिवादात् परं विप्रो ज्यायांसमभिवादयन्। असौनामाऽहमस्मीति स्वं नाम परिकीर्तयेत्॥ भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने। नाम्नां स्वरूपभावो हि भोभावो( ? व ) ऋषिभिः स्मृतः॥ आयुष्मान् भव सौम्येति वाच्यो विप्रोऽ-

---

* अत्र 'रुद्धाऽहम्' इत्यतः प्राक् 'अरुन्धत्यसि' इत्यधिकः पाठो मृदुलाकारस्याभिमतः। तथा चोक्तं तेन टिप्पण्याम्— 'मुरारिमिश्रादिभिर्लिखितत्वादस्माभिराद्रियते' इति। अस्माभिस्तु कुत्रापि नोपलभ्यते।

(१) गोगृ. २।३।९–१० ; संत. ९०२.

(२) गोगृ. २।३।११ ; संत. ९०२ (एवमेव०) ; मृदुला. रुद्धा ( अरुन्धत्यसि रुद्धा ).

(१) गोगृ. २।३।१२ ; संत. ९०२.

(२) गोगृ. २।३।१३ ; संत. ९०२ वादयते ( वादयेत् ) ; उत. १३० संतवत्.

भिवादने । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥' (मस्मृ. २।१२२,१२४,१२५) । अभिवादात् परं 'भो अभिवादये' इत्युच्चारणानन्तरम् 'अमुकोऽहमस्मि' इत्यत्र स्वकीयं नाम परि सर्वतोभावेन देवशर्मादियुक्तेन( ? क्तत्वेन ) कीर्तयेत् । अत्र 'अभिवादये' इति विशेषलाभो गोतमवचनात् । यथा— 'स्वं नाम प्रयोज्याहमयमभिवादये' $ (गौध. ६।५) इति । अत्रायमित्यभिधानात् मनुवचनेऽयमित्यर्थेऽसीत्यव्ययम् । तेनाहमस्मीत्यव्ययं( ? त्यहमयं )पुरोवर्तीत्यर्थः । एवं च 'अभिवादात् परम्' इत्यनेन 'अभिवादये' इत्यनन्तरप्राप्तस्य नामकीर्तनस्य मनूक्तस्य विरोधात् गोतमोक्ताभिवादय इत्यन्तपाठो न ग्राह्यः, 'वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम् । मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते ॥' इति बृहस्पतिवचनात् । ततश्च कुल्लूकभट्टशूलपाण्युपाध्यायप्रभृतिभिः स्वनामादौ 'अभिवादये' इति लिखितं युक्तम्, सरलाभवदेवभट्टप्रभृतिभिरन्ते लिखितं हेयम् । अभिवादने क्रियमाणे स्वीयनाम्नोऽसीत्यस्यान्ते समीपेऽभिवाद्यसंबोधनाय भोःशब्दं कीर्तयेत्, यतः संबोध्यनाम्नां स्वरूपभावः प्रवृत्तिनिमित्तम् आत्ममात्रनिष्ठो यो धर्मः स एव भोभावः भोःशब्दस्य प्रवृत्तिनिमित्तधर्मो मुनिभिरुक्तः, तेन संबोध्यनामस्थानीयं भोरिति( ? भो इति ) । ततश्च 'अभिवादये त्वाममुकशर्माऽहमस्मि भोः' इत्यादिकं प्रयोज्यम् । आयुष्मानिति । अभिवादने कृते प्रत्यभिवादयित्रा अभिवाद्यः 'आयुष्मान् भव सौम्य' इति वाच्यः । अस्य संबोध्यमानस्य नाम्नः शर्मादियुक्तस्यान्ते यः स्वरः स पूर्वाक्षरः न विच्छिन्नो वर्णागमः स एव प्लुतो वाच्यः त्रिमात्रकोऽनेनोच्चार्यः, 'एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम् ॥' इत्युक्तेः । तेन 'आयुष्मान् भव सौम्य अमुकदेवशर्मन्' । एवमेव कुल्लूकभट्टः । एवं चाभिवादने असीत्यस्य प्रत्यभिवादने च सौम्येत्यस्य नाम्नश्च यदनभिधानं भवदेवभट्टग्रन्थे, तन्न युक्तम्, मनुविरोधात् । अभिवादने यः पादग्रहणविन्यासविशेषो मनुना विहितः स इह वध्वास्तथाऽनाचरणान्नाभिहितः । संत. ९०२

$ गौतमधर्मसूत्रपुस्तके 'स्वनाम प्रोच्याहमयमित्यभिवादो ज्ञसमवाये' इति पाठ उपलभ्यते, स एव च हरदत्तादिभिर्व्याख्यातः ।

सं. का. २६८

(२) एतत्प्रत्यभिवादान्त एव सामगानां विवाहः, 'तावुभौ ततः प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम्' इति तत्सूत्रे 'ततः प्रभृति विवाहकर्मण ऊर्ध्वम्' इति भट्टनारायणव्याख्यानात् । अत एव तत्प्रत्यभिवादनानन्तरं भवदेवेनाऽपि प्रायश्चित्तहोमवामदेव्यगानदक्षिणाः लिखिताः । यजुर्वेदिनां तु प्रेक्षकाभिमन्त्रणानडुच्चर्मोपवेशनान्तो विवाहः, 'आचार्याय वरं ददाति' इति पारस्करसूत्रेण तदनन्तरं वरशब्दवाच्यगवादिदक्षिणादानस्योक्तत्वात् ।

* उत. १३०-१३१

(३) अनुमन्त्रितैव वधूरभिवादयते । न तु तन्त्रसमापनानन्तरम् । गुरुं पतिम् । तथा च याज्ञवल्क्यः— 'पतिरेको गुरुः स्त्रीणाम्' इति । गोत्रेण पतिगोत्रेण, सांनिध्यात् स्मृत्यन्तरसंवादाच्च, तदानीमेव तद्गोत्रत्वात्तस्याः । तथा च लघुहारीतः— 'स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे । पतिगोत्रेण कर्तव्या तस्याः सर्वक्रिया ततः ॥' इति । एवं च 'चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः । भर्त्रा संयुज्यते नारी तद्गोत्रा तेन सा भवेत् ॥' इति बृहस्पतिवचनं शाखान्तरविषयम्, तन्मन्त्रलिङ्गसंवादात् । तदुक्तं बृहस्पतिनैव— 'पाणिग्रहणिका मन्त्राः पतिगोत्रप्रदायकाः ।' इति । एवं च प्रवरसापिण्ड्ययोरपि इदानीमेव प्राप्तिः, गोत्रसमानत्वात्, अत्राभिषेकपाणिग्रहणमन्त्राणामेव शरीरैक्यनिमित्तत्वाच्चेति बोध्यम् । अभिवादयते । अभिवादनं च पादोपसंग्रहणपूर्वकं प्रणमनम् । 'समे तु पादग्रहणमभिवादनमित्युभे ।' इत्यमरः । तत्र मनुः— 'भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने । नाम्नां

* शेषं संतगतम् ।

स्वरूपभावो हि भो( ? भोः )शब्द ऋषिभिः स्मृतः ॥' ( मस्मृ. २।१२४ ) इति । प्रवरोच्चारणमपि शिष्टाचारात् । प्रयोगस्तु— 'अमुकगोत्राऽमुकामुकामुकप्रवरा श्री —अमुकदेव्यहं भो३ अभिवादये' इति । पद्धतिरप्येवम् ।

मृदुला.

**[1]सोऽस्या वाग्विसर्गः ॥**

( १ ) स एवाभिवाद एवास्या वध्वा वाग्विसर्गः वाक्प्रसरणम् । तस्मात् पूर्वं मौनम्, इदानीं मौनत्याग इति ।

संत. ९०३

( २ ) स कालः अस्याः वध्वाः वाग्विसर्गः । वाग् विसृज्यतेऽस्मिन्नित्यधिकरणे घञ् ( पासू. ३।३।१९ ), 'चजोः' (पासू. ७।३।५२) इति कुत्वम्, गुणश्च । अयं वाक्संयमत्यागकालः, अतः परं यथारुचि वाच्यं तयेत्यर्थः । शूलपाणिप्रभृतयोऽप्येवम् । वेद्यामुत्तरविवाहपक्षे वैवाहिकेऽग्नौ प्रधानहोममात्रं कर्तव्यम् । तन्त्रसमापनमिदानीमेतत्पक्षे । तन्त्रेणापि समापने ब्रह्मणे दक्षिणाद्रव्यं देयमेव, कर्मणः पृथक्त्वात्, कर्मानुरूपत्वाद्वेतनस्य । तच्च पूर्णपात्रमेव, अनादेशादिति भाष्यकृतः ।

मृदुला.

**[2]तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयीयाताम् ॥**

( १ ) विवाहात्प्रभृति दम्पती दिनत्रयं क्षारलवणवर्जितं भुञ्जानौ मैथुनमकुर्वाणौ सहैव शयीयाताम् । भूमाविति खट्वादेः प्रतिषेधार्थम्, न तु प्रस्तरकम्बलादीनामपीति ।

संत. ९०४

( २ ) तावुभौ दम्पती । *तत्प्रभृति विवाहकर्मदिनमारभ्य । त्रिरात्रं त्रीण्यहोरात्राणि । अक्षारेति । क्षारं च लवणं चेति क्षारलवणम् । 'जातिरप्राणिनाम्' ( पा. २।४।६ ) इति द्वन्द्वैकवद्भावः । तन्न भवतीत्यक्षारलवणम् । तदश्नीतस्तच्छीलौ । ताच्छील्येऽत्र णिनिः ( पा. ३।२।७८ ) । संततकरणं च ताच्छील्यमिति त्रिरात्रं यावत्तदनशनौ यथासमयं भवत इत्यर्थः । क्षारं च परिभाषितम्— 'तिलमुद्गादृते शिम्बिसस्ये गोधूमकोद्रवौ । चीनकं देवधान्यं च सर्वशाकं तथैव च । खिन्नधान्यं तथौषध्यं स्थूलं क्षारगणः स्मृतः ॥' इति स्मृत्युक्तम् । अन्ये त्वाहुः— 'गोक्षीरं गोघृतं चैव धान्यं मुद्गास्तिला यवाः । अक्षारलवणा ह्येते क्षाराश्चान्ये प्रकीर्तिताः ॥' इति । एवं स्मृत्युक्तमक्षारलवणमशितुं शीलं ययोस्तावक्षारलवणाशिनाविति । यत्तु— अक्षारलवणम् अकृत्रिमलवणमिति रघुनन्दनवर्णनम्, तदसत्, क्षारपदस्य कृत्रिमपरत्वे लक्षणाप्रसङ्गादन्यद्वा किमपि नाशितव्यं स्यादिति न किंचिदेतत् । ब्रह्मचारिणौ निवृत्तमैथुनौ । भूमाविति खट्वायाः प्रतिषेधार्थम्, न तु प्रस्तरकम्बलादीनामपि । सहेति पृथक्शय्याया निवृत्त्यर्थम् ।

मृदुला.

विवाहे अर्हणावसरः

**[1]अत्रार्घ्यमित्याहुः ॥**

( १ ) अस्मिन्नवसरे कन्यापित्रा विष्टरादिदानेनार्हणं कर्तव्यम् ।

संत. ९०४

( २ ) अत्र एतस्मिन्नवसरे अर्घ्यम् अर्हणं वरस्य कन्यापित्रादिभिः कर्तव्यमित्याहुराचार्याः । 'षडर्घ्या भवन्ति' इति वक्ष्यति( गोगृ. ४।१०।२३ ) । तत्र यो विवाह्यः सोऽयं वरः ।

मृदुला.

**[2]अगतेष्वित्येके ॥**

---

* अत्रैषा मृदुलाकारस्य टिप्पणी— 'तदिति विप्रकृष्टस्य विवाहकर्मणः परामर्शार्थम्, नोत्तरविवाहस्य पत्यभिवादनस्य वा, तथा सति एतदा निर्देशः स्यात्' इति । 'प्रागुदीच्यां दिशि०' ( गोगृ. २।३।१ ) इत्यतः प्रभृति उत्तरविवाहमभिमन्यते मृदुलाकारः, ततः प्राचीनं कर्म विवाहः ।

( १ ) गोगृ. २।३।१४ ; संत. ९०३.

( २ ) गोगृ. २।३।१५ ; संत. ९०४ तत्प्रभृति ( ततः प्रभृति ); उत. १३०–१३१ णाशिनौ ( णाभ्याशिनौ ) शेषं संतवत्.

( १ ) गोगृ. २।३।१६ ; संत. ९०४ अत्रार्घ्यं ( अथार्हण ).

( २ ) गोगृ. २।३।१७ ; संत. ९०४ आगते (स्वागते).

(१) विवाहार्थमागतमात्रेष्वेवार्हणमित्येके। इदानीं बहुवादिसंमतमेव(? संमतमेतदेव) व्यवह्रियते।
संत. ९०४

(२) एके तु आगतेषु आचार्यादिषु षट्सु अर्घ्यम् अर्हणं कर्तव्यमित्याहुः। तथा च विवाहार्थमागते एव वरेऽर्घ्यमुचितमिति एके इति बहुवचनेन सपुरस्कारमभिधानादुक्तं भवति। अत एव 'मधुपर्कार्चितायैनां दद्यात्कन्यां सदक्षिणाम्।' इत्यनेन न विरोधः। एवं च 'भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा। उपोषितः सुतां दद्यादर्चिताय वराय तु॥' इति वचनमेतस्मिन्कल्पे मधुपर्कभोजनपरम्। तथा च शास्त्रान्तरम्— 'अशोककलिकापानं यज्ञे सोमलतारसम्। विवाहे मधुपर्के च भुक्त्वा कर्म समारभेत्॥' इति स्मर्यते। एतेन कृताहारस्य तद्दिने कन्यापरिणयार्थे गमनम्, गत्वा वा तत्र भोजनमनाचार एवेति मन्तव्यम्। सर्वथा चात्र संयमो भोजनादेर्यज्ञकर्मान्तरवदित्यवगन्तव्यम्। मृदुला.

श्वशुरगृहे प्रथमभोजने नियमः
समशनीयस्थालीपाकश्च

**[1]हविष्यमन्नं प्रथमं परिजपितं भुञ्जीत॥**

(१) तत्र श्वशुरगृहे यदन्नं प्रथमं भुञ्जीत तन्माषकोद्रवादिरहितं वक्ष्यमाणान्नपाशेनेति मन्त्रेणाभिमन्त्रितम्।
संत. ९०४

(२) हविषि साधु हविष्यम्, 'तत्र साधुः' (पासू. ४।४।९८) इति साध्वर्थे यत्प्रत्ययेन(? यत्प्रत्ययः)। होमावशिष्टमिति चन्द्रकान्तभाष्यस्वरसः। माषकोद्रवादिवर्जम् अन्नं वरेण तद्दिने प्रथमं परिजपितम् 'अन्नपाशेन मणिना' इत्यादिमन्त्रेणाभिमन्त्रितम्, उत्तरत्र तथा श्रवणात्। भुञ्जीत भोक्तव्यम्। अत्रापि 'भुक्त्वोच्छिष्टं वध्वै प्रदाय यथार्थम्' इति वक्ष्यमाणं (गोगृ. २।३।१२) सिंहावलोकितकेन संबन्धनीयम्, श्वस्तनप्रथमभोजने तथाऽऽचरणादिति। मृदुला.

**श्वोभूते वा समशनीयं स्थालीपाकं कुर्वीत॥**

(१) यदि विवाहे यज्ञादिना महानिशा भूता तत्परदिने सम्यगशनार्थे क्रियत इति समशनीयं स्थालीपाकं कुर्वीत।
संत. ९०४

(२) लग्नादिसाद्गुण्यात् रात्रौ विवाहे भोजनकालस्य चालाभे प्रकारान्तरमाह— श्वोभूत इति। श्वः अग्रिमदिने भूते प्राप्ते प्रभाते जाते यथासमयं समशनीयं सम्यगशनार्थं क्रियते इति तथाभूतं स्थालीपाकं मधुपर्कसमाख्यं कुर्वीत यथावद्विदधीत। वाशब्दो विकल्पार्थः, तेन पूर्वदिनेऽपि समयलाभेऽमुं कुर्वीतैवेति बोधयति। मृदुला.

**[1]तस्य देवता अग्निः प्रजापतिर्विश्वेदेवा अनुमतिरिति॥**

(१) तस्य समशनीयस्याग्न्याद्या देवताः। असमासकरणं पृथङ्निर्वापहोमार्थम्। मेक्षणेन चायं होमः, बहुदेवतत्वात्। देवदत्त(वि ? )शेषस्यैव भोजनीयत्वात् होमदेवतानां प्राधान्यात् त्रिः प्रक्षालनम्।
संत. ९०४

(२) तस्येति तच्छब्देन पूर्वदिने परदिनेऽपि वा करणेऽपि स्थालीपाकस्यास्यैता देवता इति दर्शयति। तथा च 'अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्। यज्ञशिष्टाशनं ह्येव सतामन्नं विधीयते॥' इति मनुवचनेन, 'केवलाघो भवति केवलादी' इति श्रुत्या च न विरोधः। अत्र (सूत्रे) असमासकरणं पृथङ्निर्वापहोमयोः प्राप्त्यर्थम्। तथा च छन्दोगपरिशिष्टम्— 'चरुः समशनीयो यस्तथा गोयज्ञकर्मणि। ऋषभोत्सर्जने चैव अश्वयज्ञे तथैव च॥ कथमेतेषु निर्वापः कथं चैव जुहोतयः। देवतासंख्यया ग्राह्या निर्वापास्तु पृथक्पृथक्॥' इत्यादि पूर्वोक्तम्। तथा— 'चरौ समशनीये वा पितृयज्ञचरौ तथा। होतव्यं मेक्षणेनान्यदुपस्तीर्णाभिघारितम्॥' इति। देवताना-

(१) गोगृ. २।३।१८–१९; संत. ९०४ हविष्यमन्नं (हविष्यान्नं).

(१) गोगृ. २।३।२०; संत. ९०४ देवता अग्निः (देवताऽग्निः).

मत्र प्राधान्यात् त्रिः प्रक्षालनं तण्डुलानाम्, 'त्रि-र्देवेभ्यः' इत्युक्तत्वात्। देवताभ्यः खल्वेताभ्यो मेक्षणेनोपघातं होतव्यं किंचिदवशेषमित्यवोचाम।

मृदुला.

'उद्धृत्य स्थालीपाकं व्यूह्यैकदेशं पाणिनाऽभिमृशेत्—'अन्नपाशेन मणिना' इति ॥

(१) उद्धृत्य पात्रान्तरे कृत्वा स्थालीपाकशेषं व्यूह्यान्यपात्रे निधाय एकदेशम्, न सर्वमपि भाण्डस्थितमिति, 'अन्नपाशेन मनुना(? मणिना)' इति-मन्त्रत्रयेण। अत्रासावित्यत्र संबोधनविभक्त्या भार्यानाम प्रयोज्यमिति भट्टनारायणैरुक्तम्। ततश्च यदसावित्येव भवदेवभट्टेनानूहेन मन्त्रेणोक्तम्, गुणविष्णुनाऽसावित्यहमिति व्याख्यातम्, तदयुक्तम्, भट्टभाष्यविरोधात्, त्वेति युष्मत्पदप्रयोगात् संबोधनार्थे वधूनामप्रयोगस्य युक्तत्वाच्च। किंत्विदानीं समशनीयचरुहोमाकरणाद्भवदेवभट्टेन न समशनीयचरुहोमादिकं लिखितम्। मयाऽपि प्रयोगे न लिखनीयमिति। संत. ९०४–९०५

(२) स्थालीपाकं तत उद्धृत्य पात्रान्तरे कृत्वाऽवशिष्टं तं व्यूह्य एकीकृत्य, एकदेशम्, न सर्वमपि भाण्डस्थमन्नम्, पात्रान्तरेणावदाय स्वपात्रे स्थापयित्वा दक्षिणेन पाणिना 'अन्नपाशेन मणिना' इत्येवमादिना मन्त्रद्वयेन* अभिमृशेत् स्पृशेदित्यर्थः। मन्त्रो यथा—'अन्नपाशेन मणिना प्राणसूत्रेण पृश्निना। बध्नामि सत्यग्रन्थिना मनश्च हृदयं च ते॥' इति। अस्यार्थः— हे वधु, अहं ते परिणेता ते तव मनः संकल्पविकल्पात्मकवृत्तिकमन्तरिन्द्रियम्, हृदयं चित्तम्, चकाराद्बुद्धिं च, मणिना मध्यमणिभूतेन हृद्देशाधिष्ठितेनाऽऽत्मना सहितेन अन्नपाशेन अन्नरूपेण पाशतुल्येन बन्धनेन, प्राणसूत्रेण प्राणा एव सूत्रं सूत्रभूता यस्मिन् एवंभूतेन पृश्निना अन्नेन गुलिकास्थानीयेन, 'अन्नं वै देवाः पृश्नीति वदन्ति' इति श्रवणात्। कथंभूतेन? सत्यग्रन्थिना सत्यं ग्रन्थिरिव यस्य तेन बध्नामि स्वायत्तीकरोमि इति। अत्र सूत्रे इतिशब्द आद्यार्थः, तेन 'यदेतद्धृदयं तव तदस्तु हृदयं मम। अन्नं प्राणस्य * पड्वंशस्तेन बध्नामि त्वाऽसौ॥' इत्येषोऽपि मन्त्रः परिगृहीतो वेदितव्यः। अस्यार्थः— हे वधु, यदेतद्धृदयं तव तदस्तु हृदयं मम, आवयोर्हृदयैक्यं भवतु इति वरेणाऽऽशास्यते। तत्प्रकार उच्यते अन्नमित्यर्धर्चेन। हे वधु, अन्नमदनीयं वस्तु प्राणस्य शरीरान्तःसंचारिणो वायोः पड्वंशः बन्धनाधिष्ठानम्। तेन अन्नेन साधनभूतेन त्वा त्वाम् असौ अहं बध्नामि संयमयामि, इति।

मृदुला.

उच्छिष्टान्नस्य वध्वै प्रदानम्

'भुक्त्वोच्छिष्टं वध्वै प्रदाय यथार्थम्॥

(१) पतिः परिजपितमन्नं स्वयं किंचिद्भुक्त्वा उच्छिष्टमुच्चरितं वध्वै जायायै प्रदाय दत्त्वा तृप्त्यर्थमन्यदपि भुक्त्वाऽऽचम्य यथार्थे वामदेव्यगानान्तम्। संत. ९०५

(२) परिजपितमन्नं पतिः किंचिद्भुक्त्वा उच्छिष्टमुद्धृतावशिष्टं वध्वै प्रदाय दत्त्वा यथार्थं यथाप्रयोजनमन्यत्कुर्यादित्यर्थः। अत्र दिनभोजनपक्षेऽपि हविष्यान्न-

---

* सामश्रमिटीकायां गोभिलगृह्यकर्मप्रकाशिकायां संस्कारतत्त्वे च मन्त्रत्रयमित्युक्तम्। छान्दोग्यमन्त्रब्राह्मणे 'यदेतद्धृदयम्' इत्यादिपादद्वयोत्तरम् 'यदिदं हृदयं मम तदस्तु हृदयं तव' इति पादद्वयमधिकम्। तत्र प्रथमौ चतुष्पादौ मन्त्रौ, 'अन्नं प्राणस्य०' इति द्विपादिति मन्त्रत्रयं गुणविष्णोरभिमतम्। सायणस्य तु प्रथमश्चतुष्पात् द्वितीयः षट्पादिति मन्त्रद्वयमेवाभिप्रेतमिति ध्येयम्।

(१) गोगृ. २।३।२१ ; संत. ९०४ मणिना (मनुना).

* अन्यत्र 'पड्वंशः' इत्यस्य स्थाने 'पड्विंशः' इति पाठो लभ्यते। अत्र मृदुलाटिप्पणी तु एवंरूपा विद्यते—"पडिति 'पश बन्धने' इत्यस्मात् क्विपि रूपम्। अधिकरणेऽत्र क्विप् छान्दसः। उपमितसमासः। गुणविष्णुस्तु—'पड्विंशः' इति पठति। तन्मते विशतेः प्रवेशनार्थादिगुपधलक्षणः कः (पासू. ३।१।१३५), नुम् छान्दसः।" इति।

(१) गोगृ. २।३।२२ ; संत. ९०५ भुक्त्वो (भुक्तो).

व्यूह्वानदिवामदेव्यगानान्तं कर्म कुर्यादेवेति भाष्यकारः। तेन रात्रिभोजन एतदावश्यकमित्यायातीति मुरारिमिश्राः प्राहुः। मृदुला.

[1] **गौर्दक्षिणा ॥**

(१) गौर्दक्षिणा ब्रह्मणे देया। यद्यशक्तेः कुलाचाराद्वा तद्दिन एव धृतिहोमादिचतुर्थीहोमान्तं कर्म क्रियते तदाऽभिमन्त्रितं कदलादिकं स्वयमाघ्राय वधूमाघ्रापयेत्, ततो वामदेव्यगानान्तं कुर्यात्। संत. ९०५

(२) उत्तरविवाहकर्मणः। एतेन पूर्वविवाहेऽपीयमेव। अतस्तत्र पूर्णपात्रादिका दक्षिणेति चन्द्रकान्तवचनं संभ्रममूलकमेव। पद्धतिकृतो वीरेश्वरादयोऽपि तत्र गामेव दक्षिणात्वेनोल्लिखितवन्तः। इत्यलमत्यर्थकदर्थनयेति शिवम्। मृदुला.

## खादिरगृह्यसूत्रम्

वधूवरयोर्जपः, वधूपवेशनम्

[2] *** 'प्र मे पतियानः' इति वधूर्जपेत्। 'प्रास्याः पतियानः' इति जपेत्पतिः ॥**

'प्र मे पतियानः' इति वधूर्जपेत्, 'प्रास्याः पतियानः' इति पतिर्जपेत्, मन्त्रलिङ्गात्। रुद्रभा.

**पाणिग्राहस्य दक्षिणत उपवेशयेत् ॥**

संनिधानात् सिद्धे पाणिग्राहस्येति पत्युरेवाऽऽसने उपवेशनार्थम्। दर्भेषूपवेशयेत् वधूमानेता। ततः परिस्तरणादिप्रपदान्तं कृत्वा आज्यसंस्कारानन्तरमाज्यं स्रुवमिध्मं शमीपलाशमिश्रं सलाजं च शूर्पमग्नेरुत्तरतो बर्हिषि निदध्यात्। दृषत्पुत्रं चाग्नेः पश्चात्। दृषत्पुत्रोदकुम्भयोः परिषेचने बहिर्भावः, अहव्यत्वात्। रुद्रभा.

प्रधानाङ्गप्रायश्चित्तहोमाः, सर्वहोमसाधारणविधयः

**अन्वारब्धायां स्रुवेणोपघातं महाव्याहृतिभिराज्यं जुहुयात् ॥**

प्रपदजपानन्तरमाह– अन्वारब्धायामिति। अनु साहश्ये, उपवेशनवत्। अन्वारब्धायां वध्वां दक्षिणेन पाणिना पत्युर्दक्षिणं बाहुम्, तस्य संनिधानात्, स्पृष्टवत्यां वध्वां बर्हिषि निहितेन स्रुवेणोपहत्योपहत्य संस्कृतमाज्यं 'भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा' इति प्रतिमन्त्रमग्नौ जुहुयात् पतिः। स्रुवस्य स्वरूपमाध्वर्यवे प्रसिद्धम्। ननु– उपघातमित्यवाच्यम्, अर्थसिद्धत्वात्। आज्यमिति चावाच्यम्, 'आज्यं जुहुयाद्धविषोऽनादेशे' इति वचनात्। जुहुयादिति चावाच्यम्, वाक्यशेषात् सिद्धेः। इदं तर्हि प्रयोजनम्– यत्रोपघातमिति वक्ष्यति, यत्राऽऽज्यं प्रधानद्रव्यम्, यत्र वा मन्त्रमनुक्त्वा होमं विधास्यति, तत्र तत्र व्याहृतिभिर्जुहुयादिति। आज्यमेव च द्रव्यम्, परिभाषितत्वात्। रुद्रभा.

**समस्ताभिश्चतुर्थीम् ॥**

'भूर्भुवः स्वः स्वाहा' इति मन्त्रः। अन्वारब्धायामिति वर्तते। अयं होमो नोपघातादिसूचितेष्वस्ति। समस्ताभिश्चेति सिद्धे चतुर्थीमिति त्र्यक्षरनिर्देशात् त्रिष्वपि विवाहहोमेषु चतुर्थी स्यात् इति। अधिकवचनात् चतुर्थींचतुर्थीं जुहुयादिति वीप्सार्थो (वा) गम्यते। नातिप्रसङ्गः, संनिधिविशेषाच्च तद्वीप्सासिद्धिः। रुद्रभा.

**'अग्निरेतु प्रथमः' इति षड्भिश्च पाणिग्रहणे ॥**

चशब्दोऽन्वारम्भानुकर्षणार्थः। रुद्रभा.

---

* यद्यपि एतद्वाक्यद्वयमस्मदादर्शपुस्तकयोः सूत्रत्वेन न मुद्रितम्, अपि तु रुद्रस्कन्दवृत्तित्वेन। रुद्रस्कन्दोऽपि नास्य सूत्रतामभिप्रैतीति 'मन्त्रलिङ्गात्' इतिहेतूक्तेरवगम्यते। अन्यथा सौत्रे विनियोगे जाग्रति लिङ्गानुसरणानुपपत्तेः। ब्लूम्फील्डमहोदयोऽपि स्वीये मन्त्रकोशे 'प्र मे० प्रास्याः ०' इति मन्त्रयोः खादिरगृह्यसूत्रीयस्थलनिर्देशस्याकृतत्वात् नास्य सूत्रत्वमभिमन्यते सेत्यनुमीयते। तथापि खादिरसूत्रमेव सर्वत्रोद्धरता सायणाचार्येण छान्दोग्यमन्त्रब्राह्मणभाष्ये सूत्रत्वेनास्योद्धृतत्वात् वाक्यद्वयमिदं सूत्रं वा सूत्रे वेति प्रतिपद्यमानैरस्माभिरत्र सूत्रत्वेन संगृह्यते। एवमन्यत्राप्येतादृशस्थले बोद्धव्यम्।

(१) गोगृ. २।३।२३ ; संत. ९०५.

(२) खागृ. १।३।७–९,११–१।४।११.

**§नाऽऽज्यभागौ न स्विष्टकृदाज्याहुतिष्वनादेशे ॥**

**सर्वत्रोपरिष्टान्महाव्याहृतिभिः ॥**

**प्राजापत्यया च ॥**

**प्रायश्चित्तं जुहुयात् ॥**

लाजहोमः, अश्मारोपणम्, परिणयनम्

**हुत्वोपोत्तिष्ठतः ॥**

व्याहृतिभिर्हुत्वा उपश्लिष्टौ जायापती सहोत्तिष्ठतः वध्वा दक्षिणं पाणिं दक्षिणेन पाणिना गृह्णन् पतिरुत्तिष्ठेत्, तस्या अस्वातन्त्र्यात्। हुत्वेति समानकर्तृकत्वं होमेऽप्युपश्लेषार्थम्। अतोऽन्वारब्धायामेव होमः। न च पूर्ववदत्रान्वारम्भः, पतिपाणेर्होमे व्यापृतत्वात्। रुद्रभा.

**अनुपृष्ठं गत्वा दक्षिणतोऽवस्थाय वध्वञ्जलिं गृह्णीयात् ॥**

अनु सादृश्ये। उत्थानवत् पाणिं गृह्णन्नेव तस्याः पृष्ठदेशेन गत्वा दक्षिणतो दर्भेषु स्थित्वा तस्या आकोशमञ्जलिमुभाभ्यां हस्ताभ्यामुपादद्यात् स्वीकुर्यात्।

रुद्रभा.

**पूर्वा माता शमीपलाशमिश्रान् लाजाञ्छूर्पे कृत्वा ॥**

पश्चादुद्वाहवचनात् वधूगृहं गत्वा विवाह इति वधूमातुः संनिधानात् सा पूर्वमेव लाजान् स्वयमुत्पाद्य शम्या पलाशेन वा संसृष्टान् शमीपर्णमिश्रान् वा तान् बर्हिषि शूर्पे निधाय तिष्ठति। तदानीं शूर्पेणाऽऽदायाग्नेः पुरस्ताद्वधूमाता तिष्ठेत्। एवं सूत्रयोजना — लाजान् कृत्वा शूर्पे निहिताञ्छमीपलाशमिश्रानादाय पूर्वा पूर्वदिक्संबन्धिनी वधूमाता तिष्ठेदिति। रुद्रभा.

**पश्चादग्नेर्दृषत्पुत्रमाक्रमयेद्वधूं दक्षिणेन प्रपदेन 'इममश्मानम्' इति ॥**

पश्चादग्नेः स्थितं तं दृषत्पुत्रं सव्येन पाणिना अञ्जलिं गृह्णन्नेव दक्षिणेन पाणिना दक्षिणमूरुं गृहीत्वोत्क्षिप्याङ्गुलिमूलेन स्वयं मन्त्रमुक्त्वाऽऽक्रमयेत्। संनिधानादसिद्धे दक्षिणेनेति 'प्रागुदीचीमुत्क्रमयेत्' (१।३।२६) इत्यत्रापि दक्षिणनियमार्थम्। रुद्रभा.

**सकृद्गृहीतमञ्जलिं लाजानां वध्वञ्जलावावपेद् भ्राता ॥**

वधूभ्राता। वध्वञ्जलाविति वध्वाः संनिधानात्। शमीपलाशमिश्राणामञ्जलिम्। रुद्रभा.

**सुहृद्वा कश्चित् ॥**

भ्रातुरलाभे वध्वा हितैषी कश्चित् पुरुष आवपेत्। सुहृद्वेति सिद्धे कश्चिदिति पुरुषनियमार्थम्। रुद्रभा.

**तं साऽग्नौ जुहुयादविच्छिद्याञ्जलिम्— 'इयं नारी' इति ॥**

प्रकृतत्वात्सिद्धे तमिति तमेव लाजाञ्जलिं जुहुयात्, उपस्तरणाभिघारणे न कुर्यादित्येवमर्थम्, अन्यथा हि होमद्रव्ये दर्शनात् शङ्का स्यात्। सेति सा वधूः जुहुयादेव, न मन्त्रं ब्रूयात्, पतिरेव मन्त्रं ब्रूयादित्येवमर्थम्। अग्नाविति प्रभृतेऽग्नावित्येवमर्थम्। पाण्योरविच्छेदं कुर्वती वधूरङ्गुल्यग्रेण जुहुयात्। दृषत्पुत्राक्रमणादूर्ध्वमञ्जलिं गृह्णीयादेव पतिः। रुद्रभा.

**'अर्यमणम्, पूषणम्' इत्युत्तरयोः ॥**

उत्तरयोर्लाजहोमयोरिमौ मन्त्रौ। रुद्रभा.

**हुते तेनैव गत्वा प्रदक्षिणमग्निं परिणयेत्— 'कन्यला पितृभ्यः' इति ॥**

'इयं नारी' इति हुते येनैव प्रकारेण दक्षिणतो गतस्तेनैव प्रकारेण पाणिं गृह्णन्ननुपृष्ठमुत्तरतो गत्वा पाणिं गृह्णन्नेवाग्निं प्रदक्षिणीकुर्वन् वधूमनुगमयेत्। आज्यस्रुवशूर्पदृषत्पुत्राणां प्रदक्षिणेऽन्तर्भावः। मातृब्रह्मोदकुम्भकानां बहिर्भावः। पतिर्मन्त्रं ब्रूयात्। रुद्रभा.

**अवस्थानप्रभृत्येवं त्रिः ॥**

मध्यमायामावृत्तौ 'अर्यमणम्' इति लाजहोममन्त्रः। उत्तमायां 'पूषणम्' इति। इतरत् समानम्। रुद्रभा.

सप्तपदी

**शूर्पेण शिष्टानग्नावोप्य प्रागुदीचीमुत्क्रमयेत् 'एकमिषे' इति ॥**

§ एतत्सूत्रव्याख्यानं कर्मपरिभाषाप्रकरणे (संका. पृ. ११३९), उत्तरत्रिसूत्र्या व्याख्यानं च अग्निमुखप्रकरणे (संका. पृ. १४७०-१४७१) द्रष्टव्यम्।

प्रकृतत्वात्सिद्धेऽग्नाविति अग्नौ यत्कृत्यं तत्सर्वं तत्रैव समापनीयम्, प्रागुदीचीमुत्क्रमयेदित्यस्य च गमनोपक्रमत्वात् न प्रत्यावृत्य समाप्तिरिति केचित्। तदयुक्तम्, अग्नावित्यनुक्तेऽपि(?क्ते तु)अन्यत्राप्यहोमत्वाल्लाजप्रक्षेपप्रसङ्गात्, 'अपरेणाग्निमौदकः' इति वचनादग्न्यर्थमवश्यंभावित्वाच्च, * प्रत्यागमनस्य च ल्यपा क्रमस्य द्योतितत्वात्। उत्क्रमणं दृषत्पुत्राक्रमणवत् प्रतिमन्त्रं सप्त पदानि। रुद्रभा०

† **'सखी सप्तपदी' इति वधूमीक्षमाणो जपेत्॥**

'सखी सप्तपदी' इति वधूमीक्षमाणो जपेत्, मन्त्रलिङ्गात्। रुद्रभा.

ईक्षकावेक्षणे जपः

**ईक्षकावेक्षणरथारोहणदुर्गानुमन्त्रणान्यभिरूपाभिः॥**

वधूं द्रष्टुमागताः सुमङ्गलीः स्त्रियो वीक्षमाणः 'सुमङ्गलीः' इति जपेत्। 'सुकिंशुकम्' इति वधूं रथमारोहयेत्। अध्वनि भयस्थाने 'मा विदन्' इति जपेत्। 'सुमङ्गलीः' इत्यस्यानागताभ्यां सह निर्देशः तत्साम्यार्थम्। यथा महत्यध्वनि रथारोहणबहुत्वे भयस्थानबहुत्वे च तयोरावृत्तिः दृष्टार्थत्वात्, तथाऽस्यापि स्त्र्यागमनावृत्तावा विवाहसमाप्तेरावृत्तिरिति। रुद्रभा.

वधूवरयोरभिषेकः

**अपरेणाग्निमौदको गत्वा पाणिग्राहं मूर्धन्यवसिञ्चेत्॥**

ईक्षकावेक्षणानन्तरमाह— अपरेणेति। ब्रह्माग्न्योरन्तरेण गत्वा। रुद्रभा.

**वधूं च॥**

क्रमेणावसेकः। रुद्रभा.

**'समञ्जन्तु' इत्यवसिक्तः॥**

जपेत् पतिः। रुद्रभा.

* 'प्रत्यागमनस्य क्रमस्य ल्यपा द्योतितत्वाच्च' इत्यन्वयः।
† सायणप्रमाणकमस्य सूत्रत्वम्। पूर्वत्र टिप्पणी द्रष्टव्या।

पाणिग्रहणम्

**दक्षिणं पाणिं साङ्गुष्ठं गृह्णीयात् 'गृभ्णामि ते' इति षड्भिः॥**

उत्तरोत्तरेण मन्त्रेणोत्तरोत्तरमभिपीडनम्। अथ प्रदक्षिणमग्निं प्रत्यागम्य उपरिष्टाद्धोमादि वामदेव्यगानान्तं कुर्यात्, यथा दर्शपूर्णमासयोर्वक्ष्यते। नात्रान्वारम्भः। रुद्रभा.

लेखाहोमः, ध्रुवदर्शनम्, गुर्वभिवादनम्, वाग्विसर्गः, दक्षिणा

**प्रागुदीचीमुद्वहेत्॥**

होमानन्तरमेव प्रागुदीचीं दिशं वधूमग्निं च प्रापयेत् पतिः। रुद्रभा.

**ब्राह्मणकुलेऽग्निमुपसमाधाय पश्चादग्नेर्लोहितं चर्माऽऽनडुहमुत्तरलोम प्राग्ग्रीवमास्तीर्य वाग्यतामुपवेशयेत्॥**

विवाहगृहे गृहान्तरे वा। यदि क्षत्रियादिगृहे विवाहः तदा त्वन्यस्मिन्नेव ब्राह्मणकुले। अग्न्युपसमाधानान्तं कृत्वा चर्मणि वधूमुपवेशयेत् पतिः अस्तमयकाले। नात्र वध्वा दर्भासनम्, तत्कार्यकरणत्वाच्चर्मणः। रुद्रभा.

**प्रोक्ते नक्षत्रेऽन्वारब्धायां स्रुवेणोपघातं जुहुयात् षड्भिर्लेखाप्रभृतिभिः संपातानवनयन् मूर्धनि वध्वाः॥**

अन्येनोदितानि नक्षत्राणि इत्युक्ते। अत एवोपर्याच्छादिते देशे होमः। प्रशब्दः प्रथमोदयार्थः। परिसमूहनादीनि कृत्वा व्याहृतिभिः समस्ताभिश्च हुत्वा लेखादिभिः स्वाहाकारान्तैर्जुहुयात्। प्रकृतितः सिद्धे अन्वारब्धायामित्येतत् प्रकृतिसादृश्यार्थत्वात् उपवेशनवत् पत्युरेवाऽऽलम्भप्रयोक्तृत्वार्थम्। इतरथा पित्रादेः स्यात्। स्रुवेणेति स्रुवेण संपातावनयनार्थम्, इतरथा दक्षिणेन पाणिना स्यात्। उपघातमिति प्रत्युपघातं व्याहृतिहोमेष्वपि संपातावनयनार्थम्। उपघातमित्याभीक्ष्ण्ये णमुल्। एतत्त्रितयमपि न्यायसूचनपरमेव। तथाहि— आद्ये होमे न पितृत्वमन्वारम्भप्रयोक्तृत्वे कारणम्, किं तर्हि?

तस्याः पित्रधीनता । 'बाल्ये पितृवशे तिष्ठेत्' इति वचनात् पित्रधीनत्वम् । सा त्विदानीं भर्त्रधीना, 'पाणिग्राहस्य यौवने' इति वचनात् । न्यायपरत्वात् सूत्रस्य, न्यायस्य च तुल्यत्वात् चतुर्थीहोमेऽपि भर्तुरेव प्रयोक्तृत्वम्, उपनयनादिषु चाऽऽचार्यस्य । संपातानामपि स्रुवगतत्वेन साधनान्तरप्रयुक्तिक्षयात्तेनैवावनयनम् । अत एव चतुर्थीहोमेऽपि तथैव । तथा दशानां होमानां संस्कारार्थत्वात् संस्कारस्य संपातावनयनद्वारत्वात् दशस्वप्यवनयनम् । अत एव चतुर्थीहोमेऽपि नवस्वाप्लवनद्वारत्वात् हुत्वा हुत्वा संपातावनयनम्, होमावशिष्टे संपातप्रसिद्धेः । रुद्रभा.

**प्रदक्षिणमग्निं परिक्रम्य ध्रुवं दर्शयति– 'ध्रुवा द्यौः' इति ॥**

पत्युर्मन्त्रः । रुद्रभा.

**अभिवाद्य गुरून् गोत्रेण विसृजेद्वाचम् ॥**

'काश्यपगोत्राऽहमभिवादये' इतिवत् स्वगोत्रमुक्त्वाऽभिवाद्य वधूर्वाङ्नियमं त्यजेत्, नावश्यं वदेत् । अथोपरिष्टाद्धोमादि वामदेव्यगानान्तं कुर्यात् ।

रुद्रभा.

**गौर्दक्षिणा ॥**

तत आह– गौरिति । होमत्रयार्थमस्मिन् काले ब्रह्मणे देया । अत एव त्रिष्वपि होमेषु एक एव ब्रह्मा । रुद्रभा.

मधुपर्कावसरः, त्रिरात्रव्रतम्

**अत्रार्घ्यम् ॥**

अस्मिन् काले विवाहकर्त्रे तज्ज्ञातिभ्यश्च वध्वाः प्रदाताऽर्घ्यं दद्यात् । तस्य विधिर्मन्त्रक्रमानुसारेण 'मधुपर्कं प्रतिग्रहीष्यन्' इत्यारभ्य वक्ष्यते ।

रुद्रभा.

**आगतेष्वित्येके ॥**

यदा विवाहार्थं वध्वा गृहमागताः तदेत्यर्थः ।

रुद्रभा.

**त्रिरात्रं क्षारलवणे दुग्धमिति वर्जयानौ सह शय्यातां(? शयीयातां) ब्रह्मचारिणौ ॥**

होमादूर्ध्वं नियमः तद्दिनप्रभृति त्रिरात्रम् । दुग्धम् उद्धृतसारं पिण्याकादि । सह एकस्यां शय्यायां रात्रिषु शयीयातां ब्रह्मचारिणौ निवृत्तमैथुनौ परस्परमन्यतश्च । इतिशब्दोऽन्यस्यापि व्रतविरोधिनो वर्जनार्थः ।

रुद्रभा.

**हविष्यमन्नं परिजप्य 'अन्नपाशेन' इति, 'असौ' इति वध्वा नाम ब्रूयात् ॥**

त्रिरात्रे भोजनकालेष्वाहृतमन्नमभिमृशन् जपित्वा ।

रुद्रभा.

**भुक्त्वोच्छिष्टं वध्वै दद्यात् ॥**

सा चाश्नीयात् । लेखाहोमं समाप्य वधूं 'सुकिंशुकम्' इति रथमारोप्याग्निं च गृहीत्वा भयस्थाने 'मा विदन्' इति जपित्वा स्वगृहं प्रविश्य 'इह गावः' इति जपित्वा शय्यायामुपविश्य वधूमीक्षमाणः 'इह धृतिः' इति जपेत्, मन्त्रलिङ्गात् । तत्र त्रिरात्रं सह शयीयाताम् । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

दम्पत्योरुपवेशनम्, होमः

**'तां ब्रूयात् 'इमामेरकां दक्षिणेन पादेनाभिजहि' इति 'प्र मे पतियानः पन्थाः कल्पताम्' इति । अजपत्यां स्वयं जपेत् 'प्रास्याः' इति । दक्षिणत एरकायां भार्यामुपवेश्योत्तरतः पतिः । उभावन्वारभेयाताम् । स्वयमुभेर्जुहुयाज्जायायामन्वारब्धायाम् । महाव्याहृतिभिर्हुत्वा 'या तिरश्ची' इति सप्तभिर्जुहोति । संपातं प्रथमया मूर्धन्यासिञ्चेत् । 'या तिरश्ची निपद्यसेऽहं विधरणी इति । तां त्वा घृतस्य धारया संराधा राधयामसि संराधायै स्वाहा ॥ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज प्रजां पश्यन्ती सुमनस्यमाना स्वाहा ॥ अन्वद्य नोऽनुमतिर्यज्ञं देवेषु मन्यताम् ।**

(१) जैगृ. १।२०, १।२१.

अग्निश्च हव्यवाहनस्तत्करोतु समृद्धयतां स्वाहा ॥ द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च स्तनं धयतस्ते पुत्रान् सविताऽभिरक्षतु । आ वाससः परिधानाद्बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु पश्चात् स्वाहा ॥ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाऽघम् । शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा ॥ यानि कानि च पापानि सर्वाङ्गेषु तवाभवन् । पूर्णाहुतिभिराज्यस्य सर्वाणि तान्यशीशमं स्वाहा ॥ ', ' प्रजापते ' इत्येका ॥

तामिति । परिहितोपसंवीतवस्त्रद्वयामाचान्तोपसन्नां वधूमग्न्यात्मनोर्मध्येन नीत्वा उपवेश्य श्रीसूक्तेन मङ्गल्यसूत्रं बद्ध्वा भूषणान्यलङ्कृत्य प्रत्यङ्मुखः ( ? श्व- ) श्वशुरेण संकल्प्य यथाशक्ति ( दत्वा ? ) गोत्रनामपुरःसरं दत्तामेनामुपवेश्य । भूम्यालम्भादिपुरस्तन्त्र आज्यानन्तरं लाजानां ( वा इति ? ) उत्पवनम् । तन्त्रान्ते एरकां प्रसार्यानन्तरमिदम् । अभिजहि आरोहेत्यर्थः । प्र मे इति । वधूरेरकां प्राङ्मुखी आरोहति । अजपत्यामिति । 'प्र मे ' इत्यादि तस्यामजपत्यां वरः स्वयं 'प्राञ्चाः पतिवानः पन्थाः कल्पताम्' इति जपेत् । उत्तरतः पतिरिति । उपविशेदित्यर्थः । उभावन्वारभेयातामिति । उभौ दम्पती तामेरकामन्वारभेयातां सहैवाऽऽरोहेताम् । या तिरश्चीति । संराधा नाम देवता, सा च पृथिव्यात्म( ? तिम )का, साऽत्रेज्यते । संराधा हे संराधे, या त्वम् ' अहं विधरणी ' इति सर्वस्य प्रपञ्चस्य धारयित्री इति संकल्प्य तिरश्ची निपद्यसे तिर्यग्भूता शेषे पृथिवीरूपेण, त्वा त्वां घृतस्य धारया राधयामसि तर्पयामः । अत्र ऋगर्थेन सिद्धे ऋचः परं चतुर्थ्यन्त आदरात् । श्रीव्या.

पाणिग्रहणम् , अश्मारोपणम् , समीक्ष्यमाणस्य जपः ,
परिक्रमणम् , लाजहोमः , सप्तपदी ,
मार्जनम् , प्रेक्षकानुमन्त्रणम् ,
ध्रुवादिदर्शनम्

अथास्या दक्षिणेन पाणिना दक्षिणं पाणिं गृह्णाति । प्रहस्तं पुंसः । अङ्गुलीः स्त्रियः । साङ्गुष्ठं मिथुनकामः ' गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसत् । भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयोऽहं मनुष्यजाः ॥ ' इति । उपनयनावृताऽश्मानमधिष्ठापयेत् स्त्रीवत् । उत्तरपुरस्तादग्नेर्भार्यया संप्रेक्ष्यमाणो जपति– 'अघोरचक्षुरपतिघ्नी म एधि शिवा पतिभ्यः सुमनाः सुवर्चाः । जीवसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥ आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा । अदुर्मङ्गलीः पतिलोकमाविश शं न एधि द्विपदे शं चतुष्पदे ॥ तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेफम् ॥ अमोऽहमस्मि सा त्वं सामाहमस्म्यृक्त्वं मनोऽहमस्मि वाक् त्वं द्यौरहं पृथिवी त्वं तावेहि संभवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै मामनुव्रता भव सहशय्या मया भवासौ ॥ ' इति । अथास्या नाम गृहीत्वाऽग्निं परिक्रमेयाताम् – ' ईर्त्वेमस्यूर्क्ते माता नाम सा मामेहि सह प्रजया सह रायस्पोषेण ' इति । तस्यां प्रत्याव्रजितायां भ्राताऽन्यो वा सुहृदभिघारितान् लाजाञ्छूर्पादञ्जलिनोपघातमञ्जलावावपेदुपस्तीर्णाभिघारितान् कृत्वा । तानितराऽग्नौ जुहुयात् – ' कन्यला, इयं नारी, अर्यमणम् ' इति । ' कन्यला पितृभ्यः पतिलोकं यतीयमव दीक्षामयक्षत स्वाहा ॥ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥ अर्यमणं नु देवं कन्याऽग्निमयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातु मामुतः स्वाहा ॥ ' इति । होमान्तेषु जपति चतुः ' विश्वा उत त्वया वयं- धारा

**उदन्या इव । अतिगाहेमहि द्विषः ॥ ' इति । तूष्णीं धारिका कामायाऽऽवपेच्चतुर्थम् । दक्षिणं शूर्पपुटं काम इत्याचक्षते । उत्तरपुरस्तादग्नेः सप्त पदान्यभ्युत्क्रमयेत् ' एकमिषे ' इति प्रतिमन्त्रम् । ' एकमिषे विष्णुस्त्वाऽन्वेतु । द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु । त्रीणि रायस्पोषाय विष्णुस्त्वाऽन्वेतु । चत्वारि मयोभवाय विष्णुस्त्वाऽन्वेतु । पञ्च प्रजाभ्यो विष्णुस्त्वाऽन्वेतु । षडृतुभ्यो विष्णुस्त्वाऽन्वेतु ' । ' सखा सप्तपदी भव ' इति सप्तमे । प्राचीमवस्थाप्योदकुम्भेन मार्जयेरन्नापोहिष्ठीयाभिस्तिसृभिः । प्रेक्षकाननुमन्त्रयते – ' सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वा याथास्तं विपरेतन ॥ ' इति । प्रेक्षयेद्ध्रुवमरुन्धतीं सप्त ऋषीन् पश्यानीति प्रतिजानानाम् । 'ध्रुवोऽसि' इति ध्रुवमुपतिष्ठते । ' ध्रुवोऽसि ध्रुवाऽहं पतिकुले भूयासममुष्य ' इति पतिनाम गृह्णीयादसावित्यात्मनः । अरुन्धतीम् ' अरुन्धत्यरुद्धाऽहं पत्या भूयासममुना ' इति पतिनाम गृह्णीयादसावित्यात्मनः ॥**

अथेति । संपातसेकानन्तरमिदम् । प्रहस्तमिति । पुंसः प्रजाः कामयमानः प्रहस्तं मणिबन्धनप्रदेशं गृह्णाति । ईर्त्वेमिति । हे जानकि, त्वम् ईरसि, ईर्नाम देवता श्रियोऽधिष्ठात्री ' इषे त्वा ' इत्यादिप्रसिद्धा, साऽसि । दीर्घरेफौ प्रमादपठितावार्षौ वा । ते माता ऊर्क्, ऊर्क् नाम देवता प्रजानामन्नानां चाधिष्ठात्री, सा ते माता । यस्मात्त्वमूर्जः पुत्री ई र् चेति नाम सिद्धं तस्मात् सा तादृशी त्वं प्रजया सह रायस्पोषेण सह मामेहि प्राप्नुहि । तस्यां प्रत्यागतायां भ्राता वा अस्या अन्यो वा बन्धुः लाजानभिघारितान् कृत्वा कारयित्वा वा शूर्पादञ्जलिनोपहत्योपहत्यास्या अञ्जलौ द्विर्द्विरावपेत् । तानिति । तान् लाजान् । इतरा पत्नी । कृत्वा भर्त्रा कारयित्वा इत्यर्थः । प्रत्याहुति अग्निं परिक्रम्य परिक्रम्य तिष्ठन्ती जुहुयात् । कन्यलेत्यादिमन्त्रांस्तु लिङ्गात् पतिरेव वदेत् ।

इयं कन्यला कन्या पितृभ्यः पतिलोकं यती पितृगृहात् पतिगृहं प्राप्नुवती दीक्षां सहधर्मचारिणीनियमम् अवायक्षत अवाप्नोति स्म इत्यर्थः । इयं नारी मम भार्या उपब्रूते मन्मुखेन ब्रूते । कथमिति चेत्, दीर्घायुरित्यादि । इयं कन्या मम भार्या अर्यम्णं नु देवमिममग्निं भावयित्वा अयक्षत अयजत । स देवो अर्यमा इमां मां च इतः प्रदेशात् प्रमुञ्चतु मद्गृहं प्राप्तुमनुजानातु ।

होमान्तेष्विति । होमत्रयस्यास्य वक्ष्यमाणधारिकावपनस्य चान्ते चतुःकृत्वः इमं मन्त्रं जपेत् । तूष्णीमिति । चतुर्थमग्नावावपेत् लाजधारिका कामाय बध्वा इष्टप्राप्त्यर्थम् । दक्षिणमिति । अतस्तेनाऽऽवपेदिति भावः । कामसाधनत्वात्तस्मिन् कामशब्दः । प्राचीवस्थाप्येति । सप्तमे पदे एनां निवर्त्य प्राङ्मुखीमत्रस्थाप्य उदकुम्भगताद्भिरुदकुम्भधरो लाजवापः पतिश्च तां प्रोक्षयेयुः । प्रेक्षकानिति । विवाहोत्सवे प्रेक्षकाः । प्रेक्षयेदिति । प्रागेव तथा प्रतिज्ञाप्य तथा प्रतिज्ञां कुर्वतीं तां ध्रुवादीन् यदा प्रथममेते दृश्यन्ते तदा प्रेक्षयेत् तान् दर्शयित्वा पश्येति प्रेरयेत् । साऽपि ध्रुवं दृष्ट्वा । श्रीव्या.

## कौशिकगृह्यसूत्रम्

वध्वा अग्निसमीपनयनम्, युगच्छिद्रतोऽभिषेकः, अश्मारोपणम्, लाजहोमः, परिणयनम्, सप्तपदी, तल्पोपवेशनम्, पादप्रक्षालनम्, योक्त्रविचर्तनम्, भृत्यसंरम्भः, सुरभिचूर्णावापः, वध्वा उत्थापनप्रतिष्ठापने

**[1] ' भगस्त्वेतः ' इति हस्ते गृह्य निर्णयति ॥**

उपाध्यायः कौतुकगृहे प्रविश्य कुमारीं हस्ते गृहीत्वा निर्णयति । दाकेटी.

**शाखायां युगमाधाय दक्षिणतोऽन्यो धारयति ॥**

**दक्षिणस्यां युगधुर्युत्तरस्मिन् युगतर्मनि दर्भेण विग्रथ्य ' शं ते ' इति ललाटे हिरण्यं संस्तभ्य जपति ॥**

(१) कौसू. ७६।१०–३३.

तद्म समयाऽवसिञ्चति ॥

उपगृह्योत्तरतोऽग्नेः 'अङ्गादङ्गात्' इति निनयति ॥

'स्योनम्' इति शकृत्पिण्डेऽश्मानं निदधाति ॥

तमातिष्ठेत्यास्थाप्य ॥

'इयं नारी' इति ध्रुवां तिष्ठन्तीं पूल्यान्थावापयति ॥

त्रिरविच्छिन्दन्तीं चतुर्थीं कामाय ॥

'येनाग्निः' इति पाणिं ग्राहयति ॥

'अर्यम्णे' इत्यग्निं त्रिः परिणयति ॥

'सप्त मर्यादा' इत्युत्तरतोऽग्नेः सप्त लेखा लिखति प्राच्यः ॥

तासु पदान्युत्क्रामयति ॥

लेखासूपरि कुमारी पदानि ददाति । दाकेटी.

'इषे त्वा सुमङ्गलि प्रजावति सुसीम' इति प्रथमम् ॥

'ऊर्जे त्वा, रायस्पोषाय त्वा, सौभाग्याय त्वा, साम्राज्याय त्वा, संपदे त्वा, जीवातवे त्वा सुमङ्गलि प्रजावति सुसीम' इति, सप्तमं 'सखा सप्तपदी भव' इति ॥

'आरोह तल्पं भगस्ततक्ष' इति तल्प उपवेशयति ॥

उपविष्टायाः सुहृत्पादौ प्रक्षालयति ॥

प्रक्षाल्यमानावनुमन्त्रयते-- 'इमौ पादौ सुभगौ सुशेवौ सौभाग्याय कृणुतां नो अघाय। प्रक्षाल्यमानौ सुभगौ सुपत्न्याः प्रजां पशून् दीर्घमायुश्च धत्ताम् ॥' इति ॥

'अहं विष्यामि प्र त्वा मुञ्चामि' इति योक्त्रं विचृतति ॥

अपरस्मिन् भृत्याः संरभन्ते ॥

ये जयन्ति ते बलीयांस एव मन्यन्ते ॥

'बृहस्पतिना' इति सर्वसुरभिचूर्णान्यृचर्चा काम्पीलपलाशेन मूर्ध्न्यावपति ॥

'उद्यच्छध्वम्, भगस्ततक्ष, अभ्रातृघ्नीम्' इत्येकैकयोत्थापयति ॥

'प्रतितिष्ठ' इति प्रतिष्ठापयति ॥

## वैखानसगृह्यसूत्रम्

अग्निसमीपमानीतायै कूर्चदानम्, प्रधानहोमः, अश्मस्पर्शनम्, पाणिग्रहणम्, लाजहोमः, परिक्रमणम्, उत्तरतन्त्रम्, सप्तपदी, हृदयाभिमर्शः, प्रोक्षणम्, स्तोमारोपणम्

[१]ततः सह स्नाताया वध्वा नववस्त्रालंकारायाः पुण्याहान्ते पाणिं गृहीत्वा 'सुमङ्गलीरियं वधूः' इत्यग्निशालामागत्य प्राङ्मुखमासयित्वा तस्यै शुद्धाम्बरवेषः कूर्चं ददाति। ततः परिस्तीर्य 'अग्निरैतु, इमामग्निस्त्रायताम्, मा ते गृहे, द्यौस्ते पृष्ठम्, अप्रजस्ताम्, देवकृतम्' इति पञ्चवारुणान्तं प्रधानान् जुहुयात्। अग्नेरपरस्यामास्तीर्णेषु दर्भेष्वश्मानम् 'आतिष्ठ' इति वध्वाः पादाङ्गुष्ठेन दक्षिणेन स्पर्शयति। 'प्रत्यङ्मुखः' इति पाणिग्रहणं 'सरस्वति' इति विसर्गम् 'अघोरचक्षुः' इत्यासनं च कृत्वा 'इमांल्लाजान्' इत्यभिघार्य 'इयं नारी' इति तस्या लाजाञ्जलिना जुहोति। उदायुषा इत्युत्तिष्ठति। 'प्रत्यङ्मुखः' इति वधूमुखेक्षणं 'सरस्वति' इति पाणिग्रहणम् 'अघोरचक्षुः' इति विसर्गम् 'इमांल्लाजान्' इति लाजपूरणम् 'इयं नारी' इति होमम् 'उदायुषा' इत्यग्निप्रणामं कुर्यादित्येके ॥

'विश्वा उत त्वया' इत्यग्निं प्रदक्षिणं कृत्वा 'अतिगाहेमहि द्विषः' इत्यासित्वा त्रिधैवं लाजहोमं जुहुयात्। ततो मूलहोमान्तेऽग्निं पतिघ्न्यन्तं वायुं निन्दितान्तमादित्यं घोरान्तं गन्धर्वं यशोघ्न्यन्तं चन्द्रं पुत्रघ्न्यन्तं हुत्वा व्याहृतिः। 'प्रासावीः' इत्यन्तैश्चतुर्भिः प्रवाहणं कृत्वा पुनः

(१) वैगृ. ३।२-४.

परिस्तीर्य स्विष्टकृन्मिन्दाहुती विच्छिन्नमूढ्धि-सप्तसमिद्व्याहृतीश्च जुहुयात् । अग्नेरपरस्यामास्तीर्योदगग्रान् सप्त बर्हिषो वध्वा सह दक्षिणेन पादेन 'एकमिषे विष्णुः' इति, 'द्वे ऊर्जे' इति, 'त्रीणि व्रताय' इति, 'चत्वारि (मायोभवाय)' इति, 'पञ्च पशुभ्यः' इति, 'षड्रायस्पोषाय' इति, 'सप्त सप्तभ्यः' इति तान् पर्यायेणाऽऽक्रम्य गत्वा 'सखा' इति निवर्तेत । मम हृदय इति तस्या हृदयमभिमृशति । प्रोक्षणैः प्रोक्ष्य पुण्याहं स्वस्तिघोषेण 'अरुन्धतीन्द्राण्यदितिः श्रीरिव' इति वध्वाः 'मनुः प्रजापतिः पुरुषोत्तमो महेन्द्र इव' इति वरस्य च चत्वारि स्तोमान्यारोपयेयुरिति पाणिग्रहणम् । ध्रुवदर्शनान्तमित्येके । ततः प्रभृति गार्हस्थ्यं धर्ममनुतिष्ठतीति विज्ञायते ॥

## गृह्यसूत्रम्

पाणिग्रहणजपपर्यन्तमञ्जल्यविमोकः, पाणिग्रहणप्रकारः, उत्तरविवाहदेशः

[1]हुत्वाऽऽज्यमथ जायाया अन्वारभ्याञ्जलिं पतिः ।
न विमुञ्चेदनापत्सु यावत्पाणिग्रहो जपः ॥

[2]उत्तानेनोत्तानं पाणिं गृह्णीयान्नीचेन चोत्तानम् ॥

* [3]अथोत्तरविवाहः । प्रागुदीच्यामन्यत्र वा ब्राह्मणकुले मन्त्रवति वेद्यां वा ॥

* 'प्रागुदीच्यां दिशि०' (गोगृ. २।३।१) इति गोमिलसूत्रव्याख्यानमत्रानुसंधेयम् ।

(१) संत. ८९८ जायायाः (जायायाम्); मृदुला. १।२।२.

(२) प्रपा. ३५८ शाखान्तरे. (३) संत. ९०१.

## हारीतः

कन्यात्वनिवृत्तिपूर्वकजायापतित्वोत्पत्तिकारणे मतभेदाः

[1]आसनाभिवादनोत्थानार्घ्यातिथ्यानि धर्मसाधनानि साधूनाम् । एतेषां प्रदाने कन्याया अतिक्रमो न विद्यतेऽन्यत्र याथातथ्यात् । क्लीबपतितप्रोषितकुब्जितप्रमीतेषु मीमांसन्ते । 'नोदकेन न वाचा च' इति प्रजापतिः । 'स्नात्वा चेत् प्रतिगृह्णीयात् तस्य दद्यात्' इत्येके मन्यन्ते । तन्न, अकृत्स्नविधानात् संख्यायोगात् । पाणिग्रहणमन्त्रैरपरे । तदप्याद्यानाम् । अधोवर्णेषु क्षत्रियादिषु शरयष्टिदशान्तग्रहणात्सिद्धम् । तत्रापि न पाणिग्रहणे जायात्वम् । कृत्स्नं हि जायापतित्वं सप्तमे पदे ॥

(१) आसनेत्यस्यायमर्थः— कन्यावरणार्थमागतानामर्घ्यादिप्रदाने कन्याया अतिक्रमः कन्यात्वस्य निवृत्तिः वरान्तरदानानर्हत्वं न भवति । अन्यत्र याथातथ्यादिति । याथातथ्यात् कन्यादानविषयसत्यवचनादन्यत्र । (अन्यत्र?) क्लीबादिषु सत्यवचनेऽपि कृते अतिक्रमो नास्तीत्युक्तं क्लीबेत्यादिना । एतेषु च उदकपूर्वदाने, वाग्दाने च कन्यात्वनिवृत्तिः । यत्तु 'अद्भिरेव द्विजाग्र्याणाम्' इत्यादि, तत् दानोपक्रममात्रमिति प्रजापतेर्मतम् । अन्ये तु विधिपूर्वकप्रतिग्रहेण दाननिष्पत्तिरिति मन्यन्ते इत्याह— स्नात्वेत्यादि । तदपि दूषयति— तत्रे(?न्ने)त्यादि ।

(१) गृक. ६६-६७ प्रदाने (प्रदानं) कुब्जित (प्रव्रजित) वाचा च (वाचा) तन्न (तत्र) क्षत्रियादिषु ..पदे (त्रिषु शरप्रतोदयष्टिदशान्तग्रहणात् सिद्धम् । तत्रापि न पाणिग्रहणेन जायात्वम्, कृत्स्नं हि जानीयात् सप्तमे पदे जायापतित्वम्); गृर. ५५-५६ तेऽन्यत्र याथातथ्यात् (ते । अन्यथाथातथ्यात् अन्यत्र) मीमांस (आमीमांस) स्नात्वा चेत् (स्नात्वा चेति) णात्सिद्धम् । (णसिद्धं); उत. १०७ (तत्रापि पाणिग्रहणेन जायात्वं कृत्स्नं हि जायापतित्वं सप्तमे पदे) एतावदेव, लघुहारीतः.

अकृत्स्नविधानात् विधेरसंपूर्णत्वात् । अत्र हेतुः— संख्यायोगादिति । स चोक्तो नारदेन— 'वरणाद्ग्रहणं पाणेः स विवाहो द्विलक्षणः । ' (नास. १२।२) इति । एवमप्यकृत्स्न इत्याह— पाणिग्रहणेत्यादि । 'पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । ' (मस्मृ. ८।२२७) इति मनौ नियतशब्दप्रयोगात् पाणिग्रहणानन्तरं विवाहसंपत्तिरित्यपरे । तदप्याद्यानामित्यादि । आद्यानां ब्राह्मणानाम् । अधोवर्णेषु क्षत्रियादिषु यदि प्रतोदः । एतेषु पाणिग्रहणाभावे शङ्का न कार्या, (पाणिग्रहणं कार्यम् ?) शरादिग्रहणस्य विधानात् सिद्धं पाणिग्रहणम् । एवमपि जायापतित्वं न संपूर्णम्, यथा संपूर्णं भवति तदिदानीमाह— कृत्स्नं हीत्यादि । एतेन वरेण कन्यायाः सप्तमपदपर्यन्तनयनं मन्त्रवत्पाण्यादिग्रहणविशिष्टं द्विजातीनां प्रधानं विवाहकर्म । एतदेव च जायात्वापादकम् । शूद्रस्य एतदेवामन्त्रकम् । गृक. ६७—६८

(२) आसनेत्यादि । अयमर्थः— कन्यावरणार्थमागतानां साधूनामभिवादनोत्थानार्घ्यातिथ्याचरणैः कन्याया अतिक्रमः अन्यस्मिन् दाना(न)र्हता न भवति, अन्यत् (? अन्यत्र) याथातथ्यात् याथातथ्यादन्यत्र वरगोचरकन्यादानसत्यवचनादन्यत्र । अन्यत्र क्लीबादि-(? बे)ति । यदि सत्यविषयाः क्लीबादयो भवन्ति तदा मीमांसन्ते कृतेऽपि तत्याग एव कर्तव्यः । नोदकेन नोदकपूर्वत्यागेन, न वाचा न वाग्दानेन कन्याया अतिक्रम इति प्रजापतेर्मतम् । मतान्तरमाह— स्नात्वा चे(दि)ति । स्नात्वा चेत् प्रतिग्रहीतुमुपस्थितो भवति, तस्यैव दद्यात् । तत्स्वयं दूषयति— अकृत्स्नविधानात् । अत्र हेतुः— संख्यायोगात् । विलक्षण(? 'द्विलक्षणः' इति)नारदवचनोक्तद्वित्वसंख्यायोगात् संपूर्णता । तच्चेहोभयत्रापि द्वयं नास्ति । पाणिग्रहणेन विवाहसंपूर्तिर्भवतीति अपर आहुः । पाणिग्रहणमन्त्रैरिति । 'पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । ' इति मनुवाक्ये नियतसमयदर्शनात् पाणिग्रहणमन्त्रानन्तरं विवाहसंपूर्तिरित्यर्थः । अस्य विशेषविषयत्वमाह— तदप्याद्यानामिति । आद्यानां ब्राह्मणानाम् । अधोवर्णेषु क्षत्रियादिषु त्रिषु यथासंख्यं शरयष्टिदशान्तग्रहणानां पाणिग्रहणस्थले विहितत्वात् शरादिग्रहणेनैव तेषां सिद्धं पाणिग्रहणम् । कथं तर्हि जायापतित्वमिति स्वमतमाह— कृत्स्नेति । अस्येदं तात्पर्यम्— द्विजातीनां ब्राह्मणादित्रयाणां सप्तमपदपर्यन्तनयनं मन्त्रवत् पाण्यादिग्रहणं संपूर्णं विवाहकर्म, शूद्रस्य तु तत् दशाग्रहणममन्त्रकम् । * गृर. ५६

## विष्णुः

पाणि-शर-प्रतोद-दशान्तानां ग्रहणे वर्णतो व्यवस्था

[१]तासां सवर्णावेदने पाणिर्ग्राह्यः ॥
असवर्णावेदने शरः क्षत्रियकन्यया ॥
प्रतोदो वैश्यकन्यया ॥
वसनदशान्तः शूद्रकन्यया ॥

## शङ्खः शङ्खलिखितौ च

पाणि-शर-प्रतोद-दशान्तानां ग्रहणे वर्णतो व्यवस्था

[२]पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम् ॥
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥
[३]इषुं गृह्णाति राजन्या, प्रतोदं वैश्या, दशान्तं शूद्रा, ब्राह्मणस्तु सवर्णायाः पाणिं गृह्णीयात् ॥

## मनुः

पाणि-शर-प्रतोद-दशान्तानां ग्रहणे वर्णतो व्यवस्था

[४]पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि ॥

(१) पाणिग्रहणं नाम गृह्यकारोक्तः संस्कारः सवर्णासु समानजातीयासु उह्यमानासूपदिश्यते शास्त्रेण

---

* गृक., गृर. इत्येतयोरशुद्धं व्याख्यानं सुधीभिः शोधनीयम् ।

(१) विस्मृ. २४।५—८.

(२) शंस्मृ. ४।१४.

(३) पमा. ४९६ शङ्खलिखितौ.

(४) मस्मृ. ३।४३ ; गृक. ६८ ; चदा. ६८६ पैठीनसिः ; गृर. ५७ ; पमा. ४९६ ; उत. १०७ ; संप्र. ८३५ ; मुक्ता. १४५ ; संग. २७८ ; सस्मृ. ५१.

विधीयते, कर्तव्यतया प्रतिपाद्यते । असवर्णासु यदुद्वाहकर्म तत्रायं वक्ष्यमाणो विधिर्ज्ञेयः । ¶ मेधा.

(२) सवर्णास्विति सामान्योक्त्या शूद्राणामप्यग्निसाक्षिकममन्त्रकं पाणिग्रहणमात्रं कर्तव्यत्वेनाभिमतम् । मवि.

(३) असवर्णासु पाणिग्रहणाभावेन प्रकारान्तरं वक्तुं सवर्णास्वेव 'गृभ्णामि ते सौभगत्वाय' इति पाणिग्रहणं विधत्ते—पाणीति (द्वाभ्याम् ?) । अयं वक्ष्यमाणः 'शरः' इत्यादिः । मच.

(४) करेण करस्य ग्रहणं (पाणिग्रहणं) पाणिग्रहणमेव संस्कारः पाणिग्रहणसंस्कारः । मुक्ता. १४५

(५) अयं वक्ष्यमाणः । $ नन्द.

(६) पाणीति । सवर्णासु स्त्रीषु पाणिग्रहणसंस्कारः उपदिश्यते । तद्यथा ब्राह्मणस्य ब्राह्मण्याः पाणिग्रहणमिति स्ववर्णास्वित्यर्थः । असवर्णासु स्त्रीषु विवाहेषु( ? ह्येषु ) ब्राह्मणस्यायं विधिरुद्वाहकर्मणि ज्ञेयः । भाच.

**'शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ॥**
**वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥**

(१) ब्राह्मणेनोह्यमानया क्षत्रियया शरः ब्राह्मणपाणिपरिगृहीतो ग्राह्यः, पाणिग्रहणस्थाने शरस्य विधानात् । प्रतोदः बलीवर्दानामायसः क्रियते, येन वाह्यमानाः पीड्यन्ते, हस्तिनामिवाङ्कुशः । वसनस्य वस्त्रस्य दशा ग्राह्या शूद्रया । उत्कृष्टजातीयैर्ब्राह्मणादिवर्णैः वेदने विवाहे । † मेधा.

(२) क्षत्रियाधृतं शरं वैश्यया च धृतं प्रतोदं पाणिग्रहणमन्त्रैर्वरो गृह्णीयात् । शूद्राविवाहे तु शूद्रा वरस्य वसनाञ्चलममन्त्रकं गृह्णीयात्, 'शूद्रामप्येके मन्त्रवर्जम्' इति स्मृतेः । उत्कृष्टः स्ववर्णोत्कृष्टवर्णः । एतेन क्षत्रियेण वैश्यायाः शूद्रायाश्च, वैश्येन च शूद्राविवाहेऽयमेव क्रम इति कथितम् । मवि.

(३) क्षत्रियया पाणिग्रहणस्थाने ब्राह्मणविवाहे ब्राह्मणहस्तपरिगृहीतकाण्डैकदेशो ग्राह्यः । वैश्यया ब्राह्मणक्षत्रियविवाहे ब्राह्मणक्षत्रियावधृतप्रतोदैकदेशो ग्राह्यः । शूद्रया पुनर्द्विजातित्रयविवाहे प्रावृतवसनदशा ग्राह्या । ¶ ममु.

(४) शरः पाणिना क्षत्रियया गृहीतो यस्तं पाणिस्थानीयं विप्रो गृह्णीयात्, न तु विप्रहस्तस्थः शरः क्षत्रियविषय( ? क्षत्रियया ग्राह्यः ) इति, कन्यापाणिस्थाने शरस्य विधानात् । अन्यथा मन्त्रलिङ्गविरोधः । अतः 'क्षत्रियया शरो ब्राह्मणपाणिपरिगृहीतो ग्राह्यः' इति मेधातिथेः प्रलापः । एवं प्रतोदादिषु । प्रतोदः बलीवर्दादिचालनसाधनः । उत्कृष्टवेदने द्विजादिकर्तृकविवाहे । मच.

(५) क्षत्रियया ग्राह्यः इति वदता पूर्वं वरेण गृहीतं शरं क्षत्रिया गृह्णीयादित्युक्तं भवति । एवमुत्तरत्रापि । $ संप्र. ८३५

(६) उत्कृष्टवेदने सवर्णादुत्तरस्य वर्णस्य लाभे, विवाहे इति यावत् । ‡ मुक्ता. १४५

पाणिग्रहणादिसप्तपदान्तविधिना जायापतित्वनिष्पत्तिः

**'पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।**
**तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥**

¶ गोरा., ममु. मेधावत् ।

$ शेषं मुक्तावत् ।

† भाच. मेधागतम् ।

(१) मस्मृ. ३।४४ ; मिता. १।६२ उत्त. ; अप. १।६२ उत्त. ; गृक. ६८ ; चदा. ६८६ पैठीनसिः ; गृर. ५७ ; पमा. ४९६ उत्तरार्धे ( वासोदशा शूद्रया तु वर्णोत्कृष्टस्य वेदने ॥ ) ; मपा. १६१ उत्त. ; दीक. १।६२ उत्त. ; उत. १०७ ; वीमि. १।६२ उत्त. ; संप्र. ८३५ ; मुक्ता. १४५ ग्राह्यः (धार्यः) शेषं पमावत् ; संम. ६३ (=) उत्त. ; संग. २७८ ; सस्मृ. ५३ पमावत् ; कृभ. ११३३ (=) उत्त.

¶ गोरा. ममुवत्, अशुद्धत्वान्न गृहीता ।

$ संग. संप्रवत् ।

‡ नन्द. मुक्तावत् ।

(१) मस्मृ. ८।२२७ ; मेधा. ३।२७ उत्त. ; गृक. ६६ मनुकात्यायनौ : ६७ पू. ; मवि. ३।३२ ; स्मृच. ८३ णिका मन्त्रा ( णमन्त्रैस्तु ) ; ममु. ५।१५२ उत्त. ;

( १ ) दारा भार्या, तस्या लक्षणं निमित्तं विवाहमन्त्राः, तैस्तत्र प्रयुक्तैर्विवाहाख्यः संस्कारो निर्वर्तते। द्विजातीनां पुनर्मन्त्राः। तत्र शूद्रस्यादारप्रसङ्गः, न हि तस्य मन्त्राः सन्ति, मन्त्रवर्जं सर्वान्येतिकर्तव्यताऽस्ति। अतो विवाहाख्यसंस्कारोपलक्षणं मन्त्राः। तेषां मन्त्राणां निष्ठा समाप्तिः सप्तमे पदे विज्ञेया। लाजाहोममभिनिर्वर्त्य त्रिः प्रदक्षिणमग्निमावर्त्य सप्तपदानि स्त्री प्रक्रम्यते— 'इष एकपदी भव' इत्यादि यावत् 'सखा सप्तपदी भव' इति। तस्मिन् प्रक्रान्ते कन्यायाः पदे कन्यापितुर्वोढुर्वाऽनुशयो नास्ति। उन्मादवत्यपि भार्यैव, न त्याज्या। मैथुनवत्यास्तु नैवासौ विवाहः। सत्यपि लाजाहोमादावितिकर्तव्यतास्वरूपे न भार्या सा। अतस्तत्र द्रव्यान्तरवदनुशयः। यथा च शूद्रकर्तृकेणाऽऽधानेनाऽऽहवनीयो न भवति, सपिण्डायाश्च कृतेऽप्यग्निसंस्कारे न विवाहस्वरूपत्वम्। तत्र तु प्रसिद्धम्—'संस्कारकरणादेव प्रायश्चित्तीयते पुमान्।'। कन्या चान्यस्याप्यविवाह्या, वसिष्ठवचनात्— 'यदि प्रजनविघातरोगगृहीतामूढ्वा न त्यजति का तर्हि गतिः'। सत्यधिकारे अन्यामुद्वाहयिष्यति, 'सद्यस्त्वप्रियवादिनी' ( मस्मृ. ९।८१ ) इतिवत्। कृते तु जातपुत्रायामाधाने यदि क्षयो व्याधिः स्यात्तथाऽपि नैनामधिविन्देत्, अधिवेदननिमित्तानां परिगणनात् ( मस्मृ. ९।७७-८५ )। तत्रापि यदि 'कामतस्तु प्रवृत्तानाम्' इत्येतत्प्रयोजकमिष्यते, न निवारयामः।

तेनैव संक्षेपतः कन्यानां धर्मः। यथाऽन्येषां द्रव्याणां दशाहादूर्ध्वमपि साम्ना प्रत्यर्पणम्, नैवं कन्यानां कृतविवाहानाम्। शुल्कदेयानामपि प्राग्विवाहाद्द्रव्यान्तरधर्मः, 'या तु धर्माय दीयते तस्या नैवानुशयः' इति वचनात्। तत्रापि 'दत्तामपि हरेत्कन्यां ज्यायांश्चेद्वर आव्रजेत्।' ( यास्मृ. १।६५ ) इत्यस्त्येवापहार आ सप्तमपदात्। सप्तमे तु पदे दानानिवृत्तेर्गवादिद्रव्यदानवन्नास्त्यपहारः। अथैव केनचित् कस्मैचित् गवि दत्तायां न तयोरन्योन्येच्छयाऽनुशयो दानादाने, दानस्य तदानीमेव निर्वृत्तत्वात्। प्रतिगृहीतं चेद्दात्रे पुनः प्रयच्छेत्तद्दाना( ? त्तदा दाना )न्तरमेव तत्स्यात्, न पूर्वदाननिवृत्तिः। एवं सगुणयोः कन्यावरयोर्नान्योन्येच्छया त्यागोऽस्ति, प्रागपि विवाहात्। विवाहे तु कृते दोषवत्या अपि नास्ति त्यागः कन्यायाः। स्पृष्टमैथुना कन्यैव न भवति, अतोऽसौ त्यज्यते, कन्याया यतो विवाहो विहितः। विवाहश्चोपभोगस्थानीयः। यथा परिभुक्तं वस्त्रमन्तर्दशाहमपि नैव विक्रेत्रेऽर्प्यते तथैव कन्या कृतविवाहा। पुनश्चायमर्थो निर्णेष्यते 'सकृत्कन्या प्रदीयते' ( मस्मृ. ९।४७ ) इत्यत्रान्तरे। * मेधा.

( २ ) वैवाहिका मन्त्राः निश्चितं भार्यात्वे निमित्तम्। तैः प्रयुक्तैर्भार्या भवति। तेषां पुनर्मन्त्राणां 'सखा सप्तपदी भव' इति मन्त्रेण कन्यायाः सप्तमे पदे दत्ते सति शास्त्रज्ञैः समाप्तिर्बोद्धव्यैव च। सप्तमात्पदादर्वागकन्यात्वपरिज्ञानेऽनुशये सति त्यजेत्, नोर्ध्वम्, कानीनसहोढगूढोत्पन्नानां शास्त्रे वोढुः पुत्रत्वदर्शनात्। § गोरा.

( ३ ) निष्ठा परिसमाप्तिः। समाप्तिश्चात्र भार्यात्वनिष्पादकत्वरूपा। सप्तमे पदे सप्तमं पदं प्राप्तवत्यां कन्यायामित्यर्थः। गृक. ६६

( ४ ) निष्ठा समाप्तिः भार्यात्वनिष्पत्तिरूपा सप्तमे पदे प्राप्तवत्यां कन्यायामिति बोद्धव्यम्। ( इदमपि क्वचित् सज्यते। तथा चानन्तरमेव पूर्वोक्तमुक्तम्। ? ) गृर. ५५

---

गृर. ५५ मनुकात्यायनौ : ५६ पू.; पमा. ४९२ स्मृचवत्; प्रपा. ३६१ तेषां ( तेषु ) शेषं स्मृचवत्; मर. २० मनुकात्यायनौ; उत. १०६-१०७, १३०; संप्र. ५८५ : ८३६ णिका मन्त्रा ( णमन्त्रास्तु ); चम. ८८ स्मृचवत्; मुक्ता. ११८; शूक. १०९; आन. १७६ स्मृचवत्; बाल. १।६५ पृ. २०४ उत्त.; संग. २८५ णिका मन्त्रा ( णमन्त्रास्तु ).

* नन्द. मेधागतम्।

§ मवि. गोरागतम्, मभु. गोरावत्।

(५) निष्ठा भार्यात्वस्य समाप्तिरूपा सप्तमे पदे गतायां कन्यायामिति बोध्यम् । * उत. १३०

(६) पाणिग्रहस्य दृष्टतया तन्मन्त्राणां क्वोपयोगस्तत्राऽऽह– पाणिग्रहेति । तेषां मन्त्राणां निष्ठा समाप्तिः सप्तमे पदे सप्तमपदगमनेन कन्यायाः । अन्यथा विधितो दारत्वासिद्धेः सर्वधर्मलोपापत्तिरिति । एतेन 'सखा सप्तपदी भव' इति मन्त्रेण कन्यायाः सप्तमपदगमनेन भार्यात्वस्यावधिकथनात्तदभ्यन्तरेऽनुशये सति त्याज्यत्वं सूचितम् । मच.

(७) दारलक्षणं भार्यात्वोत्पत्तौ प्रमाणं विद्वद्भिर्नियतम् । तेषां मन्त्राणां निष्ठा समाप्तिः संपूर्णसंस्कारोत्पादकत्वं सप्तमे पदेऽतिक्रान्ते भवति, 'पाणिगृहीती भार्या स्यादितरा सहधर्मिणी ।' इति त्रिकाण्डीसरणात् । भार्यात्वं पतित्वस्यापि उपलक्षणम् । ¶ संप्र. ८३६

(८) निष्ठा परमावधिः । कन्यावरयोर्दोषदर्शनेऽपि सप्तमपदादूर्ध्वं न परित्याग इत्यर्थः । † मुक्ता. १३८

(९) तेषां मन्त्राणां निष्ठा अवस्था वर्तनोचिता समाप्तिः सप्तमे पदे विद्वद्भिर्विज्ञेया । भाच.

**[१]तावद्विवाहो नैव स्याद्यावत्सप्तपदी भवेत् ।**
**तस्मात्सप्तपदी कार्या विवाहे मुनिभिः स्मृता ॥**

## वृद्धमनुः

विवाहहोमगृहप्रवेशहोमयोस्तन्त्रप्रयोगः

**[२]गृहप्रवेशहोमं तु होमं वैवाहिकं च हि ।**
**एकतन्त्रेण वा कुर्यादेकस्मिन्ननलेऽपि च ॥**

पत्न्या वामभागोपवेशने वेदभेदप्रयुक्तोऽवधिभेदः

**स्ववामे सामगः पत्नीं लाजान् हुत्वोपवेशयेत् ।**
**यजुः सप्तपदादूर्ध्वं होमान्ते चैव बह्वृचः ॥**

* 'विवाहपदार्थः' (संका. पृ. १२०) इति प्रकरणेऽपि उतव्याख्यानं द्रष्टव्यम् ।

¶ संग. संप्रवत् ।

† आन. मुक्तावत् ।

(१) धप्र. ४७ (=) ; संग. २८५.

(२) धप्र. ४७.

पाणिग्रहणादिसप्तपदान्तविधिना दम्पतित्वनिष्पत्तिः

**[१]मृतेऽन्यस्मिन्वरे देया यदा सप्तपदात्पुरा ।**
**पाणिग्रहसमाप्तिस्तु पतित्वं सप्तमे पदे ॥**
**पाणिग्रहणिका मन्त्रा नियता दारलक्षणम् ।**
**तत्समाप्तिश्च विज्ञेया विद्वद्भिः सप्तमे पदे ॥**

## याज्ञवल्क्यः

पाणि–शर–प्रतोदानां ग्रहणे वर्णतो व्यवस्था

**[२]पाणिर्ग्राह्यः सवर्णासु गृह्णीयात् क्षत्रिया शरम् ।**
**वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥**

(१) किमेकरूप एव सवर्णासवर्णयोर्विवाहः ? नेत्युच्यते– पाणिरिति । ब्राह्मणपाणिगृहीतं धनुःशरं क्षत्रिया गृह्णीयात् । प्रतोदं च वैश्या । प्रतोदः प्रा(१ प्रा)-जनिकः । स्त्रियाश्च ग्रहणे कर्तृत्वान्मन्त्रनिवृत्तिः । ऊहेन वा प्रयोग इत्यन्ये । क्षत्रियवेदनेऽपि वैश्या प्रतोदमेव गृह्णीयादिति केचित्, 'उत्कृष्टवेदने' इति मनुवचनात् । तत्पुनः सामान्यस्य विशेषोपसंहृतेरयुक्तम् । विश्व.

(२) सवर्णादिपरिणयने विशेषमाह– पाणिरिति । सवर्णासु विवाहे स्वगृह्योक्तविधिना पाणिरेव ग्राह्यः । क्षत्रियकन्या तु शरं गृह्णीयात् । वैश्या प्रतोदमादद्यात् । उत्कृष्टवेदने शूद्रा पुनर्वसनस्य दशाम् । यथाऽऽह मनुः – 'वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ।' (मस्मृ. ३।४४) इति । मिता.

(३) सवर्णायामुह्यमानायां वरेण तस्याः पाणिर्ग्राह्यः । क्षत्रिया ब्राह्मणेनोह्यमाना शरं गृह्णीयात्, यथा तस्याः पाणिमिव तं शरं वर उपाददीत । वैश्या तु विप्रेण क्षत्रियेण वा परिणीयमाना प्रतोदं बलीवर्दखेदनमाददीत ।

(१) बाल. १।५३ पृ. १९५.

(२) यास्मृ. १।६२ ; विश्व. गृह्णीयात् (गृह्णीत) ; समु. ५ त्वग्र (त्वग्न्य) योगीश्वरः ; मिता. ; अप. संमुवत् ; मपा. १६१ ; वीमि. ; संप्र. ८३५ ; संम. ६३ ; शूक. १०९ प्रथमपादमात्रम् ; संग. २७८ ; भाच. ३।४४ चतुर्थपादमात्रम्, योगीश्वरः ; सस्मृ. ५३ ; कुभ. ११३३.

अग्रजन्मशब्दः उत्कृष्टवर्णमात्रपरः । मनुः— 'वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ।' । * अप.

(४) सवर्णादिपरिणये विशेषमाह— पाणिरिति । सवर्णासूह्यमानासु सर्ववर्णैर्विधिवत् पाणिरेव ग्राह्यः । अग्रजन्मनो वर्णोत्कृष्टस्य वेदने विवाहे क्षत्रिया वरधृतैकदेशं शरम्, वैश्या तु तादृशं प्रतोदं गृह्णीयात् । तयोरेव पाणिस्थानीयत्वेन वरग्राह्यता । शूद्रापरिणयस्तु ग्रन्थकृता निषिद्ध एवेति न प्रकृते प्रदर्शितः । मनुना तु 'वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ।' (मस्मृ. ३।४४) इत्युक्तम् । वीमि.

(५) अग्रजन्मग्रहणेन उत्तमवर्णग्रहणम् । वैश्यायाः क्षत्रियेण सह विवाहे प्रतोद एव । संम. ६३

(६) तत्र पाणिग्रहणं सर्ववर्णसमानम्, 'पाणिर्ग्राह्यः सवर्णासु' इत्यविशेषेण याज्ञवल्क्योक्तेः । शूक. १०९

(७) अग्रजन्मपदात् क्षत्रियेण वैश्याविवाहे प्रतोद एवेति । कृभ. ११३३

## नारदः

विवाहमन्त्रैः सप्तपद्या च दाम्पत्यनिष्पत्तिः

**[1]पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।**
**तेषां निष्ठां च विज्ञेया विद्वद्भिः सप्तमे पदे ॥**

(१) तैर्मन्त्रैरुत्पादितभार्यात्वरूपसंस्कारायाः परित्यागो न युक्त इति । अप. १।६५

(२) पाणिग्रहणिका मन्त्रा विवाहप्रयोगाङ्गभूताः 'गृह्णामि ते सौभगत्वाय हस्तम्' इत्यादयः । ‡ गृक. ६५

(३) पाणिग्रहणमन्त्रोत्पाद्यसंस्कारावधिमाह— तेषामिति । † मपा. १५१

(४) पाणिग्रहणिका मन्त्राः पाणिग्रहणसाधनमन्त्रकृतः संस्कारः । स तु दोषदर्शनेऽपि नियतं दारलक्षणं नियमेन दाम्पत्यापादकः । तस्य चावधिः सप्तमपदमित्यर्थः । मर. ७४

(५) 'पाणिग्राहणिका मन्त्रा नियताः' इत्यन्यः पाठः । पाणिग्रहणेन च मन्त्रेण च यः संस्कारः तन्नियतं दारलक्षणम्, न तस्य (नि)वृत्तिरस्ति । * पूर्वस्मिन्निच्छातो दोषेण वा निवृत्तौ नास्ति दण्डः, उत्तरस्मिन् आमरणान्नास्ति त्यागः । अकारणेन त्यजन् दण्ड्यः । नाभा.

(६) निष्ठा नियता स्थितिः । $ संर. ५०४

## कात्यायनः

पाणिग्रहणादिसप्तपद्यन्तविधिना जायापतित्वनिष्पत्तिः

**¶ [1]पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।**
**तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥**

## यमः

पाणि–शर–प्रतोद–दशा–ग्रहणे वर्णतो व्यवस्था

**[2]पाणिग्रहणसंस्कारः सवर्णासु विधीयते ।**
**विवर्णासु यथा दृष्टं तथा वक्ष्याम्यनुक्रमम् ॥**
**[3]वैश्या प्रतोदं गृह्णाति गृह्णाति क्षत्रिया शरम् ।**
**दशां गृह्णाति वै शूद्रा करार्थे वरवर्णिनी ॥**

---

* मपा. अपवत् ।

‡ गृर. गृकवत् ।

(१) नासं. १३।३ णिका मन्त्रा (णमन्त्राभ्यां) पू.; नास्मृ. १५।३ णिका मन्त्रा (णमन्त्रश्च) पू.; अप. १।६५ च विज्ञेया विद्वद्भिः (तु विद्वद्भिर्विज्ञेया); गृक. ६५ पू.; गृर. ५४ पू.; मपा. १५१; मर. २० ग्रहणिका (ग्रहणका); सिन्धु. ११२२ निष्ठा च (च निष्ठा); संर. ५०४.

† शेषम् अपवत् ।

* 'पूर्वस्मिन् पूर्वोक्तवरणे सति, उत्तरस्मिन् पाणिग्रहणसंस्कारे सति' इति प्रकरणवशाद्व्याख्येयम् ।

$ शेषं मपावत् ।

¶ व्याख्यानानि मनुवचने द्रष्टव्यानि ।

(१) गृक. ६६ मनुकात्यायनौ; गृर. ५५ मनुकात्यायनौ; मर. २० मनुकात्यायनौ.

(२) गृक. ६८; गृर. ५७ सु विधीयते (सूपदिश्यते) क्रमम् (ग्रहम्).

(३) गृक. ६८; गृर. ५७ वै शूद्रा करार्थे (शूद्रा च करार्द्धे).

दशा वस्त्रप्रान्तः । करार्थे पाणिग्रहणकार्ये । गृक. ६८

पाणिग्रहणेन पतित्वनिष्पत्तिः

***¹नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ।**
**पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥**

(१) उदकेन उदकपूर्वदानेन । वाचा वाग्दानेन । $ गृक. ६६

(२) अनेन सप्तमपदादर्वाक् परिणेतुर्मरणेऽपि न विधवात्वमित्युक्तं भवति । ¶ स्मृच. ८२

(३) गान्धर्वादिविवाहेष्वप्युदकपूर्वकं दानमाह तत्रैव ( माधवीये एव ) यमः— नोदकेनेति (१) । सिन्धु. ११२१

## पैठीनसिः

पाणिशरादिग्रहणे अग्न्याचार्ययोः परिक्रमणे च वर्णतो व्यवस्था

**¹साङ्गुष्ठं ब्राह्मण्याः पाणिं गृह्णीयात् क्षत्रियायाः शरं वैश्यायाः प्रतोदं शूद्राया वस्त्रदशामिति ॥**

---

* संप्रव्याख्यानं ' विवाहपदार्थः ' ( सं का. पृ. १२० ) इत्यत्र द्रष्टव्यम् । संदी. संस्कारप्रकाशानुवादः ।

$ गृर., मर. गृकवत् ।

¶ पमा., मपा., संम., बाल., कुभ., संर. स्मृचवत् ।

(१) गृक. ६६ ; स्मृच. ८२ न वा वाचा ( च वाचा च ) ; गृर. ५५ वा वाचा ( वाचा वा ) रुच्यते ( रिष्यते ) ; पमा. ४९२ रुच्यते ( रिष्यते ) ; मपा. १५२ उत्त. ; प्रपा. ३४४ न वा वाचा ( विना चाथ ) ; मर. २० ; उत. १२९ गृरवत् ; संप्र. ५८३ न वा वाचा ( विना चार्थं ) : ५८५ चतुर्थचरणमात्रम् : ८३६ वा वाचा ( वाचा वा ) : ८९२ न वा वाचा ( विना चार्थं ) ; चम. ८९ ; मुक्ता. १३८ वा वाचा ( वाचा वा ) ; संम. ६७ पतित्वं ( पतिः स्यात् ) शेषं मुक्तावत् ; सिन्धु. ११२१ ; शूक. १०९ वसिष्ठः ; आन. १७६ उत्त. ; बाल. १।६५ पृ. २०४ संमवत् ; संग. २५६ न वा वाचा ( विना चार्थं ) : २८५ मुक्तावत् ; कुभ. ११२८ ( = ) पमावत् : ११३७ (=) उत्त. ; संर. ५०४ संमवत् ; संदी. ५ ( भागः २ ) न वा वाचा ( विना चार्थं ).

(२) गृक. ६९ शरं वैश्यायाः प्रतोदं ( सशरं सप्रतोदं वैश्यायाः ) ( इति० ) ; गृर. ५७ ; पमा. ४९६–४९७

**¹अग्निपरिक्रमो ब्राह्मणस्योक्तो राजन्यवैश्ययोराचार्यपरिक्रम इति ॥**

परिक्रमः प्रदक्षिणीकरणम् । * गृक. ६८

## अङ्गिराः

भार्यया सह भोजनम्

**¹ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन ।**
**न तस्य दोषमिच्छन्ति नित्यमेव मनीषिणः ॥**

(१) यत्तु ' ब्राह्मण्या सह ... ॥ ' इति, न तत्सर्वदा दोषाभावप्रतिपादनपरम्, ' कदाचन ' इति वचनात् । स्मृच. २२७

(२) यत्तु माधवीये अङ्गिरोवचनम्— ' ब्राह्मण्या सह ... मनीषिणः ॥ ' इति, तद्विवाहविषयमिति विज्ञानेश्वरस्मृत्यर्थसारप्रभृतयः । एतेन 'ब्राह्मण्या भार्यया सार्धं क्वचिद्भुञ्जीत वाऽध्वनि । अधोवर्णस्त्रिया सार्धं भुक्त्वा पतति तत्क्षणात् । ' इति माधवोदाहृतमादित्यपुराणवचनमपि व्याख्यातम्, क्वचित् विवाहे अध्वनि. वेत्यर्थात् । इदमपि सर्वथा दोषाभावपरं न भवति, किंतु दोषाल्पत्वपरमिति माधवाचार्याः । † चम. ७८–७९

(३) विवाहविषयमिति स्मृत्यर्थसारादयः । दोषाल्पत्वपरमिति माधवः । ¶ संकौ. १७१

---

* गृर. गृकवत् ।

† कुभ. चमवत् । बाल. चमगतम् ।

¶ संर. संकौवत् ।

( साङ्गुष्ठं ब्राह्मणः पाणिं गृह्णीयात् क्षत्रिया शरम् । वैश्यायाश्च प्रतोदं तु शूद्रा वस्त्रदशामिति ॥ ) अस्मदादर्शानुसारी पाठः टिप्पण्याम्.

(१) गृक. ६८ (=) ; गृर. ५७ ; पमा. ४९७ (=) ( अग्नि० ).

(२) स्मृच. २२७ ; चम. ७८ ; संकौ. १७१ ; बाल. १।१३१ पृ. ३९३ ब्राह्मण्या ( भार्यया ) षमिच्छन्ति ( षं मन्यन्ते ) ; कुभ. ११२५ ; संर. ३८७ ब्राह्मण्या ( भार्यया ).

## आश्वलायनः

विवाहहोमः, पाणिग्रहणम्, लाजहोमः, उदकुम्भस्थापनम्, अश्मारोहणम्, सूर्याशंसनम्, विवाहगृहम्, सप्तपद्यन्तविधिना भार्यात्वसिद्धिः, शिरसोरुदकावसेचनम्, शिखाविमोचनम्, वाङ्नियमः, ध्रुवादिदर्शनम्, वाग्विसर्गः, सायंहोमपर्यन्तमनशनम्, विवाहव्रतम्, अङ्गभूतक्रियाफलानि, भार्यया सह भोजनम्

[1]ततो वसन् बहिर्गत्वा सा वधूस्तस्य दक्षिणे ।
वरं स्पृशन्त्युपविशेज्जुहुयाच्च ततो वरः ॥
जुह्वन्ति(?) बाष्कला ऋग्भिश्चतुर्भिर्ब्राह्मणोत्तमाः ।
कौषीतका व्याहृतिभिर्बाभ्रव्याश्चैतरेयिणः ॥
ऋग्भिर्व्याहृतिभिश्चैव विवाहे होम इष्यते ।
अस्माकमितरेषां च हस्तं तत्वं(?) चतुर्थिका ॥
अग्न आयूंषि चतुर्भिर्हुत्वा व्याहृतिभिस्तथा ।
विवाहे तु क्रियाः कुर्यात् पश्चाद्वृत्त्यादिषूक्तवान् ॥
स्त्रीफलाः स्त्रीस्वभावाश्च चतस्रोऽङ्गुलयः स्त्रियः ।
पुमान् पुंफलदोऽङ्गुष्ठो भवेन्नृणां विजानताम् ॥
तस्मादात्मेच्छया तावत् पाणिग्रहणमिष्यते ।
सौभाग्यवृद्ध्यै गृह्णीत हस्तं तूष्णींत्वसिद्धये ॥
पश्चाङ्गुलीनां यन्मूलं तद्रोमान्तो निगद्यते ।
पाण्यन्तं चाङ्गुलीमूलं तस्मिन् ग्रहणमिष्यते ॥
यदि स्युर्विवृता हस्तादस्या अङ्गुलयस्तदा ।
गृहीतास्तद्वशे पश्चात्सा न तिष्ठति चञ्चला ॥
संकोचनार्थमग्राणामङ्गुलीनां विचक्षणैः ।
रोमान्ते ग्रहणं तस्मादिष्यते मन्त्रपश्चिमे ॥
आयुरादीनि दम्पत्योः प्रदास्यन्त्यर्यमादयः ।
तर्पिता लाजहोमेन यस्मात्तस्माच्च भूतये ॥
अमृते(? अमृत्या) सह दाढर्यत्वात्(? दाढर्यस्य) सिद्धये च चिरायुषे ।
भवेत् परिणयश्चात्र त्रिवारं मन्त्रतः शनैः ॥
यदुक्तमैतरेयेण यथावदमसाह्वयोः ।
सम्यग्विवहनं तस्माद्विवाहं(? हः) तन्निगद्यते ॥
कृत्वा परिणयं पूर्वं माण्डूकेयाः परिप्लवाः ।
विवाहे होममिच्छन्ति तयोरन्योन्यकाङ्क्षया ॥
द्विरावपति शूर्पस्थांल्लाजानाज्याभिघारितान् ।
भ्राता दक्षिणहस्तेन तस्याः सव्ययुतेन च ॥
भ्रातृस्थानोऽथवाऽभावे भ्रातुः कन्याहितोऽवरः (?) ।
आवपेदञ्जलौ तस्यास्त्रिवारं द्विर्द्विरादृतः ॥
देवकन्याः समायान्ति विवाहं द्रष्टुमुत्सुकाः ।
प्रभवाद्द्योतितात्मानः सर्वाभरणभूषिताः ॥
अर्यम्णस्तनुजाः काश्च वरुणस्य च काश्चन ।
पूष्णः प्रजापतेः काश्च काश्चनाऽऽयान्ति सुप्रियाः ॥
स्त्रीणां स्त्रीभिः समादत्तमुक्तवान् विप्रियं भवेत् ।
कन्यया हूयते तस्मात्तासां च सुमहत् प्रियाः(?) ॥
ददाति कन्यया दत्तमग्निस्तासां तदा हविः ।
पितरश्चार्यमाद्यास्ते ताश्च तृप्यन्ति तेन वै ॥
शूर्पपात्रं प्रियं तासां भ्रातरश्चापि सुप्रियाः ।
तस्माच्छूर्पेण च भ्रात्रा विवाहे क्रियते क्रिया ॥
ता देवकन्यकाः प्रीताः पितृभिः पतिभिर्युताः ।
दास्यन्ति वाञ्छितान् कामान् क्रुद्धाश्चेद्यदि विप्लवम् ॥
तस्माद्यथावन्मतिमान् करोति विविधाः क्रियाः ।
विवाहे प्रयतो विप्रः सर्वत्र च शुभाप्तये ॥

(१) आश्वस्मृ. ११।३५१–३५३, ३५५–३५६, ३७४–४०७, ४१०–४१५.

कर्तव्यत्वाद्विवाहस्य नद्यास्तीरे नृणामिह ।
उदकुम्भो विवाहेषु तीर्थदेशे विधीयते ॥
पतिव्रतत्वस्थैर्यार्थमश्मारोहणमिष्यते ।
दास्यन्ति तेन स्थैर्यत्वं(?) तस्यास्तस्मिन् पतौ(?) नगाः ॥
यथा शब्देन वीणायाः सीमन्ते सोमराणदी ।
गन्धर्वाश्चाथ तुष्यन्ति गर्भशूलान्नुदन्ति च ॥
तथा विवाहे संतुष्टा सूर्या श्रुत्वाऽऽत्मनः स्तवम् ।
सौभाग्यकान्तिलावण्यधनायूंषि प्रदास्यति ॥
सवितुर्दुहिता बाला सूर्या नामातिसुन्दरी ।
तस्या विवाहविस्तारः सूक्तेनानेन गीयते ॥
गन्धर्वप्रवरस्तस्याः कामिता हृदयप्रियः ।
स च सूर्या च सा प्रीता दम्पत्योर्दास्यति प्रियम् ॥
तस्माच्छंसति तत्सूक्तमेकार्धर्चसमन्वितम् ।
अधश्चोर्ध्वं चैकयर्चा विवाहे तु द्विजातयः ॥
तेन प्रीतिर्भवेल्लोके दम्पत्योः सुचिरं त्विह ।
सूर्यागन्धर्वयोश्चापि तदतीव प्रियं भवेत् ॥
तस्माद्युग्मत्वमिच्छन्ति तंत(? सन्त)स्तूद्वाहकर्मणि ।
यथा पुंसवने तृप्त्यै मण्डलागारमिष्यते ॥
प्रजापतेः सुव्रतत्वाद्भुवनस्यास्य तत्पतेः ।
तथा विवाहे संतृप्त्यै देवकन्यागणस्य तु ॥
चतुरस्रं गृहश्रेष्ठमिष्यते समलङ्कृतम् ।
तावद्भार्यात्वसंसिद्धिर्यावत्सप्तपदान्तिकम् ॥
भर्तृगोत्रत्वसंसिद्ध्यै जलैस्तस्यां प्रसिच्यते ।
भार्यात्वसिद्धये तस्मात्स्वाशिषे यशसे च तत् ॥
भर्तृगोत्रत्वसंसिद्ध्यै जलैस्तस्यां प्रसिच्यते ।
दम्पत्योरुदकुम्भस्य केशयोस्तेन तद्भवेत् ॥
प्र त्वेत्यृचा केशबन्धं श्लथयन्त्युकगाथिनाम्(? श्लथयेत्स्तुकबन्धनम्) ।
अरिष्टत्वस्य संप्राप्त्यै केशानां चाऽऽत्मनोऽथवा ॥
न व्याहरेद्वधूं(? धूर्) वाचा यावद्ध्रुवनिरीक्षणम् ।
पत्या वियोगमाप्नोति प्रमादाच्चैतया वरः ॥
सप्तर्षयः सपत्नीकाः सदाऽग्न्यर्चनतत्पराः ।
ध्रुवश्चारुन्धती तौ तु द्रष्टुमुत्सुकचेतसः ॥
तां दृष्ट्वा सृजते वाचं तयोराशीरनुत्तमा(? शिषमुत्तमाम्) ।
दास्यन्ति चिरकालाय न चेद्द्विपदमाश्विह ॥
भोक्तुं च नार्हतस्तावद्यावत्तौ हूयतेऽनलः ।
सायमारभ्य होतव्यो विवाहाग्निर्द्विजातिभिः ॥
प्राग्घोमाद्यदि भुक्त्वा तु भवेन्निर्धनता तयोः ।
पावकप्रीणनार्थाय तावद्दीक्षा तयोर्भवेत् ॥
[1]......भुञ्जीयाद्विवाहे भार्यया सह ॥

## लघ्वाश्वलायनः

विवाहहोमः, पाणिग्रहणम्, लाजहोमः, परिणयनम्, अश्मारोपणम्, शिखामोचनम्, सप्तपदी, शिरसोर्जलावसेचनम्, दाक्षायणीसरणम्, होमशेषसमापनम्, वाङ्नियमः, ध्रुवादिदर्शनम्, वाग्विसर्गः, आशीर्दानम्, रात्रावपि विवाहहोमः

[2]दम्पती तु व्रजेयातां होमार्थं चैव वेदिकाम् ।
वरस्य दक्षिणे भागे तां वधूमुपवेशयेत् ॥
आघारान्तं ततः कुर्यादुपलेपादि पूर्ववत् ।
सूत्रोक्तविधिना कर्म सर्वं कुर्यात्तु चैव हि ॥
अग्न आयूंषि तिस्रोऽत्र त्वमर्यमा प्रजापते ।
हुत्वा त्वाज्याहुतीरेवं सूत्रोक्तं पाणिपीडनम् ॥
वरस्त्रिः प्रोक्षयेल्लाजाञ्छूर्पस्थानभिघारयेत् ।
अभिघार्याञ्जलिं तस्याः पूरयित्वाऽभिघारयेत् ॥
अञ्जलीन् पूरयेद्भ्रत्वा(? द्भ्राता) लाजान्(? लाजैः) बध्वा विवाहिके ।
विच्छिन्नवह्निसंधाने पतिर्लाजान् द्विरावपेत् ॥

---

(१) प्रपा. २४६ ; संग. ६६० धर्मप्रवृत्तौ.
(२) लघ्वाश्वस्मृ. १५।३६-५०, ५६-६३, ६५.

हुत्वा लाजाँस्तथा होमं हुत्वा कुर्यात् प्रदक्षिणम् ।
सोदकुम्भस्य चैवाग्नेरश्मानमवरोहयेत् ॥
विधिरेष विवाहस्य प्रत्याहुति प्रदक्षिणम् ।
मन्त्रोऽर्यमणं वरुणं पूषणं लाजहोमके ॥
अवशिष्टान् वरो* लाजाञ्छूर्पकोणेन चैव हि ।
अभ्यात्मं जुहुयात्तूष्णीमिति यज्ञविदां मतम् ॥
यदि बद्धे शिखे स्यातां कन्यकावरयोरपि ।
प्रत्यृचं च शिखे बद्ध्वा (? प्र त्वेत्यृचा शिखे वध्वाः) तूष्णीं वरस्य मोचयेत् ॥
इष इत्यादिभिर्मन्त्रैरीशान्यां चालयेद्वधूम् ।
गत्वा पदानि सप्ताथ संयोज्य शिरसी च ते ॥
कुम्भस्य सलिलं सिञ्चेदुभयोः शिरसोः स्वयम् ।
सौभाग्यजननीं देवीं स्मृत्वा दाक्षायणीं शिवाम् ॥
ततः स्विष्टकृदादि स्याद्धोमशेषं समापयेत् ।
अहःशेषं च तिष्ठेतां मौनेनैव तु दम्पती ॥
ध्रुवं चारुन्धतीं दृष्ट्वा विसृजेतामुभौ वचः ।
पतिपुत्रवती चाऽऽशीस्तयोर्दद्याद्यथाचितम् ॥
अनेन विधिनोत्पन्नो विवाहाग्निरिति स्मृतः ।
स एव स्यादजस्राख्य इति यज्ञविदो विदुः ॥
दिवा वा यदि वा रात्रौ कन्यादानं विधीयते ।
तदानीमेव होमं तु कुर्याद्वैवाहिकं च हि ॥

विवाहहोम- गृहप्रवेशनीयहोमयोस्तन्त्रप्रयोगः, सप्तपद्यन्ते विवाहनिष्पत्तिः, विवाहदिने सायमौपासनहोमस्य कर्तव्यता कालश्च, विवाहव्रतम्

यदि कालवशात् कर्तुं पृथग्घोमद्वयं न चेत् ।
द्वयमप्येककाले वा कर्तव्यं कर्म केचन ॥

* आश्वलायनसूत्रे 'चतुर्थम्' इति पदग्रहणसामर्थ्यात् वध्वाः कर्तृत्वमिति वृत्तिकारेण साधितम् ।

कुम्भस्य जलसिक्तान्तं कृत्वा सर्वं तदादितः ।
प्रत्यृचं जुहुयादाज्यमा नः प्रजां चतसृभिः ॥
समञ्जन्त्विति चाऽऽरभ्य सर्वं पूर्ववदाचरेत् ।
स्वस्थानीयवधूं वामे पूर्णमस्यादिकं चरेत् ॥
रात्रावहनि वा दानं कन्यायाः स्वीकृतं यदा ।
तदानीमेव होमः स्याद्विवाहस्य च सिद्धये ॥
यावत् सप्तपदीमध्ये विवाहो नैव सिद्ध्यति ।
सद्योऽतो होममिच्छन्ति सन्तः सायमुपासनम् (१) ॥
विवाहश्चेद्भवेद्रात्रौ सार्धयामद्वयादधः ।
तदैवौपासनं कुर्यात्केचिद्गृह्यविदो विदुः ॥
नित्यहोमे तु कालः स्याद्रात्रौ नाडीनवात्मकः ।
द्विगुणः स्याद्विवाहे तु प्रवदन्ति महर्षयः ॥
दम्पती नियमेनैव ब्रह्मचर्यव्रतेन तु ।
वैवाहिकगृहे तौ च निवसेतां चतुर्दिनम् ॥
भोजनं शयनं स्नानं तथैकत्रोपवेशनम् ।
गृहप्रवेशपर्यन्तं दम्पत्योर्मुनयो विदुः ॥

## गालवः

विवाहे एकयानारोहणं सहभोजनं च

[२]विवाहकाले यात्रायां पथि चौरसमाकुले ।
असहायो भवेद्विप्रस्तदा कार्यं द्विजन्मभिः ॥
*एकयानसमारोह एकपात्रे च भोजनम् ॥
विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक् ।
अन्यथा दोषमाप्नोति पश्चाच्चान्द्रायणं चरेत् ॥

* सिन्धु-पुम - व्यतिरिक्तानां सर्वेषामेतदार्धत्रयमात्रसंग्रहणादेतदर्धमुत्तरान्वयीत्यभिमतम् । अत एव पूर्ववाक्यस्य साकाङ्क्षत्वम्, उत्तरवाक्यानुसंधानेन पूर्ववाक्याकाङ्क्षापूरणमनुचितं चाऽऽपन्नम् । तत्रापि मुक्तातिरिक्तानां सर्वेषाम्

(१) सिन्धु. ११२५; पुम. ४५३.

(२) गभा. १२२; मुक्ता. ९१३ रोह ए (रोहमे) च (तु) दोषभाक् (दुष्यति); सिन्धु. ११२५; संग. २१९; पुम. ४४३; संर. ५३४ पश्चाच्चा (तत्र चा).

¶ अत्र स्त्रिया सह वरोऽपि समाचाराद्भोजनं करोति। स्त्रिया सह भोजनेऽपि न दोष इत्याह हेमाद्रौ प्रायश्चित्तकाण्डे गालवः— 'एकयानसमारोहः ... चरेत् ॥'। मिताक्षरायामप्येवम्। * गभा. १२२

## देवीपुराणम्

पाणिग्रहणप्रकारः

[1]आसीनायाः स्त्रियास्तिष्ठन् गृह्णामीत्यद्भिरन्ततः।
गृह्णीयात्पाणिमुत्तानं साङ्गुष्ठाङ्गुलिदक्षिणम् ॥

## आदित्यपुराणम्

भार्यया सह भोजनम्

[2]ब्राह्मण्या भार्यया सार्धं क्वचिद्भुञ्जीत वाऽध्वनि।
अधोवर्णस्त्रिया सार्धं भुक्त्वा पतति तत्क्षणात् ॥

(१) क्वचित् विवाहे। ‡ चम. ७९

(२) क्वचित् उत्सवादौ। बाल. ३९२

## अनिर्दिष्टकर्तृकवचने

चतुर्थलाजहोमे शूर्पकुष्ठाविधानम्

[1]अग्रे च विधवा नारी कोणे चैव विपत्त्यतः
(? विपद्यते)।
न चाग्रेण न कोणेन जुहुयाच्छूर्पकुष्ठया ॥

विवाहे घृतापोशनम्

[2]दामो नाम महादैत्यो दम्पत्योर्हृदि संस्थितः।
तस्य नाशार्थमुद्वाहे घृतमापोशनं कुरु ॥

भोजनसमये वरो घृतेनाऽऽपोशनं कुर्यात्। उक्तं च 'दामो नाम... ॥'। संग. २९२

## संग्रहे

लाजहोमे विशेषः

[3]एकाहुतिं त्रिधा कृत्वा आपोशाने तथाऽनले।
लाजाहोमे प्रकुर्वन्तीति च शातातपोऽब्रवीत् ॥

विवाहे भार्यया सह एकासनमेकशय्यैकपात्रे भोजनमेकत्र मङ्गलं स्नानमेकवाहनारोहणं च न दोषावहम्

[4]मात्रा सहोपनयने विवाहे भार्यया सह।
अन्यत्र सहभुक्तिश्चेत्पातित्यं प्राप्नुयान्नरः ॥

[5]एकासनं चैकशय्या एकपात्रे च भोजनम्।
एकत्र मङ्गलं स्नानमेकवाहनरोहणम्।
कुर्वन्विवाह एतानि भवेद्विप्रो न दोषभाक् ॥

---

'एकयानसमारोहः' इति प्रथमान्तपाठ उत्तरान्वयविरुद्धः। सिन्धु-पुमग्रन्थयोः पञ्चाध्यायाः संगृहीतत्वेन पूर्वोक्तप्रथमान्तपाठसामर्थ्यादेतदर्धं पूर्वान्वयि। तत्राप्युत्तरवाक्यस्य साकाङ्क्षत्वेऽपि पूर्वप्रस्तुतेनाऽऽकाङ्क्षापूरणं नानुचितम्। अस्माभिस्तु एवं बहुसंमतं समुचितं च प्रथमान्तपाठमङ्गीकृत्यापि केवलं सौकर्यमपेक्ष्य एतदाद्यर्धत्रयस्य स्थलादिनिर्देशः पृथक्कृतः।

¶ अत्रेतिपदं प्रकरणाच्चतुर्थीकर्मपरम्। अस्माभिस्तु मानवगृह्यसूत्रादिग्रन्थेषु पाणिग्रहणदिने एव सहभोजनविधानात् तथा शिष्टाचाराच्च सहभोजनविषयकाणि वचनान्यस्मिन्नेव प्रकरणे संगृहीतानि।

* संग. गभावत्।

‡ कुभ. चमवत्।

(१) मुक्ता. १४९.

(२) स्मृच. २२७ आदिपुराणम्; चम. ७९; बाल. १।१३१ पृ. ३९२ वाऽध्व (चाध्व) अधोवर्णस्त्रिया (असवर्णया स्त्रिया) ब्राह्मम् आदित्यपुराणं च; कुभ. ११२५ (=) अधोवर्णस्त्रिया (अधोवर्ण्या स्त्रिया).

(१) संग. २८२.

(२) संग. २९२.

(३) संग. २७६.

(४) विपा. ५४ (भागः २) पनयने (पनीते स्यात्) तृतीयचरणे (अन्यत्र सह (भुञ्जीत) भुञ्जानः); संग. २९२ पनयने (पनीतेः स्यात्) सहभुक्तिश्चेत् (सह भुञ्जीत); संर. १८५ : ५३४ पनयने (पनीतस्य) तृतीयचरणे (भुञ्जीतान्यत्र सह चेत्).

(५) संर. ५३५.

विप्रग्रहणं क्षत्रियवैश्ययोरुपलक्षणम् ।           संर. ५३५

## सिद्धान्तशेखरे

लाजाहुतिमानम्

[1]कर्षमात्राणि भक्षाणि लाजा मुष्टिमिता मताः ॥

अत्र हौम्यलाजप्रमाणमुक्तं सिद्धान्तशेखरे— कर्षमात्राणीति ।           प्रपा. ३६१

## कर्मकौमुद्याम्

चतुर्थलाजाहुतौ परिक्रमणे कन्यायाः पुरःसरत्वम्

[2]चतुर्थीमाहुतिं दद्यादग्रे कन्या भ्रमन्त्यपि ।
यदि चाग्रे वरो गच्छेद्रोगशोकधनक्षयः ॥

चतुर्थ्यामाहुतावेव अग्रे कन्या, आहुतित्रयपर्यन्तं वरस्य पश्चादित्यर्थः ।           संग. २८१

परिक्रमणे बहिःकरणीयद्रव्याणि

[3]लाजानाज्यं स्रुवं कुम्भं द्विजमश्मानमेव च ।
एतांश्च बाह्यतः कृत्वा शेषस्यैव प्रदक्षिणम् ॥

## शाकलकारिकाः

विवाहहोमगृहप्रवेशनीयहोमयोस्तन्त्रपृथक्त्वविकल्पः तन्त्रप्रयोगश्च, औपासनहोमारम्भः, अग्नेर्धारणं समारोपो वा, विवाहव्रतम्

[4]दम्पती तु व्रजेयातां होमार्थं वेदिकोपरि ।
वध्वा सह वसेत्तत्र यत्र वैवाहिकं भवेत् ॥
गृहप्रवेशनीयार्थं होमं कुर्यात्स्वमण्डले (? मन्दिरे) ।
तत्रैव केचिदिच्छन्ति देशधर्मानुसारतः ॥
एकस्मिन्नथवा काले कुर्याद्धोमद्वयं च हि ।
एकतन्त्रेण वाऽपि स्याद्यावत्कुम्भाभिषेचनम् ॥
ततश्च जुहुयादाज्यं तत्रैवाऽऽनः प्रजामिति ।
चतस्रः प्रत्यृचं हुत्वा होमशेषं समापयेत् ॥

(१) प्रपा. ३६१.    (२) संग. २८१.
(३) संग. २८३.
(४) शाका. १४९–१५६ पृ. १६–१७.

ततो वधूं वरः स्वस्य वामे तामुपवेशयेत् ।
तदहः सायमारभ्य कुर्यादौपासनं च हि ॥
दिवा वा यदि वा रात्रौ कंधाहोमं (? कन्यादानं) भवेद्यदा ।
इ(? त)दानीमेव होमः स्यात्सायं कुर्यादुपासनम् ॥
अग्निसंरक्षणे शक्तिर्न चेत्स्यादरणी तपेत् ।
अश्वत्थसमिधं वाऽपि प्रातरप्येवमिष्यते ॥
ब्रह्मचर्याश्रयेणेह सहशय्यासनाशनैः ।
वध्वा सह वसेत्तत्र यावद्दिनचतुष्टयम् ॥

## शौनककारिकाः

प्रधानहोमः, पाणिग्रहणम्, लाजहोमः, परिणयनम्, अश्मारोपणम्, शिखाविमोचनम्, सप्तपदी, शिरःसेचनम्, औपासनहोमोपक्रमः, वाङ्नियमः, ध्रुवादिदर्शनम्, आशीर्वादाक्षतारोपणम्

[1]कन्यकां प्रतिगृह्यैवं वरः पूर्ववदासने ।
तत्रैवोपविशेत् पश्चात्तां वधूं मातुलादिकः ॥
[2]स्वजनः परिगृह्याग्नेरुत्तरेण वरस्य तु ।
पश्चिमेन यथा नीत्वा तस्मिन्नेव वरासने ॥
[3]वरस्य दक्षिणे पार्श्वे प्राङ्मुखीमुपवेशयेत् ।
समाधाय पुरस्तन्त्रमन्वाधानादिकं क्रमात् ॥
[4]प्रणीतासादनान्तं तु विधायाथ विभावसोः ।
उदक्पूर्वेस्थितांल्लाजान् विन्यस्याथाऽऽज्यसंस्कृतिम् ॥

(१) शौका. १ पृ. ५९ ; प्रपा. ३६० ; संप्र. ८३४ प्रति (परि) ; संकौ. २१९ गृह्यैवं (गृह्यैव) ; संग. २६९.
(२) शौका. २ पृ. ५९ ; प्रपा. ३६० ; संप्र. ८३४ ; संकौ. २१९ ; संग. २६९.
(३) शौका. ३ पृ. ५९ ; प्रपा. ३६० ; संप्र. ८३५ पृ. ; संकौ. २१९ ; संग. २६९ पृ.
(४) शौका. ४ पृ. ५९–६० ; प्रपा. ३६०.

[1]प्रक्रम्य कर्मानुयाजनिधानान्तं विधाय च ।
ततो वधूकरस्पृष्टः कृत्वेध्माधानपूर्वकम् ॥
[2]पुरस्तात्तन्त्रशेषं तदाज्यभागविवर्जितम् ।
ततः प्रधानहोमांश्च कुर्यादाज्येन तत्र तु ॥
[3]पूर्वं कृत्वाऽग्न आयूंषीत्याद्यैर्मन्त्रैस्त्रिभिः क्रमात् ।
त्वमर्यमा चतुर्थी च पञ्चमी तु प्रजापते ॥
[4]व्यस्ताभिश्च समस्ताभिर्व्याहृतीभिश्चतुष्टयम् ।
अथोत्थाय वरो वध्वाः प्राङ्मुख्याः पुरतः स्वयम् ॥
[5]प्रतीच्यभिमुखस्तिष्ठन्नासीनायाः कराग्रकम् ।
दक्षिणं दक्षिणेनैव पाणिनाऽङ्गुष्ठसंयुतम् ॥
[6]गृभ्णामीति ऋचा सम्यग्गृहीत्वोत्थाप्य तां वधूम् ।
प्राङ्मुखीं समवस्थाप्य क्षालयित्वाऽथ तत्करौ ॥
[7]कारयित्वाऽञ्जलिं ताभ्यां तस्मिन्नाज्यं स्रुवेण तु ।
उपस्तीर्य वरस्तिष्ठेत् परिगृह्य तमञ्जलिम् ॥
तस्यास्तत्राञ्जलौ भ्राता भ्रातृस्थानीय एव वा ।
शूर्पादञ्जलिनाऽऽदाय लाजांस्तिष्ठन् द्विरावपेत् ॥

(१) शौका. ५ पृ. ६० निधानान्तं (विधानान्तं); प्रपा. ३६०.

(२) शौका. ६ पृ. ६० तदाज्य (तमाज्य) होमांश्च (होमश्च); प्रपा. ३६०.

(३) शौका. ७ पृ. ६०; प्रपा. ३६०.

(४) शौका. ८ पृ. ६० व्याहृतीभिश्च (कृत्वाऽहुतिच); प्रपा. ३६०.

(५) शौका. ९ पृ. ६० कराग्रकम् (करग्रहम्); प्रपा. ३६०.

(६) शौका. १० पृ. ६० त्वाऽथ (त्वा तु); प्रपा. ३६०.

(७) शौका. ११-१४ पृ. ६०; प्रपा. ३६० नवतांश्च (नधःस्थांश्च).

पश्चावर्त्ती वरः स्याच्चेत्ततो लाजांस्त्रिरावपेत् ।
[1]वरोऽथ पूर्वं शूर्पस्थांल्लाजान् प्रत्यभिघार्य तु ॥
अञ्जलिस्थानवत्तांश्च पश्चात्प्रत्यभिघारयेत् ।
सर्वत्रैषोऽवदानस्य प्रकारः परिगृह्यताम् ॥
वरोऽथार्यमणं न्वाद्यं मन्त्रं वध्वर्थमीरयेत् ।
वधूः स्वाञ्जलिविच्छेदमकुर्वाणा स्रुचेव तान् ॥
[2]लाजानञ्जलिपार्श्वेन जुहुयादवधानतः ।
एवमेव वधूपाणिं गृहीत्वा पूर्ववद्वरः ॥
[3]अश्मानं वर्जयित्वाऽग्निमुदकुम्भादिसंयुतम् ।
प्रदक्षिणं परिणयन् वधूमग्रे स्वयं व्रजेत् ॥
अमोऽहमस्मि सा त्वं सेत्यादिमन्त्रमुदीरयेत् ।
इममश्मानमित्याद्यं मन्त्रमुक्त्वा वरो वधूम् ॥
अश्मानमारोप्य पुनर्लाजहोमं समाचरेत् ।
लाजहोमे द्वितीयेऽपि पूर्ववत्प्रक्रियाऽखिला ॥
वरुणं न्वादिको होममन्त्र एव तु भिद्यते ।
पूर्ववत्परिणीयाग्निमश्मानमधिरोप्य च ॥
तृतीयमपि लाजानां होमं पूर्ववदाचरेत् ।
मन्त्रोऽत्र पूषणं न्वादि सर्वमत्र यथापुरम् ॥
परिणीय तथैवाग्निमश्मानं चाधिरोपयेत् ।
हुतावशिष्टांल्लाजांस्तु वधूः स्वाभिमुखं ततः ॥
शूर्पाग्रेणैव जुहुयात्तूष्णीं निरवशेषतः ।
तस्यां तूष्णीं तु जुह्वत्यां वरो ध्यायेत् प्रजापतिम् ॥
ऊर्णासूत्रेण यद्वस्याः केशपक्षस्य पार्श्वयोः ।
शिखे बद्धे तदा प्र त्वा मुञ्चामीत्यादृचा तयोः ॥
शिखां दक्षिणपार्श्वस्थां विमुच्योत्तरया ऋचा ।
प्रेतो मुञ्चाम्यादिकया विमुञ्चेदुत्तरां शिखाम् ॥

(१) शौका. १५ पृ. ६० वरोऽथा (वरश्चा); प्रपा. ३६० न्वाद्यं (वाक्यं); कुभ. ११३९ स्रुचेव (तु चैव) उत्त.

(२) शौका. १६ पृ. ६०; प्रपा. ३६०; कुभ. ११४० पू.

(३) शौका. १७-२५ पृ. ६०-६१; प्रपा. ३६१.

[1]अथ तां पूर्वमार्गेण परिगृह्य वधूं वरः।
अग्नेः पूर्वोत्तरं देशं नीत्वा तस्याः पुरो व्रजेत्॥

अग्नेः पूर्वोत्तरमिति। इदं तु तच्छाखीयानामेव।
संग. २८५

[2]इष एकपदीत्याद्यमुक्त्वा मन्त्रं सपर्वकम्।
भवादिपदसंख्यानं प्रत्येकं योजयेत्पदम्॥

[3]अथ स्वशिरसा वध्वाः शिरः संयोज्य ते उभे।
सिञ्चेत उदकुम्भस्थसलिलेन वरः स्वयम्॥

ततः पूर्ववदासित्वा स्विष्टकृद्धोमपूर्वकम्।
उपरिष्टात्तनं तन्त्रं विदधीत यथाविधि॥

[4]यस्मिन् काले विवाहः स्याद्रजन्यां यदि वा दिवा।
तत्र होममुपक्रम्य प्राग्विवाहसमापनात्॥

[5]वधूर्वाङ्नियमं कृत्वा वर्तेतावहिता सती।
निर्वृत्ते तु विवाहे तां वधूं ध्रुवमरुन्धतीम्॥

[6]सप्तर्षींश्चेक्षयेत् पश्चाद्वध्वा वक्तुमशक्तितः।
वध्वर्थे जीवपत्न्यादिवाक्यं च व्याहरेद्वरः॥

[7]अथ रक्षां विवाहाग्नेः कारयित्वा विधानतः।
ततोऽभिनन्दन्नासीत वध्वा सार्धं द्विजातिभिः॥
क्रियमाणं सहाऽऽशीर्भिरक्षतारोपमङ्गलम्॥

(१) शौका. २६ पृ. ६१; प्रपा. ३६१; संप्र. ८३५ उत्त.; संग. २८५ उत्त.

(२) शौका. २७ पृ. ६१; प्रपा. ३६१; संप्र. ८३५ सपर्व (च सर्व); संग. २८५ संप्रवत्.

(३) शौका. २८-२९ पृ. ६१; प्रपा. ३६१.

(४) शौका. ३० पृ. ६१; प्रपा. ३६१; संप्र. ८३८; संग. २९०.

(५) शौका. ३१ पृ. ६१; प्रपा. ३६१ निर्वृत्ते. (निवृत्ते); संप्र. ८३८ प्रपावत्; संग. २९० प्रपावत्.

(६) शौका. ३२ पृ. ६१; प्रपा. ३६१; संप्र. ८३८; संग. २९०.

(७) शौका. ३३, ३४ पृ. ६१; प्रपा. ३६१.



एवं रक्षितोऽग्निः गृहप्रवेशहोमादर्वागनुगतश्चेत्तदा विवाहहोमः पुनः कार्यः। गृहप्रवेशहोमानन्तरमनुगतश्चेद्धोमद्वयमपि पुनः कर्तव्यमिति गृहप्रवेशहोमसूत्रे वृत्तिकारेणोक्तत्वात् तद्वदत्राप्यनुसंधेयमिति। प्रपा. ३६१

## कुमारिलकारिकाः

विवाहहोमः, पाणिग्रहणम्, लाजहोमः, परिणयनम्, अश्मारोपणम्, शिखामोचनम्, सप्तपदी, शिरोवसेचनम्, वाङ्नियमः, ध्रुवादिदर्शनम्, वाग्विसर्गः, विवाहव्रतम्

[1]आत्मनो दक्षिणे पार्श्वे वधूं तामुपवेश्य च।
उपलेपादि कुर्वीत हविर्भुक्स्थापनान्तकम्॥

[2]अग्नेः पश्चात् प्रतिष्ठाप्य दृषदं सोपलामथ।
उदकुम्भं निधायाग्नेः प्रागुदीच्यामतः परम्॥

[3]आज्याधिश्रयणान्तं स्यादन्वाधानादि पूर्ववत्।
आज्येन सह लाजानां पर्यग्निकरणं भवेत्॥

[4]त्रिः प्रोक्षणं भवेत्तेषां केवलोत्पवने सति।
इध्माभिघारणान्तं स्यादाज्याद्युद्वासनादिकम्॥

[5]वधूदक्षिणहस्तेन समन्वारब्ध एव सन्।
कुर्यादाघारपर्यन्तं चौलोक्ताज्याहुतित्रयम्॥

[6]अत्राऽऽज्यभागौ नैवेष्टावित्युक्तं पूर्वमेव तु।
हुत्वा त्वमर्यमेत्यन्यां प्रजापत इतीतराम्॥

(१) कुका. १।२२।१; प्रपा. ३५७; विपा. ४० (भागः २).

(२) कुका. १।२२।२; प्रपा. ३५७ अग्नेः पश्चात् (पश्चादग्नेः).

(३) कुका. १।२२।३; प्रपा. ३५७ पूर्ववत् (पूर्वकम्).

(४) कुका. १।२२।४; प्रपा. ३५७ ज्याद्युद्वा (ज्यस्योद्वा).

(५) कुका. १।२२।५; प्रपा. ३५७.

(६) कुका. १।२२।६; प्रपा. ३५७ पत इ (पतिरि).

[1]अथोन्नतमुखीं कुर्याल्लज्जयाऽवनताननाम् ।
प्राङ्मुख्या उपविष्टायास्तिष्ठन् प्रत्यङ्मुखः स्वयम् ॥
उत्तानेनाथवा नीचेनोत्तानस्य करस्य तु ।
अङ्गुष्ठादि तु गृह्णीयाद्गृभ्णामीत्येतया ततः ॥
[2]उपस्तृणाति भार्याया अञ्जलौ प्रोक्षिते वरः ।
वधूभ्राताऽथवा भ्रातृस्थानो लाजान् द्विरावपेत् ॥
[3]पश्चावत्ती वरः स्याच्चेदञ्जलौ तांस्त्रिरावपेत् ।
भ्रातृस्थानः पितृव्यस्य मातुलस्य च यः सुतः ॥
[4]मातृष्वसुः सुतस्तद्वत्सुतस्तद्वत् पितृष्वसुः ।
वरः शूर्पगतांल्लाजानवत्तांश्चाभिघारयेत् ॥
[5]पठेच्चार्यमणं मन्त्रमथ पत्नी स्थिता सती ।
कुर्वत्यञ्जल्यविच्छेदमङ्गुल्यग्रैर्जुहोति तान् ॥
[6]हविर्भुगम्भःकुम्भौ तु दृषद्वर्जं प्रदक्षिणम् ।
वधूं परिणयन् मन्त्रममोऽहमिति वै जपेत् ॥
[7]इममश्मानमारोहेत्येतेन प्राङ्मुखीं वधूम् ।
उभाभ्यामपि पादाभ्यामारोप्य दृषदं पुनः ॥

(१) कुका. १।२२।७, ८ ; प्रपा. ३५७.

(२) कुका. १।२२।९ प्रोषिते (प्रोक्षिते) ; प्रपा. ३५७ स्तृणाति (स्तृणीत).

(३) कुका. १।२२।१० ; प्रपा. ३५७ स्थानः (स्थाने) ; गभा. ८१ प्रपावत्, उत्त. ; संग. २७७ प्रपावत्, उत्त.

(४) कुका. १।२।११ ; प्रपा. ३५७ पूर्वार्धे (मातृष्वसृसुतस्तद्वत्पितृष्वसृसुता अपि ।) ; गभा. ८१ पू. ; संग. २७७ ष्वसुः सु (ष्वसृसु) पू. ; कृभ ११४० उत्त.

(५) कुका. १।२२।१२ ; प्रपा. ३५७ पठेच्चा (पठन्त्य) ; कृभ. ११४०.

(६) कुका. १।२२।१३ ; प्रपा. ३५७ प्रथमपादे (हविर्भुजं सकुम्भं च).

(७) कुका. १।२२।१४, १५ ; प्रपा. ३५७ हेत्येतेन (हेत्यनेन).

उपस्तृत्यादि तद्वत्स्याद् दृषदारोपणान्तकम् ।
वरुणं न्विति होमोऽञ्जल्युपस्तृत्यादि पूर्ववत् ॥
[1]अश्मारोपणपर्यन्तं हवनं पूषणं न्विति ।
प्रजापतिं चतुर्थ्यन्तं स्वाहायुक्तं वरः स्मरेत् ॥
[2]शूर्पकोणेन शिष्टांस्तानभ्यात्मं जुहुयाद्वधूः ।
जयन्तस्त्वाह हवनं चतुर्थं वरकर्तृकम् ॥
[3]यदि बद्धे शिखे वध्वा देशधर्मादिना ततः ।
प्र त्वा मुञ्चामि मन्त्रेण दक्षिणां तु विमुञ्चति ॥
[4]प्रेतो मुञ्चामि मन्त्रेण तूत्तरामपि मुञ्चति ।
शिखे वरस्य बद्धे चेत्तूष्णीमेव विमुञ्चति ॥
[5]अभ्युत्क्रमयतीशान्यां वधूं सप्तपदानि च ।
सा चाभ्युत्क्रमयेत्पूर्वं दक्षिणं पादमात्मनः ॥
[6]इष इत्यादिभिर्मन्त्रैरनुषक्तैर्भवादिना ।
सप्तमे क्रमिते तत्स्थः शिरसी संनिधाय च ॥
[7]अम्भःकुम्भाम्भसा ते च शिरसी अवसिञ्चति ।
आज्येन स्विष्टकृद्धोमं कृत्वा शेषं समापयेत् ॥

(१) कुका. १।२२।१६ रोपण (रोहण) ; प्रपा. ३५७ हवनं (वहनं).

(२) कुका. १।२२।१७ ; प्रपा. ३५७ कोणेन (केणाव) हवनं चतुर्थं (वचनं चतुर्थ्यां).

(३) कुका. १।२२।१८ ; प्रपा. ३५७ वध्वा (स्यातां) दक्षिणां (दक्षिणं).

(४) कुका. १।२२।१९ ; प्रपा. ३५७ तूत्तरामपि (उत्तरां च वि).

(५) कुका. १।२२।२० ; प्रपा. ३५७ तीशान्यां (तीशाने) नि च (नि तु) त्क्रमये (द्रमये) ; धप्र. ४५ (=) त्क्रम (त्क्राम) नि च (नि तु).

(६) कुका. १।२२।२१ ; प्रपा. ३५७ तत्स्थः (तस्याः).

(७) कुका. १।२२।२२ ; प्रपा. ३५७ अम्भः (तयोः) ते च (तेन) अवसि (अभिषि).

[१]होमादारभ्य यच्छेत् सा वाचं दृष्ट्वा ध्रुवादिकान् ।
जीवपत्नीति सा वाचं विसृजेच्च ततः परम् ॥
[२]दम्पत्योरत आरभ्य गृहवेशीयहोमतः ।
ऊर्ध्वं त्रिरात्रमथवा द्वादशाहं भवेद्व्रतम् ॥
अब्दं वा क्षारलवणवर्जितं भोजनं भवेत् ।
अधश्च शयनं तद्वद्ब्रह्मचर्यं च वै भवेत् ॥

## कर्पर्दिकारिकाः

होमे विशेषविधिः

¶[३]गृह्यते खलु पाणिरमन्त्रकं
गम्यते ज्वलनस्तु समन्त्रकम् ॥
वध्वञ्जलिं होमविधानदर्वीं
द्वितीयदर्वीं सह आज्यधान्या ।
प्रोक्षार्थपात्रेण सह प्रणीता-
मिध्मं च शम्या सह लाजमश्मा(?) ॥
नेष्यतेऽग्निमुखं न च लेपयोः
स्विष्टकृच्च हविष्यभिघारणम् ।
स्याद्वरो जमदग्निसमुद्भव-
स्तस्य पञ्चगृहीतमपीष्यते ॥
प्रधानहोमे यदृचा( ? † यदृता )दिहोमे
प्रवेशहोमे च विवाहशेषे ।
विवाह एतेषु भवन्ति शम्या
न त्वग्निदैवत्यचरौ भवन्ति ॥
अन्वारम्भः प्रधानेषु होमेष्वन्यत्र नेष्यते ।
यत्रास्ति चोदना तत्र सान्वारम्भस्तु होमकृत् ॥

---

¶ इदं पाणिग्रहणमग्निसमीपगमनकालभवम् ।

† श्मशानाधिव्यतिक्रमादिनिमित्तेषु ' यदृते चिदभिश्रिषः ' इत्यादिमन्त्रकरणक होम इत्यर्थ इत्यनाकुलातो( ६।४ ) ज्ञायते ।

( १ ) कुका. १।२२।२३ ; प्रपा. ३५७ यच्छेत् सा ( यच्छेत ).

( २ ) कुका. १।२२।२४, २५ ; प्रपा. ३६३.

( ३ ) कका. २१७-११.

अभिन्नवध्वञ्जलिना तु होमो
यथा जुहूवन्न मुखेन होमः ।
संमार्जप्रोक्षणसादनानि
यथा जुहूवन्न च लेपकार्यम् ॥

अधीतवेदस्य गृहाद्गृहीत्वा
निधाय वह्निं विधिना समिन्धे ।
आज्यं तु संस्कृत्य सकृद्गृहीत्वा
परिस्तृतेऽग्नौ जुहुयाच्च चित्तम् ॥

## रेणुकारिकाः

अग्निस्थापनम् , ' उपलिप्त उद्धतावोक्षिते ' इत्यादिसूत्र-व्याख्यानम् , वैकल्पिकपदार्थाः

[१]...संस्थापयेल्लौकिकमग्निमुद्धते ॥
[२]विवाहवेद्यामथवा मथित्वा-
ऽऽयतासुराहागुरुमीदृशं सः (?) ।
धर्मार्थकामाय विवाहयिष्ये
गौरीमिमां चेदथ रोहिणीं वा ॥
[३]उपलिप्ताद्युपादानात् केचित् परिसमूहनम् ।
वर्जयेयुरगृह्यार्थमारम्भोऽयमथापरे ॥
[४]विवाहाद्या अगृह्याग्निविषया इत्युदाहृतम् ।
अपि यत्र क्वचिद्धोमः सूत्राद्यत्प्राप्तिरिष्यते ॥
[५]समूहनादिपञ्चानां स्थालीपाकादिषु स्फुटम् ।
अप्राप्त्यै तस्य तेषामित्युपलिप्तादिसूत्रितम् ॥
[६]वरो वेद्यां समाधाय वह्निमेव समाचरेत् ।
त्रिवर्गापत्यसिद्ध्यर्थं करिष्ये दारसंग्रहम् ॥

---

( १ ) रेका. १६१ पृ. ६० ; संग. १६४ मुद्धते ( मुद्धतः ).

( २ ) रेका. १६२ पृ. ६०.

( ३ ) रेका. १६३ पृ. ६० ; संग. २२६.

( ४ ) रेका. १६४ पृ. ६० ; संग. २२६ यत्प्राप्तिरिष्यते ( च प्राप्तिरुच्यते ).

( ५ ) रेका. १६५ पृ. ६० ; संग. २२६.

( ६ ) रेका. १६६ पृ. ६०.

[1]स्थापनं मथिताग्नेः स्याद्रोहिण्यां पाणिपीडनम् ।
परिधानादिकं वेद्यां कुम्भधृग्वह्निमुत्तरे ॥

[2]प्रहृत्य च कटं ब्रह्मगमनादि च पूर्ववत् ।
अभ्यातानां * जयानां स्याद्धोमो राष्ट्रभृतां तथा ॥

प्राशनान्ते परं मृत्युरुदीच्यामुपवेशनम् ।
संवत्सरं न मिथुनमेतान् वैकल्पिकान् स्मरेत् ॥

पाणिशरादिग्रहणे वर्णतो व्यवस्था

[3]पाणिर्ग्राह्यः सवर्णाया गृह्णीयात् क्षत्रिया शरम् ॥
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥

वध्वा अग्निसमीपमानयनम्, अत्रैव वस्त्रपरिधापनादीति मतान्तरम्, उपवेशनम्

[4]वेदिमारोहतः सव्येतरपादेन दम्पती ।
दक्षिणारोहणेनाग्निं तामानीय प्रदक्षिणम् ।
मण्डपस्य तदर्थत्वाद्वेद्याश्चाग्निसमीपतः ॥

[5]इच्छन्ति केचिदाचार्याः परिधानादिकर्म तत् ।
अथोपविशतः पश्चादग्निं सव्येतराङ्घ्रिणा ॥

[6]कटं वा तृणपूलं वा प्रहृत्य च कुशास्तृते ।
एकस्मिन्नासने तत्र वधूस्तस्य तु दक्षिणे ॥

* अत्राभ्यातानवाचकोऽभ्यातशब्द एव कारिकाकृतोऽभिप्रेत इत्यवधेयम्, न तु 'अभ्यातानजयानाम्' इति शुद्धिः संभावनीया, 'अथाभ्याता यथालिङ्गम्' 'द्वाविंशतिरथाभ्यातान्' इत्यग्रिमप्रयोगात् ।

(१) रेका. १६७ पृ. ६० ; संग. २२६ पीडनम् (पीडने) पू.

(२) रेका. १६८–१६९ पृ. ६०.

(३) रेका. १७६–१७७ पृ. ६१.

(४) रेका. २०१, २०२ पृ ६२.

(५) रेका. २०३ पृ ६२ ; संग. २६९ उत्त.

(६) रेका. २०४ पृ. ६२ ; संग. २६९ प्रहृत्य (प्रवृत्य).

अन्वाधाने अनुसरणीयदेवतानुक्रमः

[1]ज्ञप्त्यै कर्मस्वरूपस्य स्मरेद्द्रव्यं च देवताम् ।
द्रव्यदैवतरूपत्वात्कर्मणोऽथ तदुच्यते ॥
आघाराव्याहृतीः सर्वप्रायश्चित्तस्य देवताः ।
होमो राष्ट्रभृतां चेत्स्यादृताषाढं स्मरेदिमाः ॥
ततोऽत्र ऋतधामानमग्निं गन्धर्वमोषधीः ।
अविशेषाद्घृतेनैताः स्मरेदप्सरसो मुदः ॥
संहितं विश्वसामानं सूर्यं गन्धर्वमन्विमाः ।
मरीचीरप्सरस आयुः सुषुम्णं क्रमशस्ततः ॥
सूर्यरश्मिं चन्द्रमसं गन्धर्वं च पुनः स्मरेत् ।
नक्षत्राणि त्वप्सरसो भेकुरीरिषिरं ततः ॥
स्याद्विश्वव्यचसं वातं गन्धर्वं च क्रमादपः ।
पुनरप्सरस ऊर्जो भुज्युं सुपर्णमन्विमाः ॥
स्मरेद्यज्ञं च गन्धर्वं दक्षिणाप्सरसः पुनः ।
स्तावाः प्रजापतिं विश्वकर्माणं मन एव च ॥
गन्धर्वं च तथा ऋक्सामानं (? नि) त्वप्सरसः पुनः ।
एष्टीरेता राष्ट्रभृतो वक्ष्यमाणान् जयान् स्मरेत् ॥

[2]चित्तं चित्तिमथाऽऽकूतमाकूतिं तदनन्तरम् ।
विज्ञातं च ततो विज्ञातिं मनः शक्करीस्तथा ॥

[3]दर्शं च पौर्णमासं च बृहतं च रथंतरम् ।
प्रजापतिं घृतेनैता जयाख्यातास्त्रयोदश ॥

[4]अथाभ्याता यथालिङ्गमग्न्याद्यास्ता घृतेन तु ।
अत्राधिपतिसंयुक्तं ज्ञेयं तद्देवतापदम् ॥
अग्निमिन्द्रं यमं वायुं सूर्यं चन्द्रमसं क्रमात् ।
बृहस्पतिं ततो मित्रं वरुणं च समुद्रकम् ॥
अन्नं सोमं सवितारं रुद्रं त्वष्टारमेव च ।
विष्णुं च मरुतोऽत्रैवं विशेषोऽधिपतीनिति ॥

(१) रेका. २०५–२१२ पृ. ६२–६३.

(२) रेका. २१३ पृ. ६३ ; संग. २७१.

(३) रेका. २१४ पृ ६३ पतिं घृते (पतेर्घृते) ; संग. २७१ ख्याताश्च (ख्यास्तु त्र).

(४) रेका. २१५–२२६ पृ. ६३–६४.

साम्राज्यानामधिपति स्यान्नपुंसकलिङ्गतः ।
पितॄन् पितामहांश्चाथ परानप्यवरांस्ततान् ॥
ततामहांस्त्रिरग्निं च वैवस्वतमनुस्मरेत् ।
मृत्युं चेति ततो लाजैस्त्रिरग्निं च भगं सकृत् ॥
प्रजापतिमथाऽऽज्येन स्मरेत् स्विष्टकृतं तथा ।
मृत्युं चाङ्गप्रधानार्था अहं यक्ष्येऽत्र देवताः ॥

ब्रह्मवरणम्, द्रव्यासादनम्, प्रधानहोमः

विष्णुशर्मन् विवाहाङ्गं होमं करिष्य इत्यतः ।
तत्र मे त्वं भव ब्रह्मा भवामीति वृतो वदेत् ॥
ब्रह्मोपवेशनाद्याज्यभागान्तं चौलकर्मवत् ।
पवित्रादिवरान्तानि सादयित्वोपकल्पयेत् ॥
शूर्पे लाजान् शमीपर्णमिश्रितान् दृषदं तथा ।
रञ्जितानडुहं चर्म आचार्याय वरं तथा ॥
कर्ता दुहितृमान् चेत् स्याद्रथाधिकशतं गवाम् ।
जुहुयादाज्यभागान्ते तिस्रः स्थालीघृताहुतीः ॥
व्याहृतीभिस्ततः पञ्च त्वं न इत्यादिपञ्चभिः ।
ततो राष्ट्रभृतः स्थालीघृतेन द्वादशाहुतीः ॥
प्रतिमन्त्रमृताषाडित्याद्यैर्द्वादशभिश्रितौ ।
अभाणि भाष्यकारेण राष्ट्रभृन्मन्त्रलक्षणम् ॥
[1]तेनैवाऽऽज्येन चित्तं च स्वाहेत्याद्या जुहोत्यथ ।
अत्र प्रयोगमिच्छन्ति चतुर्थ्यन्तेन केचन ॥
[2]न देवतापदानि स्युर्मन्त्रा ह्येते यतः स्मृताः ।
चशब्दो राष्ट्रवद्भिस्तु(? भृद्भिस्तु) संयोगार्थे समीरितः ॥
[3]येनेच्छेत् कर्मणा सिद्धिं तत्रैव जुहुयाज्जयाः ।
अतोऽन्यत्र जयाहोमः कर्तव्यो ऋद्धिमिच्छता ॥
अभ्यातानां जयानां च होमो वैकल्पिको भवेत् ।
जानन्शब्दो विकल्पार्थे सूत्रितः कतिसूनुना ॥

(१) रेका. २२७ पृ. ६४ ; संग. २७१.

(२) रेका. २२८ पृ. ६४ ; संग. २७१ स्मृताः (स्मृतेः) पू.

(३) रेका. २२९–२३१ पृ. ६४.

¶द्वाविंशतिर(? म)थाभ्यातान्जुहुयात्तद्घृतेन ताः ।
अग्निर्भूतानामित्याद्यास्तत्र सप्तदशस्वपि ।
अनुषङ्गो भवत्यस्मिन्ब्रह्मणीत्यादिशेषतः ॥
[1]सर्वत्राधिपतिं पूर्वं स माऽवत्वनुषज्यते ।
परं मृत्यवथाऽऽज्येन प्राशनान्तेऽथवा हुतिः ॥
[2]नपुंसकत्वादन्नायेत्यत्राधिपतिने भवेत् ।
रौद्रीं पैत्रीं हुतिं हुत्वा स्पृशेत्प्राणीतकं जलम् ॥

प्राणीतकं प्रणीतासंबन्धि जलम् । संग. २७४

लाजहोमः, पाणिग्रहणम्, अश्मारोपणम्, गाथागानम्, परिक्रमणम्

[3]वधूभ्राताऽञ्जलौ तस्या लाजानञ्जलिनाऽऽवपेत् ।
तिष्ठन्त्यास्तिष्ठता पत्या गृहीताञ्जलिनैव सा ॥
[4]जुहोत्यर्यमणं देवमित्याद्यैस्त्रिभिरेव तान् ।
अञ्जलिस्थांस्त्रिधा सर्वान् प्राङ्मुखी प्रतिमन्त्रतः ॥
[5]प्राजापत्येन तीर्थेन दैवेनैवेति बह्वृचाः ।
अन्यो भ्रातुरभावे स्याद्बान्धवो ज्ञातिरेव वा ॥

¶ द्वाविंशतिसंख्येयम् 'अग्निरैतु' इत्याद्यास्तिस्रः 'सुगं नः' इत्येका चेत्याहुतिचतुष्टयमभ्यातानेष्वन्तर्भाव्य संगमनीया, अभ्यातानानामष्टादशत्वादुक्ताहुतिचतुष्टयस्य पृथगनुक्तत्वाच्च ।

(१) रेका. २३२ पृ. ६४ ; संग. २७५ त्यवथा (त्यू तथा) उत्त.

(२) रेका. २३३ पृ. ६४ ; संग. २७४ हुत्वा (कृत्वा) उत्त.

(३) रेका. २३४ पृ. ६४ ; गभा. ८१ उत्त. ; संग. २७६ उत्त.

(४) रेका. २३५ पृ. ६४ ; गभा. ८१ उत्त. ; संग. २७६ उत्त.

(५) रेका. २३६ पृ. ६४ ; गभा. ८१ ज्ञातिरेव वा (जातिरेव च) ; संग. २७७ रेव वा (रेव च).

अङ्गुल्यग्रे देवतीर्थम् । कनिष्ठिकामूले प्रजापतितीर्थम् । संग. २७७

[१]साङ्गुष्ठं हस्तमुत्तानं गृह्णात्यस्याः पतिस्ततः ।
गृभ्णामि ते सौभगत्वायेति मन्त्रेण दक्षिणम् ॥
[२]गत्वोभावुत्तरेणाग्निं तस्याः सव्येतरं करम् ।
सव्येनाऽऽदाय हस्तेन वधूपादं च दक्षिणम् ॥
[३]शिलामारोहयेत् प्रागायतां दक्षिणपाणिना ।
आरोहेममम मन्त्रमुक्त्वा गाथां स गायति ॥

अग्नेरुत्तरतो गत्वा तस्याः कन्याया दक्षिणकरं वामहस्तेन गृहीत्वा कन्याया दक्षिणपादं दक्षिणहस्तेन धृत्वा पाषाणोपरि वरः करोतीत्यर्थः । संग. २८०

[४]सरस्वत्यादिकांस्तिष्ठन् वर एवाधिकारतः ।
पुनर्हस्तं समादाय दक्षिणेनैव दक्षिणम् ॥
तौ परिक्रामतस्तुभ्यमग्रे पर्यवहन्निति ।
स च लिङ्गाद्वरस्यैव मन्त्रपाठो भवेदिति ॥
[५]एवं द्विरपरं कर्म लाजाहोमादिकं भवेत् ।
आवपत्यखिलान् लाजान् चतुर्थे शूर्पकुष्ठया ॥
[६]तान् जुहोति भगायेति सर्वांश्चैव सकृत्ततः ।
हस्तग्रहणतस्तूष्णीं भवेत्तत्र परिक्रमः ॥
[७]दम्पत्योर्गच्छतस्तत्र ब्रह्माग्नी अन्तरा गतिः ।
दक्षिणेनोदकुम्भं स्यादुत्तरेण तदुत्तरा ॥

(१) रेका. २३७ पृ. ६४-६५ ; संग. २७८.

(२) रेका. २३८ पृ. ६५ ; गभा. ८४ च (उ) ; संग. २८० च (उ).

(३) रेका. २३९ पृ. ६५ ; गभा. ८४ पू. ; संग. २८० पू.

(४) रेका. २४०-२४१ पृ. ६५ ; संग. २८१.

(५) रेका. २४२ पृ. ६५ ; संग. २८२ चतुर्थे (चतुर्थ).

(६) रेका. २४३ पृ. ६५ ; संग. २८२ सर्वांश्चैव (सर्वान् सैव) वेत्तत्र (वेदत्र).

(७) रेका. २४४ पृ. ६५ ; गभा. ८५ गच्छत (गच्छतो) पू. ; संग. २८२-२८३ उत्तरार्धे (दक्षिणेनोदकुम्भः स्यादुत्तरो तात क्त्तरा ॥ ).

[१]न स्यादितरथावृत्तिस्त्रिः परीत्यादिसूत्रणात् ।
प्रकृत्याऽत्र भवेद्धोमो यथा दृष्टः प्रजापतिः ॥

सप्तपदी, वधूमूर्धन्यभिषेकः, सूर्यदर्शनम्, हृदयालम्भनाभिमन्त्रणे, सौभाग्यवायनदानम्

[२]अथाग्निमुत्तरेणोदङ्मुखीं सप्तपदानि ताम् ।
प्रक्रामयेद्वरारोहां तान्युदञ्चि वरः स्वयम् ॥
यथा व्रजन्त्याः सव्योऽङ्घ्रिर्नातिक्रामति दक्षिणम् ।
मन्त्रैरेकमिषे विष्णुस्त्वा नयत्वेवमादिभिः ॥
सप्तभिः प्रतिमन्त्रान्तेस्त(?) विष्णुस्त्वां नयत्विति ।
सर्वत्रानुषजत्यन्ते ततस्तामभिषिञ्चति ॥
उपविष्टां वधूं मूर्ध्नि प्रवालैरुदकुम्भतः ।
आपः शिवाः शिवतमा इति मन्त्रं समुच्चरेत् ॥
[३]आपो हि ष्ठेति तिसृभिर्द्वितीयमभिषेचनम् ।
ततः सूर्यमुदीक्षस्वेत्याह तां स नितम्बिनीम् ॥
[४]द्युश्चेत् सोदीक्षते सूर्यं तच्चक्षुरिति मन्त्रतः ।
नीत्वा करं दक्षिणांसमधि तेनाऽऽलमेद्धृदि ॥
मम व्रते ते हृदयमिति मन्त्रेण कामिनीम् ।
पाणिभ्यां संहताभ्यां च स तामेवाभिमन्त्रयेत् ॥
[५]सुमङ्गलीरियमिति मन्त्रेणाथ वरस्त्रियः ।
पतिपुत्रान्विता भव्याश्चतस्रः सुभगा अपि ॥

(१) रेका. २४५ पृ. ६५ ; संग. २८३ त्रिः परी (त्रिः प्रणी) पू.

(२) रेका. २४६-२४९ पृ. ६५.

(३) रेका. २५० पृ. ६५ ; संग. २८६ उत्त.

(४) रेका. २५१ पृ. ६५ ; संग. २८६ (द्युश्चेत्सोदीक्षते सूर्यं तच्चक्षुरिति मन्त्रतः ।) एतावदेव : २८७ (पाणिभ्यां संहताभ्यां च स तामेवाभिमन्त्रयेत् ।) एतावदेव. आदर्शपुस्तके एकपञ्चादधिकद्विशततमे क्रमाङ्के कारिकैका पश्चान्निवेशिता दृश्यते ।

(५) रेका. २५२ पृ. ६५ ; गभा. ९५ उत्त. ; संग. २८७ वर (वरं).

[1]सौभाग्यमस्यै दद्युस्ता मङ्गलाचारपूर्वकम् ॥

अनुगुप्तनिलये आनडुहचर्मणि वधूपवेशनम्, उत्तरतन्त्रम्, आचार्याय वरदानम्, ध्रुवदर्शनम्, विवाहव्रतम्, सहाशनम्, उक्तविधिनैव भार्यात्वम्

ततः प्राच्यामुदिच्यां वाऽनुगुप्ते निलये वरः ॥
[2]चर्मण्यानडुहे रक्ते तामुत्क्षिप्योपवेशयेत्।
इह गाव इति प्रोक्ता ततः स्विष्टकृदाहुतिः ॥
[3]प्राशनादि प्रणीतानां विमोकान्तं भवेदतः।
अहुतं चेत् परं मृत्यवाज्यशेषेण हूयते ॥
[4]संस्रवप्राशनं तत्र स्याद्ब्रभाणेति भाष्यकृत्।
आचार्याय चतुर्वर्षां गां दद्याच्चेद् द्विजोत्तमः ॥
[5]क्षत्रियश्चेद्वरो ग्रामं वैश्यो दद्यात्तुरङ्गमम्।
अपुत्रश्चेत् पिता तस्यास्तस्मै रथाधिकं शतम् ॥
गवां दद्यान्निषिद्धा सा यतोऽभ्रातृमती वधूः।
न वाऽभ्रातृमतीं कन्यामुपयच्छेत धर्मवित् ॥
वधूपरिक्रियायाधिरथदानमभाणि तत्।
तस्या अस्तमिते सूर्ये वरो दर्शयति ध्रुवम् ॥
ध्रुवमसीति मन्त्रेण कारितार्थेऽप्यसौ भवेत्।
ध्रुवैधि पोष्य इत्यादिना साऽपि ध्रुवमीक्षते ॥
[6]ध्रुवं पश्येति तां ब्रूयादित्यवोचत् त्रिविक्रमः।
ततो ध्रुवमसीत्यादिमन्त्रेण ध्रुवमीक्षते ॥
[7]सा तं यदि न पश्येत पश्यामीत्येव संवदेत्।
त्रिरात्रं दम्पती स्यातामक्षारलवणाशिनौ ॥

(१) रेका. २५३ पृ. ६५-६६; गभा. ९५ पृ.; संग. २८७ पृ.: २८८ उत्त.

(२) रेका. २५४ पृ. ६६; संग. २८८ पृ.

(३) रेका. २५५ पृ. ६६; संग. ( परंमृत्यु तथाऽऽज्येन प्राशनान्तेऽथवाऽऽहुतिः ॥ ) उत्त.

(४) रेका. २५६ पृ. ६६; संग. २७५ पृ.

(५) रेका. २५७-२६० पृ. ६६.

(६) रेका. २६१ पृ. ६६; संग. २८९ पृ.

(७) रेका. २६२ पृ. ६६.

[1]एकपात्रे सहाश्नीतः केचित्तत्प्रथमेऽहनि।
पयोवर्जं हविष्यान्नमित्यवोचत् त्रिविक्रमः ॥
[2]शयीयातां त्रिरात्रं तौ कुथायां दम्पती अधः।
तयोर्मैथुनसंकल्पस्ततः संवत्सरं भवेत् ॥
यद्वा द्वादशरात्रं स्यात् षड्रात्रं वा तदर्धकम्।
अनेन विधिना कन्यां संस्कृतामुपयच्छति ॥
सा धर्मचारिणी तस्य दासी स्यादन्यथा वधूः ॥

विवाहोपयुक्तानां मन्त्राणामृषिच्छन्दोदेवताविनियोगाः, तेषां क्रमः स्मरणावश्यकत्वं च

ऋषिः प्रजापतिस्त्रिष्टुप् छन्दो वासोऽस्य देवता।
युजिः परिहितावुक्ता जरां गच्छेति मन्त्रयोः ॥
समञ्जन्त्वनयोश्छन्दोऽनुष्टुबाथर्वणो मुनिः।
लिङ्गोक्ता देवतास्तत्र युजिरञ्जननिष्क्रमे ॥
अघोरचक्षुरित्यादि चतुर्णां स्यात् प्रजापतिः।
आद्यन्तयोर्भवेत् त्रिष्टुप् छन्दोऽनुष्टुप् च मध्ययोः ॥
कुमारी देवता तेषामन्योन्यप्रेक्षणे युजिः।
त्वं न इत्यादिपञ्चानां व्याहृतीनां पुरेरितम् ॥
अथ राष्ट्रभृतां साध्या ऋषयो वा प्रजापतिः।
लिङ्गोक्ता देवता छन्दोहीना होमे युजिर्भवेत् ॥
उक्तश्छन्दो जयानां स्यादार्षं च परमेष्ठिनः।
लिङ्गोक्ता देवता अन्त्ये त्रिष्टुप् छन्दो हुते युजिः ॥
अभ्यातानां भवेत् त्रिष्टुप् छन्द आर्षं प्रजापतिः।
लिङ्गोक्ता देवता होमे विनियोगः स्मृतो बुधैः ॥

(१) रेका. २६३ पृ. ६६; संग. २९२ केचित्तत् ( केचित्तु ).

(२) रेका. २६४-२६६ पृ. ६६, २८८-३०८ पृ. ६८-६९, ४-६ पृ. ७१.

परं मृत्यविति त्रिष्टुप् छन्दः संकसुको मुनिः ।
पितरो देवता मृत्युर्विनियोगः पितृक्रतौ ॥

ऋषिराथर्वणोऽनुष्टुप् छन्दोऽग्निर्देवता भवेत् ।
कुमारीहोममन्त्राणां त्रयाणां स्याद्धुतौ युजिः ॥

याज्ञवल्क्यभरद्वाजावाथर्वणप्रजापती ।
गृभ्णामि ते चतुर्णां स्युर्ऋषयः क्रमशस्त्वमी ॥

त्रिष्टुबुष्णिक् तथाऽनुष्टुप् छन्दो हीनो यथाक्रमम् ।
भगाद्या देवता अत्र युजिः स्यात् पाणिपीडने ॥

ऋषिराथर्वणोऽनुष्टुप् छन्दो वध्वैव देवता ।
आरोहेत्यस्य मन्त्रस्य दृषदारोहणे युजिः ॥

अष्टिश्छन्द ऋषिर्विश्वावसुर्देवी सरस्वती ।
सरस्वति प्रेदमिति विनियोगो जपे भवेत् ॥

देवताऽग्निस्तुभ्यमिति मुनिराथर्वणो भवेत् ।
छन्द आनुष्टुभं चास्य स्यात् परिक्रमणे युजिः ॥

ऋषिः प्रजापतिश्छन्दः सुप्रतिष्ठेति देवताः ।
लिङ्गोक्ता आप इत्यस्य युजिर्मूर्धाभिषेचने ॥

आपो हि ष्ठादिपञ्चानामुक्तं मौञ्जीनिबन्धने ।
ऋषिः सुमङ्गलीरित्यादिकानां स्यात् प्रजापतिः ॥

छन्दोऽनुष्टुब्द्वयोरन्त्ये पङ्क्तिर्लिङ्गोक्तदेवता ।
जपोपवेशनेक्षायां विनियोगः क्रमाद्भवेत् ॥

केचिदौत्पत्तिकं योगमिह नेच्छन्ति सूरयः ।
स्मारकत्वाच्च मन्त्राणां युक्तमाभाति नः स्फुटम् ॥

ऋषिमादौ प्रयुञ्जीत छन्दो मध्ये नियोजयेत् ।
देवतामवसाने तु मन्त्रज्ञो मन्त्रसिद्धये ॥

ऋषिच्छन्दोदैवतानि नाम द्रव्यं च देवताम् ।
न स्मरेत् कर्मकाले यः सोऽन्धे तमसि मज्जति ॥

इति तत्त्वार्थसंपूर्णा रेणुकार्येण यज्वना ।
कातीयगृह्यसूत्रोक्तप्रयोगविवृतिः कृता ॥

विवाहहोमाग्निविचारः

यन्मन्थनं पाक्षिकमुक्तमस्मिन्
विवाहकृत्ये कतिसूनुना तत् ।
जातारणिभ्यामिति केचिदाहु-
स्तत्प्राप्त्यभावान्न विवाहकाले ॥

गोदानिकान्ता निखिलाः क्रियास्ता
जातारणिभ्यां मथिते स्युरग्नौ ।
जातक्रियाया यदि तो(? ते) गृहीते
निरूपितं स्यादिति यज्ञपार्श्वे ॥

तूष्णीं समारोपणमव्रतत्वात्
कर्मावसाने भवनाग आह ।
तदर्थतो मन्थनमेतदग्नौ
पाणिग्रहान्ता अपि तन्मते स्युः ॥

## गृह्यासंग्रहः

पाणिग्रहणमन्त्रैर्भार्यात्वसिद्धिः

[१]पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम् ॥

पाणिग्रहणमन्त्राः गृह्योक्ताः 'गृभ्णामि ते' इत्यादयः। तृतीया चेयं प्रकृत्यादित्वादभेदे द्रष्टव्या । पाणिग्रहणमन्त्राः निश्चितं दारलक्षणमित्यर्थः । तथा च मनुः– 'पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥' (मस्मृ. ८।२२७) इति । गृसंभा.

दाम्पत्यवाचकमन्त्रजपे वरस्य कर्तृत्वम्

विवाहे यो विधिः प्रोक्तो मन्त्रा दाम्पत्यवाचकाः ।
वरस्तु ताञ् जपेत् सर्वानृत्विग्राजन्यवैश्ययोः ॥

विवाहे यो विधिः अनिर्दिष्टकर्तृकः– 'प्रोक्ते नक्षत्रे षडाज्याहुतीर्जुहोति' इत्यादिक आचार्येणोक्तः तं वरः कुर्यात् । अपर आह– 'विवाहे यो विधिः अग्निस्थापनादिः प्रोक्तः, तं विधिं वरः कुर्यात्' इति । ये च दाम्पत्यवाचका मन्त्राः, तान् वरो जपेत् । एवं वा– विवाहे यो विधिराचार्येणोक्तः, तत्र दाम्पत्यवाचका ये

(१) गृसं. २।२३, २४, २७, २८.

मन्त्राः, तान् सर्वान् वरो जपेत्। क्षत्रियवैश्ययोः पुनस्तान् मन्त्रानृत्विक् जपेत्। तस्मात् 'अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्धदेशेऽवसिञ्चति तथेतरां समञ्जन्त्वित्येतयर्चा' इति सूत्रे 'औदक एव मन्त्रं पठति' इति सरलावर्णनमसंगतम्। गृसंभा.

वधूकटान्तप्रापणेतिकर्तव्यता

**यदा निष्क्रामयेत् कन्यां वरः पाणिं जिघृक्षयन्।**
**अग्निं प्रदक्षिणं कृत्वा कटस्तीर्णे पदं व्रजेत्॥**

यदा पाणिं ग्रहीष्यन् वरः कन्यां गृहान्निष्क्रामयेत्, तदा सा कन्या अग्निं प्रदक्षिणं कृत्वा कटस्तीर्णे कटविशिष्टे स्तरणयुक्ते पदं स्थानं व्रजेत्। एतदनेनोक्तं भवति— गच्छन्ती कन्या अग्निं प्रदक्षिणं कृत्वा कटम् आस्तृतकुशपर्यन्तं नयेत्( ? व्रजेत्) इति। तथा च गोभिलसूत्रम्— 'बर्हिषोऽन्तं कटान्तं प्रापयेत्' इति। अथवा, पदं कटस्तीर्णे कृत्वा कटे पदं संस्थाप्य व्रजेदित्यर्थः। गृसंभा.

**पदा प्रपद्य पन्थानं पतियानं ( सं ? )जपेद्वधूः।**
**वरो वाऽत्र जपेन्मन्त्रमाकटान्तादिति स्थितिः॥**

पदा चरणेन प्रपद्य प्राप्य, कटमित्यर्थात्। वधूश्चरणेन कटप्राप्तेरनन्तरं पदा कटं प्रवर्तयन्तीत्येतत्। पन्थानं पतियानं पथिलिङ्गं 'प्र मे पतियानः' इति मन्त्रं संजपेत्। अजपन्त्यां वध्वां वरो वाऽत्र मन्त्रं जपेत्। आकटान्तात् कटस्य बर्हिरन्तप्राप्तिपर्यन्तं 'बर्हिषोऽन्तं कटान्तं प्रापयेत्' इति सूत्रोक्तकर्मपर्यन्तं जपेदित्येषा स्थितिः शास्त्रमर्यादा। गृसंभा.

अग्निपरिक्रमणे अन्तर्बहिश्च भावनीयाः पदार्थाः

ब्रह्मणो बहिर्भावे हेतुश्च

**'लाजानाज्यं स्रुवं कुम्भं प्राजनाश्मानमेव च।**
**प्रदक्षिणानि कुर्वीत दम्पती तु विना ग्रही॥**

'हुते पतिर्यथेतं परिव्रज्य प्रदक्षिणमग्निं परिणयति' इति सूत्रोक्ताग्निप्रदक्षिणकाले दम्पती लाजादीनामपि प्रदक्षिणं कुर्वीत कुर्याताम्। क्वचित्तथैव पाठः। ग्रही विना 'अन्यतोऽपि च' इति ग्रहेरिः। इति द्वितीयाद्विवचनान्तं पदम्। उदकग्राहं प्राजग्राहं च विनेत्यर्थः। तुशब्दः पुनरर्थः। रघुनन्दनेन तु चतुर्थचरणमाकुलीकृत्य पठितं 'दम्पती न विनाऽग्निकम्' इति, तदनाकरम्। गृसंभा.

**'प्राजग्राहमुदग्राहं ब्रह्माणमृत्विजं तथा।**
**एतानि बाह्यतः कृत्वा शेषाणां तु प्रदक्षिणम्॥**

तदेतत्सुव्यक्तमाह— प्राजग्राहमिति। प्राजनग्राहमुदकग्राहं ब्रह्माणमृत्विजं च, एतानि* एतान् बाह्यतः कृत्वा, शेषाणां लाजादीनां प्रदक्षिणं कुर्याताम्। गृसंभा.

**दक्षिणां दिशमास्थाय यमो मृत्युश्च तिष्ठतः।**
**तयोस्तु रक्षणार्थाय तस्माद्ब्रह्मा बहिर्भवेत्॥**

प्राजग्राहादीनां बाह्यतः करणे हेतुमाह— दक्षिणामिति। यस्मात् दक्षिणां दिशमाश्रित्य यमो मृत्युश्च तिष्ठतः, तस्मात् तयोः वरवध्वोः रक्षणार्थाय ब्रह्मा बहिर्भवेत्। तुशब्दश्चशब्दार्थः समुच्चये भिन्नक्रमेण योजनीयः— ब्रह्मा च बहिर्भवेदिति। स खल्वयं प्राजग्राहादीन् समुच्चिनोति। गृसंभा.

लाजाभिघारणम्

**सोमः प्रकृतिरेखा हि लाजानाश्रित्य तिष्ठति।**
**विरुद्धमाज्यं सोमेन नाभिघारणमर्हति॥**

अथेदानीं लाजहोममधिकृत्याऽऽह— सोम इति। सोमः चन्द्रः, प्रकृतिरेखा सोमदे( ? दे )वत्या लाजानाश्रित्य तिष्ठति, आज्यं च सोमेन विरुद्धम्, तस्मात् नाभिघारणमर्हति लाजः§। गृसंभा.

---

(१) गृसं. २२९; संत. ८९९ उत्तरार्धे (प्रदक्षिणानि कुर्यातां दम्पती न विनाऽग्निकम्।) भट्टभाष्यधृता स्मृतिः.

(१) गृसं. २।३०–३७, ३९.

* सामान्यविवक्षया व्यत्ययाद्वा नपुंसकनिर्देशः।

§ अत्राईणस्य लाजकर्तृकत्वमभिमन्यमानो भाष्यकारः 'लाजशब्दस्य नित्यबहुवचनान्तत्वानुशासनबाधः, प्रसासक्तिलब्धस्य लाजपदस्य विभक्तिविपरिणामो वचनविपरिणामश्चेति गौरवम्, उपक्रान्तबहुत्वस्य त्यागात् भग्नोपक्रमता,

**शमीपलाशमिश्राणां लाजानामभिघारणम् ।**
**पूर्वाणां घृतमिश्राणामाचार्यैः कल्पितं तथा ॥**

कथं तर्हि गोभिलेन 'तं सोपस्तीर्णाभिघारितम्' इत्यादिसूत्रेण लाजानामुपस्तरणमभिघारणं चोक्तम्? तत्राऽऽह– शमीति । शमीपलाशमिश्राणां शमीपत्रमिश्राणाम्, घृतमिश्राणां वा । 'खादिरे बध्नाति, पालाशे बध्नाति, रोहितके बध्नाति' इतिवत् विकल्पोऽत्र द्रष्टव्यः । तदेवंभूतानां पूर्वाणां पूर्वमासादितानां लाजानामभिघारणं करणीयम् । अत एव आचार्यैः गोभिलैः तथा शमीपलाशमिश्राणामेव लाजानामासादनं तेषामेव चाभिघारणं कल्पितम् । तथा च गोभिलसूत्रम्– 'शमीपलाशमिश्रांश्च लाजांश्चतुरञ्जलिमात्रान् सूर्पेणोपसादयन्ति पश्चादग्नेः' इति, 'सकृत् संगृहीतं लाजानामञ्जलिं भ्राता वध्वञ्जलावावपति' इति, 'तं सोपस्तीर्णाभिघारितमग्नौ जुहोति' इति च । तस्मात् केवलानां लाजानां नास्त्यभिघारणार्हता, किंतु शमीपलाशमिश्राणां घृतमिश्राणां वा पूर्वमासादितानामित्यभिप्रायः । अपर आह– शमीपलाशमिश्राणां घृतमिश्राणां च लाजानामासादनम्, घृतमिश्राणामासादनादेव आचार्यैरभिघारणं कल्पितम्, न पुनः परमार्थतोऽभिघारणमत्रास्ति इति । गृसंभा.

लाजहोमः

**तथा लाजाञ्जलिर्वध्वा हूयतेऽङ्गुलिपर्वभिः ।**
**एवं लाजहविःशेषं होतव्यं सूर्पजिह्वया ॥**

तथा गोभिलोक्तप्रकारेण, अङ्गुलिपर्वभिर्लाजाञ्जलिर्वध्वा हूयते । एवं लाजहविःशेषं सूर्पजिह्वया होतव्यम् । गोभिलोक्तप्रकारश्च गृह्यसूत्रादुपलब्धव्यः । गृसंभा.

प्राजनिनोऽनुगमनम्

**अवसिक्तं तु विधिना पाणिग्राहं तु प्राजनी ।**
**रक्षणार्थमनुगच्छेत् सताहं त्वहमेव वा ॥**

विधिना 'अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्धदेशेऽवसिञ्चति तथेतराम्' इत्यादिसूत्रोक्तप्रकारेण, उदकग्राहिणा अवसिक्तं पाणिग्राहं वरम्, तुशब्दात् वधूं च सताहं त्र्यहमेव वा प्राजनी अनुगच्छेत् । अथवा तुशब्दो यथाश्रुतार्थ एव वधूव्यवच्छेदार्थो वर्णनीयः, एकस्य प्राजनिनो द्वयोरनुगमनासंभवात्, पाणिग्राहस्य प्रयोजनवशाद्बहिर्गमनस्य संभवेन तदनुगमनवर्णनस्यैवौचित्यप्राप्तेश्च । त्र्यहमेव च इति पाठेऽप्ययमेवार्थो वर्णनीयः । किमर्थमनुगच्छेत्? रक्षणार्थम् । तदनेन 'प्राजनेनान्यः' इति सूत्रोपदिष्टस्य प्राजनिनो विनियोगो दर्शितः । गृसंभा.

ब्राह्मादिविवाहेषु पूर्वं होमः पश्चात् परिणयः, गान्धर्वादिषु विपर्ययः

**ब्राह्म्यस्याऽऽर्षस्य दैवस्य प्राजापत्यस्य याज्ञिकैः ।**
**पूर्वं होमविधिः प्रोक्तः पश्चात् परिणयः स्मृतः ॥**

ब्राह्म्यादयः शब्दाः विवाहविशेषाणां वाचकाः । तथा च मनुः– 'चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान् । अष्टाविमान् समासेन स्त्रीविवाहान् निबोधत ॥ ब्राह्म्यो दैवस्तथैवाऽऽर्षः प्राजापत्यस्तथाऽऽसुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥' (मस्मृ. ३।२०,२१) इति । लक्षणममीषामन्यत्रानुसंधेयम् । ब्राह्म्यदैवार्षप्राजापत्यविवाहेषु प्रथमं लाजहोमविधिरुक्तः, पश्चात् परिणयः अग्नेः परितो नयनमुक्तं याज्ञिकैः । तथा च गोभिलसूत्रम्– 'हुते पतिर्यथेतं परिव्रज्य प्रदक्षिणमग्निं परिणयति' इत्यादि । 'ब्राह्मणार्षस्य' इति पाठेऽपि ब्रह्मणोऽयं ब्राह्मणः ब्राह्म्य इत्येतत् । तस्याऽऽर्षस्य चेति पूर्वोक्त एवार्थः । गृसंभा.

**गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये**
**तेषां परिणयः पूर्वं पश्चाद्धोमो विधीयते ॥**

गान्धर्वादिषु विवाहेषु पूर्वमग्नेः परिणयनं पश्चाल्लाजहोमो विधीयते अस्माभिः । स खल्वयमाचार्यानुपदिष्टो विशेष आचार्यपुत्रेणोपदिष्टः । आचार्यस्तु प्रशस्तान् विवाहानभिप्रेत्य होमानन्तरं परिणयनं सूत्रयांचकार इति श्लिष्यते । तथा च स्मरणम्– 'चतुरो ब्राह्मणस्याऽऽद्यान् प्रशस्तान् कवयो विदुः ।' इति । कश्चित् पुनर्ब्राह्म्यादिशब्दानां विवाहनामत्वमविद्वानिवान्यथेमं ग्रन्थं वर्णयां-

वाक्यभेदश्च' इति चतुरो दोषानङ्गीचकार । उक्तदोषाभावादाज्यस्यैव कर्तृत्वाङ्गीकारस्तु श्रेयान् पन्थाः ।

चकार 'ब्राह्मणस्याऽऽर्षस्य' इत्यादिम्— 'ब्राह्मणस्य ऋषेर्देवस्य प्रजापतेर्विवाहे पूर्वं लाजहोमः पश्चादग्नेः परितो नयनम्, गन्धर्वासुरपिशाचानां विवाहे राक्षसानां रावणादीनां च विवाहे पूर्वं परिणयः पश्चाल्लाजहोमः' इति। तदश्रद्धेयम्। गृसंभा.

लाजाहोमादिषु निर्वापनिषेधः

**चूडाकर्मणि सीमन्ते यश्च पाकः सदा गृहे।**
**विवाहे चैव लाजानां नोक्तो निर्वपणो विधिः॥**

चूडाकर्मणि 'आनडुहो गोमयः कृसरः स्थालीपाको वृथापक्व इत्युत्तरतः' इति सूत्रोक्तो यः स्थालीपाकः, यश्च सीमन्तकरणे 'कृसरः स्थालीपाक उत्तरघृतस्तमवेक्षयेत्' इति सूत्रोक्तः स्थालीपाकः, यश्च सर्वदा भोजनाद्यर्थे गृहे पाकः, यश्च विवाहे लाजानां पाकः, तेष्वेतेषु निर्वपणो विधिः। निर्वपण इति अणन्तत्वेऽपि वृद्धेरभावश्छान्दसः। निर्वपणसंबन्धी विधिः, निर्वपणरूपो वा विधिः 'अमुष्मै त्वा जुष्टं निर्वपामि' इत्येवंरूपः आचार्यैर्नोक्तः। गृसंभा.

## गङ्गाधरः (कारिकाः)

लाजपदार्थः, लाजाहुतिमानम्

**[1]लाजाः स्युर्व्रीहयो भ्राष्ट्रा जुहुयान्मुष्टिसंमितान्॥**

भ्राष्ट्रेषु अम्बरीषेषु संस्कृता भ्राष्ट्राः। संग. २७६

## कारिकाः

रात्रेश्चतुर्थो भागो वधूवरयोर्ब्रह्मचर्यवासकालस्यान्तिमोऽनुकल्पः

**[2]वध्वा सहैव कर्तव्यो निवासः श्वशुरालये।**
**चतुर्थरात्रमन्ते च केचिदेवं वदन्ति हि॥**

(१) संग. २७६.

(२) धप्र. ४९ मन्ते च (मत्रैव); संग. २९१ धर्मप्रवृत्तौ.

# स्थागरालङ्कारः

## आग्निवेश्यगृह्यसूत्रम्

प्रीतिजनकं स्थागरालङ्काराख्यं कर्म

[1]अथातः स्थागरमलङ्कारं वक्ष्यामः । आदर्शं चाञ्जनं चाहतं वासः सर्वसुरभितं व्रीहीन् दृषदुपले इत्येतेऽस्य संभारा उपक्लृप्ता भवन्ति ॥

पाणिग्रहणादूर्ध्वं श्वोभूते श्वश्रूर्वा श्वशुरो वा स्यालो वा गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलमुपलिप्य प्रोक्ष्य लक्षणमुल्लिख्याद्भिरभ्युक्ष्य शुचि शुक्लमनार्द्रमाच्छाद्य ¶ सुप्रक्षालितपाणिपादावप आचम्य पवित्रपाणी स्थण्डिलस्यापरार्धे दम्पती उपविशतः। पूर्वार्धे व्रीहीनवकीर्य दृषदुपले प्रतिष्ठाप्याहतेन वाससा परिवेष्टयति । गन्धपुष्पधूपदीपैर्यवाक्षतण्डुलैरभ्यर्च्य पुरस्तात् दशहोतारं सग्रहं जपति 'चित्तिः स्रुक्' इति, चतुर्होतारं दक्षिणतः 'पृथिवी' इति, पञ्चहोतारं पश्चात् 'अग्निर्होता' इति, षड्ढोतारमुत्तरतः 'सूर्यं ते चक्षुः' इति, सप्तहोतारमुपरिष्टात् 'महाहविर्होता' इति । एतस्मिन् काले वरस्य भगिन्यपरेण दृषदुपलाभ्यां प्राङुपविश्य सर्वसुरभितं पिष्ट्वा देवताभ्यो निवेद्याञ्जनेनाङ्क्ते । आदर्शमवेक्ष त्वा(? क्षय्य) शेषेण दुहितरमलङ्कृत्य मुखे 'अग्निर्यजुर्भिः' 'सेनेन्द्रस्य' इति, पश्चाज्जामातरम् । यच्चात्र स्त्रिय आहुस्तत् कुर्वन्ति । सा प्रिया भवति । 'प्रियो हैव भवति' इति ब्राह्मणम् * ॥

---

¶ अत्र 'तिष्ठति' इत्यध्याहारेण ग्रन्थः संगमनीय इति भाति।

* स्थागरालङ्कारविषयकं कृत्स्नं तैत्तिरीयब्राह्मणं तत्सायणभाष्यं चेत्थम्—

प्रजापतिः सोमꣳ राजानमसृजत । तं त्रयो वेदा अन्वसृज्यन्त । तान्हस्तेऽकुरुत । अथ ह सीता सावित्री । सोमꣳ राजानं चकमे । श्रद्धामु स चकमे । सा ह पितरं प्रजापतिमुपससार । तꣳ होवाच । नमस्ते अस्तु भगवः । उप त्वाऽयानि । प्र त्वा पद्ये । सोमं वै राजानं कामये । श्रद्धामु स कामयत इति । तस्या उ ह स्थागरमलङ्कारं कल्पयित्वा । दशहोतारं पुरस्ताद्व्याख्याय । चतुर्होतारं दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । संभारैश्च पत्निभिश्च मुखेऽलंकृत्य । आऽस्यार्धं वव्राज । ताꣳ होदीक्ष्योवाच । उप मा वर्तस्वेति । तꣳ होवाच । भोगं तु म आचक्ष्व । एतन्म आचक्ष्व । यत्ते पाणाविति । तस्या उ ह त्रीन् वेदान्प्रददौ । तस्मादु ह स्त्रियो भोगमेव हारयन्ते ॥

स यः कामयेत प्रियः स्यामिति । यं वा कामयेत प्रियः स्यादिति । तस्मा एतꣳ स्थागरमलङ्कारं कल्पयित्वा । दशहोतारं पुरस्ताद्व्याख्याय । चतुर्होतारं दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । संभारैश्च पत्निभिश्च मुखेऽलंकृत्य । आऽस्यार्धं व्रजेत् । प्रियो हैव भवति ॥ (तैब्रा. २।३।१०).

प्रजापतिः सोमं सृष्ट्वा तमनु त्रीन् वेदानसृजत । स च सोमस्तान्वेदान् स्वमुष्टिमध्ये गोपायामास । तदानीं सवितुः प्रजापतेः पुत्री काचिन्नामतः सीता (सावित्रीति ?) 'सोमो मे भर्ताऽस्तु' इत्यकामयत । स तु सोमः श्रद्धाख्यां कांचिदन्यां प्रजपतेर्दुहितरं कामितवान्, न त्वेतां सीताम् । सा तु सीता प्रजापतिसमीपमागत्य नमस्कारं कृत्वा 'त्वत्समीपे कार्यार्थं समागताऽस्मि, त्वां भजे सर्वदा' इत्येवमुवाच । ततः प्रजापतिना 'किं कार्यम् ?' इति पृष्टा सती सोमविषयां कामनामुवाच । ततः प्रजापतिस्तस्याः सीतायाः सोमवशीकरणार्थं कंचित्प्रयोगं कृतवान् । स्थागरो नाम कश्चित्सुगन्धद्रव्यविशेषः, तं पिष्ट्वा तत्संबन्धिनमलंकारं मण्डनविशेषं कल्पयित्वा तस्य पूर्वादिदिक्षु दशहोत्रादिमन्त्रान् पठित्वा 'अग्निर्यजुर्भिः' इत्यादिभिः संभारमन्त्रैः 'सेनेन्द्रस्य' इत्यादिभिर्देवपत्नीमन्त्रैश्चाभिमन्त्रितेन स्थागरपिष्टेन तस्याः सीताया मुखे तिलकाद्यलंकारं चकार । सा च सीता तस्य

---

(१) आग्निगृ. १।७।१.

सोमस्य समीपे प्रत्याजगाम । स च सोमस्तां दृष्ट्वा परवशः 'मां प्रति समीपे समागच्छ' इत्युवाच । सा च तदीयां प्रीतिं परीक्षितुमेवमुवाच– 'अहमागमिष्यामि, त्वं तु भोगमाचक्ष्व सर्वदा भोगं करिष्यामीति प्रतिजानीहि । किंच यत्ते पाणौ मुष्टिमध्ये गोप्यं वस्तु वर्तते एतन्मह्यमवञ्चनं कृत्वा कथय' । ततः सोमोऽपि प्रीत्यतिशयेन तस्यै सीतायै त्रीन्वेदान्प्रददौ । वेदमन्त्रलाञ्छितं किंचिद्गुटिकाद्रव्यं दत्तवानित्यर्थः । यस्मादियं सीता प्रियं वस्तु ययाचे तस्माल्लोकेऽपि स्त्रियो भोगमुद्दिश्य प्रियं दायं पुरुषमाहारयन्ते ।

तदेवमुपाख्यानेन प्रयोगं प्रशस्य तं प्रयोगं विधत्ते–स इति । अहमेव तस्मै राज्ञे प्रियो भविष्यमीति वा पुरुषोऽयं राज्ञे प्रियो भवत्विति वा कामनायां सत्यां प्रीतिविषयस्य स्वस्य परस्य वा मुखे पूर्वोक्तप्रकारेण स्थागरपिष्टतिलकादिकं कृत्वा तस्य राज्ञः समीपे गच्छन्नयं तिलकधारी तस्य राज्ञः प्रियो भवति ।

तैत्त्रासा.

# प्रयाणम्

—०—

## बौधायनगृह्यसूत्रम्

अग्न्यनुनयनम्, अङ्कादुद्वहनम्, रथारोपणम्, मार्गौषध्याद्यनुमन्त्रणम्

[1]तां न मिथः संसादयेदनादेशात् ॥

अनुनयन्त्येतमग्निम् ॥

अथैनां पितुरङ्कादुद्वहति गुरोर्वा— 'ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाँ अनु । पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ॥' इति ॥

अथैनां दक्षिणे हस्ते गृहीत्वा स्वरथमारोप्य स्वान् गृहानानयति— 'पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन । गृहान् गच्छ गृहपत्नी यथाऽसो वशिनी त्वं विदथमावदासि ॥' इति ॥

पन्थानमनुमन्त्रयते— 'सुगं पन्थानमारुक्षमरिष्टं स्वस्तिवाहनम् । यस्मिन् वीरो न रिष्यत्यन्येषां विन्दते वसु ॥' इति ॥

ओषधिवनस्पतयो नद्यो वनान्यनुमन्त्रयते— 'या ओषधयो या वनस्पतयो या नद्यो यानि धन्वानि ये वना । ते त्वा वधु प्रजावतीं प्र त्वे मुञ्चन्त्वंहसः ॥' इति ॥

## आश्वलायनगृह्यसूत्रम्

वध्वाः समन्त्रकं यानारोपणम्

[2]प्रयाण उपपद्यमाने 'पूषा त्वेतो नयतु हस्तगृह्य' इति यानमारोहयेत् ॥

(१) प्रयाण उपपद्यमान इति कस्मात् ? 'पूषा त्वेतो नयतु हस्तगृह्य' इति यानमारोहयेदित्येवमुच्यमाने त्वहरहर्यानारोहणं प्राप्नोति । एवमप्युपपद्यमानग्रहणमपार्थकम् । इदमपि वक्तव्यम्, इतरथा हि प्रयाणे यानमेव नित्यं स्यात् । तत्र यानं नाम चक्री(१ क्र)- वच्छकटादिकमुच्यते । उपपद्यमाने याने अनेन मन्त्रेणाऽऽरोहयेत् । असति यानेऽन्यत्रायं मन्त्रो न भवति । अन्येनापि नयनं भवतीत्येतच्च ज्ञापितं भवति ।

$ देभा.

(२) स्वग्रामविवाहपक्षे स्वगृहगमने नायं विधिः ।

§ गानाष्ट्र.

समन्त्रकं नाव्यारोपणमुदकोत्तारणं च

[1]'अश्मन्वतीरीयते संरभध्वम्' इत्यर्धर्चेन नावमारोहयेत् ॥

(१) अर्धर्चग्रहणम् ऋङ्निवृत्त्यर्थम् । † देभा.

(२) यद्यन्तरा नाव्या नदी स्यात्तदाऽनेनार्धर्चेन नावमारोहयेत् । वधूमिति शेषः । गानाष्ट्र.

उत्तरेणोत्क्रमयेत् ॥

(१) उत्तरेणार्धर्चेन उत्क्रमयेत् । तत्र चोत्क्रमयेदित्युत्तारयेद्वा उत्क्षिपेद्वेत्यर्थः । देभा.

(२) उत्तरेणार्धर्चेन 'अत्रा जहाम' इत्यर्धर्चेन वधूमुदकादुत्तारयेत् । गानाष्ट्र.

(३) उत्तरेणार्धर्चेनोत्तारयेत् । सर्वत्र वरस्यैव मन्त्रः । अना.

रोदने जपः

'जीवं रुदन्ति' इति रुदत्याम् ॥

(१) यदाऽसौ बन्धुवियोगात् रोदिति तदाऽस्यां रुदत्यां जपेदित्यर्थः । देभा.

---

(१) बौगृ. १।५।१–६.

(२) आगृ. १।८।१ ; प्रपा. ४२८ ; धप्र. ४९ ; संप्र. ८४२.

$ अना. देभावत् ।

§ शेषं देभावत् । प्रपा. सर्वप्रयाणसूत्रेषु वृत्तेरनुवादः ।

† अना. देभावत् ।

(१) आगृ. १।८।२–४ ; प्रपा. ४२८ ; संप्र. ८४२.

(२) नीयमाना वधूः यदि रोदिति बन्धुवियोगात्सदा एतां जपेत्। अयं विधिः स्वग्रामेऽपि भवति, अविशेषात्। * गानावृ.

विवाहाग्नेरग्रतो नयनम्

[1]विवाहाग्निमग्रतोऽजस्रं नयन्ति ॥

(१) विवाहाग्निग्रहणमन्यस्याग्नेर्नयनं मा भूदिति। अजस्रग्रहणं किमर्थम्? धार्यमाणस्य नयनं स्यादिति। एवं ब्रुवन्नेतमर्थं ज्ञापयति— अन्यत्र नीयमानस्य समारोपणमपि कृत्वा नयनं भवतीति। देभा.

(२) विवाहाग्निग्रहणम् अग्निविशेषनियमाभावशङ्कानिवृत्त्यर्थम्। अजस्रग्रहणं ध्रियमाणस्य नयनार्थम्। तेनान्यत्र प्रयाणे समारोपणं कृत्वा नयनं गम्यते। अयं च विधिः स्वग्रामेऽपि भवत्यविशेषात्। गानावृ.

(३) तेनान्यत्र समारोप्यापि नयनं भवति। $ अना.

देशवृक्षचतुष्पथेषु जपः

[2]कल्याणेषु देशवृक्षचतुष्पथेषु 'मा विदन्परिपन्थिनः' इति जपेत् ॥

(१) तत्र कल्याणा इति शोभनाः प्रशस्ताः प्रकाशा इत्यर्थः। तेषु कल्याणेषु देशादिषु एषा ऋग्भवति। नन्वन्येषामियम् ऋक् भये दृष्टा, इह भयं नोपपद्यते। उच्यते। इहापि भयमस्ति। कथम्? एतेषु देशवृक्षचतुष्पथेषु गन्धर्वाप्सरसो नित्यसंनिहिता भवन्ति। न तयोः दम्पत्योर्लुभ्यन्ते। तेन तयोरपीदं भयहीनं भवति। तस्मादत्रापि भय एवैषा ऋक् प्रयुज्यते। † देभा.

(२) कल्याणेषु विवाहादिशोभनेषु देशवृक्षचतुष्पथेषु जपेत्। गानावृ.

प्रतिवसति समन्त्रकमीक्षकेक्षणम्

वासे वासे 'सुमङ्गलीरियं वधूः' इतीक्षकानीक्षेत ॥

(१) वासे वास इति वसतौ वसतौ इत्यर्थः। य ईक्षका भवन्ति तान् अनेन मन्त्रेणेक्षेत— 'सुमङ्गलीः' इति। तत्र वासे वास इति नियमार्थमारभ्यते। कः पुनर्नियमः? वासे वास एवेक्षणं स्यादिति, अन्यत्र य ईक्षकाः तेषामीक्षणं मा भूदिति। देभा.

(२) वसतौवसतौ ईक्षकाः सन्ति चेत्तानेतया ईक्षेत। वासादन्यत्रेक्षणे न मन्त्रः। वीप्सावचनं प्रतिवसतौ मन्त्रप्राप्त्यर्थम्। गानावृ.

(३) वासेवास इति वचनात् पथि न भवति। अना.

## कौषीतकिगृह्यसूत्रम्

बध्वाः प्रस्थाने रोदने च जपः

[1] 'प्र त्वा मुञ्चामि' इति तृचं गृहात् प्रतिष्ठमानायाम् ॥

'जीवं रुदन्ति' इति प्ररुदन्त्याम् ॥

रथाक्षचक्रबलीवर्दानामभ्यञ्जनम्

अथ रथाक्षस्योपाञ्जनं पत्नी कुरुते 'अक्षन्नमीमदन्त' इत्येतया सर्पिषा ॥

'शुची ते चक्रे, द्वे ते चक्रे' इति चैताभ्यां चक्रयोः पूर्वया पूर्वमुत्तरयोत्तरम् ॥

उस्रौ च ॥

युगच्छिद्रेषु शम्यानां निखननमभिमन्त्रणं वा

'खे रथस्य' इत्येतया फलवतो वृक्षस्य शम्यागर्तेष्वेकैकां वयां निखाय ॥

नित्या वाऽभिमन्त्र्य ॥

---

* अना. गानावृगतम्।

$ शेषं गानावृगतम्।

† अना. देभागतम्।

(१) आगृ. १।८।५; प्रपा. ४२८; संप्र. ८४२; प्रका. ३७९.

(२) आगृ. १।८।६–७; प्रपा. ४२८; संप्र. ८४२.

(१) कौगृ. १।१५।१–२१.

बलीवर्दानां योजनमभिमन्त्रणं च

**अथोक्षौ युञ्जन्ति 'युक्तस्ते अस्तु दक्षिणः' इति द्वाभ्याम्, '* शुक्रावनड्वाहौ' इत्येतेनार्धर्चेन युक्तावभिमन्त्र्य ॥**

रथाङ्गविशरणादौ प्रतिसमाधानविधिः

**अथ यदि रथाङ्गं विशीर्येत छिद्येत वाऽऽहिताग्नेर्गृहान् कन्यां प्रपाद्य ॥**

**'अभि व्ययस्व खदिरस्य' इत्येतया प्रतिदध्यात् ॥**

**'त्यं चिदश्वम्' इति ग्रन्थिम् ॥**

**'स्वस्ति नो मिमीताम्' इति पञ्चर्चं जपति ॥**

रथारोहणे चतुष्पथे श्मशाने वनस्पतिसंनिधाने नावारोहणे नदीतरणे नदीमध्यगमने च मन्त्रजपः, वध्वाः प्रेक्षणम्

**'सुकिंशुकम्' इति रथमारोहन्त्याम् ॥**

**'मा विदन्परिपन्थिनः' इति चतुष्पथे ॥**

**'ये वध्वः' इति श्मशाने ॥**

**'वनस्पते शतवल्शः' इति वनस्पतावर्धर्चं जपति ॥**

**'सुत्रामाणम्' इति नावमारोहन्त्याम् ॥**

**'अश्मन्वती' इति नदीं तरन्त्याम् ॥**

**अपि वा युक्तेनैव ॥**

**'उद्व ऊर्मिः' इत्यगाधे ॥**

**प्रेक्षणं च ॥**

गृहागमनकर्म वक्ष्यामः। गृहं नीयमानायां वधूकायामाचार्यः 'प्र त्वा मुञ्चामि वरुणस्य पाशात्' इत्येतं तृचं जपेत्। ततो यदि वधू रोदति ततः 'जीवं रुदन्ति वि मयन्ते अध्वरे' इति वरो जपति आचार्यो वा। यदि रथेन गच्छति ततः 'अक्षन्नमीमदन्त' इत्यनेन मन्त्रेणाक्षं वधूर्घृतेनाभ्यञ्जयति। आचार्येण सर्वमन्त्रं भणयितव्या। 'शुची ते चक्रे यात्याः' इत्यनेन मन्त्रेण रथस्य दक्षिणचक्रमभ्यज्य 'द्वे ते चक्रे सूर्ये' इत्युत्तरम्। ततः 'खे रथस्य खेऽनसः' इत्यनेन मन्त्रेण फलद्वृक्षस्य सक्तां शम्यां शाखां युगच्छिद्रेषु निखनति। प्रथमं दक्षिणयोस्तत उत्तरयोः। अथवा अनेनैव मन्त्रेण चिरंतनीः एवाभिमन्त्र्य ततः 'युक्तस्ते अस्तु' इत्यनेन मन्त्रेण दक्षिणस्यां धुरि बलीवर्दं युनक्ति, 'युनज्मि ते ब्रह्मणा केशिना हरी' इति द्वितीयमुत्तरस्यां युनक्ति। ततः 'शुक्रावनड्वाहावास्ताम्' इत्यनेनार्धर्चेन युक्तौ बलीवर्दावभिमन्त्र्य ततो वधूं वरवित्ता आरोप्य गच्छन्ति। गच्छमानाया यदि रथाङ्गमीषाक्षादि भज्येत योक्त्रप्रग्रहादि वा छिद्येत ततो वधूमाहिताग्नेः गृहं प्रवेश्य ततः 'अभिव्ययस्व खदिरस्य सारम्' इत्यनेन मन्त्रेण दारुमयं यद्रथाङ्गं तत्समारचयितव्यम्। 'त्यं चिदश्वं न वाजिनम्' इत्यनेन मन्त्रेण रज्जुमयीं ग्रन्थिं कृत्वा 'स्वस्ति नो मिमीतामश्विना भगः' इति पञ्चर्चं जपति। 'सुकिंशुकं शा(?श)ल्मलिं विश्वरूपम्' इति रथमारोहन्त्यां वधूकायां जपेत्। 'मा विदन्परिपन्थिनः' इति चतुष्पथे प्राप्ते जपेत्। 'ये वध्वश्चन्द्रं वहतु (?तुम्)' इति श्मशाने प्राप्ते जपेत्। 'वनस्पते शतवल्शो वि रोह' इत्यर्धर्चं वनस्पतौ प्राप्ते जपेत्। 'सुत्रामाणं पृथिवीं द्यामनेहसम्' इत्येतामृचं नावमारोहन्त्यां जपेत्। 'अश्मन्वतीरीयते संरभध्वम्' इत्येतामृचं तरन्त्यां जपेत्। यदाऽल्पोदका नदी भवति युक्तेनैव रथेन गच्छति तथाऽप्येतामेव जपेत्। ततो नदीमध्यगतायाम् 'उद्व ऊर्मिः शम्या हन्तु' इत्येतामृचं जपेत्। वधूश्च वेष्टितमुखी गच्छेत्। अत्र रथयोजनादि गृहप्रापणं यावत् किंचित् पठितं तत्तन्मन्त्रजातं तद्द्वरेण जप्तव्यम्, यत्कर्मजातं तदनेन कर्तव्यम्। कौगृसं. १५–१६

† एतदादिना पृथक् सूत्रेण भाव्यमिति भाति।

## आपस्तम्बगृह्यसूत्रम्

शकटादिभिः प्रयाणविधानम्

[1] **... तां ततः प्र वा वाहयेत् प्र वा हारयेत् ॥**

(१) आपगृ. ५।१३.

(१) तत इति वचनं योक्त्रविमोकस्य प्रस्थानकालनियमो मा भूत्, यथोपपद्यते श्वो वा सद्यो वा तदा प्रतिष्ठेतेत्येवमर्थम्। प्रवाहणं रथादिभिर्नयनम्, प्रहारणं मनुष्यवाह्येन शिबिकादिना नयनम्। उभयत्र वाशब्दः उभयोरपि पक्षयोस्तुल्यत्वज्ञापनार्थः। अन्यथा रथानयनस्येह प्रत्यक्षकल्पोपदेशादनुपदिष्टकल्पं मनुष्ययानमाग्निहोत्रिककल्पवत् सूचितं विज्ञायेत। अतः उभयत्र वाशब्दः। तेन मनुष्यनयनेऽपि 'आरोहतीमुत्तराभिः' 'उत्तरया (शंत ?)' 'उत्तराभिः' इत्येवमादयो मन्त्राः सिद्धा भवन्ति। अनाकुला.

(२) ततः अनन्तरं तां वधूं हस्तिनमश्वं वा प्रवाहयेत्, शिबिकामान्दोलिकां रथं मनुष्यं वा प्रहारयेत्। उभयत्र 'व्यवहिताश्च' (पासू. १।४।२८) इति वाशब्दव्यवधानम्। वाशब्दद्वयं तु तुल्याविमौ विधी, नान्यतरोऽनुकल्प इति ज्ञापयितुम्। अत्र विमुच्येति क्त्वाप्रत्यये सत्यपि तत इति यदाह तज्ज्ञापयति नावश्यं क्त्वाप्रत्यययुक्तं वचनं पूर्वकालतां समानकर्तृकतां वा विदधाति। कदाचित् केवलक्रियाविधानमेव सिद्धवदनुवदति। ताद.

वैवाहिकाग्न्यनुहरणम्

**[१]समोप्यैतमग्निमनुहरन्ति ॥**

(१) एतं वैवाहिकमग्निमुखायां समोप्य दम्पत्योर्गच्छतोरनु पृष्ठतः हरन्ति तदीयाः पुरुषाः। समोप्यवचनं श्रौतेष्वग्निषु दृष्टस्य समारोपणस्य प्रतिषेधार्थम्। एवं प्रतिषेधं कुर्वन्नेतद्दर्शयति— 'अनुगतो मन्थ्यः' इत्यत्र श्रौतवदवक्ष्याणेभ्यो मन्थनमिति। अनुशब्दः पुरस्तान्नयनप्रतिषेधार्थः। अनाकुला.

(२) एतं विवाहाग्निं समोप्य उखायामनुहरन्ति अव्यवायेन वध्वाः पश्चान्नयन्ति परिकर्मिणः। एतमिति ग्रहणं विवाहाग्नेरौपासनाख्यस्य संस्कारशब्दाभिव्यङ्ग्यस्य प्रयाणेऽपि नित्यं प्रत्यक्षनयनार्थम्। अगृह्यमाणे त्वेतमित्यस्मिन् अदृष्टार्थं सर्वार्थस्य लौकिकाग्नेरनुहरणं स्यात्, औपासनस्य च गृह्यान्तरेण प्रयाणे विहितं समारोपणं स्यात्। ताद.

(३) एतत्पदस्वारस्येन प्रवेशहोमात्पूर्वतरस्याग्नेरेव परामर्शः युक्तः। तस्यैव च प्रत्यक्षनयनं युक्तम्। औपासनावस्थामापन्नस्य त्वग्नेः यात्रादिषु श्रौतन्यायसिद्धं समारोपणमेव भवति। आन. १८०

रथस्योत्तम्भनं वाहयोजनं च समन्त्रकम्

**[१]उत्तरा रथस्योत्तम्भनी ॥**

अथ दम्पत्योः प्रस्थाने विशेषधर्मा उपदिश्यन्ते। उत्तरा 'सत्येनोत्तभिता' इत्येषा रथस्योत्तम्भनी। अनयर्चा रथस्योत्तम्भनं कर्तव्यमित्यर्थः। केन ? वरेण, अधिकृतत्वात्। * अनाकुला.

**वाहावुत्तराभ्यां युनक्ति दक्षिणमग्रे ॥**

(१) याभ्यामूह्यते रथः तौ वाहौ अश्वावनड्वाहौ वा उत्तराभ्यां 'युञ्जन्ति ब्रध्नम्' 'योगे योगे' इत्येताभ्यां युनक्ति युगधुरोराबध्नाति। 'युञ्जन्ति' इति दक्षिणम्, 'योगे योगे' इत्युत्तरम्। केचिदुभाभ्यामेकैकस्य योगमिच्छन्ति। दक्षिणमग्र इति। अर्थात् पश्चात् सव्यम्। प्रत्यङ्मुखत्वे च न सिध्यति (इति) वचनम्। अन्यत्र 'तथाऽपवर्गः' इत्येव सिद्धम्। अनाकुला.

(२) उत्तराभ्यां 'युञ्जन्ति ब्रध्नम्' 'योगे योगे' इति द्वाभ्याम् अश्वावनड्वाहौ वा युगधुरोराबध्नाति। तयोश्च दक्षिणं वाहं पूर्वं युनक्ति। द्वाभ्यां द्वाभ्यामेकैकम्, नैकैकया। अत्र च उत्तराभ्यामिति द्वन्द्वापवादेनैकशेषेण समभिव्याहृतयोजनक्रियापेक्षयेतरेतरयोगाभिहितयोर्द्वयोरपि मन्त्रयोः सहितयोर्विनियोगात् 'एकमन्त्राणि कर्माणि' (आपप. १।४।१) इत्यस्यापवादः। नन्वेवं द्वितीयस्य मन्त्रस्यादृष्टार्थता स्यात्। सत्यम्, तथाऽपि 'द्वाभ्यां द्वाभ्यामेकैकम्' इति परमाप्तभाष्यकारवचनादेकैकवाहयोजने सहितमन्त्रद्वयाचारः कृत्स्नदेशकालकर्तृव्याप्त इत्यनुमीयते। ताद.

---

(१) आपगृ. ५।१४; आन. १८०.

सं. का. २७३

* ताद. अनाकुलागतम्।

(१) आपगृ. ५।२१-२६.

आरोहन्त्या अनुमन्त्रणम्

**आरोहतीमुत्तराभिरभिमन्त्रयते ॥**

( १ ) अथ तं रथं युक्तमारोहति वधूः । तामारोहतीम् आरोहन्तीम् उत्तराभिः 'सुकिंशुकम्' इत्येवमादिभिः अभिमन्त्रयते । इह बहुवचननिर्देशात् त्रिप्रभृति अनियमप्रसङ्गे मन्त्रलिङ्गाच्चतसृभिरिति नियमः । याने तूत्तम्भनादि सर्वं भवति । अश्वपुरुषादिषु च अभिमन्त्रणादयः दम्पतीधर्मा भवन्तीत्युक्तम् । 'सुचक्रम्' इति मन्त्रलिङ्गात् रथ एव मन्त्रा इत्येके । वधूप्रतिपादनपरत्वात् मन्त्रस्य रथलिङ्गत्वमर्थवाद इत्यन्ये ।

अनाकुला.

( २ ) रथमारोहतीम् आरोहन्तीं वधूम् । नुमभावश्छान्दसः । 'सुकिंशुकम्' इत्यादिभिश्चतसृभिरनुमन्त्रयते । रथमेवाऽऽरोहन्तीम् , नाश्वादिम् , 'सुचक्रम्' इति लिङ्गविरोधात् । 'उदुत्तरम्' इति वा तिसृभिरश्वादिकमारोहन्तीमभिमन्त्रयते । ताद.

वर्त्मन्योः सूत्रास्तरणं तदुपरियानं च

**सूत्रे वर्त्मनोर्व्यवस्तृणात्युत्तरया नीलं दक्षिणस्यां लोहितमुत्तरस्याम् ॥**

द्वे सूत्रे नीललोहिते रथस्य वर्त्मनोरुभयोः । भविष्यन्निर्देशोऽयम् , ययोर्वर्तिष्येते रथचक्रे तयोर्वर्त्मनोः । वर्तिन्यो( ? र्त्मन्यो )रिति युक्तं पठितुम् । तथा च दक्षिणस्यामुत्तरस्यामित्युत्तरत्र स्त्रीलिङ्गनिर्देशोऽवकल्पते । व्यवस्तृणाति । विशब्दस्तिर्यगर्थे, तिर्यगवस्तृणाति । उत्तरया 'नीललोहिते' इत्येतया । तयोः सूत्रयोः यन्नीलं ( तत् ) दक्षिणस्यां वर्त्मन्यां व्यवस्तृणाति । उत्तरस्यामिति सव्यस्य चक्रस्य वर्त्मन्यामित्यर्थः । सूत्रे युगपद्गृहीत्वा सकृदेव मन्त्रमुक्त्वा व्यवस्तृणाति सत्यपि देशभेदे, मन्त्रलिङ्गात् ।

अपर आह– देशभेदात् मन्त्राभ्यावृत्तिरिति । अभियानं तु सान्नाय्यकुम्भीवत् द्रष्टव्यम्– 'अप्रसंसाय यज्ञस्य उखे उपदधाम्यहम्' इति । सूत्रव्यवस्तरणमश्वादिषु नास्ति, रथसंबन्धात् । * अनाकुला.

* ताद. अनाकुलागतम् ।

**ते उत्तराभिरभियाति ॥**

ते सूत्रे अभियाति उपरि याति उत्तराभिस्तिसृभिः ऋग्भिः 'ये वध्वश्चन्द्रम्' इत्येताभिः । तत्र रथेन गच्छन्नुपरि याति । मन्त्रास्त्वश्वादिगमनेऽपि वक्तव्याः , गमनार्थत्वात्तेषाम् । नेत्यन्ये । मन्त्रलिङ्गात् त्रित्वनियमः । त्रयाणामन्ते गमनारम्भः । § अनाकुला.

तीर्थादिव्यतिक्रमे जपः

**तीर्थस्थाणुचतुष्पथव्यतिक्रमे चोत्तरां जपेत् ॥**

( १ ) अतीत्य गमनमतिक्रमः , अतिक्रम एव व्यतिक्रमः । विशब्दोऽनर्थकः , यथा उपाय एव अभ्युपाय इति । उत्तरामृचं जपेद्वरः 'ता मन्दसाना' इत्येताम् । निमित्तावृत्तौ जपस्याऽऽवृत्तिः । चशब्दः प्रत्येकं जपसंबन्धार्थः । इतरथा त्रयाणामतिक्रमसंनिपाते जपः कार्यः स्यात् , मन्त्रलिङ्गात् । न च मन्त्रे तीर्थादयः स्तूयन्ते । किं तर्हि ? अश्विनौ । तेनैकातिक्रमणे इतरयोः श्रवणं व्यर्थं स्यादिति न चोदनीयम् , तत्पदोद्धारो वा शङ्कनीयः । अनाकुला.

( २ ) तीर्थं पुण्यनद्यादि । स्थाणुः गवां कण्डूयनार्थं निखातः । चतुष्पथः प्रसिद्धः । एतेषां व्यतिक्रमे 'ता मन्दसाना' इत्येतां जपेत् । तीर्थादीनां चान्यतमव्यतिक्रमेऽपि कृत्स्नाया एव जपः , न त्वितरपदरहितायाः , यतो लिङ्गाच्छ्रुतिर्बलीयसी, 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इतिवत् ।

ननु अत्राऽऽचाराच्छ्रुतिरनुमेयेति न तया लिङ्गबाधो युक्तः । मैवम् , लिङ्गस्यात्र श्रुतिविहितशेषिविषयसापेक्षत्वात् । तत्र ह्यनुमेयश्रुतेर्दौर्बल्यं यत्रास्याः प्रत्यक्षश्रुत्यैव विरोधः । अतोऽनुमेयाऽपि श्रुतिः सापेक्षलिङ्गबाधिकैव । वृत्तिभेदस्तु तीर्थादिशब्दानां तत्तद्व्यतिक्रमे मन्त्रप्रयोगभेदादुपपद्यते । अतस्तीर्थव्यतिक्रमेऽपि स्थाणुपथशब्दौ दुर्मतिस्थानसामान्यात्तीर्थमेवाभिवदतः । एवं स्थाणुमितरौ, चतुष्पथमपीतरौ । यथेध्मसंभरणमन्त्रे उपवेषमेक्षणधृष्टिशब्दा अग्निसंस्पर्शिकाष्ठमयत्वसामान्यात् इध्म-

§ ताद. अनाकुलागतम् ।

दारूण्येवाभिवदन्ति, यथा वा जातकर्मणि 'उत्तराभ्यामभिमन्त्रणम्, मूर्धन्यवघ्राणम्, दक्षिणे कर्णे जपः' (आपगृ. १५।१) इत्यभिमन्त्रणावघ्राणजपानां जातसंस्कारक्रियासामान्यादभिजिघ्रामीत्यभिवदनम्। किं चात्राश्विनोः प्राधान्येन स्तूयमानत्वात्तत्सकाशात् तीर्थादिव्यतिक्रमोत्थदोषोपहतेः प्रार्थ्यमानत्वादविकृताया एव जपः। अपि च पदान्तरोद्धारे जगतीत्वभङ्गप्रसङ्गः। न्यायतस्तु जपमन्त्रो नार्थपरः, अतो नात्र तीर्थादयोऽश्विनौ वा तात्पर्येणाभिधीयन्ते। तस्मात् सूपपादः कृत्स्नाया एव जपः। एष एव न्यायो नदीनां धन्वनां च व्यतिक्रमे। $ ताद.

नावोऽनुमन्त्रणम्, वधूं प्रति कैवर्तदर्शननिषेधः, तरणोत्तरजपः

**[१]नावमुत्तरयाऽनुमन्त्रयते ॥**

अथ यदि पथि नावा तार्या नदी वापी वा स्यात् तत्र नावमुत्तरयर्चा 'अयं नो मह्याः पारं स्वस्ति' इत्येतयाऽनुमन्त्रयते, अनुमन्त्रयेतेत्यर्थः। पृष्ठतः स्थित्वा अनुवीक्ष्य मन्त्रोच्चारणम् अनुमन्त्रणम्। कृतेऽनुमन्त्रणे वरो वधूश्च तामारोहतः। $ अनाकुला.

**न च नाव्यांस्तरती वधूः पश्येत् ॥**

ये नावं नयन्ति (ते) नावि भवा नाव्याः कैवर्ताः, तान् तरती तरन्ती, तरणकाल इत्यर्थः। स्त्रीलिङ्गनिर्देशादेव सिद्धे वधूग्रहणं दर्शनप्रतिषेधो वध्वा एव यथा स्यादिति। तेन 'तीर्त्वोत्तरां जपेत्' इति वरस्यैव भवति। चशब्दो वध्वा वरस्य च सहतरणप्रदर्शनार्थः। सहोभौ तरतः, वध्वास्त्वयं चापरो विशेष इति। केचित् नावा तार्या आपो नाव्या इति व्याचक्षते। तेषां पुंलिङ्गनिर्देशोऽनुपपन्नः। ‡ अनाकुला.

**तीर्त्वोत्तरां जपेत् ॥**

तीर्त्वा पारं प्राप्य उत्तरामृचम् 'अस्य पारे' इत्येतां जपेद्वरः। यदि नदी न भवति तदा 'या ओषधयः' इत्येतामपि जपेत्। 'नदीनां धन्वनां च व्यतिक्रमे' इति वक्ष्यति। $ अनाकुला.

श्मशानव्यतिक्रमादौ होमः

**श्मशानाधिव्यतिक्रमे भाण्डे रथे वा रिष्टेऽग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं करोति ॥**

श्मशानभूमेरधि उपरि व्यतिक्रमे भाण्डे भाजनादौ रथे वा रिष्टे नष्टे। रथे इति प्रदर्शनम्, अन्येषु चैवंप्रकारेषु दुर्निमित्तेषु वक्ष्यमाणहोमः कार्यः। तत्राग्नेरुपसमाधानादि तन्त्रं प्रतिपद्यते। अधिशब्दप्रयोगात् श्मशानभूमेरुपरि गमन एवैतद्भवति। तीर्थादीनां तु समीपेनातिक्रमेऽपि भवति। उत्तरा आहुतीर्जुहोति 'यद्दते चिद्' इत्याद्याः सप्त। उत्तरमन्त्रैरेताहुतीर्जुहोतीत्यर्थः। मन्त्रलिङ्गात् सप्तनियमः। हुत्वा जयादितन्त्रशेषं प्रतिपद्यते। सकृत् पात्रप्रयोगः। शम्याः परिध्यर्थे। अग्नेरुपसमाधानादिवचनं तन्त्रप्राप्त्यर्थम्। आज्यभागान्तवचनमन्वारम्भकालोपदेशार्थम्। 'जयादि प्रतिपद्यते' इत्येवान्वारम्भनिवृत्त्यर्थम्। तथा जयादि यथासिद्धं प्रतिपद्यते इति।

* यदिदमग्नेरुसमाधानादि परिषेचनान्तं कर्म तदनन्तरं नैमित्तिकमुक्तं तत् करोति। सकृदेव, न पुनः पुनरित्यर्थः। अनन्तरोक्तानां निमित्तानां देशकालभेदे-

---

$ ताद. अनाकुलावत्।

‡ ताद. अनाकुलागतम्।

(१) आपगृ. ६।१-७.

$ ताद. अनाकुलागतम्।

* ग्रन्थोऽयमशुद्धः। तात्पर्यवशात्तु एवं कल्प्यते— हरदत्तमते 'प्रतिपद्यते' इत्यन्तं पूर्वसूत्रम्, 'तदन्ते करोति' इत्यपरम्। तस्य व्याख्यानम्— यदिदमग्नेरुपसमाधानादि परिषेचनान्तं कर्म नैमित्तिकमुक्तं तत् अन्ते करोति सकृदेव, न पुनःपुनरित्यर्थः। अनन्तरोक्तानां निमित्तानां देशकालभेदेनाऽऽवृत्तावपि सकृदेवान्तेऽयं होमो भवतीत्यर्थः। इति।

नाऽऽवृत्तावपि सकृदेवान्तेऽयं होमो भवतीत्यर्थः ।

¶ अनाकुला.

क्षीरिवृक्षादिव्यतिक्रमे जपः

**क्षीरिणामन्येषां वा लक्ष्मण्यानां वृक्षाणां नदीनां धन्वनां च व्यतिक्रम उत्तरे यथालिङ्गं जपेत् ॥**

( १ ) क्षीरिणां न्यग्रोधादीनामलक्ष्म( ? क्ष )ण्यानाम्, अन्येषामपि लक्षण्यानां लक्षणयुक्तानां प्रसिद्धानां सीमावृक्षाणामित्यर्थः । लक्ष्मण्यानामित्यपि पाठे अयमेवार्थः । नदीनां सोदकानामनुदकानां च, धन्वनां निर्जलानामरण्यानां च व्यतिक्रमे उत्तरे ऋचौ यथालिङ्गं यस्य लिङ्गं यस्यां दृश्यते तद्व्यतिक्रमे तां जपेत् । तत्र वृक्षातिक्रमे 'ये गन्धर्वाः' इति, नद्यतिक्रमे 'या ओषधयः' इति, धन्वातिक्रमे '$ यानि धन्वानि' इति । यथालिङ्गवचनमुभयत्रोभे मा भूदिति । नद्यतिक्रमेऽपि कृत्स्ना भवति, तथा धन्वातिक्रमेऽपि । अनाकुला.

( २ ) क्षीरिणः क्षीरवन्तः प्लक्षन्यग्रोधादयः । लक्ष्म चिह्नम्, तत्र भवाः लक्ष्मण्याः दुर्गा तिन्त्रिणीका सीमाकदम्बा इत्येवमादयः । नद्यः प्रसिद्धाः । धन्वानः ( ? धन्वानि ) दीर्घाण्यरण्यानि, येषु ग्राम्याः पशवो न निवसन्ति । एतेषां व्यतिक्रमे उत्तरे यथालिङ्गं जपेत् । 'ये गन्धर्वाः' इति वृक्षाणां व्यतिक्रमे, 'या ओषधयः' इति नदीनां धन्वनाम् । यथालिङ्गमिति वचनं जातकर्मवन्मा भूदिति । क्षीरिणामित्यादि बहुत्वमविवक्षितम्, निमित्तगतत्वात्, हविरुभयत्ववत् । ताद.

वधूं प्रति गृहसंदर्शनम्

**गृहानुत्तरया संकाशयति ॥**

( १ ) अथ स्वं गृहं प्राप्य रथादवरोप्य यद्धनं तस्या वहतुत्वेनाऽऽगतं तच्च गृहान् प्रपाद्य ततस्तया तान् गृहान् संकाशयति सम्यगीक्षयति उत्तरयर्चा 'संकाशयामि' इत्येतया । मन्त्रश्चास्मिन्नर्थे यथाकथंचिद्योजनीयः । संकाशयामि दर्शयामि वहतुं वध्वाः पितृकुलादानीतं धनं ब्रह्मणा मैत्रेण अघोरेण चक्षुषा, न केवलमघोरेण, किं तर्हि ? मैत्रेण । गृहैर्मदीयैः सार्धम्, गृहं च मदीयमित्यर्थः । अस्यां पर्याणद्धं विश्वरूपाख्यं यदाभरणं तत् पतिभ्यः, एकस्मिन् बहुवचनम्, पत्ये मह्यं स्योनं सुखं सविता करोत्विति । अनाकुला.

( २ ) वरः स्वगृहान् ज्ञातिधनसंयुक्तान् वधूम् 'संकाशयामि' इति ऋचा संकाशयति दर्शयति । ननु—यद्यपि समित्युपसर्गः 'समवदाय दोहाभ्याम्' ( आपश्रौ. २।२०।३ ) इत्यादौ सहार्थे दृष्टः, तथाऽपि गृहाणां ज्ञातिधनसहितत्वमेवात्राभिप्रेतमिति कुतो निश्चीयते ? उच्यते— 'संकाशयामि वहतुम्' इतिमन्त्रलिङ्गानुसारात् । मन्त्रार्थश्च भाष्योक्तः । ताद.

वाहविमोचनं समन्त्रकम्

**वाहावुत्तराभ्यां विमुञ्चति दक्षिणमग्रे ॥**

( १ ) उत्तराभ्याम् 'आवामगन्' 'अयं नो देवः सविता' इत्येताभ्याम् । योगवदेकैकेन मन्त्रेण विमोकः । दक्षिणमग्र इति । अर्थात् सव्यं पश्चात् । अनाकुला.

( २ ) 'आवामगन्' इति द्वाभ्यामेकैकं वाहं विमुञ्चति । ताद.

## हिरण्यकेशिगृह्यसूत्रम्

शकटादिभिः प्रयाणविधानम्

**[1]तां ततः प्रवाहयन्ति प्र वा हारयन्ति ॥**

पितुर्गृहे यत् कर्तव्यं तत् परिसमाप्य इदानीं पत्युर्गृहे कर्तव्यमाचष्टे । तां भार्यां ततः पितुर्गृहात् प्रवाहयन्ति शकटेन रथेन वा नयन्ति ज्ञातयः प्र वा हारयन्ति पुरुषाश्वहस्तिभिर्नयन्ति वेत्यर्थः । मातृद.

विवाहाग्नेरनुहरणम्

**समोप्यैतमग्निमनुहरन्ति ॥**

समोप्य तत एतं विवाहाग्निमनुहरन्ति । जायापत्योः पृष्ठतो हरन्तीत्यर्थः । मातृद.

¶ ताद. सकृत्करणवर्जमनाकुलागतम् ।

$ 'यानि धन्वानि' इति धन्वलिङ्गवतीम् 'या ओषधयः' इत्येतामृचं जपेदित्यर्थः ।

( १ ) हिगृ. १९।७।१, २.

## मानवगृह्यसूत्रं वाराहगृह्यसूत्रं च

रथादेर्योजनं संस्कारश्च

**[1]पुण्याहे युङ्क्ते ॥**

इदानीं भर्तृगृहं पुण्याहे गच्छेत्, तदाह— पुण्याहे शुभे नक्षत्रग्रहसंयुक्ते दिनेऽनुकूले च गमनार्थं रथादिकवाहनं कल्पयेत्। अष्टाभा.

**[2]'युञ्जन्ति ब्रध्नम्' इति द्वाभ्यां युज्यमानमनुमन्त्रयते दक्षिणमथोत्तरम् ॥**

'युञ्जन्ति' आभ्यां रथादावश्वादिकं युज्यमानमनुमन्त्रयते। युज्यमान आत्मनेपदं यदाऽन्यो योजयति युज्यमानवचनात्। अध्वर्युर्वाऽनुमानादुत्तरमेताभ्यामेव मन्त्राभ्यां दक्षिणस्यां धुरि युज्यमानश्वा( ? नमश्वा )दिकं तथोत्तरस्यामपि। अष्टाभा.

**अहतेन वाससा दर्भैर्वा रथं संमार्ष्टि ॥**

अहतेन संमार्ष्टि द्विः संशोधयतीत्यर्थः। रथग्रहणमुपलक्षणार्थम्। अष्टाभा.

**[3]'अङ्कू न्यङ्कावभितो रथं ये ध्वान्ता वाता अग्निमभि ये संचरन्ति। दूरे हेतिः पतत्री वाजिनीवांस्ते नोऽग्नयः पप्रयः पालयन्तु ॥' इति चक्रे अभिमन्त्रयते ॥**

'अङ्कू न्यङ्कावभितो रथम्' अनेन मन्त्रेण चक्रे अभिमन्त्रयते। अष्टाभा.

**[4]'वनस्पते वि( ? वी )ड्वङ्गः' इत्यधिष्ठानम् ॥**

'वनस्पते' इत्यनेन मन्त्रेणाधिष्ठानं रथस्योपरि स्थानमासनमभिमन्त्रयते इति। अष्टाभा.

(१) मागृ. १।१३।१ ; वागृ. १७.

(२) मागृ. १।१३।२–३ ; वागृ. १७.

(३) मागृ. १।१३।४ ; वागृ. १७. अङ्कू ( अङ्कौ ) वाता अग्नि ( वाताग्नि ) अभिमन्त्रयते ( मन्त्रयते ).

(४) मागृ. १।१३।५ ; वागृ. १७.

रथादावारोपणं प्राक्प्रयाय प्रदक्षिणमावर्तनं च

**[1]'सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम्। आरोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतं कृणुष्व ॥' इत्यारोहयति ॥**

'सुकिम्' अनेन मन्त्रेण पत्नीमारोहयत इत्यध्वर्युः, प्रयोजकत्वात्। केचित् यजमानकर्तृकमिच्छन्ति। अष्टाभा.

**[2]'अनु माऽऽयन्तु देवता अनु ब्रह्म सुवीर्यम्। अनु क्षत्रं तु यद्बलमनु मामैतु यद्यशः ॥' इति प्राङभिप्रयाय प्रदक्षिणमावर्तयति ॥**

'अनुमाय'. अनेन प्राक् प्रथमं गच्छेदित्यर्थः। प्रतिमा अध्वर्युमिति शेषः। यजमानकर्तृकमेतत् 'अनु मायन्तु देवताः' इत्याशीः कोशात्। एवं च अर्थाद्यजमान आरुह्य प्राङभिप्रयाति प्रदक्षिणमावर्तयति। प्रदक्षिणावर्तने प्रयोजकत्वं यजमानस्य, आवर्तयतीति प्रयोगात्। अष्टाभा.

**[3]प्रति माऽऽयन्तु देवताः प्रति ब्रह्म सुवीर्यम्। प्रति क्षत्रं तु यद्बलं प्रति मामैतु यद्यशः ॥' इति यथास्तं यन्तमनुमन्त्रयते ॥**

'प्रति माऽऽयन्तु देवताः' इति रथं यथार्थं प्रदक्षिणमावर्तयतीत्यर्थः। अयमपि यजमानकर्तृको मन्त्रः। अष्टाभा.

श्मशानाद्यतिक्रमणेषु जपाः

**[4]अमङ्गल्यं चेदतिक्रामति 'अनु माऽऽयन्तु' इति जपति ॥**

अमङ्गल्यग्रहणात् श्मशानचयनोत्करभूम्यादि नातिक्रामति। 'अनु माऽऽयन्तु देवताः' इत्यतिक्रान्तो

(१) मागृ. १।१३।६ ; वागृ. १७ वहतं ( वहतुं ).

(२) मागृ. १।१३।७ यद्यशः ( मद्यशः ); वागृ. १७ प्राङभिप्रयाय ( प्राक् अभिप्रायाय ).

(३) मागृ. १।१३।८ ; वागृ. १७.

(४) मागृ. १।१३।९ ; वागृ. १७ चेदति ( चेत्पति ) ( 'अनु माऽऽयन्तु' इति जपति० ).

जपेत् । यजमानकर्तृकमिदम् । उत्तरत्र मन्त्रा यजमानस्यैव, उद्वहनसंबन्धात् । अष्टाभा.

[१]**'नमो रुद्राय ग्रामसदे' इति ग्रामे, 'इमा रुद्राय' इति च ॥**

**'नमो रुद्रायैकवृक्षसदे' इत्येकवृक्षे । 'ये वृक्षेषु शष्पिञ्जराः' इति च ॥**

**'नमो रुद्राय श्मशानसदे' इति श्मशाने । 'ये भूतानामधिपतयः' इति च ॥**

[२]**'नमो रुद्राय चतुष्पथसदे' इति चतुष्पथे । 'ये पथां पथि रक्षयः' इति च ॥**

[३]**'नमो रुद्राय तीर्थसदे' इति तीर्थे । 'ये तीर्थानि प्रचरन्ति' इति च ॥.**

'नमो रुद्राय' ग्रामेऽभिक्रमणे जपेदित्यर्थः । 'इमा रुद्राय' इति च । 'नमो रुद्रायैकवृक्षसदे' एतत्प्रभृत्येकवृक्षे श्मशाने चतुष्पथे तीर्थे । 'ये वृक्षेषु शष्पिञ्जराः' इति । अष्टाभा.

नद्यादितरणप्रसङ्गे जलाञ्जलिनिनयनं परिमार्जनमाचमनं जपश्च

[४]**यत्रापस्तरितव्या आसीदति 'समुद्राय वैणवे सिन्धूनां पतये नमः । नमो नदीनां सर्वासां पतये । विश्वाहा जुषतां विश्वकर्मणामिदं हविः स्वः स्वाहा' इत्यप्सूदकाञ्जलीन्निनयति । 'अमृतं वा आस्ये जुहोम्यायुः प्राणेऽप्यमृतं ब्रह्मणा सह मृत्युं तरति । प्रासहादिति रिष्टिरिति मुक्तिरिति मुक्षीयमाणः सर्वं भयं नुदस्व स्वाहा' इति त्रिः परिमृज्याऽऽचामति ॥**

यत्र नद्यादावाप उत्तरणीया भवन्ति तत्र 'समुद्राय' इत्यप्सूदकाञ्जलिं जुहुयादित्यर्थः । 'अमृतम्' इत्यनेन त्रिः परिमार्जनम्, परिमृज्य वास इति त्रिराचमनमन्त्रः । तूष्णीं परिमार्जनमङ्गानां सामर्थ्यादास्ये जुहोमीति लिङ्गाद्व्यवहितोऽप्यनेन संबन्धः । अष्टाभा.

[१]**यदि नावा तरेत् 'सुत्रामाणम्' इति जपेत् ॥**

यदि नावा तरेत् 'सुत्रामाणम्' इत्येतामृचं जपेत् नावारूढः । अष्टाभा.

अक्षभङ्गादौ होमो जपश्च

[२]**यदि रथाक्षः शम्याणी वा रिष्येतान्यद्वा रथाङ्गं तत्रैवाग्निमुपसमाधाय जयप्रभृतिभिर्हुत्वा 'सुमङ्गलीरियं वधूः' इति जपेत् वध्वा सह 'वधूं समेत पश्यत' ॥**

यदि रथः शम्या वा दुष्येत भज्येत, अणी चक्रधारणायाक्षे तन्मनिकिलिका निहन्यते सा यदि दुष्येत, भज्येतेत्यर्थः । अन्यद्वा रथस्याङ्गं युगादि, दुष्येतेति वर्तते । तत्रैव तस्मिन्नेव देशे अग्निम् औद्वाहिकम् उपसमाधाय प्रज्वाल्य । उपसमाधायेति वचनात् स्थण्डिलादि न भवति । अधोक्ष(?अवोक्षण)मात्रं कृत्वाऽग्निं प्रस्थाप्य जयप्रभृतिभिर्हुत्वा प्राक्स्विष्टकृतात् 'सुमङ्गलीः' इति वध्वा सह जपेत् । केचिदग्निमन्थनमिच्छन्ति औद्वाहिकस्याग्नेः समारोप्याऽऽनयन(म्) वदन्तः । तदसत् । अग्निमुपसमाधायेति वचनाद्रथसंबन्धः । स्वप्रत्यक्षमेवाग्निरथेन वा । अग्ने न सा वा उह्यते । अहतेन वाससा रथमित्युपलक्षणमनोवापेक्षं संमार्ष्टि । तेनाक्षभङ्ग एतत्कर्म भवति । न च रथादिनोह्यमानं सीमान्तरगमनेऽपि दुष्यति अग्निस्तथा च सदाचार एवमेव । अन्यस्तु तथा च स्मृत्यन्तरे प्रत्यक्षमग्नित्रयमुक्तम् । 'विवाहाग्निमग्रतोऽजस्रं नयन्ति' इति । ततश्च पुरस्तादेवाग्नित्रयं दृष्टादृष्टार्थं प्रत्यक्षनयनं दृष्टं तावत्प्रजय(? योज)नं प्रत्यक्षनयने रथाक्षभङ्गादौ पच्यमाने (?) पथि विघ्नो भवेत् । तथा च प्रत्यक्षपुरस्तान्नीयमान(?) अदृष्टपिशाचादेः

(१) मागृ. १।१३।१०–१२ ; वागृ. १७.

(२) मागृ. १।१३।१३ ; वागृ. १७ रक्षयः (रक्ष).

(३) मागृ. १।१३।१४ ; वागृ. १७.

(४) मागृ. १।१३।१५ ; वागृ. १७ विश्वाहा जुषतां (विश्वाहाजुषतां) काञ्जलीन् (काञ्जलिं) (मुक्तिरिति...परिमृज्याऽऽचामति०).

(१) मागृ. १।१३।१६ ; वागृ. १७ (यदि नावा तरेत् 'सुत्रामाणम्' इति०).

(२) मागृ. १।१३।१७ ; वागृ. १७ वध्वा सह (वध्वा).

सकाशात् । पथि रथमतीत्य दृष्टं प्रयोजनम् । वध्वा वधूं समेत्य जपः समेत्य सह जपेदित्यर्थः, वधूसंबन्धत्वात् । यजमानकर्तृको जपः । अष्टाभा.

समन्त्रकमवतरणम्

[१]'**व्युत्क्राम पन्थां जरितां जवेन शिवेन वैश्वानर इडयास्याग्रतः । आचार्यो येन येन पथा प्रयाति तेन तेन सह ॥' इत्युभावेवोत्क्रामतः ॥**

'व्युत्क्राम पन्थाम्' इत्यनेनोभावेव व्युत्क्रामतः रथाभ्यां समवतीर्य जपतः उभावेवग्रहणं(? णात्) पृथग् रथाभ्यां गच्छतः सङ्गपरिहारार्थम् । अष्टाभा.

ग्रामप्रवेशविधिः

[२]**गोभिः सहास्तमिते ग्रामं प्रविशन्ति ब्राह्मणवचनाद्वा ॥**

ग्रामप्रवेशः अस्तमिते सूर्ये गोभिः सह, गोधूलिनेत्यर्थः । ब्राह्मणवचनादनस्तमितेऽपि गोधूलिकादन्यस्मिन्नपीत्यर्थः । केचिदेतस्मादेव वाक्यादत्रापि(? दन्यत्रापि) ब्राह्मणवचनात् क्रियामिच्छन्ति । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

उह्यमानवध्वनुमन्त्रणम्

[३]**अवसिच्य यथार्थं वहन्ति । उह्यमानामनुमन्त्रयते— 'ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनामनु । पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ॥' इति ॥**

## काठकगृह्यसूत्रम्

रथादियोजनम्, चक्रानुमन्त्रणम्, युगच्छिद्रेषु शाखारोपणम्, वध्वा रथारोपणम्, रथप्रवाहणम्

[४]**पुण्याहे युङ्क्ते । 'योगेयोगे' इति युनक्ति ॥**

(१) यदा वधूः पुण्ये दिवसे भर्तृगृहं गच्छति तदा रथं शिबिकां वा यथासंभवं युङ्क्ते । तत्र 'योगेयोगे' इति † व्याख्यातमन्त्रावृत्त्या अश्वादिकं युनक्ति । ¶ देव.

(२) 'योगेयोगे' इति रथयोजनादि । स्वगृहोपस्थानं पत्न्यागमने विधानं सुमृष्टार्थत्वान्नोक्तम् । सुनक्षत्रे वध्वा सह रथमारुह्य श्वशुरगृहाज्जन्यवृतस्तूर्यदुन्दुभ्यादिवाद्यघोषेण सह स्वगृहं यथोक्तविधिना गच्छति । ब्राह्म.

**'अङ्कुन्यङ्कौ अभितो रथं ये ध्वान्ता वाताग्रमभि ये संपतन्ति । दूरेहेतिः पतत्रिणीवाजिनीवांस्ते नोऽग्नयः पप्रयः पारयन्तु ॥' इति चक्रे अनुमन्त्रयते ॥**

'अङ्कुन्यङ्कौ' इत्यादिकया जगत्या आग्निमारुते रथचक्रे अनुमन्त्रयते ऋत्विक् पार्श्वे वा । सकृच्च मन्त्रः प्रयोक्तव्यः, द्विवचनलिङ्गात् । अञ्चतीत्यङ्कुः, न्यञ्चतीति न्यङ्कः, अङ्कुश्च न्यङ्कश्चाङ्कुन्यङ्कौ अञ्चकन्यञ्चकौ गन्तृविशेषौ याभ्यां चक्रे गच्छतः । अङ्कुन्यङ्कौ रथस्याभितः स्थितौ नः अस्माकं तेऽग्नयः पारयन्तु पथस्तारयन्तु पालयन्तु वा पथि । के तेऽग्नयः ? ये ध्वान्तास्तमोरूपाः काष्ठादीन्धनजाः । ये च वाताग्रमभिसंपतन्ति, वैद्युतादिरूपा इत्यर्थः । यश्च दूरेहेतिः दूरगतार्चिः आदित्यादिरूपः । यश्च पतत्रिणीवाजिनीवान् पतत्रिणीवान् वाजिनीवांश्चेत्यर्थः । पतत्रिणीवान् वायुगरुडादिमूर्तिषु व्यवस्थितः, वाजिनीवान् व्रीह्यादिमूर्त्याश्रितः । कीदृशा अग्नयः ? पप्रयः, 'पॄ पालनपूरणयोः', प्रीणन्तीति पप्रयः पालयितारः पूरयितारो वा कामानाम् । 'प्रा पूरणे' इत्यस्य वा पप्रिशब्दः । § देव.

**'खे रथस्य खेऽनसः खे युगस्य च तर्द्मसु । खे अक्षस्य खे अवदधामि ॥' इति युगतर्द्मसु शमीशाखामवदधाति ॥**

---

(१) मागृ. १।१३।१८ ; वागृ. १७ पन्थां (पर्थां) इडयास्या (इत्यस्या) इत्युभावेवोत्क्रा (पत्य भावे वा व्युत्क्रा).

(२) मागृ. १।१३।१९ ; वागृ. १७.

(३) भागृ. १।१८.

(४) कागृ. २६।१–१२.

† व्याख्यानं पाणिग्रहणप्रकरणे (संका. पृ. २०८६) द्रष्टव्यम् ।

¶ आवि. देवगतम्

§ आवि. देवगतम् ।

( १ ) 'खे रथस्य' इत्यादिना युगस्य तर्मसु छिद्रेषु शमीशाखामवदधाति । रथस्य खे आकाशे छिद्रे अवदधामि शाखाम्, तथा खेऽनसः गन्त्याः, एवं युगस्य तर्मसु छिद्रेषु, तथा खे अक्षस्य रथाधारकाष्ठविशेषस्य, अन्यत्रापि च खे छिद्रे शान्त्यर्थं शमीशाखामवदधामि । देव.

( २ ) युग्यादौ यथासंभवम् । आवि.

**'सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आरोह सूर्ये अमृतस्य योनिं स्योनं पत्ये वहतुं कृणुष्व' इत्यारोपयते ॥**

'सुकिंशुकम्' इत्यादिना वधूं रथमारोपयति । हे वधु, रथमारोह । कीदृशम् ? सुकिंशुकं शोभनपलाशकुसुमैस्तदुपलक्षितैरन्यपुष्पैश्च परिजनाहितैः शोभनम्, शल्मलिं 'शल हुल पत्लृ गतौ', गमनशीलम्, अथवा किंशुकशल्मलिदारुनिर्मितत्वादेवमुच्यते, विश्वरूपं नानाकारम्, हिरण्यवर्णं उज्ज्वलरूपम्, सुवृतं फलकुसुमादिभिः परिवृतं सुवर्तुलं वा सुवर्तनं सुखचेष्टं वा, तथा शोभनचक्रम्, अमृतस्य योनिम् अमरणधर्मस्य कारणम् अप्रमापणकारिणम् । पत्ये भर्त्रे व्यत्ययेन भर्तुः स्योनं सुखं कृणुष्व कुरुष्व एनं वहतुं वहतीति वहतुः, तम् । देव.

**'मा विदन् परिपन्थिनः' 'सुमङ्गलीः' इति च प्रवाहयते ॥**

'मा विदन् परिपन्थिनः' इति 'सुमङ्गलीः' इति चैताभ्यां * व्याख्यातार्थाभ्यां प्रवाहयते रथम् । देव.

**'संकाशया विवहतं ब्रह्मणा गृहैरघोरेण चक्षुषा मैत्रेण । पर्याणद्धं विश्वरूपं यदस्याः स्योनं पतिभ्यः सविता कृणोतु तत् ॥' इति वधूसंगमे ॥**

( १ ) एतां जगतीं सावित्रीं वधूसंगमे जपति 'संकाशया' इत्यादिकाम् । अश्वावुच्येते । सम्यगनया प्रकाशमानया दृष्ट्या इदमनो विवहतं प्रापयतम् । ब्रह्मणा अन्नेन सह, गृहैश्च पत्न्या, गृहशब्देन गृहस्थपत्न्युच्यते, अघोरेण शिवेन, चक्षुषा मैत्रेण मित्रसंबन्धिना, न तु शात्रवेण । कीदृशं वहतुम् ? पर्याणद्धं समन्ताच्छन्नम् । तथा नानारूपं यदनः अस्या वध्वाः पतिभ्यः स्योनं सुखम् । पतिभ्य इति वचनव्यत्ययः, पत्ये । तच्च सविता च सुखादिकं सर्वं करोतु । रथयोरन्योन्यसंघाते विघातशङ्कायामेष जपः । देव.

( २ ) 'संकाशया' इति जगतीमन्यस्या नवोढायाः संगमे जपति । आवि.

चतुष्पथ-श्मशान-महावन-महावृक्ष-क्रूरप्राणि-सर्पाणां दर्शनेषु जपाः

**'ये पथीनाम्' इति चतुष्पथेषु जपति 'इमे चत्वारः' इति च ॥**

( १ ) व्याख्यातौ मन्त्रौ । 'ये पथीनाम्' इत्यनुष्टुप् । '§इमे चत्वारः' इति च त्रिष्टुप् । सूत्रं स्पष्टार्थम् । [ 'ये पथीनां पथिरक्षय ऐडमृदा यव्युधः । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥' — ये पथीनाम् अध्वन्यानां पथिरक्षय अध्वन्याः सन्तो रक्षका आदित्यरूपा इत्यर्थः । इडा अन्नं तत्समूहः ऐडम्, तन्मृद्नन्ति कोमलीकुर्वन्ति इति ऐडमृदाः । युधि संग्रामे युवन्ति मिश्रीभवन्तीति यव्युधः योद्धार इत्यर्थः । तेषां कुपितानां आरोपितगुणधनुष्काणां हननोद्यतानां सतां धन्वानि धनूंषि अवतन्मसि अवतनुमः अवतारितगुणानि कुर्मः स्तुतिद्वारककोपप्रशान्त्या सहस्रयोजने अतिदूरे स्थिताः सन्तः । (८।७) ] देव.

( २ ) 'ये पथीनाम्' इति चतुष्पथेऽनुष्टुभं जपति । 'इमे चत्वारः' इति च त्रिष्टुभम् । आवि.

**'ये श्मशानेषु' इति श्मशानेषु । 'ये श्मशानेषु पुण्यजनाः शावास्तेषु शेरते । अत्रैव ते रमन्तां मा वधूरन्ववेक्षत ॥' इति ॥**

जपतीत्यनुषङ्गः । श्मशानेषु शवशयनेषु ये पुण्यजना यक्षाः ये च शावाः प्रेताः तेषु श्मशानेषु शेरते तिष्ठन्ति,

---

* पाणिग्रहणाव्यवहितपूर्वकृत्यप्रकरणे (संका. पृ. २०४२) पाणिग्रहणप्रकरणे च (संका. पृ. २१०३) व्याख्यानं द्रष्टव्यम् ।

§ अस्य मन्त्रस्य व्याख्यानं नोपलभ्यते ।

तत्रैव ते रमन्तां रतिं कुर्वन्तु, मा वधूरन्ववेक्षत मा द्राक्षुर्वधूम् । वधूरिति सुब्व्यत्ययः । देव.

**'ये वनेषु' इति महावनं महावृक्षं दृष्ट्वा ॥**

(१) स्पष्टम् । मन्त्रोऽपि विवृतः । [ 'ये वनेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥'— ये विपिनेषु तरुगुल्मलतावितान-तृणादिगहनेषु स्थिताः शष्पवत् कोमलतृणवत् पिञ्जराः कपिलाः नीलग्रीवाश्च, तथा विलोहिता नितान्त-रक्ताः । (८।७) ¶ ] देव.

(२) 'ये वनेषु' इति महावनं वृक्षगुल्मलतादि-समवायं दृष्ट्वा महावृक्षं वा विटपिनं देवताधिष्ठितं चिरंतनं दृष्ट्वा जपति । आवि.

**'इह रडिः' इति क्रूरं दृष्ट्वा ॥**

'इह रडिः' इत्यादिकं क्रूरं सिंहादिकं दृष्ट्वा जपती-त्यनुषङ्गः । 'इह रडिरिह रतिरिह धृतिरिह विधृतिरिह स्वधृतिरिह रन्तिरिह रमतामग्ने वेट् स्वाहा वट् ॥'— 'लड विलासे' । लडनं रडिः क्रीडा इह अस्मासु रम-ताम् । तथा रतिः प्रीतिः । सर्वत्र रमतामित्यनुषजति । इह धृतिः संतोषः । इह विधृतिः विधरणं स्थैर्यम् । स्वधृतिः स्वस्य धनस्य धारणम् । इह रन्तिः, रमणं रन्तिः । रड्यादिकं हिंस्रदर्शनादस्मत्सकाशान्मा दूरीभू-दित्यर्थः । अग्ने वेट् स्वाहा वट् संप्रदानार्थीया निपाताः । * देव.

**'नमो अस्तु सर्पेभ्यः' इति सर्पान् ॥**

दृष्ट्वा जपतीत्यनुषङ्गः । 'नमो अस्तु सर्पेभ्यो ये के पृथिव्यामधि । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ येषु वा यातुधाना ये वा वन-स्पतींरनु । ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ ये वाऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु । येऽप्सु सदांसि चक्रिरे तेभ्यः सर्पेभ्यो नमः ॥' गतार्थम् । देव.

¶ 'तेषां सहस्रयोजने' इत्यस्य व्याख्यानं 'ये पथीनाम्' इति सूत्रे द्रष्टव्यम् ।

* आवि. देवगतम् ।



जलाशयप्राप्तौ जपः समन्त्रकं तरणं च

**'ये तीर्थानि' इति तीर्थे 'ता मन्दसाना' इति च । 'ता मन्दसाना मनुषो दुरोण आ धत्तं रयिं सहवीरं वचस्यवे । कृतं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतम् ॥ अयं नो मह्याः पारं स्वस्ति नेषद्वनस्पतिः । सीरा नः सुतरा भव दीर्घायुत्वाय वर्चसे ॥ अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रचरता सखायः । अत्रा जहाम ये आसन्नशेवाः शिवान्वयमुत्तरे-माभिवाजान् ॥' इति ॥**

(१) तीर्थे जपति प्रतीकमुद्रितान् मन्त्रानित्यर्थः । 'ये तीर्थानि' इति व्याख्याता । तीर्थमत्र निपानं नद्य-वतारस्थानम् । यथोक्तम्— 'तीर्थाभिधानमिच्छन्ति त्रितयं कृतबुद्धयः । शास्त्रं चैव निपानं च वारि चाप्यृषिसेवि-तम् ॥' इति ।

'ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥'—ये तीर्थानि प्रच-रन्ति तपोतिशयसिद्धये सृकावन्तः सातिशयबुद्धियुक्ताः, निषङ्गाः खड्गाः तद्युक्ताः । *

ता मन्देति आश्विनी जगती । हे अश्विनौ मन्दमानौ स्तूयमानौ हर्षयुक्तौ, 'मद स्तुतिमोदमद' इत्यादिकादर्थ-निर्देशात्, मनुषो मनुष्यस्य दुरोणे गृहे रयिं धनम् अध-त्तम्, छान्दसो ह्रस्वः, आधत्तम् । कीदृशं धनम् ? सहवीरं पुत्रसहितम्, सहस्रवीर्यं वा, पुत्रपौत्रादिमाला-युक्तमित्यर्थः । किंच, तीर्थं सुप्रपाणं कृतं युवां कुरुतं स्ववगाहम् । तथा स्थाणुम् । तिष्ठन्त्यस्मिन् संपद इति स्थाणुः । कस्मै ? वचस्यवे । वच इच्छति आत्मनः, 'सुप आत्मनः क्यच्' (पासू. ३।१।८) 'क्याच्छ-न्दसि' (पासू. ३।२।१७०) इति उत्वम्, तस्मै वच-स्यवे । हे शुभस्पती शुभस्य पालयितारौ, दुर्मतिं दुष्टां मतिमस्य मनुष्यस्य अपहतं विनाशयतम् । कीदृशीं

* 'तेषां सहस्रयोजने' इत्यस्य व्याख्यानं 'ये पथीनाम्' इति सूत्रे द्रष्टव्यम् ।

दुर्मतिम् ? पथेष्ठां पथि तिष्ठति पथेष्ठा ताम्, सुरूढामित्यर्थः ।

अयं न इति तीर्थविशेषनदीतरणेऽयं मन्त्रः । गायत्री । अयं वनस्पतिः वानस्पत्यो रथः नः अस्मान् मह्याः महत्याः नद्याः पारं नैषत् नयतु । स्वस्ति अविनाशं कृत्वा । सीरा च नदी नः अस्माकं सुतरा भव भवतु । दीर्घायुत्वाय दीर्घायुषे वर्चसे च अस्माकं सीरा भवतु । दीर्घायुत्वायेत्यत्र 'त्वपत्योः' इति सलोपश्छान्दसः ।

अश्मन्वती रीयत इत्यनेन प्रकृता नदी तीर्यते । हे सखायः जन्याः, उत्तिष्ठत, संरभध्वं सप्रयत्ना भवत, प्रतरामो नदीम् । प्रयत्नविशेषेण प्रेषणे हेतुमाह– यतः अश्मन्वती पाषाणसंघट्टवती नदी रीयते तीर्यते । शेव इति सुखनाम । ये च अशेवाः असुखाः असन् सन्ति, तानत्रैव स्थाने आजहाम त्यजामः, त्यक्त्वा तान् गच्छाम इत्यर्थः । वयं च शिवान् देशविशेषान् अभिवाजान् वाजाभिमुखान् अन्नविशेषयुक्तान् तरेम तीर्त्वा प्राप्नुयामेत्याशंसा । देव.

(२) 'ये तीर्थानि' इति नद्यास्तीर्थे तारे जपति । 'ता मन्दसाना' इति चापरशाखाम्नातत्वात्पठति तिस्रः । आवि.

[१] '**शं नः' इति नदीं तरति ॥**

(१) गतार्थं समन्त्रकम् । [ 'शं न आपो धन्वन्याः शं नः सन्त्वनूप्याः । शं नः समुद्रिया आपः शमु नः सन्तु कूप्याः ॥'– अब्दैवत्या । अनुष्टुप् । सोमपुत्रस्याध्वरस्याऽऽर्षम् । धन्वनि मरौ जङ्गले भवाः धन्वन्याः । एवमनूपे जलस्राविणि देशे भवाः अनूप्याः । तथा समुद्रे भवाः समुद्रियाः । कूपे भवाः कूप्याः । ताः सर्वाः नः अस्माकं सुखाय भवन्त्वित्यर्थः । 'शमु नः' इत्यत्रोकारो निपातः पादपूरणार्थः । (१।३३)] देव.

(२) 'शं न आपः' इति प्रकृते नदीं तरति । आवि.

रथाङ्गविशरणे जपः

**'य ऋते' इति रथाङ्गेऽवशीर्णे । 'य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः । संधाता संधिं मघवा पुरूवसुर्निष्कर्ताऽविहृरुतं पुनः ॥' इति ॥**

अविशेषाभिधानाद्यस्मिन् कस्मिंश्चिद्रथाङ्गे विशीर्णे श्लथे रथे 'य ऋते' इत्यादिकामैन्द्रीं बृहतीं जपतीत्यर्थः । हे रथ, यस्त्वं जत्रुभ्यः ग्रन्थिभ्यः बन्धनेभ्यः ऋते विना अभिश्रिषः विशीर्णः विनाशं प्राप्तः पुरा पूर्वमेवाऽऽतृदः आतर्दनात्, अहिंसित एव नष्ट इत्यर्थः । तं त्वा मघवा पुनः निष्कर्ता संधिम्, संधीयते इति संधिः, तं निःशेषेण पुनः करिष्यतीत्यर्थः । स हि संधाता संधानशीलः । कीदृशं संधीयमानं त्वां करिष्यति ? अविहृरुतम् अकुटिलगतियोग्यम् । कीदृशो मघवा ? पुरूवसुः बहुधनः । चिदिति पादपूरणो निपातः । * देव.

स्वगृहदर्शने जपः

**अपराह्णेऽधिवृक्षसूर्ये गृहानुपयाय 'ऊर्जं बिभ्रती' इति गृहान् प्रतिदृश्य जपति । 'ऊर्जं बिभ्रती वसुवनिः सुमेधा गृहानागां मोदमाना सुवर्चाः । अघोरेण चक्षुषाऽहं मैत्रेण गृहाणां पश्यन्ती वय उत्तिरामि ॥ गृहाणामायुः प्र वयं तिराम गृहा अस्माकं प्रतिरन्त्वायुः ॥ गृहानहं सुमनसः प्रपद्ये वीरघ्नी वीरपतिः सुशेवा । इरां वहतो घृतमुक्षमाणांस्तेष्वहं सुमनाः संविशामि ॥ येषां मध्येऽधिप्रवसन्नेति सौमनसं बहु । गृहानुपह्वयामहे ते नो जानन्तु जानतः ॥ सूनृतावन्तः स्वधावन्त इरावन्तो ह सामदाः । अक्षुध्या अतृष्या गृहा माऽस्मद्बिभेतन ॥ उपहूता इह गाव उपहूता अजावयः । अथो अन्नस्य कीलाल उपहूतो गृहेषु मे ॥ उपहूता भूरिधनाः सखायः साधुसंमदाः । अरिष्टाः सर्वपुरुषा गृहा नः सन्तु सर्वदा ॥' इति ॥**

---

(१) काठ्. २७।१–३.

* आवि. देवगतम् ।

अपराह्णसमयेऽधिवृक्षसूर्ये यदा वृक्षाणामुपर्येव रविरश्मयो दृश्यन्ते, नाधस्तात्, तदा गृहानुपयाय, गृहग्रहणेन स्वग्राम उपलक्ष्यते, स्वग्रामसमीपं गत्वा, तत्र स्वगृहान् प्रतिदृश्य आभिमुख्येन दृष्ट्वा 'ऊर्जं बिभ्रती' इत्यादि जपति। वध्वा एष जपः, मन्त्रलिङ्गात्।

अहं गृहानागाम् आगता, ऊर्जं बिभ्रती अन्नं धारयन्ती पुष्णती च, वसुवनिः, 'वन षण संभक्तौ', वसूनि धनानि विभजमाना, सुमेधाः शोभनया प्रज्ञया युक्ता, मोदमाना हृष्यन्ती, सुवर्चाः शोभनदीप्तिः, गृहाणामिति व्यत्ययेन द्वितीयार्थे षष्ठी, अघोरेण सौम्येन, मैत्रेण हितैषिणा चक्षुषा गृहान् पश्यन्ती, वय इति धननाम, धनमुत्तिरामि ददामि परिजनाय।

वयमेतेषामायुः प्रतिराम उपलेपनादिद्वारेण स्थैर्यं संपादयामः। गृहा अपि गृहाधिष्ठात्र्यो देवता अस्माकमायुः प्रतिरन्तु संपादयन्तु।

अहमेतान् गृहान् प्रपद्ये गच्छामि प्रविशामि। कीदृशान्? सुमनसः सौमनस्यकारिणः। वीरघ्नी, गत्यर्थोऽत्र हन्तिः, पुत्राणां प्रापिका लम्भिका। वीरपतिः विक्रान्तियुक्तभर्तृका। सुशेवा, शेवः अन्नं धनं च, सुधना। कीदृशान् गृहान्? इराम् अन्नं वहतः धारयतः, तथा घृतमुक्षमाणा आसिञ्चन्तः बहुगवादिकत्वात् ये गृहास्तानहं सुमनस्का सती प्रविशामि।

किंच, येषां गृहाणां मध्ये निवसन् बहु सौमनसमेति प्रपद्यते, तान् गृहानुपह्वयामहे आह्वयामः। तेऽस्मान् जानतो ज्ञानयुक्तान् जानन्तु।

गृहाधिष्ठातृदेवताप्रसादाच्च वयं सूनृतावन्तः सत्यवाचः स्याम, तथा स्वधावन्तः पितृयज्ञकारिणः, इरावन्तः अन्नवन्तः, हेत्यनर्थकः, सामदाः स्याम, सान्त्वनलक्षणेन प्रथमेनोपायेन स्वीकारकाः स्यामेत्यर्थः। यथोक्तम्— 'साम दानं च भेदश्च दण्डश्चेति चतुर्विधः। मायेन्द्रजालोपेक्षाश्च सप्तोपायाः प्रकीर्तिताः॥' इति। अस्मभ्यमिति तादर्थ्ये चतुर्थी, तेनास्मदर्थं सत्यवचनयुक्ता यूयं भवतेत्यप्यर्थः संपद्यते। अस्मभ्यं सामदा भवतेति प्रदाने चतुर्थी अपि योज्या। हे गृहाः, अस्माभिरधिष्ठिताः सन्तः अस्मत् मा बिभेतन अस्मत्सकाशाद्भयं मा कार्षुः ¶।

इह च गृहेषु उपहूताः आहूताः गावस्तथा अजा अवयश्च। अथो तथा अन्नस्य संबन्धी कीलालः मृष्टरसः आहूतो मम गृहेषु।

तथा सखायः सहायाः, भूरिधनाः बहुवित्ताः, आहूतास्ते साधु कृत्वा संमदाः सम्यक् हर्षयुक्ताः सर्वदा सन्तु। तथा अरिष्टाः अनुपहिंसिताः नः अस्माकं गृहाः सर्वपूरुषाश्च सर्वदा भवन्तु। * देव.

## आग्निवेश्यगृह्यसूत्रम्

### प्रयाणविधिः

[1]अथ व्रजं प्रपद्यते॥

## पारस्करगृह्यसूत्रम्

### रथाक्षभेदादिनिमित्तेषु प्रायश्चित्तिकर्म

[2]**राज्ञोऽक्षभेदे नद्धविमोक्षे यानविपर्यासेऽन्यस्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने तमेवाग्निमुपसमाधायाऽऽज्यं संस्कृत्य 'इह रतिः' इति जुहोति नानामन्त्राभ्याम्॥**

**अन्यद्यानमुपकल्प्य तत्रोपवेशयेद्राजानं स्त्रियं वा 'प्रति क्षत्रे' इति यज्ञान्तेन 'आ त्वाऽहार्षम्' इति चैतया॥**

**धुर्यौ दक्षिणा॥**

**प्रायश्चित्तिः॥**

**ततो ब्राह्मणभोजनम्॥**

(१) राज्ञो रथाक्षभेदे नद्धस्य वा रथस्य विमोक्षे यानस्य विपर्यासे अन्यस्यां वा कस्यांचिद्वापदि स्त्रियाश्चोद्वहने। उद्वहनं च पितृगृहाद्भर्तृगृहं प्रति प्रथमं नयनम्।

---

¶ 'अक्षुध्या अतृष्याः(त)' इत्यस्य व्याख्यानं न कृतं वा भ्रष्टं वा।

* आवि. देवगतम्।

(१) आग्निगृ. १।६।३.

(२) पागृ. १।१०।१–५; संग. ११२.

अत्र चैतेष्वपि निमित्तेषु नैमित्तिकमिदमुच्यते । तमेवाग्निमुपसमाधायेति । राज्ञः सेनाग्निः स्त्रियाश्चैव विवाहाग्निः । आज्यं संस्कृत्येति ग्रहणमाघारादिभ्योऽपि पूर्वकालत्वज्ञापनार्थम् । 'इह रतिः' इति नानामन्त्राभ्यां जुहोति । नानाग्रहणाच्च द्वे आहुती । तत आघारादि । अन्वयानमित्यादि । परादिना पूर्वान्ताभावाद्यज्ञान्तग्रहणम् । 'आ त्वाऽहार्षम्' इति चैतया ऋचोपवेशयेत् । धुर्यौ दक्षिणा प्रायश्चित्तिः । धुर्यौ अनड्वाहौ दक्षिणा । प्रायश्चित्तिरिति संज्ञाऽस्य । ततो ब्राह्मणभोजनम् । कभा.

(२) विपर्यासे वा अधोभावापत्तौ । 'आ त्वाऽहार्षम्' इति चैतया ऋचा पुरोहितो राजानं वरश्च वधूम् । *जभा.

(३) राज्ञः प्रजापालनाधिकृतस्य यात्रादिप्रस्थितस्य अक्षभेदे रथावयवभङ्गे, नद्धविमोक्षे नद्धस्य रथस्य विमोक्षे संनहनच्छेदे वा, यानविपर्यासे यानस्य विपर्यासे अधोमुखादिभावे वा, अन्यस्यां वा व्यापत्तौ अन्यस्मिन् वा अशुभसूचके निमित्ते, स्त्रियाश्चोद्वहने उद्वाहितायाः पूर्वं पतिगृहनयने, चशब्दात् रथाक्षभेदादिके निमित्ते संजाते नैमित्तिकं प्रायश्चित्तरूपं कर्मोच्यते । 'कर्मोपपाते प्रायश्चित्तं तत्कालम्' इति वचनात् निमित्तसमनन्तरमेव नैमित्तिकं कुर्यात् । पञ्च भूसंस्कारान् कृत्वा उपसमाधाय स्थापयित्वा ब्रह्मोपवेशनादि पर्युक्षणान्तां कुशकण्डिकां विधाय । धुर्यौ धुरि साधू अनड्वाहौ दक्षिणा ब्रह्मणे देया । दक्षिणाशब्दः परिक्रयार्थे द्रव्ये वर्तते, येन ऋत्विजामानतिर्भवति । इदं कर्म प्रायश्चित्तिः दुर्निमित्तसूचितदुरितापहारिणी, अतः सति निमित्ते भवति । ततो ब्राह्मणभोजनम् । ततः कर्मसमाप्त्यनन्तरं ब्राह्मणस्य भोजनं कारयितव्यमिति सूत्रार्थः । पुरोहितो राजानं वरो वधूमुपवेशयेत् । हभा.

(४) अत्र उपवेशयेदिति ण्यन्तत्वादध्येषणं 'याने उपविशस्व' इति । अत्र धुर्यावनड्वाहौ दक्षिणा भवतीति शेषः । दक्षिणान्तरस्य निवृत्तिः, दृष्टार्थत्वात् । प्रायश्चित्तिरिति चास्य कर्मणः संज्ञा । *गभा.

(५) नैमित्तिकैकत्वसूचनार्थश्चकारः । स्वाहाकारान्ताभ्यां संहितापठिताभ्यां मन्त्राभ्यां नाना आहुतयो होतव्याः । ताश्चाऽऽहुतयः षट्, 'वृषोत्सर्गे षट् जुहोति' इति सूत्रात् । 'इदमग्नये' इति सर्वासु त्यागः । ततः आघारादिचतुर्दशाहुतीर्हुत्वा संस्रवं प्राश्य पवित्राभ्यां मार्जनं कृत्वा ब्रह्मणे दक्षिणां दद्यात् । प्रायश्चित्तिरिति कर्मनामधेयम् । ततो ब्राह्मणभोजनमिति । बर्हिर्होमादिब्राह्मणभोजनान्तमित्यर्थः । *विभा.

* शेषं कभावत् ।

* शेषं हभावत् ।

## गोभिलगृह्यसूत्रम्

### वध्वा यानारोहणे जपः

**'यानमारोहन्त्यां 'सुकिंशुकं शल्मलिम्' इत्येतामृचं जपेत् ॥**

(१) प्रकृतत्वात् पाणिग्राहको जपेत् । एतामित्यवाच्यमिति चेन्न, यथाप्राप्तविश्वा( ? ताश्वा )दियानेऽप्येताम् एवंभूतामेव जपेत्, नासमवेतार्थपदस्य लोपमूहनं वा कुर्यादिति । संत. ९०५

(२) 'आरोहन्त्याम्' इति वचनादारोहणकालिकत्वं जपस्य । ऋग्यथा— $ 'सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आरोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥' इति । अस्या अर्थः— हे सूर्ये नवोढे, सुकिंशुकं शोभनपलाशवृक्षकाष्ठनिर्मितम्, तथा शल्मलिं शाल्मलिवृक्षनिर्मितम्, विश्वरूपं नानारूपम्, हिरण्यवर्णं हितरमणीयवर्णं हिरण्यालङ्कारयुक्तं वा, सुवृतं सुष्ठुवरणं सुखास्तीर्णम्, सुचक्रं शोभनचक्रोपेतम्, अमृतस्य निरतिशयसुखरूपस्य लोकं दर्शकं प्रापकं वा, एवंभूतं रथं त्वम् आरोह अधिरूढा भव । ततश्च

$ अयम् ऋक्संपाठः (१०।८५।२०) । वस्तुतस्तु 'हिरण्य( सुवर्णं ? )सुवृतं ( सुकृतं ) लोकं( नाभिं )' इति छान्दोग्यब्राह्मणपाठः (१।३।११) स्वीकर्तुमुचितः ।

(१) गोगृ. २।४।१ ; संत. ९०५ सुकिंशुकं शल्मलिम् ( शाल्मलिम् ).

स्योनं सुखकरं वहतुम् आत्मनो वहनमिति सायणः । पत्ये मह्यं मदर्थं कृणुष्व कुरु । † मृदुला.

चतुष्पथाद्यनुमन्त्रणम्

**[1]अध्वनि चतुष्पथान् प्रतिमन्त्रयेत नदीश्च विषमाणि च महावृक्षान् श्मशानं च ' मा विदन् परिपन्थिनः ' इति ॥**

(१) मार्गे गच्छंश्चतुष्पथानुद्दिश्य भाषेत । विषमाणि उच्चनीचत्वेन चौरव्याघ्रादिभयाद्वा । संत. ९०५

( २ ) वध्वा सह अध्वनि वर्तमानो नद्यादीनुपलब्धानधिमार्गम् ' मा विदन् ' इति मन्त्रेण प्रतिमन्त्रयेत् (? त) जपन्नवलोकयेदित्यर्थः । प्रतिमन्त्रणमनुमन्त्रणमालोकनमित्यनर्थान्तरमित्युक्तमधस्तात् । तत्र नदीः (? द्यः ) 'धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्तास्ते परिकीर्तिताः ॥' इति कर्मप्रदीपोक्तलक्षणाः । विषमाणि व्याघ्रादिभयस्थानानि, उन्नताननतानि वा । महावृक्षाः अतिप्रसिद्धास्तरवो ग्रामादिसीमाख्यापकाश्चैत्यापराख्याः । मन्त्रो यथा– ' मा विदन्परिपन्थिनो य आसीदन्ति दम्पती । सुगेभिर्दुर्गमतीतामपद्रान्त्वरातयः ॥ ' इति । अस्यार्थः– परिपन्थिनः पर्यवस्थातारः शत्रवः मा विदन् मा जानन्तु । ये परिपन्थिनः दम्पती जायापती आसीदन्ति आभिमुख्येनाऽऽगच्छन्ति । अभ्याजिगमिषन्तीति प्रकृतोऽर्थः सन्नर्थमन्तर्भाव्य कार्यः । अत्र दम्पती( ? ति )पदेन गुणवृत्त्याऽभिहिताऽपि पत्न्येवाभिजिगमिषितेत्युत्तरार्धेन प्रतीयते । तथाहि– सुगेभिः सुगैर्मार्गैः दुर्गे दुःखेन गन्तुं शक्यं दुर्गमं देशम् अतीताम् अतिगच्छन्तीम् अरातयः शत्रवः अपद्रान्तु भीतभीता अपगच्छन्तु इति । मृदुला.

अक्षभङ्गादिनिमित्तेषु होमः वामदेव्यगानपूर्वकमारोहणं च

**[2]अक्षभङ्गे नद्धविमोक्षे यानविपर्यासेऽन्यासु चाऽऽपत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वाऽन्यद्द्रव्यमाहृत्य ' य ऋते चिदभिश्रिषः ' इत्याज्यशेषेणाऽभ्यञ्जेत् ॥**

( १ ) अक्षभङ्गेऽनडुद्विमोक्षे यानविपर्यासे यत्राऽऽगतं पूर्वं तत् त्यक्त्वाऽन्यत्र याने वा अन्यासु चौरव्याघ्रोपद्रवकृतापत्सु यमेवाग्निं नयन्ति तमिन्ध( ने ? )नादिना संधुक्ष्य भूरादिभिराज्येन हुत्वाऽन्यदक्षादिकं योजयित्वा ' य ऋते चिदभिश्रिषः ' इत्यृचा आज्येनाभ्युक्षयेत् ( ? ) । संत. ९०५

( २ ) अध्वनीत्यनुवर्तते । अक्षभङ्गे, अक्षः रथचक्रम् । नद्धविमोक्षे नद्धस्य योक्त्रादिबन्धस्याश्वादेर्वा विमोक्षे अकस्माद्विमोके । यानस्य रथादेर्विपर्यासे औत्तराधर्यप्रातिलोम्ये अन्यथागमने विपथगमने वा । अन्यासु चाऽऽपत्सु यानात्परिपतनादिकासु चौरव्याघ्रादिकृतासु वा । यमेवाग्निमौपासनं हरन्ति नयन्ति । यमेव वा कंचिदग्निं लौकिकमपि संनिधौ लब्ध्वाऽऽनयन्ति तमेवाग्निमुपसमाधाय इन्धनैः संधुक्ष्य व्याहृतिभिराज्येन स्रुवेण हुत्वा अन्यद्यदक्षादि द्रव्यं तदाहृत्य आनीय ' य ऋते चित् ' इत्यनयर्चा आज्यशेषेण कृतहोमावशिष्टेनाऽऽज्येन अभ्यञ्जेत् । अन्तर्भावितण्यर्थोऽञ्जतिः । क्वचित्तथैव पाठः । ऋग्यथा–¶ ' य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः । संधाता संधिं मघवा पुरुवसुरिष्कर्ता विहृतं पुनः ॥ ' इति । अस्या अर्थः– यः इन्द्रः अभिश्रिषः अभिश्लिषः अभिश्लेषणात् संधानद्रव्यात् ऋतेचित् विनाऽपि जत्रुभ्यः ग्रीवाभ्यः स्कन्धसंधिभ्यः सकाशात् आतृदः आतर्दनात्

† शेषं संतवत् ।

( १ ) गोगृ. २।४।२ ; संत. ९०५ येत ( येत् ).

( २ ) गोगृ. २।४।३ ; संत. ९०५ अत्र अनुवादरूपेण सूत्रं वर्तते । तत्र सूत्रांशः कियान् व्याख्यानं च कियत् इत्येतन्निर्णेतुं न पार्यते ।

¶ छान्दोग्यमन्त्रब्राह्मणे सामसंहिताबहिर्भूताः सौत्रा एव मन्त्राः संगृहीताः । अतोऽयं संहितापठितमन्त्रो न तत्रास्ति । तथाऽपि मृदुलाकारेण स्वेनैव संपादिते मृदुलापुस्तकेऽस्य मन्त्रस्य ' १।३।१३ ' इति मन्त्रब्राह्मणीयं स्थानं निर्दिष्टम् , वस्तुतश्च तत्स्थानकस्य ह्यन्तरितोत्तरसूत्रस्थितस्य ' इह गावः ' इति मन्त्रस्य ' १।३।१४ ' इति स्थानं प्रदर्शितमिति चित्रम् । किंच, ' निष्कर्ता ' इति सामसंहितापाठमुत्सृज्य ' इष्कर्ता ' इति ऋक्संहितापाठाङ्गीकरणमृक्संहितास्थलनिर्देशनं च मृदुलाकृतं ततोऽपि चित्रतरम् ।

आरुधिरनिस्रावणात् पुरा पूर्वमेव संधिं संधातव्यं तं संधाता संयोजयिता भवति, मघवा धनवान् पुरुवसुः बहुधनः सः इन्द्रः विह्रुतं विच्छिन्नं तं पुनः इष्कर्ता संस्कर्ता भवति। इति सायणः। अभ्यञ्जनमिह म्रक्षणम्। अत्र हि व्याहृतिहोममात्रविधानात् क्षिप्रहोमोऽयम्। तत्र च न्यञ्चकरणपर्युक्षणाज्यसंस्कारसमिदाधानव्याहृतिहोमपर्युक्षणान्येव कार्याणि। मृदुला.

[1]वामदेव्यं गीत्वाऽऽरोहेत्॥

(१) पाणिग्राहको वामदेव्यं गीत्वा यानं वधूमारोपयेदिति। अक्षभङ्गादिनिमित्तहोमस्य इदानीं तथाऽऽचाराभावात् भवदेवभट्टेन न लिखितम्, मयाऽपि प्रयोगे न लेख्यम्। संत. ९०५

(२) वामदेव्यं नाम साम गीत्वा वधूसहितो वरो यानमारोहेत्। अपवृत्ते कर्मणि सिद्धस्यापि वामदेव्यगानस्य पुनरुपादानं कर्मा(? क्रमा)र्थम्। अन्यथा पर्युक्षणान्त एव स्यादिति। मृदुला.

## खादिरगृह्यसूत्रम्

ईक्षकावेक्षणरथारोहणभयस्थाननिमित्तका जपाः

[2]ईक्षकावेक्षणरथारोहणदुर्गानुमन्त्रणान्यभिरूपाभिः॥

वधूं द्रष्टुमागताः सुमङ्गलीस्त्रियो वीक्षमाणः 'सुमङ्गलीः' इति जपेत्। 'सुकिंशुकम्' इति वधूं रथमारोहयेत्। अध्वनि भयस्थाने 'मा विदन्' इति जपेत्। 'सुमङ्गलीः' इत्यस्यानागताभ्यां सह निर्देशः तत्साम्यार्थम्। यथा— महत्यध्वनि रथारोहणबहुत्वे भयस्थानबहुत्वे च तयोरावृत्तिः दृष्टार्थत्वात्, तथाऽस्यापि स्त्र्यागमनावृत्तावाविवाहसमाप्तेरावृत्तिरिति। १।३।२७

लेखाहोमं समाप्य वधूं 'सुकिंशुकम्' इति रथमारोप्य अग्निं च गृहीत्वा भयस्थाने 'मा विदन्' इति जपित्वा स्वगृहं प्रविश्य 'इह गावः' इति जपित्वा शय्यायामुपविश्य वधूमीक्षमाणः 'इह धृतिः' इति जपेत्, मन्त्रलिङ्गात्। तत्र त्रिरात्रं सह शयीयाताम्। रुद्रभा. १।४।११

## जैमिनिगृह्यसूत्रम्

प्रस्थिताया अनुमन्त्रणम्

[1]'पूषा त्वेतः' इति प्रस्थितामनुमन्त्रयते। 'पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन। गृहान् गच्छ गृहपत्नी यथाऽसो वशिनी त्वं विदथमावदासि॥' इति॥

## कौशिकगृह्यसूत्रम्

समन्त्रकयानारोपणम्, समन्त्रकं ब्रह्मणोऽग्रगमनम्, नानानिमित्तेषु जपाः, जलाशये समन्त्रकलोष्टक्षेपणम्, सुप्तायाः समन्त्रकं प्रबोधनम्, समन्त्रकं यानमोचनम्

[2]'सुकिंशुकम्, रुक्मप्रस्तरणम्' इति यानमारोहयति॥

'एमं पन्थाम्, ब्रह्मापरम्' इत्यग्रतो ब्रह्मा प्रपद्यते॥

पथि गच्छतोः वरवध्वोरग्रे कर्ता व्रजति। दाकेटी.

'मा विदन्, अनृक्षराः' अध्वानमित्युक्तम्॥

'मा विदन्, अनृक्षराः' इति द्वाभ्यामध्वानं दक्षिणेन प्रक्रामति। दाकेटी.

'येदं पूर्वा' इति तेनान्यस्यामूढायां वाधूयस्य दशां चतुष्पथे दक्षिणैरभितिष्ठति॥

तदा इदं प्रायश्चित्तम्। दाकेटी.

स चेदुभयोः शुभकामो भवति 'सूर्यायै देवेभ्यः' इत्येतामृचं जपति॥

'समृच्छत स्वपथोऽनवयन्तः सुसीमकामावुभे विराजावुभे सुप्रजसौ' इत्यतिक्रमयतोऽन्तरा ब्रह्माणम्॥

---

(१) गोगृ. २।४।४ ; संत. ९०५.
(२) खागृ. १।३।२७.

(१) जैगृ. १।२२.
(२) कौसू. ७७।१-१५.

'य ऋते चिदभिश्रिषः' इति यानं संप्रोक्ष्य विनिष्कारयति ॥

'सा मन्दसाना' इति तीर्थे लोगं प्रविध्यति ॥
लोष्टं प्रक्षिप्य तत उत्तरन्ति । दाकेटी.

'इदं सु मे' इति महावृक्षेषु जपति ॥

'सुमङ्गलीः' इति वध्वीक्षीः प्रति जपति ॥

'या ओषधयः' इति मन्त्रोक्तेषु ॥
व्रीहियवादिक्षेत्रं दृष्ट्वा वने वृक्षान् नद्यादिषु च । दाकेटी.

'ये पितरः' इति श्मशानेषु ॥

'प्र बुध्यस्व' इति सुप्तां प्रबोधयेत् ॥
यदि पथि स्वपिति । दाकेटी.

'सं काशयामि' इति गृहसंकाशे जपति ॥

'उद्व ऊर्मिः' इति यानं संप्रोक्ष्य विमोचयति ॥

## वैखानसगृह्यसूत्रम्

वैवाहिकाग्निना सह प्रयाणम्

[1]अथ चतुर्थीवासः । वैवाहिकमग्निं वध्वा सहाऽऽदाय सं प्र वा हारयन्तु ॥ ¶

## आश्वलायनः

प्रयाणे वाहनविधिः, पादगमननिषेधः, नैमित्तिकजपाः, अग्रेऽग्निनयनम्

[2]व्रजेतां स्वगृहं यावत् कन्यागेहात्तु दम्पती ।
गोरथेनाभिवृद्धयर्थं नावमारुह्य मा शुचिः (? वा शुची) ॥
पद्भ्यां यदि व्रजेतां तौ पथि ज्येष्ठादिपूतनाः ।
समाविशत्यलक्ष्मीर्वा निरपत्यत्वमिच्छतः (? ती) ॥
एकेनाह्ना गृहं गन्तुं यद्यशक्यं भवेद्यदा ।
तदा वधूगृहे कुर्याद्दीक्षान्तं तु गृहक्रियाः ॥
उशन्ति वृत्तिकाराद्याः पथि वासं द्विजालये ।
दम्पत्योर्व्रजतोर्विप्रा नैव होमो विधीयते ॥
तत्सायारम्भणत्वात्तु होमस्य विधिना तयोः ।
आसनं(? न्नं) स्वगृहं शक्यं व्रजेन्नान्यदिति स्थितिः ॥
पथामधिपतिः पूषा वाहनानामथाश्विनौ ।
तस्मादारोहणे मन्त्रः पूषा त्वेत इतीष्यते ॥
पूषा दास्यत्यक्षतत्वं पथ्यरोगत्वमश्विनौ ।
रथाद्यारुह्य दम्पत्योर्गच्छतोः स्वगृहं तदा ॥
दृढीकरणसिद्धयर्थं यानारोहणकर्मणा (? नावारोहणकर्मणि) ।
नद्यामश्मन्वतीत्युक्त्वा(? क्तो) मन्त्रश्चा- (? श्या)र्धर्च उत्तमः ॥
अमङ्गल्यापनुत्त्यर्थं नावश्चाऽऽत्मन एव च ।
शस्तस्तदुत्तरार्धं च अवरोहणकर्मणि ॥
रोदनात्स्यादमङ्गल्यं तन्निवृत्त्यर्थमिष्यते ।
जीवं रुदन्तीति जपेद्रुदत्यां बन्धुवर्जनात् ॥
ईर्ष्यालवोऽपि पतयो निवसन्त्यप्सरादयः ।
चतुष्पथेषु वृक्षेषु वर्णेषु च वधूगणाः ॥
बाधिष्यन्ति वधूमीर्ष्यात्पतियुक्तास्तदातदा ।
तत्तन्निरसनार्थाय मा विदन्निति गद्यते ॥
ये द्रष्टुमागताः प्रीत्या मनुष्यास्तौ वधूवरौ ।
तेषां सौभाग्यमाहर्तुं मन्त्रं मुख्यं वदेद्वरः ॥
तयोरेवाग्रतो वह्निमशान्तं ब्राह्मणो नयेत् ।
यत्राऽऽसन्नं वरगृहं समारोप्यान्यथा तथा ॥

## लघ्वाश्वलायनः

वध्वा सहैव प्रयाणम्, अग्रेऽग्निनयनम्, पञ्चमदिने प्रयाणम्, यथासूत्रविधि–देशधर्मं वा

[1]वध्वा सह गृहं गच्छेदादायाग्निं तमग्रतः ।
सूत्रोक्तविधिना चेह प्रियामूढां प्रवेशयेत् ॥
वध्वा सह वरो गच्छेत् स्वगृहं पञ्चमे दिने ।
गृह्योक्तविधिना चैव देशधर्मेण वाऽपि च ॥

---

¶ अत्र सूत्रविभागनिर्णयो न भवति । प्रयाणबोधकोंऽशः संगृहीतः । सकलं सूत्रं गृहप्रवेशप्रकरणे द्रष्टव्यम् ।

(१) वैगृ. ३।५. (२) आश्वस्मृ. ११।४२९–४४३.

(१) लघ्वाश्वस्मृ. १५।५१, ६६.

## शाकलकारिकाः

यथासूत्रविधि यथादेशधर्मं वा प्रयाणम्

[1]समादाय वधूं गच्छेद्वरः स्वस्यैव मन्दिरम् ।
सूत्रोक्तविधिना होमं(?) देशधर्मानुसारतः ॥

## शौनककारिकाः

हस्तग्रहणेन वध्वा गृहाद्बहिरानयनम्, अन्तरावसतौ विशेषः, यानारोपणादयः समन्त्रकाः, नैमित्तिकजपाः

[2]वरोऽप्यथ विवाहाग्निं नीत्वाऽजस्त्रकमग्रतः ।
वधूं गृहीत्वा हस्तेन निर्गत्य स्वगृहं नयेत् ॥
पूषा त्वेतो नयत्वाद्यामृचमुच्चार्य तां वधूम् ।
आत्माधिकारसदृशं यानमारोहयेत्ततः ॥
[3]ब्राह्मण्या जीवपुत्राया जीवपत्न्याश्च वेश्मनि ।
विवाहरजनीमेनामावसेतां वधूवरौ ॥
[4]देशान्तरस्थं स्वं वेश्म वधूं तां प्रापयिष्यतः ।
वरस्य यदि नौतार्या नदी यदि समापतेत् ॥
[5]अश्मन्वतीरीयत इत्यृचोऽर्धेन च तां वधूम् ।
आरोप्य प्रथमं नावमारोहेच्च स्वयं वरः ॥
[6]अत्रा जहामेत्याद्येन त्वर्धर्चेनोत्तरेण ताम् ।
नावोऽवरोहयेत्सा चेत् स्वजनादर्शनादिना ॥
[7]अश्रु मुञ्चेत्तु तां जीवं रुदन्तीमामृचं जपेत् ।
मनोरमेषु देशेषु वृक्षेषु च चतुष्पथे ॥

(१) शाका. १६४ पृ १८.

(२) शौका. १–२ पृ. ६१ ; प्रपा. ४२८.

(३) शौका. ३ पृ. ६१–६२ ; प्रपा. ४२८ मेनामा (मेतामा).

(४) शौका. ४ पृ. ६२ पतेत् (पयेत्); प्रपा. ४२८ यिष्यतः (यिष्यति) यदि नौ (पथि नौ).

(५) शौका. ५ पृ. ६२ र्धेन च (र्धर्चेन); प्रपा. ४२८ त्यृचो (त्यृचा) स्वयं वरः (वरः स्वयम्).

(६) शौका. ६ पृ. ६२ नावोऽव (नावमा); प्रपा. ४२८.

(७) शौका. ७ पृ. ६२ ; प्रपा. ४२८.

[1]छन्नरूपेण वसतां यक्षादीनां प्रशान्तये ।
मा विदन् परिपन्थिन इत्याद्यां च ऋचं जपेत् ॥
[2]मार्गस्थेषु निवासेषु वधूं पश्यन्ति ये जनाः ।
तद्दृष्टिदोषशान्त्यर्थं प्रतिवीक्षेत तां(? तान्) वरः ॥
सुमङ्गलीरियं वधूरिमामित्याद्यृचं जपेत् ॥

## कुमारिलकारिकाः

वध्वा सहैव प्रयाणम्, अग्रतोऽग्निनयनम्, ग्रामान्तरे वरगृहे समन्त्रकयानारोपणादयो धर्माः, तत्र केषांचिदेकग्रामेऽप्यनुष्ठानम्

[3]विवाहानन्तरं गच्छेत्सभार्यः स्वस्य मन्दिरम् ।
यदि ग्रामान्तरे तत्स्यात्तच्च यानेन गम्यते ॥
[4]पूषा त्वेत्यनया यानं वधूमारोपयेद्वरः ।
दम्पत्योरग्रतोऽजस्रं विवाहाग्निं नयन्ति च ॥
[5]गृहान्निर्गच्छतोरेष स्वग्रामेऽपि भवेद्विधिः ।
ब्राह्मणी जीवपत्नी या जीवापत्या च तद्गृहे ॥
[6]वसेदनन्तरां रात्रीं स्वग्रामे नैतदिष्यते ।
यद्यन्तराऽस्ति नद्यादि नावमारुह्य याति चेत् ॥
[7]अश्मन्वतीत्यृचोऽर्धेन नावमारोहयेद्वधूम् ।
अर्धर्चेनोत्तरेणैनां जलादुत्तारयेदथ ॥

(१) शौका. ८ पृ. ६१ रूपेण व (रूपं निव); प्रपा. ४२८.

(२) शौका. ९, १० पृ. ६२ तद्दृष्टि (स दृष्टि); प्रपा. ४२८ ; विपा. १३४–१३५ (भागः २) (=).

(३) कुका. १।२३।१ ; प्रपा. ४२७ ग्रामान्तरे (ग्रामान्तरं) स्यात्तच्च (स्यादथ); धप्र. ४९ स्यात्तच्च (स्यात्तत्र).

(४) कुका. १।२३।२ ; प्रपा. ४२७.

(५) कुका. १।२३।३ ; प्रपा. ४२७ चतुर्थपादे (जीवत्पुत्रा च या भवेत्).

(६) कुका. १।२३।४ ; प्रपा. ४२७ रात्रीं (रात्रिं) याति चेत् (यापयेत्).

(७) कुका. १।२३।५–७ ; प्रपा. ४२७–४२८.

नीयमाना वधूर्बन्धुवियोगाद्यदि रोदिति ।
जपेज्जीवं रुदन्त्येतामेकग्रामेऽप्ययं विधिः ॥
जपेच्छोभनदेशादौ मा विदन् परिपन्थिनः ।
सुमङ्गलीर्ऋचेक्षेत वासेवासे समीक्षकान् ॥

## कपर्दिकारिकाः

मनुष्ययाने विशेषविधिः

[1]उत्तम्भनादिस्तु निवर्तते वा
ता मन्दसानेति मनुष्ययाने ।
† उदुत्तरादि त्रयमेक आहु-
र्विमोकमन्त्रावपि नो भवेताम् ॥

## * रेणुकारिकाः

अग्निना सह प्रयाणम्, अग्निनाशे प्रायश्चित्तम्,
रथाक्षभङ्गादिनिमित्तेषु प्रायश्चित्तिसंज्ञकं कर्म

[2]अजस्रमग्निधारणं भवेद्विवाहहोमतः ।
तदग्निना सह व्रजेत् प्रयाणकालतो वरः ॥
कथंचिदग्निनाशनं भवेत् स्वयोनिनिर्हृतिः ।
ततोऽत्र भेषजं भवेद्यथोक्तमस्य दोषतः ॥
वधूवरौ रथेऽथ वा हयादिकेऽधिरोहतः ।
प्रयाणकालतस्तयो रथाक्षभेदनं भवेत् ॥
रथस्य बन्धमोक्षणं हयादिके विपर्यये ।
भवेदनिष्टमेव वा युगादिकं निमित्ततः ॥
प्रायश्चितं भवेदत्राप्याग्रूवैं कल्पपूर्विका ।
प्रायश्चितं करिष्येऽहं ततो वैवाहिकानलम् ॥

स्थापयेत् संस्कृते देशे सरेद्वैकल्पिकानथ ।
ब्रह्मणो गमनाद्यास्तान् वरपूर्णविवर्जितान् ॥
इह रतिर्द्वयोर्देवा ऋषयोऽग्निश्च देवताः ।
प्रतिष्ठा छन्द आद्यस्य शेषस्योष्णिगुदाहृतम् ॥
सत्रोत्थाने नियोगः स्यादाद्यं वा पशुर्दैवतम् ।
त्रिष्टुप् छन्दः प्रतिक्षत्रे ऋषयोऽश्विसरस्वती ॥
प्रजापतिश्च विश्वे स्युर्देवता उपवेशनम् ।
छन्दोऽनुष्टुब् ध्रुवो देवो आ त्वेत्याथर्वणो
मुनिः ॥
युजिर्विष्णुक्रमे भूरित्यादीनां प्रागुदीरितम् ।
द्रव्यं देवानथ ध्यायेद्वद्धिरग्निं च प्रजापतिम् ॥
इन्द्रमग्निं ततः सोमं भूराद्याश्च घृतेन ताः ।
वरणादि यथोक्तं स्यात् स्थालीपाकविवर्जितम् ॥
आसादयेद्वरस्थाने धुर्यौ पर्युक्षणान्ततः ।
स्थालीघृतेन जुहुयादन्वारम्भविवर्जितम् ॥
इह रतिरिति द्वाभ्यां स्वाहान्ताभ्यां पृथग्घुती ।
आहुत्योरनयोः पूर्वकालताज्ञापनाय वै ॥
आघारहोमादाचार्येणाऽऽज्यं संस्कृत्य सुश्रितम् ।
ततः स्विष्टकृदन्ताः स्युराघाराद्याश्चतुर्दश ॥
दद्याद्धुर्यावनडुहौ पवित्रान्ते स्वयंभुवे ।
इमौ ते प्रतिगृह्णेतां ब्रह्मन् धुर्याविति ब्रुवन् ॥
विमोकान्ते प्रणीतानामन्यदा नोपकल्पनम् ।
यज्ञान्तेन प्रतिक्षत्र इत्यन्वाहार्यमित्यृचा ॥
वरमुत्क्षिप्य तां तस्माद्वधूं तत्रोपवेशयेत् ।
परादिना च पूर्वान्ताभावात्तन्मन्त्रसंशये ॥
इति सूत्रकृता स्पष्टं यज्ञान्तेनेति सूत्रतः ।
एतत्कर्माङ्गभूतं स्यात्ततो ब्राह्मणभोजनम् ॥
प्रायश्चित्तिरियं संज्ञा कर्मणोऽस्य बुधैः कृता ।
तेन नैमित्तिकत्वाच्च नान्दीश्राद्धं भवेदिह ॥

---

† रथभिन्नयानारोहणे 'सुकिंशुकम्' इत्यभिमन्त्रणं लुप्यते, लिङ्गविरोधात्, 'उदुत्तरम्' इत्यादिभिस्तिसृभिर्वाऽभिमन्त्रयेतेत्यर्थः । ताद. ५।२३.

* रेणुना प्रयाणगृहप्रवेशौ चतुर्थीकर्मोत्तरमुक्तौ ।

(१) कका. २।१४.

(२) रेका. २-३, ७-२३ पृ. ७१-७२.

# गृहप्रवेशः

## बौधायनगृह्यसूत्रम्

गृहप्रवेशः समन्त्रकः , आनडुहचर्मण्युपवेशनम् ,

अङ्कुरारोपणम् , वाङ्नियमः , नक्षत्रदर्शनम्

[1]अथ जायामानीय स्वान् गृहान् प्रपादयति-- 'भद्रान् गृहान् सुमनसः प्रपद्येऽवीरघ्नी वीरवतः सुवीरान् । इरां वहतो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशानि ॥' इति ॥

अथैनामानडुहे चर्मण्युपवेशयति-- 'इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो रायस्पोषो निषीदतु ॥' इति ॥

अत्राऽऽभ्याममात्यास्तोक्माण्यारोपयन्ते ॥

अथ वाचं यच्छत आ नक्षत्राणामुदयात् ॥

अथाहोरात्रयोः संधिमनुमन्त्रयते-- 'नीललोहिते भवतः कृत्या सक्तिर्व्यज्यते । एधन्तेऽस्या ज्ञातयः पतिर्बन्धेषु बध्यताम् ॥' इति ॥

अथोदितेषु नक्षत्रेषूपनिष्क्रम्य ध्रुवमरुन्धतीं च दर्शयति ॥

'ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवमसि ध्रुवतः स्थितम् । त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः ॥' इति ध्रुवम् ॥

'सप्त ऋषयः प्रथमां कृत्तिकानामरुन्धतीं यद्ध्रुवतां ह निन्युः । षट्कृत्तिका मुख्ययोगं वहन्तीयमस्माकमेधत्वष्टम्यरुन्धती ॥' इत्यरुन्धतीम् ॥

विवाहव्रतम् , व्रतकालभेदप्रयुक्तः

श्रोत्रियादिपुत्रप्राप्तिरूपफलभेदः

अथ विवाहस्याऽऽरुन्धत्युपस्थानात् कृत्वा व्रतमुपैति-- 'अग्ने व्रतपते उपयमनं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । वायो व्रतपत

(१) बौगृ. १।५।७-१७.

आदित्य व्रतपते व्रतानां व्रतपते उपयमनं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ॥' इति ॥

उभौ जायापती व्रतचारिणौ ब्रह्मचारिणौ भवतोऽधः शयाते ॥

तयोः शय्यामन्तरेणोदुम्बरदण्डो गन्धानुलिप्तो वाससा सूत्रेण वा परिवीतस्तिष्ठत्यापक्वहोमात् ॥

[1]ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनाज्जात इत्यभिधीयते ॥

[2]उपनीतमात्रो व्रतानुचारी वेदानां किंचिदधीत्य ब्राह्मणः ॥

[3]एकां शाखामधीत्य श्रोत्रियः ॥

अङ्गाध्याय्यनूचानः ॥

कल्पाध्यायी ऋषिकल्पः ॥

सूत्रप्रवचनाध्यायी भ्रूणः ॥

[4]चतुर्वेदादृषिः ॥

अत ऊर्ध्वं देवः ॥

अथ यदि कामयेत श्रोत्रियं जनयेयमित्याऽऽरुन्धत्युपस्थानात् कृत्वा त्रिरात्रमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणावासाते ॥

अहतानां च वाससां परिधानं सायं प्रातश्चालङ्करणमिषुप्रतोदयोश्च धारणमग्निपरिचर्या च ॥

चतुर्थ्यां पक्वहोम उपसंवेशनं च ॥

अथ यदि कामयेतानूचानं जनयेयमिति द्वादशरात्रमेतद्व्रतं चरेत् ॥

व्रतान्ते पक्वहोम उपसंवेशनं च ॥

(१) बौगृ. १।७।१.

(२) बौगृ. १।७।२ ; मुक्ता. ४९ (वेदानां किञ्चिदधीत्य ब्राह्मणः) एतावदेव.

(३) बौगृ. १।७।३-६ ; मुक्ता. ४९.

(४) बौगृ. १।७।७-२१.

अथ यदि कामयेत ऋषिकल्पं जनयेयमिति मासमेद्व्रतं चरेत् ॥

व्रतान्ते पक्वहोम उपसंवेशनं च ॥

अथ यदि कामयेत भ्रूणं जनयेयमिति चतुरो मासानेतद्व्रतं चरेत् ॥

व्रतान्ते पक्वहोम उपसंवेशनं च ॥

अथ यदि कामयेत ऋषिं जनयेयमिति षण्मासानेतद्व्रतं चरेत् ॥

व्रतान्ते पक्वहोम उपसंवेशनं च ॥

अथ यदि कामयेत देवं जनयेयमिति संवत्सरमेतद्व्रतं चरेत् ॥

व्रतान्ते पक्वहोम उपसंवेशनं च ॥

## आश्वलायनगृह्यसूत्रम्

समन्त्रको गृहप्रवेशः गृहप्रवेशनीयहोमश्च

[१] 'इह प्रियं प्रजया ते समृध्यताम्' इति गृहं प्रवेशयेत् ॥

(१) 'इह प्रियम्' इत्यनेन मन्त्रेण गृहं प्रवेशयति वधूम्। देभा.

(२) अनया वधूं गृहं प्रवेशयेत्। एवमादयो विधयः स्वग्रामेऽपि विवाहे भवन्ति। $ गानावृ.

[२]विवाहाग्निमुपसमाधाय पश्चादस्याऽऽनडुहं चर्माऽऽस्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम् 'आ नः प्रजां जनयतु प्रजापतिः' इति चतसृभिः प्रत्यृचं हुत्वा 'समञ्जन्तु विश्वेदेवाः' इति दध्नः प्राश्य प्रतिप्रयच्छेत्, आज्यशेषेण वाऽनक्ति हृदये ॥

(१) अत्र विवाहाग्निग्रहणं न कर्तव्यम्। कस्मात्? अधिकृतत्वात्। अत एव कर्तव्यम्। नयनेऽधिकृतत्वात् होमे यः कश्चनाग्निः प्रसज्येत, स मा प्रसाङ्क्षीदिति विवाहाग्निग्रहणं क्रियते। उपसमाधायेति न वक्तव्यम्। कस्मात्? सिद्धत्वात्। तत्र क्रियते चर्मास्तरणकालोपदेशार्थम्। अथवा एककर्त्रर्थम्। तेन किं सिद्धं भवति? अन्यत्रान्योऽप्युपसमाधानं करोति, न विवाहे उपसमाधानमन्यः करोतीति। पश्चादिति देशनिर्देशः। प्रत्यगित्यर्थः। अस्य अग्नेः। आनडुहमिति चर्मविशेषणं क्रियते। प्राक् चास्य ग्रीवा भवति, ऊर्ध्वं लोमानि च भवन्ति। तस्मिन् उपविष्टायामिति। तस्मिन्निति न वक्तव्यम्, कस्मात्? अधिकृतत्वात्। तस्मिन्निति यदि नोच्यते नैव तत्रोपवेशनं स्यात्। तस्माद्वक्तव्यमेव। समन्वारब्धायाम्। समन्वारब्धवत्यामित्यर्थः। 'आ नः प्रजां जनयतु प्रजापतिः' इति चतसृभिः ऋग्भिः प्रत्यृचं होमो भवति। तत्र प्रत्यृचग्रहणमपार्थकम्। यथा 'धाता ददातु दाशुषे' (आगृ. १।१४।३) इत्यत्र प्रत्यृचं होमो भवत्यसति प्रत्यृचग्रहणे। एवमिहापि भविष्यति। तस्मात् प्रत्यृचग्रहणं न कर्तव्यम्। उच्यते। कर्तव्यम्। इह एते होममन्त्राः कर्मकरणाः, कर्मकरणत्वात् स्वाहाकारान्तता इति। यत्र प्रत्यृचग्रहणं नास्ति तत्र च स्वाहाकारान्ते होमः कर्तव्यः। तेन क्वचिदुद्देशेन होमः स्यादिति नैवाऽऽस्ते। तत्र तु वचनं तत्परीक्षा क्रियते। 'समञ्जन्तु विश्वे देवाः' इति दध्नः प्राश्य प्रतिप्रयच्छेत्। तत्र संशयः— किमयं प्राशनमन्त्रः, आहोस्वित् प्रदानमन्त्र इति। उच्यते। उभयार्थः। यद्युभयार्थः, अभ्यासः प्राप्नोति। उच्यते। न भवत्यभ्यासः। कस्मात्? उभयलिङ्गत्वात् मन्त्रस्य। यथा द्वार्ययोरभिमर्शनमन्त्रः सकृदेव प्रयुक्तः सन्नुभयार्थो भवति (आश्रौ. १।४।१३) तद्वदयमपीति। स्वयं प्राश्य पश्चात् प्राशनार्थं तस्याः प्रयच्छति। अथवा आज्यशेषेण हृदये अनक्ति। न पूर्वं कर्म करोति चेत् हृदये आत्मनस्तस्याश्चानेनैव मन्त्रेण। अपरे आज्यशेषेण वाऽनक्ति हृदये इति वाशब्दं चार्थं वर्णयन्ति। देभा.

---

$ प्रयोगपारिजाते सर्वत्र वृत्त्यनुवादः।

(१) आगृ. १।८।८ ; प्रपा. ४२८ ; संप्र. ८४२.

(२) आगृ. १।८।९ ; प्रपा. ५६ (आ नः प्रजां... हुत्वा) एतावदेव : ३६२ ; संप्र. ८४२ ; संम. ७० (विवाहाग्निमुपसमाधाय) एतावदेव ; कुम. ११३८ संमवत्.

( २ ) अग्निप्रणयनान्तं कृत्वाऽग्निमुपसमादधाति । समिधः प्रक्षिप्य प्रज्वलयतीत्यर्थः । ततः पश्चादस्याऽऽनडुहं चर्माऽऽस्तृणाति प्राग्ग्रीवमुत्तरलोम ऊर्ध्वलोम । ततोऽन्वाधानाद्याज्यस्य बर्हिषि सादनान्तं कृत्वा तस्मिन् चर्मण्युपविष्टायां समन्वारब्धायां वध्वामिध्माधानाद्याज्यभागान्तं कृत्वा 'आ नः प्रजाम्' इति चतसृभिः प्रत्यृचं हुत्वा ततः 'समञ्जन्तु' इत्यृचा दध्न एकदेशं स्वयं प्राश्य वध्वै प्राशनार्थं शिष्टं दधि प्रयच्छेत् । सा तु तूष्णीं प्राश्नाति । सकृत्प्रयुक्तस्य मन्त्रस्य उभयप्राशनार्थत्वात् । उभयार्थत्वं तु 'नौ' इति मन्त्रे द्विवचनात् । आज्यशेषेण वा उभयोर्हृदये अनक्ति तेनैव मन्त्रेण । 'हृदये अत ऊर्ध्वम्' * इति विवृत्या पाठः कार्यः, प्रगृह्यत्वात् । ततः स्विष्टकृदादि समापयेत् । विवाहाग्निग्रहणमन्यनिवृत्त्यर्थम् । कथं पुनरन्याग्निप्राप्तिशङ्का ? 'गृह्याणि वक्ष्यामः' (आगृ. १।१।१) इति प्रतिज्ञातम् । उच्यते । दायविभागकाले अग्निः परिगृह्यते चेदत्राप्यन्योऽग्निः प्रसज्येत, तन्निवृत्त्यर्थमिदम् । अपि चात्र विवाहाग्निग्रहणान्न विवाहहोममात्रेणाग्नेर्गृह्यत्वसिद्धिः, किं तर्हि ? गृहप्रवेशनीयहोमे कृते । एवमुभाभ्यां होमाभ्यां गृह्यत्वसिद्धिः, नैकेनेति ज्ञायते । तेन गृहप्रवेशनीयहोमादर्वाग्दर्शपूर्णमासप्राप्तौ पार्वणस्थालीपाको न कार्यः । परिचरणहोमस्तु कार्य एव, 'पाणिग्रहणादि' (आगृ. १।९।१) इति वचनात् । वैश्वदेवं च कार्यमेव, तस्याग्निविशेषविध्यभावात् । तेनाग्निनाशे होमद्वयं कार्यमिति सिद्धम् । उपसमाधायेति आस्तरणकालोपदेशार्थम् । अथवा समानकर्तृकत्वसिद्ध्यर्थम् । तेन यत्रोपसमाधानग्रहणं नास्ति तत्रान्यो वोपसमाधानं कुर्यात् । तस्मिन्निति वचनं चर्मास्तरणानन्तरं तन्त्रान्तरमिति ज्ञापनार्थम् । प्रत्यृचग्रहणं कथम् ? ऋगन्ते होमः स्यात्, न स्वाहाकारान्ते, इत्येवमर्थम् । स्वाहाकारं पठञ्जुहुयादित्यर्थः । तेन यत्र प्रत्यृचग्रहणं नास्ति तत्र स्वाहाकारं कृत्वा पश्चाद्धोमः । आज्यशेषेण वेति सिद्धवदुपदेशादनादेशे आज्येन होम इति गम्यते ।

* गानाष्ट.

( ३ ) इह तु प्रत्यृचग्रहणं ऋगन्ते होमो यथा स्यात्, स्वाहाकारो मा भूदिति । केचिदृगन्ते होमं कृत्वा पश्चात् स्वाहाकारं कुर्वन्ति । ¶ अना.

( ४ ) अथ गृहप्रवेशहोमस्थानविचारः । यद्यप्येष गृहप्रवेशहोमो गृह्यकारेण प्रयाणविधेरनन्तरमुक्तत्वात्स्वगृहे एव कर्तव्य इति प्रतिभाति, तथाऽपि श्वशुरगृह एव प्राचुर्येणाऽऽचारदर्शनाद्विवाहहोमानन्तरं तत्रैव गृहप्रवेशसंज्ञको होमः कर्तव्यः । ननु शिष्टाचारेण गृह्यस्याबाधितत्वात् कथं श्वशुरगृहे कर्तव्य इति चेत् । सत्यम् । केवलाचारस्याबाधकत्वेऽपि स्मृत्यन्तरानुगृहीतस्याऽऽचारस्य बाधकत्वोपपत्तेः । तत्र प्रसङ्गादाह यज्ञपार्श्वः— 'अतो नागबलिं कृत्वा रात्रौ संवेशनं शुभम् ।' इति । संवेशनं प्रवेशनम् । अनेन चतुर्थदिवसात् प्राक् गृहप्रवेशनमशुभमित्युक्तं भवति । तस्मादेष होमः श्वशुरगृहे कर्तव्यः । † अथवा कल्पसूत्राधिकरणोक्तन्यायेन गृह्यस्य प्राबल्यात्तत्रोक्तक्रमेण प्रयाणविधेरनन्तरं स्वगृहे गृहप्रवेशहोमः

---

* 'हृदयेऽत ऊर्ध्वम्' इति प्रकृतिभावाभावो वैदिकपाठे ।

* संम., कुभ. वृत्त्येकदेशानुवादः ।

¶ शेषं देभावत् ।

† इदमत्र सुधीभिर्विचारणीयम्— चतुर्थदिवसे नागबलिपूर्वकसंवेशनकर्तव्यतां गोचरयद्यज्ञपार्श्ववचनं गृहप्रवेशनीयहोमस्य श्वशुरगृहकर्तव्यतां कथं प्रापयतीति । किंच, संवेशनपदार्थो न संप्रतिपन्नः, यदि संवेशनं न प्रवेशनम्, तदा तु तद्वचनस्य तत्प्रापकत्वं दूरनिरस्तम् । अत्र नागबलिप्रकरणगता सविस्तरा टिप्पण्यनुसंधेया । अत्र, शिष्टाचारस्य उक्तयज्ञपार्श्ववचनरूपप्रत्यक्षस्मृतिमूलकत्वे कथं पृथक्प्रमाणता? पृथक्प्रमाणत्वाभावे यज्ञपार्श्वस्य कात्यायनसूत्रपरिशिष्टरूपत्वेन कल्पप्रामाण्यव्यवस्थामूलिका कथं नाऽऽचारव्यवस्था ? कथं च बलाबलविचारविषयता ? अप्रत्यक्षस्मृतिमूलकत्वे विवक्षिते तु प्रत्यक्षस्मृतिविरोधे जाग्रति तदेव कुतः ? इत्यादिविषयेषु बहु वक्तव्यमपि पारिजातकृता स्वयमेवास्य पक्षस्याग्रे परित्यक्तत्वाद् विस्तरभिया च नोच्यते ।

कर्तव्यः। अत्र देशाचारतो व्यवस्था द्रष्टव्या।

प्रपा. ३६३

विवाहव्रतम्, वधूवस्त्रदानम्, ब्राह्मणभोजनम्, स्वस्तिवाचनम्

**[1]अत ऊर्ध्वमक्षारालवणाशिनौ ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ स्याताम्॥**

**[2]त्रिरात्रं द्वादशरात्रम्॥**

**[3]संवत्सरं वैक ऋषिर्जायत इति॥**

(१) त्रिरात्रादीनां तु विकल्पः अत्यन्तरागपीडितयोर्गमनम्, धैर्यवतोस्तु ब्रह्मचर्यम्। मेधा. ३।४५

(२) अत ऊर्ध्वमिति। अत इत्यनेन किं निर्दिश्यते? गृहप्रवेशनीयः, तस्य प्रकृतत्वात्। तेन गृहप्रवेशनीयादूर्ध्वमनयोर्व्रतचर्या भवति। यद्येवं दोषः। को दोषः? प्राग्गृहप्रवेशनीयादेतानि व्रतानि न प्राप्नुवन्ति। इष्यन्ते च। तस्मान्नायमर्थः। एवं तर्हि अतःशब्देन विवाहो निर्दिश्यते। ननु च व्यवधानाद्गृहप्रवेशनीयेन तस्य निर्देशो नोपपद्यते। नेत्युच्यते। विवाह एव प्राधान्येन प्रकृतः, गृहप्रवेशनीयः प्रसङ्गेनोक्तः। तस्माद्विवाह एव निर्दिश्यते अत इति। तेन विवाहादूर्ध्वमनयोर्व्रतचर्या भवति। एवमपि दोषः। प्रागपि गृहप्रवेशनीयात् व्रतसमाप्तिः प्राप्नोति। न चेष्यते। तस्मादेष दोषः। एवमुभयथाऽपि दोषः। एवं तर्ह्यन्यथा सूत्रविन्यासं करिष्यामः। 'अक्षारालवणाशिनौ ब्रह्मचारिणावधःशायिनौ स्याताम्'। तेनेमानि व्रतचर्याणि विवाहात् प्रभृति विधीयन्ते। 'अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रम्' इति। तेन अतःशब्देन गृहप्रवेशनीयो गृह्यते। तेन गृहप्रवेशनीयादूर्ध्वं कालनियमो भवति। प्राक् चानियतः कालः। एवमिष्टोऽर्थः सिद्धो भवति। संवत्सरमेके व्रतमिच्छन्ति। कस्मात्? एवंनियमसंयुक्तस्य ऋषिकल्पः किल पुत्रो जायत इति। देभा.

(३) उत्तरावधिमाह– अत इति। संवत्सरं वा नियतौ स्याताम् एक ऋषिकल्पः पुत्रो जायत इति कृत्वा। अन्ये त्वाहुः– व्रतान्ते एकऋषिः संपद्यते। पितृगोत्रं विहाय पतिगोत्रं भजत इत्यर्थः। * गानाबृ.

(४) एक ऋषिर्जायत इति। ¶ एवंनियमयुक्तस्य ऋषिकल्पः पुत्रो जायत इत्यर्थः। *अना.

(५) कन्यायाः पितृगोत्राद्यथोक्तविधिना भर्तृगोत्रप्रापणं विवाहः। तदपि सप्तमपदप्रापणेनैव। 'स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे।' इति स्मरणात्। इदं च शाखान्तरविषयम्। आश्वलायनानां तु त्रिरात्रादिव्रतान्ते पितृगोत्रनिवृत्त्या भर्तृगोत्रप्राप्तिर्भवतीति वेदितव्यम्, 'अत ऊर्ध्वमक्षारालवणाशिनौ' इत्युपक्रम्य 'त्रिरात्रं द्वादशरात्रं संवत्सरं वैकर्षिर्जायते' इत्याश्वलायनस्मरणात्, 'नियमान्ते एकऋषि( कल्प? ): संपद्यते। पितृगोत्रं विहाय सा पतिगोत्रं भजत इत्यर्थः' इति वृत्तिकृद्व्याख्यानाच्च। पृ. ५८५

अक्षारं क्षारद्रव्यविवर्जितम् अलवणं लवणवर्जितं चाश्नीतः इत्यक्षारालवणाशिनौ। 'अक्षारलवणाहारौ' इति शौनकवाक्ये तु क्षारं च लवणं च क्षारलवणे, तद्वर्जमाहारो ययोस्ताविति। (अ?)क्षारमिति लवण-

---

(१) आगृ. १।८।१० ; मेधा. ३।४५ अक्षारा (अक्षार) (अलंकुर्वाणौ०) गृह्यकाराः ; गृर. ८३ अक्षारा (अक्षार) वलं (वनलं) ; प्रपा. ३६३ ; धप्र. ४८ (अलंकुर्वाणौ०) ; मच. ३।४६ (ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ०) ; संप्र. ५८५ (अत ऊर्ध्वमक्षारालवणाशिनौ) एतावदेव : ८४३.

(२) आगृ. १।८।११ ; मेधा. ३।४५ गृह्यकाराः ; प्रपा. ३६३ ; धप्र. ४८ ; मच. ३।४६ ; संप्र. ५८५, ८४३.

(३) आगृ. १।८।१२ ; मेधा. ३।४५ (संवत्सरं वा) एतावदेव, गृह्यकाराः ; गृर. ८३ मेधावत् ; प्रपा. ३६३ ; धप्र. ४८ (जायत इति०) ; मच. ३।४६ मेधावत् ; संप्र. ५८५, ८४३ क ऋषि (कर्षि).

* शेषं देभागतम्।

¶ इदं न संवत्सरनियममात्रविषयमिति विशेषः।

विशेषमाह मेधातिथिः, 'खारी लवणम्' इति लोकप्रसिद्धेः। ¶ संप्र. ८४३

[1]चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात् ॥

(१) चरितव्रतः समाप्तव्रत इत्यर्थः। सूर्याविदे। सूर्यया दृष्टो मन्त्रः सूर्यैव भवति, यथा वृषाकपिरिति। तं मन्त्रं यो वेत्ति स भवति सूर्यावित्। तस्मै सूर्याविदे वधूवस्त्रं दद्यात्। कथं पुनरसौ वेदितव्यः? स्वरैर्वर्णैरित्येवमादिभिर्लक्षणैः। तच्च कतमस्य पुनर्वाससो दानमुपदिशति? यद्वासो विवाहकाले आसीत् तस्येदं दानमुपदिष्टं द्रष्टव्यम्। देभा.

(२) सा (सूर्या) च 'सत्येनोत्तभिता' इति सूक्तम्। * गानावृ.

अन्नं ब्राह्मणेभ्यः ॥

अन्नं ब्राह्मणेभ्यो दद्यात्। § देभा.

अथ स्वस्त्ययनं वाचयीत ॥

(१) अथ अनन्तरं स्वस्त्ययनं वाचयीत 'ब्रूध्वं स्वस्ति' इति। देभा.

(२) 'ओं स्वस्ति भवन्तो ब्रुवन्तु' इति। ते च 'ओं स्वस्ति' इति प्रत्यूचुः। † गानावृ.

(३) अथ तैर्भुक्तवद्भिः स्वस्त्ययनं वाचयेत्। 'स्वस्त्ययनमस्तु' इति वाचयेदित्यर्थ इति केचित्। पुण्याहवाचनोपलक्षणमित्यन्ये। तच्चरणभेदेन देशभेदेन च भिद्यते। ततस्तस्यां रात्रौ पुण्ये मुहूर्ते समावेशनम्। अना.

---

¶ शेषं वृत्त्यनुवादः।

* शेषं देभावत्। अना., संप्र. गानावृवत्।

§ गानावृ., अना., संप्र. देभावत्।

† संप्र. गानावृवत्।

(१) आगृ. १।८।१३-१५; प्रपा. १६१; संप्र. ८४३.

## कौषीतकिगृह्यसूत्रम्

### प्रवेशजपः

[1]'इह प्रियम्' इति सप्त गृहान् प्राप्तायाः कृताः परिहाप्य ॥

ततो गृहान् प्राप्तायां वधूकायाम् 'इह प्रियं प्रजया ते समृध्यताम्' इति चतस्र ऋचः 'सुमङ्गलीरियं वधूः' इति तिस्रः हावको जपेत्। अपरे तु व्याचक्षते—पतिर्जपति। गृहप्राप्तस्य वरस्याऽऽचार्येण पूर्ववन्मधुपर्कः कर्तव्यः। अत्र मैत्रः पशुः कर्तव्यः। तस्य विधिमुपरिष्टादेव प्रवक्ष्यामः। अथ गां व्यापाद्यमानां नेच्छति ततस्तामपि तस्मै दद्यादिति केचिदिच्छन्ति। कौगृसं. १६

### गृहप्रवेशनीयहोमः, कुमारोत्सङ्गदानम्, पुण्याहवाचनम्, गृहप्रपादनम्

आनडुहमित्युक्तम् * ॥

तस्मिन्नुपवेश्यान्वारब्धायां पतिश्चतस्रो जुहोति ॥

'अग्निना देवेन पृथिवीलोकेन लोकानामृग्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा। वायुना देवेनान्तरिक्षलोकेन लोकानां यजुर्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा। सूर्येण देवेन द्यौर्लोकेन लोकानां सामवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा। चन्द्रेण देवेन दिशां लोकेन लोकानां ब्रह्मवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा' ॥

'भूर्या ते पतिघ्न्यलक्ष्मी देवरघ्नी जारघ्नी तां करोम्यसौ स्वाहा' इति वा प्रथमया महाव्याहृत्या प्रथमोपहिता द्वितीयया द्वितीया तृतीयया तृतीया समस्ताभिश्चतुर्थी ॥

---

* 'आनडुहं रोहितं चर्मोदग्ग्रीवं प्राग्ग्रीवं वोत्तरलोम पश्चादग्नेरुपस्तीर्योपविशन्ति कुशान्वैवमग्रान्' (शाश्री. ४।१६।२) इत्युक्तमित्यर्थः।

(१) कौगृ. १।१५।२२-१।१७।१०.

'अघोरचक्षुः' इत्याज्यलेपेन चक्षुषी विमृजीत ॥

'कया नश्चित्रः' इति तिसृभिः केशान्तानभिमृश्य ॥

'उत त्या दैव्या भिषजा' इति चतस्रोऽनुद्रुत्यान्ते स्वाहाकारेण मूर्धनि संस्रावम् ॥

अत्र हैके कुमारमुत्सङ्गमानयन्त्युभयतः सुजातम् 'आ ते योनिम्' इत्येतया ॥

अपि वा तूष्णीम् ॥

तस्याञ्जलौ फलानि दत्त्वा पुण्याहं वाचयति ॥

पुंसवतीह भवति ॥

'इहैव स्तम्' इति सूक्तशेषेण गृहान् प्रपादयन्ति ॥

दधिपानम्, वाग्यमः, ध्रुवदर्शनम्, विवाहव्रतम्, अग्निपरिचर्या, गर्भकामाहुतिः, दशरात्रमवियोगः

'दधिक्राव्णो अकारिषम्' इति दधि संपिबेयाताम् ॥

वाग्यतावासीयातामा ध्रुवदर्शनात् ॥

अस्तमिते ध्रुवं दर्शयति— 'ध्रुवैधि पोष्या मयि' इति ॥

'ध्रुवं पश्यामि प्रजां विन्देय' इति ब्रूयात् ॥

त्रिरात्रं ब्रह्मचर्यं चरेयाताम् ॥

अधः शयीयाताम् ॥

दध्योदनं संभुञ्जीयातां 'पिबतं च तृप्णुतं च' इति तृचेन ॥

सायं प्रातर्वैवाह्यमग्निं परिचरेयाताम्— 'अग्नये स्वाहाऽग्नये स्विष्टकृते स्वाहा' इति ॥

'पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ। पुमानिन्द्रश्चाग्निश्च पुमान्संवर्धतां मयि स्वाहा ॥' इति पूर्वा गर्भकामा ॥

दशरात्रमविप्रवासः ॥

अ( ? आ )नडुहहोमकर्म वक्ष्यामः । अत्र स्तरणाद्याघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाघाराज्यभागं कृत्वा ततो लोहिते बलीवर्दचर्मणि वधूमुपवेशयन्ति। ततो वधूः कुशैरन्वारभते, पतिर्जुहोति । 'अग्निना देवेन पृथिवीलोकेन लोकानामृग्वेदेन वेदानां तेन त्वा शमयामि कल्याणश्रीः स्वाहा, वायुना देवेनान्तरिक्षलोकेन लोकानां यजुर्वेदेन (वेदानां) तेन त्वा शमयामि (असुर्याः ? ) कल्याणश्रीः स्वाहा, सूर्येण देवेन द्यौर्लोकानां ( ? द्यौर्लोकेन लोकानां ) सामवेदेन वेदानां तेन त्वा शमयामि कल्याणश्रीः स्वाहा, चन्द्रेण देवेन दिशां लोकेन लोकानां ब्रह्मवेदेन वेदानां तेन त्वा शमयामि कल्याणश्रीः स्वाहा' इत्येतैश्चतुर्भिर्मन्त्रैः स्वाहाकारान्तैश्चतस्र आज्याहुतीर्जुहुयात् । कल्याणश्रियः स्थाने वधूकाया नामग्रहणं कर्तव्यम् । अथवा 'भूर्या ते पतिघ्न्यलक्ष्मी देवरघ्नी जारघ्नी तां करोमि कल्याणश्रीः स्वाहा ।' 'भुवर्या ते पतिघ्न्यलक्ष्मीः' इति समानम् । 'स्वर्या ते पतिघ्न्यलक्ष्मीः' इति समानम् । 'भूर्भुवः स्वर्या ते पतिघ्न्यलक्ष्मीः' इति समानम् । एते चत्वारो मन्त्रा वधूनामोपलक्षिताः पूर्वेषां मन्त्राणां स्थाने वैकल्पिका भवन्ति । एतयोर्विकल्पयोरन्यतरेण मन्त्रचतुष्टयेन चतस्र आज्याहुतीर्हुत्वा ततः 'अघोरचक्षुरपतिघ्न्येधि' इत्यनेन मन्त्रेण चक्षुषी आज्यशेषेण विमार्ष्टि । ततः 'कया नश्चित्र आ भुवत्' इति तिसृभिर्ऋग्भिराज्यशेषेणैव केशान्तानभिमृशेत् । 'उत त्या दैव्या भिषजा' इति चतस्र ऋचः पठित्वाऽन्ते स्वाहाकारमेकं कृत्वा वधूकाया मूर्धन्याज्यं स्रुवेण जुहोति । तत् एके नेच्छन्ति । 'आ ते योनिं गर्भ एतु' इत्यनेन मन्त्रेण साभिजनकुमारं वधूकाया उत्सङ्गे स्थापयति । अथवा तूष्णीम् । ततस्तस्य कुमारस्योत्सङ्गस्थस्याञ्जलौ मङ्गल्यानि फलानि दत्त्वा ततो ब्राह्मणेभ्यः किंचिद्दत्त्वा 'पुण्याहं भवन्तो ब्रुवन्तु' इति ब्रूयात् । ततो ब्राह्मणाः 'पुण्याहम्' इति त्रिर्वदन्ति । इदं च कुमारोत्सङ्गदानं कर्म 'एके' इति वचनात् पाक्षिकम् । ततः पाक्षिकः स्विष्टकृत् । ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति । अपरे त्वेवं पठन्ति— 'आनडुहमित्युक्तं तस्मिन्नुपवेश्यान्वारब्धायां महाव्याहृतिभिर्हुत्वा पतिश्चतस्रो जुहोति'

(इति) । तेषां महाव्याहृतिभिश्चतस्र आज्याहुतीर्हुत्वा ततः 'अग्निवमाज्यादेव(? अग्निना देवेन)' इत्यनेन चतस्र आज्याहुतयो होतव्या इति । ततः 'इहैव स्तं मा वियौष्टम्' इति षड्टचं वरो जपेत् । सर्वे वा जपन्ति । 'इहैव स्तम्' इत्यादिना वधूं वरं च जनीयात्रिका गृहं प्रवेशयन्ति । ततः प्रविश्य 'दधिक्राव्णो अकारिषम्' इत्यनेन मन्त्रेण दम्पती अपि दधि संपिबतः । वरो मन्त्रं जपेत् । ततो वाग्यतौ तावदासीयातां यावदस्तमित आदित्यः । ततोऽस्तमिते 'ध्रुवैधि' इत्यादिना मन्त्रेण वरो वधूकाया ध्रुवं दर्शयति । ततो वधूः यदि पश्यति यदि न पश्यति उभयथाऽपि 'ध्रुवं पश्यामि प्रजां विन्देय' इति भणयितव्या । ततः पाणिग्रहणादारभ्य त्रिरात्रं मैथुनमकुर्वन्तौ भूमौ शयीयाताम् । 'पिबतं च त्रिप्लुतं चात्रगच्छतम् (? तृप्णुतं चा च गच्छतम्)' इति तृचेन दम्पती अपि दधि शुक्तं भुञ्जीयाताम् । वरो मन्त्रं जपेत् ।

'सायंप्रातर्वैवाहमग्निं परिचरेयाताम्' इत्युक्तं तद्व्क्ष्यामः । अत्र स्तरणाघाराज्यभागाः पाक्षिकाः । उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततः 'अग्नये स्वाहा, अग्नये स्विष्टकृते स्वाहा' इत्याज्यस्य हुत्वा ततो महाव्याहृतिभिः सर्वप्रायश्चित्तादि तन्त्रशेषं समापनीयमिति । अथ वधूः क्षिप्रं गर्भकामा भवति ततः 'अग्नये स्वाहा' इत्यस्य स्थाने 'पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ । पुमानिन्द्रश्चाग्निः पुमान्संवर्ततां मयि स्वाहा ॥' इति हुत्वा द्वितीया सौविष्टकृती । ततः पाणिग्रहणादारभ्य वरेण दशरात्रं वियोगो न कर्तव्यः । कौगृसं. १६-१८

## आपस्तम्बगृह्यसूत्रम्

आनडुहचर्मास्तरणम्, देहलीमनधिष्ठाय समन्त्रकगृहप्रवेशः, प्रवेशहोमः, अङ्के कुमारोपवेशनम्, वाग्यमः, नक्षत्रदर्शनम्

**[१]लोहितं चर्माऽऽनडुहं प्राचीनग्रीवमुत्तरलोम मध्येऽगारस्योत्तरयाऽऽस्तीर्य गृहान् प्रपादयन्नुत्तरां वाचयति दक्षिणेन पदा ॥**

विमुच्य वाहौ वरः पूर्वं गृहं स्वयं प्रविश्य यत्र दम्पत्योर्वासः तत्रागारस्य मध्ये चर्माऽऽस्तृणाति उत्तरयर्चा 'शर्म वर्म' इत्येतया । तच्चाऽऽनडुहं भवति लोहितं च वर्णेन । प्राचीनमुत्तरलोमेत्यास्तरणे प्रकारः । आस्तीर्य ततो दक्षिणेन पदा गृहान् प्रपादयति वधूं प्रवेशयति । प्रपादयंस्तामुत्तरामृचं वाचयति 'गृहान्' इत्येताम् । 'गृहान्' इति प्रकृते पुनः गृहान् इत्युच्यते— इतरथा अगारस्यापि प्रकृतत्वात् (तत्—) प्रवेशने मन्त्रः शङ्क्येत । इदमेव ज्ञापकमन्तरागारमध्ये चर्मास्तरणमिति । 'प्रपादयन् वाचयति' इति वचनान्मन्त्रकर्मणोरादिसंयोगः, न मन्त्रान्ते प्रपादनम् । * अनाकुला.

**न च देहलीमभितिष्ठति ॥**

(१) देहली नाम द्वाराधस्ताद्दारु । पर्यन्तवेदिकेत्यपरे । तां प्रपादनकाले स्वयं सा च नातिक्रामेदित्यर्थः । तयोः प्रपन्नयोरग्निमनुप्रपादयति । प्रपद्य गृहानथ तत्कालमशनमश्नीयात् । अनाकुला.

(२) सा च प्रविशन्ती देहलीं नाभितिष्ठति । केचित् चकाराद्वरोऽपीति । ताद.

**उत्तरपूर्वे देशेऽगारस्याग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते । परिषेचनान्तं कृत्वोत्तरया चर्मण्युपविशतः । उत्तरो वरः ॥**

ततो यस्मिन्नगारे चर्मास्तरणं तस्योत्तरपूर्वदेशे विवाहाग्निं प्रतिष्ठाप्याग्नेरुपसमाधानादि तन्त्रं प्रतिपद्यते । सकृत् पात्राणि, शम्याः परिध्यर्थे । उत्तरास्त्रयोदश प्रधानाहुतीः 'आगन् गोष्ठम्' इत्याद्याः लिङ्गविरोधे सत्यपि वर एव जुहोति, विधेर्बलीयस्त्वात् । भवति लिङ्गं चाविवक्षितम्, देवतास्मरणार्थत्वात् मन्त्राणाम् । उत्तरो वर इत्ययं विशेषः सर्वेषु होमेषु भवतीत्युक्तम् । उत्तरपूर्वदेशेऽगारस्येति विधिरग्नेः सर्वत्र वेदितव्यः । उत्तरयर्चा 'इह गावः प्रजायध्वम्' इत्येतया (तत् ?) उपविशतः । परिषेचनान्तवचनमानन्तर्यार्थम्, परिषेचना-

(१) आपगृ. ६।८-१२.

* ताद. अनाकुलागतम् ।

न्तरमेवोपवेशनं कर्तव्यम्, नान्यदेति । तेन भोजनं प्रागेवेति सिद्धम् । तत्रोपवेशने मन्त्र उभयोरपि भवति । इहाग्निसंबन्धाभावादुत्तरो वर इत्युक्तम् । प्राङ्मुखौ चोपविशतः । $ अनाकुला.

**अथास्याः पुंस्वोर्जीवपुत्रायाः पुत्रमङ्क उत्तरयोपवेश्य तस्मै फलान्युत्तरेण यजुषा प्रदायोत्तरे जपित्वा वाचं यच्छत आ नक्षत्रेभ्यः ॥**

( १ ) या पुमांसमेव सूते न स्त्रियं सा पुंसूः, तस्याः पुंस्वः । 'पुंस्वो जीवपुत्रायाः' इति पाठः । न रेफः पाठ्यः, पठ्यमानो वा छान्दसो द्रष्टव्यः । जीवा एव पुत्रा यस्याः, न मृताः, तस्याः जीवपुत्रायाः । जीवपत्या इति च द्रष्टव्यम्, 'तथा मङ्गलानि' (आपगृ. २।१४) इति । एवंभूतायास्त्रैवर्णिकस्त्रियाः पुत्रमुत्तरयर्चा 'सोमेनाऽऽदित्याः' इत्येतया अस्या वध्वा अङ्के उपवेश्य तस्मै कुमाराय फलान्युत्तरेण यजुषा 'प्र स्वस्थः प्रेयम्' इत्यनेन प्रदाय तत उत्तरे ऋचौ 'इह प्रियम्, सुमङ्गलीः' इत्येते जपित्वा तत उभौ तस्मिन्नेव चर्मण्यासीनौ वाचं यच्छतः आ नक्षत्रेभ्यः नक्षत्राणामुदयादित्यर्थः । कुमारश्च फलानि गृहीत्वा यथार्थं गच्छति । अनाकुला.

( २ ) पुंस्वोः पुंस्वाः इत्यर्थे (१ त्यार्ष) पाठः । या पुंस एव सूते, न स्त्रीरपि, या च सूते एव, न तु वन्ध्या सती क्रयादिना पुत्रवती, सा पुंसूः । जीवन्त एव पुत्राः पुमांसो यस्याः सा जीवपुत्रा, न पुनः 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम् (पासू. १।२।६८) इत्येकशेषवचनाद्यस्या दुहितरोऽपि जीवन्ति, पुत्रश्चैको जीवति, साऽपीह जीवपुत्रा विवक्षिता, पुंस्वोरिति विशेषणानुपपत्तेः । एवंभूतायाः पुत्रं 'सोमेनाऽऽदित्याः' इत्येतया वध्वा अङ्के उपवेश्य 'प्र स्वस्थः' इति यजुषा पुत्राय फलानि कदल्यादीनि प्रदाय 'इह प्रिय प्रजया' इति ऋचौ जपित्वा, उभौ वाचं यच्छतः । आ नक्षत्रेभ्यः नक्षत्राणामोदयात् । ताद.

$ ताद. अनाकुलागतम् ।



**उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य उत्तराभ्यां यथालिङ्गं ध्रुवमरुन्धतीं च दर्शयति ॥**

( १ ) 'उदितेषु नक्षत्रेषु' इति वचनात् ततः प्राक् तस्मिन्नेव चर्मणि वाग्यतयोरासनं पश्चादुपनिष्क्रमणम् । उदितेष्वित्येव सिद्धे नक्षत्रग्रहणं विस्पष्टार्थम् । उत्तराभ्यां 'ध्रुवक्षितिः' 'सप्तर्षयः' इत्येताभ्याम् । उभयत्र मन्त्रेण दर्शनं वध्वाः कर्म, वरस्तु 'पश्य ध्रुवम्' इति निर्दिश्य पूर्वां वाचयति, पश्चात् 'अरुन्धतीम्' इत्युत्तराम् । ततो वाग्विसर्गः । मन्त्रलिङ्गादेव यथालिङ्गदर्शने सिद्धे यथालिङ्गवचनं विकल्पार्थम्— उत्तराभ्यां ध्रुवमरुन्धतीं च दर्शयति यथालिङ्गं वेति । तेनोत्तरस्यामृचि सर्वेषां सप्तर्षीणां कृत्तिकादीनामरुन्धत्याश्च सहदर्शनं वध्वाः कर्म पक्षे भवति, केवलमरुन्धत्या एव वा । अनाकुला.

( २ ) उत्तराभ्यां 'ध्रुवक्षितिर्ध्रुवयोनिः' इत्येताभ्यां यथालिङ्गं पूर्वया ध्रुवमुत्तरयाऽरुन्धतीं च दर्शयति वधूम् । यथालिङ्गमिति च जातकर्मवद्द्वाभ्यां द्वाभ्यामेकैकं मा भूदिति । केचित् 'यथालिङ्गम्' इति अत्र नास्ति, प्रयोक्तृणां प्रमादात् प्रदेशान्तरदृष्टमिह संचरितपठितमिति । अपरे 'उत्तराभ्यां यथाक्रमं ध्रुवमरुन्धतीं च दर्शयति, यथालिङ्गं वा' इति भित्त्वा सूत्रं साध्याहारं व्याचक्षते— 'सप्तऋषयः प्रथमाम्' इत्येतया सप्तऋषीन् कृत्तिका अरुन्धतीं च सह दर्शयति अरुन्धतीमेव वेति विकल्पार्थं यथालिङ्गवचनमिति । ताद.

आग्नेयस्थालीपाकः

**अथैनामाग्नेयेन स्थालीपाकेन याजयति ॥**

( १ ) अथेति वचनादेतस्यामेव रात्र्यां स्थालीपाको भवति । स्थाल्यां पच्यते इति स्थालीपाकः । तस्य देवताविधानम्— आग्नेयेनेति । ननु विधास्यते— 'अग्निर्देवता, स्वाहाकारप्रदानः' इति, सत्यम्, अपरमपि तत्र भवति— 'अग्निः स्विष्टकृद् द्वितीयः' इति ।

( १ ) आपगृ. ७।१-१६.

ततश्च स एव यदि देवताविधिः स्यात् द्विदेवत्यमिदं हविः स्यात् । ततश्च निर्वपणकाले ताभ्यामुभाभ्यां संकल्पः क्रियेत । यद्यपि वस्तुतो गुणभूतः स्विष्टकृद्यागः तथाऽपि प्रधानवत्तत्र चोद्यते— 'अग्निः स्विष्टकृद्द्वितीयः' इति । ततश्च तस्मा अपि संकल्पः क्रियेत । तस्मात् केवलोऽयमाग्नेयस्थालीपाक इति वक्तव्यम् । एवमाग्नेयस्यैव प्रदानस्य 'यद्यप्रत्तदेवतम्' (आपश्रौ. ९।१५) इत्येतत् प्रायश्चित्तं भवति । स्विष्टकृतस्तु 'प्रत्तदेवतम्' इत्येतदेव । 'एनां याजयति' इति वचनात् सहत्वमुभयोरस्मिन् कर्मणि नास्ति । वध्वा एवेदं कर्म, वरस्य त्वार्त्विज्यमेव । तेन यदिदं स्थालीपाकपरिवेषणं व्रीह्यादि दक्षिणा च तत् वधूधनस्यैव भवति । यत्रेदमुच्यते 'पत्नी हि पारीणह्यस्येशे' इति । अनाकुला.

(२) ननु 'अथ पत्न्यवहन्ति' 'श्रपयित्वा ....' इत्येतावदेव वक्तव्यम्, यत उत्तरत्र 'अग्निर्देवता' (आपगृ. ७।५) इति विधानादाग्नेयत्वं सिद्धम्, स्थालीपाकेनेति तु श्रपयित्वेति विधानात्, एनां याजयतीति चान्वारब्धायामिति विधानात् । अतः किमर्थमिदमधिकमारभ्यते "अथैनामाग्नेयेन स्थालीपाकेन याजयति' इति ?

उच्यते— सूत्रं तावदृषिप्रणीतं नानर्थकं भवितुमर्हति । तेन लोके व्युत्पत्तिसिद्धाध्याहारादिभिरपि यः सूत्रस्यार्थः संपाद्यते सोऽपि वेदार्थोऽनुष्ठेयः । स उच्यते— ध्रुवमरुन्धतीं च दर्शयित्वा, अनन्तरं यत्राऽऽग्नेयेन स्थालीपाकेन यागं करोति तत्रैवैनां पत्नीं याजयति पत्न्यामन्वारब्धायां जुहोति, न पर्वसु पार्वणविकारेषु च । एवमतिदेशविशेषार्थतया सूत्रमर्थवदेव ।

अन्ये— याजयतीति वचनात् वरादन्योऽप्यस्य स्थालीपाकयागस्य कर्तेति । तन्न, प्रकरणेनास्य विवाहाङ्गत्वात् "सहाङ्गं प्रधानम्" (आपप. २।३९) इति साङ्गस्य प्रधानस्यैककर्तृकत्वात् ।

केचित्— उत्तरत्र न केवलमग्निर्देवतेति विधिः, 'अग्निः स्विष्टकृद्द्वितीयः' इत्यपि । तेन द्विदेवत्योऽयं स्थालीपाको मा भूत्, किंत्वेकदैवत्य एवेत्येवमर्थमाग्नेयेनेति विधानम् । तेनाऽऽग्नेय एव संकल्पितस्य व्रीह्यादेरर्थाक्षिप्तो लौकिको निर्वापः कार्यः । 'एनां याजयति' इति तु नास्मिन् कर्मण्युभयोरधिकारः, किं तु वध्वा एव । वरस्तु ऋत्विक्स्थानीयः । तेन होमादौ द्रव्यत्यागः स्त्रीधनादेवेति । तन्न वध्वेकाधिकारे हि प्रकरणावगतविवाहाङ्गत्वबाधः, अधिकारसाध्यभेदेन शास्त्रतदर्थयोर्भेदात् । आचारसिद्धवरकर्तृकत्वबाधापत्तिश्च, अन्यार्त्विज्येऽप्यविरोधात् । तात्.

*पत्न्यवहन्ति ॥

**श्रपयित्वाऽभिघार्य प्राचीनमुदीचीनं वोद्वास्य प्रतिष्ठितमभिघार्याग्निरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायां स्थालीपाकाज्जुहोति ॥**

**सकृदुपस्तरणाभिघारणे द्विरवदानम् ॥**

**अग्निर्देवता स्वाहाकारप्रदानः ॥**

**अपि वा सकृदुपहत्य जुहुयात् ॥**

**अग्निः स्विष्टकृद्द्वितीयः ॥**

**सकृदुपस्तरणावदाने द्विरभिघारणम् ॥**

**मध्यात् पूर्वस्यावदानम् ॥**

**मध्ये होमः ॥**

**उत्तरार्धादुत्तरस्य ॥**

**उत्तरार्धपूर्वार्धे होमः ॥**

**लेपयोः प्रस्तरवत्तूष्णीं बर्हिरक्त्वाऽग्नौ प्रहरति ॥**

**सिद्धमुत्तरं परिषेचनम् ॥**

**तेन सर्पिष्मता ब्राह्मणं भोजयेत् ॥**

**योऽस्यापचितस्तस्मा ऋषभं ददाति ॥**

(१) अस्य वरस्य योऽपचितः पूज्यः आचार्यः, तस्मै ऋषभं स्थालीपाकस्य दक्षिणां ददाति वधूः । स्वकुलादानीयर्त्विजे वराय दातव्या सती दक्षिणा ज्ञाया-

---

* इतः परं यानि निर्व्याख्यानानि सूत्राणि तेषां व्याख्यानम् अग्निमुखप्रकरणे (संका. पृ. १३९५–१३९९) द्रष्टव्यम् ।

पत्योः अन्योन्यदानप्रतिग्रहाभावात् तदाचार्याय चोच्यते । तेनासौ परिक्रीतो भवति । दृश्यते चायं न्यायो धर्मशास्त्रे 'न पिता याजयेत् पुत्रं न पुत्रः पितृयाजनम्' इत्याद्युक्त्वाऽऽचार्याय दक्षिणां दद्युरिति । अनाकुला.

(२) ननु इदं सूत्रमयुक्तमिव प्रतिभाति, 'योऽस्यापचितस्तमितरया' (आपगृ. ३।९) इतिवद्दूरादन्यस्य दानकर्तृत्वप्रतीतेः, इह चान्यस्याभावात् । यद्यपि पत्नी विद्यते, तथाऽपि तस्या भर्तुरपि प्रवासे सहाधिकारेषु कर्मसु मध्यगधनत्यागेऽनुमतिद्वारेणैव कर्तृत्वाभ्युपगमात् । अथात्र— 'एनां याजयति' इति वचनात् वधूर्यजमाना । सा स्त्रीधनाद्वरस्यापचिताय ददाति । तेन च ऋत्विग्भूतो वर आनतो भवति । न च वरायैव दानम्, जायापत्योरन्योन्यदानाद्यभावात्— इत्युच्यते, नैवं तत् । वध्वेकाधिकारे ह्यस्योभयतो विवाहाङ्गत्वदृष्टत्वेन प्रतिपन्नविवाहाङ्गत्वबाधः, अधिकारसाध्यभेदेन शास्त्रतदर्थयोर्भेदात् । अथोभयाधिकारविवाहसिद्ध्यर्थमेव वधूरनेन प्रधानकर्मणाऽपि यागेन संस्क्रियते, तर्हि वध्वेकाधिकारमित्युक्तिमात्रमिति वृथा स्त्रीधनव्ययः । तस्मात् सूत्रं यथोपपन्नं स्यात् तथा व्याख्येयम् ।

अत्रोच्यते— एवं तर्ह्यध्याहारेण वा विपरिणामेन वा व्याख्यायते । योऽस्याऽऽत्मनोऽपचितः पूज्यः तस्मा ऋषभं ददाति । यद्वा योऽस्य स्थालीपाकयागस्य कर्तुरपचितस्तस्मा एतद्यागकर्ता ऋषभं ददाति, न तु स्थालीपाकयागान्तराणां कर्ता, तेषामपूर्वत्वात् । अथवा अस्येति षष्ठ्या अयमिति विपरिणामः । योऽयं लोके विद्याभिजनादिसंपत्त्या अपचितः तस्मा अयमेतत्स्थालीपाककर्ता ऋषभं ददाति । सर्वथा त्वेतद्विकृतिष्वपि स्थालीपाकान्तरेषु ऋषभदानं नास्त्येव । ताद.

विवाहव्रतम्

**'एतदहर्विजानीयाद्यदहर्भार्यामावहते ॥**

(१) एतदहः एतन्नक्षत्रं विजानीयात् न विस्मरेत् यदहः यस्मिन्नक्षत्रे भार्याम् आवहते तत्कुलादानयति । यस्मिन्नक्षत्रे पाणिग्रहणं कृतं तत् न विस्मर्तव्यमित्यर्थः । आवहते इत्यनेनाऽऽदिपाणिग्रहणं विवक्षितम् । अविस्मरणोपदेशे प्रयोजनं संवत्सरेसंवत्सरे तस्मिन्नक्षत्रे कर्मविशेषः । कः पुनरसौ ? 'यच्चैनयोः प्रियं स्यात्' (आध. २।१।७) इत्यादि सामयाचारिकेषूपदिष्टः । न चासौ विधिः पार्वणविशेषः, यदि स्यात् 'तस्योपचारः पार्वणेन व्याख्यातः' इत्येतदसमञ्जसं स्यात् । अथ स विधिरेवेह कस्मान्नोपदिश्यते ? उच्यते— इहोपदेशे प्रकरणाद्विवाहाङ्गत्वं विज्ञायेत । ततश्च शम्यादयोऽपि विवाहधर्माः स्युः । किंच सर्वचरणार्थः तत्रोपदेशः । अनाकुला.

(२) यस्मिन्नहनि गृहप्रवेशनादि स्थालीपाकान्तं कर्म करोति तदेतदहरवधित्वेन विजानीयात् तत आरभ्य त्रिरात्रमुभयोरधःशय्येत्यादि कर्तुम् ।

केचित्— यस्मिन्नक्षत्रे विवाहोऽभूत् तस्य न विस्मरेत् धर्मशास्त्रे 'श्वोभूते स्थालीपाकः' (आध. २।१।१०) इत्युपदिष्टकर्म प्रतिसंवत्सरं कर्तुम् । तस्य चेहोपदिष्टस्य तत्रोपदेशः— कथं विवाहाङ्गत्वं शम्याश्च मा भूवन्, सर्वचरणार्थता च कथं स्यादिति । प्रकृतत्वादेव च स्थालीपाकादारभ्य त्रिरात्रमुभयोरधःशय्येत्यादि भविष्यतीति । तन्न, यथोक्तकर्मान्तरे विधेरेव निरस्तत्वात् 'पार्वणेन' (आपगृ. ७।२३) इत्यत्र । ताद.

**त्रिरात्रमुभयोरधःशय्या ब्रह्मचर्यं क्षारलवणवर्जनं च ॥**

(१) स्थालीपाकादारभ्य त्रिरात्रमुभयोः दम्पत्योः अधःशय्या, नोपरि खट्वादौ, ब्रह्मचर्यं मैथुनवर्जनम्, क्षारलवणयोश्च वर्जनं भोजने । तत्र क्षारलवणवर्जनं स्थालीपाकात् प्रागध्वनि न भवति । ब्रह्मचर्यं तु तत्रापि भवति, चतुर्थ्यां समावेशनविधानात् । इदं तु ब्रह्मचर्यवचनं दार्ढ्यार्थं यद्यपि सह शयनमुभयोः तथापि मैथुनवर्जने यत्नः कार्य इति । अनाकुला.

(२) उभयोः दम्पत्योः स्थालीपाकादारभ्य त्रिरात्रमधःशय्या स्यात्, न तु खट्वादौ । नापि पृथक्शय्या, उभयोरिति ग्रहणात् । तथाऽष्टाङ्गमैथुनवर्जनलक्षणं ब्रह्म-

1. (६) आपगृ. ८।७–९.

चर्यं स्यात् । मैथुनस्याष्टाङ्गत्वमपि बृहस्पतिनोक्तम्— ‘स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥’ इति । एतच्च स्थालीपाकात् प्रागप्यध्वनि, ‘शेषं समावेशने जपेत्’ (आपगृ. ८।१०) इत्युत्तरत्र क्रमविधानात् । अत एवात्र सूत्रे शय्यैक्यात् दुर्वारमपि मैथुनमतिप्रयत्नेन वर्जनीयमित्येवमर्थस्तन्निषेधः । तथैव क्षारलवणवर्जनं च स्यात् । चकारान्मधुमांसदन्तधावनाञ्जनाभ्यञ्जनानुलेपनस्रग्धारणानां वर्जनमपि । यद्वा ब्रह्मचर्यपदेनैव मध्वादिसप्तकमपि निषिद्धम् । चकारस्तूक्तसमुच्चयार्थ एव । सर्वत्र त्रिरात्रमित्येव । ताद.

शय्यामन्तरेण दण्डस्थापनम्

**तयोः शय्यामन्तरेण दण्डो गन्धलिप्तो वाससा सूत्रेण वा परिवीतस्तिष्ठति ॥**

(१) तयोः दम्पत्योः शय्यामन्तरेण शयनस्य मध्ये दण्डः क्षीरिवृक्षोद्भवः गन्धेन सुरभिणा लिप्तः पुष्पैश्चालङ्कृतः वाससा सूत्रेण वा परिवीतः तिष्ठति स्थापयितव्यः । अन्योन्यसंस्पर्शो मा भूदिति । अनाकुला.

(२) तयोः व्रतस्थयोर्दम्पत्योर्यावत्त्रिरात्रमभिन्ना शय्या, तामेवान्तरेण तस्या एव मध्ये, न तु त्रिरात्रादूर्ध्वं नानाशय्यामेकशय्यां चान्तरेणापीति, तयोरिति प्रकृतपरामर्शात् । दण्डो गन्धलिप्तः चन्दनानुलिप्तः । गन्धस्य प्रदर्शनार्थत्वात् पुष्पैरप्यलङ्कृतः । वाससा सूत्रेण वा परिवीतस्तिष्ठति स्थापयितव्यः । अस्मिंश्च दण्डे गन्धर्वो विश्वावसुर्भावयितव्यः, ‘उदीर्ष्वातो विश्वावसो’ इति मन्त्रलिङ्गात् । अत एवायं दण्डो नैयग्रोध औदुम्बर आश्वत्थः प्लाक्षो वा, ‘एते वै गन्धर्वाप्सरसां गृहाः’ (तैसं. ३।४।८।४) इत्यर्थवादात् । ताद.

## हिरण्यकेशिगृह्यसूत्रम्

गृहप्रवेशः

**[१]‘अगारं प्राप्याथैनां संशास्ति— ‘दक्षिणं पादमग्रेऽतिहर देहलिं माऽधिष्ठाः’ इति ॥**

(१) हिगृ. १९।७।६–१८.

ग्रामान्तरे चेद्विवाहः प्रविश्य ग्राममगारं प्राप्य, एकग्रामे चेदगारमेव प्राप्यानन्तरमेनां संशास्ति ‘दक्षिणं पादम्’ इत्यनेन । अथशब्दः प्राप्यैव स्वगृहमुत्तरं कर्म कार्यम्, न स्व( ? श्वशुर )गृहे एव सर्वं विवाहकर्म कार्यमित्येतदर्थम् । यथासंप्रैषं सा दक्षिणं पादमग्रे विहृत्यानुद्धृत्य पूर्वं( ? वामं ) देहलीमनधिष्ठाय प्रविशति । (अग्रे ?) देहलिमिति छान्दसं ह्रस्वत्वम् । मातृद.

अग्न्युपसमाधानम्, आनडुहचर्मोपवेशनम्, वाङ्नियमः

**पूर्वार्धे शालायां न्युप्योपसमादधाति । अपरेणाग्निं लोहितमानडुहं चर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति ॥**

यस्यां शालायां दम्पत्योर्निवासस्तस्यां पूर्वार्धे देशे कृत्वा देशसंस्कारं न्युप्य विवाहाग्निमुपसमादधाति । अपरेण तमग्निं रोहितवर्णमानडुहं चर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति वरः । मातृद.

**तस्मिन् प्राङ्मुखावुदङ्मुखौ वोपविशतः । पश्चात्पतिं भार्योपविशति— ‘इह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणोऽपि पूषा निषीदतु ॥’ इति ॥**

तस्मिंश्चर्मणि जायापती प्राङ्मुखावुदङ्मुखौ वा सहोपविशतः ‘इह गावः’ इत्येतया । मन्त्र उभयोः । अपरस्यां तु दिशि पत्युर्भार्योपविशति यद्युदङ्मुखौ स्याताम्, प्राङ्मुखत्वे दक्षिणतः । एवं पुनरुपविशतिग्रहणमनन्तरेण पक्षेण संबन्धार्थम् । मातृद.

**वाचंयमावासाते आ नक्षत्राणामुदयात् ॥**

उपवेशनादारभ्य वाग्यतौ जायापती तथैवाऽऽनक्षत्राणामुदयादासाते । आसाते इति वचनं स्नानादिप्रतिषेधार्थं देशान्तरप्रतिषेधार्थं च । ‘उदितेषु नक्षत्रेषु’ इति सिद्धे आ नक्षत्राणामुदयादिति वचनमहन्येव प्रवेशनमुपवेशनं च भवेतामित्येतदर्थम् । मातृद.

दिङ्–नक्षत्र–चन्द्रमस्–सप्तर्षि–ध्रुवोपस्थानानि

**उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य ‘देवीः षडुर्वीः’ इति दिश उपतिष्ठते ॥**

उदितेषु नक्षत्रेषु दृश्यमानेषु वध्वा सह निर्गत्यागारात् प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य यत्र नक्षत्रादीनि द्रष्टुं शक्यन्ते, 'देवीः' इत्यर्धर्चेन सकृदुक्त्वा दिश उपतिष्ठते। 'उदितेषु नक्षत्रेषु' इति वचनं सर्वोपस्थानस्य कालार्थम्। तेन पूर्वपक्षे एव विवाहः, नापरपक्षे इति, चन्द्रमसस्तदाऽनुपलम्भात्। केचित्— 'आ नक्षत्राणाम्' इत्यस्य मर्यादावचननिवृत्त्यर्थत्वं मन्यन्ते, तद्व्याख्यानतः सिध्यति। सर्वाणि उपस्थानानि पत्या कार्याणि, एकवचनेनोपदेशात्। भार्या च समीपे तिष्ठतीत्येके। अन्ये— पुरुष(? उभय)संस्कारत्वाद्भार्यया (अपि) कर्तव्यम्, अविवक्षितमेकवचनमिति। मातृद्द.

**'मा हास्महि प्रजया' इति नक्षत्राणि॥**

'मा हास्महि' इति पादेन नक्षत्राण्युपतिष्ठते। मातृद्द.

**'मा रधाम द्विषते सोम राजन्' इति चन्द्रमसम्॥**

'मा रधाम' इति चन्द्रमसमुपतिष्ठते। मातृद्द.

**'सप्तर्षयः प्रथमां कृत्तिकानामरुन्धतीं ये ध्रुवतां ह निन्युः। षट्कृत्तिकामुख्ययोगं वहन्तीयमस्माकं भ्राजत्वष्टमी॥' इति सप्तर्षीनुपस्थाय ध्रुवमुपतिष्ठते— 'ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसि ध्रुवमस्थितम्। त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः॥ नमो ब्रह्मणे ध्रुवायाच्युतायास्तु नमो ब्रह्मणः पुत्राय प्रजापतये नमो ब्रह्मणः पुत्रेभ्यो देवेभ्यस्त्रयस्त्रिंशेभ्यो नमो ब्रह्मणः पुत्रपौत्रेभ्योऽङ्गिरोभ्यो यस्त्वा ध्रुवमच्युतं सपुत्रं सपौत्रं ब्रह्म वेद ध्रुवा अस्मिन् पुत्राः पौत्रा भवन्ति प्रेष्यान्तेवासिनो वसनं कम्बलानि कंसं हिरण्यं स्त्रियो राजानोऽन्नमभयमायुः कीर्तिर्वर्चो यशो बलं ब्रह्मवर्चसमन्नाद्यमित्येतानि मयि सर्वाणि ध्रुवाण्यच्युतानि सन्तु॥ ध्रुवं त्वा ब्रह्म वेद ध्रुवोऽहमस्मिँल्लोकेऽस्मिंश्च जनपदे भूयासम्। अच्युतं त्वा ब्रह्म वेद माऽहमस्माल्लोकादस्माच्च जनपदाच्च्योषि द्विषन्मे भ्रातृव्योऽस्माल्लोकादस्माच्च जनपदाच्च्यवताम्। अचेष्टं त्वा ब्रह्म वेद माऽहमस्माल्लोकादस्माच्च जनपदाच्चेष्टिषि द्विषन्मे भ्रातृव्योऽस्माल्लोकादस्माच्च जनपदाच्चेष्टताम्। अव्यथमानं त्वा ब्रह्म वेद माऽहमस्माल्लोकादस्माच्च जनपदाद्व्यथिषि द्विषन्मे भ्रातृव्योऽस्माल्लोकादस्माच्च जनपदाद्व्यथताम्। नभ्यं त्वा सर्वस्य वेद नभ्यमहमस्य जनपदस्य भूयासम्। मध्यं त्वा सर्वस्य वेद मध्यमहमस्य जनपदस्य भूयासम्। तन्तिं त्वा सर्वस्य वेद तन्तिरहमस्य जनपदस्य भूयासम्। मेथीं त्वा सर्वस्य वेद मेथ्यहमस्य जनपदस्य भूयासम्। नाभिं त्वा सर्वस्य वेद नाभिरहमस्य जनपदस्य भूयासम्। यथा नाभिः प्राणानां विषूवानेवमहं विषूवानेकशतं तं पाप्मानमृच्छतु योऽस्मान् द्वेष्टि यं च वयं द्विष्मो भूयांसि मामेकशतात्पुण्यान्यागच्छन्तु' इति॥**

'सप्तर्षयः' इत्यनेन सप्तर्षीनुपस्थाय ध्रुवमुपतिष्ठते 'ध्रुवक्षितिः' इत्यनेन। सप्तर्षयो ध्रुव इति च लोके प्रसिद्धानि नक्षत्राणि। उपतिष्ठते इत्यनुवर्तमाने पुनरुपस्थायेति चोपतिष्ठते इति वचनं पूर्वोपस्थानैरतुल्यत्वख्यापनार्थम्। तेनादर्शनेऽपि काले दर्शनवदेव तेषामुपस्थानं तस्यां दिशि कर्तव्यम्। तत्राप्येकैनैवोपस्थानवचनेन सिद्धे द्विरुपस्थानवचनमुभयस्याप्यतुल्यत्वख्यापनार्थम्। तेनारुन्धत्यष्टमानां सप्तर्षीणामुपस्थानम्, ध्रुवस्य केवलस्यैव। मातृद्द.

### मनोज्ञपुरुषसंभाषणम्, आग्नेयस्थालीपाकः, विवाहदक्षिणा

**अत्र मनोज्ञेन संभाष्यागारं प्राप्याथैनामाग्नेयेन स्थालीपाकेन याजयति॥**

अत्र अस्मिन्नेवोपस्थानदेशे मनोज्ञेन मनोहरणेन मनसः प्रियेण पुरुषेण संभाष्य प्रतिनिवृत्त्यागारं प्रविश्यानन्तरमेनां वधूमग्निदेवत्येन, स्थाल्यां पच्यत इति

स्थालीपाकः चरुः, तेन याजयति। अथेति प्रवेशानन्तरं रात्रावेव क्रियार्थम्, श्वोभूतेऽहनि मा भूदिति। एनामिति स्त्रीसंस्कार एवायं विवाहैकदेश इति व्याख्यापनार्थम्। मातृद.

**पत्न्यवहन्ति ॥**

पत्नी तदर्थान् व्रीहीनवहन्ति। मातृद.

**श्रपयित्वाऽभिघार्योद्वास्याग्नये हुत्वाऽग्नये स्विष्टकृते जुहोति ॥**

तस्मिन्नग्नौ स्थालीपाकं श्रपयित्वाऽभिघार्योद्वास्याग्नये हुत्वाऽग्नये स्विष्टकृते जुहोति। अत्र परिभाषितः स्वाहाकार उक्तः। अन्नद्रव्यकाणामापूर्विकत्वम्, तेनायमापूर्विकः। तत्र प्रयोगः— समिध्य परिस्तीर्य यावदर्थं द्रव्याणि प्रयुज्य पवित्रे कृत्वा प्रोक्षणीं संस्कृत्य प्रोक्षति। ततः पत्नी उलूखले व्रीहीनोप्य मुसलेनावहत्य फलीकरणान्तं करोति। ततः श्रपयित्वा दर्वीं संमृज्याऽऽज्यं संस्कृत्याभिघार्योद्वास्य परिषिच्य द्वे समिधावाधाय स्थालीपाकं दर्व्योपहत्य 'अग्नये स्वाहा' इति हुत्वा पुनर्भूय उपहत्य 'अग्नये स्विष्टकृते स्वाहा' इति उत्तरार्धपूर्वार्धे हुत्वा परिषेकविसर्गं करोति। यद्यापूर्विक एवायमग्नये स्विष्टकृते जुहोतीत्यनर्थकम्। तर्ह्याघारवानापूर्विको वाऽयम्। तत्राऽऽघारवत्त्वे स्विष्टकृतोऽ( ? कृद )र्थे देवतापदेनैव वा होमार्थमिदम्। आघारवत्त्वे तु पुन प्रयोगः— व्याहृतिपर्यन्तमविकृतम्। तत्र विशेषः स्तरणाभिघारणार्थस्य च मेक्षणस्य पुनः प्रयोगः। प्रोक्षणादूर्ध्वमभिघारणमुद्वासनं च कृत्वा व्याहृतिपर्यन्तं मेक्षणेन दर्व्यामुपस्तीर्य चरोर्मध्यात्पूर्वार्धाच्च द्विरवदाय, पश्चार्धाच्च पुनः पञ्चावत्तिनाम्, अभिघार्य प्रत्यभिघार्य चरुम्, 'अग्नये स्वाहा' इति हुत्वा वारुण्यादीन् हुत्वा विकल्पेन जयादींश्च, दर्व्यामुपस्तीर्योत्तरार्धाच्चरोः सकृन्महदवदाय, द्विः पञ्चावत्तिनाम्, द्विरभिघार्य 'अग्नये स्विष्टकृते स्वाहा' इति उत्तरार्धपूर्वार्धे जुहोति। शिष्टं तुल्यम्। मातृद.

**तेन ब्राह्मणं विद्यावन्तं परिवेवेष्टि ॥**

तेन स्थालीपाकशेषेण ब्राह्मणं विद्यावन्तं श्रुताध्ययनसंपन्नं परिवेवेष्टि तर्पयति भोजयतीत्यर्थः। मातृद.

**योऽस्यापचितो भवति तस्मा ऋषभं ददाति ॥**

योऽस्य वरस्यापचितः पूजनीया( ? य आ )चार्यस्थानीयो भवति। वर्तमाने निष्ठा। षष्ठी च कर्तरि। तस्मा ऋषभं ददाति। विवाहाङ्गमेतद्दानम्, न स्थालीपाकाङ्गम्। केचित् 'तेन ब्राह्मणम्' इत्यादि 'योऽस्यापचितो भवति' इत्येतदन्तं सूत्रं कुर्वन्ति। तेषामपचित एव भोजयितव्यः, तस्मा ऋषभो दातव्यः। मातृद.

विवाहव्रतम्

**[1]त्रिरात्रमक्षारालवणाशिनावधःशायिनावलंकुर्वाणौ ब्रह्मचारिणौ वसतः ॥**

अथ द्वावेव शयानावलङ्कुर्वाणौ ब्रह्मचारिणौ मैथुनमकुर्वाणौ सह वसतः। ब्रह्मचारिव्रतस्य प्रदर्शनधर्मा रूपाण्यद्यापि प्रतिषिध्यन्ते( ? )। अत ऊर्ध्वमित्यनुवृत्तेरूर्ध्वं गृहप्रवेशनीयादेव त्रिरात्रव्रतम्। यद्येवं प्राक् व्रताभावः प्राप्नोति। एवं तर्हि योगविभागः करिष्यते। 'अक्षारालवणाशिना... वसतः' इति। तेन विवाहादारभ्य एतद्व्रतम्। ततः 'त्रिरात्रमन्तर्हितम् ( ? मत ऊर्ध्वम् )' इति। तेन प्राक् चोर्ध्वं च सिद्धम्। पुनरेवमपि त्रिरात्रग्रहणमनर्थकम्, 'चतुर्थ्याम्' शेषमिति( ? इति शेष— ) वचनादेव सिद्धत्वात्। नैष दोषः, नियमार्थत्वात्। बह्वृचानामप्युक्तं 'त्रिरात्रं द्वादशरात्रं संवत्सरं चैकऋषिव्रतम् ( ? ऋषिर्जायते )' इति। मातृद.

## मानवगृह्यसूत्रम्

रथावरोहणम्, मङ्गलप्रादुर्भावनम्, सायं गृहप्रवेशः

**[2]अपरस्मिन्नह्नः संधौ गृहान् प्रतिपादयीत ॥**

अपरस्मिन्नह्नः दिवसस्यापरस्मिन् ( यस्मिन् ? ) संधौ, निशायामित्यर्थः। गोधूलिके वधूं गृहे प्रपादयेत् प्रवेशयेदित्यर्थः। अष्टाभा.

---

( १ ) हिगृ. १९।७।२२; संप्र. ८४५; संग. २९१.
( २ ) मागृ. १।१४।१-१५.

**'प्रति ब्रह्मन्' इति प्रत्यवरोहति ॥**

'प्रति' अनेन प्रत्यवरोहयेदिति । रथाद्यजमानः ।

अष्टाभा.

**मङ्गलानि प्रादुर्भवन्ति ॥**

मङ्गलानि दधिचन्दनादीनि मङ्गलसूक्तवाक्यानि च गृहात्प्रादुर्भवन्ति प्रकटीक्रियन्ते । अष्टाभा.

**गोष्ठात्संततामुलपराजिं स्तृणाति ॥**

**रथादध्योपासनात् 'येष्वध्येति प्रवसन्येषु सौमनसं महत् । तेनोपह्वयामहे ते नो जानन्त्वागतम् ॥' इति तयाऽभ्युपैति ॥**

गोष्ठात् । गोष्ठं गृहात् बाह्यं द्वारादिप्रदेशम् । संततामुलपराजिं प्रागग्रान् दर्भान् स्तृणाति । रथादारभ्य गृहं यावदित्यर्थः । संतता अविच्छिन्ना स्तृणीयात् । उपासनं गृहमाहुः । अध्वर्युः स्तरणं कुर्यात् । 'येष्वध्येति' अनेन मन्त्रेणोलपराजिं कृत्वा, तयेति सर्वनाम्नोलपराजिरेव परामृश्यते, तयोलपराज्याऽभ्युद्गच्छति रथादध्योपासनात् । अष्टाभा.

**'गृहानहं सुमनसः प्रपद्ये वीरं हि वीरवतः सुशेवा । इरां वहन्ती घृतमुक्षमाणास्तेष्वहं सुमनाः संवसाम ॥' इत्यभ्याहिताग्निं सोदकं सौषधमावसथं प्रतिपद्यते रोहिण्या मूलेन वा । यद्वा पुण्योक्तम् ॥**

'गृहानहं सुमनसः' इत्यनेन मन्त्रेणाभ्याहिताग्निमग्निं पुरस्कृत्य सोदकं सौषधं लाजादि चौषधं गृहीत्वा आवसथं गृहं पित्रनुज्ञया प्रविशेदित्यर्थः । यस्य तु पिता पृथगेव रथं प्रवेशार्थं नान्यम् (? आवसथं प्रवेशार्थं नानु) जानाति स पितृगृह एवं(? व) प्रतिपद्यते । तस्मिंश्च विद्यन्त एवाग्न्यादिकान्याद्यानि । विशेषणमनर्थकं स्यात् पितृगृहेऽभ्याहिताग्न्यादिः(? दिं) । अविद्यमानपितृकस्य तु यथाधारणमौद्वाहिकस्य नियम्यत इति वक्ष्यामः (?) । रोहिण्यां रोहिणीनक्षत्रे मूले वा । यद्वा ज्योतिःशास्त्रादौ पुण्यमुक्तं तेनानुकूलेन । प्रशस्तं मुहूर्तम् आवसथं प्रतिपद्यते इत्यर्थः । अष्टाभा.

आनडुहचर्मणि वधूपवेशनम्, वधूत्सङ्गे ब्रह्मचारिण उपवेशनं तदञ्जलिपूरणं च, ध्रुवादिदर्शनम्

**पश्चादग्ने रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य तेषु वधूमुपवेशयति । अपि वा दर्भेष्वेव ॥**

आनडुहे । दर्भैः सह तुल्यो विकल्पः । तेषु वधूं तेषु केवलेषु चर्मण्यास्तीर्णेषु वा उपवेशयेदित्यर्थः । अष्टाभा.

**अथास्यै ब्रह्मचारिणमुपस्थ आवेशयति—'सोमेनाऽऽदित्या बलिनः सोमेन पृथिवी मही । असौ नक्षत्राणामेषामुपस्थे सोम आहितः ॥' इति ॥**

उपस्थः उत्सर्गः (उत्सङ्गः) । ब्रह्मचारी मार्गवासस्त्वादिधर्मा उक्तः । 'सोमेनाऽऽदित्याः' उपवेशनमन्त्रः । अष्टाभा.

**अथास्य तिलतण्डुलानां फलमिश्राणामञ्जलिं पूरयित्वोत्थाप्याथास्यै ध्रुवमरुन्धतीं जीवन्तीं सप्तर्षीनिति दर्शयेत् ॥**

ब्रह्मचारिणोऽस्येति । अञ्जलिं पूरयेत्, अस्या उत्थापयते । अस्यै वध्वै ध्रुवमरुन्धतीत्यादीनि नक्षत्राणि दर्शयेत् । जीवन्ती सप्तर्षीणामन्तरा तारा । अष्टाभा.

**'अच्युता ध्रुवा ध्रुवपत्नी ध्रुवं पश्येम सर्वतः । ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुलेयम् ॥' इति तस्यां समीक्षमाणायां जपति ॥**

एतत्तस्यां वध्वां ध्रुवादि समीक्षमाणायां जपति ।

अष्टाभा.

प्राजापत्यस्थालीपाकः

**श्वोभूते प्राजापत्यं पयसि स्थालीपाकं श्रपयित्वा तस्य जुहोति । आज्यशेषे दधि समानीय तेन हुतशेषेण(? षम्)— ॥**

स्थालीपाकग्रहणं स्थालीपाकधर्मार्थम्, 'एतेन स्थालीपाकाः सर्वत्र' इति वचनात् । प्राजापत्यं प्रधानस्थाने 'प्रजापतये स्वाहा' इति होमं कुर्यात् । आज्यशेषे दधि

समानीय मिश्रीकृत्यानेन दध्ना सह स्थालीपाकस्य हुतशेषम् — अष्टाभा.

'चक्रीवानडुहौ वा मे वाङ्मैतु ते मनः । चाक्रवाकं संवननं तन्नौ संवननं कृतम् ॥' इति यजमानस्त्रिः प्राश्नाति । अवशिष्टं तूष्णीं पत्नी ॥

'चक्रीवानडुहौ' इत्यनेन मन्त्रेण यजमानस्त्रिः प्राश्नीयात् । अवशिष्टं भुक्तशिष्टं तूष्णीं पत्नी, त्रिः प्राश्नातीति वर्तते । एतस्मादन्यत्रापि पत्न्या (अ)वशिष्टभक्षणमस्तीति गम्यते । तथा च 'न तस्य स्त्रियः प्राश्नन्ति' (माग. २।१०।४) इति प्रतिषेधवचनमर्थवद्भवति । अष्टाभा.

पिण्डपितृयज्ञः

अपराह्णे पिण्डपितृयज्ञः । स व्याख्यातः ॥

अपराह्णे पिण्डपितृयज्ञः । श्वोभूत इत्यधिकारात् तस्मिन्नेवाहन्यपराह्णे इति गम्यते, न त्वमावास्यायाम् । स व्याख्यातः 'चन्द्रादर्शनेऽमावास्यायाम्' इत्यत्र । ननु चन्द्रादर्शन एव स्यात्, 'स व्याख्यातः' इति वचनात् कालोऽपि व्याख्यात एव । नैतदस्ति । अपराह्णग्रहणमनर्थकं स्यात् । तस्मादमावास्यानिवृत्त्यर्थं पुनरपराह्णग्रहणम् । अष्टाभा.

विवाहव्रतम्

संवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रं त्रिरात्रमेकरात्रं वा ॥

चरत इति द्विवचनात् पत्न्यपि ब्रह्मचारिणी । अनन्यपुरुषादिध्यानं ब्रह्मचर्यं पत्न्याः । द्वादश । तुल्यो विकल्पः । तेनानृतावप्युपगमनं सिद्धम् । अष्टाभा.

गृहाधिकारदानम्

अथास्यै गृहान् विसृजेत् ॥

गृहाधिकारं प्रयच्छेदित्यर्थः, 'पत्नी वै पारिणह्यस्येशे' इति श्रुतेः, 'अर्थस्य संग्रहे चैनाम्' (मस्मृ. ९।११) इति स्मृतेश्च । अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

आनडुहचर्मण्युपवेशनम्, आग्नेयस्थालीपाकः

'अथैनां गृहानुह्याऽऽनडुहे रोहिते चर्मण्युपवेशयति— 'इह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणोऽभि पूषा निषीदतु ॥' इति । अथैनामाग्नेयेन स्थालीपाकेन याजयति । अथैतस्य स्थालीपाकस्योपहत्याभिघार्य जुहोति— 'अग्नये स्वाहा, अग्नयेऽग्निवते स्वाहा, अग्नयेऽन्नादाय स्वाहा, अग्नये स्विष्टकृते स्वाहा' इति ॥

वाङ्नियमः, नक्षत्रदर्शनोपस्थानानि, विवाहव्रतम्

वाग्यत आस्त आ नक्षत्राणामुदयात् । उदितेषु नक्षत्रेषु वत्समन्वारभ्योत्थापयति— 'उदायुषा स्वायुषा' इति । अथैनां ध्रुवमरुन्धतीमन्यानि च नक्षत्राण्यभिवीक्षयति— 'नमो ब्रह्मणे ध्रुवायाच्युतायास्तु' इत्येतेनानुवाकेन । ध्रुवमुपतिष्ठते— 'ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसि ध्रुवतः स्थितम् । त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः ॥' इति । 'सप्तर्षयः प्रथमां कृत्तिकानामरुन्धतीं ध्रुवतां ये ह निन्युः । षट्कृत्तिका मुख्ययोगं वहन्तीयमस्माकं भ्राजत्वष्टमी ॥' इत्यरुन्धतीम् । त्रिरात्रमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणौ भवतः ॥

## काठकगृह्यसूत्रम्

वास्तोष्पतीयः स्थालीपाकः

* [२] 'अमीवहा वास्तोष्पते' इति चतसृभिर्वास्तोष्पतीयस्य स्थालीपाकस्येष्ट्वाऽथ वास्त्वा-

* एकादश्यां कण्डिकायामुद्वोढुकामस्य नूतनवास्तुनिर्माणं सेतिकर्तव्यताकं विहितम् । तत् यथास्थानसंग्रहीष्यमाणवास्तुप्रकरणे संग्रहीष्यते । इदमत्राऽऽदित्यदर्शनविवरणं तत्रत्यमनुसंधेयम्— "गृहस्थोऽप्यनेकप्रकार उच्यते । यदि पितृगृहे निवस-

(१) काग. १२।१–२.

(२) भाग. १।१८, १।१९.

**विशेत् । 'अमी वहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः ॥ वास्तोष्पते प्रतिजानीह्यस्मान् स्वावेशो अनमीवो भवा नः । यत्त्वेमहि प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति नो जुषस्व ॥ वास्तोष्पते शग्मया संसदाते सक्षीम हिरण्वया गातुमत्या । पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥' इति॥**

(१) अथ विवाहे कृते वैवाहनाग्नौ प्रवेशितेऽनन्तरमध्याहिताग्निको वास्त्वाविशेत् । वसत्यस्मिन्निति वास्तु-गृहम् । किं कृत्वा प्रविशेत् ? वास्तोष्पतीयस्य स्थालीपाकस्येष्ट्वा । वास्तोः गृहस्य पतिः अधिष्ठात्री देवता वास्तोष्पतिः, मयूरव्यंसकादित्वात् सुपोऽलुङ्निपातनम् । वास्तोष्पतिर्देवता यस्य स वास्तोष्पतीयः । 'वृद्धाच्छः' । व्यत्ययेन षष्ठी, स्थालीपाकेनेष्ट्वा । अवयवावयविसंबन्धेन वा । न हि समस्तोऽसौ हूयते, भक्ष्यसंरक्षणात् । ननु चेष्ट्वा आविशेदित्युक्तमयुक्तम्, प्रविश्य यजनात् ।¶ सत्यम्, किंत्वध्यवसाय पौर्वकाल्येन 'नेत्रे संमील्य हसति' इत्यादिवत् । याजयित्वेति वा णिजर्थो योजनीयः । निर्वापस्यामन्त्रकस्येष्टत्वात् 'अमी वहाः' इत्यादिना 'चतसृभिः' इत्यन्तेन शिष्यहितार्थे चतस्रः पठित्वाऽर्पयति ।

प्रथमा गायत्री । अन्यास्त्रिष्टुभः । वास्तोष्पतिरन्तरिक्षनिवासी वायुः, यद्वा प्राणः । हे वास्तोष्पते गृहस्वामिन्, विश्वेषां सर्वेषामस्मत्परिजनानां रूपाणि स्वरूपाणि आविशन् अधितिष्ठन् अमी अमून् परिजनानावह प्रापय पूर्वमेतानेव गृहं प्रवेशय । प्रथमं परिजनस्य गृहप्रवेशमनुजानीहि, पश्चादस्माकमिति भावः । एवमेवानुतिष्ठन् नः अस्माकं सखा मित्रं सुप्रवेशनीयो भव ।

हे वास्तोष्पते प्रतिजानीह्यस्मान् गृहपतिः परमः सन् अस्मानप्यवान्तरस्वामितयाऽङ्गीकुरु इत्यर्थः । स्वावेशः सुखप्रवेशश्च नः अस्माकं भव । तथा अनमीवः व्याधिशून्यः अस्माकं भव । किंच यत्तुभ्यं किंचिद्वयो हविरादिकम्, तन्नः अस्माकं संबन्धि जुषस्व भजस्व । तथा शं सुखं नो भव द्विपदे मानुषरूपे, चतुष्पदे गवाश्वादिके ।

हे वास्तोष्पते, नः अस्माकं प्रतरणः प्रकर्षेण संसारसागरक्लेशतरंणः एधि भव । 'अस भुवि', लोट्, सिपि ह्यादेशः, 'हुझल्भ्यो' (पासू. ६।४।१०१) इति धित्वम्, 'ध्वसोरेद्धावभ्यासलोपश्च' (पासू. ६।४।११९) । गयस्फानः गयं गृहम्, गृहे स्फीतः सन् गोभिरश्वैश्च सहितः हे इन्दो परमेश्वर, ते तव सख्ये वर्तमाना वयमजरासः अजीर्णाः स्याम । त्वं च नः अस्मान् प्रतिजुषस्व प्रीणीहि । क इव कान् ? पितेव पुत्रान् ।

हे वास्तोष्पते, या त्वां संसदाते सेवते विभूतिः तया वयमपि सक्षीम, 'षच समवाये', युज्येमहि । कीदृश्या शग्मया सुखरूपया, हिरण्वया हितरमणीयया हिरण्ययुक्तया वा, गातुमत्या कीर्तिरूपगानयुक्तया उद्गातृगीतयुतया च । यच्चास्माकं किञ्चिद्वरम् उत्कृष्टं त्वत्प्रसादोपनतम्, तत्सर्वं पाहि रक्ष । किं कुर्वन् ? अलब्धलाभात्मके योगे प्राप्तपरिरक्षणरूपे च क्षेमे वर्तमानः । उतशब्दश्चार्थे । किंवा विशेषेण वास्तोष्पतिरेव प्रार्थ्यते । हे गृहदेवताः, एवं सर्वा एव यूयं नः अस्मान् स्वस्तिभिः अविनाशैः पात रक्षत सर्वकालम् । देव.

---

न्नविभक्तधनः, स निवसमानः (? विवहमानः) पितृगृह एव सद्वितीयो वसति । तस्य वैवाहिकेऽग्नौ विकल्पः । यस्तु पुनः प्रमीतपितृकः, पितृगृहेषु विद्यमानेषु तस्यापि वास्तुकरणं नोपयुज्यते । अग्निं पुनरादधीत । यस्त्वविद्यमानपितृगृहो निवेष्टुमिच्छति, स पूर्वं गृहान् कृत्वा पश्चाद्विवहेत् । यतो वक्ष्यति– 'ऊर्जं बिभ्रदिति गृहान् प्रतिदृश्य जपति' (कागृ. २७।३) तथा 'सोदकं सौषधमावसथं प्रतिपद्यते' (कागृ. २८।३) इति । तस्य गृहकरणमुच्यते" इति । अग्रे च वक्ष्यति– 'अस्मिन्नवसरे पूर्वकृतेषु गृहेषु वास्तुहोममिच्छन्ति' (कागृ. २८।३) इति ।

¶ अत्र प्रवेशोत्तरं यजनमङ्गीकृतम्, अग्रे 'अध्याहिताग्निम्' इत्यादिसूत्रव्याख्याने तु 'वास्तुहोमानन्तरं चैष प्रवेश इष्यते' इति यजनोत्तरं प्रवेश उक्त इति विरोधः ।

(२) ततो विवाहे कृते तस्मिन्नेव गृहे वैवाहनेऽग्नौ वास्तोष्पतीयं स्थालीपाकं श्रपयित्वा 'अमी वहा वास्तोष्पते' इति चतसृभिरिष्ट्वा अथ वास्तुगृहं सद्वितीय आविशेत् प्रविशेत्। इदं तद्वक्षति 'अध्याहिताग्निम्' (कागृ. २८।३) इति। अनेनैव विधिना अध्याहिताग्निः गृहस्थः। अथ होमादनन्तरं स तत्र निवसेदित्यथशब्दस्यार्थः। आवि.

**वंशोद्वीक्षणिकं ब्राह्मणान् भोजयेत्॥**

(१) तस्मिन् गृहे ब्राह्मणान् भोजयेत्। तस्य च कर्मणो वंशोद्वीक्षणिकमिति नाम। ते हि वंशानुद्वीक्षमाणा भुञ्जते। देव.

(२) वंशोद्वीक्षणिकान् ब्राह्मणान् भोजयेत्। तस्मिन्नेव गृहे ये ब्राह्मणा वंशान् भुञ्जानाः सन्त उद्वीक्षन्ते तथा भोजयेत्। अन्ये वंशोद्वीक्षणमिति ब्राह्मणभोजनस्यैतन्नामेत्याहुः। आवि.

गृहप्रवेशः, आनडुहचर्मण्युपवेशनम्, गृहप्रवेशहोमः

**[1]उलपराजीं स्तृणात्या शयनीयात्॥**

उलपः वीरणः। 'प्रसूनाः दीर्घदर्भाः' इति तु प्रसिद्धिहीनं वचः, मध्यदेशादौ वीरणानामेव तथा प्रसिद्धेः। ऋत्विक् वीरणपङ्क्तिं स्तृणाति रचयति रथावतरणस्थानादारभ्य वधूशयनगृहविशेषं यावत्। * देव.

**तया प्रविशति॥**

तया राज्या प्रविशति गृहं रथादवतीर्य वधूसहितो वरः। § देव.

**अध्याहिताग्निं सोदकं सौषधमावसथं प्रतिपद्यते॥**

(१) अध्याहितः स्थापितः विवाहाग्निः यत्र तम्, तथा सोदकं उदकुम्भभूषितम्, सौषधं व्रीह्याद्योषधिसनाथम्, आवसथं गृहविशेषं प्रतिपद्यते प्रविशति। अत ऊर्ध्वं हि पाकयज्ञेष्वधिक्रियते। वास्तुहोमानन्तरं चैष प्रवेश इष्यते। उक्तं हि सूत्रम्— 'अमी वहा वास्तोष्पत इति चतसृभिर्वास्तोष्पतीयस्य स्थालीपाकस्येष्ट्वाऽथ वास्त्वाविशेत्' (कागृ. १२।१) इति। देव.

(२) कीदृशमावसथं प्रविशति? अध्याहितः अग्निः यस्मिन् सः अध्याहिताग्निः आवसथः। एतदुक्तं भवति—योऽसौ वैवाहनोऽग्निः स तत्र पूर्वमेवाऽऽहितः। अस्मिन्नवसरे पूर्वकृतेषु गृहेषु वास्तुहोममिच्छन्ति। सोदकमिति उ(? सो)दकुम्भम्। सौषधं तण्डुलादिभिरौषधीभिरधिष्ठितम्। एवंविधमावसथं प्रतिपद्यते प्रविशति। आवि.

**रोहिण्या मूलेन वा यद्वा पुण्योक्तम्। अपरेणाग्निमानडुहे रोहिते चर्मण्युपवेश्यापि वा दर्भेष्वेव जयप्रभृतिभिर्हुत्वा 'अग्निरैतु प्रथमः' इति च। 'अग्निरैतु प्रथमो देवतानां सोऽस्याः प्रजां नयतु सर्वमायुः। तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं निरुन्ध्यात् स्वाहा॥ अग्निरिमां त्रायतां गार्हपत्यः सोऽस्याः प्रजां मुञ्चतु मृत्युपाशात्। अरिक्तोपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियं स्वाहा॥ मा ते गृहे निशि घोर उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु। जीवपुत्रा पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा॥ मा ते कुमारः स्तनधः प्रमायि मा त्वं विकेश्युर आवधिष्ठाः। स्तनं धयन्तं सविताऽभिरक्षत्वा वाससः परिधानाद्बृहस्पतिर्विश्वे देवा अभिरक्षन्तु नित्यं स्वाहा॥ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि। याऽस्यां भृशा तनूस्तामस्या नाशय स्वाहा॥ वायो प्रायश्चित्ते। सूर्य प्रायश्चित्ते। चन्द्र प्रायश्चित्ते। विष्णो प्रायश्चित्ते। विष्णो प्रायश्चित्ते। चन्द्र प्रायश्चित्ते। सूर्य प्रायश्चित्ते। वायो प्रायश्चित्ते। अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि। याऽस्यां भृशा तनूस्तामस्या नाशय स्वाहा॥ त्र्यायुषं जमदग्नेः कश्यपस्य**

---

* माध्र., आवि. देवगतम्।

§ आवि. देवगतम्।

(१) कागृ. २८।१-५.

त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम्' इति ॥

( १ ) रोहिण्या मूलेन वा नक्षत्रेण युक्ते चन्द्रमसीति ज्ञेयम् । यद्वा पुण्योक्तं ज्योतिःशास्त्रे पुण्यरूपं श्रेयस्करं यद्दिनमुक्तम्, तत्र वा । अपरेणाग्निं प्रकृतत्वादावसथ्यम्, अनडुह इदमानडुहं वाऽऽर्षभम्, तत्र रोहिते चर्मण्युपवेश्य वधूं वरः स्वयं चोपविश्य, केवलेषु वा दर्भेषु वधूमुपवेश्य स्वयं चोपविश्य जयहोमप्रभृतिकमाज्यभागान्तमाज्यसाधनत्वादर्थादाज्यधर्मयुक्तमुपसमाधानादिपूर्वकं हुत्वा, 'अग्निरैतु प्रथमः' इत्यादिभिश्च, कर्मान्तराणि कुर्यात् । कानि तानि ? पाकयज्ञा अर्थात् ।

अग्निरैतु इति वैश्वदेव्यश्चतस्रस्त्रिष्टुभः । विश्वेषु देवेष्वागच्छत्सु सर्वदेवतानां प्रथमः अग्ने अग्निरा एतु ऐतु आगच्छतु । सोऽग्निः सर्वदेवपुरःसरोऽस्या वध्वाः प्रजां ( नयतु प्रापयतु, तां च प्रजाम् ? ) सर्वमायुः नयतु प्रापयतु । द्विकर्मकः अजां नयति ग्राममितिवत् । तच्चाऽऽयुरग्निना प्राप्यमाणं वरुणो राजाऽनुमन्यतां तत्रानुमतिं ददात्वेवमस्त्विति । राजग्रहणं तेनानुमतेन तदनुचरत्वात् सर्वे देवा अनुमन्यन्ते इत्याशयेन । यथा चेयं स्त्री वधूः पुत्रस्येदं पौत्रमघं पापं निरुन्ध्यात् पुत्रशोकं नानुभवेत्तथा तेन प्रकारेण वरुणो राजा अनुमन्यताम् ।

इमां वधूम् अग्निः आवसथ्यः त्रायतां रक्षतु । इयं वधूः अरिक्तोपस्थाऽस्तु । उपस्थः उत्सङ्गः । बालकसुतैः क्रमेण जायमानैरस्या उत्सङ्गः अरिक्तः अशून्यः अस्त्वित्यर्थः । तथेयं जीवतां चिरायुषां पुत्राणां माता भवतु । पुत्राणामयं पौत्रः, तं चाऽऽनन्दं सुखम् इयम् आभिमुख्येन विशेषेण बुध्यताम् ।

हे वधु, ते तव गृहे निशि दिवा घोरो रोदनादिशब्दो मा उत्थात् रोदनादिशब्दो दुष्टस्त्वद्गृहे मा भूत्कदाचिदित्यर्थः । रुदत्यः रोदनं कुर्वत्यः त्वत् तव सकाशादन्यत्र संविशन्तु अन्यत्र तव दूरवर्तिनि देशे तिष्ठन्त्वित्यर्थः । त्वं पतिलोके पतिकुले विशेषेण राज शोभस्व जीवपुत्रा दीर्घायुर्बहुपुत्रा सती, तथा सुमनस्यमानां सुखिनीं प्रजां पुत्रादिकां पश्यन्ती सती ।

तव कुमारो बालकः स्तनंधयः स्तनपः मा प्रमायि मा मृत । मा च त्वं विकेशी मुण्डा सती उरः वक्षः आवधिष्ठाः भर्तृविरहकृतमुरस्ताडनं तव मा भूदित्यर्थः । तव स्तनंधयं सविता अभिरक्षतु बृहस्पतिश्च अभिरक्षतु आ वाससः परिधानात् परिधानवस्त्रपर्यन्तं यावत् रक्षतु, विश्वेदेवाश्च नित्यमभिरक्षन्तु ।

एताभिश्चतसृभिर्ऋग्भिश्चतस्र आहुतयो दातव्या वरेण स्वयम्, एवमुत्तरा अपि । 'अग्ने प्रायश्चित्ते' इत्यादिभिर्यजुर्भिरन्या दश आज्याहुतयः क्रमापक्रमाभ्याम् ।

प्रायश्चित्तं पापनिवारणं धर्मजननं च कर्मोच्यते । तत्कारणत्वादग्निः प्रायश्चित्तिः । हे अग्ने प्रायश्चित्ते, त्वं देवानां प्रायश्चित्तिः दोषापसारे शुभजनने च निमित्तम् । अतोऽस्यां वध्वां या भृशा अपवित्रा अतिशयेन बीजवशेन बालभावकृतकुचेष्टावशेन च तनूस्तामस्या वध्वा नाशय तद्गतमशुभं नाशय । वरस्य हि गार्भबैजिकदोषा जातकर्मादिभिर्नाशिताः, वध्वास्तु तानि प्रायेण न कृतानि, 'गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः । बैजिकं गार्भिकं चैनो द्विजानां प्रतिहन्यते ॥' ( मस्मृ. २।२७ ) इति स्मृतेः । एनः पापमशुद्धिः ।

'विष्णो प्रायश्चित्ते ... अग्ने प्रायश्चित्ते' एतानि सानुषङ्गाणि पराणि पञ्च यजूंषि अपक्रमेण । तेनर्ग्भिश्चतसृभिश्चतस्रः यजुर्भिश्च दशभिर्दशेति चतुर्दशाऽऽहुतयः संपन्नाः । त्र्यायुषमित्यनेन पञ्चदशी इत्यादित्यदर्शनः । स आज्यैकदेशो योऽनेन यजुषा वक्ष्यमाण आसेकस्तामेवाऽऽहुतिं मन्यते, मन्त्रावृत्तिं वा । देव.

( २ ) उद्धतावोक्षितेऽग्निमासाद्यापरेणाग्निमानडुहे रोहिते चर्मणि प्राङ्मूलेषु दर्भेषु वा वध्वा सहोपविश्य स्वयमिमं होममारभते । अत्राऽऽज्यं हविः । आज्यभागान्तं हुत्वा 'अग्निरैतु प्रथमः' इत्याद्यैः पञ्चदश स्रुवेणाऽऽज्याहुतीर्जुहोति । 'त्र्यायुषम्' इति पञ्चदशी । ब्राह्म.

( ३ ) यथोक्तमुपसमाधायेति नात्रोक्तं यतः पूर्वमेवोपसमाहितोऽग्निः । आज्यहोमत्वादाज्यसंस्कारोऽत्रार्थाक्षिप्तः । जयप्रभृतिशब्देनाऽऽज्यभागान्तं तन्त्रमुपलक्षयति । 'अग्निरैतु प्रथमः' इति चतसृभिर्ऋग्भिः 'अग्ने प्राय-

श्चित्ते' इति क्रमोत्क्रमैर्दशभिर्यजुर्भिः साङ्गैः 'त्र्यायुषम्' इति चैताः पञ्चदशाऽऽहुतीः स्रुवेण हुत्वा ।

$ आवि.

दधिभक्षणम्, कुमाराय फलदानम्

**आज्यस्यैकदेशे दध्यासिच्य 'दधिक्राव्णः' इति त्रिर्दधि भक्षयित्वा माणवकायोत्सङ्गे 'इडामग्ने' इति फलानि प्रददाति ॥**

(१) स्वयं कर्तृत्वादासां स्रुवेण पूर्वोक्ता घृताहुतीर्हुत्वा 'त्र्यायुषम्' इत्यादियजुषा पृथक् पात्रोद्धृते घृते घृतैकदेशे दध्यासिच्य 'दधिक्राव्णः' इत्यनया त्रीन् वारान् वधू दधि भक्षयित्वा वरो माणवकाय वध्वा उत्सङ्गे निहिताय फलानि प्रददाति 'इरामग्ने' इति मन्त्रेण। मणिभिर्मन्त्रैरोषधिभिस्त्रिभिरुपायैः साध्यमानत्वात् त्र्यायुषम्, बाल्युवद्वृद्धावस्थात्रयभावित्वात् यागदानहोमसाध्यात् तदारम्भकत्वाद्वा त्र्यायुषम्। यत् जमदग्नेः त्र्यायुषम्, यच्च कश्यपस्य, यच्च देवानाम्, तत्सर्वमस्त्विति वर आशास्ते ।

'दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत्॥'– आग्नेयी। अनुष्टुप्। इन्द्रस्याऽऽर्षम्। दधि क्रामतीति दधिक्रावा। 'अन्येभ्योऽपि दृश्यते' (पासू. ३।२।७५) इति क्वनिप्। अग्निर्वैश्वानर उच्यते। स हि सर्वं भक्षितं जरयति जठरे स्थितो दध्यादिकम्। तस्य दधिक्राव्णोऽग्नेः जाठरस्याहमकारिषं करोमि, संतर्पणमर्थात्। कीदृशस्य ? जिष्णोः जयनशीलस्य, अश्वस्य अशनस्य व्यापिनो वा, वाजिनः अन्नपतेः। नः अस्माकं सुरभि सुगन्धि विद्याद्युद्गारभूषितमर्थान्मुखं दधि भक्ष्यमाणमा करत् करोतु। लोडर्थे लेट्। नः अस्माकम् आयूंषि प्रतारिषत् प्रतरतु दधातु। पूर्ववत् पञ्चमो लकारः। 'इरामग्ने' इतीयं व्याख्याता *।

['इडामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाऽग्ने सा ते सुमतिर्भूदस्मे॥'– हे अग्ने, इडाम् अन्नं साध साधय। कस्मै ? हवमानाय होममाह्वानं च कुर्वाणाय यजमानाय। कीदृशीमिडाम् ? पुरुदंसम्। पुरुशब्दो बहुपर्यायः, दंसश्शब्दः कर्मनाम। बहुकर्माणं बहुसिद्धियोग्यामित्यर्थः। सनिं गोः, 'वन षण संभक्तौ', गवां संविभागस्य कर्त्रीम्। शश्वत् अतिशयेन भवतीति शश्वत्तमम् अविच्छिन्नाम्। किं च, स्यान्नः सूनुस्तनयो विजावा अस्माकं सूनुः पुत्रो भवतु। विजायते इति विजावा, क्वनिप्। पुनस्तनयग्रहणं बहुपुत्रार्थम्, विजावेत्यविच्छिन्नसंतानार्थम्। हे अग्ने, सा ते तव शोभना मतिः भूत् भवतु अस्मे अस्मासु, ययाऽन्नादिकं साधयसि। पुरुदंसमिति छान्दसो वर्णलोपः। गोरिति व्यत्ययेनैकवचनम्। भूदिति तिङ्व्यत्ययः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमाभावः। अस्मे इति 'सुपां सुलुक्' इति शे आदेशः। ४७।१३]

देव.

(२) तत आज्यस्य किञ्चिन्मात्रं पात्रान्तरे कृत्वा तस्मिन्दध्यासिच्य तदाज्यमिश्रितमात्मना 'दधिक्राव्णः' इति त्रिर्दधि प्राश्याऽऽचम्य ...। माणवकाय वध्वा उत्सङ्गे स्थिताय फलानि प्रददाति। ततो वैश्वदेव्याऽऽग्नेय्या वा प्रधानम्। ऋतुतिथियागादितन्त्रसमाप्तिः। इति प्रायश्चित्तहोमः।

ब्राह्म.

(३) तत आज्यस्यैकदेशे आज्यं पात्रान्तरे कृत्वा तत्र दध्यासिच्य तद्दधि 'दधिक्राव्णः' इति त्रिर्भक्षयित्वाऽनन्तरं माणवकायोत्सङ्गे स्थिताय वध्वाः 'इडामग्ने' इति फलानि प्रददाति। एवं होमस्य कर्ता दधि भक्षयित्वा। 'स्यान्नः सूनुः' इति वध्वा उत्सङ्गे लिङ्गात्। आचमनानाम्नात् (? आचमनमाम्नानात्)। केचिद्देवता अप्रज्ञायमाना आग्नेय्या यजेदिति चतुर्गृहीतेन यजन्ति। केचिद्देवता एव ताः प्रधानत्वान्नेच्छन्ति। तत ऋतुतिथ्यादिसमापनम्।

आवि.

---

$ शेषं देववत्।

* वस्तुतस्तु नेयमृक् पूर्वं कुत्रापि व्याख्याता, अग्रे सप्तचत्वारिंश्यां कण्डिकायां व्याख्यास्यते। तत्र च 'इडामग्ने' इति पाठः समाश्रितः।

समशनीयस्थालीपाकः, शेषप्राशनम्

**[1]'तूष्णीमुपचरितं स्थालीपाकं श्रपयित्वा तस्याग्निमिष्ट्वा प्रजापतिं च शेषं प्राश्नीतः-- 'अन्नमेव विवननमन्नं संवननं स्मृतम् । अन्नं पशूनां प्राणोऽन्नं ज्येष्ठं भिषक् स्मृतम्॥ अन्नमयेन मणिना प्राणसूत्रेण पृश्निना । सिनोमि सत्यग्रन्थिना हृदयं च मनश्च ते ॥ सह वाचा मनो अस्तु सह चित्तं सह व्रतम् । चक्रमिवानडुहः पदं मामेवान्वेतु ते मनः ॥ मां चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः । चाक्रवाकं संवननं मम चामुष्याश्च भूयात् ॥' इति ॥**

(१) तूष्णीमेव यत्रोपचारो निर्वापादिस्तं चरुं स्वरससिद्धत्वादुदकेन श्रपयित्वा तस्यांशेनाग्निं प्रजापतिं चेष्ट्वा नाम्नैव, तूष्णींग्रहणात्, हुतशेषं प्राश्नीतः वधूवरावेकत्र पात्रे सह । गृह्यान्तरेषु हि समशनमिति संज्ञा । सहाशनं च समशनमिति प्रसिद्धम् । संवननमिति च मन्त्रलिङ्गम् । अन्ये त्वत्रापि चैकपात्रे न सह भोजनमिच्छन्ति । यथा हि 'यजमानपञ्चमा इडां प्राश्नन्ति' 'सपत्नीका भुञ्जते' इत्यतः पञ्चसंख्यासहश्रवणेऽपि इळाया गृहमेधीययोः(?) पृथगेवाशनम्, तद्वदिहापि भवितव्यम् । पाकयज्ञ(तन्त्र)प्रतिषेधार्थं पुनस्तूष्णीमुपचरितग्रहणम् । उक्तं ह्येतत्-- 'तेष्वावृदुपचारस्तूष्णीम्' (काग्ट. १३।७) इति । भक्षणं तु 'अन्नमेव विवननम्' इत्यादिभिश्चतसृभिरनुष्टुब्भिः । मन्त्रोच्चारणं चरुकर्मकम् (? वरकर्तृकम्) ।

'वन षण संभक्तौ', अन्नमेव विवननं विभजनम्, अन्नमेव संवननं स्मृतम्, सह भुज्यमानं संश्लेषणमित्यर्थः । अन्नं पशूनां प्राणः, तेन हि जीवन्ति । अन्नमेव ज्येष्ठं प्रशस्ततमं भिषक् भेषजं स्मृतम् । तेन हि बुभुक्षादिकृता व्याधयो निवर्त्यन्ते ।

वरो ब्रूते-- हे वधु, तवाहं हृदयं च मनश्च सिनोमि, 'षिञ् बन्धने', बध्नामि । मननं मनः ज्ञानम्, मन्यतेऽनेन मनः बाह्येन्द्रियपञ्चकम्, हृदयं चित्तम् । केन ? सत्यग्रन्थिना सत्यं निर्व्याजचरितमेव ग्रन्थिः तेन, पृश्निना शुक्लेन शुचिना धर्मरूपेणेत्यर्थः । अन्नं मणिरिव, प्राणः सूत्रमिव, हाराद्यलङ्काररूपमेतत् ।

हे वधु, तव च मम च वाचा सह मनोऽस्तु यादृशं वचनं तादृशं निर्व्याजं चित्तमस्तु, न तु दौर्जन्येनान्यचेतसि अन्यद्वाचि । एवमावयोश्चित्तं चैतन्यं समानमस्तु, व्रतं च सफलं विहितं कर्म । तव मनो मामेवान्वेतु चक्रमिवानडुहः पदम्, यथा शकटचक्रं शकटकर्षकस्य वृषभस्य पदमनुगच्छति ।

मामेव सूर्यमेव च पश्य । अन्येषु पुरुषेषु मनो मा कृथाः । मम चामुष्याश्च वध्वाश्चाक्रवाकमिव संवननं भूयात् । यथा चक्रवाकपक्षिमिथुनं यथाप्राप्तमतिस्नेहात् वृष्ट्यादिकं संविभज्य भुङ्क्ते तद्वदावाम् । तद्वदतिप्रीतिरावयोरस्त्वित्यर्थः । देव.

(२) तूष्णीं निरुक्तं चरुं श्रपयित्वा । इदं समशनम्, नात्र पाकयज्ञतन्त्रम् । परिसमुह्य पर्युक्ष्य चातुष्कोष्ठैः स्तरैः परिस्तीर्य चरुं शृतमभिघार्योदगुद्वास्य 'अग्नये स्वाहा' 'प्रजापतये स्वाहा' इति हस्तेनाऽऽहुतिद्वयं हुत्वा मेक्षणेन वा, अवशेषम् 'अन्नमेव' इति चतसृभिरभिमन्त्र्य शालिचूर्णमण्डले सौवर्णे राजतं वा पात्रं प्रतिष्ठाप्य तस्मिन् दधिमिश्रितं प्राश्नीतः । मन्त्रो वरस्यैव, न वध्वाः । 'मम चामुष्याश्च भूयात्' इत्यत्र वध्वाः षष्ठ्यन्तं नाम ग्राह्यम् । 'भुक्त्वोच्छिष्टं वध्वै प्रदद्यात्' (गोगृ. २।३।२२) इति गोभिलः । इति समशनम् । ब्राह्म.

(३) 'तूष्णीमुपचरितम्' 'तेष्वावृदुपचारस्तूष्णीम्' इत्यस्य चास्य च को विशेषः । इह तूष्णींग्रहणं पाकयज्ञतन्त्रविधानार्थम् । तस्यान्नस्य मेक्षणेनैवाग्निं प्रजापतिं चेष्ट्वा शेषं प्राश्नीतः दम्पती एकस्मिन् पात्रे । समशनमिति गृह्यान्तरेषु संज्ञा । 'अन्नमेव विवननम्' इति चतसृभिर्ऋग्भिः प्राशनम् । 'मम चामुष्याश्च भूयात्' इति वध्वा वरो नाम गृह्णाति । वरस्यैव मन्त्रो न स्त्रियाः, लिङ्गात् । सहभोजनं समशनलक्षणम् । गृह्यान्तरेषु चात ऊर्ध्वं सहभोजनप्रतिषेधो दृश्यते । आश्व.

---

(१) कागृ. २९।१.

विवाहव्रतम्

[1]संवत्सरं ब्रह्मचर्यं चरतो द्वादश रात्रीः षट् तिस्र एकां वा ॥

(१) ब्रह्मचर्यम् अमैथुनं चरित्वा गर्भाधानं कार्यमिति। तत् पूर्णिमायाममावस्यायां न मैथुनं कर्तव्यमिति च संकल्पः। एकैककर्तृकमत्र व्रतम्। संवत्सरं प्रथमः कल्पः। यौवनमदस्यातिशयात्त्वनुकल्पेनाऽऽपत्कल्पो विकल्पः— द्वादश रात्रीः षट् तिस्र एकां वेति। देव.

(२) संवत्सरं ब्रह्मचर्यं चरतः। विकल्पो वयोविशेषेणौत्सुक्यापेक्षया। आवि.

## वाराहगृह्यसूत्रम्

गृहप्रवेशकालः, गृहप्रवेशः, वध्वा चर्मण्युपवेशनम्, कुमाराय फलदानम्, ध्रुवादिदर्शनम्, स्थालीपाकः, दधिप्राशनम्, विवाहव्रतम्, गृहाधिकारदानम्

* [1]अस्मिन्नहःसंधौ गृहान् प्रपादयीत। 'प्रतिब्रह्मन्' इति प्रत्यवरोहति। मङ्गलानि प्रादुर्भवन्ति। गोष्ठात्संततामूलपराजितं स्तृतरथाद्ध्योपसादनात्। 'येष्वध्येति प्रवसन् येषु सौमनसं महत्। तेनोपह्व्यामहे ते नो जानन्त्वागतम् ॥' इति तयाऽभ्युपैति। 'गृहानहं सुमनसः प्रपद्ये वीरं हि वीरवतः सुशेवाः। इरां वहन्तीं घृतमुक्षमाणास्तेष्वहं समना संविशाम ॥' इत्यभ्याहिताग्निं सोदकं सौषधमावसथं प्रतिपद्येत। रेवत्या रोहिण्या मूलेन वा यद्वा पुण्योक्तम्। पश्चादग्ने रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो दर्भानास्तीर्य तेषु वधूमुपवेशयति। अपि वा दर्भेष्वेव। अथास्या ब्रह्मचारिणं जीवपितृकं जीवमातृकमुत्सङ्गमुपवेशयेत्। फलानामञ्जलिं पूरयेत्, तिलतण्डुलान् वा। 'अच्युता ध्रुवा ध्रुवपत्नी ध्रुवं पश्येम विश्वतः' इति ध्रुवं जीवन्तीं सप्तर्षीनरुन्धतीमिति दर्शयित्वा प्राजापत्येन स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाऽऽज्यं पुरस्तात्स्विष्टकृत आज्यशेषे दध्यासिच्य 'दधिक्राव्णोऽकारिषम्' इति दध्नस्त्रिः प्राश्नाति। 'चक्रीमिषा( ?चक्रीवा )नडुहः पदं मामेवान्वेतु ते मनः। मां च पश्यसि सूर्यं च अन्येषु मनस्कृथा( ? मा चान्येषु मनः कृथाः ) ॥' 'सोमेनाऽऽदित्याः' 'चाक्रवाकं संवननं तन्नौ संवननं कृतम्' इत्यवशिष्टं पत्न्यै प्रयच्छति। तूष्णीं सा प्राश्नाति। अपराह्णे पिण्डपितृयज्ञः। स व्याख्यातः। संवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रं वा। अथास्यै गृहान् विसृजेत् ॥

## आग्निवेश्यगृह्यसूत्रम्

गृहप्रवेशः, आनडुहचर्मोपवेशनम्, ज्ञातिसंभाषणम्, विवाहव्रतम्

[1]अथास्या दक्षिणेन हस्तेन दक्षिणं पाणिं परिगृह्य दक्षिणां द्वारेयीमभिमृशति— 'शं न एधि द्विपदे शं चतुष्पदे' इति। एवमुत्तराम्। अगारं प्रविश्याऽऽनडुहे चर्मण्युत्तरे लोम्न्युपविशति 'इह गावो निषीदन्तु' इति। ज्ञातिसंभाषावासाते ॥

ब्रह्मचारिणावलंकुर्वाणौ त्र्यहं व्रतं चरे( ति ? )यातामक्षारलवणमशमीधान्यं भुञ्जानावधःशायिनावसंवर्तमानौ सह चर्याताम्। सायंप्रातरौपासने जुहोति व्रीहिभिर्यवैर्वा ॥

* इदं वाराहसूत्रं प्रायो मानवगृह्यसूत्रमनुवदति, अशुद्धिबहुलं च। अत एतत्सूत्रालोचनावसरे मानवसूत्रमनुसंधेयं सर्वत्र।

(१) काग्. ३०।१. (२) वागृ. १८.

(१) आग्निगृ. १।६।३.

## गोभिलगृह्यसूत्रम्

वामदेव्यगानम् , आनडुहे चर्मण्युपवेशनम् ,
उपस्थोपवेशितकुमाराय फलादिदानम् ,
होमः , गुर्वभिवादनम्

**[1]प्राप्तेषु वामदेव्यम् ॥**

( १ ) वरः वध्वाः पतिः* गृहं प्रथमप्राप्तौ वामदेव्यं गीत्वा प्रवेशयेत् । संत. ९०५

( २ ) एवं प्राप्तेषु वरवधूसहितेषु वरयातृषु वामदेव्यम् । साम गायेत् इति शेषः । अत्र कर्ता वर एव, प्रकृतत्वात् । मृदुला.

**[2]गृहागतां पतिपुत्रशीलसंपन्ना ब्राह्मण्योऽवरोप्याऽऽनडुहे चर्मण्युपवेशयन्ति– 'इह गावः प्रजायध्वम्' इति ॥**

( १ ) शीलम् आचारः , संपन्नाः युक्ताः । यानादवतार्य वृषचर्मादौ 'इह गावः' इति मन्त्रेण भर्त्रा जप्यमानेन गायत्र्या वा स्थापयन्ति । संत. ९०६

( २ ) गृहागतां पतिगृहे प्राप्ताम् , अवरोप्य यानादुत्तार्य 'इह गावः' इति वरपठितेन मन्त्रेणोपवेशयन्ति । मन्त्रो यथा– 'इह गावः प्रजायध्वमिहाश्व इह पूरुषः । इहो सहस्रदक्षिणो अपि पूषा निषीदतु ॥' § इति । अस्यार्थः– इह कन्यानिवेशने स्थाने गृहे गावः प्रजायध्वं प्रजाः जनयन्तु । इह च अश्वः निषीदतु आवसतु । इह पूरुषः परिचारकवर्गः परिजनश्च निषीदतु । इह । उ वितर्के, पादपूरणे वा । सहस्रदक्षिणः सहस्रं दक्षिणा यत्र स महाधनसाध्यो यज्ञः , अपि च पूषा तन्नामको देवः सर्वपोषकोऽपि निषीदतु संभवतु उपविशतु वेति क्रमेणार्थः । मृदुला.

**[1]तस्याः कुमारमुपस्थ आदध्युः ॥**

तस्या वध्वाः कुमारम् अकृतचौडं बालकम् उपस्थे क्रोडे उपवेशयेयुः ब्राह्मण्यः । § संत. ९०६

**तस्मै शकलोटानञ्जलावावपेयुः ॥**

**फलानि वा ॥**

( १ ) कुमाराय शालुकानि कदल्यादिफलानि वा ब्राह्मण्योऽञ्जलौ दद्युः । शके कर्दमे लुटन्तीति शकलोटाः कन्दकाः । संत. ९०६

( २ ) तस्मै इति व्यत्ययेन षष्ठ्यर्थे चतुर्थी । तस्य वधूत्सङ्गोपविष्टस्य बालकस्याञ्जलौ शकलोटान् शालूकान् आवपेयुः दद्युः ता एव ब्राह्मण्यः । फलानि वा आम्रादीनां तस्याञ्जलावावपेयुस्ताः । मृदुला.

**[2]उत्थाप्य कुमारं ध्रुवा आज्याहुतीर्जुहोत्यष्टौ 'इह धृतिः' इति ॥**

( १ ) ध्रुवाः आवश्यकाः । कथंचिद्गृहगमनाभावेऽपि श्वशुरगृहनिवासेऽपि अवश्यं होतव्या इति । अत्र 'इह धृतिः स्वाहा' इत्यादिप्रयोगः , न तु स्वाहायोगे चतुर्थी, 'धृतिहोमे न प्रयुञ्ज्याद्रोनामसु तथाऽष्टसु । चतुर्थीमप्न्य इत्येतद्रोनामसु हि हूयते ॥' ( कात्स्मृ. ३।८० ) इति छन्दोगपरिशिष्टात् । धृतिहोमे धृत्यष्टकहोमे । संत. ९०६

( २ ) कुमारं वधूत्सङ्गादुत्थाप्य तां संनिधावुपवेश्य वरो जुहोति जुहुयात् । ध्रुवाः तन्नाम्ना प्रसिद्धाः नित्याः , अवश्यहोतव्या इत्यर्थः । यद्वा– आभिर्हुताभिर्वध्वाः पतिगृहे ध्रुवत्वं स्थिरत्वं भवतीति ध्रुवाः । मन्त्राम्नाये द्व्यवसानत्वान्मन्त्रस्य आहुतिद्वयमेवेति शङ्कानिरासायाष्टावित्युक्तम् । तथा च मन्त्रः– 'इह धृतिरिह स्वधृतिरिह रन्तिरिह रमस्व । मयि धृतिर्मयि स्वधृतिर्मयि रमो

---

* 'वरः' इति पदं सूत्रस्थमित्यभ्युपगतं चेदिदं व्याख्यानमुपपद्यते । न तु कस्मिंश्चिदपि आदर्शपुस्तके एतत्सूत्रे 'वरः' इति पदमुपलभ्यते ।

§ साममन्त्रब्राह्मणे 'अश्वाः' 'पूरुषाः' इति बहुवचनान्तः पाठः , 'दक्षिणोऽपि' इति पूर्वरूपं च ।

( १ ) गोगृ. २।४।५ ; संत. ९०५.

( २ ) गोगृ. २।४।६ ; संत. ९०५ गृहागतां (गृहं गतां ).

§ मृदुला. संतवत् ।

( १ ) गोगृ. २।४।७–९ ; संत. ९०६.

( २ ) गोगृ. २।४।१० ; संत. ९०६ ( इति० ).

मयि रमस्व ॥' इति । अर्थः सुगमः । तत्र होमे चतुर्थी न प्रयोज्या । यथा च छन्दोगपरिशिष्टे कात्यायनः — 'धृतिहोमे न प्रयुञ्ज्याद्गोनामसु तथाऽष्टसु । चतुर्थीमघ्न्य इत्येतद्गोनाम्नैव हि हूयते ॥' (कास्मृ. ३।८०) इति । धृतिहोमे अस्मिन्नेव । तथा आश्वयुज्यां पौर्णमास्यां "गोनाममिश्च पृथक् 'काम्याऽसि' इत्येतत्प्रभृतिभिः" इत्यनेन गोभिलसूत्रेण काम्याऽसि प्रियाऽसि इडाऽसि रत्यसि सरस्वत्यसि मह्यसि हव्याऽसि विश्रुतिरसि इत्यघ्न्यानामानि, एतदष्टनामभिः स्वाहान्तैर्होम उक्तः । तत्र चतुर्थी न प्रयुञ्ज्यादित्यर्थः । एवं च 'इह धृतिः स्वाहा' इत्यादिः, 'काम्याऽसि स्वाहा' इत्यादिश्च प्रयोगो द्रष्टव्यः । अघ्न्या गौः (निघण्टुः २।११।१), अमरोऽपि 'अर्जुन्यघ्न्या रोहिणी स्यात्' इत्याह । भारतेऽपि 'अघ्न्या इति गवां नाम' इत्युक्तम् । 'अघ्न्यै स्वाहा' इति यत्र नवाऽऽहुतयस्तत्र बोद्धव्यमिति मुरारिमिश्राः प्राहुः । मृदुला.

**[1]समाप्तासु समिधमाधाय यथावयसं गुरून् गोत्रेणाभिवाद्य यथार्थम् ॥**

(१) समाप्तासु धृत्याज्याहुतिषु समिधमाधाय समिधं प्रक्षिप्य यथावयसं वयोधिकक्रमेण गुरून् वृद्धान् गोत्रेण स्वगोत्रेणाभिवाद्य पादवन्दनं कृत्वा वधूमप्येवं कृत्वा (? कारयित्वा) यथार्थं प्रायश्चित्तहोमादिकमुदीच्यं कर्म समापयेत् । एवमुभयकर्तृकाभिवादनम्, भट्टभाष्योक्तत्वात् । यदि त्वशक्तेः कुलाचाराद्वा तद्दिन एव चतुर्थीहोमः क्रियते तदा तत्समाप्तावेवोदीच्यं कर्म तन्त्रेण कर्तव्यम् । संत. ९०६

(२) समाप्तासु धृत्याहुतिषु अन्यास्वप्याज्यतन्त्रविहितासु आहुतिषु समिधमाधायैवाभिवादयेत्, न त्वनुपर्युक्षणादिकमपि कृत्वा । यथावयसं वयोऽनतिक्रमणेन । 'यथार्थेऽव्ययीभावे' (पासू. २।१।६) 'शरदादित्वात्' (पासू. ५।४।१०७) टच् † समाप्तः । यो यो वयसा वृद्धस्तं तं प्रथममित्यर्थः । गुरून् विद्यागुरुमातृपितृप्रभृतीन् । तत्रापि प्रथमं विद्यागुरुम् । तथा च स्मर्यते— 'लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव वा । आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥' (मस्मृ. २।११७) इति, 'न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ।' (मस्मृ. २।२०५) इति च । गुरुणा ब्रह्मदेन अनिसृष्टः अनाज्ञप्तः स्वान् आत्मीयान् गुरून् पित्रादीन् । तथा— 'उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।' (मस्मृ. २।१४६) इति । मातापित्रोस्तु पूर्वं मातरमेव, 'सहस्रेण पितॄन् माता गौरवेणातिरिच्यते ।' (मस्मृ. २।१४५) इति मानवीयेन तत्र गौरवातिरेकबोधनात् । पितॄनिति व्यक्तिभेदाभिप्रायम् । सहस्रेण गुणेन । प्रकृत्यादित्वादुपलक्षणे वा तृतीया । यथार्थमिति कर्मणः परिसमाप्तिरुच्यते । यथोक्तार्थकम् । दक्षिणा चास्यानादेशात् पूर्णपात्रादिकैवेति शुभम् । मृदुला.

## * जैमिनिगृह्यसूत्रम्

वध्वाः प्रत्यवरोपणं चर्मण्युपवेशनं च, उपस्थस्थापितकुमाराय फलादिदानम्, होमः, विवाहव्रतम्

**[1]स्वं कुलं प्राप्तां कल्याणशीलाः कल्याणप्रजाः समवजीर्णाः प्रत्यवरोपयन्ति— 'इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि । एना पत्या तन्वं संसृजस्वाथाजीव्री विदथमावदासि ॥' इति । प्रत्यवरोप्याऽऽनडुहे चर्मण्युत्तरलोमन्युपवेशयेत्— 'इह गावो निषीदन्त्विहाश्वा इह पुरुषाः । इहो सहस्रदक्षिणोऽभि पूषा निषीदतु ॥' इति । कुमारमुपस्थ आधाय शकलोटानावपेत् फलानि वा । उत्थाप्य कुमारमन्वारब्धायां जुहुयात् 'इह धृतिः' इत्यष्टाभिः**

† शरदादिगणे वयःशब्दपाठाभावात् तस्याऽऽकृतिगणत्वाभावाच्चैतच्चिन्त्यम् ।

(१) गोगृ. २।४।११ ; संत. ९०६.

* खादिरसूत्रे गृहप्रवेशो नोक्तः । प्रयाणप्रकरणे (संका. पृ. २१८८) खादिरसूत्रव्याख्यानं द्रष्टव्यम् ।

(१) जैगृ. १।२२.

स्वाहाकारान्तैः । 'इह धृतिरिह स्वधृतिरिह रन्तिरिह रमस्व । मयि धृतिर्मयि स्वधृतिर्मयि रमो मयि रमस्व ॥' इति । त्रिरात्रमक्षारालवणाशिनौ ब्रह्मचारिणावधःसंवेशिनावसंवर्तमानौ सह शयाताम् ॥

स्वं कुलमिति । स्वं कुलं भर्तृगृहं प्राप्तां तां वधूं सुशीलाः सुप्रजाः समवजीर्णाः जीवत्पतयो जरत्यः प्रत्यवरोपयन्ति शिबिकादिभ्यः स्वाङ्के अनेन मन्त्रेणावरोपयन्ति । एना एनेन । अजीर्त्री अजीर्णा सती । शिष्टं स्पष्टम् ।

प्रत्यत्ररोप्येति । अथ तां पतिर्जरतीनामङ्कात्प्रत्यवरोप्य वृषभस्य चर्मण्यास्तीर्णे अनया ऋचा उपवेशयेत् । पुरस्तन्त्रान्तकृत्यमेतत् ।

कुमारमुपस्थ इति । तस्या अङ्के कुमारं निवेश्य तस्य हस्ते मोदकान् फलानि वा दद्यात् ।

उत्थाप्य कुमारमिति । ततश्चोत्तरतन्त्रम् ।

त्रिरात्रमिति । अधःसंवेशिनौ अखट्वाशायिनौ । असंवर्तमानौ अपरिष्वजन्तौ । श्रीव्या.

## कौशिकगृह्यसूत्रम्

गृहप्रवेशः, अग्निपरिणयनम्, वध्वाश्चर्मण्युपवेशनम्, उपस्थस्थापितकुमाराय फलादिदानम्, होमः, सहभोजनम्, पूर्णाहुतिः

[1] 'उत्तिष्ठेतः' इति पत्नी शालां संप्रोक्षति ॥

'स्योनम्' इति दक्षिणतो वलीकानां शकृत्पिण्डेऽश्मानं निदधाति ॥

तस्योपरि मध्यमपलाशे सर्पिषि चत्वारि दूर्वाग्राणि ॥

'तमातिष्ठ' इत्यास्थाप्य ॥

'सुमङ्गली प्रतरणी' 'इह प्रियम्' 'मा हिंसिष्टम्' 'ब्रह्मापरम्' इति प्रत्यृचं प्रपादयति ॥

सुहृत्पूर्णकंसेन प्रतिपादयति ॥

'अघोरचक्षुः' इत्यग्निं त्रिः परिणयति ॥

यदा गार्हपत्यं 'सूर्यायै देवेभ्यः' इति मन्त्रोक्तेभ्यो नमस्कुर्वतीमनुमन्त्रयते ॥

'शर्म वर्म' इति रोहितचर्माऽऽहरन्तम् ॥

'चर्म चोपस्तृणीथन' इत्युपस्तृणन्तम् ॥

'यं बल्बजम्' इति बल्बजं न्यस्यन्तम् ॥

'उपस्तृणीहि' इत्युपस्तृणन्तम् ॥

तत् 'आरोहतु' इत्यारोहयति ॥

तत्र 'उपविश्य' इत्युपवेशयति ॥

दक्षिणोत्तरमुपस्थं कुरुते ॥

'सुज्यैष्ठ्यः' इति कल्याणनामानं ब्राह्मणायनमुपस्थ उपवेशयति ॥

'वितिष्ठन्ताम्' इति प्रमदनं प्रमायोत्थापयति ॥

'तेन भूतेन, तुभ्यमग्ने, शुम्भनी, अग्निर्जनविन्मह्यं जायामिमामदात्सोमो वसुविन्मह्यं जायामिमामदात्पूषा जातिविन्मह्यं जायामिमामदादिन्द्रः सहीयान्मह्यं जायामिमामदात्, अग्नये जनविदे स्वाहा, सोमाय वसुविदे स्वाहा, पूष्णे जातिविदे स्वाहा, इन्द्राय सहीयसे स्वाहा' इति, 'आगच्छतः*' ॥

'सविता प्रसवानाम्' इति मूर्ध्नोः संपातानानयति ॥

अष्टर्चं कल्पजं सूक्तम् । 'आगच्छतः' इति तृचं सूक्तम् । 'सविता प्रसवानाम्' इति सूक्तम् । एतैः सूक्तैराज्यं जुह्वद्वरवध्वोः क्रमेण संपातानानयति । दाकेटी.

उदपात्र उत्तरान् ॥

शुम्भन्याऽञ्जल्योर्निनयति ॥

'तेन भूतेन' इति समशनम् ॥

रसानाशयति स्थालीपाकं च ॥

यवानामाज्यमिश्राणां पूर्णाञ्जलिं जुहोति ॥

---

(१) कौसू. ७७।१६–७८।१६.

* दारिलकेशवटीकातः सायणभाष्याच्च नात्र सूत्रच्छेदः, किंतु 'संपातानानयति' इत्यन्तमेकमेव सूत्रमिति प्रतिभाति ।

## वैखानसगृह्यसूत्रम्

गृहप्रवेशः, बध्वाश्चर्मोपवेशनम्, वाग्यमः, नक्षत्रदर्शनम्, वरवध्वोः संभाषणम्, आग्नेयस्थालीपाकः, विवाहव्रतम्

[1]अथ चतुर्थीवासः। वैवाहिकमग्निं वध्वा सहाऽऽदाय संप्रवाहारयन्त्विति वधूं समं वध्वेत्यग्निं संशास्ति 'दक्षिणं पादमग्रेऽतिहर, देहलिं माऽधिष्ठाः' इति। आवसथे प्रविश्य प्राच्यामर्धे समादधीत। अग्नेरपरस्यामानडुहं चर्म लोहितं कृष्णाजिनं वा प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति। तत्र प्राङ्मुखमुदङ्मुखं वा वधूमुपवेश्य पतिः 'इह गावः प्रजायध्वम्' इति पश्चान्निषीदेत। आ ज्योतिषां दर्शनाद्वाचंयमावन्यतरानुपेतावासाताम्। उदिते नक्षत्रे प्राचीमुदीचीं वा 'देवीः षडुर्वीः' इति दिशमुपस्थाय 'मा हास्महि प्रजया' इति चन्द्रम् 'सप्तर्षयः' इति सप्तर्षीन् कृत्तिका नक्षत्राण्यरुन्धतीं च 'ध्रुवक्षितिः' इति ध्रुवं च दृष्ट्वोपतिष्ठेयाताम्। मनोज्ञं तया सह संभाष्य। अथाऽऽग्नेयः स्थालीपाकः। 'प्रजा स्थालीम्' इति स्थालीमभिमृश्य 'अग्नये जुष्टं निर्वपामि' इति स्थाल्यां तण्डुलान्निर्वाप्य 'वाचस्पतये पवस्व' इति वध्वा चरुं श्रपयति। अभिघार्योदगुद्वास्य परिस्तीर्याग्निमुपसमाधाय 'हव्यवाहम्' इति स्विष्टकृता यजेत। हुतशेषेण श्रोत्रियं ब्राह्मणं तर्पयित्वा तस्मा ऋषभं दत्त्वाऽनृणो भवतीति विज्ञायते॥

तदेवं त्रिरात्रं हविष्याशिनौ ब्रह्मचारिणौ धौतवस्त्रव्रतचारिणौ स्याताम्॥

(१) वैगृ. ३।५, ३।८.

## कात्यायनः

धृतिहोमे चतुर्थ्या अप्रयोगः

*[1]धृतिहोमे न प्रयुञ्ज्याद्धोनामसु तथाऽष्टसु।
चतुर्थीमघ्न्य इत्येतद्धोनामसु हि हूयते॥

## सत्यव्रतः

विवाहव्रतम्

[2]विवाहे दम्पती स्यातां त्रिरात्रं ब्रह्मचारिणौ।
अधःशय्यासनौ स्यातामक्षारालवणाशिनौ॥

## आश्वलायनः

गृहप्रवेशः, आर्षभचर्मोपवेशनम्, होममन्त्रस्वाहाकारयोरुच्चैरुपांशूच्चारणफलानि, होमः, दधिप्राशनं दध्यञ्जनं वा, चर्मोद्धरणम्, साभ्यङ्गस्नानम्, पुण्याहवाचनम्, ब्राह्मणभोजनम्, वधूवस्त्रदानम्

[3]पुत्रवृद्ध्यर्थमुदितामिह प्रियमिति त्वृचा।
प्रविशेतां गृहं तौ च ब्राह्मणानामनुज्ञया॥
मङ्गल्यस्याऽऽधिपत्यस्य सुचरित्रत्व( ? स्य ) सिद्धये।
गृहप्रवेश ऋषभचर्मास्तरणमिष्यते॥
तस्याभावे तु तार्णस्य तल्पस्याऽऽस्तरणं भवेत्।
अग्नेः पश्चिमभागे तु वरुणाग्नो( ? ग्नि )प्रतिष्ठिते॥
चतुरश्रं समालिख्य समालिप्तभुवि द्विजः।
दर्भाक्षतादि निक्षिप्य कृतचर्माऽऽस्तृणात्यथ॥
उदक्संस्थं स्तृणात्येव शाकुन्तं वाचयेद्द्विजैः।
फलपुष्पाक्षतादींश्च विकिरद्भिर्गुरुस्तदा॥
मन्त्रानुच्चैर्वदेन( ? देत् )सम्यक् स्वाहाकारमुपांशु च।

* व्याख्यानं गोगृ २।४।१० इत्यत्र द्रष्टव्यम्।

(१) कास्मृ. ३।८० नामसु हि ( नाम न हि ); संत. ९०६.

(२) प्रपा. ३६४ सनौ (सिनौ) क्षारा (क्षार); संप्र. ८४४-८४५.

(३) आश्वस्मृ. ११।४४३-४६० पृ. ८६-८७.

केवलैहिकसंसिद्धयै स्वाहाकारमुपांशुवत् ॥
होमे तु क्रियते तज्ज्ञैर्मन्त्रं पारत्रिकस्य तु ।
पारत्रिकस्यैहिकस्य सम्यक्संसिद्धये द्विजः ॥
स्वाहाकारं च मन्त्रं च वदन्नुच्चैर्हुनेन्मुनिः ।
वध्वाशिषे प्रजासिद्धयै कामानां चाऽऽशु वृद्धये ॥
आ न इत्यादिभिर्मन्त्रैर्हूयतेऽत्र घृतैर्गवाम् ।
वृद्धयै वीर्यस्य चाच्छित्यै दधि प्राश्नाति मन्त्रवत् ॥
सघृतं तु तदुच्छिष्टं तस्यै दद्यात्ततो वरः ।
केचिन्नेच्छन्ति तदपि प्राग्घोमात्तावदुत्तमाः ॥
काम्यत्वात्कर्मणस्तस्य ब्राह्मणाः कर्मतत्पराः ।
क्रियालोपभयात्तेऽपि प्रागेव स्विष्टकृद्धुतेः ॥
कुर्वन्ति हृदये चाऽऽज्यैर्दम्पत्योः क्रमतोऽञ्जनम् ।
आपः प्रजापतिर्वायुर्विश्वेदेवाश्च तेन तत् ॥
वीर्यमाविश्य तिष्ठन्ति हृदयं चाऽऽयुषे श्रियै ।
तद्दीक्षान्त्यदिने प्रातर्हुत्वाऽग्निं देशिकाज्ञया ॥
तच्चर्मोद्धरणं कुर्याच्छाकुन्तं वाचयेद्द्विजैः ।
तृप्त्यर्थं देवकन्यानां फलपुष्पाक्षतादिकान् ॥
पूर्ववद्विकिरेत्तावत्तच्चर्मणि शनैः शनैः ।
फलादीनाहरेयुस्तु ताम्बूलानि वचाबलाः ॥
कन्यकाश्च विशेषेण तृप्ताः स्युस्तेन कन्यकाः ।
तैलमभ्यज्य च स्नात्वा लौकिकान् संनिवृत्य च ॥
पुण्याहं वाचयित्वा तु ब्राह्मणान् भोजयेत्ततः ।
वस्त्रे सूर्याविदे दद्याद्भर्ता सूर्याप्रतृप्तये ॥
तावत्तेनाऽऽशु सौभाग्यमृद्धिं च महतीमियात् ॥

## लघ्वाश्वलायनः

गृहप्रवेशः, होमः, दधिप्राशनम्, हृदयाञ्जनम्

[१]सूत्रोक्तविधिना चेह प्रियामूढां प्रवेशयेत् ।
प्रतिष्ठाप्यानलं कुर्याच्चक्षुष्यन्तं च पूर्ववत् ।
ऋग्भिश्च जुहुयादाज्यमा नः प्रजां चतसृभिः ॥
समञ्जन्त्वेतया प्राश्य दधि तस्यै प्रयच्छति ।
अनक्ति हृदये तस्या दध्नाऽलाभे घृतं च (? घृतेन) तत् ॥
मन्त्रलोपादिहोमान्तं कृत्वा स्विष्टकृदादिकम् ।
हुत्वा व्याहृतिभिश्चात्र पत्नीं वामे समानयेत् ॥
नवोढामानयेत् पत्नीं वामं वामं त इत्यृचा ।
वाममद्येत्यृचा चैके ततः पूर्णमसीति च ॥

(१) लघ्वाश्वस्मृ. १५।५१–५५.

## स्मृत्यन्तरम्

विवाहव्रतम्

[१]विवाहे दम्पती स्यातां त्रिरात्रं ब्रह्मचारिणौ ।
अलङ्कृतावधश्चैकसहशय्यासनाशनौ ॥

## ब्रह्मपुराणम्

विवाहव्रतकालानां वधूवरवयोमानभेदेन व्यवस्था

[२]कृते विवाहे वर्षं तु वस्तव्यं ब्रह्मचारिणा ।
यद्यष्टवर्षा कन्या स्यात्तथा तत्त्रिगुणः पुमान् ॥
(१) त्रिगुणः चतुर्दश( ? विंश )वर्षः । गृक. १००
(२) तत्त्रिगुणः अष्टवर्षत्रिगुणः चतुर्विंशतिवार्षिक इति यावत् । † गृर. ८३
[३]अथ तद्द्वादशाहानि त्रिंशद्वर्षेण सर्वदा ।
यदि द्वादशवर्षा स्यात् कन्या रूपगुणान्विता ॥
[४]द्वात्रिंशद्वर्षपूर्णेन यदि षोडशवार्षिकी ।
लब्धा तदा तु षड्रात्रं वस्तव्यं संयतेन तु ॥

† संप्र., संग. गृरवत् ।
(१) धप्र. ४८–४९ श्चैकस (श्चैव स); संग. २९१.
(२) गृक. १०० था तत्त्रि (थाऽत्र त्रि); गृर. ८३; संप्र. ८४५; संग. १७५ उत्त., २९१ तथा (तदा).
(३) गृक. १०१ अथ तद्द्वा (अथवा द्वा); गृर. ८३ गृकवत्; संप्र. ८४५; संग. १७५ उत्त., २९१.
(४) गृक. १०१; गृर. ८३ पूर्णेन (पूर्णे तु) तदा तु (तदा च); संप्र. ८४५; संग. १७५ पू. अत्र पूर्वा-

[1]विंशत्यब्दा यदा कन्या वस्तव्यं तत्र वै त्र्यहम्।
अत ऊर्ध्वमहोरात्रं वस्तव्यमतिसंयतैः ॥

## स्मृत्यर्थसारः

विवाहव्रतम्

[2]विवाहे दम्पती स्यातां त्रिरात्रं ब्रह्मचारिणौ ।
अलङ्कृतावधश्चैव सहशय्यासनाशनौ ॥

## फलप्रदीपकारः

गृहप्रवेशः, स्वस्तिवाचनम्, भोजनम्, संवेशनम्

[3]विधाय पूर्वं गृहदेवतार्चां
सन्मङ्गलालङ्कृतगेहदेहः ।
तूर्यस्वनैर्मङ्गलगीतपूर्ण-
कुम्भैर्विशेद्दीपवधूसमेतः ॥

[4]स्वस्तिवाचनपुरःसरं ततो
विप्रसंघमभिपूज्य शक्तितः ।
बन्धुभिः सह विधाय भोजनं
संविशेदभिमताङ्गनासखः ॥

## शाकलकारिका:

गृहप्रवेशविधिः

[5]प्रविशेद्विधिवद्गेहं मण्डपोद्वासनं ततः ।
विधिना पूर्ववत् कार्यमेष धर्मः सनातनः ॥

## शौनककारिकाः

गृहप्रवेशः, आनडुहचर्मोपवेशनम्, गृहप्रवेशनीयहोमः, दधिप्राशनहृदयाञ्जनविकल्पः, विवाहव्रतम्, वधूवस्त्रदानम्, ब्राह्मणभोजनम्, पुण्याहवाचनम्, दाक्षायण्यादिपूजनम्

[1]इत्यध्वना स्वकं वेश्म वधूं प्रापय्य तां वरः ॥
[2]तया सह गृहद्वारप्रदेशे प्राङ्मुखः स्थितः ।
प्रदीपपूर्णकुम्भादिपाणिभिर्वनिताजनैः ॥
[3]कृताभ्युद्गमनस्तत्र तैः सादरकृतार्हणः ।
प्रदक्षिणप्रक्रमणमनुभूय क्षणान्तरम् ॥
[4]ततस्तां पूर्ववत् पाणौ परिगृह्य वधूं वरः ।
प्रवेशयेद्गृहमिह प्रियमित्यादृचं जपन् ॥
[5]तत्र प्रदेशे कस्मिंश्चिदुपलेपनपूर्वकम् ।
विधाय स्थण्डिलं तस्मिन् विवाहाग्निं निधाय च ॥
[6]ततोऽग्नेः पश्चिमे देशे प्राग्ग्रीवोपरिलोमिकाम्।
त्वचमानडुहीं वध्वाः समास्तीर्याऽऽसनक्षमाम् ॥
[7]उपवेश्य वधूं तत्र ततोऽन्वाधानपूर्वकम् ।
अनूयाजनिधानान्तं पुरस्तन्त्रं विधाय च ॥

---

र्धादुत्तरं 'षट्त्रिंशद्वर्षपूर्णेन विवाह्या ह्यन्यथा नहि ।' इत्यर्धं विद्यते, तदेतत्प्रकरण.संबद्धम् : २९१ संयतेन ( संयमेन ).

(१) गृक. १०१ मतिसं( मपि सं ); गृर. ८३ मतिसंयतैः (मिति संमतम्); संप्र. ८४५ मतिसं (मिति सं); संग. २९१.

(२) स्मृसार. १७.

(३) प्रपा. ४२८; विपा. १३५ ( भागः २ ) गेहदेहः ( देहगेहः ) दीप ( विप्र ) कारिकाकारः .

(४) प्रपा. ४२८; विपा. १३५ ( भागः २ ) कारिकाकारः .

(५) शाका. १६५ पृ. १८.

(१) शौका. १० पृ. ६२; प्रपा. ४२८.

(२) शौका. ११ पृ. ६२; प्रपा. ४२८ रप्रदेशे ( रं प्रविशेत् ).

(३) शौका. १२ पृ. ६२ पूर्वार्धे ( सत्कृताभ्युद्गमस्तत्र तैः संपन्नमथार्हणम् । ); प्रपा. ४२८.

(४) शौका. १३ पृ. ६२ जपन् ( ब्रुवन् ); प्रपा. ४२८.

(५) शौका. १४ पृ. ६२; प्रपा. ३६३ लेपन ( लेपादि ); संप्र. ८४२.

(६) शौका. १५ पृ. ६२; प्रपा. ३६३; संप्र. ८४२ डुहीं ( डुहं ) नक्षमाम् ( नं क्षमी ).

(७) शौका. १६ पृ. ६२; प्रपा. ३६३ निधा ( विधा ); संप्र. ८४२ स्तन्त्रं वि ( स्तात्रं नि ).

[1]अन्वारब्धस्ततो वध्वा यदिध्माधानपूर्वकम् ।
पुरस्तात्तन्त्रशेषं तद्विधाय जुहुयात्ततः ॥
[2]आ नः प्रजामित्यादिभिर्ऋग्भिश्चतसृभिर्घृतम् ।
तत्र प्रत्यृचमित्युक्तैर्मन्त्रोक्तावनले हविः ॥
[3]प्रक्षिप्य पश्चात् स्वाहेति शब्दं होता समीरयेत् ।
ततः समञ्जन्त्वित्याद्यामृचमुक्त्वा स्वयं दधि ॥
[4]किंचित् प्राश्यावशिष्टं च दधि तां प्राशयेद्वधूम् ।
अथवाऽऽहुतिशिष्टाज्यशेषेणैवोरसी उभे ॥
[5]समञ्जन्त्व( ? समनक्त्व )नयैवर्चा स्वस्य वध्वा अपि क्रमात् ।
ततः स्विष्टकृदाद्यूर्ध्वं तन्त्रं परिसमापयेत् ॥
[6]अत ऊर्ध्वं त्रिरात्रं तौ द्वादशाहमथापि वा ।
शक्तिं वीक्ष्य तथाऽब्दं वा चरेतां दम्पती व्रतम् ॥
[7]अक्षारलवणाहारौ भवेतां भूतले तथा ।
शयीयातां समावेशं न कुर्यातां वधूवरौ ॥

(१) शौका. १७ पृ. ६२ ; प्रपा. ३६३ ; संप्र. ८४२ यदिध्मा ( यदीध्मा ) तद्वि ( यद्वि ).

(२) शौका. १८ पृ. ६२ ; प्रपा. ३६३ ; संप्र. ८४२ क्तैर्मन्त्रोक्तावनले ( क्ते मन्त्रोवत्यन्ते हुवेत् ).

(३) शौका. १९ पृ. ६२–६३ ; प्रपा. ३६३ ; संप्र. ८४२.

(४) शौका. २० पृ. ६३ च दधि ( तद्दधि ) ; प्रपा. ३६३ वाऽऽहुति ( वा हुत ) ; संप्र. ८४२.

(५) शौका. २१ पृ. ६३ वर्चा ( कर्चा ) कृदाद्यू ( कृतादू ) ; प्रपा. ३६३ शौकावत् ; संप्र. ८४३ र्ध्वं त ( र्ध्वत ).

(६) शौका. २२ पृ. ६३ तौ ( तु ) ; प्रपा. ३६३ ; संप्र. ८४४ चरेतां ( चरतां ) ; विपा. ५१ ( भागः २ ) ब्दं वा ( ब्दं च ) ; संग. २९१ संप्रवत्.

(७) शौका. २३ पृ. ६३ ; प्रपा. ३६३–३६४ ; संप्र. ८४३ प्रथमपादमात्रम् : ८४४ ; विपा. ५१ (भागः २ ) ; संग. २९१.

(१) ‘ अक्षारलवणाहारौ ’ इति शौनकवाक्ये तु क्षारं च लवणं च क्षारलवणे, तद्वर्जमाहारो ययोस्ताविति ।
संप्र. ८४३

(२) समावेशः मैथुनम् ।
¶ विपा. ५१ ( भागः २ )

[1]व्रते समाप्ते वध्वा च विवाहसमये धृतम् ।
वस्त्रं प्रदद्यात्तत्तस्मै ब्राह्मणाय विपश्चिते ॥
[2]सूर्यानाम्नीर्ऋचो वेत्ति शब्दार्थस्वरतश्च यः ।
सत्येनोत्तभितेत्याद्यामृचमारभ्य या ऋचः ॥
[3]वि हि सोतोरसृक्षत नेन्द्रमित्यादृचः पुरा ।
अधीतास्ता इहोच्यन्ते सूर्याशब्देन सूरिभिः ॥
[4]ब्राह्मणान् भोजयित्वा तैः पुण्याहमथ वाचयेत् ।
दम्पती रोहिणीसोमौ भूत्वा प्राथमिके दिने ॥
[5]दाक्षायणीं यजेयातां द्वितीयदिवसेऽपि तौ ।
पूजयेतां महादेवीं गन्धर्वाप्सरसौ च तौ ॥

¶ संग. विपावत् ।

(१) शौका. २४ पृ. ६३ ; प्रपा. ३६४ ; संप्र. ८४४ ; विपा. ५१ ( भागः २ ).

(२) शौका. २५ पृ. ६३ सूर्या ( सूर्य ) ; प्रपा. ३६४ ; संप्र. ८४४ र्यानाम्नीर्ऋ ( र्या नाम्ना ऋ ) ; विपा. ५१–५२ ( भागः २ ) चो वेत्ति ( चोऽध्येति ) त्तभिते ( त्तम्भिते ).

(३) शौका. २६ पृ. ६३ सूर्या ( सूर्य ) ; प्रपा. ३६४ ; संप्र. ८४४ त्याद्यृचः ( त्यादिकाः ) ; विपा. ५३ ( भागः २ ) त्याद्यृचः ( त्याद्यथो ) अधीतास्ता (अधीरान्ता).

(४) शौका. २७ पृ. ६३ ; प्रपा. ३६४ ; संप्र. ८४४ प्राथमिके ( प्रथमके ) ; विपा. ५३–५४ ( भागः २ ) संप्रवत् ; संग. २९२ के दिने (केऽहनि) शेषं संप्रवत् , उत्त.

(५) शौका. २८ पृ. ६३ येतां म ( येत्तां म ) ; प्रपा. ३६४ ; संप्र. ८४४ ; विपा. ५४ ( भागः २ ) द्वितीय ( द्वितीये ) ; संग. २९२.

[1]अग्निस्वाहे तृतीयेऽह्नि पूजयेतां च कालिकाम् ।
चतुर्थ्यां तौ यजेयातां शाङ्करीं मानवस्त्रियौ ॥
[2]एवं प्रतिदिनं पूजां कुर्यातां दम्पती तदा ।
चतुर्ष्वेतेषु दिवसेष्वर्चयेद्ब्राह्मणान् बहून् ॥
[3]वस्त्रहेमादिमिष्टान्नताम्बूलादिप्रदानतः ।
आशीर्वादैर्बहुविधैश्चतुर्वेदोदितैर्द्विजैः ॥
तौ वर्धयेयुरिति शेषः । ‡ संप्र. ८४४

## कुमारिलकारिकाः

गृहप्रवेशः, आनडुहचर्मोपवेशनम्, गृहप्रवेशनीयहोमः, दधिप्राशनं हृदयाञ्जनं वा, वधूवस्त्रदानम्, ब्राह्मणभोजनम्, स्वस्तिवाचनम्

[4]इह प्रियमृचा भार्यां स्वस्य गेहे प्रवेशयेत् ।
उपलेपादिकं कृत्वा विवाहाग्निं समिध्य च ॥
[5]प्राग्ग्रीवमूर्ध्वलोमाग्नेः प्रत्यगानडुहाजिनम् ।
आज्यासादनपर्यन्तमन्वाधानादि पूर्ववत् ॥
[1]चर्मण्यथोपविष्टायां समन्वारब्ध एव सन् ।
कुर्यादाघारपर्यन्तमिध्माधानादि पूर्ववत् ॥
[2]ऋग्भिश्चतसृभिश्चाऽऽनः प्रजामित्यादिभिस्त्वथ ।
पठन्नाज्याहुतीर्हुत्वा स्वाहाकारमृगन्ततः ॥
[3]समञ्जन्त्वनया प्राश्य दधि तस्यै प्रयच्छति ।
साऽपि प्राश्नाति तत्तूष्णीमथ स्विष्टकृदादिकम् ॥
[4]अथवाऽनक्ति हृदये एतयर्चाऽऽज्यशेषतः ।
वध्वा विवाहवेलायां यत्तत्परिहिताम्बरम् ॥
[5]सत्येनोत्तभितासूक्तं वेत्ति यः पाठतोऽर्थतः ।
तस्मै विप्राय तद्दद्याद्व्रतान्ते धौतमम्बरम् ॥
[6]ब्राह्मणान् भोजयित्वैतानों स्वस्तीत्यथ वाचयेत् ।
ओं स्वस्तीति प्रतिब्रूयुर्ब्राह्मणास्ते च पूजिताः ॥

## रेणुकारिकाः

गृहप्रवेशः तत्क्रमश्च

†[7]ततो वधूप्रवेशनं वरालये पितुर्गृहात् ।
भवेद्विवाहमे विधौ शुभग्रहैः समीक्षिते ॥
इदं वधूप्रवेशनं त्रिविक्रमादिसूरयः ।
चतुर्थकर्मणः पुरा वदन्ति सौम्यवासरे ॥

---

‡ संग. संप्रवत् ।

(१) शौका. २९ पृ. ६३ येऽह्नि (येऽथ) यजे (जपे); प्रपा. ३६४ येऽह्नि (येऽथ) यजे (जये); संप्र. ८४४; विपा. ५४ (भागः २); संग. २९२.

(२) शौका. ३० पृ. ६३ पूजां कुर्यातां (कर्तुं पूजां यो ?); प्रपा. ३६४; संप्र. ८४४ पूजां कुर्यातां (कर्तुं पूजां तौ) येद्ब्राह्मणान् (येतां द्विजान्); विपा. ५४ (भागः २) पूजां कुर्यातां (कृत्वा पूजां तौ) तदा (तथा) ष्वेतेषु (ष्वन्तेषु); संग. २९२ पूजां कुर्यातां (कर्तुं पूजां तौ) ष्वेतेषु (ष्वन्तेषु).

(३) शौका. ३१ पृ. ६३; प्रपा. ३६४ मिष्टा (मृष्टा); संप्र. ८४४ द्विजैः (द्विजाः); विपा. ५४ (भागः २) न्नता (न्नं ता) दिप्रदानतः (दि प्रयत्नतः); संग. २९२ दानतः (यत्नतः), पू.

(४) कुका. १।२३।८; प्रपा. ३६२, उत्त. : ४२८ गेहे (गेहं) पू.

(५) कुका. १।२३।९; प्रपा. ३६२ हाजिनम् (हं भवेत्).

† रेणुना प्रयाणगृहप्रवेशौ चतुर्थीकर्मोत्तरमुक्तौ ।

(१) कुका. १।२३।१०; प्रपा. ३६२ रब्ध एव सन् (रमते पतिः) कुर्यादाघार (कृत्वाऽऽज्यभाग) मन्वा (मिध्मा).

(२) कुका. १।२३।११; प्रपा. ३६२ भिश्चाऽऽ (भिरा).

(३) कुका. १।२३।१२; प्रपा. ३६२ न्त्वनया (न्त्वित्यृचा) साऽपि (सा तु).

(४) कुका. १।२३।१३ यत्तत् (यत्सा); प्रपा. ३६२ ये एत (यमेत) पू. : ३६३ उत्त.

(५) कुका. १।२३।१४; प्रपा. ३६३.

(६) कुका. १।२३।१५; प्रपा. ३६३ त्वैता (त्वा ता) ते च (तेन).

(७) रेका. १ पृ. ७१, २४ पृ. ७२.

# ऐरिणीदानम्

## लघ्वाश्वलायनः

चतुर्थदिवसान्ते उमामहेश्वरनमस्कारपूर्वकं वंशदानम्

[1]चतुर्थीत्रिदिव(? चतुर्थदिवस)स्यान्ते यामे वा चैव दम्पती।
उमामहेश्वरौ नत्वा वंशदानं प्रदापयेत् ॥

## अनिर्दिष्टकर्तृकवचनानि

ऐरिणीस्वरूपम्

[2]सवस्त्रफलताम्बूलं दम्पत्योर्वंशवर्धनम्।
ऐरिण्याख्यं वंशपात्रं पक्वान्नैः परिपूरितम् ॥

[3]करकै रुद्रसंख्याकैः सुवर्णपरिपूरितैः।
एतावदैरिणीरूपं कर्तव्यं किल सूरिभिः ॥

रुद्रसंख्यैः एकादशसंख्यैः। संर. ५८०

ऐरिणीप्रार्थना वरमातृप्रार्थना च

[4]ऐरिणि त्वमुमा देवी महेशो गिरिजापतिः।
अतस्त्वां पूजयिष्यामि ऐरिणीं सर्वकामदाम् ॥

[5]सवस्त्रां च सदीपां च शूर्पैः षोडशभिर्युताम्।
वरमात्रे प्रदास्यामि कन्यादानस्य सिद्धये ॥

[6]वंशो वंशकरः श्रेष्ठो वंशो वंशसमुद्भवः।
अनेन वंशदानेन तुष्टो वृद्धिं करोतु मे ॥

(१) लघ्वाश्वस्मृ. १५।६४.

(२) प्रर. ११४ ; संग. ३१४ ; संर. ५८०.

(३) प्रर. ११४ ; संग. ३१४ ; संर. ५८० पूर्वार्धे (करकै रुद्रसंख्यैस्तु सुवर्णेन समन्वितैः।).

(४) प्रर. ११४ ; संग. ३१५ ऐरिणि (ऐरिणी) ; संर. ५८१.

(५) प्रर. ११४ ; संग. ३१५ युताम् (वृताम्) ; संर. ५८१.

(६) प्रर. ११४ ; संग. ३१५ तुष्टो वृद्धिं (तुष्ट ऋद्धिं) ; संर. ५८१.

[1]वंशपात्रमिदं पुण्यं वंशजातिसमुद्भवम्।
वंशानामुत्तमं दानमतः शान्तिं प्रयच्छ मे ॥

[2]वंशपात्राणि सर्वाणि मया संपादितानि वै।
उमाकान्ताय दत्तानि मम गोत्राभिवृद्धये ॥

[3]वंशवृद्धिकरं दानं सौभाग्यादिसमन्वितम्।
वस्त्रेणाऽऽच्छादितं पूगफलहेमसमन्वितम् ॥

[4]सर्वपापक्षयकरं नानाद्रव्यैस्तु पूरितम्।
दानानामुत्तमं दानमतः शान्तिं प्रयच्छ मे ॥

[5]सप्तवर्षा त्वियं कन्या पुत्रवत् पालिता मया।
इदानीं तव पुत्राय दत्ता स्नेहेन पाल्यताम् ॥

षड्वार्षिक्यां तु 'षड्वत्सरा त्वियं कन्या' इत्यूहः। अष्टवार्षिक्यादिषु तु 'अष्टवर्षा त्वियं कन्या', 'नववर्षा त्वियं कन्या', 'दशवर्षा त्वियं कन्या' इत्येवं यथायथम्। एवं पुत्रायेत्यत्रापि पौत्राय, भ्रात्रे, बान्धवाय, मित्रायेति। संर. ५८१

वंशदानाभावे आयुषः क्षयः

[6]वंशदानं विना यस्तु मण्डपोद्वासनं यदि।
अज्ञानात् कुरुते मूढो दम्पत्योः क्षयमायुषः ॥

एतदकरणे दोष इत्येतदर्थे वचनं पठन्ति— वंशदानमिति। वस्तुतस्तु महानिबन्धेष्वदर्शनादनाकरमिदम्। संर. ५८२

(१) प्रर. ११४ जाति (जात) ; संग. ३१५ ; संर. ५८१.

(२) प्रर. ११४ ; संग. ३१५ ; संर. ५८१.

(३) प्रर. ११४ ; संग. ३१५ ; संर. ५८१ पूगफल (पूर्ण फल).

(४) प्रर. ११४ ; संग. ३१५ द्रव्यैस्तु (द्रव्यैश्च) ; संर. ५८१.

(५) प्रर. ११४ सप्त (अष्ट) ; संग. ३१५ ; संर. ५८१.

(६) धप्र. ५० ; संग. ३१४ ; संर. ५८२.

## शाकलकारिकाः

पैरिणीदानकालः, अभ्यङ्गस्नानपूर्वकमैरिणीदानम्, अस्य कन्यादानाङ्गता, वरमातृप्रार्थना

[1]उत्थायापररात्रे तु चतुर्थी(? र्थे)दिवसस्य च।
अभ्यज्य दम्पती स्नातां कन्यायाः पितरावपि॥
[2]दम्पत्योर्वाससी दत्त्वा पूजयेदैरिणीं ततः।
वंशपात्रं तथा कन्यां वरमात्रे निवेदयेत्॥
वंशदानं चतुर्थेऽह्नि कन्यादानाङ्गमिष्यते।
रात्रौ कुर्यात्तृतीयेंऽशे कुयोगेऽपि न दुष्यति॥
[3]पातो वा वैधृतिर्वा स्याच्चतुर्थेऽहनि चेद्यदि।
तत्रैवापररात्रे स्यादैरिणीपूजनादिकम्॥

चतुर्थेऽह्न्येव पातवैधृती स्यातां चेदपि तदा कार्यमेव, नान्यत्रेत्येतत्तात्पर्यार्थः। संर. ५८२

[4]वंशपात्रमिदं पुण्यं वंशानां वंशवर्धनम्।
वंशः स्याद्दीयते(?) दानं कुलकोटिं समुद्धरेत्॥
पुत्रवत् पालिताऽस्माभिः क्षणमेतच्च(?) जन्मनः।
कन्या मे तेऽद्य पुत्राय दत्ता स्नेहेन पाल्यताम्॥
अस्मदादीन् सुहृद्बन्धूंस्त्यक्त्वा याति भवद्गृहम्।
अतिस्नेहेन वै मातः कन्यां मे परिपालय॥

(१) शाका. १५७ पृ. १७.

(२) शाका. १५८, १५९ पृ. १७; संर. ५८२.

(३) शाका. १६० पृ. १७ वा वैधृति (वाऽथ धृति); संर. ५८२.

(४) शाका. १६१–१६३ पृ. १७–१८.

## शौनककारिकाः

कालः, मङ्गलस्नानम्, ऐरिणीपूजनम्, बलिदानम्, ऐरिणीदानम्, वरमातृप्रार्थना

[1]उत्थायापररात्रे तु चतुर्थ्यां कन्यकापिता।
कुर्वीत मङ्गलस्नानं भार्या चैव हि तस्य तु॥
[2]दम्पती मङ्गलस्नानं कृत्वा वस्त्रं च धारयेत्।
ताभ्यां च वाससी दद्यादैरिणीं पूजयेदथ॥
[3]बलिदानं ततः कुर्याच्चतुर्दिक्षु यथाक्रमम्।
अनेन बलिदानेन प्रीयन्तामिह देवताः॥
[4]पित्रे वरस्य मात्रे च दद्याद्वस्त्राणि वै ततः।
वरमातुः करे दद्याद्वंशपात्रं सुपूजितम्॥
[5]वंशदानमिदं पुण्यं वंशानां वंशवर्धनम्।
वंशस्य दीयते दानमतः शान्तिं प्रयच्छ मे॥
अस्मदादीन् सुहृद्बन्धून् मुक्त्वा याति भवद्गृहम्।
मातः पालय भावेन कन्यां मे कृपवत्सलाम्॥
कन्या सुपालिताऽस्माभिः क्षणमेतच्च जन्मतः।
दीयते ते सुतायाद्य प्रीतये पार्वतीपतेः॥
कन्या संपालिताऽऽवाभ्यामतिस्नेहेन पुत्रवत्।
इदानीं तव पुत्राय दत्ता स्नेहेन पाल्यताम्॥

(१) धप्र. ४९ लस्नानं (लं स्नानं) हि तस्य तु (तु तत्सह); संग. ३१४ धर्मप्रवृत्तौ.

(२) धप्र. ४९ लस्नानं (लं स्नानं); संग. ३१४ धर्मप्रवृत्तौ.

(३) धप्र. ४९.

(४) धप्र. ४९; संग. ३१४ वै ततः (चैकतः) धर्मप्रवृत्तौ.

(५) धप्र. ४९.

# *नागबलिः

## वराहमिहिरः

नागबलेश्चतुर्थेऽहनि कर्तव्यता आशीर्वाचनं च

**[१]विवाहस्य निवृत्तिस्तु चतुर्थेऽहनि रात्रिषु ।**
**तासु नागबलिः कार्यो विप्राशीर्वाचनं तथा ॥**

* इदमत्रावधेयम्— नागबलेश्चतुर्थेऽहनि कर्तव्यतायां न किंचनप्रमाणविवादः, किं तु प्रयाणगृहप्रवेशाभ्यां पूर्वं तस्य कर्तव्यता उत्तरं वेति तु निर्णेयम् । तत्र यज्ञपार्श्वे संवेशनशब्दस्य निबन्धकृदभिमतगृहप्रवेशपरतायां पूर्वकर्तव्यता स्पष्टा, मैथुनाद्यर्थपरतायां तु संदिग्धैव । न च 'संपूज्य चाश्वहस्त्यादीनारोप्य स्वगृहं प्रति । संवेशनादिकं कर्म' इत्युक्तिः पूर्वकर्तव्यतानिर्णायिकेति वाच्यम्, संवेशनशब्दस्य मैथुनाद्यर्थपरतायामपि 'वरः स्वगृहे अश्व(शुक)हस्त्यादीन् आरोप्य तण्डुलादिनिर्मितान् संस्थाप्य संपूज्य च संवेशनादिकं कुर्यात्' इति वाक्यार्थसंभवात् । वराहमिहिर-शौनकवचनान्यपि नेममर्थं निर्णयन्ति । संवेशनपदस्य गृहप्रवेशपरतामभिदधानौ मयूखपारिजातौ गृहप्रवेशात् पूर्वं कर्तव्यतां बोधयतः । तत्रापि पारिजातः श्वशुरगृहे विवाहव्रतसमाप्त्यनन्तरं प्रयाणादपि पूर्वं कर्तव्यतां ब्रूते । एवं स्थितेऽत्रेयमस्माकं प्रतिपत्तिः— विवाहहोमदिनादिकं तथवर्षावधिके काले कस्मिंश्चन शुभमुहूर्ते प्रयाणगृहप्रवेशौ कर्तव्याविति बहुप्रमाणसिद्धम्, विवाहहोमान्तररात्रावेव तौ शिष्टैरिदानीमाचर्येते च । चतुरो दिवसान् श्वशुरगृहे न्युष्य पञ्चमादिदिवसेषु तौ कर्तव्यावित्यत्र लब्धाश्वलायनस्मृत्यादि किंचिदेव प्रमाणम् । मयूखपारिजातौ प्रति प्रबलप्रमाणभूतमाश्वलायनगृह्यसूत्रमन्तरावर्ततप्रसक्तौ 'ब्राह्मण्याश्च वृद्धायाः... अगार एतां रात्रिं वसेत्' इति विशेषविधौ रात्रिविशेषणमेतच्छब्दं प्रयुञ्जानं विवाहहोमदिने एव प्रयाणमवगमयति, भाष्यकारादिभिस्तथा व्याख्यातम्, 'विवाहरजनीमेनाम्' इत्यादिना शौनकेन स्पष्टमुक्तं च ।

(१) प्रपा. ४२३ वाचनं (वचनं) अस्मिन्नेव पृष्ठे पुनरपीदं वचनं विद्यते ; संम. ७३ ; विपा. १३१ (भागः २) तासु (वास्तु) शेषं प्रपावत् .

सं. का. २७९

(१) तत् गृहप्रवेशनं विवाहव्रते संपूर्णे चतुर्थे दिवसे नागबलिं कृत्वा कर्तव्यम् । तथा च वराहमिहिरः— विवाहस्य निवृत्तिरिति । * प्रग. ४२३

तस्मात् प्रथमादिचतुर्थान्तेषु दिवसेषु प्रयाणप्रवेशौ यदा स्यातां तदा प्रयाणगृहप्रवेशोत्तरं वरगृहे एव नागबल्यनुष्ठानम्, यदा पञ्चमादिदिवसेषु प्रयाणप्रवेशौ तदा ततः पूर्वं श्वशुरगृहे एव तदित्यापातिको विचारः ।

वस्तुतस्तु— संवेशनशब्दस्य मैथुन-तत्प्रधानचतुर्थीकर्मान्यतरपरताया गृह्यसूत्रादिषु सर्वत्र दृष्टत्वात् यज्ञपार्श्वे स्वरसतश्चतुर्थीकर्मपरता यदि स्वीक्रियते तदा यज्ञपार्श्वे नागबलेश्चतुर्थीकर्मसंबन्धावगमाच्चतुर्थीकर्मसमानदेशकालता नागबलेरङ्गीकर्तुमुचिता । चतुर्थीकर्म च विवाहहोमदिनाच्चतुर्थ्यां रात्राविति यद्यप्यस्ति केषांचित् प्रतिपत्तिः, तथापि विवाहव्रतसमाप्त्यनन्तरं तदिति, त्रिरात्रादिव्रतकालस्य गृहप्रवेशनीयहोमपूर्वावधिकत्वमिति च सर्वगृह्यसूत्रस्वारस्यात् 'अत ऊर्ध्वम्' इत्याश्वलायनेन देवस्वामिभाष्यनारायणवृत्त्यादिभिः शौनकेन च स्पष्टं प्रतिपादितत्वाच्चावगम्यते । आश्वलायनेन गृहप्रवेशोत्तरं वरगृहे गृहप्रवेशनीयहोमं विधाय 'अत ऊर्ध्वम्' इति तं पूर्वावधिं कृत्वा त्रिरात्रादिव्रतकालोक्तेरनुकल्पत्वेन वधूगृहे विवाहहोमेन सह गृहप्रवेशनीयहोमस्य तन्त्रानुष्ठानेऽपि गृहप्रवेशानन्तरोत्तरकालमारभ्यैव त्रिरात्रादिकालगणना कार्या । संवत्सरादिव्रतपक्षे चतुर्थदिने चतुर्थीकर्मणोऽनुष्ठानाभावेऽपि प्रायिकत्रिरात्रपक्षाभिप्रायेण चतुर्थीकर्मेति समाख्योपपादनीया । शौनकीयासु प्रयोगपारिजातमात्रप्रमाणकनागबलिकारिकासु गृहप्रवेशकारिकासु च विहितं चतुर्दिनसाध्यं दाक्षायण्यादिपूजनं मूलैक्यलाघवादेकमेव कर्मेति प्रतिपत्तुं युक्तम् । गृहप्रवेशकारिकासु च तस्य गृहप्रवेशोत्तरचतुर्दिनसाध्यता स्पष्टैव । एवं च चतुर्थीकर्म तत्समानयोगक्षेमो नागबलिश्च गृहप्रवेशोत्तरचतुर्थदिवसे वरगृहे एवानुष्ठेयाविति निष्पद्यते । अत एव 'यस्मिन्स्यादाहुतिक्षेपस्तदारभ्य

* विपा. प्रपावत् ।

(२) नागानां हस्तिनां बलिः पूजा ।

संम. ७३

## शौनककारिकाः

नागबलेः कालः फलं च

'अथातः संप्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम् ।
दम्पत्योरभिवृद्ध्यर्थं नागबल्याख्यमुत्सवम् ॥
चतुर्थदिवसे रात्रौ तस्य कालः प्रकीर्तितः ।
यस्मिन् स्यादाहुतिक्षेपस्तदारभ्य प्रकीर्तितः ।
चतुर्थदिवसे तस्मिन् रात्रौ कुर्यान्महोत्सवम् ॥
अस्त्रीचिह्ना तु या कन्या वर्तते पितृमन्दिरे ।
तस्यां वसति गन्धर्वो विश्वावसुसमाह्वयः ॥
तं निरस्य तु(? स्यति) देवेशी चतुर्थ्यां निशि पूजिता ।
विश्वावसुनिरासार्थं मानवस्त्रीत्वसिद्धये ।
चतुर्थेऽहनि रात्रौ तु तस्माद्दाक्षायणीं यजेत् ॥

प्रतिदिनं देवताविशेषपूजनम्, तदनुकल्पः, ब्राह्मणभोजनम्, आशीर्वाचनम्

दम्पती रोहिणीसोमौ भूत्वा प्राथमिके दिने ।
दाक्षायणीं यजेयातां द्वितीये दिवसेऽपि तु ॥
पूजयेतां महादेवीं गन्धर्वाप्सरसौ च तौ ।
अग्निस्वाहे तृतीयेऽह्नि पूजयेतां च कालिकाम् ।
चतुर्थ्यां तौ यजेयातां शाङ्करीं मानवस्त्रियौ ॥
एवं प्रतिदिनं कर्तुं पूजां यद्यक्षमो भवेत् ।
मध्ये चाऽऽद्यन्तयोः कुर्याद्व्रतग्रहणसिद्धये ॥

चतुर्ष्वेतेषु दिवसेष्वर्चयेद्ब्राह्मणान् बहून् ।
वस्त्रहेमादिमृष्टान्नताम्बूलादिप्रदानतः ॥
आशीर्वादैर्बहुविधैश्चतुर्वेदश्रुतैर्द्विजैः ।
आशीर्वदेयुर्दिवसे दिवसे बन्धुभिः सह ॥

चतुर्भद्रमण्डलनिर्माणं हस्तिनिर्माणं च

चतुर्थदिवसे रात्रौ कर्तव्यं तदिहोच्यते ।
गृहमध्ये समश्लक्ष्णे विस्तीर्णे भूमिमण्डले ॥
चतुर्भद्राह्वयं कुर्यात् सर्वमङ्गलकारकम् ।
वसुरेखामितैः सूत्रैः पातितैस्तिर्यगूर्ध्वतः ॥
भवन्त्येकोनपञ्चाशत् कोष्ठास्तैरवशेषयेत् ।
स्वकोणस्थयुगोपेतान् चतुर्दिङ्मध्यकोष्ठकान् ॥
मार्जयेद्वसुसंख्याकान् कोणे कोणे बहिः क्रमात् ।
मध्येऽपि मार्जयेद्धीमान् त्रयोदशगृहांस्ततः ॥
अवशिष्टद्वादशभिः स्याच्चतुर्भद्रमण्डलम् ।
चतुर्द्वारोपशोभाढ्यं मध्यकोणान्वितं सरः ॥
तन्मध्ये कोणषट्कं तु तदन्तः स्यात्त्रिकोणकम् ।
तत्र चाष्टदलं पद्मं कुर्यात्कर्णिकयाऽन्वितम् ॥
पद्मं तु परितो भित्तिस्तत्र मातुः सिताक्षतैः ।
रचयेत् कोष्ठमध्ये तु हंसपद्मशुकादिकान् ॥
कृष्णश्वेतहरिद्रक्तपीतशुक्लैः क्रमाद्बहिः ।
प्राकारषट्कं रचयेद्रक्तपीतादिभिस्ततः ॥
लिखेत् किसलयं प्राच्यां प्रतीच्यां तु शुकत्रयम् ।
कोणाग्रेषु बहिर्वल्लीं रचयेत्पिप्पलच्छदाम् ॥
प्रत्यग्दक्षिणपार्श्वे तु कुर्यात्तण्डुलहस्तिनम् ।
प्रत्यगुत्तरपार्श्वे तु कुर्याल्लवणहस्तिनम् ।
अन्योन्याभिमुखौ तौ स्तः प्राक्पादावतिशोभनौ ॥

कुम्भद्वषदुपलादिस्थापनम्, दाक्षायण्यादिपूजनम्, हस्तिपूजनम्, बलिदानम्

इत्थं निर्माय तु सरः कुम्भं तत्र प्रविन्यसेत् ।
चित्रितं गन्धतोयेन सकर्पूरेण पूरितम् ॥

---

प्रकीर्तितः ।' इति शौनककारिकागत आहुतिक्षेपोऽपि गृहप्रवेशनीयहोमात्मक एवाऽऽस्थेयः । अतः 'व्रतसमाप्त्यनन्तरं नागबलिं कृत्वा गृहप्रवेशनं कर्तव्यम्' इति पारिजातोक्तिः संदिग्धप्रामाण्या । अत एव नागबलिक्रमे नानुमोदिता साऽस्माभिः । अत्र गृहप्रवेशप्रकरणीयाश्वलायनगृह्यसूत्रे (१।८।९) (संका. पृ. २१९४) प्रयोगपारिजातस्थिता टिप्पणी चानुसंधातव्यौ ।

(१) प्रपा. ४२३–४२५.

वामभागे स्थापयेच्च दृषदं सोपलां तथा ।
गुडजीरकसंयुक्तां फलपुष्पोपशोभिताम् ॥

ततस्तत्पश्चिमे भागे दम्पती उपविश्य तौ ।
दाक्षायणीं पूजयेतां तस्मिन् कुम्भे विधानतः ॥

दाक्षायणीं महादेवीं सर्वसंपत्प्रदायिनीम् ।
यवपाशाङ्कुशयुतां तथा चाभयशालिनीम् ॥

रत्नकेयूरकटकमुकुटाद्यैरलङ्कृताम् ।
विचित्रवसनोपेतां सर्वलक्षणलक्षिताम् ॥

विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ।
देवासुरैरपि सदा वन्द्यमानपदाम्बुजाम् ॥

अणिमादिगुणोपेतामष्टैश्वर्यप्रदायिनीम् ।
एवं ध्यात्वा तु तां देवीं सर्वशक्तिसमन्विताम् ॥

दलेष्वावाह्य तच्छक्तीर्ब्राह्म्याद्याः संप्रपूजयेत् ।
देव्याः पाद्यादिपुष्पान्तमुपचारान् विधाय च ॥

त्रिकोणाग्रेषु संपूज्य देवीं कालीं च शाङ्करीम् ।
षट्कोणपरितो ब्रह्मसावित्र्यौ पूर्वतो यजेत् ॥

दक्षिणे शंकरं चोमां देव्या अभिमुखं स्थितौ ।
लक्ष्मीनारायणौ तद्वत्पश्चिमे संप्रपूजयेत् ।
इन्द्रं शचीमुत्तरे तु तद्बाह्ये चाष्टभैरवान् ॥

कपाली भीषणश्चण्डो रुरुः क्रोधस्तथैव च ।
उन्मत्तश्चासिताङ्गश्च संहारश्चाष्टभैरवाः ॥

कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकोऽञ्जनाह्वयः ॥

एतांश्च दिग्गजान् दिक्षु इन्द्रादीनपि पूजयेत् ।
क्षुरिकां विन्यसेत् तत्र पुष्पमाल्याद्यलङ्कृताम् ॥

क्षुरिके त्वं महादेवि सर्वदेवाभिपूजिते ।
अतस्त्वां पूजयिष्यामि सर्वसंपत्प्रदा भव ॥

हस्तिद्वयं च तत्रस्थं गन्धादिभिरनुक्रमात् ।
धूपदीपादिभिर्नानानैवेद्यैर्भक्ष्यसंयुतैः ॥

संपूज्य च ततो दद्यान्नागाय बलिमुत्तमम् ।
परितो दीपमालाभिरलंकुर्यात्सरोवरम् ॥

### दम्पतिपूजनम्, सूर्यासावित्रीसूक्तश्रवणम्, कन्यामातुरन्नपात्रमूर्धधारणादि

ततश्च दम्पती कन्यापिता वस्त्रादिनाऽर्चयेत् ।
सूर्यासावित्रीसूक्तं च तत्र श्रुत्वा तु दम्पती ।
तस्मै तथा वधूवस्त्रयुग्मं विप्राय दापयेत् ॥

ततः कन्याप्रसूः श्वेतवस्त्रालंकारभूषिता ।
धारयेन्मूर्ध्नि भक्ष्याद्यैः पुरितं भाजनोत्तमम् ॥

सापिधानं सदीपं च सुवासिन्युद्धृतं तथा ।
क्षुरिकां वा समादाय पात्रे तस्मिन्निधाय च ॥

प्रविश्य पश्चिमद्वारं चतुर्भद्रं समाहिता ।
कुम्भं त्रिः परिणीयाथ पात्रं तदवरोहयेत् ॥

अन्नं तत्पात्रमध्यस्थं किंचित्कुम्भे विनिक्षिपेत् ।
किंचिदालिप्य कुम्भं च किंचिद्दिक्षु विनिक्षिपेत् ॥

### वरमात्रा कन्यामातुः पूजनम्, हस्तियाचनविनिमयादि

ततस्तां पूजयेत्पट्टवस्त्राद्यैश्च वरप्रसूः ।
ततो जायापती स्वंस्वमास्थाय करिणं मुदा ॥

अन्योन्याभिमुखौ भूत्वा जपेदातूनसूक्तकम् ।
अन्योन्यं याचयेन्नागौ दम्पती प्रणयादथ ॥

विनिमय्य ततो नागौ पूर्ववत् सूक्तमुच्चरन् ।
ततस्तूपविशेत्कन्या चोत्तरे दक्षिणे वरः ॥

अनुभूय च माङ्गल्यदीपमालाक्षतानथ ।
आशीर्वादांश्च विविधान् ब्राह्मणैर्बन्धुभिः सह ।
लौकिकैरुपचारैश्च विदधीत महोत्सवम् ॥

### नागबलिफलम्

इत्थं नागबलिं कुर्याद्यः प्रयत्नेन मानवः ।
आयुरारोग्यमैश्वर्यं लभतेऽधिकसंपदः ॥

यथेन्द्रस्य महेन्द्राणी यथा श्रीः श्रीधरस्य च ।
शंकरस्य यथा गौरी तथा भर्तुर्भवेद्वधूः ॥

## यज्ञपार्श्वकारिकाः

मण्डले हिरण्यगर्भादिपूजनम्, संवेशनस्य
नागबलपूर्वकत्वम्

[1]चतुर्थे दिवसे रात्रौ लिखेन्मानःसरोवरम् ।
हिरण्यगर्भं तन्मध्ये गन्धपुष्पाक्षतादिभिः ॥

[2]संपूज्याप्सरसश्चैव सोमगन्धर्वपावकान् ।
संपूज्य चाश्वहस्त्यादीनारोप्य स्वगृहं प्रति ॥

(१) प्रपा. ४२३ मानः (मान) : ४२५ चतुर्थे (चतुर्थ) मानः (मान); संम. ७३ ; विपा. १३१ (भागः २) पूर्वार्धे (चतुर्थदिवसे रात्रौ लिखेन्मानसवापिकाम् ।) बैजवापायनः ; कुभ. ११५०.

(२) प्रपा. ४२३ चाश्व (रथ) : ४२५ चाश्वहस्त्या (रथवस्त्रा); संम. ७३ चाश्व (वाऽश्व); विपा. १३१ (भागः २) पावकान् (राक्षसान्) चाश्व (शुक्र) बैजवापायनः ; कुभ. ११५०.

[1]संवेशनादिकं कर्म अन्यथा तु व्रजेद्वयम् ।
अतो नागबलिं कृत्वा रात्रौ संवेशनं शुभम् ॥

(१) संवेशनं प्रवेशनम् । एष नागबलिः श्वशुरगृह एव कार्यः, ‘संपूज्य रथहस्त्यादीनारोप्य स्वगृहं प्रति ।’ इति नियमात् । एतदुक्तं भवति– विवाहव्रतसमाप्त्यनन्तरमुक्तप्रकारेण नागबलिं कृत्वा पर्वसंक्रमादिवर्जिते काले गृहप्रवेशनं कर्तव्यमिति । प्रपा. ४२५

(२) संवेशनं गृहप्रवेशः । * संम. ७३

(३) चतुर्थदिवसे हस्तिपूजामाह यज्ञपार्श्वः– चतुर्थे दिवस इति । कुभ. ११५०

* विपा. संमवत् ।

(१) प्रपा. ३६३ उत्त. : ४२३ व्रजेद् (भवेद्) पू. : ४२५ अतो (ततो); संम. ७३ पू.; विपा. १३१ (भागः २) पू. बैजवापायनः ; कुभ. ११५० संवेश (प्रवेश) व्रजेद् (भवेद्) पू.

# चतुर्थीकर्म

## बौधायनगृह्यसूत्रम्

पक्वहोमः, व्रतविसर्गः, दण्डोत्थापनादि, उपसंवेशनम्, दण्डविसर्जनम्, आग्नेयस्थालीपाकः, शयनकाले वध्वा अभिमन्त्रणं मालायोजनं च

* [1]चतुर्थ्यां निशायां हुते पक्वहोमे व्रतं विसृज्य $ दण्डमुत्थापयति– 'ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो वि रोह। त्वया वयमिषमूर्जं वदन्तो रायस्पोषेण समिषा मदेम ॥' इति ॥

अथैनं वध्वै प्रयच्छति– 'प्रजया त्वा संसृजामि मासरेण सुरामिव' इति ॥

तं वधूः प्रतिगृह्णाति– 'प्रजावती भूयासम्' इति ॥

अथैनं वराय प्रयच्छति– 'प्रजया त्वा पशुभिः संसृजामि मासरेण सुरामिव' इति ॥

तं वरः प्रतिगृह्णाति– 'प्रजावान् पशुमान् भूयासम्' इति ॥

अथैनं स्थूणादेशे निधायान्तिकेन प्रतिपद्यते ॥

प्रसिद्धमुपसंवेशनम् ॥

श्वोभूते दण्डमादाय पुण्याहं वाचयित्वाऽप्सु विसर्जयति ॥

अथ देवयजनोल्लेखनप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति 'अग्निर्मूर्धा, भुवः' इति द्वाभ्याम् ॥

* इतः प्रभृत्यस्मिन्नध्याये पक्वहोमादि चतुर्थपञ्चमदिवसयोः सर्वं कृत्यमुक्तम्। तत्र पक्वहोमोपसंवेशनयोः प्रयोगौ 'आनयन्त्येतमग्निम्' इत्यादौ अग्रिमेऽध्याये उक्तौ।

$ पूर्वं गृहप्रवेशप्रकरणे दण्डस्थापनमुक्तम्, तदिहानुसंधेयम्।

(१) बौगृ. १।५।१८–३१.

स्विष्टकृत्प्रभृति सिद्धमा धेनुवरप्रदानात् ॥

स एष पार्वणो भवति ॥

अथास्तमित आदित्येऽन्योन्यमलङ्कृत्योपरिशय्यां शयाते ॥

अथ वधूमभिमन्त्रयते– 'सुमङ्गलीरियं वधूरिमां समेत पश्यत ॥ सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥' इति ॥

अथैनां सर्वसुरभिगन्धया मालया युनक्ति– 'सं नाम्नः सं हृदयानि सं नाभिः सं तनुत्वचः। सं त्वा कामस्य योक्त्रेण युञ्ज्म्यविमोचनाय ॥' इति ॥

[1]आनयन्त्येतमग्निम् ॥

अथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा पक्वमोदनं पायसं वा याचति ॥

तमभ्युक्ष्याग्नावधिश्रयति ॥

आज्यं निर्वपति ॥

अथाऽऽज्यमधिश्रयति ॥

उभयं पर्यग्नि कृत्वा मेक्षणं स्रुवं च संमार्ष्टि ॥

अथैतं चरुं श्रपयित्वाऽभिघार्योदञ्चमुद्वास्य प्रतिष्ठितमभिघारयति ॥

परिधानप्रभृत्याऽग्निमुखात् कृत्वा पक्वाज्जुहोति ॥

स एवमेव सर्वेषां स्थालीपाकानां चरुकल्पः ॥

'यस्त्वा हृदा कीरिणा मन्यमानः' इति पुरोनुवाक्यामनूच्य 'यस्मै त्वं सुकृते जातवेदः' इति याज्यया जुहोति ॥

अथाऽऽज्याहुतीरुपजुहोति ॥

'अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये याऽस्यां पतिघ्नी

(१) बौगृ. १।६।१–२६.

तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा ' ॥

' वायो प्रायश्चित्ते ... कृणोमि स्वाहा ' ॥

' आदित्य प्रायश्चित्ते ... कृणोमि स्वाहा ' ॥

' प्रजापते प्रायश्चित्ते...कृणोमि स्वाहा ' इति ॥

पक्वादेव स्विष्टवतीभ्यां सौविष्टकृतम् ॥

लाजैरितरत्र ॥

' हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्निं स्विष्टकृतमाहुवेमोम् ॥ स्विष्टमग्ने अभि तत् पृणाहि विश्वादेव पृतना अभिष्य । उरुं नः पन्थां प्रदिशन् विभाहि ज्योतिष्मद्धेह्यजरं न आयुः स्वाहा ॥ ' इति ॥

जयप्रभृति सिद्धमा धेनुवरप्रदानात् ॥

अथाऽऽज्यशेषेण हिरण्यमन्तर्धाय मूर्ध्नि संस्रावं जुहोति—' भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहा ' इति ॥

अथैनां प्रदक्षिणमग्निं पर्याणयति— ' अर्यम्णो अग्निं परियन्तु क्षिप्रं प्रतीक्षन्तां श्वश्रुवो देवराश्च ' इति ॥

अथ श्रीमन्तमगारं संमृष्टोपलिप्तं गन्धवन्तं पुष्पवन्तं धूपवन्तं दीपवन्तं तल्पवन्तं साधिवासं दिक्षु सर्पिःसूत्रेन्धनप्रद्योतितमुदकुम्भादर्शोच्छिरसं प्रपाद्य तस्मिन्नेनां संवेश्य तस्या अन्तिके जपति ॥

' उदीर्ष्वातो विश्वावसो नमसेडामहे त्वा । अन्यामिच्छ प्रफर्व्यं सं जायां पत्या सृज ॥ उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीट्टे । अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ॥ ' इति ॥

अथैनामुपसंवेशयति— ' प्रजापतिः स्त्रियां यशः ' इत्येतया ॥

अथास्याः स्तोकोर्तिं विवृणोति— ' प्रजायै त्वा ' इति ॥

सा यद्यश्रु कुर्यात्तामनुमन्त्रयते— ' जीवां रुदन्ति विमयन्ते अध्वरे दीर्घामनुप्रसितिं दीधियुर्नरः । वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे ॥ ' इति ॥

## कौषीतकिगृह्यसूत्रम्

स्थालीपाकः

[१]अथ चतुर्थीकर्म ॥

त्रिरात्रे निवृत्ते स्थालीपाकस्य जुहोति ॥

' अग्ने प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि । याऽस्याः पतिघ्नी तनूस्तामस्या अप जहि ॥ वायो प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि । याऽस्या अपुत्रिया तनूस्तामस्या अप जहि ॥ सूर्य प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि । याऽस्या अपशव्या तनूस्तामस्या अप जहि ॥ अर्यमणं नु देवं कन्या अग्निमयक्षत । सेमां देवो अर्यमा प्रेतो मुञ्चातु माऽमुतः ॥ वरुणं नु देवं कन्या अग्निमक्षत । सेमां देवो वरुणः प्रेतो मुञ्चातु माऽमुतः ॥ पूषणं नु देवं कन्या अग्निमयक्षत । सेमां देवः पूषा प्रेतो मुञ्चातु माऽमुतः ॥ ' ॥

' प्रजापते ' इति सप्तमी ॥

सौविष्टकृत्यष्टमी ॥

पाणिग्रहणे व्यतीते त्रिरात्रं यथोक्तेन व्रतेन स्थित्वा चतुर्थेऽहि चतुर्थीकर्मेति तद्वक्ष्यामः । अत्र स्तरणाघाराज्यभागा निर्विकल्पाः । उपलेपनादि स्तरणान्तं कृत्वा ततः पूर्ववत्पवित्रच्छेदनादि प्रोक्षणान्तं कृत्वा ततः अग्नये, वायवे, सूर्याय, अर्यम्णे, वरुणाय, पूष्णे, प्रजापतये इति सप्तदेवताभ्यस्तण्डुलान् गृहीत्वा ततश्चरोरधिश्रयणं शृतस्याभिघारणं कृत्वा ततः समिदाधानादि आघाराज्यभागान्तं करोति । ततोऽस्मिन् कर्मणि महाव्याहृतिभिर्हुत्वा स्थाली-

(१) कौगृ. १।१८।१-५.

पाकस्य जुहोति इति केचित्पठन्ति। पाक्षिकमहाव्याहृति-चतुष्टयमाज्यस्य हुत्वा ततः सकृदाज्यस्योपस्तीर्य ततो द्विर्हविषः त्रिः पञ्चार्षेयाणां ततः पुनराज्यस्य गृहीत्वा गृहीतशेषमभिघारयन्ति। एवं सर्वत्र। 'अग्ने प्रायश्चित्ति-रसि त्वं देवानां प्रायश्चित्तिरसि। याऽस्या(ः) पतिघ्नी तनूस्तामस्या अपजहि स्वाहा॥ वायो प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि। याऽस्या अपुत्रिया तनूस्तामस्या अपजहि स्वाहा॥ सूर्य प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि। याऽस्या अपशव्या तनूस्तामस्या अपजहि स्वाहा॥ अर्यमणं नु देवं कन्या अग्निमयक्षत। स मां (? सेमां) देवो अर्यमा प्रेतो मुञ्च(?ञ्चा)तु मा पतेः (? माऽमुतः) स्वाहा॥ वरुणं नु देवं कन्या अग्निमयक्षत। स मां(? सेमां) देवो वरुणः प्रेतो मुञ्च(?ञ्चा)तु मा पतेः(? माऽमुतः) स्वाहा॥ पूषणं नु देवं कन्या अग्निमयक्षत। स मां (? सेमां) देवः पूषा प्रेतो मुञ्च(? ञ्चा)तु मा पतेः (?माऽमुतः) स्वाहा॥ प्रजापते न त्वदेतान्यन्यः' इति ऋग्भिः स्वाहाकारान्तैः सप्त आहुतीः स्थालीपाकस्य हुत्वा ततः सकृदाज्यं गृहीत्वा, सकृद्धविः, ततो द्विरभिघार्य 'अग्नये स्विष्टकृते स्वाहा' इति यथोत्साहं ददाति। ततो महाव्याहृतिसर्वप्रायश्चित्तादि कर्मशेषं समापनीयमिति। एते मण्डपे लौकिकाग्नौ यदि 'निर्मथ्यैके विवाहः' इत्ययं पक्षो नाऽऽश्रितः। यदि पुनररणिपक्ष आश्रितस्ततः अरणी निर्मथ्य तस्मिन्नेवाग्नौ होमाः कर्तव्याः। केषांचिज्जातारणिपक्षोऽप्यस्ति। ततोऽरणिभ्यां निर्मथ्याग्निं तस्मिन्नेवाग्नौ सर्वाणि शरीरसंस्कारार्थानि कर्माणि कर्तव्यानि। कौगृसं. १९

## आपस्तम्बगृह्यसूत्रम्

दण्डोत्थापनादि, होमः, वधूशिरसि आज्यशेषानयनम्, परस्परसमीक्षणम्, हृदयदेशसंमार्गः, समावेशने मन्त्रजपः, सूर्याविदे वधूवस्त्रदानम्

**[1]तं चतुर्थ्यापररात्र उत्तराभ्यामुत्थाप्य प्रक्षाल्य निधायाग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वाऽपरेणाग्निं प्राचीमुपवेश्य तस्याः शिरस्याज्यशेषाद्व्याहृतिभिरोङ्कारचतुर्थीभिरानीयोत्तराभ्यां यथालिङ्गं मिथः समीक्ष्योत्तरयाऽऽज्यशेषेण हृदयदेशौ संमृज्योत्तरास्तिस्रो जपित्वा शेषं समावेशने जपेत्॥**

(१) अपररात्रः रात्रेस्तृतीयो भागः। उत्तराभ्याम् 'उदीर्ष्वातः' इत्येताभ्याम्। अत्र प्राप्तस्य निधानस्य विधानं पुनस्तस्मिन् शयने दण्डस्य निधानं मा भूदिति। उत्तराः सप्त प्रधानाहुतीर्जुहोति 'अग्ने प्रायश्चित्ते' इत्येवमाद्याः। तत्राऽऽदितश्चतुर्षु मन्त्रेषु 'त्वं देवानां प्रायश्चित्तिः' इत्ययमनुषङ्गः। उत्तरे मन्त्रास्त्रयः। आज्यभाग(? भागान्त) इत्यन्वारम्भकालोपदेशः। जयादि प्रतिपद्यते इति च तन्निवृत्तिः। तन्त्रशेषं समाप्य ततः तामपरेणाग्निम् अग्नेः पश्चात् प्राचीं प्राङ्मुखीमुपवेश्य यो हुतस्याऽऽज्यस्य शेषः तस्मादवदाय दर्व्या तस्या वध्वाः शिरसि व्याहृतिभिरोङ्कारचतुर्थीभिः स्वाहाकारान्ताभिः प्रतिमन्त्रमानयति। ततः उत्तराभ्यामृग्भ्याम् 'अपश्यं त्वा' इत्येताभ्यां यथालिङ्गं मिथः अन्योन्यं युगपत् समीक्षेते, पूर्वया वधूः उत्तरया वरः। ततो वरः उत्तरयर्चा 'समञ्जन्तु' इत्येतया वधूवरयोरुभयोर्हृदयदेशौ समनक्ति तेनैवाऽऽज्यशेषेण सकृद्गृहीतेन (आज्येन ?) सकृदेव मन्त्रं चोक्त्वा। ततः उत्तरास्तिस्रो जपति 'प्रजापते तन्वम्' इत्याद्याः। ततः शेषम् अनुवाकशेषम् 'आरोहोरुम्' इत्यादि समावेशने समागमनकाले जपेत्। समावेशनं च तस्मिन्नेवापररात्रे नियमेन भवति। इदमेव समावेशनं मन्त्रवत्, नान्यानि। परिषेचनान्तवचनमानन्तर्यार्थम्, परिषेचनान्ते एतदेव कर्म यथा स्यात्। तेन भोजनं प्रागेव भवति। अनाकुला.

(२) चतुर्थ्या अपररात्र इति विवृत्यार्थपाठः। चतुर्थ्या रात्रेः चतुर्थस्याहोरात्रस्य अपररात्रे रात्रेरपरत्र तृतीयभागे तं दण्डमुत्तराभ्याम् 'उदीर्ष्वातः' इत्येताभ्याम् उत्थाप्याद्भिः प्रक्षाल्य शयनादन्यत्र निधायाग्नेरुपसमा-

(१) आपगृ. ८।१०, ११.

धानादि तन्त्रं प्रतिपद्यते। आज्यभागान्ते कृते वध्वा-मन्वारब्धायाम् उत्तराः 'अग्ने प्रायश्चित्ते' इत्याद्याः समाऽऽहुतीर्जुहोति। तत्र द्वितीयतृतीययोरपि 'त्वं देवानाम्' इत्याद्यनुषङ्गः। ततोऽन्वारम्भवर्जं जयादौ प्रणीतामोचनान्ते कृते अपरेणाग्निं वधूं प्राचीं प्राङ्मुखीमुपवेश्य हुतशेषादाज्यमादाय तस्याः शिरसि व्याहृतिभिरोङ्कारचतुर्थीभिः स्वाहाकारान्ताभिः सर्वेषामन्ते सकृदानयति। केचित् प्रतिमन्त्रमिति। अथोत्तराभ्याम् 'अपश्यं त्वा मनसा' इत्येताभ्यां यथालिङ्गम्, पूर्वया वधूरुत्तरया वरः, मिथः अन्योन्यं युगपत् समीक्ष्योत्तरया 'समञ्जन्तु' इत्येतया आज्यशेषेण हृदयदेशौ युगपदङ्गुष्ठत्रिसंसिनीभ्यां समनक्ति, 'समापो हृदयानि नौ' इति द्विवचनलिङ्गात्। अथ उत्तरास्तिस्रः 'प्रजापते तन्वं मे' इत्याद्या जपित्वा शेषम् अनुवाकशेषम् 'आरोहोरुम्' इत्यादिकं समावेशने समावेशनकाले जपेत्। समावेशनं च वध्वा सह मैथुनार्थे शयनम्, 'ऋतुसमावेशने' (आपगृ. ८।१३) इत्यृतुलिङ्गात्। एतच्च रागप्राप्तसमावेशनाश्रितं विवाहकर्मार्थे क्रमजपयोर्विधानम्, यथा भोजनपर्यायव्रताश्रितं पयआदिविधानम्। केचित् असत्यपि रागे कर्मार्थमस्मिन् क्रमे समावेशनं नियतमेवेति। समावेशनान्तरेषु तु अकर्मार्थत्वादेव नायं जपः। बौधायनेन तु विकल्पोऽभिहितः — 'सर्वाण्युपगमनानि मन्त्रवन्तीति बौधायनो यद्याऽऽदौ यद्यर्ताविति शालिकः' (बौगृ. २।७।१२) इति। अस्मिन्नेव क्रमे यदि दैवाद्दतुगमनमपि कर्तव्यं स्यात् तदा पूर्वम् 'आरोहोरुम्' इत्यादिजपः। ततो 'विष्णुर्योनिम्' इत्यादिभिरभिमन्त्रणम्। ताद.

**अन्यो वैनामभिमन्त्रयेत ॥**

(१) अन्यो वा ब्राह्मणः कश्चित् एनौ जायापती समागमिष्यन्तौ अनुवाकशेषेणाभिमन्त्रयेत, न स्वयं वरो जपेत्। तत्र यद्वधूवासः प्रागनेन परिधापितं तत् व्रतान्ते विमुच्यान्यद्वासः परिधाय संस्पृशति वधूः, तेन हस्तस्पर्शने दोषदर्शनात् 'परा देहि शामुल्यम्' इत्येतासु। व्रतचर्यायां तु दण्डेनान्तर्हितत्वात् असंस्पर्शः। तद्वासः श्वोभूते 'परा देहि शामुल्यम्' इत्येताभिश्चतसृभिः ऋग्भिः सूर्याविदे ब्राह्मणाय वरो दद्यात्। यथा वक्ष्यति 'वधूवास उत्तराभिरेतद्विदे दद्यात्' (आपगृ. ९।११) इति। आश्वलायनेनाप्युक्तम्— 'सूर्याविदे वधूवस्त्रं दद्यात्। अन्नं ब्राह्मणेभ्यः' (आगृ. १।८।१३,१४) इति। अनाकुला.

(२) व्यक्तार्थम्। इदं च 'अहं गर्भमदधाम्' इत्यादिलिङ्गविरोधेऽपि श्रुतेर्बलीयस्त्वात्। ताद.

**[1]वधूवास उत्तराभिरेतद्विदे दद्यात् ॥**

(१) विवाहकाले यत् वासः परिधापितम्, तत् एतद्विदे ब्राह्मणाय दद्यात्, योऽस्मिन् प्रश्ने पठितान् मन्त्रान् सार्थान् वेद तस्मै। केचित्— भैषज्यशेषमिदं मन्यन्ते, आनन्तर्यात्। तेषां वधूवास इति विशेषणमन्यस्याः स्त्रियाः यक्ष्मगृहीतायाः वाससो दाननिवृत्त्यर्थम्। एतद्विदे इति च भैषज्यकर्मकृते इत्यर्थः। मन्त्रेषु तु 'परा देहि' इत्यादिषु विवाहकाले परिहितस्य वधूवाससः स्पर्शनिन्दा सूर्याविदे ब्राह्मणाय तद्दानं च दृश्यते। कल्पान्तरे च तद्व्यक्तम्— 'चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात्' (आगृ. १।८।१३) इति। तस्मात् भैषज्यशेषत्वमनुपपन्नम्। यत्पुनरुक्तं आनन्तर्यादिति, तत्र कारणमुक्तमेव। कथम्? एवमन्तं विवाहप्रकरणं स्यादिति। अनाकुला.

(२) यस्या वध्वा इदं भैषज्यं क्रियते तस्या वासः। एतद्विदे एतत्कर्म समन्त्रार्थं यो वेत्ति तस्मै 'परा देहि' इत्यादिभिश्चतसृभिर्दद्यात्। केचित् विवाहकाले वध्वा यदाच्छादितं वासस्तद्विमुच्यासंस्पृशन्नेव पञ्चम्यां 'परा देहि' इत्यादिभिश्चरितव्रताय एतद्विदे सूर्याविदे, य एतान्मन्त्रान् सार्थान् वेद तस्मै दद्यात्। असंस्पर्शश्च 'कृत्यमेतत् कटुकमेतत्' इति लिङ्गात्। अस्य च समावेशनानन्तरमुपदेष्टव्यस्य इहोपदेशो हृदयसंसर्गार्थे कर्मणि शम्याज्ञापनार्थमिति। नेदं युक्तम्, संनिहितकर्मपरित्यागेन वासोदानस्य अतिव्यवहितविवाहार्थज्ञानानुदयात्, अस्मदीयानामाचाराभावाच्च। ताद.

---

(१) आपगृ. ९।११.

## हिरण्यकेशिगृह्यसूत्रम्

प्रायश्चित्तिहोमः , संस्रावहोमः , संवेशनम्

**'चतुर्थ्यामपररात्रेऽग्निमुपसमाधाय प्रायश्चित्तिपर्यन्तं कृत्वा नव प्रायश्चित्तीर्जुहोति । ' अग्ने प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै घोरा तनूस्तामितो नाशय स्वाहा ॥ वायो प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै निन्दिता तनूस्तामितो नाशय स्वाहा ॥ आदित्य प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामितो नाशय स्वाहा ॥ आदित्य प्रायश्चित्ते वायो प्रायश्चित्तेऽग्ने प्रायश्चित्तेऽग्ने प्रायश्चित्ते वायो प्रायश्चित्त आदित्य प्रायश्चित्ते' इति हुत्वा ॥**

(१) एतस्याः रात्रेरारभ्य चतुर्थ्यां रात्र्यां तृतीयस्याह्नो रात्र्यामित्यर्थः । अपररात्रे त्रिभागावशेषायां रात्र्यामग्निमुपसमाधाय प्रायश्चित्तिपर्यन्तं कृत्वा ' स त्वं नो अग्ने ' इत्येतदन्तं कृत्वा नव प्रायश्चित्तीर्जुहोति ' अग्ने प्रायश्चित्ते ' इत्येताः । अग्निमुपसमाधायेत्यस्योक्तं प्रयोजनम् । नव प्रायश्चित्यः प्रधानाहुतयः । तासामिष्टदेशादुत्कर्षः । तस्माद्व्याहृतिपर्यन्तं कृत्वा ' इमं मे वरुण ' इति चतस्रो हुत्वैता जुहोति । हुत्वा वा तासां संपातं पात्रान्तरेऽवनयति । मातृद॰

(२) प्रायश्चित्तिपर्यन्तं कृत्वेति वचनं समस्तव्याहृतीनामनादिष्टप्रायश्चित्तित्वबोधनार्थम् । तेनानुक्ते प्रायश्चित्ते समस्तव्याहृतिभिर्होम इति सिध्यति । अत एव सर्वप्रायश्चित्तमिति संज्ञा । तेन समस्तव्याहृतिपर्यन्तमेव कृत्वा नव प्रायश्चित्तीः प्रधानीभूता आहुतीर्जुहुयात् । अत्र प्रायश्चित्तित्वबोधनं चतुर्थीकर्मणः प्रायश्चित्तकर्मत्वेन प्रायश्चित्तकर्ममध्य एव प्रायश्चित्तिसंज्ञाज्ञापनस्य युक्तत्वात् कृतम् । चतुर्थीकर्मणः प्रायश्चित्तकर्मत्वं तु ' अग्ने प्रायश्चित्ते ' इत्यादिमन्त्रलिङ्गाज्ज्ञेयम् । पूर्वव्याख्याने प्रसिद्धव्याहृतिहोमानन्तर्यपरित्यागः , ' इमं मे ' इत्यादीनां चतुर्णामेव प्रायश्चित्तसंज्ञेत्यत्र विनिगमकाभावः , अङ्गहोमस्य मध्ये प्रधानानुष्ठानस्याश्रुतस्य कल्पनं चेति दोषाः । अस्मदीयव्याख्याने तु नैते दोषाः । प्रत्युत शास्त्रान्तरप्रसिद्धाया याज्ञिकप्रसिद्धायाश्च स्वशास्त्रे समस्तव्याहृतिहोमस्य सर्वप्रायश्चित्तित्वसंज्ञायाः सिद्धिरधिकेति द्रष्टव्यमिति युक्तं प्रतिभाति । सुद॰ ५८२–५८३

(१) हिगृ॰ १९।७।२३ ; संप्र. ८४५ ( चतुर्थ्या... जुहोति ) एतावदेव ; संर. ५८२ संप्रवत्.

**'अथास्यै मूर्धनि संस्रावं जुहोति– ' भूर्भगं त्वयि जुहोमि स्वाहा ॥ भुवो यशस्त्वयि जुहोमि स्वाहा ॥ सुवः श्रियं त्वयि जुहोमि स्वाहा ॥ भूर्भुवः सुवस्त्विषिं त्वयि जुहोमि स्वाहा ॥ ' इति ॥**

अथ प्रायश्चित्त्यनन्तरमस्या मूर्ध्नि संस्रावं पात्रान्तरस्थं निहितं दर्व्या जुहोति ' भूर्भुवः सुवः ' इति चतुर्भिः । हुत्वेति वचनमेतासामेव नवानां संस्रावार्थम् । अथेत्यानन्तर्यार्थं कर्मशेषसमापनात् प्रागेव संस्रावहोमा भवेयुरिति । मातृद॰

**अत्रैवोदपात्रं निधाय प्रदक्षिणमग्निं परिक्रम्यापरेणाग्निं प्राचीमुदीचीं वा संवेश्याथास्यै योनिमभिमृशति– ' अभि त्वा पञ्चशाखेन शिवेनाभिद्विषावता । सहस्रेण यशस्विना हस्तेनाभिमृशामसि सुप्रजास्त्वाय ॥ ' इति ॥**

अथ ' त्वमग्ने अयासि ' इत्येतदादिकर्मशेषं परिसमाप्यैवास्मिन्नेवाग्निसमीपे देश उदपात्रं निधाय प्रदक्षिणमग्निं सोदपात्रं परिक्रम्यापरेणाग्निं परिस्तृत्य पर्यङ्के स्वास्तरणे प्राक्शिरसमुदक्शिरसं वा वधूं संवेश्य शाययित्वाऽनन्तरमस्या योनिमभिमृशति दक्षिणेन हस्तेन ' अभि त्वा ' इत्यनेन । मातृद॰

(१) हिगृ॰ १९।७।२४–२८.

**अथैनामुपयच्छते–'सं नाम्नः सं हृदयानि सं नाभिः सं त्वचः। सं त्वा कामस्य योक्त्रेण युञ्ज्म्यविमोचनाय॥' इति॥**

अथैनां वधूमुपयच्छते अर्वाक्करते मिथुनीभवति। 'सं नाम्नः' इत्यनेन तस्याः प्रजनने आत्मनः प्रजननं प्रवेशयति।

मातृद्द.

**अथैनां परिष्वजते–'मामनुव्रता भव सहचर्या मया भव। या ते पतिघ्नी तनूर्जारघ्नीं त्वेतां करोमि शिवा त्वं मह्यमेधि क्षुरपविर्जारेभ्यः॥' इति॥**

अथैनां वधूं परिष्वजते 'मामनुव्रता' इत्यनेन।

मातृद्द.

**अथास्यै मुखेन मुखमीप्सते–'मधु हे मध्विदं मधु जिह्वा मे मधुवादिनी। मुखे मे सारघं मधु दत्सु संवननं कृतम्॥ चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम्। यद्युक्तो देवगन्धर्वस्तेन संवनिनौ स्वके॥' इति॥**

अथास्या मुखेन मुखमीप्सते आप्तुमिच्छति पोषयतीत्यर्थः। 'मधु, चाक्रवाकम्' इत्येताभ्याम्। अथशब्दः कर्मान्तरप्रतिषेधार्थः। क्षतयोनिर्हि अत्यन्तस्वीकृता भवति, अक्षतयोनिः पत्युर्मरणोत्तरकालं पुनः संस्कृत्य परिणेतव्येति स्मरणात्।

मातृद्द.

## मानवगृह्यसूत्रम्

योक्त्रपाशविमोचनम्, दम्पत्योः शयने निपातनम्, उपगमनविधिः

**'योक्त्रपाशं विषाय तौ संनिपातयेत्। 'अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम्। इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम॥ अपश्यं त्वा मनसा दीध्यानां स्वायां तनूं ऋत्विये बाधमानाम्। उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे॥ प्रजापतिस्तन्वं मे जुषस्व त्वष्टा देवैः सहमान इन्द्रः। विश्वेदेवैर्ऋतुभिः संविदानः पुंसां बहूनां मातरौ स्याव॥ अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः। अहं प्रजा अजनयं पृथिव्या अहं जनिभ्यो अपरीषु पुत्रान्॥' इति स्त्र्यादिव्यत्यासं जपति॥**

योक्त्रपाशं वाससोऽन्ते यद्बद्धन्तद्विमुच्य तौ दम्पती एकस्मिन् शयने संनिपातयेत् इति प्रत्येकमभिसंपद्यते। तदुपरि भार्यो( भार्या ?) पतिं च संनिपातयेत् संगमयेत् स्त्रं स्वं प्रति। अपश्यम्। एते चत्वारोऽस्मिन्नुपगमनमन्त्राः। स्त्र्यादिव्यत्यासं दम्पत्योर्जपः। पत्नी पूर्वम्।

अष्टाभा.

**'करत्' इति भसदमभिमृशति॥**

**'जननी' इत्युपजननम्॥**

**'बृहत्' इति जातं प्रतिष्ठितम्॥**

**एतेन धर्मेण ऋतावृतौ संनिपातयेत्॥**

भसदिति गुह्यप्रदेशं पत्न्याः। जननीति उपजननं प्रजननम्। बृहत्। एतेन प्रतिष्ठितमभिमृशतीत्यनुवर्तते। एतेन ऋतुकाले तौ संनिपातयेदेवमादिना धर्मेण। स्वार्थे णिच् परस्परापेक्षं प्रयोजकत्वं वा च ( ? वा वाच्यम्)।

अष्टाभा.

## भारद्वाजगृह्यसूत्रम्

होमः, उपगमनविधिः

**'अथ चतुर्थ्यामपररात्रेऽन्तरागारेऽग्निमुपसमाधाय जयाभ्यातानाराष्ट्रभृत इति हुत्वैता आहुतीर्जुहोति–'अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये। याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा॥ वायो प्रायश्चित्ते, आदित्य प्रायश्चित्ते, प्रजापते प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये। याऽस्यै निन्दिता तनूस्तामितो नाशयामसि स्वाहा॥' इति॥**

(१) मागृ. १।१४।१६–२०.

(१) भागृ. १।१९–२०.

अथैनां तूष्णीं हिंकृत्य वाग्यत उपेत्य (? उपैति)-- 'अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वं सामाहमृक् त्वं तावेहि संभवाव सह रेतो दधावहै पुंसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय' इति। अथास्या अपवृत्तार्थोऽपवृत्तार्थायै मुखेन मुखं संनिधाय प्राणिति– 'एतं प्राणमपानिहि' इति। तं सा प्रत्यपानिति। अथास्या आचान्तोदकायै पाणी प्रक्षाल्याभिमृशति-- 'करद्धच्छिवेन त्वा पञ्चशाखेन हस्तेनाविद्विषावता साहस्रेण यशस्विनाऽभिमृशामि सुप्रजास्त्वाय' इति भसदेशम् ॥

## काठकगृह्यसूत्रम्

### संवेशनम्

[1]'तौ संविशतः ॥

तौ वधूवरौ एकस्मिन् शयने भवतः। विवाहोत्तरकालप्रथमशयने आधाने च समानमेतद्विधानमनन्तरमन्त्रचतुष्टयजपसहितम्। ¶ देव.

'अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम्। इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम ॥ अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋद्ध्यै नाधमानाम्। उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे ॥ प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिः सहसा न इन्द्रः। विश्वैर्देवैर्याज्ञियैः संविदानः पुंसां बहूनां मातरः स्याम ॥ अहं गर्भमादधाम्योषधीष्वहं विश्वेषु भुवनेष्वन्तः। अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अवरीषु पुत्रान् ॥' इति स्त्र्यादिव्यत्यासं जपतः ॥

एतास्त्रिष्टुभः प्रथमसंवेशने गर्भाधाने च वधूवरौ जपतः स्त्र्यादिव्यत्यासं कृत्वा, प्रथमां स्त्री, द्वितीयां वरः, तृतीयां स्त्री, चतुर्थीं वरः। व्यत्यासः विपर्ययः। पुरुषो हि प्रधानम्, तस्य पूर्वं क्रियायोगोऽन्यत्र। इह तु विपर्ययः। स्त्री आदिर्यत्र व्यत्यासे स स्त्र्यादिव्यत्यासः।

वधूर्वदति– हे पुत्रकाम, त्वामहमपश्यं पश्यामि, चेकितानं देदीप्यमानं ब्रह्मवर्चसादिना अतिशयेन दीप्तिमन्तम्। केन पश्यामि? मनसा, न तु चक्षुषा। कीदृशम्? तपसो जातम्। तप इति प्रजापतेः सत्कर्मणश्च नाम। प्रजापतेः ब्रह्मणः सकाशाज्जातम्। तपसश्चाऽऽविर्भूतं (? श्च विभूतं) वृद्धिं गतम्। इह प्रजां मयि पुत्ररूपां रयिं च धनं रराणः आददत् प्रजया प्रजायस्व प्रजामुत्पादयेत्यर्थः।

वर आह– पश्यामि त्वां हे पुत्रकामे, दीध्यानां दीप्तिमतीं मनसा। कीदृशीम्? नाधमानाम्, 'नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु', प्रजां याचमानाम्। कुत्र? स्वायां तनू स्वस्यां तन्वाम्। किमर्थम्? ऋद्ध्यै समृद्ध्यै लोकद्वयाभ्युदयाय। मामुप मम समीपे वर्तमाना त्वम् उच्चा महती पूज्यतमा सत्पुत्रादियोगात्, युवतिः तरुणी सती बभूयाः अतिशयेन भूयाः। प्रजया प्रजायस्व 'आत्मा वै पुत्रनामा' इति वचनात् प्रजारूपेण प्रजायस्व पुत्रवती भव।

वधूराह भर्तरि प्रजापतित्वमध्यारोप्य– प्रजापते, मम तन्वं तनूं शरीरं जुषस्व। हे त्वष्टः हे प्रजापते, त्वम् इन्द्रः सन् सहसा बलेन देवैर्विश्वैश्च देवैरनुपतितः सन् नः अस्माकं संविदानः सम्यक् जानानः। याज्ञियैः यज्ञार्हैरिति देवविशेषणम्। वयं च बहूनां पुंसां पुत्राणां मातरः निर्मात्र्यः स्याम।

वर आह– ओषधीषु फलपाकान्तासु अहमेव गर्भं फलजननसामर्थ्यम् आदधाम् आदधे। जीवात्मनां परमात्मनो भेदाभावादेवमभिधानम्। अत एवाऽऽह– विश्वेषु सर्वेषु भूतेषु अहमेवान्तस्तिष्ठामि अन्तर्यामितया, पृथिव्यामहमेव प्रजामनवद्यामजनयं जनयिष्यामि च, अहमेव जनिभ्यः जननीनां स्त्रीणाम् अवरीषु जठराभ्यन्तर-

¶ आवि. देवगतम्।

(१) कागृ. ३०।२-३.

वर्तिनीषु गर्भग्रहणीषु पुत्रान् जनयामि बीजमादधामि ।
$ देव.

## वाराहगृह्यसूत्रम्

योक्त्रपाशविमोचनम्, दम्पत्योः शयने निपातनम्, उपगमनम्

'योक्त्रपाशं विषाय तौ संनिपातयेत् । 'अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् । इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम ॥ अपश्यं त्वा मनसा दीध्यानां स्वायां तनूं ऋत्विये नाथमानाम् । उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे ॥ प्रजापतिस्तन्वं मे जुषस्व त्वष्टा देवैः सहमान इन्द्रः । इन्द्रेण देवैर्वीरुधः संविदानां बहूनां पुंसां पितरः स्याव ॥ अहं प्रजा अजनयं पृथिव्यामहं गर्भमदधामोषधीषु । अहं विश्वेषु भुवनेष्वन्तरहं प्रजाभ्यो बिभर्षि पुत्रान् ॥' इति स्त्रिया दीव्यत्या संजपति( ? स्त्र्यादिव्यत्यासं जपति) । 'करत्' इति भसदभिमृशति । 'जननी' इत्युपजन( न )म् । 'बृहत्' इति जातम् । एतेन धर्मेण ऋतावृतौ संनिपातयेत् ॥

## आग्निवेश्यगृह्यसूत्रम्

प्रायश्चित्तहोमः, व्रतविसर्गः, पुण्याहवाचनम्, उपगमनम्

'त्र्यहे पर्यपेते निश्यग्निप्रतिष्ठापनादि प्रसिद्धं दार्विहोमिकमा राष्ट्रभृद्भ्यो विवाहप्रकृतिं नयेल्लाजादिसंभारवर्जं प्रतिग्रहमार्जनवासःपरिधानवर्जम् । एवमेष सर्वेषां विवाहप्रकृतिम् । आकालं प्रायश्चित्तं जुहोति 'अग्ने प्रायश्चित्ते' इति चतसृभिः । वारुण्यादि समानम् । व्रतविसर्गः । अथ व्रतं विसृजते 'अग्ने व्रतपते व्रतमचारिषम्' इत्ये( तैः ) । अथ पुण्याहं वाचयित्वा 'आवाभ्यां दम्पतिभ्यां स्वस्ति भवन्तो ब्रुवन्तु' इति । 'युवाभ्यां दम्पतिभ्यां स्वस्ति' इति प्रतिवचनम् । अथास्या उपस्थमभिमृशति 'शिवेन त्वाऽभिमृशामि' इति । प्रतिसंविशति 'ऋषभेण स्कन्दामि' इति । रत्यन्तं कृत्वा जपेत् 'आ ते योनिं गर्भ एतु' इति तिसृभिः । एवमेव मासिमास्यृतुवेलायाम् । संतिष्ठते भार्योपयमनम् ॥

## पारस्करगृह्यसूत्रम्

स्थालीपाकः, मूर्धनि संस्रावाभिषेकः, स्थालीपाकशेषप्राशनं तत्कृतैकात्म्यहेतुकपरदारगमननिषेधः

'चतुर्थ्यामपररात्रेऽभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकं श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥

'अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ गन्धर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा' इति ॥

स्थालीपाकस्य जुहोति 'प्रजापतये स्वाहा' इति ॥

हुत्वा हुत्वैतासामाहुतीनामुदपात्रे संस्रवान्त्समवनीय तत एनां मूर्धन्यभिषिञ्चति– 'या

$ आवि. देवगतम् ।

(१) वागृ. १८.

(२) आग्निगृ. १।६।३.

(१) पागृ. १।११।१–६ ; सप्र. ८४५ ( चतुर्थ्या... हुतीर्जुहोति ) एतावदेव ; संग. ३१६.

ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीं तत एनां करोमि सा जीर्य त्वं मया सहासौ ' इति ॥

अथैनां स्थालीपाकं प्राशयति– ' प्राणैस्ते प्राणान् संदधाम्यस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचम् ' इति ॥

तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥

(१) चतुर्थ्यामित्यादि । विवाहशेषोऽयमुच्यते । चतुर्थेऽहन्यपररात्रे गृहाभ्यन्तरतोऽग्निमुपसमाधाय। विवाहशेषत्वाद्बहिः शालायां मा भूदित्यभ्यन्तरग्रहणम् , पूर्वाह्णव्युदासार्थं चापररात्रस्य. ब्रह्माणमुपवेश्येति चोदपात्रावसरविधित्सया । स्थालीपाकं श्रपयित्वेत्युच्यते तद्भूतोपादानं मा भूदिति । आज्यभागाविष्ट्वेत्येतदाज्याहुत्यवसरविधित्सयोक्तम् । ' अग्ने प्रायश्चित्ते ' इत्येवमादिपञ्चाऽऽज्याहुतीर्हुत्वा प्रजापतये स्वाहेति । अनेन मन्त्रेण । स्थालीपाकस्येत्यवयवलक्षणा षष्ठी । हुत्वा हुत्वेति । ' या ते पतिघ्नी ' इत्यनेन मन्त्रेण । असाविति च नामधेयग्रहणम् । सर्वाहुत्यन्ते मा भूदिति हुत्वा हुत्वेत्युक्तम् । मूर्धाभिषेकश्चाऽऽगन्तुकत्वात् सर्वान्ते भवति । अथैनामिति । 'प्राणैस्ते०' इत्यनेन मन्त्रेण । एनामिति वधूम् । तस्मादेवमिति । यस्मादस्या ऐक्यं संवृत्तं तस्माच्छ्रोत्रियदारेण नोपहास एष्टव्यः । उपहासशब्देन चाभिगमोऽभिधीयते । स चैववित् एवं कुर्वन् परो भवति पराभवति । निन्दार्थवादोऽयम् । कभा.

(२) यद्वा एवंवित् श्रोत्रियः परः शत्रुर्भवति । उत अप्यर्थे । * जभा.

(३) चतुर्थ्यां तिथौ विवाहतिथिमारभ्य अपररात्रे रात्रेः पश्चिमे यामे अभ्यन्तरतः गृहस्य मध्ये अग्निं वैवाहिकमुपसमाधाय पञ्चभूसंस्कारान् कृत्वा अग्निं स्थापयित्वा दक्षिणतो ब्रह्मासनमास्तीर्य तत्र पूर्ववद्ब्रह्माणमुपवेश्य उत्तरत उदपात्रं प्रतिष्ठाप्य प्रणीतास्थानादुत्तरतः जलपूर्णं ताम्रादिपात्रं स्थापयित्वा । अत्र ब्रह्माणमुपवेश्येति पुनर्वचनमुदपात्रप्रतिष्ठापनावसरज्ञापनार्थम् । स्थालीपाकं चरुं यथाविधि श्रपयित्वा पर्युक्षणान्ते आघारानन्तरमाज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति । अग्ने प्रायश्चित्त इति । आज्येन पञ्चाहुतीरेतैः स्वाहान्तैर्मन्त्रैर्जुहोति । स्थालीपाकस्येति । स्थालीपाकस्य चरोः ' प्रजापतये स्वाहा ' इत्येकामाहुतिं जुहोति । हुत्वा हुत्वेति । ' अग्ने प्रायश्चित्ते ' इत्यादीनां प्राजापत्यान्तानां षण्णामाहुतीनां प्रत्येकं हुत्वा संस्रवान् हुतशेषानुदपात्रे समवनीय प्रक्षिप्य । केषांचिन्मते स्विष्टकृदाहुतेरपि । तत एनां मूर्धन्यभिषिञ्चति । ततः तस्मादुदपात्रादुदकमादाय एनां वधूं वरो मूर्धन्यभिषिञ्चति । या ते पतिघ्नीति । अभिषेचनमन्त्रोऽयम् । असावित्यत्र वधूनाम । अथैनामिति । अथ अभिषेकानन्तरम् एनां वधूं स्थालीपाकं चरुशेषं 'प्राणैस्ते प्राणान् संदधामि' इत्यादिना ' त्वचा त्वचम् ' इत्यन्तेन मन्त्रेण वरः प्राशयति । तस्मादेवमिति । यतोऽनेन चरुशेषप्राशनकर्मणा भर्त्रा सहैक्यं प्राप्ता दारा तस्मादेवंवित्पुरुषः श्रोत्रियस्य विदुषः दारेण भार्यया सह उपहासं मैथुनं नेच्छेत् न कामयेत् , हि यस्मात् एवंविदपि श्रोत्रियः परः शत्रुः भवति ।

अन्यासामाहुतीनां पात्रान्तरे संस्रवान् प्रक्षिपेत् । ... पात्रान्तरस्थान् संस्रवान्प्राश्य पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दत्त्वा उदपात्रादुदकमादाय वधूं मूर्धन्यभिषिञ्चति । हभा.

(४) अग्निमुपसमाधायेति ग्रहणमभ्यन्तरगुणविधानार्थम् । मन्त्रार्थः– हे अग्ने हे प्रायश्चित्ते सर्वदोषापाकरण, यतस्त्वं देवानाम् इन्द्रादीनां मध्ये प्रायश्चित्तिः दोषापाकर्ताऽसि अहं च ब्राह्मणः ब्रह्मण्यः वैदिको वा भूत्वोपधावामि आराधयामि । किंभूतोऽहम् ? ' नाथ उपयाच्ञायाम् ', आशीष्कामः ऐश्वर्यकामो वा प्रार्थयानो वा । उपधावनप्रयोजनमाह– या अस्यै, षष्ठ्यर्थे चतुर्थी, अस्या वध्वाः पतिघ्नी तनूः तन्वा अवयवः ताम् अस्यै इमामुपकर्ते नाशय अपनय । तुभ्यं स्वाहा सुहुतमस्तु । समुदायवाचकोऽपि तनूशब्दोऽत्रावयववाचको

* शेषं कभावत् ।

ज्ञेयः । तेन यदस्याः पतिनाशकमङ्गलक्षणं हस्तरेखादि सामुद्रिकलक्षणोक्तं तदपाकृत्य शोभनमङ्गं विधेहीति वाक्यार्थः । एवमुपर्यपि व्याख्येयम् । तनूविशेषणं देवता च भिद्यते । तद्यथा— हे वायो पवन । प्रजाघ्नी अपत्यनाशिनी । एवमुत्तरत्रापि योज्यम् । संस्रवान् समवनीय स्रुवलग्नाज्यचर्वंवयवान् प्रक्षिप्य । षण्णामाहुतीनामत्र संस्रवभक्षणलोपः । इतरासां तु भवत्येव । असौस्थाने आमन्त्रणविभक्तियुक्तं वध्वा नामग्रहणं कार्यम् । मन्त्रार्थः— हे असौ कन्ये, या ते तव अपत्यादिघातिनी पञ्चधा दुष्टा तनूः अत एव निन्दिता ततोऽनेनाभिषेचनेन एनां तनूं जारघ्नीम् उपपत्यादिदोषघातिनीं करोमि । सा त्वं मया पत्या भर्त्रा सह जीर्य निर्दुष्टवृद्धत्वं गच्छ । अथैनामिति । अथ अभिषेकानन्तरम् एनां वधूं स्थालीपाकं चरुं वरः प्राशयेत् 'प्राणैस्ते प्राणान्' इति मन्त्रेण । वधूसंस्कारोऽयम्, न तु द्रव्यप्रतिपत्तिः, अतो द्रव्यस्य नाशदोषादावन्यद्रव्येण प्राशनं कार्यम् । तदुक्तं कारिकायाम्— 'वधूसंस्कार एवायं प्रतिपत्तिरियं न तु । अतो द्रव्यविनाशादौ द्रव्येणान्येन तद्भवेत् ॥ शेषद्रव्यविनाशादौ लुप्यन्ते प्रतिपत्तयः ॥' । अत्र स्त्रिया सह वरोऽपि समाचाराद्भोजनं करोति । स्त्रिया सह भोजनेऽपि न दोष इत्याह हेमाद्रौ प्रायश्चित्तकाण्डे गालवः— 'एकयानसमारोह एकपात्रे च भोजनम् । विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक् । अन्यथा दोषमाप्नोति पश्चाच्चान्द्रायणं चरेत् ॥' । मिताक्षरायामप्येवम् । मन्त्रार्थः— हे कन्ये, मम प्राणादिभिस्ते तव प्राणादीन् संदधामि संयोजयामि । *गभा.

(५) चतुर्थ्यां रात्रौ रात्रेरपरभागे, यद्वा चतुर्थीतिथिसंबन्धिरात्र्यपरभागे । यत्तु चतुर्थ्यां तिथौ भविष्यद्रात्र्यपरभाग इति, तस्य रात्र्यंशस्य पञ्चमतिथिसंबन्धित्वात्, तथा च पञ्चमीकर्मत्वापत्त्या चतुर्थीकर्मेति नामव्याकोपः, 'त्रिरात्रे निर्वृत्ते चतुर्थीकर्म' इति शाङ्खायनविरोधाच्च । गृहस्याभ्यन्तरतोऽग्निमुपलिप्त उद्धतावोक्षिते समाधाय । दक्षिणत इति । उपवेश्येत्युक्तत्वात् प्रत्यक्षब्रह्मण उपवेशनम् । अपरे तु उदपात्रप्रतिष्ठापनावसरविधित्सया ब्रह्माणमुपवेश्येत्युक्तम्, तेन स्मार्तकर्मसु सर्वत्र प्रत्यक्षब्रह्मोपवेशनमाहुः । उत्तरत इति । स्थालीपाकं श्रपयित्वेत्यनेन परिभाषाप्रज्ञप्तिः । पात्रासादने विंशतिसंख्याकाः समिधः । चरुग्रहणे 'प्रजापतये जुष्टं गृह्णामि' । ग्रहणं प्राजापत्येन तीर्थेन । चतुर्थं तूष्णीम् । प्रोक्षणे 'प्रजापतये त्वा जुष्टं प्रोक्षामि' । अन्यत् प्रकृतिवत् । आज्यभागानन्तरम् 'अग्ने प्रायश्चित्ते' इत्यादिपञ्चमन्त्रैः पञ्चाऽऽज्याहुतयः, आज्यभागाविष्ट्वेत्याज्याहुत्यवसरविधित्सयोक्तत्वात् । आज्याहुतिकरणार्थे स्मृतिकरणान् मन्त्रानाह— 'अग्ने प्रायश्चित्ते... नाशय स्वाहा । इदमग्नये । वायो प्राय... नाशय स्वाहा । इदं वायवे । सूर्य प्राय... नाशय स्वाहा । इदं सूर्याय । चन्द्र प्राय... नाशय स्वाहा । इदं चन्द्रमसे । गन्धर्व प्राय... नाशय स्वाहा । इदं गन्धर्वाय' । इतिशब्द आज्याहुतिमन्त्रसमाप्तिद्योतकः । स्थालीपाकस्येति । स्थालीपाकस्य होमः । 'प्रजापतये स्वाहा । इदं प्रजापतये' । हुत्वा हुत्वेति । मूर्धनि वरः अभिषिञ्चति उदपात्रोदकेन । असावित्यत्र प्रथमान्तवधूनामग्रहणम् । अथैनामिति । चतुर्भिर्मन्त्रैः प्रतिमन्त्रं वध्वा प्राशनं कारयति इत्यर्थः । ततो महाव्याहृत्यादिस्विष्टकृदन्तम् । चरोरुपहतत्वादाज्येन स्विष्टकृत् । संस्रवप्राशनादि ब्राह्मणभोजनान्तम् । इति चतुर्थीकर्म । एवं निष्पन्ने भार्यात्वे तस्याः पुरुषान्तरकर्तृकोपहासनिषेधमाह— तस्मादिति । एवंवित् 'श्रोत्रियस्य स्त्रियं नोपहसेत्' इति ज्ञानवान् परः श्रेष्ठः भवतीत्यर्थः । विभा.

## गोभिलगृह्यसूत्रम्

प्रायश्चित्ताज्यहोमः, वधूस्नपनम्

[1]**अथातश्चतुर्थीकर्म** ॥

(१) विवाहतिथ्यनन्तरं चतुर्थ्यां तिथौ वक्ष्यमाणं कर्म वर्तिष्यते इति वाक्यार्थः । अतःशब्दो हेत्वर्थे । यतः एतदकरणे 'याऽस्याः पापी लक्ष्मीः' इत्यादिदोषः शरीरान्नापैति तत एतदवश्यं कर्तव्यम् । संत. १०६

* शेषं कभा., हभा. गतम् ।

(१) गोगृ. २।५।१ ; संत. १०६.

(२) एवं चात्र कल्पे चतुर्थीहोमस्य पापीलक्ष्म्यादिरूपालक्षण( निवृत्तिः )फलम्, न शाखान्तरवद्गोत्रसंक्रमणशरीरैक्यादि, अन्ते( ? विवाहान्ते ) एव तत्संभवादित्युक्तमेव( २।३।१३ )। तथा च दैवादेतदनिष्पत्तौ न विवाहवैगुण्यमपीति स्मर्तव्यम्। अत्र च तैलोद्वर्तनादि कृत्वा युगकाष्ठ उपविश्य बध्वा सह यवमाषचूर्णेन स्नानमाचारादिति मुरारिमिश्राः प्राहुः।

¶ मृदुला.

**'अग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति 'अग्ने प्रायश्चित्ते' इति चतुः ॥**

अग्निमुपसमाधाय विवाहाग्निमिन्धनेन संधुक्ष्य प्रायश्चित्तलिङ्गैर्मन्त्रैराज्याहुतीर्जुहोति 'अग्ने प्रायश्चित्ते' इति मन्त्रेण। चतुश्चतुरिति वीप्सा बोध्या, वक्ष्यमाणपरिशिष्टस्वरसात्। प्रथमाहुतिर्यथापठितेन मन्त्रेणैव भवति।

* संत. ९०६–९०७

**'अग्नेः स्थाने वायुचन्द्रसूर्याः ॥**

अन्यासु तिसृषु अग्निपदस्थाने वायुचन्द्रसूर्याः क्रमशः कार्याः। एतावानेव विशेषः, शेषं पूर्ववत्। एवं चतसृष्वप्याहुतिषु पापी( लक्ष्मी )रिति स्यात्। कुतः ? प्रथमस्यैव मन्त्रस्याभ्यासोपदेशात्, तस्य च 'अग्नेः स्थाने वायुचन्द्रसूर्याः' इत्येतावता विशेषोक्तत्वात्।

* संत. ९०७

**समस्य पञ्चमीं बहुवदूह्य ॥**

(१) तथैव समस्य बहुवत् 'अग्निवायुचन्द्रसूर्याः' इत्यादि पञ्चमीमाहुतीं जुहुयादिति। अत्रापि वीप्सा बोध्या। ऊह्येति कथनादत्रापि पापी लक्ष्मीरित्यादिवदेव द्रष्टव्यम्। द्वितीयपञ्चके पतिघ्नीति विशेषः, शेषं पूर्ववत्। तृतीये आहुतिपञ्चके अपुत्र्येति विशेषः। चतुर्थेऽपस(?श)व्येति विशेषः। एतत् स्पष्टयति छन्दोगपरिशिष्टे कात्यायनः—'मन्त्राम्नायेऽग्न इत्येतत्पञ्चकं लाघवार्थिभिः। पठ्यते तत्प्रयोगे स्यान्मन्त्राणामेव विंशतिः॥ अग्निस्थाने वायुचन्द्रसूर्यान् बहुवदूह्य च। समस्य पञ्चमी सूत्रे चतुश्चतुरिति श्रुतेः॥ प्रथमे पञ्चके पापी लक्ष्मीरिति पदं भवेत्। अपि पञ्चसु मन्त्रेषु इति मन्त्रविदो विदुः॥ द्वितीये च पतिघ्नी स्यादपुत्र्येति तृतीयके। चतुर्थेऽपस( ? र्थे चापश )व्येति इति आहुतिविंशकम्॥'।

संत. ९०७

(२) समस्य (अग्नि )वायुचन्द्रसूर्या इत्युच्चार्य। बहुवदूह्य प्रायश्चित्तयो यूयमित्येवमादिबहुवचनमूहयित्वा पञ्चमीमाहुतिं जुहोति। * न चैवं पञ्चममन्त्रस्य यथाम्नायपठितस्य क्वाप्यत्राविनियोगे निरर्थकत्वापत्तिः, अत्राविनियुक्तस्यापि विनियोगान्तरसंभवादस्मदादिभिस्तत्परिशेषस्य कर्तुमशक्यत्वात्, अन्यत्रान्यथा( ? अन्यत्र यथा )-पठितविनियोगस्य महर्षिणा दर्शितत्वेनापर्यनुयोज्यत्वात्। तथा चाग्नेः स्थाने वाय्वाद्यूहेनाग्न्यादिसमस्तवचनान्तोहेन च मन्त्रपञ्चकं संपन्नं तच्चतुर्धाऽभ्यसनीयमिति आहुतीनां विंशतिर्भवतीति शास्त्रार्थः। प्रयोगो यथा—

---

¶ शेषं संतवत्।

* मृदुला. संतवत्।

(१) गोगृ. २।५।२ ; संत. ९०६ चतु + ( चतुः ).

(२) गोगृ. २।५।३–४ ; संत. ९०७.

* नैते आक्षेपसमाधाने सुधियां मनः समादधाते। तथाहि– 'अग्ने प्रायश्चित्ते' इत्यादयो विंशतिर्मन्त्राश्चतुर्थीकर्मणि विनियुज्यन्ते। तत्र व्यस्ताः षोडश, समस्ताश्चत्वारः। तत्र केवलं चतुर्णामेव व्यस्तमन्त्राणां मन्त्रब्राह्मणे समाम्नानं चतुर्थीकर्मविनियोगतात्पर्येण नोपपद्यते इति तत्रापि निरर्थकत्वमापादनीयमित्याक्षेपन्यूनत्वम्। तथा यथोक्तसमाधानात् चतुर्थीकर्मविनियुक्तानां समस्तमन्त्राणामनाम्नानापातात् मन्त्रब्राह्मणेऽकृत्स्नत्वदोषापत्तेः समाधानमपि न मनोहरम्। अथ यदि 'मन्त्राम्नायेऽग्न इत्येतत्पञ्चकं लाघवार्थिभिः। पठ्यते तत्प्रयोगे स्यान्मन्त्राणामत्र विंशतिः॥' इति कात्यायनपरिशिष्टप्रामाण्यात् गृह्यसूत्रप्रामाण्याच्च 'लाघवानुरोधेन पापीलक्ष्म्यादिशब्दरूपैकैकविशेषवतां चतुर्णां व्यस्त-

'ओं अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पापी लक्ष्मी स्तामस्या अपजहि स्वाहा'। द्वितीयतृतीयचतुर्थीषु वायो चन्द्र सूर्येति पुरस्ताद्योजनं विशेषः। पञ्चमीं समस्य यथा— 'ओं अग्निचन्द्रवायुसूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ। ब्राह्मणो वो नाथकाम उपधावामि याऽस्याः पापीलक्ष्मीस्तामस्या अपजहत स्वाहा॥' इति। अत्र द्वितीयपञ्चके पापीलक्ष्मीस्थाने 'पतिघ्नी(तनूरि)ति विशेषः। तृतीये अपुत्र्या (तनूः), चतुर्थे अपशव्या (तनूः) इति विशेषो द्रष्टव्यः। एतच्च स्पष्टीकृतं च्छन्दोगपरिशिष्टे कात्यायनेन— 'मन्त्राम्नायेऽग्न इत्येतत् पञ्चकं लाघवार्थिभिः। पठ्यते तत्प्रयोगे

---

मन्त्राणामाम्नानम्, प्रयोगे तु पापीलक्ष्म्यादिशब्दानामावापोद्वापाभ्यां षोडशत्वं संपादनीयम्' इत्याम्नायाभिप्रायकल्पनान्न तत्र निरर्थकत्वापत्तिराम्नायस्याकृत्स्नत्वापत्तिश्चेत्युच्यते, तदा किमपराद्धं विशेषचतुष्टयविशिष्टसमस्तमन्त्राम्नानेन? तत्राप्युक्तवचनप्रामाण्यादेव लाघवपाठत्वं प्रयोगे विशेषपदावापोद्वापाभ्यां चतुष्ट्वसंपादनं च कल्प्यताम्। तथा च गोभिलानुसारिणां यथाश्रुतस्य समस्तमन्त्रलाघवपाठस्य मन्त्रत्वाभावात् आवृत्तिसंपादितानामत्र विनियोगाच्च अविनियुक्तत्वेन निरर्थकत्वशङ्कैव नोदेतीति।

इदं त्वत्र चिन्त्यम्— कात्यायनपरिशिष्टगतस्य 'लाघवार्थिभिः' इत्यस्य 'अध्येतृभिः' इति मृदुलाकृतं शेषपूरणं युक्तमेवेति भाति, 'द्रष्टार ऋषयः स्मर्तारः' (शुक्लयजुः-सर्वानुक्रमणी) इति पर्यायेण वेदापौरुषेयत्वं वदतः ब्राह्मणवैरेकत्वेऽपि बहुवचनं प्रयुञ्जानस्य च कात्यायनस्य तत्रैव तात्पर्यप्रतीतेः। एवं सति मन्त्रब्राह्मणे मूलतो विंशतेर्मन्त्राणां पाठ आसीत्, सोऽध्येतृभिर्लघूकृत इति निष्पद्यते। अथवाऽस्तु यथाश्रुतपाठस्यैव मूलपाठत्वं तस्य यथाकथंचित् विंशतिमन्त्रतात्पर्यकलघुत्वं च। उभयथाऽपि मन्त्रब्राह्मणानुसारिण्येव खादिरसूत्रे यथाश्रुतमन्त्रपञ्चकपक्षो नोपपद्यते, मूलतो विंशतेर्मन्त्राणां पाठं विंशतिमन्त्रतात्पर्यकं लघुपाठं वा कात्यायनोऽज्ञासीत्, खादिरस्तु नेति कल्पनाया अनौचित्यात्। किंच, व्यस्तषोडशमन्त्र्या यथाश्रुतो लाघवपाठोऽपि न युज्यते, लाघवपठितेष्वग्न्यादिदेवताकमन्त्रेषु पापीलक्ष्म्यादेरेकैकस्यैव विशेषस्य ग्रहणात् विशेषान्तरयुतपर्यायान्तराणां तेभ्योऽप्रतीतेः, पर्यायान्तरप्रत्यायकसर्वविशेषग्रहणाभावे लाघवपाठत्वस्यैवानुपपत्तेः। सर्वत्र वैदिकग्रन्थेषु गृहीतसर्वविशेषा एव लाघवपाठा दरीदृश्यन्ते। तथा च 'अग्ने प्रायश्चित्ते...याऽस्याः पापी लक्ष्मीः पतिघ्नी तनूरपुत्र्या तनूरपशव्या तनूस्तामस्या अपजहि' इति लाघवपाठो भवितुमर्हति। एवं वाय्वादिमन्त्रेष्वपि। यथाश्रुतसमस्तमन्त्रपाठोऽपि न युज्यते, 'याऽस्याः पापी लक्ष्मीः' इत्यत्र पर्यायान्तरेषु पापीलक्ष्मीपदमात्रस्थाने पतिघ्नीतन्वादिपदोहस्य विवक्षितत्वेन 'याऽस्याः' इत्यंशस्य सर्वमन्त्रसाधारणत्वात् 'या पतिघ्नी, याऽपुत्र्या, याऽपशव्या' इत्यत्र 'अस्याः' इति पदस्य त्यागानुपपत्तेः। एवं च खादिरसूत्रं यथाश्रुतव्यस्तसमस्तमन्त्रपाठश्च मन्त्रपञ्चकपक्षे एव मन्त्रब्राह्मणतात्पर्यं बोधयतः। गुणविष्णुना सायणाचार्येण च मन्त्रपञ्चकमेव व्याख्यातम्। यथाश्रुतं गोभिलसूत्रं तु संदिग्धम्। तत्र 'चतुः' इति सकृद्वचनात् 'समस्य पञ्चमीम्' इति सकृदेकवचनाच्च मन्त्रपञ्चकपक्षः प्रतीयते, "'अग्ने प्रायश्चित्ते' इत्यादिभिर्यथाश्रुतैश्चतुर्भिर्मन्त्रैश्चतुर्वारं जुहोति, समस्य पञ्चमीं जुहोति" इत्यर्थसंभवात्। किंतु 'अग्नेः स्थाने ...' इति सूत्रं मन्त्रपञ्चकपक्षे न संगच्छते, पूर्वसूत्रेणैव गतार्थत्वात्। 'चतुश्चतुः' इति वीप्सापाठो नेदानीमुपलभ्यते, रघुनन्दनेनापि नोपालभ्यत। कात्यायनस्तु 'सूत्रे चतुश्चतुरिति श्रुतेः' इति श्रुतिशब्दप्रयोगात् वीप्सापाठमुपलब्धवानिति प्रतीयते। तदेतत्सर्वं विचार्य 'अग्नेः स्थाने ..' इति-सूत्रोपष्टब्धवीप्सापाठमात्रबलादेव कात्यायनो मन्त्रब्राह्मणं क्लेशयित्वा मन्त्रविंशतिपक्षमकल्पयदिति वा, तत्सूत्रं कात्यायनीयत्वेनाभिमतानि वचनानि च प्रक्षिप्तानीति वा कल्पनीयमिति सुधीभिर्निर्णेयमिति। जैमिनिगृह्यसूत्रस्य सामवेदीयत्वेऽपि न तेन कुत्रापि मन्त्रब्राह्मणमनुसृतम्। प्रकृतस्थलेऽपि तेन भिन्नपाठाः पञ्च मन्त्राः कृत्स्नाः पठिताः।

स्वान्मन्त्राणामत्र विंशतिः ॥ अग्नेः स्थाने वायुचन्द्रसूर्या बहुवद्भूम च । समस्य पञ्चमीं सूत्रे चतुश्चतुरिति श्रुतेः ॥ प्रथमे पञ्चके पापी लक्ष्मीरिति पदं भवेत् । अपि पञ्चसु मन्त्रेषु इति यज्ञविदो विदुः ॥ द्वितीये तु पतिघ्नी स्यादपुत्र्येति तृतीयके । चतुर्थे चापशव्येति इत्थमाहुतिर्विंशकम् ॥' इति । मन्त्राम्नाय इति पठ्यमानमन्त्रकाण्डे 'अग्ने प्रायश्चित्ते' इत्यारभ्य पञ्चमन्त्राः प्रायश्चित्ताहुतिलिङ्गाः लाघवकामैर्ध्येतृभिः पठ्यन्ते । तत्पञ्चकं चतुर्थीहोमप्रयोगकाले ऊहेन मन्त्राणां विंशतिर्भवेदित्यर्थः । द्वितीये इत्यनन्तरं पञ्चके इत्यनुषज्यते । एवमग्रेऽपि । अत्र यथाश्रुते सूत्रेऽनुपपत्त्यभावाद्यथाम्नातमन्त्रपञ्चकस्यान्वयानुरोधाच्च पञ्चैवाऽऽहुतय इति स्वपद्धतौ वीरेश्वरादयः । कश्चित्तु— यथाम्नातैर्मन्त्रैः प्रत्येकमन्त्रं होमचतुष्टयमिति विंशतिराहुतय इत्याह । अन्यस्तु— मन्त्रचतुष्टये वीप्सा, पञ्चमेन यथापठितेनैकैवाऽऽहुतिरिति सप्तदशाऽऽहुतयः । अपरस्तु— प्रथममन्त्र एव वीप्सा, मन्त्रान्तरैर्यथापठितैरेकैकाहुतिरित्यष्टावाहुतय इति । एतानि च सूत्रव्याख्यानानि परिशिष्टविरुद्धानीत्युपेक्षितानीति दिक् । मृदुला.

**'आहुतेराहुतेश्च संपातमुदपात्रेऽवनयेत् ॥**

(१) जलपात्रे क्षिपेदित्यर्थः । संत. ९०७

(२) संपातं स्रुवलग्नमाज्यम् । अवनयेत् पातयेत् । मृदुला.

**'तेनैनां सकेशनखामभ्यज्य ह्रासयित्वाऽऽप्लावयन्ति ॥**

(१) तेन आज्यमिश्रजलेन एनां वधूं म्रक्षयित्वा, सकेशनखामिति सर्वहोमाद्यङ्गार्थम्, क्रामयित्वाऽग्निस्थानादेशान्तरं गमयित्वा प्लावयन्ति स्नापयन्ति । बहुवचनादनियतः कर्ता । संत. ९०७

(२) तेन उदकपात्रस्थसंपाताज्येन । आज्यमिश्रितोदकेनेति मुरारिमिश्राः । एनां वधूम् । सकेशनखां शिरस आरभ्य पादपर्यन्तम् । अभ्यज्य म्रक्षयित्वा । अभ्युक्ष्येति मुरारिमिश्राः । ह्रासयित्वा उद्वर्तनादिना तदञ्जनमपनीय । मुरारिमिश्रास्तु ह्रासनम् उद्वर्तनादिकम्, 'उद्वर्तनं नखच्छेदो रोमच्छेदनमेव च । स्रंसनं मेखलायाश्च ह्रासनादि(? नानि) विदुर्बुधाः ॥' इति वचनात् । आप्लावयन्ति स्नापयन्ति । मन्त्रानुपदेशादमन्त्रकमेव । बहुवचनादनियतः कर्ता । तत आचारात् पतिः कृसरस्थालीपाकं संपाद्य पत्नीं पृच्छति— किमत्र पश्यसि ? सा च वदति— पत्युः श्रीअमुकशर्मणो दीर्घायुष्ट्वमिति । संप्रदायादिदानीमेव तस्मिन्नेवाग्नौ धृतिहोमं पृथक्करणासामर्थ्ये शिष्टाः कुर्वन्ति । तस्य च स्वतन्त्रत्वादादावन्ते च व्याहृतिहोमः कर्तव्यः । तदुक्तम् 'आज्याहुतिषु (अनादेशे) पुरस्ताच्चोपरिष्टाच्च (महा)व्याहृतिभिर्होमः' (गोगृ. १।९।२७) इति । तत आचाराजन्मग्रन्थिकङ्कणयोर्विमोचनम् । ततश्च वामदेव्यगानान्तं तन्त्रं समापयेदिति । मृदुला.

## खादिरगृह्यसूत्रम्

आज्यहोमः, वधूस्नपनम्

**'ऊर्ध्वं त्रिरात्राच्चतसृभिराज्यं जुहुयात् 'अग्ने प्रायश्चित्तिः' इति समस्य पञ्चमीं संपातानवनयन्नुदपात्रे ॥**

तत आह— ऊर्ध्वमिति । चतुर्थेऽहनि पूर्वाह्णे प्रपदान्तं कृत्वाऽन्वारब्धायां महाव्याहृतिभिः समस्ताभिर्हुत्वा 'अग्ने प्रायश्चित्तिः' इत्यादिभिः स्वाहाकारान्तैर्जुहुयात् । नव संपाताः । महत्यध्वन्यर्थादुत्कर्षः सहशयनस्य । हविष्यमन्नमित्यस्य प्रकृतत्वात्तद्व्युदासार्थमाज्यमित्युक्तम् । उदकपूर्णं पात्रं स्नानाय पर्याप्तं स्यात् । रुद्रभा.

**तेनैनां सकेशनखामाप्लावयेत् ॥**

सहशिरसं पतिः स्वयमेव स्नापयेत् । रुद्रभा.

---

(१) गोगृ. २।५।५ ; संत. ९०७ राहुतेश्च (राहुतेस्तु).

(२) गोगृ. २।५।६ ; संत. ९०७ ह्रास (क्राम) ऽऽप्ला (प्ला).

(१) खागृ. १।४।१२–१४.

**ततो यथार्थं स्यात् ॥**

ततो वामदेव्यगानान्तं कृत्वा ब्राह्मणान् भोजयेत् । न प्रतिहोमं साध्यभेदायत्तं याथार्थ्यम्, किंत्वेकसाध्यमेवेदं होमत्रयात्मकमनुष्ठानमित्येवमर्थम् । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

प्रायश्चित्ताहुतयः, स्थालीपाकः, नाभ्यादिस्रोतोञ्जनम्, संवेशनम्, दक्षिणादानम्

**[1]ऊर्ध्वं त्रिरात्रात् संभवः ॥**

त्रिरात्रादूर्ध्वं संनिहिते पुण्यदिने संभवः संयोगः स्यात् । चतुर्थस्याह्नः अपुण्यत्वे यावत्पुण्यदिनमपरिष्वजन्तौ सह शयातामेव । श्रीव्या.

**निशायां जायापतिकर्मण्यम् ॥**

ऊर्ध्वं त्रिरात्रात् निशायां चतुर्थ्यां रात्रावित्यर्थः । जाया च पतिश्च ( जायापती ), जायापतिकर्मण्यं गृहस्थकर्माहं सायंप्रातर्होमादि तदाप्रभृति कार्यमित्यर्थः । श्रीव्या.

**प्रायश्चित्तीर्जुहुयात् — ' अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्या अपजहि स्वाहा ॥ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पशुघ्नी तनूस्तामस्या अपजहि स्वाहा ॥ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्या अपजहि स्वाहा ॥ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी तनूस्तामस्या अपजहि स्वाहा ॥ अग्ने वायो सूर्य चन्द्र प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ ब्राह्मणो वो नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्या अपहत स्वाहा ' इति ॥**

(१) जैगृ. १.२२.

औपासनाग्नौ पुरस्तन्त्रान्ते कृत्यमेतत् । संवेशनाङ्गोऽयं होमः । प्रत्याहुति संपातं च सिञ्चेत् । श्रीव्या.

**स्थालीपाकादग्निं प्रजापतिं चेष्ट्वा संपातांश्चमस आनीय ' स्रोतांस्याङ्क्ष्व ' इत्येनां ब्रूयात् ॥**

प्रायश्चित्ताहुत्यनन्तरं चरोरवदाय ' अग्नये स्वाहा, प्रजापतये स्वाहा ' इति ससंपातं हुत्वा एतासां सप्ताहुतीनां संपातान् पात्रे समानीय भार्याहस्ते दत्वा सनाभिनवरन्ध्राणि समालिम्पेति तां ब्रूयात् । श्रीव्या.

**नाभिं प्रथमम् ॥**

प्रेषिता सा मिश्रितैः संपातैर्नाभिं प्रथममञ्जीत । श्रीव्या.

**ततो यान्यूर्ध्वम् ॥**

तत ऊर्ध्वं यानि चक्षुर्घ्राणकर्णास्यानि तान्यञ्जीत । श्रीव्या.

**ततो यान्यर्वाञ्चि ॥**

ततो यान्यर्वाञ्चि * नाभियोनिपायवस्तान्यञ्जीत । ततः स्विष्टकृदाद्युत्तरतन्त्रम् । आज्ये चरौ च क्रमात् प्रस्तरमूलाञ्जनं भवति । श्रीव्या.

**ऊर्ध्वमर्धरात्रात्संवेशनं 'विष्णुर्योनिं कल्पयतु' इत्येतेन तृचेन ॥**

* अत्रोर्ध्वत्वार्वाक्त्वयोर्नाभिनिरूपितत्वप्रतीतेर्नाभेरर्वाक्स्रोतःस्वन्तर्भावो नोपपद्यते । तदनन्तर्भावे च ' अर्वाञ्चि ' इति बहुत्वं नोपपद्यते । अथ बहुवचनानुरोधेन नाभेर्निरूपकत्वमनङ्गीकृत्य शरीराधोभागस्थितत्वेन तस्यार्वाक्स्रोतोन्तर्भाव उपगम्येत तदा नाभेर्द्विरञ्जनं सूत्रस्वरसविरुद्धमापद्येत । एवं स्थिते नाभेरर्वाक्त्वोपगमेन द्विरञ्जनं वा कार्यम्, ' अर्वाञ्चि ' इति बहुवचनस्य वा द्विवचनस्थाने छान्दसत्वमुपेयमित्यत्र जैमिनिसूत्रानुसारिशिष्टाचार एव प्रमाणीकरणीयः । श्रीनिवासाध्वरिव्याख्यानं तु नाभिमर्वाक्स्रोतःस्वन्तर्भाव्यापि सूत्रस्वरसविरुद्धस्य नाभेर्द्विरञ्जनस्य वक्तव्यत्वेऽप्यवचनात् संदिग्धप्रामाण्यम् ।

संवेशनं मैथुनम् । तृचस्यान्ते संयोगः । श्रीव्या.

**'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ हिरण्ययी अरणी यं निर्मन्थतामश्विनौ । तं ते गर्भं दधाम्यहं दशमे मासि सूतवै ॥' इति ॥**

भार्याप्रत्यभिमन्त्रणम् । इयं स्त्री हिरण्ययी अरणी पुत्रारणी, एनामश्विनौ देवौ निर्मन्थतां निर्मथ्नीतां सूतवै प्रसवाय । शिष्टं स्पष्टम् । श्रीव्या.

**ऋतावृतावेवमेव ॥**

एवमेव अर्धरात्रादूर्ध्वमेतेन तृचेन कुर्यादित्यर्थः । श्रीव्या.

**संवेशने हुत्वाऽऽचार्याय गां दद्यात् ॥**

'अग्ने प्रायश्चित्ते' इत्यादि संवेशनहोमानन्तरमाचार्याय विवाहहोमप्रवेशहोमसंवेशनहोमानामङ्गभूतां दक्षिणां गां दद्यात् । श्रीव्या.

**अदर्शने ब्राह्मणेभ्यो गां दद्यात् ॥**

आचार्यस्यादर्शने उपद्रष्टृभ्यो ब्राह्मणेभ्यो दक्षिणां गां दद्यात् । विवाहः समाप्तः । श्रीव्या.

## कौशिकगृह्यसूत्रम्

होमः, उपगमनविधिः, अन्तरारजोदर्शनप्रायश्चित्तम्, वाधूयवस्त्रदानम्, वधूरोदनप्रायश्चित्तम्

[1] **'सप्त मर्यादाः' इति तिसृणां प्रातरावपते ॥**

**'अक्ष्यौ नौ' इति समाञ्जाते ॥**

**'महीमूषु' इति तल्पमालम्भयति ॥**

**'आ रोह तल्पम्' इत्यारोहयति ॥**

**'तत्रोपविश्य' इत्युपवेशयति ॥**

**'देवा अग्रे' इति संवेशयति ॥**

**'अभि त्वा' इत्यभिच्छादयति ॥**

**'सं पितरौ' इति समावेशयति ॥**

**'इहेमौ' इति त्रिः संनुदति ॥**

**मदुघमणिमौक्षेऽपनीय 'इयं वीरुत्', 'अमोऽहम्' इति संस्पृशतः ॥**

मदुघमणिं पिष्ट्वा औक्षे प्रक्षिप्य अभिमन्त्र्य परस्परं वरवधू समालभेते । आह पैठीनसिश्लोकः– 'आवपेत्सुरभिगन्धान् क्षीरे सर्पिष्यथोदके । एतदेवनमित्याहुरौक्षं तु मधुना सह ॥' । दाकेटी.

**'ब्रह्म जज्ञानम्' इत्युङ्गुष्ठेन व्यचस्करोति ॥**

वरः प्रजननदेशं स्पृशति । दाकेटी.

**'स्योनाद्योनेः' इत्युत्थापयति ॥**

खट्वाया उत्थापयति । दाकेटी.

**परिधापनीयाभ्यामहतेनाऽऽच्छादयति ॥**

**'बृहस्पतिः' इति शष्पेणाभिघार्य व्रीहियवाभ्यामभिनिधाय दर्भपिञ्जूल्या सीमन्तं विचृतति ॥**

**शणशकलेन परिवेष्ट्य तिस्रो रात्रीः प्रति सुप्तास्ते ॥**

**अनुवाकाभ्यामन्वारब्धाभ्यामुपदधीत ॥**

यदि चतुर्थिकाकर्ममध्ये रजस्वला वधूर्भवति तदेदं प्रायश्चित्तम् । दाकेटी.

**'इहेदसाथ' इत्येतया शुल्कमपाकृत्य ॥**

**द्वाभ्यां निवर्तयति– 'इह मम राध्यतामत्र तव' इति ॥**

**यथा वा मन्यते ॥**

**'परा देहि' इति वाधूयं ददतमनुमन्त्रयते ॥**

**'देवैर्दत्तम्' इति प्रतिगृह्णाति ॥**

कर्ता । दाकेटी.

**'अपास्मत्तमः' इति स्थाणावासजति ॥**

**'यावतीः कृत्याः' इति व्रजेत् ॥**

**'या मे प्रियतमा' इति वृक्षं प्रतिच्छादयति ॥**

**शुम्भन्याऽऽप्लुत्य ॥**

स्नानं सर्वे कुर्वन्ति । दाकेटी.

**'ये अन्ताः' इत्याच्छादयति ॥**

**'नवं वसानः' इत्याव्रजति ॥**

(१) कौसू. ७९।१–२३.

पूर्वापरं यत्र नाधिगच्छेत् 'ब्रह्मापरम्' इति कुर्यात् ॥

गौर्दक्षिणा प्रतीवाहः ॥

'जीवं रुदन्ति' 'यदीमे केशिनः' इति जुहोति ॥

पितृगृहे यदि रोदनं भवति तदा इदं प्रायश्चित्तम् ।
दाकेटी.

## वैखानसगृह्यसूत्रम्

प्रायश्चित्तहोमः, मूर्धनि होमः, उपगमनविधिः

[1]ततोऽपरस्यां रात्रौ चतुर्थ्यामलंकृत्याग्निमुपसमाधाय नव प्रायश्चित्तानि जुहुयात् 'अग्ने वायवादित्याऽऽदित्य वायवग्नेऽग्ने वायवादित्य' (इति) व्याहृति(भिः) 'भूर्भगम्' इति चतुर्भिर्वधूमूर्ध्न्याज्येन जुहुयात् । अग्निं प्रदक्षिणं कृत्वा प्राच्यामुदीच्यां वा तामुपवेश्य 'अभिष्ट्वा पञ्चशाखेन' इति योनिमभिमृश्य 'सं ना मनः' इत्युपगच्छेत् । 'इमामनुव्रता' इत्यालिङ्गनं 'मधु हे मध्विदम्' इति मैथुनं कुर्वीत । 'सुप्रजास्त्वाय' इत्युपगमनम् 'सं ना मनः' इत्यालिङ्गनम् 'इमामनुव्रता' इति वधूमुखेक्षणमित्येके ॥

## कात्यायनः

मन्त्रब्राह्मणपठितमन्त्रपञ्चकतो मन्त्रविंशतित्वसंपादनम्

[2]मन्त्राम्नायेऽग्न इत्येतत्पञ्चकं लाघवार्थिभिः ।
पठ्यते तत्प्रयोगे स्यान्मन्त्राणामत्र विंशतिः ॥
[3]अग्नेः स्थाने वायुचन्द्रसूर्या बहुवदूह्य च ।
समस्य पञ्चमीं सूत्रे चतुश्चतुरिति श्रुतेः ॥

(१) वैगृ. ३।८.

(२) कास्मृ. ३।७६ चतुर्थपादे (मन्त्रेण मन्त्रविंशतिम्); संत. ९०७ मन्त्र (मेव).

(३) कास्मृ. ३।७७ मीं सूत्रे (मीसूत्रे); संत. ९०७ अग्नेः स्था (अग्निस्था) सूर्याः (सूर्यान्) शेषं कास्मृवत्.

[1]प्रथमे पञ्चके पापी लक्ष्मीरिति पदं भवेत् ।
अपि पञ्चसु मन्त्रेषु इति यज्ञविदो विदुः ॥
[2]द्वितीये तु पतिघ्नी स्यादपुत्र्येति तृतीयके ।
चतुर्थे त्वपशव्येति इत्थमाहुतिविंशकम् ॥ *

## शौनककारिकाः

चतुर्थीकर्मकालः, पुण्याहवाचनपूर्वकमुपगमनम्

[3]त्रिरात्रादिव्रतेष्वेषु दम्पत्योः शक्त्यपेक्षया ।
अनुष्ठिते त्वन्यतमे व्रते याऽनन्तरा निशा ॥
[4]पुण्याहवाचनं तस्यां कारयित्वा द्विजैर्वरैः ।
मुहूर्ते शोभने गन्धमाल्यादिभिरलङ्कृताम् ॥
[5]उपगच्छेद्वधूं यद्वा कालान्तरसमुद्भवे ।
उभयोरपि दम्पत्योर्नक्षत्रानुगुणैर्गुणैः ॥
[6]शुद्धे विवाहनक्षत्रे रात्रौ दोषविवर्जिते ।
पुण्ये मुहूर्ते पुण्याहं वाचयित्वा द्विजोत्तमैः ॥
अलङ्कृत्य मनोज्ञां तामुपगच्छेद्वधूं वरः ॥

## कुमारिलकारिकाः

पुण्याहवाचनपूर्वकमुपगमनम्

[7]स्वस्त्यादि वाचयित्वाऽऽदौ स्त्रियं तामुपगच्छति ।
मुहूर्ते शोभने तस्या व्रीडा न स्याद्यथा तथा ॥

* गोगृ. २।५।४ इत्यत्र व्याख्यानं द्रष्टव्यम् । एतेषु चतुर्षु श्लोकेषु मृदुलापाठः (२।५।४) स्वीकृतः ।

(१) कास्मृ. ३।७८; संत. ९०७ यज्ञ (मन्त्र).

(२) कास्मृ. ३।७९ पुत्र्येति (पुत्रेति) शव्येति इत्थ (सिच्येति इद); संत. ९०७ तु (च) र्थे त्वपशव्येति इत्थं (र्थेऽपसव्येति इति).

(३) शौका. ३२ पृ. ६३; प्रपा. ४२८ याऽनन्तरा (या तु तदा).

(४) शौका. ३३ पृ. ६३; प्रपा. ४२८-४२९.

(५) शौका. ३४ पृ. ६३ काला (कामा) द्भवे (द्भवेत्); प्रपा. ४२९.

(६) शौका. ३५-३६ पृ. ६३; प्रपा ४२९.

(७) कुका. १।२३।१६; प्रपा. ४२८ त्वाऽऽदौ (त्वाऽथ).

## रेणुकारिकाः

चतुर्थीकर्मणः कालदेशौ स्नानपूर्वकत्वं च, मन्त्राणां सर्वानुक्रमः, होमः, वधूमूर्धनि संस्रवाभिषेकः, शेषप्राशनं तस्य संस्कारकर्मत्वं च

[1]ब्रवीम्यथ विवाहाङ्गं चतुर्थीकर्म विस्तरात् ।
विवाहतश्चतुर्थेऽह्नि रात्रेरपरभागतः ॥
[2]गृहाभ्यन्तरतस्तत्स्यादप्यङ्गत्वान्न मण्डपे ।
स्नात्वैतदाचरेत्कर्मेत्येवं कात्यायनोऽब्रवीत् ॥
[3]विवाहाग्नौ भवेत्कर्म दम्पती जातवेदसः ।
पश्चादुपविशेयातामासने कुथ आस्तृते ॥
[4]वधूर्दक्षिणतस्तत्र ततः संकल्पमुच्चरेत् ।
करिष्येऽहं विवाहाङ्गं चतुर्थीकर्म संयतः ॥
अथाग्निं स्थापयेद्ब्रह्मगमनादिवरान्तिकान् ।
वैकल्पिकान् स्मरेदेतानृषींश्छन्दांसि देवताः ॥
अग्न इत्यादिपञ्चानामार्षं स्यात् परमेष्ठिनः ।
लिङ्गोक्ता देवतास्त्रिष्टुप् छन्दो होमे युजिर्भवेत् ॥
भूराद्युक्तमथ त्रिष्टुप् छन्दो वध्वेव देवता ।
आर्षं प्रजापतेर्या ते युजिः स्यादभिषेचने ॥
ऋषिः प्रजापतिश्छन्दोहीनं वध्वेव देवता ।
प्राणैस्त इति मन्त्रस्य पाकशेषाशने युजिः ॥
ज्ञप्त्यै कर्मस्वरूपस्य स्मरेद्द्रव्यं च देवताः ।
आघारावाज्यभागान्ते स्मरेदाज्येन देवताः ॥
अग्निं वायुं ततः सूर्यं चन्द्रं गन्धर्वमेव च ।
प्रजापतिं चरुणाऽथ शेषात्स्विष्टकृतं स्मरेत् ॥
नवाऽऽहुतीरथाऽऽज्येन भूराद्याः षोडशैव तु ।
एता अङ्गप्रधानार्था अहं वक्ष्येऽत्र देवताः ॥

करिष्येऽहं विवाहाङ्गं चतुर्थीकर्म तत्र मे ।
विष्णुशर्मन् भव ब्रह्मा प्रत्युक्त्वोपविशेदसौ ॥
न्यसेदुत्तरतो वह्नेर्वर्धनीं वारिपूरिताम् ।
ततः प्रणयनादि स्यादाज्यभागावसानतः ॥
चरुश्रपणमत्र स्यात्तच्च पक्षादिकर्मवत् ।
जुहुयादाज्यभागान्ते पञ्च स्थालीघृतेन ताः ॥
आहुतीरग्न इत्याद्या अन्वारम्भविवर्जिताः ।
प्रजापतय इत्युक्त्वा चरोरवयवं ततः ॥
[1]अग्निं स्विष्टकृतं शेषाद्भूराद्याः स्विष्टकृद् घृतात् ।
अग्न इत्यादि षण्णां तु हुत्वा हुत्वैव संस्रवान् ॥
[2]वर्धन्यां प्रक्षिपेदाहुः केचित् स्विष्टकृतोऽपि तु ।
अन्यासां प्रोक्षणीपात्रे प्राशनाद्या विमोकतः ॥
[3]अभिषिञ्चेद्वधूं मूर्ध्नि प्रवालैर्वर्धनीजलैः ।
या ते पतिघ्नीमन्त्रेण तस्या नामाऽऽदिशत्यसौ ॥
[4]स्थाने हरिप्रिया नाम्नी चरुशेषं ततो वधूम् ।
प्राणैस्त इति मन्त्रेण प्राशयेत्सकृदेव सः ॥
[5]वधूसंस्कार एवायं प्रतिपत्तिरियं न तु ।
अतो द्रव्यविनाशादौ द्रव्येणान्येन तद्भवेत् ॥
[6]शेषद्रव्यविनाशादौ लुप्यन्ते प्रतिपत्तयः ॥
विविक्ते प्राशनं तत्स्यादाचामेच्छुद्धिहेतवे ॥

---

(१) रेका. १ पृ. ६९ ; संग. ३१७.

(२) रेका. २ पृ. ६९ ; संग. ३१७-३१८ कर्मेत्येवं (कर्म ह्येवं).

(३) रेका. ३ पृ. ६९ ; संग. ३१८ पू.

(४) रेका. ४-१५ पृ. ६९-७०.

(१) रेका. १६ पृ. ७० ; संग. ३१८ षण्णां तु (षण्मन्त्रान्) उत्त.

(२) रेका. १७ पृ. ७० ; संग. ३१९ वर्धन्यां (वर्धिन्यां).

(३) रेका. १८ पृ. ७०; संग. ३१९ वधूं मू (वधूमू) वर्धनी (वर्धिनी) पू.

(४) रेका. १९ पृ. ७०.

(५) रेका. २० पृ. ७० ; गभा. १२२ ; संग. ३१९.

(६) रेका. २१ पृ. ७० ; गभा. १२२ पू. ; संग. ३१९ पू.

**गृह्यासंग्रहः**

गोभिलगृह्यसूत्रस्थह्रासनपदार्थविवरणम्

'उद्वर्तनं नखच्छेदो रोमच्छेदनमेव च ।
स्रंसनं मेखलायाश्च ह्रासनानि विदुर्बुधाः ॥

(१) गृसं. २।३८.

अथेदानीं 'तत्रैनां सकेशनखामभ्यज्य ह्रासयित्वाऽऽप्लावयन्ति' (गोगृ. २।५।६) इतिसूत्रोक्तं ह्रासनं व्याकुरुते– उद्वर्तनमिति । उद्वर्तनं कल्केन शरीराद्राज्यादीनामपनयनम् । मेखलायाः काञ्च्याः स्रंसनम् अधःपातनम् । प्रसिद्धमन्यत् । एतानि ह्रासनानि जानन्ति पण्डिताः । गृसंभा.

# कङ्कणमोचनम्

## अनिर्दिष्टकर्तृकवचनम्

कङ्कणमोचनमन्त्रः

'कङ्कणं मोचयाम्यद्य रक्षां तु न कदाचन ।
मयि रक्षां विधायाऽऽशु देव त्वं गच्छ कङ्कण ॥

(१) विपा. १४२ (भागः २).

# स्तम्भबलिः

## शौनककारिकाः

पुण्याहवाचनम्, वसन्तपूजा, बलिदानम्, अभिषेकः, ब्राह्मणेभ्यो बलि–दक्षिणादानम्, स्तम्भबलिफलम्

[1]शौनकोऽहं प्रवक्ष्यामि स्तम्भबल्याख्य-
मुत्सवम्।
पञ्चमेऽहनि कुर्वीत अभ्यङ्गस्नानपूर्वकम्॥

[2]ब्राह्मणैर्बन्धुभिः सार्धं पुण्याहं वाचयेत्ततः।
पूर्वेद्युरर्चिते कुम्भे वसन्तोदकपूरिते॥

[3]वसंतं पूजयेत्तत्र ध्यानावाहनकादिभिः।
कनकारुणभासुरं प्रसन्नं
हयवक्त्रं मदनस्य साहचर्यम्।
द्विभुजं धृतपल्लवप्रसूनं
भजकाभीष्टदमर्चयेद्वसन्तम्॥

(१) शौका. १ पृ. ६४ स्तम्भ (स्तम्ब) मुत्सवम् (मुत्तमम्); प्रपा. ४३१; विपा. १४० (भागः २).

(२) शौका. २ पृ. ६४; प्रपा. ४३१; विपा. १४० (भागः २).

(३) शौका. ३ पृ. ६४ भजकामी (भजतामि); प्रपा. ४३१; विपा. १४० (भागः २) शौकावत्.

[1]नैवेद्यं विनिवेद्यैवं बलिं चैव समर्पयेत्।
स्तम्भेष्वथ बलिं दद्यान्नानाभक्ष्यान्नविस्तरैः॥

[2]इत्थं संपूज्य विधिना अभिषेकं च कारयेत्।
पूर्वकुम्भेऽथ संस्थाप्य अङ्गुलीयकमुत्तमम्॥
कौतुकं रचयेत्तत्र दम्पतिभ्यां प्रयत्नतः।
वेदोक्तैर्विविधैर्मन्त्रैरभिषेकं समाचरेत्॥

[3]वसन्तार्दींश्च संप्रार्थ्य दिग्गजान् दिक्पतीनपि।
ब्राह्मणैर्बन्धुभिः सार्धमभिषिञ्चेच्च तज्जलम्॥

[4]ततः स्तम्भबलिं सर्वं ब्राह्मणेभ्यो निवेदयेत्।
दक्षिणां च यथाशक्ति दत्त्वा भुञ्जीत तैः सह।
इत्थं स्तम्भबलिं कृत्वा सर्वान् कामा-
नवाप्नुयात्॥

(१) शौका. ४ पृ. ६४ समर्पयेत् (समर्पयन्) स्तम्भेष्वथ (स्तम्बेष्वन्न); प्रपा. ४३१; विपा. १४१ (भागः २) ष्वथ (ष्वन्न).

(२) शौका. ५, ६ पृ. ६४; प्रपा. ४३१; विपा. १४१ (भागः २).

(३) शौका. ७ पृ. ६४; प्रपा. ४३१; विपा. १४१ (भागः २) दिग्गजान् (दिङ्नागान्).

(४) शौका. ८–९ पृ. ६४ स्तम्भ (स्तम्ब); प्रपा. ४३१; विपा. १४१ (भागः २).

# *उदुम्बरपूजा

## बौधायनगृह्यसूत्रम्

पञ्चमेऽहनि नापितकर्म, उदुम्बरपूजनम्, अन्नसंस्कारः, ब्राह्मणपूजनम्, आशीर्वाचनम्, मत्स्यग्रहणम्, मत्स्यबलिदानम्, परिभुक्तवस्त्रादीनामुदुम्बरशाखायां संसर्जनम्, अन्योन्यस्य पृष्ठतो धावनम्, उदक्रान्तप्रतियवनम्, अन्योन्यालङ्करणम्, रक्तवासःपरिधानम्, गृहं गत्वा शयनारम्भः

[1]अथाऽऽभ्यां पञ्चमेऽहनि नापितकर्म कुर्वन्ति ॥ नापिताय पयोदनं दत्त्वा ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्रैकमुदुम्बरमूलं पश्यन्ति तं प्रदक्षिणं परिसमूह्य प्रदक्षिणं गन्धैरनुलिम्पजपति— 'यथा त्वं वनस्पत ऊर्जा अभ्युत्थितो वनस्पते । शतवल्शो विरोहस्येवमहं पुत्रैश्च पशुभिश्च सहस्रवल्शा वि वयं रुहेम ॥' इति ॥

सुमनोभिः प्रच्छादयति— 'यथा त्वं वनस्पते फलवानस्येवमहं पुत्रैश्च पशुभिश्च फलवान् भवानि' इति ॥

अत्रैव त्रिवृताऽन्नेन बलिमुपहरति ॥

मन्त्रं चोदाहरन्ति— 'ऊर्जस्वान्पयस्वान्पयसा पिन्वमानोऽस्मान्वनस्पते पयसाऽभ्याववृत्स्व' इति ॥

अन्नं संस्कृत्य ब्राह्मणान्संपूज्याऽऽशिषो वाचयित्वा जानुदघ्नमुदकमवतीर्य प्राचीनदशेनाहतेन वाससा मत्स्यान्गृह्णतः(? ह्णीतः)। ब्रह्मचारिणं पृच्छतः— 'ब्रह्मचारिन् किं पश्यसि ?' इति ॥

स पृष्टः प्रतिब्रूयात्— 'पुत्रांश्च पशूंश्च' इति ॥

अथैनान्मत्स्यानुदुम्बरमूले बकानां बलिमुपहरति— 'दीर्घायुत्वाय वर्चसे' इति ॥

अत्रैव निर्माल्यानि परिभुक्तानि वासांसि प्रतिसरांश्च प्रतिमुच्योदुम्बरशाखायां संसृज्य ॥

अथावगाह्यान्योन्यस्य पृष्ठे धावयित्वोदकान्तं प्रतियौति— 'प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाशः' इति ॥

अन्योन्यमलङ्कृत्य रक्तानि वासांसि परिधायाहतेन वाससा वेति ॥

यानेन पद्भ्यां वा गृहं गत्वा प्रक्षालितपाणिपादावप आचम्य वाग्यतौ शयनमारभेते ॥

---

* अत्र गृहीतेन बौधायनगृह्यसूत्राध्यायेन विहितस्य कर्मणः 'नापितकर्म' इति समाख्येति सूत्रपुस्तकसंपादकस्य शामशास्त्रिणोऽभिप्राय इति विषयानुक्रमण्यामस्याध्यायस्य 'पञ्चमेऽहनि नापितकर्म' इति विषयनिदेशादुन्नीयते । बोधायनीयगृह्यकर्मसमुच्चयाख्यस्य ग्रन्थस्य प्रणेत्रा गायत्रीतिर्मुलेश्वरशर्मणा 'अथ पञ्चमेऽहन्युदुम्बरपूजादि' इति एतत्कर्मोपक्रमवाक्ये "गृह्ये 'अथाऽऽभ्यां पञ्चमेऽहनि नापितकर्म कुर्वन्ति' इत्यनेनाऽऽदौ क्षौरं विहितम्, तदत्राऽऽचारविरोधादुपेक्षितम्" इति टिप्पणी कृता । तेन तस्य 'सूत्रगतो नापितकर्मशब्दः क्रियमाणं पूजाङ्गं क्षौरमात्रमभिधत्ते, नैषा कर्मसमाख्या' इत्यभिप्रायः स्पष्टमवगम्यते । तत्र सूत्राध्यायेऽस्मिन्निरीक्ष्यमाणे नापितस्योत्तरत्र संबन्धाभावं साङ्गोदुम्बरपूजातिरिक्तकर्माभावं च समालोच्य, पूर्वोक्तोपक्रमवाक्ये आदिशब्देन पूजाङ्गान्येव विवक्षितानीति निश्चित्य च गायत्रीतिर्मुलेश्वराभिप्रायमेवोपपन्नं पश्यद्भिरस्माभिः कर्मप्रकरणयोर्नामेदं प्रकल्पितम् ।

(१) बौगृ. १।८।१-१२.

# विकलाङ्गविवाहप्रयोगः

सर्वं कर्तव्यानां विप्रेण कारयितव्यानां च पदार्थानां विभागः

## स्मृत्यन्तरम्

[1]मूकान्धादिषु चोद्वाहे कन्यास्वीकरणं विना ।
पाणिग्रहं विना सप्तपदादिक्रमणं विना ।
विप्रेण कारयेत्सर्वं पङ्गोः सप्तपदान्यपि ॥

## ब्रह्मपुराणम्

[2]कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेत् ॥

विवाहविधिमाह– कन्यास्वीकरणादिति । ' अनुमन्त्रयेत प्राण्यभिमृशेदप्राणि कन्यां च ' इत्याश्वलायनोक्तयोः कन्यास्पर्शानुमन्त्रणयोरुभयसमर्थे प्रत्युभयम्, अन्यतरसमर्थे प्रत्यन्यतरदिति । एतदुभयातिरिक्तं सर्वमाचार्येण करणीयमिति । संप्र. ४०१

## स्मृत्यर्थसारः

[1]विवाहश्च कन्यास्वीकारोऽन्यदङ्गमिति ॥

(१) मुक्ता. १०० ; आन. १६०.

(२) प्रपा. २२० ; गभा. २३१ प्रयोगपारिजाते ; संप्र. ४०० ; चम. १६ ; संम. २५ ब्रह्माण्डपुराणे ; सिन्धु. ९४४ ; विपा. ४८२ प्रयोगपारिजाते ; संकौ. १५३ ; बाल. १।१४ पृ. ४७ ; संग. ६४० ; संच. १२७ पारिजाते ; संर. २७५.

(१) स्मृसार. ४ ; हभा. २२५ स्मृत्यन्तरे ; चम. १६.

# बालवैधव्यपरिहारोपायाः

## मार्कण्डेयपुराणम्

एकान्ते कुम्भाश्वत्थविष्णुप्रतिमादिभिः कन्या-
विवाहः, तेन कन्याशुद्धिः

**[१]बालवैधव्ययोगेऽपि कुम्भद्रुप्रतिमादिभिः।**
**कृत्वा लग्नं रहः पश्चात्कन्योद्वाह्येति चापरे ॥**

अथ बालवैधव्यपरिहारार्थं कुम्भविवाहः। तत्र मार्कण्डेयः– बालवैधव्येति। कुम्भविवाह इति मन्थन्या अप्युपलक्षणम्। द्रुः वृक्षः अश्वत्थ एव। प्रतिमा विष्णोः सौवर्णी करशिरोवयवादिसहिता, न शालग्रामादिरूपा।

* संप्र. ८६७–८६८

**[२]यथैव रससंस्कारात्ताम्रं काञ्चनतां व्रजेत्।**
**तथा दुष्टफला कन्या विमला स्याद्विधानतः ॥**

## सूर्यारुणसंवादे

कुम्भविवाहस्य कालः प्रयोगश्च

**[३]विवाहात्पूर्वकाले च चन्द्रताराबलान्विते।**
**विवाहोक्ते शुभे लग्ने कन्यां कुम्भेन चोद्वहेत् ॥**

* संग. संप्रवत्।

(१) गभा. ९८ योगेऽपि (योगे तु) कुम्भद्रु (कुम्भेषु) रहः (ततः); संप्र. ८६८ मार्कण्डेयः; सिन्धु. १०८१ योगेऽपि (योगे तु); विपा. ७३६–७३७ बाल (बाल्य) शेषं सिन्धुवत्; ज्योनि. १६० चापरे (वा परे) पुराणान्तरे: ३५४ पुराणान्तरे; संग. १८७ पुराणान्तरे: १८८ ह्येति चापरे (ह्येऽतिचारके) मार्कण्डेयः; संव. १४०; संदी. १८० (भागः २) रहः (ततः) शेषं सिन्धुवत्, मार्कण्डेयः.

(२) ज्योनि. १६० पुराणान्तरे: ३५४ पूर्वार्धे (यथेन्धनस्य संस्कारात्ताम्रं काञ्चनतामियात्।) पुराणान्तरे; संग. १९२ (=) रस (वर) श्लोकोऽयं ज्योतिर्निबन्धे 'बाल्यवैधव्य०' इति श्लोकानन्तरपठितत्वादत्र संगृहीतः।

(३) गभा. ९८ उत्तरार्धे (विवाहोक्ते च मन्थन्या कुम्भेन सह चोद्वहेत्॥); संप्र. ८६८ बलान्विते (बले

**[१]पिता संकल्प्य ब्राह्मं च विवाहं विधिपूर्वकम्।**
**सूत्रेणाऽऽवेष्टयेत् पश्चात् दशतन्तुविधानतः।**
**कुङ्कुमालङ्कृतं देहं तयोरेकान्तमन्दिरे ॥**

आसमन्ताच्चन्दनपुष्पादिभिरलङ्कृतं कुम्भं कन्यादेहं च वेष्टयेदित्यर्थः। तदुभयसंबन्धिनि मन्दिरे इति।

§ संकौ. २०९

**[२]प्रार्थयेत्तु ततः कुम्भं मन्त्रेणानेन मानवः॥**
***[३]वरुणाङ्गस्वरूप त्वं जीवनानां समाश्रय।**
**पतिं जीवय कन्यायाश्चिरं पुत्रान् सुखं वरम् ॥**

§ संर. संकौवत्।

* विधानपारिजाते "स्वरूपाय' इति संबोधनपदम्, स्वरूपम् अयते प्राप्नोतीति पचाद्यच्" इति टिप्पणी वर्तते।

शुभे) शेषं गभावत्; सिन्धु. १०८१ उत्तरार्धे (विवाहोक्ते च तां कन्यां कुम्भेन सह चोद्वहेत्॥); विपा. ७३७ काले च (दिवसे) उत्तरार्धे (विवाहर्क्षे च मन्थन्या कुम्भेन सह चोद्वहेत्॥); संकौ. २०९ शुभे (यथा) कर्मविपाके; संग. १८८ काले च (काले तु) शेषं संप्रवत् गभावच्च; संव. १४० गभावत् संप्रवच्च; संर. ५२८ काले च (दिवसे) शुभे (तथा) कर्मविपाके; संदी. १८० (भागः २).

(१) गभा. ९८ णाऽऽवे (ण वे) प्रथमार्धं नास्ति; संप्र. ८६८ ब्राह्मं च विवाहं (वाह्यं च विवाह); सिन्धु. १०८२ सर्वं गभावत्; विपा. ७३७ ल्प्य ब्राह्मं च विवाहं (ल्पवाचा च विवाह); संकौ. २०९ कुङ्कुमा (कुम्भमा) शेषं सर्वं गभावत्, कर्मविपाके; संग. १८८ तन्तुवि (तन्तुं वि) कुङ्कुमा (कुम्भमा) देहं (देहे); संव. १४० संकौवत्; संर. ५२८ गभावत् संकौवच्च, कर्मविपाके; संदी. १८० (भागः २) कुङ्कुमा (कुम्भमा) शेषं संप्रवत्.

(२) विपा. ७३७.

(३) गभा. ९८ स्वरूप त्वं (स्वरूपाय) पुत्रान् सुखं वरम् (पुत्रसुखं कुरु); संप्र. ८६८; सिन्धु. १०८२

[1]देहि विष्णो वरं देव कन्यां पालय दुःखतः ।
ततोऽलङ्कारवस्त्राढ्यां वराय प्रतिपादयेत् ॥
[2]ततः कुम्भं च निःसार्य प्रभज्य सलिलाशये ।
ततोऽभिषेचनं कुर्यात्पञ्चपल्लववारिभिः ॥
[3]तत्सर्वं वस्त्रपूजाद्यं ब्राह्मणाय निवेद्य च ।
अन्यालङ्कारवस्त्राद्यं ब्राह्मणाय निवेदयेत् ॥

विवाहकर्ता पित्रादिः कन्यावैधव्यहरं कुम्भविवाहं करिष्ये इति संकल्प्य गणेशपूजनादिनान्दीश्राद्धान्तं कृत्वा वरुणविष्णुप्रतिमयोरग्न्युत्तारणं कृत्वा मही द्यौरित्यादि-विधिना कुम्भस्थापनवरुणपूजने विधाय तत्र स्थापित-विष्णुप्रतिमायां विष्णोरावाहनादिषोडशोपचारैः पूजां विधाय प्रार्थयेत्– 'वरुणाङ्गस्वरूपाय ... पालय दुःखतः ॥' इति । ततो विष्णुरूपिणे कुम्भायेमां कन्यां श्रीरूपिणीं समर्पयामीति समर्प्य 'परि त्वा' इत्यादि-मन्त्रैरधस्तादुपरिष्टाच्च मन्त्रावृत्त्या कुम्भं कन्यां च परि-वेष्ट्य ततः कुम्भं निःसार्य सलिलाशये प्रभञ्जयित्वा पञ्च-पल्लवैः शुद्धजलेन 'समुद्रज्येष्ठाः' इत्यादिमन्त्रैः कन्या-मभिषिच्य ब्राह्मणान् भोजयेत् । $ संकौ. २०९

द्विजबान्धवसंनिधौ अश्वत्थविवाहः, तत्र
द्विजानुमतिग्रहणम्, अश्वत्थप्रार्थना

[1]द्विजान् गुरून् सुहृन्नारीर्मङ्गलोच्चारणैः समम् ।
आहूयोद्वाहकाले च रम्यभूमौ समण्डपे ॥
[2]गत्वा प्रणम्य गौरीं च गणनाथं च भूरुहम् ।
भवानीं चैव मन्थानीं पिता मन्त्रमुदीरयेत् ॥
[3]उद्वाहयिष्ये विधिवदश्वत्थेन मनोहराम् ।
कन्यां सौभाग्यसौख्यार्थहेतवेऽहं द्विजोत्तमाः ॥
[4]नमस्ते विष्णुरूपाय जगदानन्दहेतवे ।
पितृदेवमनुष्याणामाश्रयाय नमो नमः ॥
[5]वनानां पतये तुभ्यं विष्णुरूपाय भूरुह ।
नमो निखिलपापौघनाशनाय नमो नमः ॥
[6]पूर्वजन्मभवं पापं बालवैधव्यकारकम् ।
नाशयाऽऽशु सुखं देहि कन्याया मम भूरुह ॥

अत्र विवाहविधिस्तु कुम्भविवाहवदेवावगन्तव्यः ।
† संप्र. ८६९

गभावत्; विपा. ७३७ जीवनानां समा (सर्वजीवसमा) शेषं गभावत्; संकौ. २०९ गभावत्, कर्मविपाके; संग. १८९; संव. १४० पतिं जीवय (पतिजीवेन); कुभ. १०८२ गभावत्; संर. ५२९ (=) गभावत्; संदी. १८१ (भागः २) (=) स्वरूप त्वं (स्वरूपस्त्वं) शेषं गभावत्.

(१) गभा. ९८ वस्त्राढ्यां (वस्त्रादि); संप्र. ८६८ विष्णो वरं (विष्णुवरान्) पू.; सिन्धु. १०८२; विपा. ७३७; संकौ. २०९ पू., कर्मविपाके; संग. १८९ विष्णो वरं देव (विष्णुवरादेव) पू.; संव. १४० संप्रवत्, पू.; कुभ. १०८२ पू.; संर. ५२९ (=) पू.; संदी. १८१ (भागः २) (=) उत्तरार्धे (पतिं जीवय कन्यायाश्चिरं देहि तथा सुखम् ॥).

(२) गभा. ९८; संप्र. ८६८; सिन्धु. १०८२; विपा. ७३७ ततः कुम्भं च (अथ कुम्भं वि); संकौ. २०९ कर्मविपाके; संग. १८८; संव. १४०; संर. ५४८ कर्मविपाके; संदी. १८० (भागः २) प्रभज्य (प्रभज्ज्य).

(३) संप्र. ८६८ पूजाद्यं (पूजायां); संग. १८८; संव. १४० पूजाद्यं (पूताद्यं) अन्या (कन्या).

$ संर. संकौवत् ।
† संग., संव. संप्रवत् ।

(१) संप्र. ८६८; संग. १८९ नारीर्मं (नारीम) समम् (सह) समण्डपे (सुमण्डपे); संव. १४० नारीर्मं (नारीम).

(२) संप्र. ८६८; संग. १८९; संव. १४०.

(३) संप्र. ८६९ त्तमाः (त्तमः); संग. १८९ हराम् (हरम्) कन्यां सौ (कन्यासौ); संव. १४० संगवत्.

(४) संप्र. ८६९; संग. १८९; संव. १४०.

(५) संप्र. ८६९ पू.; संग. १८९; संव. १४०.

(६) संग. १८९; संव. १४०.

वैधव्यहरविष्णुप्रतिमादानम्, तस्य कालः प्रयोगश्च, प्रतिमास्वरूपम्

*[1]शुभे मासे सिते पक्षे सानुकूलग्रहे दिने ।
ब्राह्मणं साधुमामन्त्र्य संपूज्य विविधार्हणैः ॥
तस्मै दद्याद्विधानेन विष्णोर्मूर्तिं चतुर्भुजाम् ॥
[2]शुद्धवर्णसुवर्णेन वित्तशक्त्याऽथवा पुनः ।
निर्मितां रुचिरां शङ्खगदाचक्राब्जसंयुताम् ॥
[3]दधानां वाससी पीते कुमुदोत्पलमालिनीम् ।
सदक्षिणां च तां दद्यान्मन्त्रमेतमुदीरयेत् ॥
[1]यन्मया प्राचि जनुषि घ्नन्त्या(?त्या) पति-समागमम् ।
विषोपविषशस्त्राद्यैर्हतो वाऽतिविरक्तया ॥
[2]प्राप्नुवन्त्या(?वत्या) महाघोरं यशःसौख्य-धनापहम् ।
वैधव्याद्यतिदुःखौघं तन्नाशाय सुखाप्तये ॥
[3]बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम् ।
सौवर्णीं निर्मितां शक्त्या तुभ्यं संप्रददे द्विज ॥

¶ दानमिदं निर्वृत्तविवाहायाः प्रतिमाया इति प्रकाशादौ स्पष्टम् । तथा च तन्मतेऽस्य प्रतिमाप्रतिपत्तिरूपता प्रतीयते । प्रतिमया सह विवाहे एतत्प्रकरणगतमार्कण्डेयपुराणादिवचनानि प्रमाणानि । कौस्तुभादौ तु प्रतिमादानस्यास्य पुरुषार्थत्वं सुव्यक्तम् । साधीयश्चेदम्, अन्यथाऽत्र विधीयमानानां कालविशेषविधान– ब्राह्मणामन्त्रण– फलसंयोगादीनामनुपपत्तेः । का तर्हि प्रामाणिकप्रतिमाविवाहे प्रतिमाप्रतिपत्तिः? इति चेत्, सर्वत्र शान्तिकपौष्टिकादौ प्रमाणान्तरसिद्धमाचार्यसंप्रदानकं दानमेवेति प्रतीमः । न तु तस्यैतद्वचनविषयता ।

(१) गभा. ९८ प्रथमार्धं नास्ति; संप्र. ८६९; सिन्धु. १०८३ गभावत्; संकौ. २०९ गभावत्, कर्मविपाके; प्रका. ३६४; संग. १८९ विष्णोर्मू (विष्णुमू); संव. १४०; संर. ५२७ गभावत् संगवच्च, कर्मविपाके.

(२) गभा. ९८; संप्र. ८६९; सिन्धु. १०८३; विपा. ७३७; संकौ. २०९ पुनः (कृताम्) निर्मितां रुचिरां (रुचिरां निर्मितां) कर्मविपाके; प्रका. ३६४ (=) संकौवत्; संग. १८९; संव. १४०–१४१; संर. ५२७ वर्णेन (वर्णां तु) शेषं संकौवत्, कर्मविपाके.

(३) गभा. ९८ मेत (मेन); संप्र. ८६९; सिन्धु. १०८३; विपा. ७३८ (सर्वलक्षणसंपूर्णां पीतवासोद्वयान्विताम् । सदक्षिणां च तां दद्याद्ब्राह्मणायाथ मन्त्रतः ॥); संकौ. २०९ कर्मविपाके; प्रका. ३६४; संग. १८९–१९० मालिनीम् (शालिनीम्); संव. १४१; संर. ५२७ कर्मविपाके.

(१) गभा. ९८ घ्नन्त्या (सक्त्वा); संप्र. ८६९ प्राचि ज (पूर्वज); सिन्धु. १०८३; विपा. ७३८; संकौ. २०९ कर्मविपाके; प्रका. ३६४ (=); संग. १९० संप्रवत्; संव. १४१ संप्रवत्; संर. ५२७ कर्मविपाके : ५२८ (=).

(२) गभा. ९८ प्राप्नुवन्त्या (प्राप्यमाणं) घं तन्नाशाय सुखाप्तये (धनाशाय सुखलब्धये); संप्र. ८६९ गभावत्; सिन्धु. १०८३ घं तन्नाशाय सुखाप्तये (धनाशाय शुभलब्धये) शेषं गभावत्; विपा. ७३८ घं तन्नाशाय सुखाप्तये (घघाताय सुखलब्धये); संकौ. २०९ कर्मविपाके; प्रका. ३६४ (=); संग. १९० गभावत्; संव. १४१ गभावत्; संर. ५२७ घं तन्नाशाय सुखाप्तये (धनाशाय सुखलब्धये) कर्मविपाके : ५२८ (=) घं तन्नाशाय सुखाप्तये (धनाशाय सुखलब्धये).

(३) गभा. ९८–९९ लब्ध्यै (लब्धौ); संप्र. ८६९; सिन्धु. १०८३; विपा. ७३८ निर्मितां (अर्चितां); संकौ. २०९ कर्मविपाके; प्रका. ३६४ (=) वर्णीं नि (वर्णनि) शेषं गभावत्; संग. १९० वर्णी नि (वर्णनि); संव. १४१; संर. ५२७ सौवर्णीं नि (सुवर्णनि) कर्मविपाके : ५२८ (=) सौवर्णीं नि (सुवर्णनि).

¹अनघाऽद्याहमस्मीति त्रिवारं प्रजपेत्ततः ।
एवमस्त्विति तस्योक्तिं गृहीत्वा स्वगृहं विशेत् ॥

²ततो वैवाहिकं कुर्याद्विधिं दाता मृगीदृशः ॥

(१) अथैवमेव सौवर्ण्या विष्णुप्रतिमया सह विवाहं विधाय प्रतिमां ब्राह्मणाय दद्यात् । दानप्रकारस्तत्रैव— शुभे मास इति । संप्र. ८६९

(२) सुवर्णशब्दोऽत्र जातिवाची । परिमाणं तु पलतदर्धार्धान्यतररूपं दानपरिभाषोक्तं ग्राह्यम् । अथ प्रयोगः— स्नानाचमने कृत्वा कन्या देशकालौ संकीर्त्य 'वैधव्यहरं महाविष्णुप्रतिमादानं करिष्ये' इति संकल्प्य गणेशपूजनस्वस्तिवाचने कृत्वा आचार्यवरणं कृत्वा यथाशक्ति तं संपूज्य तद्धस्तेनाग्न्युत्तारणपूर्वकं षोडशोपचारैः पूजनं च कारयेत् । वस्त्रार्पणसमये पीते वाससी दापनीये पुष्पार्पणं( १ र्पणसमये ) कुमुदोत्पलमालां च । पूजान्ते देवं कन्या प्रणम्य मन्त्रं पठित्वा ब्राह्मणाय दद्यात् । ततः सुवर्णपरिमितं यथाशक्ति वा हेम दक्षिणां दत्वा 'अनघाऽद्याहमस्मि' इति त्रिर्वदेत् । 'एवमस्तु' इति ब्राह्मणोऽपि त्रिः । ततो यथाशक्ति ब्राह्मणान् भोजयित्वा विवाहयोग्या भवेदिति । * संकौ. २०९

(३) पूर्वं घटादिभिः सह विवाहमेकान्ते विधाय पश्चाद्वादित्रघोषपुरःसरं पित्रादिः कन्यामायुष्मते वराय दद्यात् । $ संग. १९०

## व्रतखण्डे

सावित्र्यादिव्रतफलम्

¹सावित्र्यादिव्रतादीनि भक्त्या कुर्वन्ति याः स्त्रियः ।
सौभाग्यं च सुहृत्त्वं च भवेत्तासां सुसंततिः ॥

## विधानखण्डे

कुम्भादिना विवाहेऽपि कन्यायाः पुनर्भूत्वदोषाभावः, कुम्भादिविवाहे ऐतिहासिकमुदाहरणम्

¹स्वर्णाम्बुपिप्पलानां च प्रतिमा विष्णुरूपिणी ।
तया सह विवाहे तु पुनर्भूत्वं न जायते ॥

(१) तत्र पुनर्भूदोषाभाव उक्तो विधानखण्डे— स्वर्णेत्यादि । † गभा. ९८

(२) अत्र च पुनर्भूत्वदोषो न भवति । तथा च विधानखण्डे— स्वर्णेति । अत्र अम्बुशब्देन जलपूर्णो घटो लक्ष्यते । § संप्र. ८७०

²लक्ष्मीरूपा सदा कन्या हरिरूपं सदा जलम् ।
हरेर्दत्तं च यद्दानं दातुः पापहरं सदा ॥

---

* संर. संकौवत् ।

(१) गभा. ९९ ततः (इति) तस्योक्तिं (तस्योक्तं); संप्र. ८६९ प्रजपेत्ततः (प्रवदेदिति) तस्योक्तिं (विप्राशीः); सिन्धु. १०८४ ततः (इति) तस्योक्तिं (तस्याऽऽशीः); विपा. ७३८; संकौ. २०९ कर्मविपाके; प्रका. ३६४ (=); संग. १९० गृहं (गृहे) शेषं संप्रवत्; संव. १४१ संप्रवत्, उत्तरार्धं त्रुटितम्; संर. ५२७ कर्मविपाके.

(२) गभा. ९९; संप्र. ८६९ कुर्यात् (ततो) दाता (कुर्यात्); सिन्धु. १०८४; विपा. ७३८; संग. १९० कुर्यात् (दाता) दाता (कुर्यात्); संव. १४१ संप्रवत्.

$ शेषं संप्रवत् । सर्वं संगवत् ।

† सिन्धु., संव. गभावत् ।

§ संग., संदी. संप्रवत् ।

(१) संप्र. ८६७; ज्योनि. १६०, ३५४ तादीनि (तानीह) च सुहृत्त्वं (सुभगत्वं); संग. १८७ ज्योनिवत्, प्रभासखण्डे; संव. १३९.

(२) गभा. ९८; संप्र. ८७० तया (तयोः) तु (च); सिन्धु. १०८१; संग. १९० पूर्वार्धे (स्वर्णाम्बुपिप्पलाभां च प्रतिमां विष्णुरूपिणीम् ।) तु (च); संव. १४१; संदी. १८० (भागः २).

(३) संप्र. ८७०; संग. १९०; संव. १४१ पू.

[1]लक्ष्मीनारायणप्रीत्यै या दत्ता कन्यका बुधैः ।
तारयेत्सकलं दातुः कुलं पूर्वापरं सदा ॥
[2]चन्द्रवह्न्यम्बुगन्धर्वशिवसोमस्मरा इमे ।
पतयः कन्यकानां च बाल्यात् सन्ति सदैव ते ॥
[3]तदुद्वाहविधिर्यत्नात् कृतो नो जनयेदघम् ।
यथाऽतिभुक्तं कमलं देवानां पूजनाय वै ।
अर्हं भवति सर्वत्र तथा कन्या नृणां भवेत् ॥

( १ ) कमलं जलम् । अतिभुक्तं स्नानपानादिना ।
संप्र. ८७०

( २ ) अतो दैवतभोग्यानां कन्यानां पुरुषविवाहे न दोषः । ¶ संग. १९०

[4]मन्थन्या भास्करो यत्नात् कृतवान् दुहितुर्विधिम् ।
रेणुकोऽपि स्वकन्यायास्तरूद्वाहं चकार सः ॥

अत एव मनुष्योऽप्युद्वहेत् । संप्र. ८७०

## ज्ञानभास्करे

अश्वत्थव्रतस्य एकान्तकर्तव्यता कालः प्रयोगः फलं च

[5]बलवद्विधवायोगे बाल्ये सति मृगीदृशाम् ।
पिता रहसि कुर्वीत तद्व्रतं शास्त्रसंमतम् ॥
[6]सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते ।
अवैधव्यकरे योगे लग्ने ग्रहबलान्विते ।
व्रतारम्भं प्रकुर्वीत बालवैधव्यनाशकम् ॥

[1]सुस्नातां चित्रवस्त्राढ्यां कन्यां पितृगृहाद्बहिः ।
नीत्वाऽश्वत्थं शमीस्थाने यद्वा बदरिकाश्रमे ॥
आलवालं प्रकुर्वीत विपुलं मृदुकर्षितम् ।
कुमार्याचार्यनिर्दिष्टं कृतसंकल्पमादरात् ॥
[2]करकाम्बुप्रपूर्णेन सिञ्चनं प्रतिवासरम् ।
चैत्रे चाऽऽश्विनमासे च तृतीयासितपक्षतः ॥
[3]यावत्कृष्णतृतीयायां मासमेकं यथाविधि ।
ब्राह्मणानां तथा स्त्रीणां पूजनं च समाचरेत् ॥
[4]तदाशिषाऽऽप्नुयात्कन्या सौभाग्यं च सुखान्वितम् ।
प्रतिमां पार्वतीशानीं वैणवे भाजनेऽर्चयेत् ॥
[5]चन्दनाक्षतदूर्वाद्यैर्बिल्वपत्रैर्यथाविधि ।
उपचारैर्यथा भक्त्या नैवेद्यैः प्रतिवासरम् ॥
[6]एवं व्रतप्रभावेण बालवैधव्यनिष्कृतिः ।
जायते कन्यकानां च ततः पाणिग्रहक्रिया ॥

## मुहूर्तचिन्तामणिः

सावित्रीव्रत-पैप्पलव्रत-विष्णुमूर्तिपिप्पलघटान्यतमविवाहानामेकान्तकर्तव्यता, पुनर्भूत्वदोषाभावः

[7]जन्मोत्थं च विलोक्य बालविधवायोगं विधाप्य व्रतं
सावित्र्या उत पैप्पलं हि सुतया दद्यादिमां वा रहः ।

¶ संग. संववत् ।

( १ ) संप्र. ८७० या दत्ता ( यावता ) ; संग. १९०.

( २ ) संप्र. ८७० ; संग. १९० ; संव. १४१.

( ३ ) संप्र. ८७० ; संग. १९० यथाऽतिभुक्तं कमलं ( यथानिर्भुक्तमानानां ) ; संव. १४१ भुक्तं ( भुक्त ).

( ४ ) संप्र. ८७० ; संग. १९०-१९१ स्वकन्यायास्त ( स्वयं कन्यात ) ; संव. १४१.

( ५ ) संप्र. ८६७ ; संग. १८७ ; संव. १३९.

( ६ ) संप्र. ८६७ द्वितीयार्धं नास्ति ; संग. १८७ संप्रवत् ; संव. १३९.

( १ ) संप्र. ८६७ ; संग. १८७-१८८ ; संव. १३९.

( २ ) संप्र. ८६७ ; संग. १८८ प्रपूर्णेन ( प्रकीर्णेन ) ; संव. १३९.

( ३ ) संप्र. ८६७ ; संग. १८८ यायां ( याया ) तथा ( यथा ) नं च ( नं तु ) ; संव. १३९ तथा ( यथा ).

( ४ ) संप्र. ८६७ ; संग. १८८ वैणवे ( वैष्णवे ) ; संव. १३९-१४० च सु ( सह ).

( ५ ) संप्र. ८६७ ; संग. १८८ यथा भक्त्या ( यथाशक्त्या ) ; संव. १४०.

( ६ ) संप्र. ८६७ ; संग. १८८ ; संव. १४०.

( ७ ) मुचि. ६।७ ; संव. १३९.

सल्लग्नेऽच्युतमूर्तिपिप्पलघटैः कृत्वा
विवाहं स्फुटं
दद्यात्तां चिरजीविनेऽत्र न भवेद्दोषः
पुनर्भूभवः ॥

यथा प्रश्नलग्नाद्विधवायोगो विचारितस्तथा जन्मोत्थं जन्मकालीनं च बालविधवायोगं विलोक्य जातकशास्त्रात् जन्मकालीनलग्नवशतो वैधव्ययोगं विचार्य वक्ष्यमाणव्रतं कारयेदित्यन्वयः । अथ अपरिहार्ये वैधव्ययोगे प्रतीकार-माह— विधाप्येति । रह इति वक्ष्यमाणमिहापकृष्टव्यम् । पित्रादिः सुतया कन्यया रहः एकान्ते हि निश्चयेन सावित्र्या व्रतं विधाप्य कारयित्वा उत अथवा पैप्पलं पिप्पलसंबन्धि व्रतम् एकान्ते विधाप्य पश्चादिमां कन्यां सुलग्ने चिरजीविने वराय दद्यात् ।

अथान्यदपि अपरिहार्यबालवैधव्ययोगापहारकं प्रकार-त्रयमाह— वा रह इत्यादि । वा अथवा रहः एकान्ते अच्युतमूर्तिः विष्णुप्रतिमा, पिप्पलघटौ प्रसिद्धौ, एषां मध्ये अन्यतरेण( ? तमेन ) मनोमीष्टेन साकं सल्लग्ने वक्ष्यमाणदूषणरहिते सौभाग्यगुणान्विते च विवाहलग्ने विवाहं कारयित्वा पश्चात्तां कन्यां स्फुटं लोकप्रसिद्धं यथा भवति तथा चिरजीविने आयुष्मते वराय दद्यात् पित्रादि-रधिकारी । ननु ' पुनर्भूर्दिधिषूरूढा द्विः ' इत्यमरोक्तेर्द्विः परिणीतायाः कन्यायाः पुनर्भूत्वेन महादोषः संभवती-त्यपेक्षायामाह—अत्र न भवेदिति । अत्रैवं विधेयम्— कुम्भादिविवाहानन्तरं कन्यायाः पुनरायुष्मद्वरेण सह विवाहविषये पुनर्भूभवः पुनर्भूसंभूतो दोषो नास्ति ।

पीटी.

# कन्याया द्वादशवर्षातिक्रमणे प्रायश्चित्तम्

## काठकगृह्यसूत्रम्

हविष्यकल्पः

**[1]अथातो हविष्यकल्पं व्याख्यास्यामः ॥**

( १ ) हविष्यकल्प इति पारिभाषिकी कर्मविशेषस्य संज्ञा । देव.

( २ ) द्वादशवर्षे यावद्यद्यनूढा कन्याऽत ऊर्ध्वं रजस्वलेति दोषनिवारणार्थं हविष्यकल्पः । ब्राह्म.

( ३ ) अथशब्दोऽत्र नैमित्तिक(त्व)प्रदर्शनार्थः । ब्रह्मचर्यान्तं निमित्तम् । दशवार्षिकं ब्रह्मचर्यं कुमारीणां द्वादशवार्षिकं वा । अत ऊर्ध्वं पुरुषं प्रतीच्छया स्वप्ने वा रेतःसेकः संभाव्यते । अत ऊर्ध्वमेतत्कर्मावश्यं कर्तव्यम् । अतो हविष्यकल्पनाम (कर्म) व्याख्यास्यामः । आवि.

**दशवार्षिकं ब्रह्मचर्यं कुमारीणां द्वादशवार्षिकं वा ॥**

वर्षदशकादूर्ध्वं कुमारी न स्थापयितव्या पित्रा, अगत्या वा द्वादश वर्षाणि नातिक्रमणीयानि । देव.

**ब्रह्मचर्यान्ते गन्धर्वे देवकुले वा द्वावग्नी प्रज्वाल्य द्वौ पशू उपाकरोत्यर्यम्णे दक्षिणं प्राजापत्यमुत्तरम् ॥**

( १ ) ब्रह्मचर्यावसाने विवाहात्पूर्वं गन्धर्वे निर्निमित्तजलस्राविणि देशे, देवतायतने वा लौकिकौ द्वावग्नी प्रज्वाल्य, द्वौ पशू छागौ कन्यासंस्कारार्थमुपाकुर्यात् पशुकल्पवत्, एकमर्यम्णे दक्षिणभागवर्तिन्यग्नौ, द्वितीयं प्रजापतये उत्तरदिग्भागवर्तिन्यग्नौ । इतिकर्तव्यतां समन्त्रव्याख्यानां पशुकल्प एव व्याख्यास्यामः । देव.

( २ ) अत्र द्विपशुपक्षे द्वावेवर्त्विजौ वरुणप्रघासवत् । एकपशुपक्षे एक एवाग्निः, एक एवर्त्विक् । विशेषवचनाभावादजपशू एव द्वौ । 'ऋतस्य त्वा' इत्यत्र 'अर्यम्णे जुष्टं प्रजापतये जुष्टम्' इति । पश्वलाभे न प्रयोगः । ब्राह्म.

( ३ ) एतद्वयसोऽर्वाङ् न कर्तव्यम् । ब्रह्मचर्यान्तसंभावनमात्रेणैव कर्तव्यम् । गन्धर्वे गन्धर्वोदकसंनिधाने प्रतिमादेवकुले वा । कथं कर्तव्यम् ? अग्नी द्वौ प्रज्वाल्य वरुणप्रघासवत् द्वौ पशू उपाकरोति पशुकल्पवत् । अर्यम्णे दक्षिणं प्रजापतय उत्तरम् । आवि.

**असंभवे त्वेकपशुः ॥**

( १ ) प्रचुरार्थाद्यभावे एक एव द्विदैवतः पशुरुपाकर्तव्यः । अवदानानि च हृदयादिभ्यो मेदोन्तेभ्यो द्वादशभ्यो द्विर्द्विर्ग्रहीतव्यानि । 'अर्यमप्रजापतिभ्यां स्वाहा' इति चोहः । एक एव च योगः( ? यागः ), संहतयोरेकदेशत्वधर्मसमवायात् । अत एव च केचित् हृदयादिभ्यो द्विगुणानि अवदानानि नेच्छन्ति । देव.

( २ ) यद्येकः 'ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चाम्यर्यमप्रजापतिभ्यां जुष्टम्' इत्यजं दक्षिणेऽर्धशिरसि बध्नाति । 'अर्यमप्रजापतिभ्याम्' इति मीषाहोमः । 'अर्यमप्रजापतिभ्यां जुष्टमवकृन्तामि' इति वपाकर्तनम् । 'अर्यमप्रजापतिभ्यां स्वाहा' इति नामधेयहोमः । ब्राह्म.

( ३ ) पदार्थानुसमयेन क्वचित् काण्डानुसमयेन सहार्थस्यानुग्रहाय असंभवे त्वेकपशुः यागो द्विदैवतः । अर्यमप्रजापतिभ्याम् । आवि.

**तण्डुलैर्वा कुर्यात् ॥**

( १ ) धनदौर्गत्ये सति अहिंसानियमे वा तण्डुलैर्वा कुर्यात् । तण्डुलग्रहणं पिष्टकार्थम् । देव.

( २ ) पश्वलाभे तण्डुलपिष्टेन वा पश्वाकृतिं कुर्यात् । ब्राह्म.

( ३ ) तण्डुलशब्दः प्रकृतिद्रव्यसमर्पकः । तेन तण्डुलपिष्टेन कर्तव्यः ? अन्यथा वृत्तिसंग्रहपङ्क्तयो नोपपद्यन्ते, अत्यन्तविकारत्वात् । आवि.

**यथास्थानं पशुर्यथास्थानमवदानानि तथा हविः ॥**

---

( १ ) काग्‍ृ. १९।१–७.

अग्निं सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं स्कन्दं रुद्रं वात्सीपुत्रं भगं भगनक्षत्राणि कालीं षष्ठीं भद्रकालीं पूषणं त्वष्टारं महिषिकां च गन्धाहुतिभिर्यजेत ॥

( १ ) यत्रैव स्थाने आज्यभागाभ्यां पूर्वो मुख्यपशुः, तत्रैव पिष्टकपशुः, अवदानान्यपि हृदयादिभ्यस्तद्वत् । तेषां च श्रपणहोमौ ( सर्वदा ? ) अन्याऽपीतिकर्तव्यता रशनाबन्धयूपनियोजनोपपायनविशसनादिलुप्तार्थवर्जम् । हविः पशुपुरोडाशस्थाने स्थालीपाकः । तदपि यथास्थानं पशुपुरोडाशक्रमे । वपाहोमस्थाने त्वाज्यहोमः । देव.

( २ ) तस्य वपामन्यानि चावदानानि हृदयादीनि यथास्थानं कल्पयेत् । ब्राह्म.

( ३) पिष्टपशोर्यथास्थानं पशुः यथास्थानमवदानानीति वदति । तेनोपाकरणशाखानियोजनोदङ्नयनावदानादि पिष्टपशोरपि कुर्यात् । अवदानानि वपादीनि तेभ्य एवाङ्गेभ्योऽवदाय श्रपयित्वा जुहुयात् । स्विष्टकृतं च त्र्यङ्गात् । एकपशौ ' अर्यमप्रजापतिभ्यां स्वाहा ' इति होमः । बहून्यक्षराण्यतिरिच्यन्ते यत्र ( ऋक्सामान्यक्षराणि ? ) तत्र ऋक्षूहः । एतदर्थमाह– ' पूयति वा एतदृचोऽक्षरं यदेनदूहति तस्मादृचं नोहेत् ' । दर्शितश्च सूत्रकारेण तुल्याक्षर ऊहः– ' उन्मेष तिष्ठोदुस्र तिष्ठ ' इति विकारः । तथा हविः । किमत्र विधीयते ? यावत्पशुतन्त्रे प्राक्स्विष्टकृतो यथाचरितमन्नं साधयित्वेत्यपि । एतत्किमर्थं विधीयते ? अत्रोच्यते । इहान्यत्पशुपुरोडाशस्थानीयं हविर्विधीयते । आवि.

( १ ) सुगन्धचन्दनघनसारादिद्रव्ययुतेनाऽऽज्येनाऽऽहुतयो गन्धाहुतयः, ताभिरग्न्यादिकाः सप्तदश देवता यजेत । वात्सीपुत्र इति देवतानाम, यतः शब्दैकसमधिगम्या देवता । विभक्तिविपरिणामेन चतुर्थ्यन्तैः स्वाहाकारयुक्तैः शब्दैरुद्दिश्याग्न्यादिदेवता यष्टव्याः ' अग्नये स्वाहा ' इत्यादिकैः । देव.

( २ ) वनस्पतियागादनन्तरम् ' अग्नये स्वाहा, ...महिषिकायै स्वाहा' इति सप्तदश स्रुवेण कर्पूरकुङ्कुमगन्धाहुतीर्हुत्वा ऋतुतिथियागादि तुल्यम् । अतिक्रान्तद्वादशवर्षाणां कन्यानामिदं प्रायश्चित्तम्, नान्यासाम् । ब्राह्म.

( ३ ) ततोऽग्न्यादीन् गन्धद्रव्ययुक्ताभिश्चन्दनयुक्ताभिराहुतिभिर्यजेत । अग्न्यादीन् महिषिकान्तान् सप्तदशाऽऽवापस्थाने यजेत । ' काल्यै स्वाहा, षष्ठ्यै स्वाहा ' इति होमः । उपहारो भवत्येव । आवि.

# विवाहात्प्राक् कन्यारजोदर्शने प्रायश्चित्तम्

## आश्वलायनः

विवाहप्राचीनर्तुसंख्यगोदानेन एकगोदानेन ऋतुसंख्य-ब्राह्मणभोजनेन वा दातुः कन्यादानयोग्यता, शक्त्यपेक्षो विकल्पः, दिनत्रयोपवासगव्य-पयःपानादृष्टरजस्ककन्यासंप्रदानकरत्न-भूषणदानैः कन्याया विवाहयोग्यता, कूष्माण्डहोमेन वरस्य विवाह-योग्यता

[1]कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मवान् ।
तया च कारयित्वा तामुद्वहेदानृशंस्यधीः ॥

[2]पिता त्वृतून् स्वपुत्र्यास्तु गणयेदादितः सुधीः ।
दानावधि गृहे यत्नात् पालयेच्च रजोवतीम् ॥

[3]दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि ।
दातव्यैकाऽपि निःस्वेन दाने तस्या यथाविधि ॥

[4]दद्याद्वा ब्राह्मणेष्वन्नमतिनिःस्वः सदक्षिणम् ।
तस्या गतर्तुसंख्येषु वराय प्रतिपादयेत् ॥

[1]उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ।
अदृष्टरजसे दद्यात् कन्यायै रत्नभूषणम् ॥

[2]तामुद्वहन् वरश्चापि कूष्माण्डैर्जुहुयात् त्रिशः ।
कन्यामृतुमतीमाज्यैः पञ्चशोद्वाह्य वा द्विजः (?) ॥

(१) दाने तस्या इति । तस्याः कन्याया दाने कर्तव्ये यथाविधि सुवर्णशृङ्गादिगोदानविधिनेत्यर्थः । वरायेति । उक्तप्रकाराणामन्यतमेन दाता कन्यादाने योग्यो भवतीत्यर्थः । उपोष्येतिश्लोकेन दृष्टरजस्ककन्याया उपवासत्रयान्ते गव्यपयःपानपूर्वकमदृष्टरजसे कुमार्यै सरत्नभूषणदानेन विवाहयोग्यतोच्यते । तामुद्वहन्निति वरस्य कूष्माण्ड-होमेन तदुद्वाहयोग्यतेति बोद्धव्यम् । संकौ. २०१

(२) निष्कृतिमात्मनः कृत्वा कन्यां चर्तुमतीं शुद्धां कृत्वा वराय प्रतिपादयेदित्यन्वयः । स्वपुत्र्याः स्व-कन्यायाः । तस्याः कन्याया दाने कर्तव्ये यथाविधि गो-दानविधिना शक्तेन तदृतुसंख्या गावो दातव्याः । अशक्तेन त्ववश्यमेकाऽपि गौर्गोदानविधिना देयेत्यर्थः । उपोष्येति श्लोकेन दृष्टरजस्ककन्याया उपवासत्रयान्ते गव्यपयःपान-पूर्वकं गोदानं विधीयते । अदृष्टरजसे कुमार्यै सरत्न-

---

(१) आश्वस्मृ. ३।१३ पृ. ६; प्रपा. ३४३ तया (तथा); सिन्धु. १११६ त्मवान् । तया (त्मनः । शुचिं); विपा. ७५७ त्मवान् (त्मनः) शौनकः; संर. ४९९ त्मवान् (त्मनः) पू., शौनकः.

(२) आश्वस्मृ. ३।१४ पृ. ६; प्रपा. ३४३ त्वृतून् (ऋतून्); सिन्धु. १११६ प्रपावत्; विपा. ७५८ त्वृतून् स्वपुत्र्यास्तु (ऋतूनतीतांस्तु) पालयेच्च (तां रक्षेत) शौनकः; संकौ. २०१ पुत्र्यास्तु (पुत्र्याश्च) शेषं प्रपावत्; संर. ४९९ प्रपावत्, शौनकः.

(३) आश्वस्मृ. ३।१५ पृ. ६; प्रपा. ३४३; सिन्धु. १११६; विपा. ७५८ शौनकः; संकौ. २०१ निःस्वेन (यत्नेन); संर. ४९९ निःस्वेन (यत्नेन) शौनकः.

(४) आश्वस्मृ. ३।१६ पृ. ६; प्रपा. ३४३ णेष्वन्न (णेभ्योऽन्न) तृतीयपादे (तदतीतर्तुसंख्येभ्यो); सिन्धु. १११६ स्या गत (स्यातीत); विपा. ७५८ सिन्धुवत्, शौनकः; संकौ. २०१ निःस्वः (शिभ्यः) पादयेत् (दापयेत्) शेषं सिन्धुवत्; संर. ४९९ सिन्धुवत्, शौनकः.

(१) आश्वस्मृ. ३।१७ पृ. ६; प्रपा. ३४३; सिन्धु. १११६; विपा. ७५८ ष्य त्रिदिनं (ष्यान्त्यदिने) शौनकः; संकौ. २०९; संर. ४९९ शौनकः.

(२) आश्वस्मृ. ३।१८ पृ. ६; प्रपा. ३४३ वरश्चापि (वरात्माऽपि) त्रिशः (द्विजः) पू.; सिन्धु. १११६ त्रिशः (द्विजः) पू.; विपा. ७५८ कूष्मा (कुष्मा) त्रिशः (हविः) पू., शौनकः; संकौ. २०१ सिन्धुवत् पू.; संर ४९९ त्रिशः (घृतम्) पू., शौनकः.

## स्मृत्यन्तरम्

पादकृच्छ्रेण कन्याया विवाहयोग्यता

**[1]कन्यका तु विवाहात् प्राग्रजसा चेत् परिप्लुता ।**
**पादकृच्छ्रेण शुद्धा स्यात् पाणिग्रहणकर्मणि ॥**

भूषणदानेन विवाहयोग्यतोच्यते । तामुद्वहन्नित्यनेन वरस्य कूश्माण्डहोमेन तदुद्वाहयोग्यता प्रतिपाद्यते । कन्यया गोदानोत्तरं पादकृच्छ्रमपि कर्तव्यम् , ' कन्यका तु विवाहात् प्राग्रजसा चेत् परिप्लुता । पादकृच्छ्रेण शुद्धा स्यात् पाणिग्रहणकर्मणि ॥ ' इति हेमाद्रौ स्मृत्यन्तरोक्तेः ।

संर. ४९९–५००

(१) संर. ५००.

## ग्रहसूचितमृतभार्यत्वपरिहारोपायः

### महार्णवे

ऐहिकभार्यामरणफलकप्राग्भवीयपरिवेदनदोष-
परिहारार्थं प्रायश्चितम्

¶[1]ज्येष्ठभ्रातर्यनूढे तु योऽनुजोद्वहति स्वयम् ।
स भवेन्मृतपत्नीक उष्णज्वरसमुद्भवात् ॥
[2]प्राजापत्यत्रयं कुर्यादैन्दवं त्रयमेव च ।
तामग्निमिति चाऽऽज्येन चरुणाऽष्टोत्तरायुतम् ।
जुहुयाद्भोजयेद्विप्रानेवं पापात् प्रमुच्यते ॥

¶ भार्यामरणकारणमिदं परिवेदनं प्राग्भवीयम् , तद्दोषपरिहारार्थं चेदं प्रायश्चित्तमिति कौस्तुभे भार्यामरणस्य ग्रहसूचितत्वोक्तेर्गम्यते । अत एवेमानि वचनानि परिवेत्त्रादिविचारप्रकरणात् प्रकरणान्तरं कृत्वाऽत्र संगृहीतानि । अग्रिमप्रकरणेऽप्येवमेव । 'परिवेत्त्रादिविचारः' इतिप्रकरणोक्तानि प्रायश्चित्तानि तु, क्वचित् प्रायश्चित्तोत्तरं पूर्वभार्ययैव सह पुनर्विवाहविधानात्, क्वचित् संनिकृष्टमैहिकं परिवेदनं विहाय विप्रकृष्टस्य प्राग्भवीयस्य तस्य निमित्तताङ्गीकारे मानाभावाच्च परिवेदनवत्येव जनुष्यनुष्ठेयानीति मन्तव्यम् । तथा च परिवेदनवति पूर्वजन्मनि तान्यननुष्ठितवत एवेह जन्मनि ग्रहैर्भार्यामरणं सूच्यत इति तेनैवात्रोक्तं प्रायश्चित्तमनुष्ठेयमिति निष्कर्षो लभ्यते ।

(१) संकौ. २०९ ; प्रका. ३६४ ; संव. १४८.

(२) संकौ. २०९ चाऽऽज्येन (वाऽऽज्येन) विप्रान् (विद्वान्) ; संव. १४८.

अथ वरस्य जन्मकालीनग्रहसूचितमृतभार्यत्वपरिहारोपायो महार्णवे— ज्येष्ठेति । असकृन्मृतभार्यत्वसूचने प्राजापत्यत्रयचान्द्रायणत्रययोरावृत्तिः । 'तामग्निम्' इति 'जातवेदसे' इत्यनुवाको लक्ष्यते । अस्यानुवाकस्य याज्ञिकी देवता, उपनिषद ऋषयः, दुर्गाग्निविष्णवो यथायोग्यं देवताः, त्रिष्टुप् छन्दः । अष्टोत्तरायुतहोमस्यार्धं चरुणाऽर्धमाज्येन । प्रथमं चरोः पश्चादाज्यस्येति क्रमो न विवक्षितः । प्रत्यृचं च होमः । अग्निस्थापनादि स्वगृह्योक्तमार्गेणेति महार्णवः । प्रायश्चित्तविधिना प्राजापत्यचान्द्रायणानि कृत्वा मृतभार्यत्वपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं चर्वाज्यायुतहोमं करिष्ये इति संकल्प्याग्निस्थापनाद्यन्वाधानान्तं कुर्यात् । चक्षुषी आज्येनेत्यन्ते दुर्गाग्निविष्णूनष्टोत्तरायुतसंख्याभिश्चर्वाज्याहुतिभिः, 'शेषेण स्विष्टकृतम्' इत्यादि प्रतिदैवतं तूष्णीं चतुःकृत्वो निर्वापः, प्रोक्षणं च । त्यागकालेऽष्टोत्तरायुतसंख्याहुतिपर्याप्तं चर्वाज्यद्रव्यम्, यथामन्त्रलिङ्गम् 'दुर्गायै, अग्नये, विष्णवे च न मम' इति त्यागः । स्विष्टकृदादिहोमशेषं समाप्य दश ब्राह्मणान् भोजयेत् इति अयुतहोमप्रयोगः । यद्वा कस्य चिद्ब्राह्मणस्य विवाहं कुर्यादित्यपि महार्णवः ।

* संकौ २०९–२१०

* संव. संकौवत् ।

# ¶प्रतिकूलशान्तिः

## वृद्धवसिष्ठः

शान्तिविधिः, श्र्यादिदेवतापूजनम्, होमः

[1]प्रतिकूले तु संप्राप्ते विवाहं नैव कारयेत्।
अन्ते दोषविनाशाय कुर्याच्छान्तिमिमां शुभाम्॥

¶ अस्मिन्प्रकरणे संगृहीतासु प्रतिकूलशान्तिषु वृद्धवसिष्ठोक्ता वरपितृकर्तृका शौनकोक्ता च कन्यापितृकर्तृकेति प्रकाशकारेण व्यवस्थापितम्। तत्रेदं विचारणीयम्— शौनकोक्तशान्तेः कन्यापितृकर्तृकत्वे न किंचित्प्रमाणमुपन्यस्तम्, न वा किंचिल्लिङ्गमुपलभ्यते। एवं व्यासगर्गवचनैरनिर्दिष्टकर्तृकवचनैश्च विहितासु शान्तिष्वपि न किंचित् कर्तृविनिगमकं दृश्यते। तत्र व्यासोक्ता सर्वविलक्षणा। इतरास्वनल्पं सालक्षण्यम्, अल्पं वैलक्षण्यम्। तत्र गर्गवृद्धवसिष्ठोक्तयोः पूजामन्त्रेभ्यो होममन्त्रस्य भेदस्तुल्यः। शौनकेन होममन्त्रो नोक्त इति तस्य गर्गाद्युक्तहोममन्त्रकल्पने विरोधाभावः। गर्गवचनानिर्दिष्टकर्तृकवचनोक्तयोर्व्याहृतिहोमः समानः। गर्गोक्तायाम् 'मृत्युर्नश्यतु ...' इति मन्त्रहोमोत्तरं व्याहृतिहोमः, अनिर्दिष्टकर्तृकवचनोक्तायामपि 'ततः' इतिशब्दस्वारस्यात् पुनर्होमशब्दप्रयोगाच्च व्याहृतिहोमात्पूर्वं कश्चिद्धोमः प्रतीयते, तत्र गर्गोक्तमन्त्रकल्पने न किंचिद्बाधकम्। वृद्धवसिष्ठोक्तायामपि 'भूः स्वाहा' इत्यंशस्य स्वाहाशब्दस्वारस्यात् गर्गवचने मन्त्रस्य मृत्युपदादित्वस्य सिद्धत्वाच्च न मन्त्रैकदेशत्वम्, अपि तु व्याहृतिहोमग्रन्थः स्वरूपतः क्रमतश्च लेखकादिप्रमादात् भ्रष्ट इति कल्पनं नाशक्यम्। श्र्यादिदेवतास्तन्मन्त्राश्च प्रायः सर्वत्र समानाः। कौस्तुभादिभिः कर्तृभेदेन व्यवस्था नोक्ता। व्यासोक्तशान्तेः प्रकाशेनापि व्यवस्था नोक्ता। समाननिमित्तके अष्टमखादौ कर्तृभेदप्रयुक्तः कर्मभेदो न दृष्टचरः। तदेतत्सर्वमालोच्य, वृद्धवसिष्ठशौनकादिभिर्व्यासभिन्नैरेकैव शान्तिरुक्ता, सा च गुणोपसंहारेण यथानिमित्तं कन्यावरपित्रोरन्यतरेणोभाभ्यां वाऽनुष्ठेयेति मतिरुपजायते। न च 'स्नुषायै सुखं वर्धताम्' इत्यस्ति कर्तृविनिगमकमिति वाच्यम्, तावता वृद्धवसिष्ठोक्तशान्तेर्वरपितृकर्तृकत्वसिद्धावपि शौनकाद्युक्तशान्तेः कन्यापितृमात्रकर्तृकत्वस्यासिद्धेः, गर्गवचने तत्सदृशमन्त्रे 'दम्पत्योः' इतिशब्दप्रयोगात्, केवलस्नुषाया दुःखकल्पनसुखाशंसनयोरनुपपत्तेश्च वरपक्षे प्रतिकूलसत्त्वे स्नुषाशब्दस्य पुत्रोपलक्षकत्वस्य, कन्यापक्षे प्रतिकूलसत्त्वे जामातृकन्योभयोपस्थापकजामातृशब्दोहस्य तादृशकन्याशब्दोहस्य वा कल्पनोपपत्तेः। एवमेव स्कान्दोक्तशौनकोक्तयोर्बृहस्पतिशान्त्योः किंचिद्वैलक्षण्येऽपि कर्मभेदाभाव उपपादितः कौस्तुभकारेण। तदिदं सर्वं विचार्य सुधीभिर्निर्णयो विधेयः।

[1] 'श्रिये जातः' इति श्रियम्, 'इदं विष्णुः' इति विष्णुम्, 'गौरीर्मिमाय' इति गौरीम्, 'त्र्यम्बकम्' इति त्र्यम्बकम्, 'परं मृत्यो' इति यमम्॥
[2]पूजयित्वा तिलाज्यं च हुनेदष्टोत्तरं शतम्॥
'भूः स्वाहा मृत्युर्नश्यतां स्नुषायै सुखं वर्धतां स्वाहा।'॥
ततो होमं समाप्याथ गोद्वयं दक्षिणा भवेत्॥

## व्यासः

यमदेवताकहोमः, मृडगणेशदेवताकजपहोमौ, अभिषेकः, ब्राह्मणभोजनम्, शान्तिफलम्

[3]यमायेति च मन्त्रेण हवनं तिलसर्पिषा।
प्रमाणं चायुतं तत्र कृष्णा गौर्दक्षिणा भवेत्॥

(१) संप्र. ८१५ ले तु संप्राप्ते (लेऽपि संजाते); संकौ. २०२; संव. १४५–१४६; संर. ४८२ वसिष्ठः.

(१) संप्र. ८१५; संकौ. २०२; संव. १४६.

(२) संप्र. ८१५ (पूजयित्वा तिलाज्यमष्टोत्तरशतं जुहुयात्। भूस्स्वादिर्मृत्युर्नश्यतात् स्नुषायै सुखं वर्धताम्। ततो होमशेषं समाप्य गोद्वयं दक्षिणां दद्यात्।); संकौ. २०२; संव. १४६.

(३) संप्र. ८११; संग. ३४८ सर्पिषा (सर्पिषोः).

[1]जपहोमौ प्रकतव्यौ प्रीत्यै मृडगणेशयोः ।
अयुतं वा तदर्धं वा शक्त्या च हवनं भवेत् ॥
पूर्णाहुत्यभिषेकादि कृत्वा ब्राह्मणभोजनम् ।
एवं यः कुरुते लोके पुत्रपौत्रयुतो भवेत् ॥

## गर्गः

पुण्याहवाचनम्, श्र्यादिदेवतापूजनम्, होमः, शान्तिफलम्

[2]पुण्येऽह्नि विप्रकथिते कृत्वा पुण्याहवाचनम् ।
पूजयेत्प्रयतो देवान् यथाशक्ति हिरण्मयान् ॥
लक्ष्मीं हरिं शिवां शंभुं मृत्युं चैव विशेषतः ।
श्रीसूक्तेन श्रियं विष्णुमिदं विष्णुरिति त्र्यृचा ॥
गौरीर्मिमायेति शिवां त्र्यम्बकेन महेश्वरम् ।
परं मृत्योऽनुमन्त्रेण मृत्युं संपूजयेत्ततः ॥
वासश्च गन्धपुष्पाद्यानुपचारान् प्रकल्पयेत् ।
अथाऽऽज्यभागपर्यन्तमुपलेपादिपूर्वकम् ॥
दूर्वातिलाज्यचरुणा हुनेदष्टोत्तरं शतम् ।
मृत्युर्नश्यतु सौख्यायुर्दम्पत्योर्वर्धतामिति ॥
ततो व्याहृतिभिर्हुत्वा घृतेन च विचक्षणः ।
स्विष्टकृच्चापि होतव्या प्रायश्चित्ताहुतिस्तथा ॥
एवं समाप्य होमं तु दद्याद्विप्राय दक्षिणाम् ।
गां हिरण्यं च वासांसि दत्त्वा दोषात् प्रमुच्यते ॥
ऐश्वर्यकीर्तिजननं पुत्रपौत्रविवर्धनम् ।
सर्वमृत्युमतिक्रम्य परमायुरवाप्नुयात् ॥

## अनिर्दिष्टकर्तृकवचनानि

श्र्यादिदेवताप्रार्थनम्, जपः, होमः, अभिषेकः

[3]श्रियं विष्णुं तथा गौरीं मृत्युंजयमतः परम् ।
मृत्युं च प्रार्थयेद्भक्त्या तत्तन्मन्त्रेण वै क्रमात् ॥
सहस्रमयुतं वाऽपि ब्राह्मणैः कारयेज्जपम् ।
एतेषां प्रतिमा कार्या आदित्यादिग्रहांस्तथा ॥
शान्त्युक्तविधिना कुर्यात्कलशस्थापनादिकम् ।
समिद्भिश्चरुणा चैव होमः कार्यो यथाविधि ॥
ततो व्याहृतिभिर्होमं शतमष्टोत्तरं हुनेत् ।
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥
कलशस्थोदकेनैव सिञ्चेयुर्दम्पती च तौ ।
आचार्यं पूजयेद्भक्त्या वस्त्रालङ्कारभूषणैः ॥
ऋत्विग्भ्यो दक्षिणां दद्याद्ब्राह्मणान् भोजयेद्थ ।
प्रतिकूलविधिः प्रोक्त इत्येवं पूर्वसूरिभिः ॥

## शौनककारिकाः

पुण्याहवाचनादि, श्र्यादिदेवतापूजनम्, अभिषेकः, ब्राह्मणभोजनम्, शान्तिफलम्

[1]पुण्येऽह्नि विप्रकथिते कृत्वा पुण्याहवाचनम् ।
नान्दीश्राद्धे कृते पश्चाद्द्विजांश्चैव प्रपूजयेत् ॥
[2]सौवर्णान् कारयेद्देवान् यथावयवनिर्मितान् ।
पूजयेत्प्रयतो देवान् क्षीरादिस्नपनं ततः ॥
[3]श्रियं शक्तिं शिवं विष्णुं मृत्युं चैव विशेषतः ।
श्रीसूक्तेन श्रियं विष्णुमिदं विष्णुतृचेन च ॥
[4]गौरीर्मिमायेति शिवां त्र्यम्बकेति महेश्वरम् ।
परं मृत्योस्तु मन्त्रेण मृत्युं संपूजयेत्ततः ॥

शिवां शक्तिम् । संप्र. ८१४

[5]गन्धमाल्यादिवस्त्रैश्च उपचारान् समर्पयेत् ।
अथाऽऽज्यभागपर्यन्तं कृत्वा उल्लेखनात्ततः ॥

---

(१) संप्र. ८११–८१२ ; संग. ३४८ जपहोमौ (जयाहोमौ ?).
(२) विपा. ७९७–७९८.
(३) अप्र. ५०.

(१) संप्र. ८१४ ; संग. ३५० विप्रक (विप्रैः क).
(२) संप्र. ८१४ ; संग. ३५०.
(३) संप्र. ८१४ ; संग. ३५० विष्णुतृ (विष्णुर्ऋ).
(४) संप्र. ८१४ ; संग. ३५०.
(५) संप्र. ८१४ ; संग. ३५१ उल्लेखनात्ततः (चोल्लेखनादितः).

[1]दूर्वातिलाज्यचरुभिः समिद्भिश्च शताष्टकम् ।
प्रत्येकं जुहुयात्तत्र कृत्वा पूर्णाहुतिं ततः ॥
होमान्ते दक्षिणां दद्याद्गां सवत्सां पयस्विनीम् ।
दक्षिणां च यथाशक्त्या अभिषेकं च कारयेत् ॥
शतानां पञ्च संख्यातमेकैकस्य यथाविधि ।
ब्राह्मणान् भोजयेत्पश्चात् स्वयं भुञ्जीत बन्धुभिः ॥
एवं यः कुरुते शान्तिं वंशस्तस्य विवर्धते ॥

इयं च शान्तिः कन्यापित्रा कार्या । वरपित्रा तु 'उद्वहेद्यदि वाग्दत्तां प्रातिकूल्येऽपि यः पुमान् । स याति नरकं घोरं कुले वाऽप्यशुभं भवेत् ॥' इति संवर्तवचनेन परिणयने दोषश्रवणात्, 'अकृत्वा शान्तिकं यस्तु निषेधे सति दारुणे । यः करोति शुभं गर्वाद्विघ्नं तस्य पदे पदे ॥' इति शान्तिं विना निषेधात् 'स्नुषायै सुखं वर्धताम्' इति मन्त्रलिङ्गाच्च वृद्धवसिष्ठोक्ता शान्तिः कर्तव्या । ¶ संप्र. ८१५

प्रातिकूल्यदोषपरिहारार्था विनायकशान्तिः, तदकरणे प्रत्यवायश्च

[2]दीर्घरोगाभिभूतस्य दूरदेशे स्थितस्य च ।
उदासवर्तिनश्चैव प्रतिकूलं न विद्यते ॥

¶ संग. संप्रवत्, 'इति शान्तिं विना' इत्यादिर्ग्रन्थ उच्छिन्नः ।

(१) संप्र. ८१४–८१५ ; संग. ३५१.

(२) स्थलादिनिर्देशः 'प्रतिकूलनिर्णयः' इत्यस्मिन् प्रकरणे ( संका. पृ. ७५१ ) द्रष्टव्यः ।

[1]संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना ।
शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥
*[2]अकृत्वा शान्तिकं यस्तु निषिद्धे सति दारुणे ।
यः करोति शुभं कर्म विघ्नस्तस्य पदेपदे ॥

(१) तथा दीर्घरोगाद्यभिभूतादिमरणे प्रातिकूल्यं नास्ति । तदुक्तं शौनकेन– 'दीर्घरोगाभि... ॥' इति । एतादृशे विषये प्रतिकूले जाते याज्ञवल्क्योक्तां विनायकशान्तिं कृत्वा विवाहादि कुर्यात् । तदुक्तं तेनैव– 'संकटे समनुप्राप्ते... ॥' इति । संप्र. ८१५–८१६

(२) अस्मिन् वाक्ये सामान्यतः 'शुभं कर्म' इति श्रवणादुपनयनस्यापि विनायकशान्तिपूर्वकमेवानुष्ठानमिति केचित् । अन्ये तु शुभकर्मशब्दो विवाह एवोपसंह्रियते, तेन शान्तिपूर्वको विवाह एव भवति, उपनयनं तु नैव भवतीत्याहुः । उपनयनं तु शान्तिमन्तरेणापि भवतीति परे । संर. ४८२

*यद्यपि श्लोकोऽयं शौनकीयत्वेन न केनाप्युद्धृतः तथाऽपि बहुषु निबन्धेषु शौनकीयपूर्वश्लोकद्वयसंनियोगशिष्टत्वात् रत्नमालया शान्तिकशब्दस्य पूर्वश्लोकोक्तविनायकशान्तिपरत्वस्य सिद्धवद्गृहीतत्वाच्चास्माभिः शौनकीयेषु निवेशितः ।

(१) स्थलादिनिर्देशः गणपतिपूजनप्रकरणे मेधातिथिवचने ( संका. पृ. १६६७ ) द्रष्टव्यः ।

(२) धप्र. ५० विघ्नः ( विघ्नं ) ; संप्र. ८१५ निषिद्धे ( निषेधे ) कर्म विघ्नः ( गर्वाद्विघ्नं ) ; ज्योनि. १६१ निषिद्धे ( निषेधे ) यः करोति ( करोति हि ) कर्म ( गर्वात् ) ; संकौ. २०२ यः करोति ( प्रकरोति ) ; संग. ३५१ संप्रवत् ; संव. १४५ संकौवत् ; संर. ४८२ संकौवत्.

# बृहस्पतिशान्तिः

## स्कन्दपुराणम्

अधिकारिणः, पत्रपुष्पौषधयः, संभारस्थापनम्,
कुम्भस्थापनम्

[1]कन्याविवाहकाले तु शुद्धिर्यस्या न विद्यते।
ब्राह्मणस्योपनयने यस्य स्याद्दुःस्थितागतः॥

(१) दुःस्थितिं प्राप्तः। शाम. ४८

(२) दुःस्थितं दुःस्थानमष्टमादि आगतो गुरुरिति शेषः। * संकौ. १४३

[2]एभिः पूजा गुरोः कार्या विधिवद्भक्तिभावितैः।
मदन्तीकामपुष्पाणि पत्रपालाशसर्षपाः॥

(१) मन्दती यूथिका। कामः मदनवृक्षाख्यः। शाम. ४८

(२) मदन्ती यूथिका। कामः दमनः। संकौ. १४३

(३) मदन्ती पूतिका। कामः मदनः। कूभ. १०६८

[3]गुडूची चाप्यपामार्गं विडङ्गं शङ्खिनी वचा।
सहदेवी विष्णुक्रान्ता सर्वौषध्यः शतावरी॥

[1]तथैवाश्वत्थभङ्गाश्च पञ्चगव्यं जलं तथा।
नूतनं सोदकुम्भं च पीतवस्त्रसमन्वितम्॥

[2]पञ्चरत्नैः समायुक्तमीशान्यां स्थाप्य चानलात्।
या ओषधीरितिमन्त्रेण सर्वास्त्वस्मिन् विनिक्षिपेत्॥

अनलात् अनलदेशात्। ‡ संकौ. १४३

कुम्भे बृहस्पतिप्रतिमास्थापनम्, प्रतिमास्वरूपम्,
बृहस्पतिपूजा, होमः

[3]कुम्भस्योपरिभागे तु स्थापयित्वा बृहस्पतिम्।
सुवर्णपात्रे सौवर्णीं प्रतिमां तु युधिष्ठिर॥

[4]कारयेत्तु यथाशक्त्या वित्तशाठ्यविवर्जितः।
पीतवस्त्रयुगच्छन्नां पीतयज्ञोपवीतिनीम्॥

[5]पूजयेद्गन्धपुष्पाद्यैस्ततो होमं समाचरेत्।
समिधोऽश्वत्थवृक्षस्य होम्या अष्टोत्तरं शतम्॥

---

* संव. संकौवत्।

(१) शाम. ४८ ; संकौ. १४३ शुद्धिर्यस्या न (गुरोः शुद्धिर्न) ; संव. ११२ संकौवत् ; कूभ. १०६८ चतुर्थपादे (गुरोर्विधिरुदाहृतः).

(२) शाम. ४८ पत्र (पात्रं) ; संकौ. १४३ एभिः (तदा) पत्र (पत्रं) ; संव. ११२ एभिः (तदा) ; कूभ. १०६८.

(३) शाम. ४८ चाप्यपा (वा त्वपा) ; संकौ. १४३ ; संव. ११२ ; कूभ. १०६८ ची चाप्य (चीवान्य) मार्गं (मार्ग).

‡ संव. संकौवत्।

(१) शाम. ४८ भङ्गाश्च (भृङ्गा च) ; संकौ. १४३ भङ्गाश्च (मङ्गांश्च) ; संव. ११२ संकौवत् ; कूभ. १०६८.

(२) शाम. ४८ स्थाप्य चान (स्थापितेऽन) धीरिति (धीति) ; संकौ. १४३ ; संव. ११२ विनिक्षि (विनिःक्षि) ; कूभ. १०६८ स्थाप्य चान (स्थापितान) धीरिति (धीति) सर्वास्त्व (सर्वास्त).

(३) शाम. ४८ ; संकौ. १४३ ; संव. ११२ ; कूभ. १०६८ र्णीं प्रतिमां तु (र्ण्यां प्रतिमायां).

(४) शाम. ४८ ; संकौ. १४३–१४४ ; संव. ११२ च्छन्नां (च्छन्नं) वीतिनीम् (वीतिनम्) ; कूभ. १०६८ वीतिनीम् (वीतिकाम्).

(५) शाम. ४८ होम्या अ (होतव्या) ; संकौ. १४४ ; संव. ११२ ; कूभ. १०६८.

[1]तिलव्रीहियवं मिश्रं होतव्यं च यथाक्रमम् ।
बृहस्पतेति मन्त्रेण ऋषिच्छन्दःसमन्वितम् ॥

( यथाक्रममिति । ) अनेन ग्रहमखदृष्टस्य समिद्धोमानन्तरं भाविनश्चर्वाज्यहोमस्यानन्तरमागन्तुरयं होमः कार्य इति ज्ञाप्यते । † संकौ. १४४

पुनःपूजनम्, अर्घ्यदानम्, पूजाहोमसमर्पणम्, प्रार्थना, आचार्यपूजनम्, अभिषेकः, ब्राह्मण-भोजनम्, शान्तेर्निमित्तं फलं च

[2]ततो होमावसाने तु पूजयेच्च बृहस्पतिम् ।
पीतगन्धैस्तथा पुष्पैर्धूपैर्दीपैश्च भक्तितः ॥

[3]दध्योदनं च नैवेद्यं फलताम्बूलसंयुतम् ।
मन्त्रेणानेन कौन्तेय समभ्यर्च्य पुनः पुनः ॥

[4]नमस्तेऽङ्गिरसां नाथ वाक्पतेऽथ बृहस्पते ।
क्रूरग्रहैः पीडितानाममृताय नमो नमः ॥

[5]पूजयित्वा सुराचार्यं पश्चादर्घ्यं निवेदयेत् ।
गम्भीरदृढरूपाङ्ग देवेज्य सुमते प्रभो ।
नमस्ते वाक्पते शान्त गृहाणार्घ्यं बृहस्पते ॥

[6]अर्घ्यं दत्त्वा सुरेशाय जपं( ? पूजां ) होमं समर्पयेत् ।
भक्त्या यत्ते सुराचार्य होमपूजादि सत्कृतम् ।
तत् त्वं गृहाण शान्त्यर्थं बृहस्पते नमो नमः ॥

[1]मन्त्रेणानेन संकल्प्य पश्चात्संप्रार्थयेन्नृप ।
जीवो बृहस्पतिः सूरिराचार्यो गुरुरङ्गिराः ।
वाचस्पतिर्देवमन्त्री शुभं कुर्यात्सदा मम ॥

[2]एवं संप्रार्थयेद्देवमाचार्यं च प्रपूजयेत् ।
सर्वोपचारसंयुक्तां प्रतिमां तां युधिष्ठिर ॥
प्रणम्य च गवा युक्तामाचार्याय निवेदयेत् ॥

[3]अथाऽऽचार्यस्तु नियतो वेदवेदाङ्गपारगः ।
यजमानं सपत्नीकं शान्तचित्तं जितेन्द्रियम् ।
कुम्भोदकं गृहीत्वा तु मन्त्रैरेतैः प्रसिञ्चयेत् ॥

[4]इदमापोऽथ मन्त्रेण तामग्निमित्यृचा तथा ।
या ओषधीरश्वावतीः कूष्माण्डैश्चाभिषेचयेत् ।
पश्चात् संभोजयेद्विप्रान् यथाशक्त्या युधिष्ठिर ॥

[5]एवं कृत्वा गुरोः पूजां सर्वान् कामानवाप्नुयात् ।
संक्रान्तावपि कौन्तेय तथा स्वाभ्युदयेषु च ।
कुर्वन् बृहस्पतेः पूजामभीष्टफलमाप्नुयात् ॥

---

† संव. संकौवत् ।

( १ ) शाम. ४८ यवं मिश्रं ( यवोन्मिश्रं ) समन्वितम् ( समन्वितः । मन्त्रेणानेन जुहुयाद्धान्यपूर्वं च यत्नतः । ); संकौ. १४४.

( २ ) शाम. ४८ ; संकौ. १४४ ; संव. ११२ ; कुभ. १०६९ भक्तितः ( शक्तितः ).

( ३ ) शाम. ४८ ; संकौ. १४४ पू. ; संव. ११२ पू. ; कुभ. १०६९.

( ४ ) शाम. ४८ ; संकौ. १४४ नमस्तेऽङ्गि ( नम अङ्गि ) ; संव. ११२ संकौवत् ; कुभ. १०६८.

( ५ ) शाम. ४८ दर्घ्यं ( दर्घं ) ; संकौ. १४४ ; संव. ११२ ; कुभ. १०६९ बृहस्पते ( नमोऽस्तु ते ).

( ६ ) शाम. ४९ प्रथमार्धे ( अर्घ्यं दत्त्वा सुरेशस्य जपहोमं समापयेत् । ) सत्कृतम् ( संस्कृतम् ) ; संकौ. १४४ ; संव. ११२ ; कुभ. १०६९ जपं ( ? पूजां ) होमं समर्पयेत् ( जपहोमं समापयेत् ) सत्कृतम् ( यत्कृतम् ).

( १ ) शाम. ४९ ; संकौ. १४४ ; संव. ११२ ; कुभ. १०६९.

( २ ) शाम. ४९ ; संकौ. १४४ प्रथमार्धं नास्ति ; संव. ११२–११३ संकौवत् ; कुभ. १०६९–१०७० एवं सं ( एवं तं ) सर्वोपचार ( सर्वोपस्कर ).

( ३ ) शाम. ४९ ; संकौ. १४४ शान्तचित्तं जितेन्द्रियम् ( शान्तचित्तो जितेन्द्रियः ) त्वा तु ( त्वाऽथ ) ; संव. ११३ संकौवत् ; कुभ. १०७०.

( ४ ) शाम. ४९ मित्यृचा ( मृचा ) ; संकौ. १४४ शक्त्या ( शक्ति ) ; संव. ११३ ; कुभ. १०७७.

( ५ ) शाम. ४९ स्वाभ्यु ( स्वभ्यु ) भीष्टफ ( भीष्टं फ ) ; संकौ. १४४ प्रथमार्धं नास्ति ; कुभ. १०७० कृत्वा गुरोः पूजां ( पूजां गुरोः कृत्वा ) द्वितीयतृतीयार्धे न स्तः .

(१) संक्रान्तौ गुरुसंक्रान्तौ । शाम. ४९

(२) संक्रान्तौ गुरोः । इति संस्कारकौस्तुभे स्कान्दोक्ता गुरुपूजा । अत्र च शौनकोक्तौ स्कान्दोक्तौ च शाखाभेदे द्वादशकपालैकादशकपालादिभेदस्येव यूथिकासदसत्त्वादिप्रयुक्तेषद्वैलक्षण्यस्यापि कर्मभेदकत्वासंभवादुभयगतगुणोपसंहारेण कुम्भानुमन्त्रणादिसाधारणधर्माणां दीर्घचतुरस्रमण्डलाद्यसाधारणधर्माणां विनियोगवशेनापेक्षितानां ग्रहमखात् स्वीकारेण तावद्भिरेव ग्रहमेधीयवनैराकाङ्क्ष्यसंभवेनाविनियुक्ततत्रत्यधर्मानादरेण प्रयोगं वदामः । संकौ. १४४

## अनिर्दिष्टकर्तृकवचनम्

सपरिवारयजमानाभिषेकः

**[1]ततो होमावसाने तु अभिषेकं तु कारयेत् ।**
**दारपुत्रसमेतस्य यजमानस्य कृत्यवित् ॥**

एवमष्टोत्तरशतसंख्यां पूरयित्वा बृहस्पतेरुत्तरपूजनं कृत्वा स्विष्टकृदादिहोमशेषं समाप्य चाभिषेकं सकुटुम्बस्य यजमानस्य कुर्वीत, 'ततो होमा ... वित् ॥' इति वचनात् । विपा. ६५९

## शौनककारिकाः

शान्तिनिमित्तम्, कुम्भे प्रतिमास्थापनम्, कुम्भनिक्षेपणीयद्रव्याणि, आज्यभागान्ते गुरुपूजनम्, कुम्भानुमन्त्रणम्, होमः, अभिषेकः, प्रतिमादिदानम्, ब्राह्मणभोजनम्

**[2]कन्यकोद्वाहकाले तु आनुकूल्यं न विद्यते ।**
**ब्राह्मणस्योपनयने गुरोर्विधिरुदाहृतः ॥**

**[1]सुवर्णेन गुरुं कृत्वा पीतवस्त्रेण वेष्टयेत् ।**
**ईशान्यां धवलं कुम्भं धान्योपरि निधाय च ॥**
**[2]दमनं मधुपुष्पं च पलाशं चैव सर्षपान् ।**
**मांसी गुडूच्यपामार्गो विडङ्गी शङ्खिनी वचा ॥**

**[3]सहदेवी हरिक्रान्ता सर्वौषधिशतावरी ।**
**बला च सहदेवी च निशाद्वितयमेव च ॥**

(१) हरिक्रान्ता विष्णुक्रान्ता । प्रपा. ३१८

(२) कुम्भे निक्षिपेदिति शेषः । संकौ. १४३

---

(१) विपा. ६५९.

(२) शौका. १ पृ. ९५ आनुकूल्यं (सानुकूलं); प्रपा. ३१८; गभा. ९८ कन्यकोद्वाह (कन्योद्वाहस्य); विसौ. ४३ तु आ (चेदा); संप्र. ८०३ विसौवत्; सिन्धु. १०६८; विपा. ६५५ पूर्वार्धे (कन्योद्वहनकाले तु आनुकूल्यं गुरोर्न चेत् ।) नयने (नायेऽपि); ज्योनि. १५१; संकौ. १४३; संग. २०३ (=) पूर्वार्धे (कन्योद्वहनकाले तु सानुकूल्यं गुरोर्न चेत् ।); संव. १११.

(१) शौका. २ पृ. ९५ सुवर्णेन (सौवर्णेन) ईशान्यां (ऐशान्यां); प्रपा. ३१८ सुवर्णेन (सौवर्णेन) ईशान्यां (ऐशाने); गभा. ९८; विसौ. ४३ वेष्टयेत् । ईशान्यां (वेष्टितम् । ऐशान्ये); संप्र. ८०३ विसौवत्; सिन्धु. १०६८; विपा. ६५५ उत्तरार्धे (ऐशान्ये धान्यराशौ च कुम्भं तत्र निधापयेत् ।); ज्योनि. १५१ ईशान्यां (ऐशाने); संकौ. १४३; संग. २०३ (=) सुवर्णेन (सौवर्णेन) शेषं विपावत्; संव. १११.

(२) शौका. ३ पृ. ९५ द्वितीयपादे (तथा पालाशसर्षपान्) मार्गो (मार्ग); प्रपा. ३१८ विडङ्गी (विलङ्गी) शेषं शौकावत्; गभा. ९८ गुडूच्यपामार्गो (गुडुच्यपामार्ग); विसौ. ४३ द्वितीयपादे (तथा पाशं च सर्षपम्) मार्गो (मार्ग); संप्र. ८०३ द्वितीयपादे (तथा पीतं च सर्षपम्); सिन्धु. १०६९; विपा. ६५५ (मदनं मधुपुष्पाणि पत्रपालाशसर्षपान् । मांसी गुडूच्यपामार्गविडङ्गीशङ्खिनीवचाः ॥); ज्योनि. १५१ शौकावत्; संकौ. १४३ (दमनं मधुपुष्पाणि पत्रपालाशसर्षपान् । मांसी गुडूच्यपामार्गविडङ्गं शङ्खिनी वचा ॥); संव. १११ संकौवत्.

(३) शौका. ४ पृ. ९५ बला (बलां) देवी च (देवीं च); प्रपा. ३१८ पू.; गभा. ९८; विसौ. ४३ पू.; संप्र. ८०३ क्रान्ता (द्रान्ता) पू.; सिन्धु. १०६९; विपा. ६५५ हरि (विष्णु) वरी (वरीः) पू.; ज्योनि. १५१ षधिश (षधी श) पू.; संकौ. १४३ विपावत्, पू.; संव. १११ हरि (विष्णु) षधिश (षधी श) पू.

[1]कृत्वाऽऽज्यभागपर्यन्तं स्वशाखोक्तविधानतः।
ग्रहोक्तमण्डलेऽभ्यर्च्य पीतपुष्पाक्षतादिभिः ॥

[2]देवपूजोत्तरे काले ततः कुम्भानुमन्त्रणम्।
अश्वत्थसमिधश्चाऽऽज्यं पायसं सर्पिषा युतम् ॥

[3]यवव्रीहितिलाः साज्या मन्त्रेणैव बृहस्पतेः।
अष्टोत्तरशतं सर्वं होमशेषं समापयेत् ॥

(१) शौका. ५ पृ. ९५ उत्त.; प्रपा. ३१८; गभा. ९८ ग्रहोक्त (यथोक्त); विसौ. ४३; संप्र. ८०३ ग्रहोक्त (गृह्योक्त); सिन्धु. १०६९; विपा. ६५५ द्वितीयपादे (स्वस्वशाखोक्तमन्त्रतः); ज्योनि. १५१ संप्रवत्; संकौ. १४३; संग. २०३–२०४ (=) द्वितीयपादे (तत्स्वशाखोक्तमार्गतः); संव. ११२.

(२) शौका. ५–६ पृ. ९५ ततः (जल) षा युतम् (षाऽन्वितम्); प्रपा. ३१८ षा युतम् (रन्वितम्); गभा. ९८; विसौ. ४३ (देवपूज्यमभिध्याय ततः कुम्भानुमन्त्रणम्। अश्वत्थसमिधः साज्याः पायसं सर्पिरन्वितम् ॥); संप्र. ८०३ प्रपावत्; सिन्धु. १०७०; विपा. ६५५–६५६ कुम्भानु (कुम्भाभि) धश्चाऽऽज्यं (धाऽभ्यर्च्य) शेषं प्रपावत्; ज्योनि. १५१ प्रपावत्; संकौ. १४३; संग. २०४ (=) कुम्भानु (कुम्भाभि) धश्चाऽऽज्यं (धाऽभ्यज्य) शेषं प्रपावत्; संव. ११२.

(३) शौका. ६–७ पृ. ९५; प्रपा. ३१८ साज्याः (सार्धं); गभा. ९८; विसौ. ४३; संप्र. ८०३; सिन्धु. १०७०; विपा. ६५६ तिलाः साज्याः (तिलान् साज्यान्) होम (हुत्वा); ज्योनि. १५१; संकौ. १४३; संग. २०४ (=) साज्याः (साज्यं) होम (हुत्वा); संव. ११२ यवव्रीहितिलाः (तिलव्रीहियवाः).

[1]दारपुत्रसमेतस्य अभिषेकं समाचरेत्।
कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्टमन्त्रतः ॥

[2]प्रतिमां कुम्भवस्त्रं च आचार्याय प्रदापयेत्।
ब्राह्मणान् भोजयेत् पश्चाच्छुभदः स्यान्न संशयः ॥

(१) शौका. ७ पृ. ९५ समाचरेत् (तु कारयेत्) पू.; प्रपा. ३१८; गभा. ९८ दारपुत्र (पुत्रदार); विसौ. ४३ अभि (त्वभि) पू.; संप्र. ८०३ विसौवत्, पू.; सिन्धु. १०७० गभावत्; विपा. ६५६ अभि (त्वभि) मन्त्रतः (मन्त्रकैः); ज्योनि. १५१; संकौ. १४३ ज्येष्ठ (ज्येष्ठा) शेषं गभावत्; संग. २०४ (=) अभि (त्वभि); संव. ११२ गभावत्.

(२) शौका. ९ पृ. ९५ उत्त.; प्रपा. ३१८ वस्त्रं (वस्त्रे); गभा. ९८ प्रदापयेत् (निवेदयेत्) भदः स्यान्न (भं स्यान्नात्र); विसौ. ४३ कुम्भवस्त्रं (वस्त्रकुम्भं); संप्र. ८०३ विसौवत्; सिन्धु. १०७० प्रदापयेत् (निवेदयेत्); विपा. ६५६ कुम्भवस्त्रं (कुम्भं वस्त्रं) न संशयः (बृहस्पतिः); ज्योनि. १५१ आचा (ह्याचा); संकौ. १४३ सिन्धुवत्; संग. २०४ (=) न संशयः (बृहस्पतिः); संव. ११२ सिन्धुवत्.

# आदित्यशान्तिः

## शौनककारिकाः

शान्तिनिमित्तम्, पुण्याहवाचनम्, मण्डलकरणम्, प्रतिमास्वरूपम्, होमः, अभिषेकः, दक्षिणादानम्, आचार्याय प्रतिमादिदानम्, सर्वग्रहाणां व्यस्ताः शान्तयः

**[1]ब्राह्मणस्योपनयने नानुकूलो भवेद्रविः ।**
**तस्य शान्तिं प्रवक्ष्यामि मन्त्रौषधिविधानतः ॥**

(१) अत्रोपनयनग्रहणं विवाहस्याप्युपलक्षणम् ।

* प्रपा. ३१८

(२) अत्र उपनयनं विवाहस्याप्युपलक्षणम्, 'रविगुरुशुद्धौ व्रतोद्वाहौ' इति स्मरणात् । संप्र. ८०४

**[2]उपनयनात् पूर्वेद्युः कृत्वा पुण्याहवाचनम् ।**
**गृहस्येशानदिग्भागे गोमयेनोपलेपयेत् ॥**

**[3]कुङ्कुमेनोल्लिखेत्पद्ममष्टपत्रं सकेसरम् ।**
**सुवर्णेन रविं कृत्वा द्विभुजं पद्मधारिणम् ॥**

**[1]कृत्वाऽऽज्यभागपर्यन्तं तन्त्रं कृत्वा तु पूर्ववत् ।**
**स्वशाखोक्तविधानेन आचार्यो होममाचरेत् ॥**

पूर्ववत् ग्रहयज्ञवत् । † प्रपा. ३१८

**[2]आकृष्णेनेति मन्त्रेण समिदाज्यचरून् हुनेत् ।**
**अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥**

**[3]तिलव्रीहींश्च हुत्वाऽथ होमशेषं समापयेत् ।**
**दारपुत्रसमेतस्य ऋत्विग्भिरभिषेचयेत् ॥**

**[4]कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्ठमन्त्रकैः ।**
**ऋत्विग्भ्यो दक्षिणां दद्यादन्येभ्यश्च स्वशक्तितः ॥**

---

* ज्योनि. प्रपावत् ।

(१) शौका. १ पृ. ९६ प्रवक्ष्यामि (च वक्ष्यामि); प्रपा. ३१८ कूलो (लोमो); संप्र. ८०३—८०४; विपा. ६६२ कूलो (कूल्ये) चतुर्थपादे (उक्तां चैव महर्षिभिः); ज्योनि. १५१; संग. २०८ चतुर्थपादे (उक्तां चैव महर्षिभिः); कृभ. १०७०.

(२) शौका. २ पृ. ९६ गृहस्ये (गृहस्यै); लेपयेत् (लिप्य च); प्रपा. ३१८; संप्र. ८०४; विपा. ६६२; ज्योनि. १५१; संग. २०८; कृभ. १०७० उपनयनात् (उपायनात्तु).

(३) शौका. ३ पृ. ९६ कुङ्कुमे (सुवर्णे) सकेसरम् (तु केसरम्); प्रपा. ३१८; संप्र. ८०४ मेनोल्लि (मेन लि) पत्रं (पत्रं); विपा. ६६३ पूर्वार्धे (कुम्भमेकं तथा वस्त्रे पद्ममष्टदलं लिखेत् ।); ज्योनि. १५१; संग. २०८ धारिणम् (धारितम्) शेषं विपावत्; कृभ. १०७१.

‡ संप्र. प्रपावत् ।

(१) शौका. ४ पृ. ९६ कृत्वा (यथा); प्रपा. ३१८; संप्र. ८०४; विपा. ६६३; ज्योनि. १५१ तन्त्रं (तत्र) आचार्यो (ह्याचार्यो); संग. २०८ कृत्वा तु (कृत्वाऽनु); कृभ. १०७१.

(२) शौका. ५ पृ. ९६; प्रपा. ३१८; संप्र. ८०४ हुनेत् (हुवेत्); विपा. ६६३ चरून् (चरुं) शतमष्टोत्तरं (अष्टोत्तरशतं); ज्योनि. १५१ हुनेत् (जुहेत्); संग. २०८ चरून् (चरुं); कृभ. १०७१.

(३) शौका. ६ पृ. ९६ ऋत्विग्भिर (ऋत्विग्भ्यो अ); प्रपा. ३१८ चतुर्थपादे (अभिषेकं समाचरेत्); संप्र. ८०४ ऋत्विग्भिर (ऋत्विजो अ); विपा. ६६३ तिल (यव) उत्तरार्धे (दारपुत्रसमेतं तु ऋत्विक्तमभिषेचयेत् ॥); ज्योनि. १५१ चतुर्थपादे (ह्यभिषेकं समाचरेत्); संग. २०८ उत्तरार्धे (दारपुत्रसमेतं तु ऋत्विक्तमभिषिञ्चयेत् ॥); कृभ. १०७१.

(४) शौका. ७ पृ. ९६; प्रपा. ३१८; संप्र. ८०४ ऋत्विग्भ्यो (ऋत्विजे); विपा. ६६३; ज्योनि. १५१; संग. २०८—२०९; कृभ. १०७१ दद्यादन्येभ्यश्च (दत्वा आचार्याय च).

[४]प्रतिमां वस्त्रकुम्भं च आचार्याय प्रदापयेत् ।
एवं यः कुरुते शान्तिं तस्य दोषो विनश्यति ॥

[१]कन्याविवाहकालेऽपि दुष्टः पूज्यस्तथैव सः ।
एवं यो यो ग्रहो दुष्टस्तत्तच्छान्तिं समाचरेत् ॥

---

(४) शौका. ८ पू. ९६ प्रतिमां व (प्रतिमाव) प्रदापयेत् (निवेदयेत्) ; प्रपा. ३१८ उत्तरार्धे (एवं यः कुरुते तस्य सूर्यो दोषान्विनाशयेत् ॥) ; संप्र. ८०४ शान्तिं तस्य दोषो (सर्वः सूर्यदोषो) ; विपा. ६६३ वस्त्र (वस्त्रे) ; ज्योनि. १५१ च आ (च ह्या) उत्तरार्धे (एवं यः पूजयेत्सूर्यं सर्वदोषोऽस्य नश्यति ॥) ; संग. २०९ तस्य दोषो (सर्वदोषो) ; कृभ. १०७१ कुम्भं (युग्मं) शेषं संगवत्.

(१) विपा. ६६३.

# विवाहे मातृरजोदोषशान्तिः

## बृहद्यमः

स्नानम् , अभिषेकः , पूजा , होमः

[1]विवाहोत्सवयज्ञेषु कार्ये चैवमुपस्थिते ।
रजः पश्यति या नारी तस्य कालस्य का क्रिया ॥

विपुले च जले स्नात्वा शुक्लवासास्त्वलङ्कृता ।
आपोहिष्ठेत्यृगभिषिक्ताऽऽयं गौरिति वा ऋचः (? चा) ॥

पूजान्ते होमयेत्पश्चाद्घृताहुत्या शताष्टकम् ।
गायत्र्या व्याहृतिभिश्च ततः कर्म समारभेत् ॥

## शान्तिपटले

विवाहादौ मातृरजोदर्शने दुष्फलम् , मृत्युंजयजपः , शिवार्चनम् , होमः , अग्निजिह्वावर्णनम् , जिह्वास्तुतिः, अभिषेकः, दक्षिणादानम् , मञ्चकदानम् , वस्त्रपरिवर्तनम्, ब्राह्मणभोजनम् , शान्तिफलम्

*[2]विवाहे व्रतबन्धे च माता यस्य रजस्वला ।
मृत्युश्च जडता ज्ञेया क्रमान्मनुजसत्तमैः ॥
तत्र शान्तिं प्रवक्ष्यामि सर्वेषां हितकारिणीम् ।
यस्मिन् दिने समुत्पन्नं मातुर्दोषकरं रजः ॥
तस्माद्दिनात्समारभ्य कुर्यान्मृत्युंजयं जपम् ।
चतुर्थेऽहनि संप्राप्ते पञ्चमे वा समाहितः ॥
कुर्याच्छिवार्चनं विद्वान् पायसेन यथाविधि ।
मण्डकैः पूरकैश्चापि लड्डुकैः शर्करान्वितैः ॥
भक्तेन घृतयुक्तेन पक्वान्नैः पूजयेच्छिवम् ।
अधस्ताल्लिङ्गतः कार्या पूरकैर्मोदकैस्तथा ॥
भक्तस्य परिधिं कृत्वा पायसेनार्चयेच्छिवम् ।
दीपान् षोडशसंख्याकानाज्यप्रज्वलिताञ्छुभान् ॥
अर्पयेद्देवदेवाय ह्युपचारैः समन्वितान् । ¶
ततः संप्रार्थ्य देवेशं सतूर्यो गृहमाविशेत् ॥
तत्र स्थण्डिलमाधाय हवनं कारयेद्बुधः ।
अग्निमीळेतिमन्त्रेण जुहुयादयुतं सुधीः ॥
पायसेनैव साज्येन स्वगृह्योक्तविधानतः ।
वर्णयेत्सप्तजिह्वस्य जिह्वाः सप्त हविर्भुजः ॥
कराली लोहिता श्वेता महत्पूर्वा च लोहिता ।
पीता च पद्मरागा च सुवर्णाख्या तथैव च ॥
लोहिता पूर्वतो ज्ञेया महत्पूर्वा शुचेर्दिशि ।
सुवर्णा दक्षिणे ज्ञेया पद्मरागा च नैर्ऋते ॥
श्वेता तु वारुणे भागे पीता वायोर्दिशि स्मृता ।
ईशानदिशि विख्याता या जिह्वा जातवेदसः ॥
सुवर्णां मध्यभागस्थां केचिदूचुर्मनीषिणः ।
कराली नाम सा ज्ञेया तया रक्षांसि तोषयेत् ॥
लोहितायां पिशाचांश्च यजेद्विद्वान्क्रतौ क्रतौ ।
महालोहितया यक्षास्तृप्तिमायान्ति शाश्वतीम् ॥
सुवर्णया यमो देवः पन्नगाः पद्मरागया ।
श्वेतया ग्रहदेवाश्च पीतया चेटकादयः ॥

नमस्ते रसने देवि तपनस्य करालिके ।
हुते त्वयि समश्नन्ति राक्षसा बलदर्पिताः ॥
नमस्ते लोहिते जिह्वे ज्वलनस्य सुशोभने ।
पिशाचास्तृप्तिमायान्ति हुते त्वयि हविष्यके ॥
नमस्ते रसने देवि महालोहितसंज्ञिके ।
हुते त्वयि समश्नन्ति यक्षगन्धर्वकिन्नराः ॥

---

* विधानपारिजाते 'इति विधानमालायां रजोदोषशान्तिविधानम्' इत्यन्ते उक्तम् । अत्र मुद्रितविधानमालातः शुद्धाः पाठाः संगृहीताः ।

(१) बृयस्मृ. ३।५६–५९.

(२) विपा. १–४ (भागः २).

¶ अतः परं 'तत्र मन्त्राः पुरुषसूक्तोक्ताः' इति विधानमालायामुक्तम् ।

नमस्ते वीतिहोत्रस्य सुवर्णे रसने शुभे ।
त्वया तृप्तो यमो देवो ददाति विपुलं सुखम् ॥
पद्मरागे नमस्तुभ्यं देवपन्नगतर्पणम् ।
जायते शाश्वतं देवि हुते त्वयि हुताशने ॥
ग्रहाणां तर्पणं श्वेते कुरु जिह्वे हविर्भुजः ।
हुते हविषि विप्रैश्च ग्रहतृप्त्यर्थमादरात् ॥
चेटकः कामदेवश्च समस्ताः कुलदेवताः ।
प्रीतायां हवने जाते तृप्तिमायान्ति शाश्वतीम् ॥
इति जिह्वास्तुतिं कृत्वा समाप्य विधिवद्-धुतिम् ।
अभिषेकं ततः कुर्यादुदक्याः सूनुना सह ॥
ततस्तु दक्षिणां दद्यादाचार्याय मनीषिणे ।
अन्येभ्यो ब्राह्मणेभ्यश्च यथाशक्ति क्षमापयेत् ॥
कस्मैचिन्मञ्चकं दद्यात्सोपधानं सदक्षिणम् ।
प्रेतराजं समुद्दिश्य मन्त्रेणानेन सत्तम ॥

नमस्ते धर्मराजाय देवदेवाय ते नमः ।
मञ्चकस्यास्य दानेन प्रीतो भव मम प्रभो ॥
यस्मिन्वस्त्रे रजो दृष्टं तद्वासस्तु परित्यजेत् ।
अपरं वस्त्रमादाय ब्राह्मणान् भोजयेत्ततः ॥
एवं कृते विधानेऽस्मिन् विघ्ना नश्यन्ति तत्क्षणात् ।
नन्दन्ते सुखसंतानैः सह मात्रा निजे गृहे ।
अकृत्वैतद्विवाही यः स लभेद्दुःखमेव च ॥

## कपर्दिकारिकाः

श्रीप्रतिमामानम् , श्रीपूजनम् , होमः , अभिषेकः

[1]हैमीं माषमितां पद्मां श्रीसूक्तविधिनाऽर्चयेत् ॥
प्रत्यृचं पायसं हुत्वाऽभिषिच्य शुभमाचरेत् ॥

(१) अस्य स्थलादिनिर्देशः संस्कारकाण्डस्य प्रथमे भागे (पृ. ७६६) द्रष्टव्यः ।

# विवाहमध्ये कन्यारजोदर्शने प्रायश्चित्तम्

## बौधायनगृह्यसूत्रम्

कन्यानुमन्त्रणम्, द्वादशरात्रं पञ्चगव्यप्राशनम्

[1]अथ यदि कन्योपसाद्यमाना वोह्यमाना वा रजस्वला स्यात्तामनुमन्त्रयते– 'पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ । पुमानिन्द्रश्च सूर्यश्च पुमांसं च दधात्वियम् ॥' इति ॥

[2]अथ द्वादशरात्रमलङ्कृत्य प्राशयेत्पञ्चगव्यम् । अथ शुद्धां कृत्वा विवहेत् ॥

उपसाद्यमाना दात्रा दीयमाना । उह्यमाना वरेण पाणिग्रहणेन । वाशब्दद्वयमुभयोः प्राधान्यं द्योतयितुम् । संर. ५००

## बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

होमकालोपस्थितौ रजोदर्शने प्रोक्षणस्नापनहोमात्मकं प्रायश्चित्तम्, होमोत्तरं रजोदर्शने रजःकालोत्तरं शेषकर्मानुष्ठानम्

[3]अथ विवाह्यकन्यारजस्वलाप्रायश्चित्तादिविधिं व्याख्यास्यामः–

विवाहे वितते यज्ञे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥

[1]यजुःपवित्रैः सावित्र्या प्रोक्षयेत्पूतवारिभिः ।
अनेन चानुवाकेन पवमानः सुवादिना ॥

[2]स्नापयित्वाऽथ विद्वद्भिरन्यवस्त्राद्यलङ्कृताम् ।
पूर्णाहुत्यथ मिन्दाभ्यां महाव्याहृतिभिः सह ॥
हुत्वा तन्तुमतीं चैव व्याहृतीभिस्तथैव च ।
अनाज्ञातं च विद्वद्भिः शेषं कार्यं समाचरेत् ॥

[3]प्रधानहोमे निर्वृत्ते मलवद्वाससी भवेत् ।
त्रियहे पर्यवेतेऽथ शेषकार्यं समाचरेत् ॥

## वैखानसगृह्यसूत्रम्

होमकालरजोदर्शने स्नापन–पुण्याहवाचन–प्रोक्षण–होमात्मकं प्रायश्चित्तं कर्मोत्तरमाशौचं च

[4]विवाहे होमकाले कन्याया रजस्युत्पन्ने तां स्नापयित्वाऽन्यद्वस्त्रं परिधाप्य पुण्याहं कृत्वा प्रोक्षणैः प्रोक्ष्य मिन्दाहुत्याश्चाविन्तादीन् व्याहृतीश्च हुत्वा कर्म प्रवर्तेत । तत्क्रियापरिसमाप्ते सा वधूरशुचिर्भवति ॥

## वृद्धयाज्ञवल्क्यः

होमकालोपस्थितौ रजोदर्शने स्नापनार्चनहोमात्मकं प्रायश्चित्तम्

[5]विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्याया ऋतुरागच्छेत्कथं कुर्वन्ति याज्ञिकाः ॥

---

(१) बौगृ. ४।१।१० च दधात्वियम् (वर्धयेताम्); सिन्धु. १११८ वोह्यमाना (चोह्यमाना) मन्त्रयते (मन्त्रयेत्); कृभ. १११७ वोह्यमाना (उह्यमाना) मन्त्रयते (मन्त्रयीत); संर. ५०० च दधात्वियम् (वर्धयत्वियम्).

(२) सिन्धु. १११८; कृभ. १११७ अथ द्वादश (अथवा दश) एतत्सूत्रविषये 'इति क्वचित्पाठः' इत्युक्तम्; संर. ५०० अथ शुद्धां कृत्वा विवहेत् (ततः शुद्धा भवति).

(३) बौगृशे. ५।२।१; हिगृशे. ६।२६ त्तादिविधिं (त्तविधिं).

(१) बौगृशे. ५।२।२; हिगृशे. ६।२६ अनेन चा (हिरण्य चा ?).

(२) बौगृशे. ५।२।३, ४ हिगृशे. ६।२६ व्याहृतीभि (व्याहृतिभि).

(३) बौगृशे. ५।२।५; हिगृशे. ६।२६ निर्वृत्ते (त्रिर्वृत्ते) उत्तरार्धे (त्र्यहे च पर्यवेतेऽथ शेषं कार्यं समारभेत् ॥). (४) वैगृ. ६।१३.

(५) गृर. ८०; उत. १४६–१४७.

[3]स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
हुत्वाऽऽज्यं चैव लाजांश्च ततस्तन्त्रं प्रवर्तयेत् ॥

'मन्त्रानादेशे गायत्री, हविषोऽनादेश आज्यम्' इति कात्यायनसूत्रात् गायत्र्या होम इति पशुपतिः ।

उत. १४७

## पराशरः

होमकालोपस्थितौ रजोदर्शने स्नापनाग्न्यर्चनहोमाः,
होमोत्तरं रजोदर्शने रजःकालोत्तरं शेषकर्मानुष्ठानम्

[1]विवाहे वितते यज्ञे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्चयित्वा हुताशनम् ।
युञ्जानमाहुतिं हुत्वा ततः कर्म प्रयोजयेत् ॥
प्रधानहोमे निर्वृत्ते कुमारी यदि सार्तवा ।
त्रिरात्रेऽपगते पश्चाच्छेषं कार्यं समापयेत् ॥

## अत्रिः

होमकालोपस्थितौ रजोदर्शने स्नापनाग्न्यर्चनहोमाः,
होमोत्तरं रजोदर्शने रजःकालोत्तरं शेषकर्मानुष्ठानम्

[2]विवाहे वितते यज्ञे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्चयित्वा हुताशनम् ।
युञ्जानमाहुतिं हुत्वा ततः कर्म प्रयोजयेत् ॥
प्रधानहोमे निर्वृत्ते कुमारी यदि सार्तवा ।
त्रिरात्रेऽपगते पश्चाच्छेषं कार्यं समापयेत् ॥ *

* आनव्याख्यान स्मृत्यन्तरवचने द्रष्टव्यम् ।

(१) गृर. ८० उत्तरार्धे (हुत्वा द्रव्यं च लाजं च ततस्तन्त्रं प्रकीर्तयेत् ॥); उत. १४७.

(२) आन. १७५ अत्रिपराशरौ.

(३) मुक्ता. १३७; आन. १७५ अत्रिपराशरौ.

## स्मृत्यन्तरम्

होममध्ये रजोदर्शने चतुर्थेऽहनि होमः

[1]विवाहहोमे प्रक्रान्ते यदि कन्या रजस्वला ।
त्रिरात्रं दम्पती स्यातां पृथक्शय्यासनाशनौ ॥
[2]चतुर्थेऽहनि संस्नातौ तस्मिन्नग्नौ यथाविधि ।
विवाहहोमं कुर्यातामित्यादि स्मृतिसंग्रहे ॥

(१) जुहुयातामिति शेषः । * गभा. ९९

(२) एवं च होममध्ये ऋतुदर्शने तत्काल एव स्नापयित्वा होमसमाप्तिः, होमात् पूर्वे चेत् स्नानदिवसे विवाहहोमः कार्यः, होमसमाप्त्यनन्तरं चेत् त्रिरात्रापगमानन्तरं शेषहोम इति । आन. १७६

(३) जुहुयातामिति शेषः । होममन्त्रास्तु पूर्वोक्ताः । संग. ३५५

## स्मृत्यर्थसारः

होमकालोपस्थितौ रजोदर्शने स्नापनार्चनहोमाः,
होममध्ये रजोदर्शने चतुर्थेऽहनि होमः

[3]विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥

* प्र. गभावत् ।

(१) प्रपा. ३६२ (=) शनौ (शिनौ); मर. १९; गभा. ९९ (=); प्रर. ११६ (=); धप्र. ४८ शनौ (शने) प्रयोगपारिजाते; संप्र. ८३६–८३७ (=); मुक्ता. १३७ स्मृतिभास्करे; आन. १७५ स्मृतिभास्करे; संग. ३५४ (=) यदि कन्या (कन्या यदि) शनौ (बुभौ); कृभ. १११७ सनाशनौ (शनासनौ) भट्टोजी.

(२) प्रपा. ३६२ (=) पू.; मर. १९ संग्रहे (संग्रहः); गभा. ९९ (=) संस्नातौ (सुस्नातौ) पू.; प्रर. ११६ (=) पू.; धप्र. ४८ इत्यादि स्मृतिसंग्रहे (कन्यादानादिकं तथा) प्रयोगपारिजाते; संप्र. ८३७ (=) पू.; मुक्ता. १३७ स्मृतिभास्करे; आन. १७५ स्मृतिभास्करे; संग. ३५५ (=) पू.; कृभ. १११७ भट्टोजी.

(३) स्मृसार. १७; चम. ११२.

[1]स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि।
युञ्जानामाहुतिं हुत्वा ततः कर्म प्रवर्तते ॥

[2]यद्वा–
विवाहहोमे प्रक्रान्ते यदि कन्या रजस्वला।
त्रिरात्रं दम्पती स्यातां पृथक्शय्यासनाशिनौ ॥
[3]चतुर्थेऽहनि सुस्नातौ तस्मिन्नग्नौ यथाविधि।
विवाहहोमं कुर्यातामित्यादिस्मृतिसंग्रहः ॥

### प्रयोगपारिजाते

विवाहकर्ममध्ये रजोदर्शने चतुर्थेऽहनि शुद्धयुत्तरं होम-
श्रीपूजनात्मकं प्रायश्चित्तं पुनर्विवाहहोमश्च

[4]चतुर्थीमध्ये कन्या चेद्भवेद्यदि रजस्वला।
त्रिरात्रमशुचिस्त्वेव चतुर्थेऽहनि शुध्यति ॥
युञ्जानहोमं कुर्वीत प्रायश्चित्तं विधीयते।
श्रियं संपूजयेद्भक्त्या पुनर्होमो विधीयते ॥

### यज्ञपार्श्वकारिकाः

होमकालोपस्थितौ रजोदर्शने स्नापनार्चनहोमाः
प्रायश्चित्तम्

[5]विवाहे वितते तन्त्रे होमकाल उपस्थिते।
कन्यका ऋतुमागच्छेत् कथं कुर्वन्ति याज्ञिकाः ॥

[1]स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि।
युञ्जानामाहुतिं हुत्वा ततस्तन्त्रं प्रकल्पयेत् ॥

(१) 'युञ्जानः प्रथमं मनः' इति मन्त्रस्तैत्तिरीय-शाखायामभिहितः 'युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः। अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥' इति। † प्रपा. ३६२

(२) 'युञ्जानः प्रथमं मनः' इत्येकेनर्ङ्मन्त्रेण साध्या आहुतिः युञ्जानाहुतिः तां हुत्वेत्यर्थः। संर. ५००

### रेणुकारिकाः

होमकालोपस्थितौ रजोदर्शने स्नापनार्चनहोमाः प्रायश्चित्तम्

[2]विवाहे वितते तन्त्रे होमकाल उपस्थिते।
कन्यका ऋतुमागच्छेत् कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि।
युञ्जानामाहुतिं हुत्वा ततस्तन्त्रं प्रवर्तते ॥

---

(१) स्मृसार. १७; चम. ११२ युञ्जाना (युञ्जान).

(२) स्मृसार. १७; चम. ११२ सनाशिनौ (शनासनौ).

(३) स्मृसार. १७; चम. ११२ सुस्नातौ (संस्नातौ).

(४) धप्र. ४८.

(५) यका. २११ पृ. ८; स्मृच. ८८ तृतीयपादे (कन्याया ऋतुरागच्छेत्); मपा. १६१ स्मृचवत्; प्रपा. ३६२ तृतीयपादे (कन्यामृतुमतीं दृष्ट्वा); गभा. ९९ प्रपावत्; उत. १४७ स्मृचवत्; प्रर. ११६ उत्तरार्धे (कन्यामृतुमतीं दृष्ट्वा कथं कुर्वीत याज्ञिकः ॥); संप्र. ८३६ प्रपावत्; संम. ६५ स्मृचवत्; सिन्धु. १११६ प्रपावत्;

† प्रर., संप्र., संकौ. प्रपावत्।
संकौ. २०१ तन्त्रे (यज्ञे) शेषं प्रपावत्; संग. ३५४ प्रपावत्; संर. ५०० प्रपावत्.

(१) यका. २१२ पृ. ८–९; स्मृच. ८८ तु तां (ततः) प्रकल्प (प्रवर्त); मपा. १६१ उत्तरार्धे (युञ्जान आहुतिं दत्त्वा ततस्तन्त्रं प्रवर्तयेत् ॥); प्रपा. ३६२ उत्तरार्धे (युञ्जानमाहुतिं हुत्वा ततः कर्मणि योजयेत् ॥); गभा. ९९ चतुर्थपादे (ततः कर्मणि योजयेत्); उत. १४७ उत्तरार्धे (हुत्वा चाऽऽज्याहुतीस्तत्र ततस्तन्त्रं प्रवर्तयेत् ॥); प्रर. ११६ गभावत्; संप्र. ८३६ गभावत्; संम. ६५ प्रकल्प (प्रवर्त); सिन्धु. १११६ संमवत्; संकौ. २०१ संमवत्; संग. ३५४ नामाहुतिं (न आहुतिं) शेषं गभावत्; संर. ५०० संमवत्.

(२) रेका. २७५–२७७ पृ. ६७.

# $मोटनकम्

## मेरुतन्त्रम्

मोटनकस्य प्रयोगः, देवाविर्भावकारणत्वम्, देवावेश-चिह्नम्, कुमारीणां प्राधान्यम्, संख्याभेदेन फलभेदः

[1]अथ मोटनकं वक्ष्ये देवाविर्भावकारणम् ॥

यदि मोटनाचारश्चेत्सोऽपि कार्यः। तच्च मोटनमुक्तं मेरुतन्त्रे— 'अथ मोटनकं ... ईरितो विधिः ॥' इति। संर. २६५

पाकक्रिया प्रकर्तव्या चतुर्भक्ष्यसमन्विता।
भार्यया साधकेन्द्रस्य पातिव्रत्यादियुक्तया।
अप्रसूताः स्त्रियः पञ्च आहूय सकुमारिकाः ॥
अलङ्कृताः पवित्रास्ता एकपङ्क्त्योपवेशयेत्।
तत्राऽऽदौ विघ्नपस्थानमग्ने तु बटुकस्य च ॥

चकारात् कुलदेवतायाः। संर. २६५

ताः संपूज्य महापात्रे पवित्रे तत्र चार्पयेत्।
क्रमाद्द्विगुणमानेन मध्वाज्ये च सिता(? तां) दधि ॥
दुग्धं च निक्षिपेत्तत्र नैवेद्यं तत्र निक्षिपेत्।
कुमारिकाया हस्तेन मन्थयेयुः स्त्रियश्च तत् ॥
स्त्रीभिस्तस्मिन्मथ्यमाने देवावेशः प्रजायते।
देवावेशे जायमाने सुगन्धो वाति मारुतः ॥

सर्वं मनोगतं वक्ति देवताऽऽशु प्रसीदति।
सिध्यन्ति सर्वकार्याणि मोटनानां शतेन च ॥
नखैर्भवेद्विवाहस्तु पञ्चाशद्भिः सुतस्तथा।
अशीत्या गतराज्याप्तिर्विंशत्या लभते धनम् ॥

नखैः विंशैरि(? विंशत्ये)त्यर्थः। पञ्चाशद्भिः सुतलाभ इत्यर्थः। संर. २६६

¶अष्टोत्तरशतेनापि असाध्येन तु मेलयेत्।
कौमारिका चेष्टदेवं कौमार्या ईरितो विधिः ॥

अष्टोत्तरशतसंख्यैर्मोटनैरसाध्येन कार्येणापि मेलयेत्। असाध्यमपि कार्यं साधयेदित्यर्थः। (* अष्टोत्तरशतेन अष्टोत्तरशतसंख्यमोटनैः साधकेनाभीष्टदेवं मेलयेत्, साधकस्याभीष्टदेवो भवेदित्यर्थो वा। कौमारिका चाष्टोत्तरशतमोटनानि कुर्यात्। उत्तमपतिलाभार्थमिति शेषः। कौमारी योगेश्वरी, तत्संबन्ध्येवायं विधिरित्यर्थः। अथवा कौमार्याः, कुमार्येव कौमारी, कुमारीप्रधानोऽयमीरितो विधिरित्यर्थः। कुमारीं विना अयं विधिर्नैव भवतीति तात्पर्यार्थः।) कौमारिका चेष्टदेवमुद्दिश्योत्तमपतिलाभार्थमिमं विधिं कुर्यात्। अयं विधिः कौमार्या एवेरितः, कुमारिकां विना विधिर्न भवतीत्यर्थः। कौमारी योगेश्वरी, तन्माहात्म्ये तस्यास्तथैव वर्णितत्वात्। तदुद्देशेनायं विधिर्भवतीत्यप्यर्थः। एवमन्येष्वपि संस्कारेष्वाचारश्चेत्कार्यम्। संर. २६६

---

$ भाषायां 'बोढण' इति नाम्ना प्रसिद्धमिदं कर्म चित्तपावनब्राह्मणकुलेष्वेव कुलाचारत्वेनाऽऽचर्यते। यद्यप्यस्यात्र काम्यत्वं स्पष्टं प्रतीयते, तथाऽपि जननोपनयनविवाहादिनिमित्तोत्तरमाचर्यमाणस्यास्य शिष्टाचारप्रमाणकं नैमित्तिकत्वमप्यस्ति। संस्काररत्नमालायामप्येतत्सूचितम्।

(१) संर. २६५–२६६.

¶ कंसचिह्नान्तर्गतो ग्रन्थः केषुचित्पुस्तकेषु नास्तीत्यादर्शपुस्तके टिप्पण्यामुक्तम्।

# अर्कविवाहः

## बौधायनगृह्यशेषसूत्रं हिरण्यकेशिगृह्यशेषसूत्रं च

अर्कविवाहस्याधिकारिणः कालः देशः प्रयोगश्च, अर्कदाहः, स्नानेन सद्यः शुद्धिः, कदली-विवाहः, तत्र त्रिरात्रमाशौचम्, अर्क-कदली–विवाहफलम्

[1]अथातोऽर्कोद्वाहं व्याख्यास्यामः– मूकान्धबधिरादीनां जडानां च तृतीयविवाहिनां च ॥

[2]पूर्वपक्षे पुण्ये नक्षत्रे पूर्वाह्णे ब्रह्मसमूहे ग्रामात् प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य यत्रैको बालोऽर्को भवति तस्योत्तरत उपलिप्य स्वयं स्नात्वाऽर्कं च स्नापयित्वा पादौ प्रक्षाल्याऽऽचम्यालङ्कृत्य तन्त्रेण नान्दीमुखं कृत्वा स्वस्तिसूक्तं वाचयित्वा यत्किञ्चिद्धिरण्यं गृहीत्वा 'आ सत्येन' इति जपित्वा ब्राह्मणेभ्यो दत्त्वाऽलङ्कृत्यार्कं स्पृष्ट्वाऽऽदित्यमुपतिष्ठते– 'सूर्यो देवीम्' इति पञ्चभिः ॥

[3]अथ वस्त्रं माङ्गल्यसूत्रं चार्के बद्ध्वा 'पुण्याहं स्वस्त्यृद्धिम्' इति वाचयेत्। आदित्योऽत्र देवता ॥

[4]पूर्वोक्तविधिनाऽग्निमुपसमाधाय संपरिस्तीर्याऽऽज्यं संस्कृत्य स्रुक्स्रुवं संमृज्याऽऽदित्यं ध्यायन्नर्कं गृह्णाति– 'हस्तः प्रयच्छत्वमृतम्' इति ॥

[1]अथाग्निं प्रदक्षिणं करोति– 'परि त्वाऽग्ने पुरं वयम्' इति ॥

अथार्कमूलं स्पृष्ट्वाऽऽदित्यमीक्षते– 'अभीवृतं कृशनैर्विश्वरूपम्' इति ॥

अथ व्याहृतीर्हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा जुहोति– 'उद्वयं तमसस्परि, उदु त्यम्, चित्रम्' इति ॥

अपरं चतुर्गृहीतं गृहीत्वा मनस्वतीं जुहोति– 'मनो ज्योतिः' इति ॥

[2]अपरं चतुर्गृहीतं गृहीत्वा लाजमन्त्रेण द्विरावर्त्य जुहोति ॥

[3]अथ स्रुवेण व्याहृतीर्हुत्वा समाप्याऽऽदित्यं व्रतऋग्भ्यामुपतिष्ठते– 'अदाभ्यो भुवनानि प्रचाकशत्, त्रिरन्तरिक्षं सविता महित्वना' इति द्वाभ्याम् ॥

अथ गोक्षीरमर्कं स्पृष्ट्वा आयुष्यसूक्तमुक्त्वा प्राश्याऽऽचम्य पुनरादित्यमुपतिष्ठते– 'अचित्ती यच्चकृम' इति ॥

---

(१) बौगृशे. ५।५।१ ; हिगृशे. ३।२१ विवाहिनां (विवाहितानां).

(२) बौगृशे. ५।५।२ ; हिगृशे. ३।२१ तस्योत्तरतः + (गोमयेन) म्यालङ्कृत्य + (पुण्याहं वाचयित्वा).

(३) बौगृशे. ५।५।३ ; हिगृशे. ३।२१ ('स्वस्त्यृद्धम्' इति०) आदित्योऽत्र (अत्राऽऽदित्यो).

(४) बौगृशे. ५।५।४ ; हिगृशे. ३।२१ (पूर्वोक्त०) अर्कं (अर्कवृक्षं).

(१) बौगृशे. ५।५।५–८ कृशनै (शकुनै) ; हिगृशे. ३।२१.

(२) बौगृशे. ५।५।९ ; हिगृशे. ३।२१ लाजमन्त्रेण (लाजैः) रावर्त्य (रावृत्य) जुहोति + (इत्येके। न लाजहोम इत्यपरे।).

(३) बौगृशे. ५।५।१०–११ ; हिगृशे. ३।२१.

[1]अथार्काधिदैवतमुद्वास्यार्कमुत्पाट्य व्याहृतीभिरग्नौ दग्ध्वा स्नात्वा यत्किञ्चिद्दत्त्वा शुद्धो भवति सद्यः ॥
[2]एवं कदलीविवाहं कुर्यात् ॥
कदलीं छित्त्वा त्रिरात्रमशुचिर्भवति ॥
[3]अथाप्युदाहरन्ति–
अर्कोद्वाहो जडादीनामुच्यते तु यवीयसः ।
विवाहार्थं मुनिश्रेष्ठैस्तमुत्पाट्य दहेत्तदा ॥
व्याहृतीभिस्तदा दत्त्वा यथाशक्ति हिरण्यकम् ।
स्नात्वा सद्यः शुचिर्भूयादुद्वाहे च तृतीयके ॥
तृतीया स्त्री म्रियेच्छीघ्रं तस्मादेवं चरेद्बुधः ।
रम्भोद्वाहं तथा कुर्याच्छित्त्वा तत्रैव मानवः ।
त्रिरात्रं सूतकं भूयादिति बोधायनोऽब्रवीत् ॥

## व्यासः

प्रयोगः, आचार्यस्यार्ककन्यादातृत्वम्

[4]स्नात्वाऽलङ्कृतवासास्तु रक्तगन्धादिभूषितः ।
सुपुष्पफलशाखाढ्यमर्कगुल्मं समाश्रयेत् ॥

(१) बौगृशे. ५।५।१२ ; हिगृशे. ३।२१ (अथ०) यत्किञ्चित् + (हिरण्यं श्रोत्रियाय).

(२) बौगृशे. ५।५।१३, १४ ; हिगृशे. ३।२१.

(३) बौगृशे. ५।५।१५ ; हिगृशे. ३।२१ तमुत्पाट्य (समुत्पाट्य) बौधायनो (वैखानसो).

(४) प्रपा. ३८७ वासास्तु (वासस्तु) ; गभा. १०७ भूषितः (भूषितम्) सुपुष्प (सपुष्प) शाखाढ्य (शाखैक) ; प्रर. ११८ गभावत् ; संप्र. ८७७ गभावत् ; शाम. ५२ गभावत् ; विपा. ६२ (भागः २) लङ्कृत (लं पूत) सुपुष्प (सपुष्प) शाखाढ्य (शाखैक) गुल्मं (वृक्षं) ; संग. ३३४ मर्क (मेक) शेषं गभावत् ; संव. १४९ भूषितः (भूषितम्) शाखाढ्य (शाखैक) गुल्मं (युग्मं).

[1]सल्लक्षणेन संयुक्तमर्कं संस्थाप्य यत्नतः ।
अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत् पुरा ॥
[2]अर्कसंनिधिमागत्य तत्र स्वस्त्यादि वाचयेत् ।
नान्दीश्राद्धं हिरण्येन चाष्टवर्गान् प्रपूजयेत् ।
[3]मण्डपं नात्र कुर्वीत अविघ्नं पूजनं तथा ॥
[4]पूजयेन्मधुपर्केण वरं विप्रस्य हस्ततः ।
यज्ञोपवीतं वस्त्रं च हस्तकर्णादिभूषणम् ॥
[5]उष्णीषगन्धमाल्यादि वरायास्मै प्रदापयेत् ।
स्वशाखोक्तप्रकारेण मधुपर्कं समाचरेत् ॥

स्वशाखोक्तेन दातृशाखोक्तेन । संर. ५९४

(१) प्रपा. ३८७ सल्लक्षणेन सं (तत्तल्लक्षणसं) ; गभा. १०७ ; प्रर. ११८ सल्लक्ष (सुलक्ष) ; संप्र. ८७७ ; शाम. ५२ ; विपा. ६२ (भागः २) ; संग. ३३४ प्ररवत् ; संव. १४९ ; संर. ५९४ उत्त., ब्राह्मे.

(२) प्रपा. ३८७ तत्र (ततः) ; गभा. १०७ श्राद्धं (श्राद्धे) चाष्ट (अष्ट) ; प्रर. ११८ चाष्ट (अष्ट) ; संप्र. ८७७ गभावत् ; शाम. ५२ गभावत् ; विपा. ६२–६३ (भागः २) श्राद्धं (श्राद्धे) चाष्ट (अष्टौ) ; संग. ३३४ चाष्ट (अष्टौ) ; संव. १४९ गभावत् ; संर. ५९४ प्ररवत्, ब्राह्मे.

(३) संग. ३३४.

(४) प्रपा. ३८७ ; गभा. १०७ ; प्रर. ११८ वरं (नरं) ; संप्र. ८७७ ; शाम. ५२ पूजयेन्म (पूजयन्म) ; विपा. ६३ (भागः २) द्वितीयपादे (वरं दाता तु शक्तितः) वस्त्रं (वस्त्रे) ; संग. ३३४ वीतं वस्त्रं (वीतवस्त्रे) ; संव. १४९ ; संर. ५९४ द्वितीयपादे (वरं दाता तु शक्तितः) ब्राह्मे.

(५) प्रपा. ३८७ ; गभा. १०७ ; प्रर. ११८ ; संप्र. ८७७ उष्णीष (उष्णीषं) ; शाम. ५२ ; विपा. ६३ (भागः २) प्रकारेण (विधानेन) ; संग. ३३४ विपावत् ; संव. १४९ ; संर. ५९४ उत्तरार्धे (स्वशाखोक्तेन मार्गेण मधुपर्केण पूजयेत् ॥) उत्त., ब्राह्मे.

[1]अर्के प्रदक्षिणीकुर्वञ्जपेन्मन्त्रमिमं बुधः ।
मम प्रीतिकरा येयं मया स्पृष्टा पुरातनी ।
अर्कजा ब्रह्मणा सृष्टा साऽस्माकं प्रतिरक्षतु ॥

[2]पुनः प्रदक्षिणीकुर्यान्मन्त्रेणानेन मन्त्रवित् ।
नमस्ते मङ्गले देवि नमः सवितुरात्मजे ।
त्राहि मां कृपया देवि पत्नी त्वं म इहाऽऽगता ॥

[3]अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च ।
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः ।
तृतीयोद्वाहजं पापं मृत्युं चाऽऽशु विनाशय ॥

[4]आयुर्देहि यशो देहि प्रजां देहि पशूनपि ।
देहि मेऽर्क श्रियं पुष्टिं स्वस्थानेऽर्क स्थिरो भव ॥

(१) प्रपा. ३८७ करा (करी) मया स्पृष्टा (त्वया सृष्टा); गभा. १०७ (=) प्रदक्षिणीकुर्वन् (प्रदक्षिणं कुर्वन्) स्पृष्टा (सृष्टा) साऽस्माकं प्रति (अस्माकं परि); प्रर. ११८ प्रदक्षिणीकुर्वन् (प्रदक्षिणं कुर्वन्) स्पृष्टा (सृष्टा) साऽस्माकं (अस्माकं); संप्र. ८७८ प्रदक्षिणीकुर्वन् (प्रदक्षिणं कुर्वन्) बुधः (पुनः) साऽस्माकं (अस्माकं); शाम. ५२ स्पृष्टा (सृष्टा) साऽस्माकं (अस्माकं); सिन्धु. ११५५ (=) शामवत्, प्रथमार्धं नास्ति; विपा. ६४ (भागः२); संग. ३३५ साऽस्माकं प्रति (अस्माकं परि); संव. १५० प्रदक्षिणीकुर्वन् (प्रदक्षिणं कुर्वन्) साऽस्माकं (अस्माकं).

(२) प्रपा. ३८७ प्रदक्षिणी (प्रदक्षिणं); गभा. १०७ (=) प्रदक्षिणी (प्रदक्षिणां); प्रर. ११८; संप्र. ८७८; शाम. ५२; सिन्धु. ११५५ (=) प्रथमार्धं नास्ति; विपा. ६४ (भागः २); संग. ३३५; संव. १५०.

(३) गभा. १०७ (=); प्रर. ११८; संप्र. ८७८; शाम. ५२; सिन्धु. ११५५ (=); विपा. ६४ (भागः२); संग. ३३५ प्रथमार्धं नास्ति; संव. १५०.

(४) विपा. ६४ (भागः २).

[1]ततश्च कन्यावरणं त्रिपुरुषं कुलमुच्चरेत् ।
आदित्यः सविता चार्कः पुत्री पौत्री च नप्त्रिका ।
गोत्रं काश्यप इत्युक्तं लोके लौकिकमाचरेत् ॥

[2]मुहूर्तेऽर्के निरीक्षेत स्वस्तिसूक्तमुदीरयन् ।
आशीर्भिः सहितैः कुर्यादाचार्यप्रमुखैर्द्विजैः ॥

[3]अथाऽऽचार्यं समाहूय विधिना तन्मुखाच्च ताम् ।
प्रतिगृह्य ततो होमं गृह्योक्तविधिनाऽऽचरेत् ॥

विधिनेति । आचार्यस्तद्दानमन्त्रमुच्चार्य दद्यात्, तां प्रतिगृह्णीयादित्यर्थः । प्रपा. ३८७

(१) प्रपा. ३८७ पुरुषं (पूरुषं) काश्यप इ (काश्यपमि); गभा. १०७ (=) चार्कः (सूर्यः); प्रर. ११८ मुच्चरेत् (मुद्धरेत्); संप्र. ८७८ ता चार्कः (ताऽऽचार्यः) पौत्री च (पौष्यस्य) शेषं प्ररवत्; शाम. ५२ प्ररवत्; विपा. ६४ (भागः २) नप्त्रिका (नप्तिका) काश्यप इ (काश्यपमि); संग. ३३५ प्ररवत्; संव. १५० ता चार्कः (ताऽऽचार्यः).

(२) प्रपा. ३८७ मुहूर्तेऽर्के (सुमुहूर्ते); गभा. १०७ (=) मुहूर्ते (सुमुहूर्ते) सहितैः (सहितः); प्रर. ११८; संप्र. ८७८ मुहूर्तेऽर्के (मुहूर्तेर्कं) रयन् (रयेत्); शाम. ५२ प्रपावत्; विपा. ६४-६५ (भागः २) पूर्वार्धे (सुमुहूर्ते निरीक्ष्यार्कं स्वस्तिसूक्तमुदीरयेत्।); संग. ३३५ रयन् (रयेत्) प्रमुखै (सहितै); संव. १५० पूर्वार्धे (सुमुहूर्ते निरीक्षेत स्वस्तीत्युक्तमुदीरयेत्।).

(३) प्रपा. ३८७ तन्मुखाच्च (संमुखे च); गभा. १०७ (=); प्रर. ११८; संप्र. ८७८ नाऽऽचरेत् (ना चरेत्); शाम. ५२ संप्रवत्; विपा. ६५ (भागः २) अथाऽऽचार्यं (आचार्यं च) प्रति (परि) गृह्योक्त (स्वगृह्य); संग. ३३५ संप्रवत्; संव. १५० गृह्योक्त (गृह्योक्तं).

[1]अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् ।
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥

[2]अञ्जल्यक्षतकर्माणि कृत्वा कङ्कणपूर्वकम् ।
यावत्पञ्चावृतं सूत्रं तावदर्कं प्रवेष्टयेत् ॥

[3]स्वशाखोक्तेन मन्त्रेण गायत्र्या वाऽथवा जपेत् ।
पञ्चीकृत्य पुनः सूत्रं स्कन्धे बध्नाति मन्त्रतः ॥

[4]बृहत्सामेति मन्त्रेण सूत्ररक्षां प्रकल्पयेत् ।
अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरयोस्तथा ॥

[5]कुम्भांश्च निक्षिपेत् पश्चादाग्नेयादिचतुष्टये ॥

(१) प्रपा. ३८७ ; गभा. १०७ ; प्रर. ११८ ; संप्र. ८७८ ; शाम. ५२ ; विपा. ६५ (भागः २) ; संग. ३३५–३३६ माश्रय (माश्रयेत्) ; संव. १५०.

(२) प्रपा. ३८७ कृत्वा (कृत) ; गभा. १०७–१०८ प्रवेष्टयेत् (प्रदर्शयेत्) ; प्रर. ११८ सूत्रं (सूत्रे) ; संप्र. ८७८ अञ्जल्यक्षत (ततः सर्वाणि) ; शाम. ५२ पञ्चावृतं (पञ्चावृता) ; विपा. ६५ (भागः २) पूर्वकम् (बन्धनम्) ; संग. ३३६ अञ्जल्यक्षत (अजपन्पक्ष) यावत्पञ्चा (यावत्यं चा) ; संव. १५०.

(३) प्रपा. ३८७ बध्नाति (बध्नीत) ; गभा. १०८ ; प्रर. ११८ ; संप्र. ८७८ ; शाम. ५३ ; विपा. ६५ (भागः २) ; संग. ३३६ वाऽथवा जपेत् (चाथ वा यजेत्) ; संव. १५० मन्त्रेण (मार्गेण).

(४) प्रपा. ३८७ ; गभा. १०८ त्तरयो (त्तरत) ; प्रर. ११८ ; संप्र. ८७९ द्वितीयपादो नास्ति ; शाम. ५३ गभावत् ; विपा. ६५ (भागः २) ; संग. ३३६ ; संव. १५०.

(५) प्रपा. ३८७ ; गभा. १०८ ; प्रर. ११८ दिचतुष्टये (दि च वेष्टयेत्) ; संप्र. ८७९ ; शाम. ५३ ; विपा. ६५ (भागः २) ; संग. ३३६ ; संव. १५०.

[1]सवस्त्रं प्रतिकुम्भं च त्रिः सूत्रेणैव वेष्टयेत् ।
हरिद्रागन्धसंयुक्तं पूरयेच्छीतलं जलम् ॥

[2]प्रतिकुम्भं महाविष्णुं संपूज्य परमेश्वरम् ।
पाद्यार्घ्यादिनिवेद्यान्तं कुर्यान्नाम्नैव मन्त्रवित् ॥

[3]पुनः प्रदक्षिणं कृत्वा मन्त्रमेतदुदीरयेत् ।
मया कृतमिदं कर्म स्थावरेषु जरायुणा ।
अर्कापत्यानि नो देहि तत्सर्वं क्षन्तुमर्हसि ॥

[4]इत्युक्त्वा शान्तिसूक्तानि जप्त्वा त विसृजेत् पुनः ।
गोयुग्मं दक्षिणां दद्यादाचार्याय च भक्तितः ॥

[5]इतरेभ्योऽपि विप्रेभ्यो दक्षिणां चापि शक्तितः ।
तत्सर्वं गुरवे दद्यादन्ते पुण्याहमाचरेत् ॥

(१) प्रपा. ३८७ त्रिः सू (त्रिसू) ; गभा. १०८ ; प्रर. ११८ त्रिः सू (त्रिसू) पूरये (पूजये) ; संप्र. ८७९ ; शाम. ५३ प्रपावत् ; विपा. ६५ (भागः २) ; संग. ३३६ प्रपावत् ; संव. १५० संयुक्तं (युक्तं च).

(२) प्रपा. ३८७ ; गभा १०८ ; प्रर. ११८ ; संप्र. ८७९ नाम्नैव (नाम्ना च) ; शाम. ५३ र्घ्या (र्घा) ; विपा. ६५ (भागः २) र्घ्या (र्घा) ; संग. ३३६ संपूज्य (पूजयेत्) र्घ्यादिनि (र्घादिनै) ; संव. १५०.

(३) प्रपा. ३८८ मुदीरयेत् (मुदाहरेत्) ; गभा. १०८ ; प्रर. ११९ ; शाम. ५३ ; विपा. ६६–६७ (भागः २) ; संग. ३३७ स्थावरेषु (स्थावरेण) ; संव. १५१.

(४) प्रपा. ३८८ जप्त्वा तं (जपित्वा) ; गभा. १०८ ; प्रर. ११९ तं (तां) ; शाम. ५३ ; विपा. ६७ (भागः २) पुनः (ततः) भक्ति (शक्ति) ; संग. ३३७ ; संव. १५१.

(५) प्रपा. ३८८ माचरेत् (वाचनम्) ; गभा. १०८ चापि (चाभि) ; प्रर. ११९ ; शाम. ५३ ; विपा. ६७ (भागः २) ; संग. ३३७ शक्ति (भक्ति) शेषं प्रपावत् ; ३४० (=) प्रपावत् ; संव. १५१.

अयं चार्कविवाहः काश्यपगोत्रिणो न भवति गोत्रैक्यादिति केचित् । अत्र गोत्रैक्यं न दोषायेत्यन्ये । काश्यपगोत्रो वरः स्वगोत्राविरुद्धगोत्रिणमाचार्यं परिकल्प्य तस्मादर्कं प्रतिगृह्णीयात् । आचार्यस्तु सूर्येण दत्तां विभाव्य वरणादौ काश्यपगोत्रस्थाने स्वगोत्रं कन्याविशेषणत्वेन संकीर्त्याऽऽदित्यसवित्रर्कशब्दस्थाने स्वपितामहपित्रोः स्वस्य च क्रमेण नामानि संकीर्तयेत् । एवंरीत्यैव काश्यपगोत्रवरस्यार्कविवाहो निर्वाह्यो भवतीति युक्तं चेत्स्वीकार्यं सूरिभिः । संर. ५९८

## गर्गः

अर्कविवाहस्य फलं देशः प्रयोगश्च, आत्मन्यग्निसमारोपः, ब्रह्मचर्यचरणम्

[1]तृतीयोद्वाहसिद्ध्यर्थमर्कवृक्षं समुद्वहेत् ।
ग्रामात् प्राचीमुदीचीं वा गच्छेद्यत्रैव तिष्ठति ॥
[2]यथार्हं शोभनं कृत्वा कृत्वा भूमिं च शोभिताम् ।
वस्त्रेण तन्तुनाऽऽवेष्ट्य ब्राह्मणस्तं परिश्रयेत् ॥
[3]स्वशाखोक्तविधानेन होमान्तेऽग्निं स्व आत्मनि ।
आरोप्यैव वरो धीरो ब्रह्मचर्यं चरेत् त्र्यहम् ।
एकाहमपि वा कन्यामुद्वहेदविशङ्कितः ॥

## स्मृत्यन्तरम्

अर्कस्य संवेष्टनं पूजनम् अभिषेकः नैवेद्यताम्बूलसमर्पणं च

[4]श्वेतवस्त्रेण संवेष्ट्य तथा कार्पासतन्तुभिः ।
गन्धपुष्पैः समभ्यर्च्याप्यब्लिङ्गैरभिषिच्य च ।
गुडौदनं तु नैवेद्यं ताम्बूलं च समर्पयेत् ॥

(१) मुक्ता. १५२ ; आन. १८२ तृतीयो (चतुर्थ्युं) पू.
(२) मुक्ता. १५२.
(३) मुक्ता. १५२ ; आन. १८२ शङ्कितः ( शङ्कितम् ).
(४) गभा. १०७ (=) ; प्रर. ११८ (=) च्याप्यब्लि ( च्यं सलिल ) षिच्य च ( षिञ्चयेत् ) ; संप्र. ८७७ दनं तु (दनं च) ; शाम. ५२ श्वेतवस्त्रेण संवेष्ट्य ( तत्रैव श्वेतवस्त्रेण ) च्याप्यब्लि ( च्यं अब्लि ) ब्राह्मे ; विपा. ६३–६४ (भागः २) (=) समभ्यर्च्याप्य (तथाऽभ्यर्च्य अ) ; संग. ३३५ (=) समभ्यर्च्याप्यब्लि ( तथाऽभ्यर्च्य तलि ) ; संव. १५० (=) तथा ( सदा ) समर्पयेत् ( समर्प्य च ).

## ब्रह्मपुराणम्

अर्कविवाहदेशः, अर्काध्यारोपितसच्छायरवेः प्रार्थना प्रथमपञ्चमदिनयोः पूजनं च, अर्कविवाहकरणाकरणयोः फलानि

[1]ग्रामात् प्राच्यामुदीच्यां वा सुपुष्पफलसंयुतम् ।
परीक्ष्य यत्नतोऽधस्तात् स्थण्डिलादि यथाविधि ॥
[2]कृत्वाऽर्कं पुरतस्तिष्ठन् प्रार्थयेत द्विजोत्तमः ।
त्रिलोकवासिन् सप्ताश्व छायया सहितो रवे ।
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥
[3]तत्राध्यारोप्य देवेशं छायया सहितं रविम् ।
वस्त्रैर्माल्यैस्तथा गन्धैस्तन्मन्त्रेणैव पूजयेत् ॥

तन्मन्त्रेण 'आकृष्णेन' इत्यादिना । गभा. १०७

(१) प्रपा. ३८७ सुपुष्प (सपुष्प) ; गभा. १०७ परीक्ष्य यत्नतो (परीक्ष्यार्कं ततो) शेषं प्रपावत् ; प्रर. ११८ ; संप्र. ८७७ प्रपावत् ; शाम.५२ ; विपा. २६ (भागः २) ; संग. ३३४ युतम् ( युताम् ) ; संव. १४९ युतम् ( युतः ) ; संर. ५९४.

(२) प्रपा. ३८७ कृत्वाऽर्कं (कृत्वाऽर्के) ; गभा. १०७ ; प्रर. ११८ येत (येत्तं) ; संप्र. ८७७ ; शाम. ५२ ; सिन्धु. ११५५ (=) प्रथमार्धं नास्ति ; विपा. ६३ (भागः २) कं पु (कंपु) येत (येत्तु) ; संग. ३३५ येत (येत्तु) रवे (वरः) : ३३८ त्रिलोक ( त्रैलोक्य ) प्रथमार्धं नास्ति ; संव. १४९ येत ( येत्तु ).

(३) प्रपा. ३८७ ; गभा. १०७ ; प्रर. ११८ ; संप्र. ८७७ ; शाम. ५२ ; विपा. ६३ ( भागः२ ) णैव पूजयेत् ( ण प्रपूजयेत् ) ; संग. ३३५ ; संव. १४९– १५०.

[१]चतुर्थे दिवसेऽतीते पूर्ववत्तां प्रपूज्य च ।
विसृज्य होममग्निं च विधिना मानुषीं पराम् ॥

[२]उद्वहेदन्यथा नैव पुत्रपौत्रादिवृद्धिमान् ।
न पशून्न च मित्राणि मङ्गलं नैव गच्छति ॥

[३]एवमेव द्विजश्रेष्ठ विधिना सम्यगुद्वहेत् ।
धनधान्यसमृद्धिश्च इच्छाशक्तिः परत्र च ॥

## अनिर्दिष्टकर्तृकवचनानि

संक्षिप्तप्रयोगः, प्रथमपञ्चमदिनयोरर्कपूजनम्, अर्कविवाहफलम्

[४]अर्कस्य चोत्तरे देशे स्थण्डिलं तु प्रकल्पयेत् ।
उल्लेखनादिकं कृत्वा स्थापयेदनलं ततः ।
कृत्वाऽऽज्यभागपर्यन्तं कन्यादानं ततः स्मृतम् ॥

[५]तद्वस्त्रप्रतिमादीनि सर्वं दद्यात् प्रयत्नतः ।
स्वयं नूतनवस्त्राणि धृत्वा पुण्याहमाचरेत् ॥
इतरेभ्योऽपि विप्रेभ्यो देया तत्र च दक्षिणा ।
ततस्तुष्टो गृहं गत्वा भुञ्जीयाद्बन्धुभिः सह ॥

चतुर्थदिवसादूर्ध्वं पञ्चमेऽहि ततस्तदा ।
अर्कप्रदेशमेत्याथ पूर्ववत् संप्रपूज्य च ॥

पूर्ववत् 'आकृष्णेन' इति मन्त्रेण गन्धादिभिरित्यर्थः । विपा. ७१ (भागः २)

विसृज्याग्निं कङ्कणं च मानुषीमुद्वहेत् पराम् ॥

अनेनाग्निसंरक्षणं पञ्चमदिनपर्यन्तं कर्तव्यमिति गम्यते । विपा. ७२ (भागः २)

[१]अनेन विधिना यस्तु कुर्यादर्कविवाहकम् ।
पुत्रपौत्रादिसंपत्तिं चतुर्थ्यां लभते नरः ॥

## शौनककारिकाः

अर्कविवाहप्रयोगः, अर्ककन्यादानमाचार्यकर्तृकम्, अर्कविवाहाकरणे दोषः

[२]तृतीये स्त्रीविवाहे तु संप्राप्ते पुरुषस्य तु ।
अर्कविवाहं वक्ष्यामि शौनकोऽहं विधानतः ॥

[३]अर्कसंनिधिमागत्य तत्र स्वस्त्यादि वाचयेत् ।
नान्दीश्राद्धं प्रकुर्वीत स्थडिलं च प्रकल्पयेत् ॥

---

(१) प्रपा. ३८८ वत्तां प्र (वत्संप्र); गभा. १०८; प्रर. ११९; संप्र. ८७९ ज्य च (जयेत्); चम. ११६ चतुर्थे (चतुर्थ) चतुर्थपादे (मानुषीमुद्वहेत्ततः) शेषं प्रपावत्; शाम. ५४; विपा. ६७ (भागः २) संप्रवत्; संग. ३३७, ३४१; संव. १५१; कृभ. ११५६ प्रयोगरत्ने.

(२) प्रपा. ३८८ नैव ग (च न ग); गभा. १०८; प्रर. ११९ पौत्रादि (पौत्राभि); संप्र. ८७९ दिवृद्धिमान् (नभिव्रजेत्) मङ्गलं नैव (न फलं चैव); शाम. ५४ त्रादिवृ (प्रसमृ) पू.; विपा. ६७ (भागः २); संग. ३३७ मङ्गलं (मण्डलं): ३४१ प्ररवत्, पू.; संव. १५१.

(३) प्रपा. ३८८; गभा. १०८; प्रर. ११९ मेव (मेतत्); संप्र. ८७९ श्रेष्ठ (श्रेष्ठः) इच्छा (इज्या); विपा. ६७ (भागः २); संग. ३३७: ३४१ मृद्धिः (मृद्धिं) क्तिः परत्र च (क्तिं परां व्रजेत्); संव. १५१.

(४) विपा. ६८ (भागः २).

(५) विपा. ७१ (भागः २).

(१) विपा. ७२ (भागः २).

(२) शौका. १ पृ. ७९ स्त्रीवि (च वि); प्रपा. ३८७ ये स्त्री (येऽस्मिन्) अर्कवि (आर्क वि) कोऽहं वि (कोक्तवि); गभा. १०८; प्रर. ११८ ये स्त्री (यस्त्री) हे तु (हे च) अर्क (अर्की); संप्र. ८७९; शाम. ५३ अर्कवि (आर्क वि); विपा. ६५ (भागः २) ये स्त्री (यस्त्री) शेषं शामवत्; संग. ३३६ ये स्त्री (येऽत्र); संव. १५०.

(३) शौका. २ पृ. ७९ लं च (लं तु); प्रपा. ३८७ च प्रक (तूपक); गभा. १०८; प्रर. ११८; संप्र. ८७९ दि वाचयेत् (दिकं चरेत्); शाम. ५३; विपा. ६३ (भागः २) नान्दीश्राद्धं (नान्दीमुखं); संग. ३३६; संव. १५०.

[१]अर्कमभ्यर्च्य सौर्या च गन्धपुष्पाक्षतादिभिः ।
स्वयं चालङ्कृतस्तद्वद्वस्त्रमाल्यादिभिः शुभैः ॥

सौर्या सूर्यदेवत्यया आकृष्णेनेत्यादिकर्चा ।

* गभा. १०८

[२]अर्कस्योत्तरदेशे तु समन्वारब्ध एतया ।
उल्लेखनादिकं कुर्यादाघारान्तमतः परम् ॥

एतया अर्ककन्यया । शाम. ५३

[३]आज्याहुतीश्च जुहुयात् संगोभिरनया ऋचा ।
यस्मै त्वा काम कामायेत्येतयर्चा ततः परम् ॥

[४]व्यस्ताभिश्च समस्ताभिस्ततश्च स्विष्टकृद्भवेत् ।
परिषेचनपर्यन्तमयाश्चेत्यादिकं क्रमात् ॥

---

* प्रर., संप्र., शाम., विपा., संग. गभावत् ।

(१) शौका. ३ पृ. ७९ सौर्या (सोऽर्थी); प्रपा. ३८७–३८८ सौर्या च (विधिना) भिः शुभैः (भूषणैः); गभा. १०८; प्रर. ११८; संप्र. ८७९ तृतीयपादे (स्वर्णेनालङ्कृत्य यत्नेन); शाम. ५३ चालङ्कृ (वाऽलङ्कृ); विपा. ६६ (भागः २) : ६८ (भागः २) (=) प्रथमपादे (अर्कस्य प्रतिमां चैव) पू.; संग. ३३६ सौर्या च (सौर्यया); संव. १५०.

(२) शौका. ४ पृ. ७९; प्रपा. ३८८; गभा. १०८; प्रर. ११८–११९; संप्र. ८७९ (अर्कस्योत्तरदेशे तु एतया अर्ककन्यया। उल्लेखनमिदं कुर्यादाभ्यन्तरमतः परम् ॥); शाम. ५३; विपा. ६६ (भागः २) देशे तु (दिग्भागे); संग. ३३६; संव. १७०.

(३) शौका. ५ पृ. ७९ त्वा (त्वं) त्येत (त्येक); प्रपा. ३८८ हुतीश्च (हुतिं च) रनया ऋचा (रित्येचैकया) त्येत (त्येक); गभा. १०८ या ऋचा (यैकया); प्रर. ११९ हुतीश्च (हुतिं च) या ऋचा (यैकया); संप्र. ८७९ (आज्याहुत्यादयः पश्चादन्ते पुण्याहमाचरेत्।) पू.; शाम. ५३ गभावत्; विपा. ६६ (भागः २); संग. ३३६ या ऋचा (यैकया) यर्चा ततः परम् (या च परस्परम्).

(४) शौका. ६ पृ. ७९ त्यादिकं (त्यादिभिः); प्रपा. ३८८ द्वितीयपादे (भूराद्यैः स्विष्टकृत्तथा) शेषं शौकावत्; गभा. १०८; प्रर. ११९; शाम. ५३; विपा. ६६ (भागः २); संग. ३३६ त्यादिभिः (त्यादितः); संव. १५०.

[१]विसृज्य होममग्निं च विधिना मानुषीं परम् ।
उद्वहेदन्यथा नैनां पुत्रपौत्राभिवृद्धिमान् ॥
न पशून्न च मित्राणि मङ्गलं नैव गच्छति ॥

*[२]अकृत्वाऽर्कविवाहं तु तृतीयां यदि चोद्वहेत् ।
विधवा सा भवेत् कन्या तस्मात् कुर्याद्विचक्षणः ॥

अर्कसंनिधिमागत्य कुर्यात् स्वस्त्यादिवाचनम् ।
नान्दीश्राद्धं हिरण्येन ह्यष्टवर्गान् प्रपूजयेत् ॥

पूजयेन्मधुपर्केण वरमाचार्यहस्ततः ।
अर्कस्य पुरतस्तिष्ठेत् प्रार्थयेत द्विजोत्तमः ॥

त्रिलोकवासिन् सप्ताश्व छायया सहितो रवे ।
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥

अब्लिङ्गैरभिषिच्याथ श्वेतवस्त्रेण वेष्टयेत् ।
कार्पासतन्तुभिश्चैव गन्धपुष्पैः समर्चयेत् ॥

गुडौदनं च नैवेद्यं ताम्बूलं विनिवेदयेत् ।
अर्कं प्रदक्षिणीकुर्याज्जपेन्मन्त्रमिमं बुधः ॥

मम प्रीतिकरा चेयं मया सृष्टा पुरातनी ।
अर्कजा ब्रह्मणा सृष्टा सर्वप्राणिहिताय च ॥

वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धन ।
तृतीयोद्वाहजं पापं मृत्युं चाऽऽशु विनाशय ॥

इति संप्रार्थ्य तं विप्रः कन्यावरणमाचरेत् ।
गोत्रं स्वस्य तु संबन्धमुच्चार्याथ त्रिपौरुषम् ॥

आदित्यस्याथ सवितुरर्कस्य च यथाक्रमम् ।
पुत्री पौत्री च नप्त्री च गोत्रं काश्यपमित्यतः ॥

आचार्यमुखतः कुर्यात् सुमुहूर्तादिकं च यत् ।
मन्त्रमुच्चार्य तां दद्यादाचार्योऽथ वराय च ॥

---

* अस्मिन् प्रघट्टके बहवो व्यासब्रह्मपुराणादीनां श्लोकाः सन्ति। अस्य शौनकीयत्वे संदेहः । पदार्थक्रमाविरुद्धत्वात् सकलं प्रघट्टकमत्र संगृहीतम् ।

(१) शौका. ७, ८ पृ. ७९.
(२) धप्र. ५६–५७

अर्ककन्यामिमां विप्र यथाशक्तिविभूषिताम्।
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥
इत्थं कृत्वा यथोक्तं च विद्वद्भिर्ब्राह्मणैः सह।
कङ्कणं चाथ बध्नीयाद्वस्त्रं मङ्गलसूत्रकम् ॥
स्वशाखोक्तविधानेन तत्तन्मन्त्रेण कारयेत्।
गायत्र्या वाऽपि कुर्वीत केचिदेवं वदन्ति हि ॥
निक्षिपेच्चतुरः कुम्भानर्कस्य परितो वरः।
धृषत्पिबेत्येतयर्चा वाऽऽग्नेयादिचतुष्टये ॥
सवस्त्रं प्रतिकुम्भं च त्रिसूत्रेणैव वेष्टयेत्।
हरिद्रागन्धसंयुक्तं पूरयेच्छीतलं जलम् ॥

प्रतिकुम्भे महाविष्णुमतो देवेति पूजयेत्।
अर्कं तु पूजयेद्भक्त्या गायत्रेण प्रतीति च ॥
अर्कस्योत्तरदिग्भागे स्थण्डिलं कारयेद्बुधः।
वरसूत्रेण चाऽऽज्येन जुहुयादाहुतीरथ ॥
षडाहुतीः स्रुवेणैव संगोभिरित्यृचैकया।
यस्मै त्वा काम कामाय ऋचैकया ततः परम् ॥
हुत्वा व्याहृतिभिश्चैव कुर्यात् स्विष्टकृदादिकम्।
आचार्यायाथ गां दद्याद्दक्षिणां चैव शक्तितः ॥
आयुर्देहि यशो देहि प्रजां देहि पशूनपि।
देहि मेऽर्क श्रियं पुष्टिं स्वस्थाने त्वं स्थिरो भव ॥

## तृतीयो भागः समाप्तः